# PATAÑJALI'S

# VYĀKARAṆA MAHĀBHĀṢYA

WITH

## KAIYATA'S PRADĪPA

AND

## NĀGEŚA'S UDDYOTA

## (Vol. 2 Vidhiśeṣarūpa)

Edited with Foot-notes, collected from Padamañjari and Prātis'ākhyas as well as supplied by the Editor's own originality

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT S'IVADATTA D. KUDĀLA,
HEAD PAṆḌIT AND SUPERINTENDENT, ORIENTAL COLLEGE, LĀHORE, FELLOW OF THE PUNJĀB UNIVERSITY, SANSKRIT SCHOLAR OF JAYAPUR SANSKRIT PĀTHAS'ĀLĀ,

AND

VYĀKARAṆĀCHĀRYA PANDIT RAGHUNĀTHŚĀSTRĪ,
MĀRAWĀRI ORIENTAL COLLEGE, BENARES.

**Second Edition.**

PUBLISHED

BY

PĀNDURANG JĀWAJĪ,
PROPRIETOR OF THE 'NIRṆAYA-SĀGAR' PRESS,
BOMBAY.

1935.

*Price 5 Rupees.*

॥ श्रीदधिमथी जयति ॥

श्रीमद्भगवत्पतञ्जलिमुनिविरचितं

# पाणिनीयव्याकरणमहाभाष्यम् ।



एतद्व्याख्यानभूत उपाध्यायकैयटप्रणीतो भाष्यप्रदीपस्तद्व्याख्यानभूतो
नागेशभट्टविरचितो भाष्यप्रदीपोद्द्योतः

तत्र

प्रथमाध्यायद्वितीयपादादिद्वितीयाध्यायान्तं

## विधिशेषरूपं द्वितीयखण्डम् ।

जयपुरराजकीयप्रधानसंस्कृतपाठशालाधीतशास्त्रेण लवपुरीयप्राच्यविद्यालयसंस्कृत-
श्रेणिप्रधानाध्यापकेन महामहोपाध्यायपण्डितशिवदत्तशर्मणा बलियामण्ड-
लान्तर्गतछाताग्रामवास्तव्यसर्वतन्त्रस्वतन्त्रश्रीपण्डितकाशीनाथशास्त्रि-
तनुजन्मना व्याकरणाचार्य प० रघुनाथशास्त्रिणा च वैद्य-
नाथप्रणीतभाष्यप्रदीपोद्योतच्छायासारं पदमञ्जरी-
शब्दकौस्तुभौ समवलम्ब्य, विषमस्थलटिप्पण्या
पाठभेदादिपूरणेन च संभूष्य
संशोधितम् ।

---

तस्येदं द्वितीयमावर्तनम् ।

---

मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।

---

शकाब्दाः १८५६, खिस्ताब्दाः १९३५.

---

॥ श्रीदधिमथी जयति ॥

# श्रीमद्भगवत्पतञ्जलिमुनिरचितं

# महाभाष्यम् ।

## तद्व्याख्यानभूतः कैयटविरचितः प्रदीपः

## तद्व्याख्यानभूतो नागेशभट्टविरचित उद्द्योतश्च प्रारब्धः ।

## तत्र प्रथमाध्याये द्वितीयपादे प्रथममाह्निकम् ।

[ विधिशेषप्रकरणे ङित्प्रकरणम् । ]

( ६९ ङित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ० १ सूत्रम् )

### ७५ गाङ्कुटादिभ्यो ऽञ्णिन् ङित् ॥ १ । २ । १ ॥

( अतिदेशत्वनिर्णयाधिकरणम् )

( ५६९ संबन्धपक्षनिराकरणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ङित्किद्वचने तयोरभावादप्रसिद्धिः ॥ * ॥**

**( भाष्यम् ) ङित्किद्वचने तयोरभावात् ङकारककारयोरभावात् ङित्त्वकित्त्वयोरप्रसिद्धिः[1] । सता ह्यभिसंबन्धः शक्यते कर्तुम् । न चात्र[2] ङकारककारावितौ[3] पश्यामः । तद्यथा—'चित्रगुर्देवदत्तः' इति यस्य ता गावो भवन्ति स एवं[4] ताभिः शक्यतेभिसंबन्धुम् ॥**

( प्रदीपः ) गाङ्कुटादिभ्यः ॥ १ ॥ चत्वारोत्र पक्षा उपक्षिप्ता भाष्ये—ङित्त्वकित्त्वसंबन्धप्रतिपादनम्[5], भावनम्, संज्ञाकरणमतिदेशश्चेति । तत्राद्यपक्षनिराकरणाय वार्तिकमुपन्यस्यति—**ङित्किद्वचन इति ॥ सता हीति** । विद्यमानेन वस्तुना[6] संबन्धोर्थस्य शक्यते वक्तुम् ॥ न च गाङ्कुटादिभ्यः परस्य प्रत्ययस्य ङकार इत्संज्ञकोस्ति, येन तस्य ङिदिति व्यपदेशः स्यात् । सत्त्वे वा भूतानुवादे[7] प्रयोजनाभावादप्रामाण्यमापतति । न च[8] गाङ्कुटादिभ्यश्चङादेः ङितोऽनेन विधानमुपपद्यते, अञ्णिद्ग्रहणानर्थक्यप्रसङ्गात् ॥

( उद्द्योतः ) गाङ्कुटादिभ्यो ॥ १ ॥ अस्य तद्वदतिदेशत्वेन वार्तिकानुत्थानमाशङ्क्याह—चत्वारोत्रेति ॥ उपक्षिप्ताः । दूषणद्वारा साक्षाच्चोक्ता इत्यर्थः ॥ तत्राद्येति । तत्र हि गाङ्कुटादिभ्यः परो ऽञ्णित्प्रत्यय इत्संज्ञकङकारयुक्त इत्यर्थः ॥ तयोरिति तच्छब्देन गुणभूतयोरपि ङकारककारयोर्बुद्धिस्थतया परामर्श इत्याह—भाष्ये—ङकारककारयोरिति । यथा चैतत्तथा पस्पशायामुक्तम् ॥ ङित्त्वकित्त्वयोरप्रसिद्धिरिति । तद्व्यवहाराप्रसिद्धिरित्यर्थः । तदाह—येन तस्येति ॥ सत्त्वे चेति । यङादेरिति शेषः ॥ अञ्णिद्ग्रहणवैयर्थ्यापत्त्या च मो राजीतिवल्लोपाभावार्थमनुवाद इति न शङ्क्यम् ॥ ननु शशविषाणादिशब्दैरसतापि विषाणेन शशस्य सम्बन्धः प्रतिपाद्यते इति चेन्न । तद्वदस्याप्यप्रामाण्यप्रसङ्गात् ॥ अञ्णिद्ग्रहणेति । नच वृद्धेदिति विहितण्यङः कर्मणिङश्च व्यावृत्तये तद् इति वाच्यम् । गाङ्कुटादिभ्योऽनेन तयोर्विधानेपि प्रत्ययाधिकारेऽस्य पाठाभावेन प्रत्ययत्वाभावात् ञकारणकारयोरित्त्वाप्रवृत्तौ ञ्णितोस्तयोरसंभवात् ॥

( भावनपक्षाभ्युपगमभाष्यम् )

**भाव्येते तर्ह्यनेन—गाङ्कुटादिभ्यो ऽञ्णिन् ङिद्भवतीति[12] असंयोगाल्लिट् किद् भवतीति[13] ॥**

(प्रदीपः) भाव्येते इति । गाङ्कुटादिभ्यः परो योऽञ्णित्प्रत्ययः स ङिद्भवति ङकार इत्संज्ञकस्तस्य भवतीत्यर्थः । स तु ङकार आदौ मध्ये अन्ते वेति देशविशेषं नापेक्षते, इद्धर्माक्रान्तस्यैव विधानात् । इतां च धर्मोऽश्रूयमाणानामपि कार्यं प्रति विशेषकत्वम् ॥

( उद्द्योतः ) भाष्ये भाव्येते तर्ह्यनेनेति । प्रकरणेनेत्यर्थः । ननु भाव्येते इत्ययुक्तं, पञ्चमीनिर्देशेनादेशविध्यसंभवादत आह—

---

१ अस्यान्वयो ङित्त्वकित्त्वयोरप्रसिद्धिरित्यत्र । ( र ना. ) २ वाऽभि ॥ ३ अत्रेत्यस्य गाङ्कुटादिभ्यः परेप्रत्ययेऽसंयोगादिभ्यः परेऽपिल्लिडादौ वेत्यर्थः । ( र. ना. ) ४ 'एताभिः' 'एवताभ्यां शब्दाभ्यां' ॥ ५ इत्संज्ञकाभ्यां ङकारककाराभ्यां संबन्धस्य प्रतिपादनमित्यर्थः । ( र. ना. ) ६ 'नाभिसं' ॥ ७ भूतस्य सिद्धस्यार्थस्य ङकारादेरनुवादे इत्यर्थः । ( र. ना. ) ८ 'व इत्यमा' । ९ ननु प्रयोजनाभावादनुवादत्वासंभवेऽपि विधित्वमस्तु इत्याशयेन शङ्कते न चेति । (र. ना.) १० संबन्धपक्षो दूषणद्वाराऽन्ये त्रयश्च साक्षादुक्ता इत्यर्थः । (र. ना.) ११ नहि गाङ् कुटादिभ्यः परेषां ञ्णित्प्रत्ययानां ङकारयोगसंभव इति भावः । ( र. ना. ) १२—१३ 'वति' ॥ १४ 'इत्संज्ञाका' ॥

गाङिति । गाङादिभ्यः परस्य प्रत्ययस्य तन्यादेः सिद्धत्वाद्विशेषण एव विधितात्पर्यमित्याह—ङकार इति ॥ नन्वेवं लोपस्यावश्यकत्वेन विधानं व्यर्थमत आह—इतां चेति । एवं च कार्यार्थं विधानमिति भावः ॥

( ५७० भावनपक्षनिराकरणवार्तिकम् ॥ २ ॥ )

**॥*॥ भवतीति चेदादेशप्रतिषेधः ॥*॥**

( भाष्यम् ) **भवतीति चेदादेशस्य प्रतिषेधो वक्तव्यः । ङकारककारावितावादेशौ प्राप्नुतः ॥**

( प्रदीपः ) **भवतीति चेदिति ।** टित्त्वकित्त्वमित्त्वानामभावात् ङ इदनन्तरोऽस्येत्यनन्तरार्थे बहुव्रीह्यभावाच्चादेः परस्येत्यादेः स्थाने ङकार आदेशः प्राप्नोतीत्यर्थः । ङ इत् ङिदिति तत्पुरुष एव न्याय्यः, स्वपदार्थप्राधान्येन तस्यान्तरङ्गत्वाद्बहुव्रीह्यर्थानुपपादाच्च । कुटितेत्यादौ प्रसिद्धङित्त्वाश्चङादयो यद्यादेशाः क्रियन्ते तदा नैते तदर्थाभिधाने समर्थाः तृङादयश्च नेह शास्त्रे प्रसिद्धाः । अथास्मादेव वचनादपूर्वाः क्रियेरन्, तदा ङिच्चेत्यन्त्यस्य स्युः ॥

(उद्योतः) ननु भाव्यमानः सर्वोऽप्यादेश एवेत्यत्र मानाभावादादेशप्रतिषेध इत्ययुक्तमत आह—टित्त्वेति । अनेनागमत्वं निराकृतम् ॥ उरण्रपरवदनन्तरोऽस्त्विति चेदत्राह—ङ् इत् अनन्तर इति ॥ नन्वेवमपि बहुव्रीहिणा ङिच्छब्देन प्रत्ययाभिधानात्तस्य चानेकाल्त्वात् कथमादेः स्यादत आह—तत्पुरुष इति । न च तस्यादित्वे इत्त्वं व्यर्थं लशक्वतद्धित इत्येव सिद्धेरिति वाच्यम् । अतद्धित इति पर्युदासेन प्रत्ययसंज्ञाकालिकादेरेव तेनेत्त्वविधानात् ॥ अनुपपादोऽनुपपत्तिस्तामेव दर्शयति—कुटितेत्यादाविति ॥ अथास्मादेवेति । अन्तरतमपरिभाषासंस्कृतादित्यर्थः ॥ अन्त्यस्य स्युरिति । न च ङित्वस्य गुणप्रतिषेधाद्यर्थत्वेन चारितार्थ्यात्तातङ्न्यायेन सर्वादेशो भविष्यतीति वाच्यम् । गुणप्रतिषेधाद्यर्थत्वे सर्वादेशत्वं सर्वादेशत्वे च तदर्थत्वमित्यन्योन्याश्रयेण सर्वादेशत्वालाभेऽन्त्यादेशत्वापत्तेरिति भावः । तातङस्तु यथा सर्वादेशत्वं तथोक्तम् ॥

( आक्षेपभाष्यम् )

**कथं पुनरित्संज्ञो नामादेशः स्यात् ? ।**

(प्रदीपः) **कथं पुनरिति ।** इत्संज्ञो ह्यसन्नेव कार्यमात्रं प्रतिपादयति, आदेशस्तु भावरूपोऽन्यस्य प्रसङ्गे भवति ॥

( आदेशत्वसाधकभाष्यम् )

**किं हि वचनान्न भवति ? ।**[6]

(प्रदीपः) **किं हीति ।** लोपस्य यथादेशत्वं तथा ङकारस्यापीत्संज्ञकस्य भविष्यतीत्यर्थः । तत्र स्थानिनं निवर्त्य ङकारो निवर्तेत ॥

( आदेशत्वबाधकभाष्यम् । )

**एवं तर्हि षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः ॥**

( आदेशत्वसाधकभाष्यम् )

**गाङ्कुटादिभ्य इत्येषा पञ्चमी अङिणदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति "तस्मादित्युत्तरस्य" इति ॥**

( उद्योतः ) भाष्ये **तस्मादित्युत्तरस्येति** । एवं चादेः परस्येत्यस्य प्राप्त्याऽऽदेशपक्षे इष्टासिद्धेः स न युक्त इति भावः ॥

( संज्ञाकरणपक्षाभ्युपगमभाष्यम् )

**संज्ञाकरणं तर्हीदम्—गाङ्कुटादिभ्योऽङिणत् ङित्संज्ञो भवतीति । असंयोगाल्लिट् कित्संज्ञो भवतीति ॥**

( ५७१ संज्ञाकरणपक्षदूषणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ संज्ञाकरणे क्ङिद्ग्रहणेऽसंप्रत्ययः शब्दभेदात् ॥ * ॥**

( भाष्यम् ) **संज्ञाकरणे क्ङिद्ग्रहणे असंप्रत्ययः स्यात् ॥ किं कारणम् ? । शब्दभेदात् । अन्यो हि शब्दः क्ङितीति । अन्यः कितीति ङितीति च । तथा किद्ग्रहणेषु ङिद्ग्रहणेषु चानयोरेव संप्रत्ययः स्यात् ॥**

( प्रदीपः ) **संज्ञाकरण इति ।** उक्तपरिमाणा संज्ञा कृतेति न्यूनातिरिक्तशब्दोच्चारणे संज्ञास्वरूपानुपलम्भात्संज्ञिनामसम्प्रत्ययः । ङित्संज्ञाकरणं तु **व्यचेः कुटादित्वमनसीति** वचनात्सम्प्रसारणार्थं स्यात् । लिटः कित्संज्ञा च **वचिस्वपीति** सम्प्रसारणार्था स्यात् ॥ गाङ्कुटादिभ्यस्तर्हि ङित्संज्ञा किमर्था स्याद्, अनर्थिका भवतु, न्यायानुगतेर्थे किं कुर्मः । **क्ङिति** चेत्यादिषु यौगिकस्यैव ग्रहणं स्याद् यस्य ककारो ङकारश्चेत्संज्ञकः ॥ **अनयोरेवेति । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय** इति न्यायात् । चङादीनां ङित्करणं क्ङित्प्रदेशेषु ग्रहणार्थं स्याद्, यत्र संज्ञारूपानुपलब्धिः ॥

( उद्योतः ) **संप्रसारणं** व्यचेर्ग्रहिज्येत्यनेन ॥ **गाङ्कुटादिभ्य इति ।** व्यचिमेवानुवदेदिति भावः ॥ भाष्ये—**क्ङिद्ग्रहण इति ।** क्ङिति चेत्यादावित्यर्थः ॥ **कृत्रिमेति ।** उभयगतिमजानत इदं दूषणं बोध्यम् ॥

( तद्वदतिदेशपक्षाभ्युपगमभाष्यम् )

**तद्वदतिदेशस्तर्ह्ययम्—गाङ्कुटादिभ्यः अङिणत् ङिद्वद्भवतीति । असंयोगाल्लिट् किद्वद्भवतीति ॥**

( आक्षेपभाष्यम् )

**स तर्हि वतिनिर्देशः कर्तव्यः ॥**

( समाधानभाष्यम् )

**[ न कर्तव्यः ॥ ]**

( आक्षेपसाधक(समाधानबाधक)भाष्यम् )

**नह्यन्तरेण वतिमतिदेशो गम्यते ॥**

---

१ 'रावादेशावितौ' ॥ २ अत्रेति शेषः । इत्संज्ञक ङकारे एतच्छास्त्रविधेये टित्त्वादेरभाव इति तदर्थः । तेन आद्यन्तावित्तिमिदचोऽन्त्यादिति शास्त्रसहकारेण टिदादिष्वागमत्वनिर्णयेऽपि एतच्छास्त्रविधेयस्य ङित आगमत्वे मानाभाव इति भावः । (र. ना.) ३ 'तङादयश्च' ॥ ४ अत्र तु ङकारस्य प्रत्ययसंज्ञोत्तरकालिकत्वं भावनपक्षे इति भावः । (र. ना.) ५ ङित्त्वं विनाऽपि एरुरित्यत्र प्रकरणे तानि विधीयमानेऽन्त्यादेशत्वं सिद्धमिति ङित्त्वविधानसामर्थ्यात्सर्वादेशत्वद्वारा गुणवृद्धिविधानार्थत्वमस्येति प्रागुक्तमिति भावः । ( र. ना. )
६ किं हि तद्यद् वचनान्न भवत्यपि तु सर्वमेव वचनात्सिद्ध्यतीत्यर्थः । तदुक्तं कैयटे—लोपस्य यथाऽऽदेशत्वमित्यादिना ( र. ना. )

( आक्षेपबाधक(समाधानबाधक)भाष्यम् )

**अन्तरेणापि वतिमतिदेशो गम्यते तद्यथा— "एष ब्रह्मदत्तः" अब्रह्मदत्तं ब्रह्मदत्त इत्याह । [1]ते मन्यामहे—ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यङितं ङिदित्याह, ङिद्वदिति गम्यते । अकितं किदित्याह, किद्वदिति गम्यते ॥**

( प्रदीपः ) **एष ब्रह्मदत्त इति** । निर्ज्ञाते भेदे तत्कार्यप्राप्तये तद्रूपारोपणं क्रियत इत्यतिदेशगतिः ।

( उद्द्योतः ) भाष्ये एष ब्रह्मदत्त इति । [2]भेदप्रदर्शनम्—अब्रह्मदत्तमिति । अस्य 'अयं च' इत्यादिस्तदाह—**निर्ज्ञाते भेदे इति** । निर्णीते भेदे इत्यर्थः ॥ **अतिदेशगतिरिति** । तत्फललाभ इत्यर्थः । आहार्यारोपस्य तत्कार्यबोधनफलकत्वादिति भावः ॥

( ५७२ अतिदेशपक्षदूषणवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तद्वदतिदेशेऽकिद्विधिप्रसङ्गः ॥ * ॥

( भाष्यम् ) **तद्वदतिदेशे अकिद्विधिरपि प्राप्नोति "सृजिदृशोर्झल्यमकिति" सिस्रक्षति दिद्दक्षते, अकिल्लक्षणोऽमागमः प्राप्नोति ॥**

( प्रदीपः ) **अकिद्विधिप्रसङ्ग इति** । कार्यातिदेशे तत्प्रतिबद्धानि कार्याणि व्यपदेशमन्तरेणापि भवन्तीति गुणनिषेधादीनामेवातिदेशः । अमागमस्तु स्वाश्रयः केन निवार्यते । यथा ब्राह्मणवदतिदेशः क्षत्रियस्य स्वाश्रयं युद्धादि न निवर्तयति । अकितीति च पर्युदासाश्रयणात्कित्प्रतिबद्धकार्याभावात्स्वाश्रयोऽमागमः स्यात् ॥

( उद्द्योतः ) व्यपदेशातिदेशे किद्व्यपदेशविरुद्धाकिद्व्यपदेशस्य स्वाश्रयस्य निवर्तनादाह—**कार्येति** । **व्यपदेशम्** । ङित्वादिरूपनिमित्तम् । करणे घञ् । यदि तु अतिदिश्यमानविरुद्धस्वाश्रयकार्याभावोऽतिदेशस्वभावसिद्धः, यथा तत्रैव दृष्टान्ते मद्यपानादिनिवृत्तिरिति न दोषस्तथापि परिहारान्तरस्याभिधास्यमानत्वान्नैतत्सूक्ष्मनिरूपितं भगवता ॥

( ५७३ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सिद्धं तु प्रसज्यप्रतिषेधात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् ॥ कथम् ? । प्रसज्यायं प्रतिषेधः क्रियते—किति नेति ॥**

( प्रदीपः ) **सिद्धं त्विति** । प्रसज्यप्रतिषेधे अमागमनिषेध एव कित्कार्यम् ॥

( ५७४ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * सर्वत्र सन्नन्तादात्मनेपदप्रतिषेधः * ॥

( भाष्यम् ) **सर्वेषु पक्षेषु सन्नन्तादात्मनेपदं प्राप्नोति । उच्चुकुटिषति निचुकुटिषति । 'ङितः' इत्यात्मनेपदं प्राप्नोति । तस्य प्रतिषेधो वक्तव्यः ॥**

( ५७५ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ सिद्धं तु पूर्वस्य कार्यातिदेशात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् ॥ कथम् ? । पूर्वस्य[3] यत्कार्यं तदतिदिश्यते ॥**

( प्रदीपः ) **सिद्धं तु पूर्वस्येति** । विशिष्टमत्र ङित्कार्यमतिदिश्यते न सर्वमित्यर्थः ॥

( उद्द्योतः ) **विशिष्टमत्रेति** । [4]ततः परस्य यत्तन्नातिदिश्यत इत्यर्थः ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ? ॥**

( समाधानभाष्यम् )

**नहि ॥ कथमनुच्यमानं गंस्यते ? । सप्तम्यर्थेऽपि वतिर्भवति । तद्यथा मधुरायामिव 'मधुरावत्' पाटलिपुत्र इव 'पाटलिपुत्रवत्' । एवं ङितीव 'ङिद्वत्', कितीव 'किद्वत्' ॥**

( प्रदीपः ) **सप्तम्यर्थेपि वतिरिति** । सप्तम्यर्थे वर्तमानादिवार्थे वतिरित्यर्थः ॥ ननु नेह वतिरुपात्तः तत्कथमयं परिहारः । अयं भावः—यथा न सर्वकार्यप्राप्त्यर्थ एवाब्रह्मदत्ते ब्रह्मदत्तत्वारोपः । अपि तु कस्यचिदेव कार्यस्य लाभार्थः । एवमिहापि व्याख्यानाद्विशिष्टङित्कार्यातिदेशार्थ एवाण्णितः प्रत्ययस्य तद्रूपासङ्गः । उपदेशग्रहणानुवृत्त्या चोपदेशे यो ङित्तस्मादात्मनेपदमिति सामर्थ्यात्पूर्वस्य कार्यातिदेशोऽयम् ॥

( उद्द्योतः ) सप्तम्यर्थे वतेरविधानादाह—**सप्तम्यर्थ इति** । यद्यपि सप्तम्यर्थवत्यन्तैकदेशस्तदर्थे प्रयुक्तः सत्या सत्यभामेतिवदित्यपि भाष्याशयो वक्तुं शक्यस्तथापि सार्वधातुकमिति सूत्रविषये पचेतामित्यादावातो ङित इति स्वकार्यस्यातिदेशानापत्तिरत आह—**अयं भाव इति** । **तद्रूपासङ्गः** तद्रूपारोप इत्यर्थः ॥ निर्लिङ्गं व्याख्यानमयुक्तमत आह—**उपदेशेति** ॥ **पूर्वस्येति** । [5]परभिन्नस्येत्यर्थः । भाष्ये सप्तम्यर्थेपीत्यपिना षष्ठ्यर्थसंग्रहः । तेनोभयसिद्धिः । **तेन तुल्यमिति** वत्यन्तैकदेशत्वाभावे तात्पर्यात् । तेन ततः परस्य यत्कार्यं तन्नेति बोध्यम् ॥

( पृथगनुबन्धप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ किमर्थं पृथङ्ङित्कितौ क्रियेते, न सर्वं किदेव स्यात्, ङिदेव वा ॥**

( प्रदीपः ) **अथ किमर्थमिति** । कार्यार्थत्वादनुबन्धासङ्गस्यैकेनैवानुबन्धेन गुणनिषेधादेः सिद्धत्वादनुबन्धभेदोनर्थक इति प्रश्नः । एकस्य चानुबन्धस्य करणेऽतिदेशोपि भेदेन न कर्तव्यः ॥

---

1 तेनेति पाठान्तरम् । (र. ना.) 2 'एष ब्रह्मदत्तः' इति वाक्येन पुरोवर्तिनि ब्रह्मदत्तनिष्ठगुणानालोक्य स्वतो ब्रह्मदत्तभिन्नमुद्दिश्य 'एष ब्रह्मदत्त' इत्याहाप्तः । तस्य विप्रलम्भकत्वाभावेन तदभाववति तत्प्रकारकत्वस्य प्रयोगेण 'ब्रह्मदत्तवदयं भवति' इति तस्य तात्पर्यं प्रतीयते स्वतन्त्रामात्ये अयं राजा इतिवत् इति भावः ॥ एवंच 'एष ब्रह्मदत्तः' इत्यस्यातिदेशत्वसमर्थकं भेदं प्रदर्शयति—अब्रह्मदत्तमितीत्यर्थः ॥ एतदजानानः कलिकातामुद्रितपुस्तके 'भेदप्रदर्शनम्' इत्यस्य 'एष ब्रह्मदत्तः' इत्यत्रैवान्वयनिश्चायकं रेखाद्वयं कुर्वाणो बहुवल्लभशास्त्री तु प्रमत्त एवेति बोध्यम् ॥ तदभाववति तत्प्रकारकत्वस्य प्रयोगेणेति प. शिवदत्तोक्तिः चिन्त्या । तस्य भ्रमत्वरूपस्य ज्ञानधर्मत्वात् अत्र च प्रयोगाभावात् । (र. ना.) 3 ङित्त्वेनातिदिश्यमानादिति शेषः । (र. ना.) 4 अत्रापि पूर्वोक्त एव शेषः । (र. ना.) 5 पचेतामित्यादौ स्वकार्यातिदेशानुरोधेनेदम् । ( र. ना. )

( उद्द्योतः ) अनुबन्धभेद इत्यस्य प्रत्ययादावित्यादिः ॥ अतिदेशोपि भेदेनेति । अत्र प्रकरणे इत्यादि । अपिना तत्तत्प्रदेशेषु चोभयग्रहणं न कर्तव्यं भवतीति सूचितम् ॥

( ५७६ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसंप्रसारणं सार्वधातुकचङादिषु ॥ * ॥

( भाष्यम् ) पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसंप्रसारणं सार्वधातुके चङादिषु च ॥ सार्वधातुके प्रयोजनम्—यथेह भवति सुप्तः सुप्तवानिति, एवं 'स्वपितः, स्वपिथः' इत्यत्रापि प्राप्नोति॥ चङादिषु च प्रयोजनम् । के पुनश्चङादयः? ॥

चङङ्नजिङ्ङ्वनिबथङ्नङः ॥ चङ्—यथेह भवति 'शूनः शूनवानिति, एवम् 'अशिश्वियत्' अत्रापि प्राप्नोति ॥ अङ्—यथेह भवति शून उक्त इति । एवम् 'अश्वद् अवोचद्' अत्रापि प्राप्नोति ॥ नजिङ्—यथेह भवति सुप्तः सुप्तवान् इति, एवं 'स्वप्नग्' इत्यत्रापि प्राप्नोति ॥ ङ्वनिप्—यथेह भवतीष्टमिष्टवानिति, एवं 'यज्वा' अत्रापि प्राप्नोति ॥ अथङ्—यथेह भवत्युषित इति, एवम् 'आवसथः' अत्रापि प्राप्नोति ॥ नङ्—यथेह भवतीष्टमिति, एवं 'यज्ञः' अत्रापि प्राप्नोति ॥

(प्रदीपः) आवसथ इति ॥ रुदिविदिभ्यां ङिदित्यतो ङिदिति वर्तमाने उपसर्गे वसेरित्यथप्रत्ययः ॥

( उद्द्योतः ) श्वेर्विभाषा धेट्श्व्योरिति चङ् । जॄस्तम्भिवलङ् च ॥ वचेरस्यतिवक्तीत्यङ् वचउमित्युम् । सर्वत्र ङित्त्वे कित्त्वे वा दोषाः । यथेह भवतीति भाष्यस्य—यथेह शून इत्यादौ सम्प्रसारणं भवति तथा चङादावपि स्यादित्यर्थः । भाष्ये—अथङ् इति । एवमानुपूर्वीक एव प्रत्यय इति भावः ॥ अन्यथा फलाभावात् उपसर्गे वसेरित्यत्र ङिदित्यननुवृत्तौ भाष्यासङ्गतिः स्पष्टैवेति केचित्॥

( ५७७ प्रयोजनवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ जाग्रोगुणविधिः ॥ * ॥

( भाष्यम् ) जागर्तेरगुणविधिः प्रयोजनम् । यथेह भवति—जागृतः जागृथ इत्यङितीति पर्युदासः । एवं जागरितः जागरितवानित्यत्रापि प्राप्नोति ॥

( प्रदीपः ) जाग्र इति । किति गुण इष्यते, न ङिति । एवं च विषयविभागः पृथगनुबन्धोपादानादेव लभ्यते ॥

( भाष्यम् ) अपर आह—"जाग्रो गुणविधिः ।" जागर्तेर्गुणविधिः प्रयोजनम् । यथेह भवति—जागरितः जागरितवानिति । एवं जागृतः जागृथ इत्यत्रापि प्राप्नोति ॥

(उद्द्योतः) भाष्ये अपर आहेति । यद्यपि सर्वत्र ङित्त्वे कित्त्वे वा सूत्रे तत्तत्पदमेवोपादातव्यम् । एवं च सर्वथा जागरित इत्यादौ गुणभवनमसिद्धमिति भाष्यदृष्टान्तासंगतिस्तथापि जागरित इत्येतत्सिद्ध्यर्थमन्यतरदपि यदि तत्सूत्रे न क्रियते तदायं ग्रन्थ इत्याहुः ॥

( ५७८ प्रयोजनवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ कुटादीनामिट्प्रतिषेधः ॥ * ॥

( भाष्यम् ) कुटादीनामिट्प्रतिषेधः प्रयोजनम् । यथेह भवति—'लूत्वा, धूत्वा' इति "श्र्युकः किति" इतीट्प्रतिषेधः, एवं 'नुविता, धुविता' अत्रापि प्राप्नोति ॥

(प्रदीपः) नुवितेति । णू स्तुतौ । धुवितेति धू विधूनने । कितीति सप्तमीनिर्देशात् इट्प्रतिषेधस्याप्यतिदेशः स्यादित्युपन्यासः । नत्विट्प्रतिषेधः पूर्वस्य कार्यम् ॥

( उद्द्योतः ) नू धू, कुटादी ॥ सप्तमीनिर्देशादिति । वस्तुतः पूर्वस्य कार्येतिदेश इत्यस्य परभिन्नकार्ये इत्यर्थः । स्वकार्य त्विष्यत एवातो ङित इत्यादीति बोध्यम् ॥

( ५७९ प्रयोजनवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ क्त्वायां कित्प्रतिषेधश्च ॥ * ॥

( भाष्यम् ) [ क्त्वायां कित्प्रतिषेधश्च प्रयोजनम् ] किं 'च' इट्प्रतिषेधः? ॥

नेत्याह । अदेशेयं चः पठितः—"क्त्वायां च कित्प्रतिषेध" इति ॥ यथेह भवति—देवित्वा सेवित्वेति "न क्त्वा सेट्" इति कित्त्वप्रतिषेधः । एवं 'कुटित्वा, पुटित्वा' अत्रापि प्राप्नोति ॥

( प्रदीपः ) कुटित्वेति । न क्त्वा सेडिति निषेधो विशेषानुपादानादौपदेशिकवदातिदेशिकस्यापि कित्त्वस्य स्यात् । अथ वा यदप्राप्तं कार्यं तदतिदिश्यते इति क्त्वाप्रत्यये कित्त्वातिदेश एव न स्यात् ॥

( उद्द्योतः ) ननु न क्त्वेति निषेध औपदेशिकस्यैवेति न दोषो ऽत आह—न क्त्वेति ॥ नन्वौपदेशिकस्य प्रथमोपस्थितत्वेन तन्निषेधेन चरितार्थमातिदेशिकं न निषेधेदित्यरुचेराह—अथवेति ॥ न स्यादिति । कुटादिभ्यः परस्य कित्त्वविधानं त्वन्यत्र चरितार्थं कुटित्वेत्यादौ कित्वप्रतिषेध एव स्यात् । न तु कित्त्वमिति भाष्याक्षरार्थः । एवं च कुटित्वेत्यादौ गुणः स्यात् ॥

( यथान्याससमर्थनभाष्यम् )

अथ वा देश एवायं चः पठितः—क्त्वायां कित्प्रतिषेधश्चेट्प्रतिषेधश्च ॥ कित्प्रतिषेध उदाहृतम् ॥ इट्प्रतिषेधो यथेह भवति 'लूत्वा धूत्वा' "श्र्युकः किति" इति । एवं 'नुवित्वा, धुवित्वा' अत्रापि प्राप्नोति॥

( प्रदीपः ) नुवित्वेति । ङित्त्वेनात्र कित्त्वं येननाप्राप्तिन्यायेन बाध्यत इति भावः ॥

( उद्द्योतः ) ननु पृथगनुबन्धकरणेपि नुवित्वेत्यादौ कथं श्र्युक इति निषेधो न, औपदेशिककित्त्वसत्त्वादित्यत आह—ङित्त्वेनेति ॥

( यथान्याससमर्थनबाधकभाष्यम् )

स्यादेतत्प्रयोजनं यद्यस्य नियोगत आतिदेशिकेन ङित्त्वेनौपदेशिकं कित्त्वं बाध्येत ॥ सत्यपि

१ 'धातुके' ॥ २ 'पूत्वा' ॥ ३ 'ग्रो भवति' ॥ ४ ... ॥ ... नकारे कृतं बोध्यम् । (र. ना.) ५ 'पूत्वा' ॥

तु ङित्त्वे किंदेवैषः। तस्माद्भूत्वा धूत्वेत्येव भवितव्यम्॥ गाङ्कुटादिभ्योऽञ्णिन्ङित्॥ १॥

**( प्रदीपः ) सत्यपीति।** विरोधाभावादतिदेशेन स्वाश्रयस्य कित्त्वस्यानिवर्तनाद् **येन नाप्राप्त इति** न्यायाभावाच्च। नहि कुटितुमित्यादौ कित्त्वे प्राप्ते ङित्त्वारम्भः॥ १॥

**( उद्योतः )** भाष्ये तस्मादिति। एवं च 'अदेशे ऽयं चः' इति स्थितम्॥ १॥

( ७० ङित्त्वातिदेशसूत्रम्॥ १। २। १ आ. २ सू० )

## ७८ सार्वधातुकमपित्॥ १। २। ४॥

( सार्वधातुकपदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**सार्वधातुकग्रहणं किमर्थम्?॥**

**( प्रदीपः ) सार्वधातुक॥ ४॥** लिङ्गादव्याप्तिरतिव्याप्तिर्वेति प्रदर्शनाय सार्वधातुकग्रहणस्याक्षेपप्रतिसमाधाने भाष्यकारेणोपन्यस्ते।

**( उद्योतः )** सार्वधातु॥ ४॥ **लिङ्गादिति।** चङादीनां ङित्त्वादित्यर्थः। तुल्यजातीयस्य ज्ञापने तृजादौ ङित्त्वमतिव्याप्तम्। धातुप्रत्ययसामान्यविषये तु ज्ञापकेऽव्याप्तिमिति भावः॥

( समाधानभाष्यम् )

**अपिदितीयत्युच्यमाने आर्धधातुकस्याप्यनेनापितो ङित्त्वं प्रसज्येत—कर्ता हर्ता॥**

( समाधाननिराकरणभाष्यम् )

**नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—नानेनार्धधातुकस्यापितो ङित्त्वं भवतीति। यदयमार्धधातुकीयान् कांश्चिद् ङितः करोति चङङ्जिङ् ङ्वनिबथङ्नङः॥**

**( प्रदीपः ) आर्धधातुकीयानिति।** अर्धधातुषु भवा इति ठञन्तत्वादन्तोदात्तत्वाभावाद् **बह्वचोन्तोदात्ताट्ठञिति** ठञभावे वृद्धाच्छो भवति॥ तातङस्तु ङित्त्वं तिपः पित्त्वादप्राप्तमित्यज्ञापकं सार्वधातुकाङित्त्वस्य, ङ्वनिपो ङित्त्वमज्ञापकमस्य हि पित्त्वात् ङित्त्वाप्राप्तिः॥

**( उद्योतः )** आर्धधातुकशब्दस्य चरत्याद्यर्थठगन्तत्वेनान्तोदात्तत्वाद्बह्वचोन्तोदात्तादिति ठञ् प्राप्नोतीत्यत आह—**अर्धेति।** अर्धधातुशब्दस्तत्पुरुषेणान्तोदात्तः, ततश्च भवादावर्थे बह्वच इति ठञ्, ञित्त्वादाद्युदात्तत्वमिति भावः॥ **भवेति।** तेषु भवा संज्ञार्धधातुकमित्यर्थः॥ **ठञन्तत्वादिति।** आर्धधातुकशब्दस्येति शेषः॥ आर्धधातुकसंज्ञायां संज्ञित्वेन भवानार्धधातुकीयानित्यर्थः॥ आर्धधातुक इतिवदार्धधातुकानिति वक्तव्ये आर्धधातुकीयानित्युक्तिः प्रियतद्धिता दाक्षिणात्या इति न्यायेनेति बोध्यम्॥ ननु हेङित्त्वेनैव सिद्धे तदादेशतातङो ङित्त्वं सार्वधातुकाङित्त्वस्य ज्ञापकं स्यादत आह—तातङस्त्विति॥ पित्त्वान्ङित्त्वाप्राप्तिरिति। तद्धि सुत्रेत्यत्र तुगर्थमनुदात्तार्थं चावश्यकमिति भावः। एवं च पूर्वसूत्रे सहनिर्देशादिहापि तदुच्चारणमिति तात्पर्यम्॥ यद्वा ङ्वनिप्प्रक्षिप्तः ङ्वनिब्भूतकालानामिति च प्रक्षिप्तः पाठ इति तात्पर्यम्॥

( निराकरणबाधकभाष्यम् )

**सार्वधातुकेऽप्येतज्ज्ञापकं स्यात्॥**

( निराकरणसाधकभाष्यम् )

**नेत्याह॥ तुल्यजातीयस्य ज्ञापकम्॥**
**कश्च तुल्यजातीयः?॥**
**यथाजातीयकाश्चङङ्जिङ्ङ्वनिबथङ्नङः॥**
**कथंजातीयकाश्चैते?॥**
**आर्धधातुकीयाः॥**

( समाधानसाधकभाष्यम् )

**यद्येतदस्ति तुल्यजातीयस्य ज्ञापकमिति, चङङौ लुङ्विकरणानां ज्ञापकौ स्याताम्, नजिङ्वर्तमानकालानाम्, ङ्वनिब् भूतकालानाम्, अथङ्शब्द औणादिकानाम्, नङ्शब्दो घञर्थानाम्। तस्मात्सार्वधातुकग्रहणं कर्तव्यम्॥**

**( उद्योतः )** लुङ्विकरणानामिति। ते चङ्क्सिच्चिणः॥

( पर्युदासप्रसज्यप्रतिषेधनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयं पर्युदासः—यदन्यत्पित इति, आहोस्वित्प्रसज्यायं प्रतिषेधः—पिन्नेति?।**

( प्रत्याक्षेपभाष्यम् )

**कश्चात्र विशेषः?।**

( ५८० आक्षेपवार्तिकम्॥ १॥ )

### ॥ * ॥ अपिद् ङिदिति चेत् शबेकादेशप्रतिषेध आदिवत्त्वात्॥ * ॥

( पर्युदासपक्षे दूषणभाष्यम् )

**अपिन् ङिदिति चेत् शबेकादेशे प्रतिषेधो वक्तव्यः। च्यवन्ते प्लवन्ते॥ किं कारणम्?॥ आदिवत्त्वात्। पिदपितोरेकादेशोऽपित आदिवत्स्यात्। अस्त्यन्यदपित इति कृत्वा ङित्त्वं प्राप्नोति॥**

**( प्रदीपः ) च्यवन्ते प्लवन्त इति।** गुणात्पूर्वं नित्यत्वादन्तरङ्गत्वाच्चैकादेशः। तत्र कृते परस्येहापित आश्रितत्वात्परस्य कार्यं प्रत्यादिवद्भावाद् गुणनिषेधः स्यात्, साधारणपरिहाराभिधानाय **वार्णादाङ्गमिति** नाश्रितम्। प्रसज्यप्रतिषेधे तु ङित्त्वनिषेधः पूर्वस्य कार्यमिति पूर्वं प्रत्यन्तवत्त्वात् ङित्त्वाभावः। यद्यपि सार्वधातुकावयवस्याकारस्यैकादेशः तथापि परं प्रत्यादिवत्त्वादन्तशब्दः सार्वधातुकमपिद् भवतीति स्यादेव ङित्त्वम्। च्यवे इति चोत्तमैकवचने सर्वस्यैव सार्वधातुकस्यैकादेश इति ङित्त्वप्रसङ्गः॥

---

१ कलिकातामुद्रितपुस्तके तु—'एवं चादेशे पश्च इति' इति पाठः। २ लुङ्विकरणत्वादिभिर्वक्ष्यमाणैः सामान्यधर्मैरिति शेषः। ( र. ना. ) ३ अत्राव्याप्तिपदेन लक्षणयाऽसंभवोऽभिप्रेतः। ( र.ना. ) ४ 'अपिन्ङिदिती'॥ ५ 'स्यापि ङि'॥ ६ इदं हि आर्धधातुकपदस्य साधुत्वाय व्युत्पत्तिमात्रं प्रदर्श्यते न तु प्रवृत्तिनिमित्तम्। तत्त्वन्तु पाणिनिसंकेतसंवत्त्वेनार्धधातुकपदस्यैव। अन्यद्धि शब्दानां व्युत्पत्तिनिमि..मन्यच्च प्रवृत्तिनिमित्तमिति स्वीकारात्। गवादि पदेषु तथा दर्शनाच्च। ( र. ना. ) ७ पूर्वत्रोपात्ते सूत्रवद् बह्वर्थबोधकेऽल्पाक्षरे भाष्यवाक्ये चङङ नजिङ् ङ्वनिबथङ् नङ इत्यत्रेत्यर्थः। (र.ना.) ८ धातुविहितप्रत्ययसामान्यविषयकत्वेन ज्ञापकतामभिप्रेत्यासंभवं शङ्कते। सार्वधातुकेऽपीति (र.ना.) ९ 'घञर्थीयानाम्'॥ १० गुणस्य बहु संज्ञापेक्षत्वरूपं बहिरङ्गत्वं कैयटमते। (र.ना.)

(उद्द्योतः) प्रत्यादिवद्भावादिति । शाब्दफललाभायादिवत्त्वमेव प्राप्नोति, नत्वन्तवद्भावः । तेन हि ङित्त्वाभाव आर्थः फलति नतु शाब्द इति भावः ॥ साधारणेति । व्यौश्रयेप्यस्य प्रवृत्तिमङ्गीकृत्येदम् । वस्तुतस्तु विभिन्ननिमित्ते प्रवृत्तावपि विभिन्नस्थानिके न तत्परिभाषाप्रवृत्तिरिति भाष्याशयः ॥ यद्यपीति । अकारयोरेकादेशस्योक्तन्यायेनापित्त्वेप्युभयत आश्रयणेऽन्तादिवत्त्वनिषेधात्सार्वधातुकत्वाभावेन न ङित्त्वम् । परादिवद्भावेन तु न सार्वधातुकत्वलाभः परस्य सार्वधातुकावयवत्वेपि तत्त्वाभावादिति भावः ॥ परं प्रतीति । परं समुदायं प्रतीत्यर्थः । एकादेशस्थानिनावचौ पूर्वपरौ ययोः समुदाययोरन्तादी एकादेशोपि तयोरेवान्तदिवदिति सूत्रार्थ इति भावः ॥ अभ्युपेत्यापि अचावेव प्रत्यन्तवत्वं दोषान्तरमाह—च्यवे इति ॥ हलः श्नः सूत्रभाष्ये तु 'ङिच्च पिन्न पिच्च ङिन्न' इत्यर्थसिद्ध्यर्थं प्रसज्यप्रतिषेध एवाश्रितः ॥

( प्रसज्यप्रतिषेधाभ्युपगमभाष्यम् )

अस्तु तर्हि प्रसज्यप्रतिषेधः—पिन्नेति ।

( ५८१ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न पिन्ङिदिति चेदुत्तमैकादेशप्रतिषेधः ॥ * ॥**

( भाष्यम् ) न पिन्ङिदिति चेदुत्तमैकादेशे प्रतिषेधः प्राप्नोति । तुदानि लिखानि ॥ किं कारणम् ? । आदिवत्त्वादेव । पिदपितोरेकादेशः पित आदिवत् स्यात् । तत्र पिन्नेति प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) तुदानीति । यद्यप्युत्तमस्य पित्त्वं तथापि तद्भक्तत्वादाटः पिदवयवस्यैकादेशः पित उत्तमस्यादिवदिति स्यान्ङित्त्वनिषेधः । तुदै इत्यत्र च सर्वस्यैव पित एकादेशः पित आदिवदिति ङित्त्वप्रतिषेधप्रसङ्गः ॥

( उद्द्योतः ) यद्यप्युत्तमस्येति । आडुत्तमस्येत्यस्योत्तमस्याडागमो भवति यस्मात् स पिदित्यर्थ इति भावः ॥ नन्वाटायमेकादेशो, न च स पिदवयवो, मिवेव हि पिद्, इत्यत उक्तम्—तद्भक्तत्वादिति । शास्त्रेण तद्भक्तत्वबोधनादित्यर्थः ॥

( सिद्धान्तिभाष्यम् )

यथेच्छसि तथास्तु ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तमुभयथापि दोष इति ॥

( समाधानभाष्यम् )

उभयथापि न दोषः । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानम् ॥ सार्वधातुकमपित् ॥ ४ ॥

( प्रदीपः ) स्थानिवद्भावादिति । यथा स्थानिकाले यथायोगं गुणप्रवृत्तिनिवृत्ती तथैकादेशेपि कृतेऽव्यवधानबुद्ध्या भवतः ॥

( उद्द्योतः ) ङित्त्वविधिप्रतिषेधौ न पूर्वस्य कार्ये इत्यत आह—यथेति ॥ अव्यवधानबुद्ध्येति । शप्श्नयोरव्यवधानबुद्ध्येत्यर्थः ॥ भाष्ये—व्यवधानमिति । ङित्त्वप्रयुक्ते निषेधे कर्तव्ये शपा व्यवधानमित्यर्थः ॥ ४ ॥

( इति ङित्प्रकरणम् )

## ( अथ कित्प्रकरणम् ॥ )

( ७१ कित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. ३ सू. )

## ७९ असंयोगाल्लिट् कित् ॥१।२।५॥

( ५८२ सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्विप्रतिषेधेन ॥ * ॥**

( भाष्यम् ) ऋदुपधेभ्यो लिट कित्त्वं गुणाद्भवति विप्रतिषेधेन । ववृते ववृधे ॥

( प्रदीपः ) असंयोगात् ॥ ५ ॥ ऋदुपधेभ्य इति । बिभिदतुः बिभिदुरित्यादौ कित्त्वं नित्यं गुणस्त्वनित्यः ववृत इत्यादौ तु द्वयोरप्यनित्यत्वं तत्र परत्वाद् गुणप्रसङ्गः पूर्वविप्रतिषेधाश्रयेण निवार्यते ॥

( उद्द्योतः ) असंयोगात् ॥५॥ ऋदुपधेभ्य इति विशिष्योक्तिः किमर्थेत्यत आह–बिभिदतुरिति । यद्यपि गुणे कृते कित्कार्याभावाद् तदप्राप्तौ कित्त्वमनित्यमिति शक्यं वक्तुम् । तथापि कृताकृतप्रसङ्गमात्रेण नित्यत्वमिति भावः ॥ द्वयोरप्यनित्यत्वमिति । कित्त्वे क्ङिति प्रतिषेधाद् गुणोऽनित्यः गुणे संयोगात्परत्वात्कित्त्वमनित्यमिति भावः॥

( ५८३ वार्तिकम् ॥ २ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) किमुक्तम् ? । * 'न वा क्सस्यानवकाशत्वादपवादो गुणस्य * इति ॥

( प्रदीपः ) न वा क्सस्येति । यथा क्सस्य कित्करणसामर्थ्याद् गुणो बाध्यते तथेहातिदेशसामर्थ्यादित्यर्थः ॥

( उद्द्योतः ) ननु क्सस्यानवकाशत्वादित्ययुक्तम् । गुणे कृतेऽपि भूतपूर्वगत्या कुसप्राप्तेरत आह—यथेति । अन्यथा जातस्य निषेधायोगेन विशिष्टविधानं व्यर्थं स्यादिति च्ल्यवस्थायां प्राप्तगुणं बाधित्वा कुस एवेति भावः ॥ तथेहेति । ऋदुपधविषयैतल्लक्षणोपप्लवप्रापितनिषेधसामर्थ्यादित्यर्थः ॥

( अनवकाशत्वबाधकभाष्यम् )

विषम उपन्यासः । युक्तं तत्र यदनवकाशं कित्करणं गुणं बाधते ॥ इह पुनरुभयं सावकाशम्—कित्करणस्यावकाशः—ईजतुः, ईजुः । गुणस्यावकाशः—वर्तिता वर्द्धिता । इहोभयं प्राप्नोति—ववृते ववृधे । परत्वाद् गुणः प्राप्नोति ॥

---

१ आदिवत्त्वेन लभ्यमपितो ङित्त्वं शाब्दम्, अपिन्ङिदिति साक्षाद्विहितत्वात् । अन्तवत्त्वेन लभ्यः पितो ङित्त्वाभावस्तु आर्थः । अपितो ङित्त्वविधानेन पर्यवसितत्वात् इति भावः । ( र. ना. ) २ Bangal Asiatic Society मुद्रितपुस्तके 'नत्वं तद्भावः' इति पाठस्तु शोधकप्रमादमूलकः ॥

३ विभिन्नस्थानिके इत्यर्थः । (र.ना.) ४ पूर्वान्तवद् भावप्रयुक्तेत्यादिः । (र.ना.) ५ अन्तादिघटितसमुदायवृत्तिधर्मातिदेश एवैकादेशे इति भावः । (र. ना.) ६ आडागमः पिदित्यर्थस्वीकारे तु आटः सार्वधातुकत्वाभावेनैकादेशे तत्र ङित्त्वे सति ... (र. ना.) ७ 'था च' ॥ ८ 'था च' ॥ ९ 'न भवति' ॥

(प्रदीपः) युक्तं तत्रेति । क्सस्य कित्करणे प्रयोजनान्तराभावः । इह तु सम्प्रसारणविधौ कृतार्थत्वाद् दुर्बलेनातिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बलत्वान्न तद्विधिना सह स्पर्धते तातङ्न्यायेन ॥

( उद्द्योतः ) ननु विध्युन्मूलकत्वेन निषेधस्य बलवत्त्वमयं च कार्यातिदेशोऽत आह—दुर्बलेनेति । अतिदेशदुर्बलत्वे हेतुः कृतार्थत्वादित्यन्तः ॥ तातङ्न्यायेनेति । तातङि गुणादिनिषेधार्थत्वेन ङित्त्वस्य चरितार्थत्वादनेकाल्शिदित्यनेन यथाऽपवादङित्त्वेऽस्य बाधस्तथेत्यर्थः ॥ केचित्तु इदं न युक्तं, विचति गृह्णातीत्यादौ सम्प्रसारणेन चरितार्थतया ङित्त्वस्य गुणनिषेधातिदेशानापत्तेः, अतिदेशोपप्लुततद्विषयनिषेधसामर्थ्याद् गुणबाध इत्येवं वार्तिकस्य कैयटेन व्याख्यानादेतदाशयानभिज्ञैकदेशिनश्च विषम इत्यादिग्रन्थ इत्याहुः ५

( भाष्यम् ) इदं तर्ह्युक्तम्—"इष्टवाची परशब्दः" इति । विप्रतिषेधे परं यदिष्टं तद्भवति इति ॥ असंयोगाल्लिट्कित् ॥ ५ ॥

( प्रदीपः ) इष्टवाचीति । सूत्रकारेणैवायमर्थः संगृहीतः स तु स्मर्तव्य इत्यर्थः ॥ ५ ॥

---

( ७२ कित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. ४ सू. )

## ८० इन्धिभवतिभ्यां च ॥ १ । २ । ६ ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ? ॥

(प्रदीपः) इन्धि ॥६॥ किमर्थमिति । विनापि सूत्रेणेष्टं सिध्यति सत्यपि चेष्टं न सिध्यति । बभूवेत्यजुलक्षणत्वाद् वृद्धेरिग्लक्षणत्वाभावात्प्रतिषेधाप्रसङ्गात् । गुणमात्रनिषेधे एव तु बभूविथ अहं बभूवेति च णित्त्वाभावपक्षे स्यादिति प्रश्नः ॥

( उद्द्योतः ) इन्धिभवति ॥ ६ ॥ इष्टासिद्धिमेव दर्शयति—बभूवेत्यजिति ॥ ननु कित्त्वविधानसामर्थ्यादनिग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यतीत्यत आह—गुणमात्रेति । एवं च तन्निषेधेनास्य चारितार्थ्येनानिग्लक्षणवृद्धिनिषेधसत्त्वे मानाभाव इति भावः ॥

( समाधानभाष्यम् )

इन्धेः संयोगार्थं वचनम् । भवतेः पिदर्थम् ।

( प्रत्याख्यानभाष्यम् )

अयं योगः शक्योऽवक्तुम् ।

( आक्षेपभाष्यम् )

कथम् ? ।

( ५८४ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां किद्वचनानर्थक्यम् ॥ * ॥

( भाष्यम् ) इन्धेश्छन्दोविषयो लिट् । नह्यन्तरेण छन्द इन्धेरनन्तरो लिट् लभ्यः । आमा भाषायां भवितव्यम् ॥ भुवो वुको नित्यत्वाद् । भवतेरपि नित्यो वुक् । कृते गुणे प्राप्नोति, अकृतेपि प्राप्नोति । ताभ्यां किद्वचनानर्थक्यम् । ताभ्यामिन्धिभवतीभ्यां किद्वचनमनर्थकम् ॥ इन्धिभवतिभ्यां च ॥ ६ ॥

( प्रदीपः ) इन्धेरिति । भाषायां लिट आमा व्यवधानाच्छन्दस्यमन्त्र इत्याम्प्रतिषेधादेतदुक्तम् । न लस्य भाषायां प्रयोगाभावः । तत्र छन्दस्युभयथेति लिटः सार्वधातुकत्वात्समीध इति ङ्त्त्विवान्नलोपः । आर्धधातुकत्वाच्च श्नमभावः । व्यत्ययो बहुलमिति वचनाद्वा ॥ नित्यो वुगिति । ओः सुपीत्यत ओरिति नानुवर्तत इति भावः । एकदेशविकृतस्यानन्यत्वाच्च शब्दान्तरप्राप्त्यभावः । सत्यामपि वा शब्दान्तरप्राप्तौ कृताकृतप्रसङ्गित्वाद्वुको नित्यत्वं, वुकि कृते गुणस्य प्राप्तिरेव नास्तीति नैतयोस्तुल्यबलत्वम् ॥ ६ ॥

( उद्द्योतः ) ननु छन्दस्येव समीधे इत्यादौ नलोपार्थं कित्त्वमावश्यकमत आह—तत्रेति ॥ नन्वेवं विकरणः स्यादत आह—आर्धेति ॥ नन्वेवं शब्दान्तरप्राप्तिः क्वापि न स्यादत आह—सत्यामपीति । श्रौतरूपमादायेति भावः ॥ ६ ॥

---

( ७३ कित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. ५ सू. )

## ८१ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ १ । २ । ७ ॥

( आक्षेपभाष्यम् )

किमर्थं मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते । न किदेवँ हि क्त्वा ? ।

( समाधानभाष्यम् )

"न क्त्वा सेड्" इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ॥

( लाघवाभाष्यम् )

यदि तर्हि मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते नार्थो 'न क्त्वा सेड्' इत्यनेन कित्वप्रतिषेधेन । इदं नियमार्थं भविष्यति—मृडादिभ्य एव परस्य क्त्वः कित्त्वं भवति नान्येभ्य इति ॥

( प्रदीपः ) मृड ॥७॥ मृडादिभ्य एवेति । विपरीतनियमस्तु व्याख्यानाच्च भविष्यति मृडादिभ्यः क्त्वैव किद्भवतीति । नह्यनिष्टार्थो शास्त्रप्रवृत्तिर्लक्ष्यमूलकत्वाद्व्याकरणस्मृतेः ॥

( उद्द्योतः ) मृडमृद ॥ ७ ॥ विपरीतेति । विशेषणीभूतमृडादिसंकोचस्य न्याय्यत्वादयं न्याय्य इति भावः । न च लोके प्रधानसंकोच एव न्याय्यत्वेन व्यवह्रियते 'राज्ञः संकोचः कार्यः' इति, राजनिमित्तं स्वव्यवहारसंकोचस्तदविस्तररूपः कर्तव्य इति तदर्थात् ॥ समाधत्ते,—व्याख्यानादिति ॥

( आक्षेपभाष्यम् )

यदि नियमः क्रियते, इहापि तर्हि नियमान्न प्राप्नोति—लूत्वा पूत्वा । अत्राप्यकित्वं प्राप्नोति ॥

---

१ सूत्रकारेणायमर्थः संगृहीत एव नापूर्वः, स केवलमस्मान् प्रति स्मर्तव्यत्वेन वार्तिककृता बोध्यते । तथा च नेदमपूर्वं वार्तिकमिति भावः । ( र. ना. )
२ इदं प्रथमान्तम् । ( र. ना. ) ३ 'ग्रहणम्' ॥ ४ 'ताभ्यां लिटः' ॥
५ 'ऽपि' ॥ ६ एकदेशविकृतन्यायेनानन्यत्वातिदेशमादाय शब्दान्तरप्राप्त्यभावेऽपीत्यादिः । ( र. ना. ) ७ काकिदमुच्यते ( र. ना. )

८ प्रत्ययार्थे इत्यादिः । यत्रैवकारस्ततोऽन्यत्र नियम इति स्वीकारेण मृडादिभ्यः क्त्वैव किद् भवतीत्यर्थ स्वीकारे मृडादीनां संकोच इति भावः । (र.ना.)
९ नात्र प्रधानीभूतस्य राज्ञः संकोचः किन्तु स्वव्यवहारस्यैवाविस्तररूपः संकोचः, तेन हि शुल्कादिग्राह्यभावेन राज्ञः संकोचः फलितो भवतीति समाधानाशयः । ( र. ना. )

(प्रदीपः) लूत्वेति । क्त्वाप्रत्ययमात्रस्य नियमः स्यात् । कित्त्वं तु क्त्वातोसुन्कसुन इत्यादौ विशेषणार्थं स्यात् ॥

(उद्द्योतः) विशेषणार्थं स्यादिति । सुत्वेत्यादि च व्यावर्त्यं स्यादित्याहुः । अस्यानर्थकत्वेनैव वारणाद्विशेषणव्यावर्त्यं चिन्त्यम् । वस्तुतः क्त्वः कित्त्वसामर्थ्यादेव तुल्यजातीयापेक्षो नियम इति बोध्यम् ॥

(आक्षेपबाधकभाष्यम्)

**तुल्यजातीयस्य नियमः ॥**
**कश्च तुल्यजातीयः ? ॥**
**यथाजातीयको मृडादिभ्यः परः क्त्वा ? ॥**
**कथंजातीयकश्च मृडादिभ्यः परः क्त्वा ? ॥**
**सेट् ॥**

(आक्षेपसाधकभाष्यम्)

**एवमप्यस्त्यत्र[1] कश्चिद्विभाषितेट् सोनिटां नियामकः स्यात् ॥**

(प्रदीपः) एवमपीति । क्लिशः क्त्वानिष्ठयोरिति विकल्पेनेड्विधानात् ।

(आक्षेपबाधकभाष्यम्)

**अस्तु तावद्ये सेटस्तेषां ग्रहणं नियमार्थम्[2] । य इदानीं विभाषितेट् तस्य ग्रहणं विध्यर्थं भविष्यति ॥ रुदविदमुषग्रहिस्वपिप्रच्छयोः सन्नर्थं ग्रहणम् । किदेव हि क्त्वा[3] ॥ मृडमृदगुधकुष—[4] ॥ ७ ॥**

(प्रदीपः) अस्तु तावदिति । मृडमृदवदवसां क्त्वः कित्त्वविधानं नियमार्थं गुधकुषक्लिशीनां तु रलो व्युपधादिति विकल्पे प्राप्ते नित्यार्थम् । तत्र विधिसम्भवे क्लिशेरनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥ सन्नर्थमिति । तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥

(उद्द्योतः) भाष्ये विभाषितेड्ग्रहणमुपलक्षणमित्याशयेनाह—गुधेति ॥ ननु रुदविदेति सूत्रे स्वपिप्रच्छिग्रहणमनिटां नियामकं स्यादतो भाष्ये—रुदविदमुषग्रहिस्वपीति । तत्र सूत्रे स्वपिप्रच्छ्योर्ग्रहणमित्यर्थः ॥ तद्ध्वनयन्व्याचष्टे—तत्रेति । व्याख्यानात् क्त्वया न सम्बन्ध इति भावः । स्वपिप्रच्छ्योः क्त्वः कित्वविधानमनिटः क्त्वो नियमार्थं न भवतीत्यन्वयः ॥ ७ ॥

(७४ कित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. ६ सू.)

## ८३ इको झल् ॥ १ । २ । ९ ॥

(योगविभागप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**किमर्थमिकः परस्य सनः कित्त्वमुच्यते ? ।**

(प्रदीपः) इको ॥ ९ ॥ किमर्थमिति । इको झल् हलन्ताच्चेत्येक एव योगः कर्तव्यः किमर्थो योगविभाग इति प्रश्नार्थः वक्ष्यमाणश्चात्राभिप्रायः ॥

(उद्द्योतः) इको झल् ॥ ९ ॥ सूत्रं किमर्थमिति वक्तव्ये किमितीकः परस्येत्युक्तमत आह—इक इति । उत्तरार्थं सूत्रमावश्यकमिति भावः । अत एवेकुधातोर्न ग्रहणम् । उत्तरत्रार्थाधिकारानुरोधात् ॥

(५८५ समाधानवार्तिकम् ॥ १ ॥)

**॥ * ॥ इकः कित्त्वं गुणो मा भूत् ॥ * ॥**

(भाष्यम्) **इकः कित्त्वं क्रियते गुणो मा भूदिति । चिचीषति । तुष्टूषति ॥**

(समाधाननिराकरणभाष्यम्)

**नैतदस्ति प्रयोजनम् ।**

(५८६ निराकरणहेतुवार्तिकम् ॥ २ ॥)

**॥ * ॥ दीर्घारम्भात् ॥ * ॥**

(भाष्यम्) **दीर्घत्वमत्र बाधकं भविष्यति ॥**

(प्रदीपः) दीर्घत्वमिति । अज्झनगमां सनीति दीर्घत्वं नाप्राप्ते गुण आरभ्यमाणं तस्य बाधकमिति भावः ॥

(उद्द्योतः) ननु गुणस्य परत्वात्कथं दीर्घो बाधकोत आह—अज्झनेति । एवं चानवकाशत्वाद् दीर्घो गुणस्य बाधक इति भावः ॥

(५८७ समाधानसाधकवार्तिकम् ॥ ३ ॥)

**॥ * ॥ कृते भवेत् ॥ * ॥**

(भाष्यम्) **कृते खलु दीर्घत्वे गुणः प्राप्नोति ॥**

(प्रदीपः) कृते भवेदिति । शास्त्रमावर्तमानं धर्मसाधनं जपादिवदिति भावः ॥

(उद्द्योतः) भाष्ये कृते भवेदिति । अनवकाशत्वेन बाधकस्य प्रवृत्युत्तरमुत्सर्गप्रवृत्तेरङ्गीकारादिति भावः ॥ शास्त्रं प्रवर्तमानमिति । एवं चादृष्टार्थं प्रवृत्त्या शास्त्रस्यानर्थक्याभावान्न बाध इति भावः ॥ शास्त्रमावर्तमानमिति क्वचित्पाठः तत्राप्ययमेवार्थः ॥

(५८८ आक्षेपवार्तिकम् ॥ ४ ॥)

**॥ * ॥ अनर्थकं तु ॥ * ॥**

(भाष्यम्) **अनर्थकमेवं सति दीर्घत्वं स्यात् ॥**

(प्रदीपः) अनर्थकं त्विति । शास्त्रपूर्वकात्प्रयोगाद्धर्मो न तु शास्त्रप्रवृत्तिमात्रादिति भावः ॥

(भाष्यम्) **नानर्थकम् ।**

(५८९ आक्षेपसमाधानवार्तिकम् ॥ ५ ॥)

**॥ * ॥ ह्रस्वार्थम् ॥ * ॥**

(भाष्यम्) **ह्रस्वानां दीर्घवचनसामर्थ्याद् गुणो न भविष्यति ॥**

---

१ क्त्वनिवन्तमेतत् । (र. ना.) २ तुकः पूर्वावयवत्वेन तद्विशिष्टस्यानर्थक्यमिति भावः । (र. ना.) ३ एतच्चानुपदमेव भाष्ये वक्ष्यते । (र. ना.) ४ 'प्यत्रास्ति' ॥ ५ 'र्थं भविष्यति' ॥ ६ 'मृडमृद—' इति सूत्रव्याख्यान्तर्गत एव सूत्रान्तरव्याख्यायां सूत्रान्तरस्यैव 'रुदविदमुषग्रहिस्वपि' इति सूत्रप्रतीकस्य प्रासङ्गिक उल्लेखः । न तु प्रधानव्याख्यार्थं प्रतीकोल्लेखः । प्रदीपोद्द्योतानुरोधात् ॥ एवं च 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति संपूर्णसूत्रस्याष्टाध्यायीपाठद्योतकाङ्क्षयोगः प्रधानत्वसूचकः प्रामादिक एव ॥ ७ तथा च न क्त्वासेडिति पारायणादावदृष्टार्थमेव प्रतिपत्तिलाघवार्थमेवेति वा स्थितम् । (र. ना.) ८ स्वपिप्रच्छ्योरिति शेषः । (र. ना.) ९ शास्त्रेण विहितस्य तच्छास्त्रानुसंधानपूर्वकप्रयोगादित्यर्थः । (र. ना.)

( प्रदीपः ) ह्रस्वार्थमिति । ह्रस्वानामेव दीर्घविधानसामर्थ्याद् गुणो न स्यात् ॥

( उद्द्योतः ) ननु शास्त्रस्य[1] साधारणत्वेन ह्रस्वविषये एव बाधो नान्यत्रेत्यत्र किं विनिगमकमत आह—ह्रस्वानामेवेति ।

( आक्षेपशेषभाष्यम् )

**भवेद् ह्रस्वानां दीर्घवचनसामर्थ्याद् गुणो न स्यात् ॥**

( उद्द्योतः ) ह्रस्वार्थं दीर्घविधानं चेत्किं, तत्राह—भाष्ये—भवेदित्यादि ॥

( ५९० आक्षेपवार्तिकम् ॥ ६ ॥ )

**॥ ❋ ॥ दीर्घाणां तु प्रसज्यते ॥ ❋ ॥**

( भाष्यम् ) **दीर्घाणां तु खलु गुणः प्राप्नोति ॥**

( प्रदीपः ) दीर्घाणां तु प्रागेव ताद्रूप्याद्रूपविशेषसंपत्तिफलत्वाच्छास्त्रस्य दीर्घशास्त्राप्रवर्तनाद् गुणप्रसङ्गः ॥

( आक्षेपबाधकभाष्यम् )

**दीर्घाणामपि[2] दीर्घवचनसामर्थ्याद् गुणो न भविष्यति ॥**

( प्रदीपः ) दीर्घाणामपीति । गुणापाकरणार्थं दीर्घेष्वपि दीर्घशास्त्रं प्रवर्तत एवेत्यर्थः ॥

(उद्द्योतः) गुणापेति । एवं च तन्निवृत्त्या रूपविशेषसम्पत्तिः फलमस्त्येवेत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**न दीर्घाणां दीर्घाः प्राप्नुवन्ति ॥ किं कारणम् ? ॥ नहि भुक्तवान् पुनर्भुङ्क्ते, कृतश्मश्रुश्च[3] पुनः श्मश्रूणि कारयति ॥**

( प्रदीपः ) नहि भुक्तवानिति । तृप्तिफलं भोजनं फले सम्पन्ने पुनर्न प्रवर्तते ॥

( उद्द्योतः ) नहीतिहिशब्दसूचितं हेतुमाह—तृप्तीति ॥

( आक्षेपबाधकभाष्यम् )

**ननु च पुनः प्रवृत्तिरपि दृष्टा—भुक्तवानपि पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति ॥**

( प्रदीपः ) ननु चेति । तृप्तोपि पुनर्भुङ्क्त इत्यर्थः ॥

( ५९१ आक्षेपसाधकवार्तिकम् ॥ ७ ॥ )

**॥ ❋ ॥ सामर्थ्याद्धि पुनर्भाव्यम् ॥ ❋ ॥**

( भाष्यम् ) **सामर्थ्याद्धि पुनः[4] प्रवृत्तिर्भवति । भोजनविशेषाच्छिल्पिविशेषाद्वा[5] । दीर्घाणां पुनर्दीर्घत्ववचने न किंचित्प्रयोजनमस्ति[6] । "अकृतकारि खल्वपि[7] शास्त्रमग्निवत्[8]" । तद्यथा—अग्निर्यद्दग्धं तद्दहति[9] ॥**

( प्रदीपः ) भाव्यमिति । कर्तव्यं भोजनं तृप्तिविशेषार्थिभिरित्यर्थः । न किंचिदिति । नहि दीर्घाणां दीर्घतरः सम्पद्यत इत्यर्थः ॥ अग्निवदिति । दग्धस्यायोग्यत्वाददाह इति भावः । इहाप्ययोग्यत्वाद्दीर्घेषु दीर्घशास्त्रेण न प्रवर्तितव्यमिति भावः ॥

(उद्द्योतः) भाव्यमित्यस्य कर्तव्यमिति व्याख्या, शेषपूरणमन्यत् ॥ तृप्तिविशेषेति । विजातीया विजातीया तृप्तिस्तत्तद्भोजनफलमिति भावः ॥ भाष्ये—भोजनविशेषादिति । भोजनेति कर्मणि ल्युट् ॥ शिल्पविशेषादिति पाठः ॥ नहीति । तत्र तृप्तिविशेषवद् नात्र दीर्घविशेषः फलमिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**दीर्घाणामपि दीर्घवचन एतत्प्रयोजनं गुणो मा भूदिति ॥ "कृतकारि खल्वपि शास्त्रं पर्जन्यवत्" । तद्यथा—पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति ।**

( प्रदीपः ) दीर्घाणामपीति । ह्रस्वेष्वपूर्वदीर्घरूपसंपादनार्थं दीर्घशास्त्रं प्रवर्तते दीर्घेषु तु रूपप्रतिबन्धिगुणनिवर्तनेन स्वरूपप्रत्यापत्तये । यथा-**मोराजि समः क्वाविति** मकारस्य मकार इति भावः । ततश्च ह्रस्वानामिव दीर्घाणामपि **येन नाप्राप्तिन्यायेन** दीर्घेण गुणो बाध्यत एव ॥

( उद्द्योतः ) ह्रस्वेष्विति । लक्ष्यभेदादेकस्यापि विधिनियमरूपेण प्रवृत्तिरिति भावः ॥ येननाप्राप्तिन्यायेन । अनवकाशत्वेन ॥

( आक्षेपभाष्यम् )

**यथैव तर्हि दीर्घत्ववचनसामर्थ्याद् गुणो न भवति । एवमृदित्त्वमपि न प्राप्नोति—चिकीर्षति । जिहीर्षति ॥**

( प्रदीपः ) यथैवेति । दीर्घारम्भादविकृतेनैव दीर्घेण स्थातव्यमिति भावः ।

(उद्द्योतः) [भाष्ये] ऋदित्त्वम् । ऋत इद्धातोरितीत्त्वम् ।

( ५९२ समाधानवार्तिकम् ॥ ८ ॥ )

**॥ ❋ ॥ ऋदित्त्वं दीर्घसंश्रयम् ॥ ❋ ॥**

( भाष्यम् ) **नाकृते दीर्घे ऋदित्त्वं प्राप्नोति ॥ किं कारणम् ? ॥ ऋत इत्युच्यते ॥**

( प्रदीपः ) ऋदित्त्वमिति । यद्यन्तरेण दीर्घविधानं प्राप्नुयादृदित्त्वं तदा तद्दीर्घेण बाध्येत यतस्तु दीर्घाश्रयमेव ऋदित्त्वं तदा तदेव फलं दीर्घस्य संजातमिति ऋदित्त्वं प्रवर्तिष्यते । तथा चोच्यते—'**यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते**' इति ।

( समाधानबाधकभाष्यम् )

**भवेद् ह्रस्वानां नाकृते दीर्घे ऋदित्त्वं स्याद्, दीर्घाणां तु खल्वकृतेपि दीर्घत्वे ऋदित्त्वं प्राप्नोति॥**

१ इको झलिति शास्त्रस्य ह्रस्वदीर्घसाधारणत्वेनेत्यर्थः । बाध इत्यस्य गुणेत्यादिः । ( र. ना. ) । २ 'ननु च दीर्घा' । ३ 'नच कृत' । ४ 'पुनस्तत्र' । ५ भोज्यपदार्थनिष्ठतृप्तिविशेषानुकूलसामर्थ्यात्, शिल्पिगतश्मश्रुक्रियाविशेषानुकूलसामर्थ्याद्वेत्यर्थः । ( र. ना. ) ६ दीर्घविधायकशास्त्रे दीर्घविशेषानुकूलसामर्थ्यं नास्ति । अत्र दीर्घविशेषरूपस्य फलस्याभावात् इतिभावः । (र. ना.) ७ खल्वपीति निपातसमुदायोऽत्रावधारणार्थकः । अकृतकार्यैवेति तदर्थः । ( र. ना. ) ८ 'वद्भवति' । ९ 'तद्दहति, यद्दग्धं तन्न दहति' । १० अत्र समुच्चयार्थकः । ( र. ना. )

( ५९३ समाधानसाधकवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ दीर्घाणां नाकृते दीर्घे ॥ * ॥**

( भाष्यम् ) दीर्घाणामपि नाकृते दीर्घत्वे ऋदित्वं प्राप्नोति । यदा दीर्घत्वेन गुणो बाधितः तत उत्तरकालमृदित्वं भवति ॥

( प्रदीपः ) दीर्घाणामिति॥इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति गुणप्रसङ्गादिति भावः ॥

( ५९४ समाधानवार्तिकम् ॥ १० ॥ )

**॥ * ॥ णिलोपस्तु प्रयोजनम् ॥ * ॥**

( भाष्यम् ) इदं तर्हि प्रयोजनम् । णिलोपो यथा स्यात्—ज्ञीप्सति ॥

( प्रदीपः ) ज्ञीप्सतीति । असति कित्त्वे गुणवण्णिलोपस्यापि विशेषाभावाद्दीर्घत्वं बाधकं स्यादित्यर्थः ॥

( उद्द्योतः ) णिलोपस्य किन्निमित्तत्वाभावात्कथं णिलोपस्तत्र प्रयोजनमत आह—असतीति ॥ णिलोपस्यापीति । बाध्यसामान्यचिन्तायामिति भावः ॥

( समाधानबाधकभाष्यम् )

काऽऽस्ताः क निपतिताः क कित्त्वं क णिलोपः । को वा ऽभिसंबन्धः—यत्सति कित्त्वे णिलोपः स्याद्, असति कित्त्वे न स्यात्? ॥

( प्रदीपः ) काऽऽस्ता इति । यथान्यत्र क्षिप्तानां शरादीनामन्यत्र निपातो ऽसंभाव्यः । एवं कित्त्वणिलोपयोरपि संबन्धो न संभाव्यत इत्यर्थः ॥

( समाधानसाधकभाष्यम् )

एषोऽभिसम्बन्धः—यत्सति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते । असति पुनः कित्त्वेऽनवकाशं दीर्घत्वं यथैव गुणं बाधते, एवं णिलोपमपि बाधेत । तत्र णिलोपस्यावकाशः—कारणा हारणा । दीर्घत्वस्यावकाशः—चिचीषति तुष्टूषति । इहोभयं प्राप्नोति—ज्ञीप्सति । परत्वाण्णिलोपः ॥

( प्रदीपः ) एषोऽभिसंबन्ध इति । ज्ञीप्सतीति णेर्गुणलोपदीर्घत्वानि प्राप्नुवन्ति । तत्रासति कित्त्वे ऽनवकाशत्वाद्विशेषाभावाच्च गुणवण्णिलोपस्यापि दीर्घत्वं बाधकं स्यात् ॥ अथ वा पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति णिलोपस्यैव बाधकं तत्स्यात्, गुणस्तु स्यादेव । सति तु कित्त्वे तेनैव गुणो बाधित इति चिचीषतीत्यादौ लब्धावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाध्यते ॥ नन्वसत्यपि कित्त्वे येन नाप्राप्त इति न्यायेन गुणस्यैव बाधकं दीर्घत्वं भविष्यति न णिलोपस्य, गुणबाधनेन च सावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाधिष्यत इति नार्थः कित्त्वेन ॥ नैतदस्ति । यदा बाध्यं भेदेनापेक्ष्यते इदं सर्वत्र प्राप्तमिदं तु क्वचिदेवेति, तदायं न्यायः । यदा तु बाध्यमात्रमपेक्ष्यते विध्यन्तरेणाव्याप्तो विषयो न कश्चिदस्तीति तदा सर्वस्यैव बाधया भवितव्यम् ॥

( उद्द्योतः ) ज्ञीप्सतीति । ज्ञपेश्नुरादिणिचि मितां ह्रस्वत्वे सनीवन्तेतीडभावे आप्ज्ञपीति ईत्वेऽभ्यासलोपे रूपम् ॥ विशेषचिन्तायामपि दोष इत्याह—अथवेति ॥ ननु येननाप्राप्तिन्यायेन यत्रोभयापवादतासम्भावना तत्रैषां व्यवस्थापकत्वं, नच तथा प्रकृते । यथैत्येधतीत्यादौ पररूपत्वावच्छिन्ने बाध्ये 'किंशास्त्रविहितस्य' इत्याकाङ्क्षायां मध्येपवादाः पुरस्तादिति न्यायविषयः । येनेत्यस्य यद्धर्मावच्छिन्नकार्येणेत्यर्थः । येन लक्षणेनेत्यर्थे तु नास्य विषयः, नापि कार्यभेदे, यच्छब्दपरामर्श्यानुगमकरूपाभावादिति चेन्न । व्यक्तिपक्षे 'किमिदं गुणबाधकतया सर्वविषयम्, उत णिलोपबाधकतया णिविषयम्' इति सन्देहे व्यवस्थाया अवश्यापेक्षितत्वेन शास्त्रप्रवृत्तिः सूपपादेत्यभिमानात् ॥ वस्तुतस्त्वेवं सति णिगमेत्यैव वदेदिति बाध्यसामान्यचिन्तापक्षमाश्रित्यैव भाष्यव्याख्योचितेति दिक् । तद् ध्वनयन् शङ्कते—नन्वसत्यपीति । येनेत्यस्य येन कार्येणेत्यर्थ इति भावः ॥ नैतदिति । येनेत्यस्य स्वेतरेणेत्यर्थकतया यदा बाध्यसामान्यचिन्तापरत्वमस्य न्यायस्य तदायं ग्रन्थ इति भावः ॥ भाष्ये कित्त्वारम्भे न दोष इत्याह—तत्र णिलोपस्येत्यादिना ॥

( समाधानबाधकभाष्यम् )

असत्यपि कित्त्वे सावकाशं दीर्घत्वम् ॥ कोवकाशः? ॥ इस्भावः—निमित्सति प्रमित्सति । मीनातिमिनोत्योर्दीर्घत्वे कृते मीग्रहणेन ग्रहणं यथा स्यात् ॥

( प्रदीपः ) असत्यपीति । मीनातिमिनोत्योः सन्यनवकाशत्वाद्गुणं बाधित्वा दीर्घः प्रवर्तते । ततो मीग्रहणेन ग्रहणादिस्भावेन प्रतिपदविहितेन गुणो बाध्यते । कृते चेस्भावे हलन्ताच्चेति कित्त्वाल्लघूपधगुणाभावः । तत्र सामान्यग्रहणे चरितार्थत्वाद्दीर्घविधानस्य ज्ञीप्सतीतिपरत्वाण्णिलोपो भविष्यतीति नार्थः कित्त्वेन ॥ ननु लाक्षणिकत्वान्मिनोतेर्मीरूपस्य मीग्रहणेन ग्रहणं न प्राप्नोति ॥ नैष दोषः । यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तयोरिति परिभाषोपस्थानं न तु यत्र प्रयोगरूपाश्रयणं तत्र ॥ नन्वेवमसत्यपि मीग्रहणेन ग्रहणे मीनातीत्यादिनाऽऽत्वे कृते गामादाग्रहणेष्वविशेष इति माग्रहणेन ग्रहणादिस् भविष्यतीति सामान्यग्रहणमपि दीर्घस्य प्रयोजनं नोपपद्यते ॥ एवं तर्हि दोषान्तराभिधानेनास्य पूर्वपक्षस्य निराकरणाद्भाष्यकारेण नैतत्सुष्ठु निरूपितम् ॥

( उद्द्योतः ) प्रतिपदविहितेनेति । मीविषयेणाचरितार्थेनेत्यर्थः । एवं च तत्र सूत्रे मीग्रहणेन मिनोतेरपि ग्रहणं दीर्घस्य प्रयोजनमिति भावः ॥ सावकाशमिति । भाष्यस्य सार्थकमित्यर्थः ॥ परत्वादिति । यद्यपि प्रमित्सतीत्यत्र अपवादत्वाद् दीर्घेण गुणस्येव ज्ञीप्सतीत्यत्र बाध्यसामान्यचिन्तायां णिलोपस्यापि बाधेन भाव्यं,

१ 'र्घेण बाधनं'

तथापि दीर्घसमानकालिकस्य णिलोपस्य गुणस्येव बाधेपि दीर्घे कृते स्थानिवत्त्वेन प्राप्तणिलोपः स्यादेव। न च दीर्घविधानसामर्थ्यम्। इग्भावे सामान्यग्रहणसम्पादनेन कृतार्थत्वात्। एवं च परत्वादित्यस्य दीर्घोत्तरकालं प्राप्तत्वादित्यर्थः॥ अष्टावसरन्यायस्तु शास्त्रे नास्त्येवेति भावः॥ यत्र लक्षणेति। यथा 'विभाषा दिक्समासे' 'तृतीयासमास'इत्यादौ। तत्र हि समासशब्दस्य संज्ञात्वेन तज्ज्ञानाय लक्षणपर्यालोचनमित्यर्थः॥ प्रयोगरूपेति। तच्च मीयतइत्यादिप्रयोगनिष्ठम्। एवं हि गामादाग्रहणेष्वविशेष इत्यादेरसङ्गतिः स्यादिति मासाहचर्याद् मीशब्दांशेऽपि सा न प्रवर्तेत इत्येव समाधातुं युक्तम्॥ तद् ध्वनयन्नाह—नन्वेवमसत्यपीति। कित्त्वाभावे एज्विषयत्वेनात्वस्य सुलभत्वादिति भावः॥ एवं च मीग्रहणमपि व्यर्थमिति तात्पर्यम्॥ भाष्ये मीनातिमिनोत्योर्दीर्घत्वे कृत इत्यत्र पर्जन्यवल्लक्षणप्रवृत्तिमाश्रित्य मीनातिनिर्देशः॥

( समाधानसाधकभाष्यम् )

**यथैव तर्ह्यसति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते, एवं गुणोपि बाधेत। तस्मात्कित्त्वं वक्तव्यम्॥**

**इकः कित्त्वं गुणो मा भूद् दीर्घारम्भात्कृते भवेत्।**
**अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते॥ १॥**
**सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम्।**
**दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम्॥२॥**
**इको झल्॥ ९॥**

(प्रदीपः) तदेव दोषान्तरमाह—यथैवेति। सामान्यग्रहणे उपयुक्तत्वाद्दीर्घत्वस्य नास्त्यनवकाशत्वमिति द्वाभ्यामपि गुणणिलोपाभ्यां दीर्घत्वं बाध्यत इति कर्तव्यं कित्त्वम्। न च दीर्घविधानस्य 'कुङ् शब्दे' इति धातुरवकाशः चुकूषत इति। यस्मात्कुङ् शब्द इति पाठस्तत्र कुटादित्वान्ङित्त्वे सति गुणाभावाद्दीर्घस्य श्रवणं सिद्धम्। वेदलोकयोश्चाकूतशब्दस्य प्रयोगो दृश्यते। गुधुवाववकाशाविति चेद् उहनिगमामिति ब्रूयात् किं प्रत्याहारेण॥ ९॥

(उद्द्योतः)[भाष्ये] परत्वादित्यस्योत्तरकालप्राप्तत्वादित्येवार्थः। यथा दीर्घोत्तरं स्थानिवत्त्वेन णिलोपो भवति, एवं तत्प्रवृत्त्युत्तरमेव गुणोपि स्याद्। दीर्घत्वं तु सामान्यग्रहणाविघातार्थं स्याद् इति भावः॥ नास्त्यनवकाशत्वमिति। नास्त्यनर्थकत्वमित्यर्थः॥ दीर्घत्वं बाध्यते इति। प्रवृत्तमपि निवर्त्यते इत्यर्थः॥ धातुरवकाश इति। तस्य च कुटादित्वप्रयुक्तङित्त्वेन गुणनिषेधाद्दीर्घश्रुत्यर्थं इति भावः॥ एवं चेग्भावे एवावकाशोक्तिर्भाष्योक्ताऽसङ्गतेति तात्पर्यम्॥ उहनेति। न चाजादेशगमेरित्यर्थलाभार्थमजूग्रहणम्। हनिसाहचर्येण लुङ्विकरणस्थानिकादेशगमेरेव ग्रहणेनादोषात्। एवं च कुङः सत्त्वेपि न क्षतिरिति बोध्यम्॥ कुगुधुभ्यः कुष्ठादिभ्यश्च सनोऽनभिधानमित्यन्ये॥ ९॥

---

( ७५ कित्वातिदेशसूत्रम्॥ २। २। १ आ. ७ सं. सू.॥)

## ८४ हलन्ताच्च॥ १। २। १०॥

सौत्रनिर्देशोपपादनाधिकरणम्।

( आक्षेपभाष्यम् )

**अयुक्तोयं निर्देशः। कथं हि इको नाम हलन्तः[3] स्यादन्यस्यान्यः?।**

(प्रदीपः) हलन्ताच्च॥१०॥ अयुक्त इति। अन्तशब्दमवयववचनं मत्वा पर्यनुयुङ्क्ते॥ अन्यस्यान्य इति। अत्यन्तभेदमनेन दर्शयति। अवयवावयविनोस्तु भेदविवक्षापि भवति—तन्तूनां पट इति। अभेदविवक्षापि—पटीभवन्ति तन्तव इति॥

(उद्द्योतः) हलन्ताच्च॥ १०॥ अन्तशब्दस्य समीपवचनत्वान्नार्थानुपपत्तिर्हल्समीपादिकः पर इत्यर्थः, ततः परत्वं च सामर्थ्यादेकवर्णव्यवहितं ग्राह्यमतआह—अवयवेति॥ भेद एवावयवावयविभावादाह—अत्यन्तभेदमिति। भेदाभेद एवावयवावयविभाव इत्यर्थः॥ भाष्ये इष्टार्थबोधाक्षमत्वेन निर्देशस्यायुक्तत्वम्॥ इको नामेति। इगन्तस्य धातोरित्यर्थः॥ हलन्तः स्यादिति। हलन्त्यावयवः स्यादित्यर्थः॥ अन्यस्य। इगन्तस्य॥ अन्यः। हल् कथमन्तो भविष्यतीति शेषः। इक्पदेन वर्णमात्रग्रहेपि द्वयोर्वर्णयोः परस्परमवयवावयविभावो विरुद्ध इति भावः॥

( प्रत्याक्षेपभाष्यम् )

**कथं तर्हि निर्देशः कर्तव्यः?।**

( प्रत्याक्षेपसमाधानभाष्यम् )

**'इग्वतो हलः' इति॥**

(प्रदीपः) इग्वतो हल इति। हलन्तादित्यर्थः॥

(उद्द्योतः) नन्वानन्तर्यादिषु बहुव्रीहेरिव मत्वर्थीयस्याप्यभावाद्वर्णयोरवयवावयविभावाभावाच्च 'इग्वतो हल' इत्ययुक्तमत आह—हलन्तादिति। सनाक्षिप्तस्य धातोः शब्दस्वरूपस्य वा हला विशेषणात्तदन्तविधिरित्यर्थः॥ वस्तुत इग्वतो हलन्तादिति न्यासकरणे तात्पर्यम्, अत एवेगुपधाद्धलन्तादिति वक्ष्यति॥

( आक्षेपबाधकभाष्यम् )

**यद्येवं 'यियक्षति' अत्रापि प्राप्नोति॥**

(प्रदीपः) यियक्षतीति। अत्र संप्रसारणप्रसङ्गः॥

( न्यासान्तराशयभाष्यम् )

**एवं तर्हि 'इगुपधाद्धलन्ताद्' इति वक्ष्यामि॥**

( न्यासान्तरदूषणभाष्यम् )

**एवमपि दम्भेर्न प्राप्नोति॥ सूत्रं च भिद्यते॥**

( सिद्धान्तिसमाधानभाष्यम् )

**यथान्यासमेवास्तु॥**

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्—'अयुक्तोयं निर्देशः' इति॥**

---

१ त्वर्थकश्चकारः। ( र. ना. ) २ 'कथं नामेको हलन्तः'। ३ अत्र हलिति व्यस्तं पृथक् पदम्। ( र. ना. )

४ अत्रापि पदद्वयमेवाभिप्रेतम्। ( र. ना. ) ५ अन्यस्यान्य इति हेतुवाक्ये इति भावः। ( र. ना. )

( समाधानभाष्यम् )

**नायुक्तः । अयमन्तशब्दोऽस्त्येवावयववाची । तद्यथा—'वस्त्रान्तः, वसनान्तः' इति, वस्त्रावयवो वसनावयव इति गम्यते । अस्ति सामीप्ये वर्तते । तद्यथा—'उदकान्तं गतः' इति, उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्तते, तस्येदं ग्रहणम् ॥**

(प्रदीपः) **तद्यः सामीप्य इति** । एवं च हल् चासावन्तश्चेति कर्मधारयः । निपातनाच्च विशेषणस्य परनिपातः ॥

(उद्द्योतः) **कर्मधारय इति** । स्वपदार्थप्रधानत्वेनान्तरङ्गत्वादयमेवोचित इति भावः ॥ पूर्वनिपातदोषं परिहरति—**निपातनादिति** । बहुव्रीहिपक्षेप्येतदावश्यकमिति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि दम्भेर्न सिध्यति । यो ह्यत्रेक्समीपो हल्. न तस्मादुत्तरः सन्, यस्मादुत्तरः सन्. नासाविक्समीपे ॥**

(प्रदीपः) **एवमपीति** । व्यक्तिनिर्देश इति भावः । असति च कित्त्वे नलोपो न स्यात् ॥

(उद्द्योतः) दम्भ इच्चेतीत्त्वेऽलघूपधत्वाद् गुणाप्रसक्तेः किं कित्त्वेनेत्याशङ्क्याह—**असतीति** ॥ **नलोप इति** । अनिदितामित्यनेन ॥

( समाधानभाष्यम् )

**एवं तर्हि—**

( ५९५ सिद्धान्तसमाधानवार्तिकम् )

## ॥ * ॥ दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम् ॥ * ॥

( भाष्यम् ) **हल्जातिर्निर्दिश्यते—इक उत्तरा या हल्जातिरिति ॥ हलन्ताच्च ॥ १० ॥**

(प्रदीपः) **दम्भेरिति** । 'वर्णग्रहणे जातिग्रहणम्' इति **निपात एकाजनाङिति**त्यत्रैकग्रहणेन ज्ञापितत्वात् । न चात्र व्यक्तिगतमेकत्वम्, अपि तु जातेः स्वगतम् । तत्र यदा तावद्व्यक्तिव्यतिरिक्ता जातिस्तस्याश्च व्यक्तिद्वारकाः सामीप्यादयो धर्मास्तदा तस्या एकत्वादिक्समीपत्वं सनश्च परत्वं तदपेक्षमस्तीति सिद्धं धिप्सतीति कित्त्वम् । इकारादिषु चाभिन्नप्रत्ययाभिधानाद्धल्त्वजातेः सद्भावः । यदापि 'त्यक्तभेदा व्यक्तय एव जातिः' इति पक्षस्तदा भेदव्युदासादभेदाश्रयणादिष्टसिद्धिः॥१०

(उद्द्योतः) **एकत्वं** हलन्तादित्येकवचनोपात्तम् ॥ **जातेः स्वगतमिति** । तस्याः प्राधान्येन विवक्षितत्वाद् एको व्रीहिः सम्पन्नः, इतिवदिति भावः ॥ ननु जातिनिर्देशे पौर्वापर्यं कथमत आह—**यदा तावदिति** । यद्यप्येकैकव्यक्तिव्यङ्ग्या जातिस्तथापि ज्ञापकेन विजातीयव्यक्त्यव्यधाने यत्किञ्चिद्व्यक्तिद्वारकं सामीप्यं यत्किञ्चिद्व्यक्तिद्वारकं च ततः परत्वमाश्रीयत इति भावः ॥ **व्यक्तिद्वारका इति** । विशेषणीभूतव्यक्तिद्वारका इत्यर्थः ॥ **तदपेक्षं** व्यक्तिद्वारकं जात्यपेक्षम् ॥ **अभिन्नप्रत्ययः** । हलित्येकाकारः प्रत्ययः । अनेन हल्त्वजातौ प्रमाणं संज्ञाशब्दाश्च जातिशब्दा एवेति दर्शितम् ॥ **यदापीति** । तदा तु साक्षादेव परत्वादिति भावः । परस्परभेदधर्मपरित्यागेन व्यक्तिमात्रविवक्षायां सा एकैवेति तात्पर्यं तदाह—**भेदव्युदासादभेदाश्रयणादिति** । अयं पक्षो मञ्जूषायामुपपादितो विस्तरेणास्माभिः शक्तिवादान्ते ॥ परे तु **हल्जातिरि**त्यस्य तज्जात्याश्रयहल्समुदाय इत्यर्थस्तस्य च साक्षादेव सामीप्यं ततः परत्वं चोपपद्यते । तदुक्तं भाष्ये—**इक उत्तरा या हल्जातिरि**ति । अत एवार्धधातुक इति सूत्रे वक्ष्यति—जातेः पौर्वापर्यासम्भवाद्विषयसप्तमी विज्ञास्यत इतीत्याहुः ॥ १० ॥

( ७६ क्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. ८ सू. )

# ८५ लिङ्सिचावात्मनेपदेषु ॥ १।२।११ ॥

( आत्मनेपदपदान्वयाधिकरणम् )

( आक्षेपभाष्यम् )

**कथमिदं विज्ञायते—आत्मनेपदं यौ लिङ्सिचाविति । आहोस्विदात्मनेपदेषु परतो यौ लिङ्सिचाविति ? ॥**

(प्रदीपः) **लिङ्सि ॥ ११ ॥ कथमिति** । आत्मनेपदेष्विति सकृच्छ्रुतस्य अर्थद्वयं न लभ्यते । तत्र यदि निर्धारणसप्तमी तदा तुल्यजातीयस्य निर्धारणाल्लिङेव विशेषितः स्याद्, लिङ्शब्देन लिङादेशग्रहणात् । अथ परसप्तमी तदा सिजेव विशेष्यते, न लिङ् । सीयुडादिसमुदायो लिङ्शब्देन गृह्यते इति तस्यात्मनेपदपरत्वाभावः । नचानयोर्भिन्नयोरर्थयोः सहविवक्षा संभवतीत्येकशेषस्याप्रयोगः ॥

( उद्द्योतः ) **लिङ्सिचौ ॥ ११ ॥ सकृच्छ्रुतस्यार्थद्वयमिति** । कालभेदेनार्थद्वयबोधजनकत्वमित्यर्थः ॥ नन्वात्मनेपदं यौ लिङ्सिचाविति व्याख्याने सप्तम्यनुपपन्नेत्यत आह—**निर्धारण इति** । निर्धारणं च सजातीययोरिति तद्भेदलाभः ॥ भाष्ये—**सिजविशेषित इति** । सम्भवव्यभिचारयोरभावादिति भावः ॥ ननु लिङ आत्मनेपदत्वाभावोत आह—**लिङ्शब्देनेति** ॥ ननु सम्भावितात्मनेपदपरत्वौ सुट्सीयुटावेव लिङ्ग्रहणेन ग्रहीष्येते इत्यत आह—**सीयुडादीति** ॥ नन्वस्तूभयोरेकशेषनिर्देशोत आह—**न चेति** । अनेन शास्त्रीयैकशेषो वारितः ॥ **अप्रयोग इति** । कृतैकशेषस्य सूत्रेऽप्रयोग इत्यर्थः ॥

( फलभेदजिज्ञासाभाष्यम् )

**किं चातः ? ।**

( अनुपपत्तिभाष्यम् )

**यदि विज्ञायते-आत्मनेपदं यौ लिङ्सिचाविति ।**

---

१ परत्वं नाश्रीयते इति पाठः साधुर्भाति । ( र. ना. )

२ अव्यवहितोत्तरत्वसंबन्धेन सनीत्यादिः । ( र. ना. )

३ व्यक्तीनां परस्परं भेदरूपस्य धर्मस्य परित्यागेनेत्यर्थः । ( र. ना. )

लिङ् विशेषितः, सिजविशेषितः ॥ अथ विज्ञायते—आत्मनेपदेषु परतो यौ लिङ्सिचाविति । सिज्विशेषितः, लिङविशेषितः ॥

( अनुपपत्तिपरिहारभाष्यम् )

यथेच्छसि तथास्तु ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

अस्तु तावद्—'आत्मनेपदं यौ लिङ्सिचौ' इति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—'लिङ् विशेषितः, सिजविशेषितः' इति ॥

( आक्षेपनिरसनभाष्यम् )

सिच् विशेषितः ॥ कथम्? ॥ आत्मनेपदं सिज्नास्तीति कृत्वा आत्मनेपदपरे सिचि कार्यं विज्ञास्यते ॥

( प्रदीपः ) सिच् विशेषित इति । आत्मनेपदपरत्वादुपचारात्सिजेवात्मनेपदमुच्यते गौणमुख्यार्थयोरात्मनेपदशब्दयोः सारूप्यमात्रप्रतिबद्ध एकशेषः करिष्यत इति भावः ॥

( उद्द्योतः ) निर्धारणविभक्त्यन्तत्वे सिज्विशेषणत्वासम्भवादाह—आत्मनेपदेति ॥ ननु सकृच्छ्रुतस्य कथमर्थद्वयबोधकत्वमत आह—सारूप्यमात्रेति । अर्थभेदेपीत्यर्थः । अक्षा इतिवदिति भावः । सौत्र एकशेष इति बोध्यम् ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अथ वा पुनरस्तु—आत्मनेपदेषु परतो यौ लिङ्सिचौ—इति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—सिज्विशेषितो लिङविशेषितः—इति ॥

( आक्षेपनिरसनभाष्यम् )

लिङ् च विशेषितः ॥ कथम्? ॥ आत्मनेपदेषु परतो लिङ् नास्तीति कृत्वाऽऽत्मनेपदे लिङि कार्यं विज्ञास्यते ॥

( प्रदीपः ) आत्मनेपदे लिङीति । अवयवगतं पौर्वापर्यं समुदाय आश्रयिष्यत इति भावः । अथ वा तन्त्रेण शब्दद्वयोचारणादर्थद्वयं लभ्यते

( उद्द्योतः ) समुदाये इति । व्यपदेशिवद्भावेनेत्यर्थः ॥ अथवेति । तन्त्रं त्वसहविवक्षायामपि विद्वन्मानसराजहंसेतिवदिति भावः ॥ ११ ॥

( आक्षेपवैयर्थ्यभाष्यम् )

नैव वा पुनरर्थो लिङ्विशेषणेनात्मनेपदग्रहणेन ॥ किं कारणम्? ॥ झलिति वर्तते । आत्मनेपदेषु चैव लिङ् झलादिः, न परस्मैपदेषु । तदेतत्सिज्विशेषणमात्मनेपदग्रहणम् ॥

( प्रदीपः ) नैव वेति । संभवव्यभिचाराभ्यां सिजेव विशेष्यते न लिङित्यर्थः ॥ ११ ॥

( आक्षेपभाष्यम् )

अथ सिज्विशेषणे आत्मनेपदग्रहणे सति किं प्रयोजनम्? ।

( प्रयोजनभाष्यम् )

इह मा भूत्—अपाक्षीत् । अवाप्सीत् ॥

( प्रयोजनबाधकभाष्यम् )

नैतदस्ति । इक इति वर्तते ॥

( प्रयोजनान्तरभाष्यम् )

एवमपि—अचैषीत् अनैषीत्, अत्रापि प्राप्नोति ॥

( प्रयोजनान्तरनिरसनभाष्यम् )

एतदपि नास्ति प्रयोजनम् । हलन्तादिति वर्तते ॥

( प्रयोजनान्तरभाष्यम् )

एवमपि अकोषीद् अमोषीद्, अत्रापि प्राप्नोति ॥

( प्रयोजनान्तरनिरसनभाष्यम् )

नैतदस्ति । झलिति वर्तते ॥

( प्रयोजनान्तरभाष्यम् )

एवमपि—अभैत्सीत् अच्छैत्सीत्, अत्रापि प्राप्नोति ॥

( प्रयोजनान्तरनिरसनभाष्यम् )

नैतदस्ति । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—इह मा भूत्—अस्राक्षीदद्राक्षीदिति ॥ किं च स्याद्? ॥ अकित्लक्षणोऽमागमो न स्यात् ॥ लिङ्सिचावात्मनेपदेषु ॥११॥

( ७७ कित्त्वातिदेशसूत्रम् । १ । २ । १ आ. ९. सू. )

## ९१ स्थाघ्वोरिच्च ॥ १ । २ । १७ ॥

( तपरनिर्देशप्रयोजनाधिकरणम् )

( ५९६ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इच कस्य तकारेत्त्वम् ॥ * ॥

( भाष्यम् ) कस्य हेतोरिकारस्तपरः क्रियते ॥

( प्रदीपः ) स्थाघ्वोरिच्च ॥१७॥ इच कस्येति । कथं पुनरत्र षष्ठी । यावता हेतुशब्दः श्लोके न प्रयुक्त इति हेतुतृतीयया भाव्यम् ॥ नैष दोषः । हेतुरूपताया अविवक्षणात् । संबन्धिरूपेण विवक्षितत्वाद् ॥ यथा 'मदीयाः पुत्राः' इति शैषिकः प्रत्ययः, तदुत्पत्तिकाले अपत्यरूपत्वस्याविवक्षणात् ॥ तकार इत् तकारेत् तस्य भावस्तकारेत्त्वं किमर्थं क्रियते ॥

---

१ सीयुडादिरूपमित्यर्थः । ( र. ना. )

२ नचैवेति । वदव्रजहलन्तेति सूत्रे ऽचः स्थानिनो निर्देशादिकुपरिभाषानुपस्थानादिति भावः ॥

(उद्द्योतः) स्थाघ्वो ॥१७॥ न प्रयुक्त इति । एवं च षष्ठी हेतुप्रयोगइत्यस्याप्राप्तिरिति भावः ॥ अपत्यरूपत्वस्येति । तत्त्वेन विवक्षायां तु छो न स्यात्फिञ्ञ स्यादिति भावः ॥ वस्तुत उक्तादन्य एवेदन्त्वेनेदंपदार्थः, शेषाधिकारात् । एवं चेदंत्वेनाप्यपत्यबोधे शैषिको न साधुरिति तस्येदमिति सूत्रे तस्यापत्यमिति सूत्रे च निरूपयिष्याम इति चिन्त्यमिदम् । स च सम्बन्धो हेतुहेतुमद्भावे पर्यवस्यतीति भाष्ये हेतोरिति प्रयुक्तम् । हेतुशब्देन चात्र फलम् । इत्संज्ञकतकारः किं मुखसुखार्थं उत तपरसूत्रप्रवृत्त्यर्थं इति विचारतात्पर्यम् ॥ तकार इदिति । यस्येति शेषः, बहुव्रीहेरयं त्वः । इच्चेत्यत्रेत्संज्ञकतकारवत्त्वं किमर्थमिति भाष्यार्थः । मुखसुखार्थोपि तदर्थत्वेन वर्णोच्चारणस्य सार्थक्यादित्संज्ञां लभत इति भाष्य[1]मतम् ॥

( ५९७ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ दीर्घो मा भूत् ॥ * ॥

( भाष्यम् ) दीर्घो मा भूदिति ॥

( प्रदीपः ) दीर्घो मा भूदिति । आन्तरतम्यात्प्राप्नोतीति भावः । भाव्यमानोण् सवर्णान्न गृह्णातीत्येष तु परिहारोऽनित्यत्वान्नोक्तः । क्वचिद्भाव्यमानेनापि सवर्णग्रहणात् । यथा ऽमूभ्यामित्यादावूकारो दीर्घस्य भवति । परिहारान्तराभिधानाद्वा ॥

( उद्द्योतः ) ननु श्रुतत्वाद् ह्रस्व एव भविष्यतीत्यत आह—आन्तरतम्यादिति ॥

( ५९८ समाधानबाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ ऋतेपि सः ॥ * ॥

( भाष्यम् ) अन्तरेणाप्यारम्भं सिद्धोऽत्र दीर्घः "घुमास्थागापाजहातिसां हलि" इति ॥

( प्रदीपः ) अन्तरेणापीति ॥ इकारविधानेन विनापीत्यर्थः । कित्त्वं तु कर्तव्यमेव । तेन विना ईत्वस्य प्राप्त्यभावात् ॥

(उद्द्योतः) सूत्रारम्भं विनेत्यर्थः किं न स्यादत आह—कित्त्वं त्विति । तदर्थं सूत्रमावश्यकमिति भावः । ईत्वस्येति छेदः ॥

( ५९९ प्रयोजनान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ अनन्तरे प्लुतो मा भूत् ॥ * ॥

( भाष्यम् ) इदं तर्हि प्रयोजनम्—अनन्तरे प्लुतो मा भूदिति। कुतो नु खल्वेतत्—अनन्तरार्थ आरम्भे ह्रस्वो भविष्यति, न पुनः प्लुत इति ? ॥

( प्रदीपः ) अनन्तर इति । असदृश आदेशे क्रियमाण इत्यर्थः ॥

( उद्द्योतः ) असदृश इति । सामर्थ्यादसदृशे इत्यर्थः । अव्यवहितपरोऽनन्तरशब्दो नेति भावः ॥

( ६०० प्रयोजनान्तरनिराकरणवार्तिकम् ॥ ५ ॥ )

॥ * ॥ प्लुतश्च विषये स्मृतः ॥ * ॥

( भाष्यम् ) विषये प्लुत उच्यते । यदा च स विषयो, भवितव्यमेव तदा प्लुतेन ॥

इच्च कस्य तकारेत्वं दीर्घो मा भूदृतेति सः ॥
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥१॥

स्थाघ्वोरिच्च ॥ १७ ॥

( प्रदीपः ) प्लुतश्च विषय इति । अनेन तपरत्वं प्रत्याख्यायते । यद्यनेन प्लुतो विधीयेत तदा यत्रापि विषये ऽनन्त्यस्यापि प्रश्नाख्यानयोरित्यादिना प्लुतो विहितस्तत्राप्यनेन विधीयेत अस्मिन्कर्तव्ये पूर्वत्रासिद्धमित्याष्टमिकस्य प्लुतस्यासिद्धत्वात्ततश्च प[3]क्षेऽनुवाददोषः प्राप्नोतीति ह्रस्व एव भविष्यति ॥ अन्ये तु तपरत्वमनेन समर्थितमिति व्याचक्षते । अन[4]न्तरेप्यादेशे श्रूयमाणे दीर्घ एव स्यात् ॥ ननु सिद्ध एव दीर्घ इत्युक्तं, सिद्धस्यापि पुनर्विधानं प्लुतनिवृत्त्यर्थं स्याद् । माभूत् प्लुत इति चेत् । तन्न प्लुतश्च विषये स्मृत इति । स चासति तपरत्वे न प्राप्नोतीति दीर्घनिवृत्त्यर्थं तपरत्वं स्थितम् ॥ प्लुतविधौ तु वाक्यस्य टेरित्यधिकारात्कथमिकारस्य प्लुतः स्यादिति चिन्त्यमेतत् ॥ १७ ॥

(उद्द्योतः) यद्यनेनेति । टिग्रहणं वाक्येनैव संबध्यते नत्व[5]नन्त्येन पदेनेति भावः ॥ भाष्ये विषये प्रश्नाख्यानादिविषये प्लुत उच्यते । यदा स विषयो भवति तदाप्यनेनैव सूत्रेण प्लुतेन भाव्यमित्यनुवाददोषभिया नानेन प्लुतविधानमित्ययमत्र पक्षे भाष्याक्षरार्थः कार्यः ॥ अन्ये त्विति । अनन्तरेपीति । सूत्रेऽसदृशे आदेशे श्रूयमाणेपीत्यर्थः । क्रियमाण इति पाठेपि श्रूय[6]माण इत्येवार्थः ॥ दीर्घ एवेति । आन्तर्यादिति भावः । वार्तिके ऽनन्तरे इत्यस्यानन्तरे श्रूयमाणेपि दीर्घः स्यादिति शेषो बोध्यः ॥ प्लुतो मा भूदिति शङ्कोत्तरत्वेनावतारयति—नन्विति ॥ स्यादिति । तथा च तत्र प्लुत इष्टः । स चासति तपरत्वे पुनर्विहितेन दीर्घेण बाधितः सन्न स्यादित्यर्थः ॥ ननु किमिति प्लुतस्तत्रेष्यत इति शङ्कते—मा भूदिति ॥ स्मृत इति । एवं च प्रश्नाख्यानादिविषये तस्येष्टत्वान्न तन्निवृत्त्यर्थं विधानमित्यर्थः । सचासतीति । सिद्धे दीर्घे दीर्घविधानसामर्थ्येन बाधादित्यर्थः । सति तु तपरत्वे दीर्घाप्राप्त्या प्लुतो निर्विघ्न इति भावः ॥ पश्चात्प्रा[7]प्तस्तु तपरत्वेन न बाध्यते ऽसिद्धत्वादित्याशयः ॥ प्रकारद्वयमपि दूषयति—प्लुतेति । अनन्त्यस्य पदस्य टेः, अपिना वाक्यस्य च टेः प्लुतः प्रश्नाख्यानयोरित्यर्थस्तस्येति भावः ॥ टिग्रहणं वाक्येनैव सन्बध्यते न त्वनन्त्येन पदेनेति तु भाष्यतात्पर्यम् ॥ यर्त्वंदि[8]ढमित्यादौ गुरोरनृत इत्येतद्विषयं भाष्यमिति । तन्न । तेन हूयमानार्थवाच्चिन एव टेः प्लुतविधानादित्याहुः ॥ १७ ॥

---

१ तेन मुखसुखार्थानां विनैवेत्संज्ञां निवृत्तिरिति प्राचां मतं भाष्यासंमतमिति सूचितम् । ( र. ना. )

२ 'तस्मादित्वविधानसामर्थ्यादन्तरतमोऽपि ह्रस्व एव भविष्यति' [ इति शेषः ] ॥ प० म० ॥

३ अनन्त्यस्यापीत्यादिप्लुतविधायकसूत्रस्य प्राप्तिपक्षेऽनुवादत्व प्राप्ति-रित्यर्थः । ( र. ना. )

४ असदृशे इत्येवार्थः । ( र. ना. )

५ प्रश्नाख्यानयोर्वाक्यस्यटेः प्लुतः स्यादनन्त्यस्यापि च प्लुतः स्यादित्यर्थेनात्रेकारस्य टित्वाभावेऽपि प्लुतप्राप्तिरिति, नत्वनन्त्यस्य पदस्य टेरित्यर्थ इति भावः । ( र. ना. )

६ कृभ्वस्तयः क्रिया सामान्यवचना इत्यभ्युपगमादिति भावः । ( र. ना. )

७ ह्रस्वेकारादेशोत्तरमित्यर्थः । ( र. ना. )

८ दाधातोर्लुङिरूपम् । ( र. ना. )

( ७८ कित्त्वाभावातिदेशसूत्रम् ॥ १ । २ । १ आ. १० सू. )

## ९२ न क्त्वा सेट् ॥ १ । २ । १८ ॥

( क्त्वाग्रहणप्रत्याख्यानाधिकरणम् )

( ६०१ सिद्धान्तवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ न सेडिति कृते ऽकित्त्वे ॥ * ॥

( भाष्यम् )

न सेडित्येव सिद्धम्, नार्थः क्त्वाग्रहणेन ॥

(प्रदीपः) न क्त्वा ॥ १८ ॥ कृतेऽकित्त्वे इति । अकारप्रश्लेषः ॥

(उद्द्योतः) न क्त्वा ॥ १८ ॥ न सेडित्यनेन कथं कित्वं क्रियेतेत्यत आह—अकारेति ॥

( आक्षेपभाष्यम् )

निष्ठायामपि तर्हिं प्राप्नोति—गुधितः गुधितवानिति ॥

( ६०२ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ निष्ठायामवधारणात् ॥ * ॥

( भाष्यम् )

निष्ठायामवधारणान्न भविष्यति ॥ किमवधारणम् ? ॥ "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" इति ।

(प्रदीपः) निष्ठायामिति । शीङादिभ्य एव परा निष्ठा न किदिति नियमः । विपरीतस्तु निष्ठैवेति व्याख्यानान्न भवति ॥

(उद्द्योतः) विपरीतस्त्विति । तथाहि सति शयित्वेत्यादावपि कित्वं स्यादित्यर्थः ॥

( आक्षेपभाष्यम् )

परोक्षायां तर्हिं प्राप्नोति ॥ किं च स्यात् ? ॥ पपिव पपिम क्रितीत्याकारलोपो न स्यात् ॥

(प्रदीपः) परोक्षायामिति । पूर्वाचार्यप्रसिद्ध्या परोक्षा लिडुच्यते ॥

( आक्षेपबाधकभाष्यम् )

मा भूदेवम्, इटीत्येवं भविष्यति ।

( आक्षेपसाधकभाष्यम् )

इदं तर्हिं—जग्मिव जघ्निव क्रितीरयुपधालोपो न स्यात् ॥

( ६०३ समाधानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ ज्ञापकान्न परोक्षायाम् ॥ * ॥

( भाष्यम् ) ज्ञापकात्परोक्षायां न भविष्यति ॥

( आक्षेपभाष्यम् )

किं ज्ञापकम् ? ॥

( ६०४ समाधानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ सनि झलग्रहणं विदुः ॥ * ॥

( भाष्यम् ) यदयम् "इको झल्" इति झल्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—'औपदेशिकस्य कित्त्वस्य प्रतिषेधो नातिदेशिकस्य' इति ॥ कथं कृत्वा ज्ञापकम् ? ॥ झल्ग्रहणस्यैतत्प्रयोजनं झलादौ यथा स्यात् । इह मा भूत्—शिशयिषत इति । यदि चात्रातिदेशिकस्यापि कित्त्वस्य प्रतिषेधः स्यात्, झल्ग्रहणमनर्थकं स्यात् । अस्त्वत्र कित्त्वम्, 'न सेड्' इति प्रतिषेधो भविष्यति । पश्यति त्वाचार्य औपदेशिकस्य कित्त्वस्य प्रतिषेधो नातिदेशिकस्येति, ततो झल्ग्रहणं करोति ॥

(प्रदीपः) अस्त्वत्रेति । प्राप्नोतु कित्त्वमित्यर्थः । न तु निर्वृत्तस्य निषेधः कर्तुं शक्यः ॥

(उद्द्योतः) न तु निर्वृत्तस्येति । न चैवं क्त्वोपि विद्यमानस्य कित्त्वस्य कथं निषेध इति वाच्यम् । कार्यस्यैव निषेधो न तु विद्यमानकित्वस्येति न दोषः । आतिदेशिकस्य निर्वृत्तस्य निषेधे तु तेन कृतकित्कार्यस्यानेन प्रतिषेधे विरोधः स्पष्ट एवेति दिक् ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात् "स्याघ्वोरिच्च" झलादौ यथा स्यात् । इह मा भूत्—उपास्थायिषाताम् । उपास्थायिषत ॥

(प्रदीपः) उपास्थायिषातामिति । स्थास् आतामिति स्थिते इत्वं च प्राप्नोति चिण्वद्भावश्च । तत्र परत्वाच्चिण्वद्भावे युक् च प्राप्नोति वृद्धिश्च । तत्र वृद्ध्यपवादो युगागमः । तत्र कृते यकारस्येत्त्वप्रसङ्गः । न च पुनर्वृद्धिर्लभ्यते । पूर्वमेव युक्ता बाधितत्वादिति भावः ॥

(उद्द्योतः) ननु झल्ग्रहणाभावेपि सिचश्चिण्वदिटि इत्वे वृद्धावायादेशे च सिद्धिमित्यत आह—स्थासिति । तत्र चिण्वद्भावे परत्वात् कृते इत्यन्वयः ॥ वृद्ध्यपवाद इति । येननाप्राप्तिन्यायेन, नत्वनवकाशत्वेनेति भावः ॥ तदेवाह—न च पुनरिति ॥

( ६०५ समाधानसाधकवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ इत्त्वं कित्संनियोगेन ॥ * ॥

( भाष्यम् ) कित्त्वसंनियोगेनेत्त्वमुच्यते । तेनासति कित्त्वे इत्त्वं न भविष्यति ॥

(प्रदीपः ) असति कित्त्व इति । झल्ग्रहणस्य ज्ञापकत्वं न तावत्स्थितमिति आतिदेशिकस्यापि कित्त्वस्य न सेडिति निषेधो भवतीत्यभिप्रायः ॥

(उद्द्योतः) भाष्ये इत्वं कित्सन्नियोगेनेति उत्तरार्थत्वं खण्डयति ॥ तदाह—आतिदेशिकस्यापीति । तथा च कित्त्वनिषेधे तत्सन्नियुक्तेत्त्वस्याप्यभाव इति भावः । ज्ञापिते त्वातिदेशिकानिषेधे उत्तरत्राप्युपयोग इत्यन्यत् ॥

---

१ नसेडित्येवाकित्त्वे कित्त्वनिषेधे कृते सति नार्थः क्त्वाग्रहणेनेत्यर्थः । (र.ना.) २ अवधारणं नियमः । (र.ना.) ३ शीङादिभ्यः परानिष्ठैव न किदिति विपरीतनियमस्तु न व्याख्यानादिति अन्वयः । (र. ना.) ४ तर्हिं प्रयोजनम्' ५ अस्तु इत्यस्य प्राप्नोतु इत्यर्थकरणे बीजमाह नत्वित्यादिना । (र. ना.)

६ येन नाप्राप्ति विषये उत्सर्गस्य पुनः प्रवृत्तिर्नभवतीति भावः । (र. ना.)
७ न सेडिति निषेधेन सामान्यतः प्रवृत्तेन कित्त्वे निषिद्धे तत्संनियोगेन जायमान मित्त्वमपि उपास्थायिषातामित्यादौ न भवतीति नोत्तरार्थत्वं झल्ग्रहणस्येति ज्ञापकत्वमेवेति भावः । ( र. ना. )

( ६०६ दृष्टान्तवार्तिकम् ॥ ६ ॥ )

॥ * ॥ रेण तुल्यं सुधीवनि ॥ * ॥

( भाष्यम् ) तद्यथा—सुधीवा सुपीवेति ङीप्संनियोगेन र उच्यमानो ऽसति ङीपि न भवति ॥

(प्रदीपः) सुधीवनीति । अनो बहुव्रीहेरिति प्रकृतस्यैव ङीपो निषेधो न तु रेफस्यापि, स तु सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इति न्यायान्निवर्तते । अयं न्यायो बिल्वकादिभ्यश्छस्य लुगित्यत्र छग्रहणेन ज्ञापितः॥

(उद्योतः) नन्वनो बहुव्रीहेरित्यस्य स्त्रियां विहितं नेत्यर्थाद् रेफस्यापि निवृत्तिर्वाचनिकीति विषमो दृष्टान्तोऽत आह—अन इति । प्रत्ययाधिकारात्प्रत्ययस्यैव निषेध इति भावः ॥ छग्रहणेनेति । तद्धि बिल्वकादेरुत्तरस्य प्रत्ययस्य भनिमित्ते तद्धिते विधीयमानो लुक् प्रत्ययान्तराभावात् छस्यैव सिद्ध इति छमात्रस्य लुग्यथा स्याद् न तु तत्सन्नियोगशिष्टकुको निवृत्तिरित्यर्थमिति भावः।

( इत्त्वेपीष्टापत्तिभाष्यम् )

अथ वा ऽस्त्वत्रेत्त्वम् ॥ का रूपसिद्धिः ? ॥
वृद्धौ[1] कृतायामायादेशो भविष्यति ॥

(प्रदीपः) अस्त्वत्रेति । यकारस्य कृते इत्त्वे वृद्धिर्भविष्यति । युगागमेन ह्याकारस्य वृद्धिर्बाध्यते, नत्विकारस्यापि ॥

(उद्योतः) ननु युका वृद्धेर्बाधितत्वात्कथमिकारस्य वृद्धिरत आह—युगागमेनेति । तत्प्राप्तिवेलायामिकाराभावेन तत्र वृद्धेरप्राप्तेरिति भावः ॥ भ्रष्टावसरन्यायस्तु शास्त्रे नास्त्येवेति तात्पर्यम् ॥ वस्तुतो ऽथ वास्त्वत्रेत्वमिति भाष्यमेकदेश्युक्तिर्विन्मतोर्लुका टिलोपमात्रबाधवत्तत्राप्यापत्तेरिति बोध्यम् । तस्माद् झल्ग्रहणस्य ज्ञापकत्वं स्थितम्—औपदेशिकस्यैव निषेध इति ॥

( ६०७ प्रयोजनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ वस्वर्थम् ॥ * ॥

( भाष्यम् ) वस्वर्थे[2] तर्हि क्त्वाग्रहणं कर्तव्यम् । वसोर्ह्यौपदेशिकं कित्त्वम् ॥ किं च स्यात् ? ॥ पपिवान् तस्थिवान् कितीत्याकारलोपो न स्यात् ॥

( प्रयोजनबाधकभाष्यम् )

'मा भूदेवम्' इटीत्येवं भविष्यति ॥

( प्रयोजनसाधकभाष्यम् )

इदं तर्हि जग्मिवान् जघ्निवान् कितीत्युपधालोपो न स्यात् ॥

( ६०८ प्रयोजनबाधकवार्तिकम् ॥ ८ ॥ )

॥ * ॥ किदतिदेशात् ॥ * ॥

( भाष्यम् ) अस्त्वत्रौपदेशिकस्य कित्त्वस्य प्रतिषेधः । आतिदेशिकमत्र कित्त्वं भविष्यति ॥

(उद्योतः) भाष्ये—आतिदेशिकमिति । असंयोगाल्लिडित्यनेन ॥

( प्रयोजनसाधकभाष्यम् )

यत्र तर्हि तत्प्रतिषिध्यते-अञ्जेः-आजिवानिति ॥

(प्रदीपः) आजिवानितीति । इदं नोपपद्यते[3] । अत्र हि नलोपे कृते द्विर्वचने एकादेशे च वस्वेकाजाद्घसामितीडागमः । तत्र हि कित्त्वप्रतिषेधान्नलोपनिवृत्तौ द्विहल्त्वान्नुटि सत्येकाच्त्वाभावादिण्निवृत्तौ नलोपादीनां चक्रकप्राप्तिः । चक्रकेषु चेष्टतो व्यवस्था ॥ भाष्यकारेण तु परिहारान्तरसद्भावादेष परिहारो नाश्रितः ॥

(उद्योतः) आजिवानिति । द्वित्वात्परत्वात्पूर्वमिटि न सेडिति निषेधेन कित्त्वाभावान्नलोपाभावे ऽसंयोगादित्यस्याप्राप्तेर्नलोपसिद्धये क्त्वाग्रहणम् । संज्ञापेक्षाकृतं[4] बहिरङ्गत्वं त्वत्र शास्त्रे नाश्रीयत इति भावः ॥ एकादेशे च वस्वेकाजिति । कृतद्विर्वचनानामेकाचामिति स्थितत्वादिति भावः ॥ नलोपनिवृत्ताविति । निमित्तापायन्यायेनेति भावः ॥ द्विहल्त्वादिति । तस्मान्नुडित्यनेन नुडिति भावः ॥ इण्निवृत्ताविति । तन्निवृत्तौ सत्यां कित्वान्नलोपे ऽद्विहल्त्वान्नुण्निवृत्तावेकादेशेनैकाच्त्वादिटि सेट्त्वात्कित्त्वप्रतिषेध इत्येवं नलोपादीनां चक्रकप्राप्तिरित्यर्थः ॥ इष्टत इति । सा चौपदेशिककित्त्वेन नलोपे इटः प्रवृत्ताविष्टसिद्धिरूपा इत्यर्थः ॥ उक्तन्यायस्य[5] भाष्यकृतानङ्गीकारेण चक्रकप्राप्तिरेव नेत्यन्ये ॥

( प्रयोजनबाधकभाष्यम् )

एवं तर्हि च्छान्दसः क्वसुः । लिट् च छन्दसि सार्वधातुकमपि भवति[6] । तत्र सार्वधातुकमपित्ङिद्भवतीति ङित्युपधालोपो भविष्यति ॥

( ६०९ प्रयोजनवार्तिकम् ॥ ९ ॥ )

॥ * ॥ (नि) गृहीतिः ॥ * ॥

( भाष्यम् ) इदं[7] तर्हि प्रयोजनम् । इह मा भूत्—निगृहीतिः । उपस्निहितिः निकुचितिः ॥

(प्रदीपः) निगृहीतिरिति । तितुत्रेष्वग्रहादीनामितीडागमः ॥

(उद्योतः) तितुत्रेत्यादिनेडागमप्रतिषेधः किं न स्यादत आह—अग्रहादीनामिति ।

( आक्षेपभाष्यम् )

तर्त्तर्हि क्त्वाग्रहणं कर्तव्यम् ॥

( प्रत्याख्यानभाष्यम् )

न कर्तव्यम् ॥

---

१ लक्ष्यभेदेन लक्षणभेदमाश्रित्य पुनर्वृद्धिरिति 'येन ना प्राप्तिविषये कथं पुनरुत्सर्गप्रवृत्तिरिति' न शङ्क्यम् । ( र. ना. ) २ अत्र वसुपदेन क्वसुः- अग्रिमग्रन्थानुरोधात् । ( र. ना. ) ३ चक्रकदोषप्राप्त्यौपदेशिककित्त्वमादापेष्टस्य व्यवस्थापनादितिभावः । चक्रकप्रसङ्गमेव दर्शयति अत्र हीत्यादिना चक्रकप्राप्तिरित्यन्तेन । अयं भावः । औपदेशिककित्त्वमादाय नलोपे कृते ततो द्विर्वचने तत एकादेशे ततो वस्वेकाजितीडागमे ततो न सेडिति कित्त्वप्रतिषेधे ततो निमित्तापायन्यायेन नलोपनिवृत्तौ द्विहल्त्वान्नुटि एकाच्त्वाभावान्निमित्तापायन्यायेनेटो निवृत्तौ निमित्तापायन्यायेन न सेडिति विहितकित्त्वनिषेधापाये कित्त्वात्पुनर्नलोपेऽद्विहल्त्वान्नुण्निवृत्तौ एकादेशेनैकाच्त्वादिटि सेट्त्वात्पुनः कित्त्वप्रतिषेधः तत्र सति पुनर्नलोपनिवृत्तिः ततो द्विहल्त्वान्नुट् तत एकाच्त्वाभावादिटो निवृत्तिः ततः कित्त्वनिषेधापायः ततः पुनर्नलोप प्राप्तिरित्येप चक्रक क्रमः । तत्र यदा पुनर्नलोपेऽद्विहल्त्वान्नुण् निवृत्तौ एकादेशेनैकाच्त्वादिटि सेट्त्वात्पुनः कित्त्वप्रतिषेध उच्यते । स इष्टानुरोधादातिदेशिकस्यैवेत्यौपदेशिकं कित्त्वमादाय निमित्तापाय परिभाषा प्राप्त्यभावेन पुनर्नलोप निवृत्त्यप्रसक्तिः इति चक्रकोद्धाररूपेष्टतो व्यवस्था । ( र. ना. ) ४ ननु इटि संज्ञापेक्षाकृतं बहिरङ्गत्वमादाय न सेडिति इष्टयाऽसिद्धत्वात्कित्त्वनिषेधाभावेन लोपेनाजिवानिति सिद्ध्यतीत्यत आह संज्ञापेक्ष कृतमिति । ( र. ना. ) ५ निमित्तापायन्यायस्येत्यर्थः । ( र. ना. ) ६ "तिङ्शित् सार्वधातुकम्" इत्यारभ्य चतुःसूत्रीप्रकरणं [ छन्दस्युभयथा ] प० म० ॥ ७ यद्यपि सर्वेष्वपि पुस्तकेषु "इदं तर्हि प्रयोजनम्" इत्यतः प्राक् "निगृहीतिः प्रयोजनम्" इत्यपि पाठ उपलभ्यते । तथापि तत्र मनोरञ्जकत्वाभावेनास्माभिर्न मुद्रित इति बोध्यम् ॥

( ६१० प्रत्याख्यानसाधकवार्तिकम् ॥ १० ॥ )

॥ * ॥ क्त्वा च विग्रहात् ॥ * ॥

( भाष्यम् ) उपरिष्टाद् योगविभागः करिष्यते— "न सेड्[1] निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" "मृषस्तितिक्षायाम्" "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" । ततः—"पूङः" पूङश्च निष्ठा सेट् किन्न भवति । ततः—"क्त्वा च" क्त्वा च सेट् किन्न भवति । पूङ इति निवृत्तम् ॥

न सेडिति कृतेऽकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥ १ ॥
इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं किदतीदेशाद् गृहीतिः क्त्वा[2] च विग्रहात् ॥ २ ॥ न क्त्वा सेट् ॥ १८ ॥

( प्रदीपः ) क्त्वा च विग्रहादिति । विग्रहो विभागो योगस्य करिष्यत इत्यर्थः ॥ १८ ॥

( उद्द्योतः ) अतीदेशादित्यत्रोपसर्गस्य घञोति दीर्घः ॥ १८

——>o<——

(७९ कित्त्वाभावातिदेशसूत्रम् ॥ १ । २ । १ । आ. ११ सू.)

## ९५ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ १ । २ । २१ ॥

( आक्षेपभाष्यम् )

इह कस्मान्न भवति—गुधितः गुधितवान् ? ॥

( ६११ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ उदुपधाच्छपः ॥ * ॥

( भाष्यम् ) शब्विकरणेभ्य इष्यते॥उदुपधाद् २१

( प्रदीपः ) उदु ॥ २१ ॥ उदुपधाच्छप इति । शपः संबन्धी शब्विकरणो यस्तस्मादित्यर्थः ॥ २१ ॥

( उद्द्योतः ) उदुपधाद् ॥ २१ ॥ शप इत्यस्य पञ्चम्यन्तत्वे शबन्तोदुपधात्परनिष्ठाऽसम्भव इत्यत आह—शपः सम्बन्धीति२१

——o——

( ८० कित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. १२ सू. )

## ९६ पूङः क्त्वा च ॥ १ । २ । २२ ॥

( ६१२ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ पूङः क्त्वानिष्ठयोरिटि वाप्रसङ्गः सेट्प्रकरणात् ॥ * ॥

(भाष्यम्) पूङः क्त्वानिष्ठयोरिटि विभाषा किँत्वं[3] प्राप्नोति । किं कारणम् ? ॥ सेट्प्रकरणात् । सेडिति वर्तते ॥

( प्रदीपः ) पूङः॥२२॥पूङ इति । सेडित्यन्यतरस्यामिति चानुवर्तनात्सेटोरेव क्त्वानिष्ठयोः कित्त्वविकल्पः स्यात् । ततश्च पुवित्वा पुवित इति पक्षे स्यात् । अस्ति चेडागमः पूङश्चेति विकल्पेनेड्विधानात् ॥

( उद्द्योतः ) पूङः क्त्वा च ॥ २२ ॥ नन्विटि वाप्रसङ्ग इत्यत्र सेट्प्रकरणादिति हेतुर्न्यूनोत आह—अन्यतरस्यामिति चेति ॥ ननु श्र्युकः क्कितीति निषेधात्कित्त्वनिषेधं विनेडेव दुर्लभ इति सेडनुवृत्तिरयुक्तेत्यत आह—अस्ति चेति ॥

( ६१३ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ न वा सेट्त्वस्याकिदाश्रयत्वादनिटि वा कित्त्वम् ॥ * ॥

( भाष्यम् ) न वा एष दोषः ॥ किं कारणम् ? ॥ सेट्त्वस्याकिदाश्रयत्वाद् । अकिदाश्रयं सेट्त्वम् । यदा अकित्त्वं तदेटा भवितव्यम् । सेट्त्वस्याकिदाश्रयत्वादनिट्येव विभाषा कित्त्वं भविष्यति ॥

( प्रदीपः ) न वेति । इड्विधौ पूङश्चेति सूत्रं वार्तिककारः प्रत्याचष्टे । तत्रानिटोरेव क्त्वानिष्ठयोरनेन कित्त्वं विकल्प्यते । तत्र यदा कित्त्वं तदा श्र्युकः क्कितीति इट्प्रतिषेधात्पूत्वा पूत इति भवति । यदा त्वकित्त्वं तदेड्गुणयोः पवित्वा पवित इति भवति ॥

( उद्द्योतः ) ननु सति पूङश्चेत्यस्मिन् कथमकिदाश्रयं सेट्त्वमत आह—इड्विधाविति ॥

( आक्षेपभाष्यम् )

इड्विधौ पूङो ग्रहणं क्रियते । तेन वचनादिट् । सेट्प्रकरणाच्च इट्येव विभाषा कित्त्वं प्राप्नोति ॥

( ६१४ समाधानवार्तिकखण्डम् ॥ ३ ॥ )

॥ * ॥ इड्विधौ ह्यग्रहणम् ॥ * ॥

( भाष्यम् ) इड्विधौ हि पूङो ग्रहणं न कर्तव्यं भवति ॥

भारद्वाजीयाः पठन्ति—

( वार्तिकम् ॥ )

॥ * ॥ नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम् ॥ * ॥

( भाष्यम् ) नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः

---

१ यद्यपि सर्वेष्वपि मदुपलब्धभाष्यपुस्तकेषु 'न सेट्' इति पृथक्सूत्रत्वसूचकावसाननिमित्तकचर्त्वं दृश्यते । तथापि 'न सेट्' इत्येतावति पृथक् सूत्रे निगृहीतिरित्यादावतिव्याप्तिः सुस्थैव ॥ तस्माद् 'न सेड्निष्ठा—' इत्याद्येकसूत्रकरण एव तात्पर्यम् । तथा च जश्त्वाकरणं प्राचीनतरलेखकप्रमादजमेव ॥ एवं च Dr. F. KIELHORN, PH. D. प्रकाशितमहाभाष्यपुस्तकेऽपि 'न सेड् निष्ठा–' इत्येवं मध्ये पृथक्सूत्रत्वसूचकरेखाकरणं प्रूफशोधकस्यानधीतभाष्यत्वमेव बोधयति॥ २ पूङः क्त्वाचेत्यत्र क्त्वाचेत्याकारकाद् विभागादित्यर्थः । ( र. ना. ) ३ 'कित्त्वम्' इति क्वचिन्नोपलभ्यते ॥

सिद्धम् ॥ कथम् ? ॥ विभाषामध्येऽयं योगः क्रियते । विभाषामध्ये च ये विधयस्ते नित्या भवन्ति ॥ किमर्थं तर्हि क्त्वाग्रहणम् ? ॥ क्त्वाग्रहणमुत्तरार्थम् । उत्तरार्थं क्त्वाग्रहणं क्रियते "नोपधात्थफान्ताद्वा" "वञ्चिलुञ्च्यृतश्च" इति ॥ पूङः क्त्वा च ॥ २२ ॥

( प्रदीपः ) भारद्वाजीया इति । लाघवमनादृत्य सूत्रकारेण पूङश्चेतीद्विधा पठितम् । इह तु विकल्पो नानुवर्तते उत्तरत्र वाग्रहणादिति सिद्ध्यतीष्टमिति भावः ॥ उत्तरार्थमिति । न क्त्वा सेडिति कित्त्वप्रतिषेधस्य सिद्धत्वात् ।

( उद्योतः ) ननु गौरवाद्भारद्वाजीयं मतमयुक्तमत आह— लाघवमिति ॥ विभाषामध्ये इति । विभाषयोर्मध्य इत्यर्थः ॥ किमर्थं तर्हि क्त्वाग्रहणमिति प्रश्नो भारद्वाजीयमते बोध्यः ॥ नन्विहार्थत्वे सम्भवति कथमुत्तरार्थत्वमत आह—न क्त्वेति ॥ २२ ॥

( ८१ कित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. १३ सू. )

## ९९ तृषिमृषिकृषेः काश्यपस्य ॥ १ । २ । २५ ॥

( आक्षेपभाष्यम् )

काश्यपग्रहणं किमर्थम् ? ॥

( समाधानभाष्यम् )

काश्यपग्रहणं पूजार्थम् । वेत्येव हि वर्तते ॥ तृषिमृषिकृषेः काश्यपस्य ॥ २५ ॥

( प्रदीपः ) तृषि ॥२५॥ पूजार्थमिति । शास्त्रस्य पूजापारम्पर्यप्रतिपादनेनानादित्वात्प्रामाण्यप्रतिपादनात् ॥ २५ ॥

( उद्योतः ) तृषिमृ ॥ २५ ॥ पारम्पर्यप्रतिपादनेनेति । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । परम्पराप्रतिपादनेनेत्यर्थः ॥ २५ ॥

( ८२ कित्त्वातिदेशसूत्रम् ॥ १ । २ । १ आ. १४ सू. )

## १०० रलो व्युपधाद्धलादेः संश्च ॥[1] १ । २ । २६ ॥

( आक्षेपभाष्यम् )

किमिदं रलः क्त्वासनोः कित्त्वं विधीयते । आहोस्वित्प्रतिषिध्यते ? ॥ किं चातः ? ॥ यदि विधीयते, क्त्वाग्रहणमनर्थकम् । किदेव हि क्त्वा ॥ अथ प्रतिषिध्यते, सन्ग्रहणमनर्थकम् । अकिदेव हि सन् ॥

( प्रदीपः ) रलो ॥२६॥ किमिदमिति । किमियमप्राप्ते विभाषा, आहोस्वित् प्राप्त इति प्रश्नः । तत्राप्राप्तविभाषायां सन एवाप्राप्तं कित्त्वं पक्षे विधीयत इति क्त्वानुवृत्तिरनर्थिका । नहि तस्य कित्त्वं विधेयं स्वत एव भावात् । अथ प्राप्तविभाषा तदा क्त्वः कित्त्वमस्तीति तस्यैव पक्षे निषेधः कर्तव्य इति सन्ग्रहणं न कार्यं नहि तस्य कित्त्वमस्ति यत्पक्षे निषिध्यते ॥

( उद्योतः ) रलोव्यु ॥ २६ ॥ वेत्यनुवृत्तेरुभयथापि विकल्पसिद्धेर्विचारोऽनुपपन्न इत्यतस्तात्पर्यमाह—किमिति ॥

( समाधानभाष्यम् )

अत उत्तरं पठति—

( ६१५ प्रथमपक्षाङ्गीकारवार्तिकम् ॥ १ ॥ )

॥ * ॥ रलः क्त्वासनोः कित्त्वम्[2] ॥ * ॥

( भाष्यम् ) रलः क्त्वासनोः कित्त्वं विधीयते ॥

( प्रदीपः ) रल इति । अप्राप्तविभाषेयमेकेनैव रूपेण व्यवस्थितेत्यर्थः । एकरूपत्वप्रदर्शनाय च विचारः कृतः । नह्युभयत्रविभाषा न सन्ति, प्रतिलक्ष्यं व्यापाराश्रयणे तासां सिद्धत्वात् ॥ २६ ॥

( उद्योतः ) ननु क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन व्यापाराद्उभयत्र विभाषास्तु प्रतिलक्ष्यं लक्षणभेदादत आह—एकरूपत्वेति । व्यापारैक्ये सम्भवति तद्भेदाङ्गीकारो निष्फल इति भावः ॥ २६ ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—क्त्वाग्रहणमनर्थकम्[4]—इति ॥

( समाधानभाष्यम् )

नानर्थकम् । 'न क्त्वा सेट्' इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ॥ रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥

( इति कित्प्रकरणम् )

( ८३ ह्रस्वादिसंज्ञासूत्रम् ॥ १ । २ । १ आ. १५ सू० )

## १०१ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ १ । २ । २७ ॥

( सौत्रनिर्देशसाधुत्वाधिकरणम् )

( आक्षेपभाष्यम् )

अयुक्तोऽयं निर्देशः । ऊ इत्यनेन कालः प्रतिनिर्दिश्यते । ऊ इत्ययं च वर्णः । तत्रायुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम्[5] ॥

कथं तर्हि निर्देशः कर्तव्यः ? ॥

ऊकालकाल इति ॥

किमिदमूकालकाल इति ? ॥

ऊ इत्येतस्य काल ऊकालः, ऊकालः कालो[6] यस्य स ऊकालकाल इति ॥

---

[1] 'रलोव्व्युपधाद्' इति वकारद्वयपाठो हयवरट् सूत्रभाष्यप्रामाण्यात् ॥ [2] 'कित्त्वारम्भः' ॥ [3] उभयत्र विभाषाणामसत्त्वबोधनमेव प्रकृतविचारस्य फलमिति तु न वाच्यमित्यर्थः । ( र. ना. ) [4] 'मनर्थकम्' किदेवहि क्त्वा ॥ [5] सामानाधिकरण्येन विशेष्यते इत्यर्थः । ( र. ना. ) [6] 'लोऽस्य' ॥

(प्रदीपः) ऊकालः ॥ २७ ॥ अयुक्तोऽयमिति । तपरस्तत्कालस्येत्यत्र व्याख्यातत्वादिह न व्याख्यायते ॥

(उद्द्योतः) ऊकालो ॥ २७ ॥ भाष्ये—प्रतिनिर्दिश्यत इति । विशेष्यत इत्यर्थः ॥ ऊकालः कालो यस्येति । ऊकाल इव कालो यस्येत्यर्थः ॥

(तटस्थाक्षेपभाष्यम्)

स तर्हि तथानिर्देशः कर्तव्यः ॥

(समाधानभाष्यम्)

न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । खरमुखः । एवमूकालकाल ऊकाल इति ॥ अथ वा साहचर्यात्ताच्छब्द्यं भविष्यति । कालसहचरितो वर्णः । वर्णोऽपि काल एव ॥

(यथासंख्योपपादनाधिकरणम्)

(६१६ आक्षेपवार्तिकम् ॥ १ ॥)

॥ * ॥ ह्रस्वादिषु समसंख्याऽप्रसिद्धिर्निर्देशवैषम्यात् ॥ * ॥

(भाष्यम्) ह्रस्वादिषु समसंख्यत्वस्याप्रसिद्धिः ॥ किं कारणम् ? ॥ निर्देशवैषम्यात् । तिस्रः संज्ञा एकः संज्ञी । वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥

(प्रदीपः) ह्रस्वादिष्विति । ऊ इत्येकस्यैव शब्दस्योच्चारणाद्भेदानवगमात् संज्ञिविशेषणस्यैकत्वे सति संज्ञिनोऽप्येकत्वात् । संज्ञानां च त्रित्वात्संख्यातानुदेशाप्रसङ्गः ॥

(उद्द्योतः) ननूकालानां वर्णानां बहुत्वादू एकः संज्ञीत्यनुपपन्नमत आह—ऊ इत्येकस्येति । उपात्तद्विमात्रत्वाकारेणैक इति भावः ॥ संज्ञिविशेषणस्येति । ऊकालस्येत्यर्थः ॥ संज्ञानां चेति । प्रदेशेषु त्रिविधव्यवहारदर्शनादिति भावः ॥ भाष्ये—संख्यातानुदेश इति । संख्यातं सम्यग्ज्ञानमनतिक्रम्यानुदेशः संबन्ध इत्यर्थः । सुप्सुपेति समासः । ज्ञानक्रमेणान्वय इति यावत् ॥

(६१७ (१) समाधानवार्तिकम् ॥ २ ॥)

॥ सिद्धं तु समसंख्यत्वात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् ॥ कथम् ? ॥ समसंख्यत्वात् ॥

(प्रदीपः) सिद्धं त्विति । त्रयाणां कृतैकादेशानां निर्देशाद्विशेषणत्रयावच्छिन्नत्वात्संज्ञिनामपि त्रित्वाद्यथासंख्यं संबन्धः सिद्ध इत्यर्थः । अर्थतश्च साम्यं यथासंख्यसूत्रे आश्रीयते न शब्दत एव ॥ अथ वा शब्दतः साम्याश्रयणेऽपि संहितावशादैक्यमिव प्राप्तास्त्रयः शब्दा उच्चारिता इत्यदोषः ॥

(उद्द्योतः) नन्वेवमर्थतः समसंख्यत्वेऽपि शब्दतस्तदभावात्कथं यथासंख्यसूत्रप्राप्तिरत आह—अर्थतश्चेति । अत एव परस्मैपदानां णलित्यादौ यथासंख्यमिति भावः । ऊशब्दस्त्रयोऽर्थां इति तात्पर्यम् ॥ त्रयः शब्दा इति । वैयाकरणैस्तथा सुज्ञेयत्वादिति भावः ॥

(आक्षेपभाष्यम्)

कथं समसंख्यत्वम् ? ।

(६१७ (२) समाधानसाधकवार्तिकखण्डम् ॥ २ ॥)

॥ * ॥ त्रयाणां हि विकारनिर्देशः ॥ * ॥

(भाष्यम्) त्रयाणामयं प्रश्लिष्टनिर्देशः ॥ कथं पुनर्ज्ञायते—त्रयाणामयं प्रश्लिष्टनिर्देश इति ? । तिसृणां संज्ञानां करणसामर्थ्यात् ॥

(प्रदीपः) कथं पुनरिति । प्रत्यक्षेणैकस्यैव शब्दस्य श्रवणाद्भेदावगमे प्रमाणाभाव इति भावः ॥ तिसृणामिति । अनुमानाद्भेदावसाय इति भावः ॥

(उद्द्योतः) भाष्ये विकारो दीर्घरूपः, तेन निर्देश इति तृतीयातत्पुरुषः । तदाह—प्रश्लिष्टेति ॥ अनुमानादिति । अनेकसंज्ञाकरणात्संज्ञिनां शब्दतो भेदावसाय इत्यर्थः । प्रयोगस्तु विमताः संज्ञा भिन्नसंज्ञिविषयाः नानासंज्ञात्वादिति ॥

(आक्षेपभाष्यम्)

यद्यपि तावत्तिसृणां संज्ञानां करणसामर्थ्याज्ज्ञायते—त्रयाणामयं प्रश्लिष्टनिर्देश इति । कुतस्त्वेतदेतेनानुपूर्व्येण संनिविष्टानां संज्ञा भविष्यतीति, आदौ मात्रिकस्ततो द्विमात्रस्ततस्त्रिमात्र इति । न पुनर्मात्रिको मध्ये वान्ते वा स्यात् । तथा द्विमात्र आदौ वा स्यादन्ते वा । तथा त्रिमात्र आदौ वा मध्ये वा स्यात् ? ॥

(समाधानभाष्यम्)

अयं तावत् त्रिमात्रोऽशक्य आदौ वा मध्ये वा कर्तुम् ॥ कुतः ? ॥ प्लुताश्रयो हि प्रकृतिभावः प्रसज्येत ॥ मात्रिकद्विमात्रिकयोरपि द्व्यन्तं पूर्वं निपततीति मात्रिकस्य पूर्वनिपातो भविष्यति ॥

(प्रदीपः) अयंतावदिति । लौकिकव्यवहाराश्रयणेन प्लुतत्वं ह्रस्वत्वं च सिद्धमाश्रित्यैतदुच्यते ॥

(उद्द्योतः) भाष्ये—प्लुताश्रय इति । न च मध्ये करणे कथं प्लुताश्रयः प्रकृतिभाव इति वाच्यम् । मध्ये त्रिमात्रसत्त्वे पूर्वेण दीर्घे त्रिमात्रस्यैवापत्तौ लोकाश्रयप्लुतत्वमादायाग्रिमेण सन्धौ कर्तव्ये प्रकृतिभावापत्तिः । संख्याव्यवहार इव दीर्घादिव्यवहारोऽपि लौकिकशास्त्रीयोभयविषय इत्यभिमानस्तदाह—लौकिकेति ॥

(समाधानबाधकभाष्यम्)

यत्तावदुच्यते—अयं तावत् त्रिमात्रोऽशक्य आदौ मध्ये वा कर्तुं, प्लुताश्रयो हि प्रकृतिभावः प्रसज्येतेति । प्लुताश्रयः प्रकृतिभावः । प्लुतसंज्ञा

---

१ सादृश्यमूलकस्तत्त्वारोप इति भावः । (र. ना.)
२ 'तो वर्णोऽपि' ॥ ३ 'ङ्ग इत्यर्थः' ॥
४ आकारादीनामित्यर्थः ॥ (र. ना.) ५ कालविशेषणस्येत्यादिः । (र. ना०)
६ 'श्रया' ॥ ७ 'संख्यात्वम्' ॥

चानेनैव। यदि च त्रिमात्र आदौ वा मध्ये वा स्यात् प्लुतसंज्ञैवास्य न स्यात्। कुतः प्रकृतिभावः॥ यदप्युच्यते मात्रिकद्विमात्रिकयोरपि घ्यन्तं पूर्वं निपततीति मात्रिकस्य पूर्वनिपातो भविष्यतीति। ह्रस्वाश्रया हि घिसंज्ञा, ह्रस्वसंज्ञा चानेनैव। यदि च मात्रिको मध्ये वान्ते वा स्यात् ह्रस्वसंज्ञैवास्य न स्यात्। कुतो घिसंज्ञा कुतः पूर्वनिपातः। एवमेषा व्यवस्था न प्रकल्पते॥

(प्रदीपः) यत्तावदिति। शास्त्रात्स्थितायां ह्रस्वादिव्यवस्थायां लोके ह्रस्वादिव्यवहारो नान्यथेति भावः॥

(उद्द्योतः) शास्त्रादिति। लौकिकव्यवहारोप्यनादिशास्त्रसंस्कारपूर्वकः, अन्यथा संज्ञाकरणानर्थक्यमिति भावः॥

(समाधानसाधकभाष्यम्)

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—न मात्रिकोन्ते भवतीति। यदयं—"विभाषा पृष्टप्रतिवचने हेः" इति मात्रिकस्य प्लुतं शास्ति॥ कथं कृत्वा ज्ञापकम्?। योऽन्ते स प्लुतसंज्ञः। यदि च मात्रिकोन्ते स्यात्। प्लुतसंज्ञाऽस्य स्यात्। तत्र हि मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्॥

मध्ये तर्हि स्यादिति॥ अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—न मात्रिको मध्ये भवतीति। यदयम्—"अतो दीर्घो यञि, सुपि च" इति दीर्घत्वं शास्ति॥ कथं कृत्वा ज्ञापकम्?। यो मध्ये स दीर्घसंज्ञकः। यदि च मात्रिको मध्ये स्याद्दीर्घसंज्ञास्य स्यात्। तत्र मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्॥

द्विमात्रस्तर्ह्यन्ते स्यादिति॥ अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—न द्विमात्रोन्ते भवतीति। यदयम्—"ओमभ्यादाने" इति द्विमात्रिकस्य प्लुतं शास्ति॥ कथं कृत्वा ज्ञापकम्?। योऽन्ते स प्लुतसंज्ञः। यदि च द्विमात्रोऽन्ते स्यात् प्लुतसंज्ञास्य स्यात्। तत्र द्विमात्राकालस्य द्विमात्राकालवचनमनर्थकं स्यात्। मात्रिकेण चास्य पूर्वनिपातो बाधित इति कृत्वा कान्यत्रोत्सहते भवितुमन्यदतो मध्यात्। एवमेषां व्यवस्था प्रक्लृप्ता॥

(प्रदीपः) यदयमिति। अनन्तरतमादेशविधानार्थमेतत्स्यादिति चेत्॥ तन्न। नहि स्थानेन्तरतम इत्यस्याः परिभाषायाः प्रत्यक्षायाः बाधा युक्तेति विशिष्टानुपूर्वी[1]प्रतिपत्तौ लिङ्गत्वमेव प्लुतविधानस्य॥ मात्रिकेणेति। लिङ्गद्वयेनान्तमध्याभ्यां मात्रिकस्यापकृष्टत्वादित्यर्थः॥

(उद्द्योतः) अनन्तरतमः। उकारादिः॥ नहीति। अबाधेनोपपत्तौ बाधो न युक्त इति भावः॥ घ्यन्तत्वात्पूर्वनिपातबाध इति न युक्तं, प्रागुक्तयुक्तेरत आह—लिङ्गद्वयेनेति॥

(दीर्घादिषु ह्रस्वसंज्ञावारणाधिकरणम्)

(आक्षेपवार्तिकशेषभाष्यम्)

भवेद् व्यवस्था च प्रक्लृप्ता॥

(६१८ आक्षेपवार्तिकम्॥ ४॥)

॥*॥ दीर्घप्लुतयोस्तु पूर्वसंज्ञाप्रसङ्गः ॥*॥

(भाष्यम्) दीर्घप्लुतयोरपि पूर्वसंज्ञा प्राप्नोति॥ का?॥ ह्रस्वसंज्ञा॥ किं कारणम्?॥ अण् सवर्णान् गृह्णातीति॥

(प्रदीपः) दीर्घप्लुतयोस्त्विति। उकारोण्त्वाद्द्विमात्रत्रिमात्रयोः स्वरूपस्य च ग्राहक इति ह्रस्वसंज्ञा त्रयाणामपि प्राप्नोति। न च दीर्घप्लुतसंज्ञाभ्यां द्विमात्रत्रिमात्रयोर्ह्रस्वसंज्ञा बाध्यते। संज्ञानां समावेशाभ्युपगमात् "आकडारादेका संज्ञा" इति वचनात्। द्विमात्रत्रिमात्रौ त्वनण्त्वाद्भिन्नकालानां न ग्राहकाविति न तत्र दोषः॥

(उद्द्योतः) अण्त्वादिति। इदं जातिपक्षस्याप्युपलक्षणम्॥ ननु ह्रस्वसंज्ञावद्दीर्घप्लुतसंज्ञे अपि त्रयाणां स्यातामिति संज्ञात्रयकरणं व्यर्थमत आह—द्विमात्रेत्यादि। अनण्त्वादिति। यत्नाधिक्येन व्यापकजात्यविवक्षणाचेत्यपि बोध्यम्॥ नन्वेवं पञ्चानां संज्ञित्वाद्यथासंख्यभङ्ग इति चेन्न। शब्दसाम्येनादोषात्॥

(६१९ समाधानवार्तिकम्॥ ५॥)

॥ * सिद्धं तु तपरनिर्देशात् ॥ * ॥

(भाष्यम्) सिद्धमेतत्॥ कथम्?॥ तपरनिर्देशः कर्तव्यः—'उदूकाल' इति॥

(आक्षेपभाष्यम्)

यद्येवं

(६२० आक्षेपवार्तिकम्॥ ६॥)

॥*॥ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् ॥*॥

(भाष्यम्) [[4]द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यम्। तथा मध्यमायां तपरकरणे द्रुतविलम्बितयोरुपसंख्यानं कर्तव्यम्। तथा विलम्बितायां तपरकरणे द्रुतमध्यमयोरुपसं-

१ ऊकाल इत्यत्रेति शेषः। (र. ना.) २ ऊकाल इत्यत्र विशिष्टानुपूर्वी प्रतिपत्तिद्वारेति शेषः। (र. ना.) ३ पूर्वनिपातस्य, दीर्घपूर्वनिपातस्य, घ्यन्तत्वात्, ह्रस्वाकारस्येत्यादिः। द्वन्द्वे घि इत्यनेन बाध इति न युक्तमिति संबन्धः। प्रागुक्तयुक्तेरित्यस्य प्रत्यक्षबाधस्यानुचितत्वरूपेत्यादिः। (र. ना.) ४ अयं कोष्ठकान्तर्गतः 'द्रुतायाम्' इति वार्तिकव्याख्याग्रन्थो भाष्यपुस्तकेषु नोपलभ्यते॥ तथापि संदर्भशुद्धये भाष्यकारशैलीशुद्धये चास्माभिर्वर्धितः॥ अइउण् सूत्रे व्याख्यातस्यापि "* तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् *" इति वार्तिकस्य पुनरणुदित्सूत्रे तादृगेव व्याख्योपलभ्यते। तथात्रापि तपरसूत्रे व्याख्यातस्याप्याक्षेपवार्तिकस्य तादृगेव व्याख्या समुचितैव॥ यद्यस्यात्र व्याख्याया अलेखन एवाग्रहस्तर्हि यथाकथंचिदाक्षेपग्रन्थोत्तरं "द्रुतादिषु चोक्तम्" इति व्याख्यायामेव 'किमुक्तम्' इत्याक्षिप्य द्वयोरप्याक्षेपसमाधानवार्तिकयोरुल्लेखः कार्यः॥ एतद्द्वयमपि अमूलकत्वान्महत्साहसमिति वयम्। (र. ना.)

ख्यानं कर्तव्यम् । किं पुनः कारणं न सिध्यति? कालभेदात् । ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम् ये मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ॥]

( ६२१ समाधानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ द्रुतादिषु चोक्तम् ॥ * ॥

(भाष्यम्) किमुक्तम्? ॥ *सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते* इति ॥

( उद्द्योतः ) भाष्ये—सिद्धं त्ववस्थिता इति । द्रुतत्वादयोभिव्यक्तिगता एवेति भावः ॥

( आक्षेपभाष्यम् )

स तर्हि तपरनिर्देशः कर्तव्यः ॥

( समाधानभाष्यम् )

न कर्तव्यः । इह कालग्रहणं क्रियते । यावच्च तपरकरणं तावच्च कालग्रहणम् । प्रत्येकं च कालशब्दः परिसमाप्यते—उकाल ऊकाल ऊ३काल इति ॥

( प्रदीपः ) यावच्चेति । एककार्यत्वादेतदुक्तम् । ऊ अजित्येव कालार्थो लभ्यते, उकारादयो ह्यच्त्वं न व्यभिचरन्तीति नाच्त्वेन ते विशेष्यन्ते अपि तु तैरच् । तत्रोकारादिकालत्वादुकारादिसदृशोऽज् ग्रहीष्यत इति नार्थः कालग्रहणेन । तत्क्रियते श्रूयमाणेनैवोकारेण कालं विशेषयितुमिति सवर्णग्रहणं न भविष्यति । तत्रैतत्स्यात्[1] ॥ उकारात्परः कालशब्दो न श्रूयत इति, आह[2]—प्रत्येकं चेति । षण्मात्रस्याचोऽसंभवात्संज्ञात्रयकरणाच्चेति भावः ॥

(उद्द्योतः) ननु तपरस्तत्कालस्येतिवत् कालपरस्तत्कालस्येतिसूत्राभावात्कथं समत्वमत आह—एकेति ॥ तदेवोपपादयति—ऊअजिति । किं चैवमुकाराणामेव संज्ञित्वेन संज्ञाविधानवैयर्थ्या[3]पत्तिः ॥ अपि तु तैरजिति । तत्र च मुख्यसामानाधिकरण्ये उक्तदोषाल्लक्षणया सामानाधिकरण्यं दर्शयति—तत्रेति । तत्र सादृश्यान्तरासम्भवाद्व्याख्यानाच्च कालकृतस्यैव तस्य ग्रहणमिति भावः ॥

( समाधानान्तरभाष्यम् )

अथ वा एकसंज्ञाधिकारेऽयं योगः कर्तव्यः । तत्रैका संज्ञा भविष्यति या परा अनवकाशा चेति एवं हि दीर्घप्लु[4]तयोः पूर्वसंज्ञा न भविष्यति ॥

अथ वा "स्वं रूपं शब्दस्याशब्दसंज्ञा" इत्ययं योगः प्रत्याख्यायते । तत्र यदेतद् 'अशब्दसंज्ञा' इति, यथा विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमुत्तरत्रानुवर्तिष्यते "अणुदित्सवर्णस्य चाप्रत्ययः" अशब्दसंज्ञायामिति ।

( प्रदीपः ) अशब्दसंज्ञायामिति । ह्रस्वसंज्ञा च शब्दसंज्ञेति तद्विधाने उकारः सवर्णान्न ग्रहीष्यति । उदात्तादयस्तु गुणा न भेदका इति तद्भिन्नस्यापि ह्रस्वसंज्ञा भविष्यति । उदात्तादिसंज्ञा[5]स्वज्ग्रहणं निवृत्तमिति दीर्घप्लुतानामपि ता भविष्यन्ति हलां त्वयोग्यत्वा[6]त्तदभावः । इको यणचीति तु न शब्दसंज्ञाविधानम् अपि तु आदिरन्त्येनेतिविहितसंज्ञानुवाद इति सवर्णग्रहणं भविष्यति ॥

(उद्द्योतः) हलां त्विति । शिक्षादावचामेव स्वरकथनादिति भावः ॥ प्रत्याहारेषु जातिपक्षाश्रयणान्न दोष इति तात्पर्यम् ॥

( समाधानान्तरभाष्यम् )

अथ वा ह्रस्वसंज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यति ॥

( प्रदीपः ) अथ वा ह्रस्वसंज्ञेति । त्रयाणां चेद्ध्रस्वसंज्ञा, तदा ह्रस्वप्रदेशेषु त्रयः संज्ञिन उपतिष्ठन्ते तत्रान्तरतमादेशविधाने ह्रस्वसंज्ञाविधानमनर्थकमेव स्यात् । अथ वचनादन्तरतमो भवेत् । एवमपि ह्रस्वप्रदेशेष्वज्ग्रहणमेव कुर्यादित्यर्थः ॥

( उद्द्योतः ) ननु ह्रस्वसंज्ञा ह्रस्वविधायकेषु एकमात्रादीनां त्रयाणामपि ग्रहणार्था स्यादित्यत आह—त्रयाणां चेदिति । अन्तरतमेति । प्रमाणत इति शेषः ॥ ह्रस्वप्रदेशेष्वज्ग्रहणमिति । न च विधौ ह्रस्वग्रहणे त्रयाणां विधानम्, अज्ग्रहणे त्वेकस्यैव, विधीयमानत्वेनासवर्णाग्राहकत्वादिति विशेष इति वाच्यम् । विधीयमानेनापि क्वचित्सवर्णग्रहणादित्यभिमानः ॥ अनुवादे तूभाभ्यामपि त्रयाणां ग्रहणेनाज्ग्रहणमेव कार्यमिति भावः ॥

( आक्षेपभाष्यम् )

ननु चेदं प्रयोजनं स्यात्—संज्ञया विधाने नियमं वक्ष्यामीति ह्रस्वसंज्ञया यदुच्यते तदचः स्थाने यथा स्यादिति ॥

( उद्द्योतः ) भाष्ये ननु चेदमिति । ह्रस्वप्रदेशेष्वज्ग्रहणे त्वचश्चेति नियमाभावाद्धलामप्यादेशः प्राप्नोतीति भावः ॥

( समाधानभाष्यम् )

स्यादेतत्प्रयोजनं यदि किंचित्कराणि ह्रस्वशासनानि स्युः । यतस्तु खलु यावदज्ग्रहणं तावद् ह्रस्वग्रहणमतोऽकिंचित्कराणि ह्रस्वशासनानि ।

( उद्द्योतः ) परिहरति—स्यादेतदिति । किंचित्कराणि । किंचिद्विशेषकराणि । न चास्ति कश्चिद् ह्रस्वविधाने विशेषः । अन्तरतमपरिभाषया मात्रिकस्थाने मात्रिकस्य द्विमात्रिकस्थाने द्विमात्रिकस्यैव विधानादिति भावः । न चानन्तरतमादेशविधानार्थम् । तद्बाधकल्पनापेक्षयेष्टानुरोधेन तयोर्ह्रस्वसंज्ञाभावज्ञापनस्यैवौचित्यमिति भावः ॥ यावदज्ग्रहणमिति । प्रयोगे यत्परिमाणकाज्उच्चारणमित्यर्थः ॥ तावद् ह्रस्वग्रहणमिति । तत्प[7]रिमाणकस्यैव ह्रस्वशब्देन ग्रहणं विधानमतस्तानि व्यर्थान्येवेत्यर्थः ॥

---

1 तत्रैतद् वक्ष्यमाणं स्यात्संभाव्यते इत्यर्थः । तत्रैष प्रश्न इति तु फलितार्थः । ( र. ना. ) 2 आहेत्यस्यात इत्यादिः । ( र. ना. ) 3 लघ्वर्थं हि संज्ञाकरणम्, नचोकारादिसंज्ञिपदापेक्षया ह्रस्वादिरूपसंज्ञापदेषु लाघवमस्तीति भावः । ( र. ना. ) 4 सावर्ण्येन गृहीतयोरुकारयोर्दीर्घप्लुतयोर्ह्रस्वसंज्ञा न भविष्यतीत्यर्थः । ( र. ना. ) 5 'दिषु सं' ॥ 6 'त्वादभावः' ॥ 7 स्थानेऽन्तरतमपरिभाषयेति शेषः । अन्तरतमविधानेन ह्रस्वशासनानां व्यर्थत्वे स्थिते तेन शब्देन विधाने गुणदोषचिन्तानिष्फलैवेति भावः । (र.ना.)

ये तु ह्रस्वविधायकेष्वज्ग्रहणमेव कार्यमित्येतद्भाष्याशयं वर्णयन्ति। तेषां संज्ञया विधाने नियममित्यादेः समाधिरयं कथमिति चिन्त्यम्। षड्ग्रहणान्यष्टौग्रहणानीतिभाष्यस्य चोपपत्तिश्चिन्त्येति दिक्॥ अनुवादे तु ह्रस्वग्रहणाज्ग्रहणयोः समतैवेति[1] एतदर्थद्वय[2]बोधनार्थमेवेह[3] श्लिष्टशब्दोपादानं भाष्ये इति बोध्यम्॥

(समाधानबाधकप्रयोजनान्तरभाष्यम्)

**इदं तर्हि प्रयोजनम्—"एच इग् ह्रस्वादेशे" इति वक्ष्यामीति। अनुच्यमाने ह्येतस्मिंस्त्रिर्ह्रस्वप्रदेशेष्वेच इग्भवतीति वक्तव्यं स्यात्। "ह्रस्वो नपुंसके प्रातिपदिकस्य" एच इग्भवतीति। "णौ चङ्युपधाया ह्रस्वः" एच इग्भवतीति। "ह्रस्वः [हलादिः[4] शेषः]" एच इग्भवतीति॥ संज्ञा च नाम यतो न लघीयः॥ कुत एतत्?॥ लघ्वर्थं हि संज्ञाकरणम्॥**

(प्रदीपः) इदं तर्हीति। असत्यां ह्रस्वसंज्ञायां ह्रस्वादेश इति कर्तुं न युज्यते। ततश्च ह्रस्वविधिप्रदेशेषु बहुकृत्व एच इगिति वक्तव्यं तद्गुरु भवति॥

(समाधानसाधकभाष्यम्)

**लघीयश्च त्रिर्ह्रस्वप्रदेशेष्वेच इग्भवतीति, न पुनः संज्ञाकरणम्। त्रिर्ह्रस्वप्रदेशेषु एच इग्भवतीति षड्[5] ग्रहणानि[6]। संज्ञाकरणे पुनरष्टौ—ह्रस्वसंज्ञा वक्तव्या, त्रिर्ह्रस्वप्रदेशेषु ह्रस्वग्रहणं कर्तव्यं ह्रस्वो ह्रस्वो ह्रस्व इति, एच इग्घ्रस्वादेश इति। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तस्यैतत्प्रयोजनं दीर्घप्लुतयोस्तु पूर्वसंज्ञा मा भूदिति॥ ऊकालोऽज्झ्रस्व०॥ २७॥**

(प्रदीपः) ग्रहणानीति। गृह्यतेनेनार्थ इति ग्रहणं पदमुच्यते। ह्रस्वादेश इत्याङः प्रश्लेषनिर्देशात्पृथक्प्रयोगाभावादाङ् न गणितः[7]॥ ननु मितां ह्रस्व इत्यत्र हेडवेष्टन इत्यस्य हिडयतीत्यर्थमेचइगितिवक्तव्यम्। तथा खित्यनव्ययस्येत्यत्रापि परमनुमन्य[8] इत्यर्थमिति गौरवप्रसङ्गः। एवं तर्ह्येच इगिति पञ्चकृत्वोप्युच्चार्यमाणे प्रतिपत्तिलाघवं[9] भवतीति लाघवोपलक्षणपरं भाष्यं द्रष्टव्यम्॥ ह्रस्वदीर्घप्लुत इति सौत्रत्वान्निर्देशस्य लिङ्गव्यत्ययेन पुंस्त्वम्॥ २७॥

(उद्द्योतः) लाघवोपलक्षणपरमिति। केचित्तु एतत्सूत्रस्थैतद्भाष्यप्रामाण्यात् क्मेर्णिङिति सूत्रे च्चिण्णमुलोरिति सूत्रस्थं[10] दीर्घग्रहणस्यैतदिदानीं[11] प्रयोजनं यद्[12]दीर्घविधौ स्थानिवत्त्वनिषेध इति वदतो भाष्यकारस्य प्रामाण्याच्च च्चिण्णमुलोरिति सूत्रस्थभाष्याच्च हेड वेष्टन इति धातोर्घटादा[13]वसांप्रदायिकः पाठः। परमनुम्मन्य इत्यादेश्चैतद्भाष्यप्रामाण्यादनभिधानमिति यथाश्रुतं भाष्यमेव सम्यगित्याहुः॥ पुल्लिङ्गैकवचनदर्शनाद् द्वन्द्वानुपपत्तिमाशङ्क्याह—सौत्रत्वादिति। लिङ्गस्य लौकिकत्वात्तद्व्यत्यय उचितो न तु शास्त्रीयैकवचनस्येति भावः॥ २७॥

—∘∘※∘∘—

(८४ अच्परिभाषासूत्रम्॥ १। २। १ आ० १६ सूत्रम्)

## १०२ अचश्च॥ १। २। २८॥

(आक्षेपभाष्यम्)

**किमयमलोन्त्यशेष आहोस्विदलोन्त्यापवादः?॥**

(आक्षेपसाधकहेतुजिज्ञासाभाष्यम्)

**कथं वायं तच्छेषः स्यात् कथं वा तदपवादः?॥**

(आक्षेपसाधकभाष्यम्)

**यद्येकं वाक्यं तच्चेदं च—अलोन्त्यस्य विधयो भवन्त्यचो ह्रस्वदीर्घप्लुता अन्त्यस्येति, ततोयं तच्छेषः। अथ नानावाक्यमलोन्त्यस्य विधयो भवन्ति। अचो ह्रस्वदीर्घप्लुता अन्त्यस्यानन्त्यस्य चेति, ततोयं तदपवादः॥**

(प्रदीपः) अचश्च॥ २८॥ इको गुणवृद्धी इत्यनेन समानमिदम्॥

(उद्द्योतः) अचश्च॥ २८॥ भाष्येऽलोन्त्यस्य विधयो भवन्तीत्यनेन तस्य व्यापकत्वं बोधितं तेनैतत्प्रवृत्त्यभावेपि स्थानषष्ठीरूपाल्लिङ्गाद्दिव उदित्यादावलोन्त्यस्येत्यस्य प्रवृत्तिः सूचिता॥ एकवाक्यतां दर्शयति—अच इति॥

(विशेषजिज्ञासाक्षेपभाष्यम्)

**कश्चात्र विशेषः?।**

(६२२ तच्छेषपक्षदूषणाक्षेपवार्तिकम्॥ १॥)

**॥*॥ ह्रस्वादिविधिरलोन्त्यस्येति चेद्वञ्चिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेष्वज्ग्रहणम्॥ *॥**

(भाष्यम्) **ह्रस्वादिविधिरलोन्त्यस्येति चेद्वञ्चिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेष्वज्ग्रहणं कर्तव्यम्। वञ्चि[14]पृच्छ्योर्दीर्घः 'अचः' इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति॥ शमादीनां दीर्घः 'अच' इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति॥ हनिगम्योर्दीर्घः 'अच' इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति॥**

(प्रदीपः) शमादिप्रभृतीति। प्रभृतिग्रहणेन ष्ठिवुक्लम्वादयो गृह्यन्ते॥

---

१ उकारादित्रयबोधकत्वेनेति शेषः। (र. ना.) २ ह्रस्वशासनानां व्यर्थत्वं ह्रस्वग्रहणाज्ग्रहणयोः समत्वमित्येतद्रूपार्थद्वयेत्यर्थः। (र.ना.) ३ अकिञ्चित्कराणीत्येतद्रूपश्लिष्टशब्दोपादानमित्यर्थः (र. ना.) ४ 'ह्रस्वो हलादिः शेषः' इत्येवं पाणिनीयसंहितापाठ एकस्मृत्युपारूढत्वेनोपात्तम्। नैतत्प्रकृतोपयोगि॥ ५ एच इगिति पदद्वयस्य त्रिर्ह्रस्वप्रदेशेषु पाठेन षड्ग्रहणानीत्यर्थः। (र. ना.) ६ 'नि भवन्ति'॥ ७ किन्तु ह्रस्वादेशे इत्यत्र पदद्वयमेव। (र. ना.) ८ परमनावमात्मानं मन्यत इति विग्रहः। (र. ना.) ९ पक्षद्वये पदानां संख्यासाम्येऽपि एच इगित्येव मुक्तौ ज्ञानलाघवमित्यर्थः। (र. ना.) १० ह्रस्वविकल्पेनैन सिद्धे इति शेषः। (र. ना.) ११ "एतदिदानीं दीर्घग्रहणप्रयोजनम्—दीर्घविधिं प्रत्यजादेशो न स्थानिवद्भवतीति स्थानिवत्त्वप्रतिषेधः सिद्धो भवति" इति हि तत्रत्यं भाष्यमर्थतोनूदितमिति बोध्यम्॥ १२ अशमि अशामि इत्यादौ ण्यन्ताण्णिचि इति भावः। (र. ना.) १३ अन्यथाऽहिडि अहीडि इति रूपद्वयसिद्ध्यर्थं दीर्घग्रहणस्यावश्यकत्वे शङ्कासमाधानयोरुभयोरपि निर्दलत्वापत्तिरिति भावः। (र. ना.) १४ 'क्विपि वञ्चि०'॥

(उद्द्योतः) आदिप्रभृतिशब्दयोः पौनरुक्त्यं परिहरति—प्रभृतीति । आदिपदं तु शमामष्टानामिति सूत्रस्थबहुवचनानुवादकमिति भावः ॥

(तदपवादपक्षाभ्युपगमभाष्यम्)

अस्तु तर्हि तदपवादः ।

(६३२ तदपवादपक्षदूषणाक्षेपवार्तिकम् ॥ २ ॥)

॥ * ॥ अचश्चेन्नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यप्रतिषेधः ॥ * ॥

(भाष्यम्) अचश्चेन्नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यस्य प्रतिषेधो वक्तव्यः "ह्रस्वो नपुंसके प्रातिपदिकस्य" यथेह भवति—रै अतिरि, नौ अतिनु । एवं सुवाक् ब्राह्मणकुलमित्यत्रापि प्राप्नोति ॥ "अकृत्सार्वधातुकयोर्दीर्घः" यथेह भवति—चीयते सूयते[1] । एवं छिद्यते भिद्यते अत्रापि प्राप्नोति ॥ "नामि" दीर्घः यथेह भवति अग्नीनाम् वायूनाम् । एवं षण्णामित्यत्रापि प्राप्नोति ।

(आक्षेपबाधकभाष्यम्)

नैष दोषः । "नोपधायाः" इत्येतन्नियमार्थं[3] भविष्यति ॥

(आक्षेपसाधकभाष्यम्)

प्रकृतस्यैव[4] नियमः स्यात् ॥ किं च प्रकृतम् ? । "नामि" इति । तेन भवेदिह नियमान्न स्यात् षण्णामिति । अन्यते तन्यत इत्यत्रापि प्राप्नोति ॥

अथाप्येवं नियमः स्यात्-नोपधाया नाम्येवेति । एवमपि भवेदिह नियमान्न स्यात्-अन्यते तन्यत इति । षण्णामित्यत्र प्राप्नोति ॥

अथाप्युभयतोयं नियमः स्यात्—नोपधाया एव नामि, नाम्येव नोपधाया इति । एवमपि भिद्यते छिद्यते सुवाक् ब्राह्मणकुलमित्यत्रापि प्राप्नोति ॥

(प्रदीपः) भिद्यत इति । यकारादौ यदङ्गं तस्य योवयवोजित्येवमत्र प्रसङ्गः । यदा त्वजेव यकारादिना विशेष्यते, तदात्र व्यवधानान्नास्ति प्रसङ्गः एवमन्यत्रापि ज्ञेयम् ॥

(उद्द्योतः) यदा त्विति । इदं चिन्त्यं, प्रत्ययस्याङ्गांश एवोत्थिताकाङ्क्षत्वात् ॥

(पदोपस्थितिपक्षस्थापनभाष्यम्)

एवं तर्हि ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयाद्, 'अचः' इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ॥ किं कृतं भवति ? । द्वितीया षष्ठी प्रादुर्भाव्यते । तत्र कामचारः—गृह्यमाणेन वाऽचं विशेषयितुमचा वा गृह्यमाणम् ॥ यावता कामचारः । इह तावद्वचिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेषु गृह्यमाणेनाचं विशेषयिष्यामः एतेषां दीर्घो भवति अच इति । इहेदानीं नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वजा गृह्यमाणं विशेषयिष्यामः । नपुंसकस्य ह्रस्वो भवति, अचः अजन्तस्येति । अकृत्सार्वधातुकयोर्दीर्घो भवति, अचः अजन्तस्येति । नामि दीर्घो भवति 'अचः' अजन्तस्येति ॥

(परिभाषोपस्थापकलिङ्गाधिकरणम्)

(आक्षेपभाष्यम्)

इह कस्मान्न भवति द्यौः पन्थाः स इति ।

(६२४ समाधानवार्तिकम् ॥ ३ ॥)

॥ * ॥ संज्ञया विधाने नियमः ॥ * ॥

(भाष्यम्) संज्ञया ये विधीयन्ते तेषु नियमः ॥ किं वक्तव्यमेतत् ? ॥

नहि ॥

कथमनुच्यमानं गंस्यते ? ॥

अजिति हि वर्तते । तत्रैवमभिसंबन्धः करिष्यते—अचः[8] अज्भवति ह्रस्वो दीर्घः प्लुत इत्येवं भाव्यमान इति ॥

(प्रदीपः) अजिति हि वर्तत इति । ततश्च ह्रस्वादिशब्दा इहानुवृत्ता नाचमुपस्थापयन्ति तस्य स्वयमुपस्थानादित्याश्रितस्वरूपव्यापारा आश्रीयन्ते तेन ह्रस्व इत्येवं योच् सोचः स्थाने भवतीत्यर्थः संपद्यते । एवं दीर्घप्लुतयोरपि ॥

(उद्द्योतः) नाचमिति । ह्रस्वादिसंज्ञका अचोचः स्थाने इति नार्थ इति भावः ॥ स्वयमिति । अच्पदेनैवेत्यर्थः ॥ आश्रितः स्वरूपस्य शब्दस्य व्यापारो यैरित्यर्थस्तदाह—ह्रस्व इत्येवमिति ॥

(आक्षेपभाष्यम्)

अथ पूर्वस्मिन् योगे अज्ग्रहणे सति किं प्रयोजनम् ? ॥

(प्रदीपः) अथेति । इहैव तदज्ग्रहणं क्रियतां पूर्वसूत्रे तु न वक्तव्यमिति प्रश्नः ॥

(६२५ समाधानवार्तिकम् ॥ ४ ॥)

॥ * ॥ अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम् ॥ * ॥

(भाष्यम्) अज्ग्रहणं क्रियते संयोगनिवृत्त्यर्थम् । अच्समुदायनिवृत्त्यर्थं च । संयोगनिवृत्त्यर्थं तावत्—प्रतक्ष्य प्रक्ष्य "ह्रस्वस्य पिति कृति तुग्" इति तुङ्मा भूदिति । अच्समुदायनिवृत्त्यर्थं तितउच्छत्रं तितउच्छाया "दीर्घात्पदान्ताद्वा" इति विभाषा तुङ्मा भूदिति ॥ अचश्च ॥ २८ ॥

(प्रदीपः) प्रतक्ष्येति । यथा प्रत्याहारे अश्रुता आका-

---

[1] 'स्तूयते' ॥ [2] 'व नि०' ॥

[3] नियमाकारस्तु नान्तस्यैवोपधायां दीर्घ इति । (र. ना.)

[4] 'स्यैव' ॥

[5] अकृत्सार्वेति दीर्घत्वमिति शेषः । (र. ना.)

[6] यकारादिप्रत्ययाव्यवहितपूर्ववर्ती योऽच् इत्याकारेणेति भावः । (र. ना.)

[7] 'एतेषामचो दीर्घो भवति' ॥

[8] ह्रस्वो दीर्घः प्लुत इत्येवम् इति शब्दमुच्चार्य भाव्यमानो विधीयमानोऽच् अचः स्थाने भवतीति संबन्धः । (र. ना.)

रादयो दीर्घप्लुतसंज्ञे लभन्ते तथा संयोगोपि ह्रस्वसंज्ञः स्यादिति तुक्प्रसङ्गः ॥ **तितउच्छत्रमिति** । परत्वाद्दीर्घलक्षणे वा तुकि सति **सकृद्गतौ विप्रतिषेध** इति न्यायाद् ह्रस्वलक्षणः पुनर्न प्रवर्तते । नचैवंविधे विषये **पुनः प्रसङ्गविज्ञानमस्ति** । नित्यविकल्पयोर्विरोधात् । पूर्वेण परस्य बाधप्रसङ्गात् । यत्र हि पूर्वो विधिः परं न बाधते तत्र पुनः प्रसङ्गविज्ञानं क्वचिदाश्रीयते । समुदाये वा कार्यं प्रति व्याप्रियमाणे अवयवानां पारतन्त्र्यादव्यापारान्नैव ह्रस्वलक्षणतुक्प्रसङ्गः ॥ ननु क्रियमाणेप्यज्ग्रहणे वर्णग्रहणे जातिग्रहणादच्समुदायस्यापि दीर्घसंज्ञाप्रसङ्गः ॥ नैष दोषः । ऊकाल इति विशेषणादिह व्यक्तिराश्रीयते । नहि जातेः परिमाणमस्ति । व्यक्तिद्वारकं वा जातेः परिमाणमाश्रीयते । एकैकव्यक्तिव्यङ्ग्या हि जातिर्न समुदायव्यङ्ग्या ॥ २८ ॥

( उद्योतः ) ननु मात्रिकाणां हलामुपदेशाभावादसत्त्वेन संज्ञाभावमाशङ्क्याह—**यथेति** ॥ **वा तुकीति** । वैकल्पिके तुकीति यावत् ॥ **विरोधादिति** । तथा च विकल्पविधिप्रवृत्तिवैयर्थ्यापत्त्या नित्यस्य बाध एवेत्यर्थः ॥ क्व तर्हि **पुनः प्रसङ्गविज्ञानं**, तत्राह—**यत्र हीति** । यथा भिन्धकीत्यत्र परत्वाद्धौ कृते पुनः प्रसङ्गविज्ञानादकच् । न हि तत्राकच्-धिप्रवृत्त्योर्विरोधः ॥ **समुदाये वेति** । इदं चिन्त्यम् । बहुशो दृष्टत्वात् । व्यक्तिद्वारकपरिमाणसम्भवं प्रकृते आह—**एकैकेति** । द्विमात्राकालकव्यक्तिगताच्त्वजातिर्दीर्घ इति ह्यर्थः स्यात् । तत्र या व्यक्तिः प्रत्येकरूपा न सा द्विमात्राकाला या च तादृशी न सा व्यक्तिरिति भावः । **हलन्ताच्चेत्यादौ** तु इक्समीपव्यक्तिवृत्तिहल्त्वजातेः पर इत्यर्थान्न धिप्सतीत्यादौ दोषः । जातेर्हि जात्यन्तरं व्यवधायकमिति न सजातीयद्वितीयव्यक्तिर्व्यवधायिकेति बोध्यम् ॥ परे तु वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालस्य सत्त्वेन वर्णसमुदाये मात्राकालिकत्वाद्यसम्भव इति प्रश्नो भाष्ये—**अथ पूर्वेति** ॥ उत्तरं तु तावत्सूक्ष्मकालग्रहणासमर्थस्य तत्र संज्ञाप्रवृत्तिशङ्कावारणार्थमित्याशयेन । एवं च **जातिग्रहणमित्यस्य** जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थेपि न दोषः ॥ **मात्राकालोवग्रहोर्धमात्राकालोवग्रह** इति प्रातिशाख्ययोरविरोधाय **परः सन्निकर्ष** इति सूत्रस्थभाष्येण च वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालव्यवायस्यावश्यकत्वादित्याहुः ॥ २८ ॥

(८५–८६ उदात्तानुदात्तसंज्ञासूत्रे ॥१।२।१ आ. १७. १८)

## १०३ उच्चैरुदात्तः ॥ १ । २ । २९ ॥

## १०४ नीचैरनुदात्तः । १ । २ । ३० ॥

### ( षष्ठीनिर्दिष्टाज्ग्रहणानुवृत्तिविचाराधिकरणम् )

#### ( आक्षेपभाष्यम् )

**किं षष्ठीनिर्दिष्टमज्ग्रहणमनुवर्तते । उताहो न? ॥**

( प्रदीपः ) **उच्चैः** ॥ २९ ॥ **षष्ठीनिर्दिष्टमिति** । उच्चैः नीचैरित्येते अव्यये अधिकरणशक्तिप्रधाने । तत्राच इत्यनुवृत्तौ सत्यामयमर्थो भवति—उच्चैः स्थान उपलभ्यमान उदात्तसंज्ञः स चाचः स्थान इति ॥

( उद्योतः ) **उच्चैरुदात्तः** ॥ २९ ॥ नन्वच इत्यनुवृत्तावपि कथं परिभाषाऽप्रकॢप्तिरनुवृत्तस्य प्रकृतसूत्रेष्वपेक्षितसंज्ञिसमर्पकत्वेपि स्वरो ऽच एव स्थाने इत्यर्थकत्वे मानाभावादत आह—**उच्चैरिति** । संज्ञिसमर्पणस्य प्रथमान्तानुवृत्त्यापि सिद्धेरिति भावः ॥ **स्थाने** । ताल्वादौ । **उच्चैः** उच्चदेशे, उपलभ्यमान इत्यन्वयः । **उपलभ्यमानः**, व्यज्यमानः ॥ **स चाच इति** । वाक्यभेदेन षष्ठ्यन्ताच्पदेन सम्बन्ध इति भावः ॥

#### ( विशेषजिज्ञासाभाष्यम् )

**किं चातः? ॥**

#### ( विशेषप्रतिपादनभाष्यम् )

**यद्यनुवर्तते "हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति" इत्येषा परिभाषा न प्रकल्पते । कथं हलो नाम स्वरप्राप्तिः स्यात् ॥ एवं तर्हि निवृत्तम् । बह्वन्येतस्याः परिभाषायाः प्रयोजनानि ॥**

( प्रदीपः ) **हल्स्वरप्राप्ताविति** । सत्यामच इत्यस्यानुवृत्तौ **समासस्ये**त्यन्तोदात्तत्वं राजपुरुष इत्यादावेव स्याद् न तु राजदृषदित्यादौ षकाराकारस्य । असत्यां त्वनुवृत्तौ समासस्य योन्तो दकारस्तस्य स्वरप्राप्तावविद्यमानत्वादकारस्य स्वरः सिध्यति । एषा च परिभाषा **यतोऽनाव** इत्यत्रानाव इति प्रतिषेधेन ज्ञापिता । अन्यथा नाव्यमित्यत्र नकारस्यायोग्यत्वादाकारस्य चानादित्वादुदात्तत्वं न भविष्यतीति किमनाव इति प्रतिषेधेन ॥

( उद्योतः ) नन्वच्ग्रहणानुवृत्त्यैव सिद्धे मास्तु परिभाषाप्रवृत्तिरत आह—**सत्यामिति** । **समासस्ये**त्यत्राच इत्यस्योपस्थित्या तेन समासे विशेष्यमाणे राजदृषदित्यादौ न स्यादित्यर्थः ॥ **षकाराकारस्येति** । तथा च तत्सिद्ध्यर्थं परिभाषैव कर्तव्या नाच इत्यनुवृत्तिरिति भावः । तदाह—भाष्ये—**बह्वन्येतस्या इति** । **यतो नाव इति** । यदन्तस्य ब्यच्कस्यादिरुदात्त इति तदर्थः ॥

#### ( इति षष्ठीनिर्दिष्टाज्ग्रहणानुवृत्तिनिर्णयः )

### ( अथ प्रथमानिर्दिष्टाज्ग्रहणानुवृत्तिविचाराधिकरणम् )

#### ( आक्षेपभाष्यम् )

**अथ प्रथमानिर्दिष्टमज्ग्रहणमनुवर्तते । उताहो न ॥**

( प्रदीपः ) **अथ प्रथमानिर्दिष्टमिति** ॥ ननु को विशेषः, यावता यत्र स्वरो विधीयते तत्र व्यञ्जनस्याविद्यमानत्वादच एव भविष्यति । **अनुदात्तादेरञ्ञि**त्यादावनुवादेपि न दोषः । स्वत एव हलोनुदात्तत्वं भवतु, अज्ञपरागवशाद्वा, तदनुवादेन कार्यविधाने न कश्चिद्विशेषः । एवं तर्हि न्यायव्युत्पादनार्थं एवायं विचारः ॥

१ स्थलविशेषमप्रदर्श्य चिन्त्यत्वोक्तिर्नागेशस्यानुचितेति वयम् । ( र. ना. )

२ हल्स्वरप्राप्तावितीत्यादिः । ( र. ना. )

३ 'कथं नाम हलः स्व०' ॥

४ अस इत्यर्थेऽव्ययम् । ( र. ना. )

(उद्द्योतः) यावतेति । न चाचः स्थाने हलप्युदात्तादि-शब्देन प्रत्यायितः स्यादिति वाच्यम् । अन्तरतमपरिभाषयाऽप्राप्तेः ॥ ननु स्वरशेषाया अविद्यमानवत्परिभाषाया अन्यत्राप्राप्तेस्तत्र दोषोऽत आह—अनुदात्तादेरिति । स्वत एवेत्यस्याचां त्रैस्वर्यवत्तेषामनुदात्तत्वमेवेति विशेषस्वराप्राप्त्या स्वस्वर एवावतिष्ठत इत्यर्थः ॥ ननु स्वतस्तथात्वकल्पने मानाभावः । किंचोदात्तसमवधानेप्यनुदात्तत्वप्रतीत्यापत्तिरेवञ्च हलादिप्रातिपदिके आद्युदात्तेप्यन्यापत्तिरत आह—अजुपेति ॥ न्यायेति । उदात्तत्वादीनामज्धर्मत्वविषयकन्यायेत्यर्थः ॥

( जिज्ञासाभाष्यम् )

**किं चार्थोऽनुवृत्त्या ? ॥**

( उद्द्योतः ) भाष्येऽनुवृत्तेः प्रयोजनाभावात्सन्देहानुपपत्तिरिति पृच्छति—किञ्चेति । अनुवृत्तेर्न फलमित्यर्थः ॥

( प्रयोजननिरासभाष्यम् )

**बाढमर्थः । यद्येते[1] व्यञ्जनस्यापि गुणा लक्ष्यन्ते ॥**

(उद्द्योतः) भाष्ये यदि लक्ष्यन्ते तदार्थः, यतो न लक्ष्यन्तेऽतो नार्थ इत्यन्वयः ॥

( प्रयोजनसाधकभाष्यम् )

**ननु च प्रत्यक्षमुपलभ्यन्ते—इषे त्वोर्जे त्वा ॥**

( प्रदीपः ) ननु चेति । बाधकाभावाच्च भ्रान्त्यसिद्धिः ॥

( उद्द्योतः ) नन्वियं प्रतीती रक्तस्फटिकप्रतीतिवद् भ्रान्तेत्यत आह—बाधकेति ॥

( प्रयोजननिरासभाष्यम् )

**नैते व्यञ्जनस्य गुणाः, किं[2] त्वच एव । तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते । तद्यथा—द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते । बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते ॥**

( प्रदीपः ) नैते इति । अन्यथाऽप्युपलम्भोपपत्तेरिति भावः ॥

( उद्द्योतः ) प्रतीतिर्भ्रान्तैवेत्याह—नैते इति । भाष्ये ॥ तद्व्याचष्टे—अन्यथापीति । रिक्तको लोहकंसः, आदर्शः । रिक्तकः घर्षणेन उज्ज्वलीकृतः बदरपिटकं बदरफलयुक्तपेटिकेति संप्रदायः ॥

( प्रयोजनसाधकभाष्यम् )

**कुतो नु खल्वेतत्—अच एते गुणाः स्युः, तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते[3] । न पुनर्व्यञ्जनस्यैते गुणाः स्युस्तत्सामीप्यात्त्वजपि[4] तद्गुण उपलभ्येतेति ? ॥**

(उद्द्योतः) प्रतीतेर्भ्रान्तत्वे बीजं पृच्छति—कुतो न्विति ॥

( प्रयोजननिराकरणभाष्यम् )

**अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते, न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति । अन्वर्थं खल्वपि निर्वचनम्—स्वयं राजन्त इति स्वराः, अन्वग्भवति व्यञ्जनमिति ॥**

( प्रदीपः ) अन्तरेणापि व्यञ्जनमिति । आप्यायध्वमिति यथा । अत्र ध्याकार उदात्तः, तिङन्तस्य निघातः । ततश्चान्वयव्यतिरेकाभ्यामच एवैते गुणाः । यदि तु हलामप्येते गुणा अभविष्यन् तदा हलामचां च भिन्नस्वरताप्युपालप्स्यत, यस्मात्त्वचामेव स्वरमनुविदधति, न हलः, तस्मान्न हलां स्वयं स्वरोस्तीति निश्चयः ॥ अन्वग्भवतीति । अनुगच्छतीत्यर्थः । शिष्टसमाचाराच्चेदं निर्वचनमभिहितं, न त्वत्र वर्णसादृश्यं किंचिदस्ति । अथ वा गतिरपि व्यञ्जेरर्थः विविधं गच्छत्युपरागवशादिति व्यञ्जनमित्ययमर्थः पर्यायान्तरेण भाष्यकारेणाभिहितः । उपरागश्च[6] पूर्वपराच्सन्निधानेपि परेणाचा हलो भवति न[7] पूर्वेण ॥

(उद्द्योतः) अजन्वयव्यतिरेकौ बीजमित्याह—अन्तरेणापीति । अत्र हीति ॥ निपाता आद्युदात्तास्तिङ्ङतिङ इत्याभ्यामिति भावः ॥ न पुनरन्तरेणेति । अन्वयप्रदर्शनमिदं प्रक्रियाप्राप्तातिरिक्तविषयं, सौत्रप्रयोगातिरिक्तविषयकं च बोध्यम् ॥ स्वयं राजन्त इति भाष्यस्योदात्तादिगुणैरित्यर्थः ॥ अनुगच्छतीति । अज्गुणमिति शेषः ॥ नत्वत्र वर्णसादृश्यमिति । निर्वचनं हि तत्तद्धात्वर्थयोगेन, अर्थाभावेपि वर्णसादृश्येन वेत्याशयः ॥ अर्थयोग एवास्तीत्याह—अथवेति ॥ विविधमिति । उदात्तत्वादिरूपनानाप्रकारगमनमजधीनमिति शब्दादेव लभ्यत इति भावः ॥ पर्यायेति । यो हि यमनुगच्छति स तद्वद् विविधं गच्छतीत्यर्थः ॥ ननु विरुद्धस्वरद्वयमध्यगतस्य व्यञ्जनस्य स्वरद्वयानुपरागापत्तिरत आह—उपरागश्चेति । स्वभाव एवात्र बीजम् ॥

( इति प्रथमानिर्दिष्टाज्ग्रहणाननुवृत्तिनिश्चयः )

———>o<———

1 यद्येते गुणा उदात्तत्वादयो धर्मा इत्यर्थः । ( र. ना. ) 2 'अच एते गुणाः' ॥ 3 'त इति' ॥ 4 'त्तदपि' ॥ 5 उपसर्गाश्चाभिवर्जमित्यनेनेति शेषः । ( र. ना. ) 6 'वजुपरागश्च' ॥

7 न पूर्वेणेति ॥ तथा च शुक्लयजुःप्रातिशाख्ये कात्यायनेनोक्तम्—"स्वरोऽक्षरम्" इत्यभिधाय "सहाद्यैर्व्यञ्जनैः" इति ॥ तैत्तिरीयप्रातिशाख्येपि—"व्यञ्जनं स्वराङ्गम्" इत्युक्त्वा "तत्परस्वरम्" इत्युक्तम् ॥ अस्य बाधकान्यपि तत्र प्रोक्तानि—"अवसितं पूर्वस्य" "संयोगादि" "परेण चासंहितम्" "अनुस्वारः स्वरभक्तिश्च" इति ॥ कात्यायनेनापि शुक्लयजुःप्रातिशाख्ये—"उत्तरैश्चावसितैः" "संयोगादिः पूर्वस्य" "यमश्च" इति ॥ अत्रोव्वटभाष्यम्—यमः पूर्वस्याङ्गं भवति । च शब्दात्पूर्ववर्णसहितः । यथा—रुक्क्मम् । ककारद्वयमकारसंयोगः । तत्र ककारयमौ पूर्वस्य, मकारः परस्येति ॥ "क्रमजंच" इति सूत्रे उव्वटभाष्यम्—क्रमाज्जातं क्रमजम् । यत्संयोगादेः परस्य वर्णस्य द्विरुक्त्या जायते तत् क्रमजमित्युच्यते । यथा—पार्श्व्यम् । रेफः द्वौ शकारौ वकारो यकारश्च संयोगः । तत्र रेफः संयोगादिः क्रमजश्च पूर्वः शकारः पूर्वाङ्गम् । द्वितीयः शकारो वकारो यकारश्चोत्तराङ्गम् इति ॥

8 अजभावव्यञ्जनोच्चारणाभावयोर्व्याप्तिरूपसंबन्धप्रदर्शनमित्यर्थः । (र.ना.)

9 तेन वाक् वाक्क् इत्यादिद्वित्वघटितरूपसिद्धिः । (र.ना.)

( ६२६ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ उच्चनीचस्यानवस्थितत्वात्संज्ञाऽप्रसिद्धिः ॥ * ॥

( भाष्यम् ) इदमुच्चनीचमनवस्थितपदार्थकम्, तदेव हि कंचित्प्रत्युच्चैर्भवति, कंचित्प्रति नीचैः । एवं हि कश्चित्कं चिदधीयानमाह किमुच्चै रोरूयसे शनैर्वर्ततामिति । तमेव तथाऽधीयानमपर आह किमन्तर्दन्तकेनाधीषे उच्चैर्वर्ततामिति । एवमुच्चनीचमनवस्थितपदार्थकम्, तस्यानवस्थितत्वात् संज्ञाया अप्रसिद्धिः ॥

( प्रदीपः ) उच्चनीचस्येति । श्रुतिप्रकर्षापकर्षलक्षणोच्चनीचत्वाश्रयः पर्यनुयोगः । नचानवस्थितवस्त्वाश्रयेण साधुत्वं व्यवतिष्ठते ॥

( उद्योतः ) अधिकरणशक्तिप्रधानत्वात्कथमयं पर्यनुयोगोत आह—श्रुतीति । उच्चैः श्रूयमाण उदात्त इत्यादिरर्थं इत्यभिमानः । नन्वस्त्वनवस्थितत्वं को दोषोत आह—नचेति ॥

( आक्षेपबाधकभाष्यम् )

एवं तर्हि लक्षणं करिष्यते—आयामो दारुण्यमणुता खस्येति उच्चैःकराणि शब्दस्य । आयामो गात्राणां निग्रहः । दारुण्यं स्वरस्य, दारुणता रूक्षता । अणुता खस्य, कण्ठस्य संवृतता । उच्चैःकराणि शब्दस्य ॥ अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि शब्दस्य । अन्ववसर्गो गात्राणां शिथिलता । मार्दवं स्वरस्य मृदुता स्निग्धता । उरुता खस्य, महत्ता कण्ठस्येति नीचैःकराणि शब्दस्य ॥

( उद्योतः ) भाष्ये—एवं तर्हि लक्षणमिति । न श्रुतिगतप्रकर्षाश्रयमुच्चत्वं नीचत्वं किन्तु ईदृशज्ञापकज्ञापितमिति भावः ॥

( आक्षेपसाधकभाष्यम् )

एतदप्यनैकान्तिकम् । यद्धर्यल्पप्राणस्य सर्वोच्चैस्तद्धि महाप्राणस्य सर्वनीचैः ॥

( प्रदीपः ) एतदपीति । श्रोता हि वक्तृगतानायामादीन्धर्मान्कार्यादवस्यति, कार्यं च संकीर्णम् । तथाहि—महाप्राणो नीचैरप्युच्चारयन्स्वरेण महान्तं देशं व्याप्नोति । अल्पप्राणस्तूच्चैरपि वदन्नल्पं देशं व्याप्नोति ॥

( उद्योतः ) श्रोता हीति । आयामादीनां श्रुतिप्रकर्षानुमेयत्वात् तस्य चाप्यवस्थितत्वादव्यवस्थितत्वमिति भावः ॥

( ६२७ समाधानवार्तिकम् ॥ २ ॥ )

॥*॥ सिद्धं तु समानप्रक्रमवचनात् ॥*॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? ॥ समाने प्रक्रम इति वक्तव्यम् ॥ कः पुनः प्रक्रमः ? ॥ उरः कण्ठः शिर इति ॥ उच्चैरुदात्तः ॥ २९ ॥ नीचैरनु० ॥ ३० ॥

( प्रदीपः ) सिद्धं त्विति । प्रक्रम्यन्तेऽस्मिन्वर्णा इति प्रक्रमः स्थानमुच्यते । तेनायमर्थः एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाण उदात्तः, अधरभागनिष्पन्नोऽनुदात्तः । एवं चोच्चैरित्यनेनोर्ध्वभागो गृह्यते नीचैरित्यधरभागः । अभ्याससमधिगम्यश्चायं स्वरविशेषः षड्जादिवद्विज्ञेयः ॥

( उद्योतः ) प्रक्रम्यन्त इति । अधिकरणे घञि नोदात्तोपदेशस्येति वृद्धिप्रतिषेधः ॥ ऊर्ध्वभागेनेति । ऊर्ध्वभागावच्छिन्नवायुसंयोगेनेत्यर्थः ॥ न चेदमपूर्वं कर्तव्यमित्याह—एवं चेति । करणस्य चाधिकरणत्वविवक्षा बोध्या । कस्योर्ध्वभागे इत्याकाङ्क्षायां योग्यतया स्थानस्येति लभ्यत इति भावः । मन्दं प्रति तु वचनमेवावश्यकमिति बोध्यम् ॥ भाष्ये—उरः कण्ठः शिर इति । शिरःपदं ताल्वादीनामुपलक्षणम् ॥ २९ ॥

( ८७ स्वरितसंज्ञासूत्रम् ॥ १ । २ । १ आ. १९ सू. )

## १०५ समाहारः स्वरितः ॥ १ । २ । ३१ ॥

( समाहियमाणनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

समाहारः स्वरित इत्युच्यते । कस्य समाहारः स्वरितसंज्ञो भवति ? ॥

( प्रदीपः ) समा ॥ ३१ ॥ कस्येति । समाहरणं समाहार इति भावसाधनं मत्वा कस्येति प्रश्नः ॥

( उद्योतः ) समाहारः ॥ ३१ ॥ समाहारशब्दे कर्मसाधने कस्येति षष्ठ्यन्तेन पृच्छानुपपन्नेत्यत आह—भावेति । जातौ च कस्येत्येकवचनम् ॥

( अच्समाहारस्वीकारेण समाधानभाष्यम् )

अचोरित्याह ॥

( प्रदीपः ) अचोरिति । तयोः समाहार उपश्लेषरूपः । अन्यत्र त्वौत्तराधर्यरूपोपि संभवति । गाङ्गेऽनूपइति स्थानिनोरेकाराकारयोरुदात्तानुदात्तयोः समाहारात् स्थानिधर्मेणादेशस्यापि तथा व्यपदेशः ॥

( उद्योतः ) उपश्लेषः । अव्यवहितोत्तरत्वरूपः । अन्यत्र । पूलादौ । औत्तराधर्यमाधाराधेयभावः । न च वर्णानां सः । अमूर्तत्वादस्थिरत्वाच्चेति भावः ॥ स्वरितभाज एकादेशस्यैकत्वात् कथमत्र द्वयोरचोः समाहारोत आह—स्थानिनोरिति ॥

( ६२८ अच्समाहारानुपपत्तिवार्तिकम् ॥ १ ॥ )

॥*॥ समाहारोऽचोश्चेन्नाभावात् ॥*॥

( भाष्यम् ) समाहारोचोश्चेत्, तन्न ॥ किं कारणम् ? ॥ अभावात् । नह्यचोः समाहारोस्ति ॥

---

१ 'अथ नीचै' ॥ २ बहुव्रीहिसमासेऽत्राश्रयशब्दो हेत्वर्थकः । ( र. ना. ) ३ 'वर्णस्या' ॥ ४ अतिशयेन यमनं नियमनमिति विग्रहः । ( र. ना. ) ५ 'यदल्प' ॥ ६ 'स्त्वन्महा' ॥ ७ उच्चार्यन्ते इत्यर्थः । ( र. ना. )

८ तथाचोक्तं शिक्षायाम्—'उदात्ते निषादगान्धारावनुदात्तऋषभधैवतौ । स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ इति ॥ ९ 'साधनत्वं' ॥ १० 'तयोश्च' ॥ ११ समाहारस्येत्यर्थः । ( र. ना. )

**( प्रदीपः ) समाहारोचोश्चेदिति** । कार्यं क कन्या इत्यादौ स्थानिद्वारकोपि समाहारव्यपदेशो नास्ति । यत्राप्यस्ति गाङ्गेनूप इति—तत्राप्यसौ गौणः । गाङ्गशब्दो ऽणन्तत्वादन्तोदात्तः । सप्तम्येकवचनेन सुप्त्वादनुदात्तेन सहैकादेश उदात्तः । अनूपशब्दः **अनोरप्रधानकनीयसी** इत्यन्तोदात्तत्वादनुदात्तादिः, तत एकादेशः **स्वरितो वाऽनुदात्ते पदादाविति** स्वरितः ॥

**( उद्योतः )** कार्यंकशब्दयोर्ण्यदन्तयोस्तित्वात्स्वरितत्वं कन्येत्यत्र **कन्याराजन्यमनुष्याणामन्त** इति तत् ॥ एवं च गौणोपि सर्वत्र नास्तीत्यर्थः ॥ **गौण इति** । स्थानिनोरुपश्लेषस्याशास्त्रीयत्वेन स्थानिवत्सूत्राप्रवृत्तेः, लोकन्यायसिद्धस्तु गौण इत्यर्थः ॥

**( अच्समाहारोदाहरणभाष्यम् )**

**नन्वयमस्ति गाङ्गेऽनूप इति ॥**

**( अच्समाहारबाधकभाष्यम् )**

**नैषोचोः समाहारः । अन्योयमुदात्तानुदात्तयोः स्थाने एक आदिश्यते ॥**

**( गुणसमाहारपक्षाभ्युपगमभाष्यम् )**

**एवं तर्हि गुणयोः ॥**

**( प्रदीपः ) एवं तर्हीति** । गुणयोर्नैरन्तर्येणोपलम्भादस्ति समाहारः ॥

**( उद्योतः )** नन्वचोः समाहाराभावे कथं तद्गुणयोः समाहारोत आह—**गुणयोरिति** । एकाच्छ्रिययोरेव तयोः समाहार इत्यर्थः ॥ **नैरन्तर्येणेति** । तस्यादित उदात्तमित्युक्तेः ॥

**( ६२९ गुणसमाहारानुपपत्तिवार्तिकम् ॥ २ ॥ )**

## ॥ * ॥ गुणयोश्चेन्नाच्प्रकरणात् ॥ * ॥

**( भाष्यम् ) गुणयोः समाहार इति चेत् । तन्न ॥ किं कारणम् ? ॥ अच्प्रकरणात् । अजिति वर्तते ॥**

**( प्रदीपः ) अच्प्रकरणादिति** । प्रकरणं प्रस्तावो न तु स्वरितत्वादनुवृत्तिः । तस्याः पूर्वं प्रत्याख्यानात् । तदयमर्थः । पूर्वसूत्रयोः सामर्थ्याक्षिप्तोऽजेव संज्ञी उदात्तानुदात्तशब्दयोरिति ताविहानुवृत्तावचं प्रत्याययतो न तु गुणम् ॥

**( उद्योतः )** पूर्वं प्रत्याख्यानेनाच्प्रकरणादिति विरुद्धमत आह—**प्रस्ताव इति** । सामर्थ्यादवगतिरित्यर्थः । तदुपपादयति—**तदयमिति** । **अजिति वर्तत इति** भाष्येऽच्शब्देन तद्विशेषबोधकावुदात्तानुदात्तशब्दौ लक्ष्येते इत्यर्थः ॥

**( ६३० समाधानवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ सिद्धं त्वच्समुदायस्याभावात्तद्गुणसम्प्रत्ययः ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? ॥ अच्समुदायो नास्तीति कृत्वा तद्गुणस्याचः समाहारगुणस्य सम्प्रत्यये भविष्यति ॥**

**( प्रदीपः ) सिद्धं त्विति** । गुणिनोरचोः समाहारासम्भवात्सामर्थ्याद् गुणयोः समाहाराश्रयणमित्यर्थः ॥

**( उद्योतः )** भाष्ये तद्गुणस्येत्यस्य व्याख्या **समाहारगुणस्येति** । उदात्तानुदात्तसमाहाररूपगुणवत इत्यर्थः ॥

**( आक्षेपभाष्यम् )**

**कथं पुनः समाहार इत्यनेनाच्छक्यः प्रतिनिर्देष्टुम् ? ॥**

**( प्रदीपः ) कथं पुनरिति** । स्वरित इत्यनया संज्ञया योग्यत्वादच्संज्ञित्वेनाक्षिप्तः । न चाच्समाहारो भवति ॥

**( उद्योतः )** अचः संज्ञित्वेनानुपादानादयं प्रश्नोऽयुक्तोऽत आह—**स्वरित इति** ॥ **न चाच्समाहार इति** । भावसाधनत्वात्समाहारशब्दस्येति भावः ॥

**( समाधानभाष्यम् )**

**मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा—पुष्पका एषां ते पुष्पकाः कालका एषां ते कालका इति । एवं समाहारवान् समाहारः ॥ अथ वा अकारो मत्वर्थीयः । तद्यथा तुन्दो घाट इति ॥**

**( प्रदीपः ) मतुब्लोप इति** । गुणगुणिनोरभेदोपचाराद्गम्यमानार्थस्य मतुपोऽप्रयोग इत्यर्थः ॥ **अकार इति** । अर्श आदेराकृतिगणत्वात् ॥

**( उद्योतः ) अर्श आदेरिति** । अधिकरणे घञिति तु नोक्तं, ल्युटा बाधाद् बाहुलकस्यागतिकगतित्वात् ॥

**( आक्षेपभाष्यम् )**

**यद्येवं त्रैस्वर्यं न प्रकल्पते ॥ तत्र को दोषः ? ॥ 'त्रैस्वर्येणाधीमहे' इत्येतन्नोपपद्यते ।**

**( प्रदीपः ) त्रैस्वर्यमिति** । उदात्तानुदात्तगुणव्यतिरेकेण स्वरितत्वस्याभावात्त्रैस्वर्यव्यवहारो न स्यात् । अस्ति चायं व्यवहारः ॥

**( उद्योतः ) उदात्तेत्यादि** । स्वरशब्दस्य गुणपरत्वाभिप्रायं चोद्यमित्यर्थः ॥ **त्रैस्वर्यमिति** । भावे ष्यञिति भावः ॥

**( समाधानभाष्यम् )**

**नैतद्गुणापेक्षम् ॥ किं तर्हि ? ॥ अजपेक्षमेतत्—'त्रैस्वर्येणाधीमहे' त्रिप्रकारैरज्भिरधीमहे, कैश्चिदुदात्तगुणैः कैश्चिदनुदात्तगुणैः कैश्चिदुभयगुणैः । तद्यथा—शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते—कल्माष इति वा सारङ्ग इति वा । एवमिहापि उदात्त उदात्तगुणः, अनुदात्तोऽनुदात्तगुणः य इदानीमुभयगुणः स तृतीयामाख्यां लभते स्वरित इति ॥ समाहारः स्वरितः ॥ ३१ ॥**

**( प्रदीपः ) अजपेक्षमिति** । स्वरशब्देनाच उच्यन्ते । त्रय एव स्वरास्त्रैस्वर्यमिति स्वार्थे ष्यञ् ॥ ३१ ॥

---

१ 'तत्र गाङ्ग' । २ 'सुपाऽनुदा०' । ३ तत्स्थानापन्नस्तद्धर्मं लभत इतीत्यादिः । ( र. ना. ) ४ 'ननु चायम्' ॥ ५ तथा च अजिति वर्तते इत्यस्याज्विशेषबोधकावुदात्तानुदात्तशब्दावनुवर्तेते इत्यर्थ इति भावः । (र. ना.) ६ 'तद्गुणेसंप्र०' । ७ पुष्पसदृशा आकारविशेषा रोगादिवशेन येषां शरीरेषु सन्ति ते पुष्पकाः । ( र. ना. ) । ८ कृष्णवर्णास्तिलाकारा इत्यर्थः । ( र. ना. ) ९ वृद्धानाभिस्तुन्दिः साऽस्यास्तीति विग्रहः । ( र. ना. ) १० अवटुर्घाटाकृकाटिका गलप्रदेशः साऽस्त्यस्येति विग्रहः । ( र. ना. ) ११ 'यवान्'

( उद्योतः ) ननु स्वरशब्दस्य गुणे प्रसिद्धेः कथं त्रैस्वर्यमित्यस्याजपेक्षत्वमत आह—स्वरशब्देनेति । एवमपि ष्व्यनुपपत्तिरत आह—त्रय एवेति । चातुर्वर्ण्यादित्वादिति भावः ॥ ३१ ॥

(८८ स्वरित उदात्तावस्थितिसूत्रम् ॥ १।२।१ आ. २० सू.)

## १०६ तस्यादित उदात्तमर्धह्रस्वम् ॥ १ । १ । ३२ ॥

( आक्षेपभाष्यम् )

**अर्धह्रस्वमित्युच्यते । तत्र दीर्घप्लुतयोर्न प्राप्नोति । कन्या । शक्तिके ३ शक्तिके ॥**

( प्रदीपः ) तस्यादित उदात्त ॥ ३२ ॥ अक्तपरिमाणस्य ह्रस्वसंज्ञा कृता नाव्यपवृक्तस्येति न्यायाद्दीर्घप्लुतावयवो ह्रस्वग्रहणेन न गृह्यत इत्यालोच्याह—अर्धह्रस्वमिति ॥ कन्येति । कन्याराजन्यमनुष्याणामन्त इति स्वरितः ॥ शक्तिके ३ शक्तिके इति । स्वरितमाम्रेडितेऽसूयेति स्वरितः प्लुतः ॥

( उद्योतः ) तस्यादितः ॥ ३२ ॥ अक्तपरिमाणस्येति । अनवयवस्येत्यर्थः । अव्यपवृक्तो, ऽवयवः ॥ इति न्यायादिति । इति हेतोर्न्यायाद्वाच्यवृत्त्यैवेत्यर्थः ॥ शक्तित इत्यत्र वाक्यादेरामन्त्रितस्येति द्वित्वम् ॥

( समाधानभाष्यम् )

**नैष दोषः । मात्रचोऽत्र लोपो द्रष्टव्यः । अर्धह्रस्वमात्रमर्धह्रस्वमिति ॥**

( प्रदीपः ) मात्रच इति । अर्धह्रस्वशब्दः प्रमाणवाची रूढिशब्दः । व्युत्पत्त्यर्थं तु ह्रस्वस्योपादानम् । अर्धमात्रात्वेनाभिधीयते । ततः प्रमेये मात्रचं विधाय तस्य प्रमाणे ल इति लोपः क्रियते । तत्र यथा ह्रस्वे बुद्ध्यार्धमात्रा विभज्यते एवं दीर्घप्लुतयोरपीति ॥

( उद्योतः ) नन्वर्धह्रस्वशब्दस्यावयववचनत्वेन प्रमाणवचनत्वाभावात्कथं मात्रजत आह—अर्धह्रस्वेति ॥ रूढ्याऽर्धमात्रारूपप्रमाणविशेषोनेनोच्यते, न ह्रस्वस्य अर्धमित्यर्थं इति भावः । व्युत्पत्त्यर्थमिति । अनुलोमादिवदिति भावः । एवमपि दीर्घादावर्द्धमात्राकालीनवयवविभागाभावाद्दोष एवेत्यत आह—तत्र यथेति । उभयोरपि समा गतिरिति भावः ॥

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ।**

(प्रदीपः) किमर्थमिति । नैवंभूतमिहान्वाख्यानं दृश्यते सन्ध्यक्षरादिविषयस्यापि विभागस्यान्वाख्यानप्रसङ्गादिति प्रश्नः ॥

( उद्योतः ) ननु गुणयोः प्रमाणोद्देशविशेषप्रतिपादनरूपान्वाख्यानार्थत्वात् प्रश्नोनुपपन्नोत आह—नैवम्भूतमिति ॥ सन्ध्यक्षरादीति । अवर्णभागः पूर्वं इकारादिभाग उत्तर इत्येवंरूपस्येत्यर्थः ॥

( समाधानभाष्यम् )

**आमिश्रीभूतमिवेदं भवति । तद्यथा—क्षीरोदके सम्पृक्ते आमिश्रीभूतत्वान्न ज्ञायते-कियत् क्षीरम्, कियदुदकम्, कस्मिन्नवकाशे क्षीरम्, कस्मिन्वोदकमिति । एवमिहाप्यामिश्रीभूतत्वान्न ज्ञायते-कियदुदात्तम्, कियदनुदात्तम्, कस्मिन्नवकाशे उदात्तम्, कस्मिन्ननुदात्तमिति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे इयदुदात्तमियदनुदात्तमस्मिन्नवकाश उदात्तम्, अस्मिन्नवकाशेनुदात्तमिति ॥**

( प्रदीपः ) आमिश्रीभूतमिवेति । तत्त्वतोस्त्येव विभाग इति इवशब्द उपात्तः ॥ क्षीरोदके इति । नियतव्यक्तिविवक्षायां जातिपरत्वाभावादेकवद्भावो न कृतः ॥

(उद्योतः) तत्त्वत इति । अन्यथान्वाख्यानासङ्गतिरिति भावः॥

( आक्षेपभाष्यम् )

**यद्ययमेवं सुहृत्किमन्यान्यप्येवंजातीयकानि नोपदिशति ॥ कानि पुनस्तानि ? । स्थानकरणानुप्रदानानि ॥**

( उद्योतः ) भाष्ये—स्थानेत्यादि । स्थानानि, कण्ठादीन्यष्टौ । करणमाभ्यन्तरप्रयत्नः, अनुप्रदानं बाह्यप्रयत्नः ॥

( समाधानभाष्यम् )

**व्याकरणं नामेयमुत्तरा विद्या । सोसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते ॥**

( प्रदीपः ) उत्तरा विद्येति । पुरा कल्पे पूर्वा, अद्यत्वे तूत्तरेति पस्पशायामाख्यातम् ॥

( उद्योतः ) उत्तरयति—व्याकरणं नामेति ॥ छन्दःशास्त्रेषु प्रातिशाख्यशिक्षादिषु ॥ अभिविनीतः । शिक्षितः ॥ उपलब्ध्या । व्युत्पत्त्या ॥

( सूत्रप्रत्याख्यानभाष्यम् )

**यद्येवं नार्थोऽनेन । इदमप्युपलब्ध्याधिगमिष्यति ॥**

( उद्योतः ) एवं तर्हि इदमपि व्यर्थमाह—यद्येवमिति ॥

( संज्ञापक्षभाष्यम् )

**संज्ञाकरणं तर्हीदम् । तस्य स्वरितस्यादितोर्धह्रस्वमुदात्तसंज्ञं भवतीति ॥ किं कृतं भवति ? । त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न कर्तव्यं भवति ।**

१ व्यपवर्गो विभागः, अव्यपवृक्तस्याविभक्तस्येत्यर्थः । ( र. ना. ) । २ फलितार्थकथनमेतत् । एवम् 'अव्यपवृक्तोऽवयव' इत्यपि ( र. ना. ) । ३ अर्धह्रस्वशब्दे ह्रस्वपदोपादानं व्युत्पत्त्यर्थम् अर्धह्रस्वशब्दस्य साधुत्वबोधनार्थमेव न तु तदर्थोऽपि विवक्षित इति भावः । ( र. ना. ) । ४ अर्धमात्रात्वेनाभिधीयते इति पाठः साधुर्भाति । 'रूढ्याऽर्धमात्रारूपप्रमाणविशेषोऽनेनोच्यते' इत्यादिरुद्योतग्रन्थोऽत्रपाठेऽनुकूलः । ( र. ना. ) । ५ 'ह्रस्वउद्ध्या' । ६ प्रमाणविशेष इति । अत एव "यावद्वर्धं ह्रस्वस्य" इति तैत्तिरीयप्रातिशाख्ये यावत्पदमुपात्तम् ॥ कात्यायनेनापि शुक्लयजुःप्रातिशाख्ये "स्वरार्धमात्रम्" इत्येवोक्तम् ॥ ७ अर्धमात्रा कालो योऽवयवस्तद्विभागाभावादित्यर्थः । (र. ना.) । ८ ह्रस्वदीर्घयोर्ह्रस्वप्लुतयोश्चापीत्यर्थः । (र. ना.) । ९ एज्विषयस्यापीत्यर्थः । ( र. ना. ) । १० गुणयोरुदात्तानुदात्तयोः प्रमाणमर्धमात्रारूपमुद्देश आदिदेशस्तद्रूपविशेषप्रतिपादनार्थत्वादेतस्य सूत्रस्य, किमर्थं पुनरिदमुच्यते इति प्रश्नोनुपपन्न इत्यर्थः । (र. ना.) । ११ यत्किञ्चिद् व्यक्तिपरत्वे इत्यर्थः । ( र. ना. ) । १२ 'गायां व्याख्या' । १३ 'ब्ध्या गमि' ।

"उदात्तस्वरितपरस्य सन्नतरः" । "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" । "नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्" इति ॥

(प्रदीपः) संज्ञाकरणमिति । प्रदेशेषु चैकदेशप्रत्यायनात्समुदाय आक्षेप्स्यते इति भावः ॥

(उद्द्योतः) ननु प्रदेशेषु स्वरितग्रहणाकरणे उदात्तग्रहणेनावयवस्य बोधनेपि तत्स्थाने यणोभावाद् उदात्तस्वरितयोर्यण इत्यत्रानुपपत्तिरेवेत्यत आह—आक्षेप्स्यत इति । तत्र सूत्रे एतदुपस्थितिसामर्थ्यादिति भावः ॥

(संज्ञापक्षनिराकरणभाष्यम्)

एतदपि नास्ति प्रयोजनम् । संज्ञाकरणं हि नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । लघीयश्च त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न पुनः संज्ञाकरणम् । त्रिरुदात्तप्रदेशेषु स्वरितग्रहणे नवाक्षराणि । संज्ञाकरणे पुनरेकादश ॥

(संज्ञापक्षसाधकभाष्यम्)

एवं तर्ह्युभयमनेन क्रियते । अन्वाख्यानं च संज्ञा च ॥ कथं पुनरेकेन यत्नेन उभयं लभ्यम् ? ॥ लभ्यमित्याह ॥ कथम् ? ॥ अन्वर्थग्रहणात् । अन्वर्थग्रहणं विज्ञास्यते । तस्य स्वरितस्यादितोऽर्धह्रस्वमुदात्तसंज्ञं भवति । ऊर्ध्वमात्तमिति चात उदात्तम् ॥

(प्रदीपः) उभयमिति । सत्यप्यक्षरगौरवे महतोऽर्थस्य व्याप्तिर्भवति, सुखेन विभागस्यापि परिज्ञानात् ॥

(उद्द्योतः) सत्यपीति । प्रयोजनविशेषलाभाद् गौरवं न दोषायेति भावः ॥ भाष्ये—ऊर्ध्वमात्तमिति । ताल्वादिषूर्ध्वदेशे उच्चारणेन गृहीतमित्यर्थः ॥

(संज्ञापक्षबाधकभाष्यम्)

यदि तर्हि संज्ञाकरणम् उदात्तादेर्यदुच्यते तत्स्वरितादेरपि प्राप्नोति ॥

(प्रदीपः) उदात्तादेरिति । उदात्तादेः प्रतिपादकं यच्छास्त्रमाद्युदात्तश्चेति तत् स्वरितादेरपि प्रतिपादकं प्राप्नोति ततश्च प्रत्ययः कदाचित् स्वरितादिरपि स्यादित्यर्थः ॥

(उद्द्योतः) उदात्तादेरुच्यमानं कार्यमिह शास्त्रे न किञ्चिदत आह—उदात्तादेरिति । इदमुपलक्षणमन्तोदात्तस्यापि ॥

(समाधानभाष्यम्)

अन्वाख्यानमेव तर्हीदं मन्दबुद्धेः ॥

(प्रदीपः) अन्वाख्यानमेवेति । न केवलमिदं सूत्रम् । यावदुच्चैरुदात्त इत्यादिसंज्ञाकरणमपि मन्दबुद्धिप्रतिपादनार्थम् । सिद्धो हि वेदाध्यायिनां शिक्षायामेवोदात्तादिव्यवहारः ॥

(उद्द्योतः) एवंभूतमन्याख्यातं न दृश्यत इति यदुक्तं तत्परिहरति—न केवलमिति । उच्चैरुदात्त इत्यादिकमपि तादृशमिति भावः ॥ भाष्ये इदमित्यस्योच्चैरुदात्त इत्यादिकमित्यर्थो बोध्यः ॥

( ६३१ सूत्रपाठव्यत्ययवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्वरितस्यार्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात् कार्यं स्वरितादिति सिद्ध्यर्थम् ॥ * ॥

(भाष्यम्) स्वरितस्यार्धह्रस्वोदात्ताद् आ "उदात्तस्वरितपरस्य सन्नतरः" इत्येतस्मात् सूत्रादिदं सूत्रकाण्डमूर्ध्वम् "उदात्तादनुदात्तस्य स्वरितः" इत्यतः कर्तव्यम् ॥ किं प्रयोजनम् ? । स्वरितादिति सिद्ध्यर्थम् । स्वरितादिति सिद्धिर्यथा स्यात्— "स्वरितात्संहितायामनुदात्तानाम्" इति । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि ॥ क तर्हि स्यात् ? । यः सिद्धः स्वरितः—कार्यं देवदत्तयज्ञदत्तौ ।

(प्रदीपः) स्वरितस्येति । आ अर्धह्रस्वोदात्तादित्याकारप्रश्लेषः । इयं नवसूत्री "उदात्तादनुदात्तस्य स्वरित" इत्येतस्मात्परा कर्तव्या । तेन स्वरितात् संहितायामनुदात्तानामित्येकश्रुतौ विधीयमानायामुदात्तादिति स्वरितस्य सिद्धत्वं भवति । तेन मेशब्दात् स्वरितात्परेषां गङ्गेप्रभृतीनामामन्त्रितत्वादनुदात्तानामेकश्रुतिर्भवति ॥ क तर्हीति । आश्रयात्सिद्धत्वं स्वरितस्य भविष्यतीत्यभिप्रायः ॥ कार्यमिति । अत्र तित्स्वरितमिति स्वरितत्वम्, तच्च सिद्धमित्यत्रैव स्यात् ॥

(उद्द्योतः) आकारप्रश्लेष इति । तदभावेऽर्धह्रस्वोदात्तादिति पञ्चम्यनन्विता स्यादिति भावः ॥ आङ्द्वयमारम्भाभिविध्योरिति तत्फलितमाह—इयं नवेति ॥ तेन मेशब्दादिति । फिट्स्वरेणेदमोन्तोदात्तत्वादिममित्येकादेशस्वरेणान्तोदात्तं ततो मेशब्दस्यानुदात्तं सर्वमपादादावित्यनुदात्तत्वे इममित्युदात्तात्परत्वेनोदात्तादनुदात्तस्येति स्वरितत्वं ततो गङ्गेप्रभृतीनामामन्त्रितस्येत्याष्टमिकेन निहतानामेकश्रुतिः ॥ अत्र तिदिति । तदेकादेशोप्यान्तरतम्यात् स्वरितः । करोतेर्ण्यति कार्यम् । तदुत्तरं देवदत्तयज्ञदत्ताविल्यामन्त्रितस्य चेति निहतम् ॥

( ६३२ प्रयोजनवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ स्वरितोदात्तार्थं च ॥ * ॥

(भाष्यम्) स्वरितोदात्तार्थं च तत्रैव कर्तव्यम् । "न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" इन्द्र आ गच्छ ॥ क तर्हि स्यात् ? ॥ यः सिद्धः स्वरितः—सुब्रह्मण्योमिन्द्रागच्छ ॥

(प्रदीपः) स्वरितोदात्तार्थमिति । स्वरितस्य य

---

१ उदात्तशब्देन एकदेशस्य बोधनादित्यर्थः । (र. ना.) २ तस्यादित इति सूत्रोपस्थितीत्यर्थः । (र. ना.) ३ तस्यादित इति सूत्रस्यैकादशाक्षरवादिति भावः । (र. ना.) ४ 'चैव' ॥ ५ स्वरितस्य विधीयमानादर्धह्रस्वोदात्ताद् आ, तस्यादित इति सूत्रमारभ्येत्यर्थः । उदात्तस्वरितपरस्य सन्नतराद् आ, उदात्तस्वरितपरस्येति सूत्रं मर्यादीकृत्येत्यर्थः । यत्सूत्रनवकं तत् उदात्तादनुदात्तस्य स्वरित इति सूत्रादूर्ध्वं कार्यम्—स्वरितात् संहितायामिति विधीयमानैकश्रुतिस्वरसिद्ध्यर्थमित्यर्थः । (र. ना.) ६ 'तीति भावः' ॥

उदात्तो विधीयते स आष्टमिकस्यासिद्धत्वान्न प्राप्नोति ॥ **सुब्रह्मण्योमिति** । सुब्रह्मणि साधुरिति यत्प्रत्ययस्तित्त्वात्स्वरितः । ततष्टावेकादेशः स्वरितानुदात्तयोरान्तरतम्यात्स्वरितः । ततः **ओमाङोश्चे**त्युदात्तस्वरितयोरेकादेशः स्वरित एव तस्य सिद्धत्वादुदात्तत्वम् ॥ सुब्रह्मण्यायामिति च स्वरूपमेव गृह्यते न तु निगदो लक्ष्यते ॥

( उद्द्योतः ) भाष्ये **इन्द्र आगच्छेति** । आङुदात्तः गच्छेति निहतम् । तत उदात्तादनुदात्तस्येति गकाराकारः स्वरितः । तस्यानेनोदात्तः । इन्द्रेत्यामन्त्रितमाद्युदात्तं द्वितीयो वर्ण उदात्तादिति स्वरितः, तस्याप्यनेनोदात्तः ॥ **स्वरित एवे**ति । एकादेश उदात्तेनेत्यत्रानुदात्तस्येत्यनुवृत्तेः स नेति भावः । न **चैको गुणे**ति सूत्रे एङि पररूपमित्यत्र रूपग्रहणस्य परस्य यादृशं रूपं तादृश एव यथा स्यादिति फलमुक्तमिति, अत्र ओम उदात्तत्वादुदात्त एकादेशो युक्त इति वाच्यम् । तृज्वत्क्रोष्टुरिति सूत्रभाष्यप्रामाण्येन स्वरस्य रूपत्वाभावात् ॥ ननु सुब्रह्मण्यायामिति निगदामिधानादयमेव विषयो न युक्त इत्यत आह—**सुब्रह्मण्यायामिति** । **स्वरितस्य तूदात्त** इति वाक्ये सुब्रह्मण्याशब्दस्वरूपमेव गृह्यते इत्यर्थः ॥

( ६३३ प्रयोजनवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ स्वरितोदात्ताचास्वरितार्थम् ॥ * ॥

( भाष्यम् ) **स्वरितोदात्ताचास्वरितार्थं तत्रैव**[२] **कर्तव्यम् । इन्द्रागच्छ हरिव आगच्छ ॥**

( प्रदीपः ) **स्वरितोदात्ताच्चेति** । आगच्छेत्यत्र गशब्दाकारस्य स्वरितस्योदात्तत्वे कृते **उदात्तादनुदात्तस्य स्वरित** इति छशब्दाकारस्य स्वरितत्वं प्राप्नोति ॥

( उद्द्योतः ) **उदात्तत्वे कृते इति** । न **सुब्रह्मण्यायामि**त्यनेन । उत्कर्षे त्वस्यासिद्धत्वाच्छशब्दाकारोनुदात्त एवेत्यर्थः ॥

( ६३४ प्रयोजनवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ स्वरितपरसन्नतरार्थं च ॥ * ॥

( भाष्यम् ) **स्वरितपरसन्नतरार्थं**[३] **च तत्रैव कर्तव्यम् । "उदात्तस्वरितपरस्य सन्नतरः" माणवकजटिलकाध्यापकन्यङ् ॥ क्व तर्हि स्यात् ? ॥ यः सिद्धः स्वरितः 'माणवक जटिलकाभिरूपक क्व'** ।

( प्रदीपः ) **न्यङ्ङिति** । **न्यधीचेति** । पूर्वपदप्रकृतिस्वरस्तत **उदात्तस्वरितयोर्यण** इत्यकारः स्वरितस्तस्यासिद्धत्वात् पूर्वस्य सन्नतरो न स्यात् ॥

( उद्द्योतः ) **न्यधी चेति** । अञ्चतौ वप्रत्ययान्त उत्तरपदे नि अधि इत्येतत्पूर्वपदं प्रकृतिस्वरमिति सूत्रार्थः । **न्यङ्स्वरौ स्वरिता**विति फिट्सूत्रमेतदर्थस्यैवानुवादकमिति भावः ॥ **क्वेति** । अत्प्रत्ययान्तत्वात्स्वरितम् ॥

( तटस्थाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् ।**

( ६३५ पाठव्यत्ययप्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ देवब्रह्मणोरनुदात्तवचनं ज्ञापकं स्वरितादिति सिद्धत्वस्य ॥ * ॥

( भाष्यम् ) **देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति ॥**

( प्रदीपः ) **देवब्रह्मणोरिति** । लिङ्गात्पाठक्रमबाधेन क्रमान्तरमाश्रीयतेऽन्यथा स्वरितस्यासिद्धत्वादनुदात्तस्यानुदात्तविधानमनर्थकं स्यात् ॥

( उद्द्योतः ) **देवब्रह्मणोरिति** । अनयोः सुब्रह्मण्यानिगदान्तर्गतयोः स्वरितस्योदात्तत्वे प्राप्तेऽनेनानुदात्तत्वं क्रियते ॥ **देवा ब्रह्माण इति** । चामन्त्रिताद्युदात्तः, ततः शेषनिघाते **उदात्तादनुदात्तस्ये**ति स्वरितः ॥

( ज्ञापनबाधकभाष्यम् )

**यद्येतज्ज्ञाप्यते, स्वरितोदात्तात्परस्यानुदात्तस्य स्वरितत्वं प्राप्नोति ॥**

( प्रदीपः ) **यद्येतदिति** । स्वरितस्यैव सिद्धत्वमनेन लिङ्गेन ज्ञाप्यत इत्यर्थः ॥

( उद्द्योतः ) **स्वरितस्यैवेति** । स्वरितस्यैव सिद्धत्वमात्रज्ञापने त्वस्य प्रकरणस्यासिद्धत्वे मानाभावात् ॥

( ज्ञापनान्तरभाष्यम् )

**न ब्रूमो देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति ॥ किं तर्हि ? । परमेतत्सूत्रकाण्डमिति ॥ तस्यादित उदात्तमर्धह्रस्वम् ॥ ३२ ॥**

( प्रदीपः ) **न ब्रूम इति** । सन्निवेशान्तरज्ञापनार्थं लिङ्गं व्याख्यायत इत्यर्थः ॥ ३२ ॥

( उद्द्योतः ) **न सुब्रह्मण्ये**ति विहितस्वरितोदात्तगकारात्परत्वेनेन्द्र आगच्छेत्यादौ छकाराकारस्याष्टमिकः[५] स्वरितः स्यादित्युत्कर्ष एव ज्ञाप्यत इति बोध्यम् ॥ असिद्धकाण्डे पठनमेव **संनिवेशान्तरम्** । न च **देवब्रह्मणो**रित्यत्राश्रयात् सिद्धत्वमिति वाच्यम् । इष्टानुरोधेनैतत्प्रकरणोत्कर्षद्वारैव तत्सिद्धत्वज्ञापनादिति दिक् ॥ ३२ ॥

( इति स्वरिते उदात्तानुदात्तभानस्थितिनिर्णयः )

---

## ( अथ स्वरविधिप्रकरणम् ॥ )

( ८९ एकश्रुतिविधानसूत्रम् ॥ १ । २ । १ आ. २१ सू० )

## १०७ एकश्रुति दूरात्संबुद्धौ ॥१।२।३३॥

( आक्षेपभाष्यम् )

**किमिदं पारिभाषिकयाः संबुद्धेर्ग्रहणम् "एकवचनं संबुद्धिः" इति । आहोस्विदन्वर्थग्रहणं संबोधनं**

---

१ इन्द्र आगच्छेत्यादौ उदात्तादनुदात्तस्येत्यादिविहितस्वरितस्यासिद्धत्वादिति भावः । (र.ना) २ उदात्तादनुदात्तस्येत्यत ऊर्ध्वमित्यर्थः एवमग्रेऽपि । (र.ना.)

३ 'परस्य सन्न' । ४ प्राप्त इति शेषः । ( र. ना. ) ५ उदात्तादनुदात्तस्येति विहितः । ( र. ना. )

संबुद्धिरिति ? ॥ किं चातः ? । यदि पारिभाषिक्याः संबुद्धेर्ग्रहणं देवा ब्रह्माणः, अत्र न प्राप्नोति । अथान्वर्थग्रहणं, न दोषो भवति ॥

(प्रदीपः) एक ॥३३॥ किमिति । कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्यय इत्युभयगतिरिह शास्त्रे भवतीति च न्यायद्वयसम्भवात्प्रश्नः ॥

(उद्द्योतः) एकश्रुति ॥ ३३ ॥ एकवचनं सम्बुद्धिरित्युक्तेर्विचारानुपपत्तिरत आह—कृत्रिमेति ॥

( समाधानभाष्यम् )

यथा न दोषस्तथास्तु ॥

( प्रदीपः ) यथा न दोष इति । नहि दूरादिति विशेषणमेकवचनस्योपपद्यते । सम्बोधनस्य तु क्रियारूपत्वादपादानतया दूरादिति विशेषणसम्भवः । व्याप्तिश्चान्वर्थग्रहणे भवति[1] ॥

(उद्द्योतः) अकृत्रिमग्रहणं सामर्थ्याद्भवतीत्यतः सामर्थ्यं दर्शयति—नहीति ॥ ननु कृत्रिमग्रहणेपि महासंज्ञाबलाद् दूरात्संबोधनार्थैकवचनात्मस्येत्यर्थलाभोत आह—व्याप्तिश्चेति ॥

( एकश्रुतिस्वरूपवर्णनभाष्यम् )

( आक्षेपभाष्यम् )

किं पुनरियमेकश्रुतिरुदात्ता, आहोस्विदनुदात्ता ?[2] ॥

( प्रदीपः ) किं पुनरिति । उदात्तानुदात्तानुरागवशात्प्रश्नः ॥

(उद्द्योतः) अस्याः स्वरान्तरत्वप्रसिद्धेः प्रश्नानुपपत्तिरत आह—उदात्तेति ॥

( समाधानभाष्यम् )

नोदात्ता ॥ कथं ज्ञायते ? ॥ यदयम् "उच्चैस्तरां वा वषट्कारः" इत्याह ॥ कथं कृत्वा ज्ञापकम् ? ॥ अतन्त्रं तरनिर्देशः । यावदुच्चैस्तावदुच्चैस्तराम् ॥

( प्रदीपः ) यावदुच्चैरिति । यदि चोदात्तैकश्रुतिरभविष्यत्तदा यज्ञकर्मणीत्येकश्रुतेः सिद्धत्वादुच्चैस्तरां वा वषट्कार इति सूत्रं नाकरिष्यदित्यर्थः ॥

(उद्द्योतः) उच्चैस्तरामिति । तेनोदात्तमात्रस्य विधानात्पक्षे एकश्रुतेश्च विधानादिति भावः ॥

( आक्षेपभाष्यम् )

यदि तर्हि नोदात्ता अनुदात्ता ॥

( समाधानभाष्यम् )

अनुदात्ता च न ॥ कथं ज्ञायते ? ॥ यदयम् "उदात्तस्वरितपरस्य सन्नतरः" इत्याह ॥ कथं कृत्वा ज्ञापकम् ? ॥ अतन्त्रं तरनिर्देशः ॥ यावत्सन्नस्तावत्सन्नतरः ॥ सैषा ज्ञापकाभ्यामुदात्तानुदात्तयोर्मध्यमेकश्रुतिरन्तरालं ह्रियते ॥

(प्रदीपः) यावत्सन्न इति । तत्रैकश्रुत्यनुवृत्त्यैव सिद्धत्वात्सन्नतरविधानमनर्थकं स्यात् ॥ अन्तरालं ह्रियत इति । हरतेर्द्विकर्मकत्वात्प्रधाने कर्मणि लकारः ॥ क्षीरोदकवदुदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुतिरित्यर्थः । स्वरिते तु विभागेन तयोरुपलब्धिः ॥

( उद्द्योतः ) भाष्ये सैषा ज्ञापकाभ्यामिति । ज्ञापकाभ्यां कर्तृभ्याम्, एकश्रुतिरुदात्तानुदात्तयोर्मध्यस्थानं प्राप्यत इत्यर्थः । मध्यमित्यस्यान्तरालमिति व्याख्या ॥ हरतेरिति । व्यापारद्वयार्थत्वात् प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्, इति वचनाच्च ॥ स्वरिताद्विशेषं दर्शयितुमाह—क्षीरेति ॥

( व्याख्यान्तरभाष्यम् )

अपर आह—

( आक्षेपभाष्यम् )

किमियमेकश्रुतिरुदात्ता, आहोस्विदनुदात्ता ? ॥

( समाधानभाष्यम् )

उदात्ता ॥ कथं ज्ञायते ? ॥ यदयम् "उच्चैस्तरां वा वषट्कार" इत्याह ॥ कथं कृत्वा ज्ञापकम् ? ॥ तन्त्रं तरनिर्देशः । उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति ।

(प्रदीपः) उच्चैर्दृष्ट्वेति । सोमस्याग्ने वीही वौषट् इत्यत्र मन्त्रे यज्ञकर्मणीत्यनेनैकश्रुतिर्विहिता तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते । सति चैकश्रुतेरुदात्तानुरागे[3] तदपेक्षः प्रकर्षो युज्यते । यथा मलिने वस्त्रे शौक्ल्यानुबन्धसद्भावात्तदेपक्षी वस्त्रान्तरेषु शुक्लतरव्यपदेश इत्यर्थः ॥

( उद्द्योतः ) सति चेति । वौषट्व्यतिरिक्तमन्त्रभागस्योदात्तत्वे सत्येव तदपेक्षप्रकर्षप्रत्ययोपपत्तिरिति भावः ॥ एकश्रुतिगतोदात्तापेक्षया प्रकर्षानुपपत्तिमाशङ्क्य दृष्टान्तेन साधयति—यथेति । अत्रापि पक्षे भेदतिरोधानमेव स्वरिताद्विशेषस्तेनैव[4] चोभयरूपतेति बोध्यम् । एवं च सन्नतर एकश्रुतिविषये एवेति बोध्यम् ॥ सप्तस्वरमध्ये उदात्ततरानुदात्ततरावेकश्रुतिगतोदात्तापेक्षयैवातिशयविशिष्टौ न तु स्वतन्त्रोदात्तापेक्षया ॥

( आक्षेपभाष्यम् )

यदि तर्ह्युदात्ता नानुदात्ता ॥

( समाधानभाष्यम् )

अनुदात्ता च ॥ कथं ज्ञायते ? ॥ यदयम् "उदात्तस्वरितपरस्य सन्नतरः" इत्याह ॥ कथं कृत्वा ज्ञापकम् ? ॥ तन्त्रं तरनिर्देशः । सन्नं दृष्ट्वा सन्नतर इत्येतद्भवति ॥ त एते तन्त्रे, तरनिर्देशे सप्त स्वरा भवन्ति—उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्ततरः, स्वरितः, स्वरिते य उदात्तः सोन्येन विशिष्टः, एकश्रुतिः सप्तमः ॥ एकश्रुतिदूरात्संबुद्धौ ॥ ३३ ॥

( प्रदीपः ) सन्नं दृष्ट्वेति । एकश्रुतिगतमित्यर्थः ॥ सोन्येनेति । अनुदात्तेनोपरक्तः, यथा शुक्लः पटो वर्णान्तरयुक्तेन द्रव्येणेत्यर्थः ॥ कस्य चित्तु स्वरितस्योदात्तभागो नानुदात्ते-

---

१ अत्र व्याप्तिरुभयार्थपरिग्रहरूपा बोध्या । ( र. ना. ) २ एकश्रुतिरुदात्तरूपताऽनुदात्तरूपता वाऽस्त्विति यः प्रष्टुरभिलाषः तद्वशादित्यर्थः । यद्वा एकश्रुतौ उदात्तानुदात्तयोर्योऽनुरागः संबन्धप्रतीति स्तद्वशादित्यर्थः । ( र. ना. )

३ उदात्तसंबन्धभाने इत्यर्थः । ( र. ना. ) ४ भेदतिरोधानेनैव एकश्रुतेरुभयरूपतेत्यर्थः । ( र. ना. ) ५ उदात्तस्वरितपरत्वाभाववत इत्यर्थः । ( र. ना. )

नानुरज्यते इति पृथक्खरितो निर्दिष्टः। खरितस्य भेदा जात्यखरादयो ऽष्टाविति भाष्यकारेणाप्रकृतत्वादिह नोक्ताः। इयं चैकश्रुतिराह्वैतात्संबोधनवाक्यस्य भवति। प्लुतस्तूदात्त एव विधानसामर्थ्यात् ॥ ३३ ॥

(उद्द्योतः) अनुदात्तेनेति। उदात्तस्वरितपरत्वे इत्यर्थः॥ कस्य चिदिति। तदपरस्येत्यर्थः॥ प्लुतस्त्विवति। तस्य वैकल्पिकत्वाद्यदा स जायते तदेत्यर्थः॥ ३३ ॥

(९० एकश्रुतिनिषेधसूत्रम् ॥ १। २। १ आ० २२ सू० ॥)

## १११ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ १ । २ । ३७ ॥

(६३६ सूत्रशेषवार्तिकम् ॥ १ ॥)

### ॥*॥ सुब्रह्मण्यायामोकार उदात्तः ॥*॥

(भाष्यम्) सुब्रह्मण्यायामोकार उदात्तो भवति॥ 'सुब्रह्मण्योम्'।

(प्रदीपः) न सु॥३७॥ओकार इति। नेदमपूर्वविधानं सूत्रव्यापार एव तु प्रदर्श्यते। यथा चोदात्त ओकारस्तथा तस्यादित इत्यत्रोक्तम्। ओमभ्यादान इति तु प्लुतोदात्तत्वं न भवति। तस्यायज्ञकर्मविषयत्वादित्याहुः॥ इन्द्र आगच्छेतीन्द्रशब्द आमन्त्रितत्वाद्युदात्तः तस्य द्वितीयो वर्णो वर्ज्यमानैस्वरेणानुदात्तः। स उदात्तादनुदात्तस्य स्वरित इति स्वरितस्तस्यानेनोदात्तत्वम्॥

(उद्द्योतः) न सुब्रह्मण्या ॥ ३७ ॥ न चात्रोदात्तोन्यथा सिद्ध इत्याह—ओमिति। अभ्यादानपदेनायज्ञकर्मोच्यत इति भावः॥ अत एव जपेऽपि तं प्लुतमेव जपन्ति॥ अभ्यादानं प्रारम्भ इति तु वृत्तिः। तद्रीत्या त्वत्र प्राप्तिरेव नेति बोध्यम्॥ स्वरितस्य तूदात्त इत्यंशस्योदाहरणान्तरं प्रसङ्गादाह—इन्द्र आगच्छेति॥ इन्द्रशब्द इति। हरिवच्छब्दस्याप्युपलक्षणम्। हरिव इति मतुवसोरिति रुः॥

(६३७ सूत्रशेषवार्तिकम् ॥ २ ॥)

### ॥*॥ आकार आख्याते परादिश्च ॥*॥

(भाष्यम्) आकार आख्याते परादिश्चोदात्तो भवति॥ 'इन्द्र आगच्छ' 'हरिव आगच्छ'॥

(प्रदीपः) आकार आख्यात इति। तिङन्ते गच्छशब्दे परत आकार उपसर्गत्वादुदात्तः। परादिश्चेति। आकारात्परस्य गच्छेत्यस्यादिरुदात्तः। तिङ्ङतिङ इति निघाते पूर्ववत्स्वरिते च कृतेऽनेनोदात्तविधानात्॥

(६३८ सूत्रशेषवार्तिकम् ॥ ३ ॥)

### ॥*॥ वाक्यादौ च द्वे ॥*॥

(भाष्यम्) वाक्यादौ च द्वे उदात्ते भवतः। इन्द्र आगच्छ हरिव आगच्छ।

(प्रदीपः) वाक्यादौ चेति। अनन्तरोक्तप्रक्रिययेति भावः।

(उद्द्योतः) अनन्तरेति 'इन्द्र आगच्छेतीन्द्रशब्द' इत्याद्यनुपदोक्तयेति भावः। एतन्निमित्तः शेषनिघातस्तु न। अस्यासिद्धत्वात्॥ भाष्ये द्वे इति। वर्णरूपे इत्यर्थः॥

(६३९ सूत्रशेषवार्तिकम् ॥ ४ ॥)

### ॥*॥ मघवन्वर्जम् ॥*॥

(भाष्यम्) आगच्छ मघवन्।

(प्रदीपः) मघवन्वर्जमिति। मघवन्नित्यस्यामन्त्रितस्येति निघातविधानात्॥

(उद्द्योतः) श्वः सुत्यामागच्छ मघवन्निति वाक्यम्, तत्र श्वः शब्दो निपातत्वादुदात्तः, सुत्याशब्दः संज्ञायां समजेतिक्यबन्तो-

---

१ जात्यस्वरेति। तथा च शुक्लयजुःप्रातिशाख्यसूत्राणि साभियुक्तकारिकाणि मस्तूयन्ते—

(प्रा. सू.) एकपदे नीचपूर्वः सवयो जात्यः॥ १ अ. १११ सू.

'एकपदे नीचपूर्वः सवयो जात्य इष्यते।
अपूर्वोपि परस्तद्वद्धान्यं कन्या स्वरित्यपि॥'

'कन्या इव' 'धान्यमसि'। अनुदात्तात्पूर्वो यथा—स्वर्द्देवेषु

(प्रा. सू.) एदोद्भ्यामकारो लुगभिनिहितः॥ १ अ. ११४ सू.

'ए ओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः।
अकारो लुप्यते यत्र तं चाभिनिहितं विदुः॥"

इति॥ यथा तेऽप्सरसाम् वेदोऽसि॥

(प्रा. सू.) युवर्णौ यवौ क्षप्रैः॥ १ अ. ११५ सू.॥

इ उ वर्णौ यदोदात्तावापद्येते यवौ क्वचित्।
अनुदात्ते पदे नित्यं विद्यात्क्षैप्रस्य लक्षणम्॥

यथा—नु=इन्द्र=न्विन्द्र॥ वाजी=अर्वन्=वज्यर्वन्।

(प्रा. सू.) इवर्णा उभयतो ह्रस्व प्रश्लिष्टः॥ १ अ. ११६ सू.॥

इकारो दृश्यते यत्र इकारेण च संयुतः।
उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः॥"

यथा अभीन्धताम्॥

(प्रा. सू.) स्वरो व्यञ्जनयुतस्तैरो व्यञ्जनः॥ अ. ११७ सू.

उदात्तपूर्वं यत् किंचिद्व्यञ्जनेन युतं पदम्।
एष सर्वगुरुः स्वारस्तैरो व्यञ्जन इष्यते॥ यथा इडेदन्ते॥

(प्रा. सू.) उदवग्रहस्तैरोविरामः॥ अ. ११८ सू.

अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरम्।
तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः॥"

यथा गोपताविति गोऽपतौ॥ यज्ञपतिमिति यज्ञऽपतिम्॥

(प्रा. सू.) विवृत्तिलक्षणः पादवृत्तः॥ अ. ११९ सू.

स्वरे च स्वरिते चैव विवृत्तिर्यत्र दृश्यते।
पादवृत्तो भवेत्स्वारो विनऽइन्द्रेति दर्शनम्॥

(प्रा. सू.) उदाद्यन्तोऽन्यवग्रहस्तथाभाव्यः॥ अ. १२० सू.

अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित्।
तथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम्॥

२ प्लुतं मर्यादीकृत्येत्यर्थः। (र. ना.)

३ अनुदात्तं पदमेकवर्जमिति शेषनिघातविधिनेत्यर्थः। (र. ना.)

४ हरि व इत्यामन्त्रिताद्युदात्तः, ततः शेषनिघाते इकारस्योदात्तादिति स्वरितेऽनेनोदात्त इति वाक्यादौ वर्णद्वयमुदात्तम्। (र. ना.)

ऽन्तोदात्तः, तत्रोदात्त इत्यनुवर्तते ॥ निघातविधानादिति । पूर्वंच्छ-कारस्याप्यनुदात्तत्वेन स्वरिताप्राप्त्या स्वरितस्य तूदात्त इत्यस्या-प्राप्तेरिति भावः । तत एकश्रुति दूरादित्येकश्रुतिस्तत्रेति तत्त्वम् ॥

( ६४० शेषवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ सुत्यापराणामन्तः ॥ * ॥**

**( भाष्यम् ) सुत्यापराणामन्त उदात्तो भवति । 'द्व्यहे सुत्याम्' 'त्र्यहे सुत्याम्' ॥**

( प्रदीपः ) सुत्यापराणामिति । सुत्याशब्दः परो येभ्यस्तेषामित्यर्थः ॥ द्व्यह इति । टजन्तत्वादन्तोदात्तत्वम् ॥

( उद्द्योतः ) सुत्याशब्द इति । सर्वनामकार्याभावाद्बहुव्रीहित्वनिश्चयः । श्वःशब्दस्थाने द्व्यहे इत्याद्यूहः ॥

( ६४१ शेषवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ असावित्यन्तः ॥ * ॥**

**( भाष्यम् ) असावित्यन्त उदात्तो भवति । 'गार्ग्यो यजते' 'वात्स्यो यजते' ॥**

( प्रदीपः ) असावित्यन्त इति । इदं वाचनिकम् ॥ असाविति प्रथमान्तोपलक्षणम् ॥ गार्ग्य इति । ञित्वादाद्युदात्तत्वे प्राप्ते अन्तोदात्तत्वविधिः ॥

( उद्द्योतः ) इदमिति । अग्रिमाण्यप्येवम् ॥

( ६४२ शेषवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ अमुष्येत्यन्तः ॥ * ॥**

**( भाष्यम् ) अमुष्येत्यन्त उदात्तो भवति । 'दाक्षेः पिता यजते' ॥**

( प्रदीपः ) अमुष्येति । षष्ठ्यन्तोपलक्षणमेतत् ॥ दाक्षेरिति । पूर्ववदाद्युदात्तत्वं प्राप्तम् ॥ ३७ ॥

( ६४३ शेषवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ स्यान्तस्योपोत्तमं च ॥ * ॥**

**( भाष्यम् ) स्यान्तस्योपोत्तममुदात्तं भवति । अन्त्यश्च । 'गार्ग्यस्य पिता यजते' 'वात्स्यस्य पिता यजते' ॥**

( उद्द्योतः ) स्यान्तस्येति । चेन उपोत्तमान्त्योदात्तयोः समुच्चयः ॥ ३७ ॥

( ६४४ शेषवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ वा नामधेयस्य ॥ * ॥**

**( भाष्यम् ) वा नामधेयस्य स्यान्तस्योपोत्तममुदात्तं भवति । 'देवदत्तस्य पिता यजते' । 'देवदत्तस्य पिता यजते' ॥ न सुब्रह्मण्यायाम् ॥ ३७ ॥**

( ९१ एकश्रुतिबाधकानुदात्तविधिसूत्रम् ॥ १ । २ । १ आ. २३ सू० )

## ११२ देवब्रह्मणोरनुदात्तः ॥ १ । २ । ३८ ॥

( ६४५ सूत्रस्य पाक्षिकत्वसूचकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ देवब्रह्मणोरनुदात्तत्वमेके ॥ * ॥**

**( भाष्यम् ) देवब्रह्मणोरनुदात्तत्वमेक इच्छन्ति । देवा ब्रह्माणः, देवा ब्रह्माणः ॥ देवब्रह्मणोरनु० ॥ ३८ ॥**

( प्रदीपः ) देव ॥ ३८ ॥ अनुदात्तत्वमेक इति । ये 'देवा ब्रह्माणः' इति पदयोर्वैयधिकरण्यमाहुस्तदा हि पूर्वस्यामन्त्रितस्याविद्यमानत्वाद् द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते च स्वरितत्वे च कृतेऽनेनानुदात्तः क्रियते । यदा तु देवाः ब्रह्माण इत्यनयोः सामानाधिकरण्यं तदा **विभाषितं विशेषवचने बहुवचन**मिति पक्षे विद्यमानत्वाद**ामन्त्रित**स्येति निघातस्य सिद्धत्वान्नानेनार्थ इत्यन्येषां मतमिति मतभेदप्रदर्शनार्थमेक इत्युक्तम् ॥ ३८ ॥

( उद्द्योतः ) देवब्रह्मणो ॥ ३८ ॥ भाष्योक्तमेक इति व्याचष्टे—**ये इति** । ये आहुस्ते एके इत्यर्थः । **एके** इत्युक्तिर्न विभाषाग्रहणानुवृत्तिकृता किन्तु ब्रह्मन्नंशे सूत्रारम्भानैयत्यबोधिकेति भावः ॥ **तदा हि**—वैयधिकरण्ये हि ॥ **अविद्यमानत्वादिति । आमन्त्रितं पूर्वमि**त्यनेन ॥ **एके** इत्यनेन ध्वनितं मतान्तरं दर्शयितुमाह—**यदा त्विति** ॥ **नानेनार्थ इति** । ब्रह्माण इत्यत्रानुदात्तार्थेनेत्यर्थः । देवार्थं तु कार्यमेव ॥ भाष्ये त्वेवं योजना—देवब्रह्मणोर्मध्ये ब्रह्मन्शब्दस्यानेनानुदात्तत्वमेके वैयधिकरण्यवादिन इच्छन्ति । सामानाधिकरण्यपक्षे दे इत्येक एवोदात्तः । वैयधिकरण्यवादिनां तु दे इति ब्र इति च द्वयमुदात्तम् । इदमेव ध्वनयितुं द्विःपाठ उदाहरणस्येति बोध्यम् ॥ केचित्तु वेदार्थस्याव्यवस्थितत्वे मानाभावादिदं चिन्त्यम् । किंच पक्षे विद्यमानत्वेपि पक्षेऽविद्यमानत्वस्यापि सत्त्वेन ब्रेत्यस्योदात्तस्याग्रिमस्यानुदात्तस्य च श्रवणाय सूत्रमावश्यकमेव । भाष्यं तु विभाषानुवृत्तिफलकमेव । तथा च पक्षे आमन्त्रितस्वरेणाद्युदात्तस्य देवशब्दस्य ब्रह्मशब्दस्य चान्तोऽनेनानुदात्तः **स्वरितस्य तूदात्त** इत्यस्यायमपवादः । सुसु तत्रानुदात्त एव । पक्षान्तरे तु पूर्वसूत्रेणान्तेऽप्युदात्ते **एकश्रुति दूरादि**त्येकश्रुतिः । अत एवैकश्रुतीति सूत्रे सम्बुद्धिपदार्थनिरूपणावसरे देवा ब्रह्माण इत्यत्रैकश्रुतिरुक्ता भाष्ये ॥ इदं च सूत्रं वृत्तावेवं व्याख्यातं, सुब्रह्मण्यायां देवा ब्रह्माण इति पठ्यते, तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेन तस्यानुदात्तो विधीयत इति । एकश्रुतिसूत्रोदाहृतं देवा ब्रह्माण इति सुब्रह्मण्यानिगदस्यातिरिक्तमेवेत्यत्र न मानमित्याहुः ॥ ३८ ॥

---

१ उदात्तादनुदात्तस्येति मघवन्शब्दे मकाराकारस्येति शेषः । ( र. ना. ) २ मघवन्शब्दे इत्यर्थः । आगच्छेत्यत्र गकाराकारस्य स्वरितस्योदात्तत्वं तु स्वरितस्य तूदात्त इत्यनेन भवत्येवेति तत्त्वम् । ( र. ना. ) ३ तेनेदं वार्तिकं नापूर्वमिति भावः । ( र. ना. ) ४ 'स्ते । एके' इ०

( ९२ एकश्रुतिविधिसूत्रम् ॥ १ । २ । २ आ० २४ सू० )

## स्वरितात्संहितायामनुदात्तानाम्

## ॥ १ । २ । ३९ ॥

( द्व्येकयोरप्येकश्रुतिसाधनाधिकरणम् )

( ६४५ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ स्वरितात्संहितायामनुदात्ताना-मिति चेद् द्व्येकयोरैकश्रुत्यवचनम् ॥ * ॥**

( भाष्यम् ) स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यं वक्तव्यम् । आग्निवेश्यः पचतीति ॥ किं पुनः कारणं न सिध्यति? ॥ बहुवचननिर्देशात् ॥ बहुवचनेनायं निर्देशः क्रियते । तेन बहूनामेवैकश्रुत्यं स्याद् द्व्येकयोर्न स्यात् ॥

( प्रदीपः ) स्वरि ॥ ३९ ॥ द्व्येकयोरिति । पशुना यजेतेतिवत्संख्याया विवक्षितत्वात् ॥ अग्निवेश्य इति । यञन्तत्वादादिरुदात्तः । शेषनिघातः, ततो द्वितीयो वर्ण उदात्तादिति स्वरितः, तस्मात्परौ द्वावनुदात्तौ ॥ पचतीति । धातुरुदात्तः शप्तिपावनुदात्तौ । ततः शबकारः स्वरितः, ततः पर एकोऽनुदात्तः ॥ द्व्येकयोरित्यत्र द्विशब्देन द्वित्वमुच्यते, एकशब्देन चैकत्वम् । तेन द्वित्वे एकत्वे च सतीत्यर्थः ॥

( उद्द्योतः ) स्वरितात् ॥ ३९ ॥ सङ्ख्याया इति । अनुदात्तानामिति पदोपात्तव्यक्तिगताया इति शेषः । उपात्तस्याविवक्षाकारणाभावादिति भावः ॥ संख्येयप्रधानत्वे द्व्येकेषामिति स्यादत आह—द्वित्वमिति ॥ नन्वेवं संख्याया ऐकश्रुत्यविधानायोगात्षष्ठ्यनुपपन्नेत्यत आह—तेनेति । अनुदात्तद्वित्वादौ सति तदधिकरणभूतानामैकश्रुत्यं वक्तव्यमिति भाष्यार्थः ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः । नात्र बहुवचनेन निर्देशस्तन्त्रम् ॥

( प्रदीपः ) नात्रेति । तन्त्रशब्दोऽत्र प्रधानवाची, यथा ग्रहं संमार्ष्टीति संख्या न विवक्ष्यते तथेहापीत्यर्थः ॥

( उद्द्योतः ) तन्त्रशब्द इति । विवक्षितत्वलक्षणं प्राधान्यम् ॥ भाष्ये—नात्रेति । अनुवादस्थल इत्यर्थः । व्याप्तिन्यायश्चाविवक्षाहेतुरिति बोध्यम् ॥

( आक्षेपसाधकभाष्यम् )

कथं पुनस्तेनैव च नाम निर्देशः क्रियते, तच्चातन्त्रं स्यात्[1] ? । तत्कारी च भवांस्तद्द्वेषी च ॥

( प्रदीपः ) तत्कारीति । असत्यां बहुत्वसंख्यायां बहुवचनमेव न स्यादिति तद्विवक्षणीयम् । नात्र निर्देशस्तन्त्रमिति वचनात्तदेवाविवक्षितमिति विरोध इत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

नान्तरीयकत्वादत्र बहुवचनेन निर्देशः क्रियते—अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्य इति । तद्यथा । कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान् सकण्टकान् सशकलानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वाद् बहुवचननिर्देशः क्रियते । अविशेषेणैकश्रुत्यं भवति ॥

( प्रदीपः ) नान्तरीयकत्वादिति । शब्दसंस्कारार्थमेवात्र बहुत्वं विवक्ष्यते न तु कार्यसिद्ध्यर्थमित्यर्थः ॥ तुषपलालानीति । तुषसहितानि पलालानीति तत्पुरुषः । द्वन्द्वे तु जातिवाचित्वादेकवद्भावप्रसङ्गः । एवं शकलकण्टकानीति ।

( उद्द्योतः ) विनार्थकान्तराशब्दाद् भवार्थे छो गहादित्वात्, स्वार्थे कः, नञ्समासो नलोपाभावश्च पृषोदरादित्वान्नान्तरीयकशब्दे ॥ ननु बहुत्वसंख्याविवक्षापूर्वकत्वाद्बहुवचनस्य नान्तरीयकत्वमयुक्तमत आह—शब्देति । शब्दकृतः संस्कारः, तदुच्चारणकृतमदृष्टं तदर्थमित्यर्थः । सौत्रं बहुवचनमिति तात्पर्यम् ॥ न तु कार्येति । शब्दानां कार्यमर्थोपस्थितिः सा प्रकृते न विवक्षितेत्यर्थः ॥ सशल्कानिति पाठः ॥

( ६४६ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अविशेषेणैकश्रुत्यमिति चेद् व्यवहितानामप्रसिद्धिः ॥ * ॥**

( भाष्यम् ) अविशेषेणैकश्रुत्यमिति चेद् व्यवहितानामैकश्रुत्यं न प्राप्नोति—'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि' ॥

( प्रदीपः ) व्यवहितानामिति । स्वरितादिति पञ्चमीनिर्देशादनन्तरस्यैव कार्येण भाव्यमिति—इमं मे गङ्गे इत्यत्र मेशब्दात्स्वरितात्परस्यैवानन्तरस्य स्याद्, न द्वितीयादीनां व्यवधानादित्यर्थः ॥

( उद्द्योतः ) व्यवधानादित्यर्थ इति । बहुत्वविवक्षायां तु सामर्थ्यात्परिभाषाबाध इति भावः ॥

( ६४७ समाधानन्यासान्तरवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अनेकमपीति तु वचनात्सिद्धम् ॥ * ॥**

( भाष्यम् ) अनेकमप्येकमपि स्वरितात्परं संहितायामेकश्रुति भवतीति वक्तव्यम् ॥

( आक्षेपभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ॥

१ 'ति १ । बहुवचनेन निर्देशः' । २ 'नात्र निर्देशः' ।

( समाधानभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्—*स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यवचनम्* *अविशेषेणेति चेद् व्यवहितानामप्रसिद्धिः* इति ॥**

( दूषणनिराकरणभाष्यम् )

**नैष दोषः ॥ कथम् ? ॥ एकशेषनिर्देशोऽयम् । अनुदात्तस्य चानुदात्तयोश्चानुदात्तानां चानुदात्तानामिति ॥**

( प्रदीपः ) एकशेषनिर्देशोऽयमिति । योगारम्भपक्षे वर्गत्रयोपादानेनैकशेषः क्रियते । अनुदात्तयोरनुदात्तानामिति च कृते एकशेषे पुनरेकशेषः कर्तव्यः ॥ आकृतिपक्षाश्रयेण तु प्रत्याख्याते सूत्रे जात्याख्यायामिति बहुवचनं कृतम्, ततश्चैकद्विबहुषु स्वरितात्परस्या जातेरानन्तर्येणोपलम्भात्सर्वेषामैकश्रुत्यस्य सिद्धत्वाद्दोषाभावः ॥

( उद्द्योतः ) योगारम्भे इति । एकशेषसूत्रारम्भे इत्यर्थः ॥ एकशेषेपि त्रिप्रभृतिष्वेव स्याद् अत आह—वर्गत्रयेति । तात्पर्यवशाद्भिन्नसंख्याकलितेत्यर्थः ॥ जातेः । अनुदात्तत्वजातेः । व्यक्तिद्वारा परत्वं कार्यसंबन्धश्चेति बोध्यम् ॥ तत्राव्यवहितव्यक्तिद्वारैव सर्वगतजातेः परत्वं बोध्यम् ॥ इदं चिन्त्यमेकैकव्यक्तिव्यङ्ग्यत्वाज्जातेस्तद्व्यक्तिद्वारकं परत्वं तद्व्यक्तिव्यङ्ग्यायाः । किं चार्धधातुके इति सूत्रस्थभाष्याद्व्यक्तिद्वारकं परत्वादि जातेरयुक्तमिति निरूपितं हलन्ताच्चेति सूत्रे ॥ तस्मादेकशेषप्रत्याख्यानेपि भिन्नसंख्याकलितप्रातिपदिकार्थानां तन्त्रं भिन्नसंख्याकलितार्थकप्रातिपदिकानां वा ॥ जात्याख्यायामित्यस्यापि भाष्ये प्रत्याख्यातत्वेनेदमेव युक्तमिति परे ॥

( आक्षेपभाष्यम् )

**एवमपि षट्प्रभृतीनामेव प्राप्नोति । षट्प्रभृतिषु द्व्येकशेषः परिसमाप्यते ॥**

( प्रदीपः ) एवमपीति । सहविवक्षायामेकशेषविधानात्समुदितानां कार्यप्रसङ्गः ॥ प्रभृतिग्रहणेन चैकशेषवाक्येऽनुदात्तानामित्यनेनैव चतुरादयोप्यनुदात्ता गृह्यन्ते इति दर्शयति—

( उद्द्योतः ) ननु वर्गत्रयोपादानेनैकशेषकरणादेवमपीत्याद्यनुपपन्नमत आह—सहविवक्षायामिति । एकया क्रियया गुणेन वाऽनेकस्य युगपत्सम्बन्धप्रतिपादनेच्छा सहविवक्षेत्यर्थः ॥ षण्णामित्येव वक्तव्ये प्रभृतिग्रहणमधिकमत आह—प्रभृतीति ॥ एकशेषवाक्ये । एकशेषविग्रहवाक्ये ॥

( समाधानभाष्यम् )

**प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति द्व्येकयोरपि भविष्यति ॥ स्वरितात्संहितायामनुदात्तानाम् ॥३९॥**

( प्रदीपः ) प्रत्येकमिति । निर्देश एव सहविवक्षा । कार्यप्रवृत्तिस्तु प्रत्येकं, यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते देवदत्तादयः पृथगेव भुञ्जते ॥ ३९ ॥

( उद्द्योतः ) निर्देश एवेति । बोध एवेत्यर्थः ॥ यथेति । तत्रेव 'मातापित्रोः श्राद्धं कुर्यात्' इत्यत्रेव चात्रापि निर्देश एव सहविवक्षेत्यदोषः ॥ ३९ ॥

( इति स्वरविधिप्रकरणम् )

---

( ९३ अपृक्तसंज्ञासूत्रम् ॥ १ । २ । १ आ० २५ सूत्रम् )

## ११५ अपृक्त एकाल्प्रत्ययः ॥ १।२।४१ ॥

( हल्ग्रहणे लाघवाभावोपपादनाधिकरणम् )

( ६४९ हल्ग्रहणवादिन आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अपृक्तसंज्ञायां हल्ग्रहणं स्वादिलोपे हलोऽग्रहणार्थम् ॥ * ॥

( भाष्यम् ) **अपृक्तसंज्ञायां हल्ग्रहणं कर्तव्यम् । एकहल्प्रत्ययोऽपृक्तसंज्ञो भवतीति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ स्वादिलोपे हलोऽग्रहणार्थम् । एवं हि स्वादिलोपे हलो ग्रहणं न कर्तव्यं भवति "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति । अपृक्तस्येत्येव सिद्धम् ॥**

( प्रदीपः ) अपृक्त ॥ ४१ ॥ स्वादिलोप इति । बिभेदेति णलोऽपृक्तग्रहणेनैव निवृत्तिः सिध्यतीत्यर्थः ॥

( ६५० अल्ग्रहणवादिनः प्रयोजनवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अणिञोर्लुगर्थमल्ग्रहणम् ॥ * ॥

( भाष्यम् ) **अणिञोर्लुगर्थमल्ग्रहणं कर्तव्यम् ॥ किं प्रयोजनम् ? ॥ अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इति । अपृक्तस्येत्येव सिद्धम् ॥**

( प्रदीपः ) अणिञोरिति । पदद्वयोच्चारणमेव गौरवमिति भावः ॥

( उद्द्योतः ) अपृक्त ए ॥ ४१ ॥ अपृक्तग्रहणेऽक्षराधिक्यादाह—पदद्वयेति । अपृक्तमित्यखण्डमिति भावः ॥

( ६५१ अल्ग्रहणे दूषणवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गः ॥ * ॥

( भाष्यम् ) **अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गो भवति । इहापि प्राप्नोति—फाण्टाहृतेरपत्यं माणवकः फाण्टाहृत इति ।**

---

१ 'षेण चेत्' 'षेणैकश्रुत्यादिति चेत्' । २ 'श्रये तु' । ३ एकद्विबहुषु विद्यमानाया जातेः स्वरितात्परस्या आनन्तर्येणोपलम्भादिति संबन्धः । (र. ना.) ४ अनुदात्तानामित्येकशेषोऽनुदात्तस्य चानुदात्तयोश्चानुदात्तानांचेति विग्रहवाक्याङ्गीकारेण षट्सु परिसमाप्यते, अनुदात्तानामित्यनेन चतुर्णां विवक्षणे सप्तसु इत्यादि बोध्यम् । ( र. ना. ) ५ ततश्च षट्प्रभृतीनामेवैकश्रुतिगुणेनैकेन युगपत्संबन्धो नत्वेकद्वित्र्यादीनामिति स्यादिति भावः । ( र. ना.) ६ 'दत्ता' । ७ 'भोज्यन्ते' । ८ 'अपृक्तस्य' इति षष्ठीनिर्देशेन 'सूत्रे षष्ठ्यर्थे प्रथमा' इति सूच्यते । ९ संज्ञात्वादिति शेषः । ( र. ना. )

( अल्ग्रहणे दूषणबाधकभाष्यम् )

**णवचनसामर्थ्यान्न भविष्यति ॥**

( प्रदीपः ) **णवचनेति** । लुगपवादो णो विज्ञास्यते । अन्यथाऽण एव लुकि सिद्धे णविधानमनर्थकं स्यादित्यर्थः ॥

( उद्द्योतः ) युवापत्यसंप्रत्ययार्थत्वाद् णस्य कथं सामर्थ्यमत आह—लुगपेति ॥ अण एव । तस्यापत्यमिति सामान्यविहितस्य ॥

( ६५२ अल्ग्रहणे दूषणसाधकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ वचनप्रामाण्यादिति चेत् फङ्निवृत्त्यर्थं वचनम् ॥ * ॥

( भाष्यम् ) **वचनप्रामाण्यादिति चेत् फङ्निवृत्त्यर्थमेतत्स्यात् । फगतो मा भूदिति ॥**

( प्रदीपः ) **फङ्निवृत्त्यर्थमिति** । यञिञोश्चेति प्राप्तस्य फको बाधनार्थं णवचनं स्यात् तस्य च लुक्यादेवेत्यर्थः ।

( उद्द्योतः ) प्राप्तस्येति । अणपवादत्वेनेति शेषः ॥

( ६५३ अल्ग्रहणे समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ पैलादिषु वचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) **यद्येतावत्प्रयोजनं स्यात् पैलादिष्वेवास्य पाठं कुर्वीत । तत्र पाठादन्येषामपि फको निवृत्तिर्भवति । एवं सिद्धे सति यदयं णं शास्ति तज्ज्ञापयत्याचार्यो नास्य लुग्भवतीति ॥**

( अल्ग्रहणे लाघवाभावभाष्यम् )

**तान्येतानि त्रीणि ग्रहणानि भवन्ति—अपृक्तसंज्ञायां हल्ग्रहणं कर्तव्यम् । स्वादिलोपे हलो ग्रहणं न कर्तव्यम् । अणिञोर्लुकि ग्रहणं कर्तव्यम् ॥ अल्ग्रहणेपि वै क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति—अपृक्तसंज्ञायामल्ग्रहणं कर्तव्यम् । स्वादिलोपे हलो ग्रहणं कर्तव्यम् । अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति, अपृक्तग्रहणं कर्तव्यम् । तत्र नास्ति लाघवकृतो विशेषः ॥**

( उद्द्योतः ) तदेवं णस्य लुगभावं प्रसाध्य हल्ग्रहण इवाल्ग्रहणेपि त्रीण्येव पदानीति पक्षद्वयसाम्यमित्याह—भाष्ये—तानीति । अनेन पदसाम्ये मात्रावैषम्यमकिञ्चित्करमिति[1] सूचितम् ॥

( अल्ग्रहणे लाघवभाष्यम् )

**अयमस्ति विशेषः । अल्ग्रहणे क्रियमाणे एकग्रहणं न करिष्यते ।**

( आक्षेपभाष्यम् )

**कस्मान्न भवति दर्विर्जागृविः ? ॥**

( प्रदीपः ) **कस्मान्न भवतीति** । प्रत्ययस्य विशेषणमल्ग्रहणमिति तदन्तविधिसद्भाव इति मत्वा प्रश्नः ॥ इदं तु नाश्रितम**नुनासिकपरत्वा**दिति ॥

( उद्द्योतः ) ननु प्रत्ययेनालि विशेष्यमाणे तदन्तविध्यभावात्कथमत्र प्राप्तिरत आह—**प्रत्ययस्ये**ति । व्योम्निन्यायेनालेव[2] विशेषणमिति भावः ॥ ननु **वेरपृक्तस्ये**त्यत्रानुनासिकः परो यतस्तस्य वेर्लोप[3] इति वक्ष्यते कथं दर्वौ प्राप्तिः । अत एवास्येत इत्त्वं नेत्यत आह—**इदं त्विति** ॥

( समाधानभाष्यम् )

**अलेव यः प्रत्ययः ॥**

**किं वक्तव्यमेतत् ? ॥**

**नहि ॥**

**कथमनुच्यमानं गंस्यते ? ॥**

**अल्ग्रहणसामर्थ्यात् । यदि च योल् चान्यश्च तत्र स्यात्, अल्ग्रहणमनर्थकं स्यात् ॥**

( प्रदीपः ) **अल्ग्रहणसामर्थ्यादिति** । यद्यलन्तस्य स्यात्केवलस्य चाद्यन्तवद्भावात्तदाल्ग्रहणेन न किं चिद्व्यावर्तितं स्यात् ॥

( उद्द्योतः ) भाष्ये अल्चेति । केवलालात्मक इत्यर्थः । अन्यश्चेति । समुदायात्मक इत्यर्थः ॥

( हल्ग्रहणेपि लाघवभाष्यम् )

**हल्ग्रहणेपि वै क्रियमाणे एकग्रहणं न करिष्यते ॥**

( आक्षेपभाष्यम् )

**कस्मान्न भवति—दर्विः जागृविः ? ॥**

( प्रदीपः ) **दर्विरिति** ॥ ननु हलन्तत्वाभावादत्र प्राप्तिरेव नास्ति ॥ नैष दोषः । अयं[4] साम्प्रतिको विशब्द इति क्विबादिषु भूतपूर्वगतिर्न लभ्यते[5], तत्रापृक्तसंज्ञायां हल्ग्रहणेन हल्वान् गृह्येत । यथा **गुरोश्च हल** इत्यत्र गुरुमान् ॥

( उद्द्योतः ) अयं साम्प्रतिक इति । वेरपृक्तस्येति सूत्रे उद्देश्यतया प्रधानस्य विग्रहणस्य मुख्यार्थत्वलाभाय हलित्यत्र[7] सौत्रो मतुब्लोप इति भावः ॥

( समाधानभाष्यम् )

**हलेव यः प्रत्ययः ॥ किं वक्तव्यमेतत् ? ॥ नहि ॥ कथमनुच्यमानं गंस्यते ? ॥ हल्ग्रहणसामर्थ्यात् । यदि च यो हल् चान्यश्च तत्र स्यात्, हल्ग्रहणमनर्थकं स्यात् ॥**

( प्रदीपः ) **हलेवेति** । हलः प्राधान्यात्प्रत्ययस्य च विशेषणत्वादित्यर्थः । क्विबादिषु भूतपूर्वगत्याश्रयणाद्गौणी चेत्कल्पना । अत्र हल्शब्देन तद्वतो ग्रहणे किं न गौणी ॥ **हल्ग्रहणसामर्थ्यादिति** । क्विबादयोऽपि हल्वन्तो दर्विरित्यादौ विप्रत्ययोपीति किमनेन व्यवच्छिन्नं स्यादित्यर्थः ॥

---

१ 'अकिञ्चित्करम्' तस्योपेक्षणीयत्वमेवेति सूचयितुमेव "उरण्रपरः" इत्यस्य स्थाने "रन्तोणुः" इति 'पः प्रत्ययस्य' 'चुटू' इत्यनयोः स्थाने 'चुटूपाः प्रत्ययस्य' न कृतमिति बोध्यम् ॥ २ अलोविशेषणत्वाङ्गीकारेऽलन्तो यः प्रत्यय इत्यर्थेऽलन्तस्य व्यपदेशिवद्भावेनाल्रूपस्य च प्रत्ययस्य परिग्रह इति सकलपरिग्रहरूपव्याप्तिसिद्धिः । अन्यथा तु प्रत्ययरूपस्यैवाल इति हृदयम् । ( र. ना. ) । ३ वकारस्येत्यर्थः । ( र. ना. ) ४ 'अयमेव' ( र. ना. ) ५ सांप्रतिकाभावे हि सेति शेषः । अपृक्तसंज्ञायामित्यस्य तद्विधायके सूत्रे इत्यर्थः । ( र. ना. ) ६ एतदेकवाक्यतापन्नापृक्तसंज्ञाविधायकसूत्रघटके इति शेषः । ( र. ना. ) ७ गुणेत्वन्याय्यकल्पनेति न्यायादिति भावः । मतुब्लोपो वा मत्वर्थविशिष्टे स्वार्थे लक्षणा वैतदुभयमपि अन्याय्यमेवेति भावः । ( र. ना. ) ८ व्यपदेशिवद्भावेन स्वस्मिन् स्वघटितत्वातिदेशादिति भावः । ( र. ना. )

( उद्द्योतः ) हलः प्राधान्यादिति । संज्ञावाक्यार्थप्रतिपत्त्युत्तरमेव प्रदेशार्थप्रतिपत्तेरसंजातविरोधन्यायेन तत्रोक्तकल्पनानुचितेति भावः ॥ किं च शास्त्रस्याल्पविषयतापत्तिरित्यपि बोध्यम् ॥ किं न गौणीति । क्लिष्टेत्यर्थः ॥ किमनेनेति । वेरपृक्तस्येत्यस्य लक्ष्यानुसारात् सर्वत्र प्रवृत्त्यङ्गीकारे इत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**अस्त्यन्यद्धल्ग्रहणस्य प्रयोजनम् ॥ किम् ? । हलन्तस्य यथा स्यादजन्तस्य मा भूदिति ॥**

( प्रदीपः ) **हलन्तस्य यथा स्यादिति** । ततश्चासत्येकग्रहणे हन्यादित्यादौ तिलोपः स्यादिति कर्तव्यं हल्ग्रहणे क्रियमाणे एकग्रहणम् ॥

( उद्द्योतः ) तिलोपः स्यादिति । आगमविशिष्टस्य तित्वाद् हलन्तत्वेनापृक्तत्वाच्च यादित्यस्य लोपः स्यादित्यर्थः । अत्र पक्षे हल्ङ्याब्भ्य इति सूत्रे हल्ग्रहणं नास्त्येवेति भावः ॥

( परिभाषासाधनभाष्यम् )

**एवं तर्हि सिद्धे सति यदल्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापयत्याचार्यः—"अन्यत्र वर्णग्रहणे जातिग्रहणं भवति" इति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

***दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्*" इत्युक्तं तदुपपन्नं भवति ॥ अपृक्त एकाल्प्रत्ययः ४१**

( प्रदीपः ) अल्ग्रहणे तु क्रियमाणे न कर्तव्यं, कृतं तु ज्ञापनार्थं, तद्दर्शितं भाष्ये ॥ यद्यप्ययमर्थो **निपात एकाजनाङ्**ित्यत्रैकग्रहणेन ज्ञापितस्तथापि मन्दबुद्धीनामनुग्रहाय पुनरिह ज्ञापितः । अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे संज्ञाविधानं विस्पष्टार्थम् ॥ **वृद्धिरादैजि**त्यत्रास्य परिभाषात्वं व्यवस्थापितमिह कथं संज्ञात्वेन व्यवहारः । पारार्थ्यसामान्यात्परिभाषा संज्ञात्वेन[3] व्यवह्रियते इत्यदोषः ॥ ४१ ॥

( उद्द्योतः ) **अल्ग्रहणे त्विति** । तदुपादानसामर्थ्येन तदन्तविध्यभावादिति भावः ॥ **ज्ञापित इति** । एवं चात्र जातिग्रहणशङ्कावारणायैवैकग्रहणं चरितार्थमिति कथं ज्ञापकमिति भावः ॥ **पुनरिहेति** । युगपदेव विनिगमनाविरहात् प्रमाणद्वयप्रवृत्तिरिति भावः ॥ **वृद्धिरादैजिति** । अस्य तत्त्वं तत्रैवोक्तम् ॥ **व्यवस्थापितमिति** । मयेति शेषः ॥ ४१ ॥

---

( ९४ कर्मधारयसंज्ञासूत्रम् ॥ १ । २ । १ आ. २६ सू० )

## ११६ तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ १ । २ । ४२ ॥

( सामानाधिकरण्योपपादनाधिकरणम् )

( ६५४ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तत्पुरुषःसमानाधिकरणः कर्मधारय इति चेत्समासैकार्थत्वादप्रसिद्धिः ॥ * ॥

( भाष्यम् ) **तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासैकार्थत्वात् संज्ञाया अप्रसिद्धिः । एकोऽयमर्थस्तत्पुरुषो नाम । अनेकार्थाश्रयं च सामानाधिकरण्यम् ॥**

( प्रदीपः ) तत्पुरुषः ॥४२॥ **समासैकार्थत्वादिति** । भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्यानेकस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः **सामानाधिकरण्यमुच्यते** । नीलोत्पलादिश्च तत्पुरुष एक एवेति सामानाधिकरण्यमनुपपन्नम् । वर्तिपदानां तु सामानाधिकरण्यमुपपद्यते, तत्पुरुषत्वं तु तेषां नास्ति ॥

( उद्द्योतः ) तत्पुरुषः ॥ ४२ ॥ **समासैकार्थत्वादिति** वार्तिके समासस्यैकप्रवृत्तिनिमित्तत्वादित्यर्थः ॥ पर्यायव्यावृत्त्यर्थम्—**भिन्नेति** । भिन्नप्रवृत्तिनिमित्तप्रकारकभिन्नोपस्थितिजनकस्येत्यर्थः । वस्तुतः पर्यायाणामपि कोशे सामानाधिकरण्यस्येष्टताया **नामन्त्रिते समानाधिकरणे** इति सूत्रे भाष्ये ध्वनितत्वेनेदं चिन्त्यम् ॥ गौरश्व इत्यादौ तद्व्यावृत्तये—**एकस्मिन्नर्थे इति** ॥ भाष्ये—**एकोयमर्थस्तत्पुरुषो नामेति** । तत्पुरुषसंज्ञकनीलोत्पलादिशब्दार्थं एक, एकोपस्थितेरित्यर्थः ॥ यद्येकविशेष्यकप्रतीतिजनकत्वं सामानाधिकरण्यं तदा तत्पुरुषमात्रस्य कर्मधारयत्वापत्तिः समानाधिकरणपदवैयर्थ्यं चेति तात्पर्यम् ॥ **तत्पुरुषत्वमिति** । समासादिसंज्ञा समुदायनिवेशिनीति भावः ॥

( ६५५ न्यासान्तरसमाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तु पदसामानाधिकरण्यात् ॥ * ॥

**(भाष्यम्)सिद्धमेतत् ॥ कथम् ?॥ तत्पुरुषःसमानाधिकरणपदः कर्मधारयसंज्ञो भवतीति वक्तव्यम्॥**

( आक्षेपभाष्यम् )

**सिध्यति । सूत्रं तर्हि भिद्यते ॥**

( सिद्धान्तिभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासैकार्थत्वादप्रसिद्धिः*इति ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**नैष दोषः । अयं तत्पुरुषोस्त्येव प्राथमकल्पिको यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तित्वं च । अस्ति**

---

१ पदार्थोपस्थित्यादिघटितसामग्रीसमवधाने बाधकाभावात्स्वदेशे संज्ञाशास्त्रवाक्यार्थबोधोत्तरमेव गृहीतशक्तिस्मरणेन विधिवाक्यार्थबोधात् संजातविरोधासंजातविरोधयोः संजातविरोधे एवान्याय्यकल्पनेत्यर्थकेनासंजातविरोधन्यायेन पूर्वोक्तरीत्याऽसंजातविरोधे हल्पदे सौत्रमतुब्लोपकल्पना तादृशार्थे लक्षणाकल्पना वाऽनुचितेत्यर्थः । हलः प्राधान्यञ्चात्र विशेष्यत्वरूपं शाब्दं बोध्यम् । ( र. ना. ) २ हल्पदेन हल्वतोग्रहणेऽपृक्तसंज्ञाविधायकशास्त्रस्य हल्रूपे प्रत्ययेऽप्रवृत्तिरूपा व्याप्तिरित्यर्थः । इदं च व्यपदेशिवद्भावानाश्रयेणोक्तम् । ( र. ना. ) ३ अत एव संज्ञापि परिभाषात्वेन व्यवहृता "निपात एकाज" इति सूत्रे 'येन विधिस्तदन्तस्य' इत्यस्य परिभाषात्वं दर्शयता भाष्यकृता । ४ तत्पुरुषसमासघटकपदानामित्यर्थः । ( र. ना. ) ५ अत्र प्रवृत्तिनिमित्तपदेन शक्यतावच्छेदकलक्ष्यतावच्छेदकान्यतररूपो धर्मो बोध्यः । ( र. ना. ) ६ वस्तुतः कोशे वृक्षो महीरुह इत्यादौ महीरुहादिपदस्य तद्वाच्ये लक्षणया सामानाधिकरण्यस्य कैयटमतेऽपि संभवाच्चिन्त्यत्वोक्तिरेव चिन्त्या । ( र. ना. )

तादर्थ्यात्ताच्छब्द्यं, तत्पुरुषार्थानि पदानि तत्पुरुष इति । तद्यस्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् ॥

तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ ४२ ॥

( प्रदीपः ) **ऐकपद्यमिति** । पदशब्देनार्थ उच्यते । ऐकार्थ्यमित्यर्थः । अथ वा समासाद्विभक्त्युत्पत्तौ सत्यामैकपद्यमुच्यते ॥ **एकविभक्तित्वमिति** । एककारकत्वमित्यर्थः ॥ **तद्य इति** ॥ ननु मुख्यस्य तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं संभवत्येव राजपुरुषः शोभन इत्यादौ, तत्कथं गौणस्य ग्रहणम् ॥ नैष दोषः । तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं बहिरङ्गम्, अन्तरङ्गं तु वर्तिपदानामिति तदेवाश्रीयते । ततश्च सामर्थ्यात्तत्पुरुषशब्दो गौणार्थवृत्तिः परिगृह्यते । तेन समासावयवानामेव पदानां कर्मधारयसंज्ञा विधीयते, समुदाये च वाक्यपरिसमाप्त्या पदसमुदायस्यैकैव कर्मधारयसंज्ञा, न तु प्रत्येकम् ॥ तत्पुरुषसंज्ञाप्रकरणे इयं संज्ञा न कृता, एकसंज्ञाधिकारात् तत्पुरुषसंज्ञाया बाधो[1] मा भूदिति ॥ ४२ ॥

( उद्द्योतः ) ननु एकपदत्वैकविभक्तित्वयोः पौनरुक्त्यमित्यत आह—**पदशब्देनेति** । पदतदर्थयोरभेदोपचारादिति भावः । **अथ वेति** । अन्तर्वर्तिविभक्त्यपेक्षस्तूत्तरपदादिव्यवहार इति भावः ॥ नन्वेकविभक्तीति पुनरुक्तमत आह—**एककारकत्वमिति** । विभज्यतेऽनया प्रातिपदिकार्थ इति व्युत्पत्तेः ॥ **तद्य इत्यादि** भाष्ये ताच्छब्द्यमिति स्वार्थे ष्यञ् । तत् ततो हेतोर्मुख्यार्थे सामानाधिकरण्यासंभवाद्धेतोर्यस्तादर्थ्यात्तच्छब्दस्तस्येदं ग्रहणमित्यक्षरार्थः । यद्वा यस्तादर्थ्यात्ताच्छब्द्यं तच्छब्दवाच्यतां लभत इति शेषः ॥ **अन्तरङ्गं त्विति** । अर्थनिबन्धनसामानाधिकरण्याश्रयोन्तरङ्गन्यायस्तु[2] तत्पुरुषशब्दमात्राश्रयगौणमुख्यन्यायात्प्रबल इति भावः ॥ ननु तत्पुरुषार्थपदानां कर्मधारयसंज्ञालाभेपि समुदायस्य सा न स्याद्, इष्यते च तस्येत्यत आह—**समुदाये चेति** । समानाधिकरणपदमर्शआद्यजन्तं[3] तु नाश्रितं, तादृशानामपि गौणत्वात् ॥ **बाधो मा भूदिति** । तत्पुरुष इत्यनुवृत्तावपि पाक्षिको बाधो मा भूदित्यर्थः । समानाधिकरणः कर्मधारयश्चेति तु सुवचं, द्विगुश्चेति वत् ॥ ४२ ॥

---

( ९५ उपसर्जनसंज्ञासूत्रम् ॥ १ । २ । १ आ. २७ सू. )

## ११७ प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ १ । २ । ४३ ॥

( समासपदार्थनिरूपणाधिकरणम् )

( ६५६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समासे संज्ञाऽप्रसिद्धिः ॥ * ॥**

**( भाष्यम् ) प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समासे उपसर्जनसंज्ञाया अप्रसिद्धिः । नहि कष्टादीनां समासे प्रथमां पश्यामः ॥**

( प्रदीपः ) **प्रथमा ॥ ४३ ॥ अनिर्देशात्प्रथमाया इति** । समासे किं प्रथमानिर्दिष्टं भवितुमर्हति ? यस्मात्समासे प्रथमा विधीयते । न च तथाभूतस्य सम्भवः । समासे कृते तत एव प्रथमोत्पद्यते न तु तदवयवात् । अन्तर्वर्तिन्या च विभक्त्या प्रथमानिर्दिष्टत्वे आश्रीयमाणे कष्टश्रित इत्यत्र श्रितशब्दस्यैवोपसर्जनसंज्ञा स्यान्न कष्टशब्दस्य, निर्दिष्टग्रहणं चानर्थकं स्यात् । समासे प्रथमान्तमुपसर्जनमिति वक्तव्यं स्यात् ॥

( उद्द्योतः ) **प्रथमानि० ॥ ४३ ॥ समासे किमिति** । समासे इति सप्तमीनिर्देशात्समासे विद्यमानं प्रथमान्तमिति सूत्रार्थं मत्वा वार्तिकारम्भ इत्याशयः ॥ **तत एवेति** । समासादेवेत्यर्थः । तथा च समासः प्रथमानिर्दिष्टः स्याद् न तु समासे किञ्चिदिति सप्तम्यनुपपत्तिः स्यादिति भावः ॥ **अन्तर्वर्तिन्येति** । समासे विद्यमानाद् यतः प्रथमोच्चार्यत इत्यर्थ इति भावः ॥ **न कष्टशब्दस्येति** । तच्चानिष्टमिति भावः ॥ **प्रथमान्तमिति** । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादन्तपदोच्चारणम् ॥

( ६५७ न्यासान्तरसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु समासविधाने वचनात् ॥ * ॥**

**( भाष्यम् ) सिद्धमेतत् । कथम् ? । समासविधाने प्रथमानिर्दिष्टमुपसर्जनसंज्ञं भवतीति वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**तर्हि वक्तव्यम् ॥**

( ६५८ समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ न वा तादर्थ्यात्ताच्छब्द्यम् ॥ * ॥**

**( भाष्यम् ) न वा वक्तव्यम् ॥ किं कारणम् ? । तादर्थ्यात्ताच्छब्द्यं भविष्यति । समासार्थं शास्त्रं समास इति ॥**

(प्रदीपः) **न वेति** । मुख्यार्थासम्भवाद्गौणोर्थो गृह्यत इत्यर्थः ॥

(उद्द्योतः) **मुख्यार्थासंभवादिति** । निर्दिष्टग्रहणोपबृंहित[6]समासग्रहणस्य मुख्यार्थासंभवादित्यर्थः ॥

( अनिष्टापत्तिवारणाधिकरणम् )

( ५५९ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ यस्य विधौ[7] प्रथमानिर्देशस्ततोऽन्यत्रोपसर्जनसंज्ञाप्रसङ्गः ॥ * ॥**

**( भाष्यम् ) यस्य विधौ प्रथमानिर्देशः क्रियते**

---

१ 'बाधा' । २ अनुपदोक्तलक्षणस्य सामानाधिकरण्यस्यार्थघटितत्वेनार्थमूलकत्वं तदाश्रयोऽन्तरङ्गन्यायः शब्दार्थोभयाश्रितत्वात्प्रबलः, तत्पुरुषशब्दमात्राश्रयो गौणमुख्यन्यायस्तु एकाश्रयत्वाद् दुर्बल इत्यर्थः । ( र. ना. ) ३ 'अर्शआद्यजन्तमपि लाक्षणिकार्थपरमेव गोपीशब्दादिवदिति हृदयम् । ( र.ना. ) । ४ समासे कृते तदवयवात्प्रथमाया अनिर्देशादनुत्पत्तेः संज्ञाऽप्रसिद्धिः, उपसर्जनसंज्ञाया अप्रसिद्धिः । यद्वा समासे कष्टश्रित इत्यादौ विद्यमानात्कष्टादिपदादुत्तरं प्रथमाया अनिर्देशादनुच्चारणात्संज्ञाऽप्रसिद्धिः, कष्टादिपदस्योपसर्जनसंज्ञाया अप्रसिद्धिः । समासे कृते यत्प्रथमानिर्दिष्टं संपन्नं तदुपसर्जनमिति प्रथमानिर्दिष्टमिति सूत्रस्यार्थमभिप्रेत्याद्या वार्तिकयोजना । समासघटकं यत्प्रथमानिर्दिष्टं तदुपसर्जनमित्यर्थमभिप्रेत्य द्वितीया । ( र. ना. ) ५ 'समासे हि' । ६ उपबृंहितत्वं सहकृतत्वम् । ( र. ना. ) ७ । यस्य समासविधायके शास्त्रे प्रथमानिर्देशस्तस्मात्समासविधायकशास्त्रादन्यत्रोपसर्जनसंज्ञाप्रसङ्ग इति भावः । ( र. ना. )

ततोऽन्यत्रापि तस्योपसर्जनसंज्ञा प्राप्नोति । राज्ञः कुमारीं[1] राजकुमारीं श्रितः । श्रितादिसमासे द्वितीयान्तं प्रथमानिर्दिष्टं तस्य षष्ठीसमासेऽप्युपसर्जनसंज्ञा प्राप्नोति ॥

( प्रदीपः ) **यस्य विधाविति** । निर्देशापेक्षया समासस्याधारत्वात्प्रथमानिर्दिष्टस्य सर्वत्रोपसर्जनसंज्ञा प्राप्नोतीति भावः ॥ **राजकुमारीमिति** । सत्युपसर्जनत्वे ह्रस्वः स्यात् पूर्वनिपाताव्यवस्था च ॥

(उद्द्योतः) ननु प्रत्यासत्त्या यत्समासशास्त्रे यत् प्रथमानिर्दिष्टं तन्निरूपितकार्ये एव तदुपसर्जनं स्यादत आह—**निर्देशापेक्षयेति** । ईदृशप्रत्यासत्तिर्दुर्ज्ञेयेति भावः ॥ **सत्युपेति** । परिनिष्ठितविभक्त्या समास इति पक्षे इदम् । इदमेव ध्वनयितुं भाष्ये श्रितपदोपादानम् ॥

( ६६० समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सिद्धं तु यस्य विधौ तं प्रतीति वचनात् ॥ * ॥

(भाष्यम्) **सिद्धमेतत् ॥ कथम्? । यस्य विधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनसंज्ञं भवतीति वक्तव्यम्**

( प्रदीपः ) **सिद्धं त्विति** । **यस्य** श्रितादेः समास**विधौ तं** श्रितादिकं **प्रती**त्यर्थः ॥

( आक्षेपभाष्यम् )

**तर्हि वक्तव्यम् ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् । उपसर्जनमिति हि महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥ कुत एतत् ? ॥ लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत[2] अप्रधानमुपसर्जनमिति । प्रधान[3]मुपसर्जनमिति च संबन्धिशब्दावेतौ । तत्र संबन्धादेतद्गन्तव्यम्—यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसंज्ञं भवतीति ॥**

( प्रदीपः ) **महती संज्ञेति** । लोके चाप्रधानमुपसर्जनमुच्यते, इहापि तथैवाश्रीयत इत्यर्थः ॥ यद्येवं पूर्वकायोर्द्धपिप्पली पुरुषव्याघ्र इत्यादिषु उपसर्जनसंज्ञा प्रधानस्य न प्राप्नोति ॥ नैष दोषः । अन्वर्थसंज्ञा हि यत्र सोर्थः सम्भवति तत्र प्रवृत्तिनिमित्तापेक्षाः[4] प्रवर्तन्ते[5] अन्यत्र तु विधानसामर्थ्यान्निरपेक्षाः[6], यथा कर्मप्रवचनीयसंज्ञा खल्वादीनामिति प्रथमानिर्देशसामर्थ्याद्दध्यादीनां संज्ञा प्रवर्तते ॥

(उद्द्योतः) अवयववृत्त्या सर्वनामादिपदैरिवानेनाभीष्टार्थालाभादाह—**लोके चेति** । संज्ञामहत्त्वमेतत्पदरूढ्यर्थभूतलौकिकार्थापरित्यागे हेतुरिति भावः ॥ अप्रधानस्यैव संज्ञित्वेऽव्याप्तिं शङ्कते—**यद्येवमिति** ॥ **पुरुषव्याघ्र इति** । इदमुदाहरणं चिन्त्यम् । परवल्लिङ्गसूत्रस्थतत्पुरुषग्रहणप्रत्याख्यानपरेण भाष्येण तस्योत्तरपदार्थप्रधानतासूचनात् ॥ ननु संज्ञाविधानमेव कथं तत्प्रयोजकाभावेऽत आह—**प्रथमानिर्देशेति** । **'पूर्वापराधरोत्तरम्' 'अर्धं'** मिति ॥ एतेन प्रदेशेष्वन्वर्थत्वेनैव व्यवहारोपपत्तौ संज्ञाविधानं व्यर्थं स्यादित्यपास्तम् ॥ निर्विभक्तिकस्योच्चारणासंभवात्प्राथम्याच्च लघुत्वाच्च तन्निर्देशस्य सत्त्वेन तत्सामर्थ्यं चिन्त्यम् ॥ भाष्ये—**प्रधानमुपसर्जनमिति च संबन्धिशब्दाविति** । तत्र प्रधानमिति दृष्टान्तार्थं तद्वदुपसर्जनशब्दस्तत्प्रतिद्वन्द्व्यप्रधानार्थकत्वात्सम्बन्धिशब्द इति भावः तदाह—**यं प्रति यदिति** । समासे प्रथमानिर्दिष्टमप्रधानत्वसमानाधिकरणोपसर्जनपदाभिन्नमिति सूत्रार्थः । एवं च प्रत्यासत्त्या यन्निरूपितमप्रधानत्वं तन्निरूपितमेवोपसर्जनसंज्ञाकार्यं पूर्वनिपात इत्यर्थः । ह्रस्वोपि न, यं प्रत्यप्रधानत्वं तद्घटितसमासोत्तरपदभूतस्यैव ह्रस्वविधानात् ॥

( आक्षेपभाष्यम् )

**अथ यत्र द्वे षष्ठ्यन्ते कस्मात्तत्र प्रधानस्योपसर्जनसंज्ञा न भवति । राज्ञः पुरुषस्य राजपुरुषस्येति**

( प्रदीपः ) **अथ यत्रेति** । परिहारान्तरसद्भावादेतदुच्यते । अन्वर्थाश्रयणेन ह्येतदपि सिध्यति ॥

( उद्द्योतः ) परे तु यं प्रतीत्यादिभाष्यस्यायमर्थः—समासशास्त्रे यन्निरूपितं यस्याप्राधान्यं तं प्रति तदुपसर्जनमिति । समासशास्त्रे च सहार्थतृतीयान्तार्थापेक्षया प्रथमान्तार्थस्याप्रधानत्वमिति तं प्रत्येव तदुपसर्जनम् । यद्यपि सहार्थविशेषणत्वरूपमप्राधान्यं तृतीयान्तार्थस्य, तथापि तत्समभिव्याहृतप्रथमाद्यन्तार्थस्य तदपेक्षया लौकिकमप्रधानत्वमितराधीनत्वरूपं बुध्यते । अत एव समकक्षयोर्मध्ये 'एकेन सह त्वया गन्तव्य'मित्युक्ते परस्य दुःखं दृश्यते ॥ पूर्वकोयां सिध्या कैयटोक्ततदाश्रयणमशक्यमित्याहुः ॥ इत्यभिप्रायेण भाष्ये अथ यत्रेति ॥ परिहारान्तरेत्यादिकैयटश्चिन्त्य एव ॥

( ६६१ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥*॥ षष्ठ्यन्तयोश्चोपसर्जनत्वे उक्तम् ॥*॥

(भाष्यम्) **किमुक्तम्? । *षष्ठ्यन्तयोः समासे अर्थाभेदात् प्रधानस्यापूर्वनिपातः* इति । एवं न चेदमकृतं भवति "उपसर्जनं पूर्वम्" इति । अर्थश्चाभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति ॥**

( प्रदीपः ) **षष्ठ्यन्तयोश्चेति** । पूर्वनिपातप्रकरण इदमुक्तम् । तत्र हि पूर्वनिपातः प्रत्याख्यायते—***नवाऽनिष्टादर्शनात्*** इति । अथाप्यारभ्यते तथापि राजशब्दस्यैव पूर्व-

१ 'कष्टं श्रितः राजकष्टश्रितः' । २ 'विज्ञायते' । ३ 'तत्र प्रधान,' । ४ 'पेक्षा' । ५ 'र्तते' । ६ 'पेक्षा' । ७ कर्म क्रियां प्रोक्तवन्त इत्यर्थाभावेऽपि इति शेषः । ( र. ना. ) ८ तत्र हि अर्धपिप्पली पूर्वःकायः पुरुषोव्याघ्र इति रीत्याऽभेदोपचारात्समानाधिकरणसमासमाश्रित्योत्तरपदार्थस्य प्राधान्यं सूचयिष्यते । ( र. ना. ) ९ अप्रधानत्वाभावेऽपि प्रथमानिर्देशसामर्थ्याद्दध्यादीनां यथोपसर्जनत्वमेवं प्रधानस्यापि षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वाविशेषादत्रान्वर्थानाश्रयणेन प्रधानस्योपसर्जनसंज्ञाऽऽपाद्यते इति कैयटानुसारेण भाष्याशयः । नागेशेन तु परे तु इत्यादिनाऽन्यथा वर्णितः । ( र. ना. )

१० समानाधिकरणसमासानङ्गीकारे इत्यादिः । एवञ्च सहयुक्ते चाप्रधाने इति कण्ठोक्तं तृतीयान्तार्थस्याप्राधान्यमुत्सृज्य लौकिकतदाश्रयणे किं मानमित्युद्द्योतकारः प्रष्टव्यः । ( र. ना. ) ११ 'समाधानभाष्यम्' इति तु नव्यानां सिद्धान्तः । १२ राज्ञः पुरुषस्येत्यादौ षष्ठ्यन्तयोः समासे प्रधानस्य पुरुषपदस्य पूर्वनिपातो न भवति । अर्थाभेदात्, अर्थस्य राजपदार्थापेक्षया प्रधानीभूतस्य पुरुषपदार्थस्य अभेदात् राजापेक्षया सदा प्रधानत्वेन प्रधानभेदाभावादित्यर्थः । ( र. ना. ) १३ 'प्रधानभूतस्या' ।

निपातो न पुरुषशब्दस्य। एवं हि वाक्यापेक्षया समासस्यैकार्थता भवति, अन्यथा वाक्यसमासयोर्भिन्नार्थता स्यादित्यर्थः। तथा हि। पुरुषार्थो राजापेक्षया प्रधानमेवात्रेति नासौ भिद्यते राजापेक्षया न व्यतिरिच्यते इत्यर्थः। ततोऽप्रधानस्यैवात्र राज्ञः पूर्वनिपातः॥

(उद्योतः) उपसर्जनसंज्ञाप्रयोज्यत्वं पूर्वनिपातस्य नास्तीति दर्शयितुं पूर्वनिपातप्रकरणप्रत्याख्यानमनुवदति—**तत्र हीति**। एवं हि तत्र भाष्यम्—**उपसर्जनस्य पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्* न वाऽनिष्टादर्शनात्***। **अथ यत्र द्वे षष्ठ्यन्ते कस्मात्तत्र प्रधानस्य पूर्वनिपातो न भवतीत्याशङ्कायां* षष्ठ्यन्तयोः समास इत्यादि***॥ **अनिष्टेति**। नित्येषु शब्देषु प्रयोगे स्थिते गाव्यादिप्रयोगनिवारणाय शास्त्रम्, इह तु पुरुषराजेति प्रयोगो न दृश्यत इति किं तन्निवृत्त्यर्थेन यत्नेनेत्यर्थः॥ अबुधबोधनाय तदारम्भे पूर्वपक्षिणाशङ्कितस्य राज्ञः पुरुषस्येत्यादौ पूर्वनिपातितानियमदोषस्योद्धारपरं **षष्ठ्यन्तयोरिति** वार्तिकम्, तद्व्याचष्टे—**तथापीति**। पुरुषस्य पूर्वनिपाते हि राज्ञः प्राधान्यमेव स्यात्पुरुषराजशब्दात्तथैव प्रतीतेरिति वाक्यसमासयोर्भिन्नार्थतेति भावः॥ **नासौ भिद्यत इति**। वाक्यात्समासे इति शेषः, पूर्वनिपाते हि तस्याप्राधान्यं प्रतीयेतेति भावः॥ तदेवाह—**न व्यतिरिच्यत इति**। व्यतिरेको[१] विशेषणत्वं, तद्वान्[२] भवतीत्यर्थः॥ परे तु—ननु प्रधानस्य पूर्वनिपातेऽप्यर्धपिप्पलीत्यादौ न वाक्यसमासयोर्भिन्नार्थतेत्यतो भाष्यं प्रकारान्तरेण व्याचक्षते—**षष्ठीति** सूत्रे येन समस्तस्तन्निरूपितसंबन्धार्थकषष्ठ्यन्तमेव गृह्यते, तदेव च तत्र प्रथमानिर्दिष्टम्। पुरुषपदे च न राजापेक्षमेदसंबन्धे षष्ठी, तस्या विशेषणादेवोत्पत्तेरित्यर्थः॥ **अर्थश्चाभिन्न** इति भाष्यस्य प्रधानोर्थो न समासघटकविशेषणेन भेदमूलकसंबन्धवानतः प्रधानस्य तादृशषष्ठ्यन्तत्वाभावादनुपसर्जनत्वेनापूर्वनिपातः। कैयटरीत्या तु प्रधानपक्षकापूर्वनिपातानुमाने हेतोर्वैयधिकरण्यम्[४]। उपसर्जनसंज्ञा न भविष्यतीत्यनेन पूर्वनिपाताभावः प्रधानस्यैतन्मूलक[५] एव तत्रापीति सूचितम्। किं च कैयटरीत्या व्याख्याने न प्रयोजनानुवर्तिप्रमाणमिति न्यायविरोधः। कैयटोपि वा एवमेव व्याख्येयः। एवं च पुरुषापेक्षयाऽप्रधानस्यैव राज्ञः षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वमस्मिन्समास इति तस्यैवोपसर्जनत्वेन पूर्वनिपात इति भावः॥

(आक्षेपभाष्यम्)

**यद्यपि तावदेतदुपसर्जनकार्यं परिहृतम्, इदमपरं प्राप्नोति राज्ञः कुमार्याः राजकुमार्याः "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वं प्राप्नोति।**

(६६२ समाधानवार्तिकम्॥ ७॥)

## ॥ * ॥ उक्तं वा ॥ * ॥

**(भाष्यम्) किमुक्तम्?॥ *परवल्लिङ्गमिति शब्दशब्दार्थौ* इति। तत्रौपदेशिकस्य ह्रस्वत्वम्, आतिदेशिकस्य श्रवणं भविष्यति॥ प्रथमानिर्दिष्टं समास उपसर्जनम्॥ ४३॥**

(प्रदीपः) **शब्दशब्दार्थाविति**। नन्वेतत्तत्र प्रत्याख्यातं परमयुवतिरित्यादौ द्वौ तिशब्दौ स्यातामिति। एवं तर्हि अन्वर्थाश्रयेणास्य परिहारस्योक्तत्वादत्र सूक्ष्मेक्षिका न कृता॥४३॥

(उद्योतः) राजकुमार्या इत्यादौ ह्रस्वत्वमपि अनेनैं वारितमिति सूचयन् आह—**उक्तं वेति** विकल्पार्थवाशब्दघटितम्। अन्यथा तदसंगतिः॥ **सूक्ष्मेक्षिकेति**। अर्धपिप्पल्यादौ तु गतिरुक्तैवेति भावः॥ ४३॥

(९६ उपसर्जनसंज्ञासूत्रम्॥ १।२।१ आ॰ २८ सू॰)

# ११८ एकविभक्ति चापूर्वनिपाते ॥ १। २। ४४॥

(प्रदीपः) **एक॥ ४४॥ समास इति** वर्तते। मुख्य एव चेह समासो गृह्यते समासे विधातव्ये यदेकविभक्तीति, समासार्थं वा वाक्यं समासो गृह्यते सर्वस्य च शब्दस्यैकविभक्तित्वमिति विशेषणोपादानसामर्थ्याद्यस्य पर्यायेणापि न सर्वविभक्तित्वं तदुपसर्जनसंज्ञं यथा निष्कौशाम्बिरित्यत्र कौशाम्बीशब्दो निष्क्रमणक्रियापेक्षयापादानशक्तिसम्बन्धात् पञ्चम्यन्त एव। नह्यस्य क्रियान्तरापेक्षः शक्त्यन्तराविर्भावः॥

(उद्योतः) **एकविभक्ति चा॥ ४४॥** स्पष्टप्रतिपत्तये सूत्रार्थं दर्शयति—**समास इति। समासार्थं चेति**। अर्थत्याद्यपेक्षया बहिरङ्गक्रियाध्याहाराल्लक्षणां युक्तां मन्यते॥ शास्त्रं तु न गृह्यते, एकविभक्तीत्यस्य वैयर्थ्यापत्तेः॥ **सर्वस्य चेति**। एकस्मिन् प्रयोगे इत्यादिः॥

(प्रथमानिर्दिष्टस्य पूर्वनिपातसाधकाधिकरणम्)

(आक्षेपभाष्यम्)

**द्वितीयादीनामप्यनेनोपसर्जनसंज्ञा प्राप्नोति॥ तत्र को दोषः?॥ तत्रापूर्वनिपात इति प्रतिषेधः प्रसज्येत॥**

(प्रदीपः) **द्वितीयादीनामिति**। कष्टश्रितादिषु कष्टादयः श्रितादिविशेषणत्वादेकविभक्तिका इत्यनेनोपसर्जनसंज्ञा तेषां प्राप्नोति। ततश्चापूर्वनिपात इति प्रतिषेधः प्राप्नोति। पूर्वसूत्रस्य तु नीलोत्पलादिः समानाधिकरणसमासोऽवकाशः॥

(उद्योतः) **श्रितादिविशेषणत्वादिति**। कर्माकाङ्क्षश्रितादिविशेषणत्वादित्यर्थः॥ ननु निरवकाशपूर्वप्राप्त्या इयं प्राप्तिर्बाध्येतात आह—**पूर्वसूत्रस्य त्विति**॥

(६६३ समाधानवार्तिकम्॥ १॥)

## ॥ * ॥ नाप्रतिषेधात्॥ * ॥

**(भाष्यम्) नायं प्रसज्यप्रतिषेधः—"पूर्वनिपाते**

१ व्यतिरेको भेदस्तद्वान् भवतीत्यर्थः। राजापेक्षया प्रधानभिन्नं न भवतीति फलितम्। व्यतिरेको विशेषणत्वमित्यादिरुद्योतोऽप्रसिद्धार्थाभिनिवेशी चिन्त्यः। (र. ना.) २ न विशेषणं भवति किन्तु विशेष्यमेव भवतीत्यभिप्रायः। (र. ना.) ३ 'तद्वान् भव'। ४ प्रधानभेदवदर्थबोधकत्वाभावेऽर्थभेदादित्यस्य पर्यवसाने कैयटमतेऽपि हेतोः सामानाधिकरण्यं सम्भवतीति ज्ञेयम्। (र. ना.) ५ अनुपसर्जनत्वमूलक एव, तत्रापीत्यस्य राज्ञः पुरुषस्येति समासस्थलेपीत्यर्थः। अयमप्युद्योतश्चिन्त्यः, कैयटमतेऽपि 'अर्थभेदादप्रधानस्य' इति वार्तिकसंवादात्। उपसर्जनसंज्ञा न भविष्यतीत्यस्य पूर्वनिपातप्रकरणारम्भपक्षीयत्वात्। (र. ना.) ६ अयमपि न दोषः। तथाहि—वाक्यसमासयोरभिन्नार्थत्वरूपप्रयोजनानुरोधेन प्रमाणेन प्राप्तः प्रधानस्य पूर्वनिपातोऽप्रधानत्वापादनेन निराक्रियते इति रीत्योक्तन्यायविरोध उद्भाव्यते तदपि प्रामाणिकप्रयोजनानुवर्तित्वेन पराकृतं भवति (र. ना.) ७ अर्थभेदादप्रधानस्यापूर्वनिपात इत्यनेन, तुल्यन्यायत्वादिति भावः। (र. ना.) ८ 'असादः'। बहिरङ्गविभक्त्यभावेत्यर्थः। (र. ना.)

न" इति ॥ किं तर्हि? ॥ पर्युदासोयम्—'यदन्यत्पूर्वनिपातादिति । पूर्वनिपाते अव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति तेन भविष्यति ॥

( ६६४ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ अप्राप्तेर्वा ॥ * ॥

( भाष्यम् ) अथवा अनन्तरा या प्राप्तिः सा प्रतिषिध्यते ॥ कुत एतत्? ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति ॥

( आक्षेपभाष्यम् )

ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥

(प्रदीपः) ननु चेयमिति । प्रतिषेधयुक्तत्वायुक्तत्वेन विरोधात्परत्वादिति भावः ॥

( समाधानभाष्यम् )

नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥

( प्रदीपः ) नोत्सहत इति । अपवादविषयं प्रकल्प्यो[1]त्सर्गस्य प्रवर्तनात् ॥

( उद्द्योतः ) अपवादेति । अपूर्वनिपात इति हि सः[2] ॥

( ६६५ आक्षेपवार्तिकम् ॥ ३ ॥ )

॥*॥ एकविभक्तावषष्ठ्यन्तवचनम् ॥*॥

(भाष्यम्) एकविभक्तावषष्ठ्यन्तानामिति वक्तव्यम् । इह मा भूत्—अर्धं पिप्पल्याः अर्धपिप्पलीति॥

( उद्द्योतः ) भाष्ये—एकविभक्ताविति । शब्दशब्दार्थावित्यस्य प्रत्याख्याने इदं वचनमेव कर्तव्यम् ॥ एकदेशिसमासविषयकमेव तद्, भाष्ये तथोदाहरणात् ॥

( ६६६ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम् । *परवल्लिङ्गमिति शब्दशब्दार्थौ*इति तत्रौपदेशिकस्य ह्रस्वत्वम्, आतिदेशिकस्य श्रवणं भविष्यति ॥

( आक्षेपभाष्यम् )

कानि पुनरस्य योगस्य प्रयोजनानि? ॥

( ६६७ प्रयोजनवार्तिकम् ॥ ५ ॥ )

॥ * ॥ प्रयोजनं द्विगुप्राप्तापन्नालंपूर्वोपसर्गाः ॥ * ॥

( भाष्यम् ) क्तार्थे द्विगुः—पञ्चभिर्गोभिः क्रीतः पञ्चगुः । दशगुः ॥

प्राप्तापन्न[पूर्वे]—प्राप्तो जीविकां प्राप्तजीविकः । आपन्नो जीविकामापन्नजीविकः ॥

अलंपूर्वे—अलं कुमार्यै अलंकुमारिः ॥

उपसर्गाः क्तार्थे-निष्कौशाम्बिः निर्वाराणसिः ॥ एकविभक्ति० ॥ ४४ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीयपादे प्रथमाह्निकम् ॥

( प्रदीपः ) पञ्चगुरिति । *द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः* इति वचनात्परवल्लिङ्गं न भवति ॥ अलंकुमारिरिति । * पर्यादयो ग्लानाद्यर्थे चतुर्थ्येति समासः ॥ ४४ ॥

इत्युपाध्यायजैयटात्मजकैयटकृते महाभाष्यप्रदीपे प्रथमस्य द्वितीये पादे प्रथमाह्निकम् ॥

( उद्द्योतः ) नन्वेवमपि प्राप्तजीविक इत्यादौ परवल्लिङ्गं स्याद् एवं स्त्रीगोव्यक्तिभिः क्रीतपटेषु पञ्चगूनितीष्यते न च सिध्यतीत्यत आह—द्विगुप्राप्तेति । वस्तुतो द्विगुग्रहणं परवदित्यस्यान्तरङ्गत्वेन तत्पुरुषसंज्ञकशब्द[3]मात्रनिमित्तकलिङ्गबाधकताया एव युक्तत्वाद् व्यर्थमिति बोध्यम् ॥ पर्यादय इति । कुगतीति सूत्रे आदिशब्दस्य प्रकारार्थत्वादिति भावः ॥ अलंशब्दयोगे चतुर्थीविधानसामर्थ्याद्वाक्यमपीत्याहुः ॥ ४४ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य द्वितीये प्रथमाह्निकम् ॥

आदितो दशममाह्निकम् ॥

## प्रथमाध्याये द्वितीये पादे द्वितीयाह्निकम् ।

( आदित एकादशमाह्निकम् )

( ९७ प्रातिपदिकसंज्ञासूत्रम् ॥ १ । २ । २ आ. १ सू० )

## ११९ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ १ । २ । ४५ ॥

( पदकृत्यनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

[ [4]अर्थवद्ग्रहणं किमर्थम्? । ]

---

१ परित्यज्येत्यर्थः । ( र. ना. ) २ अपवादविषय इत्यर्थः । ( र. ना. ) ३ पञ्चगुशब्दे तु द्विगुतत्पुरुषोभयसंज्ञकशब्दनिमित्तकलिङ्गकत्वमिति परवदित्यस्याप्राप्तिरिति भावः । ( र. ना. ) ४ अयं कोष्ठकान्तर्गत आक्षेपग्रन्थो न सर्वेषु पुस्तकेषु वीक्ष्यते तथापि वृद्धसंज्ञासूत्रभाष्ये "यस्येति व्यपदेशाय" इति समाधानग्रन्थस्य "अथ यस्यग्रहणं किमर्थम्" इत्याक्षेपग्रन्थ इवात्रापि युक्त एवाक्षेपग्रन्थ इति बोध्यम् ॥ प्राचीनतरलेखकप्रमादेन नष्टो भाष्यपाठ इति कैयटः स्वयमेवाक्षिप्य समाधानग्रन्थमवतारयतीति 'त्याशङ्क्याह' इति प्रदीपग्रन्थेन प्रतीयते ॥ प्रदीपे 'त्याशङ्कामाह' इति पाठं भाष्य आक्षेपग्रन्थानालोचनेऽनन्वितं मत्वा कैश्चिद्विद्वद्वरैः 'त्याशङ्क्याह' इति शोधितो भवेत् ॥ यदि च भाष्यकृतैवाक्षेपग्रन्थो नोक्त इति प्रदीपे 'त्याशङ्क्याह' इति प्रामाणिकः पाठः तदा प्रतीके 'अर्थवदिति व्यपदेशायेति' इत्यत्र प्रतीकद्वित्वसूचकं मध्ये रेखादानमशुद्धमेव ॥ सर्वथा मूलभूतप्रमाणशून्या पाठकल्पनादाधिमथानां कैयटाद्यतिशायि साहसमेवेति वयम् । ( र. ना. )

(समाधानभाष्यम्)

**अर्थवदिति व्यपदेशाय। वर्णानां[1] मा भूदिति॥ किं च स्यात्?॥ वनं धनमिति "नलोपः प्रातिपदिकान्तस्य" इति नलोपः प्रसज्येत॥**

(प्रदीपः) **अर्थवदधातुरप्रत्ययः प्रातिपदिकम्॥४५॥** अभिधेयवचनोऽत्रार्थशब्द आश्रीयते। तत्राधातुरप्रत्यय इति पर्युदासाश्रयणादर्थवत एव संज्ञा भविष्यति नार्थोऽर्थवद्ग्रहणेनेत्याशङ्क्याह—**अर्थवदिति व्यपदेशायेति**। संज्ञिन इति वाक्यशेषः॥ पर्युदासाश्रयणे केन धर्मेण सादृश्यमाश्रीयत इत्यप्रतिपत्तिः स्यादिति भावः। **वर्णानां मा भूदिति** विशिष्टसंज्ञिव्यपदेशफलं दर्शयति॥ क्वचिद्वर्णानां चेति पाठः। तत्र चशब्देन पदसमुदायोऽनर्थको **दश दाडिमानी**त्यादिः समुच्चीयते॥ **किं च स्यादिति**। संख्याकर्मादिषु स्वादीनां विधानादनर्थकेभ्यः स्वाद्युत्पत्तिर्न भविष्यतीति प्रश्नः॥ **वनमिति**॥ नन्वधातुरिति नान्तस्य प्रतिषेधो भविष्यति॥ नैतदस्ति। प्रतिवर्णमत्र विभक्त्युत्पत्तिप्रसङ्गः। न च प्रतिवर्णं धातुसंज्ञासमावेशः[2]। अयं भावः—अविशेषेण स्वादय उत्पद्यन्ते तेषूत्पन्नेष्वर्थनियमः प्रकृतार्थापेक्षया वा प्रत्ययनियम इति स्यादेव स्वाद्युत्पत्तिः अव्ययादिव॥ यदुक्तम्[3]—***संघातस्यैकार्थ्यात्सुबभावो वर्णात्*** इति, तद्वर्णानामर्थवत्तापक्षे। तत्र हि तन्त्रेणैकैव विभक्तिः समुदायावयवार्थगतमेकत्वं प्रत्याययिष्यति। एकमेव हि तदेकत्वम्। तच्चैकेनैव हि सुपा प्रत्यायितमित्यवयवेभ्यो विभक्तिर्न स्यात्॥ अनर्थकस्य तु प्रातिपदिकसंज्ञायां प्रकाशयितव्यस्यार्थस्याभावात्समुदायादिव प्रतिवर्णं विभक्त्युत्पत्तिप्रसङ्गः॥ **नलोप इति**। विभक्तेस्तु श्रवणं न भवति, समुदायस्य पृथक् प्रातिपदिकसंज्ञायां तदन्तर्भावाद्। लुको भावाद्[4]। नलोपस्योपलक्षणार्थत्वाज्जश्त्वादीनामपि प्रसङ्गः॥

(उद्योतः) **अर्थवदधातु॥४४॥ अभिधेयेति**। सर्वशब्दानां प्रयोजनवत्त्वेनाव्यभिचारात् प्रयोजनवाचिनो[5]ऽसंभवाच्च धनवाचिनो ग्रहणाभावादिति भावः॥ कस्येत्याकाङ्क्षायामाह—**संज्ञिन इति। व्यपदेशो** विशिष्टसंज्ञिनो लाभः॥ **केनेति**। शब्दत्वादिनापि तदाश्रीयेतेति भावः॥ **नञिव युक्तन्यायान्नित्यत्वज्ञापकं** तदित्यन्ये॥ चश्रवणाद् व्यपदेशापेक्षया भिन्नमेतत्फलमिति भ्रमनिवृत्तये आह—**विशिष्टेति**। चपाठस्तु प्रामादिक इति भावः॥ तमपि समर्थयते—**क्वचिदिति**॥ समासग्रहणं त्वर्थवत्समुदायस्यैव नियामकमिति भावः॥ **संख्येति**। **'द्व्येकयोः' 'कर्मणी'**त्यादीनां स्वादिविध्येकवाक्यत्वादिति भावः॥ एवं च कार्याभावात्संज्ञापि न स्यादिति तात्पर्यम्॥ **न च प्रतीति**। क्रियावचनत्वाभावादिति भावः॥ ननूक्तरीत्या स्वाद्यनुत्पत्तौ कथं पदत्वनिबन्धनो नलोपोऽत आह—**अयं भाव इति॥ उत्पन्नेष्विति**। उत्पन्नस्यापि लुगादिनेव निवृत्तिरित्यर्थः॥ एकस्मिन्नेवैकवचनमिति सामान्यापेक्षप्रत्ययनियमे कस्या अप्यनवस्थितेराह—**अर्थनियम इति**। अनेकप्रकरणव्यवधानादेकवाक्यतापक्षो दुर्बल इत्यभिमानः॥ प्रत्ययनियमेऽपि न दोष इत्याह—**प्रकृतेति**। संनिहितेत्यर्थः॥ अवश्यमेवमाश्रयणीयमित्याह—**अव्ययादिवेति॥ यत्तूक्तमिति**। हयवरट्सूत्रे इति शेषः॥ **प्रकाशयितव्यस्यार्थस्याभावादिति**। तदभावेऽपि प्रातिपदिकसंज्ञासामर्थ्यादित्यर्थः॥ **समुदायादिवेति**। अनर्थकनिपातरूपात्समुदायादिवेत्यर्थः॥ वस्तुतः संख्याकर्मादेरभावाद्विभक्तेरत्रानुत्पत्तिरेव। अर्थनियमादिप्रकारास्तु महासंज्ञा[6]विरोधाद् गमके सत्येव, न सर्वत्र। एतद्व्यावर्त्यं तु निरर्थकसमुदाय इति बोध्यम्॥ ननु सर्वसुबुत्पत्तौ तेषां श्रवणापत्तिः सर्वैकवचनोत्पत्तावपि एवमेवात आह—**विभक्तेस्त्विति॥ समुदायस्येति**। कृदन्त[7]स्यान्तरङ्गत्वादवयवसंज्ञा—तन्निमित्तसुप्प्रवृत्तिकालोत्तरकाले इत्यर्थः। समासनियमस्त्वर्थवत्समुदायविषय इति भावः॥ न च धनतीत्यादौ प्रतिवर्णं सुबुत्पत्तौ तच्छ्रवणप्रसङ्ग इति वाच्यम्। धातुप्रत्ययपदयोर्धात्ववयवप्रत्ययान्तावयवपरतया तत्र सर्वत्र वारणेनादोषात्॥ तस्मादव्युत्पन्नप्रातिपदिकावयववर्णानां संज्ञै[8]वापाद्या, तत्र च समुदायप्रातिपदिकावयवत्वेन तल्लोपः, धनवनादिकमव्युत्पन्नमिति भावस्तद्ध्वनयन्नाह—**जश्त्वादीनामिति**। एतेन जश्त्वादौ धकाराद्युच्चारणवैयर्थ्यमित्यपास्तम्॥

(आक्षेपभाष्यम्)

**अधातुरिति किमर्थम्[9]?॥**

(समाधानभाष्यम्)

**अहन् वृत्रम्'॥**

(प्रदीपः) **अहन्निति**। विशेषविहितत्वाल्लङाद्युत्पत्तौ सत्यामडागमस्य धातुभक्तत्वात्प्रातिपदिकसंज्ञायां सत्यां नलोपप्रसङ्गः। न चाप्रत्यय इति प्रत्यय[10]लक्षणेन प्रतिषेधः। **न ङिसंबुद्ध्योरिति** ज्ञापनाद्[11] नलोपे विधीयमाने प्रत्ययलक्षणेनाप्रत्यय इति निषेधाभावात्॥

(उद्योतः) **विशेषेति**। अनवकाशत्वात् सुपं बाधित्वेति भावः। न च श्येनायत इत्यादौ लडादयः सावकाशा इति अत्र परत्वात् सुबुत्पत्तिर्दुर्वारा। एवं तर्हि **भूवादिसूत्रस्य** यल्लडादिविधावुपस्थानं तस्यानवकाशत्वादित्यर्थः॥ **अडागमस्येति**। अङ्गभक्तत्वेऽपि धातुरेवात्राङ्गमिति धातुभक्तत्वादित्युक्तम्॥ इदं च स्वरूपकथनम्, **न ङिसंबुद्ध्योरिति**। कथमन्यथा राजेत्यादौ[12] नलोपः। न च कृदन्तत्वात्सिद्धिः, तत्राप्यप्रत्यय इत्यनुवृत्तेरिति भावः॥

(समाधानबाधकभाष्यम्)

**अधातुरिति शक्यमवक्तुम्॥**

---

१ 'वर्णानां च'॥ २ 'संनिवेशः'॥ ३ 'यत्तूक्तम्'॥ ४ वाराणसीनगरीस्थराजराजेश्वरीयन्त्रालयमुद्रितभाष्यप्रदीप इव Bangal Asiatic Society मुद्रितभाष्यप्रदीपोद्द्योतपुस्तकस्थप्रदीपेऽपि 'लुकोभावाद्' इत्यर्धाकारदर्शनं शोधकस्य पाण्डित्यमतीव सूचयति हेतोः साध्यविरुद्धत्वात्॥ ५ ग्रहणाभावादित्यत्रान्वयः। असंभवाच्चेत्यस्य शब्दानां धनवत्त्वस्येत्यादिः। (र. ना.)

६ एकवचनादिरूपेत्यादिः। (र. ना.) ७ अन्तरङ्गत्वादवयवसंज्ञातन्निमित्तसुप्प्रवृत्तिकालोत्तरकाले कृदन्तस्य समुदायस्य प्रातिपदिकसंज्ञायामिति योजना॥ (र. ना.) ८ अव्युत्पन्नत्वेनेत्यर्थः। (र. ना.) ९ 'किम्'॥ १० 'लक्षणप्र'॥ ११ 'ज्ञापकाद्'॥ १२ कार्यकालपक्षे इत्यादिः। (र. ना.)

( आक्षेपभाष्यम् )

**कस्मान्न भवति 'अहन्वृत्रम्' इति ? ॥**

( समाधानभाष्यम् )

**आचार्यप्रवृत्तिर्ज्ञापयति–न धातोः प्रातिपदिकसंज्ञा भवति–इति, यदयं "सुपो धातुप्रातिपदिकयोः" इति धातुग्रहणं करोति ॥**

( प्रदीपः ) **धातुग्रहणं करोतीति** । पुत्रीयतीत्यादौ प्रातिपदिकत्वादेव लुक् सिद्ध इति भावः ॥

(उद्द्योतः) पुत्रीयतीति ॥ अप्रत्यय इति प्रत्ययस्यैव निषेध इत्यभिमानः ॥

( समाधानसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम् । प्रतिषिद्धार्थमेतत्स्यात्—अपि काकः श्येनायत इति ॥**

( प्रदीपः ) **श्येनायत इति** । अत्राप्रत्यय इति निषिद्धा प्रातिपदिकसंज्ञा ॥

(उद्द्योतः) प्रत्ययान्तस्य स निषेध इत्यभिप्रायेणाह–अत्राप्रेति ॥

( आक्षेपभाष्यम् )

**अप्रत्यय इति किम् ? ॥**

( समाधानभाष्यम् )

**काण्डे कुड्ये ॥**

( उद्द्योतः ) भाष्ये—काण्ड इति । परादिवद्भावेन प्रत्ययान्तत्वमिति भावः । न च पर्युदासे[1] शाब्दफललाभायान्तवत्त्वस्यैव प्रवृत्तेस्तेनाप्रत्ययान्तत्वात्प्रातिपदिकत्वं स्यादेव, तथा च ह्रस्वः स्यादिति वाच्यम् । भाष्यकृता वक्ष्यमाणत्वात्[2] ॥

( समाधानबाधकभाष्यम् )

**अप्रत्यय इति शक्यमवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कस्मान्न भवति काण्डे कुड्य इति ? ॥**

( समाधानभाष्यम् )

**कृत्तद्धितग्रहणं नियमार्थं भविष्यति—कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति, नान्यस्येति ॥**

( प्रदीपः ) **कृत्तद्धितग्रहणमिति** । तद्धितग्रहणमत्र नियमार्थम्, कृद्ग्रहणं तु प्रतिषिद्धार्थं भिद् छिदिति । अत्र ह्यधातुरिति प्रतिषेधप्रसङ्गः ॥

( उद्द्योतः ) **अत्र हीति** । न च कृद्ग्रहणस्य प्रतिषेधबाधनार्थत्वे तद्धितग्रहणनियमात्कारकशब्दे प्रातिपदिकत्वानापत्तिः, कृद्ग्रहणं तु मध्येपवादन्यायेनाधातुरितिप्रतिषेधस्यैव बाधकः स्यादिति वाच्यम् । बाध्यसामान्यचिन्ताश्रयणादित्यभिमानः ॥ वस्तुतो धातोः प्रत्ययान्तस्य च चेत्कृत्तद्धितान्तस्यैवेतिनियमे[3] भाष्यतात्पर्यं, तेनाधातुग्रहणमपि प्रत्याख्यातम् । क्विबाद्यन्तस्यापि प्रत्ययान्तत्वात् प्रत्ययान्तस्येत्येवं भाष्ये उक्तम् । न चास्यापत्यमिरित्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधनार्थं तद्धितस्यैव संज्ञाविधानमस्त्विति वाच्यम् । तस्य निषेधे फलाभावात् । न च हरिष्वित्यादौ सोः प्रातिपदिकत्वापत्तिः, एवं चौत्सर्गिकैकवचनापत्तिः, सात्पदाद्योरिति षत्वनिषेधापत्तिश्चेति वाच्यम् । औत्सर्गिकस्यापि विना गमकमप्रवृत्तेः[4] ॥

( अनिष्टापत्तिवारणाधिकरणम् )

( ६६८ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अर्थवत्यनेकपदप्रसङ्गः ॥ * ॥

( भाष्यम् ) **अर्थवदिति प्रातिपदिकसंज्ञायामनेकस्यापि पदस्य प्रातिपदिकसंज्ञा प्राप्नोति—'दश दाडिमानि, षडपूपाः, कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्[5]कुमार्याः[6] स्फैयकृतस्य[7] पिता प्रतिशीन' इति ॥**

( प्रदीपः ) **अनेकपदप्रसङ्ग इति** । अनेकं पदमस्मिन्नित्यनेकपदः समुदायस्तस्य संज्ञाप्रसङ्ग इत्यर्थः ॥ **अनेकस्यापि पदस्येति** । समुदितस्येति बोद्धव्यम् । प्रतिपदं तु नैव संज्ञा प्राप्नोत्यप्रत्यय इति निषेधात् । समुदायस्य तु निषेधो न प्रवर्तते **प्रत्ययग्रहणे यस्मात्स विहित** इति वचनात्समुदायाच्च प्रत्ययस्याविधानात् प्रत्ययान्तत्वाभावात् । न विद्यते प्रत्ययो यस्मिन्सोयमप्रत्यय इत्यप्याश्रयितुं न युज्यते, बहुपटव इत्यस्यापि समुदायस्य निषेधप्रसङ्गात् । स्वरे दोषप्रसङ्गात् ॥

( उद्द्योतः ) बहुव्रीहावनेकस्यापि पदस्येति भाष्यानुपपत्तेराह—**समुदितस्येति** । अत एवानेकग्रहणं चरितार्थम् ॥ बहुव्रीह्याश्रयणस्य फलं दर्शयति—**प्रतिपदं त्विति** ॥ **प्रत्ययान्तत्वाभावादिति** । संज्ञाविधावितिनिषेधस्तु नात्र, यत्र प्रत्ययस्य संज्ञा तत्रैव तन्निषेधप्रवृत्तेरिति भावः । **स्वरे दोषेति** । अनुपदमेव स्फुटीभविष्यत्येतत् ॥

( समाधानभाष्यम् )

**समुदायोत्रानर्थकः ॥**

( प्रदीपः ) **समुदायोत्रानर्थक इति** । पदार्थानां समन्वयाभावात् ॥

( उद्द्योतः ) **समन्वयेति** । स एव हि वाक्यशक्यः ॥

( ६६९ समाधानबाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ समुदायोनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वं यथा लोके ॥ * ॥

( भाष्यम् ) **समुदायोनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वम् । अवयवैरर्थवद्भिः समु-**

---

1 अप्रत्यय इत्यत्र पर्युदासस्वीकारपक्षे काण्डे इत्यत्र पूर्वान्तवद्भावे प्रत्ययान्तभिन्नत्वेन प्रातिपदिकसंज्ञारूपं फलं शाब्दं, परादिवद्भावे तु प्रत्ययान्तत्वेन प्रातिपदिक संज्ञानिषेधरूपं फलमार्थं, पर्युदासपक्षे प्रत्ययान्तं न स्यादित्यस्याशब्दार्थत्वात् इति भावः । ( र. ना. ) 2 कृत्तद्धितग्रहणस्य नियमार्थत्वरूपसमाधानस्येति शेषः । ( र. ना. ) 3 'स्यैवेत्येव' ॥ 4 Bengal Asiatic Society मुद्रितपुस्तके तु 'गमकमप्रवृत्तेः' इत्यस्यापि 'बहुव्रीहावनेकस्या—' इत्युत्तरत्रान्वयप्रदर्शनं शोधकस्यैव प्रावीण्येन ॥ 5 अधरकायदेशस्थितं विपुलं वसनम् । ( र. ना. ) 6 "पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम्" न्यायसूत्रव्याख्यायां भाष्यकर्त्रा वात्स्यायनेन तु—"कुमार्याः पाय्यम् तस्याः पिता"—इत्युदाहृतम् ॥ 7 स्फ्यनामा यज्ञियः पात्रविशेषः तत्कृतोऽपत्यं स्फैयकृतः । अप्यैजागमः द्वारादित्वात् । प्रतिशीनः कठिनः । ( र. ना. )

दाया अर्थवन्तो भवन्ति ॥ यथा लोके । तद्यथा लोके—आढ्यमिदं नगरं गोमदिदं नगरमित्युच्यते । न च सर्वे तत्राढ्या भवन्ति, सर्वे वा गोमन्तः ॥

( प्रदीपः ) अवयवार्थवत्त्वादिति । अवयवधर्माणां च समुदाये व्यपदेशात्, सति च प्रातिपदिकत्वे सुब्लुक्प्रसङ्गः ॥

( उद्द्योतः ) अवयवधर्माणामिति । यथा ग्रामो दग्ध इत्यादौ ॥

यथा लोके इत्युच्यते, लोके चावयवा एवार्थवन्तो न समुदायाः । अतश्चावयवा एवार्थवन्तो न समुदायाः । यस्य हि यद्द्रव्यं भवति स तेन कार्यं करोति । यस्य च या गावो भवन्ति स तासां क्षीरं घृतमुपभुङ्क्ते । अन्यैरेतद् द्रष्टुमप्यशक्यम्[1] ॥

( युक्तिप्रश्नभाष्यम् )

का तर्हीयं वाचोयुक्तिराढ्यमिदं नगरं गोमदिदं नगरमिति ? ॥

( युक्तिप्रदर्शनभाष्यम् )

एषैषा वाचोयुक्तिः[2] । इह तावदाढ्यमिदं नगरमित्यकारो मत्वर्थीयः—आढ्या अस्मिन्सन्ति तदिदमाढ्यमिति । गोमदिदं नगरमिति मत्वन्तात् मत्वर्थीयो लुप्यते ॥

( प्रदीपः ) एषैषेति । एषा या वाचोयुक्तिः सैषा एतत्प्रमाणेत्यर्थः ॥ अकारो मत्वर्थीय इति । ततश्च नावयवधर्मेण समुदाये व्यपदेशः । किं तर्हि ? दण्ड्यादिवद्यौगिक इत्यर्थः ॥ मत्वन्तादिति । मत्वन्तान्मतुन्न भवति, सरूपः प्रत्ययो नेष्ट इति वचनात् । तस्मादेकगोपूर्वादिति ठञो भाष्यकारवचनप्रामाण्याल्लोपः । अत इति च तत्र निवृत्तं गौत्रिकादिसिद्ध्यर्थं, गवां समूहो गोत्रा, सास्मिन्नस्तीति गौत्रिकम् ॥ अथ वा मत्वन्तान्मत्वर्थीयो लुप्यत इत्यनेनावयवधर्मस्य समुदाये उपचारमाह । इह तु मुख्येऽर्थवत्त्वे सम्भवत्युपचरितस्याश्रयो न युक्तः ॥

( उद्द्योतः ) वीप्साया निष्प्रयोजनत्वादाह—एषा चेति । नैवात्र वीप्सेति भावः ॥ मतुब्नेति । इदमेव ध्वनयितुं भाष्ये मत्वर्थीय इत्युक्तं मतुबिति नोक्तम् ॥ लुग्विधायकाभावादाह—भाष्यकारेति ॥ नन्वत इत्यनुवृत्तेरसाठ्ठञ् दुर्लभोत आह—अत इतीति ॥ गोत्रेत्यत्रेनिन्नकव्यचश्चेति त्रः ॥ एकपूर्वस्याहचर्याद्गोपूर्वस्यापि समासस्यैव तत्र ग्रहणमिति मते आह—आदीति । आदिना गोशकटिप्रकृतिकगौशकटिकस्य ग्रहणम् ॥ अथ वेति । गम्यमानार्थस्य निवृत्तिरेव चादिलोप इति वल्लोपशब्देनोक्तेति भावः ॥ परे त्वेषा व्याख्या न भाष्यस्वरससिद्धा, अवयवार्थवत्त्वेन समुदायार्थवत्त्वाभावं प्रक्रम्यैतदुक्तेः । तस्मादर्शआद्यचस्तत्प्रामाण्याद्गुणवचनेभ्य इति मत्वर्थीयलोप इति सारम् । ग्रामो दग्ध इत्यादावप्यर्शआद्यजेव, अवयवे वा समुदायरूपारोप इति भाष्यतात्पर्यम् ॥

( आक्षेपशेषभाष्यम् )

एवमपि—

( ६७० आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वाक्यप्रतिषेधोर्थवत्त्वात् ॥ * ॥

( भाष्यम् ) वाक्यस्य प्रातिपदिकसंज्ञायाः प्रतिषेधो वक्तव्यः । देवदत्त गामभ्याज शुक्लां देवदत्त गामभ्याज कृष्णामिति ॥ किं कारणम् ? अर्थवत्त्वात् । अर्थवद्ध्येतद्वाक्यम् ॥

( प्रदीपः ) अर्थवद्वाक्यमिदानीं दर्शयति—एवमपीति । अर्थवद्धीति । पदार्थानां समन्वयागमात् ॥

( उद्द्योतः ) भाष्येऽर्थवद्ध्येतद्वाक्यमिति पाठः ॥

( आक्षेपबाधकभाष्यम् )

न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये ।

( प्रदीपः ) न वै पदार्थादिति । पदानि स्वंस्वमर्थं प्रतिपादयन्ति वाक्यम् । पदार्था एव त्वाकाङ्क्षायोग्यतासन्निधिवशात् परस्परसंसृष्टा वाक्यार्थ इत्यर्थः । न तु वाक्यं वाक्यार्थो वा पृथगस्तीति भावः ॥

( उद्द्योतः ) नन्वन्वयरूपोऽर्थः पदार्थातिरिक्त उपलभ्यतेऽत आह—पदानीति । पदार्था एव स्विलनेन संसर्गबोधे पदानां व्यापारो नास्तीति दर्शयति । एवं च पदार्थैरेवाकाङ्क्षादिभिः संसर्गस्य गम्यमानत्वान्न तत्र वाक्यशक्तिर्वाक्यस्यातिरिक्तस्याभावाच्च तदाह—ननु वाक्यमिति । वाक्यार्थो चेति । संसर्गस्य पदार्थबोध्यत्वादिति भावः ॥

( ६७१ आक्षेपसाधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ पदार्थादन्यस्यानुपलब्धिरिति चेत् पदार्थाभिसंबन्धस्योपलब्धिः [ स्वसोत्प्रतिषेधः ] ॥ * ॥

( भाष्यम् ) पदार्थादन्यस्यानुपलब्धिरिति चेद् । इदमुच्यते—पदार्थाभिसंबन्धस्योपलब्धिर्भवति वाक्ये । इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः, कर्म क्रियागुणौ चानिर्दिष्टौ । गामित्युक्ते कर्म निर्दिष्टम्, कर्ता क्रियागुणौ चानिर्दिष्टौ । अभ्याजेत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणी गुणश्चानिर्दिष्टः । गु-

---

[1] 'द्रष्टुमशक्यम्' ॥ [2] इयं वाचोयुक्तिः पदानां परस्परसंबन्धरूपा वाक्यरचना, वाच इत्येकवचनं जात्यभिप्रायेण । का, किन्निमित्तेत्यर्थः । (र.ना.)
[3] Bengal Asiatic Society मुद्रितपुस्तके तु 'अवयवेनासमुदायरूपादरूप' इति पाठशोधनं शोधकस्य प्राबीण्यं परं द्योतयति ॥ [4] अयं कोष्ठकान्तर्गतो वार्तिकभागः "*न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः*" इति स्वरूपसूत्रवार्तिक इवात्राप्युचितो हि किंचिज्जलेखकप्रमादाच्छ्रुटितो भवेत्, इति पूरितोऽस्माभिः ॥ दृढतरमूलं विना यत्किञ्चित्पाठसाम्येन भाष्ये तत्र तत्राधिकपाठकल्पनं महत्साहसमेवेति वयम् । ( र. ना. )

**क्रामित्युक्ते गुणो निर्दिष्टः, कर्तृकर्मणी क्रिया चानिर्दिष्टा । इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टम्—देवदत्त एव कर्ता नान्यः । गामेव कर्म नान्यत् । अभ्याजैव क्रिया नान्या । शुक्लामेव न कृष्णामिति ॥ एषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः ॥ तस्मात्प्रतिषेधः । तस्मात्प्रतिषेधो वक्तव्यः ॥**

**(प्रदीपः) पदार्थाभिसंबन्धस्येति ।** ध्वनिव्यङ्ग्यं नित्यं वाक्यं विशिष्टस्यार्थस्य पदार्थसंसर्गरूपस्य वाचकम् । अन्यथा ह्यशाब्दो वाक्यार्थः स्यात् ॥ **कर्ता निर्दिष्ट इति ।** सम्बोधनविषयमनियतक्रियं कर्तृमात्रमित्यर्थः ॥ **यद्विशेषेऽवस्थानमिति ।** पदार्थसंसर्गरूपे वाक्यार्थ इत्यर्थः । अत एव वाक्यमेव मुख्यः शब्दो वाक्यार्थ एव मुख्यः शब्दार्थः । सादृश्यात्त्वन्वयव्यतिरेकौ कल्पितौ लाघवार्थमाश्रित्य पदपदार्थव्यवस्थापनं क्रियते । प्रतिवाक्यं व्युत्पत्त्यसम्भवाच्छाब्दव्यवहाराभावप्रसङ्गात् ॥

**(उद्द्योतः)** ननु पदातिरिक्तवाक्याभावात्कस्य पदार्थाभिसंबन्धो वाच्यः स्यादत आह—**ध्वनिव्यङ्ग्यमिति ।** अनेन स्थिरत्वं तस्य दर्शितम् ॥ **विशिष्टस्यार्थस्येति ।** विशेषणत्वादिविशिष्टस्येत्यर्थः ॥ पदार्थानां संसर्गबोधकत्वे दोषमाह—**अन्यथेति ।** न च शब्दप्रयोज्यत्वाच्छाब्दत्वम्, प्रत्यक्षदृष्टधूमबोध्यवह्नेरपि प्रत्यक्षत्वापत्तेः, श्रुतधूमशब्दोपस्थितधूमार्थबोध्यवह्नेरपि शाब्दत्वापत्तेश्च । यदि तु पदसमभिव्याहाररूपाकाङ्क्षा तत्कारणत्वज्ञानं च शाब्दबोधे कारणमिति शाब्दत्वं, तदा पदानां पदार्थेष्वपि शक्तिर्न सिध्येत् । तदुक्तम्—

**अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्**

इति । यदि बोधजनकताया असंबद्धे वक्तुमशक्यतया पदार्थैः पदानां शक्तिरूपसंबन्धकल्पनं तदा समभिव्याहारे संसर्गबोधकारणताया अपि असंबद्धे वक्तुमशक्यतया तेन तादात्म्यसंबन्धस्य वाक्ये आवश्यकत्वात् ॥ तादात्म्यमेव च शक्तिरिति तत्त्वम् ॥ पदार्थातिरिक्तः कश्चिद्वाक्यार्थोऽस्तीति वक्तुमुपक्रमते—भाष्ये **इहेत्यादि ॥** ननु कर्तृत्वस्य क्रियानिरूपितत्वात् क्रियायाश्चासंनिधानात् तत्त्वाभावेन कर्तेत्यनुपपन्नमत आह—**कर्तृमात्रमिति ।** प्रधानीभूतधात्वर्थमात्राश्रय इत्यर्थः । एवं कर्मशब्देन धात्वर्थफलमात्राश्रयः ॥ **अनिर्दिष्टाविति ।** पूर्वत्र विभक्तिविपरिणामेनान्वयः । ईदृशप्रकारोऽपि भाष्यप्रामाण्याद्युक्त एव । तृतीयस्थलेऽनिर्दिष्ट इत्येव पाठः ॥ **देवदत्त एव कर्ता नान्य इति ।** अनेनैतद्दर्शयति यत्किञ्चित्कारकस्य क्रियाया वोच्चारणे सर्वक्रियाणां योग्यानां सर्वकारकाणां च योग्यानामाक्षेपो भवति । एवं च सर्वत्र वाक्यमेव बोधकं तत्तदुपादानं तु नियमायेति ॥ **गामेव···नान्यदिति ।** गामिति शब्दवाच्यमेव कर्म नान्यदित्यादिक्रमेणार्थः ॥ भाष्ये **सामान्ये** सामान्यतः क्रियाकर्तृत्वादिविशिष्टे **विशेषे** विशेषणविशेष्यभावापन्ने ॥ तदाह—**संसर्गरूप इत्यादि ।** विशेषणविशेष्यभावरूपसंसर्गेत्यर्थः । स एव वाक्यशक्य इति निरूपितं मञ्जूषायाम् ॥ **अत एवेति ।** तेनैव लौकिकवैदिकव्यवहारादित्यर्थः ॥ नन्वेवं पदार्थव्यवहारोऽसङ्गतः स्यादत आह—**सादृश्यादिति ।** लाघवार्थं कल्पितावन्वयव्यतिरेकावाश्रित्य सादृश्यात्पदपदार्थव्यवस्थेत्यन्वयः । यथा वर्णेष्वारोपिता उदात्तादयो व्यञ्जकध्वनिधर्मा व्यवहारे हेतवः । एवमिहापि काल्पनिकः पदपदार्थविभागस्तथेति भावः ॥ ननु तादृशकल्पना व्यर्थेत्यत आह—**प्रतिवाक्यमिति ॥**

**(आक्षेपनिराकरणभाष्यम्)**

**न वक्तव्यः ।**

**(६७२ समाधानवार्तिकम् ॥ ६ ॥)**

## ॥ * ॥ अर्थवत्समुदायानां समासग्रहणं नियमार्थम् ॥ * ॥

**(भाष्यम्) अर्थवत्समुदायानां समासग्रहणं नियमार्थं भविष्यति । समास एवार्थवतां समुदायानां प्रातिपदिकसंज्ञो भवति नान्य इति ॥**

**(समाधानबाधकभाष्यम्)**

**यदि नियमः क्रियते प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न प्राप्नोति बहुपटवः उच्चकैर्नीचकैरिति ॥**

**(प्रदीपः) बहुपटव इति ।** द्योत्येनार्थेनार्थवान् प्रत्ययः । प्रकृतिस्तु वाच्येनेत्यर्थवत्समुदायोयं भवति ॥ **उच्चकैरिति । तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति ।** यदा नाश्रीयते, नापि ***अकच्स्वरवतः*** इति, तदायं दोषः । तदा हि सुबन्तस्याकचि कृते अव्ययादिति सुब्लुगभावात्**सुपो धातुप्रातिपदिकयोरि**ति लुगिष्यते, स च न प्राप्नोति ।

**(उद्द्योतः)** ननु बहुजादीनां स्वार्थिकत्वेनार्थवत्त्वं नेत्यर्थवत्समुदायत्वमस्मिन् कथमत आह—**द्योत्येनेति ॥** ननु **तन्मध्यपतित**न्यायेन *"अकजूज्ञस्वरवतः सर्वनामाव्ययविधौ*" इति **येन विधिरिति** सूत्रस्थवचनेन चाव्ययत्वात् लुक् सिद्ध इति किमत्र प्रातिपदिकत्वेनात आह—**तन्मध्येति ॥ तदा हीति । तन्मध्यपतित** इत्यादिन्यायाभावे इत्यर्थः ॥ अन्तरङ्गत्वाल्लुकृत्वाच पूर्वमेवाकचोऽव्ययादिति सुब्लुक् कुतो नेति चिन्त्यम् । **बहुपटव उच्चकैर्नीचकैरिति** वाक्ये बहुपटव इत्युदाहरणम् । **किं पुनरिति** प्रश्नाशयस्तु **यथैवे**त्यादिना वक्ष्यमाण इत्यन्ये ॥

**(नियमवादिनः प्रश्नभाष्यम्)**

**किं पुनरत्र प्रातिपदिकसंज्ञया प्रार्थ्यते ? ॥**

**(प्रदीपः) किं पुनरत्रेति ।** उच्चकैरित्याद्यन्यथा सिध्यतीति प्रश्नः ॥

**(उद्द्योतः) अन्यथा सिध्यतीति । तन्मध्यपतितादिन्यायेनेति भावः ॥**

---

१ स्फोटात्मकमित्यर्थः । (र. ना.) २ 'विशिष्टार्थस्य' ॥ ३ संबोधनक्रियानिरूप्यत्वेन विषयोऽस्येति बहुव्रीहिः, नतु षष्ठीतत्पुरुषः, नपुंसकत्वानुपपत्तेः । (र. ना.) ४ 'रूपो वाक्या' ॥ ५ शक्य इत्यर्थः । (र. ना.) ६ इतराक्षेपव्यावृत्तये इत्यर्थः । (र. ना.) ७ 'पदपदार्थ' ॥ ८ उदात्तत्वादिना वर्णव्यवहारे इत्यर्थः । (र. ना.) ९ निर्धारणे षष्ठी । (र. ना.) १० अनन्यथासिद्धमुदाहरणमित्यर्थः । (र. ना.)

( इतरस्य दूषणप्रदर्शकभाष्यम् )

**प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यादिति ॥**

( प्रदीपः ) इतरो बहुपटव इति न सिध्यतीति मन्यमान आह—प्रातिपदिकादिति ॥

( नियमवादिनोदोषवारकभाष्यम् )

**नैष दोषः । यथैवात्राप्रातिपदिकत्वात्सुबुत्पत्तिर्न भवति एवं लुगपि न भविष्यति । तत्र यैवासावन्तर्वर्तिनी विभक्तिस्तस्या एव श्रवणं भविष्यति ॥**

( इतरस्य दोषसाधकभाष्यम् )

**नैवं शक्यम्। स्वरे दोषः स्यात्—बहुपटव इत्येवं स्वरः स्यात्। बहुपटव इति चेष्यते। पठिष्यति ह्याचार्यः—*चितः सप्रकृतेर्बह्वकजर्थम् * इति। तस्यां पुनर्लुप्तायां यान्या विभक्तिरुत्पद्यते तस्याः प्रकृत्यनेकदेशत्वादन्तोदात्तत्वं न भविष्यति ॥**

( प्रदीपः ) स्वर इति । बहुपटव इति वकाराकारस्योदात्तत्वं प्राप्नोति, टकाराकारस्य चेष्यते ॥ प्रकृत्यनेकदेशत्वादिति । नह्यसौ प्रकृतेरेकदेश इत्यर्थः ॥

( उद्योतः ) टकाराकारस्येति । प्रातिपदिकत्वे सति अन्तरङ्गानपीति न्यायेन लुकि कृते टुशब्दोकारस्यैव स्वरप्रवृत्तिरिति भावः ॥ नह्यसाविति । समुदायादुत्पत्तेरिति भावः ॥

( समाधानसाधकभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा—इति । यदयम् 'अप्रत्यय' इति प्रतिषेधं शास्ति । स च तदन्तप्रतिषेधः ॥**

( प्रदीपः ) अप्रत्यय इति प्रतिषेधं शास्तीत्युक्ते कश्चिन्न ब्रूयाद्बहुपटव इत्यत्राप्रत्यय इति निषेधः प्राप्नोतीत्यत आह—स च तदन्तप्रतिषेध इति ॥ प्रत्ययग्रहणे यस्मात्स विहित इति तदन्तविधिः । संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधिर्निवारितः । अप्रत्यय इत्ययं तु प्रतिषेधविधिः । पटुशब्दाचात्र जसुत्पन्नो न बहुपटुशब्दादिति बहुपटव इत्येतदप्रत्ययान्तमेव ॥ अथ वा अप्रत्यय इति बहुव्रीह्याश्रयणात् प्रत्ययादेरपि बहुपटव इत्यस्य निषेधः प्राप्नोतीत्याह—स चेति । अप्रत्यय इति तत्पुरुष आश्रीयते तस्य स्वपदार्थप्रधानत्वेनान्तरङ्गत्वादिति भावः ॥

( उद्योतः ) अप्रत्यय इति निषेधः प्राप्नोतीति । जसमाश्रित्येति भावः ॥ प्रतिषेधेति । पर्युदासेपि प्रत्ययस्य संज्ञित्वाभावान्न दोष इति भावः ॥ बहुव्रीहीति । न विद्यते प्रत्ययो यस्मिन्नितीत्यर्थः ॥

( आक्षेपभाष्यम् )

**स तर्हि ज्ञापकार्थः[३] प्रत्ययप्रतिषेधो वक्तव्यः ॥**

( प्रतिवन्दीभाष्यम् )

**ननु चायं प्राप्त्यर्थोपि वक्तव्यः ॥**

( प्रदीपः ) प्राप्त्यर्थ इति । प्रतिषेधप्राप्त्यर्थ इत्यर्थः ॥

( प्रतिवन्दीनिरासभाष्यम् )

**नार्थः प्राप्त्यर्थेन । कृत्तद्धितग्रहणं नियमार्थं भविष्यति—कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भविष्यति, नान्यस्य प्रत्ययान्तस्येति ॥**

( आक्षेपभाष्यम् )

**स एषोनन्यार्थः प्रत्ययप्रतिषेधो वक्तव्यः । प्रकृतिप्रत्ययसमुदायस्य वा प्रातिपदिकसंज्ञा वक्तव्या ॥**

(प्रदीपः) स एषोनन्यार्थ इति । ज्ञापनार्थ एवेत्यर्थः ॥

( समाधानभाष्यम् )

**उभयं न वक्तव्यम् । तुल्यजातीयस्य नियमः ॥**
**कश्च तुल्यजातीयः ? ॥**
**यथा जातीयकानां समासः ॥**
**कथं जातीयकानां समासः ? ॥**
**सुबन्तानाम् ॥**

( प्रदीपः ) सुबन्तानामिति । एतच्चोपलक्षणं, भेदसंसर्गद्वारकार्थवत्त्वयुक्तानाम् । यस्मात्सुबन्तासुबन्तानामपि समासो दृश्यते अश्वक्रीतीत्यादौ, गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनात् ॥

( उद्योतः ) भेदसंसर्गेति । वाक्ये पदार्थयोर्विभागेनापि प्रयोगे सतीतरसंसर्गाकाङ्क्षा भेदसंसर्गः । स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्तानामित्यर्थः । समासेपि वाक्यीयेनैव तेन विशिष्टार्थवत्त्वम्। नहि प्रकृतिप्रत्यययोर्विभागः परश्चेति वचनादिति भावः। एवं च समुदायघटका भागाः स्वातन्त्र्येणापि प्रयोगार्हा अर्थवन्तो गृह्यन्त इति तात्पर्यम् ॥ उपलक्षणत्वेन व्याख्याने बीजमाह—यस्मादिति ॥ अश्वक्रीतीति । सुबन्तेन समासे त्वन्तरङ्गत्वाट्टापि ङीबेव न स्यादित्यर्थः ॥

( समाधानबाधकभाष्यम् )

**सुप्तिङ्समुदायस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) देवदत्तो ग्रामं गत इत्यादेः सुबन्तसमुदायस्यैव वाक्यस्य नियमेन निवृत्तिः स्यादित्यभिप्रायेणाह—सुप्तिङ्समुदायस्येति ॥

( उद्योतः ) सुबन्तानामित्यस्योपलक्षणत्वमजानानश्चोदयतीत्याह—देवदत्त इति ॥

( समाधानसाधकभाष्यम् )

**सुप्तिङ्समुदायस्यापि प्रातिपदिकसंज्ञा आरभ्यते—"जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चा-**

१ 'भवति' ॥ २ 'कश्चिद्' ॥ ३ 'ज्ञापनार्थः' ॥ ४ 'चावश्यं' ॥ ५ 'ज्ञापकार्थं' ॥ ६ 'समासा दृश्यन्ते' ॥

७ प्रत्ययः पर एवेति नियमार्थकादित्यर्थः । ( र. ना. )
८ सुबपेक्षयेति शेषः । ( र. ना. )

भिदधाति" इति । तन्नियमार्थं भविष्यति—एतस्यैव सुप्तिङ्समुदायस्य प्रातिपदिकसंज्ञा भवति, नान्यस्येति ।

( प्रदीपः ) जहि कर्मणेति । ननु समाससंज्ञेयं समासान्तोदात्तार्था । नैष दोषः, समासत्वादेव प्रातिपदिकत्वमिति तत्तुल्यजातीयताप्रतिपादनार्थमेतदुपन्यस्तम् ॥

( उद्द्योतः ) ननु सुप्तिङ्समुदायस्य प्रातिपदिकसंज्ञेत्ययुक्तं, तेनान्तोदात्तस्वरस्यापि सिद्ध्यर्थं समाससंज्ञाया एव विधानादिति शङ्कते—नन्विति ॥ समासत्वादेवेति । समासमूलकार्थवत्त्वादेव प्रातिपदिकत्वमिति सुप्तिङ्समुदायस्यापि समासतुल्यजातीयताप्रतिपादनाय जहिकर्मणेत्येतदुपन्यस्तमित्यर्थः ॥ एवं च भाष्ये प्रातिपदिकसंज्ञारभ्यत इत्यस्य तन्मूलभूता समाससंज्ञारभ्यत इत्यर्थ इति तात्पर्यम् ॥

( समाधानबाधकभाष्यम् )

तिङ्समुदायस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति॥[1]

( प्रदीपः ) तिङ्समुदायस्येति । पश्य धावतीत्यादि । ततश्च प्रातिपदिकान्तोदात्तत्वप्रसङ्गः ॥

( उद्द्योतः ) तिङन्तस्यासत्त्ववाचित्वेन संख्याकारकाद्यभावाद् विभक्त्यनुत्पत्तेः प्रातिपदिकत्वस्य फलाभावोत आह—ततश्चेति । समासस्येति । सूत्रं तु परमसर्वं इत्यादौ स्वाङ्गशिटामित्यादेः प्राप्तस्य बाधाय स्यादिति तात्पर्यम् ॥

( समाधानसाधकभाष्यम् )

तिङ्समुदायस्यापि प्रातिपदिकसंज्ञाऽऽरभ्यते "आख्यातमाख्यातेन क्रियासातत्ये" इति । तन्नियमार्थं भविष्यति—एतस्यैव तिङ्समुदायस्य प्रातिपदिकसंज्ञा भवति, नान्यस्येति ।

( प्रदीपः ) आख्यातमिति । ततश्च समासेन तुल्यजातीयानां सर्वेषां वाक्यानां नियमान्निवृत्तिः सिद्धेत्यर्थः ॥

( उद्द्योतः ) तुल्यजातीयानामिति । तत्त्वं च प्रयोगार्हस्वतन्त्रार्थवत्समुदायत्वेनेत्याहुः ॥ वार्तिकत्रयेणायमेवार्थ उपलक्ष्यत इति बोध्यम् ॥

( ६७३ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ अर्थवत्ता नोपपद्यते केवलेनावचनात् ॥ * ॥

( भाष्यम् ) अर्थवत्ता नोपपद्यते वृक्षशब्दस्य ॥ किं कारणम्? ॥ केवलेनावचनात् । न केवलेन वृक्षशब्देनार्थो गम्यते ॥ केन तर्हि? ॥ सप्रत्ययकेन ॥

( प्रदीपः ) अर्थवत्तेति । अर्थवत्ता संज्ञानिमित्तत्वेनेहोपात्ता सा च वाक्यस्यैव पदस्य वा केवलस्य लोके प्रयुज्यमानस्योपपद्यते, न तु प्रकृतिभागस्य, केवलस्य प्रयोगाभावाद्वर्णवदप्रवहार्यत्वात् ॥

( ६७४ आक्षेपबाधकवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ न वा प्रत्ययेन नित्यसंबन्धात् केवलस्याप्रयोगः ॥ * ॥

न वा एष दोषः ॥ किं कारणम्? ॥ प्रत्ययेन नित्यसंबन्धात् । नित्यसंबद्धावेतावर्थौ प्रकृतिः प्रत्यय इति । प्रत्ययेन नित्यसंबन्धात् केवलस्य प्रयोगो न भविष्यति ॥

( प्रदीपः ) नवेति । अन्यथासिद्धः केवलस्याप्रयोगः न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति नियमात् । अर्थवत्ता त्वन्वयव्यतिरेकाभ्यामस्त्येवेति भावः ॥

( उद्द्योतः ) प्रकृतिभागस्यार्थवत्त्वे किं केवलस्य प्रयोग आपाद्यते उत तत्र प्रमाणं नास्तीत्युच्यत इति विकल्पे नाद्य इत्याह—अन्यथेति ॥ द्वितीये आह—अर्थवत्ता त्विति ॥ भाष्ये—नित्यसंबन्धाविति ॥ मायेश्वरवदिति भावः ॥

( आक्षेपबाधकानुपपत्तिभाष्यम् )

अन्यद्भवान्पृष्टोऽन्यदाचष्टे । आम्रान् पृष्टः कोविदारानाचष्टे '*अर्थवत्ता नोपपद्यते केवलेनावचनाद्*' इति भवानस्माभिश्चोदितः केवलस्याप्रयोगे हेतुमाह ॥

( आक्षेपसाधकभाष्यम् )

एवं च किल नाम कृत्वा चोद्यते* समुदायस्यार्थे प्रयोगादवयवानामप्रसिद्धिः* इति ।

( उद्द्योतः ) अवयवानामप्रसिद्धिरिति । अवयवमात्रादर्थगत्यभावेनावयवानामर्थवत्त्वे हेतोरप्रसिद्धिरित्यर्थः ॥

( ६७५ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ सिद्धं त्वन्वयव्यतिरेकाभ्याम् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम्? । अन्वयाद्व्यतिरेकाच्च ॥

कोसावन्वयो व्यतिरेको वा? ।

इह वृक्ष इत्युक्ते कश्चिच्छब्दः श्रूयते वृक्षशब्दः अकारान्तः सकारश्च प्रत्ययः । अर्थोपि कश्चिद्गम्यते मूलस्कन्धफलपलाशवान् एकत्वं च । वृक्षावित्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी—सकारो हीयते औकार उपजायते वृक्षशब्द अकारान्तोन्वयी । अर्थोपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी—एकत्वं हीयते द्वित्वमुपजायते मूलस्कन्धफलपलाशवानन्वयी । ते मन्यामहे—यः शब्दो हीयते तस्यासावर्थो यो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ

१ ननु तिङ्समुदायस्य न प्रातिपदिकान्तोदात्तत्वं भविष्यति—तथाहि—फिष इत्यनेन समुदायस्यान्तोदात्तत्वे समासस्येति व्यर्थं सन्नियमार्थं भविष्यति समुदायस्य चेत्तर्हि समासस्यैवेति इति मते आह—समासस्येति सूत्रमित्यादि । ( र. ना. ) २ तथा च सार्थकत्वान्न नियमार्थं भविष्यतीति भावः । ( र. ना. )

३ 'स्याप्रयोगो भवि' ।

**उपजायते, यः शब्दोन्वयी तस्यासावर्थो योर्थोन्वयीति ॥**

( प्रदीपः ) **अन्वयव्यतिरेकाभ्यामिति । अन्वयो-** सुगमः, सति शब्देर्थावगमः । **व्यतिरेकः** शब्दाभावे तदर्थानवगमः ॥

( उद्द्योतः ) लोके केवलप्रकृत्यादेरप्रयोगेपि तान्त्रिककल्पिताव-न्वयव्यतिरेकौ दर्शयति—**इहेत्यादिना** । एवं कल्पितान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययविभागं तयोरर्थवत्त्वं च परिकल्प्य शास्त्रेन्वाख्यानमिति भावः ॥ अत एव पूर्वप्रश्नः—**कोसाविति** । लोकसिद्धत्वे हि प्रश्नासङ्गतिरिति बोध्यम् ॥

( समाधानबाधकभाष्यम् )

**विषम उपन्यासः । बहवो हि शब्दा एकार्था भवन्ति । तद्यथा—इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुसूल इति । एकश्च शब्दो बह्वर्थः । तद्यथा—अक्षाः पादा माषा इति ॥**

( प्रदीपः ) **विषम इति** । यद्येकः शब्द एकस्मिन्नर्थे नियतः स्यात् तत एतद्युज्यते[१] वक्तुम् यतस्त्वनियमः ततः प्रकृतेरेव सर्वे अर्थाः स्युः । यथा दधि मध्वग्निचिदिति । प्रत्ययस्तु क्वचिद्द्योतकः ॥ प्रत्ययस्यैव वा सर्वे अर्थाः स्युः इयानधुनेति यथा । प्रकृतिस्त्वर्थाभिधाने साहायकमात्रं कुर्यात्[२]॥

( उद्द्योतः ) अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्यययोरर्थवत्त्वोपपादनस्यानैकान्तिकत्वमिह भाष्योक्तं वैषम्यं, तथाहि ताभ्यां नार्थसिद्धिः । अध्यागच्छतीत्यादौ निपातेषु व्यभिचारात् । तत्सत्त्वेपि तदर्थाप्रतीतेः । तद्व्यतिरेकेप्यागच्छतीत्येतन्मात्रादर्थप्रतीतेश्च । एवं च प्रकृतिप्रत्ययान्यतरस्यैव सर्वार्थतास्तु अन्यतरस्य साधुत्वमात्रार्थकत्वमस्तु । अन्यायोनेकार्थत्वमिति त्वप्रयोजकमक्षादिषु दर्शनाद् बहुपर्यायदर्शनादन्यायोनेकशब्दत्वमिति वदिलाशयेन प्रकृतिप्रत्ययोरर्थवत्ताया अनैयत्यं दर्शयति—**यद्येक इति** ॥ **यतस्त्विति** । एवं चाक्षादिशब्दे तस्मिन्शब्दे सत्येव तदर्थाप्रतीतेरर्थान्तरप्रतीतेः यत्रायस्थले तस्मिन् शब्देऽसत्यपि तदर्थप्रतीतेश्चेदृशावन्वयव्यतिरेकावनिर्णायकाविति भावः ॥ यदि प्रकृतिरेव संख्यावाचिका तर्हि क्वापि विभक्तिर्न प्रयुज्येतेत्यत आह—**प्रत्ययस्त्विति** । '**इदम इश्**' '**यस्येति**' लोपे इयान् अधुनेति । इदमोऽधुना प्रत्यय इति पक्षे इदम् ॥

( आशयजिज्ञासाभाष्यम् )

**अतः[३] किम् ॥ न साधीयोर्थवत्ता सिद्धा भवति ?[४] ॥**

( प्रदीपः ) **अतः किं न साधीय इति** । प्रकृतिः सर्वानर्थानभिदधाति । द्योतिकास्तु[५] विभक्तय इति सिद्धैवार्थवत्ता ॥

( उद्द्योतः ) शक्तिपुराशयं तद्वचसा ज्ञातुं पृच्छति—भाष्ये—**अतः किमिति** । उक्तेन बहवः शब्दा इत्यादिना ग्रन्थेन किं साधितं त्वयेति भावः । **न साधीय इति** ॥ तद्व्याचष्टे—**प्रकृतिरित्यादिना** । **सिद्धैवेति** । किं तु[६] विपरीतं प्राप्नोतीति भावः ॥

( आक्षेपाशयभाष्यम् )

**न ब्रूमः—अर्थवत्ता न सिध्यतीति । वर्णिता अर्थवत्तान्वयव्यतिरेकाभ्यामेव ।**

**तत्र कुत एतदयं प्रकृत्यर्थोयं प्रत्ययार्थ इति । न पुनः प्रकृतिरेवोभावर्थौ ब्रूयात् । प्रत्यय एव वा ? ॥**

( प्रदीपः ) **प्रत्यय एवेति** । ततश्च प्रकृतेरर्थवत्ता न सिध्यतीति तदवस्थो दोष इत्यर्थः ॥

( उद्द्योतः ) इतरः स्वाशयमाह—**न ब्रूम इति** ॥ तदेवाह—**न पुनरिति** ॥ अन्यतरद्द्योतकमिति भावः । तदाह—**तत्रेति** । एवं च प्रकृतेरर्थवत्त्वाभावात्संज्ञा न स्यादिति भावः ॥

( समाधानसाधकभाष्यम् )

**सामान्यशब्दा एते एवं स्युः । सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेष्ववतिष्ठन्ते । यतस्तु खलु नियोगतो वृक्ष इत्युक्ते स्वभावतः कस्मिंश्चिदर्थे प्रतीतिरुपजायते । अतो मन्यामहे—नेमे सामान्यशब्दा इति । न चेत्सामान्यशब्दाः, प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययः प्रत्ययार्थे ॥**

( प्रदीपः ) **सामान्यशब्दा इति** । प्रकृतिश्चेत्सर्वानर्थानभिदध्याद् वृक्ष इत्युक्ते सर्वा[७] संख्या प्रतीयेत । प्रत्ययो वा सर्वस्य प्रातिपदिकस्यार्थं प्रत्याययेदित्यर्थः ॥ **यतस्तु खल्विति** । प्रकरणादिना विनैवेति भावः ॥

( उद्द्योतः ) परिहरति—**सामान्यशब्दा इति** । एवं सत्येते सामान्यशब्दाः स्युस्तत्त्वं चैषां न दृश्यत इति भावः ॥ तदुपपादयति—**प्रकृतिश्चेदित्यादिना** । **वृक्ष इत्युक्ते** इत्यस्य प्रातिपदिकप्रयोगमात्रे तात्पर्यम् ॥ सामान्यशब्दाः कीदृशा इत्यत आह—भाष्ये—**सामान्यशब्दाश्चेति** । चो ह्यर्थे । **विशेषं**, विशेषबोधकपदान्तरसमभिव्याहारम् । एवं च प्रकरणादिसापेक्षतयाऽर्थप्रत्यायकत्वं सामान्यशब्दत्वमिति भावः ॥ एते तु नैवमित्याह—**यतस्त्विति** । त्वद्रीत्या हि प्रकृतिः स्वार्थं प्रत्ययार्थसामान्यं चाभिदधाति तत्र विना प्रकरणादिकं केवलस्वार्थस्य बोधः कथमपि न स्याद् । दृश्यते तु सः, संख्यादेश्च न सामान्यरूपेणापि बोधः । एवं प्रत्ययमात्राद् न कदापि प्रकृत्यर्थबोधः प्रकरणाद्यसत्त्वेपि च स्वार्थोपस्थितिः शास्त्रवासनावताम् । अतो नैषामुभयार्थवाचकत्वरूपं सामान्यशब्दत्वम्[८] । ततः किमित्याह—**न चेदित्यादि** । प्रत्य-

---

१ 'ज्येत' । २ प्रत्ययसमभिव्याहारस्थले इत्यर्थः । ( र. ना. ) ३ ततः । ४अस्माद् विषमोपन्यासाद् 'न साधीयोऽर्थवत्तासिद्धा भवति' इति भवतोऽभिप्रायः किमित्यर्थः । (र. ना.) ५ 'द्योतका' । ६ किन्तु अन्वयव्यतिरेकाभ्यामेवार्थवत्ता वर्णिता, तत्र सति कुत एतदित्याद्यन्वयः । ( र. ना. ) ७ 'सर्वसंख्या' । ८ 'रूपत्वम्' ।

यार्थे, तद्द्योत्यार्थे । पञ्चकं प्रातिपदिकार्थ इति मुख्यपक्षे तस्य द्योतकत्वाद् ॥

( वर्णानामर्थवत्त्वानर्थकत्वनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थकाः ।**

( उद्द्योतः ) वर्णवारणायार्थवद्ग्रहणमित्युक्तम् । तत्र वर्णानामानर्थक्यं इढं कर्तुं पृच्छति—भाष्ये—किं पुनरिति ॥

( ६७६ समाधानवार्तिकम् ॥ १० ॥ )

**॥ * ॥ वर्णस्यार्थवदनर्थकत्वे उक्तम् ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ? । *अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः संघातार्थवत्त्वाच्च । संघातस्यैकार्थत्वात् सुबभावो वर्णात्* । *अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेर्वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनाद्* इति ॥**

( उद्द्योतः ) उक्तमिति । हयवरट्सूत्रे इति शेषः । अनर्थगतेरिति । अर्थानवगतेरित्यर्थः । संघातार्थवत्त्वाच्च वर्णानामर्थवत्त्वमन्यथानर्थकावयवकसमुदायोऽप्यर्थवान् न स्यादित्यर्थः ॥ नन्वर्थवत्त्वे प्रत्येकं सुप् स्यादत आह—संघातस्येति ॥ एकाजुद्विर्वचनन्यायेन न प्रत्येकं विभक्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**तत्रेदमपरिहृतम् *संघातार्थवत्त्वाच्च* इति ॥**

( समाधानभाष्यम् )

**तस्य परिहारः—**

( ६७७ समाधानवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ संघातार्थवत्त्वाचेति चेद् दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः ॥ * ॥**

( भाष्यम् ) **संघातार्थवत्त्वाचेति चेद् दृश्यते हि पुनरतदर्थे गुणेन गुणिनोऽर्थभावः ॥ तद्यथा—एकस्तन्तुस्त्वक्त्राणेऽसमर्थः, तत्समुदायश्च कम्बलः समर्थः । एकश्च तण्डुलः क्षुत्प्रतिघातेऽसमर्थः, तत्समुदायश्च वर्द्धितकं समर्थम् । एकश्च बल्वजो बन्धनेऽसमर्थः, तत्समुदायश्च रज्जुः समर्था भवति ॥**

( प्रदीपः ) **अतदर्थेनेति** । अतत्प्रयोजनेनेत्यर्थः ॥ **गुणेनेति** । अवयवेन ॥ स ह्यवयविन उपकारकत्वाद्गुणः । अवयवी तु **गुणी** । **अर्थभावः** प्रयोजनोत्पत्तिः ॥ **बल्वजस्तृणविशेषः** ॥

( उद्द्योतः ) अर्थशब्दस्याभिधेयपरत्वे दृष्टान्तासङ्गतिरत आह—अतत्प्रयोजनेति । यथा तत्रातत्प्रयोजनकानां समुदायस्तत्प्रयोजनस्तथेहानर्थकानां समुदायोऽर्थवानिति भावः ॥

( दृष्टान्तनिराकरणभाष्यम् )

**विषम उपन्यासः । भवति हि तत्र याचयावतीचार्थमात्रा । भवति हि कंचित्[३]प्रत्येकस्तन्तुस्त्वक्त्राणे समर्थः, एकश्च तण्डुलः क्षुत्प्रतिघाते समर्थः, एकश्च बल्वजो बन्धने समर्थः । इमे पुनर्वर्णा अत्यन्तमेवानर्थकाः ॥**

( प्रदीपः ) **याचयावतीचेति** । अयं समुदायः काचिदित्यस्यार्थे वर्तते ॥

( उद्द्योतः ) भाष्ये याचयावतीचार्थमात्रेति । काचित्प्रयोजननिष्पत्तिरित्यर्थः । तदुपपादयति—भवति हि कंचिदिति ॥

( दृष्टान्तान्तरभाष्यम् )

**यथा तर्हि रथाङ्गानि विहृतानि प्रत्येकं व्रजिक्रियां प्रत्यसमर्थानि भवन्ति तत्समुदायश्च रथः समर्थः । एवमेषां वर्णानां समुदाया अर्थवन्तः, अवयवा अनर्थका इति ॥**

( प्रदीपः ) **विहृतानीति** । विक्षिप्तानीत्यर्थः ॥

( उद्द्योतः ) **विक्षिप्तानीति** । विहरतिरिह पृथक्करणे वर्तत इति भावः ॥

( इति वर्णानामर्थवत्त्वनिरर्थकत्वनिर्णयः ॥ )

---

( अथानर्थकनिपातप्रातिपदिकसंज्ञासाधनम् )

( ६७८ आक्षेपवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ निपातस्यानर्थकस्य प्रातिपदिकत्वम् ॥ * ॥**

( भाष्यम् ) **निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या । खञ्जति । निखञ्जति । लम्बते । प्रलम्बते ॥**

( प्रदीपः ) **अनर्थकस्येति** । निपातानां द्योतकत्वादभिधेयार्थाभावेऽपि द्योत्यार्थसद्भावाद्येषामर्थवत्त्वं तेषां सिद्ध्यत्येव संज्ञा । यस्य तु द्योत्योऽप्यर्थो नास्ति तदर्थं वचनम् ॥

( उद्द्योतः ) अनर्थकस्येति विशेषणकृत्यमाह—निपातानामिति ॥

( आक्षेपप्रयोजनजिज्ञासाभाष्यम् )

**किं पुनरत्र प्रातिपदिकसंज्ञया प्रार्थ्यते ? ॥**

( प्रयोजनभाष्यम् )

**प्रातिपदिकादिति स्वाद्युत्पत्तिः । सुबन्तं पदमिति पदसंज्ञा । "पदस्य" "पदाद्" इति निघातो यथा स्यात् ॥**

---

१ 'कः समु' ॥ २ वर्धितकं परिमाणविशेषस्तत्परिच्छिन्न इत्यर्थः । (र. ना.)

३ 'किंचित्' ॥

(प्रदीपः) **निघातो यथा स्यादिति** । अर्थवदनर्थकयोरसत्यपि सामर्थ्ये संज्ञाविधानसामर्थ्यान्निघातो भवतीत्येके ॥ समानवाक्यतानिमित्तो निघातो न सामर्थ्यनिमित्तः सा चेहास्ति **आख्यातं साव्ययकारकविशेषणं वाक्यमिति** परिभाषणाद्वाक्यस्येत्यपरे ॥

(उद्द्योतः) ननु पदादित्यधिकृत्य विधीयमानस्य निघातस्य पदविधित्वात्समर्थपरिभाषोपस्थितेः प्रकृते सामर्थ्याभावात्तदप्राप्तिरत आह—**अर्थवदनर्थकयोरिति । सामर्थ्ये** व्यपेक्षालक्षणे ॥ **सामर्थ्यादिति** । पदत्वसंपादकप्रातिपदिकसंज्ञाविधानसामर्थ्यादित्यर्थः ॥ **एके इति** । अत्रारुचिस्तु समर्थसूत्रे एकार्थीभावस्यैव ग्रहणेन निघातविधौ तदनुपस्थितिः । तदपवादस्य **समानवाक्ये निघाते**त्यस्य सत्वं चेति ॥ तदाह—**समानेति** ॥ **आख्यातमिति** । अत्र वाक्यलक्षणेऽर्थवत्त्वं न निविष्टमिति निरुअतीत्यादेरपि वाक्यत्वं बोध्यम् । एकतिङ्वाक्यमिति वक्तुं युक्तम् ॥

(प्रयोजननिराकरणभाष्यम्)

**नैतदस्ति प्रयोजनम् । सत्यामपि प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिर्न प्राप्नोति ॥ किं कारणम् ? । नहि प्रातिपदिकसंज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा ॥ किं तर्हि ? ॥ एकत्वादिष्वप्यर्थेषु स्वादयो विधीयन्ते । न चैषामेकत्वादयः सन्ति ॥**

(प्रदीपः) **नहीति** । स्वादिविधिवाक्यस्य संख्याविधिवाक्येनैकवाक्यत्वात् ॥

(प्रयोजनसाधकभाष्यम्)

**नैष दोषः । अविशेषेणोत्पद्यन्ते । उत्पन्नानां नियमः क्रियते ॥**

**अथ वा प्रकृतानर्थानपेक्ष्य नियमः ॥ के च प्रकृताः ? ॥ एकत्वादयः । एकस्मिन्नेवार्थे एकवचनं न द्वयोर्न बहुषु । द्वयोरेवार्थयोर्द्विवचनं नैकस्मिन्न बहुषु । बहुष्वेवार्थेषु बहुवचनं नैकस्मिन्न द्वयोरिति ॥**

**अथ वा आचार्यप्रवृत्तिर्ज्ञापयति—अनर्थकानामप्येतेषां भवत्यर्थवत्कृतम्-इति । यदयम् "अधिपरी अनर्थकौ" इत्यनर्थकयोर्गत्युपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्ति ॥**

(प्रदीपः) **अविशेषेणेति** । नानावाक्यताश्रयणात् । नियमाश्चार्थानां न प्रत्ययानामित्यनर्थकेभ्योऽपि ते भवन्ति ॥

**अथ वेति** । प्रत्ययनियमेऽपि दोषाभाव इत्यर्थः ॥ **अधिपरी इति** । क्रियायोगे गत्युपसर्गसंज्ञयोर्विधानादनर्थकयोः क्रियायोगाभावात्प्राप्तिरेव नास्तीति संज्ञाविधानं यथोक्तार्थस्य ज्ञापकं संपद्यते । आनर्थक्यं च निपातस्य धातुनिपातयोः साधारणार्थतयाऽधिकद्योत्यार्थाभावादुच्यते, न तु सर्वात्मनार्थाभावात् ॥

(उद्द्योतः) **नानावाक्येति** । स्वौजसित्यादेर्द्व्येकयोरित्यादेश्चेत्यर्थः । **अव्ययादाप्सुप** इति लिङ्गाद्वाक्यभेदोऽप्यभिमत इति भावः ॥ ननु प्रत्ययनियमे दोष एवेत्यत आह—**नियमाश्चार्थानामिति** । एकत्वे एकवचनमेवेति नियमो, न त्वेकत्व एवैकवचनमिति भावः ॥ एकवाक्यतापक्षेऽप्यौत्सर्गिकत्वात्सर्वविभक्त्येकवचनमित्यन्यत्रोक्तम् ॥

**संज्ञाविधानमिति** । तयोस्तद्विधानं च केवलं गत्युपसर्गसंज्ञाबाधनार्थमेवेति भावः । अनेन च ज्ञापकेन वार्तिकं प्रत्याख्यायते, विभक्त्युत्पत्तिस्तूक्तरीत्यैवेति बोध्यम् ॥ **न त्विति** । तथा च प्रयोगो व्यर्थः स्यादिति भावः ॥ एतेन ज्ञापकं शिथिलमिति ध्वनयति । धात्वर्थानुवादकत्वरूपस्यापि योगस्य ग्रहीतुं शक्यत्वादिति बोध्यम् । ध्वनितं चेदमधिपरी[इ]ति सूत्रे भाष्ये ॥

(इत्यनर्थकनिपातप्रातिपदिकसंज्ञासाधनम् ॥)

---

(अथाप्रत्यय इत्यत्र पर्युदासप्रसज्यप्रतिषेधविचारः)

(आक्षेपभाष्यम्)

**किं पुनरयं पर्युदासो यदन्यत्प्रत्ययादिति । आहोस्वित्प्रसज्यायं प्रतिषेधः—प्रत्ययो नेति ? ॥ कश्चात्र विशेषः ? ॥**

(६७९ पर्युदासबाधकवार्तिकम् ॥ १३ ॥)

## ॥ * ॥ अप्रत्यय इति चेत् तिबेकादेशे प्रतिषेधोऽन्तवत्त्वात् ॥ * ॥

(भाष्यम्) **अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधो वक्तव्यः । काण्डे कुड्ये । किं कारणम् ? ॥ अन्तवत्त्वात् ॥ तिबतिपोरेकादेशः अतिपोन्तवत्स्यात् । अस्त्यन्यत्तिप इति कृत्वा प्रातिपदिकसंज्ञा प्राप्नोति ॥**

(प्रदीपः) **तिबेकादेश इति** । तिपस्तिशब्दादारभ्य सुपः पकारेण प्रत्याहारः ॥ **अन्तवत्त्वादिति** । पूर्वस्य प्रत्ययसंदशस्य प्रातिपदिकसंज्ञा कार्यमिति पूर्वं प्रत्यन्तवद्भावः ॥

(उद्द्योतः) **अन्तवद्भाव इति** ॥ तस्य हि पर्युदासे शाब्दकार्यलाभ इति तस्यैव प्रवृत्तिर्न त्वादिवत्त्वस्येति भावः ॥ भाष्ये—**अस्त्यन्यत्तिप इति** । अतिप्प्रातिपदिकमिति न्यासाश्रयेणेदम् । एवं चोत्तरत्र तद्धितग्रहणं न कार्यमिति लाघवम् । पञ्चनावप्रिय इत्यत्र पञ्चनावेत्यस्य प्रातिपदिकत्वेऽपि न क्षतिः, टजन्तस्योपसर्जनत्वेन ङीपोऽप्राप्तेः, सुबपि समासे संख्याभावान्न, प्रकृते संख्याया उक्तत्वाच्च ॥ वस्तुतः प्रशस्तार्थवत्त्वाभावात्प्रातिपदिकत्वाप्राप्तिरेव ॥ एतेन टाप् स्यादित्युक्तिः परास्ता ॥ **काण्डे** इत्यत्र च प्रातिपदिकत्वे ह्रस्वापत्तिर्दोष इति बोध्यम् ॥ एवमोजायत इत्यत्रापि ह्रस्वापत्तिः । अत एव तिप्ग्रहणं चरितार्थम् ॥

---

१ वाक्यस्येत्यनेन संबन्धः । (र. ना.) २ 'एष इति' एकत्वाद्यभावप्रयुक्तस्वादिविभक्त्यप्राप्तिरूप इत्यर्थः । ३ निपातस्यानर्थकस्येतीत्यादिः । (र. ना.) ४ क्रियायोगस्येत्यर्थः । (र. ना.) ५ अप्रत्यय इत्यस्य नञिवयुक्तन्यायात्प्रत्ययभिन्नं प्रत्ययसदृशश्चार्थः । सादृश्यश्चार्थवत्त्वादिना । (र. ना.) ६ अप्रत्यय इत्यत्र पर्युदासेऽन्त वत्त्वस्य प्रातिपदिकसंज्ञारूपशाब्दकार्यलाभ इति योजना । (र. ना.) ७ 'भाना' ॥ ८ पञ्चपदेनेत्यादिः । (र. ना.) ९ एतत्संज्ञाफलभूतेत्यादिरूपेत्यर्थः । (र. ना.)

( प्रसज्यप्रतिषेधाभ्युपगमभाष्यम् )

**अस्तु तर्हि प्रसज्यप्रतिषेधः—प्रत्ययो नेति ॥**

( ६८० प्रसज्यप्रतिषेधबाधकवार्तिकम् ॥ १४ ॥ )

**॥ * ॥ न प्रत्यय इति चेदूङेकादेशे प्रतिषेध आदिवत्त्वात् ॥ * ॥**

**( भाष्यम् ) न प्रत्यय इति चेदूङेकादेशे प्रतिषेधः प्राप्नोति । ब्रह्मबन्धूः ॥ किं कारणम् ? । आदिवत्त्वात् । प्रत्ययाप्रत्यययोरेकादेशः प्रत्ययस्यादिमत्स्यात् । तत्र प्रत्ययो नेति प्रतिषेधः प्राप्नोति ॥ किं पुनरत्र प्रातिपदिकसंज्ञया प्रार्थ्यते ? । प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यात् ॥**

**( प्रदीपः ) आदिवत्त्वादिति** । परकार्ये प्रतिषेधे कर्तव्ये परं प्रत्येकादेशस्यादिवद्भावः ॥

**( उद्द्योतः ) परकार्ये इति** । आदिवत्त्वस्य हि प्रतिषेधरूपं शाब्दं फलमिति भावः । न चादिवद्भावेन ऊ इत्यस्य प्रत्ययत्वेऽपि यतो विहितस्तदादित्वाभावात् कथं निषेधः, पूर्वान्तवद्भावेन तु तदादित्वं दुर्लभमुभयत आश्रयणे तन्निषेधादिति वाच्यम् । ध्वान्ते 'समुदाये दृष्टाः शब्दा' इति न्यायेनैकदेशविकृतन्यायेन च ऊङ्प्रकृतित्वारोपादक्षतेः ॥

( समाधानभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—उत्पद्यन्ते ऊङन्तात्स्वादय—इति । यदयं "नोङ्धात्वोः" इति विभक्तिस्वरस्य प्रतिषेधं शास्ति ॥**

**अथ वा द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसंज्ञा तयान्तवद्भावात्स्वाद्युत्पत्तिर्भविष्यति ॥**

**( प्रदीपः ) यदयमिति** । अथ वा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्वादय उत्पद्यन्ते ॥

**द्वे इति** । तत्रान्तरङ्गत्वात्प्रत्ययोत्पत्तेः प्रागेव ब्रह्मबन्धुशब्दस्य प्रवृत्ता प्रादिपदिकसंज्ञेत्यूङेकादेशस्य पूर्वं प्रत्यन्तवद्भावादस्त्येव प्रातिपदिकत्वमिति न कश्चिद्दोषः ॥

**( उद्द्योतः ) भाष्ये द्वे हीति** । तत्रावयवस्य सिद्धा समुदायस्य प्रार्थ्यमानेति भावः ॥

**तत्रान्तरङ्गत्वादिति** [1] प्रथमप्रवृत्तिकत्वमत्रान्तरङ्गत्वम्, उपदेशप्राप्तायाः[3] समुदायनिष्ठाया एव हि प्रत्ययान्तत्वेन निषेध इति बोध्यम् ॥ भाष्ये—**अन्तवद्भावादिति** । एकदेशविकृतन्यायस्याप्युपलक्षणम् ॥ न चैवं काण्डे इत्यत्र दोषः, अग्रे भाष्य एव वक्ष्यमाणत्वात् ॥

( ६८१ द्वितीयाक्षेपवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ सुब्लोपे च प्रत्ययलक्षणत्वात् ॥ * ॥**

**( भाष्यम् ) सुब्लोपे च प्रत्ययलक्षणेन प्रतिषेधः प्राप्नोति ॥ राजा । तक्षा । प्रत्ययलक्षणेन प्रत्ययो नेति प्रतिषेधः प्राप्नोति ॥**

**( प्रदीपः ) राजेति** । तत्र नलोपो न स्यात् । अत्राप्यन्तरङ्गत्वात्पूर्वमेव प्रवृत्ता प्रातिपदिकसंज्ञा बहिरङ्गेण प्रतिषेधेन न शक्यते निवर्तयितुमिति परिहारोऽस्ति ॥

**( उद्द्योतः ) अत्रापीति** । अत्रेदं चिन्त्यम्—नायं दोषः कार्यकालपक्षे, व्यवस्थितयोः पक्षयोरेकेन लक्ष्ये सिद्धे पक्षान्तरेण दोषशङ्काया अनौचित्यात् । ध्वनितं चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये । अत एव पर्युदासपक्षे नायं दोषः शङ्कितोऽत्र भाष्ये, तसाद्यथोद्देशेऽपि न सिध्यतीति भाष्याशयः । न च कैयटोक्तयुक्त्या सिध्यतीति वाच्यम् । लुगादिनैव प्रतिषेधेन जातनिवृत्तिरपीति भाष्याशयात् । भुक्तवन्तं प्रतीति न्यायस्यापि लुगादिशास्त्र इवात्रापि त्याग इति भावः । अत एव ज्ञापकेन परिहरति—**नैष इति** । यदि त्वनेन ज्ञापकेन जातनिवृत्त्यभाव एवान्वाख्यायते, लुगादिनाप्युत्पत्तिरेवोच्यते, अवयवलोपशास्त्रैरपि तत्तदवयवरहितस्यैव तत्तद्विषये प्रत्ययत्वादि बोध्यते, इत्युच्यते तदास्तु इत्याहुः ॥

( समाधानभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—न प्रत्ययलक्षणेन प्रतिषेधो भवतीति । यदयं—"न ङिसंबुद्ध्योः" इति प्रतिषेधं शास्ति ॥**

**( प्रदीपः ) न ङिसंबुद्ध्योरिति** । ननु हे सुराजन्निति समासप्रातिपदिकसंज्ञार्थः प्रतिषेधः स्यात् । न चोत्तरप्राप्तेरप्रत्यय इति प्रतिषेधः, मध्येऽपवादा इति न्यायात् । एवं तर्हि समासेऽप्यप्रत्यय इति वर्तते । अन्यथा सुराजाऽतिराजेत्यादौ विध्यर्थतायां संभवन्त्यां नियमार्थं समासग्रहणं न स्यात् ॥

**( उद्द्योतः ) ननु हे इति** । समासग्रहणं विध्यर्थमिति शङ्काशयः । सुराजन् शब्दे न पूजनादिति समासान्तनिषेधः ॥ **एवं तर्हीति** । प्रत्याख्याने तु तद्धितनियमांशे बाध्यसामान्यचिन्ताश्रयणीयेति भावः । पर्युदासेऽपि ज्ञापकाश्रयणमावश्यकम् । न च स्वाश्रयाप्रत्ययान्तत्वात्सिद्धिः, अतिदिश्यमानविरुद्धस्वाश्रयकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । अत एव तण्डुलानित्यादेर्न प्रातिपदिकत्वमिति न नलोपस्तत्र । इदं चासिद्धवत्सूत्रभाष्यकैयटयोः स्पष्टम् ॥ सिद्धान्ते तु समासांशे तदनुवृत्तेः फलं चिन्त्यम् ॥

( पर्युदासेऽपि दोषोद्धारभाष्यम् )

**अथ वा पुनरस्तु पर्युदासः ॥**

( दोषस्मरणभाष्यम् )

**ननु चोक्तम् * 'अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधोन्तवत्त्वाद्' * इति ॥**

( दोषसाम्यप्रतिपादनभाष्यम् )

**प्रसज्यप्रतिषेधेऽप्येष दोषः ॥ द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि । गृह्यते च**

---

१ प्रकृतेः परस्य प्रत्ययस्य कार्ये प्रतिषेधरूपे कर्तव्ये एकादेशस्य परमत्वादिवद्भाव इत्यन्वयः । ( र. ना. ) २ 'सिद्धान्ते' इति पाठस्तु केनचिद्विद्वद्वरेण शोधितः ॥ ३ नत्वन्तवत्त्वातिदेशमात्राया अपीति भावः । (र.ना.) ४ 'निषेधे' । ५ 'सत्यां' । ६ पर्युदासपक्षे समासांशेऽप्रत्ययानुवृत्तेः फलं चिन्त्यमित्यर्थः ।(र.ना.)

प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन। तस्मादुभाभ्यामपि वक्तव्यं स्यात्—ह्रस्वो नपुंसके यत्तस्येति ॥ किं च नपुंसके ? ॥ नपुंसकं यस्य गुणः ॥ कस्य नपुंसकं गुणः ? ॥ प्रातिपदिकस्य ॥ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४५ ॥

( प्रदीपः ) यत्तस्येति । विभक्त्यन्तं च शक्ति[प्रधानं] संख्याप्रधानं च, न च तयोर्लिङ्गयोगः । न वान्तवद्भावेनार्थः शक्योऽतिदेष्टुमिति न भवति ह्रस्वः ॥ अथ वा नपुंसकत्वं प्रातिपदिकार्थस्यैव संभवतीति प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थमित्यन्तवद्भावेन यत्प्रातिपदिकं तस्य ह्रस्वाभावः ॥ अत्र च सूत्रे यदव्युत्पन्नमर्थवत्तदुदाहरणम् । व्युत्पत्तौ तु कृदन्तत्वादेव सिध्यतीति पृथगस्यारम्भोऽनर्थकः स्यात् । अव्युत्पत्तिपक्षस्य चेदमेव सूत्रं ज्ञापकमित्याहुः ॥ ४५ ॥

( उद्योतः ) भाष्ये गृह्यते चेति । अन्तवत्त्वेनेति भावः ॥ संख्याप्रधानं चेति । काण्डे तिष्ठत इत्यादौ । तत्र च संख्याया एव स्वाश्रयसंबन्धेनान्वय इति भावः । तत्र संख्यायाः प्राधान्यं[1] चिन्त्यं, नहि तद्विशेष्यको बोधोऽनुभवसिद्धः ॥ शक्तेः प्राधान्यं[2] च संबन्धघटकतया बोध्यम् । प्रथमान्तस्यापि वारिणी तिष्ठत इत्यादौ क्रियाकारकभावेनैवान्वयाद्वारिकर्तृका स्थितिरित्यर्थेन संबन्धघटकशक्तेरेव प्राधान्यमिति बोध्यम् ॥ न च तयोरिति । तदर्थशक्तिसंख्ययोरित्यर्थः । यस्य ह्रस्वस्तस्य साक्षाद्यदा नपुंसकत्वं तदा ह्रस्वः, यस्य त्ववयवद्वारकं तस्य मा भूदित्येतदर्थं तस्येत्युक्तेरिति भावः ॥ भाष्ये—किं च नपुंसके इति । नपुंसकलिङ्गवदर्थे किमित्यर्थः ॥ यस्येति । यदर्थस्येत्यर्थः ॥ कस्येति । किंशब्दार्थस्येत्यर्थः ॥ प्रातिपदिकस्येत्यस्य सत्त्वप्रधानस्येत्यर्थः । एवं च प्रत्ययान्तपर्युदासो निषेधो वेत्युभयमपि व्यर्थम् । तत्फलं हि तत्र ह्रस्वव्यावृत्तिरेव, तस्यामन्यथा सिद्धायां तद्व्यर्थमेवेति भावः । फलान्तरं तु नास्त्येव, औत्सर्गिकैकवचनस्येष्टसिद्ध्यर्थं कान्विरकत्वेन तदर्थस्य संख्याकर्मायोगेन च सुबनापत्तेः । न च प्रत्ययान्तस्य प्रातिपदिकत्वे तदवयवसुपो लुगापत्तिः, विधिवैयर्थ्यापत्तेः । तस्माद्धातुसाहचर्याद् विभक्त्यतिरिक्तशब्दघटितप्रातिपदिकावयवस्यैव तेन लुगिति न दोषः । नापि फिट्स्वरप्राप्तिः, तत्तत्स्वराणां विशेषविहितानां बाधकत्वात्, प्रकृतिप्रत्ययविभागशून्येष्वेव फिट्स्वरप्रवृत्तेश्च । नापि पचेरन्नित्यादौ नलोपप्राप्तिः । रन्तादेशस्यैव[3] कर्तुं युक्तत्वात् । अन्यथा पर्युदासे ह्रस्ववारणेऽपि कार्यान्तराणामवारणादस्तु पर्युदास इति भाष्यासंगतेरिति दिक् ॥ यथान्यासेऽप्याह—अथ वेति । वस्तुतो यथान्यासेऽपि नपुंसकलिङ्गवदर्थे[4] विशेष्यतया वर्तमानस्येत्यर्थः । न चेदं तथेति अयं प्रयासो व्यर्थ एवेति दिक् ॥ यत्तस्येत्यनेनायमेवार्थो बोध्यत इति बोध्यम् ॥ आहुरिति । अत्रारुचिबीजं बहुपटव इत्याद्यर्थं व्युत्पत्तिपक्षेऽपि सूत्रमावश्यकमिति । इदं च बहु-

1 स्वाश्रयप्रतियोगकत्वघटितसंबन्धेन क्रियाकारकभावेन संख्यायाः स्थित्यादिक्रियायामन्वय इति प्रकृत्यर्थेऽविशेषणत्वात्प्राधान्यं संख्याया इति । ( र. ना. ) 2 कर्तृत्वादिरूपकारकशक्तेः संसर्गघटकतास्वीकारेण प्रकारत्वाभावरूपं प्राधान्यमेवेत्यर्थः । ( र. ना. ) 3 'झस्य रन्' इति सूत्रेऽपि संयोगान्तलोपेन तकारो न श्रूयते इति भावः ॥ 4 नपुंसकलिङ्गवदर्थनिरूपिता या विशेष्यता तद्विशिष्टशक्त्यादिवृत्तिमत इत्यर्थः । ( र. ना. )

ज्विधायके कैयटे स्पष्टम् ॥ अव्युत्पत्तिपक्षज्ञापकं त्वतः कृकमिकंसेति सूत्रे कंसग्रहणमिति बोध्यम् । अस्यापि ज्ञापकत्वमूलकृत्सूत्रे उपपादितम् ॥ ४५ ॥

( ९८ प्रातिपदिकसंज्ञासूत्रम् ॥ १ । २ । २ । आ. २ सूत्रम् )

## १२० कृत्तद्धितसमासाश्च ॥१।२।४६॥

( आक्षेपभाष्यम् )

**समासग्रहणं किमर्थम् ? ॥**

( ६८२ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ समासग्रहणं उक्तम् ॥ * ॥**

( भाष्यम् ) किमुक्तम् ? । * अर्थवत्समुदायानां समासग्रहणं नियमार्थम् * इति ॥ कृत्तद्धित ॥४६॥

( उद्योतः ) कृत्तद्धित ॥ ४६ ॥ अर्थवत्समुदायानामिति ॥ लोकेऽर्थबोधकतया पृथक्प्रयुज्यमानानां यः समुदाय इत्यर्थः ॥ ४६ ॥

( ९९ ह्रस्वविधिसूत्रम् ॥ १ । २ । २ आ० ३ सूत्रम् )

## १२१ ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ १ । २ । ४७ ॥

( प्रातिपदिकपदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**प्रातिपदिकग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) ह्रस्वो नपुंसके ॥ ४७ ॥ प्रातिपदिकग्रहणमिति । नपुंसकलिङ्गं द्रव्यस्यैव संभवति । द्रव्यवाचित्वं तु प्रातिपदिकस्यैव, न[6] तु सुबन्तस्य शक्तिप्रधानत्वात्, नापि तिङन्तस्य क्रियाप्रधानत्वादिति प्रश्नः ॥

( उद्योतः ) ह्रस्वो नपुंसके ॥ ४७ ॥ शक्तिप्रधानत्वादिति । तिङभिहितकर्तृशक्तिबोधकत्वेन प्रथमाया अपि शक्तिप्रधानत्वमित्याशयः ॥

( ६८३ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं तिङ्निवृत्त्यर्थम्[7] ॥ * ॥**

( भाष्यम् ) नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं क्रियते । तिङ्निवृत्त्यर्थम् । तिबन्तस्य ह्रस्वत्वं मा भूत् काण्डे कुड्ये । रमते ब्राह्मणकुलमिति ॥

5 नियमेति ॥ तदाकारश्च—

यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः ।
स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत् ॥ इति ।

6 'न सुबन्तस्य' ॥ 7 तिपः तिशब्दमारभ्य सुपः पकारेण प्रत्याहारोऽत्र तिबिति । ( र. ना. )

( प्रदीपः ) काण्डे इति । द्वयोरपि शक्तिशक्तिमतोरभिधानादस्ति नपुंसकार्थवृत्तित्वं सुबन्तस्यापीति भावः ॥ रमते ब्राह्मणकुलमिति । यथैव साधनाश्रयां संख्यामाख्यातमुपादत्ते तथा तल्लिङ्गमपि ॥

( उद्द्योतः ) द्वयोरपीति । समुदायेनेति शेषः । काण्डस्य विशेषणतया प्रविष्टत्वादिति भावः ॥ साधनेति । साधनगतां संख्यामाख्यातं तदर्थः क्रिया यथोपादत्ते तदुपादानेन यथा संख्यावती तथा तद्गतलिङ्गोपादानेन लिङ्गवत्यपि स्यादित्यर्थः । कारकगता संख्या आरोपेण क्रियायामेव बोध्यते तिङादिभिरिति स्पष्टं ङ्याप्प्रातिपदिकादिति सूत्रे भाष्यकैयटयोः ॥

( ६८४ आक्षेपवार्तिकम् ॥ २ ॥ )

॥ ❀ ॥ अव्ययप्रतिषेधः ॥ ❀ ॥

(भाष्यम्) अव्ययानां प्रतिषेधो वक्तव्यः[2] । इह मा भूत्—दोषा ब्राह्मणकुलं दिवा ब्राह्मणकुलमिति ॥

( प्रदीपः ) अव्ययप्रतिषेध इति । यथोपवर्णितन्यायेनाव्ययस्यापि लिङ्गयोगात्प्राप्तिः ॥ दोषा ब्राह्मणकुलमिति । दोषासहचरितत्वाद्ब्राह्मणकुलमेव दोषाशब्देनोच्यत इति ह्रस्वप्रसङ्गः ॥

( उद्द्योतः ) अलिङ्गासंख्यस्याव्ययत्वादाह—यथेति । तिङन्तविषयोपवर्णितेत्यर्थः । यथा तत्र साधनसंबन्धेन तद्धर्मग्रहणं तथाऽत्र सामानाधिकरण्यात्स्यादिति भावः ॥ वैयधिकरण्येन दोषाशब्दे नपुंसकत्वाभिव्यक्त्यभावादाह—दोषासहेति । दोषाशब्दो लाक्षणिक इत्यभिमानः ॥

( तटस्थाक्षेपभाष्यम् )

स तर्हि वक्तव्यः ॥

( आक्षेपप्रयोजननिराकरणभाष्यम् )

न वक्तव्यः । नात्राव्ययं नपुंसके वर्तते ॥ किं तर्हि ? ॥ अधिकरणमत्राव्ययं नपुंसकस्य ॥

(प्रदीपः) नात्राव्ययमिति । दोषाशब्दो रात्रावित्यत्रार्थे वर्तते दिवाशब्दोऽप्यहनीत्यत्रेति ब्राह्मणकुलसाधनानां क्रियाणामधिकरणं कालो भवन्ब्राह्मणकुलस्याधिकरणं भवति—दोषा दृश्यते चरत्यधीते वेति । आधेयव्यवधानेनाधिकरणस्य क्रियाधारणात् ॥

( उद्द्योतः ) इत्यत्रार्थे इति । शब्दशक्तिस्वभावादिति भावः ॥ ननु कारकं क्रियाया न द्रव्यस्येति कथं नपुंसकस्याधिकरणमित्युक्तिरत आह । ब्राह्मणकुलसाधनानामिति ॥ तत्रोपपत्तिमाह—आधेयेति ॥

( प्रयोजनान्तरभाष्यम् )

इह तर्हि प्राप्नोति काण्डीभूतं वृषलकुलं कुड्यीभूतं वृषलकुलमिति ।

( प्रदीपः ) काण्डीभूतमिति । प्रकृतिविकारयोरभेदविवक्षायां च्विप्रत्ययः । द्वयोरप्यत्र तयोर्नपुंसकत्वाद् ह्रस्वप्रसङ्गः ॥ कृते ह्रस्वत्वे च्वौ चेति दीर्घो भविष्यतीति चेत् । ह्रस्वस्य बहिरङ्गत्वाद्दीर्घे कर्तव्येऽसिद्धत्वाद्दीर्घाप्रसङ्गः ॥ एवं रमते इत्यत्रापि ह्रस्वे सति टेरेत्वस्याप्रसङ्गः ॥

(उद्द्योतः) बहिरङ्गत्वादिति । अर्थधर्मनपुंसकत्वाश्रयत्वादित्यर्थः । एवं च पूर्वं दीर्घे ततो ह्रस्वे लक्ष्ये लक्षणस्येतिन्यायेन पुनर्दीर्घाप्रसङ्ग इति भावः ॥ वस्तुतः समत्वेऽपि परत्वाद् च्वाविति दीर्घे ततो ह्रस्वे लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तिरिति बोध्यम् ॥

( ६८५ समाधानवार्तिकम् ॥ ३ ॥ )

॥ ❀ ॥ न वा लिङ्गाभावात् ॥ ❀ ॥

( भाष्यम् ) न वा वक्तव्यम् ॥ किं कारणम् ? ॥ लिङ्गाभावात् । अलिङ्गमव्ययम् ॥

( प्रदीपः ) न वेति । असत्त्ववाचित्वादव्ययस्य न तेन लिङ्गं प्रतिपाद्यत इत्यर्थः ॥

( उद्द्योतः ) असत्त्वेति । क्वचिल्लिङ्गवता सामानाधिकरण्येऽपि तस्य लिङ्गवत्तया स्वार्थबोधकत्वाभाव इति भावः ॥

( आक्षेपभाष्यम् )

किं पुनरयमव्ययस्यैव परिहारः आहोस्वित्तिबन्तस्यापि परिहारः ? ॥

( समाधानभाष्यम् )

तिबन्तस्यापीत्याह ॥ कथम् ? । अव्ययं हि किंचिद्विभक्त्यर्थप्रधानं किंचित्क्रियाप्रधानम्—उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्, हिरुक् पृथगिति क्रियाप्रधानम् । तिबन्तं चापि किंचिद्विभक्त्यर्थप्रधानं किंचित्क्रियाप्रधानम्—काण्डे कुड्ये इति विभक्त्यर्थप्रधानं रमते ब्राह्मणकुलमिति क्रियाप्रधानम् । न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोस्ति ॥ अवश्यं चैतदेवं विज्ञेयम् । क्रियमाणेऽपि हि प्रातिपदिकग्रहणे इह प्रसज्येत—काण्डे कुड्ये । द्वे ह्यत्र प्रातिपदिकसंज्ञे । अवयवस्यापि समुदायस्यापि । गृह्यते च प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन । तस्मादुभाभ्यामिति वक्तव्यं स्याद्—ह्रस्वो नपुंसके यत्तस्येति ॥ किं च नपुंसके ? ॥ नपुंसकं यस्य गुणः ॥ कस्य च नपुंसकं गुणः ? ॥ प्रातिपदिकस्य ॥

( प्रदीपः ) न चैतयोरिति । आख्यातस्य शक्त्याश्रयद्रव्यसंख्याप्रतिपादने सामर्थ्यं न तु तल्लिङ्गप्रतिपादने विचित्रत्वाद्भावशक्तीनाम् । काण्डे तिष्ठत इत्यत्रापि संख्यायाः प्राधान्यान्नपुंसकत्वायोगः ॥ अवश्यमिति । यद्यवयवधर्मेण समुदायो व्यपदिश्यते इत्यर्थः ॥ यत्तस्येति । साक्षात् तस्यैव

1 लिङ्गस्य काण्डनिरूपितविशेषणत्वेन शाब्दबोधविषयत्वादित्यर्थः । (र.ना.) २ 'वक्तव्यः । दोषा ब्रा०' ॥ ३ पूर्वत्र साधनस्य क्रियायां संबन्ध एव क्रियायाः साधनधर्मलिङ्गग्रहणे नियामकत्वेनोक्तः तथाऽत्र दोषापदार्थस्य ब्राह्मणकुललिङ्गग्रहणे सामानाधिकरण्यं नियामकं स्यादिति भावः । ( र. ना. ) ४ पूर्वपक्षिण इति शेषः । लक्षणामूलकसामानाधिकरण्यस्य 'नात्राव्ययं नपुंसके वर्तते' इत्यादिना भाष्ये खण्डयिष्यमाणत्वात् इति भावः । (र. ना.) ५ ब्राह्मणकुलं साधनं यासामिति बहुव्रीहिः । ( र. ना. ) ६ अर्थाश्रयबहिरङ्गत्वानङ्गीकारादाह—वस्तुत इति । ( र. ना. ) ७ कर्तृत्वादिरूपेत्यादिः । ( र. ना. ) ८ संख्यायाः स्वाश्रयप्रतियोगिकत्वघटितसंबन्धेन साक्षात्क्रियायामन्वयस्वीकारेण प्रकृत्यर्थेऽविशेषणत्वात् इति भावः । ( र. ना. ) ९ 'व्यपदिश्येतेत्यर्थः' ॥

यदा नपुंसकत्वं तदा ह्रस्वः । यस्य त्ववयवद्वारकं तस्य मा भूत् । अथ वा तस्यैवानुपजातव्यतिरेकस्येत्यर्थः । विभक्त्यन्तं चोप[1]जातव्यतिरेकमिति ह्रस्वाभावः । सूत्रकारेण तु प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थं कृतं प्रातिपदिकस्यैव नपुंसके वृत्तिसम्भवात् । तेनान्तवद्भावादतिदिष्ट[2]प्रातिपदिकत्वस्य ह्रस्वाभावः ॥

( उद्द्योतः ) किञ्चिदित्यादि । नैतावता द्विविधमेवाव्ययमिति भ्रमितव्यम् । उभयातिरिक्तस्यापि चाव्य[3]यस्य सत्त्वात् ॥ हिरुगादेः क्रियाप्रधानत्वं क्रियामात्रविशेषणत्वेन । काण्डीभूतमित्यत्राप्येतदेव । स्वभावाच्च तादृशस्य लिङ्गाद्ययोगः ॥ न चैतयोरिति । प्रायेणेति शेषः । तत्राव्ययार्थस्य काण्डे इत्यादेश्चोभयायोगः, रमते इत्यादेर्लिङ्गायोग इति बोध्यम् । अन्य[4]था हतशायिकाः शय्यन्त इत्यादौ पचतिरूपमित्यादौ च ताभ्यां योगेन भाष्यासंगतिः स्यात् ॥ **भावशक्तीति** । पदार्थशक्तीत्यर्थः ॥ **विचित्रत्वादित्यनेनेदं** सूचयति पचतिरूपमित्यादौ भवत्येव, पचतकीत्यादौ च नेति ॥ **काण्डे तिष्ठत इति** । प्रथमायाः प्राति[5]पदिकार्थे विधानाद्विभक्त्यर्थाप्रधानत्वेनास्त्येव लिङ्गयोग इति स्यादेव ह्रस्वत्वमित्यभिमानः ॥ समाधत्ते—**संख्याया इति** । विभक्त्या संख्याया लिङ्गवत्त्वेनाप्रतिपादनं भावशक्तेर्वैचित्र्यादिति भावः । अत्र **संख्याया** इति शक्तेरुपलक्षणं संख्यायाः प्राधान्यासंभवात् ॥ प्रथमास्थलेऽपि यथा शक्तिरस्ति तथोक्तम् ॥ भाष्ये—**ऽवश्यं चैतदेवमिति** । **एतत्** तिबन्तमलिङ्गमित्यवश्यं स्वीकार्यमित्यर्थः ॥ समुदायस्याप्युक्तं प्रातिपदिकत्वमुपपादयति—**गृह्यते च प्रातिपदिकेत्यादिना** ॥ **अवयवधर्मेणेति** । अवयवभूतप्रकृत्यर्थधर्मेणेत्यर्थः ॥ **समुदायः** । प्रत्ययान्तः । यद्यवयवधर्मेण समुदायस्य व्यपदेशस्तदा प्रातिपदिकग्रहणे क्रियमाणेऽप्येतदवश्यं वाच्यमिति भाष्यार्थ इति भावः ॥ भाष्ये—**उभाभ्यामपि वक्तव्यमिति** । एवमर्थकतया सूत्रं व्याख्येयमित्यर्थः ॥ अवयवद्वारा समुदायस्यापि नपुंसके वृत्तिसम्भवात्कथमनेन परिहारोऽत आह—**साक्षादिति** ॥ **तस्यैव** । तज्जन्यबोधविशेष्यस्य ॥ **अनुपजातव्यतिरेकस्य** । अनुपजातसंबन्धस्य, अनुपजातेतराकाङ्क्षस्येति यावत् । अनेन सत्त्वप्रधानत्वमुपलक्षितम् ॥ **सूत्रकारेण त्विति** । अवयवद्वारकमपि नपुंसकवृत्तित्वं गृह्यत इति तदाशयः । अत्र यद्वक्तव्यं तदुक्तम् । यदर्थस्य शास्त्रे नपुंसकं गुणः प्रसिद्धस्तस्य नपुंसके वर्तमानस्य ह्रस्व इति भाष्यार्थः ॥

( अनिष्टनिवारणाधिकरणम् )

( ६८६ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥*॥ य[6]ञेकादेशदीर्घैत्त्वेषु प्रतिषेधः ॥*॥**

( भाष्यम् ) **यञेकादेशदीर्घैत्त्वेषु प्रतिषेधो वक्तव्यः । युगवरत्राय । युगवरत्रार्थम् । युगवरत्रेभ्यः ॥**

( प्रदीपः ) **युगवरत्रायेति** । दीर्घे कृते पुनर्ह्रस्वः पुनर्दीर्घ इति चक्रकप्रसङ्गः ॥ ४७ ॥

( उद्द्योतः ) [ चक्रक[7]प्रसङ्ग इति । लक्ष्ये लक्षणस्येति न्यायमनालोच्येदम् ॥ ]

( ६८७ समाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ यञेकादेशदीर्घैत्त्वेषु बहिरङ्गलक्षणत्वात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **बहिरङ्गा एते विधयः । अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥**

( उद्द्योतः ) भाष्ये—अन्तरङ्गं ह्रस्वत्वमिति । एवं च ह्रस्वत्वे कृते दीर्घप्रवृत्तेर्लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तिरित्यर्थः ॥ ४७ ॥

( ६८८ प्रागुक्ताक्षेपसमाधानानुकर्षवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ [9]उपसर्जनह्रस्वत्वे च ॥ * ॥**

( भाष्यम् ) **किम् ? । *यञेकादेशदीर्घैत्त्वेषु प्रतिषेधो वक्तव्यः* ॥ अतिखट्वाय । अतिखट्वार्थम् । अतिखट्वेभ्यः ॥ *[8]बहिरङ्गलक्षणत्वात्सिद्धम्* इत्येव । बहिरङ्गा एते विधयः । अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥ ह्रस्वो नपुंसके ॥ ४७ ॥**

—»o«—

( १०० ह्रस्वविधिसूत्रम् ॥ १ । २ । २ आ० ४ सू० )

## १२२ गोस्त्रियोरुपसर्जनस्य ॥ १।२।४८॥

( न्यासान्तरनिराकरणाधिकरणम् )

( ६८९ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम् ॥ * ॥**

( भाष्यम् ) **गोटाङ्ग्रहणं कर्तव्यम् ॥ किमिदं टाङिति? ॥ प्रत्याहारग्रहणम् ॥ क संनिविष्टानां प्रत्याहारः ? ॥ टापः प्रभृत्या ष्यङो ङकारात् ॥ किं प्रयोजनम् ? । कृन्निवृत्त्यर्थम् । कृत्स्त्रिया धातुस्त्रि-**

---

१ प्रातिपदिकार्थमात्रं सामान्यमित्यनुपजातभेदम्, विभक्त्यर्थविशिष्टस्तु प्रातिपदिकार्थो विशेष इत्युपजातभेदस्तद्बोधकत्वाद्विभक्त्यन्तमुपजातव्यतिरेकमित्युच्यते । व्यतिरेको भेदः । उद्द्योतानुसारेण व्यतिरेकपदस्य संबन्धार्थकत्वेऽक्षरस्वारस्याभावः । ( र. ना. ) २ 'प्रातिपदिकस्य' । ३ चरूपस्याव्ययस्येत्यर्थः । ( र. ना. ) ४ प्रायेणेति शेषपूरणाभावे इत्यर्थः । ( र. ना. ) ५ विभक्त्यर्थविशिष्टस्वार्थस्य प्रातिपदिकार्थत्वमभिप्रेत्येदम् । ( र. ना. ) ६ यञि परतो विहिते दीर्घे एकादेशरूपे दीर्घे एत्त्वे च ह्रस्वस्य प्रतिषेधो वक्तव्य इत्यर्थः । समास आर्षः । ( र. ना. ) ७ अयं कोष्ठकान्तर्गतः पाठो यद्यपि सर्वेषु पुस्तकेषु सूत्रव्याख्यासमाप्तौ समुपलभ्यते, तथापि तत्रायोग्यत्वेन योग्यस्थानेऽस्माभिः स्थापितः ॥ ८ अयं वार्तिकतद्भाष्यग्रन्थो बहुषु पुस्तकेषु 'गोस्त्रियोः' इति सूत्रप्रतीकोत्तरमुपलभ्यते । तथाप्येकस्मिन् पुस्तके 'गोस्त्रियोः' इति प्रतीकतः प्रागेवोपलभ्यते इति तदनुसारेणैव बहुत्राग्रेऽप्येवमेवोपलभ्यमानत्वात् 'गोस्त्रियोः—' इति सूत्रतः प्रागेवास्माभिरपि स्थापित इति बोध्यम् ॥ ९ इतः पूर्वमपि *'उपसर्जनह्रस्वत्वे च* 'किम्' इति समाधानवार्तिकपाठो बहुत्र पुस्तकेषु समुपलभ्यते । परं तु तत्र चिरंतनलेखकप्रमादजत्वमन्तरा न कोपि हेतुः । चकारेणैकेनैवाक्षेपसमाधानवार्तिकयोरनुकर्षसंभवात् । पुनः पठितचकारेणैव समाधानवार्तिकानुकर्षस्य व्यवहितत्वेनासंभवात् ॥

याश्च ह्रस्वत्वं मा भूदिति । अतितन्त्रीरतिश्रीरतिलक्ष्मीरिति ॥

(प्रदीपः) गोस्त्रियोरुपसर्जनस्य ॥४८॥ कृत्स्त्रियर्थमिति । धातुस्त्रिया अपि कृदन्तत्वाद्भेदेनानिर्देशः । भाष्यकारस्तु तदेव विभज्य व्याचष्टे—कृत्स्त्रिया धातुस्त्रिया चेति ॥

(उद्द्योतः) गोस्त्रियोरु० ॥ ४८ ॥ भाष्यवार्तिकयोर्विभज्य कथनाकथने हेतुमाह—धात्विति ॥

(तदस्याक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम् ॥**

(सिद्धान्तिसमाधानभाष्यम्)

**न वक्तव्यम् । स्त्रीग्रहणं स्वरयिष्यते । तत्र स्वरितेनाधिकारगतिर्भवति । "स्त्रियाम्" इत्येवं प्रकृत्य ये विहितास्तेषां ग्रहणं विज्ञास्यते स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति ॥**

(प्रदीपः) स्वरितेनेति । स्वरितेनाधिकार इति योगोनेकधा व्याख्यातः । ततश्च 'यत्र स्वरितत्वं प्रतिज्ञायते तत्र तदधिकारो गृह्यते' इत्ययमपि तस्यार्थः ॥ स्त्रियां क्तिन्नित्येतत्प्रकरणविहितानां तु ह्रस्वभावित्वाभावादग्रहणम् ॥

(उद्द्योतः) ननु स्वरितत्वे उत्तरत्रानुवृत्तिरेव स्यान्न तु तदधिकारस्थलाभोऽत आह—स्वरितेनेति ॥ ह्रस्वभावित्वाभावादिति । न चातिमतेरित्यादौ सम्भवः, गुणस्य वहिरङ्गत्वेनासिद्धत्वात् । किं च तद्ग्रहणेऽन्तरङ्गत्वात्पूर्वमेव ह्रस्वे ततो गुणे लक्ष्ये लक्षणस्येति न्यायेन पुनस्तत्प्रवृत्तौ फलाभाव इति भावः ॥

(आक्षेपभाष्यम्)

**यद्येवं प्रत्ययग्रहणमिदं भवति । तत्र 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवति' इतीह न प्राप्नोति—अतिराजकुमारिः, अतिसेनानीकुमारिरिति ॥**

(समाधानभाष्यम्)

**"अस्त्रीप्रत्ययेन" इत्येवं तत् ॥**

(प्रदीपः) अस्त्रीप्रत्ययेनेत्येवं तदिति । ननु ष्यङः सम्प्रसारणमित्यत्रातिकारीषगन्ध्यपुत्र इत्यत्र सम्प्रसारणाभावार्थमनुपसर्जनस्त्रीप्रत्ययविषयस्तदादिनियमप्रतिषेधः प्रदर्शित इत्युपसर्जनत्वादिह नियमेन भाव्यम् । नैष दोषः । क्वचिदुपसर्जनेऽपि तदादिनियमो न भविष्यति । हल्ङ्याब्भ्य इत्यत्र दीर्घग्रहणात् । अन्यथा निष्कौशाम्बिरतिखट्व इत्यादावुपसर्जनत्वादङ्याबन्तत्वात्सुलोपो न भविष्यतीति किं दीर्घग्रहणेन ॥ कथं तर्ह्यनुपसर्जनादित्यत्र कौम्भकारेयो न सिध्यतीत्युक्तं यावता कारशब्दादपि ङीपि कृते तदादिनियमाभावात् कुम्भकारीशब्दात् ढक् भविष्यति ॥ नैष दोषः । तदादिनियमाभावे कारीशब्दादपि कदाचित् ढक् स्यात् ॥

(उद्द्योतः) भाष्ये—अस्त्रीप्रत्ययेनेति । एवं च स्त्रीप्रत्यये तदादिनियमाभावाद् ह्रस्वसिद्धिरित्यर्थः ॥ अतिकारीषेति । कारीषगन्ध्यामतिक्रान्तस्य पुत्र इति विग्रहः ॥ अनुपसर्जनेति । एवं च ष्यङोऽतिक्रान्तार्थं प्रत्युपसर्जनत्वात्तदादिनियमेन पुत्रोत्तरपदकतत्पुरुषे ष्यङन्तस्यापूर्वपदत्वान्न संप्रसारणमित्यर्थः ॥ उपसर्जनत्वादिहेति । वस्तुतश्चिन्त्यमेतत् । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वं प्रार्थ्यते तदर्थं प्रत्ययं नु पसर्जनत्वेन तदादिनियमाप्रवृत्तौ दोषाभावात् ॥ किं दीर्घेति । हल्ङ्यादिसूत्रे हल्ङ्याब्भ्य इत्यस्य परविशेषणत्वेनावयवङ्यन्तात्परत्वेन ङ्यन्तान्तात्परत्वेन च निष्कौशाम्बिरित्यादौ सोर्लोपवारणार्थत्वाद्दीर्घग्रहणस्येदमपि चिन्त्यम् । विहितविशेषणे तु या सेत्यादावव्याप्तिः कर्तेत्यादावव्याप्तिश्च । अत्वादिविधौ विपयसप्तमी तु तस्मिन्निति शास्त्रबाधापत्त्या गमकाभावेन चायुक्तेति दिक् ॥ कारीशब्दादपीति । तथा च कुम्भशब्दे आदिवृद्धिर्न स्यादपीति भावः ॥

(अनिष्टह्रस्वापत्तिवारणाधिकरणम्)

(६९० आक्षेपवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ ईयसो बहुव्रीहौ पुंवद्वचनम् ॥ * ॥

(भाष्यम्) **ईयसो बहुव्रीहौ पुंवद्भावो वक्तव्यः । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी विद्यमानश्रेयसी ॥**

(प्रदीपः) पुंवद्वचनमिति । यथा पुंविषये ईकारः श्रूयते, न तु ह्रस्वत्वं प्रतिपद्यते तथेयसोपि पर इत्यर्थः ॥

(उद्द्योतः) ननु पुंवदतिदेशे स्त्रीप्रत्ययस्यापि निवृत्तिः स्यादत आह—यथेति । ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत् पुंसि यथा ययीरित्यादावीकारस्य श्रवणं तथा तत्र स्त्रीप्रत्ययभूतस्यापीत्येवं वचनव्यक्त्येति भावः ॥ अत एवात्रैवेदं कृतम्, अन्यथा पुंवद्भावप्रकरण एव वदेत् ॥ ईयसश्चेतिप्रतिषेधान्न कप् । नपुंसकह्रस्वत्वं तु भवत्येवात्र पाठात् । न च नेत्येव सिद्धे पुंवद्वचनं व्यर्थं, वार्तिकाक्षरेषु लाघवगौरवविचाराभावादित्याहुः ॥ अन्ये तु तस्याप्यभावं मन्यन्ते, अत एवोत्तरवार्तिके नपुंसकह्रस्वत्वस्यापि निषेध इति भ्रमव्यावृत्तये गोसमासनिवृत्त्यर्थमित्युक्तम् । अत एव च विग्रहे स इत्यादि न प्रयुक्तमित्याहुः । तत्र समासपदं रूयन्तसमासपरम्[3] ॥

(६९१ आक्षेपवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ पूर्वपदस्य च प्रतिषेधो गोसमासनिवृत्त्यर्थम् ॥ * ॥

(भाष्यम्) **पूर्वपदस्य च प्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम् ? ॥ गोसमासनिवृत्त्यर्थम् । गोनिवृत्त्यर्थं समासनिवृत्त्यर्थं च ॥ गोनिवृत्त्यर्थं तावत्—गोकुलं गोक्षीरं गोपालक इति ॥ समासनिवृत्त्यर्थम्—राजकुमारीपुत्रः सेनानीकुमारीपुत्र इति ।**

(प्रदीपः) गोकुलमिति । प्रथमानिर्दिष्टमिति गोशब्दस्योपसर्जनत्वम् ॥ राजकुमारीपुत्र इति । राजकुमारीशब्दः समासप्रातिपदिकम् ॥

१ श्रीप्रभृतेरिति शेषः । ( र. ना. ) २ अतिराजकुमारिरित्यत्र राजकुमारीशब्दस्य स्त्रीप्रत्ययान्तत्वं प्रार्थ्यते न च राजकुमारीशब्दार्थं प्रति स्त्रीप्रत्ययार्थस्योपसर्जनत्वमिति भावः । ( र. ना. ) ३ रूयन्तो यः समासस्तत्परमित्यर्थः । ( र. ना. ) ४ राजकुमारीसेनानीकुमारीशब्दयोरपीति बोध्यम् । ( र. ना. )

(उद्द्योतः) प्रथमेति । षष्ठीति प्रथमानिर्दिष्टत्वादित्यर्थः ॥ शास्त्रीयमिहोपसर्जनं न तु केवललौकिकमेवेति भावः । प्रत्ययलक्षणेनाप्रत्यय इति निषेधाप्रवृत्तेर्गोशब्दस्य प्रातिपदिकत्वमस्त्येव ॥ राजकुमारीशब्द इति । नन्वस्यानुपसर्जनत्वात्तदादिनियमाभावेन प्रत्ययान्तत्वात् कथं प्रातिपदिकत्वम् । न च समासत्वात्, समासग्रहणस्य नियमार्थत्वभङ्गापत्तेस्तत्राप्यप्रत्यय इत्यनुवृत्तेरुक्तत्वेन तेनापि दुर्लभत्वाच्चेति चेन्न । स्त्रीप्रत्ययविशेषस्य सामान्यस्य वा ग्रहणाभावेन तदप्रवृत्तेः ॥

(प्रत्याक्षेपभाष्यम्)

**किमुच्यते समासनिवृत्त्यर्थमिति न पुनरसमासोपि किंचित्पूर्वपदं यदर्थः प्रतिषेधः स्यात्? ॥**

(उद्द्योतः) भाष्ये—किमुच्यत इति । गोस्त्रीनिवृत्त्यर्थमित्येव वक्तुं युक्तमिति भावः ॥ न पुनरिति । असमासोपि किंचित्पूर्वपदं ङ्यन्तं नेति काका प्रश्नः ॥

(प्रत्याक्षेपनिराकरणभाष्यम्)

**ङ्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते । न चान्तरेण समासं ङ्यन्तं प्रातिपदिकमुपसर्जनमस्ति ॥**

(प्रदीपः) इह तु कुमारीपुत्र इति कुमारीशब्दस्य प्रत्ययान्तत्वात् प्रातिपदिकत्वाभावः ॥

(उद्द्योतः) भाष्ये न चान्तरेणेति ॥ तदाशयमाह—इह त्विति । एतच्चाप्रत्यय इति सूत्रन्यासे, अतिङिति न्यासे तु कुमारीत्यस्यापि तत्त्वमस्त्येवेति तत्रापि दोषः ।

(निराकरणहेतुबाधकभाष्यम्)

**ननु चेदमस्ति खट्वापादो मालापाद इति । एकादेशे कृतेन्तादिवद्भावात्प्राप्नोति ॥**

(निराकरणसाधकभाष्यम्)

**उभयत आश्रयणे नान्तादिवत् ॥**

(प्रदीपः) उभयत इति । प्रातिपदिकं स्त्रीप्रत्ययश्चेहाश्रीयते । तत्र यदि प्रातिपदिकस्यान्तवत् तदा स्त्रीप्रत्ययः परो नास्ति । अथ स्त्रीप्रत्ययस्यादिवत् तदा प्रातिपदिकत्वाभावः ॥

(उद्द्योतः) भाष्ये उभयत इति । ऐणेयसिद्धये स्त्रीभ्यो ढगित्यत्र प्रातिपदिकादित्यसंबन्धाद् गाङ्गेये न दोषः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्येति परिभाषामनाश्रित्येदं, तयाहि प्रातिपदिकत्वतद्व्याप्यधर्माणां स्त्रीप्रत्ययविशिष्टे बोधनमिति बहुव्रीहेरूधस इत्यत्र भाष्ये स्पष्टम् ॥ वक्ष्यमाणसमाधानेन सर्वसमाधानादेकदेश्युक्तावत्र नात्यादृतं तु भगवतेति बोध्यम् ॥

(प्रथमप्रयोजनप्रत्याख्यानभाष्यम्)

**गोनिवृत्त्यर्थेन तावन्नार्थः । गोन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते । न चैतद्गोन्तम् ॥**

(प्रदीपः) गोन्तस्येति । उपसर्जनग्रहणेन गोस्त्रियौ विशेष्येते पश्चात् ताभ्यां प्रातिपदिकमिति तदन्तविधिः । ग्रहणवतेत्येतच्च प्रत्ययविधिविषयत्वादिह नोपतिष्ठते ॥

(उद्द्योतः) ननु चित्रगुरित्यादौ गोन्तस्य प्रातिपदिकस्योपसर्जनत्वाभावाद्ध्रस्वाप्राप्तिरत आह—उपसर्जनेति । श्रुतत्वादिति भावः ॥ गोस्त्रियाविति । गोस्त्रीप्रत्ययान्तावित्यर्थः ॥

(प्रत्याख्यानबाधकभाष्यम्)

**ननु चैतदपि व्यपदेशिवद्भावेन गोन्तम् ॥**

(प्रत्याख्यानसाधकभाष्यम्)

**व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥**

(प्रदीपः) व्यपदेशिवद्भाव इति । ननु *रोण्या अण् तस्य चेत्यत्र 'तस्य चेति सर्वस्य शेष' इति व्याख्यानात् स्वंरूपमित्यस्यानुवृत्त्यनुज्ञानात् गोकुलमिति ह्रस्वः प्राप्नोत्येव । नैष दोषः । स्वं रूपमिति तत्र नानुवर्तते । तथा चाद्यन्तवत्सूत्रे * येन विधिस्तदन्तत्वे * इति प्रयोजनमुक्तम् ॥ तस्य चेत्येतत् तु तत्रत्यवार्तिकस्य शेषो न तु सूत्रस्य । अगोपुत्र इत्यत्रापि न भवति । अत्र ह्यन्यत्प्रातिपदिकं गोन्तम् । अन्यत्प्रति गोशब्दस्योपसर्जनत्वम् ॥

(उद्द्योतः) ननु सूत्रस्येति । वस्तुतः सूत्रशेषत्वेपि न क्षतिः । येन विधिरसमासे निष्कादिभ्य इति सूत्रभाष्ययोरस्याः प्रत्ययविधिविषयतायाः सूत्रोपात्तान्तादिशब्दविषयतायाश्च बोधितत्वेनास्य भाष्यस्यैकदेश्युक्तित्वावश्यकत्वाद्, वक्ष्यमाणसमाधानेनास्यापि परिहारः । तच्च गोशब्दांशेप्यावश्यकमिति ध्वनयन्नाह—अगोपुत्र इति । नञस्तत्पुरुषादिति समासान्तनिषेधः ॥

(द्वितीयप्रयोजनप्रत्याख्यानभाष्यम्)

**समासनिवृत्त्यर्थेन चापि नार्थः । ङ्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते । प्रधानमुपसर्जनमिति च संबन्धिशब्दावेतौ । तत्र संबन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तस्य चेत्सोन्तो भवतीति ॥ अवश्यं चैतदेवं विज्ञेयम् । उच्यमानेपि हि प्रतिषेध इह प्रसज्येत—पञ्च कुमार्यः प्रिया अस्य पञ्चकुमारीप्रियः, दशकुमारीप्रिय इति ॥**

(प्रदीपः) पञ्चकुमारीप्रिय इति । त्रिपदे बहुव्रीहौ कृते द्वयोः पदयोर्द्विगुसमास इति पञ्चकुमारीशब्दः पूर्वपदं न भवति ॥

(उद्द्योतः) भाष्ये—प्रधानमुपसर्जनमिति । अत्र सूत्रे सम्भवसत्त्वाद् लौकिकार्थसमानाधिकरणशास्त्रीयस्यैव ग्रहणमिति भावः ॥ केवललौकिकस्यग्रहणे तु गार्गी चासौ वृन्दारिया चेति गार्ग्यवृन्दारिकेत्यादौ वृन्दारिकशब्दस्य गुणशब्दत्वादप्रधानत्वादु-

१ न ङिसंबुद्ध्योरिति ज्ञापकादिति शेषः । ( र. ना. ) २ अप्रत्यय इत्यत्र ग्रहणाभावेन स्त्रीप्रत्ययेनेति तदादिनियमनिषेधाप्रवृत्तेरित्यर्थः । ( र. ना. ) ३ 'अतिखट्वापादः अतिमालापादः' इत्ययं काचित्कः पाठस्त्वपपाठ एव 'नचान्तरेण समासं ङ्यन्तं प्रातिपदिकमुपसर्जनमस्ति' इति प्रागुक्तभाष्यनिराकरणायैवैतद्भाष्यप्रवृत्तेः ॥ ४ यं प्रतियदप्रधानमित्यादिनेति शेषः । (र.ना.) ५ 'मिति नानु०' ॥ ६ गोभिन्नस्य पुत्र इत्यर्थः । ( र. ना. ) ७ अत्रापि यं प्रति यद प्रधानमित्यादिनेति शेषः । ( र. ना. ) ८ 'अप्रधान' ॥ ९ 'दं भवति' ॥

त्तरपदत्वात्तदन्तस्य समासप्रातिपदिकत्वाच्च ह्रस्वप्रसङ्ग इति दिक् ॥ **यं प्रतीत्यादि** । यदर्थं प्रति यदर्थस्याप्रधानत्वं तद्बोधकस्य चेत्तद्बोधको गोशब्दादिरन्तो भवतीत्यर्थ इति कैयटानुसारिणः ॥ परे तु **प्रथमानिर्दिष्टमिति** सूत्रोक्तरीत्या येन शब्देन समासविधौ यत्प्रथमानिर्दिष्टं तस्य तं प्रत्यप्रधानत्वेनोपसर्जनत्वात् प्रत्यासत्त्या तत्समासप्रातिपदिकान्त्यस्यैव ह्रस्व इति भाष्यार्थः । अत एव यं प्रति यदिति भिन्नलिङ्गनिर्देश इत्याहुः ॥ वार्तिकेन यथा न सिध्यति तथोपपादयति—**त्रिपदे इति** । **द्विगुसमास इति** । अत एव तस्य समुदायस्य प्रातिपदिकत्वम् ॥

( ६९२ आक्षेपवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ कपि च ॥ * ॥**

( भाष्यम् ) **कपि च प्रतिषेधो वक्तव्यः । बहुकुमारीकः । बहुवृषलीकः ॥**

( प्रदीपः ) **कपि चेति** । अन्तरङ्गत्वाद् ह्रस्वः प्राप्नोति ततः कबिति भावः । कपीति च विषयसप्तमी ।

( उद्द्योतः ) कपि कृते स्त्रीप्रत्ययान्तत्वाभावादाह—**अन्तरङ्गत्वादिति** ॥ कपः प्राक् प्राप्तो ह्रस्वः कपि चेति वार्तिकेन कथं निवर्त्योऽत आह—**कपीति चेति** ॥

( ६९३ आक्षेपवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ द्वन्द्वे च ॥ * ॥**

( भाष्यम् ) **द्वन्द्वे च प्रतिषेधो वक्तव्यः । कुक्कुटमयूर्यौ ॥**

( प्रदीपः ) **कुक्कुटमयूर्याविति** । समासार्थे अवयवार्थस्याप्राधान्यादनेकमित्यस्यानुवृत्त्या प्रथमानिर्दिष्टत्वाच्च मयूरीशब्दस्योपसर्जनत्वम् ॥

(उद्द्योतः) द्वन्द्वस्योभयपदार्थप्रधानत्वेनानुपसर्जनत्वादाह—**समासार्थ इति** । उद्भूतावयवभेदसमूहः समासार्थस्तत्रावयवावप्रधानमित्यर्थः ॥ नन्वेवमपि शास्त्रीयोपसर्जनत्वाभावात्कथं प्राप्तिरत आह—**प्रथमेति** ॥ परे त्वत्रैकविभक्तीत्युपसर्जनत्वम्, समासापेक्षया च तत्र नियतविभक्तिकत्वं, द्वन्द्वश्च प्रथमान्तानामेव न परिनिष्ठितविभक्त्या । वाक्ये प्रत्येकमेव कर्मत्वकरणत्वाद्यवगत्या समासे च समुदाये एव तदवगत्या समाससमानार्थत्वाभावेन तस्य वाक्यत्वासम्भवात् । अत एव यदग्नये च प्रजापतये चेत्यादौ वाक्ये प्रत्येकमेव देवतात्वमग्नीषोमावित्यादौ समासे च समुदितस्यैवेति व्यवस्था सिध्यति । ध्वनितं चेदं न ङिसंबुद्ध्योरिति सूत्रे भाष्ये इति तत्रैव निरूपयिष्याम इत्याहुः ॥

( ६९४ समाधानवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ? ॥ कपि तावदुक्तं—"न कपि" इति प्रतिषेधः—इति ॥**

( निराकरणभाष्यम् )

**नैतदस्त्युक्तम् । "केणः" इति या ह्रस्वप्राप्तिस्तस्याः प्रतिषेध इति ॥ कुत एतत् ? । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति ॥ अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते या च यावती च ह्रस्वप्राप्तिस्तस्याः सर्वस्याः प्रतिषेध इति, इहापि तस्य प्रतिषेधः प्रसज्येत—प्रियं ग्रामणि ब्राह्मणकुलमस्य प्रियग्रामणिकः, प्रियसेनानिकः ॥**

( उद्द्योतः ) **प्रियं ग्रामणि इति** । तस्य नपुंसकत्वप्रदर्शनाय ब्राह्मणकुलमित्यस्योपन्यासः । अत्र नपुंसकह्रस्वत्वस्यापि निषेधः स्यादित्यर्थः ॥ प्रकल्प्य चापवादविषयमिति न्यायेन पूर्वमपि ह्रस्वो न स्यादिति तात्पर्यम् ॥

( उत्तयन्तरभाष्यम् )

**इदं तर्ह्युक्तम्—'कपि कृते अनन्त्यत्वाद् ह्रस्वत्वं न भविष्यति' ॥ इदमिह संप्रधार्यम्—कप् क्रियतां, ह्रस्वत्वमिति । किमत्र कर्तव्यम् ? । परत्वात् कप् ॥ अन्तरङ्गं ह्रस्वत्वम् ॥ अन्तरङ्गतरः कप् ॥**

( प्रदीपः ) **अनन्त्यत्वादिति । समासान्त इति** वचनात् कबेव समासस्यान्त इति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति ॥ **परत्वात्कबिति** । सावकाशश्च कप् बहुयवागूक इत्यादौ ॥ **अन्तरङ्गमिति** । उपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकमात्रापेक्षत्वात् । कप् तु समासविशेषं बहुव्रीहिं नद्युत्तरपदमपेक्षत इति बहिरङ्गः ॥ **अन्तरङ्गतर इति** । पराभ्युपगमापेक्षया प्रकर्षप्रत्ययः ॥

( उद्द्योतः ) **समासान्त इतीति** । कबन्तरङ्गतर इति वक्ष्यमाणोभिप्रायः ॥ **बहुयवागूक इति** । यवागूशब्दो दीर्घान्त इत्यूङुत इत्यस्याप्राप्तेः स न स्त्रीप्रत्ययान्त इति भावः ॥ विशेषापेक्षस्यावहिरङ्गत्वेप्याह—**नद्युत्तरपदमिति** ॥ ननु द्वयोः स्पर्धमानयोरेकस्य बहिरङ्गत्वे तदपेक्षमन्यस्यान्तरङ्गत्वमिति प्रकर्षाभावादातिशयिकोऽयुक्तोत आह—**परेति** । यदि भवान् ह्रस्वत्वमन्तरङ्गं मन्यते, तदा ततोप्यन्तरङ्गतरः कबित्यर्थः ॥

( आक्षेपभाष्यम् )

**ननु चायं कप् समासान्त इत्युच्यते ॥**

( आक्षेपबाधकभाष्यम् )

**तादर्थ्यात्ताच्छब्द्यं भविष्यति । येषां पदानां समासः न तावत्तेषामन्यद्भवति कपं तावत् प्रतीक्षते ॥**

( प्रदीपः ) **तादर्थ्यादिति** । ततश्चावयवापेक्षत्वात्कपः समुदायापेक्षो ह्रस्वो बहिरङ्गः ॥

( उद्द्योतः ) **ततश्चावयवापेक्षत्वादिति** । समासशब्देन तदर्थमुत्तरपदं लक्ष्यत इति भाव इति कश्चित् ॥ वस्तुतस्तु समासार्थ

१ वाराणसीस्थराजराजेश्वरीयन्त्रालयसमुद्रितस्यैव 'प्रातिपदिकत्वं कपि कृते' इत्येवं पाठस्याविकृतस्य स्थापनेन रमणीयैकग्रन्थत्वं सूचयन् Bangal Asiatic Society मुद्रितपुस्तकशोधकः स्वकीयपाण्डित्यं विना किं सूचयतीति विभावयन्तु सुधियः । २ 'ह्रस्वत्वप्रा०' । ३ ननु समासान्त इत्यस्य समासार्थविग्रहवाक्यस्यान्त इत्येवार्थः सिद्धान्तभूत इति वक्ष्यते । तथाच कथं कबेव समासस्यान्त इत्युच्यते इति प्राप्ते समाधत्ते–कबन्तरङ्गतर इति वक्ष्यमाणोऽभिप्राय इति । तथा च कैयटेऽपि समासस्येति समासार्थविग्रहवाक्यपरमिति भावः । ( र. ना. ) ४ उपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकापेक्षया बहिर्भूतं नद्युत्तरपदं समासं निमित्तत्वेनापेक्षते कप् इति बहिरङ्ग इति भावः । (र.ना.) ५ समासार्थालौकिकविग्रहवाक्ये एव जायमानत्वादिति भावः । ( र. ना. )

विग्रहवाक्यं लक्ष्यत इति भाष्याशयस्तथैवान्यत्र दृष्टत्वात् । **'येषां पदानां समासो न तावत्तेषामन्यद्भवति'** इति वाक्यशेषस्वारस्याच्च, एवं चान्तरङ्गतरत्वं स्पष्टमेव । कैयटेऽपि—**अवयवापेक्षत्वादि**त्यस्यावयवगतप्रातिपदिकसंज्ञापेक्षत्वादित्यर्थः । समासान्तविधायकानां च तत्तत्समासार्थविग्रहवाक्यान्तावयवः शरदादिप्रातिपदिकात्परः प्रत्यय इत्यर्थं इति भावः ॥ **समुदायापेक्ष** इत्यस्य च समुदायगतप्रातिपदिकत्वापेक्ष इत्यर्थः । एवं च समाससंज्ञापेक्षसमुदायगतप्रातिपदिकत्वात्पूर्वमेव समासान्त इत्यन्तरङ्गतर इति भावः ॥ **अन्त** इति सूत्रस्थभाष्यात्समासावयवत्वस्यैव प्रतीतेः ॥ **न तावत्तेषामिति** । कपः प्रथममित्यर्थः ॥ **अन्यत्** । समासशास्त्रम् ॥ **कपं तावदिति** । तच्छास्त्रवैयर्थ्यभिया तद्भवनकालं प्रतीक्षत इत्यर्थः । अन्यथा समासशास्त्रस्य कवनपेक्षत्वेन तत्प्रतीक्षोक्तेरसंगतिः । एवं च कपा समकालं तत्पूर्वभागस्य समाससंज्ञा कपस्तद्वाक्यान्तावयवत्वेन समासप्रातिपदिकावयवत्वात्स्त्रीप्रत्ययस्य तदन्तत्वाभाव इति भावः ॥

( द्वन्द्वविषयकोक्तिभाष्यम् )

**द्वन्द्वेऽप्युक्तम् ॥ किमुक्तम् ? ॥ *परवल्लिङ्गमिति शब्दशब्दार्थौ* इति । तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति ॥ गोस्त्रियोः ॥ ४८ ॥**

( प्रदीपः ) **द्वन्द्वेऽप्युक्तमिति** । परिहारान्तरमप्यस्ति—अवयवार्थावेव परस्परसहितौ द्वन्द्वार्थ इति प्राधान्याद्उपसर्जनत्वाभाव इति ॥ ४८ ॥

( उद्योतः ) **प्राधान्यादिति** । इदं परवल्लिङ्गं चार्थे द्वन्द्व इति सूत्रभाष्यविरोधाद् द्वन्द्वे च प्रतिषेध इति वार्तिकविरोधाच्च चिन्त्यम् । तस्माद्वचनारम्भ एव ज्यायान् । ध्वनितं चेदमन्वर्थत्वमुक्त्वा द्वन्द्वे चेति निषेधं वदता दूषयिष्यैमाणसमाधानोक्त्या च भगवतेति बोध्यम् ॥ **शब्दशब्दार्थौ**विति परिहारस्तु परमयुवतिरित्यादौ तिप्रत्ययद्वयापत्त्या तत्रैव भाष्ये दूषित इति दिक् ॥ ४८ ॥

---

( १०१ लुग्विधिसूत्रम् ॥ १ । २ । २ आ. ५ सू. )

## १२३ लुक्तद्धितलुकि ॥ १ । २ । ४९ ॥

( अनिष्टपरिहाराधिकरणम् )

( ६९५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तद्धितलुक्यवन्त्यादीनां प्रतिषेधः ॥ * ॥

( भाष्यम् ) **तद्धितलुक्यवन्त्यादीनां प्रतिषेधो वक्तव्यः । अवन्ती । कुन्ती । कुरूः ॥**

( प्रदीपः ) **लुक्तद्धित ॥४९॥ अवन्त्यादीनामिति ।** अवन्तीत्यत्र भवत्यकन्तिशब्द उपसर्जनं स्त्रीप्रत्ययश्च स्ति, लुक् च तद्धितस्य कृत इत्यस्ति लुक्प्राप्तिः ॥

( उद्योतः ) **लुक्तद्धित** ॥ ४९ ॥ ननूपसर्जनस्येत्यत्र वर्तते, तत्रावन्तिकुन्तिभ्यां **वृद्धेदिति** ञ्यङः, कुरोः **कुरुनादिभ्य** इति ण्यस्य च तद्राजस्य **स्त्रियामवन्तिकुन्तिकुरुभ्यश्चेति** लुकि, **इतो मनुष्येति** ऊङ्गुत इति च ङीषूङोः कृतयोः स्वप्रत्ययवृत्तिस्त्रीप्रत्ययान्तस्यानुपसर्जनत्वात्तद्धितलुगनन्तरं स्त्रीप्रत्ययोत्पत्तेस्तत्परत्वाभावाच्च कथं लुक्प्राप्तिरत आह—**अवन्तीत्यत्रेति** । उपसर्जनसंबन्धिस्त्रीप्रत्ययस्य लुगित्यर्थस्तद्धितलुकीति च सत्सप्तमीत्याशयेन चोद्यमिति भावः ॥

( ६९६ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तद्धितलुक्यवन्त्यादीनामप्रतिषेधो ऽलुक्परत्वात् ॥ * ॥

( भाष्यम् ) **तद्धितलुक्यवन्त्यादीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ लुक्कस्मान्न भवति ? । अलुक्परत्वात् । लुकीत्युच्यते, न चात्र लुकं पश्यामः ॥**

( प्रदीपः ) **अलुक्परत्वादिति** । यत्र स्त्रीप्रत्ययान्तात्परस्य तद्धितस्य लुक् तत्र लुका भाव्यम्, अत्र तु कृते लुकि स्त्रीप्रत्ययः कृतः ॥

( उद्योतः ) नास्ति लुक्परो यस्मात्स्त्रीप्रत्ययादित्यलुक्परत्वादित्यस्यार्थः ॥ **कृते इति** । एवं च न तत्परत्वं ङ्यादेरिति भावः ॥

( आक्षेपसाधकभाष्यम् )

**लुकीति नैषा परसप्तमी शक्या विज्ञातुम् । नहि लुका पौर्वापर्यमस्ति ॥ का तर्हि ? ॥ सत्सप्तमी लुकि सतीति ॥ सत्सप्तमी चेत् प्राप्नोति ॥**

( प्रदीपः ) **नहीति** । लुको नीरूपत्वाद् ॥ बुद्धिपरिकल्पितं तु लुकः परत्वमाश्रित्य वार्तिककृतोक्तमलुक्परत्वादिति ॥

( उद्योतः ) कथं तर्हि वार्तिककृता **'अलुक्परत्वात्'** इत्युक्तं तत्राह—**बुद्धीति** ॥

( समाधानभाष्यम् )

**एवं तर्हीदमिह व्यपदेश्यं सद् आचार्यो न व्यपदिशति ॥ किम् ? ॥ उपसर्जनस्येति वर्तते इति । न च जातिरुपसर्जनम् ॥ लुक्तद्धि—॥ ४९ ॥**

( प्रदीपः ) **न च जातिरिति** । उपसर्जनग्रहणेन स्त्रीप्रत्ययो विशेष्यते । अप्रधानं चेहोपसर्जनं गृह्यते, न शास्त्रीयमसंभवात् । अवन्तीत्यत्र चापत्यलक्षणा जातिः स्त्रीत्वयुक्ता प्राधान्येनाभिधीयत इत्यर्थः । अप्रातिपदिकत्वाच्चात्र ह्रस्वाभावः । आमलकमित्यादौ तु तद्धितान्तत्वात्प्रतिपदिकसंज्ञा । लिङ्गविशिष्टस्यैवेहोपादानाल्लिङ्गविशिष्टपरिभाषाया उपस्थानाभावः । कुरूरित्यत्रापि **उभयत आश्रयणे नान्तादिवदि**त्यप्रातिपदिकत्वम् ॥ ४९ ॥

( उद्योतः ) उपसर्जनसंबन्धिन इत्यर्थात् **न च जातिरुप-**

---

१ शरदादिरूपोत्तरपदात्मकावयवगतेत्यर्थः । ( र.ना. ) २ समासरूपप्रातिपदिकान्तत्वाभाव इत्यर्थः । ( र. ना. ) ३ दूषयिष्यमाणं यत्समाधानं परवल्लिङ्गमिति शब्दशब्दार्थौ इति वार्तिकारम्भरूपं तदुक्त्येत्यर्थः । ( र. ना. )

४ प्रातिपदिकत्वतद्व्याप्यधर्मपुरस्कारेण प्रातिपदिकस्यानुपादानादित्यर्थः फलितः । उद्योते त्वन्यथा योजितम् । ( र. ना. ) ५ 'सैव चेहो' ॥

सर्जनमित्ययुक्तमत आह—**उपसर्जनेति** । सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति भावः ॥ **इह** । लुग्विधायके ॥ **स्त्रीत्वयुक्ता प्राधान्येनेति** । एवं च प्रधानजातिगतस्त्रीत्वाभिधायी प्रत्ययो नोपसर्जनमिति भावः ॥ स्वयं लुगभावे हेत्वन्तरमाह—**अप्रातिपदिकत्वाच्चात्र ह्रस्वाभाव इति** । **अत्रावन्तीत्यादौ** । ह्रस्वपदेन ह्रस्वप्रयोजको लुगुच्यते, ङीलुकि हि अवन्तिरिति ह्रस्वमवतिष्ठत इति तत्प्रयोजकता लुको बोध्या । तद्धितलुकि स्त्रीप्रत्ययान्तप्रातिपदिकावयवस्य[1] प्रत्यासत्त्या स्त्रीप्रत्ययस्य लुगिति सूत्रार्थः, प्रकृते च न तत्त्वं, तद्धितान्तात्स्त्रीप्रत्ययोत्पत्तेरिति भावः ॥ **गोस्त्रियोरिति** ह्रस्वस्य तु नात्र प्राप्तिस्तत्र शास्त्रीयोपसर्जनस्य ग्रहात् । यथा चैतत्तथोपपादितम् । क्वचित्तु **लुगभाव** इत्येव पाठः ॥ नन्वेवं कथमामलकमित्यादौ लुगत आह—**आमलेति** ॥ **तद्धितान्तत्वादिति** । मयटो लुकि प्रत्ययलक्षणेनेति भावः ॥ ननु लिङ्गविशिष्टपरिभाषया प्रातिपदिकग्रहणानुवृत्तावप्यवन्तीत्यत्र दोषोऽत आह—**लिङ्गेति** । लिङ्गविशिष्टस्योपादानेऽपि तत्परिभाषाप्रवृत्तौ बाधकाभावेन भाष्योक्तसमाधिरेव युक्त इति बोध्यम् ॥ ४९ ॥

( १०२ इत्त्वविधिसूत्रम् ॥ १ । २ । २ आ० ६ सू० )

## १२४ इद्गोण्याः ॥ १ । २ । ५० ॥

( ६९७ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इद्गोण्या[2] नेति वक्तव्यम् ॥ * ॥

**( भाष्यम् ) गोण्या नेत्येव सिद्धम् । नार्थ इत्त्वेन ॥**

( उद्द्योतः ) **इद्गोण्याः** ॥ ५० ॥ पञ्चभिर्गोणीभिः क्रीत इति द्विगौ क्रीतार्थठको लुकि **लुक्तद्धितेति** लुगपवादभूतमिदं सूत्रम् । तत्रानेन लुको निषेधे **एकविभक्ती**त्युपसर्जनत्वाद्ह्रस्वेन सिद्धे इद्ग्रहणं व्यर्थमिति चोद्यम् ॥

( प्रत्याक्षेपभाष्यम् )

**का रूपसिद्धिः—पञ्चगोणिर्दशगोणिः ? ।**

( ६९८ प्रत्याक्षेपसमाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ ह्रस्वता हि विधीयते ॥ * ॥

**( भाष्यम् ) ह्रस्वत्वमत्र विधीयते "गोस्त्रियोरुपसर्जनस्य" इति ॥**

( ६९९ समाधानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ इति वा वचने तावत् ॥ * ॥

**( भाष्यम् ) इदित्येवोच्येत नेति वा । को न्वत्र विशेषः ॥**

**( प्रदीपः ) इद्गोण्याः ॥५०॥ इति वा वचन इति ।** इतीति सप्तमी । इच्छब्देऽप्युच्यमाने गौरवाभाव इत्यर्थः ॥

( उद्द्योतः ) समाधत्ते—**भाष्ये इति वा वचने तावदिति ।** इच्छब्दोक्तौ नशब्दोक्तौ च तावदेव, न तु मात्राप्यधिकेति तदर्थः ॥

( ७०० समाधानान्तरवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ मात्रार्थं वा कृतं भवेत् ॥ * ॥

**( भाष्यम् ) अथ वा मात्रार्थमिदं वक्तव्यम् । गोणीमात्रमिदं गोणिः ॥**

**( प्रदीपः ) गोणिरिति** । यदा मात्रचो लुक् क्रियते तदा लुकि प्रतिषिद्धे सिध्यत्येव ह्रस्वत्वम् । तस्मात्प्रथमाविधानें परिमाणग्रहणस्य प्रयोजनम्—तद्धितमन्तरेणापि यदा परिमाणशब्दः परिमेये[3] वर्तते तदापि प्रथमा यथा स्यादिति । एवं चानुपसर्जनत्वादभेदोपचारेण प्रमेयवृत्तित्वादप्राप्तो ह्रस्व इति इत्त्वं विधीयते ॥ सर्वत्र तर्हि गोण्या इत्त्वप्रसङ्गः । एवं तर्ह्युपसर्जनस्येति वर्तते, न तु तद्धितलुकीति । तेन यत्र स्वार्थोपसर्जनमर्थान्तरं प्रत्याय्यते तत्रेत्त्वविधिः । ह्रस्वत्वं तु न स्यादप्रातिपदिकत्वात् ॥

( उद्द्योतः ) **लुकि** । स्त्रीप्रत्ययलुकि ॥ **सिध्यत्येव ह्रस्वत्वमिति** । गार्ग्यवष्कयणीत्यादौ[4] ह्रस्ववारणाय शास्त्रीयोपसर्जनस्य तत्र ग्रहाच्चिन्त्यमिदम् । भाष्यं तु यथाश्रुतं[5] रमणीयमेव ॥ **तदापि प्रथमेति** । प्रस्थादिभ्यः परिच्छेदकवाचिभ्यः प्रमेयविवक्षायां प्रथमां बाधित्वा तद्धितः प्राप्नोति, तदविवक्षायां प्रातिपदिकार्थत्वादेव सिध्यतीति व्यर्थं तदित्याशङ्क्य **तद्धितमन्तरेणापि यदा परिमाणे**त्यादि **प्रातिपदिकार्थसूत्रे** वक्ष्यतीति भावः । न चानुपसर्जनत्वादित्वमपि न प्राप्नोति, तस्येहासंबन्धादिति भावः ॥ **अभेदोपचारेणेति** । गोण्येव व्रीहय इत्याहार्यबुद्ध्या गोणीशब्दस्य प्रमेयवृत्तितया लाक्षणिकत्वेनानुपसर्जनत्वमित्यर्थः ॥ तत्र शङ्कते—**सर्वत्र तर्हीति** ॥ **तेन यत्रेति** । लाक्षणिकस्याप्युपसर्जनत्वं मन्यते । एवं हि गोणीसदृशे लक्षणायामपि ह्रस्वापत्तेश्चिन्त्योयं कैयटः ॥ तर्हि ह्रस्वत्वेनैव सिद्धे व्यर्थ इद्विधिः स्यादत आह—**ह्रस्वत्वं त्विति** ॥ **अप्रातिपदिकत्वादिति** । गोणीशब्दस्य ङ्यन्तत्वावादिति भावः ॥ **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहादप्रातिपदिकत्वादिति त्विन्त्यम् ॥**

( ७०१ आक्षेपवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ गोण्या इत्त्वं प्रकरणात् ॥ * ॥

**( भाष्यम् ) अशिष्यं गोण्या इत्त्वम् ॥ किं कारणम् ? । प्रकरणात् । प्रकृतं ह्रस्वत्वम् । ह्रस्व इति वर्तते ॥**

**( प्रदीपः ) अशिष्यमिति । गोस्त्रियोरित्यस्यानन्तरं गोण्या इति लुगपवादह्रस्वार्थं वक्तव्यम् ॥**

( उद्द्योतः ) ननु लुका विच्छिन्नत्वात्कथं ह्रस्वानुवृत्तिरत आह—**गोस्त्रियोरिति** । लुगपवादेत्यनेनोपसर्जनस्येत्यनुवृत्तिं[6] दर्शयति ॥

---

१ स्त्रीप्रत्ययान्तप्रातिपदिकावयवत्वमित्यर्थः । ( र. ना. ) २ इद्गोण्या- इत्यस्य स्थाने गोण्या नेति वक्तव्यमित्यर्थः । ( र. ना.) ३ 'प्रमेये' ॥ ४ लौकिकोपसर्जनत्वस्य ह्रस्वोपयोगित्वे वष्कयणीपदार्थस्य गविविशेषणतया गोवष्कयणी इत्यत्र ह्रस्वत्वं स्यादिति भावः। शास्त्रीयोपसर्जनत्वं तु गव्येवेति भावः। (र.ना.)

५ मात्रचो लुकि इत्वं बोधकतया सार्थकम्, ह्रस्वत्वं तु न शास्त्रीयोपसर्जनत्वाभावादिति भावः । ( र. ना. ) ६ लुक्तद्धितलुकीत्यत्रोपसर्जनपदानुवृत्त्या उत्सर्गसमानदेशा इति न्यायादिति भावः । ( र. ना. )

( आक्षेपभाष्यम् )

**न तु सूच्याः ।**

( प्रदीपः ) **न तु सूच्या इति** । इत्त्वं प्राप्नोतीति शेषः ॥ क्वचित्तु **ननु सूच्या** इति पाठः । तत्रेत्त्वमिष्यत इत्यध्याहारः ॥

( उद्द्योतः ) तत्रेत्त्वमिष्यते इति । तच्च न सिध्यतीति शेषः ॥

( ७०२ समाधानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ सूच्याद्यर्थमथापि वा ॥ * ॥**

( भाष्यम् ) **सूच्याद्यर्थमिदं द्रष्टव्यम् । पञ्चसूचिः । दशसूचिः ॥**

**इद्गोण्या नेति वक्तव्यं ह्रस्वता हि विधीयते ।**
**इति वा वचने तावन्मात्रार्थं वा कृतं भवेत् ।**
**गोण्या इत्त्वं प्रकरणात् सूच्याद्यर्थमथापि वा ॥१॥**

**इद्गोण्याः ॥ ५० ॥**

( प्रदीपः ) इद्ग्रहणे सति योगविभागो लभ्यते । गोणिरिति तु मात्रचो लोपेन सिध्यति ॥ ५० ॥

( उद्द्योतः ) इद्ग्रहणे यथा सिध्यति तदाह—**योगेति** इदित्युक्तो योगो लुगपवादार्थः । **गोण्या** इति द्वितीयस्तस्यासार्वत्रिकत्वा-येति नातिप्रसङ्ग इति भावः ॥ नन्वस्य लुगपवादत्वे यत्र प्रमेय-लक्षणया गोणीशब्दप्रयोगस्तत्र लुगभावादित्त्वमपि न स्यादत आह—**गोणिरिति** ॥ **लोपेनेति** । लुकेत्यर्थः । एवं च कैयटस्य पूर्वापरविरोधोऽपि द्रष्टव्यः । अत्र पक्षे लक्षणायां गोणी इति दीर्घान्तस्यैवेष्टत्वादित्याहुः ॥ ५० ॥

---

(१०३ युक्तवद्भावातिदेशसूत्रम् ॥ १ । २ । २ आ. ७ सू.)

## १२५ लुपि युक्तवद्व्यक्तिवचने ॥ १ । २ । ५१ ॥

( प्रदीपः ) **लुपि** ॥ ५१ ॥ प्रकृत्यर्थसंबन्धिन्यौ लिङ्गसंख्ये प्रत्ययार्थे अतिदिश्येते ॥

( उद्द्योतः ) **लुपि यु** ॥ ५१ ॥ पदार्थानवगमे तद्व्यावर्त्य-मवगन्तुं न शक्यतेऽतः सूत्रार्थमाह—**प्रकृतीति** । युक्तशब्देन प्रकृत्यर्थ उच्यते स हि प्रत्ययार्थेन युक्तो भवति । प्रकृतौ यादृशं लिङ्गसंख्याप्रयुक्तं कार्यं तत्प्रत्ययार्थप्रतिपादिकायां तत्रातिदिश्यत इति तात्पर्यम् ॥ व्यक्तिर्लिङ्गं वचनं संख्या ॥

( पदकृत्यवर्णनाधिकरणम् )

( आक्षेपभाष्यम् )

**व्यक्तिवचने इति किमर्थम् ? ॥**

( समाधानभाष्यम् )

**शिरीषाणामदूरभवो ग्रामः शिरीषाः तस्य ग्रामस्य वनं शिरीषवनम् । किं च स्याद् ? ॥ "विभाषौषधिवनस्पतिभ्य" इति णत्वं प्रसज्येत ॥**

( प्रदीपः ) **शिरीषाणामिति** । वरणादित्वादणो लुप् । ग्रामवाचित्वाद्वनस्पतिवाचित्वाभावाण्णत्वाभावः **फली वनस्पतिर्ज्ञेय** इत्ययं भेदो णत्वविधौ नाश्रित इति फलाभावेऽपि शिरीषस्यास्ति वनस्पतित्वम् ॥

( उद्द्योतः ) नन्वपुष्पः फलवान् वनस्पतिस्तथा च शिरीषस्य कथं वनस्पतित्वं यद्ग्रामेऽतिदिश्येतेत्यत आह—**फलीति** । अस्यापुष्प इत्यादिः ॥ फलाभावेऽपीत्यस्यापुष्पफलाभावेऽपीत्यर्थः । यद्वा शिम्बीनां फलत्वाभावं मन्यते । एवं च वनस्पतिशब्देन वृक्ष एवोच्यत इति भावः ॥

(मतान्तरेण समाधानभाष्यम् )

**अपर आह—कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी । षष्ठी युक्तवद्भावेन मा भूदिति ॥**

( प्रदीपः ) **षष्ठीति** । प्रकृत्यर्थगतस्य व्यतिरेकस्य प्रत्ययार्थेतिदेशात्षष्ठीप्रसङ्गः ॥

( उद्द्योतः ) षष्ठ्याः प्रकृत्यर्थधर्मत्वाभावात्कथमतिदेशोऽत आह—**प्रकृत्यर्थेति** । व्यतिरेकस्य संबन्धस्य ॥

( प्रत्याक्षेपभाष्यम् )

**अथ व्यक्तिवचने इत्यप्युच्यमाने कस्मादेवात्र न भवति । षष्ठ्यपि हि वचनम् ? ॥**

( प्रदीपः ) **षष्ठ्यपीति** । वचनशब्देन ह्येकवचनादयः प्रत्यया उच्यन्ते । तत्र वाक्यावस्थायां षष्ठीदर्शनात्तस्या एवात्रातिदेशः प्राप्नोति ॥

( उद्द्योतः ) षष्ठ्या एव प्रसङ्गे हेतुमाह— **तत्रेति** । युक्तशब्देन प्रकृतिस्तद्गलिङ्गमेकवचनादिप्रत्ययाश्च लुपि सति भवन्तीति सूत्रार्थः । अर्थशब्दयोरभेदाच्च लिङ्गस्य प्रकृतिनिष्ठत्वम् । एवं चोपस्थितत्वात्तस्या एवातिदेशः प्राप्नोतीति भावः ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**नेदं पारिभाषिकस्य वचनस्य ग्रहणम् ॥ किं तर्हि ? । अन्वर्थग्रहणम्—उच्यते वचनमिति ॥**

( प्रदीपः ) **नेदमिति** । एकवचनादिसंज्ञाविधानकाले अनुनिष्पादी वचनशब्दोऽपि संज्ञात्वेन नियुक्त इति प्रत्ययः पारिभाषिकं वचनमुच्यते ॥ **अन्वर्थग्रहणमिति** । संख्यालक्षणोर्थोऽतिदिश्यत इत्यर्थः ॥

( उद्द्योतः ) ननु वचनमिति पारिभाषिकसंज्ञाभावान्नेदमिलसङ्गतमत आह—**एकवचनादीति** ॥ **अनुनिष्पादीति** । नान्तरीयक इत्यर्थः ॥ भाष्ये **अन्वर्थेति** । लौकिकः संख्यारूपोर्थो वचनशब्देनोच्यत इति भावः । अन्वर्थत्वमत्र लोकप्रसिद्धार्थत्वम् ॥

---

१ पञ्चसूचिरित्यादिकमिति शेषः । ( र. ना. ) २ इद्ग्रहणसामर्थ्यात्क्रियमाणो विभागो विशिष्टविषय एव कल्प्यते । अत एवोच्यते—'योगविभागादिष्टसिद्धिः' इति । स पुनर्विशिष्टो विषयो व्याख्यानादवसेयः ॥ प. म.

३ णत्वविधाविति शेषः । ( र. ना. ) ४ अनुगतो लोकप्रसिद्धोऽर्थोऽन्वर्थ इति व्युत्पत्तिमाश्रित्येति भावः । ( र. ना. )

(समाधानबाधकभाष्यम्)

**एवमपि षष्ठी प्राप्नोति । षष्ठ्यपि ह्युच्यते ॥**

(प्रदीपः) षष्ठ्यपि ह्युच्यत इति । संख्यातिदेशे तद्वचनेन शब्देन प्रवर्तितव्यम् । षष्ठ्यपि संख्यायाः प्रातिपदिकेति भावः । षष्ठीशब्देन च षष्ठ्यर्थः संख्यालक्षणोऽभिधीयते ॥ अथ वा षष्ठ्यप्युच्यते संख्याप्रतिपादनार्थमित्यर्थः ॥

(उद्योतः) नन्वेवं षष्ठ्यप्युच्यत इत्यनुपपन्नमत आह— षष्ठीशब्देन चेति ॥

(समाधानसाधकभाष्यम्)

**लुपोक्तत्वात्तस्यार्थस्य । द्वितीयस्य प्रयोगेण न भवितव्यम् ॥ किं कारणम्? । उक्तार्थानामप्रयोग इति ॥**

(प्रदीपः) लुपोक्तत्वादिति । लुप्सहचरितेन शब्देनोक्तत्वादित्यर्थः । अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति व्यतिरेकाभाव इत्यर्थः ॥

(उद्योतः) ननु लुपोऽभावस्य कथमभिधायकत्वं किं च लुपाऽदूरभवार्थोक्तावपि षष्ठ्यर्थस्य कथमुक्तिरत आह—लुप्सहचरितेनेति । तेन हि स्वसंबन्ध्यदूरभव उच्यत इति भावः । तदाह— अभिहित इति ॥ व्यतिरेकाभाव इति । भेदनिबन्धनसंबन्धस्याभाव इत्यर्थः । शेषत्वाभाव इति यावत् । कारकप्रातिपदिकार्थव्यतिरिक्तो हि शेषः ॥

(आक्षेपभाष्यम्)

**आतिदेशिकी तर्हि प्राप्नोति ॥**

(प्रदीपः) आतिदेशिकीति । संख्यायामतिदिष्टायां तद्वाची शब्दः प्रयोक्तव्यः । वाक्ये च षष्ठी दृश्यते इति तस्या एव प्रसङ्गः ॥

(उद्योतः) षष्ठ्यतिदेशाभावेनातिदेशिकीत्ययुक्तमत आह— संख्यायामिति ॥

(समाधानशेषभाष्यम्)

**एवं तर्हि—**

(७०३ समाधानवार्तिकम् ॥ १ ॥)

**॥ * ॥ प्रागपि वृत्तेर्युक्तं वृत्तं चापीह यावता युक्तम् । वक्तुश्च कामचारः प्राग्वृत्तेर्लिङ्गसंख्ये ये ॥ * ॥**

(भाष्यम्) **प्रागपि वृत्तेर्युक्तं वनस्पतिभिर्नगरम् । वृत्तं चापि युक्तं वनस्पतिभिर्नगरम् । वृत्ते च युक्तवद्भावो विधीयते । कामचारश्च प्रयोक्तुः— प्राग्वृत्तेर्ये लिङ्गसंख्ये ते अतिदेष्टुम्, वृत्तस्य वा ये लिङ्गसंख्ये ते । यावता कामचारः । वृत्तस्य ये लिङ्गसंख्ये ते अतिदेक्ष्येते, न प्राग्वृत्तेर्ये ॥**

(प्रदीपः) प्रागपीति । प्रत्ययार्थेन प्रकृतिवाच्यं वस्तु संबद्धं वाक्यावस्थायां वृत्त्यवस्थायां चेत्यर्थः ॥ वक्तुश्चेति चशब्दो भिन्नक्रमः प्राग्वृत्तेरित्यस्यानन्तरं द्रष्टव्यः । ततश्चायमर्थः—प्राग्वृत्तेर्ये लिङ्गसंख्ये चशब्दात् वृत्तस्य ये, ते अतिदेष्टुं कामचारः ॥ वृत्तस्येति । प्रत्यासत्त्येति भावः ॥ वृत्तावुपसर्जनस्यापि क्वचित्संख्याविशेषावगतिर्भवति । यथा तावकीनो मामकीन इत्यादेशात् संख्याभेदावगमः । तथेह प्रत्ययार्थे अतिदिष्टसंख्यावगमात् प्रकृत्यर्थे तदवसायः । यथा आदेशे प्रथमासामानाधिकरण्यदर्शनात् लटि तदवगतिः । तत्र च वृत्तावुपसर्जनं प्रधानार्थमभिधत्त इति व्यतिरेकाभावात् संख्यामात्रप्रतिबद्धा प्रातिपदिकार्थमात्रे प्रथमैव भवति ॥

क्वचिदधिको ग्रन्थः पठ्यते—

**अथ वा प्राग्वृत्तेर्ये लिङ्गसङ्ख्ये ते अतिदेक्ष्येते । षष्ठी कस्मान्न भवति । सामान्यातिदेशे विशेषानतिदेश इति ॥**

तत्रायमर्थः—वाक्यावस्थायां प्रकृत्यर्थस्य ये लिङ्गसंख्ये ते अतिदिश्येते षष्ठी तु व्यतिरेकनिबन्धना । न चेह प्रत्ययार्थस्य व्यतिरेकोस्ति । न च व्यतिरेकसंहिता संख्या अतिदिश्यते । संख्यामात्रातिदेशे संबन्धसहितसंख्यातिदेशाभावात् ॥

(उद्योतः) चेत्यर्थ इति । इयांस्तु विशेषः—वाक्ये भिन्नोपस्थितिविषयतया, वृत्तौ चैकोपस्थितिविषयतयेति ॥ उत्तरार्धे पक्षान्तराप्रतीतेः कामचार इत्ययुक्तमत आह—चशब्द इति । तथा च तेन पक्षान्तरद्योतनमस्तीति भावः ॥ भाष्ये उक्तश्लोकस्य व्याख्यानं प्रागपि वृत्तेर्युक्तं वनस्पतिभिरित्यादि । कामचारविषये एकतरपक्षग्रहणे विनिगमकाभावोत आह—प्रत्यासत्त्येति । तदुक्तं भाष्ये वृत्ते च युक्तवद्भावो विधीयत इति ॥ वृत्तिप्राक्कालावच्छिन्नार्थनिष्ठलिङ्गसंख्ययोरतिदेश, उत वृत्तिकालावच्छिन्नयोरिति संशयः । तत्राद्ये संख्यायाः षष्ठीप्रतिपाद्यसंबन्धवदर्थनिष्ठत्वात्तादृशयोरेवातिदेशे षष्ठी स्यादिति चोद्यम् । द्वितीयमादायोत्तरम् । तत्र प्रातिपदिकप्रतिपाद्यसंबन्धवदर्थनिष्ठत्वात् तादृशयोरेवातिदेशे प्रातिपदिकार्थमात्रत्वात्प्रथमैव । अतिदेशस्य वृत्तिनिष्ठत्वात्तद्गतयोरेवातिदेशे एकनिष्ठत्वं प्रत्यासत्तिरिति बोध्यम् ॥ ननु वृत्तावुपसर्जनार्थस्य संख्याभेदानवगतेः कथं तत्कालावच्छिन्नतदतिदेशोत आह—वृत्तावुपेति । आदेशात् । तवकममकावेकवचन इति विहितात् ॥ तत्र चैत्रत्वादिनैकस्यैवोपस्थितिर्न त्वेकत्वेनेति तत्त्वम् ॥ तथेहेति । शिरीषा ग्राम इति बहुवचनात्तत्प्रकृत्यापि शिरीषत्वेनानेकोपस्थितिर्न तु बहुत्वेनेति तत्त्वम् । अन्यथातिदेशाप्राप्त्या तदनुपपत्तिरिति भावः ॥ ननु संख्यातिदेशेपि तन्निबन्धना षष्ठी कस्मान्नेत्यत आह— वृत्तावुपसर्जनमिति ॥ व्यतिरेकाभावादिति । तदतिदेशस्तु न मानाभावादिति भावः ॥ अथ वा प्राग्वृत्तेरिति । इदमयुक्तं प्रत्यासत्तिबाधापत्तेरित्याहुः ॥

---

१ 'द्वितीयस्याः प्र०' 'द्वितीयस्याप्रयोगेण भवि०' ॥ २ 'इति कृत्वा व्यति०' ३ 'दृष्टेति' ॥ ४ 'ततो वृत्त' ॥ ५ वृत्तावुपसर्जनं प्रकृतिपदं कर्तृ, प्रधानार्थम् अदूरभवादिरूपं तद्धितप्रत्ययार्थमभिधत्ते इत्यर्थः । (र. ना.) ६ 'संबोध्यत्वादि' ॥ ७ शिरीषत्वेनानेकोपस्थित्यभावेऽतिदेशाप्राप्त्या बहुवचनानुपपत्तिरित्यर्थः । (र. ना.)

( आक्षेपभाष्यम् )

किमर्थं पुनरिदमुच्यते ? ।

( प्रदीपः ) किमर्थमिति । अन्तरेणाप्यतिदेशं लिङ्गसंख्ये सिद्धे । यथाऽऽपो दारा इत्यादाविति प्रश्नः ।

( उद्योतः ) ननु तद्धितार्थस्यैकत्वादेकवचननिवृत्तयेऽवश्याश्रयणीयोतिदेशोत आह—अन्तरेणापीति ॥

( ७०४ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अन्यत्राभिधेयस्य व्यक्तिवचनभावाल्लुपि युक्तवदनुदेशः ॥ * ॥

( भाष्यम् ) अन्यत्राभिधेयवल्लिङ्गवचनानि भवन्ति ॥ क्वान्यत्र ? ॥ लुकि । लवणः सूपः । लवणा यवागूः । लवणं शाकमिति । अन्यत्राभिधेयवद्व्यक्तिवचनानि भवन्ति लुकि । इहाप्यभिधेयवल्लिङ्गवचनानि प्राप्नुवन्ति । इष्यन्ते चाभिधानवत्स्युरिति । तच्चान्तरेण यत्नं न सिध्यतीति लुपि युक्तवदनुदेशः । एवमर्थमिदमुच्यते ॥

( प्रदीपः ) अन्यत्रेति । अभेदं लिङ्गसंख्ययोराश्रित्य वार्तिककारेण पठितम् । भाष्यकारस्तु वाचकभेदनिबन्धनमेदावसायेन वतिना व्याचष्टे अभिधेयवदिति । अभिधानवदिति । अभिधानशब्देनोपसर्जनमभिधीयते । तेन हि प्रधानार्थोभिधीयते । तस्य चार्थद्वारको लिङ्गसंख्यायोगः ॥

( उद्योतः ) भाष्यवार्तिकयोर्वतिप्रयोगाप्रयोगयोर्बीजमाह—अभेदमिति ॥ लिङ्गसंख्ययोरिति । विशेष्यमात्रगतलिङ्गसंख्ययोर्विशिष्टगतलिङ्गसंख्ययोश्चेत्यर्थः ॥ पठितमिति । अभिधेयस्य व्यक्तीति पठितमित्यर्थः ॥ वतिनेति । विशेष्यमात्रवाचके यल्लिङ्गसंख्याप्रयुक्तं कार्यं दृश्यते तद्वदेवान्यत्र विशिष्टवाचकेऽपि दृश्यते तथा प्रकृतेपि स्यात्तद्वारणार्थं सूत्रमिति भावः ॥ अभिधेयम् । विशेष्यम् ॥ अभिधानशब्दस्य वाचकपर्यायत्वादभिधानवदित्ययुक्तमत आह—उपसर्जनमिति ॥ तत्र योगं दर्शयति—तेन हीति ॥ प्रधानार्थः । तदास्कन्दितस्वार्थः ॥ तस्य चेति । त्रिलिङ्गोऽयं शब्द इत्यादिप्रयोगदर्शनादिति भावः ॥

( काकुभाष्यम् )

अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥

( अर्थे कार्यसाधकाधिकरणम् )

( ७०५ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ लुपोऽदर्शनसंज्ञित्वादर्थगतिर्नोपपद्यते ॥ * ॥

( भाष्यम् ) लुब्नामेयमदर्शनस्य संज्ञा क्रियते । नादर्शनस्य लिङ्गसंख्ये शक्येते अतिदेष्टुम् । लुपोऽदर्शनसंज्ञित्वादर्थगतिर्नोपपद्यते ॥

( उद्योतः ) भाष्ये लुपोऽदर्शनसंज्ञित्वादिति । लुपः लुप्शब्दस्य ॥ ननु लुपीत्यनेन प्रत्ययार्थौ वाच्य इत्यत आह—अदर्शनसंज्ञित्वादिति । बहुव्रीहिः ॥

( ७०६ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ न वाऽदर्शनस्याशक्यत्वादर्थगतिसाहचर्यात् ॥ * ॥

( भाष्यम् ) न वा एष दोषः ॥ किं कारणम् ? । अदर्शनस्याशक्यत्वात् । अदर्शनस्य लिङ्गसंख्ये अशक्ये अतिदेष्टुमिति कृत्वा अदर्शनसहचरितो योर्थस्तस्य गतिर्भविष्यति । साहचर्यात् ॥

( प्रदीपः ) न वाऽदर्शनस्येति । अभावरूपत्वादिति भावः ॥

( उद्योतः ) न वाऽदर्शनस्येति । लुबर्थादर्शनस्येत्यर्थः । अशक्यत्वे हेतुमाह—अभावेति । स्वरूपसदभावे शब्दावाच्येतिदेशोऽशक्य इति भावः ॥ साहचर्यादिति । लुप्शब्देन लुपो यः स्थानी प्रत्ययस्तदर्थो लक्ष्यते तद्युक्तार्थस्य लिङ्गसंख्ये लुप्स्थानिप्रत्ययार्थेऽतिदिश्येते इति तात्पर्यम् ॥

( ७०७ समाधानहेत्वन्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ योगाभावाच्चान्यस्य[3] ॥ * ॥

( भाष्यम् ) अन्यस्यादर्शनेन[4] योगो नास्तीति[5] कृत्वा अदर्शनसहचरितो योर्थस्तस्य गतिर्भविष्यति साहचर्यात् ॥

( प्रदीपः ) योगाभावादिति । अदर्शनेन प्रकृत्यर्थो न युक्त इत्यर्थः ॥

( उद्योतः ) युक्तः[6] संबद्ध इति प्रकृत्यर्थ इत्युच्यते । तत्र केन युक्त इत्याकाङ्क्षायामुपस्थितत्वाल्लुबर्थस्यैव संबन्धः स्यात् । न च तदर्थादर्शनेन कस्यचिद् योग इति युक्तपदार्थाप्रसिद्धिरतोऽपि तत्स्थानिप्रत्ययार्थलाभ इत्यर्थकं भाष्ये—योगाभावाचेति ॥

( ७०८ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ समास उत्तरपदस्य बहुवचनस्य लुपः ॥ * ॥

( भाष्यम् ) समासे उत्तरपदस्य बहुवचनस्य लुपो युक्तवद्भावो वक्तव्यः । मधुरापञ्चालाः[8] ॥ किं प्रयोजनम् ? ॥ नियमार्थम्—समास उत्तरपदस्यैव ॥ क मा भूत् ? ॥ पञ्चालमधुरे इति ॥ लुपि युक्तवत् ॥

1 लुप्यमानेत्यादिः । (र. ना) २ 'अतिदेष्टुमशक्ये इ' ॥ ३ 'भावाच्च * ॥' ४ 'अदर्शनेन ॥' ५ '–र्शनेन च यो–' ॥ ६ 'ति च कृ ॥' ७ 'युक्तः सम्बन्ध इति ॥ प्रकृत्यर्थ' इति पाठं कल्पयन् Bengal Asiatic Society.

मुद्रितपुस्तकशोधकः पाण्डित्यं स्वीयमपारं सूचयतीति विदांकुर्वन्तु सुधियः ॥
८ मधुरा मथुरा पुरी पञ्चाला जनपदस्तयोर्द्वन्द्वः । ( र. ना. )

(प्रदीपः) मधुरापञ्चाला इति । वर्तिपदार्था एवापेक्षितपरस्परा द्वन्द्वार्थं इति सिद्धे नियमः क्रियते । अत एव मधुरागोदा इति भवति न तु मधुरागोदाविति । द्वन्द्वेपि गोदार्थस्य द्वित्वानतिक्रमात् ॥ ५१ ॥

(उद्द्योतः) नन्वेवमप्युद्भूतावयवसमूहस्यैव द्वन्द्वार्थत्वेन द्विवचनमेव स्यादिति बहुवचनसिद्ध्यर्थोऽतिदेशः स्यादत आह—वर्तिपदेति । मधुरापञ्चाला इति भाष्ये उदाहृतत्वादिह समासशब्देनेतरेतरद्वन्द्व एवाभिधीयते । उत्तरसंख्यया पूर्वसंख्याबाधादतिदिष्टसंख्यामादाय बहुवचनम् । लुबन्तस्य पूर्वपदत्वे त्वतिदेशाभावाद् द्विवचनमेवेति भावः ॥ अत एव वर्तिपदार्थप्राधान्यादेव ॥ समासे बहुवचनान्तप्रकृतिकलुबन्तार्थे चेदतिदेशस्तदोत्तरपदस्यैवेति वार्तिकार्थो न तूत्तरपदस्य चेद्बहुवचनान्तस्यैवेत्यर्थं इति भावः ॥ बहुवचनग्रहणं त्वबहुवचनान्तलुबन्तपूर्वपदस्य नियमेन व्यावृत्तिर्माभूदिति, तेन गोदमधुरा इति भवति न तु गोदमधुरे इतीत्याहुः ५१

(१०४ युक्तवद्भावातिदेशसूत्रम् । १ । २ । २ आ. ८ सू.)

## १२६ विशेषणानां चाजातेः ॥१।२।५२॥

(जातिपदार्थान्वयनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**कथमिदं विज्ञायते जातिर्यद्विशेषणमिति, आहोस्विज्जातेर्यानि विशेषणानीति ? ॥**

(प्रदीपः) विशेष ॥ ५२ ॥ कथमिति । किं सामानाधिकरण्येन सम्बन्धः,—विशेषणानां युक्तवद्व्यक्तिवचने जातिस्तु यदा विशेषणं तदा नेति । अथ वैयधिकरण्येन—जातेर्यानि विशेषणानि तेषां नेति । अजातेरिति चासमर्थसमासः, भवतिना नञः सम्बन्धात् । उभयथा चाव्याप्तिः प्रतिषेधस्येति प्रश्नः ॥

(उद्द्योतः) विशेषणानां चा ॥ ५२ ॥ परिच्छेदकमत्र विशेषणम् ॥ नञा समस्ताया जातेर्विशेषणानामित्यनेन कथमन्वयोऽत आह—असमर्थेति । एवं च नञ इवोत्तरपदार्थस्याप्यन्यत्रान्वयो न दोषयेति भावः ॥ पूर्वसूत्रेण प्रकृत्यर्थगतलिङ्गसंख्ययोर्लुबर्थेतिदेशात्तद्विशेषणानामपि सिद्ध एवातिदेशः । लुबर्थविशेषणानां स्वविशेष्यगवलिङ्गवचनयोरुचितत्वात् । सूत्रं तु जातिप्रतिषेधार्थम् ॥ तत्र संदेह इति तात्पर्यम् ॥

(आक्षेपहेतुनिराकरणभाष्यम्)

**किं चातः ? ॥**

(आक्षेपसाधकभाष्यम्)

**यदि विज्ञायते—जातिर्यद्विशेषणमिति । सिद्धम्—पञ्चाला जनपद इति । सुभिक्षः संपन्नपानीयः बहुमाल्यफल इति न सिध्यति ॥**

**अथ विज्ञायते—जातेर्यानि विशेषणानीति सिद्धम्—सुभिक्षः संपन्नपानीयः बहुमाल्यफल इति । पञ्चाला जनपद इति न सिध्यति ॥**

(उद्द्योतः) भाष्ये—सुभिक्ष इत्यादि न सिध्यतीति । तेषां जनपदविशेषणत्वेऽपि तद्द्वारा लुबन्तविशेषणत्वस्यापि सत्त्वेन बहुवचनमेव स्यादीदृशविशेषणेषु विध्यर्थमेव विशेषणानामित्यंशः स्यादित्याशयः ॥

(समाधानभाष्यम्)

**एवं तर्हि नैवं विज्ञायते—जातिर्यद्विशेषणमिति, नापि—जातेर्यानि विशेषणानीति ॥ कथं तर्हि ? ॥ विशेषणानां युक्तवद्भावो भवति । आ जातेः । आजातिप्रयोगात् ॥**

(प्रदीपः) आजातिप्रयोगादिति । सूत्रे आङः प्रश्लेषो न तु नञः । अत्रायमर्थः—तावद्युक्तवद्भावो भवति यावज्जातिर्न प्रक्रान्ता । यदा तु जातिः प्रक्रम्यते विशेषणत्वेन विशेष्यत्वेन वा तदा युक्तवद्भावो न भवतीति ॥

(उद्द्योतः) यदा तु जातिः प्रक्रम्यते इति । अत एव पञ्चालाः सुभिक्षा जनपद इति पञ्चाला जनपदः सुभिक्ष इत्येव च भवति, जातौ प्रक्रान्तायां यद्विशेषणमुपनिपतितं तज्जातिमेव साक्षाद्विशिनष्टीति भावः । विशेषणानामित्यनेनापि साक्षाल्लुबर्थविशेषणग्रहणमेवोचितमिति तात्पर्यम् ॥ जातिगुणसमभिव्याहारे जातेर्विशेष्यत्वनियमादाह—विशेष्यत्वेन वेति ।

(भाष्यम्) **किमर्थं पुनरिदमुच्यते ? ।**

(उद्द्योतः) शङ्कते—भाष्ये—[ अथ ] किमर्थं पुनरिदमिति । विशेषणानामित्येतदित्यर्थः ॥

(७०९ समाधानवार्तिकम् ॥ १ ॥)

### ॥ * ॥ विशेषणानां वचनं जातिनिवृत्त्यर्थम् ॥ * ॥

(भाष्यम्) **जातिनिवृत्त्यर्थोऽयमारम्भः ॥**

(उद्द्योतः) उत्तरयति—जातिनिवृत्त्यर्थं इति ॥

(आक्षेपभाष्यम्)

**किमुच्यते जातिनिवृत्त्यर्थं इति । न पुनर्विशेषणानामपि युक्तवद्भावो यथा स्यादिति ।**

(उद्द्योतः) विशेषणानामिति । सुभिक्षादीनामित्यर्थः ॥

(७१० समाधानवार्तिकम् ॥ २ ॥)

### ॥ * ॥ समानाधिकरणत्वात्सिद्धम् ॥ * ॥

(भाष्यम्) **समानाधिकरणत्वाद्विशेषणानां युक्तवद्भावो भविष्यति ॥**

---

१ 'उद्भूताद्यवयव-' इति पाठं Bangal Asiatic Society. मुद्रितपुस्तके कल्पयन् स्वस्य गुर्वनध्ययनाविकृतबुद्धित्वं दर्शयतीति बोध्यम् ॥ २ मधुरागोदा इत्यादि प्रयोगसाधुत्वानुरोधेनेति भावः । ( र. ना. ) ३ 'रित्यसमर्थ ॥' ४ व्यावर्तकमात्रमित्यर्थः । ननु विद्यमानत्वे सति व्यावर्तकमात्ररूपम् । तेन शोभनत्वादेरुपलक्षणत्वविवक्षायामपि शोभनाः पञ्चाला इति भवतीति भावः । ( र. ना. ) ५ 'सामानाधिकरण्या' ॥

(उद्द्योतः) समानाधिकरणत्वादिति । अर्थस्य युक्तवद्भावे तदर्थाभिन्ने अनियतलिङ्गसंख्ये सर्वत्र सिद्धमिति तात्पर्यम् ॥

(प्रत्याख्यानभाष्यम्)

**यद्येवं, नार्थोऽनेन । लुपोऽन्यत्रापि जातेर्युक्तवद्भावो न भवति ॥ क्वान्यत्र ? ॥ बदरी सूक्ष्मकण्टका मधुरा[1] वृक्ष इति ॥**

(प्रदीपः) **बदरी सूक्ष्मकण्टकेति** । मधुरादीनां विशेषणानां बदर्युपनिपाते तल्लिङ्गसंख्यायोगः ॥ वृक्षोपनिपाते तु वृक्षाश्रयलिङ्गसंख्यायोगः ॥

(उद्द्योतः) अन्यत्रापि जातेर्युक्तवद्भावो नेति ॥ विशेष्यलिङ्गादिग्राहिता नेत्यर्थः ॥ वृक्षोपनिपाते त्विति । बदरी वृक्षो मधुर इति यथा । एवं प्रकृतेऽपि रूपद्वये सिद्धे व्यर्थं सूत्रमिति भावः॥

(आक्षेपभाष्यम्)

**किं पुनः कारणमन्यत्रापि जातेर्युक्तवद्भावो न भवति ? ॥**

(उद्द्योतः) पृच्छति—किं पुनरिति ॥

(समाधानभाष्यम्)

**आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्तते, उत्पत्तिप्रभृत्या विनाशान्न तद् लिङ्गं जहाति[3] ॥**

(प्रदीपः) **आविष्टलिङ्गेति** । आविष्टं लिङ्गं यया साऽऽविष्टलिङ्गा नियतलिङ्गेत्यर्थः । सर्वत्र सर्वेषां लिङ्गानां सद्भावेपि केनचिच्छब्देन किंचिल्लिङ्गं प्रत्याय्यत इति शब्दविशेषोपेक्षयाविष्टलिङ्गत्वमुच्यते ॥ **उत्पत्तिप्रभृत्या विनाशादिति** । जातेरुत्पत्तिविनाशायोगात् शब्दव्यवहारगतावुत्पत्तिविनाशौ गृह्येते । तेनासंसारं यावच्छाब्दो[4] व्यवहारस्तावज्जातेर्नियतलिङ्गत्वमित्यर्थः ॥

(उद्द्योतः) उत्तरयति—**आविष्टेति** ॥ ननु जातेर्लिङ्गाश्रयत्वाल्लिङ्गाविष्टा जातिरिति वक्तव्ये विपरीतोच्चारणमयुक्तमत आह—**आविष्टमिति** । विशिष्य गृहीतमित्यर्थः ॥ एवं व्युत्पत्तौ जातेर्नियतलिङ्गोपादानत्वेन तत्त्वं प्रतीयत इत्याह—**नियतेति** । यद्यपि जातिशब्दा अनियतलिङ्गा अपि दृश्यन्ते तथापि प्रकृताभिप्रायमेतत् ॥ ननु सर्वत्र सर्वलिङ्गसत्त्वात्कथं नियतलिङ्गत्वमत आह—**सर्वत्रेति** ॥ **शब्दव्यवहारगताविति** । व्यक्तिगतेति नोक्तं, व्यक्तेरपि कस्याश्चिन्नित्यत्वात् । अत एव शब्दगतेति नोक्तम् । जातिरित्युपलक्षणं नियतलिङ्गशब्दमात्रार्थस्य ॥

(तटस्थाक्षेपभाष्यम्)

**न तर्हीदानीमयं योगो वक्तव्यः ॥**

(सिद्धान्तिसमाधानभाष्यम्)

**वक्तव्यश्च किं । प्रयोजनम् ? ॥ इदं तत्र तत्रोच्यते—गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति, तदनेन क्रियते ॥**

(प्रदीपः) **गुणवचनानामिति** । पदसंस्कारपक्षे वाचनिकमेतत् । पदे हि पदान्तरनिरपेक्षे संस्क्रियमाणे नपुंसकं लिङ्गं[5] सर्वनामप्राप्तमेकत्वं च वस्त्वन्तरनिरपेक्षत्वात्सन्निहितमिति शुक्लं पटा इति प्राप्ते भाविनो बहिरङ्गस्याश्रयस्य सम्बन्धिन्यौ लिङ्गसंख्ये अनेन प्रतिपाद्येते । **'विशेषणानां'** गुणवचनानामित्यर्थः । **उक्तवद्व्यक्तिवचने** । आश्रयवल्लिङ्गसंख्ये इत्यर्थः ॥ यदा तु वाक्यसंस्कारस्तदायमनुवाद एव । आश्रयविशेषस्य पूर्वमेव प्रक्रमे विशेषणानामपि तन्निष्ठत्वात्[6] । तद्गतयोर्लिङ्गसंख्ययोः सिद्धत्वात् । यदा तु जातिर्विशेषणं तदा न भवति युक्तवद्भावः ॥

(उद्द्योतः) भाविन इति । भाविबुद्धिविषयस्येत्यर्थः ॥ **गुणवचनानामिति** । जातिक्रियादिभिन्नानामित्यर्थः ॥ तेन शक्यं च क्षुदुपहन्तुमित्याद्युपपन्नम्, गुणाभेदेन गुणोपसर्जनगुणिबोधकानामाश्रयत आश्रयविशेषतो लिङ्गादिकमित्यर्थः ॥ अयं भाष्योक्तः सूत्रार्थः ॥ **तन्निष्ठत्वादिति** तन्निष्ठत्वेन ग्रहादित्यर्थः ॥ **यदा तु जातिरिति** । यथा बदरी वृक्ष इत्यादाविति भावः ॥

(७११ नियमवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ हरीतक्यादिषु व्यक्तिः ॥ * ॥

(भाष्यम्) **हरीतक्यादिषु व्यक्तिर्भवति युक्तवद्भावेन । हरीतक्याः फलानि हरीतक्यः फलानि[7] ।**

(प्रदीपः) **हरीतक्यादिष्विति** । नियमार्थमेतत् । तेन वचनमभिधेयाश्रयं भवति ॥

(७१२ नियमवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ खलतिकादिषु वचनम् ॥ * ॥

(भाष्यम्) **खलतिकादिषु वचनं भवति युक्तवद्भावेन । खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि ।**

(प्रदीपः) **खलतिकमिति** । खलतिको नाम पर्वतस्तस्यादूरभवानि वनानीति लिङ्गमभिधेयाश्रयमेव भवति ॥

(७१३ आक्षेपवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ मनुष्यलुपि प्रतिषेधः ॥ * ॥

(भाष्यम्) **मनुष्यलुपि प्रतिषेधो वक्तव्यः ॥ चञ्चा अभिरूपः । वध्रिका दर्शनीयः ॥ विशेषणानां चाजातेः ॥ ५१ ॥**

(प्रदीपः) **मनुष्यलुपीति** । विशेषणानामयं प्रतिषेधः । तेन चञ्चाभिरूप इत्यभिधेयाश्रये लिङ्गसंख्ये भवतः । तृणमयः पुरुषश्चञ्चा तत्सदृशो मनुष्यश्चञ्चा **संज्ञायामिति** विहितस्य कनो **लुम्मनुष्य** इति लुप् ॥ ५१ ॥

(उद्द्योतः) मनुष्यलुपीत्यस्य युक्तवद्भावप्रतिषेधत्वे चञ्चेत्यसंगतमित्यत आह—**विशेषणानामिति** ॥ लुबन्तस्य तु विशेष्यपर्यवसायित्वादित्यर्थः फलितः । उद्द्योते तु अन्यथा व्याख्यातम् ।

---

१ 'मधुरो' ॥ २ वृक्षशब्दे जातिनिमित्तके युक्तवद्भावोऽत्र न भवतीति भावः । (र. ना.) ३ 'शास्तल्लिङ्गं न जहाति' ॥ ४ 'शब्दव्यवहार' ॥ ५ सर्वेषां लिङ्गानां नाम प्रतिपादकं नपुंसकमतः प्राप्तमित्यर्थः । (र. ना.) ६ अभेदेन (र. ना.) ७ हरीतक्य इत्यस्य फलपरत्वं व्यञ्जयितुमिदमुपात्तम् । (र. ना.)

भवत्येवेति भावः ॥ अभिधेयाश्रये इति । विशेष्यगतं यद् युक्तवद्भावेन लिङ्गं विशेषणे प्राप्तं तस्यायमुपस्थितत्वाद् निषेध इति विशेष्यभूतार्थगतं पुलिङ्गमत्र भवतीति भावः ॥ एतेन मनुष्यलुपीत्यनेन विशेषणानां विशेष्यगतलिङ्गादिनिषेध इत्यभिरूप इत्यत्र भाष्यकारवचनादेव पुंस्त्वमिति बोध्यमित्यपास्तम् ॥ ५२ ॥

( १०५ युक्तवद्भावप्रत्याख्यानसूत्रम् ॥१।२।२ आ. ९ सू० )

## १२७ तदशिष्यं संज्ञाप्रमाणत्वात् ॥ १ । २ । ५३ ॥

( उद्द्योतः ) तदशिष्यं ॥ ५३ ॥ तत् । युक्तवद्भावशास्त्रम् ॥

( संज्ञाशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किं या एताः कृत्रिमाष्टिघुभादिसंज्ञास्तत्प्रामाण्यादशिष्यम् ? ॥**

( प्रदीपः ) **तदशिष्यम्** ॥ ५३ ॥ **किं या एता इति** । प्रत्यासत्तिन्यायाश्रयेण प्रश्नः ॥

( उद्द्योतः ) भाष्ये—**कृत्रिमा इति** । शास्त्रतो बोधितसंकेता इत्यर्थः ॥ कृत्रिमसंज्ञाग्रहणे हेतुमाह—प्रत्यासत्तीति ॥

( समाधानभाष्यम् )

**नेत्याह । संज्ञानं संज्ञा । तदशिष्यम् ॥ ५३ ॥**

( प्रदीपः ) **नेत्याहेति** । प्रत्यासत्तेः सामर्थ्यं बलवत् । नहि टिघुभादिसंज्ञानां प्रमाणत्वं युक्तवद्भावशास्त्रस्याशिष्यत्वे हेतुरुपपद्यते सम्बन्धाभावात् ॥ **संज्ञानमिति** । अवगमः सम्प्रत्यय इत्यर्थः । तत्र यथापो दाराः सिकता वर्षा इत्युक्ते लिङ्गसंख्याविशेषावगतिरुत्पद्यमाना प्रमाणम् । एवं पञ्चाला वरणा इत्यादावपि । न च पञ्चालादयो यौगिका, अपि तु जनपदादीनां संज्ञास्[3]ततो योगानवगमात् तद्धितो नोत्पद्यते इति लुबपि न वक्तव्यः । तत्र सर्वेषां लिङ्गानां सर्वत्र भावात् केनचिच्छब्देन प्रत्याय्यमानं वस्तु कस्यचिल्लिङ्गस्य व्यञ्जकमिति दारादिषु नियतलिङ्गता सिद्धा । बहुत्वमप्यवयवगतं शक्तिगतं चान्यत्र[4] समारोप्यत इति संख्यायोगोऽपि सिद्धः । **एका सिकते**त्यापि शिष्टप्रयोगदर्शनात् सिध्यति ॥ ५३ ॥

( उद्द्योतः ) **सामर्थ्यमिति** । प्रकरणाल्लिङ्गं बलवदित्यर्थः ॥ **अवगम इति** । भावेऽन्तो यौगिकः संज्ञाशब्द इत्यर्थः ॥ प्रतीतिप्रामाण्यमवश्याश्रयणीयमित्याह—**तत्र यथेति** ॥ **प्रमाणमिति** । वचनमन्तरेणापीत्यर्थः ॥ **"लुब्योगाप्रख्यानात्" "योगप्रमाणे च तदभावेऽदर्शनं स्याद्"** इत्यनयोस्तात्पर्यं दृष्टान्तदार्ष्टान्तिकयो रूढयौगिकत्वरूपवैषम्यपरिहारं चाह—**न चेति** । एवं च लिङ्गप्रकरणं जात्याख्यायामित्यादि संख्याप्रकरणं च पूर्वाचार्यानुरोधेन कृतमिति ध्वनितं सूत्रकृता । सर्वं चेदं कालोपसर्जने चेति चेन संगृहीतम् ॥ **योगानवगमादिति** । संप्रति विनापि क्षत्रिययोगं जनपदे पञ्चालशब्दव्यवहारदर्शनादित्यर्थः ॥ **तत्र सर्वेषामिति** । उपचयापचयादिरूपस्य[5] तस्य केवलान्वयित्वादिति भावः ॥ **वस्तु द्रव्यम्** ॥ लिङ्गसंख्याकारकाश्रयत्वं हि द्रव्यत्वमिति तदेव द्रव्यत्वानुपपत्तिपरिहाराय लिङ्गव्यञ्जकं, शब्दस्तु करणमिति भावः ॥ एवं च दारपदार्थस्य स्त्रीत्वेऽपि शब्देनोपचयलक्षणं पुंरूपमेव व्यज्यते । सर्वेषां सर्वत्र सत्त्वादिति तात्पर्यम् ॥ **एका सिकतेति** । अयं प्रयोगो हयवरट्सूत्रे भाष्ये । एवमन्येऽपि अब्बादिशब्दविषयेऽपि शिष्टप्रयुक्ताः साधव इति ध्वनयन्नाह—**आदीति** ॥ ५३ ॥

( १०६ बहुत्वातिदेशसूत्रम् ॥ १ । २ । २ आ. १० सू. )

## १३२ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ॥ ५८ ॥

(एकत्वे बहुवचनसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

**इदमयुक्तं वर्तते ॥ किमत्रायुक्तम् ? ॥ बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम् । तद्यदेकवचने शासितव्ये बहुवचनं शिष्यते एतदयुक्तम् । बहुष्वेकवचनमिति नाम वक्तव्यम् ॥**

( प्रदीपः ) **जात्या** ॥ ५८ ॥ जातिरुपलक्षणम् । द्रव्यं तु शब्दार्थ इति दर्शनाश्रयेणाह—**इदमयुक्तमिति** ॥ **बहुष्वेकवचनमिति** । अत्र पक्षे जातेरुपलक्षणत्वेनाख्या जात्याख्येति व्याख्यानम् ॥

( उद्द्योतः ) **जात्याख्यायाम्** ॥ ५८ ॥ जातिवादिनो मते जातेरेकत्वाद् बहुवचनार्थमावश्यकमितीदमयुक्तमित्यसङ्गतमत आह—**द्रव्यं त्विति** । जातेरुपलक्षणत्वं तु शक्यतावच्छेदकतया बोध्यम्[6] । प्रकारान्तरमपि मञ्जूषायां द्रष्टव्यम् ॥ जात्याख्यायां बहुष्वेकवचनमित्यसङ्गतमत आह—**अत्र पक्ष इति** । क्रियादिप्रवृत्तिनिमित्तकाश्च तद्व्यावर्त्या इति भावः ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( ७१४ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ जात्याख्यायां सामान्याभिधानादैकार्थ्यम् ॥ * ॥

( भाष्यम् ) **जात्याख्यायां सामान्याभिधानादैकार्थ्यं भविष्यति । यत्तद् व्रीहौ व्रीहित्वम् यवे यवत्वम् गार्ग्ये गार्ग्यत्वम् तदेकम्, तच्च विवक्षितम्, तस्यैकत्वादेकवचनमेव प्राप्नोति । इष्यते च बहुवचनं स्यादिति । तच्चान्तरेण यत्नं न सिध्य-**

---

[1] युक्तवद्भावेन प्राप्तं लिङ्गं विशेषणे प्रतिषिध्यते मनुष्यादिरूपविशेष्यपदार्थाभेदेन अभिरूपादौ पुंस्त्वादिकं तु न निषिध्यते तेन चञ्चाऽभिरूपो मनुष्य इति भवतीति भावः । ( र. ना. ) [2] 'दीनामेताः संज्ञा' ॥ [3] 'अतो' ॥ [4] 'वाऽन्यत्र' ॥ [5] सत्त्वादिगुणानामुपचयापचयादिरूपस्य पुंस्त्वादिलिङ्गस्येत्यर्थः । ( र. ना. ) [6] अत्र मते शक्यतावच्छेदके न शक्तिरित्यपि बोध्यम् । ( र. ना. ) [7] जात्यभिधानादित्यर्थः । ( र. ना. )

तीति जात्याख्यायामेकस्मिन् बहुवचनम्। एवमर्थमिदमुच्यते॥

(प्रदीपः) जातिपदार्थपक्षाश्रयेणोत्तरमाह—जात्याख्यायामिति॥ गार्ग्ये गार्ग्यत्वमिति। गोत्रस्यापि जातित्वाभ्युपगमादेतदुक्तम्। बहुषु गर्गेषु गार्ग्यत्वस्याभिन्नस्याभावात्॥ एकस्मिंस्तु पिण्डे अवस्थाभेदानुगता डित्थत्वादिका जातिर्जात्याख्यायामिति वचनसामर्थ्यान्न गृह्यते। जातिपदार्थवादिमते हि सर्वे शब्दा जात्यर्थाभिधायिन इति सामर्थ्याद्भिन्नपिण्डविषया जातिराश्रीयते॥

(उद्योतः) द्रव्यवादे उत्तरासङ्गतेराह—जातिपदार्थेति॥ जात्याख्यायामेकस्मिन्निति यदैकार्थ्यं तदुक्तं सामान्याभिधानादिति योजना वार्तिकस्य॥ अत्र पक्षे वाहदोहाद्यन्वयो विशेषणीभूतव्यक्तिद्वारैकपरम्परया जातावेवेति भावः॥ अभ्युपगमत्वे हेतुमाह—बहुष्विति॥ अभिन्नस्याभावादिति पाठः। अत एवाभ्युपगमवादोऽयमिति तात्पर्यम्। क्वचित्त्वभिन्नस्य भावादिति पाठः। तदा जात्यङ्गीकारे प्रमाणदर्शनमिदम्, अन्यथा गर्गनिष्ठजनकतानिरूपितजन्यत्वस्य प्रतिव्यक्तिभेदाद् गार्ग्य इत्यनुगताकारप्रतीतिर्न स्यादिति भावः॥ नन्वेवं परिमाणभेदाद्द्रव्यभेदेन डित्थत्वादीनामपि जातिशब्दत्वेन तत्रापि बहुवचनं स्यादत आह—एकस्मिन्निति॥ सामर्थ्यमेव दर्शयति—जातिपदार्थेति॥ सर्वे शब्दा इति। उक्तयुक्त्या पाचकादयोपि॥ भाष्ये—तच्च विवक्षितमिति। प्राधान्येनेति शेषः॥

(काकुभाष्यम्)

अस्ति प्रयोजनमेतत्। किं तर्हीति।

(७१५ आक्षेपवार्तिकम्॥ २॥)

॥ * ॥ तत्रैकवचनादेशो उक्तम्॥ * ॥

(भाष्यम्) किमुक्तम्?॥ व्रीहिभ्य आगत इत्यत्र "घेर्ङिति" इति गुणः प्राप्नोतीति॥

(उद्योतः) भाष्ये व्रीहिभ्य इति। सूत्रे एकस्मिन्नित्येकशब्देनैकवचनं गृह्यते भीमो भीमसेन इतिवत्॥ सप्तमी च षष्ठ्यर्थे इति भावः॥

(समाधानभाष्यम्)

नैष दोषः।

(७१६ समाधानवार्तिकम्॥ ६॥)

॥ * ॥ अर्थातिदेशात्सिद्धम्॥ * ॥

(भाष्यम्) अर्थातिदेशोऽयम्। नेदं पारिभाषिकस्य वचनस्य ग्रहणम्॥ किं तर्हि?॥ अन्वर्थग्रहणम्—उच्यते वचनम्। बहूनामर्थानां वचनं बहुवचनमिति। यावद् ब्रूयादेकोऽर्थो बहुवद्भवतीति तावदेकस्मिन् बहुवचनमिति॥

(प्रदीपः) बहूनामिति। बहूनामर्थानां बहुत्वमेवोच्यते इत्येकस्मिन्नर्थे बहुत्वमनेनातिदिश्यत इति बहुत्वाद्बहुवचनं भवतीति नास्ति स्थान्यादेशभावः। एवं तिष्यपुनर्वस्वोरित्यत्रापि द्विवचनबहुवचनशब्दाभ्यां द्वित्वबहुत्वयोरभिधानादर्थातिदेशात्स्थान्यादेशभावाभावः॥

(उद्योतः) सप्तम्युपादानादतिदेश एवेत्युत्तरम्॥ बहूनामर्थानां वचनं भ्यसादिवद्बहुवचनमपि भवतीत्यत आह—बहूनामिति। कर्मणि ल्युट्। बहूनामर्थानां संबन्धि यदुच्यते तद्बहुवचनम्। तच्चोपस्थितत्वाद्बहुत्वमेव तदाह—बहुत्वमेवोच्यत इति। एकत्वरूपेऽर्थे शास्त्रीयो बहुत्वरूपार्थस्य तादात्म्येनाहार्यारोप इति तात्पर्यम्॥ अत एव तद्विशेषणानामपि सिध्यति॥ एवमिति। अन्यथा तत्रापि तिष्यपुनर्वसू इत्यत्र जसि चेति गुणः स्यादिति भावः॥

(७१७ प्रतिषेधाक्षेपवार्तिकम्॥ ४॥)

॥ * ॥ संख्याप्रयोगे प्रतिषेधः॥ * ॥

(भाष्यम्) संख्याप्रयोगे प्रतिषेधो वक्तव्यः। एको व्रीहिः संपन्नः सुभिक्षं करोति। एको यवः संपन्नः सुभिक्षं करोति॥

(प्रदीपः) संख्याप्रयोग इति। एकस्यैव बहुत्वातिदेशः क्रियमाण एकशब्दप्रयोगेऽपि प्राप्नोतीति प्रतिषेध उच्यते॥

(उद्योतः) एकशब्दप्रयोगविरोधाद् बहुवचनाप्राप्तेराह—एकस्यैवेति। जातेरेकत्वावगतावेवातिदेशप्रवृत्तेरिति भावः॥

(७१८ प्रतिषेधवार्तिकम्॥ ५॥)

॥ * ॥ अस्मदो नामयुवप्रत्यययोश्च॥ * ॥

(भाष्यम्) अस्मदो नामप्रयोगे युवप्रत्ययप्रयोगे च प्रतिषेधो वक्तव्यः। नामप्रयोगे,—अहं देवदत्तो ब्रवीमि। अहं यज्ञदत्तो ब्रवीमि॥ युवप्रत्ययप्रयोगे—अहं गार्ग्यायणो ब्रवीमि। अहं वात्स्यायनो ब्रवीमि॥

(वार्तिके युवग्रहणवैयर्थ्यभाष्यम्)

युवग्रहणेन नार्थः—"अस्मदो नामप्रत्ययप्रयोगे न" इत्येव। इदमपि सिद्धं भवति—अहं गार्ग्यो ब्रवीमि। अहं वात्स्यो ब्रवीमि॥

(उद्योतः) भाष्ये प्रसङ्गादस्मदो द्वयोश्चेत्यस्य प्रतिषेधमाह—अस्मदो नामेति॥

"*अस्मदः सविशेषणस्य प्रयोगे न*" इत्येव। इदमपि सिद्धं भवति—अहं पटुर्ब्रवीमि। अहं पण्डितो ब्रवीमि॥

---

१ व्यक्तिविशिष्टजातिः पदार्थ इति भावः। (र. ना.) २ उपपादयिष्यते चैतत्, जातिशब्देन हि द्रव्याभिधानमिति भाष्यव्याख्यावसरे उद्योते। (र. ना.) ३ तेषामपि परम्परया व्यक्तिविशिष्टा पाकत्वादिजातिरेव शक्या इत्यभिसन्धिः। (र. ना.) ४ उक्तमिति। स्थानिवत्सूत्रे * जात्याख्यायां वचनादेशे स्थानिवद्भावप्रतिषेधः॥ * ॥ इति वार्तिकेनेति भावः॥

( ७१९ प्रत्याख्यानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ अशिष्यं वा बहुवत् पृथक्त्वाभिधानात् ॥ * ॥**

( भाष्यम् ) अशिष्यो वा बहुवद्भावः ॥ किं कारणम् ? ॥ पृथक्त्वाभिधानात् । पृथक्त्वेन हि द्रव्याण्यभिधीयन्ते । बह्वस्तेऽर्थास्तत्र युक्तं बहुवचनम् ॥

( प्रदीपः ) उभयपदार्थपक्षाश्रयेण प्रत्याख्यातुमाह—अशिष्यमिति ॥

( उद्योतः ) ननु द्रव्यपदार्थाश्रयेण प्रत्याख्याने 'व्रीहिः सम्पन्न' इति प्रयोगो न स्यादत आह—उभयेति । कदाचिद्द्रव्यं प्रधानं कदाचिज्जातिः प्रधानमित्यर्थः ॥ भाष्ये पृथक्त्वेनेति । भेदेनेत्यर्थः ॥

( आक्षेपभाष्यम् )

किमुच्यते—पृथक्त्वाभिधानादिति । यावता इदानीमेवोक्तम्—*जात्याख्यायां सामान्याभिधानादैकार्थ्यम् * इति ? ॥

( ७२० प्रत्याख्यानहेतुवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ जातिशब्देन हि द्रव्याभिधानम् ॥ * ॥**

( भाष्यम् ) जातिशब्देन हि द्रव्यमप्यभिधीयते जातिरपि ॥

( प्रदीपः ) तत्र कदाचिज्जातेः प्राधान्यं कदाचिद् द्रव्यस्येति यथेष्टप्रयोग उपपद्यते ॥ ५८ ॥

( उद्योतः ) भाष्ये—जातिशब्देनेति । जातिशब्दत्वाभिमतेनेत्यर्थः । निष्कृष्टजात्यभिधायकगोत्वादिशब्दे तु नायं विधिरिष्ट इति भावः । तदाह—द्रव्यमपीति । प्राधान्येनेति शेषः । तदाह—तत्र कदाचिदिति । जातिप्रकारकव्यक्तिविशेष्यक एव शक्तिग्रहः 'गौर्गोपदवाच्य' इति, जातिव्यक्त्युभयविषयकबोधे कारणम् । अत एव जातिविशेष्यकशक्तिग्रहविषयाद् गोत्वपदान्न कदापि व्यक्तिबोधः ॥ जातिव्यक्त्योरन्यतरस्य विशेष्यतायां च पुरुषेच्छैव नियामिका । तात्पर्यग्राहकं चैकवचनबहुवचनादि ॥ एतदेवाभिप्रेत्य जातिप्राधान्ये द्वन्द्वे एकवद्भावो व्यक्तिप्राधान्ये तु नेति व्यवहार इति भावः ॥ तत्र जातौ व्यक्तेः प्रकारताऽभेदेनेति[2] न वाह्याद्यन्वयानुपपत्तिः । गोत्वपदजन्यगोत्वबोधे तु भेदेनेति[3] न गोत्वं वाह्येत्यादिप्रयोगः । व्यक्तिद्वारकोऽन्वय इत्यस्याप्ययमेवार्थ इति बोध्यम् ॥

( आक्षेपभाष्यम् )

कथं पुनर्ज्ञायते जातिशब्देन द्रव्यमप्यभिधीयत इति ? ॥

( समाधानभाष्यम् )

एवं हि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति—अस्त्यत्र कांचिद्गां पश्यसीति । स पश्यति—'पश्यति चायं गाः' पृच्छति च—'कांचिदत्र गां पश्यसि' इति, नूनमस्य द्रव्यं विवक्षितम्—'इति ॥ तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति । यदा सामान्याभिधानं तदैकवचनं भविष्यति ॥ जात्याख्यायाम् ॥ ५८ ॥

( उद्योतः ) भाष्ये—महति गोमण्डल इति । अतिनिबिडगोमण्डलेऽविविक्ततया दृष्टे इत्थमुक्तिः । तत्र जातेरेव शब्दार्थत्वे जातेर्दृष्टत्वात् प्रश्नानुपपत्तिरित्यर्थः ॥ ५८ ॥

( १०७ बहुत्वातिदेशसूत्रम् ॥ १ । २ । २ आ. ११ सू० )

## १३३ अस्मदो द्वयोश्च ॥ १ । २ । ५९ ॥

( प्रत्याख्यानभाष्यम् )

अयमपि योगः शक्योऽवक्तुम् ॥

( आक्षेपभाष्यम् )

कथम्—अहं ब्रवीमि आवां ब्रूवः वयं ब्रूमः ? ॥

( समाधानभाष्यम् )

इमानीन्द्रियाणि कदाचित्स्वातन्त्र्येण विवक्षितानि भवन्ति । तद्यथा—इदं मे अक्षि सुष्ठु पश्यति, अयं मे कर्णः सुष्ठु शृणोतीति । कदाचित्पारतन्त्र्येण विवक्षितानि भवन्ति—अनेनाक्ष्णा सुष्ठु पश्यामि, अनेन कर्णेन सुष्ठु शृणोमीति । तद्यदा स्वातन्त्र्येण विवक्षा तदा बहुवचनं भविष्यति । यदा पारतन्त्र्येण तदैकवचनद्विवचने भविष्यतः ॥ अस्मदो ॥ ५९ ॥

( प्रदीपः ) अस्मदः ॥५९॥ तद्यदेति । एकेन्द्रियप्रवृत्तौ चेतरेन्द्रियान्तराणामौदासीन्येन संविधातृत्वात् कर्तृत्वविवक्षेति वयं पश्याम इत्यादि सिद्धम् । शरीर इवेन्द्रियेष्वप्यहंकारोत्पादाद्वयमित्यनेनेन्द्रियाणामभिधानात् ॥ पारतन्त्र्यविवक्षायां त्विन्द्रियाणामहं ब्रवीमि इत्येकवचनं सिद्धम् । युष्मदस्मदोश्चैकशेषेऽस्मदोऽर्थद्वयाभिधानाद्द्विवचनमिति नार्थो योगेन । संप्रत्ययप्रामाण्याच्च युष्मदि गुरौ पक्षे बहुवचनं सिद्धम् ॥ ५९ ॥

( उद्योतः ) अस्मदो द्व ॥ ५९ ॥ नन्विन्द्रियाणां स्वातन्त्र्येऽपि एकेन्द्रियसाध्यक्रियायामिन्द्रियान्तराणां कर्तृत्वाभावाद्बहुवचनमनुपपन्नमत आह—एकेन्द्रियेति । स्वविषयौदासीन्यं संविधातृत्वे हेतुः । संविधातृत्वं, सहकारित्वम् ॥ नन्वेवमस्मदः प्रयोगोऽनुपपन्नोऽत आह—शरीर इवेति । अहंकारः । अहंत्वप्रतीतिरहं काण इत्यादिः ॥ पारतन्त्र्येति । तथा च करणत्वेन विवक्षितत्वात्संविधातृत्वलक्षणकर्तृत्वं नास्तीत्यर्थः ॥ उच्चारयित्रात्मन अहंकारास्पदात्मनो वा एकत्वादावामित्यनुपपन्नमत आह—एकशेषेति । त्यदादीनां यत्परं तच्छिष्यत इति भावः ॥ अस्मदोऽर्थद्वयाभिधानादित्यत्रास्मद इति शेषत्वविवक्षया षष्ठी ॥ संप्रत्य-

१ वैशिष्ट्यं तृतीयार्थः । भिन्नानि द्रव्याणीत्यर्थः । ( र. ना. ) २ 'ऽभेदप्रधानतादात्म्येने' ॥ ३ 'भेदप्रधानतादात्म्येने' ॥ ४ अत्र कांचिद् गां पश्यसीत्यस्ति इति योजना—एतद्देशाधिकरणककिंचिद्गोकर्मकदर्शनं भवतोऽस्तीत्यर्थः—स पश्यति विचारयतीत्यर्थः । ( र. ना. ) ५ प्रत्येकं विशेषधर्मवत्तयाऽपरिज्ञाय दृष्टे इत्यर्थः । ( र. ना. ) ६ अहंकारोऽहंमत्ययोग्यव्यवहारश्च । ( र. ना. )

येति । व्यवहारेत्यर्थः ॥ एवं च युष्मदि गुरावेकेषामिति कचि-द्वृत्तावुच्यमानमसङ्गतमिति भावः । अत एवाचार्याः कथयन्तीत्यादि संगच्छते । इत्थमेव डित्थाः कथयन्तीत्याद्युपपत्तिर्बोध्या । एतदर्थं च प्रत्याख्यानप्रकारस्यावश्यकत्वात्सूत्रं प्रत्याख्यातमिति भावः ॥५९॥

( १०८ बहुत्वातिदेशसूत्रम् ॥ १ । २ । २ आ १२ सू० )

## १३४ फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ १ । २ । ६० ॥

( प्रत्याख्यानभाष्यम् )

अयमपि योगः शक्योऽवक्तुम् ॥

( आक्षेपभाष्यम् )

कथम्—उदिते पूर्वे फल्गुन्यौ, उदिताः पूर्वाः फल्गुन्यः, उदिते पूर्वे प्रोष्ठपदे, उदिताः पूर्वाः प्रोष्ठपदाः ? ॥

( समाधानभाष्यम् )

फल्गुनीसमीपगते चन्द्रमसि फल्गुनीशब्दो वर्तते । बह्वस्तेऽर्थास्तत्र युक्तं बहुवचनम् । यदा तयोरेवाभिधानं तदा द्विवचनं भविष्यति ॥ फल्गुनी ॥ ६० ॥

(प्रदीपः) फल्गुनी ॥६०॥ बह्वस्तेऽर्था इति । अमावास्यायामप्यादित्यमण्डलं प्रविष्टेन चन्द्रेण नक्षत्राणां योगोऽस्त्येवेति तदापि बहुवचनमर्धर्चाः छत्रिण इत्यादिन्यायेन सिद्धम् । एकस्यां तु तारायां फल्गुनीशब्दो न वर्तत इति एकवचनाभावः । सर्वत्र लौकिकः प्रयोगः प्रामाण्येनाश्रीयते इत्यनवस्था न भवति ॥ ६० ॥

( उद्द्योतः ) फल्गुनी ॥ ६० ॥ अमायां चन्द्रस्य नष्टत्वात्कथं बहुवचनमित्यत आह—अमेति ॥ ननु चन्द्रस्य फल्गुन्यादिपदवाच्यत्वाभावात् कथं तमादाय फल्गुन्य इत्यादिप्रयोगोऽत आह—अर्धर्चा इति । तद्रूपारोपात्तच्छब्दप्रवृत्तिरिति भावः ॥ नन्वेवमेकर्क्षविवक्षायामेकवचनमपि स्यादत आह—एकस्यामिति । नन्वेवं नक्षत्रान्तरेऽपि चन्द्रसंबन्धविवक्षायां द्विवचनादि स्यादत आह—सर्वत्रेति । अनवस्था अतिप्रसङ्गः ॥ ६० ॥

(१०९–११० एकत्वातिदेशसूत्रे ॥१।२।२आ. १३–१४ सू.)

## १३५ छन्दसि पुनर्वस्वोरेकवचनम् ॥ १ । २ । ६१ ॥

## १३६ विशाखयोश्च ॥ १ । २ । ६२ ॥

( प्रत्याख्यानभाष्यम् )

इमावपि योगौ शक्याववक्तुम्[1] ॥

[1] 'वक्तुम्' ॥

( आक्षेपभाष्यम् )

कथम् ? ।

( ७२२ प्रत्याख्यानहेतुवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्णेति सिद्धम् ॥ * ॥

( भाष्यम् ) पुनर्वसुविशाखयोः "सुपां सुलुक्पूर्वसवर्ण" इत्येव सिद्धम् ॥ छन्दसि ॥ ॥ विशाखयोः ॥ ६२ ॥

( १११ द्वित्वातिदेशसूत्रम् ॥ १ । २ । २ आ. १५ सू. )

## १३७ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ १ । २।६३॥

( आक्षेपभाष्यम् )

तिष्यपुनर्वस्वोरिति किमर्थम् ? ॥

( समाधानभाष्यम् )

कृत्तिकारोहिण्यः ॥

( आक्षेपभाष्यम् )

नक्षत्र इति किमर्थम् ? ।

(प्रदीपः) तिष्य ॥६३॥ नक्षत्र इति किमर्थमिति । तिष्यपुनर्वसवो माणवका इत्यत्र गौणार्थत्वान्न[2] भविष्यतीति प्रश्नः ॥

( उद्द्योतः ) तिष्यपुन ॥ ६३ ॥ ननु माणवकवाचिद्वन्द्वनिवृत्त्यर्थं तदत आह—तिष्येति ॥

( समाधानभाष्यम् )

तिष्यश्च माणवकः, पुनर्वसू च माणवकौ, तिष्यपुनर्वसवः ॥

( प्रदीपः ) उत्तरवादिनस्त्वयमभिप्रायः तिष्येण युक्तकालस्तिष्यस्तिष्ये जातो माणवक इति यौगिकत्वान्नास्ति गौणार्थत्वम् ॥

( उद्द्योतः ) तिष्येणेति । नक्षत्रेण युक्तः काल इत्यणो लुबविशेष इति लुपि जाते सन्धिवेलाद्यणः स्वातितिष्यपुनर्वस्विति लुक् ॥ यौगिकत्वादिति । लोपेनाप्यवशिष्टस्य तदर्थान्तर्भावेण शक्तिरेव बोध्यते । अत एव लुबादिप्रत्याख्यानं सूत्रकृतोक्तमिति भावः ॥

( आक्षेपभाष्यम् )

अथ नक्षत्र इति वर्तमाने पुनर्नक्षत्रग्रहणं किमर्थम् ? ।

( समाधानभाष्यम् )

अयं तिष्यपुनर्वसुशब्दोऽस्त्येव ज्योतिषि वर्तते । अस्ति च कालवाची । तद्यथा-बह्वस्तिष्यपुनर्वसवोऽतिक्रान्ताः, कतरेण तिष्येण गत इति । तद्यो ज्योतिषि वर्तते तस्येदं ग्रहणम् ॥

[2] अभिव्यक्तपदार्था ये इति न्यायादिति भावः । ( र. ना. )

**( प्रदीपः ) ज्योतिषि वर्तत इति ।** नन्वेकेनैव नक्षत्रग्रहणेन कालमाणवकयोर्निवृत्तिः सिद्धा तत्र किं द्वितीयेन नक्षत्रग्रहणेन ॥ नैतदस्ति । अन्तरङ्गः कालः बहिरङ्गस्तु माणवक इत्यन्तरङ्गस्यैव कालस्यैकेन नक्षत्रग्रहणेन निवृत्तिः स्यात् । यथाऽकर्मकश्चत्यान्तरङ्गं द्रव्यकर्म निषिध्यते न कालकर्मेति मासमास्यते देवदत्तेनेत्यत्रापि भावे लकारः सिद्धो भवति । द्वितीयेन तु नक्षत्रग्रहणेन बहिरङ्गोऽपि माणवको निवर्त्यते ।

**( उद्द्योतः ) अन्तरङ्ग इति ।** कालार्थतद्धितान्तान्माणवकार्थतद्धितोत्पत्तिरिति कालमाणवकयोरन्तरङ्गबहिरङ्गतेति भावः ॥ **यथेति ।** द्रव्यकर्मणा क्रियास्वरूपपरिपूर्णं कालकर्मणा त्ववगतायाः क्रियायाः कालसंबन्धपूरणमिति तयोरन्तरङ्गबहिरङ्गता बोध्या ॥

( समाधानान्तरभाष्यम् )

**अथ वा नक्षत्र इति वर्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनम्—विदेशस्थमपि तिष्यपुनर्वस्वोः कार्यं [तदपि][1] नक्षत्रस्यैव यथा स्यात् । *तिष्यपुष्ययोर्नक्षत्राणि यलोपो वक्तव्यः* इति नक्षत्रग्रहणं न कर्तव्यं भवति ॥**

**( प्रदीपः )** ननु नक्षत्रद्वन्द्वे इत्युक्ते अर्थाद्द्वयोरपि कालमाणवकयोर्निवृत्तिः सिद्धैवेत्याह—**अथ वेति** ॥ **तिष्यपुनर्वस्वोरिति** योगविभागः क्रियते **नक्षत्र** इति चानुवर्तते । तेन यत्किंचित्तिष्यपुनर्वस्वोः कार्यं तन्नक्षत्रवृत्त्योरेव भवतीत्यर्थः ॥

**( उद्द्योतः ) नन्विति ।** अकर्मकग्रहणेन श्रुत्यैव साक्षात्कर्मणि व्यावर्त्यमाने युक्ता पूर्वपश्चात्संबन्धसत्त्वेनान्तरङ्गस्यैव व्यावृत्तिर्नैत्वेवं प्रकृते । अस्य हि स्वार्थसमर्पणद्वारान्यव्यावर्तकत्वेनाविशेषादुभयव्यावर्तकत्वसंभवादिति भावः ॥ अत्रत्यस्याङ्गाधिकारस्थेन कथं संबन्धोऽत आह—**तिष्येति ।** नक्षत्रस्याण् नक्षत्राण् ततः सप्तम्यां नक्षत्राणीति निर्देशः ॥

( समाधानान्तरभाष्यम् )

**अथ वा नक्षत्र इति वर्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनं तिष्यपुनर्वसुपर्यायवाचिनामपि यथा स्यात्—तिष्यपुनर्वसू सिध्यपुनर्वसू ॥**

**( प्रदीपः )** यलोपे कृतमेव नक्षत्रग्रहणमित्यभिप्रायेण आह—**अथ वेति** । स्वरूपग्रहणे प्राप्तेऽर्थग्रहणार्थं द्वितीयं नक्षत्रग्रहणम् । पुनर्नक्षत्रग्रहणे सत्यर्थस्यैवायमनपेक्षितोपात्तशब्दस्यातिदेश इति पर्यायाणामपि ग्रहणसिद्धिः ॥

**( उद्द्योतः ) यलोप इति ।** तच्च पुष्यविशेषणार्थमावश्यकमेवेति भावः ॥ **पुनर्नक्षत्रेति** । तिष्यपुनर्वस्वोः शब्दयोरभिधेये नक्षत्रे वर्तमानानां नक्षत्रशब्दानां द्वन्द्व इति सूत्रार्थ इति भावः ॥ **अर्थस्यैवेति ।** तदर्थसंबन्धिनो बहुत्वस्य द्वित्वातिदेश इत्यर्थः ॥

( आक्षेपभाष्यम् )

**अथ द्वन्द्व इति किमर्थम् ? ॥**

( समाधानभाष्यम् )

**यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसव उन्मुग्धाः ॥**

**( प्रदीपः ) तिष्यपुनर्वसव उन्मुग्धा इति ।** केचिदाहुः—पुरुषा अन्यपदार्थः नक्षत्राणां तु बहुव्रीहिरिति द्विवचनप्रसङ्गः ॥ अन्ये त्वाहुः—नक्षत्रवृत्तेः समासस्य ग्रहणे पुरुषाणामन्यपदार्थत्वे प्रसङ्ग एव नास्तीति[2] ॥ अवयवेन विग्रहः समुदायः समासार्थ इति तिष्यादय एव विपर्यासविषया बहुव्रीहिणोच्यन्त इत्यस्ति प्रसङ्गः ॥

**( उद्द्योतः ) समासस्येति ।** कृत्तद्धितेति सूत्रादिपरिणतविभक्तिकं समासग्रहणमनुवर्त्येत्यर्थः नास्तीतीत्यन्तेन[3] पूर्वमतदूषणम् ॥ अथ भाष्यं व्याचष्टे—**अवयवेनेत्यादिना** । अवयवार्थकेन वर्तिपदार्थस्य बोधनमित्यर्थस्तदाह—**समुदाय इति** । उद्भूतावयवभेद इत्यर्थः ॥ **विपर्यासविषया इति** । यस्तिष्य इत्युपलक्षणं यौ पुनर्वसू स तिष्यो येषामित्यर्थस्यापीति भावः ॥ **विपर्यासो भ्रमः** ॥ उन्मुग्धा इत्यस्य च विपर्यासेन दृश्यमाना इत्यर्थः । अविविक्तावचनान्मुहेः कर्तरि क्तोऽविविक्ता इत्यर्थादिति भावः ॥

( सर्वो द्वन्द्वो विभाषैकवदिति परिभाषाधिकरणम् )

( आक्षेपभाष्यम् )

**बहुवचनस्येति किमर्थम् ? ॥**

( समाधानभाष्यम् )

**उदितं तिष्यपुनर्वसु ॥**

( प्रश्नभाष्यम् )

**कथं चात्रैकवचनम् ? ॥**

**( उद्द्योतः )** भाष्ये—**कथं चात्रेति** । प्राण्यङ्गादीनामेव समाहारद्वन्द्व इति नियम इति भावः ॥

( समाधानभाष्यम् )

**जातिद्वन्द्व एकवद्भवतीति ॥**

**( प्रदीपः ) जातिद्वन्द्व इति ।** कथमनयोर्जातिशब्दत्वम् । यावता जातिप्रदेशेषु भिन्नाधारा जातिर्गृह्यते न त्ववस्थामेदकल्पितमेदैकवस्तुविषया ॥ एवं तर्हि प्रतिमन्वन्तरे भिन्नानि नक्षत्राणीति दर्शने भिन्नाधारा जातिः संभवतीति न कश्चिद्दोषः ॥

( समाधानबाधकभाष्यम् )

**अप्राणिनामिति प्रतिषेधः प्राप्नोति[6] ॥**

( परिभाषासिद्धिसमाधानभाष्यम् )

**एवं तर्हि सिद्धे[7] सति यद्बहुवचनग्रहणं करोति,**

---

१ एतत्कोष्ठकान्तर्गतं 'तदपि' इति सर्वेषु पुस्तकेषूपलभ्यते । तद् दृष्ट्वा प्राचीनतर एकस्मिन् पुस्तके 'यत्' इति 'विदेशस्थमपि' इत्यतोऽग्रे त्रुटिचिह्नं कृत्वा बहिर्वर्धितमिति बोध्यम् ॥ २ अत्र पुरुषा यत्पदार्थ उद्भूतावयवभेदस्तिष्यपुनर्वसुघटितो नक्षत्रसमुदायो वा । ( र. ना. ) ३ 'नास्ति' ॥ ४ 'नास्तीत्यन्तेन' ॥ ५ तिष्यपुनर्वसुघटित इत्यपि बोध्यम् । ( र. ना. ) ६ एवं चैकवचनस्याप्राप्त्या बहुवचनग्रहणस्य व्यावर्त्यालाभेन वैयर्थ्यमेवेति भावः ॥ ७ बहुवचनस्यैव द्विवचनादेशे सिद्धे सतीत्यर्थः । ( र. ना. )

**तज्ज्ञापयत्याचार्यः—"सर्वो द्वन्द्वो विभाषयैकवद्भवति" इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?। बाभ्रवशालङ्कायनं बाभ्रवशालङ्कायना इत्येतत्सिद्धं भवति ॥**

(प्रदीपः) **सर्वो द्वन्द्व इति** । अप्राणिजातिद्वन्द्वो नित्यमेकवद्भवति । प्राणिद्वन्द्वस्तु विकल्पेन । न्यायसिद्धश्चार्थो बहुवचनग्रहणेन लिङ्गेन सूच्यते ॥ एकवद्भावप्रकरणं हि विषयविभागार्थमारब्धम्—प्राण्यङ्गादीनां समाहार एव, न तु प्राण्यङ्गादीनामेव समाहार इति । ततस्तत्प्रकरणानुपात्तानां समाहारेतरेतरयोगयोर्द्वन्द्वः सिद्ध एव ॥

(उद्द्योतः) **एवं तर्हीति** । द्वन्द्वश्चेत्यादिषु—एषां समाहार एवेति नियमबोधनद्वारा तद्व्यतिरिक्तसर्वद्वन्द्वस्यानेनोभयरूपता बोध्यत इत्यर्थस्तदाह—**अप्राणीति** । न्यायसिद्धार्थद्योतकत्वेन सर्वशब्दस्य संकुचद्वृत्तितैव युक्तेति भावः । तद्ध्वनयन्नाह—**न्यायेति**॥ एकवद्भावप्रकरणवैयर्थ्यमुद्धरन् न्यायमेव दर्शयति—**एकेति** । **विषयविभागो,** विषयनियमः । न तु विधेयद्वन्द्वनियमार्थमिति भावः ॥ **नत्विति** । अन्यथाऽत्र बहुवचनग्रहणवैयर्थ्यापत्तिरिति भावः ॥ **सिद्ध एवेति** । चार्थ इत्यनेनेत्यर्थः ॥

(समाधानान्तरभाष्यम्)

**अथ वा नात्रभवन्तः प्राणिनः, प्राणा एवात्रभवन्तः ॥ तिष्यपुनर्वस्वो ॥ ६३ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् ॥**

(प्रदीपः) **अथ वेति** । नह्येतेषु लोके प्राणिव्यवहारः प्रसिद्ध इति भावः ॥ **प्राणा एवेति** । तदधीनस्थितित्वात्प्राणिनामेत एव प्राणा उच्यन्ते ॥ ६३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्य द्वितीये पादे द्वितीयमाह्निकम् ॥ २ ॥

(उद्द्योतः) **नह्येतेष्विति** । **आपोमयः प्राण** इति श्रुतेरद्भिर्विना ग्लायमानप्राणा एव लोके प्राणिन इत्युच्यन्ते, इदमेव पूज्यत्वं भाष्येऽत्रभवच्छब्देनोच्यत इति भावः ॥ लोके प्राणे इति व्यवहारस्याप्यभावादाह—**तदधीनेति** । एवं च तैथा नियमेऽपि न क्षतिरिति भावः ॥ केचित्त्विष्टानुरोधेन द्वन्द्वश्चेत्यादिषु समाहार एवेति नियमः ॥ एवं चार्त्रापि पक्षे जातिरप्राणिनामिति नित्यैकवद्भावे बहुवचनाभावात्सूत्रमनर्थकं सदुक्तार्थज्ञापकम् । ज्ञाप्यकोटौ सर्वशब्देनैकवद्भावविषयो जातिद्वन्द्व एव गृह्यते ॥ द्वन्द्वश्चेत्यादीनामन्येषां तु नित्यमेव । अत एवैकवद्भावप्रकरणं **पूर्वत्र नित्यार्थमुत्तरत्र व्यभिचारार्थमिति विभाषा वृक्षेति** सूत्रस्थभाष्येण न विरोधः ॥ अत एव **मृदङ्गशङ्खतूर्णवा** इत्यादि संगच्छते ॥ यदा जातिप्राधान्य एकवचनं व्यक्तिप्राधान्ये च बहुवचनमित्युभयमप्यत्र । अत्रैवार्थे इदं ज्ञापकमित्याहुः ॥ ६३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य द्वितीये द्वितीयमाह्निकम् ॥
आदित एकादशमाह्निकम् ॥

---

अथ

# प्रथमाध्याये द्वितीये पादे तृतीयमाह्निकम् ।

(आदितो द्वादशमाह्निकम्)

(एकशेषप्रकरणमारभ्यते)

(११२ नियमसूत्रम् । १ । २ । ३ आ. १ सू.)

## १३८ सरूपाणामेकशेष एकविभक्तौ ॥ १ । २ । ६४ ॥

(पदकृत्याधिकरणम्)

(आक्षेपभाष्यम्)

**रूपग्रहणं किमर्थम् ? ॥**

(प्रदीपः) **सरूपा ॥ ६४ ॥ रूपग्रहणमिति** । रूपस्यान्तरङ्गत्वादहेयत्वादुपदेशानपेक्षणाच्च तत्कृतमेव समानत्वं ग्रहीष्यते । प्रतिपत्तिलाघवं च समानानामित्युच्यमाने भवति । रूढशब्दत्वात्समानशब्दस्य तुल्यार्थत्वावगमात् । **सरूपाणा**मिति पुनरुच्यमाने पदद्वयार्थावगमपूर्वकान्यपदार्थावगमात् प्रतिपत्तिगौरवं भवतीति प्रश्नः ॥

(उद्द्योतः) **सरूपाणाम् ॥ ६४ ॥** नन्वर्थकृतमपि साम्यं गृह्येतेति प्रश्नानुपपत्तिरत आह—**रूपस्येति** ॥ **अन्तरङ्गत्वं,** शाब्दार्थप्रतीतेः पूर्वं नियमेन प्रतीयमानत्वम् । अर्थो हि तद्विपरीतत्वाद्बहिरङ्गः, तथानुकरणदशायामप्रतीतेर्हेयश्च । शब्दस्य तु ज्ञानमात्रे भानात्स कुत्रापि न हेयः ॥ **उपदेशः,** संबन्धग्रहः । पर्यायाप्रतिपाद्यमानत्वमसाधारणत्वम् ॥ ननु समानानामित्युक्तेऽपि वर्णकृतलाघवाभावोऽत आह—**प्रतिपत्तीति** । यद्यपि सह मानेनेतियोगस्तत्रापि तथापि प्रवीणादिवद्रूढ एवायमिति भावः । **तदाह—रूढशब्दत्वादिति** ॥ सरूपशब्दस्तु ज्योतिर्जनपदेति समानस्य सभावविधानादवयवानुसंधानद्वारेणैव सादृश्यं प्रतिपादयतीति तात्पर्यम् ॥

(समाधानभाष्यम्)

**"समानानामेकशेष एकविभक्तौ" इतीयत्युच्यमाने यत्रैव सर्वं समानं शब्दोऽर्थश्च, तत्रैव स्याद् वृक्षाः प्लक्षा इति । इह न स्याद्—अक्षाः पादा**

---

१ सर्वस्य द्वन्द्वस्य विभाषयैकवद्भावस्वीकारे इत्यादिः । (र. ना.) २ 'प्राणव्यवहार' ॥ ३ प्राण्यङ्गादीनामेव समाहार इति नियमेऽपीत्यर्थः । (र. ना.) ४ समाहार एवेति नियमपक्षेऽपीत्यर्थः । (र. ना.) ५ विभाषा वृक्षेति सूत्रादिति शेषः । एवमुत्तरत्रेत्यत्रापि । व्यभिचारार्थमित्यस्य विभाषार्थमित्यर्थः । (र. ना.) ६ पणवा इति पाठो भाति (र. ना.) ७ बहुवचनग्रहणमित्यर्थः । (र. ना.) ८ 'समानामित्यु' ॥

**माषा इति । रूपग्रहणे पुनः क्रियमाणे न दोषो भवति । रूपं निमित्तत्वेनाश्रीयते । श्रुतौ च रूपग्रहणम् ॥**

( प्रदीपः ) **शब्दोऽर्थश्चेति । स्वं रूपमित्यत्र** रूपग्रहणेन ज्ञापितम्—व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियत इति । ततश्चार्थरूपाभ्यां समानत्वं गृह्येतेत्यर्थः ॥ शब्दानुशासनप्रस्तावाच्च शब्दसंबन्धिरूपं गृह्यते, न तु चक्षुर्ग्राह्यमित्याह—**श्रुतौ चेति ।** श्रोत्रोपलब्धावित्यर्थः । अथ वा श्रोत्रेन्द्रियं श्रुतिरुच्यते ॥

( उद्योतः ) **ज्ञापितमिति ।** शब्दार्थविषये क्वचिदुक्तन्यायाप्रवृत्तेर्ज्ञापनादित्यर्थः ॥ श्रोत्रेन्द्रियस्य करणत्वेऽप्याधारत्वासंभवादाह—**श्रोत्रोपेति ।** भावसाधनः श्रुतिशब्द इति भावः ॥ **अथ वेति ।** श्रुत्यवच्छेदेनेत्यर्थः । करणसाधनः स इति भावः ॥ आद्ये ग्रहणं विषयता, द्वितीये तु प्रतीतिरिति विवेकः । प्राधान्येन श्रोत्रेन्द्रियग्राह्यं वस्त्वत्र रूपशब्देनोच्यत इति तात्पर्यम् ॥

( ॥ इति रूपग्रहणप्रयोजनम् ॥ )

( आक्षेपभाष्यम् )

**अथैकग्रहणं किमर्थम् ? ।**

( प्रदीपः ) **एकग्रहणमिति ।** शेषणं शेष इति भावसाधनपक्षे प्राथम्यादेकस्यैव शेषो भविष्यति । शिष्यत इति शेष इति कर्मसाधनपक्षेऽप्येकत्वसंख्याया विवक्षितत्वादेक एवावशिष्यत इति प्रश्नः ॥

( उद्योतः ) **शेषणमिति ।** अत्रेतरनिवृत्तिविशिष्टमवस्थानं विधेयम् । तच्चैकस्य द्वयोरित्याद्याकाङ्क्षायां प्राथम्यादेकस्यैव भविष्यतीत्यर्थः ॥ **कर्मसाधनेति ।** तत्र हि सरूपाणां संबन्धी शिष्यत इत्यर्थः । तत्राक्षिप्तसंबन्धिपदे आक्षेपकसामानाधिकरण्यायैकवचनान्ते एकत्वविवक्षेति भावः ॥

( समाधानभाष्यम् )

**'सरूपाणां शेष एकविभक्तौ' इतीयत्युच्यमाने द्विबह्वोरपि शेषः प्रसज्येत । एकग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **द्विबह्वोरिति ।** द्वित्वबहुत्वविषयस्यानेकस्य शब्दस्येत्यर्थः । तत्र भावसाधनपक्षे व्याप्तिन्यायाश्रयेणानेकस्यापि शेषः स्यात् । कर्मसाधनपक्षेपि संस्कार्यत्वात् प्राधान्यात्संख्याया अविवक्षा स्यात् । यथा **ग्रहं संमार्ष्टीति** भावः ॥

( उद्योतः ) संख्येयार्थकत्वे द्विवचनानुपपत्तिः, संख्यार्थत्वेऽर्थासङ्गतिरत आह—**द्वित्वेति ।** दिबह्वोरिति विषयसप्तमीति भावः ॥ शेषशब्दोऽत्र नोपयुक्तादन्यस्मिन्, असम्भवात् । तदाह—**तत्र भावेति ॥ व्याप्तीति ।** अत्र शास्त्रे आद्युदात्तश्चेत्यादिग्रहणेन प्राग्रीश्वरादिति रेफोच्चारणेन प्राथम्यन्यायापेक्षया व्याप्तिन्यायस्य प्राबल्यबोधनाद् । एवं चेतरनिवृत्तिमदवस्थानं तदर्थः । तत्र यद्यपि स्थितेः सिद्धत्वान्निवृत्तावेवार्थतो विधेयता तथापि शब्दतस्तत्रैव विधेयत्वाद् व्याप्तिन्यायेन द्विबहूनामेवावस्थानं स्यादेकस्य निवृत्तिरिति भावः ॥ **संस्कार्यत्वादिति ।** शिष्यमाणत्वविधानेन शेषपदार्थाक्षिप्तस्य संस्क्रियमाणत्वादिति भावः ॥ **सरूपाणामिति** षष्ठ्या विधेयबोधकशेषपदेन सामानाधिकरण्यान्वययोग्यः संबन्धी आक्षिप्यते स चैकवचनान्त एव यद्यपि, तथापि तस्य विधेयेन शिष्यमाणत्वेन संस्क्रियमाणत्वेनानुवाद्यत्वादेकत्वाविवक्षेति तात्पर्यम् ॥

( इति प्रथमैकशब्दप्रयोजनम् )

( अथ शेषग्रहणप्रयोजनम् )

( आक्षेपभाष्यम् )

**अथ शेषग्रहणं किमर्थम् ? ।**

( प्रदीपः ) **शेषग्रहणमिति ।** सरूपाणामेकः साधुर्भवतीति वाक्यशेषोऽध्याहरिष्यत इति भावः ॥

( उद्योतः ) **सरूपाणामिति ॥** लक्ष्यानुसारतो व्याख्यानमाश्रित्यैषा निर्धारणे षष्ठी, साध्वनुशासनत्वाच्च साधुरित्याद्यध्याहारः । एवं च तेषां मध्ये एकस्य साधुत्वेऽपरस्यासाधुत्वेनार्थान्निवृत्तिरिति भावः ॥

( समाधानभाष्यम् )

**"सरूपाणामेक एकविभक्तौ" इतीयत्युच्यमाने आदेशोऽयं विज्ञायेत ॥**

( प्रदीपः ) **आदेशोऽयमिति । षष्ठी स्थानेयोगेति** नियमात् ॥

( उद्योतः ) **षष्ठीति ॥ निर्दिश्यमानस्यादेशा** इत्यर्थमावश्यकस्य व्याख्यानापेक्षगौरवपरिहाराय नियमार्थत्वमप्यङ्गीकार्यमिति निर्धारणषष्ठी न युक्तेति भावः ॥

( आदेशविज्ञाने दूषणजिज्ञासाभाष्यम् )

**तत्र को दोषः ? ।**

( प्रदीपः ) **तत्र को दोष इति ।** अन्तरतम एक आदेशः प्रवर्तिष्यत इति भावः ॥

( उद्योतः ) **अन्तरतम इति ।** शब्दतोऽर्थतश्चेत्यादिः । तमग्रहणादिति भावः ॥

( दोषप्रदर्शकभाष्यम् )

**अश्वश्चाश्वश्चाश्वौ । आन्तर्यतो द्युदात्तवतः स्थानिनो द्युदात्तवानादेशः प्रसज्येत ॥**

**लोप्यलोपिता च न प्रकल्पेत ॥**

( प्रदीपः ) इतरस्तु स्वरे दोषमाह—**अश्वश्चाश्वश्चेति ॥ द्युदात्तवत इति ।** द्वावुदात्तवन्तावश्वशब्दौ यस्य समुदायस्य स द्युदात्तवान् समुदायः । आदेशोपि द्वावुदात्तवन्तावुदात्तगुणयुक्तावकारौ यस्येति द्युदात्तवानुच्यते ।

१ अर्थनिरूपितविशेष्यतयेत्यर्थः । ननु शब्दनिरूपितविशेषणतयाऽपीति भावः । ( र. ना. ) २ 'संस्कार्यत्वादमा' ॥ अयमेव पाठः साधुर्बोध्यः । (र.ना.) ३ 'प्रधानत्वात्' ॥ ४ इदं संस्क्रियमाणत्वान्वयि । शिष्यमाणत्वेनेत्यपि तदन्वयिकर्तृपदम् । संस्क्रियमाणत्वमनुवाद्यत्वे हेतुः । ( र. ना. ) ५ 'शिष्यत इति ॥ ६ इदं नियमार्थत्वान्वयि । भाष्यकारादिकृतव्याख्यानेन यः स्थानपदार्थनिरूपितसंबन्धार्थकत्वनिर्णयस्तदपेक्षगौरवपरिहारायेत्यर्थः । ( र. ना. )

एतच्चोपलक्षणं तेन व्युनुदात्तस्य व्युनुदात्त आदेशः प्राप्नोति ॥ **लोप्यलोपितेति** । लोपनीयस्य लोपित्वं लोपसंबन्धो न प्राप्नोतीत्यर्थः ॥

**( उद्योतः )** व्युदात्तशब्दस्य बहुव्रीहित्वे मतुप् न स्यादुक्तार्थत्वात्, कर्मधारयात्तु मत्वर्थीयो नेष्ट इत्यत आह—**द्वाविति** । अत्रोदात्तशब्दो धर्मिपरः ॥ आदेशस्यापि तथात्वे एकशेषानर्थक्यमत आह—**आदेशोऽपीति** । अत्रोदात्तशब्दो धर्मपर इति भावः ॥ विधीयमानानेकोदात्तस्योभे **वनस्पत्यादिषु युगपदित्यादौ** समावेशदर्शनादिति तात्पर्यम् ॥ **तेनेति** । पर्यायेणेति भावः ॥ नन्वश्वशब्दे श्रूयमाणोदात्तानुदात्तयोरनुग्रहायान्तरतमपरिभाषयोभयस्वरक एवादेशो भविष्यतीति चेन्न । तेनैव रूपेण सादृश्यग्रहणमित्यत्र नियामकाभावेन पर्यायस्य दुर्वारत्वात् । यत्तु इश्व इश्वेत्येकशेषे एक आदेशोऽद्रूपत्वादन्त्यस्य स्यात् । सूत्रं त्वनेकाल्शु चरितार्थं ततः सवर्णदीर्घे **दीर्घा**दिति पूर्वसवर्णदीर्घनिषेधे यणि याविति स्यादित्याहुः ॥ तत्र **सरूपाणामिति** बहुवचनेन प्रत्येकं स्थानित्वबोधनेन रमागमन्यायेन सर्वनिवृत्तेरदोषात् ॥

लोप्यलोपिपदयोः पौनरुक्त्यमाशङ्क्याह—**लोपनीयस्येति** । लोप्यपदमूहलोरितिण्यदन्तम् ॥ **संबन्ध इति** । कृत्तद्धितसमासेभ्यो भावप्रत्ययस्य संबन्धाभिधायकत्वादिति भावः ॥

**( लोप्यलोपिप्रक्लृप्त्यभावे दूषणजिज्ञासाभाष्यम् )**

**तत्र को दोषः? ।**

**( दोषप्रदर्शकभाष्यम् )**

**गर्गा वत्सा विदा उर्वाः । यञ्यो बहुष्वञ्यो बहुष्वित्युच्यमानो लुङ् न प्राप्नोति ॥**

**( प्रदीपः ) गर्गा इति** । प्रकृतिरर्थाभेदादेकैव । यञ्प्रत्ययास्तु बहवः । यञाकृतेश्च एकत्वाद् व्यवधानाभावादनेकस्यापि प्रत्ययस्य परत्वं न विरुध्यते । तत्र गर्ग य य य इति स्थिते यदा गर्गशब्दं मुक्त्वा प्रत्ययानामेवैको यशब्द आदेशः क्रियते तदा तस्य बह्वर्थत्वाल्लुक् सिध्यति । यदा तु विरूपाणामपि समानार्थानामेकशेषवदेक आदेशः सप्रकृतिकः क्रियते तत्र गर्ग य इत्यस्यान्ययोश्च यशब्दयोर्गर्गयशब्द आदेशः । तत्र यशब्दान्तस्य बहुषु वृत्तिः न तु प्रत्ययमात्रस्येति भावः ॥

**( उद्योतः ) एकैवेति** । गर्गस्यापत्यानीति विवक्षणादिति भावः ॥ **बहव इति** । अपत्यानां बहुत्वात् ॥ नन्वेकस्याः प्रकृतेः कथं बहवः परेऽत आह—**यञाकृतेश्चेति** । यद्यपि जातेरेकैकव्यक्तिव्यङ्ग्यत्वं व्यक्तिद्वारकमेव परत्वं च, तथाप्यव्यवहितव्यक्तिद्वारकं सर्वगतजातेः परत्वमित्यभिमानः । व्यक्तिपक्षेपि विजातीयव्यक्तिव्यवधानमेव व्यावर्त्यते, न सजातीयतद्व्यवधानमित्यन्ये ॥ **प्रत्ययानामेवेति** । समानाकारत्वादिति भावः । इदं चिन्त्यमेकविभक्तावित्युक्त्या तत्प्रकृतित्वायोग्यानां केवलप्रत्ययानामेकशेषाप्रसक्तेः । गर्गसहितानामेव हि तत्प्रकृतिता ॥ **विरूपाणामिति** । अन्त्ययशब्दयोरपि गर्गापत्यत्वेनैव बोधकत्वात्समानार्थत्वं बोध्यम् । यदित्युक्तिस्तु संप्रतिपन्नविषयाभिप्रायेण ॥

**( समाधानबाधकभाष्यम् )**

**मा भूदेवम् । यञन्तं यद्बहुषु अञन्तं यद्बहुष्विति एवं भविष्यति ॥**

**( प्रदीपः ) यञन्तं यद्बहुष्विति** । आदेशपक्षेऽपि वचनसामर्थ्यात् सारूप्यात् यञ्बुद्ध्युत्पादायञन्तकेतदित्याश्रीयते ॥

**( उद्योतः )** नन्वादिश्यमानगर्गयशब्दान्तर्गतयशब्दस्यान्यत्वेन कथं यञन्ततवादीत्यत आह—**आदेशपक्षेऽपीति** । **वचनसामर्थ्यादिति** । लुग्वचनसामर्थ्यादित्यर्थः ॥ **यञ्बुद्धीति** । एतेनावयवस्याप्रत्ययत्वाद् लुगसम्भव इति परास्तम् ॥

**( समाधानसाधकभाष्यम् )**

**नैवं शक्यम्, इह हि दोषः स्यात्—काश्यपप्रतिकृतयः काश्यपा इति ॥**

**( प्रदीपः ) काश्यपा इति** । काश्यप इवायं तत्प्रतिकृतिरितीवे **प्रतिकृतावि**ति विहितस्य कनो **जीविकार्थे चापण्य** इति लुप् । ततः काश्यपश्च काश्यपश्च काश्यपश्चेति प्रतिकृतिप्रचयविवक्षायामेकः काश्यपशब्दः प्रयुज्यते स च बह्वर्थोऽञन्तश्चेति लुक्प्रसङ्गः । लौकिकस्य गोत्रस्य तत्र ग्रहणमिति परिहार उत्तरत्र वक्ष्यते इतीह नोक्तः ॥

**( उद्योतः ) लौकिकस्य गोत्रस्येति** । प्रवराध्यायप्रसिद्धस्येत्यर्थः । यस्कादिभ्य इत्यतो गोत्रे इत्यनुवृत्त्या गोत्रबहुत्वे वर्तमानस्य यञन्तस्य लुगिति व्याख्यानात् । इदं च प्रतिकृतिबहुत्वे वर्तते न तु गोत्रबहुत्वे इत्यदोष इति भावः ॥ **लौकिकस्येति** । सिद्धान्तस्वरूपकथनम् ॥

**( इति शेषपदप्रयोजनम् )**

**( आक्षेपभाष्यम् )**

**एकविभक्ताविति किमर्थम्? ।**

**( समाधानभाष्यम् )**

**पयः पयो जरयति वासो वासश्छादयति ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहीति ॥**

**( प्रदीपः ) पय इति** । उत्तरत्रार्थविप्रतिषेधादिति प्रत्याख्यानं करिष्यते ॥

**( उद्योतः )** एकग्रहणविषयः प्रश्न इत्यभिप्रायेणोत्तरयति—भाष्ये—**पय इति** । भिन्नविभक्तिव्यावृत्त्यर्थमेकग्रहणमिति भावः ॥

**( इत्येकविभक्तौ पदप्रयोजनम् )**

**( अथ सूत्रप्रयोजनम् )**

**( आक्षेपभाष्यम् )**

**किमर्थं पुनरिदमुच्यते? ।**

१ तन्नेति पाठो भाति । ( र. ना. ) २ 'स्थानिवस्य' ॥ ३ 'माने' ॥ ४ 'तेश्च व्यवधा' ॥ ५ गर्ग य इत्यनेनेति शेषः । ( र. ना. )

( प्रदीपः ) **किमर्थं पुनरिति** । जातिः शब्दार्थः । तस्याश्चैकत्वादनेकशब्दाप्रयोगः । आश्रयगतसंख्याप्रतिपादनाय च द्विवचनबहुवचने भविष्यत इति प्रश्नः ॥

( उद्द्योतः ) ननु सूत्राभावे सरूपाणां द्वन्द्वापत्तिरत आह—**जातिरिति** ॥

**( ७२३ समाधानवार्तिकप्रथमखण्डम् ॥ )**

## ॥ * ॥ प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् ॥ * ॥

**( भाष्यम् ) प्रत्यर्थं शब्दा अभिनिविशन्ते ॥ किमिदं प्रत्यर्थमिति ? । अर्थमर्थं प्रति प्रत्यर्थम् । प्रत्यर्थं शब्दनिवेशाद् । एतस्मात्कारणाद् नैकेन शब्देनानेकस्यार्थस्याभिधानं प्राप्नोति ॥**

( प्रदीपः ) द्रव्यं पदार्थं उपलक्षणं त्वाकृतिरिति दर्शने सूत्रमारब्धव्यमित्याह—**प्रत्यर्थमिति** । यावन्ति द्रव्याणि विशिष्टगुणक्रियाविषयतया विवक्षितानि तावतां शब्दानामेकैकार्थोपक्षेयाणां[2] प्रयोगे प्राप्ते एकशेषारम्भ इत्यर्थः ॥

( उद्द्योतः ) **द्रव्यमिति** । तत्र हि **प्रत्यर्थं शब्दनिवेश** इतिन्यायात्तत्तद्व्यक्तिप्रतिपादनाय नानाशब्दप्रयोगः प्राप्नोतीत्यर्थः ॥ **उपलक्षणं त्विति** । यो रक्तवासाः स देवदत्त इत्यादौ रक्तवासस्त्ववदित्यर्थः । अन्यथानन्त्यात्तत्र शक्तिग्रहो न स्यात् । केवला व्यक्तिरेव शब्दार्थः । जातेः शक्तिग्रहे प्रकारत्वेऽपि न तत्र शक्यतावच्छेदकता, नापि शक्यता, शुद्धव्यक्तेरेव च शब्दाज्ज्ञानम् शब्दस्यैव बोधे प्रकारतया न निर्विकल्पकत्वं तस्य । तत्पक्षे चानुगतधर्माभा[3]नान्न तेनानुगतानेकव्यक्तिबोधसम्भव इति सूत्रमिति भावः ॥ **विशिष्टगुणक्रियाविषयतयेति** । तदाश्रयत्वेनोपलक्षितानीत्यर्थः ॥ अपरे तु **किमर्थं**मिति प्रश्नभाष्यस्य तन्त्रेणैव सिद्धिरित्याशयः । तन्त्रकारणं च शब्दानां तुल्यरूपता, यथाऽक्षा भज्यन्तां भक्ष्यन्तां दीव्यन्तामिति ॥ **प्रत्यर्थमिति** । अक्षा दीव्यन्ताम् । अक्षा भज्यन्ताम् । अक्षा भुज्यन्तामित्यादौ वाक्ये प्रत्यर्थंशब्दनिवेशस्यापि दर्शनात्कदाचित्तादृशप्रयोगे सहविवक्षायां प्राप्तद्वन्द्वनिवृत्त्यर्थं सूत्रमावश्यकमित्याशयः ॥ **किमिदं प्रत्यर्थमिति** । अर्थावर्थौ प्रतीत्यादेरपि तदर्थस्य संभवात्प्रश्नः । एकवचनान्तेन विग्रह इत्युत्तरम् ॥ **नैकेनेति** । नैकेनैवेत्यर्थः ॥

**( आक्षेपभाष्यम् )**

**तत्र को दोषः ? ।**

**( ७२४ समाधानवार्तिकद्वितीयखण्डम् ॥ १ ॥ )**

## ॥ * ॥ तत्रानेकार्थाभिधानेऽनेकशब्दत्वम् ॥ * ॥

**( भाष्यम् ) तत्रानेकार्थाभिधाने अनेकशब्दत्वं प्राप्नोति । इष्यते च एकेनाप्यनेकस्याभिधानं स्यादिति ॥ तच्चान्तरेण यत्नं न सिध्यति । तस्मादेकशेषः । एवमर्थमिदमुच्यते ॥**

( उद्द्योतः ) **अनेकशब्दत्वमिति** । अनेकशब्दत्वमेवेत्यर्थः ॥ **एकेनापीति** । अपिना वाक्यसंग्रहः । शास्त्रेण सहविवक्षाविषयशास्त्रीयद्वन्द्वस्यैव वारणादिति भावः ॥

**( काकुभाष्यम् )**

**अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥**

**( आक्षेपभाष्यम् )**

**किमिदं प्रत्यर्थं शब्दा अभिनिविशन्त इत्येवं दृष्टान्तमास्थाय सरूपाणामेकशेष आरभ्यते, न पुनरप्रत्यर्थं शब्दा अभिनिविशन्त इत्येतं दृष्टान्तमास्थाय विरूपाणामनेकशेष[8] आरभ्यते ? ॥**

( प्रदीपः ) **किमिदमिति** । यदि हेतुरहितं दृष्टान्तमाश्रित्य विरूपानेकशब्दप्रयोगदर्शनात्सरूपैकशेष आरभ्यते । तदा सरूपैकशब्दप्रयोगदर्शनाद्विरूपानेकशेषः किमिति नारभ्यत इति प्रश्नः । प्रयोगात्तु शब्दशक्तावनुगम्यमानायां न किंचिदारब्धव्यम् । द्रव्यपदार्थपक्षेऽपि स्वभावादेकः शब्दोऽनेकमर्थं द्व्यादिवत् प्रत्याययिष्यति । अन्यथा एकशेषारम्भेऽपि कथं प्रत्यायकः स्यात् । नहि स्वतोऽसती शक्तिराचार्येण कर्तुं शक्यते । मन्दबुद्धिव्युत्पादनार्थं च यथास्थितप्रयोगानुसरणे कोऽनुरोधः सरूपैकशेषारम्भे न पुनर्विरूपानेकशेषारम्भे ॥

( उद्द्योतः ) **किमिदमिति** । अक्षा इत्यादावेवाप्रत्यर्थंशब्दनिवेशस्यापि दृष्टत्वेन विरूपविषयेऽपि लाघवायैकशब्दप्रयोग एव प्राप्तेऽनेकशब्दप्रयोगाय विरूपाणामनेकशेष एव कुतो नारभ्यत इत्यर्थं इत्याहुः ॥ **हेतुरहितमिति** । प्रत्यर्थमित्यादिस्तु न हेतुः, अपक्षवृत्तित्वादिति भावः । अत एव भाष्ये **दृष्टान्तमास्थाये**त्युक्तम् ॥ **विरूपानेकशेष इति** । नन्वनेकशेष इत्यस्यानेकस्य शेष इत्यर्थो वा, एकशेषो नेत्यर्थो वा, एकशेषभिन्नो भवतीत्यर्थो वा । नाद्यः । त्रिषु प्रतिपाद्येषु द्वयोः प्रयोगापत्तेः । शेषशब्दस्वारस्येनैकनिवृत्तेरावश्यकत्वात् । न द्वितीयः । एकशेषाप्राप्त्याऽसंभवादिति चेन्न । तृतीयेऽदोषात् । तत्रापि भिन्नशब्देन द्वन्द्व एव न तु वाक्यं, **वृद्धो यूने**त्यादौ प्रसिद्धैकशेषस्य पुष्पवन्ताविति[5]न्यायेन सहविवक्षाविषयस्यैव सत्त्वेन तद्भिन्नस्य सहविवक्षाविषयस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वात् । तत्रेदं वचनं न घटपटावित्यादिविषयम्, अप्रत्यर्थंशब्दनिवेशे शब्दानां तुल्यरूपताया बीजत्वेन तदभावेन तस्याप्राप्तेः । किं तु जननीपरिच्छेदकर्त्रादिवाचकमात्रादिशब्दविषयं, तयोरौजसादौ वैरूप्यात् । अत्रापि[6] **विभक्ता**वित्यावश्यकम् । अन्यथा हरितवर्णविशिष्टस्त्रीहरिणस्त्रीवाचकयोर्हरिणीशब्दयोस्तद्धिते वैरूप्येणानेकशेषापत्तेः । विभक्तिसामानाधिकरण्येन[7] च वैरूप्यान्वयोन्यथाऽसंभवात् । तत्रेदं न विधायकं, चार्थे द्वन्द्व इत्यनेनैव सिद्धेः । किं तु नियमार्थं, तेन लोकसिद्धसहविवक्षाविषयतन्त्रव्यावृत्तिस्तथा[9] विरूपाणामेव द्वन्द्व इति च नियमः । अन्यथैकशेषारम्भेणास्य[10] समफलकत्वेनापत्तिः[11] । तन्न्यासे हि स येन नाप्राप्तिन्यायेन द्वन्द्व-

1 ‘शब्दप्रयोगाप्रसङ्गः’ ॥ 2 एकैकार्थे उपक्षय उपसंहारो बोधनाय प्रवृत्तिरूपो येषामित्यर्थः । ( र. ना. ) 3 शक्यतावच्छेदकीभूतानुगतधर्मेत्यर्थः । ( र. ना. ) 4 मातृमातारावित्याद्यर्थमिति भावः । ( र. ना. ) 5 सूर्याचन्द्रमसावुद्दिश्य पुष्पवन्ताविति यथा सहविवक्षाविषये एव तथेति भावः । (र. ना.) 6 विरूपानेकशेषविधावपीत्यर्थः । (र. ना.) 7 ननु विभक्त्यवच्छेदेनेत्यर्थः । (र. ना.) 8 विरूपाणामनेकशेष एव न तु तन्त्रमित्याकारकनियमार्थमित्यर्थः । (र. ना.) 9 लोकसिद्धं सहविवक्षाविषयीभूतं यत्तन्त्रं तस्य व्यावृत्तिरित्यर्थः । (र. ना.) 10 विरूपाणां द्वन्द्व एवेति नियमाङ्गीकारे इत्यर्थः । ( र. ना. ) 11 सरूपाणां द्वन्द्वाभावस्यालाभादिति भावः । (र. ना.)

बाधक इति सरूपाणां द्वन्द्वाभावस्येष्टत्वात् । अनेकशेषपदेन वाऽऽवृत्त्या विरूपाणां तत्रन्यायसिद्धलौकिकैकशेषाभावोऽपि बोध्यते[२]। न चास्यार्थस्यैकशेषारम्भे कथं सिद्धिः । आवृत्त्या सरूपाणामेवैकशेष इति नियमस्याप्यङ्गीकारादिति बोध्यम् ॥ ननु विरूपाणां विभिन्नार्थानां नैकस्यानेकार्थाभिधानशक्तिमत्त्वमित्येकशब्दाप्रयोगान्नानेकशेष आरम्भणीयोऽत आह—**प्रयोगाविति** । व्युत्पादनार्थं वेति पाठे वाशब्दश्चार्थे । क्वचित् चेत्येव पाठः ॥ **प्रयोगानुसरणे इति** । प्रयोगाणां शास्त्रेणानुसरणे अन्वाख्याने इत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**तत्रैतत्स्यात्[४]—लघीयसी सरूपनिवृत्तिः, गरीयसी विरूपप्रतिपत्तिः ॥**

**तच्च न । लघीयसी विरूपप्रतिपत्तिः । किं कारणम् ? । यत्र हि बहूनां सरूपाणामेकः शिष्यते तत्रावरतो द्वयोः सरूपयोर्निवृत्तिर्वक्तव्या स्याद् ।**

( प्रदीपः ) लाघवायैकशेषारम्भश्चेत्तन्न । लघीयसी विषयप्रतिपत्तिः । तत्र हि प्रवृत्तिविषया बुद्धिरेकरूपैव भवति । एकशेषे तु प्रवृत्तिनिवृत्तिविषयेति प्रतिपत्तिगौरवप्रसङ्गः ॥ **अवरतो द्वयोरिति** । यदा त्रयाणामेकः शिष्यते तदा द्वयोर्निवृत्तिर्वक्तव्या व्याख्येयेत्यर्थः । शेषशब्दस्य निवृत्तिविशिष्टावस्थानवाचित्वात् । यदा तु द्वयोरेकशेषस्तदैकस्य निवृत्तिः । चतुष्प्रभृतीनां त्वेकशेषे त्रिप्रभृतीनां निवृत्तिरिति प्रवृत्तिनिवृत्तिलक्षणविषयभेदाद्बुद्धिगौरवापत्तिरित्यर्थः ॥

( उद्योतः ) लाघवायेति । सुशब्दोपदेशेनापशब्दनिवृत्तिवदेकशेषारम्भेणानेकशेषनिवृत्तेः सिद्धत्वादिति भावः ॥ **यदा तु द्वयोरिति** । सरूपौ च सरूपाश्चेत्येकशेषेण निर्देशादिति भावः । एवं चावरतो द्वयोरिति भाष्यं यत्र बहूनामेकशेषस्तद्विषयमेवेति तात्पर्यम् ॥

( समाधानभाष्यम् )

**एवम्प्येतस्मिन् सति किंचिदाचार्यः सुकरतरकं चैकशेषारम्भं मन्यते ॥**

( प्रदीपः ) **सुकरतरकं चेति** । एवं हि प्रकरणमभिन्नरूपं भवति **वृद्धो यूने**त्यादिभिः सूत्रैरेकशेषस्य विधानात् । अनेकशेषारम्भे त्विह पृथक्प्रस्थानतया गौरवं स्यादित्यर्थः ॥

(उद्योतः) नन्वेकशेषारम्भस्य गुरुत्वेन सुकरत्वमेव नास्ति कुतः सुकरतरकत्वमित्यत आह—**एवं हीति** ॥ **पृथक्प्रस्थानतया** । पृथक्प्रकरणतया । **वृद्धो यूने**त्याद्यर्थं चैकशेषोऽवश्यं वाच्य इति भावः ॥

( एकशेषस्यानैमित्तिकत्वसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयमेकविभक्तावेकशेषो भवति ? ॥**

( प्रदीपः ) **किं पुनरिति** । किमयमेकशब्दः संख्यावाची तुल्यतावाची वेति प्रश्नः[१२] ॥

( उद्योतः ) **संख्येति** । तेनैकदिगितिवत्समानवाचित्वे पृथक् सर्वेभ्य उत्पन्नाया विभक्तीर्निमित्तत्वलाभाद्वार्तिकोत्थानं भज्येत[१३] । एवं चैकशेषविषयसरूपसमुदायादेकत्वसंख्याविशिष्टविभक्तौ परत एकशेष इत्यर्थः किमिति प्रश्न इति भावः ॥

( तटस्थभाष्यम् )

**एवं भवितुमर्हति ।**

( प्रदीपः ) **एवं भवितुमिति** । संख्यावाचित्वेनैकशब्दस्य प्रसिद्धतरत्वात् ॥

( उद्योतः ) प्रष्टुराशयं विज्ञातुमाहेतरो भाष्ये—**एवमि**त्यादि ॥

( ७२५ पूर्वपक्ष्याक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ एकविभक्ताविति चेन्नाभावाद्विभक्तेः ॥ * ॥**

( भाष्यम् ) **एकविभक्ताविति चेत्तन्न ॥ किं कारणम् ? ॥ 'अभावाद्विभक्तेः' नहि समुदायात्परा विभक्तिरस्ति ॥ किं कारणम् ? ॥ अप्रातिपदिकत्वात् ॥**

( प्रदीपः ) **नाभावादिति** । ङ्याप्प्रातिपदिकादित्यत्रैकवचनान्तानामेव द्वन्द्वः क्रियते । वर्तिपदार्थानां सर्वत्र संख्याभेदावगमे प्रमाणाभावात् । गुणे च संख्या विवक्ष्यते यथा **पशुना यजेते**ति । एवं चैकैकस्मात् प्रातिपदिकात् स्वादिभिरुत्पत्तव्यं न तु समुदायात् । यत्र क्वचिद्गुणेऽपि संख्या न विवक्ष्यते यथा **कर्तुरीप्सिततम**मिति द्वयोर्बहूनां वेप्सिततमस्य कर्मसंज्ञा प्रवर्तते, तत्र नान्तरीयकं संख्याया उपादानमिति लक्ष्यसिध्यर्थमाश्रीयते ॥

( उद्योतः ) प्रष्टा स्वाशयमाह—**एकेत्यादि** ॥ **संख्याभेदावगमे** । द्वित्वाद्यवगमे इत्यर्थः ॥ एवमपि प्रातिपदिकादित्येकत्वस्य विवक्षायां न मानमत आह—**गुणे चेति** । संस्कार्यत्वादिति भावः ॥ **यथा कर्तुरिति** । कर्तुरित्यत्रेति भावः ॥ **लक्ष्यसिद्ध-**

१ विरूपाणामेवानेकशेष इत्येकविधमेव नियममङ्गीकृत्याऽऽवृत्त्यानेकशेषपदस्यार्थान्तरकरणेन विरूपाणां तत्रं वारयति अनेकशेषेत्यादिना । ( र. ना. ) २ विरूपाणां तन्त्रभ्यावृत्तिरूपस्येत्यर्थः । (र. ना.) ३ तन्त्रमित्यर्थः । (र. ना.) ४ आक्षेप्ता स्वयमेव समाधानमुत्प्रेक्ष्य निरस्यति । ( र. ना. ) ५ अन्तत इत्यर्थः । ( र. ना. ) ६ 'श्चेत् तत्र लघी' । ७ द्वन्द्वेत्यादिः । ( र. ना. ) ८ एकशेषार्थं प्रवृत्तिरन्येषां च निवृत्तिरिति भावः । ( र. ना. ) ९ सरूपाणामेकशेषारम्भेण विरूपाणामनेकेषां शेषस्य तन्त्रस्य निवृत्तेः सिद्धत्वादित्यक्षरार्थः । अयं भावः । यदा सरूपाणामेकशेष आरभ्यते तदा एकशेषपदे आवृत्त्या सरूपाणामेकशेषो भवति इत्येकोऽर्थः । सरूपाणामेवैकशेषस्तन्त्रमिति च नियमरूपो द्वितीयोऽर्थः । प्रदर्शितं चैतत् प्रागुद्योते । तथा च विरूपाणां मात्रादिशब्दानां तन्त्रनिवृत्तिः सिद्धा । एकशेषस्तु प्राप्त एव न । द्वन्द्वस्तु चार्थे द्वन्द्व इत्यनेनैव सिद्ध इत्येवमेकशेषारम्भे विरूपानेकशेषस्य सिद्धत्वाल्लाघवम् । यद्यपि विरूपानेकशेषारम्भेऽपि विरूपाणामेव द्वन्द्व इति पूर्वोक्तरीत्या नियमाङ्गीकारेण सिद्ध एव सरूपाणां तन्त्रेण प्रयोगरूप एकशेष इति साम्यम्, तथापि अनेकशेषारम्भपक्षे द्वन्द्वस्य सिद्धत्वान्नियमत्वमेकशेषारम्भपक्षे तु एकशेषस्याप्राप्तत्वाद् विधित्वमिति लाघवम् । नियमे हि स्वार्थहान्यादिरूपं दूषणत्रयं प्रसिद्धमिति । एतेन 'लघीयसी सरूपनिवृत्तिः, गरीयसी विरूपप्रतिपत्तिः' इति भाष्यमपि व्याख्यातम् । ( र. ना. ) १० वस्तुतस्तु 'द्वयोः सरूपयोरन्यतरस्य निवृत्तिरिति शेषपूरणेन व्याख्याने सर्वेषामेकशेषाणां संग्रहो भवति । तथा हि—अन्ततो द्वयोरेकशेषे द्वयोः सरूपयोरन्यतरस्य निवृत्तिः । त्रयाणामेकशेषे तु द्वयोर्निवृत्तिः, चतुर्णामेकशेषे तु त्रयाणां निवृत्तिरित्यादि बोध्यम् । ( र. ना. ) ११ एवमेतस्मिन् सत्यपि आचार्य एकशेषारम्भं च तु सुकरतरकं मन्यते इति योजना । पूर्वोक्तरीत्या विरूपानेकशेषारम्भपक्षे लाघवे सत्यपीत्यर्थः । ( र. ना. ) १२ एकविभक्तावित्यस्यैकशेषनिमित्तत्वं सिद्धवत्कृत्येत्यपि बोध्यम् । ( र. ना. ) १३ एकविभक्ताविति चेदिति वार्तिकस्येदमुत्थानमेव न भवेत्, तदा समुदायात्परस्या विभक्तेरभावादिति भावः । (र.ना.)

र्थमिति । एवं च पशुनेत्यादि दृष्टान्तदानमभ्युच्चयो, विधेयगता संख्या विवक्षिता नानुवाद्यगतेत्येव मीमांसकमर्यादेति भावः ॥ वस्तुतस्तु समुदायस्य प्रातिपदिकत्वाभावादिति भाष्ये उक्तं, प्रातिपदिकत्वपर्याप्त्यधिकरणात्प्रत्यय इति हि सूत्रार्थः । नहि प्रातिपदिकसमुदाये प्रातिपदिकत्वम् । यथा जनपदसमुदाये न जनपदत्वमिति कैयटोक्तार्थोपयोगश्चिन्त्यः ॥

( आक्षेपबाधकभाष्यम् )

**ननु चार्थवत् प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यति ॥**

( प्रदीपः ) **ननु चेति** । अवयवार्थातिरेकेण परस्परापेक्षायां सत्यां समुदायार्थोपजनात् सरूपसमुदायाभिनिवेशिन्येका प्रातिपदिकसंज्ञास्ति तया सरूपसमुदाय एकं प्रातिपदिकमिति स्वाद्युत्पत्तिरविरुद्धा ॥

( उद्द्योतः ) **परस्परापेक्षायां** कार्यविशेष इति शेषः ॥ समुदायार्थः । समूहरूपः ॥ **समुदाय इति** । समुदायोऽपीत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**नियमान्न प्राप्नोति—अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति ॥**

( प्रदीपः ) **अर्थवत्समुदायानामिति** । अविशेषेण नियमो न तु सुबन्तानामेवेति मन्यते ॥

( उद्द्योतः ) **ननु सुबन्तानामिति** । भेदसंसर्गद्वारकार्थवतामुपलक्षणमिदम् ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

**यदि पुनः "पृथक्सर्वेषां विभक्तिपराणामेकशेषः" उच्यते ।**

( प्रदीपः ) इदानीं तुल्यपर्यायमेकशब्दमाश्रित्याह—**यदि पुनरिति** ॥

(उद्द्योतः) **तुल्येति** । यथैकदिगित्यादौ । प्रसिद्धतरार्थानुपपत्तौ प्रसिद्धार्थपरिग्रहो न्याय्य इति भावः ॥

( ७२६ दूषणवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वात् ॥ * ॥**

( भाष्यम् ) **पृथक्सर्वेषामिति चेद् एकशेषे पृथग्विभक्त्युपलब्धिः प्राप्नोति ॥**

**किमुच्यते एकशेषे पृथग्विभक्त्युपलब्धिरिति ? ॥**

**यावता समयः कृतः—"न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः" इति । तदाश्रयत्वात् प्राप्नोति । यत्र हि प्रकृतिनिमित्ता प्रत्ययनिवृत्तिस्तत्राप्रत्ययिकायाः प्रकृतेः प्रयोगो भवति—अग्निचित्सोमसुदिति यथा । यत्र च प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्राप्रकृतिकस्य प्रत्ययस्य प्रयोगो भवति—अधुना इयानिति यथा ॥**

( प्रदीपः ) **पृथक् सर्वेषामिति** । वृक्षस् इति स्थिते विभक्तौ परतो यानि सरूपाणि तेषामेकशेष उच्यमाने विभक्तिनिमित्तत्वात् प्रकृतिनिवृत्तेः केवलानां विभक्तीनां प्रयोगप्रसङ्ग इत्यर्थः ॥

( उद्द्योतः ) तुल्यत्वं भेदाधिष्ठानं, तेन पृथक् सर्वेभ्यः शब्दतोऽर्थतश्च तुल्यायां विभक्तौ परत एकशेष इति तात्पर्यम् । अर्थतश्चेत्युक्तेः प्रथमाद्वितीयाद्विवचनान्तानां नैकशेषः । विनिगमनाविरहादर्थतश्चेत्यस्य लाभस्तदाह—**वृक्षसित्यादि** । **केवलानामिति** । निवृत्तप्रकृतीनामित्यादिः ॥ भाष्ये—**तदाश्रयत्वादिति** । बहुव्रीहेस्त्वः । विभक्त्याश्रयत्वात्तत्प्रकृत्येकशेषस्येत्यर्थः । **न केवलेत्यस्य** चानुत्पन्नप्रत्यया प्रकृतिः प्रकृतेरनुत्पन्नश्च प्रत्ययो न प्रयोक्तव्य इति तात्पर्यमिति भावः ॥ **अधुनेति** । यदेदमोऽधुनाप्रत्यय इशो लोपश्च तदेदम्, निमित्तापायपरिभाषा नास्त्येवेत्यन्यत्र प्रपञ्चितम् ॥

( दूषणबाधकभाष्यम् )

**अस्तु । संयोगान्तलोपेन सिद्धम् ॥**

( प्रदीपः ) **संयोगान्तलोपेनेति** । वृक्षस् स् स् इति स्थिते संयोगान्तलोपो भविष्यति ॥ ननु संयोगान्तस्य पदस्य लोप उच्यते तत्र पूर्वपदं सकारान्तं द्वौ सकारौ पदे इति पदत्रयं संपद्यत इति कुतो लोपः । संयोगान्तलोपस्य चापवादः संयोगादिलोपस्तेन भाव्यम् । **पूर्वत्रासिद्धमिति** वचनाद्धल्ङ्यादिलोपेनैव भाव्यम् ॥ अत्र व्याचक्षते—संयोगस्य योन्तः सकारस्तस्य लोपः स च **हल्ङ्याब्भ्य** इत्यनेनेति ॥

( उद्द्योतः ) **संयोगान्तेति** । एवं च निवर्तमानवृक्षशब्दसंबन्धिविभक्तिश्रवणप्रसङ्गरूपो दोषो वारित इति भावः ॥ **नन्विति** । संयोगान्तस्य पदस्येति पाठः । संयोगान्तस्य पदान्तस्येति तु व्याख्यानमसङ्गतमेव, **ध्वसोरि**तिसूत्रे **द्विशकारको निर्देश** इति भाष्यविरोधात् । संयोगसंज्ञासूत्रेऽन्तेपदसामर्थ्येन **द्विवचनान्तेन समास** इति ध्वनयता भाष्यकृता प्रयोजनान्तराभावस्य ध्वनितत्वेन तादृशेऽर्थे मानाभावाच्च । दोषान्तरमप्याह—**संयोगान्तलोपस्य चेति हल्ङ्याब्भ्य इति च** । न च तत्र **सुतिसीति** प्रत्ययैः प्रकृत्याक्षेपात्तस्याप्यप्राप्तिः, तदाक्षेपे मानाभावात् फलाभावाच्चेत्यभिप्रायः ॥ केचित्त्वाष्टमिकपदद्विर्वचने भाष्यकृता वक्ष्यमाणया रीत्या पचसिपचसीत्यादेः समुदायस्य पदत्ववदिहापि वृक्षस्स्स् इति समुदायस्य पदत्वं वृक्षशब्दे तत्त्वप्रत्यभिज्ञानादन्त्यसकारे सुत्वाच्च । ईदृशविषये संयोगादिलोपसंयोगान्तलोपयोरविशेषेण भाष्ये संयोगान्तलोप उक्तः । हल्ङ्यादिलोपस्तु हलन्तप्रकृतेः पर इत्यर्थान्नेत्याशयः । प्रत्येकं

---

१ प्रातिपदिकसमुदायाद्विभक्त्युत्पत्त्यभावे युक्तिसमुच्चयरूप इत्यर्थः । (र.ना.) २ वैशिष्ट्यं तृतीयार्थः । तस्य च 'समुदायार्थोपजनादित्यत्रान्वयः । अवयवार्थातिरिक्तस्य समुदायार्थस्योपजनादुत्पत्तेः प्रतीतेरिति यावत् । ( र. ना. ) ३ यानि सरूपाणीत्यत्रान्वयः । ( र. ना. ) ४ भेदोऽधिष्ठानं प्रयोजकं यस्येति बहुव्रीहिः । भेदप्रयुक्तमित्यर्थः । ( र. ना. ) ५ शब्दतस्तुल्यत्वे सत्यपीति शेषः । ( र. ना. ) ६ अग्निचिदधुनेत्याद्यनुरोधादिति भावः । ( र. ना. ) ७ इदमोऽश् भावः, धुना च प्रत्यय इति वृत्तिकारमते तु नेति भावः । (र.ना.) ८ 'पदान्तस्य' । ९ 'पक्षत्रयं' । १० अनुबन्धा एकान्ता इति पक्षे प्रश्लिष्टशकाररूपानुबन्धविशिष्टे संयोगान्तपदत्वसत्त्वेऽपि संयोगान्ते पदान्तत्वं नास्तीति कृत्वा विरोध उपपादनीयः । (र. ना.) ११ संयोगान्तस्य लोप इत्यत्र पदस्य विशेष्यत्वमादाय तदन्तत्वे लब्धे संयोगान्तपदघटकान्तपदसामर्थ्येन संयोगावन्तौ यस्येति द्विवचनान्तेन बहुव्रीहिलाभ इति संयोगसंज्ञासूत्रे ध्वनयता भाष्यकृता संयोगान्तपदघटकान्तपदस्य प्रयोजनान्तरं नास्तीति सूचितम् । भवद्रीत्या संयोगान्तस्य पदान्तस्येत्यर्थस्वीकारे तु संयोगान्तस्य विशेष्यत्वेनैव पदान्तस्येत्यर्थलाभ इत्यन्तग्रहणसार्थक्यं स्पष्टमेवेति भाष्यविरोधात्तादृशार्थे मानाभाव इति भावः । ( र. ना. )

संयोगसंज्ञेति पक्षे झल्परसंयोगादित्वेन संयोगादिलोपो भाष्योक्तः साधुरेव । तत्र सूत्रे सङ्गीलनाश्रित्य चेदम् । प्रकारान्तरेणास्य दूषयिष्यमाणत्वाच्च तदनाश्रयणं तस्य प्रत्याख्यानाच्चेत्याहुः ॥

( दूषणसाधकभाष्यम् )

**कुतो नु खल्वेतत् परयोर्वृक्षशब्दयोर्निवृत्तिर्भविष्यति, न पुनः पूर्वयोरिति ? ॥**

( दूषणबाधकभाष्यम् )

**तत्रैतत्स्यात्पूर्वनिवृत्तावपि सत्यां संयोगादिलोपेन सिद्धमिति ॥**

( प्रदीपः ) **संयोगादिलोपेनेति** । अत्राप्येकस्य पदस्य संयोगस्यादिर्नास्तीति हल्ङ्याादिलोपमेव संयोगादिलोपं प्रतिपन्नाः । संयोगश्चासौ प्रत्येकं हलां संयोगसंज्ञेति पक्षाश्रये, आदिश्च वृक्षशब्दापेक्षया तस्य लोपो हल्ङ्याबित्यनेनेत्यर्थः ॥

( दूषणसाधकभाष्यम् )

**न सिध्यति । तत्रावरतो द्वयोस्सकारयोः श्रवणं प्रसज्येत ॥**

(प्रदीपः) **अवरत इति** । स् वृक्षस् इति प्राप्नोति । दुष्टत्वप्रतिपादनपरं चैतत्, न पुनः कदाचित्त्रयाणां श्रवणप्रतिपादनार्थम् ॥

( दूषणान्तरभाष्यम् )

**यत्र च संयोगान्तलोपो नास्ति, तत्र च न सिध्यति ॥**

**क्व च संयोगान्तलोपो नास्ति ? ॥**

**द्विवचनबहुवचनयोः ॥**

(प्रदीपः) **द्विवचनबहुवचनयोरिति** । ये स्वभावादेव द्विवचनबहुवचनान्ताः प्रयुज्यन्ते गोदौ दाराः सिकता इत्यादयः तत्र द्विवचनबहुवचनेषु परत एकशेषे सति द्विवचनबहुवचनानां श्रवणप्रसङ्गः । कृतैकशेषाणां वा पुनरेकशेषे क्रियमाणे द्विवचनबहुवचनश्रवणप्रसङ्गः ॥

( उद्योतः ) नन्वेकशेषं विना कथं द्विवचनादेः सम्भवोऽत आह—**स्वभावादिति** । **कृतैकशेषाणां वेति** । इदं च हलन्ताभिप्रायं, तत्र हि हल्ङ्यादिलोपे प्रत्ययलक्षणेन विभक्तिपरतैकशेषे द्विवचनादौ पुनरेकशेष इत्यर्थः ॥

( इति प्रथमपक्षदूषणनिरूपणम् )

( पक्षान्तरभाष्यम् )

**यदि पुनः समास एकशेष उच्यते ॥**

( उद्योतः ) भाष्ये **यदि पुनः समास इति** । द्वन्द्वे इत्यनुवर्त्य तत्र कृते इति व्याख्यानात्तस्य निमित्ततया नासौ द्वन्द्वबाधकः । द्वन्द्वे कृते एकविभक्तौ परतः सरूपाणामेकशेष इत्यर्थः । अत्र पक्षे संख्यावाच्येवैकशब्दः ॥

( आक्षेपभाष्यम् )

**किं कृतं भवति ? ।**

( प्रयोजनभाष्यम् )

**कश्चिद्वचनलोपः परिहृतो भवति ॥**

(प्रदीपः) **कश्चिद्वचनलोप इति** । यस्त्वया कश्चिद्वचनलोप उक्तः स परिहृतः । अथ वा सुपां परिहृतो न तिङामित्यर्थः ॥

( उद्योतः ) समासान्तर्गतसर्ववचनलोपात् कश्चिदित्ययुक्तमत आह—**यस्त्वयेति** । यस्त्वया वचनलोपासिद्धिरूपः कश्चिद्दोष उक्तः स परिहृत इत्यर्थः इति भावः ॥ अत्राध्याहारगौरवमाशङ्क्याह—**अथ वेति** ।

( आक्षेपभाष्यम् )

**तत्तर्हि समासग्रहणं कर्तव्यम् ॥**

( आक्षेपबाधकभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? । "तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्" इति ॥**

( ७२७ दूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ समास इति चेत्स्वरसमासान्तेषु दोषः ॥ * ॥

( भाष्यम् ) **समास इति चेत्स्वरसमासान्तेषु दोषो भवति ॥ स्वर—अश्वश्चाश्वश्च अश्वौ । समासान्तोदात्तत्वे कृते एकशेषः प्राप्नोति ॥ इदमिह संप्रधार्यम्—समासान्तोदात्तत्वं क्रियतामेकशेषः—इति, किमत्र कर्तव्यम् ? । परत्वात्समासान्तोदात्तत्वम् । समासान्तोदात्तत्वे च दोषो भवति । स्वर ॥ समासान्त-ऋक् च ऋक् च ऋचौ । समासान्ते कृते असारूप्यादेकशेषो न प्राप्नोति ॥ इदमिह संप्रधार्यम्—समासान्तः क्रियतामेकशेषः—इति । किमत्र कर्तव्यम् ? । परत्वात्समासान्तः । समासान्ते च दोषो भवति ॥**

(प्रदीपः) **स्वरसमासान्तेष्विति** । समासे कृते समासान्तोदात्तत्वे च यदि पूर्वशेषस्तदा सर्वानुदात्तत्वं प्राप्नोति । अथ परशेषस्तदाश्वशब्दस्यान्तोदात्तत्वप्रसङ्गः ॥ **परत्वादिति** । ननु नाप्राप्ते समासान्तोदात्तत्वे आरभ्यमाण एकशेषस्तस्य बाधकः । नैतदस्ति । निरवकाशो हि बाधको भवति । कृते च समासान्तोदात्तत्वे एकशेषस्य प्रवर्तनाद्विरोधाभावाच्च नास्त्युत्सर्गापवादभावः ॥ **ऋक्चेति** । ऋच् ऋच् अ इति स्थिते अन्तर्वर्तिन्या विभक्तेर्लुका लुप्तत्वात् प्रत्ययलक्षणप्रतिषेधाच्चास्त्येकविभक्तिपरतेति एकशेषनिमित्तं समुदायाद्विभक्तिरुत्पाद्या । तस्यां च नास्ति सारूप्यम् । एको हि ऋक्शब्दः अपर ऋचशब्दः । समासान्तः समासस्यैवावयवो नोत्तरपदस्येति चेत्तर्हि तेनैव व्यवधानात् समासविभक्तेरेकशेषो न स्यात् । समासार्थस्योत्तरपदस्यान्ताः समासान्ता इत्यपि भाष्यकारस्य मतमिति ऋगृचशब्दयोर्वैरूप्यमाश्रित्य भाष्यकृता दोष उद्भावितः ॥

( उद्योतः ) **समासान्तोदात्तत्वे च कृते इति** । विभक्तिप्रतीयते तच्चानुपपन्नमत आह—दुष्टत्वेत्यादि । (र. ना.)

१ समनन्तरमेवाग्रे इति भावः । (र. ना.) २ पक्षस्येति शेषः (र. ना.) ३ सङ्गीलस्येत्यर्थः । ( र. ना. ) ४ प्रथमस्य सकारस्य प्रत्येकं संयोगसंज्ञेति पक्षमाश्रित्य झल्परसंयोगादित्वेन लोपेऽपि द्वितीयस्य तदभावादिति भावः । (र. ना.) ५ ननु अवरत इत्युक्त्या कदाचित् त्रयाणामपि श्रवणं प्रसज्यते इति

६ द्वन्द्वस्य एकशेषनिमित्ततयेत्यर्थः । (र. ना.) ७ असिद्धतया दूषणत्वेनोक्त इत्यर्थः । (र. ना.) ८ समासविभक्तेस्तेनैव व्यवधानादित्यन्वयः । ( र. ना. )

सापेक्षैकशेषापेक्षयान्तरङ्गत्वादिति[1] भावः ॥ प्रसङ्ग इति । इष्यते त्वाद्युदात्तत्वमिति भावः । अश्वशब्दस्य क्वनन्तत्वात् ॥ परत्वादित्यस्योत्कृष्टत्वात्पूर्वकालप्राप्तत्वादित्यर्थः । एकशेषस्तु समासाद्विभक्त्युत्पत्त्युत्तरमिति भावः ॥ एवमग्रेऽपि । एवं चापवादत्वाशङ्का चिन्त्यैव । ब्राह्मणेभ्यो दधीत्यादावविरोधेऽपि दधिदानतः पूर्वं परत्र वा सावकाशत्वेऽपि बाधकत्वदर्शनात्समाधिरपि चिन्त्यः ॥ भाष्ये—असारूप्यादिति । समासान्तप्राग्भागस्य विभक्तिपरत्वाभावः, तद्विशिष्टस्य तु न सरूपत्वम् ॥ एकशेषो न स्यादिति । किं चैकशेपे सत्यपि ऋचावित्यस्यासिद्धिरेव, ऋचे इत्येवमापत्तेः । ऋगृचशब्दयोरेकशेपे तु पक्षे[2] तत्सिद्धिरस्तीति बोध्यम् ॥ उत्तरपदस्यान्ता इति । अयं पक्षस्तु निर्मूल एवेति पञ्चमषष्ठयोर्वक्ष्यामः । गोस्त्रियोरित्यत्रोक्तं च ॥ भाष्यकारस्य मतमिति । एवंविधं भाष्यं न दृश्यते इति चिन्त्यमिदम् । न चेदं भाष्यमेव तथान्यर्थकस्वार्थवत्त्वेनापरस्यानर्थकत्वेन[3] कथमेकशेष इति वाच्यम् । द्वन्द्वावयवानामर्थवतामेवैकशेष इत्यर्थे मानाभावात् । विशिष्टरूपोपादानविषयाया अर्थवत्परिभाषाया इहाप्राप्तेः ॥

( ७२८ दूषणवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अङ्गाश्रये चैकशेषवचनम् ॥ * ॥

( भाष्यम् ) **अङ्गाश्रये च कार्ये एकशेषो वक्तव्यः ॥ स्वसा च स्वसारौ च स्वसारः ॥ अङ्गाश्रये कृतेऽसारूप्यादेकशेषो न प्राप्नोति ॥ इदमिह संप्रधार्यमङ्गाश्रयं क्रियतामेकशेष इति । किमत्र कर्तव्यम् । परत्वादङ्गाश्रयम् ॥**

( प्रदीपः ) **अङ्गाश्रये चेति** ॥ चशब्दादनङ्गाश्रयेऽपि । यथा नौश्च नावौ चेति ॥ **स्वसा च स्वसारौ चेति** । किमर्थमेकमेकवचनान्तम्, द्वितीयं तु द्विवचनान्तमिति चेत् सर्वथा वैरूप्यप्रतिपादनाय । तथा हि । यद्यन्तर्वर्तिन्यां विभक्तौ लुप्तायामपि वचन[4]सामर्थ्यात् प्रत्ययलक्षणमाश्रीयते तदात्र वैरूप्यम् । अथापि समासविभक्त्यै[5]व विभक्तिपरत्वं तथापि वैरूप्यम् ॥

( उद्द्योतः ) **सर्वथेति** । समासविभक्तावन्तर्वर्तिविभक्तौ चेत्यर्थः ॥ तदेवाह—**यद्यन्तरिति** । तच्च[6] विग्रहप्रदर्शनेन स्पष्टमेवोक्तम् ॥ **वचनसामर्थ्यादिति** । लुका लुप्तत्वादिति भावः ॥ **अथापीति** । द्वन्द्वे सुब्लुक्यौत्तरपदिकानङि ततो विभक्तावृतोऽङीति गुणेऽप्तृन्निति दीर्घे च परत्वात्कृत इति भावः ॥ एकवचनान्तेन विग्रहे तु समासविभक्तावेव वैरूप्य[7]मन्तर्वर्तिन्यां तु नेति तात्पर्यम् ॥

( ७२९ दूषणवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ तिङ्समासे तिङ्समासवचनम् ॥ * ॥

( भाष्यम् ) **तिङ्समासे तिङ्समासो वक्तव्यः ॥**

( प्रदीपः ) **तिङ्समास इति** । स[8]मास एकशेषे विधीयमाने तिङ्समासेऽप्येकशेषो वक्तव्यः ॥ स च तिङ्समासो वक्तव्य इत्यर्थः ॥

( उद्द्योतः ) **समासएकशेषे इति** । प्रत्यर्थंशब्दनिवेशे एकपचा एका क्रियोच्यते एकेन च तिपैकः कर्तेत्यनेकक्रियाकर्तृविवक्षायामनेकतिङन्तप्रसङ्ग एकशेष इष्यते, स च तेषां समासाभावान्न प्राप्नोतीति सरूपतिङन्तानामपि द्वन्द्वो वाच्य इत्यर्थः ॥

( आक्षेपभाष्यम् )

**एकं तिङ्ग्रहणमनर्थकम्—'समासे तिङ्समास—' इत्येव[9] सिद्धम् ॥**

( प्रदीपः ) **एकमिति** । विनापि तेनार्थस्यावगमात् ॥

( आक्षेपबाधकभाष्यम् )

**नानर्थकम् । तिङ्[10]समासे प्रकृते तिङ्समासो वक्तव्यः ॥**

( प्रदीपः ) **प्रकृत इति** । आख्यातमाख्यातेनेत्यत्र द्वन्द्वश्च सरूपाणामिति वक्तव्यम् ॥

( ७३० दूषणवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ तिङ्विधिः प्रतिषेधश्च ॥ * ॥

( भाष्यम् ) **तिङ् च कश्चिद्विधेयः कश्चित्प्रतिषेध्यः । पचति च पचति च पचतः तश्शब्दो विधेयः, तिशब्दः प्रतिषेध्यः ॥**

( उद्द्योतः ) आद्ययोस्तिङोर्लोपेऽपि समासस्याधातुत्वात्ततस्तिङोऽप्राप्तेराह—**भाष्ये तिङ्विधिरिति** ॥ सु[11]ग्रहणात्तिङो लुगप्राप्तेराह—**प्रतिषेधश्चेति** । प्रतिषेधोऽत्र लोपः । उपलक्षणमिदं, पादौ पादा इत्यादावेकवद्भावस्यापि प्रसङ्ग इत्यपि बोध्यम् ॥

( इति समस्तैकशेषरूपद्वितीयपक्षदूषणनिरूपणम् )

( असमस्तैकशेषपक्षदूषणप्रकरणभाष्यम् )

**यदि पुनरसमास एकशेष उच्येत ।**

( प्रदीपः ) **यदि पुनरिति** । दोषान्तराभिधानाय पुनरुपन्यासः ॥

( उद्द्योतः ) **पुनरुपन्यास इति** । द्वितीय[12]पक्षस्येति शेषः ।

( ७३१ दूषणवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ असमासे वचनलोपः ॥ * ॥

( भाष्यम् ) **यद्यसमासे, वचनलोपो वक्तव्यः ॥**

( पुनरुक्तिदोषभाष्यम् )

**ननु चोत्पततैव वचनलोपं चोदिताः स्मः ॥**

( उद्द्योतः ) भाष्ये—उत्पततैव तत्पक्षदूषणमुपक्रमतैव । *पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वाद् *इत्यनेन चोदिताः स इत्यर्थः ॥

( पुनरुक्तिपरिहारभाष्यम् )

**द्विवचनबहुवचनविधिं द्वन्द्वप्रतिषेधं च वक्ष्यति, तदर्थं पुनश्चोद्यते ॥**

( प्रदीपः ) **तदर्थमिति** । पूर्वं दोषमात्रमुपन्यस्तं केवलाया विभक्तेः श्रवणं प्राप्नोतीति । इदानीं तु तत्प्रतिविधानाय वचने क्रियमाणे गौरवमापद्यत इत्येतत्प्रतिपाद्यते ॥

---

१ अत्र समासान्तोदात्तत्वस्यान्तरङ्गत्वं पूर्वप्रातिकत्वरूपम्, एकशेषस्य बहिरङ्गासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् । (र. ना.) २ हलन्तस्य शेषपक्षे इत्यर्थः । (र. ना.) ३ समासान्तानामुत्तरपदावयवत्वे मानमित्यर्थः । (र. ना.) ४ एकशेषविधायकवचनसामर्थ्यादित्यर्थः । (र. ना.) ५ 'विभक्त्यैकवि' । ६ वैरूप्यञ्चेत्यर्थः । (र. ना.) ७ आनङ्गुणप्रयुक्तमिति भावः । (र. ना.) ८ 'समासैकशेषे' । ९ 'इत्येवास्तु' । १० तिङ्समासप्रकरणे इति फलितार्थः । (र. ना.) ११ सुपो धात्विति सूत्रे इति शेषः । (र. ना.) १२ द्वितीयेति तृतीयेति तु युक्तम् ॥ यद्वा समासपक्षाद्द्वितीयोऽसमासपक्ष इत्यर्थे गमेत् ।

(उद्द्योतः) भाष्ये दूषणान्तरं वक्तुमुक्तानुवाद इत्याह—द्विवचनेत्यादि ॥ वक्ष्यतीति । वार्तिककृदिति शेषः ॥ तदर्थं तदवतारणार्थम् ॥ पुनश्चोद्यत इति ॥ ॐ असमासे वचनलोपः ॐ इत्येतदित्यर्थः ॥

( ७३२ दूषणवार्तिकम् ॥ १० ॥ )

## ॥ ॐ ॥ द्विवचनबहुवचनविधिः ॥ ॐ ॥

(भाष्यम्) द्विवचनबहुवचनानि विधेयानि । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति ।

( उद्द्योतः ) वक्ष्यतीति यदुक्तं, तदाह—द्विवचनेति । केवलं सोः श्रवणमेव न दोषोऽपि तु द्विवचनाद्यसिद्धिरपि । वचनाद्विभक्तिलोपे कृतेऽपि प्रत्ययलक्षणेनाप्रत्यय इति निषेधात्प्रातिपदिकत्वाभावेन द्विवचनाद्यनापत्तेस्तदर्थं वचनारम्भे गौरवं च । न ङिसंबुद्ध्योरिति ज्ञापकं च नलोपविषयमेवेत्यर्थः ॥

( ७३३ दूषणवार्तिकम् ॥ ११ ॥ )

## ॥ ॐ ॥ द्वन्द्वप्रतिषेधश्च ॥ ॐ ॥

( भाष्यम् ) द्वन्द्वस्य च प्रतिषेधो वक्तव्यः । वृक्षश्च वृक्षश्च वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति । "चार्थे द्वन्द्व" इति द्वन्द्वः प्राप्नोति ॥

(उद्द्योतः) भाष्ये ज्ञापकस्य सामान्यापेक्षत्वेऽपि दोषमाह—द्वन्द्वप्रतिषेधश्चेति । द्वन्द्वस्य वैकल्पिकत्वात्तदभावेऽस्य सार्थक्यं मन्यते ॥

( दूषणपरिहारभाष्यम् )

नैष दोषः । अनवकाश एकशेषो द्वन्द्वं बाधिष्यते ।

( उद्द्योतः ) अनवकाश इति । सहविवक्षायां व्यपेक्षाभावे ह्येकशेषस्तत्र च द्वन्द्वस्य नित्यता ॥ विशेषणविशेष्यभावानापन्नस्यानेकस्य युगपदेकपदार्थसंबन्धबोधनेच्छा सहविवक्षेति भावः ॥

( परिहारदूषणभाष्यम् )

सावकाश एकशेषः ॥ कोऽवकाशः? । तिङन्तान्यवकाशः ॥

( प्रदीपः ) तिङन्तान्यवकाश इति । कारकभेदात् क्रियाभेदादनेकतिङन्तप्रसङ्गे एकशेषो विधेयः । तत्रैश्च परत्वात्सरूपाणामेकशेषं बाधित्वा द्वन्द्वः प्राप्नोति । सकृद्गतौ विप्रतिषेध इति पुनरेकशेषो न प्राप्नोति । सत्यपि वा पुनःप्रसङ्गविज्ञाने स्वरसमासान्तेषु दोष एव ॥

( उद्द्योतः ) कारकभेदादिति । नहि तत्र द्वन्द्वप्राप्तिः सुबन्तानां तद्विधानात्, इदमवकाशमात्रं, न त्वैकैकशेषेणेष्टसिद्धिः ॥

( इति तृतीयपक्षदूषणनिरूपणम् )

---

( अथ विभक्त्यन्तैकशेषरूपचतुर्थपक्षनिरूपणभाष्यम् )

यदि पुनः पृथक्सर्वेषां विभक्त्यन्तानामेकशेष उच्येत ॥ किं कृतं भवति? ॥ कश्चिद्वचनलोपः परिहृतो भवति ॥ विभक्त्यन्तानामेकशेषे विभक्त्यन्तानामेव तु निवृत्तिर्भवति ॥

( प्रदीपः ) यदि पुनरिति । सप्तमीनिर्देशे प्रकृतिमात्रनिवृत्तौ प्रत्ययश्रवणप्रसङ्गः । षष्ठीनिर्देशे तु विभक्त्यन्तानां निवृत्त्या भाव्यमिति नास्ति केवलविभक्तिश्रवणप्रसङ्गः ॥ कश्चिदिति । शिष्यमाणस्य त्वेकवचनश्रवणप्रसङ्ग एव ॥

( उद्द्योतः ) भाष्ये—यदि पुनरिति ॥ चतुर्थः पक्षः ॥ षष्ठ्यर्थे सप्तमीति भावः । तदाह—षष्ठीनिर्देशे त्विति ॥ षष्ठ्यर्थकत्वेन निर्देशे त्वित्यर्थः ॥

( ७३४ दूषणवार्तिकम् ॥ १२ ॥ )

## ॥ ॐ ॥ एकविभक्त्यन्तानामिति तु पृथग्विभक्तिप्रतिषेधार्थम् ॥ ॐ ॥

( भाष्यम् ) एकविभक्त्यन्तानामिति तु वक्तव्यम् । किं प्रयोजनम्? । पृथग्विभक्तिप्रतिषेधार्थं, पृथग्विभक्त्यन्तानां मा भूत् । ब्राह्मणाभ्यां च देहि ब्राह्मणाभ्यां च कृतम् ॥

( प्रदीपः ) एकविभक्त्यन्तानामिति । सप्तमीनिर्देशमपास्य षष्ठीनिर्देशः कर्तव्य इत्यर्थः ॥ किं प्रयोजनमिति । एकग्रहणस्य प्रयोजनप्रश्नः । षष्ठीनिर्देशस्य तु प्रयोजनमुक्तमेव कश्चिद्वचनलोपः परिहृत इति ॥

( उद्द्योतः ) भाष्ये—एकविभक्त्यन्तानामिति त्विति । एकग्रहणं कर्तव्यं भवतीत्यर्थः । प्रयोजनप्रश्ने तस्यैवोत्तरदानात् ॥

( ७३५ दूषणनिराकरणवार्तिकम् ॥ १३ ॥ )

## ॥ ॐ ॥ न वार्थविप्रतिषेधाद्युगपद्वचनाभावः ॥ ॐ ॥

( भाष्यम् ) न वा एष दोषः ॥ किं कारणम्? । अर्थविप्रतिषेधात् । विप्रतिषिद्धावेतावर्थौ कर्ता संप्रदानमिति अशक्यौ युगपन्निर्देष्टुम् । तयोर्विप्रतिषिद्धत्वाद् युगपद्वचनं न भविष्यति ॥

( प्रदीपः ) न वेति । एकविभक्त्यन्तानामिति न वक्तव्यमेव प्रयोजनाभावात् । ततश्चानुत्पन्नायामेव विभक्तौ प्रातिपदिकानामेकशेषे कृते शिष्यमाणस्य निवर्तमानार्थाभिधानाद् द्विवचनबहुवचनसिद्धिः ॥ विप्रतिषिद्धाविति । चतुर्थ्यन्तस्य शेषे ब्राह्मणेभ्य इत्युक्ते च कर्तृत्वं न प्रतीयते । तृतीयान्तस्य शेषे ब्राह्मणैरित्युक्ते संप्रदानत्वं न गम्यते । यश्च शब्दोऽनेकार्थप्रत्यायनाय प्रभवति स शिष्यते नान्यः ॥

( उद्द्योतः ) न वेति । प्रत्याख्यानमप्येकग्रहणस्यैव ॥ एकविभक्त्यन्तानामिति न वक्तव्यमेवेति । नवेति प्रतीकेऽस्यार्थस्योपयोगश्चिन्त्यः ॥ यदि पुनः प्रातिपदिकानामिति प्रतीके त्विदं वक्तुं युक्तम् । अयं तर्हि दोष इत्यग्रिमभाष्यस्वारस्येन तावत्पर्यन्तं

---

१ 'असमास एकशेषः' इत्येतदिति तु तत्त्वम् । २ ननु प्रत्ययलक्षणमादायाप्रत्यय इति निषेधो न प्रवर्तते इति नङि संबुद्ध्योरित्यनेन ज्ञापनात्र दोषोऽत आह । ( र. ना. ) ३ नङिसंबुद्ध्योरिति ज्ञापकस्य नलोपमात्रविषयकत्वाभावेऽपीत्यर्थः । (र. ना.) ४ तिङन्तेषु एकशेषस्य सावकाशत्वाच्च सुबन्तेषु एकशेषं परत्वाद् बाधित्वा द्वन्द्वः प्राप्नोतीत्यर्थः । (र. ना.) ५ एकस्यैव धातोरनेकपाकादिक्रियाऽभिधानशक्तिमत्त्वादेकशेषं विनैव पचत इत्यादौ निर्वाह इति भावः । (र. ना.) ६ 'उच्यते' । ७ 'जनस्यामा' ।

विभक्त्यन्तानामेकशेष इति पक्षानुवृत्तेरेव लाभेन तथा व्याख्यान-स्यानौचित्याच ॥ **विप्रतिषिद्धावेतावि**ति । कर्तृसंप्रदानयोरर्थयोर्विरोधेन युगपदेकरूपेणैकत्रान्वयाभावेन सहविवक्षाभावादेकशेषाप्राप्तेरेकत्वेन विभक्तिर्न विशेष्येत्यर्थः । कैयटोक्तं **ब्राह्मणेभ्य इत्युक्ते** इत्यादि तु वचनलोपवचनविधिकरणेऽप्येकग्रहणवैयर्थ्योपपादकमिति बोध्यम् ॥

( ७३६ दोषनिराकरणयुक्त्यन्तरवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ अनेकार्थाश्रयश्च पुनरेकशेषः [ तस्मान्नैकशब्दत्वम् ] ॥ * ॥

**( भाष्यम् ) अनेकमर्थं संप्रत्याययिष्यामीति एकशेष आरभ्यते ॥**

**तस्मान्नैकशब्दत्वम् । तस्मादेकशब्दत्वं न भविष्यति ॥**

(उद्योतः) भाष्ये—**अनेकमर्थमि**त्यस्य युगपदेकरूपेणेत्यादिः॥

( दूषणभाष्यम् )

**अयं तर्हि दोषः—कश्चिद्वचनलोपो द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्चेति ।**

( प्रदीपः ) **अयं तर्हीति** । एकविभक्त्यन्तानामिति क्रियमाणे प्रत्युत दोषः ॥ **कश्चिदिति** । शिष्यमाणस्यैकवचनस्य[1] लोपो वक्तव्यः ॥

( उद्योतः ) **अयं तर्हीति** प्रतीके **एकविभक्त्यन्तानामिति क्रियमाणे** प्रत्युत दोष इति व्याख्यानं भाष्याक्षरस्वरसविरुद्धम् । उक्तदोषाभावेऽप्ययं दोष इति ह्यर्थस्तदक्षरमर्यादया लभ्यते ॥ **द्विवचनेति** । शिष्टस्य विभक्त्यन्ततयाऽप्रातिपदिकत्वेन द्विवचनाद्यप्राप्तेः सापि वाच्येत्यर्थः ॥

( इति चतुर्थपक्षदूषणनिरूपणम् )

( अथ पञ्चमपक्षनिरूपणम् )

**(भाष्यम्) यदि पुनः प्रातिपदिकानामेकशेष उच्येत[3] ॥ किं कृतं भवति? ॥ वचनलोपः परिहृतो भवति ॥**

( प्रदीपः ) **यदि पुनरिति** । एकविभक्ताविति न क्रियते, **ह्रस्वो नपुंसक** इत्यतः प्रातिपदिकग्रहणमनुवर्त्यानुत्पन्नायामेव विभक्तौ सरूपाणां प्रातिपदिकानामेकशेषः क्रियते ॥ तिङन्ते कथम्? । उच्यते । लावस्थायामेव पच् ल पच् ल इति स्थिते कृदन्तत्वात् प्रातिपदिकत्वे सत्येकशेषः ॥

( उद्योतः ) द्वितीयपक्षाद्विशेषं दर्शयितुमाह—**एकेति** । **प्रातिपदिकानामिति** । अनुवृत्तस्य बहुवचनेन विपरिणाम इत्यर्थः । यद्यपि विभक्त्युत्पत्तेः पूर्वं सरूपाणामेकशेष इत्यर्थे भाष्यतात्पर्येण प्रातिपदिकग्रहणानुवृत्तेः फलं चिन्त्यम्, तथापि * **हरितहरणे**-त्याद्यग्रिमवार्तिकोत्थानाय तथोक्तम् ॥ **कृदन्तत्वादिति** । अतिङितिप्रतिषेधस्तु तिङ् एव स्थानिवत्त्वप्राप्तकृत्त्वस्येत्यभिमानः ॥

( ७३७ दूषणवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधः सरूपत्वात् ॥ * ॥

**( भाष्यम् ) प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः । माता च जनयित्री मातारौ च धान्यस्य मातृमातारः ॥ किं कारणम्? । सरूपत्वात् । सरूपाणि ह्येतानि प्रातिपदिकानि ॥**

( प्रदीपः ) **मातृमात्रोरिति** । कथमयं निर्देशः यावतैकशेषेण भाव्यम् । एकशेषे सति विवक्षितार्थानवगमात् तदभावः । अयं ह्यत्रार्थो विवक्षितः जननीवाचिनः परिच्छेत्तृवाचिनश्च मातृशब्दस्यैकशेषप्रतिषेधो वक्तव्य इति । एष चार्थो मात्रोरित्युक्ते न गम्यते ॥

( उद्योतः ) भाष्ये—**मातृमात्रोरि**ति । प्रातिपदिकयोरनयोः सारूप्यादिति भावः । इदं पात्रीादीनामुपलक्षणम् ॥ **यावतैकशेषेणे**ति । जनन्यादिवाचकयोर्निषेधेऽपि शब्दपरयोर्निषेधे मानाभाव इत्यर्थः ॥ **तदभाव इति** । विवक्षितार्थावगमायैकशेषो न कृत इति भावः । एवमेव यत्तदेतेभ्य इत्यादौ कोशेषु चैकशेषाकरणम् ॥

( आक्षेपभाष्यम् )

**किमुच्यते प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य इति, न पुनर्यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात् । तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यां च मातृभ्यां चेति? ।**

( दूषणाशयभाष्यम् )

**अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणेति प्रातिपदिकानामेवैकशेषे दोषो भवति । एवं च कृत्वा चोद्यते ॥**

( प्रदीपः ) **अथ मतमेतदिति** । अर्थविप्रतिषेधादत्रैकशेषो न भवति । कृते ह्येकशेषे ताभिरित्यनुप्रयोगे पुमर्थो न प्रतीयते, तैरिति चोक्ते स्त्र्यर्थानवगतिः । अभ्युपगम्यनादेन त्वेतदुच्यते विभक्त्यन्तानां सारूप्य इति । प्रातिपदिकावस्थायां सर्वदा सारूप्यात् सर्वत्रैकशेषः स्यात् विभक्त्यन्तानां तु सरूपाणामेकशेषे यत्रैव तृतीयादौ विभक्तौ सारूप्यं तत्रैवैकशेषो न प्रथमाद्वितीययोरित्यर्थः ॥

( उद्योतः ) मतशब्दसूचितास्वरसं स्पष्टयति—**अर्थेति** ॥ **स्त्र्यर्थानवगतिरिति** । प्रकरणादिना प्रतीतिसम्भवाच्चिन्त्यमेतत् । एवं च "विभक्त्यन्तानामेकशेषे तृतीयान्तादीनामेकशेषो भवत्येव प्रथमाद्वितीययोस्तु नेति मते दोषाभावात् एकविभक्ताविति पदरहितप्रातिपदिकैकशेषपक्षे एवैष दोष" इत्यर्थो भाष्यस्य, विभक्तिपदाभावे सरूपाणामेवैकशेष इत्येवंनियमेन प्राप्तेः । प्रतिषेधेन सहविवक्षाविषयैकशेषस्य निषेधे तद्विषये द्वन्द्वः पक्षे वाक्यं च सिध्यति । असहविव-

---

१ ब्राह्मणाभ्यामित्येकेन शब्देन युगपत् कर्तृसंप्रदानरूपोभयार्थस्य बोधनासंभवादेकशेषोऽत्र न भविष्यतीति भावः । ( र. ना. ) २ 'वचनलोपो' । ३ 'उच्यते' । ४ 'पदिकान्वृत्त्याऽनुत्प' । ५ अन्यथा विभक्त्युत्पत्तेः पूर्वं हरितहरिणशब्दयोरुभयोरपि हरिणीशब्दत्वाविशेषेण सारूप्यसत्त्वाद् हरितहरिणेत्यादि वार्तिकोत्थानमेव न स्यादिति भावः । ( र. ना. ) ६ लकारस्य

साक्षात्प्राप्तकृत्त्वस्य न प्रतिषेध इत्येवकारेण बोध्यते । ( र. ना. ) ७ सिद्धान्ते तिङ्त्वस्थानिनोरुभयोरपि कृत्त्वप्रतिषेधस्येष्टत्वादिति भावः । ( र. ना. ) ८ रक्षणार्थकपा धातुपानार्थकपा धातुनिष्पन्नपात्रशब्दादीनामित्यर्थः । (र.ना.) ९ तैरित्यत्राप्येकशेषस्वीकारादिति शेषः । ( र. ना. ) १० मातृमात्रोरिति शेषः । ( र. ना. )

क्षाविषयतत्रं तु भवत्येव मातृभ्यां कृतं देहीति च, अक्षा भज्यन्तामित्यादिवत् । अथ मतमित्येतेनारुचिर्बोधिता । तद्बीजं तु—सूत्रव्याख्यानपक्षभेदेन लक्ष्यभेदानौचित्यमिति । तस्माद् विभक्त्यन्तानामेकशेषेऽपि मातृमात्रोः प्रतिषेधो वक्तव्य एवेति गूढतात्पर्यम् । तद्ध्वनयन्नाह—एवं च कृत्वेति । एवमङ्गीकृत्य प्रातिपदिकानामेकशेषे एव प्रतिषेधश्चोद्यत इत्यर्थः ॥ वस्तुतो विभक्त्यन्तानामेकशेषेऽपि तद्वक्तव्यमित्यर्थः । अस्य मतस्य भाष्याभिप्रेतत्वे तु विरूपाणामनेकशेष इत्यादि प्रागुक्तभाष्यविरोध इति दिक् । तद्ध्वनयन्नाह—अभ्युपगम्यवादेन त्विति । सर्वदेति । सैर्वत्रेत्यर्थकम् ॥

( ७३८ दूषणवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानं कर्तव्यम् । हरितस्य स्त्री हरिणी हरिणस्यापि हरिणी हरिणी च हरिणी च हरिण्यौ । श्येतस्य स्त्री श्येनी, श्येनस्यापि स्त्री श्येनी, श्येनी च श्येनी च श्येन्यौ । रोहितस्य स्त्री रोहिणी रोहिणस्यापि रोहिणी रोहिणी च रोहिणी च रोहिण्यौ ।**

( प्रदीपः ) **हरितेति** । एषां प्रातिपदिकावस्थायां वैरूप्यमित्येकशेषो न प्राप्नोति, विभक्तौ तु सारूप्यसद्भावात् सिध्यत्येकशेषः ॥ **हरितस्य स्त्रीति** । नानेन पुंयोगः प्रतिपाद्यते तत्र हि ङीषा भाव्यं हरितीति । किं तर्हि ? अयमर्थः हरितशब्दस्य हरिणी सा च स्त्री ॥

(उद्योतः) अत्रैव पक्षे दूषणान्तरमाह—**हरितेति** । लिङ्गविशिष्टपरिभाषामनैश्रित्येदम् ॥ **सा च स्त्रीति** । एवं च वर्णादनुदात्तादिति ङीन्नकारौ ॥

( ७३९ समाधानवार्तिकम् ॥ १७ ॥ )

**॥ * ॥ न वा पदस्यार्थे प्रयोगात् ॥ * ॥**

( भाष्यम् ) **न वा एष दोषः ॥ किं कारणम् ? । पदस्यार्थे प्रयोगात् । पदमर्थे प्रयुज्यते । विभक्त्यन्तं च पदम् । रूपं चेहाश्रीयते । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सरूपाण्येतानि ॥**

( प्रदीपः ) **न वेति** । प्रातिपदिकग्रहणं विच्छिन्नत्वादिह नानुवर्तते । सारूप्यं चेहाश्रीयते । न च प्रातिपदिकानि लोके प्रयुज्यन्ते । किं तर्हि ? पदान्येव । शास्त्रेपि प्रकृत्याद्युपदेशेनानुमेयत्वात्प्रातिपदिकानां प्रयोगाभावः । तेन पदावस्थायां मातृमातार इति वैरूप्यादेकशेषाभावः । हरिण्यावित्यादौ तु भवतीति दोषप्रतिविधानं कृतम् ।

( उद्योतः ) ननु लौकिके प्रयोगे सरूपत्वेऽप्येषां प्रातिपदिकत्वाभावात्कथमेकशेषसिद्धिरत आह—**प्रातिपदिकग्रहणमिति** । तदनुवृत्तौ लौकिके प्रयोगे सरूपाणामित्युक्तेऽप्यन्तरङ्गत्वादेकशेषप्रवृत्तिर्विभक्त्युत्पत्तेः पूर्वमेवेति सुप्प्रकृतीनामेवैकशेषसिद्धिरिति भावः । लौकिकप्रयोगश्च येषामेकशेषस्तत्प्रकृतिकविभक्त्यन्त एव प्रत्यासत्तेः । एतेन हरिणीशब्दस्यापि तत्प्रकृतिकतद्धितघटितप्रयोगे वैरूप्यमस्त्येवेति परास्तम् । नन्वन्यत्र **तरप्तमपौ घ** इत्यादौ लौकिकासंभवे शास्त्रीयग्रहणस्योक्तत्वादत्रापि तथैवास्त्वित्यत आह—**शास्त्रेऽपीति** । लौकिकताईशप्रयोगत्वावच्छेदेन च सारूप्यं विवक्षितं तदाह—**तेनेत्यादि** ॥

( भाष्यम् ) **अपर आह—*न वा पदस्यार्थे प्रयोगात् * । न वा एष पक्ष एवास्ति प्रातिपदिकानामेकशेष इति । किं कारणम् ? । पदस्यार्थे प्रयोगात् । पदमर्थे प्रयुज्यते विभक्त्यन्तं च पदम् । रूपं चेहाश्रीयते । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे प्रातिपदिकानां प्रयोगो नास्ति ॥**

( प्रदीपः ) **अपर आहेति** । पक्षासम्भवप्रतिपादनार्थमिदमुक्तमित्यर्थः ।

( उद्योतः ) **पक्षासंभवेति** । लौकिके प्रयोगे सरूपाणामित्युक्ते प्रातिपदिकैकशेषस्योक्तिसंभव एव न, किं तु विभक्त्यन्तानामेकशेष इति पक्षस्यैवापत्तिरिति भावः ॥

( पञ्चमपक्षसमर्थन आक्षेपभाष्यम् )

**अथानेन पक्षेणार्थः स्यात्प्रातिपदिकानामेकशेष इति ॥**

( प्रदीपः ) इदानीं भाष्यकार एनं पक्षं समर्थयितुमाह—**अथानेनेति ॥**

( उद्योतः ) **अथानेनेति** । यद्यनेन पक्षेण प्रयोजनं स्यात् 'तदा सोऽपि समर्थयितुं शक्यः' इति शेषः ॥

( समाधानभाष्यम् )

**बाढमर्थः ॥**

**किं वक्तव्यमेतत् ? ।**

**नहि ॥**

**कथमनुच्यमानं गंस्यते ? ।**

**एतेनैवाभिहितं सूत्रेण "सरूपाणामेकशेष एकविभक्तौ" इति ॥**

**कथम् ? ।**

**विभक्तिः सारूप्येणाश्रीयते । अनैमित्तिक एकशेषः । एकविभक्तौ लौकिके प्रयोगे यानि सरूपाणि तेषामेकशेषो भवति ॥**

**क्व ? ।**

**यत्रँ वा तत्र वेति ।**

( प्रदीपः ) **विभक्तिः सारूप्येणेति** । एकविभक्तिर्नैकशेषनिमित्तत्वेनेहोपात्ता, किं तर्हि ? सारूप्योपलक्षणार्था, एक-

१ तेन मात्रादीनां द्वन्द्वस्यैव लाभादिति भावः । ( र. ना. ) २ सर्वासु विभक्तिष्वित्यर्थः । ( र. ना. ) ३ सरूपाणां प्रातिपदिकानामेकशेष इत्यत्र लिङ्गविशिष्टपरिभाषया हरिण्यादीनामपि ग्रहणेन तेषामपि एकशेषः सिद्ध्यत्येवेत्याशङ्क्याह—लिङ्गेत्यादि । ( र. ना. ) ४ इदं प्रयोगाभाव इत्यनेन संबध्यते । ( र. ना. ) ५ अपीति शेषः । ( र. ना. ) ६ येषामेकशेषस्तत्प्रकृतिकविभक्त्यन्तेत्यर्थः । ( र. ना. ) ७ 'यत्र तत्रवेति' ।

विभक्तौ लौकिके प्रयोगे यानि सरूपाणि दृष्टानि तेषामेकशेषः । स चानैमित्तिकत्वाद्विभक्तिं नापेक्षते ॥ भाष्ये प्रातिपदिकग्रहणं स्वोपलक्षणार्थंत्वाद् ङ्यावन्तादीनामपि हरिण्यादीनामेकशेषो भवति । स्वरभिन्नानामिति वचनान्ङीबन्तस्य हरिणीशब्दस्य शेषः[1] ॥ ये त्वाहुर्हरितहरिणयोरेवैकशेषे कृते उभयवाचित्वेऽप्यन्यतरस्य वर्णवाचित्वं जातिवाचित्वं वाश्रित्य स्त्रीप्रत्ययः क्रियत इति तेषां पक्षे स्वरभेदप्रसङ्गः । मातृमात्रोस्तु क्वचित्सारूप्येऽप्यर्थविप्रतिषेधादेकशेषाभावः ॥ यत्र वेति[3] । अनेनानैमित्तिकत्वमेव प्रतिपाद्यते ॥

( उद्द्योतः ) पर आह बाढमर्थ इति ॥ स[2] एवाह—किं वक्तव्यमिति । प्रातिपदिकानामेकशेष इति सूत्रं कर्तव्यं चेत्यर्थः ॥ सारूप्येणेति । तेन स्वोपलक्षकतया विभक्तिराश्रीयत इति भावः ॥ ये त्वाहुरिति । प्रातिपदिकग्रहणं नोपलक्षणमिति भावः ॥ हरितहरिणयोरिति । विभक्तौ यानि सरूपाणि दृष्टानि तदवयवप्रातिपदिकानामित्यर्थ इति भावः ॥ अन्यतरस्येति । शिष्टस्यान्यतरस्योभयवाचित्वेनेत्यर्थः ॥ जातिवाचित्वं चेति । चकारघटितः पाठः ॥ क्वचित्सारूप्ये इति । वस्तुतस्तु विभक्तित्वावच्छेदेन सारूप्यविवक्षणान्न मातृमात्रादौ दोष इति बोध्यम् । एकशब्दस्वारस्येनैवकारापकर्षणेन वैकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थादिति दिक् ॥ एकग्रहणफलं तु चिन्त्यमेव । अत एव पृथक् सर्वेषां विभक्त्यन्तानामेकशेष इति पक्षे एकग्रहणं पृथग्विभक्तिप्रतिषेधार्थमित्युक्तं तेन हि तदतिरिक्तपक्षेषु तद्वैयर्थ्यं ध्वनितम् । तत्पक्षेति न वार्थविप्रतिषेधादिति तत्प्रत्याख्यातमेव । अत्रापि विभक्तिः सारूप्येणाश्रीयत इत्येवोक्तं न त्वेकविभक्तिरिति । न चैवं नृणां नृणामित्यादावेकशेषानापत्तिः, दीर्घस्य वैकल्पिकत्वेन सारूप्यनियमाभावादिति वाच्यम् । विरूपाणामपि समानार्थानामिति सिद्धेः ॥ यत्त्वेकग्रहणसामर्थ्यंन यद्विभक्तिविषये एकशेषस्तस्यामेव सारूप्यमित्यर्थात् तृतीयादौ मातृमात्रोरेकशेषसिद्धिरिति । तन्न । वार्तिकारम्भे सर्वत्र प्रतिषेधेन पक्षयोः फलभेदापत्तेरित्यलम् ।

( इति पञ्चमपक्षसमर्थनम् )

( अथ तृतीयपक्षसमर्थनायाक्षेपभाष्यम् )

**अथानेन पक्षेणार्थः स्याद् 'विभक्त्यन्तानामेकशेषः' इति ॥**

( समाधानभाष्यम् )

**बाढमर्थः ॥**

**किं वक्तव्यमेतत् ? ॥**

**नहि ॥**

**कथमनुच्यमानं गंस्यते ? ॥**

**एतदप्येतेनैवाभिहितं सूत्रेण "सरूपाणामेकशेष एकविभक्तौ" इति ॥**

**कथम् ? ।**

**नेदं पारिभाषिक्या विभक्तेर्ग्रहणम् ।**

**किं तर्हि ? ।**

**अन्वर्थग्रहणं विभागो विभक्तिरिति । एकविभागे यानि सरूपाणि तेषामेकशेषो भवतीति ॥**

( प्रदीपः ) विभाग इति । कर्मादिकारकमिह विभक्तिशब्देनोच्यते । तेन हि प्रातिपदिकार्थो विभागेनावस्थाप्यते । तत्रैकस्मिंश्चित् कारके विवक्षिते तन्निमित्तया विभक्त्या भाव्यमित्येकविभक्त्यन्तानां सरूपाणामेकशेषः सिध्यति ॥

( उद्द्योतः ) भाष्ये किं वक्तव्यमिति । एकविभक्तीनामिति षष्ठ्यन्तं वक्तव्यं किमित्यर्थः ॥ तेन हीति । बाहुलकात्करणसाधनः कारकशक्तिवाची विभक्तिशब्द आश्रीयत इति भावः ॥ विवक्षित इति । अनेन सूत्रेऽपि विषयसप्तमीति दर्शितम् । कारकशक्तेः शब्दात्परत्वासंभवादिति बोध्यम् ॥

( प्रथमाक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्, कश्चिद्वचनलोपो द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्च इति ॥**

( प्रदीपः ) कश्चिदिति । अवस्थितस्य वचनस्य लोपो वक्तव्यः । तस्मिन्नपि कृते प्रत्ययलक्षणेन प्रत्ययान्तत्वात् प्रातिपदिकसंज्ञाया अभावाद् द्विवचनबहुवचने न सिध्येते[7] इति ते अपि वक्तव्ये । न ङिसंबुद्ध्योरिति तु ज्ञापकं नलोपविषयमेव । अथाप्यविशेषेण लुप्तप्रत्ययस्य प्रातिपदिकसंज्ञायां ज्ञापकम् । एवमप्येकार्थत्वाच्छिष्यमाणस्य द्विवचनबहुवचनासिद्धिरेव ॥

( उद्द्योतः ) लुप्तप्रत्ययस्येति । बहुव्रीहिः ॥ एकार्थत्वाच्छिष्यमाणस्येति । न च शिष्यमाणं लुप्यमानार्थाभिधायीति न्यायविरोधः । प्रत्येकपर्याप्तैकत्वविशिष्टानामेव शिष्यमाणशब्दबोध्यतया द्वित्वादिविशिष्टार्थाप्रतीत्या द्विवचनाद्यसिद्धिरिति भावः ॥

( आक्षेपनिरासभाष्यम् )

**नैष दोषः । यत्तावदुच्यते कश्चिद्वचनलोपो द्विवचनबहुवचनविधिः इति ॥**

( ७४० आक्षेपनिरासहेतुवार्तिकम् ॥ १९ ॥ )

**॥ * ॥ सहविवक्षायामेकशेषः ॥ * ॥**

( भाष्यम् ) **युगपद्विवक्षायामेकशेषेण भवितव्यम् ॥**

( प्रदीपः ) सहविवक्षायामिति । एवं चैकैकस्यानेकार्थाभिधानाद् द्विवचनबहुवचनान्तानामेवैकशेषः ॥

( उद्द्योतः ) एवं चैकैकस्येति । युगपदधिकरणवचनताश्रयेणेति भावः ॥ सर्वेषामर्थानां सर्वैः शब्दैर्युगपद्बोधनेच्छा हि सहविवक्षेति तात्पर्यम् ॥

१ स्वरेण भिन्नानां यस्योत्तरोऽष्टाध्याय्यां परः स्वरविधिस्तस्यैकशेष इत्यर्थकं वक्ष्यमाणं वचनं तस्मादित्यर्थः । ( र. ना. ) २ न तु जातिङीषन्तस्येति भावः । (र.ना.) ।

३ 'यत्रतत्रेति' ॥ ४ पूर्व एवेत्यर्थः । ( र. ना. ) ५ 'चैक' ॥ ६ 'नेन वा पक्षे' ॥ ७ 'सिध्येते' ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—वृक्षश्च वृक्षश्च वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति ॥**

( प्रदीपः ) **न तर्हीति** । नित्येनैकशेषेण भवितव्यमिति वाक्यं न प्राप्नोतीत्यर्थः ॥

( इष्टापत्तिभाष्यम् )

**नैतत्सहविवक्षायां भवति ॥ अथापि निदर्शयितुं बुद्धिः, एवं निदर्शयितव्यम्—वृक्षौ च वृक्षौ च वृक्षौ, वृक्षाश्च वृक्षाश्च वृक्षाश्च वृक्षा इति ।**

( प्रदीपः ) इतरो भिन्नार्थत्वाद् एकशेषवृत्त्या वाक्यं न बाध्यत इत्याह—**नैतदिति** । प्रत्येकमत्र[1] विवक्षेत्यर्थः ॥ बालास्तु प्रक्रियावाक्येनैव व्युत्पाद्यन्त[2] इत्याह—**अथापीति** ॥

( उद्द्योतः ) भिन्नार्थत्वादिति । सर्वेषामर्थानां सर्वैः शब्दैः साहित्येनार्थप्रतिपादनविवक्षाऽभावादिति भावः ॥ **इत्याहेति** । इत्याशयेनाहेत्यर्थः ॥ अथापि[3] निदर्शयितुमित्यनेन वक्ष्यमाणस्यासाधुत्वं बोधितम् । यथा चालौकिकविग्रहवाक्येनासाधुनापि समाससंज्ञाप्राप्त्यवस्थानिदर्शनं तथानेनापीत्यर्थः ॥

( द्वितीयाक्षेपनिरासभाष्यम् )

**यदप्युच्यते–"द्वन्द्वप्रतिषेधश्च वक्तव्यः" इति ॥ नैष दोषः । अनवकाश एकशेषो द्वन्द्वं बाधिष्यते ॥**

( आक्षेपप्रसारणभाष्यम् )

**ननु चोक्तम्—सावकाश एकशेषः । कोऽवकाशः ? । तिङन्तान्यवकाश इति ॥**

( आक्षेपनिरासभाष्यम् )

**न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति ॥ किं कारणम् ? । यथाजातीयकानां द्वितीयस्य[4] पदस्य प्रयोगे सामर्थ्यमस्ति तथाजातीयकानामेकशेषः । न च तिङन्तानां द्वितीयपदस्य प्रयोगे सामर्थ्यमस्ति । किं कारणम् ? । एका हि क्रिया ।[5] एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्—उक्तार्थानामप्रयोग इति ।**

( प्रदीपः ) **यथाजातीयकानामिति** । द्रव्यवाचिनामित्यर्थः ॥ **एका हीति** । आख्यातवाच्या क्रिया सर्वैव निवृत्तभेदा प्रतीयते । भवद्भिरास्यत इत्यादौ वस्तुस्थित्या कर्तृभेदाद् भेदेऽपि तिङन्ताद् भेदस्यानवगमात् । प्रकर्षाभ्यावृत्त्यादयस्तु भेदनिबन्धना आश्रयप्रकर्षाभ्यावृत्त्यादिभेदनिमित्ता नैकत्वं क्रियाया विघ्नन्ति ॥

( उद्द्योतः ) **द्रव्यवाचिनामिति** । सत्त्ववाचिनामित्यर्थः ॥ ननु कर्त्रादिभेदात् क्रियाभेदावगमेनैका क्रियेत्यनुपपन्नमत आह **आख्यातेति** । शब्दशक्तिस्वभावादिति भावः ॥ **सर्वैव** सर्वापि ॥ **निवृत्तभेदा** स्वतो द्वित्वादिसंख्यारहिता ॥ **भेदस्य** तत्सह चरितद्वित्वादेः ॥ स्वगतमेकत्वं तु प्रतीयत इत्येक[6]वचनमिति भावः ॥ **प्रकर्षाभ्यावृत्त्यादयस्त्विति** । अभ्यावृत्तिरत्र गणनम् ॥ **आश्रयाभ्यावृत्तीति** । आश्रयप्रकर्षात् प्रकर्षः, अभ्यावृत्तिर्जन्म तद्ग[7]णनमेव क्रियागणनमिति भावः ॥ **एकत्वं न विघ्नन्तीति** । द्वित्वादिप्रतीतौ हि उत्तरया पूर्वसंख्याबाधनात्तद्विहतिः स्यादिति भावः ॥

( आक्षेपभाष्यम् )

**यदि तर्ह्येका क्रिया, द्विवचनबहुवचनानि न सिध्यन्ति पचतः पचन्ति ॥**

( आक्षेपनिरासभाष्यम् )

**नैतानि क्रियापेक्षाणि ॥ किं तर्हि ? ॥ साधनापेक्षाणि ॥**

( प्रदीपः ) **नैतानीति** । कर्तृकर्मसमवेतसंख्याभिधायिनी द्विवचनबहुवचने इत्यर्थः ॥ ननु कर्तृकर्मणोर्लविधानादनेकस्मिन् कारके अनेकेनैव लकारेणोत्पत्तव्यम् । भवत्वनेको लकारः, लकारजातेरव्यवधानात् लस्येत्यत्र लजात्याश्रयणादनेकस्यापि लस्य स्थाने अर्थत आन्तर्याद् द्विवचनबहुवचने भविष्यत इत्यदोषः ॥

( उद्द्योतः ) **कर्तृकर्मेति** । अस्यारोपितेत्यादिः[8] ॥ भाष्ये साधनशब्देन तिङन्ताभिधेयकर्तृकर्मगतसंख्याविशेष उच्यते, तदपेक्षाणि तदा[9]रोपापेक्षाणि । एवं चैक[10]स्मिन्नेव तदारोपान्न पदभेदप्रसङ्ग इति नैकशेषस्यात्र विषय इति भावः ॥ **अनेकेनैवेति** । वर्तमाने लडित्यत्र संख्या[11]विवक्षणेऽपि धातुभेदेन वाक्योपप्लववत् कर्तृरूपार्थभेदेनापि वाक्योपप्लवादनेकप्रसङ्गो दुर्वारः । अ[12]त एवाग्रे एकप्रकृतेरनेकयञुत्पत्तिं भाष्यकृद्वक्ष्यति ॥ **जात्याश्रयणादिति** । जात्याश्रयानेकव्यक्त्याश्रयणादित्यर्थः ॥ **अर्थत आन्तर्यादिति** । द्व्यर्थस्य लद्वयस्य द्विवचनं बह्वर्थस्य लसमुदायस्य बहुवचनमिति भावः ॥ केचित्त्वनेकलकारोत्पत्तौ न मानम्, क[13]र्तृत्वारोप[14]वदेकस्मिन्ननेकार्थत्वस्याप्यारोपादित्याहुः ॥ एवं चानवकाशत्वादेकशेषो द्वन्द्वबाधक इति स्थितम् ॥

---

( अथ प्रथमपक्षाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु "एकविभक्तौ" इति ॥**

( उद्द्योतः ) भाष्ये–अथ वा पुनरित्यादिना समुदायादेकविभक्ताविति पक्षः समर्थ्यते ॥

( आक्षेपप्रसारणभाष्यम् )

**ननु चोक्तम्—*एकविभक्ताविति चेन्नाभावाद्विभक्तेः* इति ॥**

( आक्षेपनिरासभाष्यम् )

**नैष दोषः । परिहृतमेतत् अर्थवत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यतीति ॥**

---

१ वाक्ये इत्यर्थः । ( र. ना. ) २ 'व्युत्पाद्या' ॥ ३ 'अथापीति' ॥ ४ द्वितीयस्य पदस्य प्रयोगे सति यथाजातीयकानां स्वार्थावबोधे सामर्थ्यमस्ति तथाजातीयकानामेकशेष इति योजना । (र. ना.) ५ 'निमित्ताः क्रियाया एकत्वं न विघ्नन्ति' इत्येवं पाठो व्याख्यात्रोपलब्धः स्यात् ॥ ६ भावाख्यातस्थले इति शेषः । ( र. ना. ) ७ पाकादिक्रियाजन्मगणनमेव पाकादिक्रियागणनमित्यर्थः । ( र. ना. ) ८ एवञ्च क्रियायामारोपिता या कर्तृकर्मसमवेता संख्या तदभिधायिनी इत्यर्थः । एवञ्च प्रकृत्यर्थान्वयोऽपि उपपन्नः । ( र. ना. ) ९ क्रियायामित्यादिः । ( र. ना. ) १० क्रियास्वरूपे इति शेषः । ( र. ना. ) ११ अनुवृत्तधातोरित्यनेन धातुगतेत्यादिः । ( र. ना. ) १२ अर्थभेदेन वाक्योपप्लवादेवेत्यर्थः । ( र. ना. ) १३ 'कर्त्रर्थत्वारो' ॥ १४ कर्त्रर्थत्वारोपवदिति पाठः साधुः । अयं भावः । यथाऽऽदेशगतं कर्त्रर्थत्वं लकारे आरोप्यते तथा एकस्मिन्नेव लकारेऽनेकार्थवाचकत्वस्याप्यारोपः । ( र. ना. )

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—नियमान्न प्राप्नोति अर्थवत्समुदायानां समासग्रहणं नियमार्थम् इति ॥**

( आक्षेपनिरासभाष्यम् )

**नैष दोषः । तुल्यजातीयस्य नियमः ॥ कश्च तुल्यजातीयः ? । यथाजातीयकानां समासः ॥ कथंजातीयकानां समासः ? । सुबन्तानाम् ॥**

( प्रदीपः ) **तुल्यजातीयस्येति** । अवयवानां समुदायार्थतन्त्रत्वात्समुदायविभक्त्यैवावयवार्थस्य संख्यावगमात् पृथगवयवेभ्यो विभक्तिर्नोत्पद्यते ॥ विरूपसमुदाये तु सुबन्तानां द्वन्द्ववचनेनायं न्यायो बाध्यते इत्यवयवेभ्य एव विभक्त्युत्पत्तिः ॥ **सुबन्तानामिति** । यद्यपि **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते**रित्युच्यते तथापि पूर्वपदं तत्र सुबन्तमेवेति सोऽपि तदपेक्षया सुबन्तानामेव समासः । अन्यथा नलोपादीनि पदकार्याणि पूर्वपदे न स्युः । उत्तरपदमेव तु तत्रासुबन्तम् ॥ इह राजन् राजन् औ इति स्थिते परत्वान्नित्यत्वाच्चोपधाया दीर्घे कृते वैरूप्यादेकशेषो न प्राप्नोति ॥ उच्यते—**विरूपाणामपि समानार्थाना**मिति भविष्यति अन्तरङ्गत्वाद्वा । दीर्घत्वं हि नान्तरङ्गम् । उपधां विभक्तिविशेषमसंबुद्धिसर्वनामस्थानमपेक्षत इति बहिरङ्गम् ॥

( उद्द्योतः ) **समुदायविभक्त्यैवेति** । अवयवारभ्यत्वात्समुदायसंख्यायाः समुदायगतसंख्याभिधायिसमुदायविभक्त्यैवावयवार्थेऽपि तत्संख्याप्रतीतेर्गतार्थत्वान्नावयवेभ्यः पृथग् विभक्तिप्रसङ्ग इति भावः ॥ अवयवानां पदत्वादिरूपोपकारस्य समुदायविभक्त्याऽसंभवाच्चिन्त्यमिदम् । किं च विशेष्यविभक्त्या विशेषणीयसंख्यादीनामुक्तावपि विशेषणाद्यथा साधुत्वाय विभक्तिः क्रियते तथात्रापि दुर्वारेति । तस्मात्प्रत्येकगतसंख्याया अविवक्षणान्न प्रत्येकं सुबुत्पत्तिः । समुदायगतबहुत्वसंख्याया एव विवक्षणेन तद्बोधकसमुदायादेव विभक्तिस्तावताप्यपदं न प्रयुञ्जीतेति निषेधातिक्रमाभावादिति भाष्यार्थः ॥ प्रत्येकसंख्याविवक्षाऽभावे सति बहुत्ववत्त्वेन विवक्षणात् पृथक् प्रयोगार्हत्वमप्येषां नेति भेदसंसर्गद्वारकमर्थवत्त्वमस्य नेति न नियमेन व्यावृत्तिरिति तात्पर्यम् ।

( ७४१ आक्षेपवार्तिकम् ॥ २० ॥ )

## ॥ * ॥ सर्वत्रापत्यादिषूपसंख्यानम् ॥ * ॥

( भाष्यम् ) **सर्वेषु पक्षेष्वपत्यादिषूपसंख्यानं कर्तव्यम् । भिक्षाणां समूहो भैक्षमिति ॥**

( प्रदीपः ) **सर्वत्रेति** । षट्पक्षा इहोपक्षिप्ताः पृथग्विभक्तौ परत एकशेषः, एकवचनान्तानां वा, समासाद्वैकस्यां विभक्तौ परतः, सरूपसमुदायाद्वा विहितायामेकविभक्तौ परतः, प्रातिपदिकानां वा, सहविवक्षायां वा प्रत्येकं द्विवचनबहुवचनान्तानामिति । तत्र पश्चिमं पक्षत्रयमङ्गीकृतम् । तत्र भिक्षा भिक्षा भिक्षा आम् अ इति स्थिते सर्वविधिभ्यो लुग्विधेर्बलवत्त्वाद् लुकि कृते विभक्त्यभावादेकविभक्तौ परतो विधीयमान एकशेषो न प्राप्नोति, प्रत्ययलक्षणं च नास्ति **न लुमताङ्गस्येति** प्रतिषेधात् । प्रातिपदिकैकशेषपक्षे समर्थं यद् ङ्याप्प्रातिपदिकं तस्मात्तद्धिता इत्याबन्तादणि कृते परत्वादादिवृद्धौ कृतायां वैरूप्यादेकशेषाप्रसङ्गः । यदा तु सहविवक्षायां विभक्त्यन्तानामेकशेषः सुबन्ताच्च तद्धित इत्ययं पक्षस्तदा सुबन्तसमुदायात्तद्धिताभावात्पूर्वमेकशेषः पश्चात्तद्धित इति न कश्चिद्दोषः ॥

( उद्द्योतः ) तत्र सरूपसमुदायादेकविभक्ताविकशेषपक्षे दोषमुपपादयति—**तत्र भिक्षेति** । पदस्य विभज्यान्वाख्यानपक्षे इदम् । आबन्तसमुदायस्य चाप्रत्ययान्तत्वात्प्रातिपदिकत्वमिति भावः । **स्त्रीप्रत्यये चानुपसर्जनेनेति** तु स्त्रीप्रत्ययत्वेन तद्व्याप्यधर्मेण वा स्त्रीप्रत्ययग्रहणे इति तात्पर्यम् ॥ **तदा सुबन्तसमुदायादिति** । तस्य सुबन्तत्वपर्याप्त्यधिकरणत्वाभावादिति भावः ॥ एवं च भाष्ये सर्वत्रशब्देन पक्षद्वयमेव ग्राह्यमिति तात्पर्यम् ॥ वस्तुतस्तु तदवयवादेकसात्तस्य दुर्वारत्वेन तत्र कृते परत्वादादिवृद्धौ वैरूप्यात्तत्पक्षेऽप्येकशेषो न प्राप्नोति । न च विनिगमनाविरहेण प्रत्येकमुत्पत्त्यवणत्रयापत्तिः, तावतापि अ अभैक्षमित्यस्याप्यापत्त्या नियतभैक्षासिद्धेस्तदवस्थत्वात्॥ किं च **प्रातिपदिकानां चैकशेषे सिद्ध**मिति भाष्ये न्यूनता, प्रत्येकं द्विवचनाद्यन्तानामेकशेष इति पक्षेऽपि त्वदुक्तरीत्या दोषाभावात् । युगपदधिकरणवचनतायां दुःखत्वदुरुपपादत्वयोर्द्वितीये भाष्ये वक्ष्यमाणतया तत्पक्षोक्तिसंभवाभावाच्च । समर्थग्रहणेन तु न विभक्तिनिमित्तकार्यस्य पूर्वं प्रवृत्तिः । निर्मोह आगतं विश्ववैर्वाङ्रूप्यमित्य।देर्विभाषा **पूर्वाह्णे**ति सूत्रभाष्यस्यासंगत्यापत्तेरित्याहुः॥ प्रातिपदिकैकशेषपक्षे मातृमात्रादौ यथा नैकशेषस्तथोक्तमेव ॥

( वार्तिके सर्वत्रपदासंगतिभाष्यम् )

**सर्वत्रेत्युच्यते प्रातिपदिकानां चैकशेषे सिद्धम् ।**

( प्रदीपः ) **प्रातिपदिकानां चेति** । अनैमित्तिकत्वादन्तरङ्गत्वात् पूर्वमेकशेषः पश्चाद्वृद्धिः । अथ वा तद्धित एव पश्चादुत्पद्यत इति भावः ॥

( उद्द्योतः ) भाष्ये **सिद्धमिति** । सुबन्तात्तद्धितोत्पत्त्या तत्पक्षे एकशेषस्यान्तरङ्गत्वात् । एवं च सर्वत्रेत्यसंगतमिति भावः ॥

( सर्वत्रपदासंगतिनिरासभाष्यम् )

**अपत्यादिष्वित्युच्यते बहवश्चापत्यादयः । गर्गस्यापत्यं बहवो गर्गाः । एका प्रकृतिर्बहवश्च यञः । असारूप्यादेकशेषो न प्राप्नोति ॥**

( प्रदीपः ) **बहवश्च यञ इति** । प्रत्यर्थं शब्दनिवेशाद् बहुष्वपत्येषु बहवो यञ उत्पाद्याः । तत्र गर्ग य य य इति स्थिते समुदायस्य तद्धितान्तत्वात् प्रातिपदिकत्वात्तत एका विभक्तिस्तत्र प्रथमस्य यशब्दस्य प्रकृतिसंनिपातकृतं वैरूप्यमित्येकशेषो न प्राप्नोति ॥ ननु प्रकृतिं विहाय यशब्दानां सारूप्यादेकशेषो विधास्यते । नैतदस्ति । विभक्त्युत्पत्तावभ्यन्तरीकृता

---

१ 'नोपपद्यते' ॥ २ परिनिष्ठितम्, कृतसन्धिकार्यमित्यर्थः । ( र. ना. ) ३ क्रमिकान्वाख्यानपक्षे तु एकशेषोत्तरं तद्धित इत्येकशेषे कार्ये विभक्तिलुकोऽप्रसक्तिः । ( र. ना. ) ४ ननु प्रातिपदिकैकशेषपक्षस्यापि अत्र वार्तिके उक्तिसंभवो न । समर्थाद्धि तद्धितः, समर्थश्च यथा कृतसन्धिकार्यं तथा कृतविभक्तिकार्यमपि, एवञ्च सुबन्तादेव तद्धित इत्याबन्तादणोऽभावादादिवृद्धिकृतवैरूप्याप्रसक्तेर्नैकशेषप्रवृत्तिरव्याहतेत्यत आह—समर्थग्रहणेनेति । ( र.ना. ) ५ अन्यथा कृतसंप्रसारणादिरूपं स्यादिति भावः । ( र. ना. ) ६ पूर्वमासित्वादित्यर्थः । ( र. ना. )

प्रकृतिर्विभक्तिलक्षितसारूप्याश्रये एकशेषे कथं ह्रातुं शक्यते । न च यञां प्रकृत्यर्थानपेक्षः समुदायार्थः, तत्कथं प्रकृतिर्वर्ज्येत[1] । यदापि सहविवक्षायां विभक्त्यन्तानामेकशेष इति पक्षः तदा गर्ग य अस् य अस् य अस् इति स्थिते पूर्वस्य य असुशब्दस्य प्रकृतिसन्निपाताद्वैरूप्यम्, प्रातिपदिकैकशेषपक्षेपि तथैव वैरूप्यमित्येकशेषो न प्राप्नोति ॥

(उद्द्योतः) इदानीं तस्य सार्थक्यं दर्शयितुमपत्यार्थं एव पक्षत्रयेऽपि दूषणमाह—अपत्यादिष्विति । एका प्रकृतिरिति । अर्थाभेदादभिन्नैवेत्यर्थः ॥ तद्धितान्तत्वादिति । अन्त्ययशब्दस्यापि गर्गाद् विहितत्वेन समुदायस्य तदादितदन्तत्वादिति भावः ॥ प्रकृतिसंनिपातेति । तत्र प्रथमस्य सान्निध्यात्सन्निपातोऽन्ययोस्तु व्यवहितत्वान्नास्तीति वैरूप्यमिति भावः ॥ अभ्यन्तरीति । गर्गयशब्दविशिष्टयशब्दद्वयस्य प्रातिपदिकत्वे तदर्थगतसंख्याभिधायितया प्रवृत्ता विभक्तिः सारूप्योपलक्षणतायां प्रकृतिं न त्यजतीत्यर्थः ॥ न च यञामिति । यञ्सुसमुदायस्येत्यर्थः ॥ समुदायार्थः । अपत्यसमुदायरूपोऽर्थः ॥ अपत्यार्थस्य ससंबन्धिकत्वादिति[2] भावः ॥ तदा गर्ग येति ॥ प्रत्येकं तद्धितान्तत्वात्[3]सहविवक्षायां बह्वर्थत्वाच्च प्रत्येकं बहुवचनमिति भावः ॥

(आक्षेपबाधकभाष्यम्)

**ननु च यथैव बहवो यञः, एवं प्रकृतयोऽपि बह्व्यः स्युः ॥**

(प्रदीपः) एवं प्रकृतयोपीऽति । एकैकस्यापत्यस्य प्रकृत्यर्थेन योगात् प्रधानभेदे च गुणाभ्यावृत्त्या[4] गार्ग्यशब्दानामेवैकशेषः क्रियत इत्यर्थः ॥

(उद्द्योतः) प्रधानभेदे च गुणाभ्यावृत्त्येति[5] । प्रातिपदिकोद्देशेन तद्विधानाद् प्रातिपदिकार्थस्य तत्र विशेषणत्वाद्गुणता[6] । किं चैकस्मादनेकेषां परत्वासंभव इति भावः ॥

(आक्षेपसाधकभाष्यम्)

**नैवं शक्यम् । इह हि दोषः स्याद्—गर्गा वत्सा विदा उर्वा इति । अञ्यो[7] बहुषु यञ्यो[8] बहुष्वित्युच्यमानो लुक् प्राप्नोति ॥**

(प्रदीपः) अञ् यो[9] बहुष्विति । यदा यञामेवैकशेषः क्रियते, तदा शिष्यमाणो यशब्दो बहुषु वर्तत इति लुक् सिध्यति । गार्ग्यशब्दानां त्वेकशेषे यशब्दो बहुषु न वर्तते, किं तर्हि, यशब्दान्त इति लुक् न सिध्यति ॥

(उद्द्योतः) अञ् यो बहुष्विति भाष्ये । तेनैवेत्यनुवृत्त्या प्रत्ययस्यैव बहुषु वृत्तेर्लुगभ्युपगम इति भावः ॥ यदा यञामेवेति । उक्तरीत्या[10]ऽस्योपपत्तिश्चिन्त्या । लुक्शास्त्रवैयर्थ्यापादनमेवात्र भाष्यकृत्तात्पर्यविषयीभूतम् ॥

(समाधानभाष्यम्)

**मा भूदेवम् । अञन्तं यद्बहुषु, यञन्तं यद्बहुष्वित्येवं भविष्यति ॥**

(प्रदीपः) अञन्तं यदिति । तेनैव चेत् कृतं बहुत्वमित्यपि तदन्तेनेति व्याख्यायते ॥

(आक्षेपसारणभाष्यम्)

**ननु चोक्तम्—नैवं शक्यमिह हि दोषः स्यात्—काश्यपप्रतिकृतयः काश्यपा इति ॥**

(प्रदीपः) काश्यपा इति । एकस्मिन् कश्यपापत्येऽञि कृते तत्प्रतिकृतिबहुत्वे काश्यपशब्दानामेकशेषे कृते अञन्तं बहुषु वर्तत इति लुक्प्रसङ्गः ॥

(समाधानभाष्यम्)

**नैष दोषः । लौकिकस्य तत्र गोत्रस्य ग्रहणम् । न चैतल्लौकिकं गोत्रम् ॥**

(प्रदीपः) लौकिकस्येति । अपत्यस्येत्यर्थः ॥ न चैतदिति । प्रतिकृतिवृत्तित्वाच्चैतदञन्तमपत्यवाचि ॥

(उद्द्योतः) अपत्यवाचीति । यद्यपि प्रतिकृतिवृत्त्येतद्गोत्रमेव नेति लौकिकस्येति विशेषणं व्यर्थं तथापि सिद्धान्तस्वरूपप्रदर्शनमेतत् ॥ यद्वा तत्सदृशत्वात्तत्रापि गोत्रत्वाभिमानः । प्रवराध्यायप्रसिद्धं हि तत्र गोत्रशब्देन गृहीतमित्युत्तरम् ॥

(पक्षान्तराभ्युपगमभाष्यम्)

**अथ वा पुनरस्तु एका प्रकृतिर्बहवश्च यञः ॥**

(प्रदीपः) एका प्रकृतिरिति । प्रकृत्यर्थस्यैकत्वात् तेन च बहूनामप्यपत्यानां संबन्धसंभवात् ॥

(उद्द्योतः) संबन्धसंभवादिति । प्रधानानुरोधेन गुणावृत्तिन्यायस्तु यत्र गुणावृत्तिं विना प्रधानोत्पत्तेर्न निर्वाहस्तव्यत्तव्यानीयरादौ तद्विषय इति भावः । इह तु यञाकृतेरेकत्वाद्बहूनामपि परत्वसंभवाद्गुणावृत्तिर्नापेक्षेति तात्पर्यम् ॥

(आक्षेपसारणभाष्यम्)

**ननु चोक्तमसारूप्यादेकशेषो न प्राप्नोतीति ॥**

(७४२ न्यासान्तरसमाधानवार्तिकम् ॥ २१ ॥)

## ॥ ॥ सिद्धं तु समानार्थानामेकशेषवचनात् ॥ ॥

(भाष्यम्) **सिद्धमेतत् । कथम्? ॥ समानार्थानामेकशेषो भवतीति वक्तव्यम् ॥**

(प्रदीपः) सिद्धं त्विति । सत्यपि प्रकृतिसन्निपातकृते एकस्य वैरूप्ये सर्वेषां प्रकृत्यर्थविशिष्टापत्याभिधायित्वात् समानार्थत्वमस्ति ॥

(उद्द्योतः) समानार्थत्वमिति । नन्वेवं[12] कदाचिद्यशब्दमात्रस्य शेषप्रसङ्गः, तथा सति प्रकृत्यर्थविशिष्टप्रत्ययार्थानवगतिप्रसङ्गात् । नावावनड्वाहावित्यादावप्यत्र[13] पक्षे पक्षेऽनेनैवैकशेषसिद्धिः ॥

(आक्षेपभाष्यम्)

**यदि समानार्थानामेकशेष उच्यते, कथमक्षाः पादा माषा इति?**

---

१ 'वर्ज्येति' ॥ २ सनिरूपकत्वादित्यर्थः । ( र. ना. ) ३ यमात्रस्य व्यपदेशिवद्भावेन तद्धितान्तत्वं बोध्यम् । (र. ना.) ४ 'गुणावृत्त्या' ॥ ५ 'गुणावृ' ॥ ६ अयं भावः । प्रातिपदिके उद्देश्यत्वरूपं गुणत्वम् । प्रत्यये विधेयत्वरूपं प्राधान्यम् । प्रातिपदिकार्थे तु विशेषणत्वरूपं गुणत्वम् । प्रत्ययार्थे विधेयत्वरूपं प्राधान्यम् इति । ( र. ना. ) ७ 'अञो व' ॥ ८ 'यञो व' ॥ ९ 'यञ्यो' ॥

१० उक्तं हि प्राग् विवरणे इदं 'चिन्त्यम् एकविभक्ताविदत्युक्त्या तत्प्रकृतित्वायोग्यानां केवलप्रत्ययानामेकशेषाप्राप्तेरिति । ( र. ना. ) ११ ननु यञामेकशेषः इति भावः । ( र. ना. ) १२ 'नत्वेवं' स्यात् ॥ १३ अयं भावः । सरूपसमुदायादेकविभक्ताविति पक्षे परत्वादिनाऽऽवादेशे आमागमे वा वैरूप्यादेकशेषो न प्राप्त इति । उक्तश्चैतदङ्गाश्रये चेत्यत्र वार्तिके कैयटे । ( र. ना. )

( उद्द्योतः ) अपरः सरूपाणामित्यस्य स्थाने समानार्थानामिति मत्वाऽव्याप्तिमाह भाष्ये—यदीति ॥

( ७४३ समाधानवार्तिकम् ॥ २२ ॥ )

**॥ * ॥ नानार्थानामपि सरूपाणाम् ॥ * ॥**

**( भाष्यम् ) नानार्थानामपि सरूपाणामेकशेषो वक्तव्यः ॥**

(उद्द्योतः)नानार्थानामपीति ॥ सूत्रमपि क्रियत इति भावः ॥

( ७४४ न्यासान्तरवार्तिकफलितवार्तिकम् ॥ २३ ॥ )

**॥ * ॥ एकार्थानामपि विरूपाणाम् ॥ * ॥**

**( भाष्यम् ) एकार्थानामपि विरूपाणामेकशेषो वक्तव्यः । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डाविति वा ॥**

( प्रदीपः ) **वक्रदण्डश्च कुटिलदण्डश्चेति** । द्वन्द्वनिवृत्त्यर्थमेतद्वक्तव्यं, तेनैवान्यो बहुष्वित्यपिपक्षे आश्रीयमाणे इष्टं सिध्यति । यदा त्वजन्तं यद्बहुष्वित्याश्रीयते तदाऽव्यविकन्या[1]याश्रयणात् वक्रदण्डश्च कुटिलदण्डश्चेति वाक्यमेव भवति, न तु द्वन्द्व इति न वक्तव्यो विरूपाणामेकार्थानामेकशेषः ॥

( उद्द्योतः ) **तेनैवान्यो बहुष्विति** । तेनैव, विरूपाणामपीतिवचनेन । वस्तुतोऽनेन गर्गयशब्दस्य शेष इति तस्यैव लुप्यमानार्थाभिधायित्वमित्यत्रापि पक्षेऽजन्तं यद्बहुष्वित्यर्थेनैव लुगिति केचित्॥ अव्यविकेति । मन्दबुद्ध्यनुग्रहाय तु कार्यमेव वार्तिकं,सूत्रजालवत्॥

( ७४५ विभिन्नस्वराणामेकशेषनियामकवार्तिकम् ॥ २४ ॥ )

**॥ * ॥ स्वरभिन्नानां यस्योत्तर[2]ः स्वरविधिः ॥ * ॥**

**( भाष्यम् ) स्वरभिन्नानां यस्योत्तरः* स्वरविधिस्तस्यैकशेषो वक्तव्यः । अक्षश्च अक्षश्च अक्षौ, मीमांसकश्च मीमांसकश्च मीमांसकौ ॥**

( प्रदीपः ) **स्वरभिन्नानामिति** । स्वरेण भिन्नानामित्यर्थः ॥ **अक्षश्चेति** । एकोऽक्षशब्दोऽशेर्देवन इति सप्रत्ययान्तत्वादन्तोदात्तः, द्वितीयस्तु घञन्तत्वादाद्युदात्तः, तस्यैव शेषो भवति ॥ एको मीमांसकशब्दो ण्वुलन्तत्वान्मध्यो[3]दात्तः, परस्तु[4] मीमांसामधीते इति **क्रमादिभ्यो वुन्नि**त्याद्युदात्तस्तस्य शेषः ॥

( उद्द्योतः ) ननु बहुव्रीहौ निष्ठान्तत्वाद्भिन्नस्य पूर्वनिपातः स्यादत आह—**स्वरेणेति** ॥ साधनं कृतेति समासः ॥ घञन्तत्वादिति । अक्षू व्याप्ताविति भ्वादिप्रकृतिकेत्यादिः ॥

( संख्याशब्दानामेकशेषाभावाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—एकश्च एकश्च द्वौ च द्वौ चेति ? ॥**

( प्रदीपः ) **एकश्चेति** । द्वन्द्वोप्यत्रानभिधानान्न भवति ॥

( उद्द्योतः ) अनभिधानस्यावश्याश्रयणीयत्वं दर्शयति—द्वन्द्वोऽपीति ॥ संख्याशब्देष्वेकादिष्वेकशेषमापादयतोऽयं भावः—द्विचतुःशब्दादिभ्योऽनेकार्थाभिधानं घटादिशब्देभ्य इव न स्यादित्यवश्यमेकशेपेणानेकार्थत्वं वक्तव्यमित्येकादिशब्दानामपि तत्प्रसङ्ग इति ॥

( ७४६ समाधानवार्तिकम् ॥ २५ ॥ )

**॥ * ॥ संख्याया अर्थासंप्रत्ययादन्यपदार्थत्वाचानेकशेषः ॥ * ॥**

**( भाष्यम् ) संख्याया अर्थासंप्रत्ययादेकशेषो न भविष्यति । नह्येकावित्यनेनार्थो गम्यते ॥ अन्यपदार्थत्वाच्च संख्याया एकशेषो न भविष्यति । एकश्च एकश्चेत्यस्य 'द्वौ' इत्यर्थः । द्वौ च द्वौ चेत्यस्य 'चत्वारः' इत्यर्थः ॥**

( प्रदीपः ) **अर्थासंप्रत्ययादिति** । यत्रैकः शब्दोनेकमर्थमभिधातुं शक्नोति तत्रैकशेषो नान्यत्र । प्रयुक्तानामन्वाख्यानाद्[6] । एकाविति चोक्तोऽसहायाँदिरर्थौ गम्यते न तु द्वावित्यर्थः ॥ **अन्यपदार्थत्वाच्चेति** । असंदिग्धेन पदान्तरेणायमर्थः प्रत्याय्यत इत्यर्थः ॥

(उद्द्योतः)भाष्ये—ऽर्थौ गम्यत इति । द्वित्वरूपार्थ इत्यर्थः ॥ द्वावित्यर्थं इति । तस्य च द्वौशब्दो वाचक इति भावः ॥

( समाधानबाधकभाष्यम् )

**नैतौ स्तः परिहारौ । यत्तावदुच्यते—'संख्याया अर्थासंप्रत्ययाद्' इति । अर्थासंप्रत्ययेऽपि हि सत्येकशेषो भवति । तद्यथा गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । न चोच्यते वृद्धयुवानाविति । भवति चैकशेषः ॥ यदप्युच्यते—'अन्यपदार्थत्वाच्च' इति । अन्यपदार्थेऽप्येकऽशेषो भवति । तद्यथा विंशतिश्च विंशतिश्च विंशती इति तयोश्चत्वारिंशदित्यर्थः ॥**

( प्रदीपः ) **गार्ग्याविति** । गार्ग्यश्च गार्ग्यश्चेत्यस्याप्यर्थस्य संभवात् संदेहादर्थासंप्रत्ययः । उत्तरकालं तु प्रकरणादिवशात् संदेहनिवृत्तिः ॥ ननु **वृद्धो यूने**ति वचनात् संदेहेऽप्येकशेषः स्यात् अस्य तु निःसंदेहविषयसंभवात्कथं संदिग्धविषये प्रवृत्तिः ॥ नैतदस्ति । अक्षादिष्वपि संदेहविषयेष्वस्य प्रवृत्तिदर्शनात् ॥

( उद्द्योतः ) **संदेहादिति** । निश्चयात्मकप्रतीत्यभावोऽसंप्रत्यय इत्यर्थः ॥ न चोच्यते वृद्धयुवानावित्यनेन संदेहबीजं दर्शितम् ॥

( समाधानवार्तिकाशयभाष्यम् )

**एवं तर्हि नेमौ पृथक्परिहारौ । एकपरिहारोऽयम् 'संख्याया अर्थासंप्रत्ययादन्यपदार्थत्वाच्च' इति ॥ यत्र ह्यर्थासंप्रत्यय एव वा, अन्यपदार्थतैव वा, भवति तत्रैकशेषः गार्ग्यौ विंशती इति यथा ॥**

( प्रदीपः ) **एवं तर्हीति** । अर्थासम्प्रत्यये सत्यन्यपदार्थत्वादित्ययं हेत्वर्थः ॥

---

१ यथा लक्ष्यानुरोधेन अविकशब्दादेवाण्प्रत्यय इत्याविकमिति सिध्यति, नतु अविशब्दादणि आवमिति भवति तथाऽत्रापि लक्ष्यानुरोधेन वाक्यमेव नतु द्वन्द्व इति भावः । ( र. ना. ) २ 'त्तरस्वर' ॥ * उत्तर इति । अष्टाध्याय्यां पर इत्यर्थः ॥ ३ लित्स्वरेणेति शेषः । ( र. ना. ) ४ 'अपर' ॥ ५ स्वरभिन्नानामित्यत्रेति शेषः । ( र. ना. ) ६ 'नारम्भात्' ॥ ७ 'यावित्यर्थौ' ॥

(उद्द्योतः) एवं तर्हि नेमावित्यादिभाष्यस्य वाचकशब्दान्तरसत्ताविशिष्टार्थसंप्रत्ययेनैकाद्यादशतामेकशेषाभाव इत्यत्र तात्पर्यम्। विंशत्यादीनां तु भवत्येवेति दिक् ॥

(पक्षान्तरभाष्यम्)

**अथ वा नेमे एकशेषशब्दाः ॥**

(उद्द्योतः) इदानीं तद्धृदयस्थमभिप्रेतं द्विशब्दादिरूपदृष्टान्तं खण्डयति—अथवा नेम इति। द्वावित्यादय इत्यर्थः ॥ तेषामेकशेषशब्दत्वे हि तद्दृष्टान्तेनात्रैकशेषापादनम्, न त्वेते तथेति भावः ॥

(एकशेषशब्दत्वाभावे दूषणभाष्यम्)

**यदि तर्हि नेमे एकशेषशब्दाः समुदायशब्दास्तर्हि भवन्ति ॥ तत्र को दोषः?। एकवचनं प्राप्नोति ॥ एकार्था हि समुदाया भवन्ति यूथं शतं वनमिति ॥**

(प्रदीपः) **यदि तर्हीति**। प्रत्यर्थं शब्दनिवेशादेकशेषे सति एकस्यानेकार्थत्वं सम्भवति। यदा तु समुदायवाचित्वं द्व्यादीनामभ्युपगम्यते तदा वनादिवदेकवचनप्रसङ्गः ॥ यत्तु वनानीति बहुवचनं तत्समुदायप्रचयविवक्षायां न त्ववयवभेदविवक्षायाम् ॥ **समुदाया इति**। समुदायवाचिन इत्यर्थः ॥

(उद्द्योतः) यदा त्विति। एकशेषं विनैवेत्यर्थः॥ ननु समुदायो नामार्थः, न च तस्यार्थोऽस्तीत्यत आह—समुदायवाचिन इति ॥

(एकशेषशब्दत्वाङ्गीकारभाष्यम्)

**सन्तु तर्ह्येकशेषशब्दाः ॥ किं कृतं सारूप्यम्?। अन्योन्यकृतं सारूप्यम् ॥**

(प्रदीपः) **किं कृतमिति**। एकश्चैकश्चेति विग्रहे कथं द्विशब्दः प्रवर्तेत इति प्रश्नः ॥ **अन्योन्यकृतमिति**। परस्परापेक्षया द्वित्वोत्पत्तौ सत्यां प्रक्रियावाक्यमिदं भवति द्वौ च द्वौ चेति। तत्रैको द्विशब्दः शिष्यते ॥

(उद्द्योतः) प्रश्न इति। एकश्चैकश्चेति विग्रहे शिष्यमाणद्विशब्देन किंसादृश्यमित्यर्थः ॥ परस्परेति। एकशब्दयोः सहविवक्षायां शिष्यमाणैकशब्दस्य तदर्थाभिधानासामर्थ्यात् परस्परापेक्षयैकैकत्रार्थे द्वित्वोत्पत्तौ तदभिधानसमर्थशब्दप्रवृत्तिः, तदलौकिकं च द्वौ च द्वौ चेत्यादीति भावः ॥ अन्योन्यापेक्षाकृतद्वित्वेन प्रत्येकं द्विशब्दप्रवृत्त्या सारूप्यमिति भाष्याक्षरार्थः ॥ अत एवाग्रेऽन्योन्यकृतभावविषय एव प्रश्नः ॥

(दृष्टान्तप्रश्नभाष्यम्)

**सन्ति पुनः केचिद् अन्येपि शब्दाः येषामन्योन्यकृतो भावः?।**

(उद्द्योतः) अन्योन्यकृत इत्यस्य परस्परकृत इत्यर्थः। भावः प्रवृत्तिनिमित्तम् ॥

(दृष्टान्तप्रदर्शकभाष्यम्)

**सन्तीत्याह ॥ माता पिता भ्रातेति ॥**

(प्रदीपः) **मातेति**। यथा सुतजन्मनः प्रागलब्धमातृव्यपदेशं स्त्री पश्चाल्लभते, एवं संख्येयान्तरापेक्षायां सत्यां पूर्वमप्रवृत्तो द्विशब्दः पश्चात्प्रवर्तत इत्यर्थः ॥

(उद्द्योतः) मातृपुत्रादिशब्दाश्च परस्परकृतमातृत्वपुत्रत्वादिनिबन्धनास्तदाह यथेति ॥

(दृष्टान्तवैषम्यभाष्यम्)

**विषम उपन्यासः। सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते। इह पुनरेकेनाप्यपाये न भवति चत्वार इति ॥**

(प्रदीपः) **अपायेष्वपीति**। पुत्रविनाशेऽपि पितृव्यपदेशो न निवर्तते, पितृविनाशे पुत्रव्यपदेशः। चतुर्णां त्वेकापाये नास्ति चतुःशब्दस्य प्रवृत्तिः ॥

(उद्द्योतः) **पुत्रविनाशेऽपीति**। ननु पुत्रस्य बुद्धिस्थत्वेन तन्नाशेऽपि पितृव्यवहारोऽस्त्येव, भाविपुत्रस्य पितेति व्यवहारवत्, प्रकृतेप्येकस्य बुद्धिस्थत्वे तदपायेऽपि चतुरादिव्यवहार इति किं वैषम्यं, पुत्रस्याबुद्धिस्थत्वे तु सत्सत्त्वेऽपि न पितृव्यवहार इति चेन्न। नष्टस्य पितेति व्यवहारवन्नष्टं बुद्धिस्थं पदार्थमादायैकस्य विद्यमानत्वे द्वौ स्त इत्यादिव्यवहाराभाव इति वैषम्यमित्याशयात् ॥ नास्ति चतुःशब्दस्येति। एवं च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः ॥

(दृष्टान्तवैषम्यपरिहारभाष्यम्)

**अन्यदिदानीमेतदुच्यते—'सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते' इति ॥ यत्तु भवानस्मांश्चोदयति—'सन्ति पुनः केचिदन्येऽपि शब्दा येषामन्योन्यकृतो भावः' इति। तत्रैतेऽस्माभिरुपन्यस्ताः। तत्रैतद्भवानाह-'सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते' इति ॥ एतच्च वार्तम्।**

**एकैको नोद्यन्तुं भारं शक्नोति यत्कथं तत्र।**
**एकैकः कर्ता स्यात्सर्वे वा स्युः कथं युक्तम् ॥१॥**
**कारणमुद्यमनं चेन्नोद्यच्छति चान्तरेण तत्तुल्यम्।**
**तस्मात्पृथक् पृथक्ते कर्तारः सव्यपेक्षास्तु ॥२॥**

(प्रदीपः) **अन्यदिदानीमिति**। अवश्यं साधर्म्ये सति वैधर्म्येण भाव्यम्। अन्यथा तत्त्वमेव स्याद् न तु साधर्म्यम्। तत्र वैधर्म्योद्भावने न कश्चिदपि हेतुः स्यादि-

१ एकशब्दमारभ्य यो दशशब्दमभिव्याप्यस्थितो वर्गः। एकादिदशशब्दघटित इति यावत्। तद्घटकानामित्यर्थः। पञ्चदूदशतौ वर्गे वा इति दशत् शब्दः साधुः। वस्तुतस्तु एकाद्यादशानामिति पाठो युक्तः। (र. ना.) २ कृतैकशेषादर्थसंप्रत्ययसत्त्वेन विशिष्टहेत्वभावादिति भावः। (र. ना.) ३ 'न्ति यथा यूथं' 'न्ति तद्यथा यूथं' ॥ ४ समुदायबहुत्वविवक्षायामित्यर्थः। (र.ना.) ५ इति वक्ष्यते इति शेषः। (र. ना.) ६ पूर्वमप्रवृत्तो द्विशब्दः संख्येयान्तरापेक्षायां सत्यां पश्चात्प्रवर्तते इति योजना। (र. ना.) ७ यदिति यत्रेत्यर्थे। एकैको भारमुद्यन्तुं न शक्नोति। उद्वोढुं न शक्तः। तत्रैकैकः परस्परनिरपेक्षं कर्ता स्यादिति कथं, न्याय्यमित्यध्याहारः। वाऽथवा सर्वे परस्परसापेक्षाः कर्तारः स्युरिति कथं युक्तम्। चैत्रमैत्राभ्यां सह यज्ञदत्तो भारमुद्यच्छतीत्येकस्मिन्नेव कर्तृत्वप्रतीतेरिति भावः। ननु उद्यमनस्य प्रत्येकवृत्तित्वादेकैकएव कर्तेतियुक्तमत आह। कारणमुद्यमनं चेदिति। यदि कर्तृत्वप्रतीतावुद्यमनं कारणं स्यात्तदा स्वतुल्यद्वितीयसहायं विनाऽपि उद्यमनं स्यान्न च तत्तुल्यमन्तरेणोद्यच्छतीत्यर्थः। तस्मात्ते परस्परसव्यपेक्षास्तु पृथक् पृथक्कर्तार इत्यर्थः। यद्वा कारणमुद्यमनं चेन्नोद्यच्छति चान्तरेणेत्येतावदेवैकं पूर्वं वाक्यम्। अत्र स्वसमकक्षं सहायमिति शेषो बोध्यः। तत्तुल्यमिति तु उत्तरान्वयि। तथा हि—तस्मात्ते सव्यपेक्षास्तु पृथक् पृथक् कर्तार इति यत्तद्द्व्यादिशब्देष्वपि तुल्यमित्यर्थः। इयं कैयटविवरणपरिशीलनसमुद्भवा व्याख्या। (र. ना.) ८ 'यत्र साधर्म्यं तत्र' ॥ ९ पर्वतादेरपि पर्वतीयधूमवत्त्वादिना महानसीयवह्निव्याप्यमहानसीयधूमवन्महानसवैधर्म्योद्भावनेन धूमोऽपि वह्निसाधको हेतुर्न स्यादिति भाव। र.ना.)

त्यर्थः ॥ मात्रादयश्च शब्दाः सम्बन्ध्यन्तरापेक्षयैकस्मिन्नाश्रये वर्तन्त इति सम्बन्ध्यन्तरविनाशेऽपि आश्रयसद्भावाद्युक्तं यत्प्रवर्तन्ते । द्व्यादयस्तु समुदाय[1]निवेशिन एकापाये तत्समुदायाभावात्कथं प्रवर्तेरन् ॥ **एतच्च वार्तमिति** । एतद्युक्तम्—यदाश्रयसन्निधानादेकापायेति मात्रादयस्तदपेक्षाः प्रवर्तन्त इत्यर्थः ॥ इदानीमेतद्वैधर्म्यरहितं द्वितीयं दृष्टान्तं वक्ति—**एकैक इति** ॥ यथोद्यन्तॄणां परस्परसन्निधिकृतं कर्तृत्व[2]मेकैकापाये च निवर्तते तथा द्व्यादिव्यपदेशोपीत्यर्थः ॥ **कथं तत्रेति** । न्याय्यमित्यध्याहारः ॥ **एकैक इति** । परस्परनिरपेक्षमित्यर्थः ॥ **कारणमुद्यमनं चेदिति** । कर्तृत्वप्रतीताविव्यर्थः ॥ कार्य[3]कल्पितत्वाच्छक्तीनामेवमुक्तम् ॥ **तत्तुल्यमिति** । तेनोद्यन्त्रा तुल्यं द्वितीयमुद्यन्तारमन्तरेणेत्यर्थः ॥ अथवा **तत्तुल्यमिति** । द्व्यादिशब्देष्वप्येतत्तुल्यमित्यर्थः ॥

**( उद्द्योतः )** [4]नन्वेवं परिहारे दृष्टान्तदार्ष्टान्तिकभावः क्वापि न स्यादित्याह—**अन्यदिदानीमिति** । तद्व्याचष्टे—**अवश्यमिति** । एवं चेदृशे विषये वैधर्म्योद्भावनमकिञ्चित्करमिति भावः ॥ साधर्म्ये सत्यप्युक्तवैधर्म्ये बीजमाह—**मात्रादय इति** । **आश्रयसद्भावादिति** । सद्भावोऽत्र बुद्धिकृतस्तेन मृता मातेत्याद्युपपत्तिः ॥ **समुदायेति** । इतरसाहित्यविशिष्टद्रव्यनिवेशिन इत्यर्थः ॥ [5]वार्तमित्यस्यासारमित्यर्थं इत्यन्ये ॥ भाष्ये **यदि**त्यस्य यत्रेत्यर्थः ॥ **सर्वे** परस्परसापेक्षा इत्यर्थः ॥ ननूद्यमनस्यैव कर्तृत्वप्रतीतौ कारणत्वात्तस्य च प्रत्येकवृत्तित्वादेकैक इत्येव युक्तं तत्राह—**कारणमुद्यमनं चेदिति** । स्वतुल्यद्वितीयसहायं विनाप्युद्यमनं स्यान्न च तथा दृश्यते, तस्मात्परस्परसापेक्षं पृथक् पृथक्कर्तृत्वमित्यर्थः ॥ एवं च तत्र यथान्योन्यकृतेनोद्यमनकर्तृत्वरूपार्थेन प्रत्येकस्मिंस्तेन सह उद्यच्छतीतिशब्दस्तथान्योन्यसव्यपेक्षद्वित्वेनैकैकस्मिन्नपि द्विशब्दप्रवृत्तिरिति **सिद्धमेकशेषशब्दत्वम्** ॥ द्वौ च द्वौ चेति विग्रहः, द्वित्ववैशिष्ट्येन बोधाच्च प्रत्येकं द्विवचनं, प्रयोगे त्वेकशेषेणैव प्रयोगान्न कदाप्येकबोधो द्वावित्यतः । एवं चैको न द्वावित्याद्युपपन्नम् ॥ द्वौ नैकस्त्रयो न द्वावित्येवंविधव्यवहारादुत्तरसंख्यायाः पूर्वसंख्याबाधकत्वमिति तत्त्वम् ॥ **अथ वेति** । अत्र पक्षे **तत्तुल्यमिति** **सव्यपेक्षास्त्वि**त्युत्तरं योज्यम् । **नोद्यच्छति चान्तरेणे**त्यत्र स्वसमकक्षं सहायमिति शेषो बोध्यः । वस्तुतो द्व्यादीनामेकशेषशब्दत्वाभावेऽपि नियमत उद्भूतावयवभेदसमुदायविवक्षणेन न कदाचिदपि द्व्यादिभ्य एकवचनम् ॥ **अथ वा नेम** इति भाष्यस्यायमेवार्थ एकशेषेणाप्ययमेवार्थः सूचित इति बोध्यम् ॥

**( प्रथममध्यमोत्तमानामेकशेषविधानाधिकरणम् )**

**( ७४७ आक्षेपवार्तिकम् ॥ २६ ॥ )**

## ॥ * ॥ प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वात् ॥ * ॥

**( भाष्यम् ) प्रथममध्यमोत्तमानामेकशेषो वक्तव्यः । पचति च पचसि च पचथः । पचसि च पचामि च पचावः । पचति च पचसि च पचामि च पचामः ॥ किं पुनः कारणं न सिध्यति? । असरूपत्वात् ॥**

**( प्रदीपः ) प्रथमेति** । एकस्मिन् पुरुषे क्रियाया एकत्वान्नास्त्येकशेषः, पुरुषभेदेन तु प्रत्यक्त्वपराक्त्वादिभेदे विरोधात् क्रियाया अनेकत्वादेकशेषो वक्तव्यः । कृते चैकशेषे प्रकरणादिवशादर्थविशेषावसायः ॥ यदा तु युष्मदस्मदी एवानेकार्थाभिधानसमर्थे इति पक्षः । अत्रापि च निवृत्तभेदाया एव क्रियाया आख्यातेनाभिधानं तदैकशेषो न वक्तव्यः ॥

**(उद्द्योतः)** भाष्ये **प्रथमेति** । प्रथमेन[6] मध्यमः, प्रथमादिनोत्तम इति वक्तव्यमित्यर्थः ॥ **पुरुषे** । प्रथमाद्यन्यतमे ॥ **एकत्वादिति** । भेदावगमे हेतोरभावादित्यर्थः ॥ **प्रत्यक्त्वम्** । अहंकारास्पदचैतन्यम् ॥ **पराक्त्वम्** । तदनास्पदचेतनत्वम् ॥ **आदिना** प्रत्यक्षत्वपरोक्षत्वे ॥ **प्रकरणादीति** । गार्ग्यावित्यत्र वृद्धयूनोरित्येति भावः ॥ **यदा त्विति** । त्यदादीनीत्येकशेषारम्भादिति भावः ॥ **आख्यातेनाभिधानमिति** । प्रथमत इति शेषः । पश्चाद्द्वित्वादिप्रत्ययः समभिव्याहारादिति भावः ॥ एवं चेदं वचनमवैयाकरणतार्किकस्येति तात्पर्यम् । स्वरूपव्याक्रिययैव चास्य प्रत्याख्यातप्रायत्वाद्द्विवचनाद्यसिद्धेश्च नास्य विशिष्य प्रत्याख्यानं भाष्ये इति बोध्यम् ॥ **असरूपत्वादिति** । असमानशब्दत्वादसमानार्थत्वाच्चेत्यर्थः । द्विर्वचनेत्यादिग्रन्थस्तु वृक्षावित्याद्यभिप्रायकः सूत्रं प्रत्याख्यातुम् ॥

**( सूत्रप्रत्याख्यानाधिकरणम् )**

**( ७४८ आक्षेपवार्तिकम् ॥ २७ ॥ )**

## ॥ * ॥ द्विवचनबहुवचनाप्रसिद्धिरेकार्थत्वात् ॥ * ॥

**(भाष्यम्) द्विवचनबहुवचनयोश्चाप्रसिद्धिः ॥ किं कारणम्? । 'एकार्थत्वाद्' एकोयमवशिष्यते तेनानेन तदर्थेन भवितव्यम् ॥ किमर्थेन? । यदर्थ एकः ॥ किमर्थश्चैकः? । एकार्थः ॥**

**( प्रदीपः ) द्विवचनेति** । प्रत्यर्थं शब्दनिवेशे एकैकः शब्दः एकैकार्थाभिधायीति सहविवक्षायां निवृत्तेषु शब्दान्तरेषु शिष्यमाणेन शब्देन स्वस्मिन्नेवैकत्रार्थे अवस्थेयमिति भावः । सर्वेषु पक्षेष्वयं दोषः प्रातिपदिकैकशेषे द्विवचनबहुवचनानुत्पत्तिप्रसङ्गः विभक्त्यन्तानां विभक्तौ वा परत एकशेषेऽर्थाभावाद् द्विवचनबहुवचनयोर्निवृत्तिप्रसङ्गः । अथ स्वभावतः शिष्यमाणोऽनेकार्थः किमेकशेषेण ॥

**( उद्द्योतः ) निवृत्तिप्रसङ्ग इति** । जातनिवृत्तौ मानाभावा[10]त्तत्सत्त्वेऽपि 'तदर्थाभावेन तदबोधप्रसङ्ग' इति वक्तुं युक्तम् ॥

---

१ ननु मात्रादिशब्दवदेकाश्रयनिवेशिन इति भावः । (र.ना) २ 'त्वमेकापाये' ॥ ३ कार्यानुमितत्वादित्यर्थः । ( र.ना. ) ४ नन्वित्यधिकं, तद्विनाऽपि प्रकृतोपयोग्यर्थप्रतीतेः । विरुद्धार्थप्रत्यायकत्वाद् भ्रामकञ्च । ( र. ना. ) ५ वार्तं फल्गुन्यरोगेऽपि त्रिष्वित्यमरः । फल्गु असारमित्यर्थः । ( र. ना. )

६ प्रथमेन सहोक्तौ मध्यमः शिष्यते इत्यर्थः । एवमग्रेऽपि । ( र. ना. ) ७ वक्ष्यमाणेत्यादिः । ( र. ना. ) ८ अत्रापि, वक्ष्यमाणो भाष्ये इति शेषः । (र.ना.) ९ 'एक एकपदार्थः' ॥ १० जातनिवृत्तौ मानसत्त्वेऽपीत्यर्थः । (र.ना.)

( ७४९ समाधानवार्तिकम् ॥ २८ ॥ )

॥ * ॥ नैकार्थ्यम् ॥ * ॥

( भाष्यम् ) नायमेकार्थः ॥ किं तर्हि? । द्व्यर्थो बह्वर्थश्च ॥

( ७५० आक्षेपवार्तिकम् ॥ २९ ॥ )

॥ * ॥ नैकार्थ्यमिति चेदारम्भानर्थक्यम् ॥ * ॥

(भाष्यम्) नैकार्थ्यमिति चेदेकशेषारम्भोऽनर्थकः स्यात् ॥ इह हि शब्दस्य स्वाभाविकी वाऽनेकार्थता स्यात् । वाचनिकी वा ॥

( प्रदीपः ) वाचनिकी वेति । यद्यपि सर्वमेव स्वाभाविकं तथापि यत्र प्रयोगविप्रयोगौ दृश्येते तत्र विप्रयोगनिवारणाय यदुच्यते तद्वाचनिकमभिधीयते ॥

( उद्द्योतः ) यद्यपीति । शब्दार्थसंबन्धस्य नित्यत्वादिति भावः ॥ विप्रयोगः[1] द्वन्द्वरूपः ॥

( स्वाभाविकत्वे प्रत्याख्यानभाष्यम् )

तद्यदि तावत्स्वाभाविकी—

( ७५१ प्रत्याख्यानवार्तिकम् ॥ ३० ॥ )

॥ * ॥ अशिष्य एकशेष एकेनोक्तत्वात् ॥ * ॥

( भाष्यम् ) अशिष्य एकशेषः ॥ किं कारणम् ! । एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् उक्तार्थानामप्रयोग इति ॥

( वाचनिकत्वे वचनावश्यकत्वभाष्यम् )

अथ वाचनिकी, तद्वक्तव्यम्—'एकोऽयमवशिष्यते, स च द्व्यर्थो भवति बह्वर्थश्च' इति ॥

(प्रदीपः)स च द्व्यर्थ इति 'सरूपाणामेकशेषोनेकार्थश्चैकविभक्तौ' इति वक्तव्यमित्यर्थः ॥

( वचनानावश्यकताभाष्यम् )

न वक्तव्यम्, सिद्धमेकशेष इत्येव ॥

( प्रदीपः ) सिद्धमिति । एकशेषारम्भसामर्थ्यादयमर्थो गम्यते शिष्यमाणः शब्दोनेकार्थाभिधायीति । एकेनह्यनेकार्थाभिधानायैकशेषः क्रियते । एकार्थाभिधाने त्वनेकशब्दाप्रसङ्गादनर्थक एकशेषः स्यादित्यर्थः ॥

( वचनावश्यकत्ववादिन[2] आक्षेपभाष्यम् )

कथं पुनरेकोयमवशिष्यत इत्यनेन द्व्यर्थता बह्वर्थता च शक्या लब्धुम्? ॥

(प्रदीपः) इतरः[3] एतत्सामर्थ्यमजानन्नाह—कथमिति ॥

( एकशेषवादिनः समाधानभाष्यम् )

तच्चैकशेषकृतम् । नह्यन्तरेण तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवति । पश्यामश्च पुनरन्तरेणापि तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवति अग्निचित्सोमसुदिति यथा । ते मन्यामहे—लोपकृतमेतद्—येनात्र अन्तरेणापि तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवतीति एवमिहाप्येकशेषकृतमेतद्—येनात्रैकोऽयमवशिष्यत इत्यनेन द्व्यर्थता बह्वर्थता च भवति ॥

( प्रदीपः ) तच्चैकशेषकृतमिति । एकशेषविधानेनैतत्प्रतिपादितमित्यर्थः ॥ लोपकृतमिति । लोपद्वारेणैतत्संगृहीतमित्यर्थः ॥ अनेनेति । एकशेषविधानेन ॥

( उद्द्योतः ) एतत्प्रतिपादितमिति । भाष्ये—कृतमिति करोतिरेकशेषविधानसामर्थ्यलब्धप्रतिपादने वर्तते, तेन शब्दार्थसंबन्धनित्यत्वेऽपि न क्षतिरिति भावः ॥ लोपस्याभावात्मकत्वात्तत्कृतत्वमर्थावगतेरनुपपन्नमत आह—लोपद्वारेणेति । एवं च शिष्यमाणस्य लुप्यमानार्थवोधकत्वमनुभवसिद्धमिति भावः ॥ भाष्ये—बह्वर्थता वा भवतीति । वा चार्थे ॥ क्वचित् चेत्येव पाठः । विद्यमानैव बोध्यते इत्यर्थः ॥

( एकशेषप्रत्याख्यातुराक्षेपभाष्यम् )

उच्येत तर्हि न तु गम्येत । यो हि गामश्व इति ब्रूयादश्वं वा गौरिति, न जातुचित्संप्रत्ययः स्यात् । तेनानेकार्थाभिधाने[3] यत्नं कुर्वताऽवश्यं लोकः पृष्ठतोऽनुगन्तव्यः 'केष्वर्थेषु लौकिकाः कान् शब्दान्प्रयुञ्जते, इति । लोके चैकैकस्मिन् वृक्ष इति प्रयुञ्जते' द्वयोर्वृक्षौ, बहुषु वृक्षा इति ॥ यदि तर्हि लोकोऽवश्यं शब्देषु प्रमाणं किमर्थमेकशेष आरभ्यते? ॥

( प्रदीपः ) उच्येतेति । वचनादनेकार्थकार्याणि प्रवर्तन्तां यथा जात्याख्यायामेकस्मिन्निति, न त्वेकार्थः शब्द एकशेषविधानेनानेकार्थः संपद्यत इत्यर्थः ॥ गामश्व इति । अश्वधर्मसमारोपः केवलं प्रतीयते, न तु तात्त्विकमश्वत्वमित्यर्थः ॥ यदि तर्हीति । यदि च लोकः प्रमाणमित्यर्थः ॥ उच्यते तर्हीत्यतः प्रभृति सर्वो ग्रन्थ एकशेषप्रत्याख्यानवादिनः ।

( उद्द्योतः ) एतदजानान इतरः शङ्कते—उच्येत तर्हीति । तद् व्याचष्टे—वचनादिति । शास्त्रस्य शास्त्रीयकार्यार्थत्वादिति[4] भावः । संप्रत्ययः स्यादिति भाष्ये अश्वत्वादिप्रमा स्यादित्यर्थः ॥ तर्हि शब्दस्य चार्थतया[5] व्याख्याने मानं दर्शयति—सर्वो ग्रन्थ इति ॥

( एकशेषवादिनः प्रत्याक्षेपभाष्यम् )

अथ किमर्थं लोप आरभ्यते? ॥

( उद्द्योतः ) भाष्ये अथ किमर्थं लोप इति । अग्निचिदित्यतो लोकत एव कर्त्रर्थप्रतीतिसिद्धेरिति भावः ॥

( एकशेषप्रत्याख्यातुः समाधानभाष्यम् )

प्रत्ययलक्षणमाचार्यः प्रार्थयमानो लोपमारभते एकशेषारम्भे पुनरस्य न किंचित्प्रयोजनमस्ति ॥

१ एकशेषस्य विरोधीप्रयोगो द्वन्द्वरूप इत्यर्थः । ( र. ना. ) २ एकशेषवादिन इति शेषः । ( र. ना.) ३ 'तेनानेनानेका' ॥ ४ नत्वेकार्थस्यानेकार्थत्वसंपादकत्वं शास्त्रस्येति भावः । ( र. ना. ) ५ चकारार्थकत्वेनेत्यर्थः । (र.ना.)

( उद्द्योतः ) प्रत्ययलक्षणमिति । अनेन लोपेनानुपपत्तेरेवाव्याख्यानमित्युक्तम् ॥

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्* प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम्* इति । यदि चैकेनानेकस्याभिधानं स्यात् न प्रत्यर्थं शब्दनिवेशः कृतः स्यात् ॥**

( उद्द्योतः ) न प्रत्यर्थमिति । ततश्च वृक्षश्च वृक्षश्चेति वाक्यं न स्यादिति भावः ॥

( ७५२ आक्षेपसमाधानवार्तिकम् ॥ ३१ ॥ )

**॥ * ॥ प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानादप्रत्यर्थमिति चेत्तदपि प्रत्यर्थमेव ॥ * ॥**

( भाष्यम् ) **प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानाद् अप्रत्यर्थमिति चेत्, एवमुच्यते यद्प्येकेनानेकस्याभिधानं भवति तदपि प्रत्यर्थमेव । यदपि ह्यर्थावर्थौ प्रति तदपि प्रत्यर्थमेव । यदपि ह्यर्थानर्थान्प्रति प्रत्यर्थमेव ॥**

(प्रदीपः) **तदपि प्रत्यर्थमेवेति** । अर्थो ह्यभिधेयमुच्यते यश्च व्यर्थः शब्दो नासौ द्व्यर्थतां जहाति बह्वर्थश्च बह्वर्थतां, रोदसी दारा इति यथेत्यर्थः ॥

( उद्द्योतः ) इतराभिमतमनूद्य दूषयति—प्रत्यर्थमित्यादि । प्रत्यर्थं शब्दनिवेशादेकेनानेकाभिधानाभावादेकशेष आरब्धव्योऽन्यथाऽप्रत्यर्थं स्यात् । एकेनानेकस्याभिधाने प्रत्यर्थशब्दप्रयोगो न स्यादिति चेदित्यर्थः । यद्प्येकेनेति । अपिनैतत्सूचयति नैकेनैकस्याभिधानं वयं निराकुर्मः[1], किंतु सहविवक्षायामेकेनानेकाभिधानमपि स्वीकुर्मस्तेन वाक्यसिद्धिः । एकशेषारम्भश्च न कार्यः, द्वन्द्वस्य तु प्रयोगादर्शनान्नतन्निवृत्त्यर्थोऽपि स[2] इति ॥ तदपीति । स्त्रीयस्त्रीयार्थात्याग एव प्रत्यर्थत्वमिति भावः ॥

( ७५३ सूत्रारम्भवादिन आक्षेपवार्तिकम् ॥ ३२ ॥ )

**॥ * ॥ यावतामभिधानं तावतां प्रयोगो न्याय्यः ॥ * ॥**

(भाष्यम्) **यावतामर्थानामभिधानं भवति तावतां शब्दानां प्रयोग इत्येवं पक्षो न्याय्यः ।**

( प्रदीपः ) **यावतामिति** । वृक्षश्च वृक्षश्चेति दर्शनादनारब्ध एकशेषे अनेकार्थतैकस्य न स्यात् ॥

(उद्द्योतः) आरम्भवाद्याह–यावतामिति । एष एव न्याय्य इत्यर्थः ॥ न्याय्यत्वं कुत इत्यत आह—वृक्षश्चेति ॥ एकस्य न स्यादिति । प्रयोगे इति शेषः ॥

( ७५४ प्रत्याख्यानवादिनः समाधानवार्तिकम् ॥ ३३ ॥ )

**॥ * ॥ यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेकेनाप्यनेकस्याभिधानम् ॥ * ॥**

( भाष्यम् ) **यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेवमुच्यते । एषोऽपि पक्षो न्याय्य एव यद्प्येकेनानेकस्याभिधानं भवति ॥**

( प्रदीपः ) **एकेनापीति** । सहविवक्षायामेक एव शब्दः तद्भूतावयवभेदं समुदायमभिधत्त इत्यर्थः ॥

( उद्द्योतः ) प्रत्याख्यानवादी आह—यद्प्येकेनेति । वृक्षाविलादिदर्शनादिति भावः ॥ सहेति । समुदायार्थप्रादुर्भावादिति[3] भावः । द्विवचनाद्युत्पत्त्यर्थमाह—उद्भूतेति ॥

( आक्षेपवार्तिकशेषभाष्यम् )

**यदि तर्ह्येकेनानेकस्याभिधानं भवति प्लक्षन्यग्रोधौ—**

( ७५५ आक्षेपवार्तिकम् ॥ ३४ ॥ )

**॥ * ॥ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः ॥ * ॥**

( भाष्यम् ) **एकेनोक्तत्वात्तस्यार्थस्यापरस्य प्रयोगेण न भवितव्यम् । किं कारणम् ? । उक्तार्थानामप्रयोग इति ॥**

( प्रदीपः ) **प्लक्षन्यग्रोधाविति** । अत्रापि सहविवक्षायां समुदायार्थप्रादुर्भावादेकेनैव समुदायस्य प्रतिपादनाद् द्वितीयस्य प्रयोगो न प्राप्नोतीत्यर्थः ॥

( उद्द्योतः ) आरम्भवाद्याह—यदीति । एकेनैवेति । युगपदधिकरणवचनतारीत्येत्यर्थः ॥

( ७५६ समाधानवार्तिकम् ॥ ३५ ॥ )

**॥ * ॥ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ॥ * ॥**

**एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तः प्लक्षेण न्यग्रोधार्थ इति कृत्वा न्यग्रोधशब्दः प्रयुज्यते ॥**

( प्रदीपः ) **अनुक्तत्वादिति** । प्लक्षावित्युक्ते प्लक्षस्य प्लक्षान्तरेण सहत्वं गम्यते न तु न्यग्रोधेनेत्यर्थः ॥

( उद्द्योतः ) प्लक्षान्तरेणेति । सजातीयत्वाद् झटिति बुद्धिस्थेनेत्यर्थः ॥

( आक्षेपभाष्यम् )

**कथमनुक्तः । यदिदानीमेवोक्तमेकेनाप्यनेकस्याभिधानं भवतीति ? ।**

---

1 एकेनैकाभिधानस्य निराकरणाभावेनेत्यर्थः । ( र. ना. ) 2 'इत्येव' ॥ 3 समुदायरूपस्यार्थस्य प्रादुर्भावः प्रकाश इत्यर्थः । ( र. ना. )

( समाधानभाष्यम् )

**सरूपाणामेकेनाप्यनेकस्याभिधानं भवति न विरूपाणाम् ॥**

( उद्योतः ) भाष्ये—एकेनापीति । अपिनानेकेनापि ॥

( आक्षेपभाष्यम् )

**किं पुनः कारणं सरूपाणामेकेनाप्यनेकस्याभिधानं भवति, न पुनर्विरूपाणाम् ॥**

( ७५७ समाधानवार्तिकम् ॥ ३६ ॥ )

## ॥ * ॥ अभिधानं पुनः स्वाभाविकम् ॥ * ॥

( भाष्यम् ) **स्वाभाविकमभिधानम् ॥**

( ७५८ समाधानहेतुवार्तिकम् ॥ ३७ ॥ )

## ॥ * ॥ उभयदर्शनाच्च ॥ * ॥

(भाष्यम्) **उभयं खल्वपि दृश्यते, विरूपाणामप्येकेनानेकस्याभिधानं भवति । तद्यथा 'द्यावा ह क्षामा' 'द्यावा चिदस्मै पृथिवी नमेते' इति । विरूपाणां किल नामैकेनानेकस्याभिधानं स्यात् किं पुनः सरूपाणाम् ॥**

( प्रदीपः ) **उभयदर्शनाच्चेति** । सरूपस्य विरूपस्य चैकैस्यानेकार्थाभिधायित्वदर्शनादित्यर्थः ॥ **द्यावेति** । द्योशब्देन द्यावापृथिव्योरभिधानात् ततः परस्यौकारस्य **सुपां सुलुगित्याकारः, गोतो णिदित्योकारान्तग्रहणाण्णित्वाद्वृद्धिरावादेशश्च** ॥ **पृथिवी इति** । द्विवचनान्तं । **वा छन्दसीति** पूर्वसवर्णदीर्घः ॥ पृथिवीशब्देनात्र दिवस्पृथिव्योरभिधानम् ॥ **विरूपाणामिति** । प्रकरणादिवशाद्यत्रार्थविशेषावसायस्तत्र प्रवृत्तिनिमित्तभेदेऽपि विरूपोऽनेकार्थाभिधाधायी दृश्यते, तत्र सरूपैः कथं न स्याद्यत्रैकं प्रवृत्तिनिमित्तमित्यर्थः ॥

( उद्योतः ) प्रत्याख्यानवाधैव युक्त्यन्तरमाह—**उभयदर्शनाच्चेति** । उभैयोरप्येकेनानेकार्थाभिधानदर्शनादित्यर्थः ॥ तद्व्याचष्टे—**सरूपस्य विरूपस्य चेति** ॥ **द्विवचनान्तमिति** । अत एव पदकाले **पृथिवी इतीति** प्रगृह्यत्वम् ॥ ननु द्यावेत्यादाविव प्लक्षाविलादावपि विजातीयानेकार्थाभिधानं स्यादिति चेन्न । स्वभावेन वारणात् ॥ **यत्रैकं प्रवृत्तिनिमित्तमिति** । तत्र शक्यतावच्छेदकप्रकारकबोधाङ्गीकारे तदनुगतीकृतानेकव्यक्तिबोधो न्याय्य एवैकस्माद् द्रव्यैपदार्थवादेपि । शुद्धव्यक्तिबोध इति वादिनां मतेऽपि प्रवृत्तिनिमित्तोपलक्षितानेकव्यक्तौ शक्तिग्रहात्तात्पर्यग्राहकसत्त्वे एकस्मादप्यनेकशुद्धव्यक्तिबोध इति सर्वथा द्रव्यपक्षेऽपि सूत्रं प्रत्याख्यातम् ॥

( ७५९ आकृतिपक्षवार्तिकम् ॥ ३८ ॥ )

## ॥ * ॥ आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः ॥ * ॥

( भाष्यम् ) **आकृत्यभिधानाद्वा एकं शब्दं विभक्तौ वाजप्यायन आचार्यो न्याय्यं मन्यते ॥ एका आकृतिः, साचाभिधीयते इति ॥**

(प्रदीपः) तदेवं द्रव्याभिधानपक्षेऽपि प्रत्याख्यात एकशेषः । अनेकार्थप्रक्रमे अनेकार्थं एक एव वृक्षशब्दः प्रयुज्यते । न तु द्वन्द्वः अनभिधानात् ॥ इदानीमाकृतिपक्षाश्रयेण प्रत्याख्यानं करोति—**आकृत्यभिधानादिति** । जातिः शब्दार्थः तस्याः एकत्वादनेकशब्दप्रयोगप्रसङ्ग एव नास्ति किमेकशेषेणेत्यर्थः ॥

( उद्योतः ) इदमेव तत्त्वं यदेकस्य युगपदनेकार्थबोधकत्वं तदाह—**प्रत्याख्यात इति** । इदं च प्रत्याख्यानमर्थस्यान्यप्रमाणत्वादित्यनेन सूत्रकृतापि दर्शितप्रायमेव ॥ नन्वेवमपि द्वन्द्वो दुर्वारोऽत आह—**न त्विति** । सहविवक्षायामेकजातीयार्थानेकशब्दप्रयोगादर्शनेन तदसाधुत्वप्रतिपादनार्थं सूत्रमिति भावः ॥ **एकाऽऽकृतिरिति** भाष्यस्यास्तीति शेषः ॥ **शब्दार्थः** । शब्दजप्रतीतिविशेष्यः ॥

( आक्षेपभाष्यम् )

**कथं पुनर्ज्ञायते—एका आकृतिः सा चाभिधीयते इति ॥**

( प्रदीपः ) **कथं पुनरिति** । द्रव्यातिरेकेणाकृतेरनुपलम्भादभावं मन्यमानस्य प्रश्नः ॥

( ७६० समाधानवार्तिकम् ॥ ३९ ॥ )

## ॥ * ॥ प्रख्याऽविशेषात् ॥ * ॥

( भाष्यम् ) **नहि गौरित्युक्ते विशेषः प्रख्यायते—शुक्ला नीला कपिला कपोतिकेति ॥**

( प्रदीपः ) **प्रख्याऽविशेषादिति** । प्रख्या बुद्धिः तस्या अविशेषादेकरूपत्वात् तद्विषयस्याप्यैक्यं प्रतीयते । गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषु गौर्गौरित्येकाकारप्रत्ययोदयादवश्यमेकेनालम्बनेन सामान्येन भाव्यमिति जातिसद्भाव एकत्वं चावसीयते ॥ **गौरित्युक्त इति** । गौरित्येतेन शब्देनोक्ते प्रत्यायिते गोत्वं प्रख्यायते इति । अनाकृतिव्यङ्ग्यायां जातौ मृत्सुवर्णं रजतमित्येवमादिष्वाकृतिर्निवर्तते जहाति पदार्थत्वमिति ॥

१ 'चानेकार्थाभिधायित्वमित्यर्थः ॥' २ 'धायीति ह' ॥ ३ 'सरूपं' ॥ ४ सरूपविरूपयोरित्यर्थः । ( र. ना. ) ५ जातिविशिष्टेत्यादिः । ( र. ना. ) ६ 'ह्याकृतिः' ॥ ७ अनेकस्यार्थस्य बोधनावसरे इत्यर्थः । ( र. ना. ) ८ वार्तिकस्थमाकृतिपदं व्यङ्ग्यव्यञ्जकोभयपरं व्यक्तिभिन्नपरत्वात् । कथमन्यथा "व्यक्त्याकृतिजातयस्तु पदार्थः" ( २।२।६३ ) इति गौतमसूत्रनिर्दिष्टजातेपदार्थभूताया अत्र विचाराकरणेन न्यूनतापद्येत ॥ तत्राकृतिर्व्यञ्जिका तल्लक्षणं तु गौतमेनाभिहितम्—"आकृतिर्जातिलिङ्गाख्या" ( २।२।६५ ) इति ॥ व्याख्यातं च तद्वात्स्यायनेन—यथा जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात् । सा च नान्यसत्त्वावयवानां तदवयवानां च नियताद्व्यूहादिति नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गं शिरसा पादेन गामनुमिन्वन्ति । नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायते इति । अनाकृतिव्यङ्ग्यायां जातौ मृत्सुवर्णं रजतमित्येवमादिष्वाकृतिर्निवर्तते जहाति पदार्थत्वमिति ॥ व्यङ्ग्यातुजातिः तल्लक्षणं तु गौतमेनेत्थमभिहितम्—"समानप्रसवात्मिका जातिः"(२।२।६६) इति ॥ व्याख्यातं च भगवता वात्स्यायनेन—"या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो न व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम् । यच्च केषांचिदभेदं करोति तत् सामान्यविशेषो जातिरिति ॥" इति भावः ॥ अत्र वार्तिके आकृतिपदं व्यङ्ग्यात्मकजातिपरमेव । अतएव कैयटे जातिः शब्दार्थ इत्युक्तमिति तु वयम् । ( र. ना. ) ९ 'पदार्थः' ॥ १० 'द्रव्यव्यति' ॥ ११ कपोतवर्णा ! धूम्रवर्णेति यावत् । ( र. ना. ) १२ प्रमाणं ह्रस्वत्वदीर्घत्वादि । ( र. ना. )

सामान्यलक्षणेऽर्थे विशेषानवधारणादैक्यं सामान्यस्यावसीयत इत्यर्थः ॥

( उद्द्योतः ) बुद्धिरिति । प्रमात्मिकेत्यर्थः । ननु व्यक्त्यैक्ये स्यादेव प्रतीत्यैकरूपतेत्यत आह—गुणेति ॥ आलम्बनेनेति । विषयेणेत्यर्थः ॥ प्रत्यायित इति । अनेकशोऽपीत्यादिः ॥ विशेषानवधारणादिति । आश्रयभेदेऽपीत्यादिः ॥

( आक्षेपभाष्यम् )

**यद्यपि तावत्प्रख्याऽविशेषाद् ज्ञायते—एका आकृतिरिति, कुतस्त्वेतत्—साभिधीयते इति ॥**

( प्रदीपः ) कुतस्त्वेतत् । भवतु सामान्यमेकं तस्य तु वाहदोहादिकायामर्थक्रियायामयोग्यत्वाद्, द्रव्यस्यैव योग्यत्वाद् अभिधानं न्याय्यमिति मत्वा प्रश्नः ॥

( ७६१ समाधानवार्तिकम् ॥ ४० ॥ )

## ॥ * ॥ अव्यपवर्गगतेश्च ॥ * ॥

( भाष्यम् ) **अव्यपवर्गगतेश्च मन्यामहे 'आकृतिरभिधीयते' इति । नहि गौरित्युक्ते व्यपवर्गो गम्यते—शुक्ला नीला कपिला कपोतिकेति ॥**

( प्रदीपः ) अव्यपवर्गगतेश्चेति । अव्यपवर्गोऽभेदः अविच्छेदः अविशेषस्तस्य गतिः प्रतीतिरित्यर्थः[1] । जातौ चाभिधीयमानायां द्रव्यद्वारका वाहदोहादय उपपद्यन्ते, जातितद्वतोश्चाभेदोपचाराद् गौः शुक्ल इति सामानाधिकरण्यादिव्यवहारोऽप्युपपद्यते ॥ अथ प्रख्याऽविशेषादव्यपवर्गगतेश्चेति किमर्थमुभयोरुपादानम् । एकेनापि हेतुनैकत्वाभिधानयोः सिद्धत्वात् ॥ नैष दोषः । अनभिधीयमानापि जातिः संनिधिमात्रेण प्रख्याऽविशेषे निमित्तं भवतीति प्रख्याऽविशेषे प्रत्यभिज्ञाप्रत्ययरूपेणैकत्वमेव प्रतिपादितं नाभिधानम् । तथा वनमिति सर्वविशेषाभ्यन्तरीकरणेनाव्यपवर्गगतावपि प्रख्याया अविशेषो नास्ति भिन्नवृक्षालम्बनत्वाद्वनमिति प्रत्ययस्य ॥

( उद्द्योतः ) अविच्छेदं व्याचष्टे—अविशेष इति । तस्य गतिरिति । विशेषानवगतिपूर्वं सामान्यस्य शब्दतोऽवगतिरित्यर्थः । अयं भावः—गुणादिभिन्नेष्वनुस्यूतैकाकारप्रतीत्या जातिसिद्धौ तत्र शक्तिग्रहः । शब्दात्तस्या बोधश्च । व्यक्तीनां त्वानन्त्यात्तासु न शक्तिग्रहो, नापि शुद्धानां तासां बोधः, तासां[2] विशेषरूपत्वेन विशेषावगतिप्रसङ्गात् । यथाऽऽकृतिरूपादिकं शाब्दबोधे भासते सामान्येन, तथा विशेषोपि भासेत, जातेः शक्यत्वे तु तदाश्रयत्वेनाक्षेपादिना सामान्यैराकृतिरूपादेरेव ग्रहणमिति न दोषः । प्रथमतो बालस्य यद्यपि विशेषव्यक्तावेव शक्तिग्रहस्तथाप्यावापोद्वापन्यायेन व्यक्त्यन्तरे आनयनादि दृष्ट्वा पूर्वजातशक्तिग्रहस्य जात्याश्रयमात्रे व्यवस्थितिरिति तत्त्वम् ॥ वाहादिक्रिया तर्हि कथमत आह—द्रव्यद्वारका इति । आश्रये करणमेव जातौ तत्करणमिति भावः । अन्वयबोधे तु बाधज्ञानस्याप्रतिबन्धकत्वान्न तदनुपपत्तिः जातीत्यादिप्रयासो वृथेति कश्चित् । सन्निधिमात्रेण । शक्तिग्रहे व्यक्त्याद्युपलक्षणतामात्रेण ॥ प्रत्यभिज्ञाप्रत्ययरूपेण । प्रत्यभिज्ञाविषयेण प्रत्ययेन तदुच्चारितगोशब्दाद्यादृशः प्रत्ययस्तादृश एवैतदुच्चारितादित्येवं प्रत्यभिज्ञाविषयता, सा चैकाकारतां विनाऽनुपपन्नेति ॥ द्वितीयेनाभिधाने सिद्धेऽप्येकत्वं न सिध्यतीत्याह—तथा वनमिति । अविशेष इति । एकरूपत्वमित्यर्थः । वनशब्देन कदाचिदाम्रसमुदायस्य कदाचित् पलाशसमुदायस्य कदाचित् खदिरसमुदायस्य कदाचिदाम्रादिसमुदायस्य प्रतीतेरिति तात्पर्यम् ॥ तदाह—भिन्नवृक्षेति ।

( ७६२ आकृतिशक्तिवार्तिकम् ॥ ४१ ॥ )

## ॥ * ॥ ज्ञायते चैकोपदिष्टम् ॥ * ॥

( भाष्यम् ) **ज्ञायते खल्वप्येकोपदिष्टम् । गौरस्य कदाचिदुपदिष्टो भवति । स तमन्यस्मिन्देशेऽन्यस्मिन्कालेऽन्यस्यां च वयोवस्थायां दृष्ट्वा जानाति अयं गौरिति ॥**

( प्रदीपः ) एकोपदिष्टमिति । एकस्मिन्नुपदिष्टं 'गौरयं त्वया पदा न स्प्रष्टव्य' इत्यादि वस्तु । अथ वैकमुपदिष्टं यस्य तदेकोपदिष्टं सकृदुपदिष्टं गोत्वादि सर्वत्र ज्ञायत इत्यर्थः ॥

( उद्द्योतः ) एकत्वे युक्त्यन्तरमाह—ज्ञायते चैकेति ॥ आद्यव्याख्यानेऽध्याहारभयाद्भाष्यास्वारस्याच्चाह—अथ वेति ॥ उपदिष्टमिति । भावे क्त इत्यर्थः ॥

( आक्षेपभाष्यम् )

**कः पुनरस्य विशेषः *प्रख्याऽविशेषादित्यतः? ॥**

(उद्द्योतः) भाष्ये—कः पुनरिति । अनेनापि प्रख्याऽविशेषस्यैवोपपादनादिति भावः ॥

( समाधानभाष्यम् )

**तस्यैवोपोद्वलकमेतत्—'प्रख्याऽविशेषाद् ज्ञायते चैकोपदिष्टम्' इति ॥**

( प्रदीपः ) उपोद्वलकमिति । उद्गतं बलं प्रत्यक्षं तत्पूर्वकत्वादनुमानस्य उद्बलस्य समीपमनुमानमित्यर्थः । प्रख्याऽविशेषादित्यनेन प्रत्यक्षं जात्यालम्बनं प्रमाणमुपन्यस्तम् । ततो विप्रतिपन्नप्रतिपादनायानुमानमिह जातिसद्भावे ज्ञायते चैकोपदिष्टमित्यनेनोक्तम्, देशकालावस्थापिण्डान्तरेष्वबाधितप्रत्यभिज्ञाप्रत्ययोदयान्यथानुपपत्त्या सामान्यसद्भावोऽनुमीयते इत्यर्थः । अथ वा बलमुद्दीपयत्युपोद्वलकमुपबृंहकमुच्यते ॥

( उद्द्योतः ) प्रत्यक्षमिति । प्रत्यक्षशब्देन शाब्दमप्यत्रोच्यते ॥ तत इति । तत्रेत्यर्थः ॥ विप्रतिपन्नेऽपि । देहात्मप्रत्ययवद्भ्रान्तत्वशङ्कयेति भावः ॥ प्रयोगस्तु विमतप्रत्ययो जातिविषयो देशादिभेदेप्यबाधितैकाकारप्रत्ययत्वात् संमतवदिति ॥ अवस्थेति ॥ अवस्थाकृतभेदोपपादनेन च न व्यक्त्यैक्यं विषय इति सूचितम् ॥ प्रत्यभिज्ञाप्रत्ययेति । तद्विषयप्रत्ययेत्यर्थः ॥ उपबृंहकमिति । भ्रान्तत्वाशङ्कानिवर्तनेन प्रमात्वनिर्वाहकस्तर्क इत्यर्थः ॥

---

१ प्रख्याऽविशेषादित्यत्र बुद्धेरेकरूपत्वात्मकोऽविशेष उक्तोऽत्र तु विषयविशेषानवगतिपूर्वकं सामान्यस्यावगतिरिति भेदः । ( र. ना. ) २ 'रण्यव्यव' ॥ ३ 'धानत्वयोः' ॥ ४ शुद्धव्यक्तिषु शक्तिग्रहे दोषमाह—तासामिति । (र. ना.) ५ सामान्येन, सामान्याभिन्नं यदाकृतिरूपादिकं, गुणक्रिया चादिपदार्थः । ( र. ना. ) ६ विशेषस्य भानमिति शेषः । ( र. ना. ) ७ सामान्यात्मको य आकृतिरूपादिः तस्यैव ग्रहणं, शक्त्या बोध इत्यर्थः । ( र. ना. ) ८ इतीत्यादिः । ( र. ना. ) ९ गौरस्य कदाचिदित्यादिभाष्यस्यार्थः । ( र. ना. ) १० छत्रिन्यायेन लक्षणयेति भावः । ( र. ना. )

( ७६३ आकृतिवार्तिकम् ॥ ४२ ॥ )

**॥ * ॥ धर्मशास्त्रं च तथा ॥ * ॥**

( भाष्यम् ) **एवं च कृत्वा धर्मशास्त्रं प्रवृत्तम् "ब्राह्मणो न हन्तव्यः" "सुरा न पेये"ति, ब्राह्मणमात्रं[1] च न हन्यते, सुरामात्रं[2] च न पीयते । यदि द्रव्यं पदार्थः स्यात्, एकं ब्राह्मणमहत्वा एकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात् ॥**

( प्रदीपः ) **धर्मशास्त्रं च तथेति** । अनेनैतद्दर्शयति । न सादृश्यैकार्थ[3]क्रियाकारित्वादिनिमित्ता, भ्रान्ता प्रत्यभिज्ञा सर्वत्रेति ग्राह्यम्, किं तर्हि ? अभिन्नविषयनिमित्ता, स्मृतिकाराणामप्यविगीतप्रमाणभावस्मृतोपनिबद्धवचनानां जात्याश्रयेण सर्वव्यवहारप्रवर्तनादित्यर्थः ॥ **एकं ब्राह्मणमिति** । एकस्यैव द्रव्यस्य ब्राह्मणशब्दवाच्यत्वादिति भावः ॥

( उद्योतः ) **न सादृश्येति** । सादृश्यरूपैकक्रियाकारित्वादिनिमित्तकभ्रमरूपा नेत्यर्थः । अविगीतः प्रमाणभावः प्रमाणत्वं यस्य स्मृतस्य स्मरणस्य पदार्थविषयकस्य तेनोपनिबद्धानि वचनानि यैस्तेषामित्यर्थः । द्रव्यस्य शब्दार्थत्वे ह्येकब्राह्मणवधनिषेधाद्येव प्रतीयेत । एकः क इति चेद्।? यो यस्य तद्वाक्यश्रवणकाले बुद्धिस्थः स इति गृहाण । जातेः पदार्थत्वे तु न दोष इति तात्पर्यम् ॥ **अन्यत्र कामचार इति** । सर्वेषामिति शेषः ॥ एकेनैकस्याहनने जातः शास्त्रार्थ इत्यन्यब्राह्मणविषये सर्वेषां कामचारः स्यादित्यर्थः ॥

( आक्षेपभाष्यम् )

**कः पुनरत्र विशेषः *अव्यपवर्गगतेश्च * इत्यतः ? ॥**

( समाधानभाष्यम् )

**तस्यैवोपोद्बलकमेतत् 'अव्यपवर्गगतेश्च धर्मशास्त्रं च तथा' इति ॥**

( प्रदीपः ) **तस्येति** । अव्यपवर्गगतिरभ्रान्ता, स्मृतिकाराणामपि तथैव व्यवहारदर्शनादित्यर्थः ॥

( ७६४ आकृतिवार्तिकम् ॥ ४३ ॥ )

**॥ * ॥ अस्ति चैकमनेकाधिकरणस्थं युगपत् ॥ * ॥**

( भाष्यम् ) **अस्ति खल्वप्येकमनेकाधिकरणस्थं युगपल्लभ्यते[4] । किम् ? । आदित्यः । तद्यथा एक आदित्योनेकाधिकरणस्थो युगपदुपलभ्यते ॥**

( प्रदीपः ) नन्वेकमनेकस्थं कथं भवति नहि देवदत्तो युगपन्मथुरायां स्रुघ्ने च भवतीत्यत आह—**अस्ति चेति** ॥ अवयवी यद्यप्यनेकावयवस्थः तथापि तद्भावे[5] विवादान्नासौ दृष्टान्तत्वेनोपात्तः ॥

( उद्योतः ) **नन्वेकमिति** । जातिरूपमित्यर्थः ॥ **तद्भावे विवादादिति** । बौद्धादीनामिति[6] शेषः किं च सामस्त्येन[7] प्रत्यवयवमवयवी नोपलभ्यत इति वैधर्म्यादपि स न दृष्टान्तित इति भावः ॥

( दृष्टान्तवैषम्यभाष्यम् )

**विषम उपन्यासः । नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपदुपलभते ॥**

( दृष्टान्तान्तरवार्तिकशेषभाष्यम् )

**एवं तर्हि—**

( ७६५ दृष्टान्तवार्तिकम् ॥ ४४ ॥ )

**॥ * ॥ इतीन्द्रवद्विषयः ॥ * ॥**

( भाष्यम् ) **तद्यथा एक इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत्सर्वत्र भवति ॥ एवमाकृतिर्युगपत्सर्वत्र भविष्यति ॥**

( प्रदीपः ) **इतीन्द्रवद्विषय इति** । एकस्याप्यनेक इति वाक्यशेषः । शब्दप्रादुर्भावेऽव्ययीभावे कृते वतिः प्रत्ययः ॥ **सर्वत्रेति** । सर्वेषु यागेषु द्रव्यवदङ्गतां[8] प्रतिपद्यत इत्यर्थः ॥

( उद्योतः ) साकाङ्क्षत्वाद्वाक्यस्याह—**एकस्यापीति** ॥ एकस्याप्यनेक इति पाठः ॥ एकस्यापीन्द्रशब्दस्य यथाऽनेको यागोऽङ्गित्वेन विषय एकबोद्धृज्ञानविषयश्च[9], एकदेशावच्छिन्नानेकयागेषु तथा दर्शनसम्भवात् तथैकस्या अपि जातेरनेको विषय आश्रयतयेत्यर्थः । **अनेकस्थ** इति पाठे एकोऽपि यथा इन्द्रशब्दोनेकयागस्थ एकस्यापि बोद्धुर्विषयस्तथा जातिरपीत्यर्थः ॥ **अव्ययीभावे इति** । इन्द्रस्य प्रादुर्भाव इत्यर्थः ॥ **सर्वेष्विति** ॥ प्रादुर्भावविषयेन्द्रशब्दरूपा तद्बोध्या वा एका देवता व्रीह्यादिद्रव्यवत्सर्वयागेष्वङ्गतां युगपत्प्रतिपद्यत इत्यर्थः ॥ भाष्येऽपि इन्द्रः इन्द्रशब्दः । आहूतः प्रादुर्भूतः युगपत्सर्वत्राङ्गं भवतीत्यर्थः ॥

( उपोद्बलकभाष्यम् )

**अवश्यं चैतदेवं विज्ञेयम्—एकमनेकाधिकरणस्थं युगपदुपलभ्यत इति ।**

( ७६६ अनुपपत्तिवार्तिकम् ॥ ४५ ॥ )

**॥ * ॥ नैकमनेकाधिकरणस्थं युगपदिति चेत्तथैकशेषे[10] ॥ * ॥**

( भाष्यम् ) **यो हि मन्यते—'नैकमनेकाधिकरणस्थं युगपदुपलभ्यत' इति । एकशेषे तस्य दोषः स्यात् । एकशेषेऽपि नैको वृक्षशब्दोऽनेकमर्थं युगपदभिदधीत ॥**

( प्रदीपः ) **एकशेषेपीति** । यद्येकस्यानेकसंबन्धो नाभ्युपगम्यते तदैकः शब्दोऽनेकमर्थं संबन्धाभावान्न प्रत्याययेदित्यर्थः ॥

( उद्योतः ) **यदीति** । अनेकाधिकरणस्थ[11]पदेनानेकसंबन्धो विवक्षित इत्यर्थः । एवं चैकः शब्दो यथाऽनेकत्रार्थे एकेन युगपद् गृह्यते तथा जातिरपीत्यर्थः ॥

१–२ 'मात्रं न' ॥ ३ 'श्यैकक्रि॰ ॥ ४ अत्र लाभक्रिया अस्तिक्रियायाः कर्त्री । (र. ना.) ५ 'तत्सद्भावे' ॥ ६ ते हि परमाणुपुञ्जमेव घटादिकं वदन्तीति भावः । (र. ना.) ७ सर्वात्मनेत्यर्थः । (र. ना.) ८ देवतारूपस्याङ्गस्येत्यर्थः । (र. ना.)

९ एकबोद्धृज्ञानविषयत्वेन रूपेणेत्यर्थः । ( र. ना. ) १० 'शेषेऽपि' ॥ 'शेषे दोषः' ॥ ११ अनेकाधिकरणस्थेति पदस्यानेकसंबन्धोऽर्थ इति भावः । (र. ना.)

( अथाकृतिवादोपपादनम् )

( उपोद्घलकभाष्यम् )

**अवश्यं चैतदेवं विज्ञेयमाकृतिरभिधीयत इति ॥**

( ७६७ अन्यथानुपपत्तिवार्तिकम् ॥ ४६ ॥ )

**॥ * ॥ द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः [ तत्रासर्वद्रव्यगतिः ] ॥ * ॥**

( भाष्यम् ) **द्रव्याभिधाने सत्याकृतेरसंप्रत्ययः स्यात् ॥ तत्र को दोषः ? ॥ 'तत्रासर्वद्रव्यगतिः'। तत्रासर्वद्रव्यगतिः प्राप्नोति ॥ असर्वद्रव्यगतौ को दोषः ? । 'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इति एकः शास्त्रोक्तं कुर्वीत, अपरोऽशास्त्रोक्तम् । अशास्त्रोक्ते च क्रियमाणे विगुणं कर्म भवति । विगुणे च कर्मणि फलानवाप्तिः ॥**

( प्रदीपः ) उक्तमेवार्थं समर्थयितुमाह—**द्रव्याभिधाने हीति** । श्रुतिस्मृतिविहितानां सर्वव्यवहाराणामप्रवृत्तिः स्यादित्यर्थः ॥

( उद्योतः ) भाष्ये—**अपरोऽशास्त्रोक्तमिति** । एकः शब्दः प्रत्यर्थंनिवेशित्वादेकं द्रव्यं गोरूपं बोधयेत् तस्य केनचिदालम्भे कृते परैस्तेन वा गवान्तरालम्भेऽशास्त्रार्थः स्यात् । एवं न ब्राह्मणमित्यादावप्येकस्य ब्राह्मणस्यावधो विषयस्तत्रान्यविषये सर्वेषां कामचारेण प्रवृत्तावपि न प्रायश्चित्तं स्यादिति बोध्यम् । सर्वपुरुषान् प्रत्येकव्यक्तेरेव बोधनमित्यभिमानः ॥

( आक्षेपभाष्यम् )

**ननु च यस्याप्याकृतिः, तदार्थः, तस्यापि यद्यन[1]वयवेन चोद्यते न चानु[2]बध्यते । विगुणं कर्म भवति । विगुणे च कर्मणि फलानवाप्तिः । एका आकृतिरिति च प्रतिज्ञा हीयेत । यच्चास्य पक्षस्योपादाने प्रयोजनम्—एकशेषो न वक्तव्य इति, स चेदानीं वक्तव्यो भवति ॥**

( प्रदीपः ) **ननु चेति** । सर्वविषया चेदाकृतिश्चोद्यते तदा सर्वव्यक्तिविषयमनुष्ठानं विना वैगुण्यमेव स्यादित्यर्थः ॥ अथानुष्ठानसिद्ध्यर्थमेकद्रव्यविषयमेव कर्म क्रियते तत्राप्युच्यते—**एकाकृतिरिति चेति** । चशब्दस्तुशब्दस्यार्थे, वक्ष्यमाणार्थापेक्षया समुच्चये वा ॥ **स चेदानीमिति** । एकत्वे जातेरेकशब्दप्रवृत्तेः सिद्धत्वादेकशेषारम्भः प्रत्याख्यायते । अनेकैत्वे त्वारब्धव्य एवैकशेष इत्यर्थः ॥

( उद्योतः ) **अथानुष्ठानेति** । अयं भावः—जातेः साक्षादनुबन्धनाद्यसम्भवाद् व्यक्तिद्वारा तद्वाच्यं तत्रानुष्ठानसिद्ध्यर्थमेकप्रयोगे एकव्यक्तिद्वारकमेव तदाश्रीयते । तत्राकृतेरेकत्वे विनिगमनाविरहात्सर्वव्यक्तिद्वारकमेव तदाश्रीयेत[3] । आकृतेरनेकत्वे तु प्रतिज्ञाहानिरिति ॥ पूर्वारुच्याऽस्यावतारणाच्चशब्दोऽनुपपन्नोऽत आह—**तुशब्दस्यार्थे इति** ॥

( समाधानभाष्यम् )

**एवं तर्ह्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते । यथा आदित्यः ॥**

( प्रदीपः ) **एवं तर्हीति** । सर्वाभिर्व्यक्तिभिः संबन्धस्य तुल्यत्वात् सर्वत्रैवास्मिन्बुद्ध्युत्पादनात् प्रत्येकं परिसमाप्तत्वादेकस्मिन्नपि द्रव्ये तत्कर्म क्रियमाणं जातौ कृतमेव भवतीत्यर्थः ॥ **यथादित्य इति** । प्रतिदेशं यथा सर्वात्मनादित्य उपलभ्यते तथा जातिरपीत्यर्थः ॥

( उद्योतः ) भाष्ये—**अनवयवेनेति** । जात्याश्रया व्यक्तिविशेषा अवयवा इत्युच्यते ॥ **अनवयवेन** । व्यक्तिविशेषानालम्बनेनेत्यर्थः ॥ नन्वाश्रयभेदात्तद्भेदोऽत आह—**सर्वाभिरिति** । भेदकाभावान्न भेद इति भावः । प्रत्यक्षविरोधाद् धर्मिग्राहकमानविरोधाच्च भेदानुमानमसङ्गतमिति भावः ॥ नन्वादित्यस्य प्रत्येकं समाप्त्यभावेन दृष्टान्तासंगतिरिति मत्वाह—**प्रतिदेशमिति** ॥

( आक्षेपभाष्यम् )

**ननु च यस्यापि द्रव्यं पदार्थः, तस्याप्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते ॥**

( प्रदीपः ) **ननु चेति** । द्रव्येऽपि पदार्थे जातेरनभिधेयाया उपलक्षणत्वेनाश्रयणात्परित्यक्तभेदं द्रव्यमात्रं विशिष्टजातियुक्तं शब्देनोच्यते ॥ **प्रत्येकं च परिसमाप्यत इति** । शास्त्रमित्यध्याहारः । अथ वा जातिरुपलक्षणभूता प्रत्येकं परिसमाप्यत इति व्याख्येयम् ॥

( उद्योतः ) **अनभिधेयाया इति**—शक्यतावच्छेदकमशक्यमेवेत्यर्थः । यद्वा प्राधान्येनानभिधेयाया इत्यर्थः ॥ **परित्यक्तभेदमिति** । परित्यक्तावान्तरभेदमित्यर्थः ॥ ननु द्रव्यस्य प्रत्येकं समाप्तेः प्रकृतेऽनुपयोगोऽत आह—**शास्त्रमिति** ॥

( आकृतिवादिभाष्यम् )

**एकशेषस्त्वया वक्तव्यः ॥**

( प्रदीपः ) **एकशेषस्त्वयेति** । जात्युपलक्षितस्य द्रव्यस्य शब्देनाभिधाने सत्यभिधेयानेकत्वेनाऽनेकशब्दत्वप्रसङ्गादित्यर्थः ॥

( उद्योतः ) **शब्देनाभिधाने इति** । प्राधान्येनेत्यर्थः ॥

( द्रव्यवादिभाष्यम् )

**त्वयापि तर्हि द्विवचनबहुवचनानि साध्यानि ॥**

( प्रदीपः ) **त्वयापीति** । जातेरेकत्वाद् द्वित्वबहुत्वनिबन्धनानि द्विवचनबहुवचनानि न सिध्यन्तीति भावः ॥

---

१ यद्यपि सर्वेषु पुस्तकेषु कोष्टकान्तर्गतः पाठो नोपलभ्यते । तथापि "तस्मिन्निति" इति सूत्रस्थे '* सप्तमीपञ्चम्योश्चभावादुभयत्र षष्ठी प्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः *' इति वार्तिके एव दोषप्रदर्शकभागोऽपि वर्तते स । परन्तु लेखकप्रमादात्त्रुटितोऽत्र भवेदिति मत्वास्माभिः पूरित इति बोध्यम् ॥ संभावया अमूलकपाठकल्पनं महत्साहसमिति वयम् ।( र. ना. ) २ साकल्येन अनुबन्धनादिकं कर्म विधीयते इत्यर्थः । ( र. ना. ) ३ सकलो गौस्तर्हि इति शेषः । ( र. ना. ) ४ जातिरूपस्य शक्यार्थस्यानेकत्वे इत्यर्थः । ( र. ना. ) ५ 'यते' ॥ ६ 'स्यादात्' ॥

( ७६८ आकृतिवार्तिकम् ॥ ४७ ॥ )

**॥ * ॥ चोदनायां चैकस्योपाधिवृत्तेः ॥*॥**

**( भाष्यम् ) चोदनायां चैकस्योपाधिवृत्तेर्मन्यामहे आकृतिरभिधीयते इति। 'आग्नेयमष्टाकपालं निर्वपेत्'। एकं निरुप्य द्वितीयस्तृतीयश्च निरुप्यते। यदि च द्रव्यं पदार्थः स्यादेकं निरुप्य द्वितीयस्य तृतीयस्य च निर्वपणं न प्रकल्पेत॥**

( प्रदीपः ) एवं भाष्यकारेण पक्षयोः साम्यं दर्शितम्। वाक्यकारस्तु जातिपक्षाश्रयणस्य प्रयोजनानि समुच्चयेनाचष्टे—**चोदनायां चैकस्येति**। सामान्यस्याग्नेयादेः॥ **उपाधिवृत्तेरिति**। अष्टाकपालत्वादिरुपाधिः तस्य वृत्तिः प्रवृत्तिः। एतदुक्तं भवति—यदि आग्नेयादिशब्देन सामान्यमभिधीयते तदा तेनाशेषद्रव्याणामाक्षेपात्प्रतिद्रव्यमष्टाकपालत्वमुपाधिर्युज्यते द्रव्ये तु पदार्थे एकेनैव यजमानेन सकृदेवाष्टाकपालः पुरोडाशो निरुप्येत नान्येन नाप्यन्यदेत्यर्थः॥

( उद्द्योतः ) नन्वेवं चोदनायां चैकस्येति चोनुपपन्न इत्यत आह--**वाक्यकार इति**॥ **प्रयोजनानि**। प्रयोजनान्तराणि॥ **समुच्चयेनेति**। द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः इत्यनेन समुच्चय इति बोध्यम्। एकस्याग्नेयादेर्य उपाधिरष्टाकपालत्वादिस्तस्य पुनः-पुनः प्रवृत्तेरिति वार्तिकार्थः। समासश्चार्षत्वात्॥ **एकस्येति** व्याचष्टे-**सामान्यस्येत्यादि**॥ **अष्टाकपालत्वादीत्यादि**पदेन निर्वापः। अत एव भाष्ये स एव दर्शित **एकं निरुप्येत्यादिना**॥ **प्रवृत्तिरिति**। पुनःपुनर्वृत्तिरित्यर्थः॥

( आक्षेपभाष्यम् )

**कः पुनरेतयोर्जातिचोदनयोर्विशेषः ?॥**

( प्रदीपः ) **कः पुनरिति**। **'गौरनुबन्ध्यः'** इति **'आग्नेयमष्टाकपालम्'** इति चानयोरित्यर्थः॥

( समाधानभाष्यम् )

**एका निर्वृत्तेन, अपरा निर्वर्त्येन॥**

( प्रदीपः ) **एका निर्वृत्तेनेति**। निष्पन्नो हि पश्वालम्भनसाधनायोपादीयते॥ **अपरा निर्वर्त्येनेति**। आग्नेयोष्टाकपालश्चोदनयैवोत्पाद्यते न तु चोदनायाः पूर्वं निष्पन्न इत्यर्थः। तत्र निर्वृत्ते भेदाग्रहणात् द्रव्यान्तरेऽपि प्रवृत्तिः स्यान्न तु निर्वर्त्ये सादृश्याग्रहणादित्यवश्याश्रयणीया जातिः॥

( उद्द्योतः) **उत्पद्यत इति**। उत्पाद्यत्वेन बोध्यत इत्यर्थः॥ ननु प्रकारभेदेऽपि द्वितीयोपन्यासे किं बीजमत आह—**तत्रेति**॥ रूपसामान्याद्वासिद्धं इति अइउणितिसूत्रस्थभाष्यरीत्या निष्पन्ने 'इदम् अभिधेयं नेदं' इति विवेकाग्रहादित्यर्थः॥ ननु तत्राप्युक्तरीत्यैव प्रवृत्तिः स्यादत आह—**सादृश्येति**। तस्य ससंबन्धिकत्वेन प्रतियोग्यन्तरानुपस्थितेरिति भावः॥

( इत्याकृतिवादोपपत्तिः॥ )

( अथ व्यक्तिवादोपपत्तिः॥ )

( ७६९ व्यक्तिवादिवार्तिकम् ॥ ४८ ॥ )

**॥ * ॥ द्रव्याभिधानं व्याडिः[३] ॥ * ॥**

**( भाष्यम् ) द्रव्याभिधानं व्याडिराचार्यो न्याय्यं मन्यते द्रव्यमभिधीयते इति॥**

( प्रदीपः ) **द्रव्याभिधानमिति**। जातेर्वृत्तिविकल्पाक्षमत्वेनाभावं मन्यमानो व्याडिर्द्रव्यमेव शब्देनाभिधीयत इति मन्यते॥

( उद्द्योतः ) ननु व्यक्तिशक्तावानन्त्यव्यभिचारयोः सत्त्वात् जातौ शक्तिरित्याशङ्क्य जातिरेव नास्तीत्याह—**वृत्तिविकल्पेति**। जातिर्न तावद्द्रव्येषु व्यासज्यवृत्तिः, एकाश्रयनाशेऽप्रतीत्यापत्तेः। किं च गामालभेतेत्यादिनोदनासु सर्वद्रव्यालम्भापत्तिः। प्रत्येकसमाप्तौ तु द्रव्यान्तरे तदनापत्तिस्तत्रापि सत्त्वे एकाकृतिरिति प्रतिज्ञाहानिरित्यर्थः। तत्तत्संस्थानाद्युपलक्षितमधिष्ठानचैतन्यमेव द्रव्यमिति नानन्त्यव्यभिचाराविति तात्पर्यम्॥

( ७७० व्यक्तिशक्तिसाधकवार्तिकम् ॥ ४९ ॥ )

**॥ * ॥ तथा च लिङ्गवचनसिद्धिः ॥ * ॥**

**( भाष्यम्) एवं च कृत्वा लिङ्गवचनानि सि-**

---

१ 'नाप्यन्येनान्यदिना' ॥ २ निरूपकान्तरेत्यर्थः। ( र. ना. ) ३ 'द्रव्यं व्यक्तिरिति नार्थान्तरम्' इति वात्स्यायनभाष्यम्॥ व्यक्तिलक्षणं तु गौतमेनेत्थमभिहितम्—"व्यक्तिर्गुणविशेषाश्रयो मूर्तिः" ( २।२।६४ ) इति॥ व्याख्यातं चैतद्वात्स्यायनेन—"व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्वं द्रव्यं व्यक्तिः॥ यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनः परिमाणस्याश्रयो यथासंभवं तद् द्रव्यं मूर्तिः मूर्छितावयवत्वादिति॥" इति॥ ४ अमुमेव संदर्भमाश्रित्य शास्त्रदीपिकायां 'किमाकृतिः पदार्थ उत व्यक्तिरथाकृतिविशिष्टव्यक्तिरिति त्रयः पक्षाः प्राधान्येन चिन्त्यन्ते। अन्येतु विकल्पसमुदायसंबन्धसमुदायादयः सर्वे पक्षाः आकृतिविशिष्टव्यक्तिपक्षनिराकरणेन निराकृता भवन्तीति निराकृता न पृथग् विचार्यन्ते॥ तत्र

'प्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता।
नह्याकृतिरमूर्तत्वाद्व्यवहारोपयोगिनी॥
लिङ्गकारकसंख्याभिः संबन्धोऽस्या न कल्पते।
सामानाधिकरण्यं च न जातिगुणशब्दयोः॥
व्यक्तिवाचित्वपक्षं तु सर्वमेतत्समञ्जसम्॥
तेन शुद्धा विशिष्टा वा व्यक्तिः शब्दस्य गोचरः॥"

'व्रीहीनवहन्ति' 'पशुमालभेत' 'गामानय' 'ब्राह्मणो न हन्तव्यः' इति यावन्त एवमादयो विनाशिमूर्तिमद्द्रव्यगोचराः प्रयोगविधयः प्रतिषेधा वा ते सर्वे व्यक्तावेव संभवन्ति नाकृतौ। नह्याकृतिरवहन्तुमालब्धुमानेतुं वा शक्यते नित्यत्वादमूर्तत्वाच्च। तेनानर्थकं तद्विधानं प्रतिषेधश्च प्राप्त्यभावात्। व्यक्तिपक्षे तूपपद्यते। तस्माद्व्यक्तिः शब्दार्थः। एवं च वृक्षौ वृक्षाभ्यामिति व्यक्तौ प्रातिपदिकार्थे प्रत्ययाभिहितानि लिङ्गसंख्याकारकाणि तया संबध्यन्ते। जातेरलिङ्गत्वादसंख्यत्वादमूर्तत्वेन चाकारकत्वादसंबन्धः स्यात्॥ सामानाधिकरण्यं च गौः शुक्ल इति शुद्धव्यक्तिवचनयोरेकार्थत्वादुपपद्यते। जातिगुणविशिष्टद्रव्यवचनत्वेऽपि विशेषणभेदे सत्यपि विशेष्याभेदादुपपन्नम्॥ त्वत्पक्षे तु

द्धानि भवन्ति । ब्राह्मणी ब्राह्मणः ब्राह्मणौ ब्राह्मणा इति ।

( ७७१ व्यक्तिशक्तिसाधकवार्तिकम् ॥ ५० ॥ )

**॥ * ॥ चोदनासु च तस्यारम्भात् ॥ * ॥**

**( भाष्यम् ) चोदनासु च तस्यारम्भान्मन्यामहे द्रव्यमभिधीयत इति । 'गौरनुबन्ध्योऽजोऽग्नीषोमीय' इति ॥ आकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते ॥**

**( प्रदीपः ) आकृतौ चोदितायामिति ।** आकृतिवादिपक्षे शब्देनाकृतिश्चोद्यते द्रव्ये तु कार्यं[1] प्रवर्तते । अयुक्तं चैतत् । नह्यन्यचोदनेन्यस्य कार्ये क्रियमाणे यथोक्तं कृतं भवति । तस्माद् द्रव्यमेव शब्देनोच्यत इति न्याय्यम् ॥

**( उद्द्योतः ) चोदनास्विति ।** प्रवर्तकवाक्येषु तस्य द्रव्यस्यारम्भणात् । इदमुपलक्षणमारम्भणालम्भनादिकरणादित्यर्थः । तत्रारम्भणं क्रयो बन्धनं वा ॥ जातिवादे दूषणमाह भाष्ये—**आकृतौ चोदितायामिति ।** कर्मसंबन्धित्वेन चोदितायामित्यर्थः ॥ तच्छेषपूरणेन व्याचष्टे—**अयुक्तमित्यादिना ॥**

( ७७२ अनुपपत्तिवार्तिकम् ॥ ५१ ॥ )

**॥ * ॥ न चैकमनेकाधिकरणस्थं युगपत् ॥ * ॥**

**( भाष्यम् ) न खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यते । नह्येको देवदत्तो युगपत्स्रुघ्ने भवति मथुरायां च ॥**

**( प्रदीपः ) न चैकमिति ।** न च हेतुरहितेनादित्यदृष्टान्तेन[2] साध्यसिद्धिर्भवति, देवदत्तदृष्टान्तेन[3] विपर्ययस्यापि साधनात् ॥

**( उद्द्योतः )** तत्रैव दूषणान्तरम्—**न चैकमिति ॥** विपर्ययस्यापीति । सत्प्रतिपक्षसंभवादित्यर्थः ॥ एवं चानेकद्रव्यगतैका जातिरभ्युपगन्तुमेव न शक्यत इति भावः ॥

( ७७३ अनिष्टापत्तिवार्तिकम् ॥ ५२ ॥ )

**॥ * ॥ विनाशे प्रादुर्भावे च सर्वं तथा स्यात् ॥ * ॥**

**( भाष्यम् ) किम् ? । विनश्येच्च प्रादुष्याच्च ॥ 'श्वा मृतः' इति श्वा नाम लोको न प्रचरेत्[4] । 'गौर्जात' इति सर्वं गोभूतमनवकाशं स्यात् ।**

**( प्रदीपः ) श्वा मृत इति ।** अभिव्यञ्जकविनाशे जातेस्तिरोभावात् पिण्डान्तरे श्वेति प्रत्ययो न स्यात् । शतप्रत्यय इवैकापाय इत्यर्थः । यद्वा आश्रयापाये आश्रितस्याप्यपायः अवयवापाये अवयविन इवेति जातेर्विनाशप्रसङ्ग इत्यर्थः ॥ **गौर्जात इति ।** जातेन गोपिण्डेन गोत्वमभिव्यक्तं[5] तच्च सर्वाश्रयवर्तीति एकगोपिण्डप्रत्यक्षत्वे सर्वगोपिण्डप्रत्यक्षत्वप्रसङ्गः[6] ॥ **अनवकाशमिति ।** पदार्थान्तरप्रत्ययस्यावकाशाभावात् । अथ वा सर्ववस्तुव्यापि गोत्वमेष्टव्यम् । अन्यथा

**नायाँति[7] न च तत्रासीदस्ति पश्चान्न चांशवत् ।**
**जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥' इति**

दोषापत्तिः । ततश्च—

**"व्यक्त्यैवैकत्र[8] सा व्यक्ताऽभेदात्सर्वत्रगा यदि ।**
**जातिर्दृश्येत सर्वत्र···"**

इति सर्वेषु पदार्थेषु गोप्रत्ययप्रसङ्गः ॥

**( उद्द्योतः )** ननु जातेर्नित्यत्वात्कथं नाशादि । किं चैकनाशेपि व्यक्त्यन्तरेणाभिव्यक्तजात्या श्वा प्रचरेदेवेत्यत आह—**अभिव्यञ्जकेति ।** व्यासज्यवृत्तिर्जातिः सर्वव्यक्तिभिः संभूयाभिव्यज्यत इति मते इदं दूषणम्, जातेर्नाशश्च तिरोभाव एवेत्यर्थः । एवं च श्वा नाम लोके न संचरेदिति भाष्यस्य व्यक्त्यन्तरे श्वप्रत्ययविषयत्वाभावः ... 

---

जातिगुणमात्रवृत्तित्वादर्थभेदे दुर्लभं सामानाधिकरण्यम् । एवं पुरुषो देवदत्त इति जातिद्रव्यवचनयोर्दर्शयितव्यम् ॥ तस्माद्व्यक्तिरेवार्थः ॥ कथं तर्हि व्यक्त्यन्तरे प्रयोगो यत्र न दृष्टः शब्दः, सामान्यस्योपलक्षणत्वाददोषः ॥ यैवमाकृतिका सा गौरिति सामान्यमुपलक्षणीकृत्य शब्दार्थशिक्षा योऽयं शुक्लवासाः स देवदत्त इतिवत् । यथाच तत्रोपलक्षणभूतं वासोऽनभिधाय देवदत्त एवाभिधीयते । तथेहाप्युपलक्षणत्वात्सामान्यस्यानभिधाने व्यक्तय एव शुद्धा अभिधीयन्ते । एकोपलक्षणलाभादेव नानेकशक्तिकल्पनापत्तिः । आकृतिविशिष्टव्यक्त्यभिधाने तु न कश्चिद्दोषः ॥ तस्माद्व्यक्तिरेव शुद्धा विशिष्टा वा शब्दार्थः इत्येवं व्यक्तिशक्तिवादमुपन्यस्तवन्तः पार्थसारथिमिश्राः ॥

१ 'कार्यं' ॥ २ सद्धेतुरहितेनेत्यर्थः । ( र. ना. ) ३ भावत्वादिकं यं कश्चिद्धेतुमादायेति शेषः । ( र. ना. ) ४ 'प्रसरेत्' ॥ ५ 'व्यक्तव्यम्' ॥ ६ 'क्षप्रसङ्गः' ॥ ७ नायातीति । न च व्यक्त्यन्तरादागच्छति, अमूर्तत्वात् । तस्मिंश्च व्यक्त्यन्तरेऽनुपलब्धिप्रसङ्गात् । न चांशेनागता अंशेनैव च तत्रैवावस्थितेति शक्यते वक्तुम् निरंशत्वात् । एवं व्यक्तिनाशे न च तत्रैव पश्चादवस्थिता, अनुपलब्धेः । न विनष्टा, नित्यत्वात् । न चान्यत्र याति, अमूर्तत्वात् । व्यक्त्यन्तरे च पूर्वमेवावस्थिता जातिरिति पुनः प्रवेशे द्विगुणोपलभ्येत । कथं च नानाविधास्वतीतानागतवर्तमानासु व्यक्तिषु अवयवशो वृत्तिः संभाव्यते । व्यक्तौ च वर्तमानेह प्रत्ययमनुभवेत् । न चेह गोत्वमिति कस्यचित्प्रतीतिरस्ति ॥ अथ व्यक्तेरात्मैव जातिर्न तदाधारं वस्त्वन्तरमिति चेत् । नैवं युक्तम् । कथं हि नानाभूतानामनित्यानां व्यावृत्तस्वभावानामेकरूपा नित्यानुवृत्तिस्वभावा च जातिरात्मा स्यात् । त्रैलोक्यसङ्करप्रसङ्गात् ॥ न च प्रमाणमपि किंचिदाकृतिसद्भावे संभवति । न तावत् प्रत्यक्षम्, नहि जातिः स्वविषयकज्ञानं जनयति नित्यत्वाभ्युपगमात् । नित्यानां च सर्वार्थक्रियास्वसामर्थ्यात् । नवाऽजनकस्य विषयत्वं संभवति, तल्लक्षणत्वाद्विषयत्वस्य । तस्माद्विकल्पाकारमात्रं सामान्यमलीकं वा ॥ इत्यादि सौगतमतेन जातिनिरसनं पूर्वपक्षीकृत्य सिद्धान्तितम्—अत्राभिधीयते

"प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः ।
न शक्योऽपह्नवः कर्तुं सर्वं विजयते हि तत् ॥"

सर्वेष्वपि वस्तुषु 'इयमपि गौः, इयमपि गौः' 'अयमपि वृक्षः अयमपि वृक्षः' इति व्यावृत्तानुवृत्ताकारं प्रत्यक्षं देशकालावस्थान्तरेष्वविपर्यस्तमुदीयमानं सर्वमेव तर्काभासं विजित्य द्व्याकारं वस्तु व्यवस्थापयत्केनान्येन शक्यते बाधितुम् । नहि ततोऽन्यद्बलवत्तरमस्ति प्रमाणम् तन्मूलत्वात्प्रमाणान्तराणां तद्बाधसामर्थ्याभावादिति शास्त्रदीपिकायाम् ॥ ८ 'व्यक्त्यैवैकत्र सा व्यक्त्या' ॥

षयो न सञ्चरेद् न स्यादित्यर्थः । एवं विनाशपदं व्यक्तिषु ध्वंसपरं तथेति परामृष्टमाकृतौ तिरोधानपरमित्ययुक्तमिति मत्वाह—**यद्वेति** । आविधको धर्मविशेषो जातिरिति भावः ॥ **जातेनेति** । व्यासज्यसर्वाश्रयवृत्तिगोत्वं सर्वाश्रयज्ञानैरभिव्यङ्ग्यमन्यथा गोत्वज्ञानमेव न स्यादित्यर्थः । अस्तु तर्हि तत्प्रत्यक्षत्वाय तदाश्रयसर्वस्य प्रत्यक्षत्वमत आह—भाष्ये—**अनवकाशमिति** । अर्थान्तरप्रत्यायावकाशरहितं गोभूतं गोत्वप्रत्यक्षाय गोरूपं वस्तु सर्वं प्रत्यक्षं स्यात् । गोव्यक्तीनामनन्तत्वादनवकाशत्वमित्यर्थः ॥ न विद्यतेऽवकाशो यस्मादिति बहुव्रीहिरिति तात्पर्यम् । अत्र पक्षेऽप्याहाराक्लेशात्पक्षान्तरमाह—**अथ वेति** ॥ **नायातीति** । उत्पन्ने गवि व्यक्त्यन्तरादायातीति न शक्यं वक्तुं, तस्या निष्क्रियत्वात् । **न यातीति** पाठे उत्पन्नव्यक्तिं व्यक्त्यन्तरादागत्य न प्राप्नोतीत्यर्थः ॥ **न च तत्रासीदिति** । प्रागाश्रयाभावादित्यर्थः ॥ तत्रैव हेतुमाह—**अस्ति पश्चादिति** । यतः पश्चादेवास्ति अतः पूर्वं नासीदित्यर्थः । एतेन मा यासीत् मा च भूत् तत्र गोत्वमिति परास्तम् । ननु सक्रियत्वमङ्गीकृत्यांशेनागमनमस्त्वत आह—**न चांशवदिति** । निरवयवत्वेनांशाभावादित्यर्थः ॥ ननु पूर्वमाधारं त्यक्त्वात्रैवायातीत्यत आह—**जहातीति** । पूर्वत्रापि प्रतीतेरिति भावः । तस्मात्सर्वगैकेति वाच्यं ततश्च कयाचिद्व्यक्त्यैव व्यक्ता साऽभेदात्सर्वगेति वाच्यम् । ततश्च सर्वत्र दृश्येत तदाह—**सर्वेष्विति** । अत्र पक्षे गोभूतमभिव्यक्तगोत्वेन व्याप्तं तुल्यव्यक्तित्वेन जात्यन्तरावकाशरहितं सर्वं स्यादिति भाष्यार्थः ॥ जातिसंकरप्रसङ्गश्चेत्यपि बोध्यम् ।

( ७७४ व्यक्तिवादिवार्तिकम् ॥ ५३ ॥ )

## ॥ * ॥ अस्ति च वैरूप्यम् ॥ * ॥

**( भाष्यम् ) अस्ति खल्वपि वैरूप्यम् 'गौश्च गौश्च' खण्डो मुण्ड इति ॥**

( प्रदीपः ) **अस्ति च वैरूप्यमिति** । तस्माद् द्रव्यमेवास्तु न तु सामान्यम् । नह्येकस्य भेदाभेदौ विरुद्धौ उपपद्येते इत्यर्थः । एकार्थक्रियाकारित्वादिनिमित्तस्तु प्रत्यभिज्ञाप्रत्ययः ॥[1] **गौश्चेति** । भेदाधिष्ठानः समुच्चयः सामान्यस्यैकत्वाभिधेयत्वयोर्न स्यादित्यर्थः ।

( उद्योतः ) **नहीति** । एवं च तत्तच्छब्दप्रतिपाद्ये एकस्मिन् विरुद्धधर्मोपपत्तेरभावाद्द्रव्यमेव पदार्थ इति भावः ॥

भाष्ये **गौश्च गौश्चे**त्यनेनाभिप्रेतं वैरूप्यमुपपादयति—**भेदेति** । एवं खण्डो गौर्मुण्डो गौरिति च न स्यादिति भावः ॥ **प्रत्यभिज्ञाप्रत्ययस्त**द्विषयः ॥

( ७७५ व्यक्तिवादिवार्तिकम् ॥ ५४ ॥ )

## ॥ * ॥ तथा च विग्रहः ॥ * ॥

**( भाष्यम् ) एवं च कृत्वा विग्रह उपपन्नो भवति—गौश्च गौश्चेति ।**

( उद्योतः ) भाष्येऽस्ति च वैरूप्यमिति वाक्यस्थचशब्दं व्याचष्टे—**तथा च विग्रह इति** । एकार्थत्वे पर्यायाणामिव सहप्रयोगो न स्यादिति भावः ॥

( ७७६ व्यक्तिवादिवार्तिकम् ॥ ५५ ॥ )

## ॥ * ॥ व्यर्थेषु च मुक्तसंशयम् ॥ * ॥

**( भाष्यम् ) व्यर्थेषु च मुक्तसंशयं भवति । आकृतावपि पदार्थे एकशेषो वक्तव्यः ॥ अक्षाः पादा माषा इति ॥**

( प्रदीपः ) **आकृतावपीति** । यदर्थं आकृतिपक्षपरिग्रहः तदेव न सिध्यति नहि शकटाक्षदेवनाक्षादिष्वेकाकृतिसद्भावः ॥

( उद्योतः ) भाष्ये—**व्यर्थेष्विति** । विजातीयानेकार्थसरूपशब्देष्वित्यर्थः ॥ **मुक्तसंशयमिति** । एकशेषाङ्गीकरणमिति शेषः ॥[2]

( इति व्यक्तिशक्तिवादोपपत्तिः ॥ )

( ७७७ आकृतिवादिवार्तिकम् ॥ ५६ ॥ )

## ॥ * ॥ लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात् ॥ * ॥

**( भाष्यम् ) लिङ्गवचनानि सिद्धानि भवन्ति । कुतः ? गुणस्यानित्यत्वात् । अनित्या गुणा अपायिन उपायिनश्च ॥**

( प्रदीपः ) इदानीमाकृतिवादी दोषान् परिहर्तुमाह—**लिङ्गेति** । आकृतिसद्भावः पूर्वमेव प्रत्यक्षानुमानागमप्रवृत्तिभिः प्रतिपादितः । सर्वगतत्वेऽपि[3] पदार्थानां विचित्रशक्तियोगात् कश्चित्पदार्थः कांचिदेवाकृतिमभिव्यनक्ति न तु सर्वां सर्वः । गुणाश्चात्र द्वित्वस्त्रीत्वादयो विवक्षिताः । तैश्चाकृतेरेकार्थसमवायलक्षणः संबन्ध इत्याकृतावपि पदार्थे लिङ्गसंख्यासिद्धिरित्यर्थः ॥ **अनित्या इति** । कदाचित्स्त्रीत्वयुक्तेन[4] पिण्डेनाकृतिर्व्यज्यते कदाचित्पुंस्त्वयुक्तेन, कदाचिदेकाधारस्था[5] प्रतिपद्यते कदाचिदनेकाधारस्थेत्यर्थः ॥

( उद्योतः ) जात्यभावो व्याडिमते उक्तस्तं निरस्यति—**आकृतिसद्भाव इति** ॥ अथ वेत्यादिना व्याख्यातं **सर्वं गोभूत**मित्यादिदोषं परिहरति—**सर्वगतत्वेऽपीति** ॥ संकरोपि न,परस्परपरिहारेण भिन्नवस्तुनिष्ठानामेकत्र स्थितेः संकरत्वात् न स गोत्वादीनामिति भावः ॥ आद्यव्याख्यारीत्या दोषस्तु जातेः प्रत्येकं परिसमाप्त्यङ्गीकारेण सूद्धरः । एकैकव्यक्तिव्यङ्ग्यत्वाच्च न **विनाशेत्या**दिदोषः ॥ **न तु सर्वामिति** । यथात्मनां व्यापकत्वेऽपि क्वचित् शरीरे कश्चिदेवात्मा स्फुरति न तु सर्वः सर्वत्र तद्वदित्यर्थः ॥ **एकार्थसमवायेति** । तेन च निमित्तेन जातौ लिङ्गसंख्यारोप इत्यर्थः ॥ भाष्ये—**गुणस्येति** । जातावेकवचनम् ॥ **अनित्या इति** । अनियता इत्यर्थः । अपायित्वोपायित्वाभ्यामनियतत्वमेव भाष्ये दर्शितम् ॥[6]

**( आक्षेपभाष्यम् )**

**किं य एते शुक्लादयः ? ।**

---

१ प्रत्यभिज्ञाविषयः प्रत्यय इत्यर्थः । ( र. ना. )

२ एकशेषानङ्गीकरणार्थ इत्यर्थः । ( र. ना. )

३ जातेरिति शेषः । ( र. ना. )

४ अनेन लिङ्गमुपपादितम् । ( र. ना. )

५ अनेन वचनमुपपाद्यते । ( र. ना. )

६ अनियतत्वस्यैव प्रकृतोपयोगित्वादिति भावः । ( र. ना. )

(प्रदीपः) किं य एत इति । ते हि गुणत्वेन प्रसिद्धाः । न च तदनित्यत्वं लिङ्गवचनसिद्धौ हेतुरुपपद्यते प्रश्नः ॥

( समाधानभाष्यम् )

नेत्याह । स्त्रीपुंनपुंसकानि सत्त्वगुणाः[1] । एकत्वद्वित्वबहुत्वानि च । कदाचिदाकृतिरेकत्वेन युज्यते, कदाचिद्द्वित्वेन, कदाचिद्बहुत्वेन कदाचित्स्त्रीत्वेन कदाचित्पुंस्त्वेन कदाचिन्नपुंसकत्वेन ॥

( प्रदीपः ) प्रकरणादर्थनिश्चय इत्याह—नेत्याहेति ॥

( आक्षेपभाष्यम् )

भवेल्लिङ्गपरिहार उपपन्नः, वचनपरिहारस्तु नोपपद्यते । यदि हि कदाचिदाकृतिरेकत्वेन युज्यते कदाचिद्द्वित्वेन कदाचिद्बहुत्वेन, एका आकृतिरिति च प्रतिज्ञा हीयेत । यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम् 'एकशेषो न वक्तव्यः' इति, स च इदानीं वक्तव्यो भवति ॥

( प्रदीपः ) वचनपरिहारस्त्विति । लिङ्गपरिहारे न किंचिद् दुष्यति, वचनपरिहारे त्वभिधीयमाने एकाऽऽकृतिरिति प्रतिज्ञाहानिः, द्वित्वबहुत्वसंबन्धस्याप्यभ्युपगमात् । द्विवचन[2]बहुवचनवदनेकशब्दत्वमपि प्राप्नोतीत्येकशेषोपि वक्तव्य इत्यर्थः ॥

( उद्द्योतः ) बहुवचनवदिति । आश्रयगतसंख्यावदाश्रयबोधे दृष्टानेकशब्दत्वमपि प्राप्नोतीत्यभिमानः ॥

( भाष्यम् ) एवं तर्हि

( ७७८ न्यासान्तरवार्तिकम् ॥ ५७ ॥ )

॥ * ॥ लिङ्गवचनसिद्धिर्गुणविवक्षाऽनित्यत्वात् ॥ * ॥

( भाष्यम् ) लिङ्गवचनानि सिद्धानि भवन्ति । कुतः ? । गुणविवक्षाया अनित्यत्वात् । अनित्या गुणविवक्षा । कदाचिदाकृतिरेकत्वेन विवक्षिता भवति कदाचिद् द्वित्वेन कदाचिद्बहुत्वेन, कदाचित्स्त्रीत्वेन कदाचित्पुंस्त्वेन कदाचिन्नपुंसकत्वेन ॥

(प्रदीपः) गुणविवक्षाऽनित्यत्वादिति । स्वत आकृतेरेकत्वं द्रव्यगतद्वित्वबहुत्वविवक्षायां तु द्विवचनबहुवचने भवतः । आश्रयधर्मैराश्रितानां व्यपदेशः । यथा संपन्नो यवो विनष्टो यव इति संपत्तिविनाशाभ्यां द्रव्यगताभ्यां जातिर्व्यपदिश्यते तथा लिङ्गसंख्याभ्यामपीत्यर्थः ॥

( उद्द्योतः ) जातिर्व्यपदिश्यत इति । यव इत्येकवचनेन तत्र जातिप्राधान्यावगमादिति भावः ॥ एवं चारोपितद्वित्वादिना न प्रतिज्ञाहान्यादीति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

भवेल्लिङ्गपरिहार उपपन्नः । वचनपरिहारस्तु नोपपद्यते । यदि कदाचिदाकृतिरेकत्वेन विवक्षिता भवति कदाचिद्द्वित्वेन कदाचिद्बहुत्वेन, एका आकृतिरिति च प्रतिज्ञा हीयेत । यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तमेकशेषो न वक्तव्य इति । स चेदानीं वक्तव्यो भवति ॥

( प्रदीपः ) भवेदिति । अभ्युपगम[3]विरोधाभावात् । वचनपरिहारस्त्वभ्युपगमं विरुणद्धि द्वित्वबहुत्वयोगेऽभ्युपगतैकत्वहानादनेकशब्दत्वप्रसङ्गाच्चेत्यर्थः[4] ॥

( उद्द्योतः ) अभ्युपगममिति । गौण्य[5]प्युत्तरा संख्या पूर्वां संख्यां बाधत इति भावः ॥

( तटस्थाक्षेपभाष्यम् )

लिङ्गपरिहारश्चापि नोपपद्यते । किं कारणम् ? । आविष्टलिङ्गा[6] जातिर्यल्लिङ्गमुपादाय प्रवर्तते । उत्पत्तिप्रभृत्याविनाशात्तल्लिङ्गं न जहाति ॥

( प्रदीपः ) लिङ्गपरिहारश्चापीति । विशेषणानां चाजातेरित्यत्रोक्तमाविष्टलिङ्गा जातिरिति । ततश्चैकमेवाश्रयगतं लिङ्गमुपादत्ते सर्वदा जातिः यथा ग्राम्यपशुजातयः संघे स्त्रीत्वमेवोपाददते गाव इमा इति, अन्यास्तु पुंस्त्वमेव ब्राह्मणा इमे इति यथेत्यर्थः ॥

( उद्द्योतः ) आविष्टलिङ्गेति । स्वाश्रयेनेकलिङ्गसत्त्वेपि स्वयं यत् किंचिदेकमेवोपादत्ते तथा चानेकलिङ्गत्वासिद्धिरिति भावः ॥ उक्तमेवार्थं दृष्टान्तेनाह—ततश्चेति । न चैवं लिङ्ग[7]स्यासिद्धिः, कुतः, ब्राह्मणीशब्दवाच्यया जात्या आश्रयगतं स्त्रीत्वमेवोपादीयते ब्राह्मणशब्दवाच्यया पुंस्त्वमेवेति व्यवस्थासंभवादिति वाच्यम् । ब्राह्मणी पदार्थः, इयं ब्राह्मणव्यक्तिरिदं ब्राह्मणवस्तु ब्राह्मणी दारा इत्यादिव्यवहारानुपपत्तेरित्याशयात् ॥

( समाधानभाष्यम् )

[8]तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्, अवश्यं कश्चित्स्वकृतान्त आस्थेयः ॥

( प्रदीपः ) तस्मादिति । सिद्धान्तवादी युक्तं पक्षमाश्रयति—लौकिकमिति । स्तनकेशादिसंबन्ध इत्यर्थः । तस्मिन्नाश्रीयमाणे लिङ्गान्तरेण संबन्धो न स्यात् । तस्मात्स्वसिद्धान्तव्यवस्थाश्रीयते ॥

( उद्द्योतः ) सिद्धान्तवादीति । आकृतिवादीत्यर्थः ॥ स्तनकेशादीति । केशो भर्गम् ॥ लिङ्गान्तरेणेति । ब्राह्मणी दारा इत्यादौ द्रव्यद्वारा[9] जातेर्लिङ्गान्तरेण योगो न स्यात् तटस्तटी[10]त्यादौ च कस्यापि लिङ्गस्य योगो न स्यादिति भावः । शब्दविशेषापेक्षया तु जातेराविष्टलिङ्गत्वोक्तिरिति तात्पर्यम् ॥ भाष्ये—कृतान्तः । सिद्धान्तः ॥

१ द्रव्यगुणा इत्यर्थः । ( र. ना. ) २ यथानेकजातिबोधनार्थं द्विवचनादिप्रयोगस्तथाऽनेकशब्दप्रयोगोऽपि प्राप्नोतीत्यर्थः । ( र. ना. ) ३ अभ्युपगमः सिद्धान्तः । ( र. ना. ) ४ 'त्वयोगाभ्युपगमेनैकत्व'। ५ ननु द्वित्वादिविवक्षायामपि एकाऽऽकृतिरित्यभ्युपगमस्य न हानिः, द्वित्वादिसत्त्वेऽपि एकत्वसंख्याया अव्याहतत्वादत आह । ( र. ना. ) ६ नियतलिङ्गा इत्यर्थः । ( र. ना. )

७ एवं कुतो लिङ्गस्यासिद्धिः, न कुतोऽपीत्यर्थः । ( र. ना. ) ८ 'तस्मान्न वैयाकरणैः—इत्यारभ्य 'उभयोरप्यविवक्षायां नपुंसकम्' इत्यन्तो भाष्यपाठः स्त्रियामिति सूत्रे वक्ष्यमाण एवोपन्यस्तः । अतोऽस्य व्याख्याविशेषस्तत्र द्रष्टव्यः । ९ सामानाधिकरण्यसंबन्धेन लक्षणयेत्यर्थः । ( र. ना. ) १० 'त्यादावेकस्यापि'।

( आक्षेपभाष्यम् )

कोऽसौ स्वकृतान्तः ? ।

( ७७९ समाधानवार्तिकम् ॥ ५८ ॥ )

**॥ * ॥ संस्त्यानप्रसवौ लिङ्गम् ॥ * ॥**

**( भाष्यम् ) संस्त्यानप्रसवौ लिङ्गमास्थेयौ ॥**

( आक्षेपभाष्यम् )

**किमिदं संस्त्यानप्रसवाविति ? ॥**

( उद्द्योतः ) किमिति । संस्त्यानप्रसवशब्दयोः कोर्थ इति प्रश्नः ॥

( ७८० समाधानवार्तिकम् ॥ ५९ ॥ )

**॥ * ॥ संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् ॥ * ॥**

(उद्द्योतः) उत्तरं—संस्त्यान इति । संस्त्यानेऽभिधेये स्त्यायतेर्ड्रट्प्रत्ययान्तस्त्रीशब्द इत्यर्थः । सूतेः सप्, सकारस्य पकार इत्यर्थः[2] । प्रसवेभिधेये पुमानिति शब्दः ॥

( आक्षेपभाष्यम् )

**ननु च लोकेपि स्त्यायतेरेव स्त्री सूतेश्च पुमान् ॥**

( समाधानभाष्यम् )

**अधिकरणसाधना लोके स्त्री—स्त्यायत्यस्यां गर्भ इति, कर्तृसाधनश्च पुमान् सूते पुमानिति । इह पुनरुभयं भावसाधनं स्त्यानं प्रवृत्तिश्च ॥**

( उद्द्योतः ) गर्भः शुक्रं स्त्यायति शोणितेन संघीभवतीत्यर्थः । सूते शुक्रं त्यजति योनिरूपे आधारे ॥ स्त्यानमपचयः । प्रवृत्तिर्वृद्धिः ॥

( आक्षेपभाष्यम् )

**कस्य पुनः स्त्यानं स्त्री, प्रवृत्तिर्वा पुमान् ? ।**

( समाधानभाष्यम् )

**गुणानाम् ? ॥**

**केषाम् ? ।**

**शब्दस्पर्शरूपरसगन्धानाम् । सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः । यत्राल्पीयांसो गुणाः तत्रावरतस्त्रयः शब्दः स्पर्शो रूपमिति । रसगन्धौ न सर्वत्र । प्रवृत्तिः खल्वपि नित्या । नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्धते । यावदनेन वर्धितव्यमपचयेन वा युज्यते । तच्चोभयं सर्वत्र ॥**

( प्रदीपः ) गुणानां सत्त्वरजस्तमःपरिणामरूपाणां शब्दादीनां वृद्धिह्रासमध्यस्थावस्थाः शब्दैकगोचराः लिङ्गत्वेन परिगृह्यन्ते । आत्मनस्त्वपरिणामिरूपत्वादप्रवृत्तिधर्मत्वेप्यन्यप्रवृत्त्यनुयायित्वाल्लिङ्गयोगः ॥

( उद्द्योतः ) शब्देत्यादि । इदमुपलक्षणं सत्त्वादिकार्यमात्रस्येति बोध्यम् ॥ उपलक्षणत्वं ध्वनयन्नुक्तयोर्व्याप्तिमाह—सर्वाश्चेति ॥ मूर्तयः पदार्थाः ॥ एवमात्मिका इत्यस्य विवरणं संस्त्यानेत्यादिगन्धवत्य इत्यन्तम्, पृथिव्यपेक्षयाऽप्सु अल्पे, अप्पृथिवीभ्यां तेजसि अल्पे इत्यल्पीयांसः । त्रय इत्युपलक्षणं वायौ रूपाभावात्, आकाशे स्पर्शस्याप्यभावाच्च ॥ वस्तुतस्तेजोबन्नरूपाणां सर्वमूर्तीनां त्रिवृत्करणमात्राभिप्रायेणेदमुक्तम्, वाय्वाकाशशब्दवाच्ययोर्लिङ्गव्यवहारस्तु ईश्वर इव स्वकार्यतेजोबन्नगतोपचयारोपेणेति बोध्यम् ॥ प्रवृत्तिः खल्वपीति । परिणाम इत्यर्थः । प्रतिक्षणंपरिणामित्वाद्वस्तूनाम् ॥ नहीति । अस्यावतिष्ठत इत्यनेनान्वयः, किं तु परिणमत एवेति शेषः ॥ तच्चोभयमिति । वृद्ध्यपचयरूपमित्यर्थः ॥ सर्वत्रेति । पदार्थ इत्यर्थः । सर्वदेत्यपि बोध्यम् ॥ कैयटे गुणानामिति शब्दादीनामित्युपलक्षणं सत्त्वकार्यमात्रस्य । अन्यथाशब्दे लिङ्गव्यवहारो न स्यात् ॥ तासां लिङ्गत्वे प्रमाणं दर्शयति—शब्दैकेति । शब्दजन्यबोधविषया इत्यर्थः ॥ अप्रवृत्तिधर्मत्वेपि । स्वतो लिङ्गरहितत्वेपि ॥ अन्यप्रवृत्त्यनुयायित्वादिति । परिणामवदन्यतादात्म्याध्यासेन तत्परिणामानुयायित्वादित्यर्थः ॥ एवं च प्रकृतिपरिणामविशेषरूपजातेः स्वत एव लिङ्गयोग इति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

**यद्युभयं सर्वत्र, कुतो व्यवस्था ? ।**

( समाधानभाष्यम् )

**'विवक्षातः ।' संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयोरप्यविवक्षायां नपुंसकम् ॥**

( आक्षेपभाष्यम् )

**तत्र *लिङ्गवचनसिद्धिर्गुणविवक्षाऽनित्यत्वात्* इति लिङ्गपरिहार उपपन्नः, ॥**

**वचनपरिहारस्तु नोपपद्यते ॥**

( समाधानभाष्यम् )

**वचनपरिहारश्चाप्युपपन्नः । इदं तावदयं प्रष्टव्यः—अथ यस्य द्रव्यं पदार्थः कथं तस्य एकवचनद्विवचनबहुवचनानि भवन्तीति । एवं स वक्ष्यति एकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनमिति । यदि तस्यापि वाचनिकानि, न स्वाभाविकानि । अहमप्येवं वक्ष्यामि एकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनमिति । नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वा**

१ अस्य वार्तिकत्वं न मन्यन्ते बहवः । वार्तिकस्य व्याख्याऽवश्यं सर्वत्र दृश्यते । तथात्र नोपलभ्यतेऽतोऽस्य समाधानभाष्यत्वमेवेति तेषामाशयः ॥ २ सकारस्य पकार इत्यर्थे षष्ठीतत्पुरुषः सप्पदे इति भावः. । सूतेरौणादिकोड्रुम्सुन्प्रत्यय इत्यपि बोध्यम् । यद्वा तत एव धातोर्म्सुन्प्रत्यय औणादिको बाहुलकाद् ह्रस्वत्वश्च । ( र. ना. ) ३ पदार्थ इति शेषः । ( र. ना. ) ४ संस्त्यानप्रसवयोरित्यर्थः । ( र. ना. ) ५ Bangal Asiatic Society मुद्रितपुस्तके 'इत्यत्र' इति पाठकल्पनं तु शोधकपाण्डित्यमूलमेव ॥ ६ अत्रं पृथिवी । ( र. ना. ) ७ नित्या इति भाष्यस्थ पदस्य सततभाविनी इत्यर्थ इति भावः । ( र. ना. ) ८ शब्दादौ शब्दाद्यभावेन तद्वृद्ध्यादिरूपलिङ्गस्याप्यभावेनेति भावः । ( र. ना. ) ९ संस्त्यानप्रसवोभयमित्यर्थः । ( र. ना. ) १० 'उभयविवक्षायाम्' इति 'स्त्रियाम्' इति सूत्रे भाष्ये पाठः ॥

आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित्किंचित्प्रधानभूतं किंचिद् गुणभूतम्। आकृतिपदार्थकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता॥

(प्रदीपः) वाचनिकानीति। संकीर्णप्रयोगोपलम्भात् असंकरार्थो यथा द्रव्यपदार्थकस्य वाचनिको वचननियमः तथाकृतिवादिनोपि। स ह्येवं व्याचष्टे एकाश्रयसंबन्धविवक्षायामाकृतेरेकवचनं यथा पशुना यजेतेति। अनेकाश्रयसंबन्धविवक्षायां द्विवचनबहुवचने॥ ननु द्रव्यस्यानभिधेयत्वात्कथं तत्कृत आकृतेर्वचनोपकार इत्याह—नहीति। तत्र यथा पचति पचतः पचन्तीति क्रियाप्राधान्येपि साधनसंख्याकृतो वचनभेदः एवमाकृतिप्राधान्येपि द्रव्यसंख्याकृत इत्यदोषः॥

(उद्योतः) भाष्ये—कथं तस्येति। असंकरेणेति शेषः॥ ननु शब्दनित्यतायां वाचनिकानीत्ययुक्तमत आह—संकीर्णेति। गोदौ पञ्चाला इत्यादावेकत्रापि द्विवचनादिदर्शनेन सांकर्यमिति भावः॥ व्याचष्टे इति। ह्येकयोरित्यादिसूत्राणीति भावः॥ अभिधेयत्वेप्युपसर्जनत्वात्कथं तत्कृत उपकारोत आह—तत्र यथेति॥ भाष्ये—द्रव्यं गुणभूतमिति। अस्योपपत्तिरुक्ता जात्याख्यायामितिसूत्रे॥ साधनसंख्याकृत इति। साधनसंख्यारोपकृत इत्यर्थः॥ इत्यदोष इति। एवं च लिङ्गयोगः स्वत एव। संख्यायोगस्त्वारोपेण। एका आकृतिरिति प्रतिज्ञा नारोपितसंख्याभिप्राया, नाप्येकशेषारम्भः। अनेकशब्दप्रयोगे मानाभावादिति तात्पर्यम्॥ अत्र भाष्ये द्रव्यपदार्थवादे आकृतेर्विशेषणत्वोक्त्या तज्जातीनुगतीकृतानेकव्यक्तिबोधस्यैकस्मादेव शब्दात्सम्भवेन नानाशब्दप्रयोगाप्राप्त्या तत्पक्षेप्येकशेषो न कार्य इति सूचितम्॥ जातिवादे व्यक्तिर्द्रव्यवादे जातिः शक्यतावच्छेदिकेति च सूचितम्॥

(७८१ आकृतिवादिवार्तिकम्॥ ६०॥)

## ॥ * ॥ गुणवचनवद्वा ॥ * ॥

(भाष्यम्) गुणवचनवद्वा लिङ्गवचनानि भविष्यन्ति। तद्यथा—गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति। एवमिहापि यदसौ द्रव्यं श्रिता आकृतिस्तस्य यल्लिङ्गं वचनं च तदाकृतेरपि भविष्यति॥

(प्रदीपः) यदसाविति। जातितद्वतोरभेदाध्यवसायाद् द्रव्यात्मा जातिः प्रतीयमाना तद्गतलिङ्गसंख्याग्राहिणीत्यर्थः॥

(उद्योतः) ननु गुणवचनानामित्यादिवचनात्तत्रास्तु तथा, इह तु अजातिरिति निषेधात्कथं तत्प्रवृत्तिरत आह—जातितद्वतोरिति। न त्वत्र तद्वचनप्राप्तिः। अत एव गुणवचनवदिति भाष्य उक्तमिति भावः॥ यद्यपि जातेराश्रयतो न लिङ्गादीति विशेषणानां चेत्यत्रोक्तम्, तथापि विशेष्यगतलिङ्गादिनिषेधः सः। तत्राश्रयपदेन विशेष्यग्रहणाद्। इह त्वाश्रयपदेनाधारो गृह्यत इति न विरोध इति भावः॥ अत्र चामेद एव बीजं, यो यदभेदमापन्नः स स्वामिन्नाश्रयगतलिङ्गवचनादिग्राहीति नियमात्। इयांस्तु विशेषः, शुक्लादिशब्दवाच्यगुणानां गुणिना भेदाभेदविवक्षे शब्दवाच्यजातेस्त्वभेदविवक्षैवेति॥ परे तु तयोरभेदमादाय ग्रन्थयोजने तदभेदादेवारम्भणादीन्यपि तत्र भविष्यन्तीत्यधिकरणगतिरित्युत्तरग्रन्थानुत्थानमतो गुणवचनानां विशेष्यगतलिङ्गादिग्राहित्ववज्जातेराश्रयगतलिङ्गादिग्राहित्वं स्वभावादित्येतद्भाष्यार्थमाहुः॥

(७८२ आकृतिवादिवार्तिकम्॥ ६१॥)

## ॥ * ॥ अधिकरणगतिः साहचर्यात्॥ * ॥

(भाष्यम्) आकृतावारम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादीनि भविष्यन्ति॥

(प्रदीपः) *चोदनासु च तस्यारम्भात्* इति यदुक्तं तत्परिहारार्थमाह—अधिकरणगतिरिति। यथाभिरानीयतामित्युक्ते केवलस्याभेरानयनासंभवान्नान्तरीयकत्वाद्चोदितमपि पात्रमानीयते एतदेवाभेरानयनं यत् पात्रस्थस्य, तथा आकृतीवारम्भणादीनि चोद्यमानानि सामर्थ्यात् साहचर्याद् द्रव्यमभिनिविशन्ते। सर्व एवाकृतेः क्रियायोगोऽन्तर्भावितद्रव्याया एवेति द्रव्यद्वारकः संपद्यते॥

(उद्योतः) भाष्ये—आकृताविति। प्रधानभूतायामित्यादि। आकृतिरेव तज्जन्यबोधे प्रधानम्, क्रिया तु पात्रे इव द्रव्य

---

१ 'यदा'। २ 'तदा'। ३ 'क्षायां तु'। ४ आकृतिवादिमते द्रव्यस्याभिधेयत्वेऽपि जातावुपसर्जनत्वादित्यर्थः। (र. ना.) ५ Bangal Asiatic Society मुद्रितपुस्तके 'शुक्लीकृता' इति पाठस्तु शोधकपाण्डित्यातिशयेचेति बोध्यम्। ६ असौ गुणो यद् द्रव्यं श्रितो भवति तस्य द्रव्यस्य यल्लिङ्गं वचनं च गुणस्यापि तद् भवतीति योजना। एवं मनन्तरग्रन्थस्यापि संबन्धो द्रष्टव्यः। (र. ना.) ७ 'वचनात्'। ८ इदं च वार्तिकम् "यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचार इति निमित्तादतद्भावेपि तदुपचारो दृश्यते खलु" इति प्रतिज्ञाय—"सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः" (२ अ. २ आ. ५९ सू.) इति गौतमसूत्रेण "अतद्भावेऽपि तदुपचार इत्यतच्छब्दस्य तेन शब्देनाभिधानमिति। सहचरणाद् 'यष्टिकां भोजय' इति यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति स्थानाद्—मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते। तादर्थ्यात्—कटार्थेषु वीरणेषु व्यूह्यमानेषु कटं करोतीति भवति। वृत्ताद् यमो राजा कुबेरो राजेति तद्वद्वर्तते इति। मानाद् आढकेन निर्मिताः सक्तवः आढकसक्तव इति। धारणात् तुलायां धृतं चन्दनं तुलाचन्दनमिति। सामीप्याद् गङ्गायां गावश्चरन्तीति देशोभिधीयते संनिकृष्टः। योगात् कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते। साधनाद्—अन्नं प्राणा इति। आधिपत्यात्—अयं पुरुषः कुलम् अयं गोत्रमिति॥ तत्रायं सहचरणाद्योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति" वात्स्यायनभाष्येण संवदति।

इति भावः । शब्दबोधे तु न बाधज्ञानं प्रतिबन्धकमिति न तदनुपपत्तिः ॥ **सर्वएवेति** । गौरानीयतामित्यादिरपीत्यर्थः ॥ भाष्ये—**आरम्भणं** क्रयः । **आलम्भनं** स्पर्शः ॥ **आकृतिसहचरिते इति** । आकृत्याश्रये इत्यर्थः ॥

( ७८३ आकृतिवादिवार्तिकम् ॥ ६२ ॥ )

**॥ * ॥ न चैकमनेकाधिकरणस्थं युगपदित्यादित्यवद्विषयः ॥ * ॥**

**(भाष्यम्) न खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यत इत्यादित्यवद्विषयो भविष्यति। तद्यथा। एक आदित्योनेकाधिकरणस्थो युगपदुपलभ्यते ॥**

( आक्षेपभाष्यम् )

**विषम उपन्यासः। नैको द्रष्टाऽनेकाधिकरणस्थमादित्यं युगपदुपलभते ॥**

( समाधानभाष्यम् )

**एवं तर्हि—**

( ७८४ आकृतिवादिवार्तिकम् ॥ ६३ ॥ )

**॥ * ॥ इतीन्द्रवद्विषयः ॥ * ॥**

**(भाष्यम्) तद्यथैक इन्द्रोनेकस्मिन्क्रतुशत आहूतो युगपत्सर्वत्र भवत्येवमाकृतिर्युगपत्सर्वत्र भवेदिति।**

( **उद्योतः** ) **इतीन्द्रवदिति** । स्वभावाद्धेतुरहितदृष्टान्तेनाप्यनेकवृत्तित्वं जातेरभ्युपगम्यत इत्यर्थः ॥

( ७८५ आकृतिवादिवार्तिकम् ॥ ६२ ॥ )

**॥ * ॥ अविनाशोऽनाश्रितत्वात् ॥ * ॥**

**( भाष्यम् ) द्रव्यविनाशे आकृतेरविनाशः ॥ कुतः ? । अनाश्रितत्वात् । अनाश्रिता आकृतिर्द्रव्यम् ॥**

( **प्रदीपः** ) **अनाश्रितत्वादिति** । यथा गुणानां द्रव्याधीनस्थितित्वादाश्रितत्वम्, नैवमाकृतेः ? अन्यत्रापि[3] प्रत्ययाभिधानयोराकृतिनिमित्तयोर्भावान्नित्यत्वं तस्या इत्यर्थः ॥

( **उद्योतः** ) नन्वनेकव्यक्तिवृत्तीति सामान्यलक्षणविरुद्धमेतदत आह—**यथेति** । द्रव्याधीनस्थितिकत्वमाश्रितत्वं विवक्षितमित्यर्थः ॥ **अन्यथापीति** । कर्णशष्कुल्यनधीनस्थितिकस्याप्याकाशस्य तदवच्छिन्नतया श्रोत्ररूपत्ववद् द्रव्यमनाश्रितस्यापि महासामान्यस्य नित्यस्य गवादिद्रव्यपरिच्छिन्नतया गोत्वादिरूपतेत्यर्थः ॥ **अन्यत्रापीति** क्वचित्पाठः ॥ तत्र व्यवस्थान्तर इत्यर्थः ॥ **प्रत्ययो**, ज्ञानम् । **अभिधानं**, शब्दः ॥

( आक्षेपभाष्यम् )

**किमुच्यते अनाश्रितत्वादिति, यदिदानीमेवोक्तम्—*अधिकरणगतिः साहचर्यादिति ? ॥**

( **प्रदीपः** ) इतरः संबन्धमात्रमाश्रितत्वं मत्वा पृच्छति—**किमुच्यत इति ॥**

( समाधानभाष्यम् )

**एवं तर्हि—**

( ७८६ न्यासान्तरवार्तिकम् ॥ ६२ ॥ )

**॥ * ॥ अविनाशोऽनैकात्म्यात्[4] ॥ * ॥**

**( भाष्यम् ) द्रव्यविनाशे आकृतेरविनाशः । कुतः ? । अनैकात्म्यात् । अनेक आत्मा आकृतेर्द्रव्यस्य च । तद्यथा—वृक्षस्थोऽवतानो वृक्षे छिन्नेपि न विनश्यति ॥**

---

१ इतीति । इति चेदित्यर्थः । इति यदुक्तं तत्परिहाराय 'आदित्यवत्' इति बोध्यमिति भावः । २ 'अन्यथापि' । ३ आकृतिनिमित्तयोरिति बहुव्रीहिः । ( र. ना. ) ४ आकृतिवादिसंदर्भमिममनुसृत्य भट्टपादैरप्युक्तम्—

"आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः ।
संदेहाच्चरमज्ञानाच्चित्रबुद्धेरभावतः ॥
अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः ।
आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता ॥
व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता ।
लिङ्गसंख्यादिसंबन्धाः सामानाधिकरण्यधीः ॥
सर्वं समञ्जसं ह्येतद्वस्त्वनेकान्तवादिनः ।
लक्षणा वाभ्युपेतव्या जातेस्तेनाभिधेयता ॥"

इति ॥ व्याख्यातं चैतच्छास्त्रदीपिकायाम्—'नह्यनन्तासु व्यक्तिषु संज्ञित्वं शक्यतेऽवगन्तुम् । व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वम् नियमलक्षणत्वात्संबन्धस्यानियमे तदयोगात् । अनन्ताश्च शब्दव्यक्तयोऽनन्तासु व्यक्तिषु कल्प्याः । जात्युपलक्षणत्वेऽप्यभिधेयानामनन्तत्वाच्छक्त्यानन्त्यमस्त्येव । व्युत्पत्तिकाले हि जातिरुपलक्षणम्, नत्वभिधानसमये । अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तीनाम् । तद्यथा—अक्षत्रयमेकापवरकस्थमेकापवरकस्थित्यैवोपलक्ष्य कश्चित् कंचिदाह—'य एतस्मिन्नपवरकेऽधुना आसते ते त्रयोऽक्षशब्दाभिधेयाः' इति । तत्र यद्यपि व्युत्पत्तिसमयेऽपवरकस्थितिर्नामैकमुपलक्षणं लभ्यते तथापि शब्दस्तदनादरेण व्यक्तित्रयमेव स्वरूपेणाभिधत्ते इति भवति शक्तित्रयम् । एवमिहापि यद्यपि व्युत्पत्तिसमये जातिरेकोपलक्षणमासीत्तथापि शब्दस्तामस्पृशन्नेव नानारूपा व्यक्तीः स्वेन रूपेणाभिधत्ते इति स्यादेव शक्त्यानन्त्यम् । अपिच यद्व्यपदेश्यं धर्मिरूपमभिधेयं ततो गोशब्दोच्चारणात्काचिद् व्यक्तिः प्रतीयमानाऽपि नाश्वादिव्यक्तिभ्यो व्यवच्छिन्ना प्रतीता स्यात् । नह्यसाधारणमाकारमन्तरेण द्रव्यं द्रव्यान्तरव्यवच्छिन्नं प्रतीयते । तत्र गौरित्युक्ते सर्वत्राविशिष्टा प्रतीतिः स्यात् ॥ अथाभिधानसमय एव जातिरुपलक्षणमिति, अभिदधदेव हि व्यक्तिं शब्दो जातिमुपलक्षणमादाय तज्जातीयरूपेणाभिधत्ते गोजातीयमिति ततः प्रथमं जातिरभिधातव्या । नह्यनभिधाय जातिं तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते । ततश्च विशिष्टाभिधानमेव वाचोयुक्त्यन्तरेणापन्नं न शुद्धाभिधानम् । विशिष्टाभिधाने च पूर्वतरं विशेषणमभिधातव्यम् । तदभिधाने च तत एवात्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धेर्न तत्राभिधानशक्तिकल्पनावसरः । किंच गोशब्द उच्चारिते व्यक्तिषु संशयो भवति न कस्यां चिन्निर्णयः । यत्र च संशयो न तस्यामभिधेयता, शब्दस्य निश्चायकत्वात् । सामान्यं तु निर्णीयत इति भवत्यभिधेयम् । नन्वसत्यपि व्यक्तिविशेषनिर्णये व्यक्तिमात्रं निर्णीयत एव । किमिदं व्यक्तिमात्रं, सामान्यं, विशेषो वा, द्व्याकारैव हि वस्तुषु बुद्धिर्व्यावृत्त्यनुगतरूपा । तत्र विलक्षणबुद्ध्यालम्बनं च व्यक्तिः, समानबुद्ध्यालम्बनं च सामान्यम् । न तदुभयातिरिक्तं व्यक्तिमात्रं नाम किंचिदस्ति वस्तुनो रूपम् । सामान्यमेव त्वनेन मात्रशब्देना-

( प्रदीपः ) **अनैकात्म्यादिति** । पूर्वोक्त एवार्थो विच्छिन्यानेन प्रतिपाद्यते नित्या आकृतिरेका सर्वत्रगा, तद्विपरीतं द्रव्यमिति भेदाद् द्रव्यविनाशेपि न जातेर्विनाशः । गुणानां तु द्रव्याधीनस्थित्युत्पत्तित्वादाश्रयनाशेऽवश्यं नाश इति न तैर्व्यभिचारः ॥ **वृक्षस्थोवतान इति** । यथा वृक्षस्योपरि द्राक्षादिलतावतानः स्थितो न वृक्षविनाशमनु विनश्यति तथा जातिरपीत्यर्थः ॥

( उद्योतः ) **पूर्वोक्त एवेति** । अनाश्रितत्वादिरेप एवेत्यर्थः ॥ **भेदादिति** । नित्यमेकमनेकव्यक्तिवृत्ति सामान्यम्, तद्विपरीतं द्रव्यमिति भेद इत्यर्थः ॥ अनैकात्म्यादित्यस्य भिन्नस्वभावत्वादित्यर्थं इति भावः ॥

( ७८७ आकृतिवादिवार्तिकम् ॥ ६३ ॥ )

## ॥ * ॥ वैरूप्यविग्रहौ द्रव्यभेदात् ॥ * ॥

( भाष्यम् ) **वैरूप्यविग्रहावपि द्रव्यभेदाद्भविष्यतः ॥**

( प्रदीपः ) **वैरूप्यविग्रहाविति** । द्रव्याणां स्वगतभेदप्रतिबद्धौ वैरूप्यविग्रहावित्यर्थः । तत्र द्रव्यगतभेदोपचारादेकस्यामप्याकृतौ समुच्चयोपपत्त्या विग्रहो न विरुध्यते ॥

( उद्योतः ) ननु विग्रहसत्त्वे द्वन्द्वापत्तिरत उक्तं **समुच्चयोपपत्त्येति** । तत्र तु सहविवक्षाभावान्न द्वन्द्व इति भावः ॥ सहविवक्षायां तु न तथा प्रयोगोऽनभिधानादिति बोध्यम् ॥ द्रव्यगतलिङ्गादिग्राहित्ववत्तद्गतभेदग्राहित्वमपि तस्या इति बोध्यम् ॥

( ७८८ आकृतिवादिवार्तिकम् ॥ ६४ ॥ )

## ॥*॥ व्यर्थेषु च सामान्यात्सिद्धम् ॥*॥

( भाष्यम् ) **विभिन्नार्थेषु च सामान्यात्सिद्धम् । सर्वत्र अक्षोतेरक्षः, पद्यतेः पादः, मिमीतेः माषः । तत्र क्रियासामान्यात्सिद्धम् ॥**

( प्रदीपः ) **क्रियासामान्यादिति** । भिन्नासु क्रियासु अभिन्नप्रत्ययाभिधाननिमित्तं यत्सामान्यं तदेव द्रव्येष्वपि तन्निमित्तं भवति । यथा पाचक इत्याश्रयान्तरगतमपि हि सामान्यं समवेतसमवायाद् द्रव्ये उपकरोति । यथा गैरिकादिगतं लौहित्यं संयुक्तसमवायात् पटे लौहित्यप्रत्ययमादधाति ॥

( उद्योतः ) **भिन्नास्विति** । आश्रयभेदात्कर्मभेदाच्चेत्यर्थः ॥ **तदेवेति** । समवेतसमवायेनेत्यर्थः ॥ आश्रयान्तरगतं पाकक्रियागतम् ॥ सामान्यं पाकत्वादि ॥ परम्परयोपकर्तृत्वे दृष्टान्तमाह— **यथेति** । एवं च व्याप्यादिगतसामान्यस्य परम्परया द्रव्ये सत्त्वेन तत्तज्जातिविशिष्टस्य द्रव्यस्य वाच्यत्वमिति भावः ॥ न चैवं नानार्थोच्छेदः, नानाजातीनां संबन्धघटकत्वेन नानार्थत्वोपपत्तेः ॥ तत्तत्क्रियारूपसामान्यसमनियतस्याक्षत्वादेर्जातिरूपस्याक्षपदार्थत्रयसाधारणस्यापि शक्यतावच्छेदकत्वशक्यत्वान्यतराङ्गीकारासिद्धमिति भाष्यार्थमन्ये ॥ सूत्रारम्भेपीदमावश्यकमेकरूपेणैव सर्वार्थबोधादिति भाव इति बोध्यम् ॥

( व्याख्यान्तरभाष्यम् )

**अपरस्त्वाह—पुरा कल्प एतदासीत्षोडश माषाः कार्षापणम्, षोडशपलाश्च माषशंवत्यः । तत्र संख्यासामान्यात्सिद्धम् ॥ सरूपाणाम् ॥ ६४ ॥**

( प्रदीपः ) **पुरा कल्प इति** । पुरा कल्पे प्रसिद्धोर्थः संप्रति निमित्ताभावेपि तथैव व्यपदिश्यते ॥ **माषशंवत्य इति** । तत्र षोडशभागत्वेन माषः प्रसिद्धः तथैव कार्षापणे माषः [षोडशभाग इति] षोडश[भाग]त्वं नाम सामान्यमुपादत्ते माषशब्द इति सिद्धमेकशब्दत्वम् ॥ **संख्यासामान्यादिति** । संख्यैव सामान्यमभिन्नप्रत्ययहेतुत्वात् ॥ ननु षोडशसंख्या षोडशसु पदार्थेषु व्यासज्य स्थिता न त्वेकस्मिन् षोडशे । एवं तर्हि षोडशसंख्यापूरणत्वं नाम यत्सामान्यं तत्संख्यामूलत्वात्संख्यासामान्यमुच्यत इत्यदोषः ॥ अथ डित्था इति भिन्नेषु संज्ञिष्वेकाकृत्ययोगात् कथमेकशब्दवाच्यत्वम् ॥ उच्यते । भिन्नडित्थशब्दगतं डित्थशब्दत्वं नाम यथा शब्देष्वभिन्नप्रत्ययाभिधानहेतुः तथा सोयमिति शब्दार्थयोरभेदाध्यवसायादध्यस्तडित्थशब्देषु संज्ञिष्वपि संबन्धिसंबन्धादभिन्नप्रत्ययाभिधाननिमित्तमिति सिद्धमेकशब्दवाच्यत्वम् ॥ तथा ताविलेताविति च परोक्षत्वप्रत्यक्षत्वादिकं सामान्यमाश्रयणीयम् । गोत्वाश्वत्वे सामान्ये इति व्यावृत्तेष्वनुवृत्तप्रत्ययहेतुसामान्यानामपि सामान्यमाश्रयितव्यम् । अथ वा **निःसामान्यानि सामान्यानीति** तार्किकदर्शनं न वैयाकरणैर्नियोगत आस्थेयम् । कार्योन्नीयमाना हि तेषाम् पदार्था इति सामान्येष्वपि सामान्यमस्ति । अभावाश्वत्वार इत्यत्रापि निरुपाख्यत्वं सामान्यं कल्पनीयम् । तदेवं सर्वत्राकृतिसद्भावात्सिद्धमेकशब्दत्वम् ॥ ६४ ॥

---

भिधीयते इति तदेवाभिधेयम् । प्रथमं च सामान्यमेव शब्दाद्गम्यते पश्चाच्च व्यक्तिष्वाकाङ्क्षामात्रं जायते । ततस्तदेवाभिधेयं न व्यक्तिविशेषः । विषाणश्च खण्डमुण्डादिरूपा व्यक्तय इति विचित्रा गोशब्दोच्चारणे बुद्धिः स्यात् । एकाकारा तूत्पद्यते । अतोऽभिधेया जातिः । अन्वयव्यतिरेकाभ्यां चैवमेव युक्तम् ॥ व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते । अतोऽभिधेया जातिः । नहि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वम् । अपि तु वस्त्वेव हि एकमुभयात्मकं व्यावृत्त्यनुगततरूपतया बुध्यते ॥ तत्र सामान्यं शब्दार्थ इति । अयमर्थः—सामान्यात्मना वस्तु शब्दाद्गम्यते, न विशेषात्मनेति । यच्च सामान्यात्मना शब्देन बोधितं तस्य क्रियासंबन्धश्चोद्यते । शक्नोति च तत् क्रियां साधयितुम् । अतस्तदेव क्रियाश्रयविशेषरूपमपि । लिङ्गसंख्याकारकसंबन्धः सामानाधिकरण्यं च सर्वमनेकान्ताश्रयेणैव सुपरिहारम् । यदा तु भेद एव जातिव्यक्त्योस्तदा सर्वमिदं लाक्षणिकव्यक्त्याश्रयणेनोपपद्यते । यत्र तु 'पशुना यजेत' 'अरुणया क्रीणाति' इत्येवमादौ करणत्वश्रवणं तत्र जातिगुणयोरेवामूर्तयोरपि द्रव्यपरिच्छेदेन मुख्यमेव करणत्वमुपपन्नम् ॥ अधिकरणसंप्रदानादिरूपत्वं चामूर्तस्यासंभवादभेदं लक्षणां वाश्रित्य समर्थनीयम् ॥ आह च—

"तेन तल्लक्षितव्यक्तेः क्रियासंबन्धचोदना ।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु व्यवस्थितः ॥"

इति ॥ "तस्मात्सामान्यमेवाभिधेयम् न व्यक्तिरिति सिद्धम्" इत्याकृत्यधिकरणे पार्थसारथिमिश्रैः ॥

१ ननु आकृतिपदार्थवादिमते खण्डो गौर्मुण्डो गौरिति खण्डत्वमुण्डत्वादिरूपं वैरूप्यं गोत्वे नसिद्ध्यति । किञ्च गौश्च गौश्चेति विग्रहोऽपि न सिद्ध्यति, जातेरेकत्वादत आह वैरूप्यविग्रहाविति । द्रव्यगतं भेदं जातावारोप्य वैधर्म्यरूपं वैरूप्यं विग्रहश्च पूर्वोक्त उपपादनीयमिति भावः । ( र. ना. ) २ द्रव्याणां वैरूप्यविग्रहौ स्वगतभेदप्रयुक्तौ जातेः तौ तु स्वाश्रयभेदप्रयुक्ताविति भावः । ( र. ना. ) ३ समुच्चये इत्यर्थः । ( र. ना. ) ४ गौश्च गौश्चेत्यादिविग्रहरूपप्रयोगो नेत्यर्थः । ( र. ना. ) ५ अक्षा इत्यादाविति शेषः । ( र. ना. ) ६ अनेकजातीयानामित्यर्थः । ( र. ना. ) ७ अक्षत्वेनैव रूपेणाक्षत्रयस्यापि बोधादिति भावः । ( र. ना. ) ८ माषशंवत्यामित्यर्थः । ( र. ना. ) ९,–१० इमौ कोष्ठकान्तर्गतपाठौ क्वचिदेवोपलभ्येते ॥ ११ डित्थशब्दत्वसंबन्धिडित्थ शब्दतादात्म्यादित्यर्थः । ( र. ना. ) १२ 'नियोगादास्थे' । १३ वैयाकरणानामित्यर्थः । ( र. ना. )

(उद्द्योतः) नन्विदानीन्तनमाषस्य षोडशभागत्वाभावात्कथं संख्यासामान्यमत आह—**पुरेति** ॥ व्यपदिश्यते इति । आरोपादिति भावः । **माषशब्दवाच्यो** माषः षोडशभागपलरूपः । कार्षापणे माषः पञ्चगुञ्जामितः षोडशो भागस्तयोः षोडशभागत्वेन सामान्येन सर्वेषु माषत्वव्यवहारः । इदानीं त्वष्टगुञ्जमितमाषे षोडशत्वमारोप्य तथा प्रयोग इति भावः ॥ ननु संख्यागतं सामान्यं संख्याशब्दप्रवृत्तावेव कारणमत आह—**संख्यैवेति** । **तत्संख्येति** । संख्यामूलकत्वादित्यर्थः ॥ **अभिन्नप्रत्यय** एकाकारप्रत्ययः ॥ **अभिधानम्** । शब्दप्रयोगः ॥ **परोक्षत्वेति** । इदं बुद्धिविषयतावच्छेदकावच्छिन्नत्वादीनामुपलक्षणम् ॥ **तार्किकाः** । वैशेषिकादयः ॥ **निरुपाख्यत्वं**, विशिष्य निर्वक्तुमशक्यत्वम् तेत्स-मनियतो जातिविशेषोऽभावत्वमेव सर्वत्रेत्यन्ये ॥ ६४ ॥

( ११३ एकशेषसूत्रम् ॥ १ । २ । ३ आ. २ सू. )

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥१ । २ । ६५॥

( अनिष्टापत्तिवारणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—अजश्च बर्करश्च, अश्वश्च किशोरश्च, उष्ट्रश्च करभश्चेति ? ॥**

(प्रदीपः) **वृद्धो** ॥ ६५ ॥ **इह कस्मादिति** । उभयगतिरिह शास्त्रे सम्भवतीति मत्वा प्रश्नः ॥ अथ वा वृद्धशब्द इह शास्त्रे अपत्यविशेषे न परिभाषित इति स तावद्वयोवाची गृह्यते । तत्साहचर्याच्च युवशब्दोपि तथैवेति प्रश्नः ॥ अजोष्ट्राश्वशब्दानां जातिशब्दत्वेप्यत्र शब्दान्तरसन्निधानाद् वृद्धावस्थाभिधायित्वं द्रष्टव्यम् । अन्यथा सामान्यविशेषशब्दानां द्वन्द्वो न स्यात् । सामान्यशब्देन सर्वविशेषाणामाक्षेपाद् विशेषैः सह समुच्चयाभावात् ।

(उद्द्योतः) **वृद्धो यूना** ॥ ६५ ॥ अजबर्करादीनां वृद्धयुवसंज्ञकत्वाभावादाह—**उभयेति** ॥ **अथवेति** । स्वशास्त्रीयवृद्धसंज्ञकं तु न गृह्यते व्याख्यानादिति बोध्यम् ॥ सामान्यविशेषवाचिनां सहविवक्षाऽभावाद् द्वन्द्वाभावेन तदपवादैकशेषस्याप्यप्राप्तेराह—**अजोष्ट्रेति** । यद्यपि करभकिशोरशब्दौ शावकवचनौ तथापि भाष्यप्रामाण्यात्तरुणवचनौ बोध्यौ । **बर्करस्तरुणोऽजः** ॥ **समुच्चयाभावादिति** । सहविवक्षाऽभावादित्यर्थः ॥

( समाधानभाष्यम् )

**तल्लक्षणश्चेदेव विशेष इत्युच्यते । न चात्र तल्लक्षण एव विशेषः ॥**

(प्रदीपः) वक्ष्यमाणं मनसि कृत्वाह—**तल्लक्षणश्चेदिति** ।

(उद्द्योतः) वक्ष्यमाणम्—'यत्रोर्ध्वं प्रकृतेरित्यादि ॥

( समाधानबाधकभाष्यम् )

**तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ॥ वृद्धो यूना ॥ ६५ ॥**

(प्रदीपः) इतरोऽगृहीताभिप्राय आह—**तल्लक्षण इति** ॥ परिहारस्तु उत्तरत्र वक्ष्यते ॥ ६५ ॥

(उद्द्योतः) उत्तरत्र—भ्रातृपुत्राविलत्र ॥ ६५ ॥

( ११४ एकशेषसूत्रम् ॥ १ । २ । ३ आ० ३ सू० )

## स्त्री पुंवच्च ॥१।२।६६॥

( स्त्रीशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**इदं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते—स्त्रीग्रहणेषु स्त्रीप्रत्ययग्रहणं वा स्यात्, स्त्र्यर्थग्रहणं वा, स्त्रीशब्दग्रहणं वेति ॥**

**किं चातः? ॥**

**यदि प्रत्ययग्रहणं वा शब्दग्रहणं वा, 'गार्गी च गार्ग्यायणौ च गर्गाः' केन यशब्दो न श्रूयते 'अस्त्रियाम्' इति हि लुगुच्यते । इह च गार्गी च गार्ग्यायणौ च गर्गान्पश्य "तस्माच्छसो नः पुंसि" इति नत्वं न प्राप्नोति ॥ अथार्थग्रहणम्, न दोषो भवति ॥**

(प्रदीपः) **स्त्री पुंवच्च** ॥६६॥ **इदमिति** । यदि स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञायते—तदा स्त्र्यधिकारविहितटाबादिप्रत्ययग्रहणम् । ततश्चायमर्थः । पुंवत् स्त्रीप्रत्ययो न भवतीत्यभावातिदेशः क्रियते । स्वरितत्वाभावे तु शब्दग्रहणमर्थग्रहणं वा । तत्र शब्दग्रहणपक्षे स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवतीति स्त्रीत्वमनिवृत्तमेव ॥अर्थग्रहणपक्षे तु पुमर्थातिदेशे तदर्थप्रतिबद्धानां कार्याणां सिद्धिः । तत्रार्थस्य प्राधान्याददुष्टत्वाच्चार्थपक्ष एवाश्रीयते ॥ **अस्त्रियामितीति** । यदायं प्रसज्यप्रतिषेधः तदा दोषः । पर्युदासे तु शिष्यमाणः शब्दो निवर्त्यमानार्थाभिधायीत्यस्ति स्त्रीसदृशोर्थ इति लुक् सिध्यति ॥ **गर्गान्पश्येति** । स्त्रीत्वस्यानिवृत्तत्वात् नायं पुंबहुत्वे शस् उत्पन्न इति नत्वं न सिध्यति ॥ ६६ ॥

---

१ एवंभूतस्य निरुपाख्यत्वस्य सखण्डत्वेन न जातित्वमित्याशयेनाह—तत्समनियत इति । ( र. ना. ) २ 'तावद्वयोर्वाची' । ३ वृद्धिर्यस्याचामादिस्तद्वृद्धमिति शास्त्रबलादिति भावः । ( र. ना. ) ४ प्रकृतिभेदादिति भावः । ( र. ना. ) ५ 'वक्ष्यमाणमिति' । 'भ्रातृपुत्रौ—' इत्यत्रेति शेषः । ६ भ्रातृपुत्राविल्यत्रेति । "पूर्वयोर्योगयोर्भूयान् परिहारः—यावद् ब्रूयाद् 'गोत्रं यूना' इति, तावद् 'वृद्धो यूना' इति । पूर्वसूत्रे गोत्रस्य 'वृद्धम्' इति संज्ञा क्रियते ।" इति ग्रन्थेनेति बोध्यम् । ७ स्त्रीशब्दे स्वरितत्वप्रतिज्ञासामर्थ्यादिति शेषः । ( र. ना. ) ८ वृद्धो यूनेत्यधिकारादेकशेषानुवादेन स्त्रीप्रत्ययस्य पुंवत्त्वं प्रतिषिध्यते । तथा च गर्गा इत्यत्र अस्त्रियामिति य शब्द लुक्प्रतिषेधप्रसक्तिरिति भावः । ( र. ना. ) ९ तथाचास्त्रियामिति य शब्दलुक्प्रतिषेधप्रसक्तिस्तदवस्थेति भावः । ( र. ना. ) १० 'निवृत्तौ' ।

( उद्द्योतः ) स्त्रीपुंवच्च ॥ ६६ ॥ टाबादीति । क्तिन्नादीनां तु न ग्रहणं, वृद्धो यूनेत्यधिकारात् । अत्र पक्षे पुंवदिति सामर्थ्या[1]दभावातिदेशः ॥ शब्देति । स्त्र्यर्थवृत्तिशब्देत्यर्थः ॥ वृद्धेतिविशेषणसामर्थ्यात्स्वरूपग्रहणं नेति भावः ॥ दोष इति । ये[2]नञ्जोश्चेत्यत्रास्त्रियामित्यनुवृत्तेः ॥ पर्युदासेत्विति । सर्वं वाक्यं सावधारणमिति न्यायेनास्त्रियामेव वर्तमानस्येत्यर्थात् पर्युदासेपि दोषे[3] इत्यन्ये ॥ पुंबहुत्वे इति । पुंमात्रगतबहुत्वे इत्यर्थः ॥ ६६ ॥

( समाधानभाष्यम् )

**यथा न दोषस्तथास्तु ॥**

( अनिष्टवारणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—अजा च बर्करश्च, वडवा च किशोरश्च, उष्ट्री च करभश्चेति ? ।**

( समाधानभाष्यम् )

**तल्लक्षणश्चेदेव विशेष इत्युच्यते । न चात्र तल्लक्षण एव विशेषः ।**

( समाधानबाधकभाष्यम् )

**तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ॥ स्त्री पुंवच्च ॥ ६६ ॥**

( ११५ एकशेषसूत्रम् ॥ १ । २ । ३ आ. ४ सू. )

## पुमान् स्त्रिया ॥१।२।६७॥

( अनिष्टवारणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति हंसश्च वरटा च, कच्छपश्च डुलिश्च, ऋश्यश्च रोहिच्चेति ? ॥**

( समाधानभाष्यम् )

**तल्लक्षणश्चेदेव विशेष इत्युच्यते । न चात्र तल्लक्षण एव विशेषः ॥**

( समाधानबाधकभाष्यम् )

**तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ॥ पुमान् स्त्रिया ॥ ६७ ॥**

( ११६ एकशेषसूत्रम् ॥ १ । २ । ३ आ० ५ सू० )

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥१।२।६८॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते, न "पुमान् स्त्रिया" इत्येव सिद्धम् ॥**

( समाधानभाष्यम् )

**न सिध्यति । तल्लक्षणश्चेदेव विशेष इत्युच्यते, न चात्र तल्लक्षण एव विशेषः ।**

( समाधानबाधकभाष्यम् )

**तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ॥**

( प्रदीपः ) भ्रातृ ॥ ६८ ॥ यत्समानायामिति । एकापत्यत्वं नाम समानाकृतिरस्ति ॥

( समाधानसाधकभाष्यम् )

**एवं तर्हि सिद्धे सति यदिमं योगं शास्ति तज्ज्ञापयत्याचार्यः—'यत्रोर्ध्वं प्रकृतेः स्यात्तल्लक्षण एव विशेषः, तत्रैकशेषो भवति' ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

**हंसश्च वरटा च, कच्छपश्च डुलिश्च, ऋश्यश्च रोहिच्चेति । अत्रैकशेषो न भवति ॥ पूर्वयोर्योगयोर्भूयान्परिहारः—यावद् ब्रूयाद् गोत्रं यूनेति तावद् वृद्धो यूनेति ॥ पूर्वसूत्रे गोत्रस्य वृद्धमिति संज्ञा क्रियते ॥**

( प्रदीपः ) ऊर्ध्वमिति । यत्रैका प्रत्यय[4]प्रकृतिरन्यत्तु वैरूप्यं तत्रैकशेष इत्यर्थः ॥ त्यदादीनि सर्वैर्नित्यमित्येतद्वर्जयित्वा सर्वत्र सरूपाणामित्यस्यानुवृत्त्याश्रयणाद् यथोक्तार्थलाभः । अत्रैवार्थ एतत्सूत्रं लिङ्गम् । पदान्तरगम्येपि तल्लक्षणविशेषे पुमान् स्त्रियेत्येकशेषो भवति यथा गौश्चायं गौश्चेयमित्येतौ गावौ चरत इति ॥ वरटाचेति । वरटा हंसी ॥ पूर्वसूत्र इति । पूर्वाचार्यकृते व्याकरणे अपत्यमन्त[5]र्हितं वृद्धमिति पौत्रप्रभृतेरपत्यस्य वृद्धसंज्ञा कृता । वृद्धो यूनेत्यत्र च[6] कृत्रिमस्य जीवति तु वंश्ये युवेत्यस्य ग्रहणं तत्साहचर्याद्वृद्धस्याप्यपत्यस्य ग्रहणमित्यर्थः ॥

(उद्द्योतः) भ्रातृपुत्रौ ॥ ६८ ॥ यत्रैकेति । समानेत्यर्थः ॥ अन्यत्त्विति । अन्यकृतमित्यर्थः ॥ वैरूप्यमिति । (वाँ) स्वार्थे ष्यञ् ॥ इत्येतद्वर्जयित्वेति । भ्रातृपुत्रौ पिता मात्रा श्वशुरः श्वश्र्वा इत्येतेषां ज्ञापकत्वान्नपुंसकमनपुंसकेनेत्यत्र तदनुवृत्तेश्च त्यदादीनीत्यस्यैव वर्जनमुक्तं, तत्र हि सर्वग्रहणसामर्थ्याद् तन्निवृत्तिरिति भावः ॥ ननु स्त्रीगोव्यक्तिपुंगोव्यक्तिवाचकयोर्गौश्च गौश्चेत्येकशेषानापत्तिस्तल्लक्षणविशेषाभावादत आह—पदान्तरगम्येपीति ॥ तल्लक्षणविशेषे इति । स्त्रीत्वपुंस्त्वरूपविशेषे इत्यर्थः ॥ एतौ गावाविति । तल्लक्षण इत्यस्य तद्रूप इत्येवार्थः ॥ ऊर्ध्वमित्यादेश्च प्रकृत्यतिरिक्तशब्दकृत एव चेत्तद्रूपो विशेष इत्यर्थः । सूत्रेप्येवेत्यस्य प्रकृत्यतिरिक्तकृत इत्यादिः । प्रकृत्यतिरिक्तकृत एव तद्रूपो विशेषश्चेदित्यन्वयः ॥ तद्रूप इत्यस्य वृद्धत्वयुवत्वरूपः स्त्रीत्वपुंस्त्वरूप इत्यर्थः । प्रकृतिश्चात्र स्त्रीत्वाद्यर्थकप्रत्ययस्य गृह्यते इति बोध्यम् ॥ न चेन्द्रेन्द्राण्यावित्यादावप्यस्य प्रवृत्तिः प्राप्नोति । आनुकः प्रकृत्यवयवत्वेन तत्कृताप्यत्र स्त्रीत्वप्रतीतिरिति न दोषः ॥ एवं हि यत्रोर्ध्वमिति भाष्ये

---

१ अयं भावः । स्त्रीप्रत्ययान्तः पुंवद्भवतीत्युक्तौ पुमान् स्त्रिया इत्यनेन गतार्थताऽस्य स्यादिति अभावातिदेश आश्रीयते इति । ( र. ना. ) २ यद्यपि प्राचीनपुस्तकेषु 'यञिञोश्च' इत्येवमिकारमध्यः सूत्रोपन्यास उपलभ्यते तथापि फग्विधायकस्य तस्य प्रकृतेऽनुपयोगाल्लुग्विधायकाकारमध्यसूत्रोपन्यासः कृत इति बोध्यम् ॥ ३ स्त्रीपुमर्थोभयवृत्तित्वादिति भावः । ( र. ना. ) ४ 'प्रत्ययस्य प्रकृ०' ॥ ५ व्यवहितमित्यर्थः । ( र. ना. ) ६ 'तु' सर्वत्रोपलभ्यते ॥ ७ त्वर्थोऽत्र वाशब्द इति वयम् । ( र. ना. )

एवोऽस्थाने भवत्यक्षरस्वारस्यं च नेति ऊर्ध्वं प्रकृतेर्विशेषश्चेत्तल्लक्षण एवेत्यन्वयेन तदितरकृतविशेषविरहरूपे विशिष्टा[1]भावे तात्पर्यान्न दोषः। स चेह विशेष्याभावादस्त्येवेत्यन्ये ॥

( प्रत्याख्यानाधिकरणम् )

( ७८९ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषस्याविवक्षितत्वात् सामान्यस्य च विवक्षितत्वात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषश्चाविवक्षितः सामान्यं च विवक्षितम्। विशेषस्याविवक्षितत्वात्सामान्यस्य च विवक्षितत्वात्सरूपाणामेकशेष एकविभक्तावित्येव सिद्धम् ॥**

( प्रदीपः ) **असरूपाणामिति।** गर्गापत्यत्वं सामान्यं वृद्धयूनोर्विव[2]क्षितमिति सिद्धमेकशब्दत्वम्। आरभ्यमाणेप्येकशेषे गार्ग्याविति विशेषो नावधार्यते—'किं वृद्धयुवानौ प्रक्रान्तौ, उत वृद्धा'विति। प्रकरणा[3]द्यपेक्षे तु विशेषावसाये सामान्योपक्रमेपि तथैव विशेषोवसायिष्यत इति नार्थ एकशेषारम्भेण। द्वन्द्वोपि गार्ग्यगार्ग्यायणावित्यनभिधानान्न भविष्यति। स्त्रीपुंसयोरपि मृ[4]गक्षीरवज्जातिमात्रविवक्षायां ब्राह्मणावित्यादिप्रयोगसिद्धिः ॥

( उद्योतः ) भाष्ये **असरूपाणा**मित्यनेनोक्तत्रिसूत्रीं प्रत्याचष्टे—**गर्गापत्यत्वमिति।** गोत्रयुवसाधा[5]रणमपत्यत्वेनैव गोत्रादिप्रत्ययेभ्यो बोधाद् युवत्वादिविशेषानादरेण गार्ग्यश्च गार्ग्यश्चेति गोत्रशब्दयोरेव सरूपैकशेषेण सिद्धमित्यर्थः ॥ नन्वेवमन्यतरस्य युवत्वं न प्रतीयेतेत्यत आह—**आरभ्यमाणेपीति ॥ नार्थ इति। वृद्धोयूनेत्यादिनेत्यर्थः ॥** ननु प्रकरणाद्यनपेक्ष्य युवत्वादिप्रतिपादनेच्छायां द्वन्द्वः स्यादत आह—**द्वन्द्वोपीति।** सहविवक्षायां द्वयोः प्रयोगाभाव एवानभिधानादिति भावः ॥ ननु स्त्र्यभिधाननिमित्तप्रत्ययनिवृत्तये **पुमान् स्त्रिये**त्यावश्यकमत आह—**स्त्रीति ॥**

( अनिष्टवारणाधिकरणम् )

( आक्षेपभाष्यम् )

**"पुमान् स्त्रिया" इह कस्मान्न भवति—ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेति ? ॥**

( प्रदीपः ) **ब्राह्मणवत्सा चेति[6]।** अस्त्यत्र प्रकृतेरूर्ध्वं तल्लक्षणो विशेषः, न चात्र कश्चिद्विशेष[7]ः स्त्रीपुंसयोरुत्पत्तिः ॥

( उद्योतः ) इदानीं **पुमान् स्त्रिये**त्यस्य सार्थक्यं शङ्कते—भाष्ये **पुमान् स्त्रियेहेति।** उक्तरीत्याऽत्रैकशेषस्य साधयितुमशक्यत्वादेतदर्थमेव तत्सूत्रं कस्मान्न भवतीति प्रश्नः ॥ कृतेपि सूत्रेऽत्र न प्राप्नोतीत्युत्तरम्। तत्र प्रश्नमुपपादयति—**अस्त्यत्र प्रकृतेरिति।** ब्राह्मणरूपाया वत्सरूपायाश्चेत्यर्थः ॥ **विशेषः।** प्रधानत्वरूपः ॥

( ७९० समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्याविभक्तिपरस्य विशेषवाचकत्वादनेकशेषः ॥ * ॥**

( भाष्यम् ) **ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्य अविभक्तिपरस्य विशेषवाचकत्वादेकशेषो न भविष्यति। यत्र लिङ्गं विभक्तिपरमेव विशेषवाचकं तत्रैकशेषो भवति। नात्र लिङ्गं विभक्तिपरमेव विशेषवाचकम् ॥**

( प्रदीपः ) **अविभक्तिपरस्येति।** एकविभक्तावित्यनुवर्तते। तेन एकशेषनिमित्ते विभक्तौ[8] परतो यत्र स्त्रीपुंसकृतो विशेषस्तत्रैकशेषः। इह तु तस्यां चान्तर्वर्तिन्यां च विभक्तावित्येकशेषाभावः ॥

( उद्योतः ) **एकशेषनिमित्तेति।** सारूप्योपलक्षणत्वमेवात्र निमित्तत्वम्। **लिङ्गस्याविभक्तिपरस्ये**ति भाष्ये पाठः ॥ **लिङ्गस्य** लिङ्गबोधकप्रत्ययस्य ॥ कैयटेऽविभक्तिपरस्येति प्रतीकग्रहणं,तद्धनन्भाष्य आह—**यत्र लिङ्गं विभक्तिपरमेवेति ॥ नात्र लिङ्गं विभक्तिपरमेवेति।** अत एवानेकशेषे साध्ये [9]हेतोः पक्षवृत्तित्वम्। अयमस्य सूत्रस्यार्थो यत्र प्रकृ[10]त्यतिरिक्तैकशेषनिमित्तविभक्तिपरशब्दगम्य एव स्त्रीत्वरूपो विशेषस्तत्रैकशेषो विभक्तौ सरूपाणामिति ॥ विभक्तौ सारूप्यं च लिङ्गबोधकातिरिक्तकृतमेव सामर्थ्याद्बोध्यम् ॥ **स्त्रीपुंसकृत इति।** स्त्रीपुंसबोधकशब्दकृतस्तद्गम्यो विशेषः स्त्रीत्वादिरूप इत्यर्थः ॥

( आक्षेपभाष्यम् )

**यदि तर्हि यत्र लिङ्गं विभक्तिपरमेव विशेषवाचकं तत्रैकशेषो भवति, इह न प्राप्नोति कारकश्च कारिका च कारकौ। नह्यत्र लिङ्गं विभक्तिपरमेव विशेषवाचकम्। किं तर्हि ?। इत्वमपि ॥**

( प्रदीपः ) **कारिका चेति।** इत्वमप्यत्र विशेषस्य वाचकं तच्च नैकशेषनिमित्ते विभक्तौ परतोऽनन्तरमिति दोषः ॥

( उद्योतः ) **इत्वमप्यस्येति।** सतीत्वे स्त्रीत्वप्रतीतेरित्यर्थः ॥ भाष्ये—**लिङ्गं** लिङ्गबोध[11]कः शब्दः ॥

( समाधानाय विचारभाष्यम् )

**कथं पुनरिदं विज्ञायते—शब्दो या स्त्री तल्लक्षणश्चेदेव विशेष इति, आहोस्विदर्थो या स्त्री तल्लक्षणश्चेदेव विशेष इति ? ॥**

**किं चातः ?।**

**यदि विज्ञायते 'शब्दो या स्त्री तल्लक्षणश्चेदेव विशेष' इति, सिद्धम्—कारकश्च कारिका च**

---

१ तल्लक्षणविशेषविशिष्टो यस्तदितरकृतविशेषस्तद्विरहरूपे इत्यर्थः। स चेहेति। प्रकृतसूत्रोदाहरणे इत्यर्थः। विशेष्याभावादित्यस्य तदितरकृतविशेषरूपस्य विशेष्यस्याभावादित्यर्थः। (र.ना.) २ 'विवक्ष्यत इति' ॥ ३ 'णापेक्षे' ॥ ४ मृगत्वजातीयस्य क्षीरमित्यर्थो विवक्षितः। ( र. ना. ) ५ इदं बोधक्रियाऽन्वयि द्वितीयान्तम्। ( र. ना. ) ६ ननु यत्र स्त्रीत्वपुंस्त्वयोः प्राधान्यमेव ब्राह्मणी च ब्राह्मणश्चेत्यादौ ब्राह्मणाविति तत्रैवैकशेषः, अत्र तु प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन नैकशेषप्राप्तिरित्यत आह। न चात्रेति। सूत्रे इत्यर्थः। विशेषः प्रधानत्वरूपो विवरणे उक्तः। इदश्च प्रधानाप्रधानन्यायमनालोच्य।। (र.ना.) ७ साक्षादित्यादिः। (र.ना.)

८ आनुपूर्वीसाम्याभावादिति भावः। ( र. ना. ) ९ ब्राह्मणवत्सा ब्राह्मणीवत्सशब्दौ पक्षः, एकशेषाभावः साध्यम्, प्रकृत्यतिरिक्तैकशेषनिमित्तविभक्तिपरशब्दत्वसमानाधिकरणं यत्स्त्रीत्वबोधकत्वं तद्वद्घटितत्वे सति तदितरस्त्रीत्वबोधकत्ववद् घटितत्वं हेतुः, व्यतिरेके ब्राह्मण ब्राह्मण्यादिशब्दसंघो दृष्टान्तः। पक्षे हेतुघटकविशेष्यदलं तु एकशेषनिमित्तत्वाभाववदन्तर्वर्ति विभक्तिपर शब्दत्वसमानाधिकरणस्त्रीत्वबोधकत्ववद्घटितत्वरूपं बोध्यम्। एतादृशानुमानाकारश्च ब्राह्मणवत्सेत्यादि प्रकृतवार्तिकलभ्यः। ( र. ना. ) १० प्रकृत्यतिरिक्तो य एकशेषनिमित्तविभक्तिपरकः शब्दस्तद्गम्य इत्यर्थः। ( र. ना. ) ११ तेनेत्वस्यापि संग्रहः। ( र. ना. )

**कारकौ । इदं तु न सिद्ध्यति—गोमांश्च गोमती च गोमन्तौ ॥**

**अथ विज्ञायते—'अर्थों या स्त्री तल्लक्षणश्चेदेव विशेषः' इति, सिद्धम्—गोमांश्च गोमती च गोमन्तौ । इदं तु न सिध्यति—'कारकश्च कारिका च कारकौ' । उभयथापि पटुश्च पट्वी च पटू इत्येतन्न सिध्यति ॥**

( प्रदीपः ) एतत्समाधानार्थं विचारयति—**कथमिति** ॥ **अर्थ इति** । अर्थस्त्रियाः शब्दद्वारकं विभक्तिपरत्वम् ॥ **कारिका चेति** । शब्दस्त्रिया टापात्र कृतमित्वमिति सिध्यति, नार्थपक्षे । यद्यप्यर्थेन टाप् कृतः तथाप्यधिकमित्वमस्ति न च तदर्थस्त्रीकृतमिति दोषः ॥ **गोमती चेति** । नात्र शब्दस्त्रिया कश्चिद्विशेषः कृतः । अर्थपक्षे त्वत्र सिध्यति । अर्थेनेकारस्य विशेषस्य कृतत्वात् ॥ **पट्वी चेति** । नात्र यणादेशस्य लक्षणवाक्ये शब्दस्त्री निमित्तत्वेनोपात्ता । अन्तरूपताश्रयणेन यणादेशविधानात् । न च तद्भावे भवतस्तन्निमित्तत्वं[2], नाप्यर्थस्त्री यणादेशस्य निमित्तमिति दोषः ॥

(उद्द्योतः) **शब्दो या स्त्रीति** सामर्थ्यात्तल्लक्षण इत्यस्य तन्निमित्तक इत्यर्थः ॥ अर्थस्त्रीपक्षेऽप्येवमेव तदर्थं मन्यते तदाह—**न च तदिति** ॥ **नात्र यणादेशस्येति** । अर्थशब्दान्यतरस्त्रीकृत एव यत्र विशेषो नान्यकृत इत्यर्थं इति भावः ॥ **शब्दस्त्री निमित्तत्वेनेति** । स्त्रीप्रत्ययत्वेनेत्यर्थः ॥

( समाधानभाष्यम् )

**एवं तर्हि नैवं विज्ञायते शब्दो या स्त्री तल्लक्षणश्चेदेव विशेष इति, नाप्यर्थों या स्त्री तल्लक्षणश्चेदेव विशेष इति ॥ कथं तर्हि ? । शब्दार्थौ या स्त्री स[3]द्भावेन च तल्लक्षणो विशेष आश्रीयते ॥**

( प्रदीपः ) **शब्दार्थाविति** । नात्र यौगपद्येनोभयोर्ग्रहणम् । अनियमस्त्वनेन प्रदर्श्यते । तेन क्वचिच्छब्दस्त्रीकृतविशेषपरिग्रहः क्वचिदर्थस्त्रीकृतविशेषाश्रयणम् । पट्वीत्यत्र च भवतीकारो यणादेशस्य निमित्तमस्मिन्विषये तद्भावभावित्वा[4]दर्थोऽपि पारम्पर्येण भवत्येव निमित्तमित्वयणादेशयोः ।

( उद्द्योतः ) **नात्रेति** । यौगपद्यग्रहणे तूभयनिमित्तकस्य काप्यभावेन सूत्रासंगतिरेव स्यादिति भावः ॥ भाष्ये **शब्दार्थौ या स्त्रीति** । साऽऽश्रीयते इति शेषः ॥ नन्वेवमपि पटू इति न सिध्यति तत्राह—**सद्भावेन चेति** ॥ तद्व्याचष्टे—**तद्भावभावित्वादिति** ।

( आक्षेपभाष्यम् )

**एवं च कृत्वा इहापि प्राप्तिः ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेति ।**

( उद्द्योतः ) भाष्ये—**एवं च कृत्वेति** । अत्रार्थस्त्रीकृत एव विशेष इति भावः ॥

( समाधानभाष्यम् )

**एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति ॥ किम् ? । तदित्यनुवर्तते । तदित्यनेन प्रकृतौ स्त्रीपुंसौ प्रतिनिर्दिश्येते ॥ कौ च प्रकृतौ ? । प्रधाने । प्रधानं या शब्दस्त्री, प्रधानं या अर्थस्त्रीति ॥ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥**

( प्रदीपः ) **एवं तर्हीति** । विस्पष्टं न व्यपदिशतीत्यर्थः ॥ सूत्रोपात्त एवायमर्थो येनात्र न भवत्येकशेष इत्याह—**यदित्यनेनेति** । स्त्रीपुंसयोः सहविवक्षायामेकशेषः । स च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृतो विशेषस्तत्रैकशेषः । इहाप्रधानकृतोपीत्येकशेषाभावः ॥ ६८ ॥

( उद्द्योतः ) **एवं तर्हीति** । स्त्रीरूपार्थस्य विभक्तिपरत्वं वक्तुमशक्यमिति भावः ॥ **प्रधानस्त्रीपुंसकृत इति** । तत्कृत एवेत्यर्थः ॥ ६८ ॥

( ११७ एकशेषसूत्रम् ॥ १ । २ । ३ आ. ६ सू. )

## १४३ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ १।२। ६९ ॥

( प्रदीपः ) **नपुंस** ॥ ६९ ॥ शुक्ला च शुक्लं चेत्येकविभक्तौ विभक्त्यन्तानां च[5] वैरूप्यादेकशेषो न प्राप्नोति, शुक्लश्च शुक्लं चेत्यत्रापि विभक्त्यन्तानामसारूप्यात् । एकविभक्तौ तु सरूपाणामेकशेषे पुन्नपुंसकयोः पर्यायेण प्राप्नोतीति वचनमिदमेकवद्भावार्थं च ॥

( उद्द्योतः ) **नपुंसकम्** ॥ ६९ ॥ **पर्यायेणेति** । इदं चिन्त्यम्, शुक्लानीत्यादौ नपुंसके प्रातिपदिकवैरूप्यात् । तस्मादप्राप्ते विधिरयमित्येव वक्तुमुचितम् ॥

( प्रत्याख्यानभाष्यम् )

**अयं योगः शक्योऽवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कथम्—शुक्लश्च कम्बलः शुक्लं च वस्त्रं तदिदं शुक्लं, ते इमे शुक्ले । शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लं तानीमानि शुक्लानि ? ॥**

( ७९१ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रधाने कार्यसंप्रत्ययाच्छेषः ॥ * ॥**

( भाष्यम् ) **प्रधाने कार्यसंप्रत्ययाच्छेषो भविष्यति ॥ किं च प्रधानम् ? । नपुंसकम् ॥ कथं पुनर्ज्ञायते नपुंसकं प्रधानमिति ? । एवं हि दृश्यते लोके अनिर्ज्ञातेऽर्थे गुणसंदेहे च नपुंसकलिङ्गं प्रयुज्यते— किं जातमित्युच्यते । द्वयं चैव हि जायते । स्त्री वा**

---

१ शब्दस्त्रीत्वावच्छिन्ना निमित्तता शब्दस्त्रियां नास्ति, किन्तु अत्त्वावच्छिन्नैव सा तत्राऽस्तीति भावः । ( र. ना. ) २ शब्दस्त्रीसद्भावे भवतो यणादेशस्य शब्दस्त्रीनिमित्तकत्वं नेत्यर्थः । न ह्यन्वयव्याप्तिमात्रेण कार्यकारणभावः, संभवद्व्यतिरेकयोः कार्यकारणभावे व्यतिरेकव्याप्तेरप्यपेक्षितत्वात् । मा भूत्क्वचिद् रासभादेरपि घटाद्यन्वयेन तस्यापि घटादिकारणत्वमिति इति भावः । ( र. ना. ) ३ 'तद्भावेन' ॥ ४ तथा च तद्भावभावित्वप्रयुक्तं निमित्तत्वारोपमादायात्र निर्वाहः, न तु तद्भावभावित्वमात्रेण मुख्यं निमित्तत्वमिति भावः । ( र. ना. ) ५ 'चासारूप्या' ॥

पुमान्वा । तथा—विदूरे अव्यक्तरूपं दृष्ट्वा वक्तारो भवन्ति—महिषीरूपमिव ब्राह्मणीरूपमेव । प्रधाने कार्यसंप्रत्ययान्नपुंसकस्य शेषो भविष्यति ॥

( प्रदीपः ) **प्रधाने कार्यसम्प्रत्ययादिति** । शब्देनार्थस्याभिधानमिह कार्यम् । तच्च नपुंसकानपुंसकसंन्निधौ नपुंसकस्यैव भविष्यतीति नार्थः सूत्रेणेत्यर्थः ॥ **कथमिति** । यथा लोके बहुषु गच्छत्सु राजा गच्छतीति प्रधानं राजा व्यपदिश्यते । राज्ञश्च प्राधान्यं तदधीनप्रवृत्तिनिवृत्तित्वादन्येषाम् । इह तु नपुंसकस्य किंकृतं प्राधान्यमिति प्रश्नः ॥ **एवं हि लोके दृश्यत इति** । व्यापित्वान्नपुंसकस्य प्राधान्यमाह । स्थितिर्नपुंसकं, सा च सर्वत्र वियत इति स्थितिरूपत्वेनैव स्त्रीपुंसयोरपि विवक्षायां सिद्धो नपुंसकशब्दप्रयोगः ॥ **अनिर्ज्ञातेर्थ इति** । सामान्यरूपेण ज्ञाते स्त्रीत्वादिना तु विशेषेणानिर्ज्ञात इत्यर्थः ॥ **गुणसन्देह इति** । **गुणाः** स्त्रीत्वादयः ॥ **द्वयं चैवेति** । यद्यपि नपुंसकस्य जन्म, तथापि यत्प्रजननासमर्थं तन्नपुंसकमिति नेह नपुंसकलक्षणं, किं तर्हि? शब्दैकगोचरत्वमेव लिङ्गलक्षणम् । तथा च नपुंसको भवतीति प्रयोग उपपद्यते ॥ **महिषीरूपमिवेति** । रूपशब्दः संस्थानवचनः । यत्र दूराद्दृश्यमाने वस्तुनि निश्चयो नास्ति केवलं सम्भावनारूपः सन्देहस्तत्रैकस्यापि शब्दस्य प्रयोगो भवति स्थाणुरयं स्यादिति । एवमिहापि महिषीवैतत् संस्थानमित्यस्मिन्नर्थे महिषीरूपमिवेति प्रयुक्तम् । रूपशब्दोत्र नपुंसकलिङ्गो दृष्टान्तत्वेनोपात्तः । यत्र तु विशेषस्य निर्ज्ञानं शुक्लाः शाट्यः शुक्लाः कम्बला इति तत्र नास्ति नपुंसकप्रयोगः ॥ सत्यारम्भे अरण्यारण्यान्यावित्यत्रैवकारानुवर्तनान्महत्त्वस्योपाधेराधिक्यादेकशेषाभावः ॥ ६९ ॥

( उद्योतः ) **प्रधाने कार्यसंप्रत्ययादित्यस्य** कार्यस्यैकशेषस्यैकावस्थानरूपस्य प्रधाने नपुंसके संप्रत्ययात्तस्यैव शेष इति नार्थः, योगप्रत्याख्याने हेतुत्वानुपपत्तेरत आह—**शब्देनेति** ॥ **नपुंसकस्यैवेति** । प्रधानन्यायेनेत्यादिः । प्रधानन्यायेन नपुंसकत्ववैशिष्ट्येनैव स्त्रीपुंसार्थस्यापि प्रतीतिरिति भावः ॥ **सा चेति** । वृद्धिह्रासयोः स्थितेरपि सत्त्वादिति भावः ॥ नन्वनिर्ज्ञाते कथं प्रश्नोऽत आह—**सामान्यरूपेणेति** ॥ भाष्ये **अनिर्ज्ञातेर्थे गुणसन्देहे चेति** । गुणसन्देहमूलकेऽनिर्ज्ञातार्थविषये प्रश्नवाक्ये इत्यर्थः ॥ **शब्दैकगोचरत्वमिति** । तत्तच्छब्दमात्रबोध्योपचयादिरूपत्वमेवेत्यर्थः । ततश्च नपुंसकस्य प्रजननासमर्थस्यापि पुंसन्तर्भावोस्तीति भाव इति विवरणकृतः ॥ **स्त्री वा पुमान्वेत्यस्य** स्त्रीशब्दवाच्यं पुंशब्दवाच्यं वेत्यर्थः ॥ पतद्भाष्यस्य प्रायेणेत्यादिरित्यन्ये ॥ नन्वनेककोटिकस्यैव सन्देहस्य दृष्टत्वेनेदृक् सन्देहाकारोऽनुचितोत आह—**यत्र दूरादिति** ॥ **इत्यस्मिन्नर्थे इति** ॥ **इव**शब्दो भिन्नक्रम इति भावः ॥ **दृष्टान्तत्वेनेति** । स्त्रीविषयो रूपशब्दो नपुंसके स्त्रिया अन्तर्भावे दृष्टान्तत्वेनोपात्त इत्यर्थः । एवं च व्यापकत्वेन नपुंसकस्य प्राधान्यात् तद्विवक्षायां नपुंसकप्रयोगः ॥ **आधिक्यादिति** । यदि विशेषस्तदा नपुंसकत्वस्त्रीत्वपुंस्त्वकृत एवेत्यर्थ इति भावः ॥

( सूत्रसमर्थनभाष्यम् )

इदं तर्हि प्रयोजनम्—एकवच्चास्यान्यतरस्यामिति वक्ष्यामीति ॥

( प्रत्याख्यानभाष्यम् )

एतदपि नास्ति प्रयोजनम् ।

( ७९२ प्रत्याख्यानवार्तिकम् ॥ २ ॥ )

**॥*॥ आकृतिवाचित्वादेकवचनम् ॥*॥**

( भाष्यम् ) आकृतिवाचित्वादेकवचनं भविष्यति यदा द्रव्याभिधानं तदा द्विवचनबहुवचने भविष्यतः ॥ नपुंसकमनपुंसकेनैक० ॥ ६९ ॥

( उद्योतः ) **आकृतिवाचित्वादिति** । यदा आकृतौ स्वगतसंख्याविवक्षा तदैकवचनं, यदाश्रयगतसंख्यारोपस्तदा द्विवचनादीति बोध्यम् । एतेन सरूपसूत्रविषयेप्येकवचनान्तत्वमनुमतं भगवतेति बोध्यम् ॥ ६९ ॥

---

( ११८-११९ एकशेषसूत्रम् ॥ १ । २ । ३ आ. ७-८ सू. )

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥

## १४४ पिता मात्रा ॥ ७० ॥

## १४५ श्वशुरः श्वश्र्वा ॥ ७१ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते । न "पुमान् स्त्रिया" इत्येव सिद्धम् ? ॥

( प्रदीपः ) **पिता** ॥ ७० ॥ **किमर्थमिति** । वृत्तिविषये भ्रात्रादिशब्दानां स्वस्रादिष्वपि वृत्त्या सिद्ध एकशेष इति मत्वा प्रश्नः ॥

( उद्योतः ) **पिता मात्रा** ॥ ७० ॥ भ्रात्रादीनां वैरूप्याद्भिन्नार्थत्वाच्चैकशेषाप्राप्तेः पुमान् स्त्रियेत्यत्रापि सरूपाणामित्यनुवृत्तेः प्रश्नानुपपत्तिमाशङ्क्याह—**वृत्तीति** । भाष्ये—**न न पुमान् स्त्रियेति सिद्धमिति** । सरूपाणामित्यपेक्षया परत्वादयमेव न्याय्य इति भावः ॥ **स्वस्रादिष्वपीति** । एकापत्यत्वादेः प्रवृत्तिनिमित्तस्य सत्त्वादिति भावः ॥ एवं भ्राता च भ्रात्री चेति विग्रहे पुमान् स्त्रियेत्येव सिद्धमिति तात्पर्यम् ॥

( ७९३ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेशः ॥ * ॥**

( भाष्यम् ) भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेशो भवति ।

---

१ सत्त्वरजस्तमसां साम्येनेत्यादिः । ( र. ना. ) २ अपीति शेषः । तथा च द्वयस्यैवेत्यवधारणमसङ्गतमिति भावः । ( र. ना. ) ३ हेतुत्वान्वयि निरूपितत्वं सप्तम्यर्थः । ( र. ना. ) ४ अधिकरणे कदाचिदिति शेषः । ( र. ना.) ५ ल्यब्लोपे पञ्चमी । भिन्नं प्रवृत्तिनिमित्तमादायेत्यर्थः । ( र. ना. )

(प्रदीपः) कारणादिति । भिन्नं च प्रवृत्तिनिमित्तं भ्रातृशब्दस्य स्वसृशब्दस्य चेति भ्रातृशब्देन[1] न स्वसुरभिधानं प्राप्नोति ॥

( उद्योतः ) भाष्ये उत्तरयति—भ्रातृपुत्रेत्यादि ॥ तद्व्याचष्टे—भिन्नं च प्रवृत्तिनिमित्तमिति । एतदेव[2] भाष्ये कारणशब्देनोक्तम् । पुंस्त्वविशिष्टमेकापत्यत्वं भ्रातृशब्दस्य, स्त्रीत्वविशिष्टं स्वसृशब्दस्येत्यर्थः ॥ तयोः सारूप्याभावात्[3]पुमान् स्त्रियेत्यस्याप्राप्तिरिति भावः ॥

( प्रत्याख्यानाधिकरणम् )

( ७९४ प्रत्याख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात् सिद्धम् ॥ * ॥

( भाष्यम् ) यदि तावद्बिभर्तीति[4] भ्राता, स्वसर्यप्येतद्भवति ॥

तथा यदि पुनातीति[5] प्रीणातीति वा पुत्रः, दुहितर्यप्येतद्भवति ॥

तथा यदि पाति पालयतीति वा पिता मातर्यप्येतद्भवति ॥

तथा यद्याश्वास्तव्यः[6] श्वशुरः, श्वश्वामप्येतद्भवति ॥

( उद्योतः ) प्रत्याख्यानवाद्याह—इति चेत्तुल्येति ॥

( ७९५ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ दर्शनं वै हेतुः[7] ॥ * ॥

( भाष्यम् ) नहि स्वसरि भ्रातृशब्दो दृश्यते ॥

( उद्योतः ) आरम्भवाद्याह—दर्शनं वै हेतुरिति ॥

( ७९६ प्रत्याख्यानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ दर्शनं हेतुरिति चेत्तुल्यम् ॥ * ॥

( भाष्यम् ) दर्शनं हेतुरिति चेत्तुल्यमेतद्[8]भवति । स्वसर्यपि भ्रातृशब्दो दृश्यताम् । तुल्यं हि कारणम् ॥

( उद्योतः ) प्रत्याख्यानवाद्याह—दर्शनं हेतुरिति चेत्तुल्यमिति । दर्शनहेतोस्तुल्यत्वात्तत्रापि[9] दर्शनं स्यादित्यर्थः ॥

( आक्षेपभाष्यवार्तिकम् )

## ॥ न वै एष[10] लोके सम्प्रत्ययः[11] ॥

( भाष्यम् ) नहि लोके भ्राता आनीयतामित्युक्ते स्वसा आनीयते ॥

( ७९७ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ तद्विषयं च ॥ * ॥

( भाष्यम् ) तद्विषयं चैतद् द्रष्टव्यं भवति स्वसरि भ्रातृत्वम् ॥ किंविषयम् ? । एकशेषविषयम् ॥

( प्रदीपः ) एकशेषविषयमिति । आरब्धे एकशेषेऽवश्यं भ्रातृशब्देन स्वसाभिधेया । अन्यथैकशेषारम्भोऽनर्थकः स्यात् । एवमनारब्धेप्येकशेषे नित्यत्वाच्छब्दार्थसंबन्धस्य[12] सहविवक्षायामेव भ्रातृशब्दः स्वसुर[13]भिधायको भविष्यति । नह्यविद्यमानसंबन्धस्य[14] शक्तिः शास्त्रेण नियम्यते । अनभिधानाच्च भ्रातृपुत्रशब्दयोः स्वसृदुहितृभ्यां द्वन्द्वाभावः । मातापितरौ श्वश्रूश्वशुराविति द्वन्द्व इष्यत एव ॥ ७० ॥ ७१ ॥

(उद्योतः) शास्त्रा[15]रम्भेणेति पाठः॥ नियम्यते उत्पाद्यते । एवं च भ्रातृत्वपुत्रत्वपितृत्वश्वशुरत्वादीनां स्वसृदुहितृमातृश्वश्रूष्वारोपेणैकशेषविषये तत्तद्रूपेणैव स्वस्रादीनां बोध इति सरूपसूत्रादिप्रत्याख्यानेपि न दोष इति तत्त्वम् ॥ एवं प्रत्याख्याता त्रिसूत्रीति दिक् ७०

( आक्षेपभाष्यम् )

## युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः ॥

( समाधानभाष्यम् )

बाढं युक्तम् ।

( ७९८ समाधानसाधकवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अन्यत्रापि तद्विषयदर्शनात् ॥ * ॥

( भाष्यम् ) अन्यत्रापि नियतविषयाः शब्दा दृश्यन्ते । तद्यथा—समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति । समाने च काले वर्णे गौः कृष्ण इति भवति, अश्वो हेम इति । समाने च शुक्ले वर्णे गौः श्वेत इति भवति, अश्वः कर्क इति ॥ पिता मात्रा ॥ ७० ॥ श्वशुरः श्वश्र्वा ॥ ७१ ॥

---

( १२० एकशेषसूत्रम् ॥ १ । २ । ३ आ० ९ सू० )

# १४६ त्यदादीनि सर्वैर्नित्यम् ॥१।२।७२॥

( शिष्टे लिङ्गवचननिर्णयाधिकरणम् )

( ७९९ नियमवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि ॥ * ॥

( भाष्यम् ) त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि भवन्ति । सा च देवदत्तश्च तौ । सा च कुण्डे च तानि ॥

( प्रदीपः ) त्यदादी ॥ ७२ ॥ त्यदादित इति । षष्ठ्या व्याश्रय इति तसिः[16] । आद्यादित्वाद्वा[17] ॥ सा चेति । स्त्रीत्वे प्राप्ते पुंस्त्वं विधीयते[18] । पुंनपुंसकयोस्त्वेकशेषे[19] शब्दपरविप्रतिषेधान्नपुंसकत्वं भवति ॥

---

१ 'शब्देन स्वसुरभिधानं न प्राप्नोति' ॥ २ 'तत्तदेव' ॥ ३ समानार्थकत्वाभावादित्यर्थः । ( र. ना. ) ४ वंशं धारयति, मातापितरौ वा पोषयतीत्यर्थः । ( र. ना. ) ५ कुलं पवित्रयति स्वजन्मना सत्कर्मभिर्वेति भावः । ( र. ना. ) ६ स्नेहातिशयादिति शेषः । ( र.ना. ) ७ समानार्थकत्वे इति शेषः । (र.ना.) ८ दर्शनकारणमित्यर्थः । ( र. ना. ) ९ 'दत्रापि' ॥ १० एष स्वसृपदार्थो लोके भ्रात्रा समानप्रत्ययो नेत्यर्थः । संप्रत्यय इति पाठे लोके एष संप्रत्ययो भ्रातृप्रतीतिः स्वसरि नैवेत्यर्थः । ( र. ना. ) ११ 'संप्रत्ययः' ॥ १२ उत्पादासंभवादिति शेषः । ( र. ना. ) १३ भ्रातृत्वारोपेणेति शेषः । ( र. ना. ) १४ तत्तदर्थे इत्यादौ पदस्येत्यन्ते शेषः । ( र.ना. ) १५ शास्त्रेणेत्युपलभ्यमानपाठस्थाने इति शेषः । ( र. ना. ) १६ त्यदादीनां पक्षे शेषे नत्वन्येषां पक्षे इत्येवं नानापक्षसमाश्रय उपपाद्यः । ( र. ना. ) १७ षष्ठ्यन्तादेवेति भावः । ( र. ना. ) १८ एवं साच कुण्डे चेत्यत्र स्त्रीत्वे प्राप्ते नपुंसकत्वं विधीयते इत्यपि ज्ञेयम् । ( र. ना. ) १९ ननु सच देवदत्तश्चेत्यत्र कस्य शेष इत्यत आह—( र. ना. )

(उद्द्योतः) त्यदादीनि ॥ ७२ ॥ न्याश्रय इति । त्यदादितद्भिन्नपक्षयोरेकशेषेण त्यदादिपक्षाश्रयणादत्रापि न्याश्रयसद्भावो बोध्यः ॥ त्यदादीनामित्यर्थः ॥ पुन्नपुंसकत इति । पुन्नपुंसकयोरित्यर्थः । सहविवक्षितपुन्नपुंसकवशेनेति भावः ॥ पुंस्त्वमिति । वचनं त्वभिधेयवशेन सिद्धमिति प्रसङ्गोच्चारितो वचनशब्दः ॥ शब्दपरेति । वार्तिके इति शेषः ॥ ध्वनितं चेदं नपुंसकमनपुंसकेनेतिसूत्रतत्प्रत्याख्यानभाष्याभ्याम् ॥ इदं वचनं त्यदादिभिः सजातीयविजातीयानां त्यदादीनां त्यदादिभिन्नानां च सहविवक्षायामेकशेषप्रवृत्तिविषयम्[2], अक्षरस्वारस्येन तथैव लाभात् । न चैवं गाव इमाश्चरन्तीत्युत्तरसूत्रस्थभाष्यप्रयोगे इमा इत्यनुपपन्नं स्यात् । निषेधवार्तिके द्वन्द्वपदेनैकशेषस्यापि ग्रहणात् ॥

(८०० पर्युदासवार्तिकम् ॥ २ ॥)

## ॥*॥ अद्वन्द्वतत्पुरुषविशेषणानाम् ॥*॥

(भाष्यम्) अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् ॥ इह माभूत्—स च कुक्कुटः सा च मयूरी, कुक्कुटमयूर्यौ ते । अर्धं पिप्पल्यास्तदर्धपिप्पली च सार्धपिप्पल्यौ ते ॥

(प्रदीपः) अद्वन्द्वतत्पुरुषविशेषणानामिति । न्यायसिद्धमिदम् । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति समासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्यापि सर्वनाम्नस्तल्लिङ्गस्य सिद्धत्वात् ॥

(उद्द्योतः) तल्लिङ्गस्य सिद्धत्वादिति । प्रधानतन्त्रत्वाद् गुणानाम्[3] ॥

(प्रत्याख्यानाधिकरणम्)

(प्रत्याख्यानभाष्यम्)

अयमपि योगः शक्योऽवक्तुम् । कथम् ? ।

(८०१ प्रत्याख्यानहेतुवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ त्यदादीनां सामान्यार्थत्वात् ॥*॥

(भाष्यम्) त्यदादीनां सामान्यमर्थः । आतश्च सामान्यं देवदत्तेपि[4] हि स इत्येतद्भवति, यज्ञदत्तेपि[5] । त्यदादीनां सामान्यार्थत्वात् शेषो भविष्यति ॥

(प्रदीपः) सामान्यमर्थ इति । वस्तुमात्रं त्यदादिभिः परामृश्यत इति तदेवैषामर्थः ॥

(उद्द्योतः) ननु नेह गवादिवत्सामान्यमर्थ इत्यत आह—वस्तुमात्रमिति । अविवक्षितस्त्रीत्वपुंस्त्वाद्यवान्तरविशेषं परोक्षत्वाद्यनुगतीकृतं वस्तुमात्रमित्यर्थः । एवं चैकेनैव तच्छब्देनोभयोः प्रतीतिः सिद्धेत्येकशेषफलं सिद्धमित्यर्थः ॥ लिङ्गमपि लोकत एव सिद्धम्, तत्र च तात्पर्यतो निर्णय इति भावः ॥

(प्रयोजनान्तरभाष्यम्)

इदं तर्हि प्रयोजनम्—परस्य शेषं वक्ष्यामीति ।

(प्रदीपः) परस्येति । सति सूत्रे शब्दपरविप्रतिषेधः शक्यते आश्रयितुम् ॥

(उद्द्योतः) सति सूत्रे इति । त्यदादीनीत्यनेनानुपूर्वीविशेषयुक्तानां निर्देशात् । असति तु वचने निर्णायकस्य विप्रतिषेधस्य न प्रवृत्तिरिति भावः ॥ एतन्मूलकमेव पठ्यते—त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यत इति ।

(८०२ प्रत्याख्यानहेत्वन्तरवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ परस्य चोभयवाचित्वात् ॥ * ॥

(भाष्यम्) उभयवाचि परम्[6] ॥

(उद्द्योतः) परस्य चेति भाष्ये । परस्यैवेत्यर्थः ॥ आरम्भवादिनापि परस्योभयवाचित्वमङ्गीकार्यमित्यर्थः ।

(८०३ प्रत्याख्यानहेतुवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ पूर्वशेषदर्शनाच्च ॥ * ॥

(भाष्यम्) पूर्वस्य खल्वपि शेषो दृश्यते—स च यश्च तावानय यावानय इति ॥

(प्रदीपः) पूर्वशेषदर्शनाच्चेति । सति त्वारम्भे पूर्वशेषो न स्यादिति दोषप्रसङ्गः ॥

(प्रयोजनान्तरभाष्यम्)

इदं तर्हि प्रयोजनम्—द्वन्द्वो मा भूदिति ॥

(प्रदीपः) द्वन्द्व इति । तद्देवदत्तावित्यादिप्रयोगो मा भूदित्यर्थः ॥

(उद्द्योतः) तद्देवदत्ताविति । अवान्तरधर्मविवक्षायां तत्प्राप्तिरिति बोध्यम् ॥

(प्रयोजनान्तरनिराकरणम्)

एतदपि नास्ति प्रयोजनम् ।

(८०४ प्रयोजनप्रत्याख्यानवार्तिकम् ॥ ६ ॥

## ॥ * ॥ सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात् सिद्धम्

(भाष्यम्) सामान्यविशेषवाचिनोश्च द्वन्द्वो न भवतीति वक्तव्यम् ॥

(इष्टानुपपत्तिभाष्यम्)

यदि सामान्यविशेषवाचिनोर्द्वन्द्वो न भवतीत्युच्यते, शूद्राभीरं गोबलीवर्दं तृणोलपमिति न सिध्यति ॥

(अनुपपत्तिपरिहारभाष्यम्)

नैष दोषः । इह तावच्छूद्राभीरमिति, आभीरा जात्यन्तराणि ॥

(प्रदीपः) आभीरा इति ।

'ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते ।
माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्' इति स्मृतिः ॥

(द्वितीयोदाहरणनिराकरणभाष्यम्)

गोबलीवर्दमिति । गावं उत्कालितपुंस्का वा-

---

1 निर्धारणे षष्ठी । (र. ना.) 2 सजातीयानामपि त्यदादीनां सहविवक्षायां पुंनपुंसकयोरेकशेषस्वीकारे इत्यर्थः । (र. ना.) 3 विशेषणानामित्यर्थः । (र. ना.) 4–5 'दत्तोऽपि' ॥ 6 तथाच तस्यैव प्रयोगः सिद्ध इति भावः । (र. ना.) 7 द्वन्द्वनिषेधादित्यर्थः । (र. ना.) 8 क्षत्रियादित्यर्थः । (र.ना.) 9 वाहाय च विक्रयाय च निष्काशितपुंस्का गावोऽतः स्त्रिय एव गोशब्दवाच्या अवशिष्यन्ते इति संबन्धः । (र. ना.)

हाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते ॥

(प्रदीपः) स्त्रिय एवेति । ततश्चात्र गोशब्दः स्त्रीगवीणामेव वाचकः ॥

(उद्द्योतः) भाष्ये उत्कालिता निष्काशिताः पुरुषा येभ्वि[1]त्यर्थः ॥ विनाशितपुंस्त्वा इत्यर्थं कश्चित् । तन्न । उत्तरसूत्रे पुंस उत्कालयितुमिति भाष्या[2]संगतेः ॥ किमर्थं पुंसां निष्काशनमत आह—वाहायचेति । प्रायेण[3] बलीवर्दा एव वाह्यन्ते विक्रीयन्ते च ॥ स्त्रिय एवेति । ततश्च गोशब्दे स्त्रीत्वसमानाधिकरणं गोत्वं प्रवृत्तिनिमितं पुंस्त्वसमानाधिकरणं चेति नानार्थो गोशब्दः । तत्राद्यः प्रसिद्धोऽन्त्यस्तु क्वचिदेव । एवं च गोशब्दः स्त्रीगवीणामेव वाचकः प्रायेण, क्वचिदेव तात्पर्यग्राहकवशेन पुंगवानां वाचको, यथा एतान् गाश्चतुरो बलीवर्दान् पश्येति प्रथमयोरितिसूत्रस्थभाष्यप्रयोगे गौर्वाहीक इत्यादौ चेति भावः ॥ एवं च बलीवर्दसमभिव्याहाराद् गोशब्दस्तदतिरिक्तपर इति कथा चिन्त्या ॥ वाहाद्यर्थं निष्काशितपुरुषा एव गावो गोपदवाच्या न तु तत्सहिता इत्यर्थो भाष्यस्य ॥ एतान् गा इत्युदाहरणे बलीवर्दानिति त्ववस्थाविशेषप्राप्तत्वबोधनायेत्याहुः ॥ ततश्चात्रेति । अत्रोदाहरणे पुंतात्पर्यग्राहकरहिते इत्यर्थः । भाष्यात् लोकाच्च गोशब्दव्यवहारः प्रायेण स्त्रीगवीष्वेवेति द्रष्टव्यम् ॥

(तृतीयोदाहरणनिराकरणभाष्यम्)

**तृणोलपमिति अपामुलपमिति नामधेयम् ॥**

(तदस्याक्षेपभाष्यम्)

**तर्त्तर्हि वक्तव्यम् ॥**

(एकदेशिसमाधानभाष्यम्)

**न वक्तव्यम् । सामान्येनोक्तत्वाद्विशेषस्य प्रयोगो न भविष्यति । सामान्येनोक्तत्वात् तस्यार्थस्य, विशेषस्य प्रयोगेण न भवितव्यम् । किं कारणम्? । उक्तार्थानामप्रयोग इति ॥**

(प्रदीपः) सामान्येनेति । सर्वविशेषाणां व्याप्[4]त्वास्ति सामान्यविशेषयोः समुच्चय इत्यर्थः ॥

(उद्द्योतः) समुच्चय इति । सहविवक्षेत्यर्थः ॥

(आक्षेपभाष्यम्)

**न तर्हीदानीमिदं भवति—तं ब्राह्मणमानय गार्ग्यमिति ॥**

(प्रदीपः) तं ब्राह्मणमिति । तमित्यनेन गतत्वाद्ब्राह्मणशब्दस्य प्रयोगो न प्राप्नोति ब्राह्मणमित्यनेन गतत्वाच्च गार्ग्यशब्दस्येति भावः ॥

(उद्द्योतः) गतत्वादिति । वस्तुमात्रविवक्षयेत्यर्थः ॥

(एकदेशिसमाधानभाष्यम्)

**भवति । यदा नियोग[5]तस्तस्यैवानयनं भवति ॥**

(प्रदीपः) भवतीति । सामान्योपक्रमे विशेषाभिधानमित्यर्थः ॥

(उद्द्योतः) सामान्योपक्रमे इति । न प्रथमत एव विशेषावगमः । तथा सति सामान्यविशेषवाचिनोरुभयोः प्रयोगवैयर्थ्यम् । तस्मात्सामान्योपक्रमे विशेषाभिधानमित्यर्थः ॥

(वार्तिकसमर्थकसिद्धान्तिभाष्यम्)

**एवं तर्हि येनैव खल्व[6]पि हेतुना एतद्वाक्यं भवति—तं ब्राह्मणमानय गार्ग्यमिति, तेनैव हेतुना वृत्तिरपि प्राप्नोति । तस्मात्सामान्यविशेषवाचिनो[7]र्द्वन्द्वो न भवतीति वक्तव्यम् ॥ त्यदादीनि ॥७२॥**

(प्रदीपः) येनैवेति । यथा समान्यविशेषयोर्विशेषणविशेष्यभावो दृश्यते तथा विशेषसंनिधौ तद्वर्जितेषु विशेषान्तरेषु सामान्यशब्दस्य वृत्ति[8]र्दृश्यते—**ब्राह्मणा आयाता वसिष्ठोप्यायात** इति । तस्मात्तथाविधे विषयेऽयं वाचनिको द्वन्द्वनिषेधः । तस्मिंश्च सत्ययमेकशेषो न वक्तव्य इत्यर्थः॥७२॥

(उद्द्योतः) ननु वाक्यं विशेषणविशेष्यविषयम्, द्वन्द्वस्तूभयपदार्थप्रधानविषय इति कथमेतदत आह—[9]यथेति ॥ प्राच्यभरतेष्विति तु सौत्रो निर्देशः । प्रमा[10]णप्रमेयेत्यादि त्वेतद्भाष्यरीत्याऽसा[11]ध्वेवेत्याहुः ॥ ७२ ॥

(१२१ एकशेषसूत्रम् ॥ १ । २ । ३ आ० १० सूत्रम्)

## १४७ ग्राम्यपशुसंघेष्वतरुणेषु स्त्री १ । २ । ७३ ॥

(प्रदीपः) ग्राम्य ॥ ७३ ॥ स्त्रीपुंसात्मकस्य संघस्य स्त्रीशब्देनाभिधानं यथा स्यादिति सूत्रारम्भः ॥

(उद्द्योतः) ग्राम्यपशु ॥ ७३ ॥ स्त्रीशब्देनेति । अन्यथा पुमान् स्त्रियेति पुंसः शेषः स्यादित्यर्थः ॥

(प्रत्याख्यानभाष्यम्)

**अयमपि योगः शक्योऽवक्तुम् ॥**

(प्रदीपः) उभ[12]यात्मकत्वमक्षाम्यन्नाह—अयमिति ॥

---

१ निर्धारणे सप्तमी । (र. ना.) २ तत्र निष्कासनार्थे एव प्रयोगात् । विनाशार्थे प्रयोगाङ्गीकारे तु अग्राम्याणां ग्रहणं विनाऽपि विनाशनसंभवा'त्कः पुनरर्हति' इत्याद्युत्तरभाष्यासंगतिः स्पष्टैव । (र. ना.) ३ प्रायेणेत्यनेन क्वचिद्गत्यन्तराभावे स्त्रीगव्योपि विक्रीयन्ते । यथा 'ऋषिसहस्रमेकां गाम्' इति प्रागुक्त स्वसंकल्पितसहस्रगोदानरूपकर्मसमाप्तितः प्राक् प्रतिग्रहस्य कर्तुमशक्यत्वेन विक्रयं विना गोलाभाभावेन कर्मसमाप्तये स्त्रीगवीणामपि विक्रयो भवत्येवेति विभावनीयम् ॥ अन्ये तु 'वाहाय विक्रेयद्रव्यतो पुंगवान्निष्कास्य विक्रेयत्वेन स्त्रीगवीणां स्थितिः क्रियते' इत्येवैतस्य भाष्यस्यार्थमाहुश्चकारस्य वाक्यालंकारमङ्गीकृत्य ॥ ये तु "स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते, न पुंसः" इति (३।४।३) निरुक्तमपि स्त्रीगवीणामेव विक्रेयत्वे प्रमाणं वदन्ति । ते शौनःशेपदृष्टान्तेन मनुष्यजातिपरत्वस्यैवास्य प्रकरणस्य सूचितत्वेन नातिशयप्रामाण्यं लभन्त इति दिक् ॥ अन्ये तु इत्यादिनोक्तमध्याहारचकारानर्थक्यादिकल्पनाशब्दास्वारस्यादिदोषदुष्टत्वाद् हेयम् । (र.ना.) ४ सामान्यनिरूपित व्याप्तिमत्त्वादित्यर्थः । (र.ना.) ५ नियमेन विशेषस्यैवानयनं भवतीत्यर्थः । आद्यादित्वात्तसिः । (र. ना.) ६ वाक्यालंकारे प्रसिद्धौ वा । (र. ना.) ७ 'नोश्च द्वन्द्वो' ॥ ८ लक्षणेत्यर्थः । (र. ना.) ९ तथा च सामान्यशब्दस्य तद्वर्जितविशेषान्तरेषु लक्षणयोभयपदार्थप्रधानत्वं सूपपादमिति भावः । (र. ना.) १० प्रमाणादीनां प्रमेयविशेषरूपत्वादिति भावः । (र. ना.) ११ असाध्वेवेति । न्यायसूत्रकार्येनैव सौत्रत्वकल्पनेत्यत्र नैव विनिगमकम् ऋषित्वाविशेषादिति केचित् ॥ परंतु वेदाङ्गत्वमेव व्याकरणसूत्रेषु च्छन्दोवत्त्वकल्पने विनिगमकम् । तथाच न्यायादिसूत्रेषु वेदाङ्गत्वाभावेन च्छन्दोवत्त्वाभावेनासाधुत्वेऽपि तथाप्रयोगकरणे तेषामृषीणां तपोबलाधिक्येन न प्रत्यवायप्राबल्यमिति वदन्ति ॥ १२ संघस्य स्त्रीपुंसोभयात्मकत्वमसहमान इत्यर्थः । (र. ना.)

( उद्योतः ) उभयेति । संघस्येत्यादिः ॥

( आक्षेपभाष्यम् )

**कथम्—गाव इमाश्चरन्ति अजा इमाश्चरन्ति?॥**

( आक्षेपबाधकभाष्यम् )

**गाव उत्कालितपुंस्का वाहाय च विक्रयाय च । स्त्रिय एवावशिष्यन्ते ॥**

( प्रदीपः ) स्त्रिय एवेति । यद्यपि तत्र वृषभस्यापि संभवः तथापि मल्लग्रामवद्भूयस्त्वात् स्त्रीभिर्व्यपदेशो भवति । अग्राम्यादिषु तु मिश्रत्वात् संघस्य पुमान् स्त्रियेति पुंसः शेषः॥

( उद्योतः ) वृषभस्यापीति । सर्वेषामुत्कालनासंभवादिति भावः ॥ मिश्रत्वादिति । तेषामुभयसाधारणजातिविशिष्ट एव शक्तिरिति भावः ॥ ७३ ॥

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—ग्राम्येष्विति वक्ष्यामीति । इह मा भूत्—न्यङ्कव इमे सूकरा इम इति ॥**

( प्रयोजननिराकरणभाष्यम् )

**कः पुनरर्हति अग्राम्याणां पुंस उत्कालयितुं, ये ग्रहीतुमशक्याः । कुत एव वाहाय च विक्रयाय च ॥**

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—पशुष्विति वक्ष्यामीति । इह मा भूत्—ब्राह्मणा इमे, वृषला इमे ॥**

( प्रयोजननिराकरणभाष्यम् )

**कः पुनरर्हत्यपशूनां पुंस उत्कालयितुं ये अशक्या वाहाय च विक्रयाय च ॥**

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—संघेष्विति वक्ष्यामीति । इह मा भूत्—एतौ गावौ चरतः ॥**

( प्रयोजननिराकरणभाष्यम् )

**कः पुनरर्हति निर्ज्ञातेऽर्थे अन्यथा प्रयोक्तुम् ।**

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—अतरुणेष्विति वक्ष्यामीति । इह मा भूत्—उरणका इमे, बर्करा इम इति ॥**

( प्रयोजननिराकरणभाष्यम् )

**कः पुनरर्हति तरुणानां पुंस उत्कालयितुं ये अशक्या वाहाय च विक्रयाय च ॥**

( ८७५ शेषपूरणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनेकशफेषु ॥ * ॥**

( भाष्यम् ) **अनेकशफेष्विति वक्तव्यम् । इह मा भूत् । अश्वाश्चरन्ति, गर्दभाश्चरन्तीति ॥ ग्राम्यपशु ॥ ७३ ॥**

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीयपादे तृतीयमाह्निकम् ॥

पादश्चायं समाप्तः ॥

( प्रदीपः ) अनेकशफेष्विति । उष्ट्राणां त्वारण्यकत्वात् स्त्रीशेषाभावः । तत्रानेन प्रकरणेन 'प्रयोगस्य नियतत्वात् जातिः क्वचिदाश्रयलिङ्गेन स्त्रीत्वेन व्यपदिश्यते क्वचित्पुंस्त्वेने'त्युक्तं भवति ॥ ७३ ॥

इत्युपाध्यायजैयटात्मजकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य द्वितीये पादे तृयमाह्निकम् ॥

( उद्योतः ) इति शिवभट्टसुत सतीगर्भज नागोजी (नागेश) भट्टकृते भाष्यप्रदीपोद्योते प्रथमस्य द्वितीये पादे तृतीयमाह्निकम् ॥

पादश्च द्वितीयः समाप्तः ॥

---

१ स्त्रियएवेति । उत्कालितपुंस्कानां स्त्रीगवीणां संघस्यैव प्रायेण चारणादिक्रियान्वययोग्यत्वादिति भावः ॥ वाहविक्रयादिक्रियान्वययोग्यास्तु परिच्छिन्नसंख्याका एवेति न तेषां संघत्वम् । अपरिच्छिन्नसंख्यानां समुदायस्य संघशब्दवाच्यत्वविवक्षणादिति भावः ॥ २ गवां प्रजननार्थमिति भावः । ( र. ना. ) ३ एवम् अजा इमाश्चरन्तीत्यत्रापि । तत्संघेऽपि हि स्वल्पा एव पुमजा भवन्ति । ( र. ना. ) ४ स्त्रीपुंसोभयसाधारणमृगत्वादिजातीत्यर्थः । ( र. ना. ) ५ 'तरुणका' ॥ ६ उरणकस्तरुणमेषः । ( र. ना. ) ७ निर्धारणे षष्ठी । उरणका वर्करा वा न वाहायोपयुक्ताः । यत्रापि वाहे अजादीनामुपयोगः पर्वतादौ तत्रापि स्त्रीणामेव न तु पुमजादीनाम्, उद्धतत्वात् । वाहाभावे न च विक्रयः । यत्रापि मांसार्थं क्रयविक्रयौ तत्रापि बालानामेव न तु तरुणानामिति प्रसिद्धिः । (र.ना.)

## सूत्रसंख्याकोष्ठकम् ।

| | पूर्वपादयोगः | अस्मिन् ( १।२ ) पादे सूत्रगणनालेखः गाङ्कुटाद्युदुपधादपृक्तश्छन्दसिपुनर्वस्वोस्त्रयोदश॥ | | | समुदितयोगः |
|---|---|---|---|---|---|
| | | १ आह्निके | २ आह्निके | ३ आह्निके | |
| व्याख्यातानि | ६८ | २८ | १५ | १० | १२१ |
| अव्याख्यातानि | ६ | १६ | ४ | ० | २६ |
| समुदितानि | ७४ | ४४ | १९ | १० | १४७ |

## वार्तिकसंख्याकोष्ठकम् ।

| पूर्वपादयोगः | १ आह्निके | २ आह्निके | ३ आह्निके | समुदितयोगः |
|---|---|---|---|---|
| ५६८ | ९९ | ६२ | ७६ | ८०५ |

## प्रथमाध्यायस्य तृतीये पादे प्रथमाह्निकम्

( आदितस्त्रयोदशमाह्निकम् )

( १२२ धातुसंज्ञासूत्रम् ॥ १ । ३ । १ आ. १ सू० )

## १४८ भूवादयो धातवः १।३।१ ॥

( वकारस्य प्राप्तिप्रयोजननिरूपणम् )

( आक्षेपभाष्यम् )

**कुतोयं वकारः । यदि तावत्संहितया निर्देशः क्रियते, भ्वादय इति भवितव्यम् । अथासंहितया, भूआदय इति भवितव्यम् ? ॥**

( प्रदीपः ) **भूवादयो धातवः ॥१॥ कुतोयमिति ।** लक्षणा[1]भावं मत्वा कस्मान्निमित्ताद्वकार इति पृच्छति ॥ **यदि तावदिति ।** यणादेशेनेको निवर्तितत्वात् ॥ **अथासंहितयेति ।** अभ्युपगम्यवादोयम् । न त्वेकस्मिन्पदेसंहितास्ति । संहितैकपदे नित्येति वचनात् । तस्मात्सर्वथा निर्देशो न संभवतीत्येवंपरमेतत् ॥

( उद्द्योतः ) ॥ श्रीगणेशाय नमः ॥ भूवादयो ॥ १ ॥ **कस्मान्निमित्तादिति ।** फलमपि निमित्तम् । अत एव **मङ्गलार्थं** इत्युत्तरे सङ्गच्छते । तन्त्रेण कारणप्रश्नश्च । अत एव **यदि तावदिति** भाष्योक्तो विकल्पः सङ्गच्छते । न[2] च भ्वादय इत्युक्तेपि वकारस्य सत्त्वात् प्रश्नानुपपत्तिरत आह—**यणेति ।** ऊकारोत्तरवकारविषयः प्रश्न इति भावः ॥ अस्माद्भाष्यात्समासेपि संहिताविकल्प इति भ्रमं वारयति—**अभ्युपगम्येति ॥ न त्वेकस्मिन्निति ।** यद्यप्यत्र संहितानित्यत्वे नैकपदत्वं प्रयोजकं

**'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।**
**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' ॥**

इतिश्लोके समासग्रहणेनैकपदशब्देनाखण्डपदस्यैव ग्रहणात् । अत एवाग्रेअग्र इत्यादावाष्टमिकद्वित्वे सा न[3] नित्या, किं तु समासत्वं प्रयोजकम् । तथाप्यनेनैकदेशेनोक्त[4]श्लोकग्रहणान्न दोषः ॥ नन्वेवं भाष्यप्रामाण्योच्छेदोत आह—**तस्मादिति ।** तथा च तात्पर्यविषयाबाधान्नाप्रामाण्यमिति भावः ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( ८०६ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ भूवादीनां वकारोयं मङ्गलार्थः प्रयुज्यते ॥ * ॥**

**( भाष्यम् ) माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वकारमागमं प्रयुङ्क्ते । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्ति आयुष्मत्पुरुषाणि च, अध्येतारश्च मङ्गलयुक्ता यथा स्युरिति ॥**

( प्रदीपः ) **भूवादीनामिति ।** सूत्रोच्चारिते भूवादिशब्दे इत्यर्थो विवक्षितः । तत्र वाचकसंबन्धी भूवादीनां भूवादिशब्दवाच्यानां वकार इति व्यपदिश्यते ॥ **मङ्गलार्थ इति ।** ननु निमित्ते पृष्टे प्रयोजनकथनमप्रस्तुतम् । नैष दोषः । प्रयोजनकथनेन निमित्तस्यापि कथनात् । अत एव निपातनादागमरूपोत्र वकारः कृतः । न चायमसाधुः । वै[5]याकरणनिकाये प्रसिद्धत्वात् । तस्य च मङ्गलं प्रयोजनमित्यनेन प्रतिपादितं भवति । अपूर्वस्य हि[6] लाभो दध्यादेर्लोके मङ्गलं सूचयति । तथेहाप्यागमो वकारो मङ्गलार्थः संपद्यते । अथ वा सति वकारेऽविकृते भूशब्दे उच्चार्यमाणे महाव्याहृतिस्मरणं मङ्गलं भवतीति पारम्पर्येण वकारो मङ्गलार्थकः संपद्यते ॥

( उद्द्योतः ) ननु भूवादीनामित्यस्य स्वरूपपरत्वे बहुवचनानुपपत्तिरर्थपरत्वे प्रकृतासङ्गतिरतः पर्यवसितमर्थमाह—**सूत्रोच्चारिते इति ॥** तल्लाभप्रकारमाह—**तत्रेति ।** वाचकभूवादिशब्दसंबन्धी वकारस्तद्वाच्यनिष्ठत्वेनोपचर्यत इति भावः ॥ **प्रयोजनेति ।** अनिमित्तकस्यासत्प्रायतया प्रयोजनकथनानुपपत्तिरिति भावः ॥ उभयस्मिन् पृष्टे प्रयोजनमात्रकथनमसङ्गतमित्यपि बोध्यम् ॥ **न चायमिति ।** सर्वलोकप्रयुक्तत्वाभावादिति भावः ॥ **वैयाकरणेति ।** अनादिव्यवहार एव साधुत्वप्रयोजको न सर्वलोकप्रसिद्धिः । अन्यथा याज्ञिकमात्रप्रसिद्धस्फ्यादीनां व्याकरणप्रसिद्धटिघुभादीनामप्यसाधुत्वापत्तिरिति भावः ॥ ननु मङ्गलं नाम धर्मः[8] तत्र न वकारोच्चारणं तज्जनकं मानाभावाद् भ्वादिशब्दे[9]नापि तत्सम्भवाच्चात आह—**अपूर्वस्य हीति ।** मङ्गलजनक इति नार्थः, किं तु सूचक इति न दोषः । निर्ब[10]न्धनं तु शिष्याणामप्यानुषङ्गिकमङ्गलसूचनार्थमिति भावः ॥ नन्वस्य मङ्गलसूचकापूर्ववस्तुत्वं न लोकसिद्धमत आह—**अथ वेति ॥** रेफान्तस्यैव महाव्याहृतित्वादाह—**स्मरणमिति ।** एवं च वकारलक्षणप्रश्ने इदमेव निपातनविधया लक्षणम् । गुरू[11]च्चारणं तु महाव्याहृतिस्मरणलक्षणमङ्गलार्थमित्युत्तरमिति बोध्यम् ॥ तदेतत्सर्वं भाष्ये **वकारमागममित्यनेन** सूचितम् ॥ वका[12]रस्यामृतबीजत्वा[13]द्दध्यादिवन्मङ्गलसूचकत्वमित्यन्ये ॥

( आक्षेपभाष्यम् )

( आदिग्रहणप्रयोजनवर्णनाधिकरणम् )

**अथादिग्रहणं किमर्थम् । यदि तावत्पठ्यन्ते नार्थ आदिग्रहणेन । अन्यत्रापि ह्ययं पठन्नादिग्रहणं न करोति ॥ क्वान्यत्र ? । "मृडमृदगुधकुषक्लिशवदवसः क्त्वा" इति ॥**

---

१ वकारविधायकशास्त्राभावं मत्वेत्यर्थः । ( र. ना. ) २ 'ननु' इत्युचितं शोधितम् ॥ ३ अत एवाग्रे अग्रे इत्यादौ नित्यपूर्वरूपाभाव इति भावः । (र.ना.) ४ एकपादात्मकभागेनेत्यर्थः । लक्षणयेति भावः । ( र. ना. ) ५ समूहे गृहे वा इत्यर्थः ( र. ना. ) ६ 'हि दध्यादेर्लाभो लोके' ॥ ७ अर्थस्य भ्वादिधातुरूपस्य वकाराघटितत्वादिति भावः । ( र. ना. ) ८ मङ्गलस्य धर्मरूपत्वे स्थितेसतीत्यर्थः । ( र. ना. ) ९ भ्वादिशब्दस्यापि वकारघटितत्वादिति भावः । (र.ना.)

१० ननु आगमघटितस्योच्चारणेऽपि ग्रन्थे तस्योपन्यासः किमर्थं इत्यत आह—( र. ना. ) ११ गुरुभूतस्यागमघटितस्योच्चारणमित्यर्थः । ( र. ना. ) १२ महाव्याहृतेर्हस्वोकाररेफवत्त्वात् भकृते तयोरभावेन कथं महाव्याहृतिस्मरणमित्यत आह—वकारेति ॥ १३ वकारः शिवस्य सुधाबीजरूप इति हि तन्त्रप्रसिद्धिः । ( र. ना. )

**अथ न पठ्यन्ते, नतरामर्थ आदिग्रहणेन । नह्यपठिताः शक्या आदिग्रहणेन विशेषयितुम् ॥**

(प्रदीपः) **नार्थ इति । भूवादीन्** पठित्वा 'ते धातवः' इति वक्तव्यम्, यथा **ते तद्राजा** इति ॥ **नतरामिति ।** सति पाठे गतार्थत्वान्न कर्तव्यम् । असति त्वसंबन्धादित्यर्थः ॥ अत एव प्रतिषेधप्रकर्षः संबन्धाभावेऽत्यन्तमेवाकरणमित्यस्यार्थस्य प्रतिपत्तये निर्दिष्टः ॥

(उद्द्योतः) ननु गणपाठेप्यादिग्रहणं विना कथं सर्वसंग्रहोऽत आह—**भूवादीनिति ।** एवं च भूपदस्थाने 'ते' पदस्यावश्यकतया आदिपदमात्रविषयः प्रश्नो भाष्ये कृत इति भावः ॥ **इन्धिभवतिभ्यां चेति** भवतिमादि मन्यते ॥ **अत्यन्तमेवेति ।** अनेन 'सति पाठे संनिधानाविशेषाद्धातूनामिव प्रत्ययानामपि तत्पदं परामर्शकं स्यादिति ज्ञापकक्लेशवारणाय स्पष्टप्रतिपत्तये आदिग्रहणं कदाचित् क्रियेतेति नात्यन्तकरण'मिति सूचितम् ॥

(समाधानभाष्यम्)

**एवं तर्हि सिद्धे सति यदादिग्रहणं करोति, तज्ज्ञापयत्याचार्यः—'अस्ति च पाठो बाह्यश्च सूत्राद्' इति ॥ किमेतस्य ज्ञापने प्रयोजनम्? ॥ पाठेन धातुसंज्ञेत्येतदुपपन्नं भवति ॥**

(प्रदीपः) **एवं तर्हीति ।** सूत्रेषु ये पठ्यन्ते मृडमृदादयः तान्समाप्य 'ते धातव' इति वचनेन सिद्धे सतीत्यर्थः ॥ **अस्ति च पाठ इति ।** अनेनासंबद्धत्वं परिहृतम् । **बाह्यश्चेत्यनेन** गतार्थत्वं निराकृतम् ॥ **पाठेनेति ।** ये धातुपाठे पठितास्तेषामेव धातुसंज्ञा । तेषां च पाठो नोपलक्षणार्थः । अपि तु इयत्ताप्रतिपादनार्थः । तत्र यदि **क्रियावाची धातुरि**त्येतल्लक्षणं क्रियेत, तर्हि आणवयति वट्टयतीत्यादीनामपि धातुसंज्ञा स्यात् । अथ सूत्रपठितानामनन्तरं **ते धातव** इत्युच्यते, तदा तत्रापठितानां न स्यात् । तस्माद्भूवादय इत्युक्तम् । तत्र सूत्रवार्तिकभाष्यगणेषु ये पठ्यन्ते तेपि सूत्रकारादिप्रामाण्याद्धातुत्वेनाश्रयणीयाः ॥

(उद्द्योतः) नन्वेवमेवं तर्हि सिद्धे इति भाष्यमनुपपन्नं सूत्रपठितकतिपयानां धातुत्वसिद्धावपि सर्वेषां तत्सिद्ध्यभावादत आह—**सूत्रेष्विति ॥** पूर्वपक्षी बहिर्गणपाठं न जानात्येतेतीन्धिभवतिभ्यां चेतिसूत्रस्थं भवतिमादिं मन्यत इति तं प्रत्याह सिद्धान्ती—यदि तावतामेव धातुत्वमिष्टं स्यात्तर्हि **ते धातव** इत्येव वदेदित्यादिग्रहणं ज्ञापकमिति भावः ॥ न च प्रकारवाच्यप्यादिशब्दो दृष्ट इति कथं ज्ञापकत्वं, व्यवस्थावाच्यादिशब्दस्य प्रसिद्धतरत्वादिति भावः ॥ ननु **बाह्यः पाठ** इत्येतावतैव सत्ताया अपि सिद्धेरस्ति पाठ इति व्यर्थमत आह—**अनेनेति ।** यथा चादिग्रहणकरणे पाठेन संज्ञेत्येतदुपपत्तिस्तथा दर्शयति—**ये धातुपाठ इति ॥** यद्यपि **ते** इति पाठेपि पाठमूलैव संज्ञा तथापि पाठविशेषमूलत्वज्ञापनं ज्ञापकफलमिति भावः ॥ ननु ऋतिप्रभृतीनां सौत्राणां धातुत्वाय भ्वादेराकृतिगणत्वमावश्यकमित्याणवयत्यादावतिप्रसङ्गोत आह—**तेषां चेति ।** अत एव भ्वादिसमाप्तौ वृत्करणम् । **बहुलमेतन्निदर्शनमि**त्यपि यदि प्रामाणिकं तर्हि णिच एव तेन, न गणपाठस्येति भावः । ध्वनितं चेदं **पाठेन धातुसंज्ञे**त्युद्धाष्येण ॥ ननु याः पश्यतीत्यादिव्यावृत्यर्थं क्रियावचनत्वस्यावश्यत्वाच्यतया पाठफलं नास्तीत्यतस्तत्फलं दर्शयति—**तत्रेति ।** आज्ञापयतीत्यर्थे आणवयतीति प्राकृतम् । अपभ्रंशानामपि स्वातन्त्र्येणैव बोधकत्वाङ्गीकारादेतेषां क्रियावाचित्वं बोध्यम् ॥ अथ पाठविशेषफलं दर्शयति—**अथ सूत्रेति ॥** ननु पाठस्यानुपलक्षणत्वे ऋत्यादीनां कथं धातुत्वमत आह—**सूत्रेति ॥** ऋतेरीयङिति सूत्रम् ***अनेकाज्ग्रहणं चुलुम्पाद्यर्थम्*** इति वार्तिकम्, गणः कण्ड्वादिः, धात्वधिकारविहितकार्यैर्दिश्यताकरणरूपं तत्प्रामाण्यं, तेन च पूर्वं धातुपाठे पठितानामिदानीं पाठभ्रंशोऽनुमीयत इति भावः ॥ नन्वेवमप्यवश्यं पठनीये गणे सूत्रान्तरे च गणं पठित्वा ते धातव इत्येव किं नोक्तमिति चेन्न । एवंविधसूत्रकरणेऽल्पाक्षरमसन्दिग्धमिति सूत्रलक्षणोच्छेदापत्तिः । अन्यथा सर्वाद्यादीनपि सूत्रान्तः पठित्वा सर्वनामानीत्यात्त्तस्यैव सिद्धे बहुव्याकुलतापत्तिरित्याहुः ॥

(अनिष्टापत्तिवारणाधिकरणम्)

(८०७ आक्षेपवार्तिकम् ॥ २ ॥)

## ॥ * ॥ पाठेन धातुसंज्ञायां समानशब्दप्रतिषेधः ॥ * ॥

(भाष्यम्) **पाठेन धातुसंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । या इति धातुः, या इत्याबन्तः । वा इति धातुः, वा इति निपातः । नु इति धातुः, नु इति प्रत्ययश्च निपातश्च । दिव् इति धातुः, दिविति प्रातिपदिकम् ॥**

**किं च स्याद् यद्येतेषामपि धातुसंज्ञा स्यात्? । धातोरिति तव्यदादीनामुत्पत्तिः प्रसज्येत ॥**

(प्रदीपः) **समानशब्दानामिति ।** समानश्रुतीनामिष्टविपरीतानामक्रियावाचिनामित्यर्थः ॥ **तव्यदादीनामिति ।** यथैव दिवं पश्येति बाह्यक्रियापेक्षे कर्मणि द्वितीया भवति, एवं तव्यदादयोपि स्युरित्यर्थः ॥

(उद्द्योतः) ननु समानशब्दानामित्यत्रार्थतः साम्ये पर्यायाणामित्यर्थेऽसंगतिः, पर्यायातिप्रसङ्गस्य पाठाश्रयणप्रयुक्तत्वाभावादत आह—**समानश्रुतीनामिति ॥** ननु प्रयोगस्थानां गणपठितेभ्यो भिन्नत्वेन समानश्रुतित्वेनैव कार्यस्य वक्तव्यत्वमत आह—**इष्टेति ॥** इष्टानिष्टविभागस्य दुर्ज्ञेयत्वादाह—**अक्रियेति ॥** नन्वेषामक्रियावाचित्वात्कारके विधीयमानतव्यादीनां कथं प्राप्तिरत आह—**यथैवेति ॥**

(आक्षेपबाधकभाष्यम्)

**नैष दोषः । साधने तव्यदादयो विधीयन्ते । साधनं च क्रियायाः । क्रियाभावात्साधनाभावः ।**

१ 'भूवादय इति पठित्वा' । २ 'द्रष्टव्यः' । ३ सूत्रेषु पठितानां धातूनामिति शेषः । (र. ना.) ४ बाह्यस्य गणपाठस्याज्ञानादिति भावः । (र. ना.) ५ आदिपदस्य संबन्धराहित्यमित्यर्थः । (र. ना.) ६ 'त्यादिना' । ७ नोदाहरणार्थं इत्यर्थः । (र. ना.) ८ 'आणवयत्यादीना' । ९ बहुव्रीहेरस्वप्रत्ययः । (र. ना.) १० बाहुलकत्वमित्यर्थः । (र. ना.) ११ तिङन्तादीत्यादिः । (र. ना.) १२ धातुसंज्ञारूपस्येत्यर्थः । (र. ना.)

**साधनाभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न भविष्यन्ति ॥**

( प्रदीपः ) **साधन इति** । अन्तरङ्गधातुवाच्यक्रियापेक्षे साधने तव्यदादयः सावकाशा बाह्यक्रियापेक्षे [ साधने ] नोत्पद्यन्ते इत्यर्थः । योऽपि **शकधृषेति** स्वार्थिकस्तुमुन् सोऽप्यनभिधानान्न भविष्यति ॥

( उद्योतः ) **अन्तरङ्गेति** । प्रातिपदिकाद् द्वितीयेत्यादौ प्रातिपदिकार्थनिरूपितकर्मासंभवात्तथा ग्रहणेऽपि धातोस्तव्यदित्यादिवाक्ये उपस्थितधात्वर्थापेक्षकारकसम्भवान्न बाह्यग्रहणमिति भावः । अनया रीत्या भावेऽप्यनुत्पत्तिर्बोध्या । साध्यावस्थस्यैव तव्यदादिविधौ भावपदार्थत्वात् ॥ भाष्ये—**साधन इति** भावोपलक्षणं बोध्यम् । **भावे** इति घञपि न, पदरुजादिसाहचर्यात्साध्यत्वेनापि भासमाने भावे एतद्विधानादित्याहुः ॥ नन्वेवमपि स्वार्थिकास्तुमुनादयः स्युरत आह—**योऽपीति** ॥ तादर्थे तुमुनः क्रियार्थक्रियोपपदत्वाभावादप्रसक्तेराह—**शकेति** ॥ वस्तुतोऽव्ययकृतो भाव इत्युक्तेः सोपि भाव एवेति बोध्यम् ॥

( आक्षेपसाधकभाष्यम् )

**इदं तर्हि याः पश्य—"आतो धातोः" इति लोपः प्रसज्येत ॥**

( प्रदीपः ) **याः पश्येति** । यच्छब्दो न धातुरिति विभक्तिरुत्पद्यते तस्मात्त्वे टापि च कृते धातुसंज्ञायामातो धातोरिति लोपप्रसङ्गः ॥

( उद्योतः ) ननु धातुत्वे विभक्त्यनुपपत्तिरेव कुतो न शङ्कितेत्यत आह—**यच्छब्द इति** ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । "अनापः" इत्येवं सः ॥**

( उद्योतः ) **अनाप इत्येवमिति** भाष्ये । अत एव क्त्वः श्च इत्यादिसिद्धिरिति भावः ॥ न च लक्षणप्रतिपदोक्तपरिभाषया टावन्तस्य न धातुसंज्ञेति वाच्यम् ॥

सकारजः षकारश्च षाद्वर्गस्तवर्गजः ॥

इत्यभियुक्तोक्तेर्भूवादिसूत्रे तत्परिभाषाप्रवृत्तेर्वक्तुमशक्यत्वादित्याहुः ॥

( आक्षेपसाधकभाष्यम् )

**अस्य तर्हि वाशब्दस्य निपातस्याधातुरिति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्रसज्यते । अप्रातिपदिकत्वात्स्वाद्युत्पत्तिर्न स्यात् ॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितं तत्रानर्थकग्रहणं न करिष्यते । "निपातः प्रातिपदिकम्" इत्येव ॥**

( उद्योतः ) भाष्ये **तत्रानर्थकग्रहणं न करिष्यत इति** । एवं चानर्थकेष्वप्राप्तविध्यर्थं तत् । वादिष्वधातुरिति बाधकबाधनार्थमपीति भावः ॥

( आक्षेपसाधकभाष्यम् )

**इह तर्हि त्रप्लू इति "अचि श्नुधातुभ्रुवां य्वोः" इत्युवङादेशः प्रसज्येत ॥**

( प्रदीपः ) **त्रप्लू इति** । ननु णुर्धातुषु पठितः । न चास्य तेन सारूप्यम् ॥ नैष दोषः । प्रयोगे नुशब्द एव धातुत्वेन चास्य सारूप्यमस्त्येव । यद्यपि चायं सानुबन्धकस्तथापि धातुष्वननुबन्धकपरिभाषा कैश्चिन्नाश्रीयते । अथ वोपलक्षणार्थमिदं, तेन स्थाणू वेणू इत्युदाहरणम् ॥

( उद्योतः ) **नन्विति** । पठितसारूप्यस्यैव संज्ञाप्रयोजकत्वादिति भावः ॥ **नैष इति** । कार्यार्थत्वात् संज्ञायाः प्रयोगे नुशब्दावस्थायामेव संज्ञाप्रवृत्तिर्न तु ण्ववस्थायां नुशब्दसंज्ञार्थमेव णुपाठ इति प्रयोगस्थे पठितबुद्ध्यारोपेण संज्ञाप्रवृत्त्या तत्सरूपेऽतिप्रसङ्गापादनं युक्तम् ॥ णो न इत्यादौ तु धात्वादेरित्यस्य भाविसंज्ञापरत्वान्न दोष इति भावः ॥ **अयं** कुप्लयः ॥ **कैश्चिदिति** । भूवादय इत्यत्र नाश्रीयतइत्यर्थः ॥ **अथ वेति** । अयमर्थ्युच्चयः । प्रागुक्तरीत्या सामञ्जस्यात् । किं चैवं श्नुग्रहणस्य ज्ञापकत्वपरभाष्यासंगतिः, त्रप्लू इत्यादावुवङापत्तिस्तूवर्णान्तधात्वन्तोङ्गस्येत्यर्थमभिप्रेत्य बोध्या ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'न प्रत्ययस्योवङादेशो भवति' इति । यदयं तत्र श्नुग्रहणं करोति ॥**

( इष्टानुपपत्तिभाष्यम् )

**अस्य तर्हि दिवूशब्दस्याधातुरिति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्रसज्येत । अप्रातिपदिकत्वात्स्वाद्युत्पत्तिर्न स्यात् ॥**

( उद्योतः ) भाष्येऽस्य **तर्हि दिवूशब्दस्येति** । अव्युत्पन्नप्रातिपदिकस्येत्यर्थः ॥

( अनुपपत्तिबाधकभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयत्युत्पद्यन्ते दिवूशब्दात्स्वादय इति । यदयं दिवः सावौत्वं शास्ति ॥**

( अनुपपत्तिसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? । दिवूशब्दो यः प्रातिपदिकं तदर्थमेतत्स्यात् । अक्षद्यूरिति ॥**

( प्रदीपः ) **अक्षद्यूरिति** । अत्र कृदन्तत्वात्प्रातिपदिकत्वम् ॥

( उद्योतः ) नन्वत्रापि धातुत्वात्कथं प्रातिपदिकत्वमत आह—**अत्रेति** । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणादिति भावः ॥

( अनुपपत्तिबाधकभाष्यम् )

**न वै अत्रेष्यते ॥**

( प्रदीपः ) **न वै अत्रेष्यत इति** । शिष्टप्रयोगाभावात् । तस्माद्दिव औदिति ज्ञापकमेव ॥

१ अन्तरङ्गत्वं धातुवाच्यत्वञ्च क्रियाविशेषणम् । ( र. ना. ) २ बाह्यक्रियापेक्षसाधनग्रहणेऽपीत्यर्थः । ( र. ना. ) ३ दिवादिप्रातिपदिकात्तव्यदादीनामिति शेषः । ( र. ना. ) ४ दिवादिप्रातिपदिकेन च साध्यावस्थक्रियाया अनभिधानादिति भावः । ( र. ना. ) ५ पदरुजेति सूत्रेण कर्तरि घञ्विधानात्तत्र नियमेन प्रकृत्या साध्यभावस्याभिधानमिति तत्साहचर्यादनेनापि साध्यत्वेन प्रकृत्याभावाभिधाने एव घञिति भावः । ( र. ना. ) ६ घञासिद्धत्वेनाभिधीयमानस्य भावस्यापिना परिग्रहः । ( र. ना. ) ७ तत्र वारणं तु भावघञ्ङीत्येति भावः । ( र. ना. ) ८ समुच्चयः । ( र. ना. ) ९ संज्ञायाः कार्यार्थत्वादित्यादिरीत्येत्यर्थः । ( र. ना. ) १० अन्यथा उवर्णान्तधातुरूपस्य नु इत्यस्याङ्गत्वाभावादुवङोऽप्रसङ्ग इति भावः । ( र. ना. )

(उद्द्योतः) न वै अत्रेतिभाष्यं पुनरुक्तमतो वाक्यभेदेन योजयति—शिष्टेति। अत्र शिष्टाप्रयोगादेवोत्वाप्रवृत्तौ स्वर्गार्थक-दिवुशब्दार्थमेवेदम्, स चेद्धातुत्वादप्रातिपदिकं व्यर्थमेव तदिति ज्ञापकत्वमिति भावः॥

(अनुपपत्तिसाधकभाष्यम्)

**अनिष्टं च प्राप्नोति, इष्टं च न सिध्यति॥**

(प्रदीपः) इतरो ज्ञापकत्वं विघटयति—अनिष्टं चेति।

(उद्द्योतः) इतर इति। अप्रयोगस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञे-यतया चारितार्थ्यसंभावनासत्त्वादिति भावः॥ यद्यपीष्टं न सिध्यति तथाप्यनिष्टप्राप्त्यर्थमेव शास्त्रं स्यात्। तथा च विपरीत एवेष्टानिष्ट-विभागः स्यादिति भाष्यार्थः॥

(अनुपपत्तिबाधकभाष्यम्)

**एवं तर्हि 'अननुबन्धकग्रहणे न सानुबन्धकस्य' इत्येवमेतस्य न भविष्यति॥**

(प्रदीपः) एवं तर्हीति। धातुः सानुबन्धक इति भावः॥

(उद्द्योतः) ज्ञापकवाद्याह—एवं तर्हीति॥

(अनुपपत्तिसाधकभाष्यम्)

**एवमप्यननुबन्धको दिवुशब्दो नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते॥**

(प्रदीपः) एवमपीति। अधातुरिति प्रातिपदिकसंज्ञा-निषेधाच्चिरनुबन्धकात्सोरसंभवः॥ उभयसंभवे चास्याः परिभा-षाया उपस्थानं नान्यथा॥

(उद्द्योतः) तत्खण्डनवाद्याह—एवमपीति॥ नास्तीत्यस्य सुपर इत्यादिस्तदाह—अधातुरिति। तदेवं समानशब्दातिप्र-सङ्गः स्थितः॥ अत एव * परिमाणग्रहणं च * इति चकार-स्तदर्थे भगवता न व्याख्यातः॥

(८०८ आक्षेपान्तरवार्तिकम्॥ ३॥)

## ॥ * ॥ परिमाणग्रहणं च ॥ * ॥

(भाष्यम्) **परिमाणग्रहणं च कर्तव्यम्। इयानव-धिर्धातुसंज्ञो भवतीति वक्तव्यम्॥ कुतो ह्येतत्—भूशब्दो धातुसंज्ञो भविष्यति, न पुनर्भ्वेधशब्दः—इति?॥**

(प्रदीपः) इयानवधिरिति। अवधिमानवधिनोपल-क्ष्यते। तेन विशिष्टावधिपरिच्छिन्नस्य धातुसंज्ञा विधेयेत्यर्थः॥ भ्वेधशब्द इति। ततश्च भ्वेधशब्दाल्लङादिप्रसङ्गः। न चार्थपाठः परिच्छेदकः। तस्यापाणिनीयत्वात्। अभियुक्तैरुप-लक्षणतयोपात्तत्वादनेकार्थत्वदर्शनात्, अर्थस्य नियामकत्वा-भावात्॥

(उद्द्योतः) अवधेः संज्ञायामूकारादेरेव सा स्यान्न भू इत्या-देरत आह—अवधिमानिति। इदं चैतत्पदेन भाष्ये ध्वनित-मिति भावः॥ अभियुक्तैरिति। भीमसेनेनेत्यैतिह्यम्॥ तत्रैव हेतुमाह—अनेकार्थत्वेति। अर्थनिर्देशस्य व्यभिचरितत्वेनाप्रयो-जकत्वाद्व्यवस्थापकत्वाभावेन परिमाणग्रहणमपि कार्यमिति भावः॥

(न्यासान्तरेण समाधानसंभावनाभाष्यम्)

**यदि पुनः—**

(८०९ न्यासान्तरवार्तिकम्॥ ४॥)

## ॥ * ॥ क्रियावचनो धातुः ॥ * ॥

(भाष्यम्) **इत्येतल्लक्षणं क्रियेत॥**

(प्रदीपः) क्रियावचन इति। एवं सति समानश-ब्दानां प्रतिषेधो न वक्तव्यः। नापि परिमाणग्रहणम्। नहि भ्वेधशब्दसमुदायः क्रियावाची॥

(उद्द्योतः) क्रियेतेति। लिङ्बोधितेऽस्य लक्षणस्य संभाव-नीयत्वे हेतुमाह—एवमिति। नहीति। अवयवानां वाचक-त्वेऽपि दशदाडिमादिवत्समुदायोऽनर्थक इति भावः॥

(प्रश्नोत्तरभाष्यम्)

**का पुनः क्रिया?॥ ईहा॥ का पुनरीहा?॥ चेष्टा॥ का पुनश्चेष्टा?॥ व्यापारः॥**

(प्रदीपः) का पुनरिति। द्रव्यव्यतिरेकेण तस्याः स-त्तामसंभावयतः प्रश्नः॥ ईहेति। ईहाचेष्टाशब्दयोरन्यत्र व्यापारविशेषवचनत्वेऽपि इह व्यापारमात्रवचनत्वं बोद्धव्यम्॥ कस्यचित्केनचिच्छब्देन सोऽर्थः प्रसिद्ध इत्यनेकपर्यायोपादानम्॥

(उद्द्योतः) शब्दानुशासनप्रवृत्तानामर्थविवेचने का प्रसक्ति-रत आह—द्रव्येति॥ असंभवायत इति। अप्रत्यक्षत्वादिति भावः॥ एवं च प्रकृतलक्षणेनापि द्रव्यवाचिनां धातुत्वानिवृत्तेः समानशब्दातिप्रसङ्गस्तदवस्थ इति भावः॥ अन्यत्रेति। मानस-व्यापार इच्छारूपेहा। इच्छा काङ्क्षा स्पृहेहा तृडिति कोशात्॥ कायपरिस्पन्दश्चेष्टा॥ इहेति। समानमीहमानानामिति भाष्य-प्रयोगादीह चेष्टायामित्यर्थनिर्देशाच्चेति भावः॥ नन्वेकपर्यायेणा-र्थस्य व्याख्यानसंभवात्पर्यायान्तरोपादनमनर्थकमत आह—कस्यचिदिति॥

(उपहासाक्षेपभाष्यम्)

**सर्वथा भवाञ्छब्दैरेव शब्दानाचष्टे, न किं-चिदर्थजातं निदर्शयत्येवंजातीयका क्रियेति॥**

(प्रदीपः) सर्वथेति। यावद्द्रव्यव्यतिरेकेण क्रियास-द्भावे प्रमाणं प्रोक्तं तावत्पर्यायोपादानमात्रेण तस्याः स्वरूपं न निश्चीयते इत्यर्थः॥ अर्थजातमिति। अर्थस्वरूपमित्यर्थः॥

(उद्द्योतः) सर्वथेत्यादिभाष्यमुपहासपरं, स किं शब्दैर्व्या-करोषीति वा, उत शब्दान्व्याकरोषीति। नाद्यः। शब्दैरेव यतो व्याख्यानं नाक्षिनिकोचादिभिः। नान्त्यः—प्रयुक्तशब्दस्या-प्रसिद्धत्वे व्याख्येयत्वादत आह—यावदिति॥ क्रियापदार्थप्रश्ने इदं युक्तं, न तु 'क्रियापदार्थो नातिरिक्तो द्रव्यादिति' प्रश्ने। तत्र हि द्रव्यव्यतिरेक एव साधनीय इत्युपहास इति भावः॥ स्वरूपं द्रव्यव्यतिरेकः॥ शब्दैरेव शब्दान् व्याकरोतीति भाष्याक्षरार्थः। समूहार्थकजातशब्दस्य प्रकृतेऽनन्वयादाह—अर्थेति। अत्रेदं तत्त्वम्।

---

१ अनिष्टं च प्राप्नोतीति भाष्येण पुनरुक्तार्थकमित्यर्थः। (र. ना.) २ प्रयोगे निरनुबन्धकस्यैवोपलम्भादुपदेशे एवेत्संज्ञालोपयोः प्रवृत्तेश्च निरनु-बन्धकस्यैव धातुत्वादिति भावः। (र. ना.) ३ ज्ञापकत्वखण्डनवादीत्यर्थः। (र. ना.) ४ किन्तु समुच्चयपरतयेति शेषः। (र. ना.) ५ मध्येऽर्थपाठः समुदायस्य धातुसंज्ञाव्यावर्तक इत्यर्थः। (र. ना.) ६ उदाहरणमात्ररूप-तयेत्यर्थः। (र. ना.) ७ अतोऽर्थपाठस्य समुदाये प्रसक्तधातुसंज्ञाव्यावर्तक-त्वाभाव इत्यर्थः। (र. ना.) ८ व्यापाररूपोऽर्थः। (र. ना.) ९ द्रव्यव्य-तिरेकेण क्रियासद्भावे प्रोक्तं प्रमाणं यावत्तस्याः स्वरूपं निश्चाययति पर्यायोपा-दानमात्रेण तावत्तस्याः स्वरूपं न निश्चीयते इति योजना। (र. ना.) १० स उपहासो 'न संभवति तथा हि' इति शेषः (र. ना.)

कारकं न क्रिया, तस्यां कारकानन्वयापत्तेः, कारकानां मिथः संबन्धायोग्यत्वात् । तस्माद् द्रव्यातिरिक्तक्रियासिद्धेः सर्वथेत्युपहासः 'कारकातिरिक्तक्रिया प्रत्यक्षेण नोपलभ्यत' इत्येवंपरो वाच्यः । स चेह एवेति गूढाभिसंधिप्रत्युपहासपरं **क्रियानामे**त्यादिभाष्यम् ॥

**( समाधानभाष्यम् )**

**क्रिया नामेयमत्यन्तापरिदृष्टाऽशक्या पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुठितः । सासावनुमानगम्या ॥**

( प्रदीपः ) **अशक्येति** । आख्यातपदवाच्या पूर्वापरीभूतावयवा साध्यमानावस्था भूतभविष्यद्वर्तमानसदसदनेकावयवसमूहरूपा सद्वस्तुविषयेन्द्रियग्राह्या न भवतीत्यर्थः ॥ **पिण्डीभूतेति** । यथा परमाणवः पिण्डीभूता उपलभ्यन्ते न केवलाः, एवं पिण्डीभावाभावात् क्रिया न प्रत्यक्षेत्यर्थः ॥ **गर्भो निर्लुठित इति** । यथा कुक्षिस्थो गर्भोऽप्रत्यक्षस्तथा क्रियेत्यर्थः । अथवा यथा निर्लुठितो निर्गतः कुक्षेर्गर्भः प्रत्यक्षो नैवं क्रियेति वैधर्म्येण दृष्टान्तः ॥ **सासाविति** । या पूर्वमुक्ता सासावनुमानेन प्रतीयत इत्यर्थः ॥

( उद्द्योतः ) **अत्यन्तापरदृष्टेति** । परेणै[1] प्रमाणेन प्रत्यक्षेणात्यन्तमवयवशः समूहरूपेण चादृष्टेत्यर्थः ॥ तत्र निदर्शनस्याशक्यत्वे हेतुमाह—**आख्यातेति** । तत्राप्रत्यक्षत्वे हेतुरनेकावयवरूपत्वं, तच्च घटादिषु व्यभिचरितमतः **सदसदिति** । तदुपपादकं **भूतेत्यादि** ॥ समूहव्यवहारो बुद्धिकृतो विकल्परूप एव, न वास्तव इति बोध्यम् ॥ नन्वतीतप्रयोगे सर्वेषामतीतत्वाद्भविष्यति सर्वेषां भावित्वाच्च कथं सर्वत्र त्रैरूप्यमत आह—**पूर्वापरीभूतेति** ॥ तत्त्वे बीजमाह—**साध्यमानेति** । वर्तमानविषयेऽपि तत्त्वमेवमुपपाद्यम् । तथाहि । **वर्तमानत्वं** प्रारब्धापरिसमाप्तत्वम् । न त्वेकत्र क्षणे तत्त्वं संभवति, तस्मादारब्धत्वमतीतक्षणमादाय, असमाप्तत्वं तु भविष्यत्क्षणमादायेत्येव समर्थनीयम्, क्षणा एव च क्रियाधारा इति । न च तत्तत्कालसंबन्ध एव **वर्तमानत्व**मिति वाच्यम् । एवं हि परं प्रति पश्य मृगो धावतीति शब्दप्रयोगानुपपत्तेः । नहि स्वज्ञानप्रभृतिपरज्ञानपर्यन्तमेकः क्षणोऽस्ति, समूहरूपत्वे त्ववयवान्तरावच्छेदेन स्वानुभूतां वर्तमानतामवयवान्तरावच्छेदेन परं बोधयितुं तदुपपत्तेः । बिलाद्बिलं प्रविशति सर्पे किंचिदवयवावच्छेदेन सर्पमनुभवतोऽवयवान्तरावच्छेदेन तं दर्शयितुं सर्पं पश्येति प्रयोगवत् ॥ **सद्वस्त्विति** । सद्वस्तूनि विषयाणि येषामिन्द्रियाणां तद्ग्राह्या नेत्यर्थः ॥ ननु यदि पिण्डीभूता क्रिया कुतो निदर्शयितुं न शक्येत्यत आह—**यथेति** ॥ **पिण्डीभूता इति** । कार्यात्मना स्थिता इत्यर्थः । अनेन दृष्टान्तेन परमाणुवदवयवक्रियाणामप्यप्रत्यक्षत्वं सूचितम् ॥ **कुक्षिस्थ इति** । आद्ये अनिर्लुठित इति च्छेदः । द्वितीये निर्लुठित इति छेदो निष्क्रान्त इति च तदर्थ इति भेदः ॥ अत्यन्तापरदृष्टत्वेनावयवरूपेणाप्यप्रत्यक्षत्वं, तदवयवानां क्षणरूपत्वात् । पश्य धावतीति तदनुमापकफलपरमेव[2] । एतेन क्रियानुमेयेत्युक्तं भवति । **वर्तमाने लडिति**सूत्रस्थभाष्यस्वरसोऽप्येवमेव ॥ **या पूर्वमिति** । अदःशब्द[3] इदमर्थ इति न पौनरुक्त्यमिति भावः ॥ तच्छब्दाव्यवहितोत्तरवर्त्यदस्शब्दः प्रसिद्ध्यर्थक इत्यन्ये ॥

**( आक्षेपभाष्यम् )**

**कोऽसावनुमानः? ।**

( प्रदीपः ) **कोऽसाविति** । यो भावे ल्युट् नपुंसकः । अन्यत्र त्वभिधेयवशादनियतलिङ्गः । अथ वा मन्यतेर्घञ्यनुमान इति रूपम् ॥

( उद्द्योतः ) ननु ल्युडन्तत्वे नपुंसकत्वं स्यादत आह—**यो भाव इति** । तथा च करणे ल्युडिति भावः ॥ **अथ वेति** प्रौढ्यों ॥

**( समाधानभाष्यम् )**

**इह सर्वेषु साधनेषु संनिहितेषु कदाचित्पचतीत्येतद्भवति कदाचिन्न भवति । यस्मिन्संनिहिते पचतीत्येतद्भवति सा नूनं क्रिया ॥ अथ वा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रिया ॥**

( प्रदीपः ) **यस्मिन्संनिहिते इति** । यस्मिन्वस्तुनि संनिहिते सति पचतीत्येतत्प्रयुज्यते नासति सा क्रिया । क्वचित्तु **यस्मिन् साधने संनिहिते** इति पाठः ॥ तत्रायमर्थः—यस्मिन्संनिहिते सति पचतीत्येतत्साधनविषये भवतीति ॥ स्यादेतत् । मृगतृष्णिकाविषयजलज्ञानवत्पचतीत्येतदसत्यविषयमेव ज्ञानमित्याशङ्क्याह—**अथ वेति** । देशान्तरप्राप्तिलक्षणेन कार्येणाऽबाधितेन क्रियाख्यं कारणमनुमीयत इत्यर्थः ॥ ननु प्रत्यक्षाप्रवृत्तौ संबन्धग्रहणाभावात् कथं क्रियाविषयमनुमानं प्रवर्तते । नैष दोषः । धातुवाच्यस्य समूहस्य युगपदसंनिधानादप्रत्यक्षत्वेऽप्येकैकस्य तु क्षणस्य प्रत्यक्षत्वे बुद्ध्या तान्क्षणान्संकलय्य पचतीति प्रयुज्यते । यदाप्येकस्मिन्क्षणे पचतीति प्रयोगस्तदा तत्र समूहरूपारोपणम् । शब्दशक्तिस्वभावाच्चैकः क्षणो नैव धातुवाच्यः ॥

( उद्द्योतः ) नन्वनुमापकलिङ्गप्रश्ने कारकसमवधानकालिकपचत्यादिव्यवहारव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वरूपं[4] लक्षणमुक्तं न तु लिङ्गमित्यतस्तदपि सूचितमित्याह—**यस्मिन्निति** ॥ इतरभेदसाधने लक्षणस्यैव लिङ्गत्वेऽपि[5] लिङ्गान्तरसूचनमिदं 'विमतं कारकेभ्यो भिद्यते बाधकाभावे[6] कारकसत्ताकालेऽव्यवह्रियमाणत्वाद्बाधकाभावे यत्कालेन व्यवह्रियते तत्ततो भिद्यते' इति प्रयोगः ॥ ननु यस्मिन् साधन इति पाठे यत्तद्भ्यां कारकस्यैव क्रियात्वं प्रतीयते तच्च विरुद्धमत आह—**यस्मिन्निति** ॥ **मृगेति** । ज्ञानं न वस्तुसत्तासाधकमसतोऽपि शशशृङ्गादेः शाब्दज्ञानदर्शनादिति भावः ॥ **देशान्तरेति** । संयोगजभिन्नः संयोगः क्रियाजन्यः कारकाजन्यत्वे[8] सति जन्यत्वादिति प्रयोगः । संयोगस्य क्रियाफलमात्रोपलक्षकत्वं बोध्यम् । फलानुमेया क्रियेति तात्पर्यम् ॥ एतेन पचत्यादिष्वस्य हेतोरसंभव इत्यपास्तम्[7] ॥ **संबन्धग्रहणेति** । फलव्यापारयोर्जन्यजनकभावग्रहे सति हि कार्येण कारणानुमानं स्यात्स एव तु दुर्ग्रहो-

१ परेणानुमानातिरिक्तेन उत्कृष्टेन वा इत्यर्थः । ( र. ना. ) २ तस्याः क्रियाया अनुमापकं यत्फलं क्रियाकार्यं तत्परमेवेत्यर्थः । ( र. ना. ) ३ तच्छब्देन सहेति शेषः । ( र. ना. ) ४ तस्यानुमत्यर्थकत्वेनानुमित्यर्थकत्वाभावादिति भावः । ( र. ना. ) ५ कारकसमवधानकालिको यः पचत्यादिव्यवहारव्यतिरेकसत्प्रयोजको यो व्यतिरेकः तत्प्रतियोगित्वमित्यर्थः । व्यतिरेकोऽभावः । ( र. ना. ) ६ क्रियायां कारकेतरभेदसाधने निरुक्तक्रियालक्षणस्य लिङ्गत्वसंभवेऽपीत्यर्थः । ( र. ना. ) ७ पचत्यादिव्यवहारबाधकाभावे सत्यपीत्यर्थः । ( र. ना. ) ८ कारकेतरजन्य इत्यर्थः । ( र. ना. )

ऽप्रत्यक्षत्वादिति भावः ॥ **एकैकस्येति ।** अधिश्रयणादेरित्यर्थः ॥ **प्रत्यक्षत्वेनेति ।** पश्य मृगो धावतीतिप्रत्ययादित्यर्थः ॥ **बुद्ध्या संकलय्येति ।** स्मृत्या विषयीकृत्येत्यर्थः । उपस्थिते च संबन्धग्रहो न प्रत्यक्षेणोपस्थित एवेति नियम इति भावः ॥ एवं संबन्धग्रहे सति कार्येण तामनुमाय पचतीति प्रयुज्यत इति तात्पर्यम् ॥ इदं च योगिप्रयोगविषयं तेषामेवावयवक्रियाप्रत्यक्षात् ॥ अस्माकं तद्व्यवहारपरम्परया सर्वथाऽविकल्पात्मक एव प्रयोगः क्रियापदानामिति बोध्यम् ॥ एतच्च वर्तमाने लडिति सूत्रे भाष्ये ध्वनितम् ॥ ननु समूहस्याप्रत्यक्षत्वेऽप्येकक्षणस्य प्रत्यक्षत्वसंभवात् क्रियामात्रे आनुमानिकत्वकथनमयुक्तमित्याशङ्क्य परिहरति—**यदापीति ।** तथा च तस्य व्यवहाराविषयत्वाद्व्यवहारविषया सर्वानुमेयैवेति भाष्यतात्पर्यमिति भावः ॥ ननु तदारोपेऽपि वस्तुत एकस्यैव क्षणस्य क्रियात्वेन यत्र प्रत्यक्षत्वं व्यवहारविषयत्वं च दुर्वारमत आह—**शब्दशक्तीति ॥ एकः क्षण इति ।** अनारोपितसमूहरूप एकः क्षण इत्यर्थः ॥ परे त्वधिश्रयणादिरपि नैकक्षणात्मकस्तस्यापि हस्तप्रसारणपात्रादानचुल्लीसंयोजनादयोऽवयवाः सन्त्येवेति सोऽपि समूहरूप एव । यस्तु तेषामप्यवयवः परमाणुप्रख्यः स तु शब्दशक्तिस्वभावान्नैव वाच्यो नापि प्रत्यक्षः । अनुमानं त्वेवम्, उत्तरदेशसंयोगादिफलं कारणजन्यं कार्यत्वादिति ॥ तच्च कारणं प्रसिद्धातिरेकि, इतरबाधबलात् क्रियारूपमेव सिध्यतीति भाष्यतात्पर्यमित्याहुः ॥

**( आक्षेपभाष्यम् )**

**कथं पुनर्ज्ञायते क्रियावचनाः पचादय इति ? ॥**

**( समाधानभाष्यम् )**

**यदेतेषां करोतिना सामानाधिकरण्यम् । 'किं करोति ? पचति' 'किं करिष्यति ? पक्ष्यति' 'किमकार्षीद् ? अपाक्षीद्' इति ॥**

**(प्रदीपः) किं करोति पचतीति ।** सामान्यविशेषभावेन सामानाधिकरण्यात् क्रियाविशेषवचनाः पचादयः प्रतीयन्त इत्यर्थः । यदा तु किं करोतीति पृष्टे न करोत्यास्त एव केवलमिति प्रतिवचनं तदा व्यापारमात्रस्यावश्यंभावित्वाद्व्यापारविशेषविषयः प्रश्नः प्रतिवचनं तु विशेषनिराकरणेनेति बोद्धव्यम् ॥

**( उद्द्योतः )** नन्वेकार्थबोधकत्वं सामानाधिकरण्यं न प्रकृतेऽत आह—**सामान्येति ।** तथा च धातुलक्षणे क्रियातद्व्याप्यान्यतरवचनत्वं विवक्षितमिति न दोषः । यद्यपि करोतिर्गन्धनावक्षेपणादिष्वपि वर्तते तथापि कारकव्यापार एव तदर्थः प्रसिद्ध इति भावः ॥ तत्र यो व्यापारसामान्यवाची तद्विशेषाः पचादयः, किं करोतीत्यस्य च यत्करोति तत्किमिति व्यापारविशेषविषयप्रश्नोऽर्थः । एवं च यन्निष्ठतया प्रश्नविषयक्रियायाः करोतिशब्दवाच्यायाः प्रतीतिस्तन्निष्ठतयैवोत्तरभूतपचतिशब्दवाच्यक्रियायाः प्रतीतिरिति तयोः सामानाधिकरण्यं, तत्र क्रियाप्रश्नजनकजिज्ञासायास्तद्विषयोत्तरेणैव निरासादेषां क्रियावाचित्वमिति भावः ॥ नन्वेवं पनसो वृक्ष इतिवद् पचति करोतीति सहप्रयोगापत्तिरिति चेन्न । केवलस्य धातोः प्रयोगाभावेन तिङ्प्रयोगे तदर्थपौनरुक्त्यभीत्या तथा प्रयोगाभावात् ।

यत्र तु नेदृशं बाधकं तत्रैवांचकारेत्यादि प्रयुज्यत एवेति दिक् ॥ **यदास्त्विति ।** आसेरपि क्रियाविशेषत्वम् । अत एव गमनासनशयनसंशयात्प्रश्ने आस्ते इति प्रतिवचनमिति बोध्यम् ॥

**( भाष्यम् ) तत्र—**

**( ८१० आक्षेपवार्तिकम् ॥ ५ ॥ )**

**॥ * ॥ क्रियावचने उपसर्गप्रत्ययप्रतिषेधः ॥ * ॥**

**( भाष्यम् ) क्रियावचने धातावुपसर्गप्रत्यययोः प्रतिषेधो वक्तव्यः । पचति प्रपचति ॥**

**( उद्द्योतः )** पाठनिरपेक्षमिदं लक्षणमिति शङ्कते—भाष्ये—**तत्रेति ।**

**( भाष्यम् ) किं पुनः कारणं प्राप्नोति ? ।**

**( ८११ आक्षेपसाधकवार्तिकम् ॥ ६ ॥ )**

**॥ * ॥ संघातेनार्थगतेः ॥ * ॥**

**( भाष्यम् ) संघातेन ह्यर्थो गम्यते सप्रकृतिकेन सप्रत्ययकेन सोपसर्गेण च ॥**

**( प्रदीपः ) संघातेनेति ।** संघातस्यैव प्रयोगादर्थवत्त्वम् । केवलानां तु धातूनामप्रयोगादानर्थक्यम् ॥

**( उद्द्योतः )** ननूपसर्गस्य धात्वर्थविशेषकत्वात्प्रत्ययस्य कर्त्रर्थकत्वाच्च प्राप्त्यर्थभावेन प्रतिषेधानुपपत्तिरत आह भाष्ये—**संघातेनार्थगतेरिति ।** बोद्धेति शेषः ॥ तद्व्याचष्टे—**संघातस्येति ।** उपसर्गप्रत्यययोरित्यस्य तद्विशिष्टयोरित्यर्थ इति भावः ॥ **अर्थवत्त्वमिति ।** अन्वयव्यतिरेकाभ्यामिति भावः ॥

**( ८१२ आक्षेपान्तरवार्तिकम् ॥ ७ ॥ )**

**॥ * ॥ अस्तिभवतिविद्यतीनां च धातुत्वम् ॥ * ॥**

**( भाष्यम् ) अस्तिभवतिविद्यतीनां च धातुसंज्ञा वक्तव्या ॥ यथा हि भवता करोतिना पचादीनां सामानाधिकरण्यं दर्शितम्, न तथास्त्यादीनां निदर्श्यते । नहि भवति—किं करोति ?, अस्तीति ॥**

**( उद्द्योतः )** भाष्ये यथा हीत्यादि । प्रागुक्तकरोतिसामानाधिकरण्यरूपक्रियावाचित्वचिह्नाभावात्तदभाव इति भावः ॥

**( ८१३ प्रथमाक्षेप(८१०)समाधानवार्तिकम् ॥ ८ ॥ )**

**॥ * ॥ प्रत्ययार्थस्याऽव्यतिरेकात्प्रकृत्यन्तरेषु ॥ * ॥**

**( भाष्यम् ) प्रत्ययार्थस्याव्यतिरेकात्प्रकृत्यन्तरेषु मन्यामहे धातुरेव क्रियामाहेति । पचति पठति । प्रकृत्यर्थोऽन्यश्चान्यश्च । प्रत्ययार्थः स एव ॥**

**( उद्द्योतः )** अतिव्याप्तिं निराकरोति—भाष्ये—**प्रत्ययार्थस्येति ॥ अव्यतिरेकः** अभेदः ॥ **प्रकृत्यन्तरेषु** भिन्नार्थकेषु ॥

१ विकल्पो विविधकल्पनारूपः संदेहस्तत्रात्मा स्वरूपं यस्य स विकल्पात्मकः संदेहविषयः स न भवतीति तथा । निश्चित इत्यर्थः । ( र. ना. ) २ परमाणुतुल्यः । सादृश्यश्चाप्रत्यक्षत्वेन । ( र. ना. ) ३ कर्मधारयः । ( र. ना. )

४ विशेषरूपेष्विति शेषः । ( र. ना. ) ५ सामान्यभूत इति शेषः । ( र. ना. ) ६ करोतिरिति शेषः । ( र. ना. ) ७ तिङर्थेत्यर्थः । ( र. ना. ) ८ क्रियावाचित्वाभावादित्यादिः । ( र. ना. ) ९ क्रियावाचित्वाभावः । ( र. ना. )

( ८१४ समाधानसाधकवार्तिकम् ॥ ९ ॥ )

## ॥*॥ धातोश्चार्थाभेदात्प्रत्ययान्तरेषु ॥*॥

( भाष्यम् ) धातोश्चार्थाभेदात्प्रत्ययान्तरेषु मन्यामहे धातुरेव क्रियामाहेति । पक्तिः पचनं पाक इति । प्रत्ययार्थोन्यश्चान्यश्च भवति । प्रकृत्यर्थः स एव ॥

( उद्द्योतः ) प्रत्ययस्याप्यावापोद्वारं दर्शयति—धातोश्चेति ॥ अन्यश्चेति । लिङ्गभेदादित्यर्थः ॥

( भाष्यम् ) कथं पुनर्ज्ञायते—अयं प्रकृत्यर्थः, अयं प्रत्ययार्थ इति ॥

( ८१५ समाधानसाधकवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ अन्वयव्यतिरेकाभ्याम् ॥ * ॥

( भाष्यम् ) अन्वयाच्च व्यतिरेकाच्च । कोऽसावन्वयो व्यतिरेको वा ? । इह पचतीत्युक्ते कश्चिच्छब्दः श्रूयते पच्छब्दश्चकारान्तः, अतिशब्दश्च प्रत्ययः । अर्थोऽपि कश्चिद्गम्यते विक्लित्तिः कर्तृत्वमेकत्वं च ॥ पठतीत्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते, कश्चिदन्वयी । पच्छब्दो हीयते, पठ्शब्द उपजायते अतिशब्दोऽन्वयी । अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी । विक्लित्तिर्हीयते, पठिक्रियोपजायते, कर्तृत्वं चैकत्वं चान्वयी । ते मन्यामहे—यः शब्दो हीयते तस्यासावर्थः योऽर्थो हीयते, यः शब्द उपजायते तस्यासावर्थः योऽर्थ उपजायते, यः शब्दोन्वयी तस्यासावर्थः योऽर्थोऽन्वयी ।

( प्रदीपः ) अतिशब्दश्चेति । यद्यप्ययं प्रत्ययसमुदायः, तथापि प्रकृतिभागावबोधपरत्वात्प्रत्ययभागपर्यालोचनेऽनादरादेवमुक्तम् ॥ अथ वा पूर्वाचार्यैः कैश्चिदतिः प्रत्ययत्वेन कल्पित इति तदपेक्षयैतदुक्तम् ॥

( उद्द्योतः ) अन्वयव्यतिरेकाभ्यामिति वार्तिकेन धातोरेव क्रियावाचित्वं काल्पनिकमिति प्रतिपाद्यते । इत उत्तरभाष्यं न चेत्सामान्यशब्दा इत्याद्यन्तमर्थवत्सूत्रे व्याख्यातम् । तत एवावधार्यम् ॥

( समाधानबाधकभाष्यम् )

विषम उपन्यासः । बहवो हि शब्दा एकार्था भवन्ति । तद्यथा—इन्द्रः शक्रः पुरुहूतः पुरंदरः । कन्दुः कोष्ठः कुसूल इति ॥ एकश्च शब्दो बह्वर्थः । तद्यथा—अक्षाः पादा माषा इति ॥

अतः किं न साधीयोऽर्थवत्ता सिद्धा भवति ? । नापि ब्रूमोऽर्थवत्ता न सिध्यतीति । वर्णिता ह्यर्थवत्ताऽन्वयव्यतिरेकाभ्यामेव ॥ तत्र कुत एतदयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति, न पुनः प्रकृतिरेवोभावर्थौ ब्रूयात्प्रत्यय एव वा ? ॥

( प्रदीपः ) किं न साधीय इति । यदा प्रकृतिरेव क्रियां साधनं चाह तदा सिद्धमेव प्रकृतेः क्रियावाचित्वम् । प्रत्यय एवेति । ततश्च प्रकृतेर्न स्यात्क्रियावाचित्वम् ॥

( समाधानसाधकभाष्यम् )

सामान्यशब्दा एत एवं स्युः । सामान्यशब्दाश्च नान्तरेण प्रकरणं विशेषणं वा विशेषेष्ववतिष्ठन्ते । यतस्तु खलु नियोगतः पचतीत्युक्ते स्वभावतः कस्मिंश्चिद्विशेषे पच्शब्दो वर्ततेऽतो मन्यामहे—नेमे सामान्यशब्दा इति । न चेत्सामान्यशब्दः प्रकृतिः प्रकृत्यर्थे वर्तते प्रत्ययः प्रत्ययार्थे ॥

( उद्द्योतः ) प्रत्ययः प्रत्ययार्थे इति । प्रत्ययद्योत्येऽर्थे इत्यर्थः । प्रातिपदिकविषये पञ्चकस्य प्रातिपदिकार्थतयाऽर्थवत्सूत्रस्थभाष्यस्यैवमेव व्याख्येयत्वात् ॥

( ८१६ प्रथमाक्षेपसमाधानवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ क्रियाविशेषक[3] उपसर्गः ॥ * ॥

( भाष्यम् ) पचतीति[4] क्रिया गम्यते, तां प्रोवि[5]शिनष्टि ॥

( उद्द्योतः ) तदेवं सप्रत्ययकेऽतिव्याप्तिं निरस्य सोपसर्गे तां निराकरोति—भाष्ये—क्रियाविशेषक उपसर्ग इति । यथान्वयव्यतिरेकाभ्यां प्रत्ययोऽर्थबोधकस्तथा ताभ्यामेव क्रियाविशेषद्योतक उपसर्गः, क्रियावाची धातुरेवेति भावः ॥ प्रोवीति । पचेरुत्कृष्टक्रियापरत्वं द्योतयतीत्यर्थः ॥

( आक्षेपभाष्यम् )

यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्र धातुरुपसर्गं व्यभिचरति ॥ यत्र न खलु तं व्यभिचरति तत्र कथम् अध्येति अधीते इति ? ॥

( उद्द्योतः ) यद्यपि तावदिति । उपसर्गाव्यभिचारिधातुस्थले तत्त्वा[6]सम्भवादिति भावः ॥

( समाधानभाष्यम् )

यद्यप्यत्र धातुरुपसर्गं न व्यभिचरति उपसर्गस्तु धातुं व्यभिचरति । ते मन्यामहे—य एवास्याधेरन्यत्रार्थः, स इहापीति ॥

कः पुनरन्यत्राधेरर्थः ।

अधिरुपरिभावे वर्तते ॥

(प्रदीपः) अधिरुपरिभाव इति । ततश्चाधीत इत्यस्य

---

१ 'विशेषम्' इति पाठस्तु 'अर्थवत्सूत्रे नागेशेन व्याख्यातः । २ नियमेनेत्यर्थः । इदं वर्तते इत्यनेनान्वेति । (र. ना.) ३ क्रियेति । तथाचोक्तं प्रातिशाख्ये कात्यायनेन—

'क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥' ८।४६ ॥ इति ॥

४ 'पचतीत्यत्र' । ५ 'प्रोऽपि' । ६ उपसर्गस्य क्रियाविशेषद्योतकत्वासंभवादित्यर्थः । ( र. ना. )

विशिष्टार्थयुक्तानां शब्दानां पठनं विधिपूर्वकं वा करोतीत्यर्थः। अध्येतीत्यत्र विशिष्टं स्मरणरूपं ज्ञानं धात्वर्थः॥

(उद्योतः) यद्यप्यत्रेति। धातोरुपसर्गाव्यभिचारेप्युपसर्गस्य धातुव्यभिचारादन्यत्र द्योत्यत्वेन निश्चितोर्थ एवेहाप्यधेरिति भावः॥ नन्विदमयुक्तमधीते इत्यादावुपरिभावाप्रतीतेरत आह—ततश्चेति। उत्कर्षलक्षण उपरिभावोधेरर्थः। स च विशिष्टार्थयुक्तत्वरूपो विधिपूर्वकत्वरूपो वेति भावः॥ केचित्त्ववगमपर्यन्तत्वरूप उत्कर्षोधेरर्थ इत्याहुः॥ विशिष्टस्मरणमिति। निरन्तरत्वादिकं तत्रोत्कर्षः॥

(आक्षेपभाष्यम्)

**इह तर्हि व्यक्तमर्थान्तरं गम्यते—तिष्ठति प्रतिष्ठते इति। तिष्ठतीति व्रजिक्रियाया निवृत्तिः। प्रतिष्ठत इति व्रजिक्रिया गम्यते। ते मन्यामहे उपसर्गकृतमेतद्, येनात्र व्रजिक्रिया गम्यत इति॥**

(उद्योतः) भाष्ये—इह तर्हि व्यक्तमिति। तत्र व्रजिक्रियाया उपसर्गमात्रार्थत्वे तिष्ठतेर्धातुत्वानापत्तिः। तिष्ठतिमात्रस्य तु नार्थस्तस्य तन्निवृत्त्यर्थकत्वात्॥ विशिष्टस्य तदर्थकत्वे तु तस्यैव धातुत्वापत्तिरिति भावः॥

(समाधानभाष्यम्)

**प्रोयं दृष्टापचारः आदिकर्मणि वर्तते॥ न चेदं नास्ति—बह्वर्था अपि धातवो भवन्तीति। तद्यथा—वपिः प्रकिरणे दृष्टः, छेदने चापि वर्तते—केशश्मश्रु वपतीति। ईडिः स्तुतिचोदनायाच्ञासु दृष्टः, प्रेरणे चापि वर्तते—'अग्निर्वा इतो वृष्टिमीट्टे मरुतो मुतश्च्यावयन्ति' इति। करोतिरभूतप्रादुर्भावे दृष्टः, निर्मलीकरणे चापि वर्तते—'पृष्ठं कुरु' 'पादौ कुरु' उन्मृदानेति गम्यते। निक्षेपणे चापि वर्तते 'कटे कुरु' 'घटे कुरु' 'अश्मानमितः कुरु' स्थापयेति गम्यते। एवमिहापि तिष्ठतिरेव व्रजिक्रियामाह तिष्ठतिरेव व्रजिक्रियायाः निवृत्तिम्॥**

(प्रदीपः) प्रोयमिति। अन्यत्रापि प्रयोगात्। ततश्चान्यत्रास्य योर्थो द्योत्यः स एवेहापीत्यनुमीयते। अनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतिवाचीति निर्णयः॥

(उद्योतः) समाधत्ते—प्रोयमिति। नन्वेवमपि गतिनिवृत्तिवाचिनस्तिष्ठतेः कथं गतिवाचित्वमत आह—अनेकार्थत्वादिति। धातोः क्वचिदवश्यकल्पनानार्थत्वेनैव प्रकृतार्थनिर्वाहे प्रशब्दस्यार्थकल्पने मानाभाव इति भावः॥ लोकेपि प्रथमगमनकर्तर्येव प्रतिष्ठत इति प्रयुज्यत इति तात्पर्यम्। तदाह—भाष्ये न चेदं नास्तीति॥ प्रकिरणे इति। माषान्वपतीत्यादौ। वृष्टिमीट्टे इति। प्रेरयतीत्यर्थः॥

(आक्षेपभाष्यम्)

**अयं तर्हि दोषः—अस्तिभवतिविद्यतीनां धातुत्वम् * इति॥**

(न्यासान्तरेण समाधानसंभावनाभाष्यम्)

**यदि पुनः—**

(८१७ न्यासान्तरवार्तिकम्॥ १२॥)

**॥ * ॥ भाववचनो धातुः॥ * ॥**

**(भाष्यम्) इत्येतल्लक्षणं क्रियेत॥**

(प्रदीपः) भाववचन इति। भावशब्दः क्रियामात्रवाची। यथा 'यस्य च भावेने'ति 'भावे घञ्' इति च। तेन पचादीनामपि धातुसंज्ञा सिध्यति, अस्तिभवतिविद्यतीनामपि, भावरूपार्थाभिधायित्वात्॥

(उद्योतः) ननु भाववचन इतिन्यासे पचादिष्वव्याप्तिरत आह—क्रियामात्रेति। धात्वर्थमात्रेत्यर्थः॥ मात्रपदं कार्त्स्न्ये॥ नन्वेवमप्यस्त्यादिष्वव्याप्तिरत आह—अस्तिभवतीत्यादि। तस्मिन् सत्यागतः, भवनं भाव इत्यादिप्रयोगादस्त्यादिक्रियापि भावपदेन गृह्यत इति भावः॥ नन्वस्त्याद्यर्थस्यापि क्रियात्वे किमपराद्धं पूर्वलक्षणेनेत्यत आह—भावरूपेति। क्रियाशब्दः सपरिस्पन्दसाधनसाध्यार्थे रूढो भावशब्दश्च सपरिस्पन्दापरिस्पन्दान्यतरसाधनसाध्य इति भावः॥

(संभावितसमाधान आक्षेपभाष्यम्)

**कथं पुनर्ज्ञायते—भाववचनाः पचादय इति?॥**

(उद्योतः) इतरो भवत्यर्थोऽर्थे भावशब्देन विवक्षित इत्याशयेन पृच्छति—भाष्ये—कथं पुनरिति॥

(समाधानभाष्यम्)

**यदेषां भवतिना सामानाधिकरण्यम्—भवति पचति, भवति पक्ष्यति, भवति अपाक्षीदिति॥**

(प्रदीपः) भवति पचतीति। आत्मंभरणवचनो भवतिः। तच्चात्मभरणं विरुद्धैकार्थसमवायैः पाचकत्वादिभिरविरुद्धैकार्थसमवायम्। यथा शुक्लं रूपमिति शुक्ले गुणे शुक्लत्वं रूपत्वं चास्तीति शुक्लादयो रूपवचनाः, एवं पचादयो भाववचना इत्यर्थः॥

(उद्योतः) ननु भवतिपचत्योर्नैकार्थबोधकत्वरूपं सामानाधिकरण्यं, भावः सत्ता विक्लित्त्यनुकूलव्यापारश्च पाक इति तयोरत्यन्तवैलक्षण्यादत आह—आत्मंभरणेति। आत्मभरणं चाषष्ठाद्भावविकारादनुस्यूतं सदिति प्रत्ययवेद्यं रूपम्, तच्च केवलान्वयित्वात्पदार्थमात्रसमानाधिकरणम्। एवं चाश्रये पचिक्रियाबोधे तत्समानाधिकरणात्मभरणस्यापि तत्र सत्त्वेन तद्वाचकत्वं पचादीनाम्, यथा शुक्ले गुणे रूपत्वसत्तामात्रेण रूपवचनत्वं शुक्लादीनाम्। तदुक्तम् पाचकत्वादिभिरिति। आदिना गन्तृत्वादि। पाकत्वादिभिरिति पाठान्तरम्। अत्रादिना गमनत्वादि॥ विरुद्धेति। परस्परमित्यादिः। एवंच पचति भवतीत्यादेर्यत्कर्तृका पचिक्रिया तत्कर्तृका सत्तेति बोधः। एवं च भवत्यर्थपचत्यर्थयोरेकाधिकरणवृत्तित्वमेव भवतिपचत्योः सामानाधिकरण्यमिति भावः॥

१ ततश्च प्रतिष्ठते इत्यस्य गन्तुमारभते इत्यर्थः। (र. ना.) २ मरुतो वायवो मेघान् जलं च्यावयन्तीत्यर्थः। (र. ना.) ३ भाष्यकृत एव न्यासान्तरवार्तिकं न कात्यायनस्येति बहवः। एवमेव * क्रियावचनो धातुः * इत्येतदपि। ४ असेति विवक्षितान्वयि। (र. ना.) ५ 'यदेतेषाम्'। ६ आत्मधारणवचन इत्यर्थः। (र. ना.) ७ सत्ताजन्मवृद्धिपरिणामापक्षयनाशरूपाः षड्भावविकारास्तेषु षष्ठं नाशाख्यं भावविकारं मर्यादीकृत्य पञ्चसु सत्सु धर्मिणि अनुस्यूतं संबद्धमित्यर्थः। (र. ना.)

( आक्षेपभाष्यम् )

**कः पुनर्भावः ? ॥**

( प्रदीपः ) **कः पुनरिति ।** यदि क्रियैव भावस्तदा पक्षान्तरोपादानमनर्थकमन्यस्तदाऽव्याप्तिरिति[1] प्रश्नः ॥

( उद्द्योतः ) ननूक्तेन सामानाधिकरण्येन भावपदार्थस्याप्युक्तप्रायत्वात्कः **पुनरिति** प्रश्नोऽनुपपन्नोऽत आह—**यदीति ॥**

( समाधानभाष्यम् )

**भवतेः स्वपदार्थो भवनं भाव इति ॥**

( प्रदीपः ) **स्वपदार्थ इति ।** स्वग्रहणमुपचरितार्थनिवृत्त्यर्थं, गौणोऽपि पदार्थो भवति, न तु स्वो, व्यभिचारात् । पदग्रहणं प्रकरणा[2]द्यनपेक्षत्वप्रतिपादनार्थम् । भवनं भाव इति विग्रहः कर्तृसाधननिवृत्त्यर्थः ॥

( उद्द्योतः ) भवतेरर्थ इत्येतावता सिद्धे **स्वपदे**ति व्यर्थमत आह—**स्वेति ।** न च धातूनामनेकार्थत्वाद्धातुर्न क्वापि लाक्षणिक इति वाच्यम् । अनुपपत्तिप्रतिसन्धानापूर्वकप्रतीतिविषयार्थमादायैवानेकार्थत्वस्वीकारात् । यस्त्वनुपपत्तिप्रतिसंधानपूर्वकप्रतीतिविषयो यथा भूधातोर्गमनादिस्तत्र लक्षणैवेत्याशयात् । क्रियावाचकत्वं च क्रियाबोधक[3]त्वमेवेति बोध्यम् ॥ **प्रकरणादीति ।** तेन तत्सापेक्षप्रतीतिकपराभवाद्यर्थनिरासः । भवनलक्षणभावस्य सत्तारूपत्वात्सत्तायाश्च केवलान्वयित्वेन सर्वसमानाधिकरणतया **भाववचन** इति लक्षणं न क्वाप्यव्याप्तमित्युत्तरभाष्यतात्पर्यम् ॥

( आक्षेपभाष्यम् )

**यदि भवतेः स्वपदार्थो भवनं भावः । विप्रतिषिद्धानां धातुसंज्ञा न प्राप्नोति—भेदः छेदः । अन्यो हि भावः अन्योऽभावः ॥ आतश्चान्यो भावः अन्योऽभाव इति । यो हि यस्य भावमिच्छति स न तस्याभावम् । यस्य चाभावं न तस्य भावम् ॥ पचादीनां च धातुसंज्ञा न प्राप्नोति यथा हि भवता क्रियावचने धातौ करोतिना पचादीनां सामानाधिकरण्यं निदर्शितम्, न तथा भाववचने धातौ निदर्श्यते । करोतिः पचादीनां सर्वान्कालान्सर्वान्पुरुषान्सर्वाणि वचनान्यनुवर्तते । भवतिः पुनर्वर्तमानकालं चैकत्वं च ॥**

( प्रदीपः ) **भेद इति ।** विनाशो भेदश्छेदश्च घटरज्ज्वादेः स च भावविरोधीति भावः ॥ **सर्वान् पुरुषानिति ।** किं करोषि ? पचामि, किं करोमि ? पचेत्यादौ विपरीतापि पुरुषानुवृत्तिः सर्वग्रहणेन विवक्षिता ॥ **भवतिः पुनरिति ।** नहि भवति 'भविष्यति पक्ष्यत्यभूदपाक्षीद्भवतः पचतो भवन्ति पचन्तीति' ॥

(उद्द्योतः) नन्ववयवविभागानुकूलव्यापारवाचिनां भिदादीनां कथमभाववचनतेत्यत आह—**विनाश इति ॥** तत्र घटादेर्नाशो भेदपदेन, रज्ज्वादेः स च्छेदपदेनेति शब्दशक्तिस्वभावादवगन्तव्यम् । विनाशकाले सत्ताया अभावान्न तेन तस्याः सामानाधिकरण्यमिति भावः ॥ दोषान्तरमाह—**पचादीनां चेति** भाष्ये ॥ **क्रियावचने धाताविति ।** क्रियावचनो धातुरिति लक्षणनिरूपणावसरे यथा निदर्शितं न तथा **भाववचनो धातुरिति** लक्षणावसरे पचादीनां भवतिना निर्दर्श्यत[4] इत्यर्थः । तथाहि न सामान्यविशेषभावेन पचादेर्भवतिना सामानाधिकरण्यम्, किं करोति? पचति, किमकार्षीत् ? अपाक्षीत्, किं करिष्यति ? पक्ष्यति, किं कुरुते ? पचते इतिवत् 'किं भवति पचति, किं भविष्यति ? पक्ष्यति' इत्यादेरप्यापत्तेः । यतस्तु न प्रश्नोत्तरभावेन सामानाधिकरण्यं, यतश्च पचतौ भिन्नभिन्नवचनाद्यन्तेऽपि भवतेरेकरूपत्वमतः पच्यर्थो भवतेः कर्तैव, पचति यत्तद्भवतीति वाक्यार्थात् । **करोतिः** कृधात्वर्थः । **भवति**र्भूधात्वर्थः । धात्वर्थनिर्देशेपि यजतिषु[5] ये यजामहं करोतीतिवत् श्तिप् ॥ **वर्तमानकालं चैकत्वं चेति ।** प्रश्नविषयत्वं विना चेत्यपि बोध्यम् । **भवतिरेकवमनुवर्तते** इत्युक्त्या क्रियायां संख्यान्वयं दर्शयति । एवं **पचादीनां सर्वाणि वचनानी**त्यनेनापि । तत्र वचनं संख्या ॥ न चैवं पक्ष्यति भवतीति कथं प्रयोगो भविष्यत्पाके वर्तमानसत्ताश्रयत्वासंभवादिति वाच्यम् । भूत[6]भविष्यतोरपि सूक्ष्मा[7]वस्थामालम्ब्य सत्ताया वर्तमानत्वाक्षतेरिति भावः । करोतेः पचादिसर्वपुरुषानुवर्तकत्वं किं करोषि पचामीत्यादौ व्यभिचरितमत आह—**किं करोषीति ।** करोतेः सामान्यविशेषभावेन पचादिष्वनुवृत्तिर्द्वेधा पचादिसमानपुरुषान्ता, अनुकूल[8]तद्विपरीतपुरुषान्ता चेति । द्विविधापि सा सर्वपदेन संगृहीतेत्यर्थः ॥ **नहि भवतीति ।** ननु यः पक्ष्यति स भविष्यतीत्यभिप्राये[9]ण भविष्यति पक्ष्यतीति प्रयोगः कथं नेति चेन्न । आख्या[10]तस्य क्रियाप्रधानत्वात् । उक्तं[11] सामानाधिकरण्यमपि न भाववाचकतासाधकम्, यथा शुक्लादीनां रूपवाचकत्वेपि न रूपत्ववाचकता तद्वत् । एवं पाकत्वेन सत्तायाः सामानाधिकरण्येन पचेः सद्वाचकत्वेपि न सत्तावाचकत्वमिति बोध्यम् । किं चोक्तोर्थोपि न[12], पचतीत्यनेनैव तत्कर्तुर्वर्तमानसत्त्वावगत्या भवतीत्यस्यानुपयोगात्, तद्वक्ष्यति भाष्ये—**पचादयः क्रिया इत्यादि ॥**

( प्रश्नभाष्यम् )

**का तर्हीति वाचोयुक्तिः—भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीदिति ? ॥**

( प्रदीपः ) **का तर्हीति ।** कथं सम्बन्ध इति प्रश्नः ॥

( उद्द्योतः ) **कथं संबन्ध इति ।** किंसंबन्धमूलिकेयं वाचोयुक्तिर्वाक्प्रयोगोयमिति भाष्यार्थ इति भावः ॥

---

१ पचादिष्विति शेषः । ( र. ना. ) २ 'प्रकिरणाद्य' । ३ तेन लाक्षणिकानामपि धातुसंज्ञासिद्धिरिति भावः । ( र. ना. ) ४ 'निदर्शित' । ५ यागेष्वित्यर्थः । ( र. ना. ) ६ भूतभविष्यतोरपीति । तथा चोक्तं पातञ्जलदर्शने "अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्" ( ४ पा० १२ सू० ) इति सूत्रेण ॥ प्रतिपादितस्यार्थस्य साधनाय हेतुदर्शकमग्रे सूत्रमाविष्कृतम्—"ते व्यक्तसूक्ष्मा गुणात्मानः" ( ४।१३ ) इति । व्याख्यातं चैतद् भगवता वेदव्यासेन—'ते खल्वमी त्र्यध्वानो धर्मा वर्तमाना व्यक्तात्मानोऽतीतानागताः सूक्ष्मात्मानः षडविशेषरूपाः । सर्वमिदं गुणानां संनिवेशमात्रमिति परमार्थतो गुणात्मानः । तथाच शास्त्रानुशासनम्—"गुणानां परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथ प्राप्तं तन्मायेव सुतुच्छकम् ॥" इति ॥' इति । ७ सत्कार्यवादिनां सांख्यानां मतेनेति भावः । ( र. ना. ) ८ पचादिधातूत्तरपुरुषानुकूलो यस्तद्विपरीतपुरुषस्तदन्तेत्यर्थः । ( र. ना. ) ९ यः पाककर्ता स भवनकर्तेत्यभिप्रायेणेत्यर्थः । तथाच वर्तमानकालादन्यत्रापि पचतिभवत्योः सामानाधिकरण्यं सूपपादमिति भावः । ( र. ना. ) १० तथा च नैयायिकमते इव प्रथमान्तार्थमुख्यविशेष्यकबोधानङ्गीकाराद् वैयधिकरण्यं तदवस्थम् । ( र. ना. ) ११ भवतिपचतीत्यादिभाष्येणोक्तमित्यर्थः । ( र. ना. ) १२ पचेः सद्वाचकत्वमपि नेत्यर्थः । ( र. ना. )

**( उत्तरभाष्यम् )**

**एवैषा वाचोयुक्तिः—पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति ॥**

**( प्रदीपः ) एवैषेति ।** या एषा त्वया पृष्टा सैषा वर्ण्यमानस्वरूपेत्यर्थः ॥ **पचादय इति ।** साध्यसाधनभावः सम्बन्धो न तु सामान्यविशेषभाव इत्यर्थः ॥ नन्वन्यत्रोक्तं **तिङभिहितो भावः क्रियया समवायं न गच्छति । नहि भवति 'पठति पचति'** इति । ततश्च तेनैतद्विरुध्येत । तत्राहुः—कर्तृकर्मभावेन क्रिया आख्यातवाच्यक्रियया सम्बध्यत एव—भवति पचति, पश्य मृगो धावतीति । करणादिभावेन तु न सम्बध्यते । तथा प्रयोगादर्शनात् ॥

**( उद्द्योतः ) एवैषेति** द्विरुक्तिः कथमत आह—**यैषेति ॥ साध्यसाधनभावः ।** क्रियाकारकभावः ॥ **तथा प्रयोगादर्शनादिति ।** ज्योतिष्टोमेन यजेतेत्यादावपि ज्योतिष्टोमेनेत्यस्यैव करणत्वेनान्वयो न तु धात्वर्थस्येति मतं मञ्जूषायां विधिवादे निरूपितं, यद्वा तस्य करणत्वेन न धात्वन्तरार्थेऽन्वय इति भावः । यत्कर्तृका पचिक्रिया तत्कर्तृका सत्तेति बोधे तु पक्ष्यन्तिभवन्तीत्यादेरप्यापत्तिरिति बोध्यम् ॥

**( उत्तरबाधकभाष्यम् )**

**यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्या चान्या च क्रिया । यत्र खलु सैव क्रिया तत्र कथम्—'भवेदपि भवेत्,' 'स्यादपि स्यात्' इति ॥**

**( प्रदीपः ) भवेदपि भवेदिति ।** एकस्याः क्रियायाः आत्मापेक्षः साध्यसाधनभावो विरुद्ध इति भावः ॥

**( उद्द्योतः ) यत्र खल्विति ।** भाष्ये । एकस्या एव कर्तृत्वं तन्निरूपकत्वं च न युक्तमिति भावः ॥ **भवेदपि भवेदितीति ।** अपि भवेदिति यत्तद्भवत्वित्यर्थः ॥ [ भाष्ये **स्यादपि स्यादिति ।** अत्र सर्पिष इत्यध्याहारेण पदार्थद्योतकत्वादपेः कर्मप्रवचनीयत्वेन षत्वाभावः ॥ ]

**( उत्तरसाधकभाष्यम् )**

**अत्राप्यन्यत्वमस्ति । कुतः ? । कालभेदात्साधनभेदाच्च । एकस्यात्र भवतेर्भवतिः साधनं सर्वकालश्च प्रत्ययः । अपरस्य बाह्यं साधनं वर्तमानकालश्च प्रत्ययः ।**

**( प्रदीपः ) कालभेदादिति ।** स्वाभाविकमन्यत्वं कालसाधनभेदेन व्यज्यते ॥ **एकस्येति ।** अपि भवेदित्यत्र यो भवतिस्तस्यारोग्यादिविशिष्टदेवदत्तादिकर्तृका सत्ता वर्तमानाऽर्थः तथाभूता हि सत्ता प्रार्थ्यत इति वर्तमानकालः प्रत्ययः । सा तु सत्ता भवेदित्यस्याः सत्तायाः कर्तृत्वेन निर्दिष्टेति भेदोऽस्त्येव ॥

**( उद्द्योतः )** नन्वन्यत्वस्य कालभेदजन्यत्वाभावादनुपपन्नमेतदत आह—**स्वाभाविकमिति ।** तज्ज्ञानहेतुत्वे तद्धेतुत्वोपचार इति भावः ॥ ननु भवेदपि भवेदित्यस्य देवदत्तस्य सत्ता सम्भाविता इति यत्तद्भवेद्भवत्वित्यर्थः । लिङाऽपिना च संभावना प्रतिपाद्यते । अपरोक्षे लिङ् प्रार्थने । एवं च तयोः कालांशे उदासीनत्वाद्वर्तमानकाल इत्ययुक्तमत आह—**अपि भवेदिति ॥ सत्ता वर्तमानेत्यस्य** सम्भावितेति शेषः ॥ यद्यप्युदासीनकाले लिङ् तथापि क्रियाया नियमेन कालाकाङ्क्षासत्वात्प्रकरणादिवशेन तत्तत्कालविशिष्टक्रियावगतिः । अत एव माङि लुङादेः सर्वालंकारापवादत्वव्यवहारः । एवं च **नहि भूतभाविनोस्तादृशी प्रीतिर्यादृशी वर्तमान** इति न्यायेन सम्भावनालिङन्तप्रतिपाद्यस्य वर्तमानत्वसिद्धिस्तदाह—**तथाभूता हीति ॥ भवेदित्यस्याः सत्ताया इति ।** प्रार्थनालिङन्तार्थाया इत्यर्थः । सम्भावनाविषयवर्तमानसत्ताकर्तृका प्रार्थ्यमाना सत्तेति बोधः ॥ नन्वेवमपि प्रार्थनालिङन्तार्थस्य कथं सर्वकालत्वं प्रार्थनाया भविष्यद्विषयतया तद्विषयसत्तायां भविष्यत्वप्रतीतेरिति चेन्न । शान्तो रोग इति प्रश्ने पुनरनुत्पत्तिध्वननायैकेन 'शमिष्यतीत्युक्ते' संवादायापरेण शाम्यतीत्युक्तेऽनौल्वण्याय शाम्यत्विति प्रयोगदर्शनेन प्रार्थनाविषये सर्वकालत्वाभिमानात् ॥ तदेवमत्र लक्षणे भिदादिष्वव्याप्तिर्भवतिसामानाधिकरण्याभावात्पचादावव्याप्तिश्चेति दूषणद्वयं स्थितम् ॥

**( आक्षेपोपसंहारभाष्यम् )**

**यावतात्राप्यन्यत्वमस्ति, पचादयश्च क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्तीति ॥**

**( उद्द्योतः ) कर्त्र्यो** भवन्तीत्यस्यानुपपन्नं भाववचनो धातुरिति लक्षणमिति शेषः । भवतिसामानाधिकरण्याभावेन भाववचनत्वाभावादिति भावः ॥

**( समाधानभाष्यम् )**

**अस्त्वयं कर्तृसाधनः—भवतीति भाव इति ॥ किं कृतं भवति ? । विप्रतिषिद्धानां धातुसंज्ञा सिद्धा भवति ॥**

**( प्रदीपः ) अस्त्वयमिति ।** भेदादयोपि भवन्तीति तद्वचनानां सिध्यति धातुसंज्ञा ॥

**( उद्द्योतः )** अथ तदुद्धरति—**अस्त्विति । विप्रतिषिद्धानामि**त्युपलक्षणं पचादीनामपि ॥ **भेदादयोऽपीति ।** जन्मवाची भवतिस्तेन ध्वंसस्यापि जायमानत्वान्नाव्याप्तिरिति भावः । अन्योन्याभावोपि तत्तद्वस्तुजन्मना जन्य एवेति तद्वाचकभेदशब्दसिद्धिर्बोध्या ॥

**( आक्षेपभाष्यम् )**

**भवेद्विप्रतिषिद्धानां धातुसंज्ञा सिद्धा स्यात्, प्रातिपदिकानामपि तु प्राप्नोति वृक्षः प्लक्ष इति ॥ किं कारणम् ? । एतान्यपि हि भवन्ति ॥**

**(प्रदीपः) एतान्यपीति ।** एतत्प्रतिपाद्यानि वस्तूनीत्यर्थः ॥

**( उद्द्योतः ) एतानीति** नपुंसकमयुक्तमुपक्रान्तानां पुंस्त्वादत आह—**एतदिति ॥**

---

१ कर्तृकर्मभावातिरिक्तसंवन्धमित्यर्थः सिद्धान्ते । पूर्वपक्षस्तु संवन्धमात्रमर्थं मत्वा । ( र. ना. ) २ पाककर्तृवहुत्वस्थले इति शेषः । ( र. ना. ) ३ अयं कोष्ठकान्तर्गतः पाठो यद्यपि प्राचीनपुस्तकेष्वपि 'तदेवम्' इत्यनुपदवक्ष्यमाणोपसंहारग्रन्थतः प्रावसमुपलभ्यते, तथापि तत्र पाठस्यासंवन्धेनानुचितत्वादुचितस्थानेऽस्माभिर्लिखित्वा स्थापित इति बोध्यम् । ४ द्वितीयस्येत्यर्थः । भवतिः, प्रथम इति शेषः । साधनं कर्तृकारकम् । (र. ना.) ५ प्रथमस्येत्यर्थः । बाह्यसाधनं, भवत्यर्थति रिक्तं साधनं देवदत्तादिः । (र. ना.) ६ अत इत्यादिः । (र.ना.) ७ वर्तमानः कालो यस्य वाच्यः स तथाभूतो लिङ्प्रत्यय इत्यर्थः । ( र. ना. ) ८ कालभेदादिति पञ्चमीकथनमित्यर्थः । (र. ना.) ९ कालभेदादिति पञ्चम्या ज्ञाप्यत्वमर्थ इति तु न, सुब्विभक्तौ न लक्षणेति स्वीकारात् । ( र. ना. ) १० अपरो लिङ् प्रार्थने इति पाठो भाति । ( र. ना. ) ११ समानविषयकत्वप्रयुक्त इति शेषः । ( र. ना. ) १२ एवं 'स्यादपि स्यादित्यत्रापि । धातुभेदेन तु पृथगुपादानम् । (र. ना.) १३ प्रतियोग्यनुयोगिजन्मनेत्यर्थः । (र.ना.)

( समाधानभाष्यम् )

**एवं तर्हि कर्मसाधनो भविष्यति—भाव्यते यः स भाव इति। क्रिया चैव हि भाव्यते। स्वभावसिद्धं तु द्रव्यम्॥**

( प्रदीपः ) **भाव्यते यः स भाव इति।** तेन साध्यमानार्थवाचिनां धातुसंज्ञेत्यर्थः॥ **स्वभावसिद्धमिति।** शब्दशक्त्यनुसारेणैतदुच्यते। कृतताक्रियमाणताकर्तव्यता—युक्तान्यपि द्रव्याणि सिद्धरूपाण्येव प्रातिपदिकेनाभिधीयन्ते। शब्दान्तरेण तु तेषामवस्थान्तरं प्रतिपाद्यते॥

( उद्द्योतः ) ननु कर्मसाधनेऽपि वृक्षादिषु दोषोऽपरिहृत एवेत्यत आह—**तेन साध्यमानेति।** साध्यावस्थावपन्नार्थवाचिनामित्यर्थः॥ **कृतता,** घटमकार्षीदित्यादौ। **क्रियमाणता,** घटं करोतीत्यादौ। **कर्तव्यता,** घटं करिष्यतीत्यादौ॥ **सिद्धरूपाण्येवेति।** **स्वभावेन** शब्दशक्तिस्वभावेन सिद्धं सूक्ष्मरूपेण सिद्धावस्थमेव द्रव्यं शब्दवाच्यमिति भाष्याक्षरार्थः। अत एव तस्य क्रियाकाङ्क्षा। यद्यपि क्रियापि तथा तथापि सा शब्दशक्तिस्वभावात् स्थूलरूपेण साध्यतयैव प्रतीयत इति बोध्यम्॥

( आक्षेपभाष्यम् )

**एवमपि भवेत्केषांचिन्न स्यात्—यानि न भाव्यन्ते। ये त्वेते संबन्धिशब्दास्तेषां प्राप्नोति माता पिता भ्रातेति। सर्वथा वयं प्रातिपदिकपर्युदासान्न मुच्यामहे॥**

( प्रदीपः ) **मातेति।** मातृत्वं पुत्रजन्मना भाव्यते॥ **सर्वथेति।** पाठाश्रये समानशब्दानां प्रसङ्गः, कर्तृसाधने भावशब्दे वृक्षादीनां प्रसङ्गः, कर्मसाधने मात्रादीनामित्यर्थः॥

( उद्द्योतः ) **मातृत्वमिति।** मात्रादिशब्दा जनकत्वीत्यादौ शक्ता जनकत्वस्य च जन्यनिरूपितत्वमित्यभिमानः॥

( समाधानभाष्यम् )

**पठिष्यति ह्याचार्यः—* भूवादिपाठः प्रातिपदिकाणवत्त्वादिनिवृत्त्यर्थः—* इति। यावता पठिष्यति पचादयश्च क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्तीति अस्त्वयं कर्तृसाधनो भवतीति भाव इति॥**

**किं वक्तव्यमेतत्?॥**

**नहि॥**

**कथमनुच्यमानं गंस्यते?॥**

**एतेनैवाभिहितं सूत्रेण "भूवादयो धातवः" इति॥**

**कथम्?।**

**नेदमादिग्रहणम्। वदेरयमौणादिक इकर्तृसाधनः—भुवं वदन्तीति भूवादय इति॥**

( प्रदीपः ) इदानीं समाधानमाह—**पठिष्यतीति।** पठितानामेव भाववचनानां धातुसंज्ञा नान्येषामित्यर्थः॥ **अस्त्वयमिति।** भवतीति भूरिति कर्तरि क्विबस्ति न तु कर्मणि। अर्थस्त्वभिन्न एव। यो हि भवति स एव भाव्यते नान्यः॥ **नेदमिति।** वृद्धिशब्दस्य मङ्गलार्थस्य प्रयुक्तत्वादाकारो मङ्गलार्थो नोपयुज्यते॥ **भुवमिति।** जायमानमर्थं येऽभिदधति ते धातव इत्यर्थः। भवतिरत्र जन्मवाची गृह्यते न तु सत्तावाचीति सिद्धार्थाभिधायिनां संज्ञा न भवति॥

( उद्द्योतः ) भाष्ये पठिष्यति हीत्यस्य हिशब्दात् पूर्वोक्तशङ्कोपपादकत्वभ्रमं वारयति—**इदानीमिति॥** समानशब्दातिप्रसङ्गवारणायाह—**भाववचनानामिति।** कर्त्र्यो भवन्तीत्यतोऽस्त्वयं कर्तृसाधनो भवतीति भाव इति न कश्चिद्दोष इत्यर्थो भाष्यस्य॥ सूत्राक्षरस्य संग्रहं दर्शयति—**भूरिति कर्तरीति॥** **अर्थस्त्वभिन्न एवेति।** एवं च कर्तृसाधनकर्मसाधनयोरविशेषः फले, दोषवारणमपि समम्, न्यायप्राप्तश्च कर्तृसाधन इति स एवास्त्वित्याशयः॥ भाष्ये—**किं वक्तव्यमिति।** **भाववचना भूवादयो धातव इति** किं वक्तव्यमित्यर्थः॥ भाष्ये **औणादिक इति।** बाहुलकादिति भावः॥ **वृद्धिशब्दस्येति।** मध्यमङ्गलस्य शिवशमरिष्टस्येत्यादिभिरेव सिद्धत्वेनेदं नातीवोपयुज्यत इति भावः॥ **जायमानमिति।** तद्रूपेण प्रतीयमानमित्यर्थः॥

( ८१८ प्रथमाक्षेपवार्तिकम्॥ १३॥)

## ॥ * ॥ भाववचने धातौ तदर्थप्रत्ययप्रतिषेधः॥ * ॥

( भाष्यम् ) **भाववचने धातौ तदर्थस्य प्रत्ययस्य प्रतिषेधो वक्तव्यः। शिड्ये इति॥ किं च स्यात्?॥ अशितीत्यात्वं प्रसज्येत। तद्धि धातोर्विहितम्॥**

( प्रदीपः ) **शिड्ये इति।** भावार्थाभिधायित्वात्प्रत्ययस्य धातुसंज्ञाप्रसङ्गादात्वं प्राप्नोति। तद्ध्यनैमित्तिकं, शिति तु प्रतिषिध्यते। एकारोच्चारणं तु यदा कर्तृकर्मणोर्लकारस्तदर्थम्। पाठस्तु न तावदस्य मनसि वर्तते॥

( उद्द्योतः ) एवं वदतानेन प्रातिपदिकनिवृत्त्यर्थं पाठो नाश्रितः। वृक्षादीनां तत्त्वेनाभानादेव व्यावृत्तिसिद्धेरिति मन्वानः शङ्कते—भाष्ये—**भाववचन इत्यादि॥** **प्रत्ययस्येति।** प्रत्ययान्तस्य तूपदेशाभावाद्धातुत्वेप्यात्वाप्राप्तेरिति भावः॥ **अशितीति** पर्युदासेनाशितः परत्वाभावादात्वाप्राप्तिरत आह—**तद्धीति॥** भाष्ये **तद्धि धातोरिति।** आदेच इत्यत्र धातोरिति संबध्यत इति वार्तिककृतोऽभिमान इति भावः॥ भाष्यकारस्तूपदेशग्रहणबलेन तत्र धातोरित्यस्यासंबन्धं वक्ष्यति। अत्र तु नात्वं, शितिनेति निषेधेन शित्प्रत्ययपरत्वयोग्य एवैजन्त आत्वप्रवृत्तेरिति बोध्यम्॥ यं विधिं प्रतीतिन्यायेनैकारोच्चारणसामर्थ्यादात्वं न स्यादत आह—**एकारोच्चारणं त्विति॥**

---

१ 'हि'। २ 'वस्थापन्नार्थ'। ३ सूक्ष्मरूपेण सिद्धावस्थेत्यर्थः। ( र. ना. ) ४ एवमपि—भाव्यते य इति कर्मव्युत्पत्तिस्वीकारेऽपि—यानि वस्तूनि न भाव्यन्ते तदर्थवाचकानां केषांचिन्न धातुसंज्ञा स्यादिति भवेदित्यर्थः। (र. ना.) ५ सनिरूपकार्थबोधकशब्दा इत्यर्थः। ( र. ना. ) ६ प्रातिपदिकपर्युदासकर्तव्यतारूपाद्दोषात्र मुच्यामहे इत्यर्थः। ( र. ना. ) ७ तेन पुत्रजन्मनः पूर्वं तत्र जनकत्वं नास्तीति तेन तद्भाव्यते इति भावः। अभिमानोक्तिस्तु पुत्रजन्मनः पूर्वमपि स्वरूपयोग्यतालक्षणं जनकत्वं तत्रास्त्येवेति न पुत्रजन्मना मातृत्वं भाव्यते किन्तु सिद्धमभिव्यज्यते इति बुद्ध्या। ( र. ना. ) ८ चास्यत इति शेषः। ( र. ना. ) ९ अन्तर्भावितण्यर्थत्वं स्वीकृत्येति शेषः। ( र. ना. ) १० जायमानत्वेन प्रतीयमानत्वरूपमेव क्रियात्वं धातुसंज्ञोपयोगीति भावः। ( र. ना. ) ११ तद्धीति। आत्वं हीत्यर्थः। १२ प्रातिपदिकेष्वात्वाप्रवृत्त्येति शेषः। ( र. ना. ) १३ यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते इति न्यायाकारः। ( र. ना. )

( ८१९ द्वितीयाक्षेपवार्तिकम् ॥ १४ ॥ )

॥ * ॥ इतरेतराश्रयं च, प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः ॥ * ॥

(भाष्यम्) इतरेतराश्रयं च भवति ॥ का इतरेतराश्रयता ?। प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः। उत्पन्ने हि प्रत्यये भाववचनत्वं गम्यते स च तावद्भाववचनादुत्पाद्यः। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥[1]

( प्रदीपः ) इतरेतराश्रयं चेति। प्राक् शास्त्रव्यापारात्समुदाय एव नास्ति, कुतोन्वयव्यतिरेकाभ्यामर्थस्य प्रविभागः॥ तस्मिंश्चासति भाववचनापरिज्ञानाद्धातुत्वं न व्यवतिष्ठत इत्यर्थः॥

( ८२० द्वितीयाक्षेपसमाधानवार्तिकम् ॥ १५ ॥ )

॥ * ॥ सिद्धं तु नित्यशब्दत्वादनाश्रित्य भाववचनत्वं प्रत्ययः ॥ * ॥

(भाष्यम्) सिद्धमेतत् ॥ कथम् ?। 'नित्यशब्दत्वात्।' नित्याः शब्दाः। नित्येषु च शब्देषु अनाश्रित्य भाववचनत्वं प्रत्यय उत्पद्यते ॥

(प्रदीपः) सिद्धं त्विति। व्यवस्थिता एव पचत्यादयः समुदायाः संसृष्टार्थाभिधायिनः केवलमुत्प्रेक्ष्योत्प्रेक्ष्य प्रक्रियायामर्थविभागः शब्दविभागश्चापोद्ध्रियते इत्यर्थः॥ अनाश्रित्येति। पारमार्थिकं नाश्रीयते, परिकल्पितं त्वाश्रीयत एव। तत्त्वतो हि शब्दान्तराण्येवार्थान्तरेषु प्रयुज्यन्ते ॥

(उद्द्योतः) व्यवस्थिता इति। साधुत्वान्वाख्यानमात्रे शास्त्रव्यापारात् प्रागुक्तप्रणाडी[2] सर्वापि सिद्धैवेति नान्योन्याश्रय इति भावः॥ संसृष्टार्थाभिधायिन इति। संसृष्टोपस्थापका इत्यर्थः॥ धातुसंज्ञार्थं भाववचनत्वस्याश्रितत्वादनाश्रित्येत्यनुपपन्नमत आह—पारमार्थिकमिति। तस्य व्यवहारेण समुदायवृत्तित्वादिति भावः॥ वार्तिककृताऽनाश्रित्येत्युक्तेरिति तात्पर्यम्॥ परिकल्पितं त्विति। भाष्यकृता पूर्वमन्वयव्यतिरेकाभ्यां धातुरेव क्रियावाचीत्युक्तेरिति भावः॥

( ८२१ प्रथमाक्षेपसमाधानवार्तिकम् ॥ १६ ॥ )

॥ * ॥ प्रथमभावग्रहणं च ॥ * ॥

( भाष्यम् ) प्रथमभावग्रहणं च कर्तव्यम्। प्रथमं यो भावमाहेति ॥ कुतः पुनः प्राथम्यम्। किं शब्दत आहोस्विदर्थतः ?। किं चातः ?। यदि शब्दतः, सनादीनां धातुसंज्ञा न प्राप्नोति—पुत्रीयति वस्त्रीयतीति। अथार्थतः, सिद्धा सनादीनां धातुसंज्ञा, स एव तु दोषः * भाववचने तदर्थप्रत्ययप्रतिषेधः * इति ॥ एवं तर्हि नापि शब्दतो नाप्यर्थतः॥[4] किं तर्हि ?। अभिधानतः। सुमध्यमेऽभिधाने यः प्रथमं भावमाह ॥

( प्रदीपः ) प्रथमभावग्रहणं चेति। तदर्थप्रत्ययपरिहारोयम्॥ प्राथम्यस्यापेक्षिकत्वात्पृच्छति—कुत इति॥ पुत्रीयतीति। नात्र प्रथममुच्चार्यमाणः पुत्रशब्दो भावमाह। सनाद्यन्ता धातव इत्यस्य प्रत्याख्यानेऽयं दोषः॥ सिद्धेति। प्रथम आद्यो भावोऽप्रथमेनापि क्यचाभिधीयते न तु द्वितीयः। शिश्य इत्यत्र तु प्राप्नोति। स्वार्थिकेन प्रत्ययेन प्रथम एव भावोभिधीयते न तु द्वितीयः॥ अभिधानत इति। अन्येनानभिहितं भावं य आह स धातुः। शिश्ये इत्यत्र तु प्रकृत्याभिहितं भावं प्रत्यय आहेति न तस्य धातुसंज्ञाप्रवृत्तिः। यथा प्रथममयं राजानं पश्यतीत्यस्यायमर्थो यदन्येनादृष्टं पश्यतीति तथेहापि प्राथम्यमभिधानक्रियापेक्षमाश्रीयते अन्येभ्यो भावाभिधायिभ्यो यः प्रथमं भावमाहेति॥ सुमध्यम इति। द्वौ शब्दार्थपक्षौ दुष्टत्वात्परित्यज्योपादीयमानमभिधानं मध्यममिति व्यपदिश्यते। तदेव निर्दोषत्वाच्छोभनत्वेन विशेष्यते। चिकीर्षतीत्यत्र करोत्यर्थोपसर्जनामिच्छामन्येनानभिहितां सन्प्रत्यय आहेति प्रवर्तते धातुसंज्ञा। अत्र पक्षे यथा शिश्य इति प्रत्ययस्य धातुसंज्ञा न भवति तथा स्वार्थिकानामायादीनामपि न प्राप्नोति गोपायति कामयते इति, तदर्थं सनाद्यन्ता धातव इति पठितव्यमेव ॥

( उद्द्योतः ) चश्रवणाद्दोषसमुच्चय इति भ्रमं प्राप्तं वारयति—तदर्थेति। वार्तिककृता धातोरित्यस्यात्वे संबन्धाभ्युपगमात्तदुक्तोयं परिहार इत्यर्थः॥ ननु स्वभावादेव धातूनां प्रथमं भाववाचित्वे कुत इति हेतुप्रश्नोऽसंगत इत्यत आह—प्राथम्यस्येति। अवधिविषयः प्रश्न इति भावः॥ प्रथमश्चासौ भाववचनश्चेति विग्रहे प्रथममुच्चार्यमाणः सन् भावमाहेत्यर्थे शब्दतः प्राथम्यम्, प्रथमस्य भावस्य वचन इति विग्रहेऽर्थतः, द्वयोर्मध्ये प्रथमं पूर्वकालं भाववचन इति विग्रहे विस्पष्टपटुवत्समासेऽभिधानतः, स्वयं प्रथमोऽप्रथमो वा प्रथममप्रथमं वा भावमन्येभ्यः पूर्वमाहेत्यर्थादिति बोध्यम्॥ नात्रेति। यद्यपि तिङपेक्षया क्यजपि प्रथमस्तथापि तस्य गौणं प्राथम्यमिति भावः। न च क्यजन्तस्य तिङपेक्षया मुख्यमेव प्राथम्यम्। कुत्र इच्छा आश्रय इत्यर्थत्रयावभासेन खण्डत्रयस्यैवं कर्णादिति तत्त्वम्॥ ननु सनाद्यन्ता इति तस्य धातुत्वं सिद्धमत आह—सनाद्यन्ता इति॥ भाववचना इति लक्षणे सनाद्यन्तानामप्यनेनैव धातुत्वसिद्धौ तत्सूत्रमेव प्रत्याख्येयमिति भावः॥ क्यचेति। लक्षणे भाववचनस्तदन्तश्च गृह्यते इति तदन्तस्य धातुत्वसिद्धिरिति भावः॥ प्रथममयं राजानमिति। प्रथममयमेव राजानमित्यर्थः॥ नन्वस्य पक्षस्यान्त्यत्वान्मध्यम इत्युक्तमत आह—द्वाविति। उभयास्पृष्टे मध्यस्थ इति व्यवहारात् प्रागुक्तदोषद्वयास्पर्शेनायं मध्यम इति भावः॥ इच्छामन्येनेति। एवं प्रतीषिषतीत्यादावपि प्रकृत्यर्थातिरिक्तां तद्विषयामिच्छामन्येनानभि-

१ न प्रसिद्ध्यन्तीत्यर्थः। ( र. ना. ) २ 'व्यवहारा'। ३ 'प्रणाली'। ४ 'नैवार्थतो नापि शब्दतः। अभिधानतः'। ५ एकस्यैव भावस्य प्रकृतिप्रत्ययाभ्याममभिधानादिति भावः। ( र. ना. ) ६ विस्पष्टं पटुरिति विग्रहे सह सुपेति समासः। यथाऽत्र विस्पष्टपदार्थोऽभेदेन पटुत्वरूपपदार्थैकदेशान्वयी तथा प्रथमं भाववचन इति विग्रहे प्राथम्यं भेदेन पदार्थैकदेशाभिधानान्वयि इति भावः। ( र. ना. ) ७ द्वितीयत्वसमानाधिकरणमित्यर्थः। ( र. ना. ) ८ तथा च न क्यजन्ते काचन शक्तिरिति तस्य प्राथम्येऽपि भाववचनत्वाभावाद् धातुत्वाप्राप्तिरिति भावः। ( र. ना. )

हिताँमेव सत्ताहेति बोध्यम् ॥ आयादीनामिति । तदन्तानामित्यर्थः ॥

**( क्रियावचनवादिभाष्यम् )**

**इह ये एव भाववचने धातौ दोषास्ते क्रियावचनेपि । तत्र त एव परिहाराः ।**

( प्रदीपः ) **इहेति** । तदर्थप्रत्ययप्रतिषेध, इतरेतराश्रयं च । प्रथमभावग्रहणं च, सिद्धं तु नित्यशब्दत्वादिति च । केवलं प्रथमभावग्रहणमपनीय प्रथमक्रियाग्रहणं चेति क्रियाग्रहणं कर्तव्यम् ॥

(उद्द्योतः) क्रियावचनपक्षे प्रथमभावपदस्यानन्वयात्त एव परिहारा इत्यसङ्गतमत आह—**तदर्थेत्यादि** । भिदादीनामपि विभागफलकव्यापारवाचित्वात् क्रियावाचित्वमस्त्येव । अभावोपि सूक्ष्मावस्थसत्तैवेत्यभाववाचिनामपि भाववचनत्वमभावस्यालीकत्वाभ्युपगमादिति बोध्यम् ॥

**( आक्षेपभाष्यम् )**

**तत्रेदमपरिहृतम्—अस्तिभवतिविद्यतीनां धातुत्वम्—इति ॥**

( प्रदीपः ) **तत्रेदमिति** । किं करोतीति प्रश्नेऽस्त्यादिभिः प्रतिवचनाभावादक्रियावचनत्वमेषामिति मन्यते । यच्चाप्युक्तमिह सर्वेषु साधनेषु सन्निहितेषु कदाचित्पचतीत्येतद्भवति कदाचिन्नेति तदस्त्यादिषु नास्ति । नह्यस्तीति कदाचिद्भवति, अपि तु सर्वदैवेति पाकादिभिर्वैधर्म्यम् । यथा च पचतितरामिति प्रकर्षो भवति नैवमस्तितरामिति ॥

( उद्द्योतः ) भाष्ये **तत्रेदमिति** । तत्र, क्रियावचनो धातुरिति लक्षणे, क्रियावचनत्वाभावादप्राप्तं धातुत्वमस्त्यादीनामिति भावः ॥ कुतोऽक्रियात्वं तेषामत आह—**किं करोतीति** ॥ **नह्यस्तीति** । साधनसन्निधानेऽस्तीति कदाचिद्भवतीति न, अपि तु सर्वदा भवत्येवेत्यन्वयः ॥

**( प्रत्याक्षेपभाष्यम् )**

**तस्य परिहारः । कां पुनः क्रियां भवान्मत्वाह—अस्तिभवतिविद्यतीनां धातुसंज्ञा न प्राप्नोतीति । किं यत्तद्देवदत्तः कंसपात्र्यां पाणिनौदनं भुङ्क्ते इति ॥**

( प्रदीपः ) **किं यत्तदिति** । यत्तच्छब्दाभ्यां कारकवैचित्र्यं निर्दिश्यते ॥

( उद्द्योतः ) क्रियास्वरूपं शङ्कित्रैव वाचयितुं पृच्छति—भाष्ये **कां पुनरिति** ॥ तदाशयं स्वयमेवोन्नीयाह—**किं यदिति** । एवं हि भुजिकारकस्येवास्तिकारकस्यापि क्रियात्वमस्तु का क्षतिरिति भावः ॥ ननु भुङ्क्ते इति यत्सा क्रियेत्यन्वये धात्वर्थक्रियावाद एवोपक्षिप्तः स्यादिति न ब्रूम इत्यादिग्रन्थासङ्गतिः, देवदत्त इति यैत्सा क्रियेत्याद्यन्वये यत्तदोः प्रधानपरामर्शित्वहानिरत आह—यत्तदिति । क्रियांशस्य प्राधान्येपि न तात्पर्यविषयता, सर्वनाम्नां गुणपरामर्शकता च दृष्टाऽतस्तत्तद्व्यापाराविष्टकारकाण्येव ताभ्यां परामृश्यन्त इत्यर्थः ॥ **कारकवैचित्र्यमित्यस्य**, विचित्राणि कारकाणीत्यर्थः । स्वार्थे ष्यञिति बोध्यम् । वैचित्र्यं च तत्तद्व्यापाराविष्टत्वमेव ॥

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**न ब्रूमः कारकाणि क्रियेति । किं तर्हि ? । कारकाणां प्रवृत्तिविशेषः क्रिया । अन्यथा च कारकाणि शुष्कौदने प्रवर्तन्ते, अन्यथा च मांसौदने ॥**

( प्रदीपः ) **प्रवृत्तिविशेष इति** । सर्वा प्रवृत्तिः प्रवृत्त्यन्तराद्भिद्यते इत्यस्येव सर्वस्याः क्रियात्वम् ॥ **अन्यथेति** । शुष्कौदने मन्दप्रयत्नः प्रवर्तते मांसौदने तु संवेगेन । यथा च भोजनक्रियाणां परस्परवैलक्षण्यात्प्रवृत्तिविशेषत्वं नैवमस्त्यादीनाम् ॥

( उद्द्योतः ) भाष्ये शङ्किताऽऽह—न ब्रूम इत्यादि ॥ **प्रवृत्तिविशेष इति** । स चास्त्याद्यर्थे नास्तीति भावः ॥ एतच्चोपलक्षणं प्रतिवचनादीनामिति तान्युक्तवानुपाध्यायः ॥ ननु प्रवृत्तिविशेषस्य क्रियात्वे प्रवर्ततइत्यत्र क्रियात्वानापत्तिरत आह—**सर्वेति** । पच्याद्यपेक्षया सापि विशेष एवेति भावः । शङ्कितान्यमुपसंहरति—**यथाचेति** । एवं चास्त्यादौ धातुत्वासिद्धिरिति भावः ॥

**( समाधानभाष्यम् )**

**यद्येवं, सिद्धास्तिभवतिविद्यतीनां धातुसंज्ञा । अन्यथा हि कारकाण्यस्तौ प्रवर्तन्तेऽन्यथा हि म्रियतौ ॥**

( प्रदीपः ) **यद्येवमिति** । अत्रापि प्रवृत्त्यन्तरापेक्षयास्त्येव प्रवृत्तिविशेषरूपत्वमित्यर्थः ॥ **अन्यथेति** । अस्तावात्मभरणरूपा प्रवृत्तिर्म्रियतौ तत्त्यागरूपा । उत्पत्तिप्रभृत्याविनाशाच्च सत्तानुषङ्गादस्तीति प्रत्ययस्य सन्निहितेषु साधनेषूपत्तिरवश्यंभाविनीति; कादाचित्कत्वाभावः । प्रकर्षप्रत्ययोऽपि दृश्यते, विद्यतेतरामिह धान्यमिति ।

(उद्द्योतः) सिद्धान्त्याह—भाष्ये—**यद्येवमिति** ॥ **अन्यथा हीति** । कारककर्तृकाऽस्तौ वाच्यत्वेन स्थिता प्रवृत्तिरन्यथेत्यक्षरार्थस्तदेवाह—**आत्मभरणरूपेति** । स्थूलरूपधारणानुकूलव्यापाररूपेत्यर्थः । म्रियतौ तत्त्यागानुकूलव्यापाररूपेति भावः । एवं च म्रियत्यपेक्षया प्रवृत्तिविशेषरूपतास्त्येवास्त्यर्थस्येति तात्पर्यम् ॥ पूर्वोक्तदूषणत्रयेऽन्त्यद्वयमुद्धरति—**उत्पत्तीत्यादि** । **कादाचित्कत्वाभाव इति** । अयं चात्मभरणलक्षणसत्तायाँ विन्त्येव । तदपि कर्तृरूपे वस्तुनि विद्यमाने एव, वस्तुकादाचित्कताप्रयुक्ता तु सौस्त्येव । अत एव भूतभविष्यत्प्रयोगाः सङ्गच्छन्ते । उत्पत्तिरूपसत्तावाचिनि तु कादाचित्कतास्त्येव । विद्यतेतरामित्यपि कारकगतप्रकर्षारोपेणैव बोध्यम् ॥

---

१ या इच्छा सनाऽभिधीयते सा न प्रकृत्याऽभिहिता, प्रकृत्यर्थस्यात्र प्रत्ययार्थविषयत्वादिति भावः । ( र. ना. ) २ देवदत्तः कंसपात्र्यां पाणिनौदनं भुङ्क्ते इति विचित्राणि कारकाणि क्रियां मत्वा धातुसंज्ञा न प्राप्नोतीति भवानाह किमित्यर्थः । ( र. ना. ) ३ 'निर्दिश्यते' । ४ 'यत्क्रिये' । यत्तत्क्रिये' । ५ आख्यातस्थले क्रियाया एव प्रधानत्वादिति भावः । ( र. ना. ) ६ 'इति सर्वस्याः' । 'इति तस्याः' । ७ प्रवृत्तिसामान्यार्थकतया प्रवृत्तिविशेषाप्रतीतेरिति भावः । ( र. ना. ) ८ प्रतिवचनाभावाद क्रियावचनत्वमित्याद्यं विहायेत्यर्थः । ( र. ना. ) ९ कादाचित्कत्वाभाव इत्यर्थः । ( र. ना. ) १० इदं सप्तम्यन्तम् । ( र. ना. ) ११ अस्तीति प्रयोगकादाचित्कतेत्यर्थः । ( र. ना. ) १२ धातुपरधाप्यक्रियाया एकरूपत्वेन स्वतः प्रकर्षाभावादिति भावः । (र.ना.)

( समाधानसाधकप्रमाणभाष्यम् )

**षड्भावविकारा इति ह स्माह वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति ॥**

( प्रदीपः ) अत्रैवार्थे आगममाह—षड् भावविकारा इति । भावस्य क्रियायाः षड् प्रकारा इत्यर्थः । तेषु चास्तिः पठित इति तस्यापि क्रियात्वमित्यर्थः । अथ वा भावस्य सत्ताया एते प्रकाराः । सत्तैवानेकक्रियात्मिका साधनसम्बन्धादवसीयमानसाध्यरूपा जन्मादिरूपतयावभासते । एते च भावविकारा निरुक्ते निपुणं व्याख्याताः । इह तु प्रकृतानुपयोगान्न व्याख्यायन्ते ॥

(उद्योतः) भाष्येऽस्त्यादीनां क्रियावाचकत्वे युक्त्यन्तरमाह—षड्भावेत्यादि ॥ क्रियाया इति । भावो लीला क्रिया चेष्टेति कोशादिति भावः । विकारशब्दः प्रकारवाची ॥ अथ वेति । उत्पत्तिविनाशयोरपि सूक्ष्मरूपेण वस्तुनो भावात्तेषामपि सत्तात्मकत्वमिति बोध्यम् । भावस्य सत्तायां ब्रह्मसत्ताया एते विकाराः क्रियाप्रकारा मायावशात्त इव भासमाना इति वार्ष्यायण्युक्तेरर्थः ॥ सत्तैवेत्यादि । ब्रह्मसत्तैवानेकक्रियात्मिकानेकक्रियाविवर्तात्मिका साधनैः कारकैः संबन्धादवसीयमानसाध्यस्वरूपा जन्मादिरूपतया भासत इत्यर्थः । एतच्च निरुक्तभाष्ये स्पष्टम् ॥

( दूषणभाष्यम् )

**सर्वथा स्थित इत्यत्र धातुसंज्ञा न प्राप्नोति । बाह्यो ह्येतेभ्यस्तिष्ठतिः ॥**

( प्रदीपः ) सर्वथेति । भावविकारपरिसङ्ख्यानस्याव्यापकत्वमित्यर्थः ॥

( उद्योतः ) भावविकारेति । एवं चाव्याप्तिदूषितं परिगणनं कथमस्त्यंशे प्रमाणं भवेदिति भावः ॥

( समाधानभाष्यम् )

**एवं तर्हि क्रियायाः क्रिया निवर्तिका भवति, द्रव्यं द्रव्यस्य निवर्तकम् । एवं हि कश्चित्कंचित्पृच्छति—'किमवस्थो देवदत्तस्य व्याधिः' इति ? । स आह—'वर्द्धते' इति । अपर आह—'अपक्षीयते' इति । अपर आह—स्थित इति । स्थित इत्युक्ते वर्द्धतेश्चापक्षीयतेश्च निवृत्तिर्भवति ॥**

( प्रदीपः ) एवं तर्हीति । अनुमानेन स्थानस्य क्रियात्वं प्रतिपादयति । अन्यथा स्थित इत्युक्ते वृद्धिक्षयनिवृत्तिर्न प्रतीयेत ॥

( उद्योतः ) अनुमानेनेति । षड्भावविकारेष्वभावादक्रियात्वमेव मन्यमानं प्रतीत्यादिः ॥ अन्यथेति । एवं च स्थितेरप्यस्तितायामन्तर्भावान्न परिगणनाव्याप्तिरिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथ वा नान्तरेण क्रियां भूतभविष्यद्वर्तमानाः कालाः व्यज्यन्ते । अस्त्यादिभिरपि भूतभविष्यद्वर्तमानकालाः व्यज्यन्ते ॥**

( प्रदीपः ) अथवेति । क्रियान्तरधर्मसमन्वयेनास्त्यादीनां क्रियात्वं प्रतिपाद्यते । घट इत्युक्ते कालविशेषावगतिर्नास्ति । अस्ति अभूद् भविष्यतीति कालविशेषावगमात् साध्यमानस्य चार्थस्य कालेन योगात् क्रियात्वावसायः ॥

( उद्योतः ) तिष्ठतेरेव क्रियात्वे युक्त्यन्तरमिति भ्रमं वारयति—क्रियान्तरेति । एतन्मूलिकैव क्रियाभेदाय कालस्त्विति वाक्यपदीयोक्तिः, कालस्य क्रियामात्रपरिच्छेदकत्वादिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथ वा नान्यत्पृष्टेनान्यदाख्येयम् । तेन न भविष्यति—किं करोत्यस्तीति ॥**

( प्रदीपः ) अथ वेति । निर्ज्ञातायां सत्तायां किं करोतीति प्रश्नासम्भवादस्तीति प्रतिवचनाभावः । न तु क्रियात्वाभावादित्यर्थः । यदा तु प्रत्यासन्नविनाशशङ्कया देवदत्तः किं करोतीति प्रश्नः । तदास्ति तावदिति प्रतिवचनं भवत्येव ॥

( उद्योतः ) ननु यद्यस्त्यादेः क्रियावाचित्वं तर्हि किं करोतीति पृष्टेऽस्तीत्याद्युत्तरं कुतो नेत्यतो भाष्ये—अथवा नान्यदिति । अत्राथवेति यत इत्यर्थे । प्रश्नासम्भवादिति । निर्ज्ञाततत्वेन सत्ताविषयप्रश्नासम्भवादित्यर्थः ॥

( आक्षेपभाष्यम् )

**अथ यद्येव "क्रियावचनो धातुः" इत्येष पक्षः । अथापि "भाववचनो धातुः" इति । किं गतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ? ॥**

( प्रदीपः ) अथ यद्येवेति । परिस्पन्दापरिस्पन्दरूपतया क्रियाभावयोर्भेदेनोपन्यासः ॥

( उद्योतः ) ननु क्रियाभावयोरेकार्थतया कथमिह भेदेनोपादानमत आह—परिस्पन्देति ।

( समाधानभाष्यम् )

**गतमित्याह । कथम् ? । अयमादिशब्दोऽस्त्येव व्यवस्थायां वर्तते, तद्यथा—देवदत्तादीन्समुपविष्टानाह देवदत्तादय आनीयन्तामिति । ते उत्थाप्यानीयन्ते । अस्ति प्रकारे वर्तते, तद्यथा—देवदत्तादय आढ्या अभिरूपा दर्शनीयाः पक्ष्मवन्तः । देवदत्तप्रकारा इति गम्यते ॥ प्रत्येकं चादिशब्दः परिसमाप्यते—भ्वादय इति च वादय इति च ।**

---

१ वृषस्य युवापत्यं वार्ष्यायणस्तस्यानन्तरापत्यमित्यर्थः । ( र. ना. ) २ क्रियाप्रकारा इव, ननु ब्रह्मसत्तारूपतयेति भावः । ( र. ना. ) ३ अनेकः पाकादिक्रियारूपो विवर्तोऽतात्त्विकोऽन्यथाभाव आत्मा स्वरूपं यस्या इत्यर्थः । ( र. ना. ) ४ वस्तुतः सिद्धत्वेऽपि साधनैः संबन्धान्निश्चीयमानं साध्यस्वरूपं यस्या इत्यर्थः । ( र. ना. ) ५ स्थानं क्रिया वृद्ध्यादिक्रियानिवर्तकत्वात्, सामान्यव्याप्तिमाश्रित्यान्वये गत्यादिनिवर्तकशयनादिवद् व्यतिरेके द्रव्यवद्वा इत्यनुमानेनेत्यर्थः । ( र. ना. ) ६ 'क्तेर्वृद्धि' । ७ न परिगणनाव्याप्तिरिति । तथा चोक्तं निरुक्ते—'अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह"। (१।३।११) "ते यथावचनमभ्यूहितव्याः" (१।३।२) इति । ८ पाकादिक्रियाधर्मभूतत्वादिसंबन्धेनेत्यर्थः । (र. ना.) ९ क्रियात्वेन साध्यमानस्यसत्तास्थानादिरूपस्यार्थस्यापीत्यर्थः । चकारोऽप्यर्थः । अत्रायं प्रयोगो विवक्षितः । अस्त्यादयः क्रिया भूतादिकालसंबन्धित्वात्पाकादिवदिति । ( र. ना. ) १० न त्वस्त्यादीनामित्यर्थः । ( र. ना. ) ११ मात्रपदेन द्रव्यं व्यवच्छेद्यम् । ( र. ना. ) १२ अन्यद् वस्तु पृष्टेन वक्त्राऽन्यन्नाख्येयमित्यर्थः । ( र. ना. ) १३ किं करोतीति प्रश्नस्य पाकादिक्रियामात्रविषयकत्वेन अस्तीति प्रतिवचनाभाव इत्याशयः । ( र. ना. ) १४ सहायवन्त इत्यर्थः । ( र. ना. )

तद्यदा तावत् 'क्रियावचनो धातुः' इत्येष पक्षः तदा भू इत्यत्र य आदिशब्दः स व्यवस्थायां वर्तते, वा इत्यत्र य आदिशब्दः स प्रकारे, भूइत्येवमादयो वाइत्येवंप्रकारा इति । यदा तु 'भाववचनो धातुः' इत्येष पक्षस्तदा वेत्यत्र य आदिशब्दः स व्यवस्थायाम्, भू इत्यत्र य आदिशब्दः स प्रकारे, वा इत्येवमादयो भू इत्येवंप्रकारा इति ॥

(प्रदीपः) तदा वेत्यत्रेति । अदादीनामादौ वा गतिगन्धनयोरिति पठितव्यम् । अदादिगणोऽपि गणानामादौ । तेन सर्वे धातुपाठसन्निविष्टा गृहीता भवन्ति ॥

(उद्द्योतः) आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । सादृश्यं चान्यानभिहितसाध्यावस्थापन्नार्थवाचित्वेनेति नाव्याप्तिः ॥ तत्र वाप्रभृतयो भूप्रकारा इत्यर्थे वाधातोः प्राचीनानां न स्यादित्यत आह—अदादीनामिति । अदिप्रभृतिभ्य इत्यस्य स्थाने वाप्रभृतिभ्य इत्येव पठनीयम् । अदिप्रभृतिभ्य इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषो वा बोध्यः ॥

(आक्षेपभाष्यम्)

यदि तर्हि लक्षणं क्रियते नेदानीं पाठः कर्तव्यः ॥

(प्रदीपः) यदि तर्हीति ॥ क्रियावचनो धातुरिति वा भाववचनो धातुरिति वा लक्षणं क्रियते नार्थः पाठेनेत्यर्थः ।

(उद्द्योतः) ननु व्यवस्थावाच्यादिशब्दान्तर्भावेण पाठस्यापि लक्षणेनापेक्षणीयत्वान्नेदानीमित्ययुक्तमत आह—क्रियावचन इति ।

(समाधानभाष्यम्)

कर्तव्यश्च । किं प्रयोजनम्? ।

(उद्द्योतः) व्यवस्थावाच्यादिशब्दस्य प्रयोजनप्रश्न इत्यर्थः ॥

(८२२ पाठप्रयोजनवार्तिकम् ॥ १७ ॥)

॥ * ॥ भूवादिपाठः प्रातिपदिकाणवयत्यादिनिवृत्त्यर्थः ॥ * ॥

(भाष्यम्) भूवादिपाठः कर्तव्यः ॥ किं प्रयोजनम्? । प्रातिपदिकाणवयत्यादिनिवृत्त्यर्थः । प्रातिपदिकनिवृत्त्यर्थ आणवयत्यादिनिवृत्त्यर्थश्च ॥ के पुनराणवयत्यादयः? । आणवयति वट्टति वड्ढयतीति ।

(प्रदीपः) भूवादिपाठ इति । यथा भोक्तुं पाक इति क्रियाश्रयाणि तुमुनादीनि भवन्ति तथा धातुसंज्ञापि स्यादिति पाकादीनां शयितव्यादीनां च प्रातिपदिकानां[2] पाठेनासौ निवर्त्यते। तथा हिरुक् पृथग् इत्यादीनां च क्रियाप्रधानानामव्ययानाम् ।

(उद्द्योतः) ननु भावक्रियापदयोः साध्यावस्थापन्नार्थाभिधायित्वात् प्रातिपदिकेषु कथमतिप्रसङ्गोऽत आह—यथेति । भोक्तुं भुक्त्वेत्यादि प्रातिपदिकं व्यावर्त्यं बोध्यम् । पाकपदेन सिद्धावस्थस्य भानाद् भोक्तुं पाक इति प्रयोगोऽपि चिन्त्य[3] इत्युपपदमतिङिति सूत्रे वक्ष्यते । फलं[4] तु पाकादिशब्दे इवात्रापि ॥ हिरुगिति । क्रियान्तराकाङ्क्षादर्शनेनैषा क्रियावाचित्वं चिन्त्यम्[5] । अत एव तद्धितश्चासर्वविभक्तिरिति सूत्रे क्रियामात्रविशेषणत्वात् क्रियाप्रधानत्वमेषां[6] स्वयमुक्तम् । शिष्ये इत्यादिव्यावृत्तिस्त्वन्यानभिहितक्रियावाचकत्वेन सादृश्यग्रहणाद्बोध्या ॥ वस्तुत एषां धातुत्वे फलाभावः । न च प्रातिपदिकत्वाभावः फलम् । कृदन्तत्वेन तदभावस्य वक्तुमशक्यत्वात् । उभयोः सत्त्वेपि लिङित्यादाविव परत्वात्सुपामेवोत्पत्तिसिद्धेः । वार्तिके प्रातिपदिकग्रहणं तु प्रौढ्यैव । अत एव तदुदाहरणानुक्तिर्भाष्ये ॥

(८२३ पाठप्रयोजनान्तरवार्तिकम् ॥ १८ ॥)

॥ * ॥ स्वरानुबन्धज्ञापनाय च ॥ * ॥

(भाष्यम्) स्वरानुबन्धज्ञापनाय च पाठः कर्तव्यः । स्वराननुबन्धांश्च ज्ञास्यामीति । नह्यन्तरेण पाठं स्वरा अनुबन्धा वा शक्या विज्ञातुम् ॥

(प्रत्याख्यानभाष्यम्)

ये त्वेते न्याय्यविकरणा उदात्ता अननुबन्धकाः पठ्यन्ते तेषां पाठः शक्योऽकर्तुम् ॥

(एकदेशिसमाधानभाष्यम्)

एतेषामप्यवश्यमाणवयत्यादिनिवृत्त्यर्थः पाठः कर्तव्यः ।

(प्रदीपः) एतेषामपीति । तेषामपाठे निवृत्तिराणवयत्यादिवत्स्यात्तस्मादाणवयत्यादिष्वेषां निवृत्तिर्यथा स्यात् तन्मध्ये मा प्रविक्षन्नित्येवमर्थस्तेषामपि पाठः कर्तव्य इत्यर्थः ।

(उद्द्योतः) ननु तेषां संज्ञार्थः पाठः कर्तव्य इति वक्तव्ये आणवयत्यादिनिवृत्त्यर्थं इत्यसङ्गतमत आह—तेषामिति । पाठाभावे हि तेपि आणवयत्यादिवद्बहिर्भवेयुरिति । आणवयत्यादिभ्यो निवृत्त्यर्थो भेदार्थ इति भाष्यार्थ इति भावः ॥

(प्रत्याख्यानसाधकभाष्यम्)

न कर्तव्यः ।

(८२४ कारणवार्तिकम् ॥ १९ ॥)

॥ * ॥ शिष्टप्रयोगादाणवयत्यादीनां निवृत्तिः ॥ * ॥

(भाष्यम्) शिष्टप्रयोगादाणवयत्यादीनां निवृत्तिर्भविष्यति । स चावश्यं शिष्टप्रयोग उपास्यः । येपि पठ्यन्ते तेषामपि विपर्यासनिवृत्त्यर्थः[7] । लोके हि कृष्यर्थे कर्सिं प्रयुञ्जते, दृश्यर्थे च दिसिम् ॥ भूवादयो धातवः ॥ १ ॥

(प्रदीपः) शिष्टप्रयोगादिति[8] । प्रयुक्तानामिदमन्वाख्यानम्, न चाणवयत्यादयः शिष्टैः प्रयुज्यन्ते इति नास्ति तेषां शास्त्रेणानुविधानमिति भावः । एतेनैव न्यायेन प्रातिपदिकनिवृत्त्यर्थोपि पाठो नोपयुज्यते । नहि पाकादयः शब्दाः धातुविहितप्रत्ययपरा लोके प्रयुज्यन्ते ॥ १ ॥

---

१ षष्ठीतत्पुरुषेत्यर्थः । (र. ना.) २ प्रातिपदिकानामसौ धातुसंज्ञा पाठेन निवर्त्यते इत्यर्थः । (र. ना.) ३ तुमुन्ण्वुलाविति सूत्रे क्रियार्थायामिति स्त्रीलिङ्गनिर्देशेनैव क्रियालाभे क्रियापदसामर्थ्यात्प्रधानीभूतसाध्यावस्थापन्नक्रियाया एव ग्रहणादिति भावः । (र. ना.) ४ तिङाद्युत्पत्तिरूपं प्रातिपदिकत्वाभावरूपं वा इत्यर्थः । (र. ना.) ५ क्रियान्तराकाङ्क्षा तुत्थापकतावच्छेदकधर्मवत्त्वरूपं साध्यत्वेन प्रतीयमानत्वमेव क्रियात्वमिति भावः । (र. ना.) ६ बहुव्रीहेस्त्वप्रत्ययः । (र. ना.) ७ 'त्यर्थनसंगत' । ८ शिष्टप्रयोगानाश्रयणे हि लोके विपर्यासदर्शनेन तथाभूतस्यैव साधुत्वंस्यादिति भावः । (र.ना.)

( उद्द्योतः ) प्रयुक्तानामिति । प्रयुक्तानां च संप्रत्यदृश्यमानपाठानामपि भविष्यतीत्यपि बोध्यम् ॥ नन्वेवमपि प्रातिपदिकनिवृत्त्यर्थः पाठः स्यादत आह—एतेनेति । इदमुपलक्षणम् । स्वरानुबन्धकार्यमपि शिष्टप्रयोगादेवेति बोध्यम् ॥ ननु शिष्टप्रयोगालम्बनेन प्रत्याख्याने शास्त्रवैफल्यमत आह—भाष्ये—स चावश्यमिति । एवं चाकृतिगणेष्विव[1] तदुपासनावश्यकत्वे किं पाठेनेति भावः ॥ ननु तद्वदेव निदर्शनार्थं कतिपयपाठोप्यावश्यक इति चेत् । अस्तु, अत्यन्तावश्यकता नेत्येव भाष्यतात्पर्यादिति दिक् ॥ १ ॥

—>o<—

( अथेत्संज्ञाप्रकरणम् )

( १२३ अचामित्संज्ञासूत्रम् ॥ १ । ३ । १ आ. २ सू. )

## १४९ उपदेशेऽजनुनासिक इत् १।३।२॥

( उद्देशोपदेशपदार्थकथनाधिकरणम् )

( आक्षेपभाष्यम् )

**उपदेश इति किमर्थम् ? ॥**

( प्रदीपः ) उपदेशे ॥ २ ॥ उद्देशोपदेशशब्दयोरुपसर्गभेदेपि अभिन्नार्थत्वं प्रक्रमत उपक्रमते इत्येतयोरिव मन्यमानः पृच्छति—उपेदश इति किमर्थमिति ॥

( उद्द्योतः ) उपदेशेऽज ॥ २ ॥ ननूपसर्गभेदेऽर्थभेदस्यावश्यकत्वात्प्रश्नानुपपत्तिरत आह—उद्देशेति । उभावपि धात्वर्थानुवादकावेवेति भावः ॥ येन निष्ठेत्यादिविहितानां[2] संग्रह आङश्च[3] व्यावृत्तिः, स विशेषः क इति प्रश्नार्थ इत्यन्ये ॥

( समाधानभाष्यम् )

**अभ्रआँ अपः । उद्देशे योऽनुनासिकस्तस्य मा भूदिति ॥**

( प्रदीपः ) अभ्रआँ अप इति । अयं[4] नोपदिष्टः किं तर्हि आङोऽनुनासिकश्छन्दसीति लक्षणेनान्तरतम आङः स्थाने विहितः । यदि तु 'आङ आँ छन्दसि' इत्यवक्ष्यत्तदाऽभविष्यदेषोप्युपदेशेऽनुनासिकः ॥

( उद्द्योतः ) नन्वाङोऽनुनेत्यप्युपदेश एवेत्यत आह—अयमिति ॥ उच्चारणेन बोधनाभावादित्यर्थः ॥ ननु नास्योद्देशत्वमपि, अङ्गदीत्यादिवद्[5] बहुभिर्गुणैः प्रापणं हि तत् । नेह तथा, अनुनासिकत्वेनैव प्रापणादत आह—अन्तरतम इति । तथा च कण्ठ्यत्वदीर्घत्वादिभिरपि प्रापणान्न दोषः ॥ गुणैरित्यत्र बहुत्वमविवक्षितमिति तत्त्वम् ॥

( आक्षेपभाष्यम् )

**कः पुनरुद्देशोपदेशयोर्विशेषः ? ॥**

( समाधानभाष्यम् )

**प्रत्यक्षमाख्यानमुपदेशः । गुणैः प्रापणमुद्देशः ॥**

**प्रत्यक्षं तावदाख्यानमुपदेशः । तद्यथा—अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वा उपदिशति—'अयं गौः' इति । स प्रत्यक्षमाख्यातमाह[6]—'उपदिष्टो मे गौः' इति ॥ गुणैः प्रापणमुद्देशः । तद्यथा—कश्चित्कंचिदाह—'देवदत्तं मे भवानुद्दिशतु' इति । स इहस्थः पाटलिपुत्रस्थं देवदत्तमुद्दिशति 'अङ्गदी कुण्डली किरीटी व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्तः' इति । स गुणैः प्राप्यमाणमाह—'उद्दिष्टो मे देवदत्तः' इति ॥**

( प्रदीपः ) प्रत्यक्षमाख्यानमिति । इन्द्रियगोचरार्थस्य[7] यदाख्यानं स उपदेश इत्यर्थः । प्रसिद्धधर्मोपादानेन तु यत्प्रतिपादनं स उद्देशः । प्रत्यक्षमाख्यातमिति क्वचित्पाठः । तत्राख्यानमाख्यातमिति भावे क्तो विज्ञेयः ॥ ईदृश इति । एतैः शब्दैः यादृशो बुद्धावर्थः प्रतिभासते तादृशो बाह्य[8] इत्यर्थः ॥

( उद्द्योतः ) आख्याने[9] प्रत्यक्षत्वमविशिष्टमत आह—इन्द्रियेति । यद्यप्यनुनासिकत्वमपीन्द्रियग्राह्यं, तथाप्यनुनासिकशब्दप्रतिपाद्यतावेलायामिन्द्रियागोचरमिति भावः ॥ प्रसिद्धेति । प्रत्येकं[10] साधारणेत्यादि बोध्यम् ॥ भाष्ये—आख्यातमाहेति । कथितमित्यर्थः ॥ एकव्यक्तौ[11] भेदाभावादीदृश इत्यसंगतमत आह—एतैरिति ॥ बाह्य इति । लोके दृश्यमान इत्यर्थः । एतेन बौद्धार्थस्यैव शाब्दबोधे भानमिति दर्शितम् ॥

( ८२५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इत्संज्ञायां सर्वप्रसङ्गोऽविशेषात् ॥ * ॥

( भाष्यम् ) **इत्संज्ञायां सर्वप्रसङ्गः । सर्वस्यानुनासिकस्येत्संज्ञा प्राप्नोति । अस्यापि प्राप्नोति—अभ्रआँ अपः ॥ किं कारणम् ? ॥ अविशेषात् । नहि कश्चिद्विशेष उपादीयते—एवंजातीयकस्यानुनासिकस्येत्संज्ञा भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ॥**

( उद्द्योतः ) इत्संज्ञायामिति । उक्तविशेषस्य[12] निष्ठादिसं[13]ग्रहेणात्राश्रयणमशक्यमिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**किमुच्यते[14]—अनुपादीयमाने विशेष इति ॥ कथं[15] न नामोपादीयते यदोपदेश इत्युच्यते ? ॥**

( आक्षेपसाधकभाष्यम् )

**लक्षणेनापि[16] ह्युपदेशः । संकीर्णावुद्देशोपदेशौ । प्रत्यक्षम[17]प्याख्यानमुद्देशः' गुणैश्च प्रापणमुपदेशः ।**

---

१ आकृतिगणवदित्यर्थः । ( र. ना. ) २ 'क्तवत्वादीनां निष्ठाशब्देन विधानात् साक्षादुच्चारणाभावेपि' इति शेषः । ३ 'अनुनासिकशब्देन विहितस्य' इति शेषः । ४ क्तक्तवत्वादीनां तु संज्ञासूत्रे साक्षादुच्चारणमस्त्येवेति भावः । ५ आदिना कुण्डलीकिरीटीत्यादिसंग्रहः । ( र. ना. ) ६ स प्रतिपाद्यः, उपदिष्टो मे गौरिति वाक्येन प्रत्यक्षमाख्यानमेवोपदेशमाहेत्यर्थः । प्रत्यक्षं कथितमेव गामाहेत्यर्थो वा । ( र. ना. ) ७ 'रस्य' 'रस्यार्थस्य' । ८ 'बाह्य' । ९ साक्षाद्गुणैर्वा इत्यादिः । (र. ना.) १० 'प्रत्येकं' । ११ देवदत्तरूपस्यार्थस्य भेदाभावात्सादृश्यस्य च भेदघटितत्वादिति भावः । ( र. ना. ) १२ उक्तेति । संकीर्णत्वेनाव्यावर्तकत्वादत्राश्रयणमशक्यमिति तत्त्वम् । १३ यदि प्रत्यक्षमाख्यानमेवोपदेशः स्यात्तदा क्तवतोरुकारस्येत्संज्ञा न स्यान्निष्ठापदेनाख्यानादिति भावः । ( र. ना. ) १४ संकीर्णत्वमजानतः प्रश्नः—किमिति । १५ यदोपदेश इत्युच्यते तदा कथं नामविशेषो नोपादीयते इति योजना । ( र. ना.) १६ 'लक्षणेन ह्युप' 'लक्षणेनाप्युप' । १७ 'प्रत्यक्षमाख्या' ।

**प्रत्यक्षं तावदाख्यानमुद्देशः । तद्यथा—कश्चित्कं-चिदाह—'अनुवाकं मे भवानुद्दिशतु' इति । स तस्मायाचष्टे—'इषेत्वकमधीष्व' 'शंनोदेवीयकम-धीष्व' इति । स प्रत्यक्षमाख्यातमाह—'उद्दिष्टो मे-ऽनुवाकस्तमध्येष्ये' इति ॥ गुणैश्च प्रापणमुपदेशः । तद्यथा—कश्चित्कंचिदाह—'ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशतु' इति । स तस्माया-चष्टे—'अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः, अमुष्मिन्हस्तवामः' इति । स गुणैः प्राप्यमाण-माह—'उपदिष्टो मे पन्थाः' इति । एवमेतौ संकी-र्णावुद्देशोपदेशौ ॥**

( प्रदीपः ) **लक्षणेनेति** । लक्ष्यतेऽनेनेति लक्षणं गुण-स्तेनाप्युपदेशो भवतीत्यर्थः ॥ **इषेत्वकमधीष्वेति** । इषे-त्वकमित्येतत् पूर्वेण संबध्यते स तस्मायाचष्टे इषेत्वकमिति । इषेत्वाशब्दो यस्मिन्ननुवाकेऽस्ति तमाचष्टे इत्यर्थः । **गोषदा-दिभ्यो वुन्निति** वुन्प्रत्ययः ॥ किमर्थमाचष्ट इत्याह—**अधी-ष्वेति** । अध्ययनार्थमाचष्ट इत्यर्थः ॥

(उद्द्योतः) ननु हस्तदक्षिणत्वादिकं नेतर[2]भेदानुमापकं लक्षणमत आह—**गुणस्तेनापीति** । भाष्ये हिरप्यर्थ इति भावः ॥ क्वचित्तु लक्षणेनापि हीति पाठः ॥ बहु[3]त्वं चाविवक्षितमेव । प्रकृतसूत्रे चास्[4]यापि ग्रहणमत एव **निष्ठे**त्यादिभिः संज्ञया विहितप्रत्ययावयवानामित्संज्ञा-सिद्धि[5]रिति भावः । अत एवात्रै[6]तत्कथनं सफलम् ॥ **आदेच** इत्यादौ तु व्याख्यानात्प्रत्यक्षमाख्यॉ[7]तमुपदेश इत्यस्यैव ग्रहणमिति बोध्यम् ॥ **उपदेश इति** । अज्ञातज्ञापनं भवतीत्यर्थः ॥ आचष्टे इत्यस्य कर्मा-काङ्क्षत्वादाह—**पूर्वेणेति** । **अध्ययनार्थमिति** । इतिहेतौ । फलं च हेतुरिति भावः । इषेत्वकमधीष्वेत्यादिवाक्यमाचष्ट इत्यन्वय इत्य[8]न्ये ॥

( आक्षेपबाधकभाष्यम् )

**एवं तर्हीत्कार्याभावादत्रेत्संज्ञा न भविष्यति ॥**

( आक्षेपसाधकभाष्यम् )

**ननु च लोप एवेत्कार्यं स्यात् ॥**

( आक्षेपबाधकभाष्यम् )

**अकार्यं लोपः ॥ इह हि शब्दस्य द्व्यर्थ उपदेशः । कार्यार्थो भवत्युपदेशः श्रवणार्थो वा । कार्यं चेह नास्ति । कार्ये चासति यदि श्रवणमपि न स्यादुप-देशोऽनर्थकः स्यात् ॥**

( प्रदीपः ) **अकार्यं लोप इति** । यदि लोपोभिमतोऽ-भविष्यदाङो लोपश्छन्दसीत्येवावक्ष्यदित्यर्थः ॥

( उद्द्योतः ) नन्वित्कार्ये त[9]दकार्यत्ववादोऽयुक्तोऽत आह—**यदीति** । अभिमतकार्यत्वाभावपरोऽकार्यशब्द इत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**इदमस्तीत्कार्यम्—इह 'अभ्र आँ अटितः' अनन्त-रलक्षणायां सत्यामित्संज्ञायाम् "आदितश्च" इतीट्-प्रतिषेधः प्रसज्येत ॥**

( प्रदीपः ) **अनन्तरलक्षणायामिति** । यदा अने-[10]कान्ता अनुबन्धास्तदा अनन्तर इत्संज्ञकः कार्यस्य विशेषको भवतीति धातोरादित्त्वादिट्प्रतिषेधप्रसङ्गः ॥

( उद्द्योतः ) नन्वित्संज्ञाया आनन्तर्यनिमित्तकत्वाभावेनानन्त-रलक्षणायामित्यसंगतमत आह—**यदेति** । अनन्तरलक्षणायामि-त्यस्यानन्तरलक्षणका[11]र्यायामित्यर्थः । शिदित्यादावनन्त[12]रादिषु वृत्त्यभा-वेपि सौत्रत्वाद्वृत्तिरिति भावः ॥ ननु तत्रेत्त्वे आङ इदित्येवावक्ष्य-दिति चेन्न । विधानसामर्थ्याल्लोपो मा भूत्संज्ञा तु स्यादेवेति भाष्याशयः ॥ [13]एवं चात्रोपदेशग्रहणं प्रत्याख्यातम् । अनुबन्धा एकान्ता इत्यस्यैव न्याय्यताया वक्ष्यमाणत्वात् ॥

( ८२६ एकदेशिसमाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तूपदेशनेऽनुनासि-कवचनात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् । कथम् ? । उपदेशने योऽनुनासिकः स इत्संज्ञो भवतीति वक्तव्यम् ॥ किं पुनरुपदेशनम् ? । शास्त्रम् ॥**

( प्रदीपः ) **उपदेशन इति** । तेन शास्त्रे य उच्चारितोऽनु-नासिकः स इत्संज्ञ इत्यर्थः ॥

( उद्द्योतः ) अभ्रआं इत्यस्यापि शास्त्रे विहितानुनासिकत्वा-दाह—**शास्त्रे य उच्चारित इति** । उच्चा[14]रित इत्यध्याहार इति भावः ॥ भाष्ये—**शास्त्रमिति** । तच्च धात्वादिरूपं बोध्यम् । **आदेच उपदेश** इत्यादाविव भावसाधनस्याद्योच्चारणरूपार्थकस्य ग्रहणे तु ल्टः सद्वा निष्ठेतिविहितशत्राद्यवयवस्येत्संज्ञानापत्तिः । यथा कथंचिद्बोधनस्योपदेशत्वे त्वभ्रआमित्यादौ दोष इति भावः ॥ तदा[15]ह—**घञयं करणेति** ॥

( आक्षेपभाष्यम् )

**सिध्यति । सूत्रं तर्हि भिद्यते ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—" *इत्संज्ञायां सर्वप्रसङ्गोऽवि-शेषात् *" इति ॥**

( समाधानभाष्यम् )

**नैष दोषः । उपदेश इति घञयं करणसाधनः ॥**

( समाधानबाधकभाष्यम् )

**न सिध्यति । परत्वाल्ल्युट् प्राप्नोति ॥**

---

१ दक्षिणोहस्तो यत्रेति बहुव्रीहौ मार्गोऽन्यपदार्थः । हस्तशब्दस्य पूर्वनिपात आहिताग्न्यादित्वात् । मयूरव्यंसकादित्वाद्वा समासे साधुत्वम्, हस्तदक्षिणशब्दस्य तदुपलक्षिते लक्षणा । ( र. ना. ) २ इतरसाधारणत्वादिति भावः । ( र.ना. ) ३ गुणैश्च प्रापणमित्यत्रेति शेषः । ( र. ना. ) ४ अस्यापीति । उद्देशस्यापी-त्यर्थः । ५ सिद्धिरिति । वस्तुतस्तु निष्ठादिसंज्ञाविधौ प्रत्यक्षाख्यानसत्त्वेनैवोप-देशत्वाक्षतिरिति । अत एव 'आङ आँ छन्दसि' इति न्यासे कैयटेनोपदेशत्व-मङ्गीकृतमिति परे । नहि प्रत्यक्षाख्यानमात्रेण उपदेश्यत्वलाभः किन्तु विधेयत्व-मप्यपेक्षितं लोके उपदेशकर्मत्वव्यवहारस्य अज्ञातज्ञाप्यत्वरूपविधेयत्ववत्येव दर्शनात् । तथाचात्र सूत्रे उपदेशपदेनोद्देशस्यापि ग्रहणमावश्यकं नतु निष्ठादि-संज्ञाविधौ क्तवत्वादेः प्रत्यक्षाख्यानमात्रेणेत्संज्ञासिद्धिरिति नागेशाशय इति वयम् । ( र. ना. ) ६ उद्देशोपदेशयोः संकीर्णत्वकथनमित्यर्थः । ( र. ना. ) ७ 'माख्यान' । ८ इदं चिन्त्यम् । तथा सति आनुपूर्व्या अनुपदेशेन व्यवहार-संकरोपपादनासंभवात् । तस्मात्कैयटोक्तमेव सम्यक् । ( र. ना. ) ९ इत्कार्ये लोपे इत्कार्यत्वाभाववाद इत्यर्थः । ( र. ना. ) १० पूर्वः परो वा इत्यत्र न निर्बन्धः । ( र. ना. ) ११ आनन्तर्यनिमित्तककार्यनिमित्तभूतायामिति फलि-तम् । (र. ना.) १२ चित्रगुरित्यादौ चित्रा गावो यस्यान्यदीया अनन्तरा इत्यर्थ-स्याप्रतीतेरिति भावः । ( र. ना. ) १३ उपदेशग्रहणस्य अनेकान्ता अनुबन्धा इति पक्षे एवेद प्रतिषेधरूपफलवत्त्वे चेत्यर्थः । ( र. ना. ) १४ इष्टसिद्ध्यनु-रोधेनेति भावः । (र.ना.) १५ आहेति । विभक्तिप्रतिरूपकत्वेन वक्ष्यतीत्यर्थः ।

( प्रदीपः ) **परत्वादिति** । परत्वेन बाधकत्वं लक्ष्यते । तेनानवकाशत्वाल्ल्युट् प्राप्नोतीत्यर्थः ॥

(उद्द्योतः) उत्सर्गापवादयोर्विप्रतिषेधायोगादाह—**परत्वेनेति**॥

( समाधानसाधकभाष्यम् )

**न ब्रूमः—"अकर्तरि च कारके संज्ञायाम्" इति ॥ किं तर्हि ? ॥ "हलश्च" इति ॥**

( प्रदीपः ) **हलश्चेति** । अयं तु ल्युटो बाधको घञ् ॥

( समाधानबाधकभाष्यम् )

**तत्रापि संज्ञायामिति वर्तते, न चैषा संज्ञा ॥**

( समाधानसाधकभाष्यम् )

**प्रायवचनादसंज्ञायामपि भविष्यति ॥**

( प्रदीपः ) **प्रायवचनादिति** । हलश्चेत्यत्र संज्ञायां प्रायेणेति चानुवर्तते । संज्ञया च प्रायग्रहणमभिसंबध्यते, प्रायेण संज्ञायां घञ् भवति क्वचिदसंज्ञायामपीत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**प्रायवचनात्संज्ञायामेव स्याद्वा न वा ॥ नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् ॥**

( प्रदीपः ) **संज्ञायामेवेति** । प्रत्ययस्य विधेयत्वात्प्राधान्यात्प्रायग्रहणं प्रत्ययेनैव संबध्यते, न तु गुणेन संज्ञयेत्यर्थः । उपाधिविशेषणयोश्च वाच्यत्वावाच्यत्वाभ्यां विशेषः । तथाहि हतिहरिरिति प्रत्ययेन पशुः कर्ताभिधीयते इति पशुरुपाधिः । गार्गिकया श्लाघत इति श्लाघा वुञा नाभिधीयत इति विशेषणमुच्यते ॥

(उद्द्योतः) **पशुः कर्ताभिधीयते इति** । यद्यपि कर्तृत्वेनैव कर्ता प्रत्ययार्थस्तथापि तत्त्वेनापि पशुरेवाभिधीयत इति स उपाधिरित्यर्थः । **श्लाघेति** । गोत्रचरणाद्भावे वुञ् स चेत् श्लाघादिभिरन्वितः स्यादिति सूत्रार्थात् । श्लाघादिकं न प्रत्ययेन स्पृशत इति भावः ॥

( हेतुबाधकभाष्यम् )

**यदि नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् । "कल्याण्यादीनामिनङ्, कुलटाया वा" इनङ्विभाषा न प्राप्नोति ॥**

( प्रदीपः ) **इनङ् विभाषेति** । प्रत्ययस्य विधेयतया प्राधान्यात्तादर्थ्येन प्रकृतेर्गुणत्वात्तदादेशस्येनङोपि गुणत्वादुपाधित्वमित्यर्थः ॥

( उद्द्योतः ) नन्विनङोपि विधेयतया प्राधान्यात्कथं गुणत्वमत आह—**प्रत्ययस्येति** । आर्थिकं गुणत्वमस्तीत्यभिमानः ॥

( हेतुसाधकभाष्यम् )

**इनङेवात्र प्रधानम् । विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥**

( प्रदीपः ) **इनङेवात्रेति** ॥ अपूर्वोपदेशात्तस्यैव प्राधान्यमित्यर्थः । ढक् **स्त्रीभ्यो ढगित्येव सिद्धः** । तदनुवादेनेनङ् विधीयते ॥

( उद्द्योतः ) ननु प्रत्ययस्याविधेयत्वाद्गुणत्वमित्ययुक्तम् । अनुवाद्यत्वस्य प्राधान्यनियतत्वाद्विधेयत्वस्य गुणत्वनियतत्वादिति मीमांसकशङ्कां परिहरति—**अपूर्वेति** । न मीमांसकसंमते प्राधान्यगुणत्वे भगवतोऽभिमते किं तु शास्त्रसंरम्भगोचरत्वतदगोचरत्वे एवेति भावः ॥

( हेतुबाधकान्तरभाष्यम् )

**इह तर्हि "वाकिनादीनां कुक् च, पुत्रान्तादन्यतरस्याम्" इति कुग् विभाषा न प्राप्नोति ॥**

( हेतुसाधकभाष्यम् )

**अत्रापि कुगेव प्रधानम् । विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥**

( प्रदीपः ) **कुगेवेति** । **उदीचां वृद्धादगोत्रादित्यनेन** फिञ् विहितस्तदनुवादेन कुको विधानात् ॥

( उद्द्योतः ) ननु वाकिनादीनामित्यतश्चकारानुवृत्त्या तद्वदेवानेन प्रत्ययस्यापि विधेयत्वमेवेत्यत आह—**उदीचामिति** । नात्र चोनुवर्तत इति भावः ॥

( आक्षेपोपसंहारभाष्यम् )

**एवं न चेदमकृतं भवति—'नोपाधेरुपाधिर्विशेषणस्य वा विशेषणम्' इति । न च कश्चिद्दोषो भवति । एवं च कृत्वा घञ् न प्राप्नोति ॥**

( प्रदीपः ) **न चेदमकृतमिति** । आश्रितमेवेत्यर्थः । गुणप्रधानसन्निधौ यत्र प्रधानमर्थि विशेषणेन भवति तत्र तस्यैव विशेषणं न्याय्यं न तु गुणस्य ॥ **एवं च कृत्वेति** । एवं स्थित्वेत्यर्थः । तेन घञेव न्यायवशात्संज्ञायां प्रायेण तिष्ठति स एवात्र न प्राप्नोतीति समानकर्तृकत्वात् क्त्वाप्रत्यय उपपद्यते ॥

( उद्द्योतः ) ननु गुणः कृतात्मसंस्कार इतिन्यायेन गुणस्यापि विशेषणसंबन्धदर्शनादाह—**गुणप्रधानसन्निधौ तत्रेति** । तद्भिन्नविषयः स न्याय इति भावः ॥ ननु कृत्वेति कृञर्थो विचारस्तत्र पुरुषः कर्ता, प्राप्तौ घञित्यसमानकर्तृकत्वात् क्त्वा न प्राप्नोतीत्यत आह—**एवं स्थित्वेति** ॥ २ ॥

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि "कृत्यल्युटो बहुलम्" इत्येवमत्र घञ् भविष्यति ॥ उपदेशेऽजनुनासिक इत् ॥ २ ॥**

( प्रदीपः ) **एवं तर्हीति** । बहुलग्रहणादसंज्ञायामपि घञ् भविष्यतीत्यर्थः ॥ २ ॥

---

१ 'अयं च'। २ संज्ञायां प्रायेण घञ् भवतीति संबन्धोऽभिमतः । गुणेनेत्यस्याप्रधानीभूतयेत्यर्थः । ( र. ना. ) ३ प्रकृत्यादेशस्येत्यर्थः । ( र. ना. ) ४ गुणीभूतार्थबोधकत्वमयुक्तमित्यर्थः । प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति न्यायादिति भावः । अभिमानोक्तिः समनन्तरभाष्यानुरोधेन । ( र. ना. ) ५ यथा दध्ना जुहोतीत्यादिगुणविधौ अनूद्यमानस्य होमस्य प्राधान्यमङ्गित्वरूपं शाब्दं वा । दध्नस्तु विधेयस्य होमगुणत्वमिति । ( र. ना. ) ६ एवं च पूर्वोदाहरणाद् वैलक्षण्याभाव इति भावः । ( र. ना. ) ७ गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते । प्रधानस्योपकारे हि तथा भूयसि वर्तते इति न्यायाकारः । यथा ङमो ह्रस्वादचीत्यादौ ह्रस्वेन विशेषितो ङम् संबद्धः सन् पदस्योपकरोति इति । ( र. ना. )

( १२४ इत्संज्ञासूत्रम् ॥ १ । ३ । १ आ० ३ सू० )

## १५० हलन्त्यम् ॥१।३।३ ॥

( अनिष्टवारणाधिकरणम् )

( ८२७ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् ॥ * ॥

**( भाष्यम् ) हलन्त्ये सर्वप्रसङ्गः । सर्वस्य हल इत्संज्ञा प्राप्नोति ॥ किं कारणम् ? । सर्वान्त्यत्वात् । सर्वो हि हल् तं तमवधिं प्रत्यन्तो भवति ॥**

( प्रदीपः ) **हलन्त्यम्** ॥३॥ अन्तेऽवसाने भवमन्त्यम् ॥ **सर्वो हि हलिति** । सर्वस्य हलोऽवसानेन संबन्धात् । अन्त्यग्रहणं त्वादिनिवृत्त्यर्थं स्यात् ॥

( उद्द्योतः ) **हलन्त्यम्** ॥ ३ ॥ अन्तशब्दो नान्तावयववाची, तद्धितवैयर्थ्यापत्तेः । नापि समीपपरोऽतिप्रसङ्गादत आह—**अवसाने इति** ॥ ननु यदुच्चार्य विरम्यते तत्त्वमन्त्यत्वम्, न च तन्मध्यगतस्येति[2] कथं सर्वप्रसङ्गोऽत आह—**सर्वस्येति** । सर्वमपि वर्णमुच्चार्य विरम्यत एव । स्पष्टं चेदं **परः सन्निकर्ष** इति सूत्रे भाष्ये । न च ततः परमुच्चारणाभावोप्यपेक्षित[3] इति भावः ॥ भाष्ये **सर्वो हि हलन्त्यो भवती**त्येव पाठः । **तं तमवधिं प्रतीति** पाठे तत्तद्वर्णोच्चारणानन्तरभाविविरामरूपमवधिं प्रतीत्यर्थः । तं तमवधीकृत्येति पाठान्तरम् ॥ नन्वेवमन्त्यग्रहणं व्यर्थमत आह—**आदिनिवृत्त्यर्थमिति** । उपक्रमाभावलक्षकं तदिति भावः । न च पूर्वसूत्रे उपदेशशब्दस्य धात्वादिशास्त्रपरतया तस्यैव प्रकृतेऽनुवृत्त्या यत्किञ्चित्समुदायान्त्यवारणेन शङ्कैषाऽनुपपन्नेति वाच्यम् । तस्य स्वरितत्वाभाव इत्याशयात् ॥

( ८२८ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तु व्यवसितान्त्यत्वात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् । कथम् ? व्यवसितान्त्यत्वात् । व्यवसितान्त्यो हलित्संज्ञो भवतीति वक्तव्यम् ॥ के पुनर्व्यवसिताः ? । धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः ॥**

( प्रदीपः ) **सिद्धं त्विति** । व्यवसिताः परिच्छिन्ना[5] ये समुदायाः धातुत्वप्रत्ययत्वादिना धर्मेण, तेषां योन्त्य इत्यर्थः । अवयवास्तु समुदायतन्त्रत्वान्नान्तरीयकोपदेशत्वाद्धातुत्वादिना न परिच्छिन्नाः ॥

( उद्द्योतः ) व्यवसितपदस्य निश्चितपरत्वभ्रमं वारयति—**व्यवसिता इति** । शास्त्रकृता परिच्छिन्नत्वेन बोधिता इत्यर्थः ॥ **धात्वित्यादि** ॥ वक्ष्यमाणेत्यादिः ॥ अवयवानां धातुत्वाभावे युक्तिमाह—**अवयवा इति** ॥ **समुदायतन्त्रत्वात्** । समुदायस्तन्त्रं प्रयोजनं येषां तत्त्वात् ॥ भाष्ये—**धातुप्रातिपदिकेति** । अइउण् नदट् इत्यादौ णटादीनामित्संज्ञा क्रमबोधकत्वेन स्वरूपबोधकत्वेन च प्रातिपदिकत्वात् । श्रोत्रियनादेरपि तत्त्वादेव ॥ निपातोदाहरणमाङादि ॥

( आक्षेपभाष्यम् )

**सिध्यति । सूत्रं तर्हि भिद्यते ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—'*हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वाद् *' इति ॥**

( समाधानभाष्यम् )

**नैष दोषः । आहायम्—हलन्त्यमित्संज्ञं भवतीति । सर्वश्च हल् तं तमवधिं प्रत्यन्त्यो भवति । तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो योन्त्य इति । कश्च साधीयः ? । व्यवसितानां योन्त्यः ॥ अथ वा सापेक्षोयं निर्देशः क्रियते । न चान्यत्किंचिदपेक्ष्यमस्ति, तेन व्यवसितानेवापेक्षिष्यामहे ॥**

( प्रदीपः ) **तत्र प्रकर्षगतिरिति** । आदिनिवृत्त्यर्थत्वादन्त्यशब्दस्य कथं प्रकर्षगतिः ॥ उच्यते—आदेरप्युच्चारणानन्तरमवसानसंबन्धादन्त्यत्वमनिवार्यमिति नास्ति तन्निवृत्तिरिति सामर्थ्यात्प्रकर्ष आश्रीयते ॥ **व्यवसितानां योन्त्य इति** । आदिमध्यानां च काल्पनिकमन्त्यत्वं सर्वान्त्यस्य तु नित्यमेवेति तस्यैव युक्तं ग्रहणम् ॥ **अथ वेति** । पूर्वं समुदायावयवसंनिधौ समुदायापेक्षमन्त्यत्वमाश्रयितुं युक्तमिति परिहृतम् ॥ इदानीं तु समुदायार्थत्वादुपदेशस्यावयवानामसत्त्वात्तदपेक्षणं दूरोत्सारितमिति मत्वा परिह्रियते ॥

( उद्द्योतः ) **सामर्थ्यादिति** । लक्षणां[11] विनैवोपपत्तावुपक्रमाभावलक्षकत्वमेव दोष इति भावः ॥ **काल्पनिकमिति** । सर्वान्त्यस्य हि मुख्यं तत्, यस्मात्परो नास्तीत्यादिलक्षणाक्रान्तत्वादिति भावः ॥ **अवयवानामसत्त्वादिति** । तत्प्रतीतिस्तु भ्रम एव । तन्मूलक एव च समुदायव्यवहार इति भावः[12] ॥

( अन्योन्याश्रयदोषपरिहाराधिकरणम् )

( ८२९ आक्षेपवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ लकारस्यानुबन्धाज्ञापितत्वाद्धल्ग्रहणाप्रसिद्धिः ॥ * ॥

**( भाष्यम् ) लकारस्यानुबन्धत्वेन अज्ञापितत्वाद्धल्ग्रहणस्याप्रसिद्धिः । हलन्त्यमित्संज्ञं भवतीत्युच्यते । लकारस्यैव तावदित्संज्ञा न प्राप्नोति ॥**

( प्रदीपः ) **लकारस्येति** इतरेतराश्रयं मन्यते । शषसर् हल् इत्यत्र लकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः । सति । च प्रत्याहारे लणित्यत्र लकारस्य हल्त्वात्तस्यैव

---

१ 'कृत्वाऽन्तो'। २ मध्यगतस्य तन्नचेति कथं सर्वप्रसङ्ग इति योजना। ( र. ना. ) ३ मानाभावादसंभवाच्चेति भावः। ( र. ना. ) ४ अर्थाधिकारस्यैव न्याय्यतया चेत्यपि बोध्यम्। ( र. ना. ) ५ धातुत्वप्रत्ययत्वादिना धर्मेण ये समुदायाः परिच्छिन्नाः परिसंख्याता व्यावर्तिता इति यावत्। ( र. ना. ) ६ षष्ठ्यन्तार्थे बहुव्रीहिस्ततस्त्वप्रत्ययः। ( र. ना. ) ७ 'प्रत्यन्तो'। ८ अति-

शयेन साधुरित्यर्थे विभक्त्यन्तप्रतिरूपकमव्ययमेतत्। (र. ना.) ९ तद्व्यावृत्तिरित्यर्थः। (र. ना.) १० साधीयो योऽन्त्य इति वाक्येनेति शेषः। (र. ना.) ११ समुदायान्त्यपरत्वे इत्यादिः। ( र. ना. ) १२ वस्तुतस्तु अखण्ड एक एव स्फोट इति बोध्यम्। ( र. ना. )

शषसर् हलित्यत्रान्ते निर्दिष्टत्वादित्संज्ञेति प्रत्याहाराश्रया इत्संज्ञा, तदाश्रयश्च प्रत्याहरः ॥

( उद्द्योतः ) ननु हलामित्संज्ञाविधाने लकारे तदप्राप्तिः कथमत आह—इतरेतरेति ॥

( ८३० समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सिद्धं तु लकारनिर्देशात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् । कथम् ? । लकारनिर्देशः कर्तव्यः । हलन्त्यमित्संज्ञं भवति "लकारश्च" इति वक्तव्यम् ॥**

( प्रदीपः ) **लकारश्चेति** । पूर्वं लकारस्येत्संज्ञा विधेया तेन हलिति प्रत्यहार उपपद्यते तत्र हल् च ल चेति समाहारद्वन्द्वं कृत्वा **संयोगान्तस्य लोप** इति लकारो लुप्यते ॥

(उद्द्योतः) भाष्ये हलन्त्यमित्युत्तरं लश्चेति वाक्यान्तरकरणात्तदर्थबोधात्पूर्वं कथं तस्य बोधोऽत आह—**पूर्वमिति** । पाठ[1]क्रमादार्थक्रमो बलीयानिति भावः ॥ इतरेतरयोगे द्विवचनापत्तेराह—**समाहारे इति** ॥ एवं च भाष्ये कर्त्तव्यपदं व्याख्येयपरमिति भावः ॥ वस्तुतो भाष्ये कर्त्तव्यपदं यथाश्रुतमेव ॥ कैयटस्तु चिन्त्यः । यँणः प्रतिषेधारम्भेण झल्ग्रहणापकर्षेण च संयोगान्तलोपाप्राप्तेः । वक्तॄणां सह बोधासंभवेन, **नाज्झलाविति**सूत्रोक्तवाक्यापरि**समाप्तिन्यायेन**, भाविसंज्ञया पूर्वमाचार्याणामव्यवहारेण च सहविवक्षाभावाद् द्वन्द्वाप्राप्तेश्चेति बोध्यम् । अत एव भाष्ये निर्देशः कर्त्तव्य इत्युक्तम् । निर्देश उच्चारणम् । न तु लुप्तनिर्दिष्ट इत्युक्तम् । एतेन हलन्त्यं ल इति प्रश्लेषः । सौत्रश्च तस्य लोप इत्यपास्तम् । सौत्रत्वाल्लोपं कृत्वा व्याख्यानमाश्रयणीयमिति गौरवेण भाष्यकृद्वक्ष्यमाणरीत्यैव प्र[2]त्याख्यानस्य न्याय्यत्वात् ॥

( ८३१ समाधानान्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ एकशेषनिर्देशाद्वा ॥ * ॥

( भाष्यम् ) **अथ वा एकशेषनिर्देशोयम् । हल् च हल् च हल् हलन्त्यमित्संज्ञं भवतीति ॥**

( प्रदीपः ) **हलू चेति** । हस्य ल हल । हल इत्ये[3]कः षष्ठीतत्पुरुषः । द्वितीयः प्रत्याहारः । **नपुंसकमनपुंसकेने**ति चैकशेषः । एकस्य पुल्लिङ्गत्वादितरस्य नपुंसकत्वात् ॥

( उद्द्योतः ) **हस्यलिति** । संबन्धसामान्यषष्ठ्या समासे प[4]र्यवसानगत्या सामीप्यलाभ इति भावः ॥ **इतरस्येति** । प्रकृतेन्त्यपदसामानाधिकरण्यादिति भावः ॥ वस्तुत इदं चिन्त्यम् । एवमर्थस्येष्टत्वे तत्पुरुषेन्त्यपदासंबन्धेन हलित्संज्ञं हलन्त्यं चेत्संज्ञमिति वदे[5]त् पूर्ववत् । तस्माद्वाक्यद्वयमप्यन्त्यपदघटितम्, द्वन्द्वान्ते श्रूयमाणस्यैव प्रत्येकं संबन्धात् । तयोश्च तन्त्रेणोच्चारणं भाष्य इति हल्सूत्रान्त्यमन्त्यं च हलिदित्येव भाष्यार्थः ॥ एकशेषशब्देन च भाष्ये तन्त्रं लक्ष्यते । अन्यथा सहविवक्षाभावादेकशेषः शास्त्रीयो न स्यादिति बोध्यम् ॥

( एकदेशिसमाधानान्तरभाष्यम् )

**अथ वा लृकारस्यैवेदं गु[6]णभूतस्य ग्रहणम् । तत्र[7] "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञा भविष्यति ॥**

( प्रदीपः ) **अथ वेति** । शषसर् हलित्यत्र हलन्त्यमित्यत्र च लृकारस्यैकादेशो लपरत्वं च क्रियते ॥ नन्वेवमपीतरे[8]तराश्रयमेव । लृकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः, सति च प्रत्याहारे ऐऔजिति चकारस्येत्संज्ञा, तस्यां सत्यामजिति प्रत्याहारः, अजिति प्रत्याहारे सति लृकारस्येत्संज्ञा ॥ एवं तर्हि **लृदित** इति ज्ञापकात् लृकारस्येत्संज्ञाकार्यं भविष्यतीति नास्तीतरेतराश्रयमिति भगवतो भाष्यकारस्याभिप्रायः ॥

( उद्द्योतः ) भाष्ये एकदेश्याह—**अथ वेत्यादि** । ज्ञापकेन लृकारस्येत्त्वे उपदेश इतिसूत्रोल्लेखोऽसंगत इत्यत आह—**लृकारस्येत्संज्ञाकार्यमिति** । अच्पदघटितसूत्रस्य कार्यभूतेत्संज्ञेत्यर्थः ॥

( एकदेशिसमाधानान्तरभाष्यम् )

**अथ वा आचार्यप्रवृत्तिर्ज्ञापयति—भवति लकारस्य इत्संज्ञेति । यदयं णलं लितं करोति ॥**

( प्रदीपः ) **अथ वेति** । णलो लकारः स्वरार्थः कृतः असत्यां चेत्संज्ञायां कुतः स्वरः । श्रवणा[9]र्थस्तु णलो न लकारः[10][11], **हलङ्याब्भ्यो** इति सूत्रे हल्ग्रहणाण्णल्व्यावृत्त्यर्थात् । तत्र हि बिभेदेति णल्व्यावृत्त्यर्थं हल्ग्रहणं कृतम् । लकारस्य[12] श्रवणेऽपृक्तत्वाभावाल्लोपस्याप्राप्तिरिति किं हल्ग्रहणेन ॥

( उद्द्योतः ) **हल्ग्रहणादिति** । न च डानिवृत्त्यर्थं तत् । सुतिसीतिप्रत्ययैः प्रकृत्याक्षेपेण तद्व्या[13]वृत्तिसिद्धिरित्यभिमा[14]नः । वस्तुतस्तद्बिभेदेत्यादिनिर्देशान्न श्रवणार्थो लकार इति भाष्यतात्पर्यम् । अनयोरेकदेश्युक्तित्वं तु लकारेत्संज्ञाया अपि हल्पदार्थसिद्धेः प्राग[15]लाभात् । लृदित इति ज्ञापकमपि शिथिलम् । सर्वेषामचामित्संज्ञाकाले तस्यापीत्त्वलाभात् ॥ एवं णलो लित्त्वस्यापि ज्ञापकतो[16]क्तिश्चादीनामित्संज्ञाप्रवृत्तिकाले णलो लस्यापि तत्प्रवृत्त्या ज्ञापकासंभवात् । तस्माद् * **एकशेषनिर्देशाद्वा** * इत्येव समाधानम् ॥

( अनिष्टप्रातिपदिकेत्संज्ञावारणाधिकरणम् )

( ८३२ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते ॥ * ॥

( भाष्यम् ) **अकृत्तद्धितान्तस्य प्रातिपदिकस्य**

---

१ यथाऽग्निहोत्रं जुहोति यवागूं पचति इत्यत्र यवागूपाकस्य दृष्टफलसिद्ध्यै पाठक्रमस्त्यज्यते इति भावः । ( र. ना. ) * तन्त्रत्योपक्रमोपसंहाराभ्यासस्य 'इको यणचि' इति सूत्रविहितादेशविषयत्वस्यैवारम्भप्रत्याख्यानयोः फलैक्याय संयोगान्तलोपापेक्षया बहिरङ्गत्वयोग्यस्यैव यणः प्रतिषेधस्याङ्गीकरणीयत्वेन प्रकृते लकारस्य बहिरङ्गत्वयोग्यत्वाभावेन न प्रतिषेधः । झल्पदस्यानुवृत्तिस्तु बहिरङ्गतयासिद्धलोपाभावसाधिकेति अन्यथासिद्धप्रयोजनसाधिकैवेति 'अङ्गवृत्त' परिभाषावद्व्यर्थैव । 'अमो मश्' इति सूत्रे "द्विमकारको निर्देशः करिष्यते" इति वदता भाष्यकृताऽनङ्गीकृता चेति कैयटाशयं परे । २ एकशेषनिर्देशाद्वेत्यादि व्याख्यानमाश्रित्य लकारनिर्देशेत्यादौ शेषः । ( र. ना. ) [illegible] त्तत्पुरुषः' । ४ संबन्धविशेषे पर्यवसानरीत्येत्यर्थः । ( र. ना. ) ५ भाष्ये इत्यादिः । ( र. ना. ) ६ अनुबन्धरूपस्येत्यर्थः । अनुबन्धानां गुणत्वं च प्रत्याहारोपकारकत्वेन । (र. ना.) ७ 'तस्य च' । ८ गुणरूप इत्यादिः । (र. ना.) ९ उत्पत्तौ चक्रकमित्यर्थः । ( र. ना. ) १० 'णार्थं तु' । ११ 'न ल्ग्रहणं कृतम्' । न लकारो भवति' । १२ 'लकारस्य च श्र०' । १३ डाप्रत्ययस्य प्रकृत्यव्यवहितपरत्वाभावात्तासांव्यधानादिति भावः । ( र. ना. ) १४ अभिमानोक्तिस्तु प्रत्ययग्रहणपरिभाषया तदादेरुपस्थित्या तदव्यवहितपरत्वस्य च डाप्रत्यये सत्त्वेन तदव्यावृत्तिरिति । (र. ना.) १५ पूर्वोक्तकैयटरीत्या चक्रका- [illegible] (र. ना.) १६ शिथिलेति लिङ्गविपरिणामेनानुषङ्गः । (र. ना.)

प्रतिषेधो वक्तव्यः। उदश्वित् शकृदिति॥ अकृत्तद्धितान्तस्येति किमर्थम्?। कुम्भकारो नगरकारः औपगवः कापटव इति।

(प्रदीपः) प्रातिपदिकप्रतिषेध इति। यदा मञ्चकादिनिवृत्त्यर्थः प्रातिपदिकानामुपदेशः कर्तव्य इति पक्षस्तदायं प्रतिषेधः। अन्यथा उपदेशाभावात्प्राप्त्यभावादनर्थकः प्रतिषेधः स्यात्॥ कुम्भकार इति। अपवादविषयपरिहारेणेत्संज्ञायाः प्रवर्तनात्पूर्वं प्रातिपदिकसंज्ञेति प्रतिषेधे प्राप्तेऽकृत्तद्धित इति प्रतिषेधः क्रियते॥

(उद्योतः) मञ्चकादिति। मञ्चकादिस्थाने इत्यर्थः। अयं पक्षः पस्पशाह्निकान्ते भाष्ये॥ इदं चिन्त्यम्। यद्युपदेशोऽज्ञातज्ञापकमुच्चारणं तर्हि ढकि लोप इत्यनुमितढक उपदेशाभावादित्संज्ञानापत्तिः। मञ्चकादौ मञ्चकादिभ्रमनिवृत्त्यर्थं तेषामप्यनुवादस्यैव सत्त्वेनोक्तोपदेशाभावाच्च, यथाकथंचिद्बोधनस्यैवोपदेशत्वे तदनुवृत्तिर्निष्फला। किं च पूर्वसूत्रे उपदेशशब्दस्य करणसाधनत्वपक्षेऽपठितानामप्येषामुपदेशत्वमस्त्येव। व्यवसितान्त्यं हलिति न्यासं कुर्वता वार्तिककृता तदनुवृत्तेस्त्यक्तत्वाच्च॥ ननूपदेश एव नकारलोपे पश्चात्प्रातिपदिकत्वमिति कथमत्र निषेधप्रसक्तिरत आह—अपवादेति॥

(८३३ समाधानवार्तिकम्॥ ७॥)

॥ * ॥ इदर्थाभावात्सिद्धम्॥ * ॥

(भाष्यम्) इत्कार्याभावादत्रेत्संज्ञा न भविष्यति॥

(आक्षेपभाष्यम्)

इदमस्तीत्कार्यम्—"तित्स्वरितम्" इति स्वरितत्वं यथा स्यात्॥

(समाधानभाष्यम्)

नैतदस्ति। प्रत्ययग्रहणं तत्र चोदयिष्यति॥

(प्रदीपः) प्रत्ययग्रहणमिति। उदश्वित्शकृदिति चैताव्युत्पत्तौ। शकृदिति शकेर्ऋतिन् इति यद्यपि व्युत्पाद्यते तथाप्युपदेशे तकारोन्त्यो न भवतीतीत्संज्ञा न प्रवर्तते॥

(उद्योतः) ननु शकृति ऋतः प्रत्ययत्वात्तद्ग्रहणेपि दोषोऽत आह—उदश्विदिति। उदकेन श्वयत इति व्युत्पत्तावप्यस्य तकारस्य तुका निष्पन्नत्वात् प्रत्ययावयवत्वाभावात् तत्राव्युत्पन्नत्वकथनफलं चिन्त्यम्॥ उपदेशे तकारोन्त्यो न भवतीति। इदमुक्तरीत्या चिन्त्यम्। भाष्यस्वरसस्त्वव्युत्पन्नत्व एवेति बोध्यम्॥ किं चोपदेश इत्यनुवृत्तौ प्रातिपदिकप्रतिषेध इति वार्तिकानुत्थानमेवोद्देश प्रातिपदिकानां नोपदेश इत्यादेच इत्यादिसूत्रभाष्योक्तेः। अत एव पस्पशाह्निकान्ते उपदेश इत्यस्यानुवाद इत्येवार्थ एतद्भाष्यैकवाक्यत्वादिति बोध्यम्॥

(आक्षेपभाष्यम्)

इह तर्हि राजा तक्षा, ञ्नितीत्याद्युदात्तत्वं यथा स्यात्॥

(प्रदीपः) राजा तक्षेति। नन्वव्युत्पत्तिपक्षेऽप्यनयोरवश्यमाद्युदात्तत्वमेष्टव्यम्। तत्राद्युदात्तस्याद्युदात्तत्वे किं प्रयोजनं येनेत्संज्ञा स्यात्॥ उच्यते—आमन्त्रितनिघातप्रतिषेधार्थमाद्युदात्तत्वं स्यात्। न ङिसंबुद्ध्योरिति नलोपस्य प्रतिषेधो नेत्संज्ञाया इति तत्प्रतिबद्धः स्वरः स्यात्॥

(उद्योतः) ननु संबुद्धौ न ङिसंबुद्ध्योरिति लोपनिषेधसामर्थ्यादित्वप्रयुक्तनलोपस्याप्यभावेन संज्ञापि नेति मन्दाशङ्कायामाह—न ङीति॥

(समाधानभाष्यम्)

ञ्नितीत्युच्यते तत्र व्यपवर्गाभावान्न भविष्यति॥

(प्रदीपः) व्यपवर्गाभावादिति। नित्परो नास्तीति भावः। यदा तु सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति पक्षस्तदापि निर्देशायं न तु निदन्त इति नास्ति स्वरः। अत्र तु पक्षे श्रोत्रियश्छिति यदा वाक्यार्थे पदवचनं तदा स्वरो न सिध्यति। यदा तु छन्दसः श्रोत्रभावः घंश्च प्रत्ययस्तदा निदन्तत्वात्स्वरसिद्धिः॥

(उद्योतः) नित्परो नेति। समुदायार्थत्वादुपदेशस्य स एव निद्व्यपदेशयोग्य इति, अनित्यवयवो नित्परोस्तीति न शङ्क्यम्॥ न तु निदन्त इति। व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति निषिद्ध इत्यभिमानः॥ अत्र त्विति। तथा चेदं भाष्यमेकदेश्युक्तिः। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधस्तु प्रत्ययविधिविषय इति भावः॥

(आक्षेपभाष्यम्)

इदं तर्हि स्वः—"उपोत्तमं रिति" इत्येष स्वरो यथा स्यात्॥

(समाधानभाष्यम्)

स्वरितकरणसामर्थ्यान्न भविष्यति "न्यङ्स्वरौ स्वरितौ" इति॥

(आक्षेपभाष्यम्)

इह तर्हि अन्तः॥

(समाधानभाष्यम्)

उत्तमशब्दस्त्रिप्रभृतिषु वर्तते। न चात्र त्रिप्रभृतयः सन्ति॥

(आक्षेपभाष्यम्)

इह तर्हि सनुतः—"उपोत्तमं रिति" इत्येष स्वरो यथा स्यात्॥

(समाधानभाष्यम्)

अन्तोदात्तनिपातनं करिष्यते। स निपातनस्वरो रित्स्वरस्य बाधको भविष्यति॥ एतच्चात्र युक्तम्—यदित्कार्याभावादित्संज्ञा न स्यात्। यत्रेत्कार्यं भविष्यति तत्रेत्संज्ञा। तद्यथा "आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्" इति॥ हलन्त्यम्॥ ३॥

(प्रदीपः) तद्यथागस्त्येति। प्रत्ययस्य लुकि कृते

१ अत्राद्यश्चकारघटितो द्वितीयस्तु जकारघटित इति प्रतिभाति। (र. ना.)
२ तथाच वार्तिकमते प्रातिपदिकेष्वित्संज्ञाप्राप्तिरस्त्येवोपदेशाभावेऽपीति भावः। (र. ना.) ३ उपदेशशब्दस्य करणसाधनत्वाद् वार्तिककृता तदनुवृत्तेस्त्यक्तत्वात्युक्तरीतिः। (र. ना.) ४ नकारस्येत्संज्ञाप्रयुक्त इत्यर्थः। (र. ना.) ५ सौवरीणां सप्तमीनां परसप्तमीत्वपक्षे इत्यर्थः। (र. ना.) ६ तथाचात्र उपोत्तमं रितीत्यस्याप्रवृत्त्या फलाभावादित्वाभाव इति भावः। (र. ना.)

परिशिष्टस्य कुण्डिनजादेशः । तत्र प्रत्ययलक्षणेन तद्धितान्तत्वात्प्रातिपदिकत्वादित्संज्ञानिषेधः स्यात् । न चायं चकारस्तद्धितसंबन्धी यतोऽकृत्तद्धित इति निषेधः स्यात् ॥ ३ ॥

( उद्द्योतः ) प्रत्ययस्येति । प्रतिषेधारम्भेऽस्य चस्येत्त्वं न स्यादिति तत्र कार्यमिति भावः । अत्र हि चित्त्वेनान्तोदात्तत्वमिष्यते, प्रकृतिप्रत्ययान्यतरच्चित्त्वमादायैव चिदवयवकप्रकृतिप्रत्ययसमुदायस्यान्तोदात्ततायास्तेन विधानात् ॥ ३ ॥

( १२५ इत्संज्ञानिषेधसूत्रम् ॥१।३।१ आ. ४ सू० )

## १५१ न विभक्तौ तुस्माः १।३।४ ॥

( तवर्गप्रतिषेधस्य तद्धितभिन्नपरत्वाधिकरणम् )

( ८३४ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ विभक्तौ तवर्गप्रतिषेधोऽतद्धिते ॥ * ॥

**( भाष्यम् ) विभक्तौ तवर्गप्रतिषेधोऽतद्धित इति वक्तव्यम् । इह मा भूत "किमोत्" 'क्व प्रेप्सन् दीव्यसे' 'क्वार्द्धमासा' इति ॥**

( तटस्थभाष्यम् )

**स तर्हि वक्तव्यः ।**

( समाधानभाष्यम् )

**न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—न विभक्तौ तद्धिते प्रतिषेधो भवतीति । यदयम् "इदमस्थमुः" इति मकारस्येत्संज्ञापरित्राणार्थमुकारमनुबन्धं करोति ॥**

( प्रदीपः ) न विभक्तौ तुस्माः ॥ ४ ॥ इत्संज्ञापरित्राणार्थमिति । इत्संज्ञायाः परित्राणमिति साधनं कृतेति पञ्चमीतत्पुरुषः । शेषविवक्षायां वा षष्ठीसमासः । अनेनोकारेणानुमीयते येषां प्राग्दिशो विभक्तिरिति विभक्तिसंज्ञा तेषां न विभक्ताविती॑संज्ञा न निषिध्यते इति ॥

( उद्द्योतः ) न विभ ॥ ४ ॥ नन्वित्संज्ञाव्यावर्त्तकोकारस्य कथं तत्परित्राणार्थत्वमत आह—इत्संज्ञाया इति । इटोदित्यादीनां मुखसुखार्थत्वप्रतिज्ञया श्रवणाभावस्य बोधितत्वात्तत्प्रतिज्ञैव तेषु न विभक्तावित्यस्याप्रवृत्तिरिति नातद्धित इत्यसङ्गतम् ॥

( ज्ञापनबाधकभाष्यम् )

**यद्येतज् ज्ञाप्यते इदानीमित्यत्र प्राप्नोति ॥**

( उद्द्योतः ) इदानीमत्र प्राप्नोतीति भाष्ये ज्ञापनकाले इत्यर्थः॥

( ज्ञापकसाधकभाष्यम् )

**इत्कार्याभावादत्रेत्संज्ञा न भविष्यति ॥**

( प्रदीपः ) अत्रेति । इदानीमित्यत्र ॥

( उद्द्योतः ) अत्रत्यमत्रेति व्याचष्टे—इदानीमित्यत्रेति ।

( ज्ञापनबाधकभाष्यम् )

**इदमस्तीत्कार्यं "मिदचोन्त्यात्परः" इत्यचामन्त्यात्परो यथा स्यात् ॥**

( ज्ञापनसाधकभाष्यम् )

**इश्भावे कृते नास्ति विशेषः "मिदचोन्त्यात्परः" इति वा परत्वे "प्रत्ययः परः" इति वा ॥**

( ज्ञापनबाधकभाष्यम् )

**स एव तावदिश्भावो न प्राप्नोति ॥ किं कारणम् ? । प्राग्दिशः प्रत्ययेष्वित्युच्यते ॥**

( उद्द्योतः ) भाष्ये—तावदिश्भाव इति । प्रत्ययोत्पत्तेः पूर्वं न प्राप्नोतीत्यर्थः ॥

( ज्ञापनसाधकभाष्यम् )

**कः पुनरर्हतीश्भावं प्राग्दिशः प्रत्ययेषु वक्तुम् । किं तर्हि ? । प्राग्दिशोऽर्थेष्विश्भावः किंसर्वनामबहुभ्योऽद्व्यादिभ्यः प्रत्ययोत्पत्तिः ॥**

( प्रदीपः ) अर्थेष्विति । यथेष्टमवधिमत्कल्पने॑ऽत्रार्थोऽवधिमत्त्वेनाश्रीयते । तत्रानुत्पन्न एव प्रत्यय इश्भावः । ततः प्रत्ययः । यदि तु पूर्वं प्रत्ययः स्यात्तदा मित्त्वादचोन्त्यात्परे दानीमि कृते तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्सर्वादेश इश्ि सति दानींविधानमनर्थकमेव स्यात् ॥

( उद्द्योतः ) ननु प्राग्दिश इति शब्दस्यावधित्वेनोपादानादवधिमानपि शब्द एवेत्याशङ्क्याह—यथेष्टमिति । तस्यापि प्रकृतित्वेन सजातीयावधिमदसम्भव इति भावः ॥ अर्थ इति । तत्तत्प्रकृत्यर्थरूपोऽर्थः ॥ ननु प्रत्ययादेशयोर्मध्ये कदाचित्प्रथमं प्रत्ययोत्पत्ताविष्टकार्यं स्यादित्याशङ्क्य प्रथममादेशोत्पत्तौ विनिगमकमाह—यदि त्विति । भाष्ये किं तर्हि ? प्राग्दिशोऽर्थेष्विश्भाव इत्युक्ते एवमपि परत्वात्प्रत्यय एव पूर्वमुचित इत्याशङ्क्योक्तम्—किंसर्वनामबहुभ्योऽद्व्यादिभ्यः प्रत्ययोत्पत्तिरिति । एवं च द्व्यादिभेदज्ञानसापेक्षत्वेन बहिरङ्गप्रत्ययात्पूर्वमन्तरङ्गत्वादादेश एव । अत्रैवार्थे दानींग्रहणमपि ज्ञापकमिति तद्भावं केचित् ॥ वस्तुतोऽयमपाठः । इदमो र्हिलित्यत इदम इत्यनुवर्त्तमाने दानीमो विधानात् । कैयटस्वरसोऽप्येवमेव ॥

---

१ 'न विभक्तौ—' इत्यादिनिर्देशसिद्धया 'नञ्घटितमनित्यम्' इति परिभाषयैवेष्टसिद्धिरिति परे । इदं चिन्त्यम् । नञ्घटितमनित्यमित्यत्र मानाभावात्फलाभावाच्च । न विभक्ताविति निर्देशोपपत्तिस्तु औतस्तकारस्य मुखसुखार्थत्वप्रतिज्ञया श्रवणाभावस्य बोधितत्वात् इति वयम् । इत्संज्ञालोपाभ्यामेव श्रवणाभावस्य बोधितत्वात्प्रतिज्ञाहानिरपि न । ( र. ना. ) मुखसुखार्थपदस्याप्युच्चारणार्थपदपर्यायतया 'उच्चारणार्थानामपीत्त्वमस्त्येव' इति प्रतिज्ञाहान्यापत्तेश्चिन्त्यमेवेदम् ॥ २ 'इदानीमत्र प्राप्नोति' इत्येव ज्ञापनबाधकभाष्यपाठं स्वीकृत्येदमिति भावः ॥ परंत्वेतस्मिन्व्याख्यान इदानीमित्यस्य ज्ञापनकाल इत्यर्थे अत्रेत्यस्य 'इदानीमित्यत्र' इत्यर्थाङ्गीकारस्य इदानीमिति पदस्य पूर्वप्रक्रान्तत्वाभावेन सर्वनाम्ना परामर्शासंभवेनासंभवः । तस्माद्धृत्रोपलभ्यमानः 'यद्येतज्ज्ञाप्यते इदानीमित्यत्र प्राप्नोति' इति पाठस्तु स्पष्टार्थ एवातो न व्याख्यातः कैयटेन । तत उत्तरम् 'इत्कार्याभावादत्रेत्संज्ञा न भविष्यति' इतिज्ञापनसाधकभाष्य एवोपलभ्यमानस्य 'अत्र' इत्यस्य पूर्वस्मिञ्ज्ञापनबाधकवाक्ये 'इदानीमित्यत्र प्राप्नोति' इत्यत्र प्रक्रान्तत्वात् 'इदानीमीत्यत्र' इति प्रदीपे व्याख्या समुचिता ॥ तस्मादिदं ज्ञापनबाधकभाष्यस्थार्थकम् 'अत्रत्यम्' इति पदमसंबद्धार्थमेव ॥ वस्तुतस्तु 'यद्येतज्ज्ञाप्यते इदानीमत्र प्राप्नोतीति' नागेशसम्मतपाठे इदानीमित्यस्य शब्दस्वरूपपरतया सप्तम्यन्ताव्ययतया च इदानीं शब्दे इत्यर्थः । अत्रेत्यस्य च ज्ञापनकाले इत्यर्थ इति न क्वाप्यसंबद्धत्वदृष्टिर्मान्यानां व्याख्यानेषु सति संभवे कार्या । ( र.ना. ) ३ 'त्यर्थौ' 'हत्रार्थौ' ।

( ज्ञापनबाधकभाष्यम् )

**एवं तर्हि तदोऽप्ययं वक्तव्यः । तदश्च मिदचोऽन्त्यात्परत्वेन न सिध्यति ॥**

( प्रदीपः ) **तदोऽप्ययमिति ।** तदो दा चेति चकारेणानुकर्षणात् ॥

( ज्ञापनसाधकभाष्यम् )

**ननु चात्राप्यत्वे कृते नास्ति विशेषः "मिदचोऽन्त्यात्परः" इति वा परत्वे 'प्रत्ययः परः' इति वा ॥**

( प्रदीपः ) **ननु चेति ।** सप्तम्यां विभक्तावुत्पन्नायामत्वे कृते दानीमिति भावः ॥

( उद्द्योतः ) अत्वप्रवृत्तिप्राथम्ये विनिगमकमाह—सप्तम्यामिति । अन्तरङ्गानपीतिन्यायमसौ न जानीते इति बोध्यम् ॥

( ज्ञापनबाधकभाष्यम् )

**तद्धि अत्वं न प्राप्नोति ॥ किं कारणम्? । विभक्तावित्युच्यते ॥**

( प्रदीपः ) **तद्धीति ।** प्राग्दिशोर्थेष्विति पूर्वमभिधानात्सप्तम्यर्थवृत्तेः कालवाचिनो मित्त्वान्मध्ये दानीमा भाव्यमिति तदानीमित्यस्यासिद्धिरेवेत्यर्थः ॥

( उद्द्योतः ) **सप्तम्यर्थेति ।** प्राग्दिश इतिवत् सप्तम्या इत्यप्यर्थपरमेव । प्रातिपदिकाच्च तद्धितोत्पत्तिरिति भावः । अन्तरङ्गानपीतिन्यायाच्च ॥

( समाधानभाष्यम् )

**एवं तर्हि यकारान्तो दानीं करिष्यते ॥ किं यकारो न श्रूयते? ॥ लुप्तनिर्दिष्टो यकारः ॥ न विभक्तौ ॥ ४.॥**

( प्रदीपः ) **यकारान्त इति ।** यकारोऽन्त्यत्वमनुभवन्मकारस्यान्त्यत्वं प्रतिबध्नाति । यकारस्य च **संयोगान्तस्य लोप** इति लोपः क्रियते ॥ यद्येवं मकार एवोपदेशेऽन्त्यः श्रूयते इति प्राप्नोत्येव मकारस्येत्संज्ञा । नैतदस्ति । **पूर्वत्रासिद्धमिति** मकारस्येत्संज्ञायां यलोपस्यासिद्धत्वादन्त्यत्वाभावात् ॥ ४ ॥

( उद्द्योतः ) ननु यकारसत्त्वेपि दानीमित्यस्य मोऽन्त्य एवेत्यत आह—**यकार इति ॥ संयोगान्तस्य लोप इति ।** चिन्त्यमिदम् । यँणः प्रतिषेधात् । तस्माच्चशब्दनिमित्तको **लोपो व्योरिति** लोप इति वक्तुमुचितम् ॥ **उपदेशेऽन्त्य इति ।** व्यवसितस्यान्त्यः श्रूयत इति वक्तुमुचितम् ॥ **पूर्वत्रेति ।** वस्तुतस्तु **लोपो व्योरित्यस्य** वहिरङ्गतयाऽसिद्धत्वमित्संज्ञां प्रतीति बोध्यम् । न च यकारे कृतेति मान्तस्य प्रत्ययतया व्यवसितान्त्यत्वेन दुर्वारैवेत्संज्ञेति वाच्यम् । व्यवसितान्त्यशब्देन प्रत्यासत्त्या शास्त्रकृद्व्यवसितान्त्यस्यैव ग्रहणेनादोषात् तद्व्यवसितश्च यान्त इति बोध्यम् । उत्तरसूत्रस्थस्य यकारादी चुञ्चुप्चणपाविति भाष्यस्य योजनार्थं तदुक्तप्रकार आवश्यक इति बोध्यम् ॥

—०:०:०—

( १२६ इत्संज्ञासूत्रम् ॥ १ । ३ । १ आ. ५ सू० )

## १५४ चुटू १।३।७ ॥

( अनिष्टनिराकरणाधिकरणम् )

( ८३५ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ चुञ्चुप्चणपोश्चकारप्रतिषेधः ॥ * ॥**

( व्याख्याभाष्यम् )

**चुञ्चुप्चणपोश्चकारस्य प्रतिषेधो वक्तव्यः केशचुञ्चुः । केशचणः ॥**

( ८३६ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ इदर्थाभावात्सिद्धम् ॥ * ॥**

( व्याख्याभाष्यम् )

**इत्कार्याभावादत्रेत्संज्ञा न भविष्यति ॥**

( समाधाननिराकरणभाष्यम् )

**इदमस्तीत्कार्यम् । "चितः" अन्त उदात्तो भवतीति अन्तोदात्तत्वं यथा स्यात् ॥**

( समाधानसाधकभाष्यम् )

**पित्करणमिदानीं किमर्थं स्यात्? ॥**

( ८३७ समाधानबाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ पित्करणं किमर्थमिति चेत्पर्यायार्थम् ॥ * ॥**

( व्याख्याभाष्यम् )

**पित्करणं किमर्थमिति चेत्पर्यायार्थमेतत्स्यात् ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि यकारादी चुञ्चुप्चणपौ ॥ किं यकारो न श्रूयते? । लुप्तनिर्दिष्टो यकारः ॥**

( प्रदीपः ) **चुटू ॥७॥ लुप्तनिर्दिष्ट इति ।** पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थः । राजदन्तादेराकृतिगणत्वाद्भाष्यकारवचनाद्वा पूर्वकालस्य परनिपातः ॥ अथ वा लुप्तोयमिति प्रतिज्ञातो लुप्तनिर्दिष्टः ॥

( उद्द्योतः ) **चुटू ॥ ७ ॥** लुप्तस्य निर्देशायोगादाह—**पूर्वमिति । इति प्रतिज्ञात इति ।** निर्दिष्टशब्दः प्रतिज्ञातार्थको मध्यमपदलोपी च समास इति भावः ॥

( ८३८ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ इर उपसंख्यानम् ॥ * ॥**

( व्याख्यानभाष्यम् )

**इर उपसंख्यानं कर्तव्यम् । रुधिर् । अरुधत् । अरौत्सीत् ॥**

---

१ दानीं प्रत्यय इत्यर्थः । ( र. ना. ) २ तदानीमितीत्यादिः । ( र. ना. ) ३ कैयटाशयस्तु 'हलन्त्यम्' इत्यत्रोक्त एव । ४ वार्तिककृता हलन्त्यसूत्रे उपदेशपदानुवृत्तेरत्यक्तत्वादिति भावः । ( र. ना. ) ५ लोपो व्योरित्यस्य बहिरङ्गतयेत्संज्ञां प्रत्यसिद्धत्वरूपः शास्त्रकृद्व्यवसितप्रत्ययादित्वरूपो वा इत्यर्थः । ( र. ना. ) ६ चुञ्चुप्चणपोः पर्यायत्वबोधनार्थमित्यर्थः । शब्दाधिक्यादर्थाधिक्यमिति भावः । ( र. ना. ) ७ 'लुप्तनिर्दिष्टो यकारः' इति पूर्वं 'न विभक्तौ–' इत्यत्र न व्याख्यातमतोऽत्र व्याख्यायते । ८ पौर्वकालिकनिर्दिष्टपदार्थबोधकस्य निर्दिष्टपदस्येत्यर्थः । ( र. ना. ) ९ इतिशब्दस्य लोप इत्याशयः । ( र. ना. )

( प्रदीपः ) इर उपसंख्यानमिति ॥ इरितो वेत्यत्रेरिति समुदायानुकरणम् इर् इत् यस्य सोयमिरित्। समुदायस्य चाज्झलात्मकत्वादप्राप्ता इत्संज्ञोपसंख्यायते । समुदायस्यैवेत्संज्ञासंबन्धेऽवयवाः पारतन्त्र्यादित्संज्ञां न लभन्त इतीदित्त्वाभावानुमभावः ॥ नन्वेवं सति स्वरितेत इत्यात्मनेपदं न प्राप्नोति । नैष दोषः । स्वरितत्वप्रतिज्ञानसामर्थ्यादवयवगतं स्वरितत्वं समुदाय आरोपयिष्यते ॥

( उद्योतः ) नन्विरित इत्यादाविराविती यस्येति विग्रहाद् हलन्त्यमुपदेशेजित्येव सिद्धे इदं व्यर्थमत आह—इरित इति ॥

( ८३९ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अवयवग्रहणात्सिद्धम् ॥ * ॥

( व्याख्याभाष्यम् )

**रेफस्यात्र "हलन्त्यम्" इति भविष्यति, इकारस्य "उपदेशेऽजनुनासिक इत्" इति ॥**

(प्रदीपः) अवयवग्रहणादिति । इराविती यस्य स इरिदित्येवमित्संज्ञकत्वेनावयवावेवाश्रीयेते न तु समुदाय इत्यर्थः ॥

(उद्योतः) इराविताविति । लक्ष्यानुरोधाद् द्विवचनान्तेनापि विग्रह इति भावः । एवं चात्मनेपदार्थं सामर्थ्यं नाश्रयणीयमिति बोध्यम् ॥

( ८४० समाधानबाधकवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अवयवग्रहणादिति चेदिदिद्विधिप्रसङ्गः ॥ * ॥

( व्याख्याभाष्यम् )

**अवयवग्रहणादिति चेदिदिद्विधिरपि प्राप्नोति । भेत्ता छेत्ता "इदितो नुम् धातोः" इति नुम् प्राप्नोति ॥**

( समाधानसाधकभाष्यम् )

**यदि पुनरयमिदिद्विधिः कुम्भीधान्यन्यायेन विज्ञायेत । तद्यथा—कुम्भीधान्यः श्रोत्रिय इत्युच्यते । यस्य कुम्भ्यामेव धान्यं स कुम्भीधान्यः । यस्य पुनः कुम्भ्यां चान्यत्र च धान्यं नासौ कुम्भीधान्यः ॥**

( प्रदीपः ) यदि पुनरिति । यस्य च कुम्भीस्थादन्यन्निहितं धान्यं नास्ति स कुम्भीधान्यः ॥

( समाधानबाधकभाष्यम् )

**नायमिदिद्विधिः कुम्भीधान्यन्यायेन शक्यो विज्ञातुम् । इह हि दोषः स्यात्—टुनदि नन्दथुरिति ।**

( प्रदीपः ) यद्यपि नुम्विधावस्य न्यायस्य निमित्तं नास्ति तथापि दोषेणैव तन्न्यायानाश्रयणमाह—नायमिति ।

( उद्योतः ) यद्यपीति । दानपात्रतासिद्धये विशेषणकुम्भ्यामन्वितैवकारगर्भसमासेनान्ययोगव्यवच्छेदलाभेपि प्रकृते तदाश्रयणे प्रमाणाभावादिति भावः ।

( समाधानसाधकभाष्यम् )

**एवं तर्हि नैवं विज्ञायते—इकार इदस्य सोयमिदित् तस्येदित इति ॥ कथं तर्हि? ॥ इकार एवेत् इदित् इदिदन्तस्येति ॥**

( प्रदीपः ) इकार एवेदिति । इदिता धातुर्विशेष्यत इति तदन्तविधिः ॥

( उद्योतः ) भाष्ये इकार एवेदिति । तत्पुरुषत्वमेवास्य न बहुव्रीहित्वमित्येतत्सूचनायैवकारः ॥

( समाधानान्तरभाष्यम् )

**[ अथ वा ऋकारस्यैवेदमित्त्वभूतस्य ग्रहणम् । तस्य च "उपदेशेऽजनुनासिक" इतीसंज्ञा भविष्यति ॥**

( प्रदीपः ) ऋकारस्येति । ऋत इद्धातोरितीत्त्वे रपरत्वे च भिदिरित्यादिनिर्देशः । अनङ्गस्यापि निपातनादित्त्वम् । तत्र च भिदृशब्दे पूर्वमृकारस्येत्संज्ञा । तत इत्वरपरत्वे । इरितो वेत्यत्रापि ऋ इदस्येति समासे कृते निपातनादित्त्वरपरत्वयोः कृतयोरिरित इति निर्देशः ॥

( उद्योतः ) अङ्गाधिकारस्थत्वेन प्रत्ययनिमित्तत्वात्तदप्राप्तेराह—अनङ्गस्यापीति । अधतोरित्यपि बोध्यम् । न धात्विति- सूत्रस्थभाष्यकैयटरीत्याऽनुबन्धविनिर्मुक्तस्यैव धातुत्वात् । अत एव भाष्ये सूत्रं नोपन्यस्तम् ॥ इत्संज्ञायाः परत्वादित्त्वे इष्टसिद्धिर्न स्यादत आह—तत्रेति । निर्देशानुपपत्तिकल्पितमित्त्वं बहिरङ्गमिति भावः । निपातनादेवेत्त्वरपरत्वाभ्यां पूर्वं तस्य लोप इत्यपि नेति बोध्यम् ॥ ]

( समाधानान्तरभाष्यम् )

**अथ वा आचार्यप्रवृत्तिर्ज्ञापयति—'नैवंजातीयकानामिदिद्विधिर्भवति' इति ॥ यदयमिरितः कांश्चिन्नुमनुषक्तान्पठति—उबुन्दिर् निशामने । स्कन्दिर् गतिशोषणयोः ॥**

( प्रदीपः ) नुमनुषक्तानिति । नुमा नकारो लक्ष्यते नकारयुक्तानित्यर्थः । न च लोपाभावार्थो नकारोपदेश इति वक्तुं शक्यम् । अनकारोपदेशेपीदित्त्वान्नलोपस्याप्रसङ्गः । तस्मान्नकारोपदेशेनेरितामिदित्कार्याभावो ज्ञाप्यते ॥ न दृश इति क्सादेशनिषेधेनापीरितामिदित्कार्याभावो ज्ञायते । अन्यथा दृशेरिदित्त्वान्नुमि सति इगुपधत्वाभावात्प्राप्तिरेव क्सस्य नास्तीति किं तन्निषेधेन ॥

( उद्योतः ) नुमोभावादाह—नुमेति । एतद्भाष्यात्केषांचिद्धातूनामर्थनिर्देशसहितोपि पाठ इति ज्ञायते ॥ किं तन्निषे-

१ 'स्य चेत्सं' 'स्य च सं'। २ तदा नुम्विधिप्रसङ्गरूपो दोषो नेति शेषः । (र. ना.) ३ 'विशेषेण'। ४ यदीदं कोष्ठकान्तर्गतं सोद्योतप्रदीपभाष्यं सूत्रान्त एव भवेत् तर्हि अतीव वरं स्यात् । तत्र पाठे श्रैष्ठ्ये को हेतुरिति दाधिमथा एव जानन्ति । ( र. ना. )

धेनेति । यद्यपि तेनोपदेश इगुपधत्वं विवक्ष्यते इत्यपि ज्ञापनं संभवति, तथापि लक्ष्यानुरोधादिदमेव ज्ञाप्यते इत्यभिमानः[1] ॥

( समाधानान्तरभाष्यम् )

**[ अथवा[2] आचार्यप्रवृत्तिर्ज्ञापयति—'इर्शब्दस्येत्संज्ञा भवति' इति । यदयम् 'इरितो वा' इत्याह ॥]**

( समाधानान्तरभाष्यम् )

**अथ वान्त इति वर्तते ॥**

**( प्रदीपः ) अन्त इति । गोः पादान्त इत्यतः ।** तेनान्तेदितां धातूनां नुमागमो न तु मध्येदिताम् ॥

**( उद्द्योतः )** गोः पादान्त इति । समानयोगनिर्दिष्टानामेकदेशोपि स्वरितत्वप्रतिज्ञासामर्थ्यादनुवर्त्तत इति भावः । अन्तपदार्थस्येकारविशेषणत्वेपि सौत्रत्वात्समास इति बोध्यम् ॥ अत्र पृथगित्संज्ञा, इदित इति कर्मधारयात् षष्ठीति युक्तः पक्षः ॥ ७ ॥

---

( १२७ लोपविधिसूत्रम् ॥ १ । ३ । १ आ० ६ सू० )

## १५६ तस्य लोपः ॥ १ । ३ । ९ ॥

( तस्य पदोपादानप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**तस्यग्रहणं किमर्थम् ? ॥**

**( प्रदीपः ) तस्य लोपः ॥ ९ ॥ तस्यग्रहणमिति ।** अभावो लोपः स च भावोपाधिरेव[3] प्रतीयते नान्यथेति प्रकरणादित्संज्ञस्यैव लोपो भविष्यतीति प्रश्नः ॥

**( उद्द्योतः )** तस्य लोपः ॥ ९ ॥ अभावो लोप इति । दर्शनाभावो लोप इत्यर्थः ॥ भावोपाधिरिति । दर्शनस्य सविषयत्वाच्छब्दशास्त्रत्वाच्छब्दरूप एव स विषयः । किं च भावविरोधी ह्यभावपदस्यार्थः । एवं च भावोपाधिरेव स, भावप्रतियोगिक एव स इति भावः ॥

( आक्षेपबाधकभाष्यम् )

**इत्संज्ञकः प्रतिनिर्दिश्यते ॥**

( आक्षेपसाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । प्रकृतमिदिति वर्तते ॥ क प्रकृतम् ? । "उपदेशेऽजनुनासिक इत्" इति ॥**

( आक्षेपबाधकभाष्यम् )

**तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥**

( आक्षेपसाधकभाष्यम् )

**अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा—'उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्व' [ एनम्[4] ] देवदत्तमिति गम्यते ॥ 'देवदत्तस्य गावोऽश्वा हिरण्यं च, आढ्यो वैधेयः[5]' देवदत्त इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात् द्वितीयानिर्दिष्टं प्रथमानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति ॥**

**( प्रदीपः ) विभक्तिविपरिणाम इति ।** सादृश्यात्तत्त्वाध्यवसायाद्विपरिणामव्यवहारः । वाक्यान्तरे तु योग्यविभक्त्यन्तं परमार्थतः शब्दान्तरमेव संनिधीयते ॥

**(उद्द्योतः)** ननु प्रकृतस्यान्वययोग्यत्वेऽनुषङ्गः, अयोग्यत्वेऽध्याहार एवेति विपरिणामो ऽसंगतोऽत आह—सादृश्यादिति । एवं चैकदेशसारूप्येण विपरिणामव्यवहार इति भावः ॥ भाष्ये आमन्त्रयस्वेत्येतदन्तमेव लौकिकं वाक्यम् । तत्र प्रकृतत्वादेनमिति गम्यत इत्यर्थः । तद्व्याचष्टे—देवदत्तमिति गम्यत इति । एनमित्यस्य सामान्यशब्दत्वाद्विशेषलाभायेदमुक्तम् ॥ वैधेयो[6] मूर्खः ॥

( समाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—ये अनेकाल इत्संज्ञास्तेषां लोपः सर्वादेशो यथा स्यात् ॥**

( आक्षेपभाष्यम् )

**अथ क्रियमाणेपि वै तस्यग्रहणे कथमिव लोपः सर्वादेशो लभ्यः ॥**

( समाधानभाष्यम् )

**लभ्य इत्याह ॥ कुतः ? । वचनप्रामाण्यात् । तस्यग्रहणसामर्थ्यात् ॥**

**( प्रदीप ) तस्यग्रहणसामर्थ्यादिति । अलोन्त्यस्ये-** त्यन्त्यस्य लोपे प्रसक्ते तस्यग्रहणेन समुदायस्य लोपः प्रतिपाद्यते ॥

**( उद्द्योतः )** अलोन्त्यस्येति । नानर्थकइति परिभाषा त्वलोन्त्यासूत्रे प्रत्याख्यातैवेति भावः ॥

( णलादीनां लोपसाधनाधिकरणम् )

( ८४१ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इतो लोपे णलुक्त्वानिष्ठासूपसंख्यानमित्प्रतिषेधात् ॥ * ॥

**( भाष्यम् ) इतो लोपे णलुक्त्वानिष्ठासूपसंख्यानं कर्तव्यम् ॥ णल्—अहं पपच । क्त्वा—देवित्वा सेवित्वा ॥ निष्ठा—शयितः शयितवान् ॥ किं पुनः कारणं न सिद्ध्यति ? ॥ इत्प्रतिषेधात् ॥ प्रतिषिध्यते तत्रेत्संज्ञा । णलुत्तमो णिद्वा भवति । क्त्वा सेण् न किद्भवति । निष्ठा सेण् न किद्भवतीति ॥**

---

१ अभिमानोक्तिबीजं तु शास्त्रबाधकल्पनापेक्षया तादृशविवक्षाज्ञापनमेव वरमिति । ( र. ना. ) २ इदं कोष्ठकान्तर्गतं भाष्यम् "अथवान्त इति वर्तते" इत्युत्तरमेवोचितम् । अन्यथा संदर्भाशुद्धिः ॥ अन्यत्रापि पाठक्रमादार्थक्रमो बलीयान् इत्याश्रितम् । भाष्यद्वयस्यापि इरितां धातूनां नुमभावोपपादकतया यथाश्रुतपौर्वापर्यविपर्यासे कोऽपि हेतुर्नास्तीति वयम् । ( र. ना. ) ३ भाव उपाधिर्निरूपको यस्येत्यर्थः । ( र. ना. ) ४ अत्र 'एनम्' इति पश्चात्केनचित् प्रक्षिप्तं भवेत् । उत्तरत्र 'देवदत्तः' इत्येतावदुपादानवत् 'देवदत्तम्' इत्येतावदुपादानेनैव सकलष्टसिद्धेः । ५ बहुत्रोपलभ्यमानेन वैधवेय इत्यनेन पितृशून्यत्वात्स्वच्छन्दचारिता सूचिता । ६ Bangal Asiatic Society मुद्रितपुस्तके 'वैधवेयो मूर्खः' इति पाठशोधनं तु शोधकमतिभ्रमतिमात्रमेव ।

( ८४२ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु णलादीनां ग्रहणप्रतिषेधात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । णलादीनां ग्रहणानि प्रतिषिध्यन्ते । णलुत्तमो वा णिद्ग्रहणेन गृह्यते । क्त्वा सेण्न किद्ग्रहणेन गृह्यते । निष्ठा सेण्न किद्ग्रहणेन गृह्यत इति ॥

( प्रदीपः ) ग्रहणप्रतिषेधादिति । नैषा[1]मित्संज्ञा प्रतिषिध्यतेऽपि तु तत्[2]प्रतिबद्धं कार्यमित्यर्थः ॥

( उद्योतः ) तस्यग्रहणेनेत्संज्ञकपरामर्शिनाऽश्रुतत्वाद् ग्रहणं कथं प्रतिषिध्यतेऽत आह—नैषामिति । णिदादिपदलक्षिततत्कार्याणां प्रतिषेध इति भावः ॥ भाष्ये ग्रहणानीत्यस्य णिदादिपदैर्ग्रहणप्रयुक्तानि कार्याणीत्यर्थः । अग्रेपि णिद्ग्रहणेन गृह्यते । यत्[3]कार्यं तत्कार्यं लभत इत्यादिक्रमेणार्थः । विकल्पेपि प्रतिषेधोस्तीति प्रतिषिध्य[4]न्त इत्युक्तम् ॥

( ८४३ समाधानान्तरवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ निर्दिष्टलोपाद्वा ॥ * ॥

( भाष्यम् ) निर्दिष्टलोपाद्वा सिद्धमेतत् । अथ वा निर्दिष्टस्यायं लोपः क्रियते तस्मात्सिद्धमेतत् ॥

( प्रदीपः ) निर्दिष्टलोपाद्वेति । तस्येत्यनेनेत्संज्ञाप्रकरणे निर्दिष्टस्य परामर्शादसत्यामपीत्संज्ञायां लोपो भवतीत्यर्थः ॥

( उद्योतः ) निर्दिष्टेति । उच्चारितशब्दप्रतिपादितत्वमेवात्र निर्दिष्टत्वं विवक्षितम् । अत एव णादीनां निर्दिष्टत्वमिति भावः । अयं पक्ष एकदेशिनः, सर्वलोपासिद्धेः ॥

( ८४४ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तत्र तुस्मानां प्रतिषेधः ॥ * ॥

( भाष्यम् ) तत्र तुस्मानां प्रतिषेधो वक्तव्यः । तस्मात् । तस्मिन् । यस्मात् । यस्मिन् । वृक्षाः । प्लक्षाः । अचिनवम् । असुनवम् । अकरवम् ॥

( प्रदीपः ) तुस्मानामिति । यद्यसत्यामपीत्संज्ञायां लोपो भवति तदा तुस्मानामपि प्राप्नोति । ते हि हलन्त्यमित्यत्र निर्दिष्टाः ॥

( ८४५ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ न वोचारणसामर्थ्यात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः । किं कारणम् । उच्चारणसामर्थ्यादत्र लोपो न भविष्यति ॥

( प्रदीपः ) नवेति । इत्संज्ञायाः प्रतिषेधादेषामित्कार्यं नास्ति । यदि चानेन लोपः स्यादुपदेशस्तेषामनर्थकः स्यात् ॥

( उद्योतः ) इत्संज्ञाद्वारा तत्कार्यार्थमुच्चारणमस्त्वित्यत आह—इत्संज्ञाया इति ॥

( विप्रतिषेधनिराकरणाधिकरणम् )

( ८४६ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अनुबन्धलोपे भावाभावयोर्विप्रतिषेधादप्रतिसिद्धिः ॥ * ॥

( भाष्यम् ) अनुबन्धलोपे भावाभावयोर्विरोधादप्रसिद्धिः । न ज्ञायते केनाभिप्रायेण प्रसजति केन निवृत्तिं करोतीति ॥

( प्रदीपः ) अनुबन्धलोप इति । यथा कश्चिद्वक्ति घटोस्तीति पुनश्च वक्ति नास्तीति तथानुबन्धानामुच्चारणाद् भावानुज्ञानं लोपविधानाच्चाभावानुज्ञेति विरोधादप्रामाण्यप्रसङ्गः ॥

( उद्योतः ) नन्वनुबन्धाः श्रूयन्त इति वचनाभावात् कथं विरोधोऽत आह—यथेति । अनु[7]मितेन विरोध इति भावः ॥

( ८४७ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ सिद्धं त्वपवादन्यायेन ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम् ? ॥ अपवादन्यायेन ॥

( समाधानसाधकवार्तिकावतरणभाष्यम् )

किं पुनरिह तथा यथोत्सर्गापवादौ ? ॥

( ८४८ समाधानसाधकवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ भावो हि कार्यार्थोऽनन्यार्थो लोपः ॥ * ॥

( भाष्यम् ) कार्यं करिष्यामीत्यनुबन्ध आसज्यते कार्यादन्यन्मा भूदिति लोपः ॥

( प्रदीपः ) सिद्धमिति । यथाऽणं को बाधते तथा कार्ये चरितार्थमुच्चारणात्प्राप्तं भावं लोपोऽनन्यार्थो बाधते ॥

( उद्योतः ) सामान्यविशेषभावाभावात्कथमपवादन्यायोऽत आह—यथाणऽमिति । विषयान्तरे चरितार्थमित्यर्थः ॥ कार्ये इत्त्वप्रयुक्ते ॥ भाष्ये कार्यादन्यच्छ्रवणम् ॥

( अनुबन्धानामेकान्तत्वाधिकरणम् )

( आक्षेपभाष्यम् )

अथ यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विदनेकान्तः ? ॥

( प्रदीपः ) एकान्त इति । एकदेशः । अवयव इत्यर्थः । अनेकान्तस्तूपलक्षणमेव केवलम् । यथा गृहस्य काकः । तत्रोपलभ्यमानस्य रूपद्वयदर्शनाद्वृक्षे शाखाबलाकयोरिवेति प्रश्नः ॥

(उद्योतः) सन्देहबीजं दर्शयति—तत्रोपलभ्यमानस्येति ॥

( ८४९ एकान्तपक्षाभ्युपगमवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ एकान्तस्तत्रोपलब्धेः ॥ * ॥

( भाष्यम् ) एकान्त इत्याह । कुतः ? । तत्रोपलब्धेः । तत्रस्थो ह्यसावुपलभ्यते । तद्यथा—वृक्षस्था शाखा वृक्षै[8]कान्तोपलभ्यते ॥

---

१ 'नैतेषा' । २ इत्संज्ञासंबद्धमित्यर्थः । (र. ना.) ३ 'यत्कार्ये', 'यत्कार्याणां प्रतिषेध' इति भावः । ४ 'षिध्यत' । ५ अनिर्दिष्टलोपाऽसिद्धेरित्यर्थः । (र. ना.) ६ 'इत्संज्ञाप्रति' । ७ अनुमितेन भावानुज्ञानेन अभावानुज्ञानस्य विरोध इत्यर्थः । (र. ना.) ८ वृक्षावयवीभूतेत्यर्थः । ( र. ना. )

(प्रदीपः) एकान्तस्तत्रोपलब्धेरिति । ननु यदेव संशयनिमित्तं स [एव] कथं निश्चयहेतुः । उच्यते—सामर्थ्यादवधारणमाश्रीयते ॥ तत्रैवोपलब्धेरिति । अवयवस्तत्रैवोपलभ्यते । अनवयवस्तु तत्र चान्यत्र च ॥ ननु वकारस्य वनव्रणवृक्षादिषु बहुषूपलब्धिः, न चासावनवयवः । नैष दोषः । भिन्नसमुदायविषयं वर्णान्तरमेव तदिति शकुनिभाष्ये प्रतिपादितम् ॥

(उद्द्योतः) शकुनिभाष्ये इति । यदि पुनरिमे वर्णाः शकुनिवत्स्युरान्यभाव्यं तु कालशब्दव्यवायादित्यत्रेत्यर्थः । एक एव ककार इति पक्षेपि स दोपः । लोपशास्त्रज्ञानात्पूर्वं यस्तत्रोपलभ्यते एव सोवयव इत्यर्थात् । अन्यथा शाखाया अपि छेदनोत्तरमन्यत्रोपलम्भात्तत्रैवोपालम्भाभावेनानवयवत्वं स्यात् । एवं चानुपलम्भकयत्नं विनापि तत्रान्यत्र चोपलभ्यमानोऽनवयवः तं विना तत्रोपलभ्यमान एव यः सोऽवयव इति भाष्याशय इत्यन्ये ॥

( ८५० एकान्तपक्षदूषणवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वात् ॥ * ॥

(भाष्यम्) तत्रासरूपविधौ दोषो भवति—"कर्मण्यण्" "आतोऽनुपसर्गे कः" इति कविषयेऽणपि प्राप्नोति ॥

सर्वादेशे च दोषो भवति । "दिव औत्" औत्सर्वादेशः प्राप्नोति ॥

दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः—'अदाब्दैपौ' इति वक्तव्यम् । किं पुनः कारणं न सिद्ध्यति ? । अनाकारान्तत्वात् ॥ ननु चात्त्वे कृते भविष्यति ॥ तच्चात्त्वं न प्राप्नोति ॥ किं कारणम् ? । अनेजन्तत्वात् ॥

(प्रदीपः) तत्रासरूपेति । अनाकारान्तत्वादित्येतद्दाप्प्रतिषेध इत्यनेनैव सामर्थ्यात्संबध्यते ॥ कविषय इति । एकान्तत्वे वैरूप्यात्समावेशप्रसङ्गः । अनेकान्तत्वे तूभावप्यकारा[1]विति सारूप्यादसमावेशः । अनेजन्तत्वादिति । यथा ढौकतेः ककारस्यैकान्तत्वादात्त्वं न भवत्येवं दैपोपि न प्राप्नोति । उपदेशग्रहणाच्च लुप्तेपि पकारे न प्राप्नोति ॥

(उद्द्योतः) भाष्ये—तत्रेत्यस्यैकान्तपक्षे इत्यर्थः ॥ अनाकारान्तत्वादित्येतदिति । असरूपसर्वादेशेतिपदे लुप्तसप्तमीके दोषपदाध्याहारेण योज्ये इति भावः ॥ एतेन द्वन्द्वे एकदेशान्वयः कथमित्यपास्तम् । अत एव दापूप्रतिषेध इति वार्तिके एकव[2]चनम् ॥ भाष्ये दिव औदिति । यद्यप्ययमुच्चारणार्थस्तथापि समभिव्याहृतवर्णोच्चारणे सहायसंपादकतया तस्य चारितार्थ्यें विधेयविषये विशिष्टस्यापि विधेयत्वसम्भावनासत्त्वादित्संज्ञालोपयोः प्रवृत्तयोर्बाधे मानाभावादुच्चारणार्थानामपीत्त्वमस्त्येव । किं च तदभावे उच्चारितस्य निवृत्तिः कथं स्यादिति भावः ॥ एतेनोच्चारणार्थानामित्संज्ञा नेति नव्योक्तिः परास्ता ॥ स्तीर्णे बर्हिषि समिधानेऽग्नावित्यादौ ङेरौदिति स्वरितत्वाभावस्तु छान्द[3]सत्वादिति बोध्यम् ॥ न चोच्चारणार्थानामपीत्त्वे णौ गमिरित्याद्यादेशानां नुमापत्तिः । भाविधातुत्वमादाय तत्रेका निर्देशेनादोषात् । अत एव सुब्व्युत्पत्तिः । अन्यथा हनो वध लिङीतिवत्सा न स्यात् । उच्चारणार्थानामपीत्त्वं च 'च्लेः सिच्' 'वेरपृक्तस्ये'त्यादौ भाष्ये स्पष्टमुक्तम् । अनुवाद्यविषये तूच्चारणार्थवर्णविशिष्टस्य तद्रहिते लक्षणा बोध्या । न विधौ परः शब्दार्थ इति विधेयबोधके लक्षणानौचित्यमिति दिक् ॥ उपदेशग्रहणाच्चेति । यत्त्वादेच इति सूत्रे भाष्ये मीनातिमिनोतिदीङामिति सूत्रे एज्ग्रहणानुवृत्तिसामर्थ्यात्परनिमित्तकस्यैच आत्वं नेत्यर्थमाश्रित्योपदेशग्रहणं प्रत्याख्यातम्, तत्तु मीनातिमिनोतीतिसूत्रस्थभाष्यविरोधादेकदेश्युक्तिः । तत्र ह्यवदानसिद्धये एज्विषये आत्वमिति सिद्धान्तितं, नहि तदोक्तार्थज्ञापकत्वं तस्येति भावः ॥

( अनेकान्तपक्षाभ्युपगमभाष्यम् )

अस्तु तर्ह्यनेकान्तः ॥

(प्रदीपः) अस्तु तर्हीति । कार्यलक्षणाय केवलमनुबन्ध उपात्तो न तु तस्यावयवः ॥

(उद्द्योतः) अनेकान्तत्वे उपदेशानर्थक्यमत आह—कार्यलक्षणायेति । कार्यप्रवृत्तये इत्यर्थः ॥

( ८५१ अनेकान्तपक्षदूषणवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ अनेकान्ते वृत्तिविशेषः ॥ * ॥

(भाष्यम्) यदि अनेकान्तो, वृत्तिविशेषो न सिद्ध्यति । किति णितीति कार्याणि न सिद्ध्यन्ति । किं हि स तस्येद्भवति, येनेत्कृतं स्यात् ? ।

(प्रदीपः) वृत्तिविशेष इति । बहुव्रीहिर्न सिद्ध्यति । अनेकान्तत्वे क इद्यस्येति संबन्धाभावात् ॥

( अनन्तरपक्षाभ्युपगमभाष्यम् )

एवं तर्ह्यनन्तरः ॥

(प्रदीपः) अनन्तर इति । यद्यप्यनन्तरादिषु बहुव्रीहिर्न भवति तथापीह वचनसामर्थ्याद्भवति ॥

(उद्द्योतः) सामर्थ्यादिति । सौत्रत्वादिति भावः । अनन्तरेप्यवयवत्वारोपेणेति भाव इत्यन्ये ॥

( ८५२ अनन्तरपक्षदूषणवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ अनन्तर इति चेत्पूर्वोत्तरयोरित्कृतप्रसङ्गः ॥ * ॥

(भाष्यम्) अनन्तर इति चेत्पूर्वोत्तरयोरित्कृतं प्राप्नोति । वुञ्छण् ॥

( ८५३ समाधानवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ सिद्धं तु व्यवसितपाठात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् । कथम् ? । व्यवसितपाठः

---

१ 'रावेवेति' । २ इदं चिन्त्यम्–समाहारद्वन्द्वेऽपि एकवचनोपपत्तिसंभवात् । ( र. ना. ) ३ बहुलं छन्दसीति शास्त्रबलादिति भावः । ( र. ना. ) ४ यदि आदेच इति सूत्रेण परनिमित्तकस्यैच आत्त्वं [illegible] तेनैव सिद्धे मीनातीतिसूत्रं व्यर्थमेव स्यादिति पूर्वसूत्रेण परनिमित्तकस्यैच आत्त्वं न भवतीति ज्ञापयतीति भावः । (र.ना.) ५ सोऽनुबन्धरूप इत्तस्य किस्वादिनाऽभिमतस्य [illegible] किं भवति यदाश्रयणेनेत्कार्यं स्यादिति भावः । ( र. ना. )

**कर्तव्यः । वुञ् छण् । स चावश्यं पाठः कर्तव्यः ।**

(प्रदीपः) व्यवसितपाठादिति । व्यवसितानां विच्छिन्नानां पाठः कर्तव्यः । ततः पूर्वस्यैवासावनन्तरः न तु परस्य । कालव्यवधानात् ॥

(उद्योतः) हलन्त्यसूत्रनिर्णीतधातुत्वादिना परिच्छिन्नत्वरूपव्यवसितत्वस्यात्रासंभवादाह—विच्छिन्नानामिति ॥

( ८५४ समाधानसाधकवार्तिकखण्डम् ॥ १२ ॥ )

**॥ * ॥ इतरथा ह्येकान्तेपि संदेहः ॥ * ॥**

**(भाष्यम्) अक्रियमाणे व्यवसितपाठे एकान्तेपि संदेहः स्यात् । तत्र न ज्ञायते किमयं पूर्वस्य भवत्याहोस्वित्परस्येति ॥**

( संदेहापाकरणभाष्यम् )

**संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति । पूर्वस्येति व्याख्यास्यामः ॥**

(प्रदीपः) व्याख्यानत इति । एकान्तपक्षे एकोवयवो द्वयोर्न भवतीति सन्देहे व्याख्यानान्निश्चयः । अनेकान्तत्वे त्वानन्तर्यस्योभयापेक्षस्य विरोधाभावाद्व्यवसितपाठ एव कर्तव्यः॥

(उद्योतः) नन्वनेकान्तत्वेपि व्याख्यानान्निर्णयोऽत आह—अनेकान्तत्वे त्विति । विरोधाभावादिति । एवं च सन्देहाभावान्न व्याख्यानप्रवृत्तिरिति भावः । विरुद्धानेककोटिविषयज्ञानस्यैव सन्देहत्वादिति तात्पर्यम् ।

( ८५५ समाधानान्तरवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ वृत्ताद्वा ॥ * ॥**

**(भाष्यम्) वृत्ताद्वा सिद्धमेतत् । वृद्धिमन्तमाद्युदात्तं दृष्ट्वा ञिदिति व्यवसेयम् । अन्तोदात्तं दृष्ट्वा किदिति ॥**

(प्रदीपः) वृत्ताद्वेति । वृत्तं प्रयोगः ॥ नन्वाचार्यो भवतु वृत्तज्ञः शिष्यास्तु कथं प्रतिपद्यन्ते ॥ व्याख्यानाच्चेत् । पूर्वमेवैतदुक्तम् । वृत्ताद्वेत्यनेन किं तदेवोच्यते ॥ नैष दोषः । पूर्वं हेतुरहितं व्याख्यानमुक्तम् । वृत्ताद्वेत्यनेन तु हेतुरुच्यते । तस्मिन् प्रतिपन्ने साध्यं स्वयमेवावैति ॥ भाष्यकारेण वा तदुक्तम् इदं तु वार्तिककारेण ॥

(उद्योतः) व्याख्यानाच्चेदिति । व्याख्यातारोत्र प्रत्ययादावीदृशः प्रयोग इति व्याख्यास्यन्ति । तत्र च तत्तत्कार्यं दृष्ट्वा तस्य तस्य तत्तदनुबन्धत्वं निर्णेष्यन्तीत्यर्थः ॥ पूर्वं हेत्वित्यादि । अस्यायमवयव इत्यादिरूपम् ॥ तस्मिन्नित्यादि । वृत्तरूपे हेतौ गुरुमुखादवगते सत्युक्तव्याख्यानविषयसाध्यं स्वयमेव जानातीत्यर्थः ॥ नन्वेवं पूर्वोक्तसमर्थनरूपतया पक्षान्तरत्वाभावेन वाशब्दासामञ्जस्यमत आह—भाष्येति । वस्तुतस्तु विरम्य पाठे तस्य[3] कर्तव्यता वुञ्छणादिसूत्रे द्वन्द्वा[4]नुपपत्तिर्बहुवचनानुपपत्तिश्चेत्यरुचेर्वार्त्तिकका-

रस्य वृत्ताद्वेति परिहारान्तरम् । तत्रैकान्तपक्षेऽसन्देहाय व्याख्यानं शरणमित्युक्तं भाष्यकृतेति न पौनरुक्त्यशङ्केति ध्येयम् ॥

( आक्षेपभाष्यम् )

**युक्तं पुनर्यद् वृत्तनिमित्तको नामानुबन्धः स्यात्, नानुबन्धनिमित्तकेन नाम वृत्तेन भवितव्यम् ॥**

( समाधानभाष्यम् )

**वृत्तनिमित्तक एवानुबन्धः । वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति ॥**

( आक्षेपभाष्यम् )

**उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति । किमत्र न्याय्यम् ? ॥**

( समाधानभाष्यम् )

**एकान्ता इत्येव न्याय्यम् ॥ कुत एतत् ? । अत्र हि हेतुर्व्यपदिष्टः । यच्च नाम सहेतुकं तन्न्याय्यम् ॥**

(उद्योतः) भाष्ये—एकान्ता इत्येव न्याय्यमिति । अनवयवत्वे णशकानां णादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावात् । एवमन्त्यत्वाभावाद्दिशादेः शस्येत्त्वानापत्तिः । अन्त्यादिशब्दयोः परपूर्वसमीपबोधकत्वे[5] लक्षणैव दोषः । किं च दर्शनं[6]चश्रस्य वैयर्थ्यापत्तिः । वुञ्छणूकठजितिविहितके णित्त्वप्रयुक्तवृद्ध्यापत्तिश्चेति भावः ॥

( आक्षेपभाष्यम् )

**ननु चोक्तम् * तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वाद् * इति ॥**

( समाधानभाष्यम् )

**असरूपविधौ तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमसारूप्यं भवति' इति, यदयं ददातिदधात्योर्विभाषां शास्ति ॥**

**यदप्युक्तम्—'सर्वादेश' इति । तत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमनेकाल्त्वं भवति इति' यदयं 'शित्सर्वस्य' इत्याह ॥**

**यदप्युक्तम्—'दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः' इति । न कर्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमनेजन्तत्वं भवति' इति, यदयम् "उदीचां माङो व्यतीहारे" इति मेङः सानुबन्धकस्यात्त्वभूतस्य ग्रहणं करोति ॥ तस्य लोपः ॥ ९ ॥**

(प्रदीपः) मेङ इति । यद्यप्यनेकान्तपक्षस्यापि ज्ञापकमेतद्व्याख्यातुं युज्यते तथापि हेतुरहितत्वादिहानेकान्तपक्षो भाष्यकृता त्यक्तः ॥ प्रदेशान्तरे त्वनेकान्तपक्षेणापि व्यवह्रियते—* सिद्धमनुबन्धस्यानेकान्तत्वात् * इति ॥९॥

(उद्योतः) हेतुरहितत्वादित्युप[6]लक्षणम् ॥ प्रदेशान्तरेषु त्विति । एवं च तत्र सैकदेश्युक्तिरिति भावः ॥ ९ ॥

---

१ निश्चयमित्यर्थः । ( र. ना. ) २ ञिदादिरूपमित्यर्थः । ( र. ना. ) ३ विरामस्येत्यर्थः । ( र. ना. ) ४ संहिताया अभावाद् द्वन्द्वानुपपत्तिः द्वन्द्वाभावे बहुवचनानुपपत्तिरित्यर्थः । ( र. ना. ) ५ तादृशसमीपबोधकत्वे इति अनुवर्तते । (र.ना.) ६ णादेरित्त्वानापत्त्यादीनां पूर्वोक्तानामिति भावः । (र.ना.)

(१२८ यथासंख्यपरिभाषासूत्रम् ॥ १ । ३ । १ आ. ७ सू.)

## १५७ यथासंख्यमनुदेशः समानाम् ॥ १ । ३ । १० ॥

(प्रदीपः) यथासंख्यम् ॥१०॥ संख्यानं गणनमुच्यते । अनुदेशशब्दस्य संबन्धिशब्दत्वादुद्देश्याक्षिप्तः। तेनायमर्थः— समानां समसंख्यानां मध्ये यथागणनमुद्देशिभिः सहानुदेशिनः संबध्यन्ते ।

(उद्द्योतः) यथासंख्य ॥ १० ॥ संख्याशब्दस्यैकत्वादिरूढस्य ग्रहणे वाक्यार्थानुपपत्तिरतो यौगिक इति व्याचष्टे—संख्यानमिति । गणनं, तत्क्रम इत्यर्थः । सूत्रे अनुदेशः पश्चादुच्चार्यमाणसंबन्धः । अत्रोद्देश्यनुदेशिन उच्चार्यमाणा उच्चार्यमाणप्रतिपाद्याश्च । उद्देश्यनुदेशिशब्दौ पूर्वोच्चार्यमाणपश्चादुच्चार्यमाणपरौ, न तूद्देश्यविधेयपरौ 'असूर्यललाटयो' रित्यादौ यथासंख्यानापत्तेः॥ समशब्दो न सर्वपर्यायः क्षुद्रापत्तेः किंतु संख्यासाम्यपरः ॥

(उदाहरणाधिकरणम्)

(आक्षेपभाष्यम्)

**किमिहोदाहरणम्?।**

(उदाहरणभाष्यम्)

**"इको यणचि" दध्यत्र मध्वत्र ॥**

(प्रदीपः) इको यणचीति । इक्शब्देन चत्वारः स्थानिनः प्रत्याय्यन्ते, यण्शब्देनापि चत्वार आदेशा इत्यर्थतोस्ति संख्यासाम्यम् । पश्चात्तु यद्यपीकारादिभिर्बहूनां ग्रहणाद्वैषम्यं तथापि प्रथमतोस्त्येव संख्यासाम्यम् ॥

(उद्द्योतः) नन्विक्शब्देन षट्षष्टेर्यण्शब्देन सप्तानां चोपस्थित्या संख्यासाम्याभावात्कथं यथासंख्यमत आह—इक्शब्देनेति ॥ पश्चादित्यति । इक्पदोपस्थितेकारादिभिर्गृहीतदीर्घादिघटितवाक्यार्थबोधे इत्यर्थः ॥ वस्तुतस्तेषामनुच्चारितत्वेन न ग्राहकत्वं किं त्विक्शब्दादिनेकृत्वेन यण्त्वेन चाइउणित्यादौ तत्तद्व्यक्तिविशेषणतया गृहीतजातिचतुष्टयोपस्थितिरिति यथासंख्यनिर्वाहः ॥ पश्चात् प्रथमत इत्यादि तु चिन्त्यमेव ॥ न च जातिपक्षे सावर्ण्येन ऋकारलकारयोः परस्परजात्यतिदेश एव वाच्य इति ऋकारस्य लृकारापत्तिः । ऋदित्लदिदिति भेदेन निर्देशेन तदतिदेशानित्यत्वेनादोषादनभिधानाद्वेति बोध्यम् ॥

(उदाहरणबाधकभाष्यम्)

**नैतदस्ति । स्थानेन्तरतमेनाप्येतत्सिद्धम् ॥ कुत आन्तर्यम्? । तालुस्थानस्य तालुस्थान ओष्ठस्थानस्यौष्ठस्थानो भविष्यतीति ॥**

(उद्द्योतः) भाष्ये स्थानेन्तरतमेनापीति स्थानेन्तरतमपदघटितेन सूत्रेणेत्यर्थः ॥

(उदाहरणभाष्यम्)

**इदं तर्हि "तस्थस्थमिपां तांतंतामः" इति ॥**

(प्रदीपः) इदं तर्हीति । नात्र स्थानकृतमान्तर्यमस्ति । नाप्यादेशप्रवृत्तिकालेऽर्थकृतान्तर्यसम्प्रत्ययः । प्रवृत्तानामादेशानां स्थान्यर्थाभिधानात् ॥

(उद्द्योतः) नन्वत्राप्यर्थत आन्तर्यादेव सिद्धमत आह—नापीति । विशिष्यार्थापरिज्ञानादिति भावः ॥

(उदाहरणबाधकभाष्यम्)

**ननु चैतदपि स्थानेन्तरतमेनैव सिद्धम् ॥ कुत आन्तर्यम्? । एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थो भविष्यतीति ॥**

(प्रदीपः) ननु चेति । नित्यानां शब्दानां प्रयोगादर्थकृतमान्तर्यमस्त्येवेति भावः ॥

(उद्द्योतः) लक्षणशरणानां प्राक् शास्त्रात् प्रयोगाज्ञानेनार्थविशेषनिर्णयो दुर्लभोत आह—नित्यानामिति । साधुत्वमात्रं शास्त्रैकगम्यं प्रयोगतदर्थज्ञानं तु प्राक् शास्त्रादप्यस्त्येव पाणिनेः । अन्येषां तु व्याख्यानाद्बोध इति भावः ॥

(उदाहरणभाष्यम्)

**इदं तर्हि "तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः" इति ।**

(सूत्रप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**किमर्थमिदमुच्यते? ॥**

(प्रदीपः) किमर्थमिति । पाठक्रमेणैव संबन्धो भविष्यतीति भावः ॥

(उद्द्योतः) पाठेति । लोकसिद्धस्थानाख्यप्रमाणेनैव शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जयेतिवत् सिद्धिरिति भावः ॥

(८५६ समाधानवार्तिकम् ॥ १ ॥)

### ॥ * ॥ संज्ञासमासनिर्देशात्सर्वप्रसङ्गोनुदेशस्य तत्र यथासंख्यवचनं नियमार्थम् ॥ * ॥

**संज्ञया समासैश्च निर्देशाः क्रियन्ते । संज्ञया तावत्—"परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति । समासैः—"तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः" इति । संज्ञासमासनिर्देशादेतस्मात्कारणात् सर्वप्रसङ्गः सर्वस्योद्देशस्य सर्वोनुदेशः प्राप्नोति । इष्यते च समसंख्यं यथा स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तत्र यथासंख्यवचनं नियमार्थम् । एवमर्थमिदमुच्यते ॥**

(प्रदीपः) संज्ञासमासनिर्देशादिति । परस्मैपदानां णलतुसित्यत्र संज्ञया सर्वे युगपत्प्रत्याय्यन्ते इति नास्ति पाठक्रमाद्व्यवस्था । लोकेप्यजाविधनौ देवदत्तयज्ञदत्ता

१ उद्देशी आक्षिप्त इति छेदः । (र. ना.) २ फलितार्थः । अक्षरार्थस्तु समानां समसंख्यानां मध्ये उद्देशिभिः सह पूर्वोच्चार्यमाणैः सह यथागणनम् अनुदेशः पश्चादुच्चार्यमाणानां संबन्धो भवतीति । (र.ना.) ३ आयनेयीनीयियः फढखछघामित्यादौ उच्चार्यमाणाः । (र. ना.) ४ जातिपक्षे इको यणचीत्यत्र । (र.ना.) ५ अत्र स्वाव्यवहितोत्तरत्वसंबन्धेनासूर्यविशिष्टो दृशिरुद्देश्यः खश् प्रत्ययो विधेय इत्यसूर्यदृशयोः परस्परं नास्त्युद्देश्यविधेयभावः । एवं ललाटतपोरपि । (र.ना.) ६ उच्चारित एव प्रत्ययको नानुच्चारित इति भाष्योक्तेरिति भावः । (र. ना.) ७ अनुदेशस्य, अनुदेशिनः, सर्वस्य प्रसङ्गः । अत्र सापेक्षत्वेऽपि समास आर्षः । सर्वस्योद्देशिन इति तु अनुदेशशब्दस्य संबन्धिशब्दत्वादाक्षिप्यते । तदुक्तं भाष्यकृता, सर्वस्योद्देशस्य सर्वोऽनुदेशः प्राप्नोतीति । (र.ना.)

विति समासनिर्देशे नास्ति क्रमनियमः । द्वन्द्वे[1]ऽनेकावयवात्मकः समुदाय [2]ऐकेनैव शब्देन प्रत्याय्यत इति कुतः क्रमनियमः स्यात् ॥

(उद्द्योतः) युगपदिति । परस्मैपदत्वेनेत्यर्थः । एवं च क्रमो नास्तीति भावः । यद्यपि संज्ञा प्रत्येकं पर्याप्तेति न संज्ञाकृतं युगपत्प्रत्यायनं किं त्वेकशेषप्रभावलभ्यं तद् ब्राह्मणानामर्घपाद्याचमनीयानीतिवत् । तत्र ब्राह्मणत्रित्वेपि नार्घादीनां क्रमनियमः, तथापि संज्ञाया नवकसाधारण्यमेव तत्र मूलमिति संज्ञानिर्देशादित्युक्तम् ॥ एकेनैवेति । अवयवानां समुदायोपसर्जनतया समुदायस्यैव पदान्तरार्थेनान्वयादिति भावः ॥ समासेनैकोपस्थितेः पृथगुपस्थित्यभावेन तथान्वयो वक्तुमशक्य इति तत्त्वम् ॥ भाष्ये—सर्वस्योद्देशस्येति । सर्वस्योद्देशिन इत्यर्थः ॥ सर्वोनुदेश इति सर्वेनुदेशिन इत्यर्थः ॥

(आक्षेपभाष्यम्)

**किं पुनः कारणं संज्ञया च समासैश्च निर्देशाः क्रियन्ते ? ॥**

(प्रदीपः) **किं पुनरिति ।** तिपो णल् तसोतुसित्यादि कस्मान्न क्रियत इति प्रश्नः ॥

(उद्द्योतः) तिपो णलिति । यद्यप्येषापि स्वंरूपमिति संज्ञा तथापि संज्ञा वहूनां युगपत्प्रत्यायको यः शब्दस्तत्पर इति भावः ॥

(८५७ समाधानवार्तिकम् ॥ २ ॥)

**॥ * ॥ संज्ञासमासनिर्देशः पृथग्विभक्तिसंज्ञ्यनुच्चारणार्थः ॥ * ॥**

(भाष्यम्) **संज्ञया च समासैश्च निर्देशाः क्रियन्ते पृथग्विभक्तीः संज्ञिनश्च मोच्चीचरमिति ।**

(प्रयोजनान्तरवार्तिकम्)

**॥ * ॥ प्रकरणे च सर्वसंप्रत्ययार्थः ॥ * ॥**

(भाष्यम्) **प्रकरणे च सर्वेषां संप्रत्ययो यथा स्याद् "विदो लटो वा" इति ॥**

(प्रदीपः) **विदो लटो वेति ।** पृथङ्निर्देशे क्रियमाणे मसो म इत्येवानन्तर्यात्संबध्येत्यर्थः । व्य[3]वहितानामपि स्वरितत्वादनुवृत्तावाश्रीयमाणायां प्रतिपत्तिगौरवप्रसङ्गः ॥

(उद्द्योतः) प्रतिपत्तीति । स्वरित[4]त्वस्य लक्ष्यसिद्ध्युन्नेयतया विना शास्त्रमसदादिभिर्दुर्ज्ञेयत्वादिति भावः । संज्ञ[5]या समासेन च निर्देशे सति तस्यैवोत्तरसूत्रेनुवृत्तेर्न दोष इति तात्पर्यम् । एवं चै[6]तत्सूत्रारम्भसामर्थ्यात् सूत्रान्तरस्थमुपसर्जनावयवकृतं च क्रमं गृहीत्वा यथासंख्यप्रवृत्तिरिति तत्त्वम् ॥ अत्र वदन्ति—यद्यपि समासत उपस्थितिरेकैव तथाप्येतत्सूत्रारम्भसामर्थ्यात् पृथग्वाक्यकल्पनया बोधान्तरं कल्प्यते । एवं चेदं सूत्रं द्वन्द्वसमासनिर्दिष्टसंवन्धिनोस्तर्थान्वयेपि द्वन्द्वस्य साधुत्वं बोधयति स्वशास्त्रे, तेन लोके आद्यन्तौ वर्णानां विप्रशूद्रावित्यादेः साधुत्वं नेति ॥

(संख्यातानुदेशविषयनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**किं पुनः शब्दतः साम्ये संख्यातानुदेशो भवत्याहोस्विदर्थतः ? ।**

(प्रदीपः) **किं पुनरिति ।** यद्यप्यर्थे शब्दस्य [9]गुणभावादर्थत एव साम्यं न्याय्यं तथापि शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते यथा भ्रमरशब्दस्य द्विरेफत्वाद्विरेफो भ्रमरः । तथा द्व्यक्षरं मांसं द्व्यक्षरमस्थि । तस्माच्छब्दतोपि साम्यमत्राशङ्कितम् ।

(उद्द्योतः) शब्दधर्मेणापीति । वाच्यवाचकयोरभेदोपचारादिति भावः ॥

(भाष्यम्) **कश्चात्र विशेषः ? ।**

(८५९ शब्दसाम्यपक्षेदूषणवार्तिकम् ॥ ४ ॥)

**॥ * ॥ संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायाव एच इत्यनिर्देशः ॥ * ॥**

(भाष्यम्) **संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायाव एच इत्यनिर्देशः, अगमको निर्देशोऽनिर्देशः । 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति णलादयो बहवः, परस्मैपदानामित्येकः शब्दः, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥ डारौरसः प्रथमस्य—डारौरसो बहवः, प्रथमस्येत्येकः शब्दः, वैषम्यात् संख्यातानुदेशो न प्राप्नोति ॥ "एचोऽयवायावः" अयवायावो बहवः, एच इत्येकः शब्दः, वैषम्यात् संख्यातानुदेशो न प्राप्नोति ॥**

(प्रदीपः) **णलादय इति ।** परस्मैपदशब्देन प्रकृतानामेव नवानां ग्रहणं न तु शतृक्वसोरित्यर्थतः साम्यमस्ति, न तु शब्दतः ॥ **डारौरस इति ।** यदा डारौरसश्च डारौरसश्चेत्येकशेषः क्रियते तदार्थतः संख्यासाम्यमस्ति ॥ **अगमक इति ।** संख्यासाम्यस्यानवबोधक इत्यर्थः ॥

(उद्द्योतः) ननु शब्दतः संख्यया समानां योनुदेशः पश्चादुच्चार्यमाणसंबन्धः स यथासंख्यमिति सूत्रार्थे **परस्मैपदाना**मित्यादौ तादृशानां पश्चादुच्चार्यमाणसंबन्ध एव नेति क्व यथासंख्याप्राप्तिरतो व्यत्ययेन पठति—**णलादय इति ।** विधेयताप्रतीतौ तु न पश्चात्त्वं नियामकं, **लोपो व्योरि**त्यादौ व्यभिचारादिति भावः ॥ **ननु शतृक्वसोरिति ।** व्याख्यानादिति भावः । अन्यथा शतृक्वसुभ्यामेकादश परस्मैपदशब्दार्था इत्यर्थतः सा[11]म्येपि न यथासंख्यं स्यादिति तात्पर्यम् ॥ **न तु शब्दत इति ।** यद्यप्येक एव द्वन्द्वो युगपदेवानेकोपस्थितिजनक इत्यस्ति शब्दतः साम्यं, तथापि प्रत्येकतश्चेत्यर्थः ।

१ 'द्वन्द्वेनाने' । २ 'एवैकेन' । ३ तिपो णलित्यादीनामिति शेषः । (र. ना.) ४ व्यवहितानामपि तिपो णलित्यादीनां स्वरितत्वस्य वेदेत्यादिलक्ष्यसिद्ध्यनुमेयत्येत्यर्थः । (र. ना.) ५ पूर्वत्रेत्यादिः । (र. ना.) ६ यथासंख्यसूत्रारम्भसामर्थ्याद्विदोलटोवेत्यादौ परस्मैपदानामित्यादिसूत्रान्तरस्थम् आद्यन्तौ टकितावित्यादौ द्वन्द्वसमासार्थे समुदाये उपसर्जनीभूतौ यौ आद्यन्तौ अवयवौ तत्कृतश्चेत्यर्थः । (र. ना.) ७ प्रत्येकमन्वयावगाहीत्यादिः । (र. ना.) ८ प्रत्येकमन्वयेऽपीत्यर्थः । (र. ना.) ९ शाब्दबोधेऽर्थे वाच्यतासंवन्धेन शब्दस्य विशेषणतया भानादिति भावः । (र. ना.) १० संख्यातं संख्यानं गणनं तत्प्रयुक्तोऽनुदेशः पश्चादुच्चार्यमाणानां पूर्वोच्चार्यमाणैः संबन्धो न प्राप्नोतीत्यर्थः । (र. ना.) ११ तत्पक्षेऽपीत्यर्थः । (र. ना.)

पदशक्तिज्ञानसहकारेणैव स तथेति नास्ति शब्दतः साम्यम् । परस्मैपदानामित्यत्र त्वेकशेषेऽपि श्रूयमाणैकपदशक्त्यैव नवकोपस्थितिरिति भावः ॥ ननु परस्मैपदात्मनेपदभेदात् प्रथमाः षडित्यर्थपक्षेऽपि न साम्यमत आह—यदेति । भाष्ये अगमक इति । अनिर्देश इत्यत्र मध्यमपदलोपी समास इति भावः ॥ ननु स्थान्यादेशभावावगतिरस्त्येवेत्यत आह—संख्येति ॥

( अर्थसाम्यपक्षाङ्गीकारभाष्यम् )

अस्तु तर्ह्यर्थतः ।

( ८६० अर्थसाम्यपक्षदूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अर्थतश्चेल्लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषः ॥ * ॥

( भाष्यम् ) अर्थतश्चेल्लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषो भवति । "स्यतासी लृलुटोः" स्यतासी द्वौ, लृलुटोरित्यस्य त्रयोऽर्थाः । वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥

"नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" नन्द्यादयो बहवः, ल्युणिन्यचस्त्रयः । वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥

अरीहणादयो बहवः, वुञादयः सप्तदश, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥

"सिन्धुतक्षशिलादिभ्योऽणञौ" सिन्धुतक्षशिलादयो बहवः, अणञौ द्वौ, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥

( प्रदीपः ) लृलुटोरिति । लृशब्दस्य लृङ्लृटावर्थाविति साम्याभावः । यदा तु लृरूपं सामान्यमर्थो लृशब्दस्येति पक्षस्तदास्त्येव साम्यमिति दोषाभावः ॥ नन्वादिष्वप्यवयवेन विग्रहः समुदायः समासार्थ इत्याश्रीयमाणे समुदायत्रयापेक्षया प्रत्ययत्रयस्य साम्यसद्भावाददोषः ॥

( उद्द्योतः ) सामान्यमिति । लृत्वजातिपरो निर्देशः । अत एव द्विवचनसङ्गतिरिति भावः ॥ समुदाय इति । समुदायत्रयमित्यर्थः । प्रत्ययोत्पत्तिस्तु समुदायस्याप्रयोगात् प्रत्यवयवं पर्यवस्यतीति भावः ॥

( ८६१ अर्थसाम्यपक्षदूषणान्तरवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु ॥ * ॥

( भाष्यम् ) आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु च दोषो भवति ॥ आत्मनेपदविधिश्च न सिध्यति—"अनुदात्तङित आत्मनेपदम्" अनुदात्तङितौ द्वौ, आत्मनेपदमित्यस्य द्वावर्थौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

निष्ठा—"रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति रेफदकारौ द्वौ, निष्ठेत्यस्य द्वावर्थौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

सार्वधातुकद्विग्रहणेषु च दोषो भवति—"श्नसोरल्लोपः" श्नमस्ती द्वौ, सार्वधातुकमित्यस्य द्वावर्थौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

( प्रदीपः ) आत्मनेपदेति । नन्वात्मनेपदसंज्ञा न तङ्शब्दस्य किं तु तत्प्रत्यायितानां नवानां तादीनामिति नास्यर्थतः साम्यम् । नैष दोषः । तङ्रूपापन्नास्तादय आत्मनेपदशब्देन प्रत्याय्यन्त इत्यस्ति साम्यम् ॥ सार्वधातुकद्विग्रहणेष्विति । द्वौ गृह्येते येषु तानि द्विग्रहणानि सार्वधातुकस्य द्विग्रहणानीति समासः । सार्वधातुकमपि तेषु गृह्यत इति तेन विशेष्यन्ते ॥

( उद्द्योतः ) तङ्रूपापन्ना इति । संज्ञाशब्दे स्वरूपस्य प्रवृत्तिनिमित्तत्वाद् एकतङ्शब्दैरूपिततया तङ्त्वेनैवोपस्थितानां संज्ञेति संज्ञासूत्रस्यमार्थं साम्यमादाय स्यादयथासंख्यमिति भावः ॥ क्वचित्तु तङ्कपापन्ना इत्येव पाठः ॥ ननु यत्र द्वावुपादीयेते श्नमस्ती सार्वधातुरूपग्रहणं चास्ति तत्र न स्यादिति वक्तव्येऽर्गमकोयं निर्देशोऽत आह—द्वाविति । अधिकरणसाधनग्रहणशब्देन द्विशब्दस्य षष्ठीसमासस्ततः पुनः सार्वधातुकपदेन स इति भावः ॥ सार्वधातुकपदेन षष्ठीसमासे षष्ठीप्रयोजकसंबन्धं दर्शयति—सार्वधातुकमपीति ।

( ८६२ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ एङः पूर्वत्वे प्रतिषेधः ॥ * ॥

( भाष्यम् ) एङः पूर्वत्वे प्रतिषेधो वक्तव्यः । "एङः पदान्तादति" "ङसिङसोश्च" ङसिङसौ द्वौ, एङित्यस्य द्वावर्थौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

( शब्दसाम्यपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि शब्दतः ॥

( उद्द्योतः ) अथ शब्दतः साम्ये उक्तदोषोद्धारमाह—भाष्ये—अस्तु तर्हीति ॥

( आक्षेपभाष्यम् )

ननु चोक्तं *संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायाव एच इत्यनिर्देशः* इति ॥

( समाधानभाष्यम् )

नैष दोषः । "स्थानेन्तरतम" इत्यनेन व्यवस्था भविष्यति ॥ कुत आन्तर्यम् ? । एकार्थस्यैकार्थौ द्व्यर्थस्य द्व्यर्थौ, बह्वर्थस्य बह्वर्थः । संवृतावर्णस्य संवृतावर्णः, विवृतावर्णस्य विवृतावर्णः ॥

१ ल्युणिन्यादीत्यादौ शेषः । ( र. ना. ) २ तङानाविति भावः । (र. ना.) ३–४ 'तङरूपा' । ५ संकेतसंबन्धेनैकतङशब्दविशिष्टत्वेत्यर्थः । ( र. ना. ) ६ विवक्षितार्थावोधक इत्यर्थः । ( र. ना. ) ७ 'पूर्वरूपत्वे' । ८ इत्यनुवर्तमाने इति शेषः । ( र. ना. )

( प्रदीपः ) संवृतावर्ण इति । यद्यपि शास्त्रेऽकारस्य विवृतोपदेशः कृतस्तथापि लौकिकप्रयोगापेक्षयैतदुक्तम् ॥

( उद्योतः ) एकार्थस्येत्यादि । प्रत्यक्त्वादिकमप्युपलक्ष्यते-नेनेति बोध्यम् ॥ यद्यपीति । एवं च संवृतावर्णस्येत्ययुक्तमिति भावः ॥ लौकिकेति । केचित्तु ए ओ इत्यनयोः संवृतावर्णत्वे मानाभावः । ह्रस्वाकारव्यतिरिक्तानां विवृतत्वस्यैवाइउण्सूत्रेभाष्ये उक्तत्वाद्, प्रत्यापत्तिशास्त्रस्यावयवे प्रवृत्तौ मानाभावाच, शास्त्रदृष्ट्या तस्यासिद्धत्वाच्च चिन्त्यमिदमित्याहुः ॥ अन्येत्वेतद्भाष्यप्रमाण्याद् ए ओ इत्यनयोरकारांशे संवृतत्वमेवेतरांशे एव विवृतत्वम् । तदुपरागाच्च न *वृतत्वस्य लोके प्रयोगे स्पष्टमवभासः । ऐ औ इत्येतयोस्त्वकारांशेपि विवृतत्वमेवेत्याहुः ॥

( ८६३ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति ॥ * ॥

**( भाष्यम् ) अतिप्रसङ्गो भवति गुणवृद्धिप्रतिषेधे क्ङिति । गुणवृद्धी द्वे, क्ङितौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥**

( प्रदीपः ) क्ङितौ द्वाविति । क्ङिच्छब्दस्यैकत्वेपि ककारङकारयोर्द्वित्वादस्ति शब्दतः साम्यम् ॥

( उद्योतः ) अतिप्रसङ्ग इत्यादिना वक्ष्यमाणदोषाणां साधारणत्वादाद्यदोषः शब्दसाम्यपक्षे नारोहतीत्यतस्तं तत्रोपपादयति—क्ङिच्छब्दस्येति ॥

( समाधानभाष्यम् )

**नैष दोषः । गकारोप्यत्र निर्दिश्यते ॥**

( उद्योतः ) भाष्ये—गकारोपीति । स्थास्नुरित्यत्रेत्त्वाभावाय क्स्नोर्गित्त्वावश्यकत्वेन जिष्णुरित्यत्र गुणाभावाय तन्निर्देश इति भावः ॥

( तटस्थभाष्यम् )

**तद्गकारग्रहणं कर्तव्यम् ॥**

( सिद्धान्तिभाष्यम् )

**न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो निर्दिश्यते गिति किति ङितीति ॥**

( ८६४ आक्षेपवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ उदिकूले रुजिवहोः ॥ * ॥

**( भाष्यम् ) उदिकूले द्वे, रुजिवहौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥**

( प्रदीपः ) उदिकूल इति । द्वन्द्वोयम् आगन्तुना चेकारेण निर्देश इति चोद्यम् ॥

( उद्योतः ) उत्कूले द्वे इति वाच्ये उदिकूले इति इकारसहितः पाठो व्याख्यानभाष्येऽयुक्त इत्यत आह—आगन्तुनेति ॥ वस्तुत उदि कूले इत्यनुकरणम् । इति द्वे शब्दरूपे इत्यर्थ इति न दोषः ॥

( आक्षेपदूषकभाष्यम् )

**नैष दोषः । नोदिरुपपदम् ॥ किं तर्हि ? । विशेषणं रुजिवहोः । उत्पूर्वाभ्यां रुजिवहिभ्यां कूल उपपद इति ॥**

( प्रदीपः ) उदीति पञ्चम्याः स्थाने सप्तमी कृता । उदः पराभ्यां रुजिवहीत्येताभ्यामिति परिहारः ॥

( उद्योतः ) सप्तमीविभक्तिसाम्येऽर्थवैरूप्यमनुपपन्नमत आह—उदीतीति । एवं रुजिवहोरित्यपि पञ्चम्याः स्थाने षष्ठीति बोध्यम् ॥

( ८६५ आक्षेपवार्तिकम् ॥ १० ॥ )

## ॥*॥ तच्छीलादिषु धातुत्रिग्रहणेषु ॥*॥

**( भाष्यम् ) तच्छीलादिषु धातुत्रिग्रहणेषु दोषो भवति ॥ "विदिभिदिच्छिदेः कुरच्" विदिभिदिच्छिदयस्त्रयः, तच्छीलादयस्त्रयः, तत्र संख्यातानुदेशः प्राप्नोति ॥**

( प्रदीपः ) धातुत्रिग्रहणेष्विति । त्रीणि ग्रहणानि येषां ते त्रिग्रहणा धातवस्त्रिग्रहणा येषु तच्छीलादिषु इति पुनर्बहुव्रीहिः ॥

( ८६६ आक्षेपवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ घञादिषु द्विग्रहणेषु ॥ * ॥

**( भाष्यम् ) घञादिषु द्विग्रहणेषु दोषो भवति । "निरभ्योः पूल्वोः" निरभी द्वौ, पूल्वौ द्वौ तत्र संख्यातानुदेशः प्राप्नोति ॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । इष्यते चात्र संख्यातानुदेशः, निष्पावः अभिलाव इति ॥**

( आक्षेपव्याख्यान्तरभाष्यम् )

**एवं तर्हि अकर्तरि च कारके भावे चेति द्वौ पूल्वौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥**

( उद्योतः ) भाष्ये—एवं तर्ह्यकर्तरि चेति । विशेषणविशेष्यभावापन्नार्थवाचकत्वादकर्तरि कारक इत्येकश्शब्दो, भाव इत्यपर

---

१ यथा प्रत्यगर्थकर्त्रर्थस्य मिपस्स्थाने तादृशो णल् । तथा परागर्थकर्त्रर्थस्य तसादेस्तादृशोऽतुसादिः । ( र. ना. ) २ अत्र इतीत्यस्येत्यर्थः । ( र. ना. ) ३ 'विवृततरत्वम्' । ४ अत्राप्येतद्भाष्यप्रामाण्यादित्येव हेतुः । ( र. ना. ) ५—'आर्धधातुकेक्क्ङिति च' इत्येवं संहितापाठे ककारद्वयश्रवणेन यद्यपि त्रय एव क्क्ङितः, तथापि तत्र ककारद्वयस्य द्वित्वजन्यत्वेनासंहितपाठे द्वित्वाप्राप्त्या द्वावेव क्ङितावित्याक्षेप्तृतात्पर्यम् । ककारात्प्राग्गकार एव चर्त्वभूतो निर्दिष्ट इत्यसंहितपाठेऽपि त्रय एव क्ङित इति सिद्धान्तितात्पर्यम् । एवं "श्र्युकः क्किति" इत्यत्रापि गकारप्रश्लेषं पूर्वपक्षी न जानाति, तत्र कद्वयस्य "शरः खयः" इति द्वित्वेनापि संभवात् । अतएव तत्र यथासंख्यापादनं न कृतम् ॥ एवंच सिद्धान्ते "श्र्युकः क्किति" इत्यत्र स्वरितत्वप्रतिज्ञाभावान्न यथासंख्यापत्तिरिति बोध्यम् । 'झरो झरि सवर्णे' इत्यनेन लोपे तु 'श्र्युकः क्किति' इत्येकककारपाठेऽपि लोपं गकारस्य पूर्वपक्षी न जानातीत्येकककारपाठोऽपि सम्यगेवेति परे । ६ व्याख्यानभाष्ये इति शेषः । ( र. ना. ) ७ तच्छीलतद्धर्मतत्साधुकारिरूपा इत्यर्थः । ( र. ना. ) ८ 'इत्येकः' ।

इति शब्दतः साम्ये एष दोषः । अर्थतः साम्यं तु न, कारकाणां बहुत्वादिति बोध्यम् ॥

( ८६७ आक्षेपवार्तिकम् ॥ १२ ॥ )

## ॥*॥ अवे तॄस्त्रोः करणाधिकरणयोः ॥*॥

( भाष्यम् ) तॄस्त्रौ द्वौ, करणाधिकरणे द्वे, तत्र संख्यातानुदेशः प्राप्नोति ॥

( ८६८ आक्षेपवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ कर्तृकर्मणोश्च भूकृञोः ॥ * ॥

( भाष्यम् ) कर्तृकर्मणी द्वे, भूकृञौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

( प्रदीपः ) कर्तृकर्मणोरिति । भवतेरकर्मकत्वात्कर्तैवोपपदम् । करोतेस्तूपपदद्वये खलिष्यते ॥ अन्ये तु प्राप्त्यर्थस्य भवतेरुपपदद्वये प्रत्ययमिच्छन्ति ॥

( उद्द्योतः ) ननु भवतेरकर्मकत्वात्कर्तर्येव, करोतेस्तु सकर्मकत्वात्कर्मण्येवेति यथासंख्यमिष्टमेवेति भ्रमं वारयति—भवतेरिति ॥ अन्ये त्विति । अत एव—

"हृतदारतयाऽतिकोपनः शरणं किं रघुपुंगवो भवेत् ।
इति रावण मा कृथा मतिं स किलेशः शरणंभवो विभुः"

इति 'तर्कितोऽशरणताकः सुखेन शरणत्वेन प्राप्य' इत्यर्थकमुपपन्नमिति भावः ॥

( ८६९ आक्षेपवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ॥ * ॥

( भाष्यम् ) अनवक्लृप्त्यमर्षौ द्वौ, किंवृत्ताकिंवृत्ते द्वे, तत्र संख्यातानुदेशः प्राप्नोति ॥

( ८७० आक्षेपवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ कृभ्वोः क्त्वाणमुलौ ॥ * ॥

( भाष्यम् ) कृभ्वौ द्वौ, क्त्वाणमुलौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

( ८७१ आक्षेपवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ अधीयानविदुषोश्छन्दोब्राह्मणानि ॥ * ॥

( भाष्यम् ) छन्दोब्राह्मणानीति द्वे, अधीते वेदेति च द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

( प्रदीपः ) छन्दोब्राह्मणानीति । गोबलीवर्दन्यायेन छन्दःशब्देन मन्त्राणां ग्रहणम् । तथा जुष्टार्पिते च छन्दसीति ब्राह्मणानां ग्रहणं, नित्यं मन्त्र इति मन्त्रग्रहणात् । छन्दोग्रहणेनैव तु ब्राह्मणानां ग्रहणे सिद्धे ब्राह्मणविशेषप्रतिपत्त्यर्थं पुनर्ब्राह्मणग्रहणं कृतम् । तेन याज्ञवल्कानि ब्राह्मणानीति तद्विषयता न भवति ॥

( उद्द्योतः ) गोबलीवर्दन्यायेनेति । ब्राह्मणवसिष्ठन्यायोपलक्षणं, गोबलीवर्दयोः सामान्यविशेषभावाभावस्यैकशेषप्रकरणान्ते भाष्ये उक्तत्वात् ॥ तथा पृथग्ब्राह्मणग्रहणे फलमाह—छन्द इति । वस्तुतो गायत्र्यादिछन्दोवद्धेषु मन्त्रेष्वेव छन्दस्त्वमिति बोधयितुं तत्र ब्राह्मणग्रहणम् । जुष्टार्पिते इत्यत्र तु छन्दःपदस्य ब्राह्मणे लक्षणेति बोध्यम् ॥ याज्ञवल्कानीत्यर्थं तु *याज्ञवल्क्यादिभ्यः प्रतिषेधः* इति वचनमेव कृतं भाष्ये ॥ भाष्ये अधीयानविदुषोरिति । तत्र विद्वत्पर्यायो विदुषूशब्दः । अन्यथा वस्वन्तसौत्रिरूपितभत्वाङ्गत्वाभावात्तदसिद्धिरिति बोध्यम् ॥

( ८७२ आक्षेपवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ रोपधेतोः पथिदूतयोः ॥ * ॥

( भाष्यम् ) "रोपधेतोः । प्राचाम्, तद्गच्छति पथिदूतयोः" । रोपधेतौ द्वौ, पथिदूतौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

( ८७३ आक्षेपवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ तत्र भवस्तस्य व्याख्यानः क्रतुयज्ञेभ्यश्च ॥ * ॥

( भाष्यम् ) तत्रभवस्तस्य व्याख्यानौ द्वौ, क्रतुयज्ञौ द्वौ, तत्र संख्यातनुदेशः प्राप्नोति ॥

( ८७४ आक्षेपवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ सञ्ज्ञादिष्वञ्प्रभृतयः ॥ * ॥

( भाष्यम् ) सञ्ज्ञादिष्वञ्प्रभृतयः संख्यातानुदेशेन न सिध्यन्ति ॥

( उद्द्योतः ) सञ्ज्ञादिष्विति । सञ्ज्ञाङ्कलक्षणेष्वञ्यञिञाणित्यत्र त्रिष्वप्यर्थेषु त्रिभ्यः प्रत्यय इष्यते, तत्र *ख्यातानुदेशेन त्रिष्वप्यर्थेष्वञादयोऽण्विशिष्टा न सिध्यन्तीत्यर्थः ॥

( आक्षेपवारकभाष्यम् )

नैष दोषः । घोषग्रहणमपि तत्र कर्तव्यम् ॥

---

१ Bangal Asiatic Society मुद्रितपुस्तकं तु दर्शनेनैव मनोरमम् । २ अशरणं शरणं भूयते प्राप्यते इत्यर्थे कर्मणि उपपदे खल् प्रत्ययः । खित्त्वान्मुम् । ( र. ना. ) ३ तर्कितोऽशरणतोऽरक्षकता यस्येत्यर्थः । ( र. ना. ) ४ चिरंतनप्रोक्तब्राह्मणप्रतिपत्त्यर्थमित्यर्थः । ( र. ना. ) ५ याज्ञवल्क्येन प्रोक्तानि याज्ञवल्कानि 'कण्वादिभ्यो गोत्रे' इत्यणि 'आपत्यस्य तद्धिते' इति यकारलोपे कोपधत्वमेवेति योपधपाठः क्वाचित्कोऽसाधुरेवेति बोध्यम् । ६ 'विशेषवाचकपदसंनिधाने सामान्यवाचकशब्दानां तद्विशेषातिरिक्तपरत्वम्' इति न्यायाश्रयणेनात्र च्छन्दःपदं ब्राह्मणातिरिक्तपरत्वेन मन्त्रपरमेव । एतेनात्र पृथग्ब्राह्मणपदोपादानेन सर्वत्रैव च्छन्दःपदेन मन्त्राणामेव ग्रहणम् न ब्राह्मणानाम्—इति परास्तम् 'मन्त्रे श्वेतवहोक्थशस्'—इत्युत्तरं 'विजुपे छन्दसि' इत्यत्र छन्दःपदवैयर्थ्यापत्तेः । ७ मुख्यार्थबाधादिकं लक्षणाबीजं विनाऽपि यजुषि छन्दःशब्दस्य प्रयोगदर्शनादिदं चिन्त्यम् । ( र. ना. ) ८ वस्तुतस्तु मन्त्रब्राह्मणोभयाभिधायकस्यापि छन्दःपदस्य नित्यं मन्त्रे इति सूत्रानुरोधेनात्र ब्राह्मणमात्रे पर्यवसानम् । शक्त्योपस्थितिर्द्वयोरपि । किन्तु मन्त्रस्य शाब्दबोधेऽनन्वयः उत्तरसूत्रानुरोधात् । ( र. ना. ) ९ तदसिद्धिरिति । वस्तुतस्तु होतृपोतृनेष्टोद्गातार इति समर्थसूत्रभाष्यप्रयोगसिद्ध्ये प्रियसक्थ्ना ब्राह्मणेनेत्यत्राङ्सिद्ध्यर्थं सर्वनामसंज्ञासूत्रभाष्ये दर्शितया 'अङ्गस्य विभक्तौ अस्थिदधिसक्थ्यक्ष्णाम्' इत्यत्र विशेषणविशेष्यभावे कामचारितया अङ्गसंज्ञाप्रयोजकविभक्तौ परतस्तृजन्तानां दीर्घ इत्यर्थाश्रयणवदत्रापि 'अङ्गभसंज्ञाप्रयोजकविभक्तौ परतो वस्वन्तस्य संप्रसारणम्' इत्यर्थाश्रयणेन संप्रसारणसिद्धौ कृतमप्रसिद्धशब्दान्तरकल्पनप्रयासेनेतिचिन्त्यैवेवं कल्पनेति बोध्यम् । १० अनयोरेकवाक्यतायामित्यादिः । एवमग्रिमभाष्येऽपि । ( र. ना. )

( ८७५ आक्षेपवार्तिकम् ॥ २० ॥ )

**॥ * ॥ वेशोयशआदेर्भगाद्यल्खौ ॥ * ॥**

( भाष्यम् ) वेशोयशआदी द्वौ, यल्खौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ॥

( ८७६ आक्षेपवार्तिकम् ॥ २१ ॥ )

**॥ * ॥ ङसिङसोः ख्यत्यात्परस्य ॥ * ॥**

( भाष्यम् ) ङसिङसौ द्वौ, ख्यत्यौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ।

( ८७७ उक्ताक्षेपबाधकसमाधानवार्तिकम् ॥ २२ ॥ )

**॥ * ॥ न वा समानयोगवचनात् ॥ * ॥**

( भाष्यम् ) न वा एष दोषः ॥ किं कारणम् ? । समानयोगवचनात् समानयोगे संख्यातानुदेशं वक्ष्यामि ॥

( प्रदीपः ) न वेति । अनुदेश उच्चारणम् । योगान्तरे तु शब्दान्तरस्यानुमानं न तूच्चारणमिति न्यायप्राप्त एवायमर्थः ॥

( उद्द्योतः ) वचनादिति भाष्यस्य व्याख्यानादित्यर्थं इत्याह—अनुदेश इति ॥ उच्चारणम् । उच्चारितसंबन्ध इत्यर्थः ॥ वस्तुत उच्चारितस्यैव शब्दस्य बोधकत्वं नानुमितादेरित्यणुदित्सूत्रभाष्योक्तेरनुमानपूर्वकस्योच्चारणात् श्रोतुर्बोधः ॥ समानयोग इत्यस्य चैकयोगे वक्रोच्चारितानामित्यर्थ इति वाचनिकमेवेदम् ॥ एतेन 'निरभ्योः' 'अवे तृस्त्रोः' 'स्वाङ्गे तस्प्रत्यये' 'रोपधेतोः' 'ऋतुयज्ञेभ्यः' 'ख्यत्याद्' 'अनवक्लृप्त्यमर्षयो' रित्येतेषु परिहृतो दोषः । समानयोगे द्वयोरुच्चारणाभावात् । छन्दोब्राह्मणानीत्यत्रापि न दोषः । तत्पदोपस्थापितत्वेऽप्युच्चारणाभावात् । अत्र पक्षे 'कर्तृकर्मणोश्च भूकृञोः' 'वेशोयशआदेरि'त्यपरिहृते । ते च *युष्मदस्मदोश्चादेशाः* इति चेन भाष्ये संग्राह्ये[1] ॥

( इति यथासंख्यापत्तिवारणम् )

( अथ यथासंख्यानुपपत्तिप्रकरणम् )

( ८७८ आक्षेपवार्तिकम् ॥ २३ ॥ )

**॥ * ॥ तस्य दोषो विदो लटो वा ॥ * ॥**

( भाष्यम् ) तस्यैतस्य लक्षणस्य दोषः "विदो लटो वा" इति संख्यातानुदेशो न प्राप्नोति ॥

( प्रदीपः ) विदो लटो वेति । अत्र तु लब्धयथासंख्यानामनुमानाददोषः[2] ॥

( उद्द्योतः ) भाष्ये—तस्य दोष इति । *समानयोगे* इत्यस्येत्यर्थः ॥ अत्र तु लब्धेति । इदं च्चिन्त्यम् । तत्तद्योगे वक्रोच्चारितानामेव तथा संबन्ध इति पक्षमुपक्रम्य दोषोक्तेः ॥

( ८७९ आक्षेपवार्तिकम् ॥ २४ ॥ )

**॥ * ॥ ध्माधेटोः नाडीमुष्ट्योश्च[3] ॥ * ॥**

( भाष्यम् ) ध्माधेटोः नाडीमुष्ट्योश्च संख्यातानुदेशो न प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—नाडीमुष्ट्योरिति । इदं तृतीयाध्यायस्थभाष्यविरोधादेकदेशिवचनम् ॥

( ८८० आक्षेपवार्तिकम् ॥ २५ ॥ )

**॥ * ॥ खलगोरथादिनित्रकट्यचश्च[4] ॥ * ॥**

( भाष्यम् ) संख्यातानुदेशो न प्राप्नोति ॥

( ८८१ आक्षेपवार्तिकम् ॥ २६ ॥ )

**॥ * ॥ सिन्धवपकराभ्यां कन् अणञौ च ॥ * ॥**

( भाष्यम् ) संख्यातानुदेशो न प्राप्नोति ॥

( ८८२ आक्षेपवार्तिकम् ॥ २७ ॥ )

**॥ * ॥ युष्मदस्मदोश्चादेशाः ॥ * ॥**

( भाष्यम् ) युष्मदस्मदोश्चादेशाः संख्यातानुदेशान्न सिद्ध्यन्ति ॥

( प्रदीपः ) युष्मदस्मदोश्चेति । बहुवचनस्य वस्नसावित्यादिषु[5] योगेष्वनुमीयमानत्वाद् युष्मदस्मदोर्यथासंख्यं न प्राप्नोति ॥

( उपसंहारभाष्यम् )

तस्माद्यस्मिन्पक्षेऽल्पीयांसो दोषाः, तमास्थाय प्रतिविधेयं दोषेषु ॥

( प्रदीपः ) यस्मिन् पक्ष इति । शब्दतः साम्यमेकयोगे चेत्येष पक्ष आश्रयितव्य इत्याहुः । दोषप्रतिविधानं तु क्वचिदान्तर्याद्व्यवस्था क्वचिदनभिधानाभिधानाभ्यामिति कर्तव्यम् ॥

( उद्द्योतः ) यस्मिन् पक्षे इति । समानयोगे इत्येतत्कारणाकरणपक्षयोर्मध्ये यत्र पक्षे इत्यर्थः ॥ इत्याहुरिति । अत्रारुचिबीजं तूक्तरीत्यार्थत इति पक्षेपि दोषोद्धारस्य सुकरत्वात् तदनाश्रयणं किमर्थमिति ॥ क्वचिदिति । युष्मदाद्यादेशविषये, विदो लट इत्यत्र च ॥ क्वचिदिति । खलगो सिन्ध्वादौ । अत्र संख्यातानुदेशाभावेप्यभिधानात् प्रयोगानुसरणात्समासनिर्देशेपि क्रमेणैवान्वयः[6] ॥ कर्तृकर्मणोश्च भू इत्यत्र वेशोयश इत्यत्र चानभिधानादेतत्सूत्राप्रवृत्तिरित्यर्थः ॥ एकयोगे इत्यस्यानाश्रयणपक्षे त्वनेकस्थलेऽनभिधानाश्रयणमिति तात्पर्यम् ॥

( समाधानान्तरभाष्यम् )

अथ वैवं वक्ष्यामि "यथासंख्यमनुदेशः समानां

---

१ संग्राह्ये इति । इयांस्तु विशेषः—अनयोर्यथासंख्यापत्तिः, युष्मदस्मदादेशेषु तु यथासंख्यानुपपत्तिः—इति । परं तु दोषत्वेन द्वयोरपि परिहार्यत्वमेव । अतएवोभयसंग्रहायैवाग्रे वार्तिके "तस्य दोषः" इति दोषपदमेवोपात्तम् । २ पूर्वसूत्रे लब्धयथासंख्यानां प्रकृतसूत्रेऽनुमानादित्यर्थः । ( र. ना. ) ३—"*स्तने धेटः"* । स्तनंधयः ॥ *मुष्टौ ध्मश्च धेटश्च* मुष्टिंधमः ॥ *नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्* नासिकंधमः नासिकंधयः । नाडिंधमः नाडिंधयः । मुष्टिंधमः मुष्टिंधयः इति हि तत्र भाष्यम् ॥ तेन यथासंख्यं नैवेष्यते इति बोध्यम् । ४ चकारेण समुच्चितं यप्रत्ययमादाय प्रत्ययानां चतुष्ट्वात् प्रकृतीनां त्रित्वात् इति भावः । ( र. ना. ) ५ 'त्यादियोगेषु' । ६ पश्चादुच्चार्यमाणानां पूर्वोच्चार्यमाणैर्गणनाक्रमेण पूर्वं संबन्धाभावेऽपीत्यर्थः । ( र. ना. ) ७ पश्चादित्यादिः । ( र. ना. )

स्वरितेन" ततः "अधिकारः" अधिकारश्च भवति स्वरितेनेति ॥

( प्रदीपः ) अथवेति । यत्र स्वरितत्वं प्रतिज्ञायते तत्रैव शब्दतोऽर्थतो वा साम्याश्रयणेन यथासङ्ख्यं, नान्यत्र सत्यपि संख्यासाम्ये ॥ १० ॥

( उद्द्योतः ) अस्य दुर्ज्ञेयत्वादाह—अथ वेति ॥ १० ॥

( आक्षेपभाष्यम् )

एवमपि स्वरितं दृष्ट्वा संदेहः स्यात्—न ज्ञायते—किमयं समसंख्यार्थः, आहोस्विदधिकारार्थ इति ?॥

( आक्षेपबाधकभाष्यम् )

संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति । समसंख्यार्थ इति व्याख्यास्यामः ॥ यथासंख्यमनुदेशः ॥ १० ॥

( १२९ परिभाषासूत्रम् ॥ १ । २ । १ आ० ८ सू० )

## १५८ स्वरितेनाधिकारः ॥१।३।११॥

( प्रदीपः ) स्वरितेन ॥ ११ ॥ स्वरितेनेतीत्थंभूतलक्षणे तृतीया । स्वरितेनाधिकारो लक्ष्यते इत्यर्थः । स्वरितत्वं सूत्रस्थानां केवलमधिकारज्ञानार्थं प्रतिज्ञायते, न तु प्रयोगसमवायि । अधिकारशब्दो भावसाधनः कर्मसाधनो वा । विनियोगो लोकेऽधिकार उच्यते स एवेह गृह्यते ॥

( उद्द्योतः ) स्वरितेन ॥ ११ ॥ नेयं हेतौ तृतीया, अधिकारस्य स्वरितजन्यत्वाभावादत आह—इत्थंभूतेति ॥ नन्विति । स्वरितोच्चारणस्याधिकारज्ञापनेन चारितार्थ्यात् प्रयोगे शास्त्रान्तरप्राप्तस्वरेण बाध्यत इति भावः । न च स्वरितत्वस्याज्धर्मत्वात् समस्सुटीत्यादावग्रेऽनुवर्तमानहलः[1] कथं तत्त्वम् । तत्समभिव्याहृताचि[2] तत्करणेनादोषात् । स्पष्टं चेदं समस्सुटीत्यत्र कैयटे ॥ इहाधिकारो नोपक्रम इत्याह—अधिकारेति । प्रेरणं तद्विषयीभूतं कार्यं वा लौकिकोऽधिकारः । तत्र शब्दस्य द्विविधं कार्यम्—अर्थबोधः स्वरूपबोधो वा । तत्रार्थबोधस्य वचनैर्निरपेक्षत्वाद् द्वितीये पर्यवसानेन योगेयोगे उपस्थानं फलति । तच्च प्राय उत्तरयोगेषु, क्वचित्पूर्वत्रापि, यथा—संयोगान्तस्य लोपो झलोझलीत्यादाविति भावः ॥

( सूत्रप्रयोजनाक्षेपभाष्यम् )

किमर्थमिदमुच्यते ? ।

( प्रदीपः ) किमर्थमिति । आकाङ्क्षादिवशात्प्रकृतस्य सम्बन्धो लोक इव भविष्यतीति प्रश्नः ॥

( ८८३ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अधिकारः प्रतियोगं तस्यानिर्देशार्थः ॥ * ॥

( भाष्यम् ) अधिकारः क्रियते प्रतियोगं तस्यानिर्देशार्थ इति ॥ किमिदं प्रतियोगमिति ? । योगं योगं प्रति प्रतियोगम् । योगे योगे तस्य ग्रहणं मा कार्षमिति ॥

( आक्षेपभाष्यम् )

किं गतमेतदियता सूत्रेण ? ।

( प्रदीपः ) किं गतमिति । किमयमर्थोऽधिकारशब्देन परिगृहीतः, अथ नेति प्रश्नः ॥

( उद्द्योतः ) उक्तार्थे सूत्रस्य समर्थत्वात्किंगतमिति प्रश्नोऽयुक्तोऽत आह—किमयमिति ॥ यद्यधिकारशब्देन प्रतियोगमुपस्थानमुच्यते, तदा सूत्रं सफलं स्यात् । तस्य ह्यन्योर्थ इत्याक्षेप इति भावः ॥

( समाधानभाष्यम् )

गतमित्याह ॥ कुतः ? । लोकतः ॥ तद्यथा लोके- 'अधिकृतोऽसौ ग्रामे' 'अधिकृतोऽसौ नगरे' इत्युच्यते यो यत्र व्यापारं गच्छति । शब्देन चाप्यधिकृतेन कोन्यो व्यापारः शक्योवगन्तुमन्यदतो योगे योग उपस्थानात् ॥

( प्रदीपः ) शब्देनेति । नहि परिस्पन्दरूपः शब्दस्य व्यापारोस्ति ॥

( उद्द्योतः ) नहीति । अर्थबोधरूपो व्यापारस्तु न वचनैः[3]साध्य इति भावः । पारिशेष्यादुपस्थानलाभ[4] इति बोध्यम् ॥

( ८८४ समाधानबाधकवार्तिकम् ॥ २ ॥ )

### ॥*॥ न वा निर्दिश्यमानाधिकृतत्वाद्यथा लोके ॥ * ॥

( भाष्यम् ) न वा एतत्प्रयोजनमस्ति ॥ किं कारणम् ? । निर्दिश्यमानाधिकृतत्वात् । यथा लोके । निर्दिश्यमानमधिकृतं गम्यते । तद्यथा— 'देवदत्ताय गौर्दीयताम्' 'यज्ञदत्ताय' 'विष्णुमित्राय" इति । गौरिति गम्यते । एवमिहापि "पदरुजवि-

---

[1] विधेयस्य सकाररूपस्येत्यर्थः 'समस्सुटि' इत्यत्रैकसकारविसर्गयुतपाठस्तु लेखकप्रमादज एव तथा पाठेऽनुवर्तमानहलोऽभावेन प्रकृतग्रन्थासंगतिः ॥ एवं द्विसकारकविसर्गयुतपाठोपि लेखकप्रमादज एव । तथासति विधेयसकारस्य स्फुटत्वेन "*संपुंकानां सत्वम्*" इति वार्तिकोत्थानानुपपत्तिः स्यात् ॥ त्रिसकारकपाठे तु विभक्तिसकारस्य द्वित्वेन विधेयसकाराज्ञानेन वार्तिकोत्थानम् । सकारस्य विधेयस्य विवक्षया वार्तिकप्रत्याख्यानसंगतिः ॥ २—ताचीति ॥ तथाचोक्तम् शुक्लयजुःप्रातिशाख्ये कात्यायनेन— "व्यञ्जनं स्वरेण सस्वरम्" इति ॥ अत्रोवटभाष्यम्—"[illegible] स्वरस्याङ्गम्, तत्तेनैव स्वरेण समानस्वरं भवति, इति ॥ तथाच "संयोगादिः पूर्वस्य" "क्रमजं च" इति सूत्राभ्यां मकाराकारस्यैवाङ्गत्वेन मकाराकारे स्वरितत्वकरणेन सकारस्यापि स्वरितत्वमिति केचित् ॥ "स्पर्शश्चोष्मपर ऊष्मा चेत्परश्च' इति तैत्तिरीयप्रातिशाख्यसूत्रेण मध्यमसकारस्योष्मपरकत्वेन पराङ्गत्वबोधनादुकारस्वरेण सस्वरत्वमित्यन्ये ॥ ३ वचनानां निर्गताऽपेक्षा यस्मिन् तत्त्वादित्यर्थः । सूत्रैरनाकाङ्क्षितत्वादित्यभिप्रायः । ( र. ना. ) ४ किन्तु शक्तिसाध्य इति हृदयम् । ( र. ना. ) ५ योगे योगे इत्यादौ शेषः । (र. ना.) ६ पूर्वोत्तरयोर्ग्रहणं प्रसक्तं प्रतीयते इत्यर्थः । ( र. ना. )

शस्पृशो घञ्" "सृ स्थिरे" "भावे" घञिति गम्यते ॥

(प्रदीपः) न वेति । वचनरहितात्लोकव्यवहारादेतत्सा-ध्योर्थः सिद्ध इत्यर्थः ॥ यन्नदत्तायेति । सम्प्रदानविभक्त्या सन्निहिता गोकर्मिका ददातिक्रियापेक्ष्यते । अश्रुतकल्पनायाः श्रुतापेक्षणस्य लाघवात् ॥

(उद्द्योतः) वचनेति । तथा च सूत्रमेवाक्षिप्येत इत्यर्थः । संनिहिता गोकर्मिकेति ॥ गौरिति गम्यत इति भाष्यस्य गौर्दीयतामिति गम्यते इत्यर्थः ॥ श्रुतापेक्षणस्येति पाठः, श्रुतकल्प-नस्येत्यर्थः ॥ लाघवादित्यस्य न्याय्यत्वमिति शेषः ॥

( ८८५ समाधानसाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अन्यनिर्देशस्तु निवर्तकस्त-स्मात्परिभाषा ॥ * ॥

(भाष्यम्) अन्यनिर्देशस्तु लोके निवर्तको भवति। तद्यथा 'देवदत्ताय गौर्दीयताम्' 'विष्णुमित्राय कम्बलः' इति कम्बलो गोर्निवर्तको भवति। एवमि-हापि "अभिविधौ भाव इनुण्" घञो निवर्तकः स्यात् । तस्मात्परिभाषा कर्तव्या ॥

(प्रदीपः) घञो निवर्तकः स्यादिति । ततश्चाक्रोशेऽ-वन्योर्ग्रह इत्यादिष्वनन्तर इनुण् स्यात् । सति सूत्रे घञः स्वरितत्वप्रतिज्ञानादनुवृत्तिर्भवति, न त्विनुणो, विपर्ययात् ॥

(उद्द्योतः) इनुण्विधौ घञो निवृत्तिरिष्टैवेत्यत आह—ततश्चेति ॥

( ८८६ आक्षेपवार्तिकम् ॥ ४ ॥ )

॥ * ॥ अधिकारपरिमाणाज्ञानं तु ॥ * ॥

(भाष्यम्) अधिकारपरिमाणाज्ञानं तु भवति। न ज्ञायते कियन्तमवधिमधिकारोऽनुवर्तत इति ॥

(प्रदीपः) अधिकारपरिमाणाज्ञानं त्विति । यथा धातोरिति किं प्राग्लादेशेभ्योऽथाध्यायपरिसमाप्तेः । अङ्गाधि-कारः प्रागभ्यासविकारेभ्योऽथासप्तमपरिसमाप्तेरिति ॥

(उद्द्योतः) अधिकारपरिमाणशब्देन तत्प्रदेशपरिमाणं विव-क्षितमित्याह—यथेति ॥

( ८८७ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अधिकारपरिमाणज्ञानार्थं तु ॥ * ॥

(भाष्यम्) अधिकारपरिमाणज्ञानार्थं एव तर्हि अयं योगो वक्तव्यः । अधिकारपरिमाणं ज्ञास्या-मीति ॥

( आक्षेपभाष्यम् )

कथं पुनः "स्वरितेनाधिकार" इत्यनेनाधिकार-परिमाणं शक्यं विज्ञातुम् ? ॥

( समाधानभाष्यम् )

एवं वक्ष्यामि—"स्वरितेनाधिकारः" इति । स्वरितं दृष्ट्वाधिकारो न भवतीति ॥

(प्रदीपः) स्वरितं दृष्ट्वेति । प्रकृतस्याधिकारनिवृत्तये शब्दान्तरस्य स्वरितत्वं प्रतिज्ञायते । तेन विंशतिकात्ख इत्यत्र स्वरितत्वदर्शनाद्द्वित्रिपूर्वादित्यस्य निवृत्तिरनुमीयते ॥

(उद्द्योतः) प्रकृतस्येति । सूत्रे स्वरित इति सत्सप्तमीति भावः ॥

( आक्षेपभाष्यम् )

केनेदानीमधिकारो भविष्यति ? ॥

(उद्द्योतः) भाष्ये—केनेदानीमिति । सूत्रं ह्यधिकार-निवृत्त्यर्थं न तु तद्बोधकमिति भावः ॥

( समाधानभाष्यम् )

लौकिकोधिकारः ॥

( ८८८ व्याख्यान्तरनिरसनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ नाधिकार इति चेदुक्तम् ॥ * ॥

(भाष्यम्) किमुक्तम् ? । *अन्यनिर्देशस्तु निव-र्तकस्तस्मात्परिभाषा* इति ॥

( उपसंहारभाष्यम् )

अधिकारार्थमेव तर्ह्ययं योगो वक्तव्यः ॥

( आक्षेपभाष्यम् )

ननु चोक्तम्—*अधिकारपरिमाणाज्ञानं तु* इति ॥

( ८८९ समाधानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ यावतिथोऽलनुबन्धस्तावतो योगानिति वचनात्सिद्धम् ॥ * ॥

(भाष्यम्) यावतिथोऽलनुबध्यते तावतो योगा-नधिकारोऽनुवर्तत इति वक्तव्यम् ॥

(प्रदीपः) यावतिथ इति । द्वित्रिपूर्वान्निष्कादि-त्यत्र इकारोऽनुबन्धः कर्तव्यः । तेन द्वयोर्योगयोरनुवृत्तिर्भवति । एवमन्यत्रापि वेदितव्यम् ॥

(उद्द्योतः) इकारोऽनुबन्ध इति । प्रत्याहारसूत्रस्थक्रमे-णेत्यर्थः ॥

( आक्षेपभाष्यम् )

अथेदानीं यत्राल्पीयांसोऽलः, भूयसश्च योगान-धिकारोऽनुवर्तते, कथं तत्र कर्तव्यम् ? ॥

(प्रदीपः) अल्पीयांस इति । कथं पुनर्भिन्नजातीया-पेक्षया प्रकर्षप्रत्ययः । परमतापेक्षया ॥ अल्पे योगा इति चेन्म-न्यसे तत्राल्पीयांसोऽलः । अथ बहवोऽल इति चेद्भूयांसो योगाः ॥

१ व्यक्तत्वेन संभाव्यते इत्यर्थः । (र. ना.) २ 'गोनिवर्तको' । ३ 'माण-ज्ञानं तु न भवति' । ४ 'ज्ञानार्थमेव' । ५ 'लौकिकोऽधिकार' । ६ अइउण् ... अल्पी' । ८ 'तथा' ।

इति प्रत्याहारसूत्रे इकारस्य द्वितीयत्वादिति भावः । (र. ना.) ७ 'तत्र

(उद्द्योतः) ननु द्वयोरल्पयोरयमल्पीयानिति भवति, नैवम-त्र, अलामल्पत्वात् सूत्राणां बहुत्वादिति शङ्कते—कथमिति। भिन्न-जातीयत्वं बहुत्वेन सूत्राणां बोध्यम् ॥ परिहरति—परमतेति। यावतिथोऽलिति वादी अल्पे योगा बहवोऽल इति मन्यते, आक्षेप्ता तु अल्पेऽलो बहवो योगा इति। एवं च मतभेदेनाल्लां योगानां च प्रत्येकमल्पत्वं बहुत्वं च प्राप्तं तदवलम्ब्यात्र प्रकर्षप्रत्यय इत्यर्थः ॥

( ८९० समाधानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ भूयसि प्राग्वचनम् ॥ * ॥

(भाष्यम्) भूयसि प्राग्वचनं कर्तव्यम्। 'प्राग-मुत' इति वक्तव्यम् ॥

(प्रदीपः) भूयसीति। अङ्गस्य प्राग्द्वेरित्यादि वक्त-व्यम् ॥

(उद्द्योतः) प्राग् द्वेरिति। सर्वस्य द्वे इति द्विशब्दात्प्रा-गित्यर्थः ॥

(आक्षेपभाष्यम्)

तत्तर्हि वक्तव्यम् ॥

(प्रदीपः) तत्तर्हीति। यावतिथोऽलिति भूयसि प्राग्वचनं चेत्यर्थः ॥

(उद्द्योतः) यावतिथ इति। समुदायाभिप्रायं तत्तर्ही-त्येकवचनमिति भावः ॥

(समाधानभाष्यम्)

न वक्तव्यम्। संदेहमात्रमेतद्भवति। सर्वसं-देहेषु चेदमुपतिष्ठते—"व्याख्यानतो विशेषप्रति-पत्तिर्नहि संदेहादलक्षणम्" इति। प्रागमुत इति व्याख्यास्यामः ॥

(प्रत्याख्यानभाष्यम्)

यद्येवं नार्थोऽनेन ॥

(आक्षेपभाष्यम्)

केनेदानीमधिकारो भविष्यति ? ॥

(समाधानभाष्यम्)

लौकिकोऽधिकारः ॥

(आक्षेपभाष्यम्)

ननु चोक्तं—*नाधिकार इति चेदुक्तम्*। किमु-क्तम् ?। *अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा* इति ॥

(समाधानभाष्यम्)

संदेहमात्रमेतद्भवति। सर्वसंदेहेषु चेदमुपति-ष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहाद-लक्षणम्' इत्युक्तम् ॥ इत्तुणघञिति संदेहे घञिति व्याख्यास्यामः।

(प्रदीपः) घञिति व्याख्यास्याम इति। ननु चेत्तुण आनन्तर्यात्संदेहाभावः। उच्यते—घञोनुवृत्तिसामर्थ्य-दृष्टम्, इत्तुणश्चानन्तर्यमिति निमित्तसद्भावादस्ति संदेहः ॥

(उद्द्योतः) घञ इति। आनन्तर्यादित्तुण्वदबहुषु सूत्रेषूपस्थि-ततया संस्कारदार्ढ्याद् घञपि झटित्युपस्थितिक इत्यस्ति सन्देह-निमित्तम् ॥ एवं च व्याख्यानादधिकारनिवृत्तिवदधिकारोपि सिद्ध इति सूत्रं व्यर्थमिति भावः ॥

(आक्षेपभाष्यम्)

न तर्हीदानीमयं योगो वक्तव्यः ॥

(समाधानभाष्यम्)

वक्तव्यश्च। किं प्रयोजनम्। स्वरितेनाधिकारग-तिर्यथा विज्ञायेत। अधिकं कार्यम्। अधिकः कारः ॥

(उद्द्योतः) भाष्येऽधिकारगतिरित्येकं फलमुक्त्वा फलान्त-रमाह—[अधिकं कार्यमिति ॥] अधिकः कार इति। अधिकार-शब्दोऽधिकव्यापारवाची, न्यायप्राप्तादधिकोपि व्यापारो ग्राह्य इति भावः ॥

(उदाहरणभाष्यम्)

अधिकारगतिः—"गोस्त्रियोरुपसर्जनस्य" इत्यत्र गोटाङ्ग्रहणं चोदितं तन्न कर्तव्यं भवति। स्त्रीग्र-हणं स्वरयिष्यते। स्वरितेनाधिकारगतिर्भविष्यतीति स्त्रियामित्येवं प्रकृत्य ये विहितास्तेषां ग्रहणं विज्ञा-स्यते तत्र स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति ॥ [अधिकारगतिः] ॥

(द्वितीयफलोदाहरणभाष्यम्)

अधिकं कार्यम्—अपादानमाचार्यः किं न्याय्यं मन्यते ?। अत्र प्राप्य निवृत्तिः। तेनेहैव स्याद्-ग्रामादागच्छति नगरादागच्छति। सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इत्यत्र न स्यात्। स्वरिते-नाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति ॥ तथा—अधिकरणमाचार्यः किं न्याय्यं मन्यते ? यत्र कृत्स्न आधारात्मा व्याप्तो भवति। तेनेहैव स्यात्—तिलेषु तैलम्, दध्नि सर्पिरिति। गङ्गायां गावः कूपे गर्गकुल-मित्यत्र न स्यात् स्वारितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति ॥ अधिकं कार्यम् ॥

---

१ Bangal Asiatic Society मुद्रितपुस्तके 'आक्षेपात्तु' इति पाठशोधनं शोधकपाण्डित्यादेव। २ वचनद्वयेत्यादिः। (र. ना.) ३ अधि-कारगतिरधिकारज्ञानं यथाविज्ञायेत स्यादित्यर्थः। विज्ञायेतेत्यत्र प्रकृत्यर्थोऽ-विवक्षितः कार्यं क्रियेतेतिवत्। (र. ना.) ४ यद्यपि सर्वेष्वस्मदुपलब्धपुस्तकेषु 'विज्ञायेत' इत्युत्तरम् 'अधिकारगतिः। अधिकः कारः। अधिकं कार्यम्' इत्येवं पाठ उपलभ्यते। संमतश्च तथैव पाठो नागेशस्यापि ॥ तथाप्यग्रे वक्ष्य-माणोदाहरणक्रमे उपसंहारगाथायां च यादृक् क्रमो योग्यः सूचितः तादृगेवा-स्माभिरत्रापि स्थापितः ॥ वस्तुतस्तु नागेशग्रन्थे 'फलान्तरमाह—' इत्युत्तरम् 'अधिकं कार्यमिति' इत्येव ग्रन्थ आसीत् सोऽधुना लेखकप्रमादेन त्रुटित इति प्रतीयते। अत एव 'द्वितीयफलम्—विशेषायेति' इति वक्ष्यमाण-गाथाव्याख्यायां नागेशेनैव व्याहृतम्। ५ अयं कोष्ठकान्तर्गतः पाठो यद्यप्या-धुनिकोद्द्योतपुस्तकेषु नोपलभ्यते। तथापि 'द्वितीयफलम्—विशेषायेति' इति वक्ष्यमाणग्रन्थानुरोधेनास्माभिः पूरितः। वस्तुतस्तु गाथोक्तक्रमस्य छन्दो-लक्षणपरतन्त्रत्वान्न समुपलभ्यमानक्रमविरोधित्वम् इत्यमूलकपाठक्रमकल्पनं दाधिमथस्य साहसम् इति वयम्। (र. ना.) ६ पञ्चमीति शेषः। एवमग्रे सप्तमी। (र. ना.)

(प्रदीपः) **सांकाश्यकेभ्य इति ।** बुद्धया संमीहितैकत्वाः प्रकर्षाश्रयेण पाटलिपुत्रका विभज्यन्ते इति मुख्यापायाभावादपादानसंज्ञा न स्यात् । **ध्रुवमपाये** इत्यत्र तु स्वरितत्व प्रतिज्ञाते सति बुद्धिपरिकल्पितापायाश्रयणेनापि भवति ॥ **कृत्स्न आधारात्मेति ।** सर्वे अवयवा यत्र व्याप्ता इत्यर्थः ॥ **गङ्गायां गाव इति ।** गङ्गाशब्दोत्र नद्यामेव वर्तते न तु तत्समीपदेशे । तस्य हि मुख्यमेवाधारत्वमित्यप्रयोजनमेतत्स्यात् । नद्यास्तु तत्सामीप्याद्गौणमाधारत्वमिति यत्नात्संज्ञासिद्धिः॥

(उद्योतः) **बुद्ध्येति ।** बुद्धिकृतौ विभागसंयोगौ ग्राह्याविति भावः । अभिरूपत्वप्रकारैकबुद्ध्युपारोह एव संयोगः । अभिरूपत्वप्रकारेण सांकाश्यकैरपि संसृज्यमाना बुद्धिरभिरूपतरत्वलक्षणप्रकर्षाश्रयेण साङ्काश्यकान् जहातीति बुद्धेर्विश्लेष एव तद्विषयस्यापि विश्लेष इति भावः ॥ **नद्यास्तु तत्सामीप्यादिति ।** ननु कृत्स्नपदेन व्याप्यवृत्त्याधेयक एव मुख्य आधारो विपरीतस्त्वन्याय्य इति प्रतिपादनेन प्रवाहैकदेशे तरन्तीष्वपि गोषु प्रवाहस्य न मुख्यमाधारत्वमिति किं सामीप्यपर्यन्तधावनेनेति चेन्न । कृत्स्नपदं न तथातात्पर्यकं, कटे आस्ते इत्यादेर्मुख्यत्वानापत्तेः । तस्माद् व्याप्यवृत्त्यव्याप्यवृत्त्युभयसाधारणमेवाधारत्वम् । कृत्स्नत्वं च बह्ववयवाभिप्रायकम् । बह्ववयवसंबद्धाधेयकत्वमेव विवक्षितं, **सर्वे** इत्यपि तदभिप्रायकमेवेत्याशयात् । प्रकृतिः स्वार्थे, सप्तम्येवं गौणाधारत्वार्थिकेति भाव इति कैयटानुसारिणः ॥ वस्तुतः कृत्स्नपदसङ्कोचे न मानं, कटे आस्ते इत्यप्यमुख्यमेव, गङ्गापदस्य प्रवाहपरत्वे तीरपरत्वे चोक्तरीत्या न मुख्यमाधारत्वम् । गङ्गासर्वावयवानामिव तत्समीपदेशसर्वावयवानामपि व्याप्त्यभावात् । किं चात्रौपश्लेषिकमधिकरणत्वम् । अत एव 'मासेऽतिक्रान्ते यद्दीयते तस्यापि मास औपश्लेषिकमधिकरणम्' इति तत्र च दीयत इति सूत्रे भाष्ये उक्तम् । समीपेप्यौपश्लेषिकं तत्त्वम् । व्यापकाधारस्यैवाधिकरणता न्याय्येत्यत्र मानं तु प्रकृत्यर्थतावच्छेदकविशिष्टे विभक्त्यर्थान्वयौचित्यं, नहि कटैकदेशे कटत्वमस्ति, तस्मादेकदेशगताधारत्वस्य कटे आरोपेण बोध इति गौण एव स आधार इति तत्त्वम् ॥

(तृतीयफलोदाहरणभाष्यम्)

**अधिकः कारः—पूर्वविप्रतिषेधाश्च न पठितव्या भवन्ति—*गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धम्* नुमचिरतृज्वद्भावेभ्यो नुट्* इति । नुम्नुटौ स्वरयिष्येते । तत्र स्वरितेनाधिकः कारो भवतीति नुम्नुटौ भविष्यतः ॥**

(प्रदीपः) **पूर्वेति ।** विप्रतिषेधे परं कार्यमिति वचनात्पूर्वो बाध्यः स्वरितत्वप्रतिज्ञानेन बाधकः सम्पद्यते । तुल्यजातीयस्य बाधकः, न तु नित्यत्वादियुक्तस्य ॥ ११ ॥

(उद्योतः) ननु स्वरितत्वेन प्रबलः पूर्वः परमिव नित्यादीनपि बाधेतेत्यत आह—**तुल्यजातीयस्येति ।** यादृशदौर्बल्ये प्रसक्ते प्राबल्याय स्वरितत्वं प्रतिज्ञायते तादृशमेव दौर्बल्यं तेनापनीयत इति भावः ॥

(आक्षेपभाष्यम्)

**कथं पुनरधिकः कार इत्यनेन पूर्वविप्रतिषेधाः शक्या न पठितुम्? ॥**

(समाधानभाष्यम्)

**लोकतः । तद्यथा—लोकेऽधिकमयं कारं करोतीत्युच्यते योयं दुर्बलः सन्बलवद्भिः सह भारं वहति । एवमिहाप्यधिकमयं कारं करोतीत्युच्यते योयं पूर्वः सन्परं बाधते ॥**

**अधिकारगतिस्त्र्यर्था विशेषायाधिकं कार्यम् ।**

**अथ योन्योऽधिकः कारः पूर्वविप्रतिषेधार्थःसः।**

**स्वरितेनाधिकारः ॥ ११ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्य तृतीयपादे प्रथममाह्निकम् ॥**

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्य तृतीयेपादे प्रथममाह्निकम् ॥

(उद्योतः) उक्तमर्थं गाथया संगृह्णाति—भाष्ये **अधिकारगतिस्त्र्यर्थेति** ॥ द्वितीयफलम्—**विशेषायेति** । गौणसंग्रहायेत्यर्थः ॥ तृतीयमाह—**अथ योऽन्य इति** ॥ ११ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतभाष्यप्रदीपोद्द्योते प्रथमस्य तृतीये पादे प्रथममाह्निकम् ॥

(आदितस्त्रयोदशम्)

## अथ प्रथमाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ।

(आदितश्चतुर्दशम्)

(अथात्मनेपदनियमप्रकरणम् ॥)

(१३० नियमसूत्रम् ॥ १ । ३ । २ आ० १ सू०)

### १५९ अनुदात्तङित आत्मनेपदम् ॥ १।३।१२ ॥

(अनिष्टवारणाधिकरणम्)

(८९१ आक्षेपवार्तिकम् ॥ १ ॥)

**[॥ * ॥ विकरणेभ्यः प्रतिषेधः ॥ * ॥]**

(भाष्यम्)

**विकरणेभ्यः प्रतिषेधो वक्तव्यः । चिनुतः । सुनुतः लुनीतः । ङित इत्यात्मनेपदं प्राप्नोति ॥**

(प्रदीपः) **अनुदात्त ॥ १२ ॥ विकरणेभ्य इति ।**

१ बुद्ध्या सांकाश्यकैः सहविषयीकृतभेदाः पाटलिपुत्रकाः अभिरूपतरत्वरूप प्रकर्षाश्रयणेन तेभ्यो विभज्यन्ते इत्यन्वयः । (र. ना.) २ 'तत्वप्रतिज्ञाने' । ३ आधेयेनेत्यादिः । (र. ना.) ४ गङ्गापदरूपेत्यादिः । (र. ना.) ५ 'कैयटे' इति तूचितम् । उक्तमित्यस्योक्तप्रायमित्यर्थः । ध्वनितमिति यावत् । तेन यथाश्रुतपाठ एव शोभन इति वयम् । (र. ना.) ६ पूर्वविप्रतिषेधेन बलवदित्यर्थे लक्षणा । (र. ना.)

लादेशेषु कृतेषु नियमात्पूर्वं नित्यत्वाद्वि करणास्तेषां **सार्वधातुकमपिदिति** ङित्त्वातिदेशादात्मनेपदनियमोनेन प्राप्नोतीति ॥

( उद्द्योतः ) अनुदात्तङि ॥ १२ ॥ ननु लादेशविधायकस्यैतैरेकवाक्यत्वान्नियमोत्तरमेव विकरणोऽत आह—लादेशेष्विति । एकवाक्यतापक्षस्तु [1]भाविसंज्ञाश्रयणक्लेशदुष्ट इति भावः ॥ पक्षप्राप्तपरस्मैपदनिवर्तकतया चास्य नियमत्वम् । स्पष्टाचेयं रीतिर्युष्मद्युपपद इति सूत्रे कैयटे ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । नैवं विज्ञायते– 'ङकार इद्यस्य सोयं ङिद् ङितः' इति ॥ कथं तर्हि ? । ङकार इद् ङित् ङित इति ॥**

( प्रदीपः ) **ङकार इदिति** । अन्यपदार्थापेक्षणाद्बहिरङ्गो बहुव्रीहिः । तत्पुरुषस्तु वर्तिपदार्थप्रधानत्वादन्तरङ्ग इति स एवाश्रीयते । केवलाच्च ङकारादित आत्मनेपदासम्भवात्सामर्थ्यात्तदन्तविधेर्वाऽत्र ङिदन्त आश्रीयते । तेन ङिदन्तादात्मनेपदमित्यर्थः ॥

( उद्द्योतः ) **केवलाच्चेति** । तस्य लोपावश्यंभावादिति भावः ॥ **सामर्थ्यादिति** । तेन च **येन विधिरिति**शास्त्र[2]प्रवृत्त्यभावेपि तदन्तग्रहणमित्यर्थः ॥ **तदन्तविधेर्वेति** । शब्दं विशेष्यीकृत्य तत्सामर्थ्यात् शास्त्रप्राप्तेर्वेत्यर्थः ॥ **तेन ङिदन्तादिति** । इत्संज्ञकङकारान्तादित्यर्थः । अतिदेशे तु ङिदितिबहुव्रीहिरेव क्ङिति चेत्याद्यनुरोधादिति भावः ॥

( आक्षेपबाधकान्तरभाष्यम् )

**अथ वोपदेश इति वर्तते ॥**

( प्रदीपः ) **अथवेति** । तेनोपदेशे यो ङित्तस्मादात्मनेपदम्, न त्वातिदेशिकङित्त्वेभ्यः ॥

( उद्द्योतः ) **तेनेति** । अत्र पक्षे ङिदितिबहुव्रीहिरेवेति भावः ॥ बहिरङ्गोपि क्ङिति चेत्याद्यैकरूप्याय शास्त्रे आश्रीयत इति बोध्यम्॥

( आक्षेपबाधकान्तरभाष्यम् )

**अथवोक्तमेतत् *सिद्धं तु पूर्वस्य कार्यातिदेशाद्* इति ॥**

( उद्द्योतः ) भाष्ये—**सिद्धं तु पूर्वस्येति** । पूर्वपदस्य परभिन्नपरत्वात्पचेते इत्यादावातो ङित इति भवत्येव ॥

( आक्षेपसाधकभाष्यम् )

**सर्वथा चङङ्भ्यां प्राप्नोति ॥**

( समाधानभाष्यम् )

**एवं तर्हि 'धातोः' इति प्रकृतं वर्तते ॥ क्व प्रकृतम् ? । "भूवादयो धातवः" इति ॥**

( प्रदीपः ) **एवं तर्हीति** । अत्रापि पक्षे उच्चुकुटिषतीत्यतिप्रस[3]ङ्गनिवारणार्थं **सिद्धं तु पूर्वस्य कार्यातिदेशा**दित्यप्याश्रयणीयम् ॥

( उद्द्योतः ) **अत्रापीति** । कुटेः सनो गाङ्कुटादिभ्य इति ङित्त्वात्सनन्तस्य ङिदन्तधातुत्वादिति भावः ॥ शेत इत्यादौ तु व्यपदेशिवद्भावात् सिद्धिरिति बोध्यम् ॥ **इत्यपीति** । उपदेशपदानुवृत्तिर्वा कर्मधारयो वेत्यपि बोध्यम् ॥

( आक्षेपभाष्यम् )

**तद्वै प्रथमातिर्दिष्टम्, पञ्चमीनिर्दिष्टेन चेहार्थः ॥**

( समाधानभाष्यम् )

**अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा— 'उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्व' 'एनं देवदत्तम्' इति गम्यते । 'देवदत्तस्य गावोऽश्वा हिरण्यं च' 'आढ्यो वैधेयः[4]' 'देवदत्त' इतिगम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं[5] द्वितीयानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्पञ्चमीनिर्दिष्टं भविष्यति ॥**

( प्रकरणप्रयोजनाक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ।**

(प्रदीपः) **किमर्थमिति** । किं विहितानां लादेशानामनेन नियमः क्रियते । अथ वाक्यैकवाक्यतया विधिरिति प्रश्नः ॥

( उद्द्योतः ) [ [6]वाक्यैकवाक्यतयेति । आपाततोऽवान्तरवाक्यार्थबोधोत्तरं वाक्यैकवाक्यतया महावाक्यार्थबोध इत्यर्थः ॥ ] इति प्रश्न इति ॥ प्रयोजनस्य स्पष्टत्वान्न तदाक्षेपपरमिति भावः ॥ चङाद्यन्ते प्रकारान्तरेणातिव्याप्तिं परिहर्तुमयमुपक्षेप इति बोध्यम् ॥

( ८९२ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ आत्मनेपदवचनं नियमार्थम् ॥*॥

( भाष्यम् ) **नियमार्थोयमारम्भः ॥**

( प्रदीपः ) **नियमार्थ इति** । एकवाक्यतायां भाविनी संज्ञाश्रयणीयेति वाक्यभेद एवाश्रीयते । तेन नियमोयं सम्पद्यते ॥

( उद्द्योतः ) **एकवाक्यतायामिति** । लादेशाश्रयसंज्ञामूलविधानेऽन्योन्याश्रयापत्तेरनुदात्तङित इत्यादौ भाविसंज्ञाश्रयणीया स्यात् । अनुदात्तङितो लस्य स्थाने ते तिबादयो भवन्ति, येषां जातानामात्मनेपदसंज्ञा भविष्यतीत्यर्थादिति भावः ॥ **वाक्यभेद एवेति** । वाक्यभेदेप्येतन्मुखनिरीक्षणेनैव लक्ष्यसंस्कारकं तिबादिसूत्रं न ततः स्वतन्त्रमिति बोध्यम् । नियमार्थत्वपक्षेऽन्येषां प्राप्तानामेतत्सामर्थ्यान्निवृत्तिः । एकवाक्यतापक्षे तु तेषामप्राप्तिरेवेति विशेषः ॥

---

१ आत्मनेपदशब्दे इत्यादिः । (र.ना.) २ विशेष्यवाचकपदाभावादिति भावः । ( र. ना. ) ३ आत्मनेपदप्राप्तिरूपेत्यादिः । (र. ना.) ४ 'वैधवेयः' । ५ 'तस्य लोपः' इति सूत्रे भाष्ये तु 'सदर्थाद्द्वितीयानिर्दिष्टं प्रथमानिर्दिष्टं च' इत्येवमेवोपलभ्यते । ६ अयं कोष्ठकान्तर्गतः पाठो बहुषु पुस्तकेषु 'इति प्रश्न इति' इति प्रतीकव्याख्यासमाप्तौ 'इति बोध्यम्' इत्युत्तरं समुपलभ्यमानोपि 'इति प्रश्न इति' इति प्रतीकतः प्राक् समुचितः इति मत्वा योग्यस्थाने स्थापित इति क्षन्तव्यम् । ७ प्रस्ताव इत्यर्थः । ( र. ना. )

( आक्षेपभाष्यम् )

**किमुच्यते नियमार्थोयमिति न पुनर्विध्यर्थोपि स्यात्? ॥**

( उद्योतः ) भाष्ये तिप्तसिल्यादिना सिद्धत्वान्नियमार्थत्वमित्यजानानः शङ्कते—किमुच्यते इति ॥

( ८९३ समाधानसाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ लविधानाद्विहितम् ॥ * ॥**

( भाष्यम् ) **लविधानाद्ध्यात्मनेपदं परस्मैपदं च विहितम् ॥**

( उद्योतः ) लविधानादिति । लपदं तदादेशलक्षकमिति बोध्यम् ॥

( भाष्यम् ) **अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥**

( ८९४ आक्षेपवार्तिकम् ॥ ४ ॥ )

**[॥ * ॥ विकरणव्यवहितत्वात्तु नियमाप्राप्तिः ॥ * ॥]**

( भाष्यम् ) **विकरणैस्तु व्यवहितत्वान्नियमो न प्राप्नोति ॥ इदमिह संप्रधार्यं, विकरणाः क्रियन्तां नियम इति । किमत्र कर्तव्यम्?। परत्वाद्विकरणाः नित्याः खल्वपि विकरणाः, कृतेपि नियमे प्राप्नुवन्त्यकृतेपि प्राप्नुवन्ति । नित्यत्वाच्च परत्वाच्च विकरणेषु कृतेषु विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति ॥**

( प्रदीपः ) **परत्वादिति ।** विकरणानामवकाशः, अलादेशाश्चानशादयः। नियमस्यावकाशः लिङ्लिटावार्धधातुकैसंज्ञौ। स्पर्द्धत इत्यादावुभयप्रसङ्गे परत्वाद्विकरणस्तेन व्यवधानान्नियमाप्रसङ्गः ॥

(उद्योतः) अन्यतरस्यानवकाशत्वे विप्रतिषेधायोगाद् द्वयोः सावकाशतां दर्शयति—**विकरणानामिति** । यद्यपि नित्यानित्ययोरयुक्तः स, तथापि पूर्वं नित्यत्वास्मृतेर्न दोष इति बोध्यम् ॥ **परत्वादिति** । यद्यपि प्राप्तस्यैव बाध इति सार्वधातुकपरत्वं दुरुपपादं तथापि शास्त्रतः प्राप्तिमात्रेण बौद्धं परत्वमादाय तत्प्रवृत्तिरिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । अनवकाशो नियमः ॥**

( प्रदीपः ) **अनवकाश इति ।** सर्वत्र विकरणानां व्यवधायकत्वादिति भावः ॥

( उद्योतः ) इति भाव इति । इत्यभिमान इत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**सावकाशः ॥ कोऽवकाशः?। य एते लुग्विकरणाश्च श्लुविकरणाश्च, लिङ्लिटौ च ॥**

( परिभाषात्वाङ्गीकारभाष्यम् )

**यदि पुनरियं परिभाषा विज्ञायेत । किं कृतं भवति?। 'कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं तत्र द्रष्टव्यम्'। लस्य तिबादयो भवन्तीत्युपस्थितमिदं भवति "अनुदात्तङित आत्मनेपदम्" "शेषात्कर्तरि परस्मैपदम्" इति ॥**

( प्रदीपः ) **यदि पुनरिति ।** आत्मनेपदपरस्मैपदाभ्यां लिङ्गाभ्यामिदं प्रकरणं लादेशविधावुपतिष्ठते। तत्र महावाक्येन विहितेषु लादेशेषु विकरणा इति दोषाभावः ॥ स्यादिषु कथम्। ते हि लावस्थायामेव विधीयन्ते इति तैर्व्यवधानान्नियमो न प्राप्नोति ॥ उच्यते—लमात्रापेक्षत्वादन्तरङ्गत्वाल्लादेशेषु कृतेषु लकारविशेषापेक्षया बहिरङ्गाः स्यादयो भविष्यन्ति **येन नाप्राप्तिन्यायेन शबादीन्बाधित्वा ।** शबादिविधावनुवर्तनाद्वा ॥

( उद्योतः ) परिभाषाया लिङ्गवत्त्वनियमात्तद्दर्शयति—**आत्मनेपदेति ।** यथोद्देशे वाक्यभेदस्यैव सत्त्वात्कार्यकालाश्रयणम्। उपस्थितस्य च वाक्यैकवाक्यतयान्वयः। स चेत्थम्—लस्य स्थाने तिवादयो भवन्ति। ते चानुदात्तङितः परस्य लस्य स्थाने तादृशा भवन्ति। येषां जातानामात्मनेपदसंज्ञा भवतीति ॥ न चावान्तरवाक्यार्थबोधोत्तरं तेषां लस्थानिकत्वज्ञानादात्मनेपदादिसंज्ञोत्तरमेवैकवाक्यतास्तु किं भाविसंज्ञाश्रयणेनेति वाच्यम् । अस्य तत्रोपस्थितौ तावत्पर्यन्तं तेनासंबद्धतयाऽवस्थाने मानाभावात् । अन्तरङ्गतयाऽनेन संबन्धानुभवोत्तरमेव तिवादिभिः संज्ञानुभवात् ॥ **तत्र महावाक्येनेति ।** अत एव भाष्येपि **लस्य तिबादयो भवन्तीत्युपस्थितमिदं भवति—अनुदात्तेत्याद्युक्तम्** ॥ अत्रेदं बोध्यम्—कार्यकालपक्षेपीदमेव सूत्रं स्वाकाङ्क्षया तेनैकवाक्यतामनुभवति । **परिभाषेत्यस्य** परिभाषावदित्यर्थः। यथा परिभाषा कार्याकाङ्क्षावशात्तेनैकवाक्यतापन्ना तथेदमपि स्वाकाङ्क्षावशात्। आकाङ्क्षोत्थापके च लिङ्गव्यवहारः। प्रकृते चास्य तदाकाङ्क्षोत्थापकावात्मनेपदत्वादिना बोधकावेतौ शब्दाविति तत्र लिङ्गत्वव्यवहारः ॥ एतेन सर्वत्र परिभाषालिङ्गं विधेः परिभाषाकाङ्क्षोत्थापकं विधौ दृष्टं, न चात्र तथा, विधिसूत्रे आत्मनेपदत्वादिनानुपस्थितेरितीदमयुक्तमित्यपास्तमिति ॥ एवं च धातोरित्यनुवृत्त्यर्थं मण्डूकप्लुतिर्विभक्तिविपरिणामश्च नाश्रयणीयाविति बोध्यम् ॥ **लकारविशेषेति** । अपरनिमित्तकत्वेन लादेशानामन्तरङ्गत्वं वक्तुं योग्यम्, ईदृशान्तरङ्गत्वस्य भाष्ये क्वाप्यनाश्रयणादिति केचित् ॥ नन्वेवं परत्वाच्छवादयः स्युरत आह—**येन नेति** ॥ ननु भावकर्मणोरस्य चारितार्थ्यात्कथमयं न्यायः। न च तत्रापि यका बाधः। एवं तर्हि **पुरस्तादपवादा** इतिन्यायेन यक एव बाधः स्यान्न शबादेः। किं च श्यनादिभिर्येन नाप्राप्तिन्यायाभावात्तद्विषये सावकाशाः । किं च लुग्विकरणादिषु शपो निवृत्तौ स्यादयः सावकाशा इत्यत आह—**शबादीति ।** आदेशेषु कृतेषु लावस्थाभावात्स्याद्यप्राप्तेश्चिन्त्यमिदम्। लावस्थायां स्यादय इत्यनाश्रित्येदमिति वक्तुं युक्तम्। तत्पक्षे तु धातोरितिवदनुदात्तङित इत्यपि विहितविशेषणमिति बोध्यम् ॥

---

१ लादेशविधायकार्तिवादिसूत्रादित्यर्थः । ( र. ना. ) २ लादेशभिन्नैः इत्यर्थः। ( र. ना. ) ३ तत्र विकरणानां प्राप्तिरेव नेति भावः । ( र. ना. ) ४ तथाच तदानीं विकरणो दुर्लभ इति भावः। ( र.ना. ) ५ लादेशविधायकसूत्राणामनुवर्तनादेकवाक्यतया युगपदेव तयोर्विधानादिति भावः। अत्र शबादिपदं स्यादीनामुपलक्षणम्। ( र. ना. ) ६ लादेशस्यादीनां यौगपद्यस्य कैयटाभिमेतत्वादिदमयुक्तोपालम्भनम्। ( र. ना. )

( अन्योन्याश्रयाक्षेपभाष्यम् )

**एवमपीतरेतराश्रयं भवति ॥ का इतरेतराश्रयता ? ॥ अभिनिर्वृत्तानां लस्य स्थाने तिवादीनामात्मनेपदपरस्मैपदसंज्ञया भवितव्यम् । संज्ञया च तिवादयो भाव्यन्ते । तदितरेतराश्रयं भवति, इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

( प्रदीपः ) **एवमपीति ।** एकवाक्यतापक्षे विहिता लादेशा न सन्ति येन तेषां सतामात्मनेपदपरस्मैपदसंज्ञे स्याताम् । ततश्चैतत्परिभाषोपस्थाने सति संज्ञाश्रयं लादेशविधानम्, लादेशविधानाश्रया च संज्ञेति भावः ।

( उद्द्योतः ) एकवाक्यतेति । परिभाषापक्षे इति भावः ॥

( अन्योन्याश्रयपरिहारभाष्यम् )

**परस्मैपदेषु तावन्नेतरेतराश्रयं भवति । परस्मैपदानुक्रमणं न करिष्यते ॥**

( प्रदीपः ) **परस्मैपदानुक्रमणमिति ।** नन्वसति परस्मैपदानुक्रमणे परस्मैपदमनुदात्तङिन्त्यः[1] प्राप्नोति । नैष दोषः । आत्मनेपदसम्बन्धावगमेन तेषां परस्मैपदसम्बन्धस्य बाधनाच्छेषादेव परस्मैपदमवस्थास्यते ॥

( उद्द्योतः ) नन्वसतीति । प्रत्ययनियमाश्रयणेऽनुदात्ता[3]दिभ्य एवात्मनेपदं धातुमात्रात्परस्मैपदमिति पर्यवसानात् कादिविषये क्विविवेति भावः ॥ बाधनादिति । प्रकृतिनियमाश्रयणेनेत्यर्थः । कक्रिपोस्तु वासरूपविधिना समावेश इति भावः ॥

( आक्षेपभाष्यम् )

**अवश्यं कर्तव्यम् "अनुपराभ्यां कृञः" इत्येवमर्थम् ॥**

(प्रदीपः) **अवश्यमिति ।** आत्मनेपदबाधनार्थमित्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**ननु चैतदप्यात्मनेपदानुक्रमण एव करिष्यते "स्वरितञितः कर्त्रभिप्राये क्रियाफले" आत्मनेपदं भवति, "कर्तर्यनुपराभ्यां कृञो न" इति ॥**

( अन्योन्याश्रयपरिहारभाष्यम् )

**आत्मनेपदेषु चापि नेतरेतराश्रयं भवति ॥ कथम् ? ॥ भाविनी संज्ञा विज्ञास्यते सूत्रशाटकवत् । तद्यथा—कश्चित्कंचित्तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वय' इति । स पश्यति—यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाभिप्रेता—स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवति—इति । एवमिहापि—स लस्य स्थाने कर्तव्यः, यस्याभिनिर्वृत्तस्यात्मनेपदमित्येषा संज्ञा भविष्यति ॥**

( नियमपक्षाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु नियमः ॥**

( उद्द्योतः ) भाष्ये—अथ वा पुनरिति । वाक्यभेदेनेत्यर्थः[4]॥

( आक्षेपसारणभाष्यम् )

**ननु चोक्तं विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति ॥**

( आक्षेपनिरसनभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'विकरणेभ्यो नियमो बलीयान्' इति । यदयं विकरणविधावात्मनेपदपरस्मैपदान्याश्रयति "पुषादिद्युताद्यॢदितः परस्मैपदेषु" "आत्मनेपदेष्वन्यतरस्याम्" इति ॥**

( प्रदीपः ) **यदयमिति ।** कृतेनियमानामसङ्करेण[5] स्थितानां हि निमित्तभावोपपत्तिः ॥

( उद्द्योतः ) **कृतेति ।** भिन्नवाक्यतायां तिवादिसूत्रेणापातप्रतया[6] प्रसक्तत्वेन प्रतिपन्नस्य न निमित्तत्वमिति भावः ॥

( नियमपक्षसाधकज्ञापकनिरसनभाष्यम् )

**नैतदस्ति ज्ञापकम् । अभिनिर्वृत्तानि हि लस्य स्थाने आत्मनेपदानि च ॥**

( प्रदीपः ) **अभिनिर्वृत्तानीति ।** प्रागपि नियमात्तेषां सम्भवमात्रेण निमित्तत्वाविरोधात् ॥

( उद्द्योतः ) भाष्ये अभिनिर्वृत्तानीत्यस्य प्राप्तानीत्यर्थः ॥

( ज्ञापकान्तरभाष्यम् )

**यत्तर्हि—"अनुपसर्गाद्वा" इति विभाषां शास्ति ॥**

( प्रदीपः ) **यत्तर्हीति ।** एतत्तु लिङ्लिङर्थं स्यात् । चक्रमे चक्राम क्रम्यात् कंसीष्टेति । तस्माज्ज्ञापकदिक् प्रदर्शिता भाष्यकृता । ज्ञापकं तु **वृद्भ्यः स्यसनोरित्र स्ये** विकल्पविधानम् ॥

( उद्द्योतः ) **वृद्भ्य इति ।** अन्यथा विकरणव्यवधाने नियमाप्रवृत्तावुभयोरपि पदयोः सामान्यशास्त्रेण सिद्धतया तद्विधानं विफलं सदेतदर्थज्ञापकम् ॥ स्ये इति त्वेतत्पक्षे विषयसप्तमीति भावः । विकरणव्यवधानेपि नियमप्रवृत्तिर्ज्ञाप्यत इति **शदेः शित इति सूत्रे** भाष्ये ध्वनितमिति वक्ष्यते ॥ अत एव **लावस्थायां स्यादय इति** पक्षेपि न दोषः[7] ॥ केचित्तु भाष्यप्रामाण्यादनुपसर्गाद्वेत्यस्याशीर्लिङ्लिटोरप्रवृत्तिरित्याहुः ॥

---

१ प्रकृतिविशेषमुद्दिश्य परस्मैपदानां विधानमित्यर्थः । (र. ना.) २ 'न्धवाधना' । ३ 'दात्तङिदादि' इति तूचितम् । ४ एवं नियमपक्षे दोषेण परिभाषात्वे स्थापिते '*तत्र प्रत्ययनियमे*' इति वक्ष्यमाणवार्तिकसंगतये पुनर्नियमपक्षमभ्युपगच्छति—अथवेति । ५ इतरनिवृत्तिपूर्वकं परस्परासंकरेण स्थितानां परस्मैपदानामात्मनेपदानां वा निमित्तत्वोपपत्तिरित्यर्थः । ( र. ना. ) ६ अविचारितरूपतयेत्यर्थः । (र.ना.) ७ यत्र न विकरणप्राप्तिरिति भावः । (र.ना.)

( अथ प्रत्ययनियमप्रकृत्यर्थनियमनिर्णयप्रकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयं प्रत्ययनियमः—अनुदात्तङित एवात्मनेपदं भवति, भावकर्मणोरेवात्मनेपदं भवतीति। आहोस्वित्प्रकृत्यर्थनियमः[1]—अनुदात्तङित आत्मनेपदमेव, भावकर्मणोरात्मनेपदमेवेति ॥**

( प्रदीपः ) **किं पुनरिति** । उभयनियमस्तावन्न संभवति । अनेकस्मिन्नर्थे वाक्यस्यैकस्य तात्पर्यायोगात् । तस्मादन्यतरनियमसंभवात्प्रश्नः ॥ ननु प्राधान्यात्प्रत्ययानां नियमो[2] युक्तः ॥ एवं तर्हि प्रधानोपरोधो[3] मा भूदिति प्रकृत्यर्थनियमोपि संभवति ॥ **भावकर्मणोरेवेति** । ननु पूर्वेण[4] नियमाद्भावकर्मणोरिति सूत्रं विध्यर्थं[5] न्याय्यं न तु नियमार्थम् ॥ नैष दोषः । समस्तमात्मनेपदप्रकरणमेकं वाक्यमिति तदपेक्षयैतदुक्तम्[6] ॥

( उद्द्योतः ) उभयनियमपक्षोपि सम्भवन् किमिति नोक्त इत्यत आह—**उभयेति** ॥ **एकस्येति** । सकृदुच्चरित इतिन्यायादिति भावः ॥ **नन्विति** । 'प्रधाने कार्यसंप्रत्ययाद्' इति न्यायादित्यर्थः ॥ **एवं तर्हीति** । न्यायद्वयस्यापि सत्त्वात्संदेह इति प्रश्नः ॥ **प्रकृत्यर्थेति** । द्वन्द्वः[7] ॥ **नन्विति** । **अनुदात्तङितः एवेत्य**त्रैवकारस्यान्ययोगव्यच्छेदार्थकत्वात्प्रकृत्यन्तरात्कुत्राप्यर्थे तदप्राप्तौ विध्यर्थत्वमेव न्याय्यमिति भावः ॥ **नैष इति** । खलेकपोतन्यायेन संपूर्णप्रकरणं युगपदेव प्रवृत्तमिति भावः ॥

( भाष्यम् ) **कश्चात्र विशेषः ?** ॥

( ८९६ प्रत्ययनियमदूषणवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ तत्र प्रत्ययनियमे शेषवचनं परस्मैपदस्यानिवृत्तत्वात् ॥ * ॥

( भाष्यम् ) **तत्र प्रत्ययनियमे शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थम्—"शेषात्कर्तरि परस्मैपदम्" इति । किं कारणम् ? । परस्मैपदस्यानिर्वृत्तत्वात् । प्रत्यया नियताः, प्रकृत्यर्थावनियतौ । तत्र परस्मैपदमपि प्राप्नोति ॥ तत्र शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थम् 'शेषादेव परस्मैपदं भवति, नान्यत' इति ॥**

( उद्द्योतः ) भाष्ये—**तत्र परस्मैपदमपीति** । अनुदात्तङिद्भ्य इत्यर्थः ॥

( ८९७ दूषणान्तरवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ क्यष आत्मनेपदवचनं तस्यान्यत्र नियमात् ॥ * ॥

( भाष्यम् ) **क्यष आत्मनेपदं वक्तव्यम् । लोहितायति लोहितायते ॥ किं पुनः कारणं न सिध्यति ? । तस्यान्यत्र नियमात् । तद्ध्यन्यत्र नियम्यते ॥**

( प्रदीपः ) **क्यष इति** । **वा क्यष** इति परस्मैपदे विकल्पिते आत्मनेपदस्यानुदात्तङिदादिषु नियतत्वादप्राप्त्यत्वाल्लकारस्य श्रवणप्रसङ्गः ॥

( उद्द्योतः ) प्रत्ययनियमे दोषान्तरमाह—भाष्ये **क्यष आत्मनेपदं वक्तव्यमिति** । **वा क्यष** इत्यादिचतुःसूत्री शेषादित्यतः प्राक्कार्यैति भावः ॥ **लकारस्येति** । वाग्रहणादिति भावः ॥ लान्तस्यापि कृदन्तत्वात्प्रातिपदिकत्वे सुपि पदत्वादपदं न प्रयुञ्जीतेत्यस्य न विषय इति बोध्यम् ॥

( दूषणोद्धारकभाष्यम् )

## उच्यते च, न च प्राप्नोति । तद्वचनाद्भविष्यति ॥

( प्रदीपः ) **उच्यते चेति** । लकारे तिबादिभिर्निवर्तिते नियमः प्रवर्तते तत्र परस्मैपदस्य सिद्धत्वाद्वावचनेन तस्मिन्विकल्प्यमाने वचनमनर्थकं स्यात् । केवलायाः प्रकृतेरप्रयोगार्हत्वाच्छब्दमन्तरेणार्थस्य प्रतिपादयितुमशक्यत्वात् प्रयोगविकल्पायोगात् । तस्मादात्मनेपदमेव विकल्पेन विधीयते ॥

( उद्द्योतः ) भाष्ये—**उच्यते** चेत्यस्य विकल्पद्वारात्मनेपदमिति शेषः ॥ **न च प्राप्नोती**[9]त्यस्यात्मनेपदमिति शेषः ॥ तत् आत्मनेपदम् ॥ **वचनात्**, **वा क्यष** इति वचनादित्यर्थः ॥ ननु वावचनेन लकारस्यैव पाक्षिकत्वमुच्यते न त्वात्मनेपदस्येत्यत आह—**लकार इति** । भिन्नवाक्यतापक्षे सामान्यसूत्रप्रवृत्त्यनन्तरभावित्वादेतत्प्रकरणेन पूर्वनिवृत्तलस्य प्रत्यायनमशक्यं तिङ्विषयत्वाच्च तदन्तस्य कृत्त्वमप्यशक्यम्[10] ॥ ननु केवलप्रकृतिप्रयोगस्तर्हि तेनोच्यतेऽत आह—**केवलाया इति** ॥ नन्वेवमपि प्रयोगविकल्पोस्त्वत आह—**शब्दमिति** । साधु[11]प्रयोगनिर्वाहप्रवृत्तशास्त्रेण क्यषन्तप्रयोगाभावस्य बोधयितुमयुक्तत्वादिति भावः ॥ एवं च *क्यष आत्मनेपदवचनम्* इति द्वितीयदोष उद्धृतः । *शेषग्रहणं कर्तव्यम्* इति दोषस्त्वस्त्येव ॥ नन्वापाततस्तिबादिसूत्रेण प्रसक्त[12]मुभयपदित्वं यथा पाश्चात्यैर्नियमैरपोद्यते, एवं प्रथमं नित्यवत् श्रुतं लकारनिवर्तनं पाक्षिकमिति कल्पयितुं युक्तम् । किं च दधि इत्यादिवत्केवलप्रकृतिप्रयोगोपि वक्तुं शक्य इति चेन्न । तिबादिसूत्रेण युगपदुभयप्रत्ययपरत्वासम्भवादर्थाक्षिप्तस्तयोर्विकल्पः । स एव तत्तन्नियमैरप्राप्तः पुनर्वा क्यष इत्यनेन प्रतिप्रसूयत इति कल्पनाया एव युक्तत्वान्न दोषः । एकवाक्यतापक्षेपि यदीदं प्रकरणं न स्यात्स्यादेव विकल्प इति सम्भावितस्य तस्यैव[13] प्रतिप्रसव इति न दोषः ॥ ननु प्रत्ययनियमपक्षे शेषादिति कृतेपि दोषः । कर्त्तरीत्यस्य सत्त्वेन कर्त्तरि शेषादेवेत्यर्थेऽर्थान्तरे परस्मैपदस्य सर्वत आपत्तेरिति चेत्सत्यम्[14] । विनिगमनाविरहेण कर्त्तर्येव, शेषादेवेति नियमद्वयाङ्गीकारेणादोषात् ॥ नन्वेवमपि भावकर्मणोरेवेति धातुमात्रविषय-

१ 'प्रकृत्यर्थस्यैव' । २ 'तन्नियमो' । ३ प्रधानानां प्रत्ययानां प्रकृतिविशेषेण सह संबन्धरूप उपरोधो निग्रह इत्यर्थः । ( र. ना. ) ४ अनुदात्तङित इत्यनेन । ( र. ना. ) ५ भ्वादिषु परस्मैपदिषु इति भावः । ( र. ना. ) ६ 'वमुक्तम्' । ७ अनुदात्तङिदादिरूपा प्रकृतिः । भावकर्मादिरूपोऽर्थः । ( र. ना. )

८ अनुदात्तङिद्भ्योनियमेनेत्यादिः । (र. ना.) ९ तस्यानुदात्तङिदादिषु नियतत्वादिति प्रदीपेऽनुपदमेवोक्तमिति भावः । १० 'कृदन्तत्व' इति तूचितम् । 'तदन्तस्य' इत्यत्र वा 'तस्य' इति । ११ 'आधुनिक' इति त्वपपाठ एव । १२ 'प्रयुक्त' । १३ विकल्पस्यैवेत्यर्थः । ( र. ना. ) १४ 'सत्यम् । कर्तर्येव' ।

नियमेनानुदात्तङिद्भ्योपि कर्तरि तङानानापत्तिः । न चानुदात्तङित इत्यस्य वैयर्थ्यम्, शेषाद्भावकर्मणोस्तद्व्यावृत्त्यर्थं[1] चारितार्थ्यादिति चेत् ॥ न, योग[2]विभागसामर्थ्येनास्य कर्त्रर्थत्वाददोषः ॥

( प्रकृत्यर्थनियमाङ्गीकारभाष्यम् )

**अस्तु तर्हि प्रकृत्यर्थनियमः ।**

( उद्द्योतः ) भाष्ये—अस्तु तर्हीति । शेषादिति कर्तव्यतारूपाद्दोषादित्यादिः ॥

( ८९८ प्रकृत्यर्थनियमदूषणवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ प्रकृत्यर्थनियमेऽन्याभावः ॥ * ॥**

( भाष्यम् ) **प्रकृत्यर्थनियमे अन्येषां प्रत्ययानामभावः । अनुदात्तङितस्तृजादयो न प्राप्नुवन्ति ॥**

( दूषणबाधकभाष्यम् )

**नैष दोषः । अनवकाशास्तृजादयः । उच्यन्ते च, ते वचनाद्भविष्यन्ति ॥**

( दूषणसाधकभाष्यम् )

**सावकाशास्तृजादयः ॥ कोऽवकाशः ? । परस्मै[3]पदिनोऽवकाशः ॥**

( उद्द्योतः ) **परस्मैपदिनोऽवकाश** इति भाष्यादवकाशशब्दो नित्यैकवचनान्तः, करणादीन्यवकाश इति कैयटान्नित्यपुंलिङ्गः, तिङन्तान्यवकाश इति सरूपसूत्रस्थभाष्याच्चेति बोध्यम् ॥

( दूषणबाधकभाष्यम् )

**तत्रापि नियमान्न प्राप्नुवन्ति ॥**

( उद्द्योतः ) **तत्रापि नियमान्नेति** । तेषु परस्मैपदमेवेति नियमादित्यर्थः । एवं चानवकाशत्वाद्वचनसामर्थ्याद्भविष्यन्तीति प्रकृत्यर्थनियमे न दोष इति भावः ॥

( दूषणसाधकभाष्यम् )

**तव्यदाद[4]य[5]स्तर्हि भावकर्मणोर्नियमान्न प्राप्नुवन्ति ॥**

( दूषणबाधकभाष्यम् )

**तव्यदादयोप्यनवकाशाः । ते वचनाद्भविष्यन्ति ॥**

( प्रदीपः ) **तव्यदादयोपीति** । यद्यपि स्नानीयं चूर्णमित्यादौ करणादीन्यवकाशः, तथापि **तयोरेवेति** चोदनया भावकर्मणोर्यद्विधानं तदनवकाशम् ॥

( उद्द्योतः ) **तथापीति** । बहुलग्रहणोन्नीतविधेश्चारितार्थ्येपि तयोरेवेति विधेरचारितार्थ्यादिति भावः ॥

( दूषणबाधकभाष्यम् )

**चिण्तर्हि भावकर्मणोर्नियमान्न प्राप्नोति ॥**

( प्रदीपः ) **चिण् तर्हीति** । ननु भावकर्मणी सार्वधातुकस्यार्थौ[7] न चिणस्तत्कथमप्राप्तिश्चोद्यते । सह[6]अभिधानपक्षे चिणोपि भावकर्मणी अर्थावित्यदोषः ॥

( उद्द्योतः ) **सहाभिधानेति** । यद्यप्यनिर्दिष्टार्थानां स्वार्थिकत्वेन प्रकृत्यर्थकतैव न्याय्या, तथापि व्याकरणान्तरेऽतिप्रर्त्ययादिकल्पनादर्शनादयं पक्ष अस्थितः, सहाभिधानेपि द्वावितिवदर्थवत्ता प्रत्येकमेव पर्याप्तेति बोध्यम् । सहाभिधानं द्योतकत्वेन, उभयोरपि द्योतकत्वादिति तत्त्वम् ॥

( दूषणबाधकभाष्यम् )

**चिण्वचनाद्भविष्यति ॥**

( दूषणसाधकभाष्यम् )

**घञ् तर्हि भावकर्मणोर्नियमान्न प्राप्नोति ॥**

( प्रदीपः ) **घञ् तर्हीति** । अकर्तरि विधीयमानोऽपादानादिषु घञ् सावकाशः ॥

( उद्द्योतः ) **अकर्तरीति** । भावे घञ् त्वनवकाशत्वात्सिद्ध इति भावः ॥

( दूषणबाधकभाष्यम् )

**तत्रापि प्रकृतं कर्मग्रहणमनुवर्तते । क्व प्रकृतम् ?[8] । "अण्कर्मणि च" इति ॥**

( दूषणसाधकभाष्यम् )

**तद्वै तत्रोपपदविशेषणम् । अभिधेयविशेषणेन चेहार्थः । न[9] चान्यार्थं प्रकृतमन्यार्थं भवति । न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति' नहि गोधा स[10]र्पन्ती सर्पणादहिर्भवति ॥**

( प्रदीपः ) **उपपदविशेषणमिति** । सप्तमीस्थस्य सामान्यस्य कर्मणीत्यनेन विशेषस्य प्रतिपादनादुपपदविशेषणमुच्यते । एवमभिधेयविशेषेनेति व्याख्येयम् ॥

( उद्द्योतः ) **ननूपपद** इति विशेष्याभावात्कथं कर्मणीत्यस्य तद्विशेषणत्वमत आह—**सप्तमीति** । विशेषोपस्थापकत्वमत्र विशेषणपदेन विवक्षितमिति भावः ॥ स्वघटितसूत्रे भावलक्षणसप्तम्यन्तमनुवृत्तिमात्रेण कथं विषयसप्तम्यन्तं स्यादिति शङ्काभाष्यार्थः ॥ शब्दाधिकार एवाश्रित इति परिहारः ॥

( दूषणपरिहारभाष्यम् )

**यत्तावदुच्यते—नान्यार्थं प्रकृतमन्यार्थं भवतीति । अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा । शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते उप[11]स्पृश्यते शालयश्च भाव्यन्ते ॥ यदप्युच्यते—न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति नहि गोधा सर्प[12]न्ती सर्पणादहिर्भवतीति ॥ भवेद्द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येनयेनाभिसंबध्यते तस्यतस्य विशेषको भवति ॥**

१ तङानव्यावृत्त्यर्थमित्यर्थः । ( र. ना. ) २ पृथक् सूत्रारम्भसामर्थ्येनेत्यर्थः । ( र. ना. ) ३ इदं प्रथमाबहुवचनान्तम् । ( र. ना. ) ४ 'तव्यदादयस्तु तर्हि' । ५ प्रकृतिनियमे दूषणमुक्त्वाऽर्थनियमे तदाह—तव्यदादय इति । ( र. ना. ) ६ समाधत्ते सहाभिधानेत्यादि । ( र. ना. ) ७ प्रकृतेरर्थौ यस्येति व्यधिकरणबहुव्रीहिः, प्रकृतिपदस्य तदर्थे लक्षणया समानाधिकरणो वा । ( र. ना. ) ८ शप्तिपोः स्थाने इत्यादिः । ( र. ना. ) ९ इत आरभ्य भाष्यं संख्यासंज्ञासूत्रगतभाष्यसमानमिति तत्रत्यव्याख्यैवात्रापि सर्तव्या । १० 'प्रसर्पन्ती' । ११ उपस्पर्शनं स्नानमाचमनञ्च । (र. ना.) १२ 'प्रसर्पन्ती' ।

( ८९९ दूषणान्तरवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ शेषवचनं च ॥ * ॥

**( भाष्यम् ) शेषवचनं च कर्तव्यम् "शेषात्कर्तरि परस्मैपदम्" इति ॥ किं प्रयोजनम् ? । शेषनियमार्थम् । प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः, ते शेषेऽपि प्राप्नुवन्ति । तत्र शेषग्रहणं कर्तव्यम्—शेषात्कर्तरि परस्मैपदमेव नान्यदिति ॥**

**( उद्द्योतः )** भाष्ये प्रत्ययनियमवादी मत्पक्षे त्वयोद्भावितं गौरवमत्रापि समानमित्याह—**शेषवचनं चेति** । अत्रापि पक्षे शेषग्रहणं कर्तव्यमित्यर्थः ॥

( ९०० दूषणवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ [1]कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थम् ॥ * ॥

**( भाष्यम् ) कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थं द्वितीयं शेषग्रहणं कर्तव्यम् । 'शेषाच्छेषे' इति वक्तव्यम् । इह मा भूत्—भिद्यते कुसूलः स्वयमेवेति ॥**

**( प्रदीपः ) कर्तरि चेति ।** यदा कर्मवदित्ययं शास्त्रातिदेशः, तदा कर्मकर्तरि परत्वात्परस्मैपदं प्राप्नोति । शुद्धौ तु कर्मकर्तारौ उभयोरवकाशौ । कार्यातिदेशे तु परत्वादात्मनेपदं सिध्यति ॥

**( उद्द्योतः )** शेषग्रहणान्तरं च कर्तव्यमित्यधिकं गौरवं प्रत्ययनियमपक्षे इत्याह—**कर्तरि चेति** । **आत्मनेपदविषयः कर्ता** कर्मकर्ता ॥ ननु स्वाश्रयकर्तृत्वप्रयुक्तं परस्मैपदमातिदेशिकेन विरुद्धमिति कथं [2]तत्स्यादत आह—**यदेति** ॥ **परस्मैपदं प्राप्नोतीति** । द्वितीयशेषग्रहणे तु कर्मकर्तुः शेषत्वाभावान्नेति भावः ॥ **उभयोः**, कर्मकर्त्राश्रयविध्योः । भावाभावकृतविरोधवदेव [3]स्वाश्रयं निवर्त्यत इति भावः ॥ न चातिदेशोऽनवकाशः, कार्यान्तरे सावकाशत्वादिति तात्पर्यम् ॥ **कार्यातिदेशे त्विति** । केचित्त्वेतद्भाष्यप्रामाण्यात्कार्यातिदेशोऽपि परत्वादिव्यवहारे उत्पत्तिदेश एव देशोऽतिदिश्यमानकार्याणामित्याहुः ॥ वस्तुतः कार्यातिदेशः शास्त्रातिदेशद्वारैवेत्युक्तम् ॥

( आक्षेपभाष्यम् )

**कतरस्मिन्पक्षेऽयं दोषः ? ।**

**( उद्द्योतः )** कर्तरि चेत्यादिचकारस्वारस्यात्प्रकृत्यर्थनियमपक्षे दोषान्तरमिति भाति, तच्च न, वक्ष्यमाणयुक्तेरित्याशयेन पृच्छति—**कतरस्मिन्निति** ॥

( तृतीयोक्तसमाधानभाष्यम् )

**प्रकृत्यर्थनियमे ॥**

**( उद्द्योतः )** भाष्ये चकारस्वारस्येनाह तृतीयः—**प्रकृत्यर्थेति** ॥

( समाधाननिराकरणभाष्यम् )

**प्रकृत्यर्थनियमे तावन्न दोषः । प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः, तत्र नार्थः कर्तृग्रहणेन । कर्तृग्रहणाच्चैष दोषः ॥**

**( प्रदीपः ) प्रकृत्यर्थौ नियताविति ।** भावकर्मणोरात्मनेपदमेवेति नियमादन्तरेणापि कर्तृग्रहणं कर्तर्येव परस्मैपदं लभ्यत इति नार्थः कर्तृग्रहणेन ॥

**( उद्द्योतः )** प्रकृत्यर्थनियमवाद्याह—**तावन्न दोष इति** । **अन्तरेणापीति** । भावकर्मणोस्तङानयोर्नैयत्येन कर्तर्येवोभयप्रसङ्गात् । [4]उभयप्राप्तौ नियमार्थं शास्त्रं कर्तर्येव पर्यवस्यतीति भावः ॥ भाष्ये—**नार्थः कर्तृग्रहणेन कर्तृग्रहणाच्चैष दोष इति** । तथा च प्रकृत्यर्थनियमपक्षे तदभावान्नैष दोषः ॥ अयं भावः—यदि कर्तृग्रहणं क्रियते तदा भिन्नविषयत्वाद्भावकर्मणोरिति परस्मैपदापवादो न भवतीति परत्वात्कर्मकर्तरि परस्मैपदं प्राप्नोतीति तन्निवृत्तये शेषग्रहणं कर्तव्यम् । यदा तु कर्तृग्रहणं न क्रियते तदा परस्मैपदे प्राप्ते भावकर्मणोरित्यारभ्यमाणं येन नाप्राप्तिन्यायेन शेषादित्यस्यापवाद इति भावकर्मणोरित्येतद्विषये शेषादिति न प्रवर्तत इति कर्मकर्तरि परस्मैपदनिवृत्तये शेषग्रहणं न कर्तव्यमिति ॥

( दोषाश्रयपक्षप्रदर्शकभाष्यम् )

**प्रत्ययनियमे तर्ह्ययं दोषः । प्रत्यया नियताः, प्रकृत्यर्थावनियतौ, तत्र कर्तृग्रहणं कर्तव्यं भावकर्मणोर्निवृत्त्यर्थम् । कर्तृग्रहणाच्चैष दोषः ॥**

**( प्रदीपः ) कर्तृग्रहणाच्चेति** । परस्तात्तु परिहरिष्यते ॥

**( उद्द्योतः )** दोषदः स्वाशयमाह—**प्रत्ययनियमे तर्हीति** द्वितीयकर्तृग्रहणाच्चेत्यनेन, दोषवानेव प्रत्ययनियमस्तत्क[5]रणात्कर्मकर्तर्यतिव्याप्तेश्चेति सूचितं, तत्राह—**परस्तादिति** ॥

( प्रकृत्यर्थनियमे लाघवभाष्यम् )

**प्रकृत्यर्थनियमे शेषग्रहणं शक्यमकर्तुम् ॥ कथम् ? । प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः । ततो वक्ष्यामि—परस्मैपदं भवतीति । तन्नियमार्थं भविष्यति—यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेव भवतीति ॥**

**( प्रदीपः ) परस्मैपदमिति** । सिद्धे परस्मैपदे पुनर्विधानमात्मनेपदनिवृत्त्यर्थं सम्पद्यत इत्यर्थः ॥

---

१ त्रिचतुरपुस्तकेषु वार्तिकमिदं नोपलभ्यते केवलं भाष्यमेवोपलभ्यते तत्र चिरंतनलेखकप्रमादमन्तरा नान्यत्कारणं पश्यामः । पुरा हि लाघवमियाणां लेखकानामियं शैली प्रचरितासीत्—यद्व्यवहितयोः समानानुपूर्वीकपाठयोरेकं पाठं लिखित्वा तदग्रे तस्य पाठस्य द्विःपठनीयतासूचकं संख्याङ्कं ( २ ) लिलिखुः इति । पाठकाश्च तं संख्याङ्कमवलोक्य द्विरेव पठन्ति स्म ॥ एवं प्रचरिते यत्र लेखकप्रमादात्संख्याङ्को न लिखितः । गतानुगतिकाश्च जना अपि तथैव लेखनप्रचारमकार्षुरिति । अस्माभिस्तु पुस्तकद्वये स्पष्टमेव द्विर्लेख उपलब्धस्तत्र प्रथमस्य वार्तिकत्वम् अग्रिमस्य भाष्यत्वम् अन्यत्रैव विचार्य लिखितम् । २ तदिति । परस्मैपदमित्यर्थः । ( र. ना. ) ३ अतिदेशेनेत्यादिः । ( र. ना. ) ४ तथा चातिदेशानवकाशत्वप्रयुक्तः स्वाश्रयकार्यबाधो न तु भावाभावकृतविरोधवदिति भावः । ( र. ना. ) ५ आत्मनेपदपरस्मैपदोभयप्राप्तौ नियमार्थं शेषादिति शास्त्रमित्यर्थः । ( र. ना. ) ६ कर्तृग्रहणादित्यर्थः । ( र. ना. )

( उद्योतः ) इदानीं प्रकृत्यर्थनियमवादी स्वपक्षे आपादितशेषग्रहणकर्तव्यत्वनिराकरणद्वारा प्रत्ययनियमे तत्करणप्रयुक्तगौरवमाह—प्रकृत्यर्थनियमे इत्यादिना । शेषादिति पञ्चम्यन्तमित्यर्थः ॥ सिद्धे इति । तिबादिसूत्रेणेति शेषः । एवं च प्रकृत्यर्थनियमपक्ष एव ज्यायानिति स्थितम् ॥

( आक्षेपभाष्यम् )

**तत्तर्हि प्रत्ययनियमे द्वितीयं शेषग्रहणं कर्तव्यम् ॥**

( उद्योतः ) कर्तृग्रहणं शेषग्रहणं च कुर्वतः पाणिनेः प्रत्ययनियमपक्षे एव तात्पर्यमिति तत्पक्षेऽपि कर्मकर्तर्यतिव्याप्तिनिरासाय पृच्छति—भाष्ये—तत्तर्हि प्रत्ययेति । सप्तम्यन्तमित्यर्थः ॥

( समाधानभाष्यम् )

**न कर्तव्यम् । योगविभागः करिष्यते "अनुदात्तङित आत्मनेपदम्" ततः "भावकर्मणोः" । ततः "कर्तरि" कर्तरि चात्मनेपदं भवति भावकर्मणोः । ततः "कर्मव्यतिहारे" कर्तरीत्येव । भावकर्मणोरिति निवृत्तम् ॥**

( उद्योतः ) ततः कर्तरीति । वाक्ये भावकर्मणोरित्यनुवृत्तं कर्तृविशेषणमिति भावः ॥

( आक्षेपभाष्यम् )

**यद्येवं तर्हि कर्मणि कर्तरि भवति, एवं भावेऽपि कर्तरि प्राप्नोति—'एति जीवन्तमानन्दः' 'नास्य किंचिद्रुजतीति ॥**

( प्रदीपः ) **नास्य किंचिदिति ।** पीडारूपं भावस्वभावं वस्त्वित्यर्थः ॥ यदि तर्हि कर्मणि कर्तर्यात्मनेपदं भवति हन्यमानो हन्तीत्यत्र प्राप्नोति । नैष दोषः । प्रत्यासत्त्यैकधातुविषयं कर्मकर्तृत्वं विज्ञायते । यस्य स्वाश्रयं कर्तृत्वं कर्मशास्त्रातिदेशाच्चौपचारिकं कर्मत्वं तत्रैव भवति ॥

( उद्योतः ) ननु प्रत्यासत्त्या तद्धात्वर्थनिरूपितकर्मकर्तृत्ववत् तद्धात्वर्थभावकर्तृत्वमेव ग्राह्यम् । एवं च 'एति जीवन्तमानन्द' इत्यत्र कथं दोष इति चेन्न । भावांशे प्रत्यासत्त्याश्रयणस्याशक्यत्वात् तदाह—पीडारूपमिति ॥ प्रत्यासत्त्येति । अत्र तु हन्तिमेद इत्यर्थः । तद्धात्वर्थनिरूपितकर्मत्वस्यैव कर्मवद्भावेनातिदेशादिति भावः ॥

( समाधानभाष्यम् )

**द्वितीयो योगविभागः करिष्यते—"अनुदात्तङित आत्मनेपदम्" । ततः "भावे" । ततः "कर्मणि" कर्मणि चात्मनेपदं भवति । ततः "कर्तरि" कर्तरि चात्मनेपदं भवति । कर्मणीत्यनुवर्तते, भाव इति निवृत्तम् । ततः "कर्मव्यतिहारे" कर्तरीत्येव, कर्मणीति निवृत्तम् ॥**

( आक्षेपभाष्यम् )

**एवमपि शेषग्रहणं कर्तव्यम् "अनुपराभ्यां कृञ" इत्येवमर्थम् । इह मा भूत्—अनुक्रियते स्वयमेव, पराक्रियते स्वयमेव ॥**

( प्रदीपः ) **अनुपराभ्यां कृञ इत्येवमर्थमिति ।** एष हि योगो व्यवहितः । कक्षान्तरप्राप्तत्वादात्मनेपदापवादत्वाच्च बलवानिति न शक्यते योगविभागेन बाधितुम् ॥

( उद्योतः ) व्यवहित इति । एवं चानन्तरस्येतिन्यायेन कर्तरीति योगविभागः शेषात्कर्तरीत्यस्यैव बाधको न त्वनुपराभ्यामित्यस्येति भावः ॥ कर्तरीति योगविभागेनानुपराभ्यामित्यस्याबाधे युक्त्यन्तरमप्याह—कक्षान्तरेति । प्रथमं सामान्यतस्तिबादिप्राप्तिः, ततः कर्मवद्भावाद् भावकर्मणोरिति, ततः परत्वात् शेषादिति प्राप्तं कर्तृगामिक्रियाफलाभावेनास्यापि शेषत्वात्, ततो योगविभागादात्मनेपदं प्राप्तं, ततोऽनुपराभ्यामिति, ततश्चोत्तरकक्षाभावित्वाद्योगविभागस्यापि तद्बाधकमिति न कर्तरीति योगविभागेन तद्बाधनमिति भावः ॥ आत्मनेपदापवादत्वाच्चेति । परत्वेन योगविभागबाधकस्वरितञित इति प्राप्तेरित्यर्थः । एवं च बाधकापवादत्वाच्चास्य तद्बाध्यत्वमिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**ननु चैतदपि योगविभागादेव सिद्धम् ॥**

( प्रदीपः ) **ननु चैतदपीति ।** प्राप्तिमात्रं योगविभागेन बाध्यते ॥

(उद्योतः) प्राप्तिमात्रमिति । बाध्यसामान्यचिन्तयेति भावः ॥

( आक्षेपसाधकभाष्यम् )

**न सिध्यति । अनन्तरा या प्राप्तिः सा योगविभागेन शक्या बाधितुम् ॥ कुत एतत् ? । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । परा प्राप्तिरप्रतिषिद्धा तया प्राप्नोति ॥**

( उद्योतः ) भाष्ये परा प्राप्तिरप्रतिषिद्धेति । अबाधितेत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**ननु चेयं प्राप्तिः परां प्राप्तिं बाधते ॥**

( प्रदीपः ) **ननु चेयमिति ।** पूर्वविप्रतिषेधेनेति भावः । **शेषादित्यस्यावकाशः याति वातीति । अनुपराभ्यामित्यस्यावकाशः**—अशेषः कर्त्रभिप्रायक्रियाफलविषयः—**अनुकरोतीति । कर्मकर्तर्युभयप्रसङ्गे पूर्वविप्रतिषेधेन शेषादिति** प्राप्तिर्भवति । सापि योगविभागेन बाध्यते ॥

( उद्योतः ) ननु 'इयम्' इत्यनेन पूर्वप्रक्रान्तत्वाद्योगविभागरूपाया एव परामर्शः स्यात्, स चायुक्तः, उक्तरीत्या बाध्यबाधकभावस्य वैपरीत्यापत्तेरत इयमित्यनेन शेषादिति प्राप्तिर्ग्राह्या, तत्र च बाधकत्वमनुपपन्नमत आह—पूर्वविप्रतिषेधेनेति ॥ तदेवाह—शेषादित्यस्यावकाश इति । एवं च तृतीयकक्षायामेव शेषादित्यनेनानुपराभ्यामित्यस्य पूर्वविप्रतिषेधेन बाधे चतुर्थकक्षायां योगविभागप्राप्त्या शेषादिति बाध्यते, न च पुनरनुपराभ्यामित्यस्य प्राप्तिः, सकृद्गतिन्यायादिति भावस्तदाह—सापि योगविभागेनेति ।

१ शेषग्रहणमधिकृत्येदम् । ( र. ना. ) २ अत्रेत्यादिः । ( र. ना. ) ३ नास्य किंचिद्रुजाऽस्तीति इति पाठः प्रदीपादिपर्यालोचनया साधुर्भाति । ( र. ना. ) ४ तद्धात्वर्थनिरूपिततद्धात्वर्थभावकर्तृत्वमित्यर्थः । ( र. ना. ) ५ अशक्यत्वे चान्वयानुपपत्तिर्हेतुः । ( र. ना. ) ६ परत्वादित्यर्थः । ( र. ना. ) ७ परत्वेनेति बाधकान्वयि । ( र. ना. ) ८ नानुपराभ्यामित्यस्य योगविभागबाध्यत्वमित्यर्थः । ( र. ना. ) ९ अनुपराभ्यामित्येतत्कर्तृकेत्यर्थः । ( र. ना. )

( आक्षेपसाधकभाष्यम् )

**नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥**

( प्रदीपः ) **नोत्सहते इति** । **शेषादिति** प्राप्तियोंगविभागेनापवादेन कर्मकर्तृविषयाद्विषयान्तरं नीता नोत्सहते परां प्राप्तिं बाधितुमित्यर्थः ॥ अथ वा—इयं योगविभागप्राप्तिरविशेषाद**नुपराभ्या**मित्येतामपि प्राप्तिं बाधिष्यत इत्यर्थः ॥ **नोत्सहत इति** । अपवादापवादत्वाद**नुपराभ्या**मित्येतया प्राप्त्या प्रतिषिद्धा नोत्सहते तामेव बाधितुमित्यर्थः ॥

( उद्योतः ) **शेषादितीति** । उत्सर्गापवादयोरेकवाक्यतयाऽपवादविषये उत्सर्गाप्रसक्तेरिति भावः ॥ **परां प्राप्तिमिति** । कर्मकर्तृविषयामनुपराभ्यामिति प्राप्तिमित्यर्थः ॥ भाष्ये **प्रतिषिद्धे**त्यस्य बाधितेत्यर्थः । पूर्वविप्रतिषेधारम्भे गौरवात् इयमित्यनेन योगविभागप्राप्तिरेव परामृश्यत इत्याह—**अथ वेति** । बाध्यसामान्यचिन्तयेति भावः ॥ **अपवादापवादत्वादिति** । पूर्वमपवादपदं बाधकपरं, तत्र योगविभागस्य परत्वाद्बाधकं **स्वरितञित** इति तदपवादत्वादित्यर्थः । क्वचित्त्वपवादत्वादित्येव पाठस्तदापि तद्बाधकत्वोपलक्षकं, परत्वाद्धि योगविभागस्यानुपराभ्यामिति बाधकम् । भाष्येऽपि **प्रतिषिद्धे**त्यस्य परत्वाद्बाधितेत्यर्थः ॥

( समाधानभाष्यम् )

**एवं तर्हि "कर्तरि कर्मव्यतिहारे" इत्यत्र कर्तृग्रहणं प्रत्याख्यायते । तत्प्रकृतमुत्तरत्रानुवर्तिष्यते —"शेषात्कर्तरि कर्तरि" इति । किमर्थमिदं कर्तरि कर्तरीति ? । कर्तैव यः कर्ता तत्र यथा स्यात् । कर्ता चान्यश्च यः कर्ता तत्र मा भूदिति । ततः "अनुपराभ्यां कृञः" कर्तरि कर्तरि इत्येव ॥ अनुदात्तङित ॥ १२ ॥**

( प्रदीपः ) **कर्तैव यः कर्तेति** । यस्य व्यपदेशान्तरं नास्तीत्यर्थः । यद्येवमसिश्छिनत्तीति करणकर्तरि न प्राप्नोति । नैष दोषः ॥ कर्त्रवस्थायां करणत्वाभावात् । भिद्यते कुसूलः स्वयमेवेत्यत्र तु स्वाश्रयं कर्तृत्वमातिदेशिकं तु कर्मत्वमिति न भवति परस्मैपदम् ॥ १२ ॥

( उद्योतः ) भाष्ये **प्रत्याख्यायते इति** । वर्तमानसामीप्ये लट् ॥ कर्मकर्तरि वस्तुतः कर्तृत्वाभावात्पुनः कर्तृग्रहणेऽपि नेष्टसिद्धिरत आह—**व्यपदेशान्तरमिति** ॥ भाष्ये **कर्ता चान्यश्चेति** । कर्तृव्यवहारवान् कर्मव्यवहारवांश्चेत्यर्थः ॥



( १३१ नियमसूत्रम् ॥ १ ।३ ।२। आ० २ सूत्रम् )

## १६१ कर्तरि कर्मव्यतिहारे ॥ १।३।१४॥

( ९०१ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ क्रियाव्यतिहारे ॥ * ॥**

( भाष्यम् ) **क्रियाव्यतिहार इति वक्तव्यम् । कर्मव्यतिहार इत्युच्यमाने इहापि प्रसज्येत—'देवदत्तस्य धान्यं व्यतिलुनन्तीति, इह च न स्यात्—व्यतिलुनते व्यतिपुनत इति ॥**

( प्रदीपः ) **कर्तरि ॥ १४ ॥ क्रियाव्यतिहार इति वक्तव्यमिति** । प्रत्यासन्नत्वात्कृत्रिमस्यैव साधनकर्मणो ग्रहणं प्राप्नोति । साधनकर्मणि च धातोर्वृत्त्यसंभवाद्धात्वर्थस्य तद्विषयत्वं विज्ञायेत ॥ **देवदत्तस्य धान्यमिति** । देवदत्तस्वामिकं धान्यं लवनेन स्वीकुर्वन्तीत्यर्थः । क्रियाणां साध्यैकस्वभावानां कथं व्यतिहार इति चेत्, योग्यतावशादस्येयं क्रिया साध्या अस्या इदं साधनमिति निर्ज्ञाते साध्यसाधनभावे यो व्यत्यासः स क्रियाव्यतिहारः । परस्परकरणमपि क्वचित् क्रियाव्यतिहारः—यथा संप्रहरन्ते राजान इति । अत्रैकैव क्रिया सञ्चारिणीव लक्ष्यते ॥

( उद्योतः ) **कर्तरि कर्म ॥ १४ ॥** ननु क्रियावचनस्यैव कर्मशब्दस्य लोकप्रसिद्धत्वाद् धात्वन्वये साक्षात्संबन्धलाभाच्च तस्यैव ग्रहणं भविष्यतीत्यत आह—**प्रत्यासन्नत्वादिति** । लोकप्रसिद्ध्यपेक्षया शास्त्रे शास्त्रप्रसिद्धिरेव बलवती प्रकरणादिति भावः ॥ **साधनकर्मणि** ईप्सिततमे ॥ **तद्विषयत्वमिति** । कर्मव्यतिहारविषयार्थकाद्धातोरित्यर्थ इति भावः ॥ ननु देवदत्तस्वामिकधान्यस्यान्येन लवनेपि तत्स्वस्वत्वानुत्पत्तेर्विनिमयाभावात्कथमत्र प्राप्तिरत आह—**स्वीकुर्वन्तीत्यर्थ इति** । स्वीकारपर्यन्तं धातोर्लक्षणेति भावः ॥ क्रिययात्र कर्मणः स्वत्वविनिमय एव कर्मविनिमय इति बोध्यम् ॥ **क्रियाणामिति** । स्थिरेषु द्रव्येष्वन्यसंबन्धिनोऽन्यसंबन्धरूपव्यतिहारसंभवेपि क्षणस्थायिक्रियासु तदसंभव इति भावः ॥ **योग्यतेति** । नान्यसंबन्धिनोन्यसंबन्धित्वं सः, किं त्वन्यदीयत्वेन प्रसक्तस्यान्यसंबन्ध इति भावः । एवं च साधनव्यत्यास एव क्रियाव्यत्यास इति तात्पर्यम् ॥ नन्वेवं स्वस्वक्रिया एव स्वेन करणात्संप्रहरन्त इत्यत्र व्यतीहाराभावेनात्मनेपदं न स्यादत आह—**परस्परेति** । परस्परसंबन्धि करणमित्यर्थः । संबन्धश्च कर्मकरणसंप्रदानापादानादिलक्षणो बोध्यः ॥ प्रायेण व्यती अस्य द्योतकौ । क्वचित्समपि, यथा संप्रहरन्त इत्यत्र । क्वचित्तु प्रकरणादिकमपि तथा बोध्यम् ॥ नन्वेवमप्येकक्रियानिरूपितकारकशक्तिव्यत्यासो नोपपादितः प्रहाराणां भिन्नभिन्नत्वादित्यत आह—**अत्रेति** । साधनभेदात्क्रियाभेदावश्यम्भावेन सर्वत्र जातिकृतमेवैक्यमपेक्षणीयमिति भावः ॥ एकधातुवाच्यत्वेन वैकत्वम् ॥

( तृतीयाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**न वक्तव्यम् । क्रियां हि लोके कर्मेत्युपचरन्ति । 'कां क्रियां करिष्यसि' 'किं कर्म करिष्यसी'ति ॥**

( प्रदीपः ) **क्रियामिति** । लौकिकाश्चार्था इहानूद्यन्ते[६] ॥

१ प्रत्याख्यास्यते इत्यर्थः ( र. ना. ) २ 'तस्या' । ३ कर्मव्यतिहारे इत्यस्येत्यादिः । ( र. ना. ) ४ 'क्रियाया' इति भवेत् । ५ तद्घटित इत्यर्थः । परस्परनिष्ठकर्मत्वादिनिरूपकत्वरूप इति भावः । ( र. ना. ) ६ 'इह गृह्यन्ते' ।

( उद्द्योतः ) लौकिका इति । पशुरपत्यं देवतेतिवदिति भावः ॥ इह, शास्त्रे ॥ तदुक्तमुभयगतिरिहेति । कर्मणि द्वितीयेति कृत्रिमम् । अत्र लौकिकं क्रियारूपम् । स्पष्टं चेदं संख्यासंज्ञासूत्रे भाष्ये ॥

( आक्षेपभाष्यम् )

**एवमपि कर्तव्यम् । 'कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति' ।**

( आक्षेपबाधकभाष्यम् )

**क्रियापि कृत्रिमं कर्म ॥**

( उद्द्योतः ) इह तु कृत्रिमाकृत्रिमन्यायमेवाभ्युपेत्याह—क्रियापि कृत्रिममिति ॥

( आक्षेपसाधकभाष्यम् )

**न सिध्यति । "कर्तुरीप्सिततमं कर्म" इत्युच्यते । कथं च क्रिया नाम क्रियया ईप्सिततमा स्यात् ? ॥**

( प्रदीपः ) **कथं च क्रियेति** । द्वयोरपि साध्यत्वात्परस्परासंबन्धं[1] मत्वा प्रश्नः ॥

( उद्द्योतः ) ननु द्वयोरपि क्रिययोः पश्य मृगो धावतीत्यादौ संबन्धो दृश्यत इत्यत आह—मत्वा प्रश्न इति ॥

( सिद्धान्तिसमाधानभाष्यम् )

**क्रियापि क्रिययेप्सिततमा भवति ॥ कया क्रियया ? । संपश्यतिक्रियया प्रार्थयतिक्रियया अध्यवस्यतिक्रियया [ च ] इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत् कंचिदर्थं संपश्यति, संदृष्टे प्रार्थना, प्रार्थिते अध्यवसायः, अध्यवसाये आरम्भः, आरम्भे निर्वृत्तिः, निर्वृत्तौ फलावाप्तिः । एवं क्रियापि कृत्रिमं कर्म ॥**

( प्रदीपः ) **क्रियापीति** । भोक्तुमिच्छति भोक्तुं जानातीति दर्शनात् ॥ **कया क्रिययेति** । क्रियान्तरवाचिप्रयोगाभावात्प्रश्नः ॥ **संपश्यति क्रिययेति** । सन्दर्शनादीनामव्यभिचारात्प्रतीयमानत्वात्प्रतीयमानक्रियापेक्षया च प्रविश पिण्डीमित्यादौ कर्मादिभावदर्शनात् ॥

( उद्द्योतः ) **भोक्तुमिच्छतीति** । अव्ययकृत्त्वादयमसत्त्वभूतो भाव इति भावः ॥ भोजनमिच्छतीत्यादि क्रमेणार्थः ॥ ननु क्रियाया अपि जन्यत्वेन किंचित्क्रियासाध्यत्वनिश्चये किमुच्यते कयेत्यत आह—**क्रियान्तरेति** ॥ भाष्ये **संपश्यतिक्रिययेत्यादि** । दर्शनक्रियाजन्यं प्रार्थनं तज्जन्याध्यवसायजन्यारम्भेणेत्यर्थः ॥ **क्रियया चेति** चपाठोऽसांप्रदायिकः ॥ **प्रेक्षापूर्वकारी** विचारपूर्वं क्रियाकर्ता स **बुध्या** बुद्धिवृत्त्या **तावत्** प्रथमं **कंचिदर्थं** फलरूपं पश्यति । फलविषयसंकल्पोऽत्र **दर्शनम्** । तज्जन्यः फलोपायविषयोऽभिलाषः **प्रार्थना** । तज्जन्यः क्रियाविशेषस्य फलसाधनत्वनिश्चयोऽध्यवसायः । अभिलाषे सति तन्निश्चयकरणात् । तज्जन्या मानसी प्रवृत्तिरारम्भः । तज्जन्या क्रियानिर्वृत्तिः । ततः फलावाप्तिरित्यर्थः । फलावाप्तिरित्यनेन दर्शनं फलविषयकमिति सूचितम् । सप्तमीभिस्तृतीयाभिश्च पूर्वपूर्वस्योत्तरकारणता बोधिता । तत्रारम्भव्याप्यमानत्वेन प्रकृतक्रियायाः कर्मत्वम् ॥ **अव्यभिचारादिति** । स चोक्तविभक्तिभिर्भाष्ये दर्शितः ॥

( आक्षेपसाधकभाष्यम् )

**एवमप्युभयोः कृत्रिमयोरुभयगतिः प्रसज्येत । तस्मात्क्रियाव्यतिहार इति वक्तव्यम् ॥**

( आक्षेपबाधकसमाधानसाधकभाष्यम् )

**न वक्तव्यम् । इह "कर्तरि व्यतिहारे" इतीयता सिद्धम् । सोयमेवं सिद्धे सति यत्कर्मग्रहणं करोति तस्यैतत्प्रयोजनम्—क्रियाव्यतिहारे यथा स्यात्कर्मव्यतिहारे माभूदिति ॥**

( प्रदीपः ) **इह कर्तरीति** । क्रियायाः साध्यत्वात्प्राधान्यात्, क्रिययाप्तुमिष्टतमत्वात्तादर्थ्येन[2] क्रियाप्रवर्तनात्कर्मणोपि प्राधान्यात्, उभयव्यतिहारे लब्धे कर्मग्रहणात् क्रियाव्यतिहारोयं गृह्यते, क्रियायाः धातुवाच्यत्वादन्तरङ्गत्वात् ॥

( उद्द्योतः ) ननु कर्मग्रहणाभावे करणादिव्यतीहारोपि गृह्येतेत्यत आह—**क्रियाया इति** । साध्यत्वेन प्रतीयमानत्वात् शाब्दं प्राधान्यं क्रियायाः, क्रियोद्देश्यत्वलक्षणम् आर्थप्राधान्यं च कर्मकारकस्यैवेति तयोरेव ग्रहणं न करणादेरिति भावः ॥ कर्मग्रहणेन क्रियामात्रग्रहणे उपायमाह—**क्रियाया इति** । कारकपरत्वे कर्मेति कर्मणि प्रत्ययः[3] कार्यः, क्रियापरत्वे तु भावे । भावश्चान्तरङ्ग इति भावः ॥

( कर्तृग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ कर्तृग्रहणं किमर्थम् ? ।**

( ९०२ प्रयोजनवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ कर्मव्यतिहारादिषु कर्तृग्रहणं भावकर्मनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) **कर्मव्यतिहारादिषु कर्तृग्रहणं क्रियते भावकर्मणोरनेनात्मनेपदं मा भूदिति ॥**

( उद्द्योतः ) भाष्ये—**कर्मव्यतिहारादिष्विति** । आदिग्रहणं शेषात्कर्तरीत्यतः प्रागनुवृत्तावपि फलाभावप्रतिपादनार्थम् ॥

( ९०३ अन्यथानुपपत्तिवार्तिकखण्डम् ॥ २ ॥ )

## ॥ * ॥ इतरथा हि तत्र प्रतिषेधे भावकर्मणोः प्रतिषेधः ॥ * ॥

( भाष्यम् ) **अक्रियमाणे कर्तृग्रहणे भावकर्मणोरप्यात्मनेपदमनेन प्रसज्येत । तत्र को दोषः ? । तत्र प्रतिषेधे भावकर्मणोः प्रतिषेधः । तत्र प्रतिषेधे**

---

1 'स्परेणासंबन्धं' 'संबन्धत्वाच्च' । 2 कर्मार्थत्वेनेत्यर्थः । ( र. ना. ) 3 मन्निमत्तय इत्यर्थः । ( र. ना. )

भावकर्मणोरप्यनेनात्मनेपदस्य प्रतिषेधः प्रसज्येत —व्यतिगम्यन्ते ग्रामाः व्यतिहन्यन्ते दस्यव इति ॥

(प्रदीपः) तत्र प्रतिषेध इति । कर्मव्यतिहारे न गतिहिंसार्थेभ्य इत्यनेन प्रतिषेध इत्यर्थः ॥

(उद्द्योतः) भावकर्मणोरप्यनेनेति । विहितस्येति शेषः ॥ १४ ॥

(९०४ अन्यथानुपपत्तिबाधकवार्तिकम् ॥ ३ ॥)

॥ * ॥ न वानन्तरस्य प्रतिषेधात् ॥ * ॥

(भाष्यम्) न वा एष दोषः ॥ किं कारणम्? । अनन्तरस्य प्रतिषेधात् । अनन्तरं यदात्मनेपदविधानं तस्य प्रतिषेधात् । कुत एतत्? । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति ॥

(प्रयोजनसाधकभाष्यम्)

ननु चेयं[२] प्राप्तिः पूर्वां प्राप्तिं बाधते ॥

(प्रयोजनबाधकभाष्यम्)

नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥

(प्रयोजनान्तरभाष्यम्)

उत्तरार्थं तर्हि कर्तृग्रहणं कर्तव्यम् ॥

(प्रयोजनान्तरबाधकभाष्यम्)

न कर्तव्यम् । क्रियते तत्रैव "शेषात्कर्तरि परस्मैपदम्" इति ॥

(प्रयोजनान्तरसाधकभाष्यम्)

द्वितीयं कर्तृग्रहणं कर्तव्यम् ॥ किं प्रयोजनम्? ॥ कर्तैव यः कर्ता तत्र यथा स्यात्, कर्ता चान्यश्च यः कर्ता तत्र मा भूदिति ॥ कर्तरि कर्म ॥ १४ ॥

---

(१३२ निषेधसूत्रम् ॥ १ । ३ । २ आ० ३ सू०)

## १६२ न गतिहिंसार्थेभ्यः ॥ १।३।१५ ॥

(न्यूनतापूर्त्यधिकरणम्)

(९०५ आक्षेपवार्तिकम् ॥ १ ॥)

॥*॥ प्रतिषेधे हसादीनामुपसंख्यानम् ॥*॥

(भाष्यम्) प्रतिषेधे हसादीनामुपसंख्यानं कर्तव्यम् ॥ व्यतिहसन्ति । व्यतिजल्पन्ति । व्यतिपठन्ति ॥

(प्रदीपः) न गति ॥ १५ ॥ हसादीनामिति । हसिप्रकाराणां शब्दक्रियाणामित्यर्थः ॥

(उद्द्योतः) न गति ॥ १५ ॥ हसादीनामित्यादिशब्दस्य व्यवस्थार्थत्वे हसेरुत्तरेषां धातुपाठपठितानां ग्रहणं स्यादत आह—हसीति । व्यतिपठन्तीतिभाष्योदाहरणादाह—शब्दक्रियाणामिति । अशब्दहासे भवति नवेति बहुदर्शिनो विचारयन्तु ॥

(९०६ आक्षेपवार्तिकम् ॥ २ ॥)

॥ * ॥ हरिवह्योरप्रतिषेधः ॥ * ॥

(भाष्यम्) हरिवह्योरप्रतिषेधो भवतीति वक्तव्यम् ॥ संप्रहरन्ते राजानः । संविवहन्ते गर्गैरिति ॥

(प्रदीपः) हरिवह्योरिति । हरतेर्हिंसार्थत्वाद्वहतेर्गत्यर्थत्वात्प्राप्तिः ॥ 'ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनंजयौ' इत्यत्र व्यतिहारो न विवक्षितः किं तर्हि योत्स्यमानावित्येतावद्विवक्षितम् ॥

(उद्द्योतः) हृवह्योरित्येव पाठः । हरिवह्योरितिपाठे इत एव निर्देशादिकः कित्त्वेऽपि गुणः । कृतगुणानुकरणाद्वा[३] इगिति कल्प्यम् ॥ योत्स्येति । संप्रहारशब्दस्य युद्धेऽपि रूढत्वादिति भावः ॥

(वहिग्रहणप्रत्याख्यानभाष्यम्)

न वहिर्गत्यर्थः । देशान्तरप्रापणक्रियोत्र वहिः ॥ न गति ॥ १५ ॥

(प्रदीपः) देशान्तरप्रापणक्रिय इति । भारं वहतीत्यादौ देशान्तरप्राप्त्युपसर्जनं प्रापणमस्य वाच्यम् । तत्र तु गतिर्नान्तरीयकत्वात्प्रतीयते न त्वसौ धात्वर्थः । अस्यैव न्यायसिद्धार्थस्यानुवादकमर्थग्रहणम् । गर्गाणां तु[४] प्रापणं कन्याद्वारकमिति वहेर्गत्यर्थत्वाभावः ॥ १५ ॥

(उद्द्योतः) वार्तिकस्थवहिग्रहणं प्रत्याचष्टे भाष्ये—न वहिरित्यादिना ॥ नान्तरीयकत्वादिति । ग्रामं प्राप्त इत्यादौ देशान्तरप्राप्तेर्गतिं विनाऽनुपपत्तेरिति भावः ॥ प्राप्तिस्तु संबन्धमात्रं, न संयोग एव, देशान्तरस्थेपि 'भूरनेन प्राप्ता' इति व्यवहारात् । ग्रामं प्राप्तवानित्यादौ संयोगमूलकाधाराधेयभावः प्राप्तिः । क्वचित्तत्र स्थितिरेव प्राप्तिः । द्वितीयाश्रितेत्युदाहरणे सुखप्राप्त इत्यादावादिकर्मणि क्तः कर्तरि चेति कर्तरि क्तो बोध्यः ॥ नान्तरीयकतया प्रतीयमानस्यापि तदर्थत्वाभिमानेन वार्तिकारम्भः ॥ तत्रैव[५] मानमाह—अस्यैवेति । अन्यथा 'न गतिहिंसयोः' इत्येव वदेत् । गतिहिंसयोर्वर्तमानेभ्यो धातुभ्य इत्यर्थ इति भावः ॥ भाष्योक्तोदाहरणेऽपि गत्यर्थत्वाभावं दर्शयति—गर्गाणां त्विति । प्रापणं संबन्धः ॥ कन्याद्वारकमिति । कन्याप्रातिफलकपाणिग्रहणद्वारकसंबन्धो विवाह इत्यर्थः ॥ गर्गैरिति तृतीया तु सहार्थे बोध्या । गर्गैः सह कन्याद्वारकं संबन्धं प्राप्नुवन्तीत्यर्थः । भाष्ये देशान्तरग्रहणमुपलक्षणमिति तात्पर्यम् ॥ १५ ॥

---

१ भावकर्मणोः प्राप्तिरित्यर्थः । (र. ना.) २ कर्मव्यतिहारे प्राप्तिरित्यर्थः । (र. ना.) ३ कृतगुणेति । संप्रजह्रिरे संप्रहर्षीरनित्यादौ गुणासंभवेन प्रतिषेधापत्त्या चिन्त्यमिदम् । ४ 'च' । ५ नान्तरीयकतया प्रतीयमानस्य तदर्थत्वाभावे एवेत्यर्थः । (र. ना.)

( १३३ निषेधसूत्रम् ॥ १ । ३ । २ आ० ४ सू० )

## १६३ इतरेतरान्योन्योपपदाच्च ॥ १।३।१६ ॥

( न्यूनतापूरणाधिकरणम् )

( ९०७ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ परस्परोपपदाच्च ॥ * ॥

( भाष्यम् ) परस्परोपपदाच्चेति वक्तव्यम् । परस्परस्य व्यतिलुनन्ति । परस्परस्य व्यतिपुनन्ति ॥ इतरेतरा० ॥ १६ ॥

( प्रदीपः ) इतरेतरा ॥ १६ ॥ लौकिके शब्दव्यवहारे लाघवानादरादितरेतरादिशब्दा उपसर्गाश्च कर्मव्यतिहारद्योतनाय प्रयुज्यन्ते ॥

( उद्द्योतः ) इतरेतरा ॥ १६ ॥ नन्वितरेतरशब्देनैव कर्मव्यतिहारस्य द्योतितत्वादुक्तार्थानामितिन्यायेनात्रात्मनेपदाप्रसक्तिरत आह—लौकिक इति । लाघवादरानादरयोः प्रयोगानुसार एव बीजमिति भावः ॥ उपपदशब्दश्चात्र यौगिको न तु रूढः ॥१६॥

( १३४ आत्मनेपदनियमसूत्रम् ॥ १ ।३। २ आ. ५ सू. )

## १६६ विपराभ्यां जेः ॥ १।३।१९ ॥

( अनिष्टवारणाधिकरणम् )

( ९०८ आक्षेपवार्तिकम् ॥ १ ॥ )

[॥ * विपराभ्यामित्युपसर्गग्रहणम् * ॥]

( भाष्यम् ) [ विपराभ्यामिति ] उपसर्गग्रहणं कर्तव्यम् । इह मा भूत्—पराजयति सेनेति ॥

( तृतीयाक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ॥

( सिद्धान्तिसमाधानभाष्यम् )

न वक्तव्यम् । यद्यपि तावदयं पराशब्दो दृष्टापचार उपसर्गश्चानुपसर्गश्च, अयं खलु विशब्दोऽदृष्टापचार उपसर्ग एव । तस्यास्य कोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदत उपसर्गात् । तद्यथा—'अस्य गोर्द्वितीयेनार्थः' इति गौरेवोपादीयते नाश्वो न गर्दभ इति ॥ विपराभ्याम् ॥ १९ ॥

( प्रदीपः ) विपराभ्यां ॥ १९ ॥ विशब्द इति । पक्षिवाची तु यो विशब्दः तस्य नपुंसकत्वाभावात्पुंसि विभक्त्या व्यवधानाद्वेरनन्तरो जयतिर्न संभवति । बहुवि जयति वनमित्यत्र जहत्स्वार्थायां वृत्तौ वेरानर्थक्यादिह चार्थवतो ग्रहणादजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वादग्रहणम् । संबुद्ध्यन्तं तु वे इति रूपान्तरयुक्तत्वान्न गृह्यते । एकदेशविकृतस्यानन्यत्वाद्विशब्द एवायमिति चेत् । विरित्यस्य विभक्त्यन्तस्य वे इति विकारो न तु विशब्दस्येत्यदोषः ॥ वी जयत इत्यत्र एकादेशस्य पूर्वं प्रत्यन्तवद्भावाद्विशब्दात्परो जयतिः संभवत्येवेति चेत् । पूर्वस्य कार्ये कर्तव्येऽन्तवद्भावः । न चात्र पूर्वस्य किंचित्कार्यमित्यदोषः ॥ अस्य गोरिति । द्वितीयशब्दो लोके प्रयुज्यमानो यदपेक्षं द्वितीयत्वं तत्तुल्यजातीय एव संप्रत्ययं करोति । एवमिहापि विशब्दसाहचर्यात्पराशब्दोप्युपसर्गो गृह्यते ॥ पक्षिवाचिनो विशब्दस्य संभवे तु द्वयोरपि दृष्टापचारत्वात्परस्परसाहचर्याद्रुपसर्गग्रहणं व्याख्येयम् ॥ १९ ॥

( उद्द्योतः ) विपराभ्यां जेः ॥ १९ ॥ भाष्ये—दृष्टापचार इति । दृष्टव्यभिचारो दृष्टोपसर्गत्वाभाववानिति यावत् ॥ पक्षिवाचकविशब्दस्यानुपसर्गस्यापि सत्त्वादाह—पक्षीति ॥ इह चेति । उपसर्गस्तु द्योत्यार्थेनार्थवानेवेति भावः ॥ इदं चिन्त्यम् ॥ तत्पक्षे मौतपूर्विकार्थवत्त्वस्यैव ग्रहणात् । शुद्धरूढातिरिक्ते जहत्स्वार्थत्वाभावाच्च ॥ विभक्त्यन्तस्येति । संबुद्धिगुणस्य विभक्त्युत्पत्त्यनन्तरं प्रवृत्तेरित्यभिमानः ॥ ननु विभक्त्युत्पत्त्यनन्तरं गुणप्रवृत्तावपि विशब्दान्त्यवर्णावच्छेदेन विकारसत्त्वात् तस्याप्येकदेशविकृतत्वमस्त्येवेति चेत् चिन्त्यमेवैतत् ॥ पूर्वस्य कार्ये इति । चिन्त्यमिदम् । हे ज्ञानेत्यादौ संबुद्धिहल्लोपेऽमि पूर्वस्यान्तवद्भावानापत्तेः, सर्वासामित्यत्र सुडनापत्तेश्च ॥ भाष्यं त्वित्थं व्याख्येयम्—विशब्द इत्यस्य जयतिसंबद्ध इत्यादिः । तेन जयतिसंबद्धो विशब्दोऽदृष्टापचारोऽदृष्टान्यार्थक इत्यर्थः । ईदृशप्रयोगाणां काप्यदर्शनादिति ॥ कुतोन्यस्त्वं तदाह—अन्यदत इति ॥ अत उपसर्गादन्यत्वमित्यर्थः ॥ ननु पूरणप्रत्ययान्तस्य सजातीयविषयत्वेपि प्रकृते किमायातमत आह—द्वितीयेति । दृष्टान्तार्थं स इति भावः ॥ यदपेक्षं द्वितीयत्वमिति । यदीयं सहायत्वमित्यर्थः । द्वितीयशब्दः सहायवाची । एवं च यथा लोकः स्वसजातीयमेव सहायमुपादत्ते, एवं शब्दोपि प्रयोगे सहायं सजातीयमेवोपादत्ते न विजातीयम् ॥ एतन्मूलिकैव सहचरितासहचरितयोः सहचरिते संप्रत्ययपरिभाषा । तत्र सहचरितत्वं सदृशत्वमेवेति दिक् ॥ संभवेस्त्विति । वी जयतः वे जयसीत्यादौ । अत्र तुना पूर्वोक्तप्रयोगाभावरूपस्तदसंभवो ध्वनितः ॥ परस्परेति । विशब्दसाहचर्यात् पराशब्दोऽटावन्तः प्रसिद्धो गृह्यते तत्साहचर्याच्च विरुपसर्ग एवेति भावः ॥ प्रकृतिवदनुकरणमित्यस्यानित्यत्वाज्जेरित्यत्रैयङ्भावः ॥ १९ ॥

(१३५ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. ६ सू.)

## १६७आङो दोऽनास्यविहरणे ॥१।३।२०॥

( अनिष्टनिवारणाधिकरणम् )

( ९०८ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ आङो दोऽव्यसनक्रियस्य ॥ * ॥

( भाष्यम् ) आङो दोऽव्यसनक्रियस्येति वक्त-

१ न तु पारिभाषिक इत्यर्थः । ( र. ना. ) २ परेति प्रकृष्टार्थकम्, अभेदेन सेनान्वयि । ( र. ना. ) ३ 'चानर्थक्या' । ४ 'नैवात्र' । ५ कर्तव्ये इति शेषः । ( र. ना. ) ६ 'इति परिभाषा' ।

व्यम् । इहापि यथा स्यात्—विपादिकां व्याददाति कूलं व्याददातीति ॥

( प्रदीपः ) आङो दो ॥ २० ॥ अव्यसनक्रियस्येति । व्यसनं विभागः विकासनमित्यर्थः । केवलो विहरणशब्द उपादीयमानः पादविहरणं गमयतीत्यास्यग्रहणं सूत्रे कृतम् । केवलो व्यसनशब्दो दुःखादिषु वर्तत इति वार्तिके क्रियाग्रहणं कृतम् ॥

( उद्योतः ) आङो दो ॥ २० ॥ विभाग इति । व्यसनशब्दस्य पीडायां रूढत्वेऽपि ददातेः पीडार्थकत्वासंभवेन निषेधवैयर्थ्यात्स न गृह्यते इत्यर्थः ॥ विभागशब्देन तदनुकूलव्यापारो गृह्यते तदाह—विकासनमिति ॥ पादविहरणमिति । इदमुपलक्षणमग्नीन् विहरेत्यादौ प्रज्वलनस्य, 'विहारशय्यासनभोजनेष्वित्यादौ लीलायाश्च प्रतीतेः । अत एव वेः पादविहरण इत्यत्र पादग्रहणं चरितार्थम् ॥ दुःखादिष्विति । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इति कोशाद् दुःखादिसंबन्धिक्रियावृत्तेरपि प्रतीतिप्रसङ्ग इति भावः । क्रियाग्रहणे तु व्यसनरूपक्रियावाचकस्यैव ग्रहणाद्विभागार्थकत्वलाभः । स्वरूपतो दुःखादिकं तु न क्रिया, नापि धातुवाच्यमिति बोध्यम् ॥ विपादिकां व्याददातीति । विपादिकावृत्तिविभागानुकूलो व्यापार एककर्तृक इति बोधः ॥

( तदस्याक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ॥

( सिद्धान्तिसमाधानभाष्यम् )

न वक्तव्यम् । इह "आङो दोऽनास्य" इतीयता सिद्धम् । सोयमेवं सिद्धे सति यद्विहरणग्रहणं करोति तस्यैतत्प्रयोजनम्—आस्यविहरणसमानक्रियादपि यथा स्यात् । यथाजातीयका चास्यविहरणक्रिया तथाजातीयकात्रापि ॥

( प्रदीपः ) आङो दोऽनास्य इति । आस्यसमवायिन्यां क्रियायां ददातिर्वर्तमान आस्यवृत्तिर्भवति । यथा लोमविषयहर्षणवृत्तिर्हृषिर्लोमसु वर्तत इत्युच्यते॥ ददातेरेवास्ये वृत्तिसंभवो नान्येषां दारूपाणामिति तेषामिह ग्रहणाभावः ॥ यद्येवं स्वं मुखमादत्त इत्यत्रापि मुखविषयत्वादादानस्य प्रतिषेधः प्राप्नोति । नैष दोषः । आस्यसमवेतैव या क्रिया तस्यां वृत्तो ददातिरास्ये वृत्तो भवति । ग्रहणं तु ग्राह्यग्रहीतृविषयम् । अनास्य इति च पर्युदासः । आस्यानास्यसमुदायश्चास्यसदृश इति विधिरेव तत्र भवति ॥ सोयमिति । आस्यग्रहणं विहरणविशेषोपलक्षणार्थमित्यसत्यप्यास्ये विहरणसद्भावान्निषेधो भवति ॥

( उद्योतः ) आस्यस्य द्रव्यत्वात्कथं तत्र धातोर्वृत्तिरत आह—आस्येति । आस्यवृत्तिविभागानुकूलव्यापारे इत्यर्थः ॥ नन्वेवमास्यसमवेतक्रियेतरार्थवृत्तेर्दाधातोरित्यर्थे गामादाग्रहणेष्वविशेषात्सर्वदाशब्दानां ग्रहणं स्यादत आह—ददातेरेवेति । आङ्पूर्वस्येति शेषः ॥ नान्येषामिति । अनभिधानादिति भावः । एतेन शोधनखण्डनादीनामप्यास्यसमवेतक्रियात्वाविशेषादन्येषामपि दारूपाणां ग्रहणं प्राप्नोतीति परास्तम् ॥ आस्यसमवेतैवेति । आस्यमात्रसमवेतफलजनकक्रियावृत्तेर्नेत्यर्थः । आस्यमात्रसमवेतफलजनकक्रियात्वलक्षकास्यशब्देन च नञ्समासः । एवं च स्वं मुखमित्यादौ न दोषः । तदर्थफलस्य संयोगस्य कर्तृकर्मोभयसमवेतत्वात् ॥ न्याय्यत्वादाह—पर्युदास इति । तेन मुखेविपादिके व्यादत्ते इत्येव ॥ वस्तुतः प्रसज्यप्रतिषेध एव । प्रतिषेधे एव स्वाङ्गकर्मकादित्यस्यान्वयसंभवात् प्रत्युदाहरणभाष्येण तस्य तत्संबन्धस्यैव बोधनात् । नहि विधिशेषत्वे तत्प्रत्युदाहरणं संभवतीति परे ॥ विहरणविशेषेति । विकासरूपेत्यर्थः । आस्ये दृष्टं विहरणमित्यर्थादिति भावः ॥ अत एव यथाजातीयकेत्यादिभाष्यं संगच्छते ॥

( ९०९ आक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ स्वाङ्गकर्मकाच ॥ * ॥

( भाष्यम् ) स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥ इह माँ भूत्—'व्याददते पिपीलिकाः पतङ्गस्य मुखम्' इति ॥ आङो दो ॥ २० ॥

( प्रदीपः ) स्वाङ्गकर्मकादिति । स्वमङ्गं स्वाङ्गम्, न तु पारिभाषिकम्—'अद्रवं मूर्तिमत् स्वाङ्गम्' इति । तेन परकीयास्यविहरणे विधिरेव भवति ॥ २० ॥

( उद्योतः ) न तु पारिभाषिकमिति । कृत्रिमत्वाद्रूढत्वाच्च यद्यपि तस्यैव ग्रहणं न्याय्यं तथापि व्याख्यानाल्लक्ष्यानुसाराच्चेदमेव गृह्यत इति भावः ॥ स्वाङ्गकर्मकादिति पञ्चमीनिर्देशाद् अव्यसनक्रियस्येतिषष्ठीनिर्देशाच्च सूत्रस्थद इति पदं पञ्चम्यन्तं षष्ठ्यन्तं वाऽस्त्विति वार्तिककारो मन्यते ॥ २० ॥

---

( १३६ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. ७ सू. )

## १६८ क्रीडोऽनुसंपरिभ्यश्च ॥१।३।२१ ॥

( अनिष्टवारणाधिकरणम् )

( ९१० आक्षेपवार्तिकम् ॥ ४ ॥ )

[॥ * ॥ उपसर्गग्रहणम् ॥ * ॥]

( भाष्यम् ) उपसर्गग्रहणं कर्तव्यम् ॥ इह मा भूत्—'अनुक्रीडति माणवकम्' इति ॥

( प्रदीपः ) क्रीडोऽनु ॥ २१ ॥ अनुक्रीडतीति । तृतीयार्थ इत्यनुः कर्मप्रवचनीयसंज्ञः । माणवकेन सह क्रीडतीत्यर्थः ॥ एतच्च समा साहचर्याल्लभ्यते ॥

( उद्योतः ) क्रीडोऽनुसं ॥ २१ ॥ कर्मप्रवचनीयेति । धात्वर्थविशेषकत्वे तु धातोरकर्मकत्वान्माणवकमिति द्वितीयानापत्तिरिति भावः ॥

---

१ यथा स्यादिति । निषेध इति शेषः । २ 'गृहीत' । ३ मुखविपादिकाविहरणस्य मुखविहरणभिन्नत्वादिति भावः । ( र. ना. ) ४ आस्यविहरणे न स्यादिति । ततश्च मुखविपादिके व्याददातीत्येव इति भावः । ( र. ना. )

५ पर्युदासमाश्रित्येत्यादिः । ( र. ना. ) ६ स्वकीयास्यविहरणे आत्मनेपदं न स्यादिति भावः । ( र. ना. ) ७ मा भूदिति । निषेध इति शेषः । ८ अनोरित्यादिः । ( र. ना. )

( ९११ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ समोऽकूजने ॥ * ॥

**( भाष्यम् ) समोऽकूजन इति वक्तव्यम् ॥ इह मा भूत्—संक्रीडन्ति शकटानि ॥**

( न्यूनतापूरणाधिकरणम् )

( ९१२ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ आगमेः क्षमायाम् ॥ * ॥

**( भाष्यम् ) आगमेः क्षमायामुपसंख्यानं कर्तव्यम् ॥ माणवक आगमयस्व तावत् ॥**

( प्रदीपः ) **आगमयस्वेति** ॥ सहस्व कंचित्कालम्, मा त्वरिष्ठा इत्यर्थः ॥

( उद्द्योतः ) आगमेरिति वार्तिके गमेर्ण्यन्तस्य निर्देश इति बोध्यम् । मा त्वरिष्ठा इति । अध्ययनार्थं कंचित्कालं क्षमस्व मा त्वरां कुर्वित्यर्थः ॥

( ९१३ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ शिक्षेर्जिज्ञासायाम् ॥ * ॥

**( भाष्यम् ) शिक्षेर्जिज्ञासायामुपसंख्यानं कर्तव्यम् । विद्यासु शिक्षते । धनुषि शिक्षते ॥**

( प्रदीपः ) **शिक्षेरिति** ॥ केचिदाहुः—शकिः सन्नन्तो गृह्यते इति विध्यर्थमिदम् ॥ क्रियाविषयकश्च शकिः प्रयुज्यते—भोक्तुं शक्नोति शयितुं शक्नोति इति प्रयोगदर्शनात् ॥ इह तु जिज्ञासाविषयः शकिर्गृह्यते, विद्यां जिज्ञासितुं घटत इत्यर्थः । आत्मनेपदेनैव जिज्ञासाया अवगमाज्जिज्ञासितुमिति न प्रयुज्यते ॥ अन्ये तु 'शिक्ष विद्योपादाने' इत्यस्य ग्रहणं नियमार्थं वर्णयन्ति ॥ विधेरेव तु ज्यायस्त्वात्सन्नन्तशकि[2]ग्रहणं न्याय्यम् ॥

( उद्द्योतः ) **शिक्षेरिति** । शकेः सनि **सनि मीमे**तीस्भावेऽभ्यासलोपे **स्कोरि**तिलोपे षत्वे इक्प्रत्यये शिक्षेरिति निर्देशः ॥ नन्वेवं जिज्ञासायामित्यसङ्गतं, ज्ञानेच्छा हि तदर्थः । लक्ष्ये तु ज्ञानं शक्तौ विषयः, शक्तिः सनर्थेच्छायामिति चेन्न । ज्ञानविशिष्टायाः शक्तेरिच्छाविषयतया ज्ञानस्यापि त[3]त्त्वानपायात् ॥ इयांस्तु विशेषः-इच्छा सनर्थः, शक्तिः प्रकृत्यर्थः, त[4]स्य ज्ञानविषयत्वमात्मनेपदद्योत्यमिति ॥ तदाह—**केचिदिति** ॥ ननु प्रतिपदोक्तशिक्षेरेव ग्रहणं युक्तमत आह—**विध्यर्थमिति** । एवं च विधित्वानुरोधेनैव प[5]रिभाषात्याग इति भावः ॥ नन्वेवं शक्तीच्छावाचकस्य शिक्षेः कथं जिज्ञासायां वृत्तिरत आह—**क्रियाविषयश्चेति** । एवं च जिज्ञासाविशेषणीभूतज्ञानविषयकत्वेन जिज्ञासाविषयत्वं तस्य । **जिज्ञासायामिति** च विषयसप्तमीति भावः ॥ तदाह—**इहेति** । **जिज्ञासितुमिति** । जिज्ञासाविषयज्ञाना[6]र्थशक्तौ जिज्ञासार्थत्वारोपः । वार्तिककृता शिक्षेः सन्नन्तस्य ग्रहणमिति ज्ञापयितुं जिज्ञासाया विषयत्वेन निर्देशः कृत इति बोध्यम् । विद्याविष[7]यज्ञानफलकशक्तीच्छेति वोर्धः । आत्मनेपदसमभिव्याहारे सन्प्रकृतेः शकेर्ज्ञा[8]नविषयशक्तिबोधकत्वमिति तात्पर्यम् ॥ जिज्ञासायाः इच्छाविशेषणीभूतज्ञानस्य ॥ **विधेरेव त्विति** । शिक्षेरनुदात्तेत्त्वेनात्मनेपदस्य सिद्धत्वादित्यर्थः ॥

( ९१४ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ किरतेर्हर्षजीविकाकुलायकरणेषु ॥ * ॥

**( भाष्यम् ) किरतेर्हर्षजीविकाकुलायकरणेषूपसंख्यानं कर्तव्यम् । अपस्किरते वृषो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी ॥**

( प्रदीपः ) **किरतेरिति** । विक्षेपार्थः किरतिः । हर्षादयस्तु विषयत्वेनोपात्ताः ॥ हर्षादिष्वेव **अपाच्चतुष्पादि**ति सुड्विधीयते ॥

( उद्द्योतः ) विषयत्वेनेति । तत्र हर्षः कारणं जीविकाकुलायकरणे फले इति विवेकः ॥ हृष्टा बाला धूलिम[9]पकिरन्तीत्यत्रापि स्यादत आह—हर्षादिष्वेवेति । हर्षादिपूर्वकालेखन एवेत्यर्थः । इहालेखनाभावान्न सुट् । शब्दशक्तिस्वभावात्सुड्विष[11]य एवात्मनेपदमिति भावः ॥

( ९१५ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ हरतेर्गतताच्छील्ये ॥ * ॥

**( भाष्यम् ) हरतेर्गतताच्छील्ये उपसंख्यानं कर्तव्यम् । पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते ॥**

( प्रदीपः ) **हरतेरिति** । गतं प्रकारः ॥ **पैतृकमिति** । पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः ॥ मातुरनुहरतीत्यत्र सादृश्यमात्रं विवक्षितम्, न तु प्रकारताच्छील्यमित्यात्मनेपदं **तद्धितार्थे**[12]त्यत्र भाष्यकारेण न कृतम् ॥

( उद्द्योतः ) ताच्छील्यमविच्छेदेन शीलनं[13] तदाह—**सततमिति** ॥ पैतृकमित्यत्र तत आगत इत्यधिकारे **ऋतष्ठञ्** । **ताच्छील्ये** किम् । रावणमनुहरति नटः ॥

( ९१६ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ आशिषि[14] नाथः ॥ * ॥

**( भाष्यम् ) आशिषि नाथ उपसंख्यानं कर्तव्यम् । सर्पिषो नाथते मधुनो नाथते ॥**

---

१ 'कार्षीरित्यर्थ' इति तूचितम् । शेखरानुरोधात् । निषेधार्थकमाशब्दमाश्रित्य लोटः संभवाद् यथाश्रुतपाठः साधुरिति वयम् । ( र. ना. ) २ 'तस्य शकेर्ग' । ३ इच्छाविषयत्वानपायादित्यर्थः । (र. ना.) ४ शक्तिरूपप्रकृत्यर्थस्य ज्ञानविषयकत्वमित्यर्थः । (र.ना.) ५ लक्षणप्रतिपदोक्तयोरितीत्यादिः । (र.ना.) ६ ज्ञानार्थेति प्रयोजनवाचिनाऽर्थशब्देन बहुव्रीहिः । ( र. ना. ) ७ विद्याविषयेति बहुव्रीह्यर्थो ज्ञानविशेषणम् । ( र. ना. ) ८ 'बोध्यम्' । ९ ज्ञानविषयेति बहुव्रीहिः । ( र. ना. ) १० 'मव' इति त्वपपाठः, अवात् परस्य सुडप्राप्तेः । ११ सुड्विषय एवेति । सुड्विधावप्यात्मनेपदविधायकवार्तिकसमानानुपूर्वीकस्यैव वार्तिकस्य पाठादिति भावः । १२ तद्धितार्थेति सूत्रभाष्ये इत्यर्थः । ( र. ना. ) १३ प्रकारपरिग्रहः । ( र. ना. ) १४ इदं वार्तिकमेतद्भाष्यं च सर्वेष्वसदुपलब्धभाष्यपुस्तकेषु '* आङि नुप्रच्छ्योः *' इति वार्तिकभाष्योत्तरमुपलभ्यते, तथापि प्रदीपोद्योतक्रमानुसारेण क्रम आश्रितः फलभेदाभावात् ।

**( प्रदीपः ) आशिषि नाथ इति ।** आशिष्येव नाथ इति नियमार्थमिदम् ॥ **सर्पिषो नाथते इति ।** सर्पिर्मे भूयादित्याशास्त इत्यर्थः ॥

**( उद्द्योतः )** नाथतेरुदात्तेत्त्वाद्वचनानर्थक्यमत आह—आशिष्येवेति । इदं भूयादितीच्छा आशीः । तत्प्रयुक्तः परदित्सानुकूलो व्यापारो याचनेत्याशीर्याचनयोर्भेदः । अस्यानुदात्तेत्त्वं तु गुजर्थमिति बोध्यम् ॥

( ९१७ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ आङि नुप्रच्छयोः ॥ * ॥

**( भाष्यम् ) आङि नुप्रच्छयोरुपसंख्यानं कर्तव्यम् । आनुते शृगालः । आपृच्छते गुरुमिति ॥**

**( प्रदीपः ) आनुत इति ।** उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः ॥

**( उद्द्योतः )** शब्दं करोतीति । स्तुत्यर्थकोपि नुराङ्पूर्व उत्कण्ठापूर्वकशब्दमात्रे रूढ इति भावः ॥

( ९१८ आक्षेपवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ शप उपलम्भने ॥ * ॥

**( भाष्यम् ) शप उपलम्भन उपसंख्यानं कर्तव्यम् । देवदत्ताय शपते । यज्ञदत्ताय शपते । क्रीडोनु ॥२१॥**

**( प्रदीपः ) शप उपलम्भन इति ।** उपलम्भनं प्रकाशनम् ॥ **देवदत्ताय शपत इति । श्लाघह्नुङिति** संप्रदानसंज्ञा ॥ ज्ञीप्स्यमाने विवदन्ते । केचिदाहुः—यस्मा आख्यायते स संप्रदानम् ॥ य आख्यायते स इत्यन्ये ॥ २१ ॥

**( उद्द्योतः )** शपतिर्नानार्थः । अस्त्याक्रोशे, देवदत्तं शपतीति । निन्दतीत्यर्थः । अस्ति तत्त्वावेदनपूर्वकं तत्प्रत्यायनाय ब्राह्मणादेः कचिद्धस्तादिना साक्षात्स्पर्शरूपे मानसस्पर्शरूपे वा शपथे, यथा—विप्रैः शपे क्षात्रधर्मेण शपे इत्यादौ । तृतीया तु कर्मणोपि करणत्वविवक्षया । अस्ति प्रकाशने, देवदत्ताय शपते । कथयतीत्यर्थः । तत्र स्वरितेत्त्वात् सिद्धेऽकर्त्रभिप्रायार्थमिदम्[३] । तदपि प्रकाशनार्थ एव । तदाह—उपलम्भनं प्रकाशनमिति । यद्येवं शपतेर्ण्यन्तज्ञानात्यर्थत्वेन द्विकर्मकत्वे देवदत्तं शपत इत्यापत्तिरत आह—श्लाघह्नुङिति ॥ ननु ज्ञापयितुमिष्टस्य संप्रदानत्वम् । ज्ञापयितुमिष्टं चाणौ कर्मैव न तु णौ कर्मेत्याशङ्क्याह—केचिदिति । प्रधानभूतप्रत्ययार्थकर्मण एव ग्राह्यत्वादिति भावः ॥ य इति । प्रथमोपस्थितत्वात्प्रकृत्यर्थकर्मैव ग्राह्यमिति भावः ॥ प्रकृते देवदत्तस्तादृश एवेत्याशयः ॥ अत्राद्यं मतं न युक्तं, तथा हि सति ज्ञाप्यमान इत्येव सिद्धे संनुपादानवैयर्थ्यापत्तेः ॥ 'सख्यः शपामि यदि किंचिदपि स्मरामीत्यादौ तु शपथार्थकत्वान्नात्मनेपदम् ॥ काशिकादौ तूपलम्भनं शपथ इति व्याख्यातं, तच्चिन्त्यम् । उपलम्भनशब्दस्य योगेन प्रकाशनार्थकत्वात् । शपथे रूढिकल्पने न मानम् ।

अत एव हरिणैतदुदाहरणे शपिर्द्विकर्मक इति व्याख्यातम् ॥ २१ ॥

( १३७ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. ८ सू. )

# १६९ समवप्रविभ्यः स्थः ॥ १ । ३ ।२२॥

( ९१९ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ आङः स्थः प्रतिज्ञाने ॥ * ॥

**( भाष्यम् ) आङः स्थः प्रतिज्ञान इति वक्तव्यम् । अस्ति सकारमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते । विकारौ गुणवृद्धी आतिष्ठते ॥ समव ॥ २२॥**

**( उद्द्योतः )** समवप्र ॥ २२ ॥ अस्तिमिति । केचित्स[६]कारमात्रं धातुं पठित्वा पिति सार्वधातुकेऽड्डाटौ गुणवृद्धिरूपावागमा[७]विलाहुः ॥ विकाराविति । सँस्थानेऽस्तिमासिं चेत्यर्थः ॥ २२ ॥

---

( १३८ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. ९ सू. )

# १७१ उदोनूर्ध्वकर्मणि ॥ २४ ॥

( ९२० आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ उद ईहायाम् ॥ * ॥

**( भाष्यम् ) उद ईहायामिति वक्तव्यम् । इह मा भूत्—उत्तिष्ठति सेनेति ॥ उदः ॥ २४ ॥**

**( प्रदीपः ) उदोनू ॥ २४ ॥ उद ईहायामिति ।** ईहा विशिष्टा चेष्टा कायपरिस्पन्दात्मिका गृह्यते ॥ **उत्तिष्ठति सेनेति ।** उत्पद्यते जायते सेनेत्यर्थः ॥ २४ ॥

**( उद्द्योतः )** उदोऽनूर्ध्वे ॥ २४ ॥ सर्वस्यापि धात्वर्थस्येहानुविद्धत्वाद्विशिष्योपादानं व्यर्थमत आह—ईहेति ॥ प्रत्युदाहरणे तादृशव्यापाराभावं दर्शयति—उत्पद्यत इति ॥ २४ ॥

---

( १३९ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. १० सू. )

# १७२ उपान्मन्त्रकरणे ॥ २५ ॥

( ९२१ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ उपाद्देवपूजासंगतकरणयोः ॥ * ॥

**( भाष्यम् ) उपाद्देवपूजासंगतकरणयोरिति वक्तव्यम् । आदित्यमुपतिष्ठते । चन्द्रमसमुपतिष्ठते ॥ संगतकरणे—रथिकानुपतिष्ठते । अश्वारोहानुपतिष्ठते ॥**

**बहूनामप्यचित्तानामेको भवति चित्तवान् ।**
**पश्य वानरसैन्येस्मिन्यदर्कमुपतिष्ठते ॥ १ ॥**
**मैवं मंस्थाः सचित्तोयमेषोपि हि यथा वयम् ।**
**एतदप्यस्य कापेयं यदर्कमुपतिष्ठति ॥ २ ॥**

---

१ परस्मिन् दातरि या दित्सा तदनुकूलो देहीति शब्दप्रयोगादिरूपो व्यापार इत्यर्थः । ( र. ना. ) २ विवादमेव दर्शयति केचिदाहुरित्यादिना । ( र. ना. ) ३ इदं सप्तम्यन्तम् । ( र. ना. ) ४ प्रकृत्यर्थकर्मैवेत्यर्थः । ( र. ना. ) ५ Bangal Asiatic Society मुद्रितपुस्तके तु 'तदुपादान' इति शोधितम् । ६ आपिशलाः 'अस भुवि' इतीमं धातुं 'स भुवि' इति सकारमात्रं प्रतिजानते । गुणवृद्धी आगममात्रे प्रतिजानते । इति पदमञ्जरीभावः । ७ सकाररूपस्य धातोः स्थाने इत्यर्थः । ( र. ना. ) ८ यथाश्रुतसूत्रपाठे संगृहीतत्वादित्यर्थः । ( र. ना. ) ९ उपश्लिष्यतीत्यर्थः । ( र. ना. )

( प्रदीपः ) उपान्मन्त्र ॥२५॥ उपाद्देवपूजेति । अमन्त्रकरणार्थमिदम् ॥ अर्कमुपतिष्ठते इति । देवपूजां मत्वात्मनेपदं कृतम् ॥ चापलमेतन्न पूजनमिति न कृतमपरत्र ॥

( उद्द्योतः ) उपान्मन्त्र ॥ २५ ॥ ननु देवपूजाया मन्त्रकरणकत्वात्सूत्रेणैव सिद्धमत आह—अमन्त्रेति । अमन्त्रकरणकेऽर्थे वर्तमानात्स्थ इत्यर्थ इति भावः ॥

( न्यासान्तरप्रदर्शकभाष्यम् )

अपर आह—

( वार्तिकन्यासान्तरम् )

## ॥ * ॥ उपाद्देवपूजासंगतकरणमित्रकरणपथिषु ॥ * ॥

( भाष्यम् ) उपाद्देवपूजासंगतकरणमित्रकरणपथिष्विति वक्तव्यम् ॥ देवपूजासंगतकरणयोरुदाहृतम् । मित्रकरणे—रथिकानुपतिष्ठते, अश्वारोहानुपतिष्ठते । पथिषु—अयं पन्थाः स्रुघ्नमुपतिष्ठते, अयं पन्थाः साकेतमुपतिष्ठते ॥

( प्रदीपः ) अपर आहेति । सङ्गतकरणमुपश्लेषमात्रं मित्रकरणं त्वनुपश्लिष्टस्यापि मैत्रीसंबन्धः ॥ अयं पन्थाः स्रुघ्नमुपतिष्ठत इति । स्रुघ्नं प्राप्नोतीत्यर्थः ॥

( उद्द्योतः ) मैत्रीसंबन्धः प्रीतिरूपः ॥ ननु पथ्यपि सङ्गतकरणमस्तीति पृथग् ग्रहणं व्यर्थमत आह—प्राप्नोतीति । प्राप्यप्रापकव्यापारपूर्वकसंबन्धो हि तद्[१] । न चेह तदस्ति । यतः पथः स्रुघ्नस्य च बुद्धिकल्पितप्राप्तिक्रियापेक्षं कारकत्वम्, न तु वस्तुत इति भावः ॥

( ९२२ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ वा लिप्सायाम् ॥ * ॥

( भाष्यम् ) वा लिप्सायामिति वक्तव्यम् । भिक्षुको ब्राह्मणकुलमुपतिष्ठते । भिक्षुको ब्राह्मणकुलमुपतिष्ठति ॥ उपान्मन्त्रक ॥ २५ ॥

( प्रदीपः ) भिक्षुक इति । लिप्सया हेतुभूतया ब्राह्मणकुलमुपगच्छतीत्यर्थः ॥ २५ ॥

( उद्द्योतः ) लिप्सयेति । लिप्साकरणके उपगमने गमेर्वृत्तिरिति भावः ॥ २५ ॥



(१४० आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. ११ सू.)

## १७४ उद्विभ्यां तपः ॥ १ । ३ । २७ ॥

( भाष्यम् ) अकर्मकादित्येव । [ इह मा भूत्—] उत्तपति सुवर्णं सुवर्णकारः ॥

( प्रदीपः ) उद्विभ्याम् ॥ २७ ॥ भासने वर्तमानस्तपिरुद्विपूर्वोऽकर्मकः ॥

( उद्द्योतः ) उद्विभ्याम् ॥ २७ ॥ उत्तपति सुवर्णमित्यादिप्रयोगादकर्मकत्वं तपेर्विशेषणं न संभवतीत्यत आह—भासने इति । उत्तपते वितपते सूर्य इत्युदाहरणम् । भासत इत्यर्थः ॥

( ९२३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्वाङ्गकर्मकाच ॥ * ॥

( भाष्यम् ) स्वाङ्गकर्मकाच्चेति वक्तव्यम् । उत्तपते पाणी, वितपते पाणी । उत्तपते पृष्ठम्, वितपते पृष्ठम् ॥

( प्रदीपः ) स्वाङ्गमिहोत्तरत्र च पूर्वसूत्रे[३]वत्स्वमङ्गं गृह्यत इतीह न भवति—देवदत्तो यज्ञदत्तस्य पाणिमुत्तपतीति ॥

(उद्द्योतः) स्वमङ्गमिति । न त्वद्रवं मूर्तिमदिति भावः ॥

( आक्षेपभाष्यम् )

अथोद्विभ्यामित्यत्र किं प्रत्युदाह्रियते ? ।

( प्रदीपः ) अथेति । किमयं विधिः, अथ नियम इत्यभिप्रायेण प्रश्नः ॥

( उद्द्योतः ) प्रत्युदाहरणविशेषप्रश्ने तात्पर्यमाह—किमयमिति । यदि कर्मकर्तृत्वं विनाप्यकर्मकत्वमुत्तपेस्तदा विध्यर्थम् । अथ कर्मकर्तर्येवाकर्मकत्वं ततो नियमार्थमिति भावः ॥

( नियमपक्षवादिसमाधानभाष्यम् )

निष्टप्यते इति ॥

( प्रदीपः ) उद्विभ्यां तप आत्मनेपदमेव न यगादीति नियमोऽनेन क्रियत इत्याह—निष्टप्यत इति ॥

( उद्द्योतः ) नियमपक्षे यगादिनिवृत्तिः फलमिति यगादिमत्प्रत्युदाहार्यमित्याह—उद्विभ्यामिति ॥

( विधिपक्षवाद्याक्षेपभाष्यम् )

किं पुनः कारणमात्मनेपदमेवोदाह्रियते, न पुनः परस्मैपदं प्रत्युदाहार्यं स्यात् ? ।

( प्रदीपः ) विधिनियमसंभवे विधिर्बलवानिति मत्वाह—किं पुनरिति ॥

( नियमपक्षवादिसमाधानभाष्यम् )

तपिरयमकर्मकः । अकर्मकाश्चापि सोपसर्गाः सकर्मका भवन्ति । न चान्तरेण कर्मकर्तारं सकर्मका अकर्मका भवन्ति ॥

( प्रदीपः ) विधिर्न संभवतीति मत्वाह—तपिरिति । भासते दीप्यत इत्यत्रार्थेऽकर्मक इत्यर्थः ॥ अकर्मकाश्चेति । अनेकार्थत्वाद्धातूनामन्तर्भावितण्यर्थत्वादिति[४] भावः । ततश्च तापने वर्तमानस्तपिः सकर्मकः । पुनः प्रयोजकव्यापाराविवक्षायां कर्तुः कर्मवद्भावात्सिद्धमात्मनेपदमिति पुनर्विधानं नियमार्थं संपद्यत इत्यन्यत्राप्यात्मनेपदं भवत्येव ॥

( उद्द्योतः ) भाष्ये तपिरयमकर्मक इति । तपिरयमकर्मकः सूत्रे गृहीतोऽकर्मकादित्यधिकारादित्यर्थः ॥ अकर्मकत्वं चास

---

१ मित्रीकरोतीत्यर्थः । ( र. ना. )  २ संगतकरणमित्यर्थः । ( र. ना. )  ३ पूर्वसूत्रेति । आङोद इत्यत्रत्यवार्तिकवदित्यर्थः । ४ 'दित्यर्थः' ।

कर्मकर्तर्येवेति न परस्मैपदं प्रत्युदाहर्तुं शक्यमिति भावः ॥ तदाह—**भासत इति**। अत्रार्थे शुद्धस्तपिरकर्मकः, उदादिपूर्वस्त्वन्तर्भावितण्यर्थत्वात् सकर्मक एव। तस्य च न कर्मकर्तृत्वं विनाऽकर्मकत्वमिति विधित्वासंभव इति भावः ॥ **अनेकार्थत्वादिति**। उद्विरूपोपसर्गस्त्वन्तर्भावितण्यर्थत्वस्यैव द्योतक इति भावः ॥ **तपिः सकर्मक इति**। उदादिपूर्वकः सकर्मक एवेति भावः ॥ **अन्यत्रापीति**। उद्विभ्यामन्यत्रापीत्यर्थः ॥ **अत्रापीतिपाठे** निष्टप्यत इत्यत्रापीत्यर्थः ॥

**( समाधानबाधकविधिपक्षवादिभाष्यम् )**

**यदुच्यते—न चान्तरेण कर्मकर्तारं सकर्मका अकर्मका भवन्तीति ॥ अन्तरेणापि कर्मकर्तारं सकर्मका अकर्मका भवन्ति। तद्यथा—नदी वहतीत्यकर्मकः, भारं वहतीति सकर्मकः। तस्मान्निष्टपतीति प्रत्युदाहार्यम् ॥ २७ ॥ उद्विभ्याम् ॥**

**( प्रदीपः )** इदानीं विधिपक्षवाद्याह—**अन्तरेणापीति**। तदेवं ज्वलनवृत्तिस्तपिरकर्मकः। संतापने विलापने च सकर्मकः ॥ कर्मकर्तरि तु **यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थीति** वचनेन यक्चिणौ प्रतिषिद्धौ ॥ २७ ॥

**( उद्द्योतः )** **इदानीमिति**। अकर्मकाणामुपसर्गसंबन्धेपि प्रलम्बत इति वत्सकर्मकत्वनियमाभावाद्विधिरेव सिद्धान्त इत्याशयः ॥ **नदी वहतीत्यस्य** स्यन्दत इत्यर्थः ॥ **तदेवमिति**। उपसर्गसंबन्धेपीत्यर्थः। एवं च कर्मकर्तारं विनाप्युदाहरणसंभव इति भावः ॥ तर्कि कर्मकर्तर्युत्तपत इत्यस्यायिष्टः? । नेष्टः, प्रकारान्तरेण तद्व्यावृत्तेरित्याशयेनाह—**कर्मकर्तरि त्विति**। आत्मनेपदविधावकर्मकायक्चिणोः प्रतिषेधेनोपसर्गान्तरसंबन्धे तत्र यक्चिणौ भवत एवेति बोध्यम् ॥ २७ ॥

---

(१४१ आत्मनेपदनियमसूत्रम्। १। ३। २ आ. १२ सू.)

## १७५ आङो यमहनः ॥ १। ३। २८॥

**( भाष्यम् ) अकर्मकादित्येव। [इह मा भूत्—] आयच्छति रज्जुं कूपात्। आहन्ति वृषलं पादेन ॥**

**( उद्द्योतः )** आङो यम ॥ २८ ॥ **भाष्ये आयच्छतीति।** आकर्षतीत्यर्थः ॥ २८ ॥

**( ९२४ आक्षेपवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ स्वाङ्गकर्मकाच्च ॥ * ॥

**( भाष्यम् ) स्वाङ्गकर्मकाच्चेति वक्तव्यम्। आयच्छते पाणी। आहते उदरमिति ॥ आङो यमहनः ॥ २८ ॥**

---

(१४२ आत्मनेपदनियमसूत्रम्। १। ३। २ आ. १३ सू.)

## १७६ समो गम्यृच्छिभ्याम् ॥१।३।२९॥

**( ९२५ आक्षेपवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् ॥ * ॥

**( भाष्यम् ) समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानं कर्तव्यम्। संविते। संपृच्छते। संस्वरते।**

**( प्रदीपः )** समः ॥२९॥ **समो गम्यृच्छिभ्यामित्येतावत्सूत्रमिति** वार्तिकमारब्धम् ॥

**( उद्द्योतः )** समो गम्यृ ॥ २९ ॥ विदादीनामपि सूत्र एव वृत्तिकारैः पाठाद्वार्तिकं व्यर्थमत आह—**समो गमिति**। ग्रामादिकः स पाठ इति भावः ॥ **भाष्ये—गमादिष्विति**। बहुवचनं प्रयोगबाहुल्याभिप्रायेण ॥

**( ९२६ आक्षेपवार्तिकम् ॥ २ ॥ )**

### ॥ * ॥ अर्तिश्रुदृशिभ्यश्च ॥ * ॥

**( भाष्यम् ) अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्। अर्ति—मा समृत। मा समृषाताम्। मा समृषत। अर्ति ॥ श्रु—संशृणुते। दृशि—संपश्यते ॥**

**( उद्द्योतः )** **भाष्ये—मा समृतेति**। अङ्विधौ लुप्तविकरणशास्तिसाहचर्यात् जुहोत्यादेरेव ग्रहणमिति भ्वादेरिदम्। तस्य तु मा समरतेत्यादि ॥ परस्मैपदेष्विति त्वङ्विधौ न संबध्यते, योगविभागसामर्थ्यादिति वृत्तिः ॥ भाष्योदाहरणबलात्संबध्यते एव। योगविभागो वैचित्र्यार्थः ॥ यद्वा वार्तिके श्रुदृशिसाहचर्याद् भ्वादेरेव ग्रहणमितीयर्तेर्नात्मनेपदमित्यन्ये ॥

**( ९२७ आक्षेपवार्तिकम् ॥ ३ ॥ )**

### ॥ * ॥ उपसर्गादस्यत्यूह्योर्वावचनम् ॥ * ॥

**( भाष्यम् ) उपसर्गादस्यत्यूह्योर्वेति वक्तव्यम्। निरस्यति। निरस्यते। समूहति। समूहते ॥ समो ॥ २९ ॥**

**( प्रदीपः )** **उपसर्गादिति**। अत्राकर्मकादिति न संबध्यते ॥ २९ ॥

**( उद्द्योतः )** निरस्यतिसमूहत्योः सकर्मकत्वादाह—**अत्रेति** ॥ २९ ॥

---

(१४३ आत्मनेपदनियमसूत्रम् ॥ १। ३। २ आ. १४ सू.)

## १७७ आङ उद्गमने ॥ ४० ॥

**( ९२८ आक्षेपवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ ज्योतिषामुद्गमने ॥ * ॥

**( भाष्यम् ) ज्योतिरुद्गमने इति वक्तव्यम्। इह**

---

१ कर्मवद्भावेनात्मनेपदविधानेपीत्यर्थः।

२ तप् धाताविवत्यर्थः। सकर्मकत्वादित्यादिः। ( र. ना. )

३ विदिप्रभृतीनामित्यर्थः। ( र. ना. )

४ अन्यथाधात्वभिप्रायेण द्विवचनं स्यादिति भावः। ( र. ना. )

मा भूत्—आक्रामति धूमो हर्म्यतलादिति ॥ आङ ॥ ४० ॥

( प्रदीपः ) आङः ॥४०॥ ज्योतिषामिति । उद्गमने वर्तमानोऽकर्मकः क्रमिः । इह तु नभः समाक्रामतीति न भवत्यात्मनेपदम् । अत्र हि क्रमिर्व्याप्तौ वर्तते न तूद्गमने ॥ ४० ॥

( उद्योतः ) आङ उद्ग ॥ ४० ॥ ननु ज्योतिषामुद्गमने इत्यस्य ज्योतिःसंबन्ध्युद्गमने इत्यर्थः । एवं च पक्षी सूर्यमाक्रामतीत्यत्रापि प्रसङ्गः । यद्वा कर्मणि कर्तरि वा षष्ठीत्यत्र विनिगमनाविरहात्तत्रापि प्रवृत्तिः । न चोभयप्राप्ताविति कर्मण्येवैषा षष्ठी, तथा सति ज्योतिरुद्गमन इति भाष्यकृत्कृतसमस्तप्रयोगानुपपत्तिरिति, उभयोपादान एव तत्प्रवृत्तिरत आह—उद्गमने इति ॥ प्रत्युदाहरणभाष्ये हर्म्यतलादित्येव पाठः सांप्रदायिक इति भावः ॥ एवं चोद्गमनमत्रोदय एवेति बोध्यम् ॥ ४० ॥

(१४४ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ । आ. १५ सू.)

## १९५ व्यक्तवाचां समुच्चारणे ॥ ४८ ॥

( व्यक्तवाक्पदार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

व्यक्तवाचामिति किमर्थम्? ॥

( समाधानभाष्यम् )

'वरतनु संप्रवदन्ति कुक्कुटाः ॥'

( समाधानबाधकभाष्यम् )

व्यक्तवाचामित्युच्यमानेऽप्यत्र प्राप्नोति । एतेपि हि व्यक्तवाचः ॥ आतश्च व्यक्तवाचः । कुक्कुटेनोदिते उच्यते—कुक्कुटो वदतीति ॥

( समाधानसाधकभाष्यम् )

एवं तर्हि 'व्यक्तवाचाम्' इत्युच्यते । सर्वे एव हि व्यक्तवाचः । तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो ये व्यक्तवाच इति ॥ के च साधीयः? । येषां वाच्यकारादयो वर्णाः व्यज्यन्ते ॥ न चैतेषां वाच्यकारादयो वर्णा व्यज्यन्ते ॥

(प्रदीपः) व्यक्तवाचाम् ॥४८॥ सर्वे एवेति । ये वदत्यर्थस्य कर्तारः । वद व्यक्तायां वाचीति पाठादिति भावः।

( उद्योतः ) व्यक्तवाचां ॥ ४८ ॥ मनुष्यादिवत्तिरश्चां व्यक्तवाक्त्वाभावात्सर्वे व्यक्तवाच इत्यसंगतमत आह—ये इति ॥ भाष्ये येषां वाच्यकारादय इति । येषां वाचि वैखरीरूपायामकारादयो वर्णा व्यज्यन्ते व्यक्ता भवन्तीत्यर्थः ॥

( समाधानबाधकभाष्यम् )

एतेषामपि वाच्यकारादयो वर्णा व्यज्यन्ते ॥ आतश्च व्यज्यन्ते । एवं ह्याहुः 'कुक्कुटाः कुक्कुडिति'॥

( उद्योतः ) कुक्कुटाः कुक्कुडिति भाष्यस्य वदन्तीति शेषः । एवं जना आहुरित्यन्वयः ॥

( समाधानसाधकभाष्यम् )

नैवं ते आहुः । अनुकरणमेतत्तेषाम् ॥

अथ वा नैवं विज्ञायते—व्यक्ता वाग्येषां त इमे व्यक्तवाच इति ॥ कथं तर्हि? ॥ व्यक्ता वाचि वर्णा येषां त इमे व्यक्तवाच इति ॥ व्यक्तवाचां ॥ ४८ ॥

( प्रदीपः ) अथ वेति । विनापि प्रकर्षगत्या व्यधिकरणपदबहुव्रीह्याश्रयणान्मनुष्या एव गृह्यन्ते ॥ व्यक्ता वाचीति। वाचि अकारादयो वर्णा येषां व्यक्तास्तेषामित्यर्थः । शुकसारिकादीनां न सर्ववर्णविषयं स्वाभाविकं व्यक्तवाक्त्वमपि तु पुरुषप्रयत्नवशेन कतिपयवर्णविषयमिति तत्रात्मनेपदाभावः ॥ ४८ ॥

( उद्योतः ) वाचि शब्दे ॥ निष्ठेति व्यक्तशब्दस्य पूर्वनिपातः ॥ ४८ ॥

(१४५ आत्मनेपदनियमसूत्रम् । १ । ३ । २ आ. १६ सू.)

## १९८ अवाद् ग्रः ॥ ५१ ॥

( ९२९ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ अवाद् ग्रो गिरतेः ॥ * ॥

( भाष्यम् ) अवाद् ग्र इत्यत्र गिरतेरिति वक्तव्यम् । गृणातेर्मा भूत् ॥

( तृतीयाक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ।

( सिद्धान्तिसमाधानभाष्यम् )

न वक्तव्यम् । प्रयोगाभावात् । 'अवाद् ग्र' इत्युच्यते । न चावपूर्वस्य गृणातेः प्रयोगोस्ति ॥ अवाद् ग्रः ॥ ५१ ॥

( प्रदीपः ) अवाद् ग्रः ॥ ५१ ॥ न चावपूर्वस्येति । नियतविषयत्वात्केषांचित्क्रियाविशेषणानाम् । यथोर्यादयः कृभ्वस्तिविषया एवेति भावः ॥ ५१ ॥

( उद्योतः ) अवाद् ग्रः ॥ ५१ ॥ अनुगृणातीतिवद् अवगृणातीति प्रयोगं को वारयेदत आह—नियतेति ॥ क्रियाविशेषणानां, तद्विशेषणार्थद्योतकानाम् ॥ ५१ ॥

( १४६ आत्मनेपदनियमसूत्रम् ॥ १।३। २ आ. १७ सू. )

## २०१ समस्तृतीयायुक्तात् ॥ ५४ ॥

( आक्षेपभाष्यम् )

तृतीयायुक्तादिति किमर्थम्? ॥

१ 'तलमिति' । २ कर्मणि चेति तत्र समासनिषेधादिति भावः । समाधानान्तरमप्याह उभयोपादान एवेति । (र.ना.) ३ व्यक्तवाच इति संबध्यते । (र.ना.)

४ अनुकरणमिति । तथा चोक्तं निरुक्तकृतापि ( ३।१८।१ )—'का क इति शब्दानुकृतिः । तदिदं शकुनिषु बहुलम्' इति ॥

(प्रदीपः) समः ॥५४॥ धातोस्तृतीयायोगासंभवात्तदर्थेन योगे भाव्यमात्मनेपदेन । सच सर्वत्र चरत्यर्थे संभवतीत्यभिप्रायेणाह—तृतीयायुक्तादिति किमर्थमिति ॥

(उद्द्योतः) समस्तृ ॥ ५४ ॥ तृतीयायोगाभावे आत्मनेपदनिवृत्त्या तस्य चारितार्थ्यात् प्रश्नानुपपत्तिमाशङ्क्याह—धातोरिति तदर्थेन करणेन ॥

(समाधानभाष्यम्)

'उभौ लोकौ संचरसीमं चामुं च देवल' ॥

(समाधानबाधकभाष्यम्)

तृतीयायुक्तादित्युच्यमानेऽन्यत्र प्राप्नोति । अत्रा[1]पि हि तृतीयया[2] योग इति ॥

(समाधानसाधकभाष्यम्)

एवं तर्हि तृतीयायुक्तादित्युच्यते । सर्वत्र च तृतीयया योगः । तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो यत्र तृतीयायोग इति । क च साधीयः? । यत्र तृतीया श्रूयते ॥ समस्तृ० ॥ ५४ ॥

(प्रदीपः) सर्वत्रेति । केचित्सर्वक्रियापेक्षमेतदुक्तमिति मन्यन्ते । यथा असिना छिनत्ति असिस्तैक्ष्ण्येन च्छिनत्ति तैक्ष्ण्यमात्मना छिनत्तीति । यत्रापि करणाभिधायि पदं न श्रूयते तत्रापि केनचित्करणेन भाव्यम्, अन्तत एकस्यैव पदार्थस्य भेदविवक्षायामात्मा करणम् ॥ अन्ये तु चरतिक्रियापेक्षमेवमुक्तमित्या[3]हुः । नहि संचरणं करणेन विना संभवति ॥ यत्रेति । तत्र ह्यन्तरङ्गा करणप्रतीतिः । अन्यत्र तु करणस्य परिकल्प्यत्वाद्बहिरङ्गा ॥ ५४ ॥

(उद्द्योतः) केचिदिति । सर्वत्रेति सामान्योक्तेरिति तद्भावः ॥ यत्रापीति । अस्ति शेत इत्यादौ ॥ अन्ये त्विति । प्रकरणादिति भावः ॥ अन्तरङ्गत्वं शैघ्र्यमेव ॥ ५४ ॥

(१४७ आत्मनेपदनियमसूत्रम् ॥ १।३।२ आ. १८ सू०)

## २०२ दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥

(तृतीयोपपादनाधिकरणम्)

(आक्षेपभाष्यम्)

'सा चेत्तृतीया चतुर्थ्यर्थे' इत्युच्यते । कथं नाम तृतीया चतुर्थ्यर्थे स्यात्? ॥

(समाधानभाष्यम्)

एवंतर्हि—

अशिष्टव्यवहारेनेन तृतीया च विधीयत आत्मनेपदं च । दास्या संप्रयच्छते । वृषल्या संप्रयच्छते । यः शिष्टव्यवहारः ब्राह्मणीभ्यः संप्रयच्छतीत्येव तत्र भवितव्यम् ॥

(प्रदीपः) दाणश्च ॥ ५५ ॥ अशिष्टव्यवहार इति । अशिष्टानां संकीर्णाचाराणां यो व्यवहारस्तस्मिन्नित्यर्थः । तत्र चेच्छब्दं चार्थे व्याचक्षाणा अनेनैवोभयं संगृहीतमित्याहुः ॥

(उद्द्योतः) दाणश्च ॥ ५५ ॥ अशिष्टोऽविहितो व्यवहार इत्यर्थे दास्यै संयच्छति वास इत्यत्रापि स्यादत आह—अशिष्टा[5]नामिति । अशिष्टशब्दः प्रतिषिद्धकर्तृषु रूढ इति भावः ॥ [भा[4]ष्ये—अनेनेति नास्तीति कैयटस्वरसः ॥ ]

(पूर्वपक्षिप्रत्याख्यानभाष्यम्)

यद्येवं नार्थोऽनेन ॥

(उद्द्योतः) अनेनेति । अ[5]शिष्टव्यवहार इति तु कर्तव्यमेव ॥

(आक्षेपभाष्यम्)

केनेदानीं तृतीया भविष्यति, आत्मनेपदं च? ॥

(१३२ पूर्वपक्षिसमाधानवार्तिकम् ॥ २ ॥)

### ॥ * ॥ सहयुक्ते तृतीया स्याद् व्यतिहारे तङो विधिः ॥ * ॥

(भाष्यम्) "सहयुक्तेऽप्रधाने" इत्येव तृतीया भविष्यति, "कर्तरि कर्मव्यतिहारे" इत्यात्मनेपदम् ॥ दाणश्च ॥ ५५ ॥

(प्रदीपः) सहयुक्त[6]मिति । दास्यै विश्राण्य तया सह उपभुङ्क्ते इत्ययं वाक्यार्थः ॥ ५५ ॥

(उद्द्योतः) दास्यै इति । दास्यभिलषितं धूर्तः करोति दासी च धूर्ताभिलषितमिति व्यतीहारसिद्धिः । दानपूर्वकोपभोगे च संप्रयच्छतिरिति भावः ॥ अत्र वदन्ति—यद्येवमित्यादिपूर्वपक्ष्युक्तिरित्युक्तिप्रत्युक्तिस्वारस्येन प्रतीयते । तया सहोपभुङ्क्ते इत्येतन्मात्रेण व्यतीहाराप्रतीतेः । विश्राणनमादाय तु न सः । अन्ययोग्यैकजातीयक्रियाणामन्येन करणं हि सः । तस्यै विश्राण्य तामुपभुङ्क्ते इत्यर्थे कर्मव्यतीहाराप्रतीतावप्यशिष्टत्वप्रतीत्या तत्रेष्टात्मनेपदासिद्धेश्च, उपपदविभक्तेरितिन्यायेन विश्राणननिरूपितचतुर्थ्या एवापत्तेश्च, धातोर्व्यतीहारे वृत्तावपि कर्तरीतिसूत्रे तद्धात्वर्थकर्तृमात्रे तङो विधानौचित्येन तिङोक्तत्वात्तेनैव न्यायेन प्रथमापत्तेश्च । अ[7]त एव क्रियायोगे कर्तरीत्येव तृतीयायां सिद्धायामक्रियायोगार्थं सूत्र[8]मिति तेन सहेतिसूत्रे भाष्यकृद्वक्ष्यतीत्यलम् ॥ ५५ ॥

---

१ 'अत्रापि तृती' । २ 'तृतीयायोगः' । ३ मकृतोपयोगित्वादिदमेव व्याख्यानं साधु । (र. ना.) ४ अयं कोष्टकान्तर्गतः पाठो लिखितपुस्तक एकस्मिन्नोपलभ्यते । ५ अशिष्टेति ॥ शिष्टव्यवहारे मा भूदिति भावः । ६ सहयुक्ते इति विहिततृतीयायाः कारकविभक्तित्वाभावादेवेत्यर्थः । (र. ना.) ७ सहयुक्ते चेति सूत्रमित्यर्थः । (र. ना.) ८—'तेन सहेति' इत्ययमपपाठः, तत्सूत्रभाष्ये तथापाठस्यानुपलम्भात् । 'सहेतिसूत्रे' इत्येव पाठ आसीत् । तथा च इतिपदघटितसूत्रे 'तेन' इत्यादौ स्मृत्वैव केनचिद्वर्धितम् ॥ 'सहयुक्ते—' इति-सूत्रे इत्यर्थो बोध्यः ।

( १२७ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. १९सू. )

## २०३ उपाद्यमः स्वकरणे ॥ ५६ ॥

( स्वकरणशब्दार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति । स्वं शाटकान्तमुपयच्छति—इति ? ॥**

(प्रदीपः) उपाद्यमः ॥५६॥ स्वस्य स्वत्वेन स्थितस्य ग्रहणादिकं[1] करणं स्वकरणं गृह्यते इति मत्वा प्रश्नः—इहेति ॥

( उद्योतः ) उपाद्यमः ॥ ५६ ॥ स्वस्य सतः शाटकान्तस्याभूतप्रादुर्भावलक्षणकरणायोगात् प्रश्नानुपपत्तिरत आह—स्वस्येति । करणं क्रिया ग्रहणादिरूपेत्यर्थः ॥

( समाधानभाष्यम् )

**अस्वं यदा स्वं करोति तदा भवितव्यम् ॥**

( प्रदीपः ) अस्वमिति । अन्तरङ्गत्वान्निष्पादनैलक्षणोत्र करोत्यर्थो गृह्यते ॥

( उद्योतः ) अन्तरङ्गत्वादिति । निष्पन्नस्य हि ग्रहणं, निष्पत्तिश्च निष्पादनाधीनेत्यन्तरङ्गता । किं चायमर्थः प्रकरणाद्यनपेक्षः । अर्थान्तरे तु तदपेक्षेत्यन्तरङ्गत्वम् ।

( आक्षेपभाष्यम् )

**यद्येवं स्वीकरणमिति प्राप्नोति ।**

( समाधानभाष्यम् )

**विचित्रास्तद्धितवृत्तयः । नातस्तद्धित उत्पद्यते ॥ उपाद्यमः स्वकरणे ॥ ५६ ॥**

( प्रदीपः ) नात इति । च्वेर्विकल्पेन विधानादिति केचिदाहुः । प्रकृतेरविवक्षितत्वात्कार्यमात्रविवक्षायां नास्ति च्विरित्यपरे ॥ ५६ ॥

( उद्योतः ) केचिदाहुरिति । तदा हि अस्वं स्वं करोतीतिवाक्येन भवितव्यमित्यरुचिः ॥ प्रकृतेरिति । स्वकरण इत्यस्य स्वत्ववतो निष्पादने इत्यर्थ इति भावः । च्विस्तु न वास्तवे तथाभवने, किं त्वारोपित एव स्वभावादिति तात्पर्यम् । इदमेव वैचित्र्यम् ॥ ५६ ॥

---

( १४९ आत्मनेपदनियमबाधकसूत्रम् १।३।२ आ. २० सू. )

## २०५ नानोर्ज्ञः १।३।५८ ॥

( प्रतिषेधविषयनिर्णयाधिकरणम् )

( ९३३ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥*॥ अनोर्ज्ञः प्रतिषेधे सकर्मकवचनम् ॥*॥**

( भाष्यम् ) **अनोर्ज्ञः प्रतिषेधे सकर्मकग्रहणं कर्तव्यम् । इह मा भूत्—'औषधस्यानुजिज्ञासते' इति ।**

( प्रदीपः ) नानोर्ज्ञः ॥५८॥ औषधस्येति । औषधेन प्रवर्तितुमिच्छतीत्यर्थः ॥

( उद्योतः ) नानोर्ज्ञः ॥ ५८ ॥ औषधेनेति । ज्ञोऽविदर्थस्येति करणे शेषषष्ठीति भावः ॥

( ९३४ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वाऽकर्मकस्योत्तरेण विधानात् ॥ * ॥**

( व्याख्याभाष्यम् )

**न वा कर्तव्यम् । किं कारणम् ? । अकर्मकस्योत्तरेण विधानात् । अकर्मकाज्ज्ञानातेरुत्तरेण योगे नात्मनेपदं विधीयते "पूर्ववत्सनः" इति ॥**

( प्रदीपः ) न वेति । पूर्वेण[7] सकर्मकाज्ज्ञानातेः सन्नन्तादात्मनेपदं विधीयते । अकर्मकात्तु परत्वात्पूर्ववत्सन इत्यनेन ॥ ५८ ॥

( उद्योतः ) भाष्ये—अकर्मकाज्ज्ञानातेरित्यस्य सन्नन्तादिति शेषः ॥ पूर्ववत्सन इत्यनेनेति । अकर्मकाच्चेति सूत्रेण केवलाज्ज्ञानातेस्तङ्विधानादिति भावः ॥ ५८ ॥

( ९३५ समाधानान्तरवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रतिषेधः पूर्वस्य च ॥ * ॥**

( व्याख्याभाष्यम् )

**पूर्वस्य चायं प्रतिषेधः । स च सकर्मकार्थं आरम्भः ॥**

( आक्षेपभाष्यम् )

**कथं पुनर्ज्ञायते—पूर्वस्यायं प्रतिषेध इति ? ॥**

( समाधानभाष्यम् )

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥**

( आक्षेपभाष्यम् )

**कथं पुनर्ज्ञायते—सकर्मकार्थ आरम्भ इति ? ।**

( समाधानभाष्यम् )

**अकर्मकाज्ज्ञानातेः सन आत्मनेपदवचने प्रयोजनं नास्तीति कृत्वा सकर्मकार्थो विज्ञायते ॥ नानोर्ज्ञः ॥ ५८ ॥**

---

( १५० आत्मनेपदनियमसूत्रम् ॥ १ । ३ ।२ आ. २१ सू. )

## २०७ शदेः शितः १।३।६० ॥

( अनुपपत्तिपरिहाराधिकरणम् )

( ८७२ आक्षेपवार्तिकम् ॥ १७ ॥ )

**॥ * ॥ शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदाभावः ॥ * ॥**

( व्याख्याभाष्यम् )

**शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदस्या-**

---

१ गृह्णातीत्यर्थः । ( र. ना. ) २ 'दिकं स्वकरणं' । ३ स्वकरणमित्यस्य स्वत्ववतो निष्पादनमित्यर्थः । ( र. ना. ) ४ प्रकृतिविकृतिभावस्याविवक्षितत्वादिति फलितार्थः । संबन्धित्वमात्रस्य विवक्षेति हृदयम् । ( र. ना. ) ५ विकारमात्रविवक्षायामित्यर्थः । ( र. ना.) ६ ज्ञाश्रुस्मृदृशां सन इत्यनेन । ( र. ना.)

७ पूर्ववत्सन इत्यनेनैव सिद्धत्वादिति भावः । ( र. ना. ) ८ शदेः परस्य शित्प्रत्ययस्य परस्मैपदनिमित्तकत्वाज्जाते परस्मैपदे तस्य निवर्तयितुमशक्यत्वात् आत्मनेपदस्याप्राप्तिरिति वार्तिकार्थः । परस्मैपदमाश्रयो निमित्तं यस्य तस्मादिति विग्रहः । ( र. ना. )

**भावः । शीयते शीयेते शीयन्ते ॥**

( प्रदीपः ) **शदेः शितः ॥६०॥ शदेरिति** । शिद्विकरणोत्पत्तेः पूर्वमात्मनेपदनिमित्ताभावाच्छेषत्वात्परस्मैपदेन भाव्यम् । तत्र कृते शित्प्रत्यये नानेन विहितं परस्मैपदं निवर्तयितुं शक्यत इत्यप्रतिपादकत्वलक्षणमप्रामाण्यमस्य सूत्रस्य प्राप्तम् ॥

( उद्योतः ) शदेः शितः ॥ ६० ॥ शदेः परो यः शित्प्रत्ययस्ततः परस्य लस्य स्थाने आत्मनेपदमेवेति मत्वा वार्तिकावतार इत्याशयेनाह—**शिदिति** ॥ ननु विकरणात्पूर्वमात्मनेपदनिमित्ताभावेपि लादेशवाक्येन सामान्यतः प्राप्तं सार्वधातुकमाश्रित्य सार्वधातुकविषये विधीयमाने विकरणे कृते नियमः स्यादत आह—**शेषत्वादिति** । अनुदात्तङित इति भावकर्मणोरितिसूत्रद्वयापेक्षशेषस्यैव तत्र ग्रहणादित्यर्थः । विकरणेभ्यो नियमस्य बलवत्त्वादिति भावः ॥ **निवर्तयितुं शक्यते इति** । भुक्तवन्तं प्रतीतिन्यायेनेति भावः ॥ शास्त्रान्तरेण कृतेनियमस्य निवृत्तिरशक्या, तेन निवर्तितं तद्धि प्रतिपत्तिश्चाशक्येति तात्पर्यम् ॥

( प्रत्याक्षेपभाष्यम् )

**किं च भोः शदेः शित्परस्मैपदेष्वित्युच्यते ? ॥**

( प्रदीपः ) **किं च भो इति** । सार्वधातुकसंशब्दनेन शितो विधानं न परस्मैपदसंशब्दनेन ॥

( प्रत्याक्षेपबाधकभाष्यम् )

**न खलु 'परस्मैपदेषु' इत्युच्यते, परस्मैपदेषु तु विज्ञायते ॥ कथम् ? । "अनुदात्तङित आत्मनेपदम्" भावकर्मणोरात्मनेपदम्" इत्येतौ द्वौ योगावुक्त्वा "शेषात्कर्तरि परस्मैपदम्" इत्युच्यते । एवं च न परस्मैपदेषूच्यते, परस्मैपदेषु विज्ञायते ॥**

( प्रदीपः ) **न खल्विति** । सामर्थ्यादिति भावः ॥

( उद्योतः ) **सामर्थ्यादिति** । भाष्ये वक्ष्यमाणरीत्येत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**कः पुनरर्हत्येतौ योगावुक्त्वा शेषात्कर्तरि परस्मैपदं वक्तुम् । किं तर्हि ? । अविशेषेण सर्वमात्मनेपदप्रकरणमनुक्रम्य "शेषात्कर्तरि परस्मैपदम्" इत्युच्यते ॥**

( प्रदीपः ) **कः पुनरिति** । समस्तमेवात्मनेपदप्रकरणं महावाक्यं नियमार्थम् । तत्रानियमेन लादेशेषु कृतेषु शिति विकरणे कृते नियमोयं प्रवर्तते—**शदेः** शित एव, न तु शत्स्यतीत्यादाविति भावः ।

( उद्योतः ) यद्येतत्सूत्रद्वयोत्तरं शेषादित्युच्येत तर्हि निविशत इत्यादौ परस्मैपदस्याप्यापत्तिरित्याशयेनाह—**समस्तमेवेति** । एवं च तदपेक्ष एव शेषः शेषादिति सूत्रे । एवं च तस्याप्राप्त्या नियमेनैव लादेशा इति भावः । भाव्यात्मनेपदनियमविषयोप्यशेष एवेति तात्पर्यम् । एवं च न परस्मैपदाश्रयत्वमिति बोध्यम् ॥ लादेशेषु कृतेष्विति । प्रसक्तेष्वित्यर्थः ॥ **विकरणे इति** । विकरणेभ्यो नियमो बलवानिति तु शित इत्येतत्सामर्थ्यादेतद्विषये नाश्रीयते इति भावः ॥ नन्वेवं शदेः शेषत्वाभावे शत्स्यतीत्यादावपि परस्मैपदनियमो न स्यादत आह—**शदेः शित एवेति** । तादृशशदिविषय एव नियम इत्यतादृशः शेष एवेति भावः ॥

( आक्षेपसाधकभाष्यम् )

**एवमपि परस्मैपदाश्रयो भवति । कथम् ? । इदं तावदयं प्रष्टव्यः—यदीदं नोच्येत किमिह स्यादिति ॥ परस्मैपदमित्याह ॥ परस्मैपदमिति चेत्परस्मैपदाश्रयो भवति ॥**

( प्रदीपः ) **एवमपीति** । यद्यपि तात्पर्यपर्यालोचनेन प्रकरणस्य नियमार्थत्वं तथाप्येकैकसूत्रार्थपर्यालोचनकाले त्ववान्तरव्यापारसंभवाद्विध्यर्थता संभवत्येव । अनारम्भे शेषपक्षे निक्षेपाद् आरम्भे तत उद्धारात् ॥

( उद्योतः ) विकरणेभ्यो नियमबलवत्त्वानाश्रयणमजानानः शङ्कते—भाष्ये—**एवमपीति** ॥ नन्वेतदनुक्तौ महावाक्यस्यासमाप्ततया शेषपदार्थानिर्णयेन शेषादित्यस्याप्रवृत्तेर्यदीदमित्यादि कथमत आह—**यद्यपीति** । अयं भावः—**अनुदात्तङितो भावकर्मणोरि**त्येतद्द्वयं नियमार्थं **शेषादिति** च । तत्र **शेषादिति**सूत्रे शेषश्च तद्द्वयापेक्ष एव । इतरसूत्राणि तु शेषादिति प्राप्तपरस्मैपदबाधनेनात्मनेपदविधायकानि । तत्र शितः पूर्वमस्याप्राप्तेर्बाधकाभावात्परस्मैपदे जाते पश्चाज्जातनिवृत्त्ययोगेनाप्रामाण्यमस्यापद्यते इति भावः॥ **यदीदं नोच्येते**ति भाष्येण बाधकत्वमेपामिति दर्शितम् ॥ **अनारम्भे इति** । बाधकशास्त्राभावेन शेषपक्षनिपातः । एवं च परस्मैपदोत्पत्तिर्निर्बाधैवेति भावः ॥ **आरम्भ इति** । स्वरूपकथनमिदम् ॥ **ततः** । शेषपक्षात् ॥ **उद्धारात्** । बहिर्भावात् ॥

( ९३७ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु लडादीनामात्मनेपदवचनात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् । कथम् ? । "शदेर्लडादीनामात्मनेपदं भवति" इति वक्तव्यम् ।**

( प्रदीपः ) **लडादीनामिति** । आदिशब्दः प्रकारे । येषु शिता भाव्यं ते लडादयः ॥

( उद्योतः ) नन्वेवं लडादिष्वतिप्रसङ्गोऽत आह—**आदिशब्द इति** ॥

( आक्षेपभाष्यम् )

**सिद्ध्यति । सूत्रं तर्हि भिद्यते ॥**

( समाधानभाष्यम् )

**यथान्यासमेवास्तु ।**

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्—*शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदाभावः* इति ॥**

१ विहितं परस्मैपदं नानेन निवर्तयितुं शक्यते इति योजना । ( र. ना. ) २ शेषात्कर्तरीति शास्त्रेणात्मनेपदनिवृत्तिपूर्वकविहितपरस्मैपदस्येत्यर्थः । (र.ना.) ३ 'न च' । ४ '—पदेषु च विज्ञा—' । ५ परस्मैपदेषु विज्ञाने सामर्थ्यं हेतुः । ( र. ना. ) ६ 'त्यादौ' । ७ शेषादिति शास्त्रस्येत्यर्थः । ( र. ना. ) ८ शित्परकेत्यर्थः । ( र. ना. ) ९ 'श्रयोऽयं भवति' । १० 'कालेऽवान्तर' ।

(समाधानभाष्यम्)

नैष दोषः । शित इति नैषा पञ्चमी । का तर्हि ? । संबन्धे षष्ठी—शितो यः शदिः ॥ कश्च शितः शदिः ? ॥ प्रकृतिः । शदेः शित्प्रकृतेरिति ॥

(प्रदीपः) शित्प्रकृतेरिति । योग्यतया शित्प्रकृतित्व[1]-माश्रित्य प्रागेव शिदुत्पत्तेरात्मनेपदं विधीयते ।

(उद्द्योतः) शिदुत्पत्तेः प्राक् शित्प्रकृतित्वमपि कथमत आह—योग्यतयेति ॥

(समाधानान्तरभाष्यम्)

अथ वाऽऽहायं 'शदेः शितः' इति । न च शदिः शिदस्ति । त एवं विज्ञास्यामः—शदेः शिद्विषया-दिति ॥

(प्रदीपः) शिद्विषयादिति । शिद्विषयत्वाच्छदिरेव शिच्छब्देनाभिधीयते ॥

(उद्द्योतः) शदिरेवेति । शदेः शित इति समानाधि-करणे इति भावः ॥

(समाधानान्तरभाष्यम्)

अथ वा यद्यपि तावदेतदन्यत्र भवति 'विकर-णेभ्यो नियमो बलीयान्' इति । इहैतन्नास्ति । विकरणो हीहाश्रीयते 'शितः' इति ।

(प्रदीपः) अथ वेति । प्रकरणं[2] नियमार्थम् । तत्र निय-मात्पूर्वमात्मनेपदपरस्मैपदा[3]न्यनियमेन प्रवृत्तानि । तत्रैतत्सूत्रा-रम्भसामर्थ्या[4]त्पूर्वं[5] विकरणः प्रवर्तते, पश्चाच्छित एव शदेरात्म-नेपदमिति नियमः ॥

(उद्द्योतः) नन्वनुदात्तङितौ भावकर्मणी च विहाय परिशि-ष्टस्यात्मनेपदवाक्यस्यावान्तरव्यापारापेक्षया विधित्वसंभवस्योक्तत्वा-त्कथमेतदत आह—प्रकरणमिति ॥ प्रवृत्तानि प्रसक्तानि ॥ नन्वे-वमपि शिदुत्पत्तेः प्राक् शेषत्वस्यैव सत्त्वेन विकरणेभ्यो नियमस्य बलवत्त्वात्परस्मैपदनियमो दुर्वारोऽत आह—तत्रैतदिति । "अनुप-सर्गाद्वा" 'वृद्भ्यः स्यसनो'रित्येतत्सामर्थ्यान्नियमस्य बलीयस्त्वव-देतत्सूत्रसामर्थ्यादेतद्विषये विकरणस्यैव बलवत्त्वं ज्ञाप्यत इत्यर्थः ॥

(अड्व्यवायेपि नियमप्रवृत्तिसाधनाधिकरणम्)

(९३८ आक्षेपवार्तिकम् ॥ ३ ॥)

॥ * ॥ उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानम् ॥ * ॥

(भाष्यम्) उपसर्गपूर्व[6]नियमेऽड्व्यवाय उपसं-ख्यानं कर्तव्यम् । न्यविशत व्यक्रीणीत ॥ किं पुनः कारणं न सिध्यति ? । अटा व्यवहितत्वात् ॥

(प्रदीपः) न्यविशतेति । ननु विकरणेभ्यो नि-यमो बलीयानिति प्रागेव विकरणोत्पत्तेर्नियमेन भाव्यं ततो नित्यत्वात्पूर्वं विकरणः ततोऽडागम इति किं वार्तिकेन । उ-च्यते—एतदनाश्रित्य[7]ैतदुक्तम् ॥

(उद्द्योतः) पूर्वं विकरण इति । सार्वधातुकप्रसक्तिमात्रेणेति भावः । अनाश्रित्येति । कृतोपि विकरणो न व्यवधायक इत्येव-मपि ज्ञापकस्य नेतुं शक्यत्वात्तदनाश्रयणमिति भावः ॥ एवं लाव-स्थायामडिति पक्षमात्मनेपदप्रकरणस्य तिप्तसादिसूत्रेणैकवाक्यते-तिपक्षं चानाश्रित्येदमित्यपि बोध्यम् ॥

(आक्षेपबाधकभाष्यम्)

ननु चायमड् धातुभक्तो धातुग्रहणेन ग्रहीष्यते ॥

(आक्षेपसाधकभाष्यम्)

न सिध्यति । अङ्गस्य ह्यडुच्यते, विकरणान्तं चाङ्गम्, सोऽसौ संघातभक्तो न शक्यो धातुग्रह-णेन ग्रहीतुम् ॥

(तटस्थजिज्ञासाभाष्यम्)

एवं तर्हीदमिह संप्रधार्यम्—अट् क्रियतां विक-रण इति ।

(आक्षेपबाधकभाष्यम्)

किमत्र कर्तव्यम् ? ॥ परत्वा[8]दडागमः ॥

(आक्षेपसाधकभाष्यम्)

नित्या[9] विकरणाः । कृतेप्यटि प्राप्नुवन्त्यकृतेपि ॥

(आक्षेपबाधकभाष्यम्)

अडपि नित्यः । कृतेष्वपि विकरणेषु प्राप्नोत्य-कृतेष्वपि प्राप्नोति ॥

(आक्षेपसाधकभाष्यम्)

अनित्योऽट् । अन्यस्य कृतेषु विकरणेषु प्राप्नोत्य-न्यस्याकृतेषु । 'शब्दान्तरस्य च प्राप्नुवन्विधिर-नित्यो भवति' ॥

(प्रदीपः) शब्दान्तरस्येति । विकरणास्तु शब्दान्त-रादपि प्राप्नुवन्तो नानित्याः ॥

(उद्द्योतः) नानित्या इति । अस्येति मन्यत इति शेषः ॥ तदेवं स्थितमेतत्—विकरणेषु कृतेषु भवन्नट् विकरणान्तभक्तो धातु-व्यवधायक इत्युपसंख्यानं कार्यमिति ॥

(अण्नियमयोः पौर्वापर्यसंप्रधारणभाष्यम्)

एवं तर्हीदमिह संप्रधार्यम्—अट् क्रियताम्, ला-

---

१ शित्प्रकृतियोग्यत्वमाश्रित्येत्यर्थः । (र. ना.) २ आत्मनेपदेत्यादिः । (र. ना.) ३ आत्मनेपदपरस्मैपदानि अनियमेनेति छेदः । (र. ना.) ४ नियमात्पूर्वमित्यर्थः । (र. ना.) ५ विकरणस्यैव नियमापेक्षया बलवत्त्वे तु अनियमेनोभयप्रवृत्तौ सिद्धायां विकल्पविधानं व्यर्थमेव स्यादिति भावः । (र. ना.) ६ 'पूर्वस्य नियमे' । ७ सर्वेष्वपि मदुपलब्धपुस्तकेषु 'चानाश्रित्य' इति नञ्घटितपाठ एवोपलभ्यते । परं तु स पाठो नैव मनोरमः 'लावस्थायामड्' इत्यस्याश्रयणाभावे तिवादिषु जातेषु पश्चाद् अडागम इति पर्यवस्यति । तथासति नियमप्रवृत्तिकाले अडागमस्याजातत्वाद् उपसर्गादव्यवहित एव धातुर्लभ्यत एवेति नैव वार्तिकोत्थानम् । किंतु नियमप्रवृत्तेः प्राक् लावस्थायामेवाडागमाङ्गीकारे निविशत इत्यादौ लडादौ चरितार्थस्य 'नेर्विशः' इति सूत्रस्य 'नि अविश ल' इत्यवस्थायाम् अडागमव्यवधाने 'तस्मादित्युत्तरस्य' इति परिभाषया प्रवृत्त्यभावे परस्मैपदापत्तिः स्याद् अतो वार्तिककृता 'उपसर्गपूर्वनियमे'—इति वार्तिकमारब्धमिति वार्तिकोत्थानाय 'लावस्थायामड्' इति पक्षस्याश्रयणमेव कर्तव्यमिति युक्ततरमवलोकयामस्तस्माद् नञ्रहित एव पाठोऽङ्गीकरणीयः । तथापि 'अङ्गस्य ह्यडुच्यते विकरणान्तं चाङ्गम्' इत्यादि वक्ष्यमाणसाधकबाधकसंदर्भसंगतये नञ्घटितपाठ एव साधीयान् । 'नि अविश-अति' 'निअविशअत' इत्याद्युभयविधप्रसङ्गे 'निअविशअति' इत्यादि परस्मैपदघटित-जातनिवृत्तिरित्येव वार्तिककृन्मन्यते इति त्ववगन्तव्यम् । ८ विकरणापेक्षया परत्वादडागमे धातुभक्तत्वादटोऽव्यवधायकत्वमिति भावः । (र. ना.) ९ अस्याशयं 'तदेवं स्थितमि'त्यादिना उद्योतकारो वक्ष्यति । (र. ना.)

देश इति । किमत्र कर्तव्यम् ।

(उद्योतः) तत्र भाष्यकृद् विकरणोत्पत्तेः प्राक् नियमस्याटश्च संप्रधारणं करोति—एवं तर्हीति । लादेश इत्यनेन नियमो विवक्षितः ॥

( आक्षेपसाधकभाष्यम् )

परत्वा[1]दडागमः ॥

( आक्षेपबाधकभाष्यम् )

**नित्यो लादेशः । कृतेप्यटि प्राप्नोत्यकृतेपि प्राप्नोति । नित्यत्वाल्लादेशस्यात्मनेपद एवाडागमो भविष्यति ॥**

( प्रदीपः ) **कृतेप्यटीति** । धातुभक्तत्वादटस्तद्ग्रहणेन ग्रहणाद्व्यवधानाभावात् । अडागमस्त्वनित्यः । स हि लादेशेषु कृतेषु विकरणैर्नित्यत्वात्प्रतिबध्यते । विकरणेषु कृतेषु शब्दान्तरप्राप्त्या अनित्यः ॥

( उद्योतः ) ननु नियमोऽटि कृते न प्राप्नोत्यटा व्यवधानादत आह—**धातुभक्तत्वादिति** ॥ अटोपि कृताकृतप्रसङ्गित्वेन नित्यत्वमाशङ्क्याह—**अडागम इति** ॥ अटो विकरणापेक्षया कथमनित्यत्वमत आह—**विकरणेष्विति** ॥ भाष्ये—**आत्मनेपद एवेति** । नित्यत्वादटः पूर्वं नियमप्राप्तेरिति भावः ॥ **अडागमो भविष्यतीति** फलितनिर्देशः । तथा चोपसंख्यानं न कार्यमिति भावः ॥

( ९३९ आक्षेपसाधकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदटो नित्यनिमित्तत्वादात्मनेपदाभावः [तस्मादुपसंख्यानम्][3] ॥*॥**

( भाष्यम् ) **नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदेवमुच्यते—अडपि नित्यनिमित्तः कृतेपि लादेशे प्राप्नोत्यकृतेपि प्राप्नोति । अटो नित्यनिमित्तत्वादात्मनेपदस्याभावः ॥ तस्मादुपसंख्यानम् । तस्मादुपसंख्यानं कर्तव्यम् ॥**

( प्रदीपः ) **नित्यनिमित्तत्वादिति** । कृतेपि लादेशे स्थानिवद्भावाल्लुङादिव्यपदेशोस्तीति प्रदर्शनार्थं निमित्तग्रहणमुपात्तम् । यद्यपि लादेशे कृते विकरणेन नित्यत्वादड् बाध्यते तथापि यस्य[4] च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । तत्रोभयो[5]र्नित्ययोः परत्वादड् प्राप्नोति ॥ ननु भवतु परत्वादडागमः, तस्य तु धातुभक्तत्वादव्यवधायकत्वात्सिद्ध्यत्यात्मनेपदम् ॥ नैष दोषः । तत्र ह्यन्तरङ्गत्वाल्लादेशेषु कृतेषु नियमात् पूर्वं नि[6]त्यत्वाद्विकरणेषु कृतेषु अडागमो विकरणान्तभक्तत्वाद्धातोर्व्यवधायक इति न्यादिभ्यः परे विश्यादयो निरन्तरा न संभवन्तीत्यात्मनेपदाप्रसङ्ग इत्येवं भाष्ये चोद्यं व्यवस्थाप्यते ॥

( उद्योतः ) पुनरुपसंख्यानवाद्याह—**नित्यत्वाल्लादेशस्येत्यादीति चेदिति** ॥ अडपि नित्य इति वक्तव्ये निमित्तग्रहणं किमर्थमत आह—**कृतेपीति** । अन्यथा लादेशेषु कृतेषु लङादिपरत्वाभावादडाद्यभावशङ्का स्यादिति भावः ॥ **तस्य धातुभक्तत्वादिति** । लादेशेभ्यः परत्वादडागमे विकरणाभावात्स धातुभक्त इत्यर्थः ॥ **सिध्यतीति** । आत्मनेपदनियमः सिध्यतीत्यर्थः ॥ **लादेशेषु** । तिप्तसितिविहितेषु ॥ **नियमात्पूर्वं नित्यत्वादिति** । वृद्भ्यः स्यसनोरिति तु विकरणव्यवधानेपि नियमप्रवृत्तिरित्यर्थस्यैव ज्ञापकमिति भावः ॥ **आत्मनेपदाप्रसङ्ग इति** । नियमाप्रसङ्ग इत्यर्थः ॥ **चोद्यम् उपसंख्यानम्** ॥ **अटो नित्यनिमित्तत्वादित्युत्तरमुभयोर्नित्ययोर्नियमात् परत्वादटि प्राप्ते तं बाधित्वा विकरणे ततोऽटीति** शेषपूरणेनेति भावः ॥

( आक्षेपबाधकभाष्यम् )

**अन्तरङ्गस्तर्हि लादेशः ॥**

( प्रदीपः ) **अन्तरङ्गस्तर्हीति** ॥ लकारमात्रापेक्षत्वात् अडागमस्तु लकारविशेषापेक्षत्वाद्बहिरङ्गः ॥

( उद्योतः ) उभयोर्लाश्रययोः कथमन्तरङ्गत्वबहिरङ्गत्वे अत आह—**लकारेति** । परनिमित्तकत्वादडागमो बहिरङ्ग इति वक्तुं युक्तं, तस्मिन्निति परिभाषासापेक्षत्वात्तस्य, विशेषापेक्षत्वेपि न बहिरङ्गत्वमिति प्रागुक्तम् ॥ प्रत्याख्यातृसिद्धान्तिनोऽन्तरङ्गस्तर्हीत्युक्तिर्भाष्ये । विधिवाक्येनैषामेकवाक्यताश्रयणान्नियमोन्तरङ्ग इत्यर्थः ॥ उपसर्गकार्यं चान्तरङ्गमिति सुट्कादिति सूत्रे भाष्ये स्पष्टम् ॥

( आक्षेपसाधकभाष्यम् )

**नैतद्विवदामहे—अन्तरङ्गो नान्तरङ्ग इति । अस्त्वयं नित्यश्चान्तरङ्गश्च । अत्र खलु लादेशे कृते त्रीणि कार्याणि युगपत् प्राप्नुवन्ति—विकरणः, अडागमः नियम इति । तद्यदि सर्वतो नियमो लभ्येत कृतं स्यात्, तत्तु न लभ्यम् ॥ अथापि विकरणात्[11]पूर्वमडिति[12] अड् लभ्येत, एवमपि कृतं स्यात् । तत्तु न लभ्यम् ॥ किं कारणम् ? । आङ्गात्पूर्वं विकरणा एषितव्यास्तरतस्तरन्तीत्येवमर्थम् । अडा[13]ड्भ्यामप्यन्यदाङ्गं पूर्वमेषितव्यमुपाच्छेदित्येवमर्थम् । तत्र ह्याटि कृते साट्कस्य छ्च्छिभावः प्राप्नोति ॥**

( प्रदीपः ) **नैतदिति** । न लादेशेन सह संप्रधारणा किं तु नियमेन सहेति भावः ॥ **तत्तु न लभ्यमिति** ॥ ननु पूर्वमेव ज्ञापकाद्विकरणेभ्यो नियमस्य बलीयस्त्वं प्रतिपादितं तत्किमुच्यते **तत्तु न लभ्यमिति** ॥ उच्यते—अन्यथापि तज्ज्ञापकं समर्थयितुं शक्यते—कृतोपि विकरणो न व्यवधायक इति यद्येवं नित्य एव नियमः । नैतदस्ति । यत्र केवलो विकरणो व्यवधायकस्तत्र भवतु नित्यो नियमः यथा निवेक्ष्यते निविशत इति । यत्र तु विकरणे कृतेऽडागमस्तत्राटो व्यवधा-

१ अयं भावः । नियमात्परत्वादडागमः प्राप्तः तं बाधित्वा विकरणे कृते ततोऽड् इति शेषपूरणेन व्याख्यानमुद्द्योतकारो वक्ष्यति । तथा च विकरणान्तभक्तत्वादटो व्यवधायकत्वेन नियमाप्राप्त्या उपसंख्यानावश्यकतेति । (र. ना.) २ अस्य पूर्वोक्तवार्तिकाकरणे एव तात्पर्यमित्युद्द्योतेऽत्रैव । ( र. ना. ) ३ अयं कोष्ठकान्तर्गतपाठो मूलपुस्तकबाह्यः । ४ अत्रहि विकरणविधायकशास्त्रेण अटो निमित्तं विहन्यते । विकरणस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात्, अतस्तु विकरणेषु कृतेषु शब्दान्तरप्राप्त्या अनित्यत्वात्, एवं विकरणापेक्षयाऽडागमस्यानित्यत्वेऽपि लादेशापेक्षया नित्यत्वमेवेति परिभाषोपन्यासे आशयः । ( र. ना. ) ५ अड्लादेशयोरित्यर्थः । ( र. ना. ) ६ अडपेक्षया च पूर्वमित्यादिः । (र.ना.) ७ न तु विकरणेभ्यो नियमो बलीयानित्यस्येति भावः । (र. ना.) ८ तिप्तसिति विधिवाक्येन सहानुदात्तङित इत्यादिनियमविधीनामित्यर्थः । ( र. ना. ) ९ 'तत्र' । १० सर्वस्मात्पूर्वमित्यर्थः । ( र. ना. ) ११ 'विकरणादडिति' ) १२ प्रक्रिययेति शेषः । ( र. ना. ) १३ अन्यदाङ्गमडाड्भ्यामपि पूर्वमेषितव्यमिति योजना । ( र. ना. )

यकत्वान्नियमो न प्राप्नोति ॥ **तरत इति** । अत्र पूर्वमित्त्वे सति रूपं न सिध्यति ॥ **आटि कृत इति** । **आटश्चेति** वृद्धिरेकादेशः प्राप्नोति, ऋच्छिभावश्च । तत्र वर्णमात्राश्रयत्वादेकादेशोन्तरङ्गः । नानाश्रयत्वाच्च **वार्णादाङ्गं बलीय** इति नास्ति । ततश्चैकादेशे कृते तस्यादिवद्भावादृच्छिभावः प्राप्नोति । तत ऋच्छदिति स्यात्, न त्वार्च्छदिति ॥

**( उद्द्योतः )** एतदुत्तर[1]ग्रन्थस्त्वेकदेशिनोः 'अथ वा नेर्—'इत्येतत्पर्यन्तम् ॥ तदाशयश्च पूर्वपक्षमुखेन मयोच्यते—**नन्वन्तरङ्गस्तर्हि लादेश** इत्यत्र लादेशशब्देन नियमो विवक्षितः, उत **तिप्तसिति**विधिः । नाद्यः । **नेर्विश** इत्यादेः पदान्तरापेक्षत्वेन बहिरङ्गत्वात् । तस्माद् द्वितीयो ग्राह्यस्तत्राह—**नैतदिति** ॥ **अयमिति** । **तिप्तसि**तिविधिः ॥ न तु तेन सह संप्रधारणेति भावः ॥ केन तर्हि संप्रधारणेत्यत्राह—**अत्र खल्विति** ॥ **लादेशे कृते इति** । जातस्यापि लुकेव निवृत्तिः । प्रसक्त इति वार्थः ॥ **सर्वत इति** । विकरणादडागमाच्चेत्यर्थः ॥ **तत् तु न लभ्यमिति** । नियमात्पूर्वं नित्यत्वाद्विकरणप्रवृत्तेस्तत्र कृतेपि त[2]त एव नियमात्पूर्वमाडागमस्य च प्रवृत्तेरिति भावः ॥ तत्र शङ्कते—**ननु पूर्वमेवेति** ॥ **यत्रेति** । तथा च नियमो न नित्य इति भावः ॥ ननु विकरणात्पूर्वमडागमो न लभ्य इत्यर्थकं **तत्तु न लभ्यमि**त्ययुक्तं, विकरणस्यापि शब्दान्तरात्प्राप्त्याऽनित्यत्वात् । न च **शब्दान्तरस्येति** वाचनिकं, किं तु न्यायो, यद्व्यक्तिसंबन्धितया पूर्वं प्राप्नोति तद्व्यक्तिसंबन्धित्वेनाप्राप्त्या कृताकृतप्रसङ्गित्वाभाव इति । स च शब्दान्तरात्प्राप्तावपि तुल्य इति विकरणात् पूर्वमटि[3] विकरणो[4]त्तरं ततः पूर्वं[5] वा नियमो भविष्यतीति नार्थ उपसंख्यानेनेत्याशयेन पृच्छति—**किं कारणमिति** ॥ उपसंख्यानबाधाह—**आङ्गादिति** ॥ आङ्गप्रवृत्त्युत्तरं विकरणे तरत इत्यत्रानिष्टमाह—**अत्रेति** ॥ अडाटोर्बाधकस्याङ्गस्य बाधको विकरणः सुतरामडाटोर्बाधक इति कैमुतिकन्यायं वक्तुं भाष्ये—**अडाड्भ्यामपीति** ॥ ननु **वार्णादाङ्ग**मित्येकादेशात्पूर्वमृच्छिभावे **निर्दिश्यमान**परिभाषया न दोषः । किं चाटः शबन्ताङ्गभक्तत्वेनाड्विशिष्टस्यार्तित्वाभावान्न दो[6]षोऽत आह—**आटश्चेति वृद्धिरिति** ॥ **नानाश्रयत्वादिति** । वस्तुतस्तदनाश्रित्येदम् ॥ **तस्यादिवद्भावादिति** । एवं चातिदेशविषये न **निर्दिश्यमान**परिभाषाप्रवृत्तिः शबन्ताङ्गभक्तत्वेपि आड्विशिष्टस्यार्तित्वं च सुलभमिति भावः ॥ भाष्योक्तस्योपार्छदित्यस्योपसर्गाद्दतीति वृद्ध्यापि सिद्धिरत आह—**न त्वार्छदितीति** ॥

( आक्षेपबाधकभाष्यम् )

**ननु च ऋच्छिभावे कृते शब्दान्तरस्या[7]कृत आडिति कृत्वा पुनराड् भविष्यति** ॥

**( प्रदीपः ) ननु चेति** । वत्सवत्प्रवृत्त्या कार्यमिह शास्त्रे संभवतीति भावः ॥

**(उद्द्योतः)** भाष्ये लक्ष्ये लक्षणस्येतिन्यायाविषयं बोधयितुं—**शब्दान्तरस्येति** ॥ नन्वेवमुदवोढामित्यत्र लक्ष्ये लक्षणस्येतिन्यायेन पुनर्वृद्धिवारणं सप्तमे कैयटेन वक्ष्यमाणं विरुध्येत, ततो हि विकारकृतं न शब्दान्तरत्वमिति लभ्यते इति चेन्न । अत्रत्यस्यैकदेश्युक्तित्वेनादोषात् तदाह—**वत्सवदिति** । स न्यायोऽनित्य इति भावः । गविस्थितदुग्धशेषपयसो ग्रहणाय यथा वत्सः प्रवर्तते तद्वदिति तात्पर्यम् ॥ क्वचित्तु **पर्जन्यवदिति** पाठस्तत्रायमर्थः । यथा पर्जन्यः स्वयं पूर्णे कृतेपि क्षेत्रे पुनःपुनर्वर्षतीति ॥

( आक्षेपसाधकभाष्यम् )

**पुनर्ऋच्छिभावः पुनराडिति चक्रकमव्यवस्था प्राप्नोति** ॥

**( उद्द्योतः )** भाष्ये—**पुनर्ऋच्छिभाव इति** । विकारान्यानुपूर्व्यैक्येऽपि यदि पुनराट्, तत एव तुल्यन्यायात्पुनर्ऋच्छिभावोऽपि स्यादित्यभिमानः ॥

( समाधानभाष्यम् )

**नैष दोषः । यत्तावदुच्यते—आङ्गात्पूर्वं विकरणा एषितव्याः तरतः तरन्तीत्येवमर्थमिति । भवेत्सिद्धं यत्र विकरणा नित्या आङ्गमनित्यं तत्राङ्गात्पूर्वं विकरणाः स्युः । यत्र तु खलूभयं नित्यं परत्वात्तत्राङ्गं तावद्भवति ॥**

**यदप्युच्यते—अडाड्भ्यामप्यन्यदाङ्गं पूर्वमेषितव्यमुपार्च्छदित्येवमर्थमिति । अस्त्वत्राट्, आटि कृते साट्कस्य ऋच्छिभावः । ऋच्छिभावे कृते शब्दान्तरस्याकृत आडिति कृत्वा पुनराड् भविष्यति ॥**

**( प्रदीपः ) यत्तावदिति** । तरत इत्यत्रानित्यमित्त्वं विकरणस्तु नित्य इति स एव प्रवर्तते ॥ **यत्रत्विति** । यथा तरतीति ॥ **अस्त्वत्राडिति** । परत्वादृच्छिना भाव्यम् । अभ्युपगम्यवादेन त्वेतदुच्यते ॥

**( उद्द्योतः ) यत्र खलूभयमिति** । एवं च तुल्यन्यायाद्द्वयोरनित्ययोरपि परत्वादटि सति न दोष इत्युपसंख्यानं न कार्यं विकरणाटोर्द्वयोरप्यनित्यत्वं तु दर्शितमेव । शब्दान्तरप्राप्तस्येत्यनाश्रयेण तूभयोर्नित्यत्वं बोध्यम् ॥ **परत्वादिति** । अङ्विकारे ऋच्छिसा ( ऋच्छेर ) वकाशः । आटोन्येऽजादयः ॥ **अभ्युपगम्यवादेन त्विति** । एवं लक्ष्ये लक्षणस्येतिन्यायानाश्रयणेन चक्रकापादानमपि तथैवेति ध्वनितम् । एकदेश्युक्तित्वं च ध्वनितम् ।

( आक्षेपान्तरस्मारकभाष्यम् )

**ननु चोक्तम्—पुनर्ऋच्छिभावः पुनराडिति चक्रकमव्यवस्था प्राप्नोतीति** ॥

( समाधानभाष्यम् )

**नैष दोषः । चक्रकेष्विष्टतो व्यवस्था** ॥

**( प्रदीपः ) चक्रकेष्विति** । व्यवस्थाकारिणा शास्त्रेण भाव्यमित्यव्यवस्थाहेतुः पुनः प्रवृत्तिर्न भविष्यतीत्यर्थः ॥ तदेवं स्थितमेतदन्तरङ्गत्वाल्लादेशेषु कृतेषु परत्वादडागमः ॥ न चायं नियमः—**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति, न तु शब्दान्तरादिति**, यतोऽडागमस्यानित्यत्वं स्याद् विक-

---

१ अन्तरङ्गस्तर्हि लादेश इति भाष्योत्तरग्रन्थ इत्यर्थः । ( र. ना. ) २ नित्यत्वादेवेत्यर्थः । ( र. ना. ) ३ परत्वादिति भावः । ( र. ना. ) ४ कृतोऽपि विकरणो न व्यवधायक इति स्वीकारे इदम् । ( र. ना. ) ५ विकरणेभ्यो नियमो बलीयानित्यभ्युपगमे चेदम् । ( र. ना. ) ६ नानानिमित्तकत्वेऽपि समानस्थानिकत्वेन वार्णादिति परिभाषाप्रवृत्तिसंभवादाह—वस्तुत इति । ( र. ना. )

७ शब्दान्तरस्येति मध्यस्थं कृतेऽकृते इत्युभाभ्यां संबध्यते । ( र. ना. ) ८ लक्ष्ये लक्षणस्येति न प्रवर्तते, लक्ष्यभेदादिति भावः । ( र. ना. ) ९ लक्ष्ये लक्षणस्येति न्याय इत्यर्थः । ( र. ना. ) १० विकारप्रयुक्तो लक्ष्यभेदो नास्तीति मत्वाऽऽह—अभिमान इति । ( र. ना. )

रणस्य नित्यत्वम् । कृता कृतप्रसङ्गित्वात्तु द्वयोरपि नित्यत्वम् । अङ्गत्वाकृत्याश्रयणाद्वा नास्ति शब्दान्तरप्राप्तिरटः ॥

( उद्द्योतः ) चक्रकेष्विष्टतो व्यवस्थेति स्वशास्त्रीयो न्याय इत्याह—व्यवस्थेति। अन्यथान्वाख्यानापर्यवसानं स्यादिति भावः ॥ नन्वत्र न्यायात्सिद्धावप्युपसर्गनियमे न्यायाभावादुपसंख्यानमावश्यकमत आह—तदेवमिति ॥ ल्लादेशेषु । तिप्तसिति सूत्रेण ॥ परत्वादडागम इति । परत्वाद्विकरणात् पूर्वं तत्र कृते तस्य धातुभक्तत्वादव्यवधायकत्वेन नियमसिद्धिरित्यर्थः ॥ न चायं नियम इति पाठस्तदाह—न त्वित्यादि । न्याय इति पाठेऽयमेव ग्राह्योऽयं नेति न न्यायो न युक्तमित्यर्थः ॥

( सिद्धान्तिसमाधानान्तरभाष्यम् )

**अथ वा नेरिति नैषा पञ्चमी ॥ का तर्हि ? ॥ विशेषणषष्ठी नेर्यो विशिः ॥ कश्च नेर्विशिः ? ॥ विशेष्यः । व्यवहितश्चापि शक्यते विशेषयितुम् ॥**

( प्रदीपः ) नेर्यो विशिरिति । व्यवहितश्चाप्यर्थद्वारेण[1] विशेष्यत्वात्संबन्धी भवतीत्यर्थः ॥

(उद्द्योतः) संबन्धीति । स्वघोत्यार्थनिरूपितविशेष्यतावदर्थवत्त्वं संबन्धो बोध्यः ॥ परिव्ययवेभ्य इत्यादावपि षष्ठ्यर्थे पञ्चमी बोध्या । पञ्चमीपक्षेपि वा नेः परत्वयोग्यस्येत्यादिक्रमेणार्थः ॥

( सिद्धान्तिसमाधानान्तरभाष्यम् )

**अथ वा निरपि पदं विशिरपि पदम् । पदविधिश्च समर्थानाम् । व्यवहितेपि सामर्थ्यं भवति ॥ शदेः शितः ॥ ६० ॥**

( प्रदीपः ) अथ वेति । नेर्विश इत्यस्यायमर्थः—निशब्दात्परमात्मनेपदान्तं विश्यर्थेवयवपदं साधु भवतीति सत्यप्यडागमे नेः पदमनन्तरमेवेति दोषाभावः ॥ विशिरपीति । विशिशब्देन विश्यवयवः समुदाय उपचारादभिधीयते ॥ पदविधिश्चेति । न्यायप्राप्तार्थानुवादोऽयं न त्वेतत्प्रकृते उपयुज्यते इत्याहुः ॥ ६० ॥

( उद्द्योतः ) अयमर्थ इति । पदसंस्कारप्रस्तावात्तात्पर्यवृत्त्याऽयं सूत्रार्थ इति भावः ॥ अथ विशिः कथं पदमत आह—विशीति । न्यायेन । नेः सकाशादर्थविशेषं प्राप्तो विशिरित्यर्थे तात्पर्यं दर्शयितुं समर्थानामित्युक्तम्, न त्वत्र तत्परिभाषोपस्थितिः । सुबन्तत्वेन पदत्वेन वा निमित्तकोटावप्रवेशात् । अत एव समर्थसूत्रे भाष्यकारो वक्ष्यति—एकार्थीभावः सामर्थ्यम्, विभक्तिविधौ च नोपस्थितिरितीति दिक् ॥ न चात्र पक्षद्वयेप्युपसर्गान्तरव्यवधानेपि प्रवृत्त्यापत्तिरिति वाच्यम् । तेषामनभिधानात् ॥६०॥

---

( १५१ आत्मनेपदनियमसूत्रम् ॥ १।३।२ आ० १ सू० )

## २०९ पूर्ववत्सनः १।३।६२ ॥

( पूर्वत्वावधिनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किमिदं पूर्वग्रहणं सनपेक्षम्—प्राक् सनो येभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योपि भवतीति । आहोस्विद् योगापेक्षम्—प्रागेतस्माद्योगाद्येभ्यो योगेभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योपि भवतीति ॥**

**किं चातः ? ।**

**यदि सनपेक्षम्, निमित्तमविशेषितं भवति, 'पूर्ववत्सनः' न ज्ञायते-किमन्ताद्भवितव्यमिति ॥ अथ योगापेक्षम्, उत्तरत्र विधिर्न प्रकल्पेत-बुभुक्षते उपयुयुक्षत इति ॥**

( प्रदीपः ) पूर्ववत्सनः ॥ ६२ ॥ पूर्वशब्दः संबन्धिशब्दत्वादवधिमपेक्षते, तत्र कोऽत्रावधिरभिप्रेत इति पृच्छति—किमिदमिति ॥ येभ्य इति । योगस्थेभ्यो धातुभ्यो विधानाद्योगेभ्यो विहितमित्युच्यते ॥ पक्षद्वयेपि तेन तुल्यमिति तृतीयान्ताद्वतिः न तु पञ्चम्यन्तात् । लक्षणाभावात् । तुल्यार्थैरिति विहिता तृतीया सर्वविभक्त्यर्थानन्तर्भावयतीति पञ्चम्यर्थस्यात्र ग्रहणमुपपन्नमेव । यथा ब्राह्मणवद्वैश्यादधीत इति ब्राह्मणादिव वैश्यादधीत इत्यर्थः । वैश्यापादानकस्याध्ययनस्य ब्राह्मणापादानकमध्ययनमुपमानम् । तत्र च ब्राह्मणशब्दो वर्तते । तेन ब्राह्मणेन तुल्यं वैश्यादधीत इति तृतीयान्ताद्वतिः । एवमिहापि पूर्ववदिति द्रष्टव्यम् ॥ किमन्तादिति । ततश्चाप्रतिपत्तिः स्यात् । यदि नामात्मनेपदनियमविधानसामर्थ्यादनेन सर्वधातुभ्य आत्मनेपदं भवतीत्येतल्लभ्येत, विषयविभागस्तु न ज्ञायेतेति भावः ॥

( उद्द्योतः ) पूर्ववत्सनः ॥ ६२ ॥ धातुभ्यः परस्य लस्य विधीयमानमात्मनेपदं कथं योगेभ्यः स्यादत आह—योगस्थेभ्य इति । मञ्चाः क्रोशन्तीतिवदिति भावः ॥ भाष्ये येभ्य इति निर्देशात् पञ्चम्यन्ताद्वतिरिति भ्रमं वारयति—पक्षद्वयेपीति ॥ तर्हि पञ्चम्यन्तप्रयोगस्य का गतिरत आह—तुल्यार्थैरिति ॥ नन्वात्मनेपदेन स्वयोग्यप्रकृतेराक्षेपाद्दोषाभावोऽत आह—ततश्चेति ॥ तामुपपादयति—यदीति । यदि नामात्मनेपदनियमविधानसामर्थ्यात्प्रतिपत्तिः स्यात् तर्हीति शेषः । तर्ह्यनेनेत्यन्वयः ॥

( समाधानभाष्यम् )

**यथेच्छसि तथास्तु ॥**

( सन्नपेक्षाभ्युपगमभाष्यम् )

**अस्तु तावत्सनपेक्षम् ॥**

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्—निमित्तमविशेषितं भवतीति ॥**

( समाधानभाष्यम् )

**निमित्तं च विशेषितम् । कथम् । सनमेवात्र निमित्तत्वेनापेक्षिष्यामहे । पूर्ववत्सन आत्मनेपदं भवति । कुतः ? । सन इति ॥**

( प्रदीपः ) सनमेवेति । प्रत्यासत्त्येति भावः ॥

---

१ व्यवहितश्चापि अर्थद्वारेण संबन्धी भवति तदर्थस्य विशेष्यत्वादिति योजना । ( र. ना. ) २ बहुव्रीहिगर्भः कर्मधारयः । ( र. ना. ) ३ विभक्तिकर्मके विधावित्यर्थः । ( र. ना. ) ४ न्यमिविश्वतीत्यस्य स्थाने न्यमिविश्यते इत्यापत्तिरिति भावः । ( र. ना. ) ५ 'न च' । ६ विधायकशास्त्राभावादित्यर्थः । ( र. ना. ) ७ ब्राह्मणापादानकेऽध्ययने इत्यर्थः । ( र. ना. ) ८ शास्त्रप्रवृत्तिनिश्चयाभाव इत्यर्थः । ( र. ना. )

( योगापेक्षाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु योगापेक्षम् ॥**

( आक्षेपप्रसारणभाष्यम् )

**ननु चोक्तम्—उत्तरत्र विधिर्न प्रकल्पेतेति ॥**

( समाधानभाष्यम् )

**विधिश्च प्रक्लृप्तः ॥ कथम् ? । उत्तरत्रापि "पूर्ववत्सन" इत्येवानुवर्तिष्यते ॥**

( प्रदीपः ) उत्तरत्रापीति । उत्तरेषु योगेषु[1] वाक्यभेदेन पूर्ववत्सन इत्येतत्संबध्यते । प्रोपाभ्यां युजेरात्मनेपदं भवति । ततः पूर्ववत्सन इति ॥

( उद्द्योतः ) अनुवृत्तस्यैकवाक्यतया संबन्धे केवलेभ्य आत्मनेपदं न स्यादत आह—वाक्यभेदेनेति । पूर्ववद्ग्रहणानुवृत्तिसामर्थ्यात् । अन्यथा सन इत्येवानुवर्तयेदिति भावः ॥

( विधिपक्षस्थापनाधिकरण आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ॥**

( प्रदीपः ) किमर्थमिति । विधिनिषेधोभयपक्षसंभवात्प्रश्नः[2] ॥

( उद्द्योतः ) सूत्रस्यावश्यारभ्यत्वात्प्रयोजनप्रश्नोऽनुपपन्नोऽत आह—विधीति । अभिधेयप्रश्नोयमिति भावः ॥

( ९४० समाधानवार्तिकपूर्वखण्डम् ॥ १ ॥ )

**॥ * ॥ पूर्ववत्सन इति शदिम्रियत्यर्थम्[3] ॥ * ॥**

( भाष्यम् ) **शदिम्रियत्यर्थोऽयमारम्भः । शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं मा भूदिति ॥**

( ९४१ समाधानसाधकवार्तिकपरखण्डम् ॥ २ ॥ )

**॥ * ॥ इतरथा हि ताभ्यां सन्नन्ताभ्यामात्मनेपदप्रतिषेधः ॥ * ॥**

( भाष्यम् ) **इतरथा हि अनुच्यमानेऽस्मिन् शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधो वक्तव्यः स्यात् । शिशत्सति । मुमूर्षति ॥**

(उद्द्योतः) भाष्ये इतरथाहीत्यस्य व्याख्या—ऽनुच्यमाने इति । शदिम्रियतिपरयाऽव्याख्यानेऽन्यथा व्याख्याने इति भावः ॥ विधायकतया व्याख्यातेनानेनैव प्राप्तस्य प्रतिषेधो[4] वाच्य इति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

**कथं पुनः 'पूर्ववत्सनः' इत्यनेन शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधः शक्यो विज्ञातुम् ॥**

( समाधानभाष्यम् )

**वतिनिर्देशोयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा[5]—'उशीनरवन्मद्रेषु यवाः' सन्ति, न सन्तीति । 'मातृवदस्याः कलाः' सन्ति, न सन्तीति । एवमिहापि पूर्ववद्भवति, न भवतीति । न भवतीत्येवं वाक्यशेषं समर्थयिष्यामहे—यथा पूर्वयोर्योगयोः सन्नन्ताभ्यामात्मनेपदं न भवति, एवमिहापि शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं न भवतीति ॥**

(प्रदीपः)यथापूर्वयोरिति । 'नानोर्ज्ञः' 'प्रत्याङ्भ्यां श्रुव' इत्येतयोः । इह च शदिम्रियती अनुवर्तेते[6] इति भावः ॥

( उद्द्योतः ) ननु पूर्ववदित्युक्त्या ज्ञानोर्ज्ञः प्रत्याङ्भ्यामित्येतौ कथं प्रतिपत्तुं शक्यावित्यत्राह—इह चेति । एवं च शदिम्रियत्यपेक्षया पूर्वस्य परिग्रहान्न दोष इति भावः ॥

( आक्षेपभाष्यम् )

**यदि तर्हि शदिम्रियत्यर्थोयमारम्भः, विधिर्न प्रकल्पते[7]—असिसिषते । शिशयिषते ॥ अथ विध्यर्थः । शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति ॥**

( समाधानभाष्यम् )

**यथेच्छसि तथास्तु ॥**

( प्रदीपः ) यथेच्छसीति । निषेधपक्षेपि निषेधादेव सन्नन्तात् पूर्ववद्विधिरनुमीयते । विधिपक्षे शदिम्रियत्योः सनो नेत्यनुवृत्त्या न भविष्यति ॥

( उद्द्योतः ) पूर्ववद्विधिरिति । पूर्ववदिति तु ज्ञापकसिद्धस्यासार्वत्रिकत्वाद्दृष्टानुरोधाद्वा लब्धम्[8] ॥

( प्रतिषेधार्थताभ्युपगमभाष्यम् )

**अस्तु तावत्प्रतिषेधार्थः ॥**

( आक्षेपप्रसारणभाष्यम् )

**ननु चोक्तम्—विधिर्न प्रकल्पते—इति ॥**

( समाधानभाष्यम् )

**विधिश्च प्रक्लृप्तः ॥ कथम् ? । एतदेव ज्ञापयति—सन्नन्तादात्मनेपदं भवतीति । यदयं शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधं शास्ति ॥**

( विध्यर्थताभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु विध्यर्थः ॥**

( आक्षेपप्रसारणभाष्यम् )

**ननु चोक्तम्—शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति—इति ॥**

( समाधानभाष्यम् )

**नैष दोषः । प्रकृतं 'सनो न' इत्यनुवर्तिष्यते ॥ क्व प्रकृतम् ? । "ज्ञाश्रुस्मृदृशां सनः" । "नानोर्ज्ञः" सकर्मकात्सनो न भवति । "प्रत्याङ्भ्यां श्रुवः" सनो न । "शदेः शितः" सनो न । "म्रियतेर्लुङ्लिङोश्च" सनो नेति । इहेदानीं "पूर्ववत्सनः"**

1 'वाक्येषु' । 2 सन्नन्तादात्मनेपदं पूर्ववत्स्यादिति न स्यादिति वार्थमाश्रित्येति भावः । निषेधपक्षे पूर्ववदित्यस्य पूर्वयोगवदित्यर्थः । ( र. ना. ) 3 प्रतिषेधपक्षमाश्रित्याह—शदीत्यादि । ( र. ना. ) 4 प्रतिषेधपक्ष एवाश्रितव्य इति भावः । ( र. ना. ) 5 'यद्यथा' । 6 'वर्त्येते' 'वर्त्यौ' । 7 'प्रकल्पेत' । 8 तेन बुभूषतीत्यादौ आत्मनेपदं नेति भावः । ( र. ना. )

इति सन् इत्यनुवर्तते, नेति निवृत्तम् ॥ एवं च कृत्वा सोऽप्यदोषो भवति, यदुक्तम्—निमित्तमविशेषितं भवतीति ॥ नैव वा पुनरत्र शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति । किं कारणम् ?। "शदेः शितः" इत्युच्यते । न च शदिरेवात्मनेपदस्य निमित्तम् । किं तर्हि ?। शिदपि निमित्तम् ॥ अथापि शदिरेव शित्परस्तु निमित्तम् । न चायं सन्परः शित्परो भवति ॥

(प्रदीपः) एवं च कृत्वेति । द्वितीयस्य सन्ग्रहणस्येहानुवृत्त्येति भावः ॥ न च शदिरेवेति । सामग्र्याः कारणत्वं न केवलस्य शदेः, सा चेह सामग्री नास्ति सनः पूर्वस्य शदेः शितोऽभावात् ॥ अथापीति । शिता विशेष्यमाणत्वाच्छदेरेव प्राधान्यात् ॥

(उद्योतः) द्वितीयस्येति । एवं च सनपेक्षेपि पूर्वत्वे विद्यमाने न कश्चिद्दोष इति स एव सिद्धान्तो विधिपक्षश्चेति भावः ॥ सामग्र्या इति । शदेः शितश्च पृथङ्निमित्तत्वमिति भ्रमो न कार्य इति भावः ॥ शदेः शितोऽभावादिति । शदिप्रकृतिकशितोऽभावादित्यर्थः ॥ पूर्वमाक्षेदमाह—शितेति ॥

(आक्षेपभाष्यम्)

यत्र तर्हि शिन्नाश्रीयते "म्रियतेर्लुङ्लिङोश्च" इति ॥

(प्रदीपः) यत्र तर्हीति । म्रियतेर्ङित्त्वात् पूर्ववत्सन इति सन्नन्तात्प्राप्नोत्येवेति भावः ॥

(उद्योतः) म्रियतिमात्रस्यात्मनेपदनिमित्तत्वाभावादाह—म्रियतेरिति ॥ प्राप्नोतीति । लुङ्लिङोरिति शेषः ॥

(समाधानभाष्यम्)

अत्रापि न म्रियतिरेवात्मनेपदस्य निमित्तम् ॥ किं तर्हि ?। लुङ्लिङावपि निमित्तम् ॥ अथापि म्रियतिरेव लुङ्लिङ्परस्तु निमित्तम् । न चायं सन्परः लुङ्लिङ्परो भवति ॥

(प्रदीपः) अत्रापीति । म्रियतेर्लुङ्लिङोश्चेति नियमार्थमारब्धमिति भावः ॥

(उद्योतः) नियमार्थमिति । ङित्वादेव सिद्ध इति भावः ॥ भाष्ये—लुङ्लिङ्पर इति । म्रियतिपरलुङ्रूपस्येत्यर्थे तथा फलतीति भावः ॥ एवं च शदिम्रियतिभ्यां सन्नन्ताभ्यां न भवतीत्यर्थस्य वक्तुमयोग्यतया गुरुभूतोभावे तात्पर्यं तन्मूलविधिकल्पनं चेति गौरवभिया विधित्वमेव युक्तमिति तात्पर्यम् ॥

(कार्यातिदेशस्थापनाधिकरणम्)

(आक्षेपभाष्यम्)

किं पुनः पूर्वस्य यदात्मनेपददर्शनं तत्सन्नन्तस्यातिदिश्यते ?॥

(प्रदीपः) किं पुनरिति । किमयं कार्यातिदेशः—यथा-पूर्वस्मादात्मनेपदं विधीयते तथा सन्नन्तादपीति । आहोस्विन्निमित्तातिदेशः पूर्वस्य यन्निमित्तं ङित्वादि तत्सन्नन्तस्यातिदिश्यते । निमित्ते चातिदिष्टे तत्प्रयुक्तत्वादेव कार्यं भवतीति प्रश्नः ॥

(उद्योतः) प्राधान्येन कार्यातिदेशस्यैवौचित्यात्प्रश्नानुपपत्तिरत आह—किमयमिति । कार्यातिदेशेऽव्याप्तेर्निमित्तातिदेशोपि शङ्कित इति भावः ॥

(इष्टापत्तिभाष्यम्)

एवं भवितुमर्हति ॥

(९४२ आक्षेपवार्तिकम् ॥ ३ ॥)

॥ * ॥ पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेद्गुपादिष्वप्रसिद्धिः ॥ * ॥

(भाष्यम्) पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदं भवतीति चेद् गुपादिष्वप्रसिद्धिः । गुपादीनां न प्राप्नोति । जुगुप्सते मीमांसत इति । न ह्येतेभ्यः प्राक्सन आत्मनेपदं नापि परस्मैपदं पश्यामः ॥

(प्रदीपः) नह्येतेभ्य इति । नित्यसन्विषयत्वात् ॥

(९४३ समाधानवार्तिकम् ॥ ४ ॥)

॥ * ॥ सिद्धं तु पूर्वस्य लिङ्गातिदेशात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् ॥ कथम् ?। पूर्वस्य यदात्मनेपदलिङ्गं तत्सन्नन्तस्याप्यतिदिश्यते ॥

(उद्योतः) भाष्ये—लिङ्गातिदेशादिति । पूर्वस्य यल्लिङ्गं ङित्वादि तदतिदिश्यत इत्यर्थः ॥

(९४४ दूषणाक्षेपवार्तिकम् ॥ ५ ॥)

॥ * ॥ ज्ञादिषु तु लिङ्गप्रतिषेधः ॥ * ॥

(भाष्यम्) ज्ञादिषु तु लिङ्गस्य प्रतिषेधो वक्तव्यः । अनुचिकीर्षति पराचिकीर्षतीति ॥

(प्रदीपः) ज्ञादिष्विति । अनुपराभ्यां कृञ इत्यनेन परस्मैपदमेव विधीयते, न तु ञित्त्वं निवर्त्यते । पूर्वकार्ये त्वतिदिश्यमाने अत्र दोषाभावः । परस्मैपदेनात्मनेपदस्य बाधितत्वात् पूर्वस्यात्मनेपदकार्यादर्शनात्सन्नन्तस्याप्रसङ्गात् ॥

(उद्योतः) ननु कर्त्रभिप्राये क्रियाफले सर्वथा तज्जननिवृत्तयेऽनुपराभ्यामित्यनेन ञित्त्वस्यैव बाधोऽत आह—अनुपराभ्यामिति । परस्मैपदनियमेनैवेष्टसिद्धेर्निमित्तनिवर्तनमयुक्तमिति भावः ॥

(कार्यातिदेशपक्षाभ्युपगमभाष्यम्)

अस्तु तर्हि-प्राक्सनो येभ्यं आत्मनेपदं दृष्टं तेभ्यः सन्नन्तेभ्योपि भवतीति ॥

---

१ म्रियतेः परं यल्लुङ्रूपं लिङ्रूपं वा तस्य स्थाने आत्मनेपदमित्यर्थः । ( र. ना. ) २ 'सनताभ्यां' । ३ गुरुभूतोऽभाव इति कर्मधारयः । ( र. ना. ) ४ 'सनन्त' । ५ 'सनन्ता' । ६ 'सनन्ता' । ७ 'सनन्ता' । ८ लिङ्गं, निमित्तमित्यर्थः । ( र. ना. ) ९ तथाच सन्नन्ते ञित्वातिदेशेऽनुचिकीर्षतीत्यादावात्मनेपदं स्यादिति भावः । ( र. ना. )

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तं *पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेद्गुपादिष्वप्रसिद्धिः* इति ॥

( समाधानभाष्यम् )

नैष दोषः । अनुबन्धकरणसामर्थ्याद्भविष्यति ॥

(प्रदीपः) अनुबन्धेति । तत्सामर्थ्यात्सन व्यवधायकः॥[1]

( उद्द्योतः ) तत्सामर्थ्यादिति । नित्यसन्नन्तत्वान्न किंचित्प्रयोजनसंभव इति भावः ॥

( समाधानान्तरभाष्यम् )

अथ वा—अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति ॥

( प्रदीपः ) अथ वेति । समुदाये[2] लिङ्गासङ्गस्य उपायोऽवयवे लिङ्गासङ्गः ॥

( उद्द्योतः ) परिभाषाया[3] अबाधेनोपपत्तौ बाधो न न्याय्योऽतः पक्षान्तरमित्याह—समुदायेति । सामर्थ्यात्परिभाषाबाधो वा सामर्थ्यात्समुदायोपकारकत्वं वेति पक्षयोर्भेदः ॥

( आक्षेपभाष्यम् )

यद्यवयवे[4] कृतं लिङ्गं समुदायस्य विशेषकं भवति जुगुप्सयति मीमांसयतीत्यत्रापि प्राप्नोति ॥

( समाधानभाष्यम् )

नैष दोषः । अवयवे कृतं लिङ्गं कस्य समुदायस्य विशेषकं भवति ? यं समुदायं योवयवो न व्यभिचरति[5] । सनं च न व्यभिचरति । णिचं च पुनर्व्यभिचरति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ॥

( इष्टानुपपत्तिपरिहाराधिकरणम् )

( ९४५ न्यासान्तरवार्तिकम् ॥ ६ ॥ )

॥ * ॥ प्रत्ययग्रहणं णियगर्थम् ॥ * ॥

( भाष्यम् ) प्रत्ययग्रहणं कर्तव्यम् । पूर्ववत्प्रत्ययादिति वक्तव्यम् ॥ किं प्रयोजनम् ? । णियगर्थम् । णियगन्तादपि यथा स्यादिति । आकुसयते विकुसयते हृणीयते महीयते इति ॥

( प्रदीपः ) प्रत्ययग्रहणमिति । यद्येवमतिप्रसङ्गः पणायति पनायतीति । तत्र केचिदाहुः—पूर्ववद्द्रू णियक्सन इति प्रत्ययविशेषा एव निर्देष्टव्याः ॥ अन्ये त्वाहुः—एवं पाठे भाष्यं वार्तिकं च न व्याख्यातं भवतीति । हेतुमण्णिचः प्रतिषेधः इत्यतिप्रसङ्गविषयोपलक्षणार्थं[6] हेतुमण्णिज्ग्रहणम् ॥६२॥

( उद्द्योतः ) वार्तिकं भाष्यं चेति । प्रत्ययग्रहणमिति वार्तिकं पूर्ववत्प्रत्ययादिति । वक्तव्यमिति भाष्यं चासंगतं स्यादिति भावः ॥ आकुसादात्मनेपदिन इति गणसूत्रात्कुस आत्मनेपदी । हृणीङ्महीङौ कण्ड्वादौ ङितौ पठितौ ॥

( न्यासान्तरं द्रढयितुमाक्षेपभाष्यम् )

तत्र को दोषः ? ।

( ९४६ समाधानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ तत्र हेतुमण्णिचः प्रतिषेधः ॥ * ॥

( भाष्यम् ) तत्र हेतुमण्णिचः प्रतिषेधो वक्तव्यः । आसयति शाययतीति ॥

( न्यासयज्ञविकृतिदोषप्रदर्शकभाष्यम् )

सूत्रं च भिद्यते ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( आक्षेपभाष्यम् )

कथम्—आकुसयते विकुसयते हृणीयते महीयते इति ? ।

( समाधानभाष्यम् )

अनुबन्धकरणसामर्थ्याद्भविष्यति ॥

( उद्द्योतः ) भाष्येऽनुबन्धकरणसामर्थ्यादिति । आ कुसादात्मनेपदित्वोक्तिसामर्थ्यादित्यपि बोध्यम् । यद्वा तस्यापि 'आत्मनेपदलिङ्गवन्तो बोध्या' इत्यर्थ इति भावः ॥ इतरत्स्पष्टम् ॥ ६२ ॥

( समाधानान्तरभाष्यम् )

अथ वा—अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति ॥

( समाधानबाधकभाष्यम् )

यद्यवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति, हृणीययति महीययतीत्यत्रापि प्राप्नोति ॥

( समाधानसाधकभाष्यम् )

अवयवे कृतं लिङ्गं कस्य समुदायस्य विशेषकं भवति ? यं समुदायं योऽवयवो न व्यभिचरति । यकं च न व्यभिचरति, णिचं तु व्यभिचरति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ॥ पूर्ववत्सनः॥६२॥

---

( १५२ आत्मनेपदनियमसूत्रम् ॥१।३।१ आ० २३ सू० )

## २१० आम्प्रत्ययवत्कृञोनुप्रयोगस्य ॥ १।३।६३ ॥

( कृञितिप्रत्याहाराश्रयणाधिकरणम् )

( आक्षेपभाष्यम् )

कृञ्ग्रहणं किमर्थम् ? ॥

---

१ नेति । गुपादिप्रकृताविति शेषः । २ समुदायशब्देनावयवी विवक्षितः । ३ तस्मादित्युत्तरस्येतीत्यादि । ( र. ना. ) ४ समुदायशब्दस्य समूहपर्यायताया एव प्रसिद्धिमाश्रित्य शङ्कते—यदीति ॥ ५ व्यभिचारित्वादिति भावः । (र. ना.)

६ ननु प्रत्ययविशेषनिर्देशाभावे तत्र हेतुमण्णिचः प्रतिषेध इति वार्तिकानुपपत्तिरत आह—उपलक्षणार्थमिति । ( र. ना. )

(प्रदीपः) आम्प्रत्यय ॥ ६३ ॥ कृञ्ग्रहणमिति । कृञ एवानुप्रयोगो विहितो नान्यस्येति भावः ॥

(उद्द्योतः) आम्प्रत्ययवत् ॥ ६३ ॥ ननु तदभावेऽस्तिभूभ्यामपि स्यादत आह—कृञ एवेति ॥

(समाधानभाष्यम्)

इह मा भूत्—ईहामास ईहामासतुः ईहामासुः ॥

(आक्षेपभाष्यम्)

कथं चात्रास्तेरनुप्रयोगो भवति ? ॥

(समाधानभाष्यम्)

प्रत्याहारग्रहणं[1] हि तत्र विज्ञायते ॥

(आक्षेपभाष्यम्)

कथं पुनर्विज्ञायते तत्र प्रत्याहारग्रहणमिति ? ॥

(समाधानभाष्यम्)

इह कृञ्ग्रहणात् ॥

(आक्षेपभाष्यम्)

इह कस्मात्प्रत्याहारग्रहणं न भवति ? ॥

(समाधानभाष्यम्)

इहैवं[2] कृञ्ग्रहणात् ॥

(आक्षेपभाष्यम्)

अथेह कस्मान्न भवति—उदुम्भाञ्चकार । उदुब्जाञ्चकार ? ॥

(प्रदीपः) अथेह कस्मादिति । स्वरितञित इत्यनेनेति भावः ॥

(उद्द्योतः) स्वरितेति । कृञो ञित्त्वादिति भावः ॥

(आक्षेपबाधकभाष्यम्)

ननु च 'आम्प्रत्ययवद्' इत्युच्यते, न चात्राम्प्रत्ययादात्मनेपदं पश्यामः ॥

(उद्द्योतः) भाष्ये—आम्प्रत्ययादिति । बहुव्रीहिणाऽऽम्प्रत्ययप्रकृतेरित्यर्थः[3] ॥

(आक्षेपसाधकभाष्यम्)

न ब्रूमोऽनेनेति । किं तर्हि ? । स्वरितञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति ॥

(समाधानभाष्यम्)

नैष दोषः । इदं नियमार्थं भविष्यति आम्प्रत्ययवदेवेति ॥

(आक्षेपभाष्यम्)

यदि नियमार्थम्, विधिर्न प्रकल्पते—ईहांचक्रे ऊहांचक्रे इति ॥

(समाधानभाष्यम्)

विधिश्च प्रक्लृप्तः ॥ कथम् ? । पूर्ववदिति वर्तते । आम्प्रत्ययवत्पूर्ववच्चेति ॥ आम्प्रत्यय० ॥ ६३ ॥

(प्रदीपः) ननु संविधानेऽनेनात्मनेपदं विधीयते । यथा च याज्यादयः संविधाने न वर्तन्ते, तथोब्जादयोपि । तदर्थानुपाती च करोतिरप्यत्र विषये संविधाने न वर्तते इत्यात्मनेपदस्याप्रसङ्गः ॥ नैष दोषः । संविधान एवात्र विषये यदोब्जादयो वर्तन्ते शब्दशक्तिस्वाभाव्यात्तदर्थाभिव्यक्तये तदा करोतिः प्रयुज्यमानः संविधानविषय इति मत्वा चोद्यमुपन्यस्तम् ॥ परिहृतं च पूर्ववद्ग्रहणानुवृत्त्या वाक्यभेदेन । तत्रैकेन वाक्येन विधिः क्रियते, द्वितीयेन नियमः ॥ ६३ ॥

(उद्द्योतः) संविधानं, प्रयोजकव्यापारः । क्रियाफलस्य कर्तृगामित्वं वा ॥ यथेति । वक्ष्यमाणस्वरितञित इत्येतत्प्रत्याख्यानमभिप्रेत्येदम् । उपपादयिष्यते चेदं स्वरितञित इतिसूत्रे ॥ न वर्तते इति । अनभिधानादिति भावः ॥ सूत्रारम्भरीत्या समाधत्ते—नैष दोष इति । 'तदा तदर्थाभिव्यक्तय' इत्यन्वयः ॥ अनुवृत्तावपि कथमेकेन वाक्येनार्थद्वयावगतिरत आह—वाक्यभेदेनेति । आद्यस्य विधित्वम्, द्वितीयस्य पूर्ववदेवात्मनेपदं न त्वन्यथेति[4] नियमार्थत्वमित्यर्थः । ईहांचक्रे इत्यत्राकर्तृगेपि क्रियाफले आत्मनेपदसिद्धिर्विधेः फलं बोध्यम् ॥ ६३ ॥

---

(१५३ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. २४ सू.)

## २११ प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ १।३।६४ ॥

(९४७ आक्षेपवार्तिकम् ॥ १ ॥)

[॥ * ॥ स्वराद्युपसृष्टात् ॥ * ॥]

(भाष्यम्) स्वराद्युपसृष्टादिति वक्तव्यम् । उद्युङ्क्ते । अनुयुङ्क्ते ॥

(भाष्यम्) अपर आह—

(न्यासान्तरम्)

[॥ * ॥ स्वराद्यन्तोपसृष्टात् ॥ * ॥]

(भाष्यम्) स्वराद्यन्तोपसृष्टादिति वक्तव्यम् ॥ प्रयुङ्क्ते । नियुङ्क्ते । विनियुङ्क्ते । प्रोपाभ्याम् ॥ ६४ ॥

(प्रदीपः) प्रोपाभ्याम् ॥ ६४ ॥ स्वराद्यन्तोपसृष्टादिति । समुन्निसुदुरित्येतान्निरस्य सर्वे उपसर्गाः संगृहीताः ॥ ६४ ॥

(उद्द्योतः) प्रोपाभ्याम् ॥ ६४ ॥ स्वराद्यन्तोपसृष्टादित्युक्त्वा प्रविनय उदाहृतास्तत्कथमत आह—समुन्निसुदुरिति । स्वरादेः स्वरान्ताच्चेत्यर्थः[5] इति भावः ॥ ६४ ॥

---

१ 'ग्रहणं तत्र' । २ 'इहैव च कृ' । ३ बहुव्रीहिणेति । 'आम् प्रत्ययो यस्माद्' इत्यतद्गुणसंविज्ञानबहुव्रीहिणेत्यर्थः । ४ नत्वन्यथेति । तेन इन्दांचकारेत्यत्र कर्तृगेपि फले तङ् नेति भावः । ५ स्वर आदिर्यस्य तादृशोपसर्गसंसृष्टादित्यर्थः । (र. ना.)

( १५४ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ० २५ सू. )

## २१२ समः क्ष्णुवः ॥ १ । ३ । ६५ ॥

( आक्षेपभाष्यम् )

**किमर्थं विदेशस्थस्य ग्रहणं क्रियते, न 'समो गमादिष्विंत्येवोच्येतं ? ॥**

( ९४८ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ समः क्ष्णुवः सकर्मकार्थम् ॥ * ॥**

**( भाष्यम् ) सकर्मकार्थोयमारम्भः । अकर्मकादिति तत्रानुवर्तते ॥ समः ॥ ६५ ॥**

---

( १५५ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. २६ सू. )

## २१३ भुजोनवने ॥ १ । ३ । ६६ ॥

( ९४९ आक्षेपवार्तिकम् ॥ १ ॥ )

**[ ॥ * ॥ अनवनकौटिल्ययोः ॥ * ॥ ]**

**( भाष्यम् ) अनवनकौटिल्ययोरिति वक्तव्यम् । इहापि यथा स्यात्—प्रभुजति वाससी निभुजति जानुशिरसी इति ॥**

( उद्द्योतः ) भुजो ॥ ६६ ॥ भाष्ये—निभुजंति जानुशिरसी इति । प्रतिमाया इति शेषः । अतः प्राण्यङ्गत्वाभावान्नैकवत्त्वम् ॥

( तृतीयाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ।**

( सिद्धान्तिसमाधानभाष्यम् )

**न वक्तव्यम् । यस्य भुजेरवनमनवनं चार्थस्तस्य ग्रहणम् । न चास्य भुजेरवनमनवनं चार्थः ॥ भुजोनवने ॥ ६६ ॥**

( प्रदीपः ) भुजोनवने ॥ ६६ ॥ यस्य भुजेरिति । संसर्गवद्विप्रयोगोपि हि विशेषस्मृतिहेतुः । यथा दोग्ध्रीपर्यायो धेनुशब्द उपादीयमानः संसर्गिभिर्विशेषेऽवस्थाप्यते—सवत्सा धेनुरानीयतां सकिशोरा सकरभा सबर्करेति । एवमवत्सा अकिशोरा अकरभा अवर्करेति विशिष्टैव धेनुः प्रतीयते । यस्या येन दृष्टः संसर्गः सैव तद्रहिताऽऽनीयते ॥ ६६ ॥

( उद्द्योतः ) अवननिषेधेनाभ्यवहारवृत्तेरेवेति कथं लभ्यमत आह—संसर्गवदिति ॥ सबर्करेति । धेनुशब्दस्य धानकर्मत्वमेव प्रवृत्तिनिमित्तं न तु गोत्वसमानाधिकरणमेव तदिति भावः ॥ ६६ ॥

---

( १५६ आत्मनेपदनियमसूत्रम् ॥ १ । ३ । २ आ. २७ सू. )

## २१४ णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ॥ १ । ३ । ६७ ॥

( अणिकर्मण एव णौ कर्मत्वविवक्षाधिकरणम् )

( ९५० आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः ॥ * ॥**

**( भाष्यम् ) णेरात्मनेपदविधानेऽण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति तदा आत्मनेपदं भवतीति वक्तव्यम् ॥**

( ९५१ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ इतरथा हि सर्वप्रसङ्गः ॥ * ॥**

**( भाष्यम् ) इतरथा हि सर्वत्र प्रसङ्गः स्यात् । इहापि प्रसज्येत—आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् ॥**

( प्रदीपः ) णेरणौ ॥ ६७ ॥ एकस्मिन्वाक्ये कर्मान्तरनिवृत्तिरलभ्येति णेरिति वार्तिकारम्भः । एकवाक्यतायां[6] ह्ययमर्थः—ण्यन्तादात्मनेपदं भवति अण्यन्तावस्थायां यत्कर्म ण्यन्तावस्थायां यदि स कर्ता भवत्याध्यानादन्यत्रेति । भवति च कर्मान्तरसद्भावेप्यणौ कर्म णौ कर्ता ॥

( उद्द्योतः ) णेरणौ ॥ ६७ ॥ अणौ कर्मणः कर्तृत्वस्य सूत्रकृतोक्तत्वात् कर्मान्तरनिवृत्तिपरत्वे[7] वार्तिकतात्पर्यमाह—एकस्मिन्निति । अत एव वार्तिकव्याख्यानभाष्ये तदेवेति प्रत्युक्तम् ॥ यत्त्वेतद्वार्तिकस्थकर्मपदानि क्रियापरत्वेन व्याचक्षते, तन्न । कर्तरि कर्मव्यतिहारे इतिसूत्रे क्रियाग्रहणं कर्तव्यमिति सूत्रकारं शिक्षयतो वार्तिककारस्य[8] 'कर्मशब्दः क्रियापरः' इत्यर्थाज्ञानेन तद्वाक्यस्थकर्मपदानां क्रियापरत्वेन व्याख्यानस्यात्यन्तमनौचित्यात् । एवं च सूत्राक्षरैस्तदर्थसाधनपरभाष्यस्थकर्मपदानामपि तथा व्याख्यानमयुक्तमेवेति ध्येयम् ॥ भाष्ये—आरोहन्ति हस्तिनमिति । आरोहन्ति हस्तिनं हस्तिपकाः आरोहयमाणो हस्तीत्यत्रेव स्थलमारोहयति मनुष्यानित्यत्रापि स्यादित्यर्थः । मनुष्या हस्तिनमारोहन्तीत्यण्यन्तावस्था, स्थलमिति चातिरिक्तं कर्मेति भावः । सौकर्यातिशयप्रतिपादनाय प्रेरणावृद्धिवत् तत्प्रतिपादनायैव स्थलनिष्ठन्यग्भवनरूपफलांशवृद्ध्या द्विकर्मकत्वकरणम् । एवं च न्यग्भवनारोहणोभयानुकूलव्यापारो धात्वर्थः । स्थलं न्यग्भावयन् मनुष्यानारोहयतीत्यर्थः । स्थलशब्देन च गजपृष्ठस्थं काष्ठमयमुपवेशनस्थानमुच्यते ॥ हस्तीति मध्यमणिन्यायेनोभयान्वयि ॥

( तटस्थाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

---

१ 'दिष्ष्वेवोच्यते' । २ समोगम्यृच्छिभ्यामित्यस्य स्थाने समोगम्यृच्छिक्ष्णुभ्य इति सूत्रं कार्यमिति भावः । ( र. ना. ) ३ 'सकर्मकार्थं वचनम्' । ४ भनक्तीत्यर्थः । ( र. ना. ) ५ गौर्वडवा उष्ट्री छागी इति यथाक्रमं प्रतीयन्ते । (र.ना.)

६ सूत्ररूपैकवाक्यसत्त्वे इत्यर्थः । वार्तिकानारम्भे इति यावत् । ( र. ना. ) ७ कर्मान्तरनिवृत्तौ इति पाठः साधुः । अन्यथा कर्मान्तरनिवृत्तितात्पर्ये वार्तिकतात्पर्यमाहेत्यस्यासंगतेः । ( र. ना. ) ८ वार्तिककारस्तत्पदार्थः । ( र. ना. )

( सिद्धान्तिसमाधानभाष्यम् )

**न वक्तव्यम् । एवं वक्ष्यामि—"णेः" आत्मनेपदं भवति । ततः "अणौ यत्कर्म णौ चेत्" अण्यन्ते यत्कर्म णौ चेत् णौ यदि तदेव कर्म भवति । ततः "स कर्ता" कर्ता चेत्स भवति णाविति ॥**

( प्रदीपः ) भाष्यकारस्तु वाक्यभेदाश्रयेणैतमर्थं साधयति—**णेरात्मनेपदं भवती**त्येकं वाक्यम् । ततोऽ**णौ यत्कर्म णौ चे**दिति द्वितीयम् । अत्र वाक्ये यत्तदोर्नित्यसंबन्धाद्यच्छब्देन तच्छब्द आक्षिप्यते । धर्मान्तरस्य चानिर्देशात्कर्मत्वमेव संनिधानात्प्रतिनिर्दिश्यते । **अणौ यत्कर्म णौ चे**त्तत्कर्मेति प्रतिनिर्देशेन च कर्मान्तरव्यावृत्तिः क्रियते, न त्वणौ कर्मणो णौ कर्मत्वसद्भावः प्रतिपाद्यते, **स कर्ते**ति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनाद्, युगपदेकक्रियापेक्षया कर्मत्वकर्तृत्वविरोधादेकस्य । यथेष्टं वाक्यशेषपरिकल्पनादणौ यत्कर्म णौ चेत्तदेव कर्मेत्येवकाराध्याहारात्कर्मान्तरनिवृत्तिलाभः । ततः **स कर्ते**ति तृतीयं वाक्यमणौ कर्मणो णौ कर्तृत्वप्रतिपादनपरम् । एवमेषां वाक्यानामेकवाक्यत्वे महावाक्यं लक्ष्यसंस्कारकं संपद्यते ॥

( उद्योतः ) प्रतिनिर्दिश्यत इति । विधीयते इत्यर्थः । कर्मशब्दश्चात्रोत्तरवाक्यवत् कारकपर एवेति भावः ॥ एवमपि कर्मान्तरनिवृत्तिः कथमित्यत आह—**स कर्तेती**ति । कर्तृत्वप्रतिपादनेपि कर्मत्वं किं न स्यादत आह—**युगपदि**ति । न चैकस्यैकदैव व्यापारव्यधिकरणफलाश्रयत्वं व्यापाराश्रयत्वं च संभवतीति भावः ॥ **यथेष्टमिति** । शास्त्रस्य बहुलक्ष्यसंस्कारकत्वानुरोधेनेत्यर्थः । एतेनाणौ द्विकर्मका एवास्योदाहरणमित्यपास्तम् । अण्यन्तावस्थास्थकर्मत्वावच्छेदेन कर्तृत्वप्रतिपादनात् । इदमेव ध्वनयितुं भाष्ये दृष्टान्तव्याजेन सूत्रोदाहरणं दर्शितम् ॥

( सूत्रप्रत्याख्यानाधिकरणम् )

( सूत्रप्रत्याख्यानभाष्यम् )

**यद्येवं कर्मकर्ताऽयं भवति । तत्र कर्मकर्तृत्वात्सिद्धम् ॥**

( प्रदीपः ) **यद्येवमिति** । यथा लुनाति केदारं देवदत्तः, लूयते केदारः स्वयमेवेति केदारः कर्मकर्ता, तथा ण्यन्तेपि भवति—लावयते केदारः स्वयमेवेति ॥ कथमिति चेत् । उच्यते—लुनातिस्तावद्द्विधाभवनोपसर्जने द्विधाभावने वर्तते । लुनाति केदारं देवदत्तः । द्विधाभवन्तं द्विधा भावयतीत्यर्थः । यदा तु केदारस्य सौकर्यातिशयविवक्षायां देवदत्तस्य व्यापारो न विवक्ष्यते तदा द्विधाभवनमात्रे लुनातिर्वर्तते, अनेकार्थत्वाद्धातूनाम् । भिन्ना एव वा धातवो भिन्नार्थाः । सारूप्यात्तु तत्त्वाध्यवसायः । तत्र द्विधाभवने केदारस्य कर्तुः **कर्मवत्कर्मणा तुल्यक्रिय** इति कर्मकार्याण्यतिदिश्यन्ते । तेन लूयते केदारः स्वयमेवेत्यादयः प्रयोगा उपपद्यन्ते । अत्रापि स्वयमित्यस्य यदा आत्मनेत्यर्थस्तदा आत्मापेक्षया कर्मत्वमस्त्येवेति लूयते केदार इत्येतावदुदाहार्यम् ॥ वृत्तिकाराणां तु स्वयमिति वचनं कर्त्रन्तरव्युदासपरं विज्ञेयम् । अथ वा स्वयमित्यनेन करणत्वमात्मनः प्रतिपाद्यते, न तु कर्तृत्वम् । ततो यदा द्विधाभवनवृत्तेर्लुनातेर्देवदत्तादिप्रयोजकव्यापारे णिजुत्पद्यते तदा य एवार्थो लुनाति केदारं देवदत्त इति, स एवार्थो लावयति केदारं देवदत्त इति । पुनः केदारस्य सौकर्यातिशयविवक्षायामविवक्षिते देवदत्तस्य व्यापारे द्विधाभवनमात्रवृत्तिर्लावयतिः सम्पद्यते । ततश्च य एवार्थो लूयते केदारः स्वयमेवेति, स एव लावयते केदारः स्वयमेवेति । न च प्रयोज्यप्रयोजकभावनिवृत्तौ णिचो निवृत्तिः, उपायनिवृत्तावप्युपेयानिवर्तनात् । सिद्धशब्दव्युत्पत्तये हि प्रकृतिप्रत्ययविभागकल्पना आश्रीयते, अर्थस्योपादानं त्यागश्च क्रियते । लौकिके तु व्यवहारे सौकर्यमात्रविवक्षायां लावयते केदार इति प्रयुज्यते । एवं तावत्

**"निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ।**

इत्येतत्पक्षाश्रयेण कर्मकर्ता व्याख्यातः ॥ अपरः कल्पः—लुनाति केदारं देवदत्तः । लुनन्तं देवदत्तं सौकर्यातिशयात्केदारः प्रयुङ्क्ते इति केदारव्यापारे णिजुत्पद्यते—लावयति केदारो देवदत्तेनेति । पुनः प्रयोज्यप्रयोजकभावाविवक्षायां लावयते केदारः स्वयमेवेति प्रयुज्यते । तत्र पूर्वप्रक्रियाश्रयणे **कर्मवत्कर्मणा तुल्यक्रिय** इति सिद्धमात्मनेपदम् । तथा हि—लावयति केदारं देवदत्त इत्यत्र यस्मिंल्लावयतौ धातौ यादृशी कर्मावस्थायां केदारस्य द्विधाभवनलक्षणा क्रिया तस्मिन्नेव धातौ तादृशी कर्त्रवस्थायामिति सिद्धं लावयते केदारः स्वयमेवेति । द्वितीया तु प्रक्रिया सूत्रे एतस्मिन्नारब्धे संभवतीति प्रदर्शिता । न तु तस्यां कर्मवद्भावः प्राप्नोति । लावयतौ केदारस्य कर्मत्वाभावात् कर्मणा समानधातौ तुल्यक्रियत्वाभावात् ॥

( उद्योतः ) एवं चाकर्मकाणामेतत्सूत्रोदाहरणत्वं फलितं तद्ध्वनयन्नाह—भाष्ये—**यद्येवमिति** । कर्मकर्तृत्वात्सिद्धमिति च ॥ नन्विदमनुपपन्नं, समानधातौ कर्मस्थक्रियया तुल्यक्रियाकर्तुः कर्मवद्भावो, न चात्र तथा । तथाहि लावयत इत्यत्र किं लुनातिकर्मणा समानक्रियत्वम्, उत लावयतिकर्मणा । नाद्यः । ण्यन्ताण्यन्तत्वेन धातुभेदात् ॥ नान्त्यः । लुनातेर्णिचि लावयति केदारं देवदत्तेन यज्ञदत्त इत्यत्र केदारस्य प्रकृत्यंशकर्मत्वेन तथैव धातुभेदात् । लवनकर्तुस्तु गत्यादिनियमात्कर्मत्वमेव नेत्यत आह—**यथा लुनातीति** । दृष्टान्तमुपपादयति—**लुनातिस्तावदिति** । सौकर्यातिशयोऽनायासेन द्विधाभवनाश्रयत्वम्, तच्च कर्तृव्यापारस्येषत्त्वेन कर्तृव्यापाराविवक्षायामप्यनुदरा कन्येतिवत्तत्र पर्यवसानम् । ईषत्त्वादेव तस्य स्वातन्त्र्येण धात्ववाच्यतेति द्विधाभवनमात्रवृत्तित्वं लुनातेर्बोध्यम् ॥ क्वचित्फलव्यापारयोः शक्तिः, क्वचित्फले इति कथमत आह—**अनेकार्थत्वादिति** । तदुक्तम्—

१ 'त्यामिसंबं—' । २ 'उपपन्नाः' । ३ आत्मपदार्थपर्यालोचनेनेत्यर्थः । ( र. ना. ) ४ केदारस्य लुनाति कर्मत्वादिति भावः । ( र. ना. ) ५ 'न कर्तृत्वम्' । ६ 'देवदत्तव्यापारे' । ७ लोकव्यवहारे प्रसिद्धानां शब्दानां साधुत्वबोधनायेत्यर्थः । ( र. ना. ) ८ गतिबुद्धीत्यादिसूत्रस्य नियमार्थत्वादित्यर्थः । ( र. ना. ) ९ ईषत्त्वम् अल्पत्वम् ।

"एकदेशे समूहे च व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः" इति ॥

केचिदर्थभेदाच्छब्दभेदमिच्छन्ति तन्मतेप्याह—**भिन्ना एवेति** ॥ नन्वेवं धातुभेदात् कर्मवद्भावो न स्यादत आह—**सारूप्यादिति** ॥ तदुक्तम्—

"तानि धात्वन्तराण्येव पचिं सिध्यंतिवद्विदुः ।
भेदेपि तुल्यरूपत्वादेकत्वपरिकल्पना" इति ॥

नन्वेवं केदारः कैर्तेवेति कथमयं कर्मकर्तेत्यत आह—**तत्रेति** । आतिदेशिकस्तथा व्यवहार इति भावः ॥ इयं च द्वितीयावस्था । यावतीषु सोपानस्थानीयास्वर्थविभागभूमिषु पदं विन्यस्येयं प्रायोगिकी पर्यन्तभूमिः प्राप्यते ता अन्तरालभाविन्यो गम्यमाना भूमयोऽवस्थाशब्देनोच्यन्ते ॥ तत्र प्रथमं द्विधाभवनं बुद्धिरवगाहते । द्विधाभवनेऽस्य स्वरूपयोग्यतां ज्ञात्वैव कर्तुर्द्विधाभावने प्रवृत्तेः । अन्यथा शिलायामङ्कुरोत्पादनायेवाप्रवृत्तिप्रसङ्गात् । ततो द्विधाभावने कर्मतापत्त्यवगाहनम् । ततोऽत्यन्तसौकर्याय नानेन प्रयुक्तः सन् द्विधा भवति, किं तु स्वत एवेति परप्रेरणाऽसंवलितद्विधाभवनलक्षणस्वातन्त्र्यावगाहनमिति द्विधाभवनमात्रवृत्तित्वे कर्मवद्भावः । स्पष्टं चेदं हेलाराजीयादौ ॥ विशिष्टवाचको धातुर्विशेषणे पर्यवसन्न इति । इमां द्वितीयकक्षात्वेन व्यवहरन्ति ॥ दृष्टान्तमुपपाद्य ण्यन्ते उपपादयति—**ततो यदेति** । तत्र लुनाति केदारमिति कक्ष्यापेक्षयाऽस्यां कक्ष्यायां णिच् विशेषः, तस्यां द्विधाभवनस्वरूपयोग्यतामात्रनिश्चयेन द्विधाभावनरूपे तत्प्रयोजकव्यापारे प्रवृत्तिः, अस्यां तु द्विधाभवने स्वत एव प्रवृत्तं दृष्ट्वा तत्क्षेमाय कर्तॄणां प्रवृत्तिरिति वक्ष्यमाणसौकर्यप्रतीतिलक्षणविच्छित्तिविशेषलिप्सया णिजुपादानम् ॥ **सौकर्यातिशयेति** । अस्यां तु कक्षायां स्वतःप्रवृत्तस्तत्क्षेमायापि न प्रयोजकव्यापारमपेक्षत इति सौकर्यातिशयविवक्षया प्रयोक्तृव्यापाराविवक्षेति भावः ॥ इयं प्रायोगिकी पञ्चमी पर्यन्तभूमिः ॥ तदुक्तम्—

"अवस्थां पञ्चमीं प्राहुर्ण्यन्ते तां कर्मकर्तरि" इति ॥

तस्याः पञ्चमीत्वं चैवम् । तत्र द्वितीयकक्षायां फलसमानाधिकरणो व्यापारोऽर्थस्ततो णिचि तृतीया कक्षा । ततो णिजर्थव्यापारस्य प्रकृत्यर्थस्य फलसमानाधिकरणव्यापारस्य च त्यागे चतुर्थी कक्षा । ततः फलसमानाधिकरणे व्यापारे प्रवर्तनात्वेन विवक्षिते णिच्युदाहरणभूतायाः पञ्चमीत्वम् । उभयत्रापि णिज्निर्वाहाय सर्वान्ते हरिणा **निवृत्तप्रेषणादित्युक्तं** । तदाह—**उपायनिवृत्तावपीति** । मुख्यप्रयोजकव्यापारनिवृत्तावपि स्वव्यापारे एव तत्त्वारोपात्तदनिवृत्तिरिति भावः ॥ एतच्च शब्देन्दुशेखरे विस्तरेण निरूपितम् ॥ तदाह—**सिद्धशब्देति** । ननु लूयते केदार इति प्रयोगे सति किमर्थं णिच्प्रत्ययघटितप्रयोगादरोऽत आह—**सौकर्येति** । लूयते केदार इति कक्षायां स्वत एव प्रयोज्यस्य स्वव्यापारे प्रवृत्तिरिति सौकर्यप्रतीतिमात्रं, पञ्चम्यां तु क्षेमार्थमपि प्रयोजकव्यापारो नापेक्षित इति तदतिशयस्य लाभादेतदादर इति भावः ॥ **प्राकृते** । प्रयोगान्तरे प्रकृतिवाच्ये व्यापारे ॥ अध्यारोपितप्रेषणपक्षमाह—**अपर इति** । **लुनन्तमिति** । स्वयं द्विधाभवने प्रवृत्तं केदारं लविता क्षेमाय प्रयुङ्क्ते इति निवृत्तप्रेषणे चतुर्थी कक्षा, इह तु स्वत एव द्विधाभवने प्रवृत्त इत्येतावदेव न, किं तु प्रत्युत स एव लवितारं प्रयुङ्क्ते इति प्रयोज्यत्वाभिमतस्य प्रयोजकत्वेनाधिकः सौकर्यातिशय इति भावः । **लावयँति केदारो देवदत्तेनेति** । अत्र लावयतीति पाठस्तु लेखकप्रमादाद्, ग्रन्थकृद्वक्ष्यमाणसिद्धान्तरीत्याऽनेनात्मनेपदप्राप्तेः ॥ यद्वाऽकर्मकाण्येवोदाहरणानीति मन्यमानस्यात्रत्यपूर्वपक्षिणो मतेऽनुपदवक्ष्यमाणरीत्या कर्मवद्भावाप्राप्त्या तथोक्तिः ॥ नन्वेवमत्रैव कर्मवद्भावाप्राप्तिविषयेऽस्य सूत्रस्यावश्यकत्वेन कथं कर्मवद्भावात् सिद्धमित्युक्तिरिति चेन्न । अत्रत्यकर्मपदस्य कर्मसंज्ञायोग्यार्थपरत्वेन तदतिरिक्तस्य देवदत्तरूपस्य फलाश्रयस्य सत्त्वेनैतदप्राप्तेः । कर्मसंज्ञा तु गतिबुद्धीतिनियमान्नेत्यन्यत् । कर्तृकर्मेतरकर्माभाव इति वक्ष्यमाणसिद्धान्तरीत्या त्वात्मनेपदं भवत्येवेति दिक् ॥ **पुनरिति** । देवदत्ते प्रयोज्यत्वस्याविवक्षायां केदारे तन्निरूपितप्रयोजकत्वस्याप्यप्रतीतौ देवदत्तव्यापारस्याप्यप्रतीतेर्द्विधाभवनमात्रे लावयतिरिति भावः ॥ स्थलमारोहयति मनुष्यानिति प्रत्युदाहरणेनायमपि प्रकारो भाष्यकृता ध्वनितः ॥ **प्रदर्शितेति** । हर्यादिभिरिति शेषः । न तु तत्रापि कर्मवद्भावविषयत्वे तत्तात्पर्यमिति भावः ॥ एवं चाध्यारोपितप्रेषणपक्षाज्ञानेनात्रायं पूर्वपक्ष इति ध्वनितम् ॥ वस्तुतो निवृत्तप्रेषणतृतीयकक्षामादाय तत्संभवः । द्विधाभवनानुकूलव्यापाररूपार्थोपस्थितौ तत्प्रतिपादकण्यन्ताण्यन्तयोर्द्वयोरपि शब्दयोरुपस्थितिविशेषात् समानधातौ कर्मणा तुल्यक्रियत्वस्य ज्ञानसत्त्वात् । न चैवं लावयति केदारो देवदत्तेनेति द्वितीयकक्षायामपि कर्मवद्भावापत्तिः । व्यापारव्यधिकरणफलवाचकानां नेत्यर्थकसकर्मकाणां **प्रतिषेध** इति वचनेन तदप्राप्तेरिति दिक् ॥ परे तु तत्र पक्षे द्वितीयकक्षैवोदाहरणं वक्ष्यमाणसिद्धान्तरीत्या, तद्ध्वनयन्नाह—**न तु तस्यामितीत्याहुः** ॥

( ९५२ सूत्रारम्भसाधकवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ कर्मकर्तृत्वात्सिद्धमिति चेद्यक्चिणोर्निवृत्त्यर्थं वचनम् ॥ * ॥

**( भाष्यम् ) कर्मकर्तृत्वात्सिद्धमिति चेद् यक्चिणोर्निवृत्त्यर्थमिदं वक्तव्यम् । कर्मापदिष्टौ यक्चिणौ मा भूतामिति ॥**

( प्रदीपः ) **यक्चिणोर्निवृत्त्यर्थमिति** । अणौ यत्कर्म णौ चेत्स कर्ता तदा णेरात्मनेपदमेव नान्यदिति नियमार्थमेतदित्यर्थः ॥

( उद्द्योतः ) भाष्ये—**यक्चिणोर्निवृत्त्यर्थमिति** । नियमस्य सजातीयापेक्षत्वेन प्रत्ययान्तरस्यैव वारणाच्चिण्वदिण्निवृत्त्यर्थमिति नोक्तम् ॥

( ९५३ सूत्रारम्भबाधकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ न वा यक्चिणोः प्रतिषेधात् ॥ * ॥

**( भाष्यम् ) न वा एष दोषः ॥ किं कारणम् ? ।**

१ भिन्नमिति शेषः । ( र. ना. ) २ द्विधाभवनरूपप्रधानीभूतव्यापाराश्रयत्वेनेति शेषः । ( र.ना.) ३ 'पुस्तकत्रये तु लावयते' इत्यात्मनेपदमेव मतीके दृश्यते । ४ कर्तृकर्मेतरकर्माभावे अनेनात्मनेपदमिति कैयटे वक्ष्यमाणेत्यर्थः । ( र. ना. ) ५ लावयते केदारो देवदत्तेनेत्येवंरूपेति भावः । ( र. ना. )

६ कर्मातिदेशात्प्राप्ताविस्यर्थः । ( र. ना. ) ७ कर्मवदकर्मकाणामिति वचनादकर्मकाणामेव कर्मवद् भावः । अकर्मकत्वञ्च फलाश्रयरहितत्वम्, अत्र तु देवदत्तस्य फलाश्रयत्वेन तत्त्वाभाव इति । ( र. ना. )

ककूचिणोः प्रतिषेधात् । प्रतिषिध्येते अत्र यक्चिणौ *यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्* इति ॥

(उद्द्योतः) एष दोष इति । यद्दोषपरिहाराय त्वया नियमार्थत्वं व्याख्यायते स यक्चिणप्राप्तिरूपो दोषो नेत्यर्थः । एवं चायुक्तं नियमार्थत्वमिति भावः ॥

( सूत्रारम्भसाधकभाष्यम् )

यस्तर्हि न हेतुमण्णिच्, तदर्थमिदं वक्तव्यम् । तस्य कर्मोपदिष्टौ यक्चिणौ मा भूतामिति । उदपुपुच्छत पुच्छं स्वयमेव ॥

( प्रदीपः ) उदपुपुच्छत पुच्छमिति ॥ कथं पुनरत्राणौ कर्म विद्यते यावता पुच्छशब्दो द्रव्यवचनः ॥ अत्राहुः—अस्मिन्नेव विषये पुच्छशब्दः पुच्छकर्मिकायामुदसनक्रियायां वर्तते । तस्मात् स्वार्थे णिङ् प्रत्ययः । ततो यदा भ्राम्यमाणं पुच्छं संस्कारवशाच्चक्रमिव भ्रमणक्रियायां भूतायां स्वातन्त्र्येण विवक्ष्यते तदा उदपुपुच्छतेत्यात्मनेपदमेव णिङन्ताद् यथा स्यादित्येवमर्थमिदं सूत्रं संपद्यते ॥

( उद्द्योतः ) यावतेति । एवं चाण्यन्तपुच्छशब्दस्य क्रियावचनत्वाभावेन तत्र कर्माभाव इति क्रियमाणेपि सूत्रे यगादिनिवृत्तिर्न प्राप्नोति, अनेन नियमस्य प्राप्त्यभावादिति भावः ॥ उदसनक्रियायामिति । यद्यपि णिङ्पसंदान एव पुच्छपदं तत्समवेतक्रियापरं न केवलमित्यण्यन्तप्रयोगो दुर्लभस्तथापि शास्त्रदृष्ट्या कर्मवानण्यन्तोस्तीत्यभिमानः ॥ भूतायामित्यनेन लुङ्विषयप्रदर्शनम् ॥ केचित्तु णिङन्ताण्णिचीदमुदाहरणमित्याहुः । तन्न । यस्तर्हि न हेतुमण्णिजितिभाष्यासंगतेः ॥

( सूत्रारम्भबाधकभाष्यम् )

अत्रापि यथा भारद्वाजीयाः पठन्ति तथा भवितव्यं प्रतिषेधेन*यक्चिणोः प्रतिषेधे णिश्रिग्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्* इति ।

( उद्द्योतः ) भाष्ये—अत्रापि यथा भारद्वाजीया इति । एवं च तेनैव नियमफलसिद्धेरनर्थकं सूत्रमिति भावः ॥

( प्रतिषेधावश्यकताभाष्यम् )

स चावश्यं प्रतिषेध आश्रयितव्यः ।

( ९५४ अन्यथानुपपत्तिवार्तिकम् ॥ ५ ॥ )

॥ * ॥ इतरथा हि यत्र नियमस्ततोन्यत्र प्रतिषेधः ॥ * ॥

( भाष्यम् ) अनुच्यमाने ह्येतस्मिन्यत्र नियमस्ततोन्यत्र तेन यक्चिणोः प्रतिषेधो वक्तव्यः स्यात् । गणयति गणं गोपालकः । गणयति गणः स्वयमेव ॥

( प्रदीपः ) गणयति गण इति । गणो णावेव कर्म णावेव कर्तेत्यस्य नियमस्याव्यापाराण्णिश्रन्थिग्रन्थीतिवक्तव्य एव प्रतिषेधः । तस्यैव च व्यापकत्वात्तदर्थोनेन सूत्रेणेत्यर्थः ॥ कथं पुनरत्र कर्मवद्भावप्राप्तिः । यावता कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवद्भावो विधीयते । गणनं च संख्यानिमित्तकः परिच्छेदो ज्ञानविशेषः कर्तरि वर्तते ॥ नैष दोषः । भागशो ऽवस्थापनेपि गणिर्वर्तते । भागशोऽवतिष्ठमानं गणं गोपालकोऽवस्थापयति । तत्रानुकूलत्वाद्गणस्यैव कर्तृत्वविवक्षायामस्ति कर्मस्थभावकत्वात्कर्मवद्भावः ॥

( उद्द्योतः ) ननु सूत्रेणैव सिद्धे वार्तिके णिग्रहणमेव न कार्यमित्यत आह—भाष्ये—स चावश्यमिति । अनुच्यमाने इति । णिग्रहण इति शेषः ॥ यत्र नियमोऽण्यन्तादृण्यन्तस्थले ॥ ततोऽन्यत्रेति । ण्यन्तैकविषये गणयति गण इत्यादौ ॥ प्रतिषेध इति । सूत्रेणासिद्धेर्वार्तिके णिग्रहणाभावाचान्यदेव किंचिद्वचनं तेन वादिना कार्यम् । ततो वरं वार्तिक एव णिग्रहणमिति भावः । गणयतीत्यत्र सकर्मकाकर्मकावस्थयोरुभयत्रापि स्वार्थणिजेवेति बोध्यम् ॥ कथं पुनरिति । एवं च यक्चिणोः प्राप्त्यभावात्प्रतिषेधो व्यर्थ इति भावः ॥ भागश इति । भागशोऽवस्थानं च कर्मस्थमिति भावः ॥

( ९५५ अन्यथानुपपत्तिशेषवार्तिकम् ॥ ६ ॥)

॥ * ॥ आत्मनेपदस्य च ॥ * ॥

( भाष्यम् ) आत्मनेपदस्य च प्रतिषेधो वक्तव्यः । गणयति गणः स्वयमेव ॥

( उद्द्योतः ) भाष्ये—आत्मनेपदस्य चेति । न केवलं यक्चिणोरेवात्मनेपदस्यापीत्यर्थः ॥

( ९५६ सूत्रारम्भसाधकवार्तिकम् ॥ ७ ॥ )

॥ * ॥ आत्मनेपदप्रतिषेधार्थं तु ॥ * ॥

( भाष्यम् ) आत्मनेपदप्रतिषेधार्थमिदं वक्तव्यम् । गणयति गणः स्वयमेव ॥

( प्रदीपः ) आत्मनेपदप्रतिषेधार्थमिति । अणौ कर्मणो णौ कर्तृत्वे आत्मनेपदं यथा स्याद्, णौ तु कर्मणो णौ कर्तृत्वे मा भूदित्येवमर्थमिदमित्यर्थः ॥

( उद्द्योतः ) तर्हि तदर्थमेवेदं सूत्रमस्त्वित्याह—आत्मनेपदप्रतिषेधार्थं त्विति ॥ कर्मवद्भावेन सर्वत्रात्मनेपदे सिद्धे इदं सूत्रं ण्यन्तानामण्यन्तकर्मतुल्यक्रिये कर्तर्येवात्मनेपदं न तु ण्यन्तकर्मतुल्यक्रिय इति नित्यण्यन्तेभ्यः कर्मकर्तरि तन्निवृत्त्यर्थमित्यर्थः ॥ ननु सिद्धस्य पुनर्वचनमन्यनिवृत्त्यर्थं स्यान्न तत्प्रतिषेधार्थमत आह—अणौ कर्मण इति । सिद्धकार्यायाः प्रकृतेरुपादानं प्रकृत्यन्तरनिवृत्त्यर्थमिति भावः ॥ विशेषणान्तरस्य त्वेतद्व्यावृत्तिमात्रफलकत्वे नोपयोग इति तन्नोक्तम् । उपलक्षणत्वं वा बोध्यम् ॥

( प्रत्याख्यानसाधकभाष्यम् )

इष्यत एवात्रात्मनेपदम् ॥

---

१ 'अस्मिन् विषये' । २ णिङ उपसंबन्धे इत्यर्थः । ( र. ना. ) ३ अभिमानोक्तिबीजन्तुमयुक्तस्य कर्मवतोऽण्यन्तस्य ग्रहणमभिमेत्य । ( र. ना. ) ४ णिपदेन णिङ्णिचोर्ग्रहणमविशेषात् । ( र. ना. ) ५ वार्तिके हेतुमणीति पठितव्येत्यर्थः । ( र. ना. ) ६ 'व्यवस्थापनेपि' ।

(उद्योतः) भाष्ये—इष्यत एवेति । कर्मवद्भावेनेत्यर्थः ॥ एवं चेष्टव्यावर्तकता सूत्रस्य नोचितेति भावः ॥ एवं च गणयते गण इत्येव रूपं तत्रेति तात्पर्यम् ॥

(आक्षेपभाष्यम्)

**किमिष्यत एव, आहोस्वित्प्राप्नोत्यपि ? ॥**

(उद्योतः) ननु णेरणाविति नियमसूत्रादप्राप्तौ निर्णीतायां कथमिष्यत इत्युक्तिरिति शङ्कते—किमिष्यत एवेति ॥

(समाधानभाष्यम्)

**इष्यते च, प्राप्नोति च ॥ कथम् ? । अणाविति कस्येदं णेर्ग्रहणं यस्माण्णेः प्राक्कर्म वा कर्ता वा विद्यते । न चैतस्माण्णेः प्राक्कर्म कर्ता वा विद्यते ॥**

(प्रदीपः) न चैतस्मादिति । नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावादणौ कर्मणोऽसंभवाण्णेरिति हेतुमण्णिचो ग्रहणम् । प्रतिषेधोऽप्यणाविति तस्यैव प्रत्यासत्त्या न्याय्य इत्य-हेतुमण्णौ गणस्य कर्मत्वं हेतुमण्णौ कर्तृत्वमिति सूत्रस्यायं विषयो भवत्येवेति कथमत्रानेनात्मनेपदं निवार्येतेत्यर्थः ॥

(उद्योतः) सूत्रकारस्यापीदमिष्टमित्याह—इष्यते चेत्यादि ॥ नियमसत्त्वात् कथं प्राप्तिरिति शङ्कते—कथमिति । नियमस्यैवा-प्राप्तिरित्युत्तरम् ॥ न चैतस्मादिति । चुरादिणिच इत्यर्थः ॥ ननु णिजुत्पत्तेः पूर्वं धातोर्वर्तमानत्वे कर्मणोपि संभवादाह—नित्येति ॥ एवं च ततः प्रागवस्थायां प्रयोगस्यैवाभावेन कर्ता च कर्म चास्य नास्तीत्यर्थः ॥ कर्तेति । दृष्टान्तार्थम् ॥ फलान्तरमप्यस्य वक्ष्यते तदाह—अणौ कर्मणोऽसंभवादिति । अस्य 'कथमत्रात्मनेपदं वार्यत' इत्यनेनान्वयः । नियमाप्राप्तेः । गणयति गण इत्युदाहरण-स्यावस्थाद्वयेपि चुरादिण्यन्तस्यैव प्रक्रमात् ॥ चुरादिण्यन्तप्रकृति-कहेतुमण्ण्यन्तत्वे त्वेतत्सूत्रविषयतया पूर्वपक्षिणोपि तत्रात्मनेपद-स्यैवेष्टतया तत्रानेन तन्निवारणमशक्यमिति स्वयमाह—णेरि-तीत्यादि । परं त्वेषोक्तिर्विफला, भाष्ये तत्प्रक्रमाभावात् ॥ चिति स्मृत्यामित्यादि इदित्करणादनित्यण्यन्तत्वस्य चुरादीनां ज्ञापनेपि तद्विशेषविषयमिति बोध्यम् ॥ वस्तुतस्तज्ज्ञापकमेव चिन्त्यम् । कुद्रिप्रभृतीनामिव तस्यापीदित्वस्योच्चारणमात्रार्थत्वात् । केवलं घुषेरविशब्दने इति लिङ्गादनित्यण्यन्तत्वं भाष्यकृद्वक्ष्यति ॥ यद्यप्याधृषाद्वेति विकल्पितणिचोपि चुरादौ सन्ति तथाप्यणावक-र्मकादित्यत्र हेतुमण्णिच एव ग्रहणसंभवादिहापि साजात्यात्साह-चर्याच्च तथैवोचितमिति तत्त्वम् ॥

(सूत्रसाधकभाष्यम्)

**इदं तर्हि प्रयोजनम्—अनाध्यान इति वक्ष्यामीति ॥ इह मा भूत्-स्मरति वनगुल्मस्य कोकिलः । स्मरयत्येनं वनगुल्मः स्वयमेवेति ॥**

(प्रदीपः) इदं तर्हीति । न चानिर्दिष्टविषयः प्रतिषेधः शक्यते विधातुमिति सर्वमेव सूत्रं क्रियते ॥ वनगुल्मस्येति । कर्मोपलक्षणमेतत् । अत्र हि वनगुल्मस्य शेषत्वेन विवक्षित-त्वात्कर्मत्वाभावः । तस्मात् स्मरति वनगुल्ममिति[1] प्रदर्शनीयम् ॥ स्मरयत्येनमिति । एतदप्युपलक्षणम् । अत्रैनमिति कर्मणः सद्भावात् कर्मवदकर्मकाणामिति वचनात्कर्मवद्भा-वस्य प्राप्तिर्नास्ति । नाप्यनेनात्मनेपदस्य, कर्मान्तरसद्भावात् । तस्मात्स्मरयति वनगुल्मः स्वयमेवेति प्रदर्शनीयम् ॥

(उद्योतः) ननु शेषवैयर्थ्यमत आह—न चानिर्दिष्टेति । यद्यपि प्रतियोगिभूतात्मनेपदनिर्देशेनापि प्रतिषेधः शक्यस्तथाप्यन्यां-शानुक्तावाध्यानार्थात्कदापि तन्न स्यादिति विषयविशेषनिर्देशार्थं कृत्स्नं सूत्रमपेक्षितमिति भावः ॥ नन्वधीगर्थेति कर्मणि शेषे वन-गुल्मस्येति षष्ठीसत्त्वात् कर्मणोऽभावेन नेदमुदाहरणमत आह—कर्मोपलक्षणमिति ॥ अन्ये त्वेतद्भाष्यबलात्सूत्रस्थकर्मपदं फलाश्र-यपरं न तु कर्मसंज्ञकपरमित्याहुः ॥ एतदपि । एनमित्येतद्रहित-मुदाहरणमपि ॥ उपलक्षणम् । तद्रहितोदाहरणस्येत्यर्थः । अकर्म-काण्येवोदाहरणानीति मत्वैव कर्मवद्भावासिद्धमिति भाष्यस्य प्रवृत्तेरिति भावः ॥ यद्यपि गतिबुद्धीतिसूत्रे ज्ञानसामान्यार्थकाना-मेव ग्रहणमिति स्मरयतियोगे नाण्यन्तकर्तुः कर्मत्वप्राप्तिः । तथाप्ये-तद्भाष्यप्रामाण्यादाध्यानार्थकस्मरतेरपि तत्र ग्रहणं बोध्यमिति तात्पर्यम् ॥

(प्रयोजननिराकरणभाष्यम्)

**एतदपि नास्ति प्रयोजनम् । कर्मोपदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति । कर्तृस्थभावकश्चायम् ॥**

(उद्योतः) एतदपीति भाष्ये । अध्यानार्थानां कर्तृस्थ-क्रियत्वेन कर्मवद्भावाविषयत्वादिति भावः ॥

(सूत्रसाधकभाष्यम्)

**एवं तर्हि सिद्धे सति यदनाध्यान इति प्रतिषेधं[2] शास्ति तज्ज्ञापयत्याचार्यः—भवत्येवंजातीयकाना-मात्मनेपदमिति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? । पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् राजा" अत्रात्मनेपदं सिद्धं भवति ॥**

(प्रदीपः) भवत्येवंजातीयकानामिति । येषामण्य-न्तानां यत्कर्म तेषां ण्यन्तानां यदा स कर्ता तदा कर्तृस्थभाव-क्रियत्वेप्यात्मनेपदं भवतीत्यर्थः । एवं च ब्रुवता भाष्यकारेण सूत्रमेतद्विध्यर्थमित्यर्थादुक्तं भवति । तेनारोहयते हस्तीत्यादा-वनेनैवात्मनेपदं सिद्धं भवति । तथा हि—'रुहिर्गतिविशेषव-चनः' इति यद्धितुपरं छन्दसीत्यत्र भाष्यकारो वक्ष्यति ॥ एवं च कर्तृस्थक्रियत्वान्नास्त्यत्र कर्मवद्भावः । एवं चारुह्यते हस्ती स्वयमेवेति ये कर्मवद्भावं प्रदर्शयन्ति ते न्यायं भाष्यं च बाधमाना अवधीरणीयाः । तथाहि—

१ णौ कर्मणो णौ कर्तृत्वे मामूदित्येवमर्थादिति भावः । (र. ना.) २ संभव इत्यत आहेति पाठः साधुः । (र. ना.) ३ अकर्मकाणां कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यादिति वचनार्थः । (र. ना.) ४ 'वद्भावमाप्ति' । ५ 'पदम्' । ६ 'आत्मनेपदं' । ७ तत्रत्यभाष्यफलितमिदम् । ८ 'यन्ते' इत्यात्मनेपदपाठप्रतीकं उद्द्योते ।

**विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।**
**क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥'**

इति । विशेषदर्शनेन शब्दार्थानुसारेण वा तात्स्थ्यं कथ्यते क्रियायाः । एतच्च कारणद्वयमारोहणस्य कर्तृस्थतां प्रतिपादयति न कर्मस्थताम् । तथा हि—हस्तिनमारोहति वृषमारोहति पर्वतमारोहतीत्यादौ कर्मभेदेपि नारोहणस्य रूपभेदः प्रतीयते । न चैतेषु प्रयोगेषु क्रियाकृतः कर्मणि कश्चिद्विशेषो दृश्यते ॥ धातुना च कर्तृगतैव क्रिया प्रतिपाद्यते, न कर्मगता । केवलं कर्मणः कारकत्वादवश्यं क्रियया भाव्यमिति क्रियानुमीयते । सर्वाणि हि कारकाणि स्वं स्वं व्यापारमनुतिष्ठन्ति प्रधानक्रियां संपादयन्ति । बहुवक्तव्यश्चायमर्थः किंचित्तु प्रकृतोपयोगादुक्तमिति प्रकृतमनुसरामः ॥ **दर्शयते भृत्यान् राजेति ॥** ननु कर्मान्तरसद्भावादत्रात्मनेपदेन न भाव्यम् । उच्यते—अस्मादेवोदाहरणाद्भाष्यकारस्यायमभिप्राय ऊह्यते—अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावे आत्मनेपदं न भवति यथा स्थलमारोहयति मनुष्यानिति । इह त्वण्यन्तावस्थायां कर्तॄणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदम् । एवं च स्मरयत्येनं वनगुल्मः स्वयमेवेति कोकिलस्य कर्मत्वेपि प्रत्युदाहरणं युज्यते ॥

**( उद्योतः ) तज्ज्ञापयतीति ।** प्रतिषेधप्रतियोगिसमर्पकं सूत्रं बोधयतीत्यर्थः ॥ **एवंजातीयकानामित्यस्य** कर्तृस्थभावकानामित्यर्थे पश्यति राजा स्वयमेवेत्यत्रापि स्यादत आह—**येषामण्यन्तानामिति ॥ कर्तृस्थभावकक्रियत्वेपीति ।** अपिना सकर्मकत्वेपीत्यर्थः ॥ अत एव भाष्ये **एवंजातीयकानामिति** चरितार्थमन्यथा भवत्येषाविलेव वदेत् । साजात्यं च कर्मवद्भावाप्राप्तियोग्यत्वेनेति बोध्यम् ॥ तदाह—**एवं चेति ।** स्वार्थत्वे संभवति विध्यन्तरशेषत्वकल्पनाऽयुक्तेति भावः ॥ **प्रदर्शयन्त** इति । भागवृत्तिकाराः ॥ **न्यायम् । विशेषदर्शनं यत्रेति** वक्ष्यमाणम् ॥ **भाष्यम् यद्धितुपरमितिसूत्रस्थम् ॥** तमेव न्यायमाह—**विशेषेति । यत्र** कर्मभेदेन क्रियाजन्यफले **विशेषदर्शनं,** रूपभेददर्शनं **तत्र कर्मस्था,** यथा पचेरोदनरोटिकादौ, अन्यत्र कर्तृस्थेत्यर्थः ॥ यद्वा क्रियाकृतविशेषस्य यत्र कर्तरि प्रत्यक्षेणावधारणं तत्र **कर्तृस्था,** यत्र कर्मणि तत्र **कर्मस्थे**त्यर्थः । इदं केषांचिन्मते ॥ अन्ये त्वेवं सति क्रियाजन्यश्रमादिकृतवैलक्षण्यं प्रायेण सर्वत्र कर्तर्यस्तीति पचादेरपि कर्तृस्थभावकतापत्तिः । तस्माद्यद्धातुवाच्या फलांशरूपा क्रिया कर्तृगतापि संबन्धविशेषेण शब्देन बुध्यते स **कर्तृस्थक्रियः ।** यद्धातुवाच्यः सोंशः कर्मस्थ एव न कथमपि कर्तृस्थः स **कर्मस्थक्रियो** यथा पच्यदादाविति वदन्ति ॥ तदाह—**अन्येषामिति ॥** नन्वत्र पक्षे दृशेः कर्मस्थक्रियत्वापत्तिः, विषयत्वापत्तिरूपस्यावरणभङ्गरूपस्य वा फलस्य कर्मण्येव सत्त्वादिति चेत् ॥ सत्यम्—ज्ञानानुकूलव्यापार एव तदर्थ इत्याशयाद् ॥ **विशेषदर्शनमित्यस्य** दर्शितायव्याख्यारीत्याह—**कर्मभेदेपीति । नारोहणस्य** । न तज्जन्यफलस्य ॥ द्वितीयव्याख्यायामाह—**न चैतेष्विति ।** एवं च निर्वर्त्यविकार्यकर्मणि निर्वृत्तिविकारलक्षणः कर्मणि विशेषः । प्राप्ये तु न,

**क्रियाकृतविशेषाणां सिद्धिर्यत्र न लक्ष्यते ।**
**दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥**

इति तल्लक्षणादिति भावः ॥ अन्येषां मतेपि कर्मस्थक्रियात्वं निराकरोति—**धातुना चेति ॥ कर्तृगतैवेत्यस्य** कर्तृगापीत्यर्थः ॥ **न कर्मगतेत्यस्य** न कर्मगतैवेत्यर्थः ॥ ननु न्यग्भवनं विनोपरिगमनमसंभवीत्यत उक्तम्—**केवलमित्यादि ।** अत एव हरिणापि—

**'न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते'**

इत्येवोक्तं, न तु रुहिणा प्रतिपाद्यत इति ॥ [ नन्वेवं सति धात्वर्थतावच्छेदकफलाश्रयत्वाभावाद्धस्तिनः कर्मत्वानापत्तिरत आह—**बहु वक्तव्य इति ।** अयं भावः—न्यग्भवनानुकूलव्यापारस्य रुह्यर्थत्वे तदनुकूलतयाऽङ्कुशेन गजं ताडयत्यप्यारोहतीतिप्रयोगापत्तिः । उपरिगमनमपि धात्वर्थश्चेत् तदेवास्तु तावतैव हस्तिनः कर्मत्वोपपत्तिः, किं न्यग्भवनेनेति । उपरिगमनस्य संबन्धविशेषेण कर्तर्यपि सत्त्वाच्च कर्मस्थक्रियत्वमिति भावः ॥ ] **नन्विति ।** उपक्रमस्थकर्मान्तरनिवृत्तिपरवाक्येनाकर्मकाणामेवैतदुदाहरणत्वावगतेरिति भावः ॥ **अस्मादेवोदाहरणादिति । एवंजातीयकानामित्युक्तिपराच्च** यस्माण्णेः प्राक्कर्म कर्ता चेति भाष्याच्चेत्यपि बोध्यम् । **प्राक्कर्मकर्ता चे**त्यनेन प्राक्स्थितकर्मकर्त्रोरेतदात्मनेपदोपयोगित्वं बोध्यते । तच्च कर्तृकर्मातिरिक्तकर्माभावबोधने एवेत्याहुः ॥ **कर्तृकर्मणी** इति ॥ **कर्तरि** कर्मत्वतः कर्तृग्रहणमनुवर्त्य प्रथमया विपरिणमय्य यच्च यश्च यदित्येकशेषेणायमर्थो लब्धः ॥ **प्रत्युदाहरणं युज्यते इति ।** सिद्धान्ते इति शेषः । स्थलमारोहयतीत्यत्रापि स्थलस्य कर्तृकर्मातिरिक्तकर्मणः सत्त्वात् ॥

**( ९५७ आक्षेपवार्तिकम् ॥ ८ ॥ )**

## ॥ * ॥ आत्मनः कर्मत्वे प्रतिषेधः ॥ * ॥

**( भाष्यम् ) आत्मनः कर्मत्वे प्रतिषेधो वक्तव्यः । 'हन्त्यात्मानम् घातयत्यात्मा' इति ।**

**( प्रदीपः ) आत्मनः कर्मत्वे इति ।** यदैकमेव वस्तु बुद्ध्या विभज्य कर्मत्वेन कर्तृत्वेन च विवक्ष्यते तदा प्रतिषेध इत्यर्थः ।

१ 'क्रियायाः कथ्यते' । २ इदं ग्रन्थान्तम् । ( र. ना. ) ३ प्रतिषेधस्य प्रतियोगि यदात्मनेपदं तद्विधायकं सूत्रं बोधयतीत्यर्थः । ( र.ना.) ४ विधित्वे संभवतीति फलितार्थः । ( र.ना. ) ५ नियमत्वेनेति शेषः' । ( र. ना. ) ६ शब्देन बुध्यते इति संबध्यते । ( र. ना. ) ७ Bengal Asiatic Society मुद्रितपुस्तकशोधकेन तु 'यदादौ' इति पाठः शोधितः । तस्यार्थं स एव प्रष्टव्यः ॥ क्वचित्तु 'पचिनदादौ' इति पाठः शोधितः ॥ 'पच्यदादौ' इति पाठे अदधातुरपि भक्षणाभक्षणकृतविशेषं कर्मणि प्रदर्शयतीति कर्मस्थक्रियो भवेत् ।

८ अयं कोष्टकान्तर्गतः पाठो यद्यपि Bangal Asiatic Society मुद्रितपुस्तकेपि "धातुना चेति" इति प्रतीकानन्तरमेव समुपलभ्यते तथापि तत्र लेखकप्रमादपतितत्वेन योग्यस्थाने स्थापितः ।

९ 'आरोहन्ति हस्तिनं मनुष्याः,
आरोहयति हस्ती स्थलं मनुष्यान्'
इति 'यद्धितुपरं छन्दसि' इति सूत्रभाष्योक्त इति शेषः ।

( उद्द्योतः ) भाष्ये—आत्मनः कर्मत्वे प्रतिषेध इति । अण्यन्ते कर्मण आत्मनो ण्यन्ते कर्तृत्वेनाण्यन्तावस्थास्थकर्तृकर्मातिरिक्तकर्माभावेन चात्मनेपदस्यैतत्प्राप्तस्य प्रतिषेधो वक्तव्य इत्यर्थः । भाष्योदाहरणे आत्मानमित्युभयान्वयि ।

( तदस्याक्षेपभाष्यम् )

स तर्हि वक्तव्यः ।

( ९५८ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥*॥ न वा ण्यन्तेऽन्यस्य कर्तृत्वात् ॥*॥

( भाष्यम् ) न वा वक्तव्यः । किं कारणम् ? ण्यन्तेऽन्यस्य कर्तृत्वात् । अन्यदत्राण्यन्ते कर्म अन्यो ण्यन्तस्य कर्ता ॥ कथम् ? । द्वावात्मानौ । अन्तरात्मा शरीरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवतीति ॥ णेरणौ ॥ ६७ ॥

( प्रदीपः ) नवेति । वस्तुत एवात्र आत्मभेदो न त्वेकस्यैव कर्मत्वं कर्तृत्वं चेत्यर्थः ॥ अन्तरात्मेति । सांख्यपक्षेऽन्तःकरणमन्तरात्मा, तस्यैव कर्तृत्वसंभवात्पुरुषस्याकर्तृत्वात् । नैयायिकादीनां तु मते पुरुषस्य कर्तृत्वात्स एवान्तरात्मा विवक्षितः ॥ शरीरात्मा सुखदुःखे इति । शरीरस्याचेतनत्वात्सुखदुःखहेतुभ्यां शरीरं संबध्यत इति व्याख्येयम् ॥ ६७ ॥

( उद्द्योतः ) वस्तुत एवेति । अयं भावः—शरीरात्मा कर्म । अहं काण इत्यादिव्यवहारेण शरीरेऽपि लोकानामात्मत्वप्रत्ययाच्छरीरात्मेति न विरुद्धम् । अन्तरात्मा कर्ता शरीरात्मनि कर्तृत्वस्य लौकिकैरप्यनभ्युपगमादिति [ भावः ] ॥ नन्वन्तरात्मा पुरुषः सोप्यकर्तैव सांख्यादिमतेऽत आह—सांख्येति । तस्यैवेति । तन्मते पुरुषस्य पुष्करपलाशवन्निर्लेपत्वेन कर्तृत्वाद्यनाश्रयत्वादिति भावः ॥ पुरुषस्य । जीवस्य ॥ भाष्ये आत्मद्वयसत्त्वे मानमाह—अन्तरात्मेत्यादिना । तत्कर्मेति । धर्माधर्मरूपं यत्पूर्वसञ्चितं कर्म तत्फलं पादादिसौष्ठवाद्यनुभवतीतिलौकिकव्यवहारात् । पूर्वकृतं कर्म मामाधिरूपेण बाधते इति व्यवहाराच्चेति भावः ॥ शरीरात्मनः कर्म चेष्टादिरूपं सुखदुःखजनकम् । एकस्यैवात्मनः कक्षान्तरे कर्तृत्वं त्वनभिधानान्नेति सिद्धान्ताशयः ॥६७॥

( १५७ आत्मनेपदनियमसूत्रम् ॥ १ ।३ ।२। आ. २८ सू. )

## २१९ स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ १।३।७२ ॥

( प्रदीपः ) स्वरितञितः ॥७२॥ इदमात्मनेपदं संविधानवृत्तिभ्यो धातुभ्यो भवतीति केचिद्याचक्षते । पचते पाचयतीत्यर्थः । यजते याजयतीत्यर्थः । अनेकार्थत्वाद्धातूनां प्रकृतिरेव यदा संविधाने वर्तते तदा तस्य द्योतकमात्मनेपदं भवति । यदा तु प्रकृत्यानभिहितं संविधानं तदा तदभिधानाय णिजुत्पद्यते पाचयतीति । यदा णिचश्चेति ण्यन्तादात्मनेपदं भवति तदा द्वितीये संविधाने ण्यन्तस्य वृत्तिः परिकल्पनीया, यथा राजा पाचयते इति । कर्त्रभिप्राये क्रियाफल इत्यनेन संविधानलक्षण एव क्रियाविशेष उपलक्ष्यते । क्रीणीष्व वैपते धत्ते चिनुत इति च शिष्टप्रयोगेषु ण्यर्थोऽवगम्यते । स्वरितञित एव संविधाने शब्दशक्तिस्वाभाव्याद्वर्तन्ते नान्ये धातव इति स्वरितञिद्ग्रहणं भाष्ये प्रत्याख्यातम् ॥ अन्ये त्वाहुः—स्वार्थं यः क्रियामारभते तत्रात्मनेपदं परार्थारम्भे तु परस्मैपदम् । सा च स्वार्थपरार्थता विवक्षानिमित्ता लौकिके प्रयोगे स्वरितञिद्विषयैव, न यात्यादिविषयेत्यत्रापि पक्षे स्वरितञिद्ग्रहणस्य प्रत्याख्यानम् ॥ एवं पञ्चभिर्हलैः कृषतीति विभाषोपपदेन प्रतीयमान इति पक्षे आत्मनेपदाभावः । स्वामिदासौ पचत इति क्रियामात्रविवक्षाया परस्मैपदम् । यदा तु स्वामिगतो धर्मो दास आरोप्यते तदा स्वामिदासौ पचेते इति आत्मनेपदं भवत्येव ॥

( उद्द्योतः ) स्वरितञितः ॥ ७२ ॥ ननु राजा प्रयाति सेना प्रयातीत्यादौ क्रियाफलस्य जयस्य कर्तृगामित्वतदभावयोर्दर्शनेन यात्यादिव्यावृत्तये स्वरितञित इत्यस्यावश्यकेन भाष्यमनुपपन्नमत आह—इदमिति । अत्र केचित्—क्रिया कृत्स्नधात्वर्थस्तत्फलके कर्तुः प्रयोजककर्तुरभिप्रायेऽभिप्रायमूलके प्रयोजककर्तृव्यापारे आत्मनेपदमित्यर्थादिति भावः ॥ संविधानं कृत्स्नधात्वर्थप्रवृत्त्यनुकूलः प्रवर्तनाख्यो व्यापारः । यजेतेत्यादौ च ऋत्विक्प्रवृत्त्यनुकूलो यजमानव्यापार एव धात्वर्थः । सर्वावयवकक्रियाप्रवृत्त्यनुकूलव्यापार एव संविधानशब्दवाच्यः । तेन यजेत पशुकाम इत्यादौ यजनान्तर्गतस्तोत्रशंसनरूपहोतृव्यापारप्रयोजकव्यापारकर्तुरध्वर्योरपि पशुना संबन्धः स्यादित्यपास्तम् । तद्व्यापारस्य यजमानव्यापारवद् यावद्यज्यर्थप्रवृत्त्यनुकूलत्वाभावेन संविधानत्वाभावादित्याहुः ॥ परे तु संविधानं सामग्रीसंघटनरूपमित्याहुः ॥ ननु विक्लित्त्याद्यनुकूलव्यापार एव पचत्याद्यर्थो न तु तन्निमित्तं संविधानमपीत्यत आह—अनेकार्थत्वादिति ॥ तस्य द्योतकमिति । अनेन तस्य विशेषणत्वं सूचयति । संविधानविषय एककर्तृकः पाक इत्यर्थः ॥ परे त्वनेकार्थस्य धातोरत्रायमेवार्थ इति बोधनमेव द्योतकत्वं, तेन विशेष्यत्वेपि न क्षतिरित्याहुः ॥ तदाह—यदा त्विति ॥ हेतुमतीति प्रत्ययार्थनिर्देश इत्येव सिद्धान्तः ॥ अत एव तदाश्रयस्यैव तत्र कर्तृत्वम् । तदाह—तदभिधानायेति । किं च यात्यादीनां संविधाने वृत्त्यभाववादिनां तत्र णिजनापत्त्या णिज्विधायके वाचकतापक्ष एवावश्यक इत्याशयः ॥ नन्वेवं ण्यन्तादात्मनेपदं न स्याद् णिचा संविधानस्य बोधितत्वादत आह—यदेति । तस्य, ण्यन्तस्य ॥ नन्वयमर्थः सूत्रानारूढोऽत आह—कर्त्रभिप्राये इत्यादि । तदुक्तम्—

१ 'भवतीति' । २ 'पचते' 'पचसे' । ३ सर्वावयवकत्वं क्रियायां विशेषणम् । ( र. ना. ) ४ न तु प्रकृत्यर्थ इति भावः । ( र. ना. )

**कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम्।**
**तथाभूता क्रिया सा हि तत्कर्ता फलभाग्यतः'**
इति ॥ क्रियाभेदः संविधानलक्षणः ॥ तत्कर्ता संविधानकर्ता॥
**"केषां चित्कर्त्रभिप्राये णिचा सह विकल्पते।**
**आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा ॥"**
इति च ॥ केषांचिद्धातूनां स्वरितञितां, केषांचिद्दादिनामिति वा ॥ एवमन्येषामित्यपि बोध्यम् ॥ विकल्पाङ्गीकारे शिष्टप्रयोगान् प्रमाणत्वेन दर्शयति—**क्रीणीष्वेति** ॥ वपत इति पाठः ॥ अत्र पक्षे प्रत्याख्यानभाष्यं योजयति—**स्वरितञित एवेति** ॥ नन्वयं पक्षो न भाष्यसंमतः, प्रत्याख्यानभाष्ये **सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति [ तस्मादुभयवद्भ्य आत्मनेपदम् ]न चैतेषामुभयमस्तीत्युक्तेः**। तत्र सर्वेषां कर्त्रभिप्रायं क्रियाफलमस्तीत्युपक्रमादुभयाभावोऽकर्त्रभिप्रायत्वाभावप्रयुक्तो लभ्यते। असंविधाने एषां वृत्तिर्नास्तीति तु वक्तुमशक्यं, देवदत्तो गच्छतीत्याद्यनापत्तेः। तस्मादुत्तरव्याख्यैव युक्ता। तत्र हि यात्यादौ तत्फलस्य सर्वदा कर्तृगामित्वमेव विवक्षितम्, न तु परगामित्वमित्यस्य सुवचत्वात् ॥ प्रतीयते च तथैव यात्यादौ। एवं च **न चैषां कर्त्रभिप्रायं** चेत्यादिप्रतीकस्थकैयटोऽपि चिन्त्य एव। चिनुते इत्यादिप्रयोगाश्चान्तर्भावितण्यर्थतयोपपाद्याः। प्रकरणादिकं च तात्पर्यग्राहकम्। कदाचित्परस्मैपदेऽपि तत्प्रतीत्या तस्यावश्यकत्वाच्च। न च सेना प्रयातीत्यादौ यात्यादीनामपि पराभिप्रेतफलत्वमस्त्येवेति वाच्यम्। भाष्ये च श्रवणेन कर्त्रभिप्रायमेवाकर्त्रभिप्रायमेव च क्रियाफलमस्तीत्यर्थात्। अत्र जयादिफलमुभयाभिप्रेतमिति न तथेति भावादित्यरुचेराह—**अन्ये त्वाहुरिति। स्वार्थं य इति।** यः स्वार्थं क्रियामारभते तत्र तद्विषये प्रयोगे इत्यर्थः। सूत्रे कर्तृगामित्वं कर्तृरुपकारकत्वम्, न तु संयोगः समवायो वा। **चित्रया यजेत पशुकाम** इत्यादौ तदभावात्। एवं च फलद्वारा क्रियैव कर्त्रर्थेति फलितम्। अत्र पक्षे क्रियाफलं श्रुत्या लोकतो वा यदुद्देशेन क्रियाप्रवृत्तिरवगता तद्, यथा पच्यादौ भोजनादि लोकतोऽवगतम्, यज्यादौ च स्वर्गादि श्रुत्याऽवगतम्, न दक्षिणादिरूपमिति बोध्यम्॥ **परार्थेति।** यात्यादिषु तु परार्थत्वविवक्षैव नास्तीत्यतो न दोषः। स्वार्थत्वपरार्थत्वोभयविवक्षावतां धातूनां स्वार्थत्वविवक्षायां तङानाविति सूत्रार्थः। उभयं च स्वरितञित्स्वेवेति न दोषः। विवक्षानिमित्ता स्वार्थपरार्थतेत्यन्वयः। विवक्षेत्यनेन **'कमलवनोद्घाटनं कुर्वते ये'** इति सिद्धम्। अत एव स्वामिदासौ पचत इत्यत्र क्रियामात्रविवक्षायां परस्मैपदमिति वक्ष्यते कैयटेन। तेन चैतस्य शाब्दबोधे भानमिति लभ्यते। कर्तृगामित्वविवक्षाभावमात्रं परस्मैपदनिमित्तमिति च। आत्मनेपदादिसमभिव्याहृतधातोः स्वरितञितः कर्तृगतफलजनकक्रियादौ लक्षणेति बोध्यम्॥

केचित्तु 'नेदं शाब्दबोधविषयः, अपि तु पश्चात्तनमानसबोधविषयस्तथैवानुभवात्। किमर्था क्रियेति विचारे क्वचित् परार्थफलकत्वम् क्वचित् स्वार्थफलकत्वं मनसा बुध्यते। एवं चैषु परार्थत्वमेव परस्मैपदनिमित्तं, कोटिद्वयातिरेकेण तृतीयकोटेरभावात्। अत एव भाष्येऽकर्त्रभिप्रायमित्युक्तम्, न तु कर्त्रनभिप्रायमिति। स्वामिदासौ पचत इति तु दासधर्मस्य स्वामिन्यारोपात्साध्यम्। स्वामिगतस्य धर्मस्य दासे आरोपेणात्मनेपदवत्। कर्त्रभिप्रेतत्वादिकं चारोपितानारोपितसाधारणं मानसबोधविषयस्तङादिहेतुः॥ अत एव **पदार्थारम्भे तु परस्मैपदमित्युपक्रमे** कैयटेनोक्तम्। वस्तुतः **कर्त्रभिप्राये क्रियाफले** इत्यनेन संविधानमुपलक्ष्यते। तद्वाचकाद्धातोरात्मनेपदं, विक्लित्त्यनुकूलसाधनविनियोगार्थत्वे तु परस्मैपदम् ॥ एतच्च हरिग्रन्थे स्पष्टमिति मञ्जूषायां निरूपितम्॥ भाष्यस्याप्यत्रैव तात्पर्यमित्याहुः॥

नन्वेवं विवक्षाऽतिप्रसक्तेत्यत आह—**स्वरितञिद्विषयैवेति** ॥ नन्वेवं पञ्चभिर्हलैः कृषतीत्यत्र संविधानप्रतीतेरात्मनेपदं स्यादत आह—**पञ्चभिरिति**। पञ्चभिर्हलैरित्युपपदगम्यत्वात्तस्येति भावः॥ ननु स्वामिदासयोर्युगपत्कर्तृत्वविवक्षायां स्वार्थवृत्तिताप्रयुक्तात्मनेपदस्य दासेनान्वयाभावात् परार्थत्वप्रयुक्तपरस्मैपदस्य स्वामिनाऽनन्वयादप्राप्त्येदृश्ये विषये पचेत्तिङन्तस्य प्रयोग एव न स्यादत आह—**स्वामिदासाविति**। **क्रियामात्रेति**। वस्तुत उपपत्त्यन्तरमत्रोक्तम्॥

**( स्वरितञिद्ग्रहणप्रत्याख्यानाधिकरणम् )**
**( आक्षेपभाष्यम् )**

## स्वरितञित इति किमर्थम्?।

**( समाधानभाष्यम् )**

## याति वाति द्राति प्साति ॥

**( प्रत्याख्यानभाष्यम् )**

## स्वरितञित इति शक्यमकर्तुम् ॥

**( आक्षेपभाष्यम् )**

## इह कस्मान्न भवति याति वाति द्राति प्सातीति।

**( समाधानभाष्यम् )**

**'कर्त्रभिप्राये क्रियाफले' इत्युच्यते। सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति। त एवं विज्ञास्यामः येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य[11] आत्मनेपदं भवतीति। न चैषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति। तथाजातीयकाः खल्वाचार्येण स्वरितञितः पठिताः ये उभयवन्तः[12]—येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति ॥**

( **प्रदीपः** ) **सर्वेषां चेति।** सर्वत्र संविधानस्य संभवात्सर्वत्र च स्वार्थानुष्ठानसंभवादिति भावः॥ **येषामिति।** संभवे व्यभिचारे च सति प्रकारान्तरव्यवच्छेदेन विशिष्टे[13] कार्य-

१ कर्तृगतेत्यर्थः। ( र. ना. ) २ णिचासह आत्मनेपदस्य विकल्पमुपपादयति—यथेति। अयं भावः—येषां मते संविधानार्था प्रकृतिस्तेषां मते तद्द्योतकमात्मनेपदं, येषां तु न तदर्था प्रकृतिस्तेषां तद्वाचको णिजिति। ( र. ना. ) ३ "त एवं विज्ञास्यामः—येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य आत्मनेपदं भवतीति" इति भाष्यफलितोयं कोष्ठकान्तर्गतपाठः। ४ कालभेदेन उभयविवक्षा चापेक्षिता इति भावः। ( र. ना. ) ५ 'न चैतेषां'। ६ अन्तर्भावितण्यर्थत्वस्येत्यर्थः। ( र. ना. ) ७ कर्तृगामित्वस्येत्यर्थः। ( र. ना. ) ८ इदं, कर्तृगामित्वमित्यर्थः। ( र. ना.) ९ परार्थत्वस्य परस्मैपदनिमित्तत्वादेवेत्यर्थः। ( र. ना. ) १० विक्लित्त्यनुकूलानि यानि साधनानि तेषां विनियोगः प्रवर्तना तदर्थत्वे इत्यर्थः। ( र. ना. ) ११ 'नचैतेषां' १२ अस्यैव व्याख्या, येषां कर्त्रभिप्रायञ्चेत्यादि। ( र. ना. ) १३ निरुक्तोभयवतीत्यर्थः। ( र. ना. )

विधानाय विषयनिर्देशः क्रियते इति भावः ॥ **न[1] चैषामिति** । यात्यादयः संविधाने वर्तितुं न शक्नुवन्तीत्यर्थः । अथ वा स्वाभिधेयमात्रवृत्तयो यात्यादयः, नै[2]षां स्वार्थताविशिष्टक्रियावाचित्वसंभवः ॥ **तथाजातीयका इति** । प्रकारमात्रे थालं विधाय प्रकारवति जातीयर् विहितः ॥

( **उद्द्योतः** ) **सर्वत्रेति** । सर्वधातुष्वित्यर्थः ॥ भाष्ये **सर्वेषामि**त्यस्यापि सर्वधातूनामित्यर्थः ॥ **संभवे इत्यादि** । एवं च यत्र धातौ कर्त्रभिप्राय इत्यस्य व्यावर्त्यसंभवस्तत्रैवास्य प्रवृत्तिरिति भावः ॥ अकर्त्रभिप्रायमित्यस्य कर्तृभिन्नाभिप्रायमित्यर्थः । एवं च यात्यादीनां सर्वथा कर्त्रभिप्रेतमेवेति व्यावर्त्याभावात्तेषां नोदाहरणत्वमिति भावः ॥ **नैतेषां स्वार्थताविशिष्टेति** । क्रियामात्रवृत्तित्वादिति भावः । एतदुक्तरीत्या भाष्यस्वरसविरुद्धम् । अकर्त्रभिप्रेतक्रियाफलाभावस्यैव भाष्यतो लाभादिति कश्चित् ॥ प्रत्यययोः पौनरुक्त्यं परिहरति—**प्रकारमात्रे इति** । केचित्तु तथाजातिरिति बहुव्रीहेर्जात्यन्ताच्छ बन्धुनीति छमाहुः ॥

( अभिप्रग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथाभिप्रग्रहणं किमर्थम् ?** ॥

( **प्रदीपः** ) **अथेति** । कर्तारमेवि प्राप्नोतीति कर्त्रायमिति सिध्यत्येव विवक्षितोर्थ इति प्रश्नः ॥

( **उद्द्योतः** ) नन्वभिप्रपूर्वकैतेरिच्छायां रूढत्वेन कथं तदाक्षेपोऽत आह—**कर्त्रायमिति** । स तु न तत्र विवक्षित इति भावः ॥

( समाधानभाष्यम् )

**स्वरितञितः कर्त्राये क्रियाफल इतीयत्युच्यमाने यस्यैव संप्रत्येति क्रियाफलं, तत्रैव स्यात्—लून् लुनीते, पून् पुनीते । इह न स्याद्[3]—यज् यजते, वप् वपते । अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति । अभिरामुख्ये वर्तते । प्र आदिकर्मणि । तेन यं चाभिप्रैति यं चाभिप्रैष्यति यं चाभिप्रागात्तत्र सर्वत्राभिमुख्यमात्रे सिद्धं भवति ॥**

( **प्रदीपः** ) **यस्यैवेति** । केचिदाहुः—वर्तमानकालविवक्षा स्यादिति । तदयुक्तम् । कालसामान्येऽविधानात् ॥ तस्मादयमर्थः—द्विविधं यागादिफलं दृष्टमदृष्टं च । दृष्टं अन्नपुत्रवृष्टिशत्रुवधादिकम् । अदृष्टं स्वर्गादि ॥ तत्र-पूर्वं[4] प्रत्यासन्नमवश्यंभावीति प्रधानम् । इतरत्तु[5] विधुरप्रत्ययोपनिपातसम्भवे[6] व्यभिचारसंभवाद्विप्रकृष्टत्वाच्चाप्रधानमिति तस्येह ग्रहणं न स्यात् । अभिप्रग्रहणात्तु तस्यापि ग्रहणम् । आभिमुख्यं फलस्य यदा कर्ता बुद्ध्याध्यवस्यति क्रियारम्भे तदा आत्मनेपदमित्ययमर्थोऽभिप्रग्रहणे सति लभ्यते ॥ **वपत इति** । केशश्मश्रु वपत इत्यत्रैवासन्ने फले स्यात् । धान्यं वपत इत्यत्र तु विप्रकृष्टफले न स्यादित्यर्थः ॥ **यं चाभिप्रागादिति** । अयष्टेत्यादौ । एतत्तु कालनिर्देशप्रसङ्गेनोक्तं, न त्वत्राप्राप्तेर्निमित्तमस्ति ॥

( **उद्द्योतः** ) **केचिदिति** । **संप्रत्येतीति** । भाष्यस्वरसादिति तेषां भावः । यद्यप्यणुर्विधा कालसंबन्धो नास्ति तथापि कालोदासीनाः प्रत्यया आक्षिप्यमाणकालत्रयसाधारणा इत्यभिप्रायेण **कालसामान्ये** इत्युक्तम् ॥ **तस्मादिति** । संप्रतीति क्रियाफलविशेषणं, संप्रतीत्यस्य क्रियाऽव्यवहितोत्तरकालिकमित्यर्थः । तच्च दृष्टमेवेति भावः ॥ तद्ध्वनयन्वक्ष्यति—**इह न स्याद् यजत इत्यादि** ॥ **विधुरो** विरोधी ॥ **प्रत्ययः** कारणम् ॥ **तदुपनिपातः**, तत्प्राप्तिः । कीर्तनकर्मनाशाजलस्पर्शकरतोयापारगमनविस्मयादिरूपविरोधिकारणसांनिध्ये विनाशसंभवादिति भावः ॥ **विप्रकृष्टत्वं**, कालान्तरभावित्वम् ॥ **अभिप्रग्रहणात्त्विति** । तदभावेऽवश्यभावित्वं संनिहितत्वमेव च प्राधान्यं गृह्येत । सति तु तस्मिन् क्रियोद्देश्यत्वलक्षणप्राधान्यविशेषलाभ इति भावः ॥ क्रियाप्रारम्भे यदा कर्ता फलस्याभिमुखमुद्देश्यत्वं बुद्ध्या जानाति तदात्मनेपदमित्यन्वयः । एवं च तादृशोद्देश्यमेव फलशब्देन लभ्यत इति तात्पर्यम् । इदमेवाभिप्रेत्य वक्ष्यति—**अभिराभिमुख्ये प्र आदिकर्मणीति** । आद्यत्वं चाभिमुख्यगतम् । आद्यमाभिमुख्यं च कर्मप्रारम्भकालिकमेवेति दिक् ॥ ननु वपनस्य केशकर्तनरूपं फलमव्यवहितमेवेति कथमिहाप्राप्तिरत आह—**केशेति** । **धान्यं वपते इति** । बीजविकिरणार्थोऽत्र वपतिरिति भावः ॥ भाष्ये **तेन यं चेत्यादि** । अत्राभिप्रैतिः संबन्धमात्रे । एवं च येन फलेन संप्रति कर्ता संबद्धो, येन च संबद्धो भविष्यति येन च संबद्धोऽभूत्सर्वत्रात्मनेपदं सिद्धं, कर्मारम्भे तस्यैव स्वसंबन्धित्वेनोद्देशात् । तत्र भूते उपयोगोऽलाविष्ट देवदत्त इत्यादौ ॥

( कर्त्रभिप्रायेक्रियाफलइत्यस्य प्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**कर्त्रभिप्राये क्रियाफले इति किमर्थम् ?** ॥

( समाधानभाष्यम् )

**पचन्ति भक्तकराः । कुर्वन्ति कर्मकराः । यजन्ति याजकाः ॥**

( समाधानबाधकभाष्यम् )

**कर्त्रभिप्राये क्रियाफल इत्युच्यमानेपि प्राप्नोति । अत्रापि हि क्रियाफलं कर्तारमभिप्रैति । याजका यजन्ति गा लप्स्यामह इति । कर्मकराः कुर्वन्ति पादिकमहर्लप्स्यामह इति ।**

( **प्रदीपः** ) **पादिकमहरिति** । पादो भृतिरस्येत्यत्रार्थेऽसमासे निष्कादिभ्य इति ठक् ॥

( **उद्द्योतः** ) भाष्ये—**अत्रापि हीति** । न च तानि फलानि न क्रियारम्भोद्देश्यानीति वाच्यम् । ऋत्विग्व्यापारवचनयजेरारम्भो होता भविष्यामीत्यादिप्रतिवचनं, तदुद्देश्याश्च गाव एवेति भावः ॥ **पादो भृतिरस्येति** । पादभृतिसंबन्धि दिनमित्यर्थः । दिवसस्य तां भृतिं लप्स्यामह इति तात्पर्यम् ॥

( समाधानसाधकभाष्यम् )

**एवं तर्हि 'कर्त्रभिप्राये क्रियाफले' इत्युच्यते ।**

१ 'नचैतेषा' । २ 'नैतेषां' । ३ 'न स्यात्—यजते वपते' । ४ पूर्वं दृष्टम् । ५ इतरद् अदृष्टम् । ६ विरोधिकारणसमवधानसंभवे इत्यर्थः । ( र. ना. ) ७ वर्तमाने इत्यर्थः । ( र. ना. ) ८ कालत इत्यादिः । ( र. ना. ) ९ अतीतकालिकोत्पत्तिकात्वेन कार्तृगतत्वोपपत्ति संभवादिति भावः । ( र. ना.) १० 'कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद् धर्मः क्षरति कीर्तनात्' । इति स्मृतेरिति भावः । ( र. ना. ) ११ फलस्योद्देश्यत्वमभिमुखं जानातीति संबन्धः । अभिमुखमिति जानातिक्रियाविशेषणम् । ( र. ना. )

सर्वत्र च कर्तारं क्रियाफलमभिप्रैति। तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो यत्र कर्तारं क्रियाफलमभिप्रैति। न चान्तरेण यजिं यजिफलं वपिं वा वपिफलं लभन्ते। याजकाः पुनरन्तरेणापि यजिं गा लभन्ते भृतकाश्च पादिकमिति ॥ स्वरित ॥७२॥

(प्रदीपः) न चान्तरेणेति। नहि स्वर्गादिफलं यागमन्तरेण भवति, तदुद्देशेनैव यागप्रवर्तनात् ॥ याजका इति। प्रतिग्रहेणापीति भावः ॥ तथा च हरिणोक्तम्—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनमिति ७२

(उद्द्योतः) भाष्ये—सर्वत्र चेति। नहि प्रयोजनमनुद्दिश्येति न्यायादिति भावः ॥ प्रकर्षेति। अनन्यलभ्यत्वं प्रकर्षः ॥ साधीय इत्यस्य क्रियाफलेनान्वयः। अनन्यलभ्यं क्रियाफलं यत्र संविधानरूपे धात्वर्थे सति कर्तारमभिप्रैति तत्र तज्ज्ञानाविलर्थः इति भावः ॥ किं तत्साधीयः क्रियाफलं, तत्राह—न चान्तरेणेति। यद्यज्यादिफलमन्तरेण यजिक्रियां न च नैव लभन्ते तदित्यर्थः ॥ गवादिषु च तद्व्यतिरेकं दर्शयति—याजकाः पुनरित्यादिना। तद्व्याचष्टे—नहीति। यद्यपि दानादिनापि स्वर्गो भवति, तथापि स्वर्गविशेषस्य क्रियाविशेषनियतत्वादनन्यलभ्यत्वमिति भावः ॥ तदुद्देशेन। विशेषोद्देशेन। एवं च क्रियाफलशब्देन तदेव ग्राह्यमिति भावः। कारिकायां यत्सिद्ध्यर्थं पचादय एवारभ्यन्त इत्यन्वयः। एवकाराध्याहारश्च बोध्यः ॥ ७२ ॥

(इत्यात्मनेपदप्रकरणम्)

(अथ परस्मैपदनियमप्रकरणम्)

(१५८ परस्मैपदनियमसूत्रम् ॥ १।३।२ आ. २९ सू.)

## २२५ शेषात्कर्तरि परस्मैपदम् ॥ १।३।७८ ॥

(कर्मकर्तरिप्रतिषेधाधिकरणम्)

(९५९ आक्षेपवार्तिकम् ॥ १ ॥)

### ॥ * ॥ शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधः ॥ * ॥

(भाष्यम्) शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधो वक्तव्यः। भिद्यते कुसूलः स्वयमेव, छिद्यते रज्जुः स्वयमेवेति ॥

(प्रदीपः) शेषात्कर्तरि ॥७८॥ भिद्यते कुसूल इति। कुसूलस्य कर्मशास्त्रातिदेशेपि स्वाश्रयं कर्तृत्वमनिवृत्तमिति परत्वात्परस्मैपदं प्राप्नोति। सप्तम्यन्तेन तु शेषशब्देन कर्तरि विशेष्यमाणे कर्मकर्तुः कर्मवद्भावेन कर्मशास्त्रातिदेशादात्मनेपदविधावुपयोगादशेषत्वात्परस्मैपदाभावः ॥

(उद्द्योतः) शेषात्कर्तरि ॥ ७८ ॥ भाष्ये—अर्थे कर्मकर्तृरूपे ॥ प्रतिषेध इति। परस्मैपदस्येति शेषः ॥ कार्यातिदेशे कर्मवच्छास्त्रस्य परत्वेनात्मनेपदं सिद्धमत्येवेत्यत आह—शास्त्रेति। वस्तुतः कार्यातिदेशेप्युपदेशदेश एव देशः। तस्य शास्त्रातिदेशानतिरेकश्चेति न दोष इति बोध्यम् ॥ नन्वेवमपि विशेषविहितेनातिदेशिकेनोपदेशस्य बाधः स्यादत आह—स्वाश्रयमिति। अचारितार्थ्यमेव हि बाधकत्वे बीजम्। अतिदेशश्च यगादिसंपादनेन चरितार्थ इति भावः ॥

(न्यासान्तरेण समाधानभाष्यम्)

एवं तर्हि शेषे इति वक्ष्यामि ॥

(उद्द्योतः) भाष्ये शेष इति। एवं च भावकर्मणोरिति नियमे उपयुक्तत्वान्नायं शेष इति भावः ॥

(९६० न्यासान्तरदूषणवार्तिकम् ॥ २ ॥)

### ॥ * ॥ सप्तम्या चेत्प्रकृतेः प्रतिषेधः ॥ * ॥

(भाष्यम्) सप्तम्या चेत्प्रकृतेः प्रतिषेधो वक्तव्यः। आस्ते शेते च्यवन्ते प्लवन्ते ॥

(प्रदीपः) सप्तम्या चेदिति। प्रत्ययनियमे प्रकृतीनामनियमादनुदात्तङिद्भ्यः परस्मैपदमपि प्राप्नोति ॥

(उद्द्योतः) ननु प्रकृतिनियमेनुदात्तङिदादिभ्यो व्यावृत्तं परस्मैपदं शेषेभ्य एवेति किं तेनेत्यत आह—प्रत्ययनियम इति।

(९६१ समाधानतात्पर्यवार्तिकम् ॥ ३ ॥)

### ॥ * ॥ सिद्धं तूभयनिर्देशात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् ॥ कथम्?। उभयनिर्देशः कर्तव्यः। शेषाच्छेष इति वक्तव्यम् ॥

(आक्षेपभाष्यम्)

कर्तृग्रहणमिदानीं किमर्थं स्यात्?।

(९६२ समाधानवार्तिकम् ॥ ४ ॥)

### ॥ * ॥ कर्तृग्रहणमनुपराद्यर्थम् ॥ * ॥

(भाष्यम्) अनुपराद्यर्थमेतत्स्यात्। इह मा भूत्—अनुक्रियते स्वयमेव, पराक्रियते स्वयमेवेति ॥

(प्रदीपः) अनुक्रियत इति। अनुपराभ्यां कृञ इत्येतदशेषार्थमारब्धम्। गन्धनादिषु कर्त्रभिप्राये क्रियाफले च परस्मैपदार्थम्। तत्रासतीह कर्तृग्रहणे कर्मकर्तर्यपि परस्मैपदप्रसङ्गः। सति तु कर्तृग्रहणे उत्तरत्र शेषग्रहणस्य कर्तृग्रहणस्य चानुवृत्तौ सत्यां शेषे कर्तरि परस्मैपदविधानात्कर्मकर्तरि न भवति ॥ ७८ ॥

(उद्द्योतः) अशेषं दर्शयति—गन्धनादिष्विति। एवं च गन्धनादौ प्राप्तमात्मनेपदं यथा बाधते तथा सति कर्तृग्रहणे कर्म-

१, २ 'शेषवचनं सप्त०'।

कर्तर्यपि तद्बाधेतेति भावः ॥ सति त्विति । इहकरणं तु स्पष्टार्थमिति भावः ॥ ७८ ॥

( आक्षेपभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्-* शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधः* इति ।

( समाधानभाष्यम् )

नैष दोषः । "कर्तरि कर्मव्यतिहारे" इत्यत्र कर्तृग्रहणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते शेषात्कर्तरि कर्तरीति । कर्तैव यः कर्ता तत्र यथा स्यात्, कर्ता चान्यश्च यः कर्ता तत्र मा भूदिति ॥ शेषात्कर्तरि ॥ ७८ ॥

( १५९ परस्मैपदनियमसूत्रम् ॥ १।३।२ आ. ३० सू० )

## २२६ अनुपराभ्यां कृञः ॥ १।३।७९ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ? ॥

( ९६३ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ परस्मैपदप्रतिषेधात्कृञादिषु विधानम् ॥ * ॥

( भाष्यम् ) परस्मैपदप्रतिषेधात्कृञादिषु परस्मैपदं विधीयते । प्रतिषिध्यते तत्र परस्मैपदम् "स्वरितञितः कर्त्रभिप्राये क्रियाफले" आत्मनेपदं भवतीति ॥

( उद्योतः ) अनुपराभ्यां ॥ ७९ ॥ भाष्ये प्रतिषिध्यते तत्र परस्मैपदमिति । स्वरितञित आत्मनेपदमिति प्राप्तस्य पुनर्विधानेनार्थादन्यन्नेत्यवगतेरिति भावः ॥ अत एव प्रतिषिध्यत इत्युक्त्वाऽग्रे कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीत्युक्तिः संगच्छते ॥

( भाष्यम् ) अस्ति प्रयोजनमेतत् । किं तर्हीति ॥

( आत्मनेपदवारणाधिकरणम् )

( ९६४ आक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तत्रात्मनेपदप्रतिषेधोऽप्रतिषिद्धत्वात् ॥ * ॥

( भाष्यम् ) तत्रात्मनेपदस्य प्रतिषेधो वक्तव्यः । किं कारणम् ? । अप्रतिषिद्धत्वात् । नह्यात्मनेपदं प्रतिषिध्यते । किं तर्हि ? । परस्मैपदमनेन विधीयते ॥

( प्रदीपः ) अनुपराभ्याम् ॥७९॥ तत्रात्मनेपदप्रतिषेध इति । अयमभिप्रायः । अशेषत्वात्कृञः पूर्वेण नियमादप्राप्तं परस्मैपदमनेन प्रतिप्रसूयते इति अनुपरापूर्वात् करोतेर्मौलेन विधिवाक्येन आत्मनेपदपरस्मैपदप्रसङ्गः ॥ विधीयत इति । नियमापाकरणद्वारेण प्रतिप्रसूयते इत्यर्थः ॥

( उद्योतः ) ननु तिबादिसूत्रेण सामान्यतः प्राप्तानां स्वरितञित इतिनियमे तदपवादतयाऽनेन परस्मैपदविधानेन कात्मनेपदमापाद्यते, कर्त्रभिप्रायादावनेन परस्मैपदविधानात् । अन्यत्र शेषादितिनियमेन व्यावर्तितत्वादत आह—अयमभिप्राय इति । तदपवादत्वापेक्षया कर्तृगामिक्रियाफलादावेव तिप्रभृतीनां प्रतिप्रसवविधौ लाघवादिति भावः ॥ प्रतिप्रसूयत इति । क्रमेण नियम इति पक्षे इयं शङ्केत्यर्थः ॥ मौलेन, सर्वेषां मूले स्थितेन तिप्रभृतीनामनेन ॥

( ९६५ समाधानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ न वा द्युतादिभ्यो वावचनात् ॥ * ॥

( भाष्यम् ) न वा एष दोषः । किं कारणम् ? । द्युतादिभ्यो वावचनात् । यदयं द्युतादिभ्यो वावचनं करोति तज्ज्ञापयत्याचार्यः—न परस्मैपदविषये आत्मनेपदं भवतीति ॥

( प्रदीपः ) नवेति । द्युद्भ्यो लुङीत्यत्रान्तरेणापि वावचनानुवृत्तिं परस्मैपदप्रतिप्रसवादुभयस्मिन्सिद्धे स्वरितत्वेन वावचनानुवृत्तिलिङ्गं परस्मैपदप्रतिप्रसवे आत्मनेपदाभावस्य ॥

( उद्योतः ) वा क्यष इत्यतो द्युद्भ्य इत्यत्र वाग्रहणानुवृत्तिः ॥

( ९६६ न्यासान्तरेणसमाधानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ आत्मनेपदनियमे वा प्रतिषेधः ॥ * ॥

( भाष्यम् ) आत्मनेपदनियमे वा प्रतिषेधो वक्तव्यः । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' आत्मनेपदं भवति कर्तरि, अनुपराभ्यां कृञो नेति ।

( प्रदीपः ) आत्मनेपदनियमे वेति । साक्षादात्मनेपदनिषेधे क्रियमाणे मूलविधेः प्रतिप्रसवाशङ्का न भवति ॥

( उद्योतः ) नन्वनेन निषेधेन नियमापाकरणेपि पुनर्मूलविधेः प्रवृत्त्याशङ्का तदवस्थैवेत्यत आह—साक्षादिति । तन्निषेधे हि शेषत्वात् शेषादिति नियमात्तन्नियमप्रसङ्ग इति भावः ॥

( तदस्याक्षेपभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

---

१ इतः प्राक् 'किमिदं कर्तरि कर्तरीति' इत्ययं पाठोपि कचित्पुस्तकेषु दृश्यते । २ कृञोऽशेषत्वात्पूर्वेण स्वरित ञित इति शास्त्रेण नियमादित्यादियोजना । ( र. ना. ) ३ स्वरितञित इतीत्यादिः । ( र. ना. ) ४ नत्वेकवाक्यतया युगपदिति भावः । ( र. ना. )

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तं * तत्रात्मनेपदप्रतिषेधोऽप्रतिषिद्धत्वाद्* इति ॥**

( समाधानभाष्यम् )

**परिहृतमेतत् *न वा द्युतादिभ्यो वावचनात्* इति ॥ अथ वा इदं तावदयं प्रष्टव्यः—स्वरितञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति परस्मैपदं कस्मान्न भवति। आत्मनेपदेन बाध्यते। यथैव तर्ह्यात्मनेपदेन परस्मैपदं बाध्यते, एवं परस्मैपदेनाप्यात्मनेपदं बाधिष्यते ॥ अनुपराभ्याम् ॥७९॥**

(प्रदीपः) **यथैव तर्हीति।** आत्मनेपदापवादः परस्मैपदं विधीयते, न तु प्रतिप्रसवद्वारेणानियमः प्रतिपाद्यते इति भावः ॥ ७९ ॥

(उद्द्योतः) **विधीयत इति।** न क्रमेण नियमः, किं तु सर्वं प्रकरणं युगपदेव नियामकमिति भावः। अनेन नियमानां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रसंकोचकता चेति ध्वनितम्। भाष्येप्यात्मनेपदेन परस्मैपदं बाध्यत इत्युक्त्या विधिमुखप्रवृत्तिः सूचिता, निषेधमुखेन प्रवृत्तौ हि तन्निषेधस्य शाब्दत्वाद् बाध्यते इत्युक्तिरसङ्गतैव स्यात् ॥ ७९ ॥

(१६० परस्मैपदनियमसूत्रम् । १ । ३ । २ आ. ३१ सू.)

## २३३ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥

( आक्षेपभाष्यम् )

**बुधादिषु येऽकर्मकास्तेषां ग्रहणं किमर्थम्? ॥**

( समाधानभाष्यम् )

**बुधादिषु येऽकर्मकास्तेषां ग्रहणं सकर्मकार्थमचित्तवत्कर्तृकार्थं वा ॥ बुधयुधनश ॥ ८६ ॥**

( प्रदीपः ) **बुधयुधनशजनेङ् ॥ ८६ ॥ सकर्मकार्थमिति।** अकर्मका अपि धातवः सोपसर्गा अनुपसर्गा वा अर्थान्तरवृत्तित्वे सति सकर्मका भवन्ति। अन्तर्भावितण्यर्था वा प्रयोज्यकर्मणा ॥ **अचित्तवत्कर्तृकार्थं वेति।** वाशब्दश्चार्थे ॥ तेनाकर्मकाणामचित्तवत्कर्तृकार्थं ग्रहणम्। चित्तवत्कर्तृकाणां तु सकर्मकार्थमित्यर्थः ॥ ८६ ॥

( उद्द्योतः ) **बुधयुध ॥ ८६ ॥** उत्तरसूत्रेण सिद्धिमाशङ्क्य परिहरति—**भाष्ये बुधादिष्विति।** नन्वकर्मकाणां ग्रहणं सकर्मकार्थमिति विरुद्धमत आह—**अकर्मका अपीति।** प्रकारत्रयेण तेषां सकर्मकत्वमिति भावः। नन्वकर्मकाणां सकर्मकतादशायामिवाप्राप्तत्वाविशेषाद् अचित्तवत्कर्तृकतायामपि विध्यर्थत्वसंभवाद्वाकारोऽनुपपन्न इत्यत आह—**चार्थे इति।** अचित्तवत्कर्तृकार्थमिति अचित्तवत्कर्तृकाकर्मकार्थमित्यर्थः ॥ ८६ ॥

(१६१ परस्मैपदनियमसूत्रम् ॥ १ । ३ । २ आ. ३२ सू.)

## २३५ अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥

( चुरादिभ्योऽपि परस्मैपदसाधनाधिकरणम् )

( १६७ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अणावकर्मकादिति चुरादिणिचो ण्यन्तात्परस्मैपदवचनम् ॥ * ॥**

(भाष्यम्) **अणावकर्मकादिति चुरादिणिचो ण्यन्तात्परस्मैपदं वक्तव्यम्। इहापि यथा स्यात् चेतयमानं प्रयोजयति चेतयति ॥**

( प्रदीपः ) **अणावकर्मकात् ॥ ८८ ॥ अणाविति।** णिमात्रस्य पर्युदासात् चुरादिण्यन्तो योऽकर्मकश्चित्तवत्कर्तृकश्च तस्माद्धेतुमण्ण्यन्तादप्राप्तं परस्मैपदमित्यणौ ईति वार्तिकमारब्धम् ॥ **चुरादिणिचो ण्यन्तादिति।** चुरादिण्यन्ताद्द्वितीयहेतुमण्ण्यन्तादित्यर्थः ॥

( उद्द्योतः ) **अणाव ॥ ८८ ॥** ननु यतो णेरात्मनेपदं ततः प्रागवस्थाऽणिपदग्राह्येति न दोषोऽत आह—**णिमात्रेति।** प्रत्यासत्तिमजानानस्य शङ्केत्यर्थः। **चुरादिणिचो ण्यन्तादिति** सामानाधिकरण्ये वैयधिकरण्ये चानन्वयोऽत आह—**द्वितीयेति ॥**

( प्रत्याक्षेपभाष्यम् )

**यदि तर्ह्यत्रापीष्यते अणिग्रहणमिदानीं किमर्थं स्यात्? ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**अकर्मकग्रहणमण्यन्तं विशेषणं यथा विज्ञायेत ॥**

( प्रदीपः ) **अकर्मकग्रहणमिति।** अणावित्यस्य यद्यपि प्रयोजनमस्ति 'आरोहयमाणं प्रयुङ्क्ते आरोहयते' इत्यत्रानेन मा भूत्परस्मैपदम्। तथापि प्रयोजनान्तरमप्यस्तीति भाष्यकारो दर्शयति ॥

( उद्द्योतः ) **आरोहयमाणमिति।** निवृत्तप्रेषणचतुर्थकक्षेयम्। ततो हेतुमण्णिच् ॥ **प्रयोजनान्तरमपीति।** वस्तुतस्तादृशप्रयोगानभिधानमिति भाष्याशय इत्यन्ये ॥

( प्रत्याक्षेपभाष्यम् )

**अथाक्रियमाणे अणिग्रहणे अकर्मकग्रहणं कस्य विशेषणं स्यात्? ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**णेरिति वर्तते। ण्यन्तविशेषणं स्यात् ॥ तत्र को**

१ अनेन नियमेन परस्मैपदं निषिध्यते इत्येव ब्रूयादिति भावः। (र. ना.)
२ सकर्मका भवन्तीत्यस्य संबन्धः। (र. ना.) ३ वादिना सूत्रकृतेति शेषः।
(र. ना.) ४ 'इत्यादि'। ५ अकर्मको योऽण्यन्तश्चित्तवत्कर्तृकस्तत्प्रकृतिकण्यन्तात्परस्मैपदं स्यादिति फलितार्थः। (र. ना.)

दोषः?। इहैव यथा स्यात्—चेतयमानं प्रयोजयति चेतयति। इह न स्यात्—आसयति, शाययतीति॥

(९६८ समाधानवार्तिकम्॥ २॥)

॥ * ॥ सिद्धं त्वतस्मिन् णाविति वचनात्॥ * ॥

(भाष्यम्) सिद्धमेतत्। कथम्। अतस्मिन् णौ यः अकर्मकस्तत्रेति वक्तव्यम्।

(प्रदीपः) सिद्धं त्वतस्मिन्निति। तच्छब्देन हेतुमण्णिजिर्दिश्यते। तस्यैव पूर्वसूत्र उपादानाच्चुरादिभ्यस्तस्यैव संभवात्। तेनायमर्थः—अहेतुमण्ण्यन्तो योऽकर्मकश्चित्तवत्कर्तृकश्च तस्माद्धेतुमण्ण्यन्तात्परस्मैपदं भवति। तेन चेतयतीत्यत्रापि[2] सिध्यति॥

(उद्द्योतः) तस्यैवेति। यद्यपि यस्माण्णेः प्रागिति वक्ष्यमाणरीत्या हेतुमण्णिरिति लभ्यं तथाप्ययं भावस्तथा सत्याध्याद्वेति विकल्पितणिन्यन्तसंभवेन ततश्चुरादिन्यन्तादपि परस्मैपदं यथा स्यादिति॥

(आक्षेपभाष्यम्)

सिद्ध्यति। सूत्रं तर्हि भिद्यते॥

(समाधानभाष्यम्)

यथान्यासमेवास्तु॥

(आक्षेपस्मारणभाष्यम्)

ननु चोक्तम् *अणावकर्मकादिति चुरादिणिचो ण्यन्तात्परस्मैपदवचनम्* इति।

(समाधानभाष्यम्)

नैष दोषः। अणाविति कस्येदं णेर्ग्रहणम्?। यस्माण्णेः प्राक्कर्म कर्ता वा विद्यते। न चैतस्माण्णेः प्राक्कर्म कर्ता वा विद्यते॥ अणावकर्मकात्॥ ८८॥

(प्रदीपः) यस्माण्णेरिति। एतच्च णेरणाविरयत्रोक्तं तदेव पुनः प्रकृतोपयोगाद्भाष्यकारेण स्मारितम्॥ ८८॥

(उद्द्योतः) उत्तरभाष्यस्य त्वयं भावः—कञ्चित्तथा अण्यन्तसंभवेपि चुरादिणिच्त्वावच्छेदेन न संभवति। हेतुमण्णिच्त्वावच्छेदेन तु संभवत्यण्यन्ततेति स एव गृह्यते इति॥ ८८॥

(१६२ परस्मैपदनियमबाधकसूत्रम्॥१।३।२ आ. ३३ सू.)

## २३६ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः॥ ८९॥

(९६९ आक्षेपवार्तिकम्॥ १॥)

॥ * ॥ पादिषु धेट उपसंख्यानम्॥ * ॥

(भाष्यम्) पादिषु धेट उपसंख्यानं कर्तव्यम्॥ धापयेते शिशुमेकं समीची॥ न पादम्या०॥ ८९॥

(प्रदीपः) न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः॥ ८९॥ समीची इति। प्रथमाद्विवचने वा छन्दसीति पूर्वसवर्णदीर्घः॥ ८९॥

(उद्द्योतः) न पाद॥ ८९॥ छन्दसीति। सुपां सुलुगिति लुकोप्युपलक्षणमिदम्॥ ८९॥

(१६३ परस्मैपदनियमसूत्रम्। १। ३। २ आ. ३४ सू.)

## २४० लुटि च क्लृपः॥ ९३॥

(आक्षेपभाष्यम्)

किमर्थश्चकारः?॥

(समाधानभाष्यम्)

स्यसनोरित्येतदनुकृष्यते॥

(उद्द्योतः) लुटि च॥ ९३॥ भाष्ये अनुकृष्यत इति। वृद्भ्यः स्यसनोरित्यनेन तु न सिद्धिस्तत्र चतुर्णामेव ग्रहणादिति भावः।

(प्रत्याख्यानभाष्यम्)

यदि तर्हि नान्तरेण चकारमनुवृत्तिर्भवति, "द्युद्भ्यो लुङि" त्यत्रापि चकारः कर्तव्यः विभाषेत्यनुकर्षणार्थः,। अथेदानीमन्तरेणापि चकारमनुवृत्तिर्भवति, इहापि नार्थश्चकारेण। एवं सर्वे चकाराः प्रत्याख्यायन्ते॥ लुटि च क्लृपः॥ ९३॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य तृतीये पादे द्वितीयमाह्निकम्॥ पादश्च तृतीयः समाप्तः॥

(प्रदीपः) लुटि च क्लृपः॥ ९३॥ स्वरितत्वादनुवृत्त्या चशब्दप्रतिपाद्यस्यार्थस्य सिद्धत्वाद्भाष्यकारः सर्वानेव चशब्दान्प्रत्याचष्टे॥ ९३॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्॥ पादश्च तृतीयः समाप्तः॥

(उद्द्योतः) भाष्यकार इति। न च चकारेण स्पष्टा प्रतिपत्तिः स्वरितत्वं तु व्याख्यानसापेक्षमिति वाच्यम्। कृतेपि चे समुच्चेतव्यविशेषप्रतिपत्तये तदपेक्षायास्तुल्यत्वादिति भावः॥ सर्वे चकारा इति। अनुवृत्तिफलका इत्यर्थः। तेनाटश्चेति चस्य पुनर्विधानार्थत्वपरभाष्येणाविरोधः॥ ९३॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य तृतीये पादे द्वितीयमाह्निकम्॥ पादश्च समाप्तस्तृतीयः॥ छ॥ शुभम्॥

१ यथेत्यधिकमसंबद्धं च भाति। (र. ना.)

२ अपिनाऽऽसयत्यादि ग्रहणम्। (र.ना)

## सूत्रसंख्याकोष्ठकम् ।

| | प्राक्तनयोगः | अस्मिन्पादे सूत्रसंख्याद्योतकयन्त्रम् भूवाक्रीडो वेःपादम्रियते प्राद्वहस्त्रयोदश | | | समग्रयोगः |
|---|---|---|---|---|---|
| | | १ माह्निके | २ याह्निके | योगः | |
| व्याख्यातसूत्राणि | १२१ | ८ | ३४ | ४२ | १६३ |
| अव्याख्यातसूत्राणि | २६ | ३ | ४८ | ५१ | ७७ |
| समुदितसूत्राणि | १४७ | ११ | ८२ | ९३ | २४० |

## वार्तिकसंख्याद्योतककोष्ठकम् ।

| प्राक्तनयोगः | अस्मिन् पादे वार्तिकसंख्या | | | समग्रयोगः |
|---|---|---|---|---|
| | १ माह्निके | २ याह्निके | योगः | |
| ८०५ | ८५ | ७९ | १६४ | ९६९ |

## प्रथमाध्यायस्य चतुर्थपादे प्रथमाह्निकम् ।

( १६४ नियमसूत्रम् ॥ १।४। १ आ. १ ॥ )

## २४१ आकडारादेका संज्ञा ॥ १।४।१ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( प्रदीपः ) आकडारादेका ॥ १ ॥ किमर्थमिति । आकडारात्परा निरवकाशा च संज्ञेष्यते । तत्रान्तरेणापि सूत्रं विप्रतिषेधे परमिति वचनात्परा भविष्यति न पूर्वा । निरवकाशापि हि सावकाशां विशेषविहितत्वादेव बाधित्वा भविष्यति कौण्डिन्ये दधिदानमिव तक्रदानमिति प्रश्नः ॥

( उद्द्योतः ) श्रीगणेशाय नमः ॥ आकडारात् ॥ १ ॥ नन्वविरुद्धानां संज्ञानां विषये विरोधमूलकविप्रतिषेधशास्त्राप्रवृत्तेरस्य कैमर्थ्यमनुपपन्नमत आह—आकडारादिति । अविरोधमजानतः शङ्केति भावः ॥ निरवकाशस्थले त्वविरोधं जानतोपि शङ्केत्याह—विशेषेति । ननु विरोधादपीत्येवकारार्थः ॥

( ९७० समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् ॥ * ॥

**( भाष्यम् ) अन्यत्र संज्ञासमावेशो भवति ॥ कान्यत्र ? । लोके व्याकरणे च । लोके तावत्—'इन्द्रः शक्रः पुरुहूतः पुरंदरः' 'कन्दुः कोष्ठः कुसूल' इति एकस्य द्रव्यस्य बह्व्यः संज्ञा भवन्ति । व्याकरणेपि कर्तव्यं हर्तव्यमित्यत्र प्रत्ययकृत्कृत्यसंज्ञानां समावेशो भवति । पाञ्चालः वैदेहः वैदर्भ इति प्रत्ययतद्धिततद्राजसंज्ञानां समावेशो भवति ॥ अन्यत्र संज्ञासमावेशादेतस्मात्कारणात् आकडारादपि संज्ञानां समावेशः प्राप्नोति । इष्यते चैकैव संज्ञा स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम् । एवमर्थमिदमुच्यते ॥**

( प्रदीपः ) अन्यत्रेति । विप्रतिषेधे परं कार्यमुच्यते । न च संज्ञानां विरोधः, युगपत्प्रवृत्तिसंभवात् ॥ न च बाध्यबाधकभावः । भिन्नफलत्वाद्विरोधाभावाच्च ॥ दधितक्रयोरभिन्नं फलमोदनसेक इति तयोर्बाध्यबाधकभावः । अष्टाश्रिर्यूपो भवति । वाजपेयस्य चतुरश्र इत्यष्टाश्रित्वचतुरश्रत्वयोस्तु विरोधात् ॥ इन्द्रः शक्र इति । यद्यप्यत्र फलभेदो नास्ति तथापि समावेशोऽस्तीति प्रतिपादनायोदाहरणोपन्यासः ॥ कर्तव्यमिति । प्रत्ययसंज्ञायाः प्रयोजनं धातोरङ्गसंज्ञा, कृत्संज्ञायाः प्रयोजनं प्रातिपदिकत्वं, कृत्यसंज्ञायास्तयोरेवेति कर्मणि विधानम् ॥

( उद्द्योतः ) न च संज्ञानामिति । इन्द्रः शक्रः कुन्दुस्न इति च संज्ञानां लोकशास्त्रयोर्युगपत्प्रवृत्तिदर्शनादिति भावः ॥ न चेति । अनवकाशत्वप्रयुक्त इत्यर्थः ॥ एकफलकत्वे सहानवस्थानलक्षणविरोधे वाऽनवकाशं बाधकं, न चैतदुभयमप्यत्रेत्याह—भिन्नफलत्वादिति । वस्तुतः समावेशदर्शनादेवाविरोधो विशेषत्वेप्यबाधकत्वमिति भाष्याशयः । कैयटोक्तमेकफलत्वं विरोधश्च व्यभिचरितौ । अत एवाचि रादेशेन नुटो बाधमाशङ्क्य न तिसृतिशापकेन समाहितं सप्तमे भाष्ये । तादृशस्थले एकफलत्वाभावः स्पष्ट एव । तक्रेण दध्नो बाधनमविरोधे आस्वादरूपफलभेदे च दृष्टमित्यलम् । कृते तु सूत्रेऽन्यत्र बलवत्त्वेन दृष्टतया व्यवस्थाकाङ्क्षायां परत्वानवकाशत्वाभ्यां सेत्याहुः ॥ यद्यपीति । एवं च दृष्टान्तो विषम इति भावः ॥ उदाहरणेति । फलभेदेपि यदि समावेशः किमु वक्तव्यं तद्भेद इति दृष्टान्ततेति भावः । नन्विन्द्रादीनामैश्वर्यशक्तिमत्त्वबहुधाह्वानपूर्दारणानि प्रवृत्तिनिमित्तानीति कथमेते संज्ञाशब्दाः, शब्दप्रवृत्तिनिमित्तको हि स इति चेन्न । सत्यपि योगे रूढिमात्रेण संज्ञाशब्दत्वमिति भगवतोऽभिप्रायात् ॥ कर्मणि विधानमिति । एवं च फलभेदादविरोधाच्च न बाध इति कैयटाशयः ॥

( काकुभाष्यम् )

**अस्ति प्रयोजनमेतत् । किं तर्हीति ।**

( सूत्रपाठनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**कथं त्वेतत्सूत्रं पठितव्यम्, किम् "आकडारादेका संज्ञा" इति, आहोस्वित् "प्राक्कडारात्परं कार्यम्" इति ? ॥**

( प्रत्याक्षेपभाष्यम् )

**कुतः पुनरयं संदेहः ? ।**

( प्रत्याक्षेपसमाधानभाष्यम् )

**उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः । केचिद् "आकडारादेका संज्ञा" इति । केचित् "प्राक्कडारात्परं कार्यम्" इति ।**

( प्रदीपः ) उभयथेति । तत्र गुणदोषविचारः कर्तव्य इत्यर्थः । तत्रैका संज्ञेत्यस्मिन्पाठे क्वचित्संज्ञासमावेशार्थो यत्नः कर्तव्यः । परं कार्यमित्यस्मिंस्तु पाठे समावेशः सिध्यति । अत्र हि पाठे अयमर्थः प्राक्कडारात्संज्ञाख्यं कार्यं परं भवतीति । संज्ञाप्रकारणात्संज्ञैवात्र सूत्रे कार्यशब्देन विवक्षिता । तत्र यस्याः संज्ञायाः परस्या पूर्वया बाधः प्राप्नोति, सा परानेन भाव्यते इति विध्यर्थं सूत्रं भवति न नियमार्थम् । एतदेव च परसंज्ञाविधानं ज्ञापकमत्र प्रकरणे संज्ञानां बाध्यबाधकभा-

---

१ 'परं कार्यमिति' । २ 'केचिच्च कृते' ।

* फलभेदो विरोधाभावश्च बाधाभावे हेतुः । ( र. ना. )

वस्य। तेन परयानवकाशया सावकाशा पूर्वा बाध्यते द्वयोश्च सावकाशयोर्विप्रतिषेधे परया पूर्वा बाध्यत इत्येतदत्र वस्तुतत्त्वम् ॥

(उद्योतः) ननूभयथा पाठनिर्णये कथं संदेहोऽत आह—गुणदोषेति। किं संभवमात्रेण द्विधा पाठोऽथास्वरसादिति विवेक्तुं तद्विचारः कार्य इति भावः॥ यत्नः। ज्ञापकाश्रयणचकारादिरूपः। यद्यपि परं कार्यमिति पाठेपि सूत्राणामन्यथा पाठः कार्यस्तथापि तत्र न वर्णगौरवं नापि प्रतिपत्तिगौरवमिति न स दोष इति भावः॥ कार्यशब्देनेति। संज्ञेत्येवं तु नोक्तमुत्तरत्रानन्वयात्। यद्यप्यन्यान्यपि कार्याण्यत्र सन्ति वचनपुरुषनियमपूर्वनिपातादयस्तथापि तेषां केनापि बाधप्रसक्त्यभावाद्बाधितप्रवृत्तये चैतत्सूत्रसत्त्वात्तल्लाभ इति भावः॥ पूर्वया अनवकाशया॥ न नियमार्थमिति। आद्यपाठे त्वेकैव संज्ञा न द्वितीयेति नियमो, विध्यर्थत्वासंभवात्। अत्र च विध्यर्थत्वसंभवेन नियमो न युक्त इति भावः॥ ननु पर्यायेण प्रवृत्त्या पूर्वस्यापि चारितार्थ्यसंभवेन संज्ञानां विरोधाभावेन चोभयोः प्रसक्तावत्रापि पाठे नियम एव स्यादत आह—एतदेव चेति। नियमेऽनुवाददोषापत्त्या वरं बाधकत्वकल्पनद्वारा विधित्वमिति भावः॥ विप्रतिषेधे इति। अस्य दृष्टबाधयेति शेषः॥

(आक्षेपभाष्यम्)

**कश्चात्र विशेषः?।**

(९७१ "एका संज्ञा" इति पाठे गौरवाक्षेपवार्तिकम्॥ २॥)

## ॥*॥ तत्रैकसंज्ञाधिकारे तद्वचनम्॥*॥

(भाष्यम्) **तत्रैकसंज्ञाधिकारे तद्वक्तव्यम्। किम्?॥ एका संज्ञा भवतीति॥**

(परंकार्यमितिन्यासेपि गौरवभाष्यम्)

**ननु च यस्यापि परंकार्यत्वं तेनापि परग्रहणं कर्तव्यम्॥**

(गौरवाभावभाष्यम्)

**परार्थं मम भविष्यति "विप्रतिषेधे च" इति॥**

(एकासंज्ञेतिन्यासेपि गौरवपरिहारभाष्यम्)

**ममापि तर्ह्येकग्रहणं परार्थं भविष्यति—"सरूपाणामेकशेष एकविभक्तौ" इति॥ संज्ञाधिकारश्चायम्। तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः। तत्रैतावद्वाच्यम्—'आकडारादेका'॥ किम्? एका संज्ञा भवतीति॥**

(प्रदीपः) **आकडारादेकेति।** संज्ञाप्रकरणादेकेति स्त्रीलिङ्गनिर्देशः संज्ञाशब्दानुच्चारणेपि न विरुद्धः। अस्माच्च सूत्रात्परं **सरूपाणामेकशेष एकविभक्ताविति** प्रकरणं कर्तव्यम्। तत्रैकेत्यस्य शब्दस्य स्वरितत्वादनुवृत्तौ लिङ्गविपरिणामेन संबन्धे सत्येकग्रहणं पुनर्न कर्तव्यं भवतीत्यर्थः॥

(उद्योतः) भाष्ये **परार्थमिति**। अन्यत्राप्यकरणार्थमित्यर्थः। परार्थं यत्त्वया कृतं तदेव मयात्र कृतं भविष्यतीत्यर्थः॥ ननु विशेष्यवाचिपदासंनिधाने नपुंसकमेव प्रयोक्तुमुचितं, संज्ञापर्यायनामादिशब्दानामपि विशेष्यत्वसंभवाचात आह—**संज्ञेति**। प्रचुरप्रसिद्धेः संज्ञाशब्द एव प्रकरणादुपतिष्ठत इत्यर्थः॥ ननु सरूपाणामित्यस्यातिक्रान्तत्वात्कथं तदर्थतास्येत्यत आह—**अस्माच्चेति**। एकसंज्ञाधिकारोत्तरमित्यर्थः॥ **लिङ्गविपरिणामेनेति**। भावसाधने शेषशब्दे विभक्तिविपरिणामेनेत्यपि बोध्यम्। बहुयोगव्यवधानाद् "यत्त्वया परार्थं कृतं तदेव ममात्र बुद्धिस्थं भविष्यती"त्यर्थकतया तत्रत्यमत्रानुवर्तते इत्येवं भाष्यं न व्याख्यातम्॥ नन्वेवमपि संज्ञेत्यधिकं कार्यमेवेत्यत आह—**संज्ञाधिकारश्चेति**॥ **किमिति** प्रश्नः॥ **एका संज्ञेत्याद्युत्तरम्**। प्रश्ने सामान्ये नपुंसकम्॥

(९७२ एकसंज्ञाधिकारे दूषणान्तरवार्तिकम्॥ ३॥)

## ॥*॥ अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः॥*॥

(भाष्यम्) **अङ्गसंज्ञया भपदसंज्ञयोः समावेशो न प्राप्नोति। सार्पिष्कः। बार्हिष्कः। याजुष्कः। धानुष्कः। बाभ्रव्यः। माण्डव्य इति। अनवकाशे भपदसंज्ञे अङ्गसंज्ञां बाधेयाताम्॥**

(प्रदीपः) **सार्पिष्कइति।** असत्यामङ्गसंज्ञायामङ्गस्योच्यमाना वृद्धिर्न स्यात्। अङ्गसंज्ञा च कर्तव्यमित्यादिषु सावकाशा यत्र पूर्वस्य भपदसंज्ञे न स्तः॥ ननु **तद्धितेष्वचामादेः किति** चेत्यङ्गस्य वृद्धिविधानसामर्थ्यात्समावेशो भविष्यति। नैतदस्ति। वचनादनङ्गस्यापि वृद्धिः स्यात्। ततश्च देवदत्तो गार्ग्य इत्यत्रापि यञि परतो देवदत्तादेः समुदायस्यापि वृद्धिः प्रसज्येत। यथा डित्यभस्याप्यनुबन्धकरणसामर्थ्यात्कुमुद्वानित्यादौ टिलोपः॥

(उद्योतः) सर्पिःशब्दादार्हीयष्ठक् तदस्य पण्यमिति वा। इसन्तत्वात्कः॥ तत्राङ्गसंज्ञाभावे किं स्यादत आह—**असत्यामिति**। **अनङ्गस्यापीति**। यद्यपीष्टानुरोधात्समावेशोपि ज्ञापयितुं शक्यस्तथापि लक्षणैकशरणानामिष्टानिष्टे दुर्ज्ञेये इति भावः॥ **देवदत्तो गार्ग्य इति**। वाक्यसंस्कारपक्षे इदम्। प्रत्ययग्रहणपरिभाषया वृद्धिवारणं शक्यमिति चिन्त्यम्॥ **कुमुद्वानिति**। झयः। सिद्धान्तस्त्वित एव ज्ञापकात्समावेश इति॥

(परंकार्यत्वेसमावेशसाधकपूर्वशेषमूलभाष्यम्)

**परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः।**

(व्याख्याभाष्यम्)

**यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः**

---

१ संज्ञासूत्राणामित्यर्थः। (र. ना.) २ प्राक्कडारात्परा संज्ञेति तु न पठितमित्यर्थः। (र. ना.) ३ अयं भावः। प्राक् कडारात् परासंज्ञेति पाठे विप्रतिषेधे परं कार्यमिति पाठ्यम्। तत्र परं कार्यमिति पाठे तु विप्रतिषेधे इत्येव पाठ्यम्, अनुवृत्त्यैवेष्टसिद्धेरिति। (र. ना.) ४ 'दृष्टो बाधो यया तादृश्या परया प्राप्त्येत्यर्थः। अन्यत्र परया प्राप्त्या पूर्वप्राप्तेर्बाधस्य दृष्टत्वेन संज्ञाविषये विरोधाभावेऽपि तथैव कल्प्यत इत्यर्थः' इत्येवं व्याख्यापि परमगुरुश्रीविभवरामशर्मणां पुस्तके। ५ परं कार्यमिति पाठ इत्यर्थः। (र. ना.) ६ प्राक् कडारात्परं कार्यमित्येवमित्यादिः। (र. ना.) ७ आकडारादेकेति पाठे इति भावः। अत एव वक्ष्यति। ("तत्रैतावद् वाच्यम्—आकडारादेकेति")। (र. ना.) ८ षष्ठ्यन्ततया विपरिणामेनेत्यर्थः। (र. ना.) ९ अस्य 'न व्याख्यातम्' इत्यनेन संबन्धः। (र. ना.) १० न त्वनङ्गस्यापि वृद्धिरिति भावः। (र. ना.) ११ एकैव संज्ञेतीत्यादिः। (र. ना.)

संज्ञयोर्भावः सिद्धः ॥ कथम्? । पूर्वे तस्य भपदसंज्ञे परा अङ्गसंज्ञा ॥ कथम्? । एवं स वक्ष्यति—"यस्मात्प्रत्ययविधिस्तदादि सुप्तिङन्तं पदम्" "नः क्ये" "सिति च" "स्वादिष्वसर्वनामस्थाने" "यचि भम्" तस्यान्ते "प्रत्ययेऽङ्गम्" इति । तत्रारम्भसामर्थ्याच्च भपदसंज्ञे । परंकार्यत्वाच्चाङ्गसंज्ञा भविष्यति ॥

( प्रदीपः ) परंकार्यत्वमिति । परंकार्यमित्येतदेकदेशस्यानुकरणं परंकार्यशब्दस्तस्यानुकार्येणार्थेनार्थवत्त्वात्प्रातिपदिकत्वात्तद्धितोत्पत्तिः ॥

( उद्द्योतः ) परंकार्यत्वमित्यत्र सुबन्तसमुदायात्कथं तद्धितस्तदुत्पत्तावपि कथं पूर्वपदे विभक्तिश्रवणमत आह—परंकार्येति । शब्दस्य भावश्चार्थः । स चैकदेशद्वारैतत्सूत्रार्थरूपः । अनुवादेऽर्थविशेषणकशब्दस्वरूपप्रतीतेरिति भावः ॥

( असमावेशदूषणबाधकभाष्यम् )

नतु च यस्याप्येकसंज्ञाधिकारस्तस्याप्यङ्गसंज्ञापूर्विके भपदसंज्ञे ॥ कथम्? । अनुवृत्तिः क्रियते ॥

( प्रदीपः ) अनुवृत्तिः क्रियते इति । ततस्तत्पूर्वकत्वं लभ्यते । अङ्गं सद्भपदसंज्ञमित्यर्थः ।

( उद्द्योतः ) तत इति । अनुवर्तमानस्यापि विधिकोटौ निवेशादिति भावः ॥ अङ्गं सदिति । स्वादिषु यदङ्गं तत्पदमिति व्याख्यानेनानुवादसामर्थ्यादङ्गपदत्वयोः समावेश इति भावः ॥

( असमावेशदूषणसाधकभाष्यम् )

पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥

( प्रदीपः ) अत्रोत्तरमाह—पर्यायः प्रसज्येतेति । एका संज्ञेति वचनादङ्गसंज्ञाया नित्ये बाधे प्राप्ते पर्यायार्थानुवृत्तिः स्यात् । एवं नियमो न बाधितो भवति अनुवृत्तिश्च सफला भवति ॥ ननु न पदान्तेत्यत्र सूत्रे भाष्यकारेणोक्तं वेतस्वानित्यस्य सिद्धये यथैवान्यानि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च एवमिदमप्युपप्लोष्यते भसंज्ञा नास्मेति । तत्र च पदं सद्भसंज्ञं भवतीति विज्ञायते । भसंज्ञायां पदसंज्ञानुवृत्तावपि भसंज्ञया पदसंज्ञाया बाधः पदकार्यनिवृत्तयेऽभ्युपगन्तव्यः । इह त्वङ्गसंज्ञानुवृत्तौ पर्याय उक्त इति विरोधः ॥ नैष दोषः । अङ्गसंज्ञानुवृत्तेः प्रयोजनान्तराभावात्पर्याय इहोक्तः । पदसंज्ञानुवृत्तेस्तु भसंज्ञायां प्रयोजनं पदकार्यत्वं भसंज्ञाया यथा स्यादिति । ततश्च न पदान्तेति स्थानिवत्त्वनिषेधादकारलोपस्य तसौ मत्वर्थे इति भसंज्ञायां सत्यां पदत्वप्रयुक्तरुत्वाभावे वेतस्वानिति सिध्यति ॥ कथमिति चेत् । उच्यते—भसंज्ञाविधौ पदमिति वर्तते । तत्रानुवृत्तिसामर्थ्यात्पूर्वं पदसंज्ञा प्रवर्तते । तेन पदकार्यं भसंज्ञा भवति, नान्यथा । एतावदेव चानुवृत्तेः प्रयोजनम् । ततः प्रवृत्तया भसंज्ञया पदसंज्ञा बाध्यते एका संज्ञेति नियमात् ॥

( उद्द्योतः ) नन्वनुवृत्तिसामर्थ्यात्समावेशोऽत आह—एका संज्ञेति । तदुक्तं भाष्ये एका संज्ञेति वचनादित्यादि ॥ बाध इति । उत्सर्गापवादन्यायेनेति भावः ॥ इह त्विति । इहापि तथैव स्यादिति भावः ॥ कथमिति चेदिति । पदमित्यनुवृत्तावप्युभयोर्विधेयतया कथं भसंज्ञा पदकार्यमिति प्रश्नः ॥ उच्यते इति । नानेन पदसंज्ञा विधीयते किं त्वनूद्यते इति भावः ॥ पदसंज्ञा प्रवर्तत इति । तद्बुद्धिः प्रवर्तते इत्यर्थः ॥ अनुवादसामर्थ्यादिति भावः । इह त्वेका संज्ञेति नियमाबाधनाय विधेयतेति विशेष इति बोध्यम् ॥ वस्तुतस्तद्भाष्यमन्यार्थकं न त्वेवमर्थकमिति तत्रैव निरूपितम् ॥ नन्वनया रीत्या परंकार्यमिति पाठेऽपि ज्ञापितसंज्ञाबाधस्यात्यन्ताबाधाय पर्याय एव स्यात्र तु समावेश इति चेन्न । अनुमितप्राप्त्यपवादभूतत्वादस्याः प्राप्तेर्ज्ञापितो बाधस्तदितरपर्यवसायीति समावेशसिद्धिरित्याशयात् ॥

( ९७३ एकसंज्ञाधिकारे दूषणान्तरवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ कर्मधारयत्वे तत्पुरुषग्रहणम् ॥ * ॥

( भाष्यम् ) कर्मधारयत्वे तत्पुरुषग्रहणं कर्तव्यम्—"तत्पुरुषः समानाधिकरणः कर्मधारय" इति । एकसंज्ञाधिकार इति चोदितम् । अक्रियमाणे हि तत्पुरुषग्रहणे अनवकाशा कर्मधारयसंज्ञा तत्पुरुषसंज्ञां बाधेत ॥

( प्रदीपः ) कर्मधारयत्व इति । एकसंज्ञावादिनं प्रत्युच्यते—त्वया कर्मधारयसंज्ञायामेकसंज्ञाधिकारे अन्यत्र वा क्रियमाणायां तत्पुरुषग्रहणं कर्तव्यम् । एकसंज्ञाधिकारे संज्ञासमावेशार्थम् । प्रदेशान्तरे तु समासान्तरस्य कर्मधारयसंज्ञाया निवृत्त्यर्थम् । मया त्वस्मिन्नेव प्रकरणे कर्मधारयसंज्ञा क्रियते समावेशश्च सिध्यतीति तत्पुरुषग्रहणं न कर्तव्यं भवतीति लाघवं भवति ॥

( उद्द्योतः ) ननु बहुव्रीहेः संज्ञानिवृत्तये तत्र तत्पुरुषग्रहणमावश्यकमत आह—एकसंज्ञेति । अन्यत्र वेति । यथान्यासमित्यर्थः ॥ मया त्विति । परंकार्यत्ववादिनेत्यर्थः ॥ ननु समानाधिकरणग्रहणमपि कर्तव्यमिति किं तत्पुरुषपदकर्तव्यतैव विशिष्योच्यतेऽत आह । भाष्ये—एकसंज्ञाधिकार इति चोदितमिति । यद्यन्यत्र सा संज्ञा तदोभयं कार्यम्, एकसंज्ञाधिकारे तत्पुरुषप्रकरणे नवकेवलाः समानाधिकरणेनेत्युत्तरं करणे त्वधिकारादेव समानाधिकरण इति लभ्यते इति तत्कर्तव्यतैव नोदितेति भावः ॥ अनवकाशेति । यथा चानवकाशत्वाद्बहुव्रीहिसंज्ञां बाधते तथा तत्पुरुषसंज्ञामपि बाधेतेत्यर्थः ॥

( परंकार्यत्वे समावेशसिद्धिमूलभाष्यम् )

परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥

( व्याख्याभाष्यम् )

यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः

१ त्वर्थकश्चकारः । ( र. ना. ) २ इदं निषेधान्वयि । ( र. ना. ) ३ तत्पुरुषग्रहणकर्तव्यतैवेत्यर्थः । ( र. ना. ) ४ चोदितेत्यर्थः । ( र. ना. )

संज्ञयोर्भावः सिद्धः ॥ कथम्? ॥ पूर्वा तस्य कर्मधारयसंज्ञा परा तत्पुरुषसंज्ञा ॥ कथम्? ॥ एवं स वक्ष्यति—"पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधारय" इत्येवं सर्वं कर्मधारयप्रकरणमनुक्रम्य तस्यान्ते "श्रितादिभिस्तत्पुरुषः" इति । तत्रारम्भसामर्थ्याच्च कर्मधारयसंज्ञा, परंकार्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ॥

( प्रदीपः ) तस्यान्ते इति । यद्येवं समानाधिकरणस्य कथं तत्पुरुषसंज्ञा सिद्ध्यति । उच्यते—पाठक्रमादर्थक्रमो बलीयानिति पूर्वं तत्पुरुष इति कर्तव्यम् । ततो द्वितीयाश्रितेति । तत्पुरुष इत्यत्र च पूर्वकालेत्यादीनि सूत्राण्यनुवर्त्य तत्पुरुषसंज्ञा विधीयते ॥

( उद्योतः ) यद्येवमिति । कर्मधारयप्रकरणान्ते द्वितीयाश्रितेत्यादि पठनीयं श्रितादिमपेक्ष्य च तत्पुरुषसंज्ञा कर्तव्येति भाष्यार्थं मत्वा शङ्केयम् । यदि तु द्वितीयाश्रितेत्यादि कृत्वा कर्मधारयप्रकरणमनुक्रम्योपपदमतिङितिप्रकरणान्ते श्रितादिभिस्तत्पुरुष इत्युच्यते तदा नेयं शङ्केति ध्येयम् ॥ परं त्वत्र पक्षे श्रितादिभिरित्यस्याधिकस्य करणाद् गौरवं भवतीत्युपाध्यायोक्तमेव सम्यक् ॥ नन्वेवमपि समानाधिकरणस्य तत्पुरुषत्वं न स्यात् तत्पुरुष इत्यस्योत्तरत्रैव संबन्धादत आह—तत्पुरुष इत्यत्र चेति । तथा च कर्मधारयसंज्ञया तत्पुरुषत्वस्य पर्याये सिद्धे परं कार्यमिति समावेशार्थमिति भावः । अत्र पक्षे बहुव्रीहिसंज्ञाविषयेऽस्याप्रसक्तिरेवेति बोध्यम् ॥

( असमावेशदूषणबाधकभाष्यम् )

ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका कर्मधारयसंज्ञा । कथम्? । अनुवृत्तिः क्रियते ॥

( प्रदीपः ) ननु च यस्यापीति । व्यधिकरणानां तत्पुरुषसंज्ञां विधाय समानाधिकरणस्य तत्पुरुषसंज्ञानुवृत्त्या तत्पूर्विका कर्मधारयसंज्ञा विधायिष्यते इत्यर्थः । समावेशस्य च कारकगवीति पुंवद्भावसमासान्तौ प्रयोजनम् ॥

( उद्योतः ) ननु द्वितीयाध्यायस्थतत्पुरुषसंज्ञायाः प्रथमे कथमनुवृत्तिरत आह—व्यधिकरणानामिति । द्वितीय एव "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधारयः" इत्येवं कर्मधारयसंज्ञा करिष्यत इति भावः ॥ पुंवद्भावेति । स्त्रियाः पुंवदिति न कोपधाया इति निषिद्धमिति भावः ॥ यथान्यासे तत्पुरुषानुवादेन कर्मधारयसंज्ञाया आकडारादबहिः कृतत्वेन समावेशसिद्धिरिति तत्त्वम् ॥

( असमावेशदूषणसाधकभाष्यम् )

पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥

( ९७४ एकसंज्ञाधिकारे दूषणान्तरवार्तिकम् ॥ ५ ॥ )

॥ * ॥ तत्पुरुषत्वे द्विगुचग्रहणम् ॥ * ॥

( भाष्यम् ) तत्पुरुषत्वे द्विगुचग्रहणं कर्तव्यम् । "तत्पुरुषः द्विगुश्च" इति चकारः कर्तव्यः । अक्रियमाणे हि चकारग्रहणेऽनवकाशा द्विगुसंज्ञा तत्पुरुषसंज्ञां बाधेत ॥

परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥

यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः ॥ कथम्? । पूर्वा तस्य द्विगुसंज्ञा परा तत्पुरुषसंज्ञा ॥ कथम्? । एवं स वक्ष्यति—"तद्धितार्थोत्तरपदसमाहारे च संख्यापूर्वो द्विगुः" इत्येवं सर्वं द्विगुप्रकरणमनुक्रम्य तस्यान्ते श्रितादिभिस्तत्पुरुषः" इति । तत्रारम्भसामर्थ्याच्च द्विगुसंज्ञा,—परंकार्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ॥

( प्रदीपः ) द्विगुचग्रहणमिति । द्विगोः संबन्धिनश्चशब्दस्य ग्रहणं कर्तव्यमित्यर्थः ॥ नन्वेकसंज्ञापक्षे द्विगुश्चेति सर्वमेव सूत्रं कर्तव्यं तत्र किं चशब्द एव चोद्यते । तत्राहुः—द्विगुश्चेति सूत्रं द्वयोरपि पक्षयोर्न कर्तव्यम् । एकसंज्ञापक्षे तु संख्यापूर्वो द्विगुश्चेति चशब्दः समावेशार्थः कर्तव्यो न पक्षान्तर इत्येतद्वार्तिककारस्य विवक्षितम् । भाष्यमप्येवं व्याख्यायते तत्पुरुषः द्विगुश्चेति चकारः कर्तव्य इति तद्धितार्थेत्यनेन यः सङ्ख्यापूर्वः समासः स तत्पुरुषो द्विगुश्च भवतीति संज्ञाद्वयं लभत इति यावत् । एतदर्थश्चकारः कर्तव्य इत्यर्थः । अयमेवार्थः परस्तात्प्रकटीभविष्यति ॥ तस्यान्त इत्यादि भाष्यं पूर्ववत् क्रमविपर्ययेण व्याख्येयम् ।

( उद्योतः ) ननु द्विगुश्चेति सूत्रपाठाद् द्विगुचेत्यनुपपन्नमत आह—द्विगोरिति । व्याप्तिन्यायात् कडाराः कर्मधारये इत्यमेवावधिरिति तात्पर्यम् । आ द्वन्द्वादिति नोक्तम्, द्वन्द्वश्च प्राणीत्यस्यावधित्वापत्तौ संख्यामन्त्रितसंज्ञयोः समावेशानापत्तेः ॥ परस्तादिति । सर्वं द्विगुप्रकरणमनुक्रम्येत्यादिग्रन्थेन ॥ अन्ये तु चकारघटितं द्विगुश्चेति सूत्रं कर्तव्यमिति भाष्यार्थमाहुः । कृतमेवेति न दोष इति तत्त्वम् ॥

( असमावेशदूषणबाधकभाष्यम् )

ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका द्विगुसंज्ञा । कथम्? । अनुवृत्तिः क्रियते ॥

( असमावेशदूषणसाधकभाष्यम् )

पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥

---

१ 'श्रितादिस्तत्पु' । २ 'रित्यस्याधिकरणात्' । ३ 'श्रितादिस्तत्पु' । ४ 'लभ्यत' ।

( ९७५ दूषणान्तरवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ गतिदिवःकर्महेतुमत्सु च-ग्रहणम् ॥ * ॥

**( भाष्यम् ) गतिदिवःकर्महेतुमत्सु चग्रहणं कर्तव्यम् ॥**

**"उपसर्गाः क्रियायोगे" "गतिश्च" इति चकारः कर्तव्यः । अक्रियमाणे हि चकारे अनवकाशा उपसर्गसंज्ञा गतिसंज्ञां बाधेत ॥**

**परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥**

**यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः ॥ कथम् ? । पूर्वा तस्योपसर्गसंज्ञा, परा गतिसंज्ञा । तत्रारम्भसामर्थ्याच्चोपसर्गसंज्ञा, परंकार्यत्वाच्च गतिसंज्ञा भविष्यति ॥**

**( प्रदीपः ) गतिसंज्ञामिति** । ऊर्यादिषु सावकाशामिति भावः ॥

**( उद्योतः )** ननु गत्युपसर्गसंज्ञयोः समानविषयत्वात्कथमुपसर्गत्वस्यैव निरवकाशत्वमत आह—**ऊर्यादीति** ॥ गतित्वेनैकीकृत्य सावकाशत्वाभिमानः[1] ॥

( असमावेशदूषणबाधकभाष्यम् )

**ननु च यस्याप्येकसंज्ञाधिकारस्तस्याप्युपसर्गसंज्ञापूर्विका गतिसंज्ञा ॥ कथम् ? । अनुवृत्तिः क्रियते ॥**

( असमावेशदूषणसाधकभाष्यम् )

**पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥**

( दूषणबाधकभाष्यम् )

**गतिसंज्ञाप्यनवकाशा वचनाद्भविष्यति ॥**

( दूषणसाधकभाष्यम् )

**सावकाशा गतिसंज्ञा । कोऽवकाशः ? । ऊर्यादीन्यवकाशः ॥**

( दूषणबाधकभाष्यम् )

**प्रादीनां या गतिसंज्ञा सानवकाशा ॥ गति ॥**

**( प्रदीपः ) प्रादीनां या गतिसंज्ञेति । गतिश्चेत्य**त्रासत्यपि चकारे समावेशः सिद्ध्यति । **गतिरित्यत्र** योगे प्रादीनामनुवृत्त्या गतिसंज्ञा विधीयते । तत्र वचनसामर्थ्यात्पर्याये लब्धे सति उपसर्गसंज्ञानुवृत्तिः समावेशार्था भविष्यतीत्यर्थः । समावेशस्य च प्रणीतमभिषिक्तमित्यत्र गतिस्वरो णत्वषत्वे च प्रयोजनम् ॥

**( उद्योतः ) गतिस्वरो गतिरनन्तर** इति पूर्वपदप्रकृतिस्वरः॥ **उपसर्गादसमास** इति णत्वम् ॥ **उपसर्गात्सुनोतीति** षत्वम् ॥

( द्वितीयोदाहरणसमन्वयभाष्यम् )

**दिवःकर्म—"साधकतमं करणम्" "दिवः कर्म च" चकारः कर्तव्यः । अक्रियमाणे हि चकारेऽनवकाशा कर्मसंज्ञा करणसंज्ञां बाधेत ॥**

**परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥**

**यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः ॥ कथम् ? । पूर्वा तस्य कर्मसंज्ञा, परा करणसंज्ञा ॥ कथम् ? ॥ एवं स वक्ष्यति—"दिवः साधकतमं कर्म" ॥ ततः "करणम्" । करणसंज्ञं च भवति साधकतमं दिव इति निवृत्तम् । तत्रारम्भसामर्थ्याच्च कर्मसंज्ञा परंकार्यत्वाच्च करणसंज्ञा भविष्यति ॥**

**( प्रदीपः ) दिवः कर्म चेति** । समावेशस्य च प्रयोजनमक्षैर्देवयते देवदत्तो यज्ञदत्तेनेति । प्रयोज्यकर्तु[2]**र्गतिबुद्धीति** नियमात्कर्मसंज्ञानिवृत्तिः **अणावकर्मकादिति** परस्मैपदाभावश्च । यद्येवमक्षान्दीव्यतीति द्वितीया न प्राप्नोति, तृतीयया परत्वाद्बाधितत्वात् । विभक्तिद्वयं चेष्यते । कर्मसंज्ञा च सावकाशा अकर्मकव्यपदेशव्यावृत्त्यर्थत्वात् । करणसंज्ञापि देवना अक्षा इति ल्युडर्था । अत्राहुः—कार्यकालं संज्ञापरिभाषमिति पक्षोऽत्राश्रीयते । तेन **कर्मणि द्वितीयेत्यत्र** कार्ये यत्कर्मसंज्ञाया उपस्थानं तदनवकाशमिति द्वितीया भविष्यति । अक्षाणां देवितेत्यादौ तु कृत्प्रयोगे षष्ठ्या द्वितीयाऽपवादत्वाद्बाध्यते, तृतीया तु परत्वात् ॥

**( उद्योतः ) दिवः कर्म** चेत्यत्र संज्ञयोः समावेशेन तद्धात्वर्थसाधकतमे शक्तिद्वयसमावेशो बोध्यते ॥ **समावेशस्येति** । करणत्वादक्षाणां तृतीया । कर्मत्वाच्चाकर्मकत्वाभावात् परस्मैपदाभावः । प्रयोज्येऽकर्मकत्वप्रयुक्तकर्मत्वनिवृत्तिद्वारा यज्ञदत्ते तृतीया चेति भावः । तृतीयैव चात्र शास्त्रबलाच्छक्तिद्वयबोधिकेति बोध्यम् ॥ ननु कर्मत्वविधानसामर्थ्याद् द्वितीयेत्यत आह—**कर्मसंज्ञा चेति** । इदमुपलक्षणं कर्मणि लकारादेरपि ॥ **तृतीया त्विति** । **कर्तृकरणयोरि**त्यत्रा[3]स्योपस्थितिस्त्वकृद्योगे चरितार्थेति भावः । न च स्तोकं पाक इत्यादावपि षष्ठी स्यादिति वाच्यम् । कर्तृसाहचर्याद् [4]अधात्वर्थकर्मण एव ग्रहणेनादोषात् । न चैवं मनसादेव इत्यादिप्रयोगः कथं, हेतुतृतीयान्तेन पचाद्यजन्तदेवशब्दस्य समासे सिद्धत्वात् ॥ केचित्तु साधकतमगतकर्मत्वशक्तिबोधेऽक्षान्दीव्यतीति प्रयोगे दृढतरं मानं चिन्त्यम् । कार्यकालपक्षेपि परत्वात्तृतीयया बाधे न्याय्ये तद[5]नुपस्थितेरेव न्याय्यत्वात् । किं च तत्र फलाश्रयत्वविवक्षया **कर्तुरिति** कर्मत्वं न च तदा करणत्वमिति न दोषः । किं च **क्विति** चेतिसूत्रकैयटोक्तरीत्या यथोद्देशेऽपि प्रधानानुरोधेन गुणानां स्वात्मभेदकल्पनस्य तुल्यतया विशिष्य कार्यकालपक्षे इत्युक्तिरनुचिता । किं च **कार्यकालपक्षेऽयादिभ्यः पैरव प्रगृह्यसंज्ञेत्यदसोमादि-**

---

१ वस्तुतो नैकत्वमित्यभिमानोक्तिः । ( र. ना. ) २ दिवोऽकर्मकत्वेनेति शेषः । ( र. ना. ) ३ दिवः कर्मचेत्यस्येत्यर्थः । ( र. ना. ) ४ अधात्वर्थेति । धात्वर्थेऽभेदेनानन्वयिकर्मण इत्यर्थः । स्तोकं पाक इत्यत्र स्तोकपदार्थस्य पच्-धात्वर्थे फले तादात्म्येनान्वयस्यैव स्वीकारान्न षष्ठीति भावः । ५ कर्मणि द्वितीयेत्यत्र कर्मसंज्ञायाः प्रकृतोपयोगिन्या अनुपस्थितेरेवेत्यर्थः । ( र. ना. )

तिसूत्रभाष्योक्तरीत्याऽपादानमुत्तराणि गां दोग्धि पय इत्यत्रत्य-भाष्यासंगतेराकडारस्थसंज्ञानां यथोद्देशत्वमेवेति च तदुक्त्यसंगतिरित्याहुः ।

( दूषणबाधकभाष्यम् )

**ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि करणसंज्ञापूर्विका कर्मसंज्ञा । कथम् ? । अनुवृत्तिः क्रियते ॥**

( दूषणसाधकभाष्यम् )

**पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥ दिवः कर्म ॥**

( उदाहरणान्तरसमन्वयभाष्यम् )

**हेतुमत् । "स्वतन्त्रः कर्ता" "तत्प्रयोजको हेतुश्च" चकारः कर्तव्यः । अक्रियमाणे हि चकारेऽनवकाशा हेतुसंज्ञा कर्तृसंज्ञां बाधेत ॥**

**परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।**

**यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? । पूर्वा तस्य हेतुसंज्ञा, परा कर्तृसंज्ञा । कथम् ? । एवं स वक्ष्यति—"स्वतन्त्रः प्रयोजको हेतुः" इति । ततः "कर्ता" । कर्तृसंज्ञश्च भवति स्वतन्त्रः । प्रयोजक इति निवृत्तम् । तत्रारम्भसामर्थ्याच्च हेतुसंज्ञा परंकार्यत्वाच्च कर्तृसंज्ञा भविष्यति ॥**

( प्रदीपः ) **हेतुमदिति** । हेतुसंज्ञा यस्मिन्सूत्रे विधते तद्धेतुमत् तत्र चग्रहणं कर्तव्यम् । समावेशस्य च प्रयोजनं कारयतीति हेतुमण्णिच्कर्तरि लकारः ॥

( उद्द्योतः ) हेतुमतिचेति चग्रहणमिति भ्रमं वारयति—**हेतुसंज्ञेति** ॥

( असमावेशदूषणबाधकभाष्यम् )

**ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि कर्तृसंज्ञापूर्विका हेतुसंज्ञा ॥ कथम् ? । अनुवृत्तिः क्रियते ॥**

( असमावेशदूषणसाधकभाष्यम् )

**पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥**

( ९७६ दूषणान्तरवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ गुरुलघुसंज्ञे नदीघिसंज्ञे ॥ * ॥

( भाष्यम् ) **गुरुलघुसंज्ञे नदीघिसंज्ञे बाधेयाताम् । गार्गीबन्धुः वात्सीबन्धुः । वैत्रं, विविनय्य ॥**

**परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।**

**यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? । पूर्वे तस्य नदीघिसंज्ञे परे गुरुलघुसंज्ञे । तत्रारम्भसामर्थ्याच्च नदीघिसंज्ञे, परंकार्यत्वाच्च गुरुलघुसंज्ञे भविष्यतः ॥**

( प्रदीपः ) **गुरुलघुसंज्ञे इति** । यदा घिनदीसंज्ञे वर्णमात्रस्य क्रियेते तदायं दोषः । यदा तु तदन्तस्य तदा भिन्नविषयत्वात्सिद्धः समावेशः । तस्य तु प्रयोजनं वात्सीबन्धुरित्यत्र **नदीबन्धुनी**ति पूर्वपदान्तोदात्तत्वं नदीसंज्ञानिबन्धनं भवति । (वात्सीबन्धो इति) **गुरोरनृत** इति प्लुतश्च गुरुसंज्ञानिबन्धनः ॥ घिलघुसंज्ञासमावेशस्य च प्रयोजनं विश्व ना च विनराविति घिलक्षणः पूर्वनिपातः । विन्नोर्भावो वैत्रमिति **इगन्ताच्च लघुपूर्वा**दित्यण् । **द्वन्द्वमनोज्ञा**दित्वाद्वुञि प्राप्ते तदभावश्चिन्त्यः । विनरावाचष्टे इति णिचि टिलोपे च कृते विविनय्येति ल्यपि **लघुपूर्वा**दित्ययादेशः ॥

( उद्द्योतः ) **निबन्धन इति** । ननु वात्सीबन्धुरित्यत्र प्लुताप्राप्तेर्भाष्यस्य न्यूनतैवेति चेन्न । प्लुतविधायके दूराद्धाह्वानं ज्ञापनमात्रोपलक्षणं, न त्वभिमुखीकृत्य ज्ञापनरूपसंबोधनस्य संबोधनविभक्तिनियामकस्योपलक्षणम् । एवं चागच्छतु भवान् गार्गीबन्धुर्वात्सीबन्धुरिति वाक्यवर्तिन उदाहरणत्वमिति भाष्याशयसत्त्वेनादोषात् । अतिप्रसङ्गस्तु व्यवस्थितविभाषयाऽनभिधानेन वा परिहरणीय इत्याहुः ॥ **चिन्त्य इति** । अत्रेयं चिन्ता—अस्मादेव भाष्यप्रयोगात्तस्यानित्यत्वं तेनोक्तप्रयोगसिद्धिरित्याहुः ॥

( असमावेशदूषणबाधकभाष्यम् )

**ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि नदीघिसंज्ञापूर्विके गुरुलघुसंज्ञे ॥ कथम् ? । अनुवृत्तिः क्रियते ॥**

( प्रदीपः ) **नदीघिसंज्ञापूर्विके इति** । ननु विशेषविषये नदीघिसंज्ञे गुरुलघुसंज्ञे तु सामान्यविषये ते कथं नदीघिसंज्ञापूर्विके युज्येते । एवं मन्यते—वाक्यभेदेन संबन्धः करिष्यते । ह्रस्वमक्षरं लघुसंज्ञं भवति । ततो [घि ।] घिसंज्ञं च लघुसंज्ञमिति । एवं दीर्घं गुरुसंज्ञम् । ततो [नदी ।] नदीसंज्ञं च गुरुसंज्ञमिति ॥

( उद्द्योतः ) **ततो घिसंज्ञं चेति** । तथा च नदीघिसंज्ञाविषये ते संज्ञे नदीघिसंज्ञापूर्विके इति भाष्यार्थ इति भावः ॥

( असमावेशदूषणसाधकभाष्यम् )

**पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥**

( प्रदीपः ) **पर्याय इति** । नदीघिसंज्ञाभ्यां गुरुलघुसंज्ञयोर्निसे बाधे प्राप्ते तयोरनुवृत्तिः पर्यायार्थैव स्यादित्यर्थः ॥

---

१ 'वात्सीबन्धो' इति संबोधनविभक्तिनिर्देशस्तु 'दूराद्धूते च' इत्यत्र दूराद्धाह्वानं संबोधनविभक्त्यैव भवतीत्यभिमानेन । परंतु ज्ञापनमात्रोपलक्षणत्वेन शुद्धप्रथमायामपि भवत्येवेति बोधनायैवात्र भाष्ये संबोधनविभक्ति विहाय शुद्धप्रथमोदाहृता । वस्तुतस्तु कोष्ठकान्तर्गतोऽयं पाठस्तथाभिमन्त्रा केनचित्प्रक्षिप्तो भवेदित्येव तत्त्वम् । २ 'प्लुतोगुरु' । ३ दूराद्धाह्वानाभावादिति भावः । ( र. ना. )

( उद्द्योतः ) पर्यायार्थेचेति । एवं ह्येका संज्ञेति नियमो न बाधित इति भावः ॥ तदन्तस्य घिनदीसंज्ञे इति सिद्धान्तः ॥

( ९७७ दूषणान्तरवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ परस्मैपदसंज्ञां पुरुषसंज्ञा ॥ * ॥

**( भाष्यम् ) परस्मैपदसंज्ञां पुरुषसंज्ञा बाधेत ॥ परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥**

**यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? । पूर्वा तस्य पुरुषसंज्ञा परा परस्मैपदसंज्ञा । कथम् ? । एवं स वक्ष्यति— "तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमा" इत्येवं सर्वं पुरुषनियममनुक्रम्य तस्यान्ते "लः परस्मैपदम्" इति । तत्रारम्भसामर्थ्याच्च पुरुषसंज्ञा परंकार्यत्वाच्च परस्मैपदसंज्ञा भविष्यति ॥**

( प्रदीपः ) परस्मैपदसंज्ञामिति । ततश्च कामतीत्यादौ दीर्घत्वं न स्यात् शतर्यैव तु स्यात् ॥ ननु च सिचिवृद्धिरिति ज्ञापकात्समावेशो भविष्यति । नैतदस्ति । अस्माद्वचनादस्मिन्कार्ये पर्यायः स्यान्न समावेशः । ततश्च पाक्षिकी वृद्धिः स्यात् ॥

( उद्द्योतः ) ननु चेति । तत्र शत्रादिपरसिचोऽभावात्तिङ् परस्मैपदमेव गृह्यत इति भावः ॥

( असमावेशदूषणबाधकभाष्यम् )

**ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि परस्मैपदसंज्ञापूर्विका पुरुषसंज्ञा । कथम् ॥ अनुवृत्तिः क्रियते ॥**

( असमावेशदूषणसाधकभाष्यम् )

**पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥**

( उद्द्योतः ) पर्याय इति । एकसंज्ञाधिकाराबाधायेति भावः । वस्तुत इष्टानुरोधादूर्णोतेर्विभाषाग्रहणाच्च समावेशज्ञापकत्व[1]मेवास्येत्येका संज्ञेति पाठेऽपि न दोषः ।

( असमावेशदूषणबाधकभाष्यम् )

**परस्मैपदसंज्ञाप्यनवकाशा वचनाद्भविष्यति ॥**

( प्रदीपः ) परस्मैपदसंज्ञापीति । ततश्च पर्याये लब्धे अनुवृत्तिः समावेशार्थो भविष्यतीति भावः ।

( असमावेशदूषणसाधकभाष्यम् )

**सावकाशा परस्मैपदसंज्ञा ॥ कोऽवकाशः ? ॥ शतृकस्वोरवकाशः ॥**

( इत्येका संज्ञेतिन्यासे दूषणानि ॥ )

( अथ परंकार्यवचने दूषणानि ॥ )

( ९७८ दूषणवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ परवचने सिति पदं भम् ॥ * ॥

**( भाष्यम् ) परवचने सिति पदं भसंज्ञमपि प्राप्नोति । "अयं ते योनिर्ऋत्वियः" । "प्रजां विन्दाम ऋत्वियः" । आरम्भसामर्थ्याच्च पदसंज्ञा, परंकार्यत्वाच्च भसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) ऋत्विय इति । भसंज्ञायां सत्यामोर्गुणः स्यात् ॥ पदसंज्ञा त्ववग्रहार्था स्यात् ॥

( उद्द्योतः ) इदानीं परंकार्यत्वपक्षे दोषानाह—भाष्ये— परवचन इति । ऋत्विये तदस्य प्राप्तमित्यधिकारे ऋतोरणिति वर्तमाने[2] छन्दसि घसिति घस् ॥ पदसंज्ञा त्विति । गुणेऽवादेशे, लोपः शाकल्यस्येत्यर्थमपि सेति बोध्यम् ॥

( ९७९ दूषणान्तरवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञम् ॥ * ॥

**( भाष्यम् ) गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञमपि प्राप्नोति । आरम्भसामर्थ्याच्च कर्मसंज्ञा, परंकार्यत्वाच्च कर्तृसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) गतिबुद्ध्यादीनामिति । एकसंज्ञाधिकारे गत्यादिसूत्रं कर्मसंज्ञायां सिद्धायां नियमार्थम् । तथा हि— प्रयोज्यः स्वव्यापारे स्वतन्त्रः प्रयोजकव्यापारेण चाप्यते इति संज्ञाद्वयप्रसङ्गे एकसंज्ञाधिकारादन्यतरया भाव्यम् । तत्र प्रत्यार्थस्य प्राधान्यात्तत्प्रयुक्तया कर्मसंज्ञया प्रवर्त्यम् । गुणप्रधानसंनिधौ प्रधानस्य प्रयोजकत्वे संभवति पृथग्गुणास्तद्विरुद्धं स्वकार्यं न प्रयुञ्जते । ततश्च सिद्धायां प्रयोज्यस्य कर्मसंज्ञायां गत्यर्थादीनामेवाण्यन्तानां कर्ता ण्यन्तानां कर्मसंज्ञो भवति नान्येषामिति नियमः क्रियते । तेन पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति कर्मसंज्ञा न भवति । प्रधानप्रयुक्तकर्मसंज्ञाऽभावे च गुणक्रियानिमित्ता कर्तृसंज्ञा प्रवर्तते । यदा तु **परं कार्यमिति** पाठस्तदाऽविरोधात्सर्वत्र संज्ञाद्वयप्रसङ्गे गत्यर्थादीनामेवेति नियमेन ण्यन्तधात्वन्तरप्रयोज्यात्कर्मसंज्ञा व्यावर्त्यते । गत्यर्थादिप्रयोज्यस्य तु संज्ञाद्वयप्रसङ्ग इत्यर्थः ॥

( उद्द्योतः ) नियमार्थमिति । यद्यपि परंकार्यत्वपक्षेऽपि गत्यादिसूत्रं नियमार्थं तथाप्यत्र पक्षे इष्टसिद्धिरिति भावः ॥ ननु परत्वात्कर्तृत्वे प्राप्ते कर्मसंज्ञाविध्यर्थमेव गत्यादिसूत्रं स्यात्कथं नियमार्थत्वमित्यत आह—**तथाहीति । प्राधान्यादिति** । शब्दशास्त्रत्वाच्छाब्दं प्राधान्यमन्तरङ्गत्वादिभ्यो बलवत् । लोकेऽप्यन्तरङ्गकार्यात्प्रधानकार्यस्य बलवत्त्वं दृष्टं मन्त्रिराजस्थले इति भावः ॥ **अविरोधादिति** । पूर्वेणापवादेन निवर्तितस्य परकार्यस्य प्रवर्तकेनानेन निरवकाशपूर्वकार्यस्य निवर्तयितुमशक्यतयैकसंज्ञानियमराहित्येन च विरोधाभावादित्यर्थः ॥ **गत्यर्थादीनामेवेति** । एषां कर्मसंज्ञैवेति नियमस्तु न, प्राक्कडारादिति शास्त्रबाधापत्तेः ॥ **आरम्भसामर्थ्याच्चेति** भाष्ये—हेतुमति चेति सूत्रे भाष्ये **गतिसूत्रस्य** नियमत्वोक्त्या कर्तुरित्यस्य ण्यन्तधातुविषयत्वावश्यकत्वेन ण्यन्तधातुविषयस्य कर्तुरीप्सिततममित्यस्यारम्भसामर्थ्यादित्यर्थः ॥ यत्त्वेतद्भा-

---

१ न तु पर्यायज्ञापकत्वमित्यर्थः । ( र. ना. )

२ अनुवर्तमाने इत्यर्थः । ( र. ना. )

ष्यबलाद्गत्यादिसूत्रं विध्यर्थम् । परत्वान्तरङ्गत्वोपजीव्यत्वैः कर्तृत्वप्राप्तेः । एवं च पाचयत्यादौ न दोषः ॥ यत्त्वारम्भसामर्थ्यादित्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थं इति ॥ तन्न । प्रधानानुरोधिनः सर्वतो बलवत्त्वात् । किं चात्र पाठे विध्यर्थत्वं दुरुपपादमुभयोरप्यविरोधात्प्राप्तेरिति दिक् ॥

(दूषणनिराकरणभाष्यम्)

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—न कर्मसंज्ञायां कर्तृसंज्ञा भवतीति । यदयं "हृक्रोरन्यतरस्याम्" इत्यन्यतरस्यांग्रहणं करोति ॥**

(प्रदीपः) **यदयमिति** । यदि तु गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं प्रावर्त्स्यत्तत्रैव सूत्रे हृक्रावकरिष्येतां नाकरिष्यतान्यतरस्यांग्रहणमित्यर्थः ॥

(उद्द्योतः) **यदीति** । ननु समावेशस्य सिद्धत्वेऽपि पक्षे कर्तृत्वमात्ररूपपर्यायार्थं तदस्तु । न च संज्ञयोः समावेशेऽपि तत्कार्यविभक्त्योर्यौगपद्यायोगात् कार्यान्तरस्य चाभावात् पर्यायः फलतीति वाच्यम् । समावेशेऽस्य कर्मभिन्नत्वाभावेनोभयप्राप्ताविति निषेधाप्रवृत्तौ नित्यं षष्ठी । पर्याये तु कर्तृत्वे निषिद्धेपि कर्मत्वे तदभावात् पक्षे भाव्यं षष्ठ्येति विशेषादिति चेन्न । हृकृविषयेऽनभिधानेन तादृशप्रयोगस्यैवाभाव इति भाष्याशयात् ॥ **हृक्राविति** । हृक्रावित्युचितम् । यद्वा सूत्रगतकृतयणादेशरेफान्तक्रशब्दानुकरणोत्तरपदो द्वन्द्वोयं द्विवचनान्त इति बोध्यम् ।

(९८० दूषणान्तरवार्तिकम् ॥ ११ ॥)

**॥ * ॥ शेषवचनं च घिसंज्ञानिवृत्त्यर्थम् ॥ * ॥**

(भाष्यम्) **शेषवचनं च कर्तव्यम्—"शेषो घ्यसखि"। किं प्रयोजनम्?। घिसंज्ञानिवृत्त्यर्थम् । नदीसंज्ञायां घिसंज्ञा मा भूदिति शकट्यै पद्धत्यै बुद्ध्यै धेन्वै । इतरथा हि परकार्यत्वाच्च घिसंज्ञा आरम्भसामर्थ्याच्च "ङिति ह्रस्वश्च" इति नदीसंज्ञा ।**

(प्रदीपः) **शकट्यै इति** । शकटिशब्दान्ङेप्रत्यये कृते परत्वान्नदीसंज्ञानिमित्ते आटि कृते तस्य ङिद्वत्त्वाद्घेर्ङितीति[1] गुणः प्राप्नोति ॥

(९८१ दूषणपरिहारवार्तिकम् ॥ १२ ॥)

**॥ * ॥ न वाऽसंभवात् ॥ * ॥**

(भाष्यम्) **न वा कर्तव्यम् । नदीसंज्ञायां घिसंज्ञा कस्मान्न भवति?। असंभवात् ॥**

**कोऽसावसंभवः? ॥**

**ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः ॥ ह्रस्वलक्षणा हि नदीसंज्ञा, घिसंज्ञायां च गुणेन भवितव्यम् । तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाऽभावः । तत्र वचनप्रामाण्यान्नदीसंज्ञायां[2] घिसंज्ञा न भविष्यति । किं कारणम्?। आश्रयाभावात् ॥**

(प्रदीपः) **न वाऽसंभवादिति** । अयं भावः—यद्यत्र घिसंज्ञा प्रवर्तेत तदान्तरङ्गत्वात् पूर्वमेव तस्याः प्रवृत्तिः स्यात् । नदीसंज्ञा तु ङित्प्रत्ययापेक्षा बहिरङ्गा । तत्र घिलक्षणे गुणे कृते ह्रस्वाभावादल्विधित्वाच्च स्थानिवत्त्वाभावान्नदीसंज्ञा नैव प्रवर्तेतेति नदीसंज्ञाविधानं ह्रस्वस्यानर्थकमेव स्यात् । तस्मान्नदीसंज्ञाविधानसामर्थ्यादत्र घिसंज्ञा न भवतीति[3] ॥

(उद्द्योतः) ननूपपादितरीत्या संज्ञासमावेशसंभव इत्यत आह—**अयं भाव इति** ॥ **तत्र घिलक्षणे[4] इति** । गुणेन नदीत्वनिमित्तविनाशेन युगपत्तयोरसंभवेन नदीसंज्ञापेक्षया परत्वादिति भावः ॥ **अल्विधित्वाच्चेति** । पूर्वविध्यभावादचः परस्मिन्नित्यस्याप्यभाव इति बोध्यम् ॥ **तस्मादिति** । इष्टानुरोधादेवमेव कल्प्यते न त्वल्विधावपि स्थानिवत्त्वादीति भावः ॥ भाष्ये—**आश्रयाभावादिति** । नदीत्वस्याश्रयभूतह्रस्वाभावादित्यर्थः ॥

(९८२ दूषणसाधकवार्तिकम् ॥ १३ ॥)

**॥ * ॥ आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेद्यणादेशाभावः ॥ * ॥**

(भाष्यम्) **आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेदेवमुच्यते यणादेशोऽपि न प्राप्नोति ॥**

(दूषणपरिहारभाष्यम्)

**नैष दोषः ।**

(९८३ दूषणपरिहारसाधकवार्तिकम् ॥ १४ ॥)

**॥ * ॥ नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः ॥ * ॥**

**नद्याश्रयो यणादेशः । यदा[5] नदीसंज्ञया घिसंज्ञा बाधिता तत उत्तरकालं यणादेशेन भवितव्यम् । नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञा भविष्यति ॥**

(प्रदीपः) **नद्याश्रयत्वादिति** । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति भावः ॥

(उद्द्योतः) **यस्य त्विति** । नदीत्वाभावे घित्वानिवृत्तेर्गुणेन यणो बाधाद् यणो निमित्तं नदीत्वमिति भावः ॥

---

१ आ ए इति समुदायस्य ङित्त्वादिति भावः । (र. ना.)
२ कर्तव्यायामिति शेषः । (र. ना.)
३ 'तीत्यर्थः' । ४ 'घिलक्षणेन' इति त्वपपाठ एव ।
५ 'यदाश्रयाभावान्नदी ?' ।

( ९८४ दूषणान्तरवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ बहुव्रीह्यर्थं तु ॥ * ॥

**( भाष्यम् ) बहुव्रीहिप्रतिषेधार्थं तु शेषग्रहणं कर्तव्यम्—"शेषो बहुव्रीहिः" इति ॥**

(उद्द्योतः) मास्तु शेषवचनं विसंज्ञानिवृत्त्यर्थम्, बहुव्रीहिप्रतिषेधार्थं तु कर्तव्यमेवेत्याह—भाष्ये—बहुव्रीह्यर्थं त्विति ॥

( प्रयोजनसाधकभाष्यम् )

**किं प्रयोजनम् ? ।**

( ९८५ प्रयोजनवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ प्रयोजनमव्ययीभावोपमान-द्विगुकृल्लोपेषु ॥ * ॥

**( भाष्यम् ) अव्ययीभाव—उन्मत्तगङ्गम् लोहितगङ्गम् । उपमान—शस्त्रीश्यामा कुमुदश्येनी । द्विगु—पञ्चगवं दशगवम् । कृल्लोपे—निष्कौशाम्बिः निर्वाराणसिः ॥**

( प्रदीपः ) उन्मत्तगङ्गमिति । अत्र बहुव्रीहिसंज्ञायां सत्यां पूर्वपदप्रकृतिस्वरः पाक्षिकश्च कप्समासान्तः प्राप्नोति ॥ **शस्त्रीश्यामेति** । यदा श्यामाशब्दः शस्त्र्यामेवे[1] उपमाने वर्तते, उपमेयं तु समासवाच्यं तदाऽन्यपदार्थवृत्तित्वाद्बहुव्रीहिसंज्ञाप्रसङ्गात्तन्निबन्धनः पाक्षिककप्प्रसङ्गः । स्वरस्तु **तत्पुरुषे तुल्यार्थेति** विधीयते इति तत्र नास्ति विशेषः ॥ **पञ्चगवमिति** । यदा समाहारो भावरूपो वाच्यः तदान्यपदार्थसद्भावः । समाह्रियमाणार्थत्वे तु तदभावः । बहुव्रीहिसंज्ञायां सत्यां तन्निबन्धनस्वरप्रसङ्गः । कपस्त्वशेषत्वात्प्रसङ्गाभावः ॥ नन्वत्र टचश्चित्करणाद्बहुव्रीहिस्वरो न भविष्यति । एवं तर्ह्युदाहरणदिगियम् । इदं त्वत्रोदाहरणं पञ्चपात्रमिति ॥ **निष्कौशाम्बिरिति** । क्रान्तस्यान्यपदार्थस्य समासवाच्यत्वे बहुव्रीहिसंज्ञायां तन्निबन्धनो नदीलक्षणः कप्प्रसङ्गः । यदा तु पूर्वपदमेव क्रान्ताद्यर्थवृत्ति तदान्यपदार्थाभावः ॥

( उद्द्योतः ) **अत्रेति** । उन्मत्तेतिक्तान्तस्य पूर्वनिपातस्तु बहुव्रीहित्वाभावेऽप्युपसर्जनत्वेन तं विना संज्ञाया अप्रतीतेश्चार्थिक इति भावः । नित्यनपुंसकत्वं तु संज्ञयोः समावेशेन सिद्धम् ॥ **पाक्षिकः कविति** । **शेषादिति** कपो **न संज्ञायामिति** निषेधाच्चिन्त्यमिदम् । शेषग्रहणे तु नदीपदघटितसमुदायस्यान्यपदार्थे विद्यमानस्य समासोक्तेः शेषत्वाभावान्न बहुव्रीहिरिति बोध्यम् ॥ ननु समानाधिकरणसमासोऽयम् । अत एव मृगचपलेत्यादौ पुंवत्त्वम् । तत्कान्यपदार्थप्रतीतिरत आह—**यदेति** । अयमपि पक्षस्तत्सूत्रभाष्ये स्पष्टः ॥ **भावरूप इति** । विशेष्यभूत इत्यर्थः ॥ **समाह्रियमाणेति** । **समाहारे** चेत्यत्र कर्मसाधनः समाहारशब्द इति भावः ॥ **अशेषत्वादिति** । **शेषादिति**सूत्रे समासान्तापेक्षया शेष इत्यभिमानेनेदम् । अनन्तरबहुव्रीह्यधिकारापेक्षं शेषत्वमिति भाष्यसंमतपक्षे तु तस्यापि प्रसङ्ग इति चिन्त्यम् ॥ **टचश्चित्करणादिति** । अस्यान्यत्र राजगवीत्यादौ चारितार्थ्यादिदं चिन्त्यमिति कश्चित् ॥ **पञ्चपात्रमिति** । अत्र शेषत्वात्कपोऽप्यापत्तिः । एतानि प्रयोजनानि शेषग्रहणस्य पदतः शेषार्थकत्वपक्षे । त्रिकतः शेषे त्वन्त्यं द्वयं शेषग्रहणे कृते सिध्यति । आद्यं तु प्रयोजनद्वयं त्रिकतः शेषे शेषग्रहणे कृतेऽपि न सिध्यतीति बोध्यम् ॥ **समासवाच्यत्वे इति** । समास एव क्रान्ताद्यर्थप्रतीतेः । यदागमे हीतिन्यायेनैकार्थीभावबलात्समासस्यैव सोऽर्थ इति भावः ॥ **यदा त्विति** । एकार्थीभावस्तु पञ्चम्यर्थान्तर्भावेणेति तद्भावः ॥

( ९८६ दूषणान्तरवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ तत्र शेषवचनाद्दोषः संख्या-समानाधिकरणनञ्समासेषु बहुव्रीहि-प्रतिषेधः ॥ * ॥

**( भाष्यम् ) तत्र शेषवचनाद्दोषो भवति । संख्यासमानाधिकरणनञ्समासेषु बहुव्रीहेः प्रतिषेधः प्राप्नोति ॥ संख्या—द्वीरावतीको देशः, त्रीरावतीको देशः । समानाधिकरण—वीरपुरुषको ग्रामः । नञ्समासे—अब्राह्मणको देशः, अवृषलको देशः ॥**

( प्रदीपः ) क्रियमाणेऽपि शेषग्रहणे दोषान्तरप्रसङ्गमाह—**तत्रेति** । एकसंज्ञावादी तु शेषग्रहणं न करोति । अनवकाशाभिरव्ययीभावादिसंज्ञाभिर्बहुव्रीहिसंज्ञाया[3] बाधस्य सिद्धत्वात् । द्वीरावतीकादिषु तु परत्वाद्बहुव्रीहिर्भविष्यति ॥ **द्वीरावतीक इति** । **नदीभिश्चे**त्यव्ययीभावः प्राप्नोति । तस्य त्ववकाशः पञ्चनदमिति यदा समाह्रियमाणोऽर्थो वाच्यः ॥

( उद्द्योतः ) **क्रियमाणेऽपीति** । तत्करणमेव प्रथमो दोषः । कृते दोषान्तरमपीति भावः । संख्यासमानाधिकरणनञ्सां समासोक्तेः शेषत्वाभावात्तत्र बहुव्रीह्यप्राप्तिरिति बोध्यम् ॥ **शेषग्रहणं न करोतीति** । पदतः शेषार्थं न करोति, त्रिकतः शेषार्थं तु करिष्यतीत्यर्थः ॥ **परत्वादिति** । नञ्समासादयोऽन्यपदार्थाविवक्षायां चरितार्थाः । अव्ययीभावोऽपि समाह्रियमाणार्थत्वे चरितार्थः ॥ बहुव्रीहिरप्यन्यत्र चरितार्थः । न च समानाधिकरणतत्पुरुषविषये बहुव्रीहिः क्व चरितार्थः ? व्यधिकरणे चरितार्थः इत्यभिमानात् । यद्वा तस्य तद्बाधकत्वमनवकाशत्वेनैव । **परत्वं** च बाधकत्वोपलक्षणम् । भाष्ये **विप्रतिषेधादि**त्यपि तथैव बोध्यम् ॥ **प्राप्नोतीति** । तथा चानयोः पदयोर्न शेषत्वमिति बहुव्रीह्यप्राप्तिः ॥ ननु द्वीरावतीकेऽनवकाशत्वान्नदीभिश्चेत्यनेनैव भाव्यम् । एवं च कथमत्र बहुव्रीहिः किमर्थं वा निषेधोऽत आह—**तस्य त्ववकाश इति** ॥ ननु तत्रापि समाहारस्यान्यपदार्थस्य सत्त्वात् कथमवकाशोऽत आह—**यदेति** । एवं सति पञ्चानां नदीनां समाहार

1 'शस्त्र्यामेव वर्तते' । 2 द्वे इरावत्यौ यत्रेति बहुव्रीहिः । ( र. ना. ) 3 'विशेष' । 4 'भावस्य' ।

इत्यर्थे परत्वाद्बहुव्रीहिः प्राप्नोति सोपि शेषग्रहणादेव वारणीयः परं कार्यत्वमिति पाठे इति दिक् । वस्तुतः समाहारे चायमिष्यत इत्युक्तेर्भावसाधनत्वाच्च समाहारशब्दस्य समाहाररूपेऽन्यपदार्थेऽयमपवाद इति मत्वा हीरावतीके शेषग्रहणाद्भाष्ये दोष उक्तः संख्येत्यनुवर्तमाने नदीभिश्चेत्यत्रैषां पदानां ग्रहणेनाशेषत्वात् ॥

( ९८७ दूषणवार्तिकम् ॥ १८ ॥ )

॥ * ॥ कृल्लोपे च शेषवचनात्प्रादिभिर्न बहुव्रीहिः ॥ * ॥

( भाष्यम् ) कृल्लोपे च शेषवचनात्प्रादिभिर्बहुव्रीहिर्न प्राप्नोति । प्रपतितपर्णः प्रपर्णकः । प्रपतितपलाशः प्रपलाशक इति ॥

( प्रदीपः ) प्रपतितपर्णः प्रपर्णकः इति । प्रपर्णक इत्युदाहरणम् । कृल्लोपप्रदर्शनार्थं तु प्रपतितपर्ण इत्युक्तम् । यथा निष्कौशाम्बिरिति तत्पुरुषसंज्ञा भवति । एवं प्रपर्णक इत्यत्रापि स्यादित्यर्थः ॥

( उद्द्योतः ) प्रपतितपर्णे प्रादयो गताद्यर्थ इत्यस्याप्रवृत्तेराह—प्रपर्णक इति ।

( एका संज्ञा इति पाठस्य निर्दोषत्वकथनाधिकरणम् )

( परंकार्यवादिन आक्षेपभाष्यम् )

अथैकसंज्ञाधिकारे कथं सिध्यति ? ।

( ९८८ एकसंज्ञावादिनः समाधानवार्तिकम् ॥ १९ ॥ )

॥ * ॥ एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिः ॥ * ॥

( भाष्यम् ) एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिर्भविष्यति ।

( ९८९ परंकार्यवादिनो बाधकवार्तिकम् ॥ २० ॥ )

॥ * ॥ एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् क्तार्थे प्रतिषेधः ॥ * ॥

( भाष्यम् ) एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् क्तार्थे प्रतिषेधो वक्तव्यः । निष्कौशाम्बिः । निर्वाराणसिः ।

( उद्द्योतः ) भाष्ये—क्तार्थे प्रतिषेध इत्यस्य क्तार्थे वाच्ये बहुव्रीहिप्रतिषेधो वक्तव्य इत्यर्थः ॥

( एकसंज्ञावादिनः समाधानसाधकभाष्यम् )

तत्पुरुषोऽत्र बाधको भविष्यति ॥

(प्रदीपः) तत्पुरुषोऽत्रेति । परिगणनं मनसि कृत्वाह ॥

( उद्द्योतः ) ननु कुगतीतिसूत्रविहितः समासोपि सुपुरुष इत्यादौ सावकाशोऽत आह—परिगणनमिति । प्रादयो गताद्यर्थ इत्यादीन्यपि परिगणनद्वारा स्वतन्त्रविधायकान्येव न तु तत्प्रपञ्चभूतान्येवेति भावः ॥

( ९९० परंकार्यवादिनो बाधकवार्तिकम् ॥ २१ ॥ )

॥ * ॥ तत्पुरुष इति चेदन्यत्र क्तार्थात्प्रतिषेधः ॥ * ॥

( भाष्यम् ) तत्पुरुष इति चेदन्यत्र क्तार्थात्प्रतिषेधो वक्तव्यः । प्रपतितपर्णः प्रपर्णकः । प्रपतितपलाशः प्रपलाशक इति ॥

(प्रदीपः) इतरो विशेषमप्रतिपद्याह—तत्पुरुष इतीति ॥

( उद्द्योतः ) ननु क्तार्थे विशेष्ये तत्पुरुषः, तद्भिन्ने बहुव्रीहिरिति भिन्नविषयत्वात् तत्पुरुष इति चेदित्याद्यनुपपन्नमत आह—इतर इति । प्रादयो गताद्यर्थे इति परिगणनरूपं विशेषमज्ञात्वेत्यर्थः । तथा च तत्र तत्पुरुषप्रतिषेधो वक्तव्य इत्याशयः ॥

( ९९१ एकसंज्ञावादिनः समाधानवार्तिकम् ॥ २२ ॥ )

॥ * ॥ सिद्धं तु प्रादीनां क्तार्थे तत्पुरुषवचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम् ? । प्रादीनां क्तार्थे तत्पुरुषो भवतीति वक्तव्यम् ॥

( प्रदीपः ) सिद्धं त्विति । क्तार्थो यत्र समासार्थस्तत्र तत्पुरुषसंज्ञा । प्रपर्णक इत्यत्र तु क्तार्थः पर्णविशेषणं समासार्थस्त्वन्य एवेति बहुव्रीहिर्भवति ॥

( उद्द्योतः ) वस्तुतस्तत्र शेषग्रहणमुभयोरप्यावश्यकं शेषाद्विभाषेति सूत्रे शेषाधिकारः स्यादित्यर्थलाभाय, त्रिकतश्च शेषः, तेन परं कार्यमिति पाठे संख्यासमानाधिकरणनञ्समासकृल्लोपेषु दोषैः परिहार्यः । एवं च तद्दोषोक्तिरेकदेश्युक्तिः । उन्मत्तगङ्गमित्यत्र तु दोषः स्थित एवेति परं कार्यमिति पाठो दूषितो भगवता, क्वचिद्वे दोषाच्चेति बोध्यम् ॥

( एकसंज्ञाधिकारप्रयोजनाधिकरणम् )

( प्रयोजनानुयोगभाष्यम् )

कानि पुनरस्य योगस्य प्रयोजनानि ? ।

( प्रदीपः ) कानि पुनरिति । अस्मिन्प्रकरणे पठितानां संज्ञानां यासां समावेशो नेष्यते ताः प्रयोजनम् । प्रकरणान्तरविहिता अप्यनिष्यमाणसमावेशा उपसंख्यातव्यत्वेन प्रयोजनानि भवन्तीति प्रश्नपूर्वकं दर्शयितुमाह ॥

( उद्द्योतः ) नन्वेतदवधिप्रविष्टसंज्ञासु फलसत्त्वात् प्रश्नानुपपत्तिरत आह—अस्मिन्निति ॥

( ९९२ प्रयोजनवार्तिकम् ॥ २३ ॥ )

॥ * ॥ प्रयोजनं ह्रस्वसंज्ञां दीर्घप्लुतौ ॥ * ॥

( भाष्यम् ) ह्रस्वसंज्ञां दीर्घप्लुतसंज्ञे बाधेते ॥

---

१ 'विशेषे' । २ Bangal Asiatic Society मुद्रितपुस्तकशोधकेन तु 'दोषपरिहारार्थः' इत्येवमनन्वित एव पाठो रक्षितः ।

( प्रदीपः ) ह्रस्वसंज्ञामिति । ऊकालोज् ह्रस्वसंज्ञ इत्युक्तम् । उकारश्चाण्त्वाद्द्विमात्रत्रिमात्रयोर्ग्राहक इति तयोरपि ह्रस्वसंज्ञा प्राप्ता दीर्घप्लुतसंज्ञाभ्यां बाध्यते । स च बाधस्तत्रैव सूत्रे विस्तरेण प्रतिपादितः ॥

( उद्द्योतः ) स च बाध इति । तपरत्वसमानार्थकालग्रहणेन प्रतिपादित इति भावः ॥

( ९९३ प्रयोजनवार्तिकम् ॥ २४ ॥ )

## ॥ * ॥ तिङ्सार्वधातुकं लिङ्लिटोरार्धधातुकम् ॥ * ॥

( भाष्यम् ) तिङ्सार्वधातुकसंज्ञां लिङ्लिटोरार्धधातुकसंज्ञा बाधते ॥

( प्रदीपः ) तिङ्सार्वधातुकमिति । लिङ्लिटोश्च सार्वधातुकसंज्ञायां सत्यां तन्निबन्धनाः शबादयः प्राप्नुवन्ति । आर्द्धधातुकसंज्ञा तु तन्निबन्धनेडाद्यर्था । छन्दस्युभयथेति तु तिङामार्द्धधातुकसंज्ञार्थं शेषस्यापि सार्वधातुकसंज्ञार्थं स्यादित्यज्ञापकमसमावेशस्य ॥

( उद्द्योतः ) ननु समावेशे छन्दस्युभयथेति व्यर्थं स्यादत आह—छन्दसीति ॥ तिङां, लङाद्यादेशानाम् ॥ शेषस्यापि । तव्यादेः ॥ वस्तुतोऽत्रे लङः शाकटायनस्यैवेत्यत एवकारानुवृत्तेर्न समावेशः । एवं लिङाशिषीत्यत्रापि ॥

( ९९४ प्रयोजनवार्तिकम् ॥ २५ ॥ )

## ॥ * ॥ अपत्यं वृद्धं युवा ॥ * ॥

( भाष्यम् ) अपत्यं वृद्धं युवसंज्ञा बाधते ॥

( प्रदीपः ) अपत्यं वृद्धमिति । अत्र समावेशे सति शालङ्केः पैलस्य च यूनश्छात्रा इति विवक्षिते गोत्रेऽलुगचीति फक्फिञोरलुक् प्रसज्येत । फक्फिञोरन्यतरस्यामित्ययं तु लुग्विकल्प आनन्तर्याद्यूनि लुगित्येतमेव लुकं बाधते न तु पैलादिभ्यश्चेत्येतमपि ॥

( उद्द्योतः ) भाष्ये—वृद्धं, गोत्रम् ॥ अत्र समावेश इति । शलङ्कोर्गोत्रापत्यं बाह्वादीञ् शलङ्कोः शलङ्कादेशश्च । ततो यूनि यञिञोश्चेति फक् । पैलादिभ्यश्चेति लुक् ॥ पीलाशब्दात्पीलाया वेतिगोत्रेऽण् । ततो यून्यणो द्व्यच इति फिञ् तस्य पूर्वेण लुक् । न च गोत्रेऽलुगचीत्यनेनालुक्यपि यूनि लुगिति परो लुग् भविष्यतीति वाच्यम् । ततोपि परस्य फक्फिञोरन्यतरस्यामित्यस्य प्रवृत्त्या पक्षे प्रत्ययश्रवणप्रसङ्गादिति भावः ॥ सिद्धान्ते तु विकल्पो नेष्यत एवेत्याह—फक्फिञोरिति । अन्तरङ्गत्वात्पैलादिलुकापहारेण सिद्धान्ते यूनि लुगप्राप्तेरिति भावः ॥ गोत्रेऽलुगचीत्यत्र 'भूम्नि प्राप्तस्य लुकोऽलुग्' इति भाष्योक्तिरत्र दोषश्चिन्त्यः ॥ तस्मादौपगवस्य गोत्रस्यापत्यमौपगविरित्यादावेको गोत्र इति नियमादिञ् न स्यादिति फलं बोध्यम् ॥ तुशब्दस्यैवकारार्थत्वादिहासमावेशो बोध्यः ॥

( ९९५ प्रयोजनवार्तिकम् ॥ २६ ॥ )

## ॥ * ॥ घिन्नदी ॥ * ॥

( भाष्यम् ) घिसंज्ञां नदीसंज्ञा बाधते ॥

( प्रदीपः ) घिन्नदीति । शकट्यै इत्यत्र घिलक्षणगुणाभावः[4] ॥

( उद्द्योतः ) शकट्यै इति । यद्यपि नदीसंज्ञाविधानसामर्थ्याद् घित्वं नेति प्रागुपपादितं तथापि समावेशस्यानिष्टतामात्रेणोदाहरणत्वमुक्तमिति बोध्यम् ।

( ९९६ प्रयोजनवार्तिकम् ॥ २७ ॥ )

## ॥ * ॥ लघु गुरु ॥ * ॥

( भाष्यम् ) लघुसंज्ञां गुरुसंज्ञा बाधते ।

( प्रदीपः ) लघ्विति । अततक्षदित्यादौ सन्वद्भावाभावः ॥

( ९९७ प्रयोजनवार्तिकम् ॥ २८ ॥ )

## ॥ * ॥ पदं भम् ॥ * ॥

( भाष्यम् ) पदसंज्ञां भसंज्ञा बाधते ।

( ९९८ प्रयोजनवार्तिकम् ॥ २९ ॥ )

## ॥ * ॥ अपादानमुत्तराणि ॥ * ॥

( भाष्यम् ) अपादानसंज्ञामुत्तराणि कारकाणि बाधन्ते । क ? । धनुषा विध्यति, कंसपात्र्यां भुङ्क्ते, गां दोग्धि, धनुर्विध्यति ॥

धनुषा विध्यतीत्यपाययुक्तत्वाच्च "ध्रुवमपायेऽपादानम्" इत्यपादानसंज्ञा प्राप्नोति "साधकतमं करणम्" इति च करणसंज्ञा । सा[6] परा भवति ।

कंसपात्र्यां भुङ्क्ते इत्यत्रापाययुक्तत्वाच्च 'ध्रुवमपायेऽपादानम्' इत्यपादानसंज्ञा प्राप्नोति । 'आधारोधिकरणम्' इति चाधिकरणसंज्ञा । सा[7] परा भवति ।

गां दोग्धीत्यत्रापाययुक्तत्वाच्चापादानसंज्ञा प्राप्नोति 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञा । परा[8] सा भवति ।

धनुर्विध्यतीत्यत्रापाययुक्तत्वाच्चापादानसंज्ञा प्राप्नोति । 'स्वतन्त्रः कर्ता' इति कर्तृसंज्ञा । सा[9] परा भवति ॥

( प्रदीपः ) धनुषा विध्यतीति । अपायविवक्षया विना धनुषो व्यधेः साधकतमत्वाभावात् संज्ञाद्वयप्रसङ्गे परत्वात्करणसंज्ञा भवति ।

( उद्द्योतः ) नन्वत्र धनुषः करणत्वेनापादानत्वप्रसक्तिरेव नेत्यत आह—अपायेति । धनुर्निर्गतशरकरणकवेधे धनुषः साक्षात्करणत्वासंभवाद् अवश्यं निर्गमनपूर्वके वेधे विध्यतिं वर्त-

१ तिङ्शित्सार्वधातुकमित्यत्रेत्यर्थः । ( र. ना. ) २ प्रत्ययार्थबहुत्वे इत्यर्थः । ( र. ना. ) ३ जीवति तु वंश्ये युवा इति युवसंज्ञाविधायके शास्त्रे इत्यादिः । तुशब्दस्य च युवसंज्ञया संबन्धेन युवैवेत्यर्थो निष्पद्यते इति भावः । ( र. ना. ) ४ इष्टः, स च संज्ञाद्वयसमावेशेन सिद्ध्यतीति शेषः । ( र. ना. ) ५ एतस्यापि संज्ञाद्वयसमावेशेऽसिद्धिरिति भावः । ( र. ना. ) ६ 'करणसंज्ञा सा' । ७ 'अधिकरणसंज्ञा सा' । ८ 'कर्मसंज्ञा परा' । ९ 'कर्तृसंज्ञा सा' ।

यित्वा तद्घटकनिर्गमनस्यावधिभावेनैव निर्वर्तकं धनुर्वेधे परम्परया करणमित्यवश्यं वाच्यमित्यस्त्युभयोः प्राप्तिरिति भावः ॥ कंसपाव्या-मित्यादेरपि कंसपात्रीतो निर्गतमन्नं भुङ्क्ते इत्यर्थः । ईदृशस्थले धनुः-कंसपात्र्यादेर्द्वैधान्वय इति बोध्यम् ॥ न च कार्यकालपक्षे संज्ञाशा-स्त्राणां विधिप्रदेशेष्वेव वाक्यार्थेन विपरीतं परत्वं पञ्चमीप्रदेशोपस्थि-तापादानसंज्ञायास्तृतीयाविध्युपस्थितकरणसंज्ञायाः परत्वात् । एव-मल्लोपोऽन इत्याधेकवाक्यतापन्नभसंज्ञया नलोपाधेकवाक्यतापन्न-पदसंज्ञायाः परत्वादसिद्धत्वाच्च बाधो न स्यादिति वाच्यम् । एतद-धिकारस्थसंज्ञाविषये यथोद्देशपक्षस्यैवाङ्गीकारेणादोषात् ॥ भाष्ये— गां दोग्धीति । दुहेर्विभागानुकूलव्यापारानुकूलव्यापारार्थकत्वे क-र्तृव्यापारजन्यफलाश्रयत्वात्कर्तुरित्यस्य प्राप्तिः । विभागनिरूपिताव-धित्वविवक्षणाच्चापादानस्वप्राप्तिः । न च पयःसंनिधौ गौर्नेप्सिततमा, कारकान्तरापेक्षयैव प्रकर्षस्य विवक्षितत्वात् ॥ ननु स्वकक्षाया-मेव कर्मान्तरापेक्षयापि । अत एवाश्वेन पथा दीपिकया गच्छतीत्य-नेककरणयोगः । अकथितं चेत्येतत्त्वपादानत्वाद्यविवक्षायामेवेति न तेन विप्रतिषेध इति दिक् ।

( ९९९ प्रयोजनवार्तिकम् ॥ ३० ॥ )

## ॥ * ॥ क्रुधद्रुहोरुपसृष्टयोः कर्म संप्रदानम् ॥ * ॥

( भाष्यम् ) क्रुधद्रुहोरुपसृष्टयोः कर्मसंज्ञा संप्र-दानसंज्ञां बाधते ।

( १००० प्रयोजनवार्तिकम् ॥ ३१ ॥ )

## ॥ * ॥ करणं पराणि ॥ * ॥

( भाष्यम् ) करणसंज्ञां पराणि कारकाणि बा-धन्ते । क ? । धनुर्विध्यति । असिश्छिनत्तीति ॥

( उद्योतः ) [धनुर्विध्यतीत्यत्र धनुर्निर्गतशरकरणकवेधो धनु-ष्कर्तृक इति, धनुष्करणको धनुर्वृत्तिश्च व्यापार इति वा बोधः । स्वव्यापारे स्वस्यापि करणत्वविवक्षासंभवात् । एवमसिश्छिनत्ती-त्यादौ । ]

( १००१ प्रयोजनवार्तिकम् ॥ ३२ ॥ )

## ॥ * ॥ अधिकरणं कर्म ॥ * ॥

( भाष्यम् ) अधिकरणसंज्ञां कर्मसंज्ञा बाधते । क ? । गेहं प्रविशतीति ॥

( उद्योतः ) भाष्ये—गेहं प्रविशतीति । गेहे प्रविशति ग्रामे आगत इत्यादि तु त्वसाध्वेवेति बोध्यम् ॥ केचित्तु यदा तेषां संयोगसमानाधिकरणो व्यापारोऽर्थस्तदा कर्मत्वाप्राप्तेस्तत्साधुत्वं बो-ध्यम् । यदा तु व्यधिकरणो व्यापारोऽर्थस्तदोभयविवक्षायां भाष्यो-दाहरणोपपत्तिर्बोध्येत्याहुः ॥ तद् हृदुभ्यां चेत्यलुग्विधायकवार्ति-कस्थभाष्यविरुद्धं । तत्र हि हृदिस्पृगित्यादौ द्वितीयार्थे चैषा सप्तमी द्रष्टव्येत्युक्तम् ॥ गेहं प्रविशतीत्यादौ गेहाधिकरणको गेहकर्मको व्यापार इति बोधः । अत्राधिकरणत्वकर्मत्वयोर्नियतत्वम् ॥

( १००२ प्रयोजनवार्तिकम् ॥ ३३ ॥ )

## ॥ * ॥ अधिकरणं कर्ता ॥ * ॥

( भाष्यम् ) अधिकरणसंज्ञां कर्तृसंज्ञा बाधते । क ? । स्थाली पचतीति ॥

( १००३ प्रयोजनवार्तिकम् ॥ ३४ ॥ )

## ॥ * ॥ अध्युपसृष्टं कर्म ॥ * ॥

( भाष्यम् ) अध्युपसृष्टं कर्म अधिकरणसंज्ञां बाधते ॥

( १००४ प्रयोजनवार्तिकम् ॥ ३५ ॥ )

## ॥ * ॥ गत्युपसर्गसंज्ञे कर्मप्रवचनीय-संज्ञा ॥ * ॥

( भाष्यम् ) गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा बाधते ।

( प्रदीपः ) गत्युपसर्गसंज्ञे इति । तेन सुसिक्तमित्यादौ षत्वं न भवति, सूपमानात् क्त इति गतिसंज्ञकसुशब्दाश्रय-मन्तोदात्तत्वं च । पूर्वपदप्रकृतिस्वर एव तु भवति ॥

( उद्योतः ) षत्वं नेति । उपसर्गात्सुनोतीत्यनेनेति शेषः ॥ प्रकृतिस्वरः । तत्पुरुषे तुल्यार्थेत्यनेन ॥

( १००५ प्रयोजनवार्तिकम् ॥ ३६ ॥ )

## ॥ * ॥ परस्मैपदमात्मनेपदम् ॥ * ॥

(भाष्यम्) परस्मैपदसंज्ञामात्मनेपदसंज्ञा बाधते।

( प्रदीपः ) परस्मैपदसंज्ञामिति । तेनाच्योष्टाक्रमत इत्यादौ वृद्धिदीर्घायभावः ॥

( उद्योतः ) वृद्धिः सिचि वृद्धिरिति ॥ दीर्घः, क्रमः परस्मैपदेष्विति । क्रमतइति । वृत्तिसर्गेत्यात्मनेपदम् ॥

( १००६ प्रयोजनवार्तिकम् ॥ ३७ ॥ )

## ॥ * ॥ समाससंज्ञाश्च ॥ * ॥

( भाष्यम् ) समाससंज्ञाश्च या याः परा अनव-काशाश्च, तास्ताः पूर्वाः सावकाशाश्च बाधन्ते ॥

( प्रदीपः ) समाससंज्ञाश्चेति । तेन लोहितगङ्गमित्य-व्ययीभाव एव । द्वीरावतीक इति बहुव्रीहिरेव भवति ॥

( उद्योतः ) अव्ययीभावोऽनवकाशत्वात् । बहुव्रीहिः पर-

---

१ अपादानत्वेनाधिकरणत्वादिना चेत्यर्थः । (र.ना.) २ इयं षष्ठी । (र.ना.) ३ इयं पञ्चमी । ( र. ना. ) ४ 'पेक्षस्यैव' । ५ अन्यथा परस्परापेक्षया प्रकर्षा-भावादनेककरणयोगो न स्यादिति भावः । ( र. ना. ) ६ अयं कोष्ठकान्तर्गतः पाठो यद्यपि Bangal Asiatic Society मुद्रितपुस्तकेपि अग्रे 'गेहं प्रविशतीति' इति प्रतीकव्याख्यान्तर्गत एव समुपलभ्यते । तथापि तत्र प्राची-नलेखकप्रमादेनैव पतितोऽनुपयोगादिति विचार्य यथास्थानं स्थापित इति ज्ञेयम् ।

७ "*अन्यार्थे च* अन्यार्थे चैषा सप्तमी द्रष्टव्या" इति भाष्यव्याख्यानावसरे 'द्वितीयार्थे सप्तमी वक्तव्येत्यर्थः' इति तु प्रदीपे कैयटेनोक्तम् ॥

८ तेन 'वैकुण्ठमध्यास्ते' इत्यादौ कर्मसंज्ञैव नाधिकरणसंज्ञेति बोध्यम् । ९ न भवतीत्यनुकृष्यते । ( र. ना. ) १० प्रदीपानुसारेणाक्रमतेतीति पाठो भाति । ( र. ना. )

त्वात् । समास इति सामान्यसंज्ञां सह सुपेत्यत्र चरितार्थामव्ययीभावादिविशेषसंज्ञा न बाधन्ते, समाससंज्ञानुवादेन तासां विधानात् । अत एव समासान्ता इत्यधिकारेऽव्ययीभावे शरत्प्रभृतिभ्य इत्यादिविधानं संगच्छते ॥

( संज्ञानिवेशक्रमाधिकरणम् )

( १००७ संज्ञावार्तिकम् ॥ ३८ ॥ )

## ॥ * ॥ अर्थवत्प्रातिपदिकम् ॥ * ॥

( भाष्यम् ) **अर्थवत्प्रातिपदिकसंज्ञं भवति ॥**

( १००८ गुणसंज्ञावार्तिकम् ॥ ३९ ॥ )

## ॥ * ॥ गुणवचनं च ॥ * ॥

( भाष्यम् ) **गुणवचनसंज्ञं च भवत्यर्थवत् ॥**

( प्रदीपः ) **गुणवचनं चेति ।** एकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोः समावेशो भवति । उत्तरास्तु च संज्ञास्तु प्रातिपदिकमित्यनुवर्तनात्ताभिः प्रातिपदिकसंज्ञा समाविशति । गुणवचनसंज्ञा तु ताभिर्बाध्यते । तस्याश्च ष्यञ्विधिः प्रयोजनम् । ब्राह्मणादिग्रहणं तु समासादिसंज्ञाविषयार्थं प्राणभृज्जात्यादिलक्षणप्रत्ययबाधनार्थं युवाद्यण्समावेशार्थं च ॥

( उद्योतः ) **एकेति ।** एवं चोभयोर्निरवकाशत्वान्न बाध्यबाधकभाव इति भावः ॥ नन्वेवमपि पर्यायः स्यादत आह— **चकारेति ॥ समाविशतीति ।** पर्यायस्तु न, अव्ययादाप्सुप इति ज्ञापकात् । संज्ञान्तरविनिर्मुक्तस्यलाभावेनानुवृत्तिं विनैव पर्यायसिद्धिश्चेति भावः ॥ **गुणवचनसंज्ञात्विति ।** एवं चात्र शास्त्रे गुणवचनशब्देन जातिसंज्ञाव्ययकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तः शब्दो गृह्यत इति बोध्यम् । अत एव द्वारवतीत्वमित्यत्र न पुंवद्भाव इति बोध्यम् । अत्र कृत्तद्धितसंज्ञे तदन्तस्य बोध्ये, प्रातिपदिकसंज्ञासमानाधिकरणत्वात् । न च गुणिपरशुक्लादीनां गुणवचनत्वानापत्तिस्तत्र मतुब्लोपादिति वाच्यम् । श्रूयमाणतद्धितान्तस्यैव तत्संज्ञाविधानेनादोषात् । गुणगुणिनोरभेदविवक्षायां तथात्वाभावेनाक्षतेश्च । मतुब्लोपस्तु भेदविवक्षायां शुक्लनीलादेरसाधुत्वाय । तदा मतुपोऽनभिधानमाश्रित्य तु प्रत्याख्यानमिति बोध्यम् । रूपादयो जातिशब्दा, असर्वलिङ्गत्वात् ॥ **ष्यञ्विधिरिति । 'वोतो गुणवचनात्' 'स्वतलोर्गुणवचनस्ये'**त्यादेरप्युपलक्षणमेतत् ॥ ननु प्रातिपदिकमात्रस्य गुणवचनसंज्ञकत्वे ब्राह्मणादिग्रहणं व्यर्थमत आह— **ब्राह्मणादीति ।** अन्यथा ब्राह्मणगणपत्यादिभ्यः ष्यञ् न स्यात् । प्राणभृज्जातिलक्षणो ब्राह्मणशब्दे । वयोवचनलक्षणो बालशब्दे । निपुणादयो युवादयः ॥

( १००९ समासादिसंज्ञावार्तिकम् ॥ ४० ॥ )

## ॥ * ॥ समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः ॥ * ॥

( भाष्यम् ) **समास—समाससंज्ञा वक्तव्या ॥ कृत्—कृत्संज्ञा च वक्तव्या ॥ तद्धित—तद्धितसंज्ञा च वक्तव्या ॥ अव्यय—अव्ययसंज्ञा च वक्तव्या ॥ सर्वनाम—सर्वनामसंज्ञा च वक्तव्या ॥ असर्वलिङ्गा जातिरिति । एतच्च वक्तव्यम् ॥**

( प्रदीपः ) **असर्वलिङ्गा जातिरिति । लिङ्गानां च न सर्वभागिति** लक्षणलक्षितां जातिमाश्रयति । चित्रगुत्वं कारकत्वमौपगवत्वमुच्चैस्त्वं सर्वत्वं गोत्वं बहुत्वं पञ्चत्वं डित्थत्वमिति गुणवचनसंज्ञायाः समासादिसंज्ञाभिर्बाधनात्ष्यञ्न भवति । ऐक्यं राजपौरुष्यमित्यादौ तु ब्राह्मणादित्वात्ष्यञ् ॥१॥

( उद्योतः ) **आश्रयतीति ।** न लोकप्रसिद्धामित्यर्थः ॥ एकशब्दे संख्यासंज्ञया राजपुरुषे समाससंज्ञया बाधमाशङ्क्याह— **ऐक्यमिति ॥ राजपौरुष्यमिति ।** अनुशतिकादित्वादुभयपदवृद्धिः ॥

( १०१० संख्यासंज्ञावार्तिकम् ॥ ४१ ॥ )

## ॥ * ॥ संख्या ॥ * ॥

( भाष्यम् ) **संख्यासंज्ञा च वक्तव्या ।**

( १०११ षट्संज्ञावार्तिकम् ॥ ४२ ॥ )

## ॥ * ॥ डु च ॥ * ॥

( भाष्यम् ) **डुसंज्ञा च वक्तव्या ॥ का पुनर्डुसंज्ञा ? ॥ षट् संज्ञा ॥**

( १०१२ संज्ञासंज्ञावार्तिकम् ॥ ४३ ॥ )

## ॥ * ॥ एकद्रव्योपनिवेशिनी संज्ञा ॥ * ॥

( भाष्यम् ) **एकद्रव्योपनिवेशिनी संज्ञा इत्येतच्च वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते । यथान्यास एव भूयिष्ठाः संज्ञाः क्रियन्ते ? ॥**

( उद्योतः ) **भाष्ये—किमर्थमिति ।** गुणवचनं चेत्यारभ्यैकद्रव्योपनिवेशिनी संज्ञेत्यन्तं वचनजातं किमर्थमित्यर्थः ॥ वैयर्थ्यमेवोपपादयति— **यथान्यास एवेति ॥**

( समाधानभाष्यम् )

**सन्ति चैवात्र काश्चिदपूर्वाः संज्ञाः ॥ अपि चैतेनानुपूर्व्येण संनिविष्टानां बाधनं यथा स्यात् ॥ गुणवचनसंज्ञायाश्चैताभिः संज्ञाभिर्बाधनं यथा स्यादिति ॥ आकडारात् ॥ १ ॥**

( उद्योतः ) समाधत्ते— **सन्तिचैवात्रेति । अपूर्वा इति ।** कृत्संज्ञा तद्धितसंज्ञा असर्वलिङ्गा जातिरित्येकद्रव्योपनिवेशिनीत्येताः तदर्थमेतद्वचनजातमित्यर्थः ॥ समाध्यन्तरमाह— **अपि चेति । संनिविष्टानामिति** निर्धारणषष्ठी । तत्र संज्ञासंज्ञया जातिसंज्ञाया बाधाड्डित्थेत्यादौ टाबेव । तथा तया सर्वनामसंज्ञाया बाधात्सर्वायेत्यादौ न स्मै । एवं संज्ञासंज्ञया सर्वप्राचीनसंज्ञाबाध इत्यायूह्यम् ॥ पुनः समाध्यन्तरमाह— **गुणवचनसंज्ञायाश्चेति ।**

---

१ अव्ययसंज्ञाया उपादानात्प्रातिपदिकसंज्ञां विना सुपोऽभावाच्चेति भावः । ( र. ना. ) २ चो हतौ । यतोऽनुवृत्तिं विनैव पर्यायसिद्धिरतोऽनुवृत्तिर्व्यर्थी सती समावेशार्थेति भावः । ( र. ना. ) ३ गुणिवचनत्वाभावेनेत्यर्थः । ( र. ना. )

४ एतेनानुपूर्व्येण संनिविष्टानां संज्ञानां मध्ये संज्ञासंज्ञया जातिसंज्ञादीनां बाधनं यथा स्यादित्यर्थः । ( र. ना. ) ५ संज्ञासंज्ञयेत्यर्थः । ( र. ना. )

एवं चैतदतिरिक्तशब्दत्वं शास्त्रे गुणवचनशब्दत्वमित्यर्थादुक्तमिति दिक् ॥ १ ॥

( १६५ विप्रतिषेध(नियम)सूत्रम् ॥ १ । ४ । १ आ. २ सू. )

## २४२ विप्रतिषेधे परं कार्यम् ॥ १।४।२ ॥

( विप्रतिषेधशब्दार्थावगमाधिकरणम् )

( आक्षेपभाष्यम् )

**विप्रतिषेध इति कोयं शब्दः? ।**

( प्रदीपः ) **विप्रतिषेधे** ॥ २ ॥ आचार्यवचनानां सर्वेषां प्रामाण्याभ्युपगमाल्लौकिकार्थस्य विरोधवाचिनो विप्रतिषेधशब्दस्येह ग्रहणं न संभवतीति मत्वा पृच्छति—**विप्रतिषेध इति कोयं शब्द इति** ॥

( उद्द्योतः ) **विप्रतिषेधे** ॥ २ ॥ शब्दस्वरूपे संदेहाभावादर्थस्य विरोधस्य प्रसिद्धत्वात्कोयमिति प्रश्नानुपपत्तिरत आह—**आचार्येति** । विरोधार्थकत्वे परस्परव्याघातादुभयोर्विरुद्धयोः शास्त्रयोरप्रामाण्यं स्यादित्यर्थः ॥ **सर्वेषामिति** । अनेन शास्त्रेण परा[१]भ्यनुज्ञानात्तस्य प्रामाण्येप्यन्यस्याप्रामाण्येन सर्वेषां तैत्त्वं भग्नमिति भावः ॥

( समाधानभाष्यम् )

**विप्रतिपूर्वात्सिधेः । कर्मव्यतिहारे घञ् । इतरेतरप्रतिषेधो विप्रतिषेधः । अन्योन्यप्रतिषेधो विप्रतिषेधः ॥**

( प्रदीपः ) इतरस्तु लौकिकार्थवृत्तिरेवोपात्तो न ह्यस्यात्रान्योर्थः परिभाषित इति मत्वाह—**विप्रतिपूर्वादिति** । **कर्मव्यतिहार इति** सिधेर्विशेषणम् । व्यतिहारविशिष्टक्रियावचनात्सेधतेर्भावे घञित्यर्थः ॥ **इतरेतरप्रतिषेधोन्योन्यप्रतिषेधइति** । स एवार्थः पर्यायाभ्यां प्रदर्श्यते । यद्वा पर्यायाप्रतिपत्ती शब्दद्वयेन प्रदर्श्येते ॥

( उद्द्योतः ) **इतर इति** । अप्रामाण्यं त्वग्रे परिहरिष्यत इति भावः ॥ कर्मव्यतिहारे घञो विधानाभावादाह—**सिधेरिति** ॥ **सेधतेरिति** । परस्परं प्रतिकूलं गमनमित्यर्थबोधने तस्यैव समर्थत्वादिति भावः ॥ पौनरुक्त्यं परिहरति—**स एवार्थ इति** । कस्यचित्कश्चित्प्रसिद्ध इति पर्यायोपादानमिति भावः । अस्यागतिकगतित्वेनाह—**यद्वेति** । प्रतिषेधशब्द एकत्र पाक्षिकप्रतिषेधपरः परत्रात्यन्तिकप्रतिषेधपर इति भावः । एवं च सकृद्गतिपुनःप्रसङ्गपक्षयोः सिद्धये पर्यायाप्रतिपत्तिफलस्य कादाचित्कप्रवृत्तिप्रतिबन्धस्य सर्वथा तत्प्रतिबन्धस्य च प्रतिषेधशब्दार्थत्वेन लोकसिद्धविरोधार्थकतैव फलितेति ध्येयम् ॥

( आक्षेपभाष्यम् )

**कः पुनर्विप्रतिषेधः? ॥**

( प्रदीपः ) विरोधं पूर्वोक्तेन न्यायेनासंभावयन्पुनः पृच्छति—**कः पुनरिति** ॥

( उद्द्योतः ) **पूर्वोक्तेन** । अप्रामाण्यापत्तिरूपेण ।

( १०१३ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ द्वौ प्रसङ्गावन्यार्थावेकस्मिन्स विप्रतिषेधः ॥ * ॥

( भाष्यम् ) **द्वौ प्रसङ्गौ यदान्यार्थौ भवत एकस्मिंश्च युगपत्प्राप्नुतः स विप्रतिषेधः ॥**

**क्व पुनरन्यार्थौ क्व चैकस्मिन्युगपत्प्राप्नुतः? ।**

**वृक्षाभ्यां वृक्षेष्वित्यन्यार्थौ, वृक्षेभ्य इत्यत्र युगपत्प्राप्नुतः ॥**

( प्रदीपः ) **द्वौ प्रसङ्गाविति** । सर्वस्याचार्यवचनस्य प्रामाण्येपि लब्धावकाशयोर्वचनयोरेकस्मिन्विषये विरुद्धकार्यद्वयसमर्पणादस्त्येव विरोधः । प्रसज्येते इति प्रसङ्गौ विधी ॥ **अन्यार्थाविति** । अन्यत्र सावकाशौ ॥ **स विप्रतिषेध इति** । युगपद्यासौ प्राप्तिः सा विरोधनिमित्तत्वादभेदोपचाराद्विप्रतिषेधशब्देनोक्ता ॥

( उद्द्योतः ) ननु प्राप्नुत इति क्रिया न सशब्देन परामर्शयोग्या, सर्वनामपरामर्शायोग्यत्वस्यैव तस्यामसत्त्वस्य वतिसूत्रे कैयटेन वक्ष्यमाणत्वात्। कर्तृपरामर्शस्तु न, तस्य गुणत्वाद्, द्विवचनापत्तेश्चात आह—**युगपदिति** । आख्यातोपात्तक्रियायाः परामर्शाभावेप्यध्याहृतप्राप्त्यादिपदोपात्तायाः परामर्शे न दोषः । लिङ्गं तु प्रतिनिर्देश्याभिप्रायेणेति बोध्यम् ॥ ननु सा न विप्रतिषेधोऽत आह—**विरोधनिमित्तत्वादिति** । विरोधफलबाधनिमित्तत्वादित्यर्थः ॥

( आक्षेपभाष्यम् )

**किं च स्यात्? ।**

( प्रदीपः ) **किं च स्यादिति** । यदीदं नारभ्येतेति भावः ॥

( उद्द्योतः ) नन्वनेन परस्य प्रतिपादनात्कथमयं प्रश्नोऽत आह—**यदीदमिति** ॥

( १०१४ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्गः ॥ * ॥

( भाष्यम् ) **एकस्मिन्युगपदसंभवात् पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गः ॥**

( प्रदीपः ) इतरो व्यक्तिपदार्थाश्रयेण पर्यायप्रसङ्गमाह—**एकस्मिन्निति** ॥

( उद्द्योतः ) तदनारम्भेऽन्यत्र सावकाशयोः सामर्थ्याभावेन कथं पर्यायप्राप्तिरत आह—**इतरो व्यक्तीति । पर्यायेति** । एवं

१ परशास्त्रप्रवृत्त्यभ्यनुज्ञानादित्यर्थः । अभ्यनुज्ञा संमतिः । ( र. ना. ) तत्त्वं प्रामाण्यमित्यर्थः । ( र. ना. ) ३ 'पूर्वेण' । ४ भावप्रधानमाख्यातमिति यास्कवचनादिति भावः । ( र.ना. ) ५ 'नन्वेतेन' । ६ विप्रतिषेधे परं कार्यमिति शास्त्रेण परशास्त्रप्रवृत्तेः प्रतिपादनादित्यर्थः । ( र. ना. )

च पाक्षिकबाधो विरोधफलमिति भावः ॥ भाष्ये—एकस्मिन्नित्यस्य लक्ष्ये इति शेषः ॥ असंभवादित्यस्य कार्ययोरिति शेषः ॥ पूर्वपरप्राप्तेरिति ।—पूर्वस्य परस्य च योगस्य प्राप्तेरित्यर्थः । वचनद्वयप्रामाण्यादिति यावत् ॥ भगवता तु धर्मधर्मिणोरभेदमाश्रित्य प्राप्तिशब्देन पूर्वपरशब्दयोः सामानाधिकरण्यमाश्रितम् ॥ उभयप्रसङ्ग इति । पर्यायेणेति शेषः ॥

( आक्षेपभाष्यम् )

**इदं विप्रतिषिद्धं यदुच्यते *एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्गः* इति, कथं ह्येकस्मिंश्च युगपदसंभवः स्यात् पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गश्च स्यात् ? ॥**

( उद्द्योतः ) सूत्रयोरेवासंभवप्राप्ती उक्ते इति मत्वा पृच्छति—इदं विप्रतिषिद्धमिति ॥

( समाधानभाष्यम् )

**नैतद्विप्रतिषिद्धम् । यदुच्यते 'एकस्मिन्युगपदसंभवात्' इति । कार्ययोर्युगपदसंभवः, शास्त्रयोरुभयप्रसङ्गः ॥**

( उद्द्योतः ) शास्त्रयोरुभयप्रसङ्ग इति । पर्यायेण शास्त्रयोः प्राप्तेरुभयप्रसङ्ग इत्यर्थः ॥

( १०१५ समाधानसाधकवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ तृजादिभिस्तुल्यम् ॥ * ॥

**( भाष्यम् ) तृजादिभिस्तुल्यं पर्यायः प्राप्नोति । तद्यथा तृजादयः पर्यायेण भवन्ति ॥**

( उद्द्योतः ) ननु शास्त्रप्रसङ्गोपि कार्यार्थ एवेति कार्ययोर्युगपदसंभवे कथं शास्त्रयोः प्रसङ्गोऽत आह—तृजादिभिरिति । एवं च युगपदसंभवः पर्यायेणोभयप्रसङ्ग इति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

**किं पुनः कारणं तृजादयः पर्यायेण भवन्ति ? ॥**

( १०१६ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अनवयवप्रसङ्गात्प्रतिपदं विधेश्च ॥ * ॥

**( भाष्यम् ) अनवयवेन प्रसज्यन्ते प्रतिपदं च विधीयन्ते ॥**

( प्रदीपः ) **अनवयवप्रसङ्गादिति ।** सर्वव्यक्त्युद्देशेन शास्त्रस्य प्रवर्तनादित्यर्थः ॥ **प्रतिपदं विधेश्चेति ।** अनेनोत्सर्गापवादवैधर्म्यं दर्शयति । नह्युत्सर्गः प्रतिपदं विधीयते । तत्र पर्यायप्रसङ्गे नियमार्थमिदं, परमेव भवति न पूर्वमिति । एतत्सूत्रारम्भाच्च पूर्वस्य लक्षणस्य तत्रानारम्भोऽनुमीयते । **तदुच्यते सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।**

( उद्द्योतः ) सर्वव्यक्त्युद्देशेनेति । ण्वुल्तृचां धातुमात्राद्विधानेन[3] विनिगमकाभावादिति भावः ॥ नन्वनवयवेन प्रसक्तस्यापि सामान्यशास्त्रस्य विशेषेणात्यन्तिकबाधदर्शनादिदमप्रयोजकमत आह—अनेनेति । प्रतिपदं विधेश्चेत्यस्य बाधकाभावादिति शेषः । उत्सर्गस्य सामान्यविषयत्वमपवादस्य विशेषविषयत्वमिति तद्व्यक्तिविषयकविशेषशास्त्रेण सामान्यशास्त्रस्य तद्विषयकत्वं बाध्यते, तृजादौ तु नैवमित्युभयोरपि प्रतिव्यक्ति प्रवृत्तिः । एवं प्रकृतेऽपि दीर्घत्वशास्त्रयोः कस्यापि व्यक्तिविशेषविषयकत्वाभावेनोभयोरपि स्वस्वविषयसर्वव्यक्तिविषयतयोपप्लवेन पर्यायप्रसङ्ग इति भावः ॥ नन्वेवं तद्विषयकपूर्वलक्षणस्याप्रामाणत्वं स्यादत आह—एतत्सूत्रेति । एतच्छास्त्रबलेन पूर्वस्य तद्व्यतिरिक्तव्यक्तिविषयतैव कल्प्यत इति भावः ॥

( १०१७ पक्षान्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात् ॥ * ॥

**( भाष्यम् ) अप्रतिपत्तिर्वा[4] पुनरुभयोः शास्त्रयोः स्यात् । किं कारणम् ? । तुल्यबलत्वात् । तुल्यबले ह्युभे शास्त्रे । तद्यथा—द्वयोस्तुल्यबलयोरेकः प्रेष्यो[5] भवति स तयोः पर्यायेण कार्यं करोति । यदा तु तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदा यद्यसावविरोधार्थी भवति उभयोर्न करोति ॥ किं पुनः कारणमुभयोर्न करोति ? । यौगपद्यासंभवात् । नास्ति यौगपद्येन संभवः । तत्र प्रतिपत्त्यर्थं वचनम् । तत्र प्रतिपत्त्यर्थमिदं वक्तव्यम् ॥**

( प्रदीपः ) इदानीं जातिपक्षाश्रयेणाह—**अप्रतिपत्तिर्वेति ।** अत्र पक्षे विध्यर्थमिदम्—**परं भवतीति ।** तस्मिन् कृते यदि पूर्वस्य प्राप्तिनिमित्तमस्ति ततस्तदपि प्रवर्तते । तदुच्यते—**पुनः प्रसङ्गविज्ञानात्सिद्धमिति ।**

( उद्द्योतः ) ननु तुल्यबलत्वेनैव पर्याय उपपादितस्तत्कथं तेनैवाप्रतिपत्तिरापाद्यतेऽत आह—इदानीमिति । जातिपक्षे तज्जातेरेवोद्देश्यत्वेन तज्जात्युपरक्तव्यक्तौ कचित्कार्यान्वयेपि शास्त्रस्य चारितार्थ्यमिति भावः ॥ ततस्तदपीति । अप्रवृत्तौ मानाभावादिति भावः । वृक्षेभ्य इत्यादावेत्त्वे निमित्ताभावाद्दीर्घस्याप्रवृत्तिरित्यन्यत् ॥ भाष्ये—तद्यथेति । तत्र यथैकः प्रेष्य उभयोर्न करोति, तथा प्रकृते उदाहरणरूपा व्यक्तिरुभयोरपि कार्यं नाश्रयिष्यतीत्यर्थः । वचने त्वन्यत्र चरितार्थे । यथा तत्र प्रैष्यौ[6] परस्पराविरुद्धकार्यकरणेन चरितार्थाविति भावः ॥ प्रतिपत्त्यर्थमित्यस्य विध्यर्थमित्यर्थः ॥

( १०१८ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ तव्यदादीनां त्वप्रसिद्धिः ॥ * ॥

**( भाष्यम् ) तव्यदादीनां तु कार्यस्याप्रसिद्धिः ।**

---

१ किन्त्वपवादविषयपरिहारेणेति शेषः । ( र.ना. ) २ 'जणाम्' इत्यस्मिकाचित्के पाठे तु व्यक्तमेव 'कर्मण्यण्' इत्यस्य धातुमात्राद्विधानम् । ३ 'धाने' ।

४ अप्रवृत्तिरित्यर्थः । ( र. ना. ) ५ 'प्रैष्यो' । ६ 'प्रेष्यः' ।

नहि किंचित्तव्यदादिषु नियमकारि शास्त्रमारभ्यते येन तव्यदादयः स्युः । यश्च भवता हेतुर्व्यपदिष्टः *अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात्* इति, तुल्यः स तव्यदादिषु ॥

( प्रदीपः ) तव्यदादीनां तु कार्यस्येति । परत्वादेः साधुत्वस्य वेत्यर्थः । एकवाक्योपात्तत्वादनवकाशत्वाच्च नास्त्येषां परत्वेन व्यवस्था ॥

( उद्द्योतः ) ननु तव्यदादीन्येव कार्याणि किं तेषामपि कार्यं नामेत्यत आह—परत्वेति ॥ एकवाक्येति । शास्त्रगतमेव पौर्वापर्यं गृह्यत इति भावः ॥ कार्यगतपौर्वापर्याश्रयणेप्याह—अनवकाशत्वाच्चेति । धातुत्वजात्याक्रान्तव्यक्तौ क प्रवर्तते क नेत्यत्र विनिगमकाभावादिति भावः ॥

( आक्षेपनिराकरणभाष्यम् )

( भाष्यम् ) नैष दोषः । अनवकाशास्तव्यदादयः । उच्यन्ते च । ते वचनाद्भविष्यन्ति । यश्च भवता हेतुर्व्यपदिष्टः–तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति, तुल्यः स तव्यदादिषु । एतावदिह सूत्रम् 'विप्रतिषेधे परम्' इति । पठिष्यति ह्याचार्यः "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति । पुनश्च पठिष्यति—"पुनः प्रसङ्गविज्ञानात्सिद्धम्" इति ॥

( प्रदीपः ) तृजादिभिरिति । आदिशब्दस्य प्रकारार्थत्वात्तृजादिभ्यस्तव्यदादयो न भिन्ना इत्यर्थः ॥

( उद्द्योतः ) ननु तव्यदादीत्यादिपदेन तृजादीनामपि ग्रहणात् कथं सादृश्यमत आह—आदीति ॥ ननु पर्यायेणोत्पत्तिरेव प्रकारस्तस्य तृजादावपि सत्त्वेन कथं भेदोऽत आह—तृजादीति ॥ भाष्ये आचार्यो वार्तिककारः ॥

( आक्षेपभाष्यम् )

किं पुनरियता सूत्रेणोभयं लभ्यम् ? ॥

( समाधानभाष्यम् )

लभ्यमित्याह ॥ कथम् ? । इह भवता द्वौ हेतू व्यपदिष्टौ—तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति च, 'अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वादिति च । तद्यदा तावदेष हेतुस्तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति तदा 'विप्रतिषेधे परम्' इत्यनेन किं क्रियते ? । नियमः—विप्रतिषेधे परमेव भवतीति । तदेतदुपपन्नं भवति—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति ॥ यदा त्वेष हेतुरप्रतिपत्तिरुभयोस्तुल्यबलत्वात्' इति, तदा "विप्रतिषेधे परम्" इत्यनेन किं क्रियते ? । द्वारम्—विप्रतिषेधे परं तावद्भवति तस्मिन्कृते यदि पूर्वमपि प्राप्नोति तदपि भवति । तदेतदुपपन्नं भवति—'पुनःप्रसङ्गविज्ञानात्सिद्धमिति' ॥

( प्रदीपः ) सकृद्गताविति । यथा कुरुतात् त्वमिति हेर्लुक् च प्राप्नोति तातङ् चेति परत्वात्तातङ् तस्य स्थानिवद्भावाल्लुङ् न प्रवर्तते ॥ द्वारमिति । अप्रतिपत्त्यपनयनेन परशास्त्रप्रवृत्तेर्द्वारमुपायः क्रियत इति यावत् ॥ पुनःप्रसङ्गविज्ञानादिति । ईजतुरिति परत्वात्संप्रसारणे कृते द्विर्वचनं भवति । लक्ष्यानुरोधेन च व्यक्त्याकृतिपदार्थाश्रयणादनयोः परिभाषयोर्विषयविभागोऽवसेयः ॥

( उद्द्योतः ) यथेति । न च लुक् कृताकृतप्रसङ्गित्वेन नित्यः, शब्दान्तरप्राप्त्या तस्याप्यनित्यत्वात् । न चान्तरङ्गानपीति न्यायात्कैमुतिकन्यायेन परादपि लुको बलवत्त्वेनेदमयुक्तमिति वाच्यम् । परिभाषाणामिष्टसिद्धिमात्रफलकत्वात् ॥ ईजतुरिति । न च पूर्वं द्वित्वप्रवृत्तावपि वचिस्वपीति लिट्यभ्यासस्येतिसंप्रसारणाभ्यामिष्टं सिध्यतीति वाच्यम् । न संप्रसारणे इतिनिषेधेनाभ्यासस्य संप्रसारणानापत्तेः ॥ व्यक्त्याकृतीति । केचित्तु नहि 'व्यक्तिपक्षे सर्वं शास्त्रं व्याप्नोति न तु जातिपक्षे' इत्यत्र मानमस्ति । पक्षद्वयेपि सर्वव्याप्तिरेकशेषसूत्रे भाष्ये स्पष्टमुक्ता । न ब्राह्मणं हन्यादित्यादौ सर्वब्राह्मणहनननिषेधाय जातिपक्षाश्रयणमिति च तत्र स्पष्टम् । किं च भाष्यं पक्षद्वयसाधारणेन दृष्टान्तभेदेन पर्यायाप्रतिपत्ती ये प्राप्ते तदाश्रयेण तद्वचनोपपत्तिपरं न तु जातिव्यक्त्याश्रयेणेति स्पष्टमेव । अन्यथा जातिपक्षप्रवृत्तामप्रतिपत्तिमुपक्रम्य तव्यादिषु दोषाशङ्कापरं भाष्यमसंगतं स्यात् ॥ अनवकाशत्वेनैषां न परत्वेन व्यवस्थेति त्वदुक्त्यसंगततापत्तेश्च, अग्रे तृजादितुल्यताया एव तेषु प्रतिपादनाच्च । नहि तृजादयो व्यक्तिपक्ष एव सर्वविषयाः, अपि तु जातिपक्षेपि । किं च व्यक्तिपक्षेप्यन्यव्यक्तिविषयलाभेन चरितार्थस्येयं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीत्युपपत्तिरस्ति । किं च जातिपक्षे तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्विषयकत्वमित्यत्र विनिगमकाभावः । तत्रैकः शास्त्रदृष्टान्तोऽपरो लौकिकस्तयोराश्रयणे लक्ष्यानुसारो बीजमित्येव वक्तुमुचितम् । अन्यथा तव व्यक्तिपदार्थाश्रयेण संमते सकृद्गतिन्याये कुरुतात्त्वमित्युदाहरणं त्वदुक्तमसंगतं स्यात् । कुरुशब्दाद्धेर्लुगिति वचनस्य तातङभावपक्षे चारितार्थ्येन कुरुशब्दाद्धेस्तातङितिवचनस्यानवकाशत्वेन विप्रतिषेधाप्रसक्तेरिति वदन्ति ॥

( पूर्वविप्रतिषेधाङ्गीकाराधिकरणम् )

( १०१९ न्यासान्तरवार्तिकम् ॥ ७ ॥ )

## [॥ * ॥ विप्रतिषेधे परमङ्गाधिकारे पूर्वम् ॥ * ॥][1]

विप्रतिषेधे परमित्युक्त्वाऽङ्गाधिकारे पूर्वमिति वक्तव्यम् । किं कृतं भवति ? । पूर्वविप्रतिषेधा न पठितव्या भवन्ति—* गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो

१ अयं कोष्ठकान्तर्गतपाठो लिखितप्राचीनपुस्तकेषु यद्यपि नोपलभ्यते तथापि व्याख्यानभाष्यदर्शनेनानुमीयते—वार्तिकमासीत् । परं तु प्राचीनतरलेखकप्रमादेन भ्रष्ट आसीद् इति । अतोऽस्माभिः कोष्ठकमध्ये वर्धितः पाठ इति क्षन्तव्यं क्षमाशीलैः ।

**नुम् पूर्वविप्रतिषिद्धम्* *नुमचिरतृज्वद्भावेभ्यो नुट्* इति ॥**

(**उद्द्योतः**) अङ्गाधिकारस्थवक्ष्यमाणपूर्वविप्रतिषेधवार्तिकाश्रयणे गौरवं मत्वाह—**विप्रतिषेधे इति**। पूर्वं विप्रतिषिद्धमिति कर्मधारयः। नुम्शब्दरूपस्य विशेष्यत्वान्नपुंसकनिर्देशः॥

(**आक्षेपभाष्यम्**)

**कथं ये परविप्रतिषेधाः—*इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन* इति। सूत्रं च भिद्यते॥**

(**उद्द्योतः**) अङ्गाधिकारे परविप्रतिषेधस्यापीष्टत्वेनेदमसंगतं मत्वाह अन्यः—**कथमिति**॥ **सूत्रं च भिद्यत इति**। अधिकसूत्रकरणादिति भावः। चेनानङ्गाधिकारस्थपूर्वविप्रतिषेधासंग्रहरूपदोषसंग्रहः। सूत्रं भिद्यते चेत्यन्वयः॥

(**सिद्धान्तिसमाधानभाष्यम्**)

**यथान्यासमेवास्तु॥**

**कथं ये पूर्वविप्रतिषेधाः?॥**

**'विप्रतिषेधे परम्' इत्येव सिद्धम्। कथम्?। परशब्दोयं बह्वर्थः। अस्त्येव व्यवस्थायां वर्तते तद्यथा—'पूर्वः परः' इति। अस्त्यन्यार्थे वर्तते—'परपुत्रः परभार्या' अन्यपुत्रोऽन्यभार्येति गम्यते। अस्ति प्राधान्ये वर्तते तद्यथा—'परमियं ब्राह्मण्यस्मिन्कुटुम्बे' प्रधानमिति गम्यते। अस्तीष्टवाची परशब्दः तद्यथा—'परं धाम गतः' इष्टं धाम गत इति गम्यते। तद्य इष्टवाची परशब्दस्तस्येदं ग्रहणं 'विप्रतिषेधे परं यदिष्टं तद्भवति' इति॥**

(**प्रदीपः**) **तद्य इष्टवाचीति**। इष्टानिष्टविभागश्च व्याख्यानाद्बोध्यः।

(**उद्द्योतः**) **व्यवस्थायामिति**। तदाकाङ्क्षप्रवृत्तिनिमित्ते इत्यर्थः॥ ननु लक्षणचक्षुषां तद्विभागो दुर्ज्ञेयोऽत आह—**इष्टानिष्टेति**॥

(**अन्तरङ्गपरिभाषाधिकरणम्**)

(**१०२० आक्षेपवार्तिकम् ॥ ८ ॥**)

## ॥ * ॥ अन्तरङ्गं च ॥ * ॥

(**भाष्यम्**) **अन्तरङ्गं च बलीयो भवतीति वक्तव्यम्॥**

(**प्रदीपः**) **अन्तरङ्गं चेति**। अन्तर्मध्येऽङ्गानि निमित्तानि पारार्थ्याद्यस्य तदन्तरङ्गमित्युच्यते। एवं बहिरङ्गानि यस्य तद्बहिरङ्गम्। एतच्च न्यायसिद्धमेवानूदितम्। कार्यमित्यत्रार्हे कृत्यः। करणार्हं कार्यम्। तुल्यबलं च करणार्हमिति नित्यानित्योत्सर्गापवादान्तरङ्गबहिरङ्गेष्वस्य सूत्रस्याव्यापारः॥

(**उद्द्योतः**) अङ्गशब्दस्य मुख्यो योऽर्थस्तस्य प्रकृतेऽभावादाह—**अन्तर्मध्ये इति**॥ बहिरङ्गसमुदायस्य मध्येऽन्तर्भूतानीत्यर्थः॥ अङ्गशब्दस्य निमित्तेषु[१] प्रवृत्तौ निमित्तं दर्शयति—**पारार्थ्यादिति**। एवं चान्तर्भूतनिमित्तापेक्षमन्तरङ्गं बहिर्भूतनिमित्तापेक्षं च बहिरङ्गमिति भावः॥ **एतच्च न्यायेति**। स च न्यायोऽचः परस्मिन्नित्यत्र भाष्ये दर्शितः॥ **करणार्हं** करणयोग्यम्॥ **तुल्यबलं चेति**। यद्यपि विप्रतिषेधशब्देनेदमपि लब्धुं शक्यं तथापि तदेतदर्थबोधनेऽसमर्थमिति भावः। कदाचिल्लोके दुर्बलबलवतोरपि विरोधदर्शनात्॥ **नित्यानित्येति**। नित्यस्य बलवत्त्वबीजं तु कृताकृतप्रसङ्गित्वेनावश्यकत्वं। अन्तरङ्गं प्रथमं बुद्ध्यारोहतीति तत्काले बहिरङ्गानुपस्थितेस्तदेव प्रथमं प्रवर्तते॥ एवं च क्वचिद्भाष्ये परत्वान्नित्यत्वाच्चेत्यादौ परत्वादित्युक्तिरेकदेशिन इति बोध्यम्॥

(**अनुयोगभाष्यम्**)

**किं प्रयोजनम्॥**

(**१०२१ समाधानवार्तिकम् ॥ ९ ॥**)

## ॥ * ॥ प्रयोजनं यणेकादेशेत्वोत्त्वानि गुणवृद्धिद्विर्वचनाल्लोपस्वरेभ्यः ॥ * ॥

(**उदाहरणसमन्वयभाष्यम्**)

**गुणाद्यणादेशः—स्योनः स्योना। गुणश्च प्राप्नोति यणादेशश्च। परत्वाद्गुणः स्यात्। यणादेशो भवत्यन्तरङ्गतः॥**

(**प्रदीपः**) **स्योन इति**। सिवेर्बाहुलकान्नप्रत्यये कृतेऽपवादत्वाद्वलोपं बाधित्वा गुणात्पूर्वमन्तरङ्गत्वादूठ् भवति। तत्र कृतेऽन्तरङ्गत्वाद्यणा गुणो बाध्यते। बहिरङ्गस्याप्यूठो यणादेशे कर्तव्येऽसिद्धत्वं न भवति, नाजानन्तर्य इति वचनात्॥

(**उद्द्योतः**) **पूर्वमन्तरङ्गत्वादिति**। अन्तरङ्गत्वाभावेपि नित्यत्वेनोठ् सुसाध इत्युक्तं येन विधिरिति सूत्रे॥ इदमुदाहरणमुणादिषु व्युत्पत्तिपक्षवादिनां शाकटायनादीनां मते॥ **कृतेऽन्तरङ्गत्वादिति**। अन्तर्भूतनिमित्तकत्वरूपादित्यर्थः॥

(**उदाहरणसमन्वयभाष्यम्**)

**वृद्धेर्यणादेशः—द्यौकामिः स्यौकामिः। वृद्धिश्च प्राप्नोति यणादेशश्च। परत्वाद् वृद्धिः स्यात्। यणादेशो भवत्यन्तरङ्गतः॥**

(**प्रदीपः**) **द्यौकामिरिति**। ननु कृतयणादेशात्तद्धितोत्पत्तौ वृद्ध्या भाव्यमिति नास्ति युगपद्यण्वृद्ध्योः प्राप्तिः। एवं तर्ह्यकृतव्यूहाः **पाणिनीया** इति दिउकाम इ इति स्थिते अत्र यण्वृद्ध्योर्युगपत्प्रसङ्गः॥ अथवा द्यौकामिरिति पदं यदा विभज्यान्वाख्यायते—दिव्काम इ इति, तदा **दिव उदि**त्युत्त्वे कृते यण्वृद्धी प्राप्नुतः।

(**उद्द्योतः**) **युगपत्प्रसङ्ग इति**। अन्तरङ्गन्यायमनालोचयतः पूर्वपक्षिण इति शेषः॥ नन्वकृतव्यूहपरिभाषा नास्त्येव। किं च तद्विषये नान्तरङ्गन्याय इति भाष्यासंगतिरित्यत आह—**अथ**

१ 'अङ्गाधिकारे कथम्'। २ 'मेवोपपादि'।

१ 'निमित्ते प्रवृत्तौ'। 'निमित्तेषु वृत्तौ'।

चेति। एवं चानयैव सिद्धे समर्थानामित्यत्र समर्थग्रहणं न कार्यमित्यभिप्रायः॥

( उदाहरणसमन्वयभाष्यम् )

**द्विर्वचनाद्यणादेशः—दुद्यूषति सुस्यूषति। द्विर्वचनं च प्राप्नोति यणादेशश्च। नित्यत्वाद् द्विर्वचनं स्यात्। यणादेशो भवत्यन्तरङ्गतः।**

( प्रदीपः ) दुद्युषतीति। दिवेः सन्। सनीवन्तर्द्धेति पक्षे इडभावः। हलन्ताच्चेति कित्त्वम्। ऊडादेशः। तत्र यण् च प्राप्नोति द्विर्वचनं च। नित्यत्वाद्द्विर्वचनं स्यात्॥ एतद्भाष्यं दूषयन्ति–'द्विःप्रयोगो द्विर्वचनं षाष्ठिकं व्यवस्थापितम्। तत्र शब्दान्तरप्राप्त्या द्विर्वचनमनित्यं यण् तु नित्यः' इति वदन्तः॥

( उद्द्योतः ) स्थाने द्विर्वचनपक्षे यणोपि शब्दान्तरप्राप्त्याऽनित्यत्वं स्यादत आह—द्विःप्रयोग इति॥ वदन्त इति। कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताभ्युपगमे तु यणोपि नित्यतया परत्वाद्यणेव स्यादिति तेषामाशयः॥ अन्ये तु द्विःप्रयोगपक्षेपि द्वितीयः प्रयोगो द्विर्वचननिष्पाद्यः परं[१] एव। एवं च यस्य द्वित्वं न तस्य यण् तदनन्तरम्, किं तु द्वितीयस्य प्रयोगस्य। द्विर्वचनं तु यण्यपि कृते तस्यैव। नित्यशब्दवादे प्रयोगभेद एव शब्दभेदकः॥ एकप्रयोगे कृताकृतप्रसङ्ग्येव हि नित्यमिति भाष्याशयमाहुः॥

( उदाहरणविचारभाष्यम् )

**अल्लोपस्य च यणादेशस्य च नास्ति संप्रधारणा[२]।**

( प्रदीपः ) अल्लोपस्येति। ननु गाण्डीवधन्वनेत्यत्रास्ति संप्रधारणा। गाण्डीवधनु अन् आ इति स्थिते यदि पूर्वं यणादेशः ततो न संयोगाद्वमन्तादित्यल्लोपनिषेधाद्रूपं सिध्यति। अथ तु परत्वादल्लोपः स्यात्ततो यण् न स्यात्॥ एवं तर्हि नित्यत्वात्पूर्वमत्र यण् भवतीति मन्यते। कृतेप्यल्लोपे तस्य स्थानिवत्त्वाद्यणः प्राप्त्या नित्यत्वम्। यणि कृते नास्त्यल्लोपः प्रतिषेधादिति तस्यानित्यत्वम्॥

( उद्द्योतः ) तस्यानित्यत्वमिति। यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति काचित्कमिति भावः॥

( उदाहरणसमन्वयभाष्यम् )

**स्वराद्यणादेशः—द्यौकामिः स्यौकामिः। स्वरश्च प्राप्नोति यणादेशश्च। परत्वात्स्वरः स्याद्। यणादेशो भवत्यन्तरङ्गतः।**

( प्रदीपः ) द्यौकामिरिति। दि उ काम इ इति स्थिते यण् च प्राप्नोति ञ्नित्यादिर्नित्यमिति स्वरश्च। तत्र यदि पूर्वं स्वरः स्यात्तदोदात्तस्वरितयोर्यण इत्यौकारः स्वरितः स्याद्, उदात्तश्चेष्यते॥ द्युकाम इति पूर्वपदप्रकृतिस्वरोपि यणा अन्तरङ्गत्वाद्बाध्यते तथैव दिव उदित्युत्त्वेन च॥

( उद्द्योतः ) पूर्वपदप्रकृतीति। दिवि कामो यस्येति विग्रहे बहुव्रीहौ प्रकृत्येत्यनेनेत्यर्थः॥ ननूत्वे यण् इति ततः पूर्वमेव स्वरः स्यादत आह—तथैवेति।

( उदाहरणसमन्वयभाष्यम् )

**गुणादेकादेशः—काद्रवेयो मन्त्रमपश्यत्। गुणश्च प्राप्नोत्येकादेशश्च। परत्वाद्गुणः स्यात्। एकादेशो भवत्यन्तरङ्गतः।**

( प्रदीपः ) काद्रवेय इति। कद्रुशब्दात् संज्ञायामित्यूङि कृते स्त्रीभ्यो ढक् द्व्यच इति ढकि एयादेशे ढे लोपोऽकद्र्वा इति लोपप्रतिषेधादोर्गुण इति गुणश्च प्राप्नोत्येकादेशश्च॥ नन्वकृत एकादेशेऽप्रत्यय इति निषेधात् प्रातिपदिकत्वाभावात्तद्धित एव न स्यात्। कृते त्वेकादेशे तस्यान्तवद्भावात्प्रातिपदिकत्वात्तद्धितोत्पत्तिरित्यानुपूर्व्या सिद्धत्वादप्रयोजनमेतदित्याहुः। अत्रोच्यते—अकृतेप्येकादेशे नोङ्धात्वोरिति ढे लोपोऽकद्र्वा इति निषेधाच्च ज्ञापकाद्भविष्यति तद्धित इत्यदोषः॥

( उद्द्योतः ) स्त्रीभ्य इति। यदि कद्रूर्नागमाता तदाऽनेन। यदि काचन मानुषी तदाऽवृद्धाभ्य इत्यणि प्राप्ते तदपवादो द्व्यच इति। एकादेशात्पूर्वं द्व्यच्त्वाभावे स्त्रीभ्य इत्यनेनैव ढक् कद्र्वाश्च नागमातैवेत्युचितम्॥ ज्ञापकादिति। स्त्रीभ्यो ढगित्यादौ प्रातिपदिकादित्यस्यासंबन्धेन लिङ्गविशिष्टपरिभाषया वा सिद्धेर्ज्ञापकपर्यन्तानुधावनं किमर्थमिति चिन्त्यम्। अत एवैणेयादौ ढक्सिद्धिरित्याहुः। ज्ञापकमपि चिन्त्यम्। अन्तरङ्गं बलवदितेतज्ज्ञापनेन कृते एकादेशे तत्प्रवृत्त्या चारितार्थ्यसंभवात्॥

( उदाहरणसमन्वयभाष्यम् )

**वृद्धेरेकादेशः—वैक्ष्माणिः सौत्थितिः। वृद्धिश्च प्राप्नोत्येकादेशश्च। परत्वाद् वृद्धिः स्यात्। एकादेशो भवत्यन्तरङ्गतः॥**

( उद्द्योतः ) भाष्ये—परत्वाद्वृद्धिरिति। न च सा नित्या। शब्दान्तरप्राप्तत्वात्। इदमपि समर्थग्रहणप्रत्याख्यानतात्पर्यकम्॥

( उदाहरणसमन्वयभाष्यम् )

**द्विर्वचनादेकादेशः—श्राया ओदनः श्रौदनः श्रौदनमिच्छति श्रौदनीयति। श्रौदनीयतेः सन्। शुश्रौदनीयिषति। द्विर्वचनं च प्राप्नोत्येकादेशश्च। नित्यत्वाद् द्विर्वचनं स्यात्। एकादेशो भवत्यन्तरङ्गतः।**

( उद्द्योतः ) नित्यत्वाद् द्विर्वचनमिति भाष्ये। शब्दान्तरप्राप्त्याऽनित्यत्वं तु काचित्कमिति भावः॥

( उदाहरणसमन्वयभाष्यम् )

**अल्लोपादेकादेशः—शुना शुने। अल्लोपश्च प्राप्नो-**

१ अन्तरङ्गपरिभाषयैवेत्यर्थः। (र. ना.) २ अन्य एवेत्यर्थः। (र. ना.) ३ अन्तरङ्गत्वविषयको विचार इत्यर्थः। नाजानन्तर्ये इति निषेधादिति भावः। (र. ना.) ४ 'एकानवकाशत्वेन विप्रतिषेधाप्रसक्तेरिति वदन्ति।' इति काचित्कपाठस्तु प्रकृतानुपयुक्त एव। ५ एतस्यैव ज्ञापनेनेत्यर्थः। (र. ना.) ६ 'वैक्ष्यमाणि'।

**त्येकादेशश्च । परत्वादल्लोपः स्यात् । एकादेशो भवत्यन्तरङ्गतः ॥**

( प्रदीपः ) **शुनेति** । नतु श्वयुवेति सम्प्रसारणे कृते तस्यासिद्धवदत्रेत्यसिद्धत्वान्न **संयोगाद्वमन्तादिति** निषेधादल्लोपस्य नास्ति प्राप्तिः । एवं तर्हि **प्राग्भादित्यसिद्धत्वमा**श्रित्यैतदुक्तम् ॥

( उद्योतः ) **एवं तर्हीति** । तस्य श्वसोरल्लोप इति तपरकरणेनानित्यत्वादनाश्रयणमिति वक्तुं युक्तम् ॥ वार्णादाङ्गमित्यप्यनित्यत्वान्नाश्रितम् । न चान्तरङ्गपरिभाषाया अप्याभीयत्वेन तद्दृष्ट्या बहिरङ्गस्यासिद्धतया सर्वथा नेदमुदाहरणमिति वाच्यम् । वाह ऊठ्सूत्रज्ञापितासिद्धपरिभाषाया आभीयत्वेऽप्यन्तरङ्गं बलीय इत्यस्यात्रत्वे मानाभावात् । धर्मिग्राहकमानेन तां प्रति बहिरङ्गस्याभीयासिद्धत्वाप्रवर्तनाच्चेति दिक् ॥

( प्रयोजननिराकरणभाष्यम् )

**नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषः अल्लोपेन वा निवृत्तौ सत्यां, पूर्वत्वेन वा ॥**

( प्रदीपः ) प्रयोजनप्रत्याख्यानवाद्याह—**नैतदस्तीति** ॥

( प्रयोजनाङ्गीकरणभाष्यम् )

**अयमस्ति विशेषः, अल्लोपेन निवृत्तौ सत्यामुदात्तनिवृत्तिस्वरः प्रसज्येत ॥**

( प्रदीपः ) प्रयोजनवाद्याह—**अयमस्तीति** ॥

( उद्योतः ) भाष्ये—**उदात्तनिवृत्तिस्वरः** । अनुदात्तस्य च यत्रोदात्तलोप इत्यनेन ।

( प्रयोजननिराकरणभाष्यम् )

**नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति । किं कारणम् ?। "न गोश्वन्साववर्ण" इति प्रतिषेधात् ॥**

( प्रदीपः ) प्रत्याख्यानवाद्याह—**नात्रेति** ॥

( उद्योतः ) न गोश्वन्निति । गवादिभ्यः परस्योदात्तत्वं नेत्यर्थः ॥

( प्रयोजनाङ्गीकरणभाष्यम् )

**नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः । कस्य तर्हि ?। तृतीयादिस्वरस्य ॥ यत्र तर्हि तृतीयादिस्वरो नास्ति शुनः पश्येति ।**

( प्रदीपः ) प्रयोजनवाद्याह—**नैष इति** ॥ स एवाह—**यत्र तर्हीति** । यत्र पुनरित्यर्थः ॥ **शुनः पश्येति** । अत्र हि **न गोश्वन्** इति प्रतिषेधाभावादल्लोपे सत्युदात्तनिवृत्तिस्वरप्रसङ्गः । तस्मात् पूर्वमेकादेश एष्टव्यः ॥

( उद्योतः ) **तृतीयादिस्वरस्य** सावेकाच इति विहितस्य ॥ आनन्तर्यात्, तृतीयादिर्विभक्तिरित्यनुवर्तनाच्चेति भावः । एवं च सत्यल्लोपे उदात्तनिवृत्तिस्वरः स्यादिति प्रयोजनवाद्याशयः ॥ इति उत्तरो यत्र तर्हीत्यादिग्रन्थो ग्रन्थच्छायया प्रत्याख्यानवादिन इति भाति, तत्तु न युक्तम् । तृतीयादिविभक्त्यभावेन **न गोश्वन्नि**त्यस्याप्रसक्तेरुदात्तनिवृत्तिस्वरो निष्प्रत्यूह इति फलभेदोपसंहारस्य तदपलापकप्रत्याख्यानवादिविरुद्धत्वादत आह—**स एवेति** । अयं भावः—तृतीयादिस्वानिकस्य लक्षणविशेषानादरेण सर्वस्य निषेध इत्याशङ्क्योदाहरणान्तरदानमिति ॥ नन्वेवं **तर्हि**शब्दो न युक्त इत्यत आह—**पुनरिति** । चेत्यर्थः । एतदर्थमेव तत्तदुक्तित्वेनादित आन्तं तद्योजनमिति बोध्यम् ॥

( प्रयोजननिराकरणभाष्यम् )

**एवं तर्हि न लाक्षणिकस्य प्रतिषेधं शिष्मः । किं तर्हि ? येन केन चित्प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधः ।**

( प्रदीपः ) प्रत्याख्यानवाद्याह—**एवं तर्हीति** ॥

( उद्योतः ) भाष्ये—**न लाक्षणिकस्येति** । तृतीयादिशब्दविशेषमुपादाय विहितस्येत्यर्थः ॥ भाष्ये—**विभक्तिस्वरस्येति** । तृतीयादिरिति नानुवर्तते, विभक्तिरित्येव । एवं च शुन इत्यादावपि नास्ति फलभेद इत्यर्थः ॥

( प्रयोजनाङ्गीकारभाष्यम् )

**यत्र तर्हि विभक्तिर्नास्ति बहुशुनीति ॥**

( प्रदीपः ) प्रयोजनवाद्याह—**यत्र तर्हीति । बहुशुनीति । बहोर्नञ्वदुत्तरपदभूम्नीत्यन्तोदात्तत्वस्यान्ङीपि** कृतेऽल्लोपे क्रियमाण उदात्तनिवृत्तिस्वरः स्यात् ॥

( उद्योतः ) ननु बहुश्वन्शब्दस्य बहुव्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वादुदात्तनिवृत्तिस्वराप्राप्तिरत आह—**बहोरिति** । प्रत्याख्यानवादिनाऽल्लोपस्यैवेष्टत्वेन तद्रीत्या उन उपधेत्यस्य प्राप्तिं मत्वा बहुशुनीत्युदाहृतम् ॥

( प्रयोजननिराकरणभाष्यम् )

**यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत ॥**

( प्रदीपः ) प्रत्याख्यानवाद्याह—**यदि पुनरिति** ॥

( उद्योतः ) भाष्ये—**यदि पुनरिति** । विभक्तिग्रहणमपि नानुवर्तते इति भावः ॥

( प्रयोजनाङ्गीकारभाष्यम् )

**नैवं शक्यम् । इहापि प्रसज्येत कुमारीति ॥**

( प्रदीपः ) प्रयोजनवाद्याह—**नैवं शक्यमिति** । कुमारशब्दः साववर्णान्त इति ङीप उदात्तस्वरो न स्यात् ॥

( उद्योतः ) **कुमारशब्द इति** । तस्माद्विभक्तिग्रहणमनुवर्तते, तथाच बहुशुनीत्यत्रोदात्तनिवृत्तिस्वरः स्यादिति भावः ॥

( प्रयोजननिराकरणभाष्यम् )

**एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति—नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति । यदयं श्वन्शब्दं गौरादिषु पठति अन्तोदात्तार्थं यत्नं करोति । सिद्धं हि स्यान्ङीपैव ॥**

---

१ आभादिति पाठे अभिविधावाङिति भावः । ( र. ना. ) २ आभाच्छास्त्रस्येत्यर्थः । ( र. ना. ) ३ आस्तामित्यादौ आटो लोपवारणाय कृतेनेति शेषः । ( र. ना. ) ४ अनन्तरस्य विधिर्वेति न्यायादिति भावः । ( र. ना. )

५ Bangal Asiatic Society मुद्रितपुस्तके 'ननु "एवं तर्हि" शब्दो' इति पाठशोधनं तु शोधकभाष्यादर्शनमूलकमेवेति बोध्यम् । ६ अन्तमभिव्याप्येत्यर्थः । ( र. ना. )

(प्रदीपः) प्रत्याख्यानवाद्याह—एवं तर्हीति। शुनीत्यत्र ङीप उदात्तनिवृत्तिस्वरस्य सिद्धत्वात्किं ङीष्विधानेनेत्यर्थः। तदेवमल्लोपादेकादेशस्य स्वरार्थत्वं दूषितम्, प्रयोजनान्तरं त्वस्त्येव। यद्यत्राल्लोपो भवति तदाऽन उपधालोपिन इति ङीपि सति बहुशुनीति भवति। यदा त्वेकादेशेनाल्लोपो बाध्यते तदोपधालोपित्वाभावान्ङीन्नभावाद्बहुश्वेति। गौरादिलक्षणो ङीष् नास्ति। अनुपसर्जनादित्यधिकारात्। भाष्ये तु बहुशुनीति प्रत्याख्यानवादिमतेनोपन्यस्तम्। तत्पक्षे किल ङीपा भाव्यमिति। न्यायमूलं चेदमन्तरङ्गं बलीय इति। न च न्यायस्यात्र केनचिद्बाधोऽस्तीति बहुश्वेत्येव भाव्यमिति न्यायविद आहुः॥

(उद्द्योतः) बहुश्वेतीति। डाबुभाभ्यामिति डापि तदभावे चेति भावः॥ नन्वेवं प्रयोजनवादिग्रन्थे बहुशुनीत्ययुक्तमत आह—भाष्ये त्विति। ननु प्रत्याख्यानान्ततयैवात्रत्यग्रन्थपर्यवसानात् असिद्धवत्सूत्रस्थैतदानुपूर्वीकभाष्याच्च बहुशुनीति भगवत इष्टमिति भ्रमं वारयति—न्यायेत्यादिना॥ ननु भाष्यमेव न्यायबाधकमस्त्वित्यत आह—न्यायविद इति। भाष्यस्योदात्तनिवृत्तिस्वरकृतस्वरवैलक्षण्यपरिहारमात्रतात्पर्यकतया न न्यायबाधकत्वम्। डाबुभाभ्यामितिसूत्रस्थभाष्यरीत्या बहुश्वेत्येव भाष्यसंमतमिति भावः। न चाल्लोपे सति तस्य स्थानिवत्त्वाण्ण् स्यादिति कुतो नापादितः। यूनस्तिः शुनः पुच्छेत्यादिनिर्देशैर्वारणसंभवात्॥ वस्तुतो लोपे सर्वानुदात्तं शुनेति प्राप्नोति पूर्वरूपे त्वेकादेशस्वरेणाद्युदात्तमित्यपि विशेषो बोध्यः॥

(उदाहरणसमन्वयभाष्यम्)

**स्वरादेकादेशः। सौत्थितिः वैक्षमाणिः। स्वरश्च प्राप्नोत्येकादेशश्च। परत्वात्स्वरः स्यात्। एकादेशो भवत्यन्तरङ्गतः।**

(प्रदीपः) सौत्थितिरिति। सु उत्थित इ इति स्थिते यद्यत्र पूर्वमुकारस्योदात्तत्वं स्यात् तदा स्वरितो वानुदात्ते पदादाविति पक्षे स्वरितत्वं प्रसज्येत। पूर्वं त्वेकादेशे कृते नित्यमाद्युदात्तमेतद्भवति।

(उद्द्योतः) ननु पूर्वमुदात्तत्वेपि तदेकादेशस्यैकादेश उदात्तेनेत्यनेनोदात्तत्वे इष्टसिद्धेराह—तदेति। नित्यमिति। ञ्नित्यादिरित्यनेनेति भावः। एतदपि प्रयोजनं समर्थग्रहणप्रत्याख्यानाभिप्रायेण॥

(उदाहरणविचारणाभाष्यम्)

**गुणस्य चेत्त्वौत्त्वयोश्च नास्ति संप्रधारणा॥**

(प्रदीपः) गुणस्येति। परत्वाद्धि गुणेन भाव्यम्॥

(उद्द्योतः) परत्वाद्धीति। इदं वस्तुतत्त्वकथनं, न तु संप्रधारणाऽभावे हेतुः। स तूभयोरपि बहिर्भूतप्रत्ययापेक्षत्वेन समत्वेनान्तरङ्गत्वाभाव इति बोध्यम्।

(उदाहरणसमन्वयभाष्यम्)

**वृद्धेरित्त्वोत्त्वे। स्तैर्णिः पैर्तिः। वृद्धिश्च प्राप्नोतीत्त्वोत्त्वे च। परत्वाद् वृद्धिः स्याद्, इत्त्वोत्त्वे भवतोन्तरङ्गतः॥**

(प्रदीपः) स्तैर्णिरिति। विभज्यान्वाख्याने स्तृत इ इति स्थितेऽन्तरङ्गत्वादित्त्वं ततो वृद्धिः।

(उद्द्योतः) ननु स्तीर्णशब्दादिञि न दोषोऽत आह—विभज्येति।

(उदाहरणसमन्वयभाष्यम्)

**द्विर्वचनादित्त्वोत्त्वे। आतेस्तीर्यते आपोपूर्यते। द्विर्वचनं च प्राप्नोतीत्त्वोत्त्वे च। नित्यत्वाद् द्विर्वचनं स्यात्। इत्त्वोत्त्वे भवतोऽन्तरङ्गतः।**

(उद्द्योतः) भाष्ये—इत्त्वोत्त्वे भवतोऽन्तरङ्गत इति। अत्रैकाच्त्वानभ्यासत्वप्रथमत्वादिबहूपाध्यपेक्षत्वेन द्वित्वस्य बहिरङ्गत्वं बोध्यम्। इदं प्रयोजनमेकदेशयुक्तिः। द्वयोर्नित्यत्वेऽनित्यत्वे वा परत्वादित्त्वादिसिद्धेः। यद्वन्तस्य द्वित्वेन तस्यापरनिमित्तकत्वेनान्तरङ्गत्वाच्चेत्यन्ये॥

(उदाहरणविचारभाष्यम्)

**अल्लोपस्य चेत्त्वोत्त्वयोश्च नास्ति संप्रधारणा। स्वरे नास्ति विशेषः॥**

(प्रदीपः) स्वर इति। स्तैर्णिरिति यदि पूर्वं स्वरः तत इत्त्वं तथाप्यान्तरतम्यादुदात्तत्वं सिद्ध्यति॥

(उद्द्योतः) स्वरेणापीत्त्वोत्त्वयोर्नास्ति संप्रधारणेत्याह—स्वरे नास्तीति॥

(१०२२ प्रयोजनवार्तिकम्॥ १०॥)

**॥ * ॥ इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात्॥ * ॥**

(भाष्यम्) इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात् प्रयोजनम्। अयज इन्द्रम् अवप इन्द्रम्। वृक्षइन्द्रं प्लक्षइन्द्रं। तइन्द्रं यइन्द्रम्। आद् गुणश्च प्राप्नोति सवर्णदीर्घत्वं च। परत्वात्सवर्णदीर्घत्वं स्यात्। आद्गुणो भवत्यन्तरङ्गतः।

(१०२३ प्रयोजननिराकरणवार्तिकम्॥ ११॥)

**॥ * ॥ न वा सवर्णदीर्घत्वस्यानवकाशत्वात्॥ * ॥**

(भाष्यम्) न वा एतदन्तरङ्गेणापि सिद्ध्यति। किं कारणम्?। सवर्णदीर्घत्वस्यानवकाशत्वात्। अनवकाशं सवर्णदीर्घत्वमाद्गुणं बाधेत॥

(प्रदीपः) न वेति। दण्डाग्रमित्याद्गुणः प्राप्नोति। कुमारी ईहत इत्यादौ यणादेश इत्यवश्यं सवर्णदीर्घत्वेन विध्यन्तरं बाध्यम्।

(उद्द्योतः) ननु कुमारीहते दण्डाग्रमित्यादौ सावकाशं दीर्घत्वमत आह—दण्डाग्रमिति। एवं च यण्गुणाभ्यां सर्वविष-

१ सोत्कारस्य ञ्नित्यादिर्नित्यमित्यनेनेति भावः। (र. ना.)

यथ्याप्तेरवश्यं विध्यन्तरे बाध्ये बाध्यसामान्यचिन्तयाऽगृह्यमाणविशेषत्वात्सर्वं बाध्यमित्यर्थः ॥

( प्रयोजनाङ्गीकरणभाष्यम् )

**नैतदन्तरङ्गेऽस्ति—अनवकाशं, परमिति । इहापि स्योनः स्योनेति शक्यं वक्तुम् । न वा परत्वाद् गुणस्येति ।**

( प्रदीपः ) **नैतदिति ।** एकनिमित्तप्राप्तविध्यन्तरबाधनेन सावकाशः सवर्णदीर्घोऽन्तरङ्गं बाधितुं न शक्नोतीति भावः । निरवकाशेन तु विध्यन्तरेण सावकाशोऽन्तरङ्गोऽपि विधिर्बाध्यते यथा **गोत्रेऽलुगचीत्यलुका लुक् ॥ न वा परत्वादिति ।** यथा त्वत्र परत्वेन न व्यवस्था, अपि त्वन्तरङ्गत्वेन, तथा आद्गुणोऽपि समानकक्ष्यो दीर्घेण बाध्यते न त्वन्तरङ्ग इति भावः ॥

( उद्द्योतः ) अन्तरङ्गादपि निरवकाशस्य बलवत्त्वेन नैतदन्तरङ्ग इत्यनुपपन्नमत आह—**एकनिमित्तेति** । एकस्थानिकेत्यपि बोध्यम् । एवं च स्वसमाननिमित्तकेन स्वसमानस्थानिकेनैव च येन नाप्राप्तिन्यायो न तु विभिन्नस्थानिनिमित्तकेनापीति न तद्बाध इति भावः ॥ यस्तु सर्वथाऽनवकाशः स बाधक एवेत्याह—**निरवकाशेनेति ।** एकस्थानिनिमित्तकेनेत्यर्थः । बहिर्भूताजादिप्रत्ययापेक्षत्वादलुक् बहिरङ्गः ॥ भाष्ये—**इहापीति** । यद्यन्तरङ्गेऽपीदं स्यात् तर्हि तत्राप्यन्तरङ्गत्वाद्गुण् न स्यात् गुणस्य परत्वादिति बाधकतर्केण समाननिमित्तकमेव निरवकाशपराभ्यां बाध्यत इति द्रढितम् ॥ फलितमाह—**यथा त्विति** ॥

( १०२४ प्रयोजनवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ ऊङापोरेकादेश ईत्त्वलोपाभ्याम् ॥ * ॥

( उदाहरणसमन्वयभाष्यम् )

**ऊङापोरेकादेश ईत्त्वलोपाभ्यां भवत्यन्तरङ्गतः॥ प्रयोजनम् । ईत्त्वादेकादेशः । खट्वीयति मालीयति । ईत्त्वं च प्राप्नोत्येकादेशश्च । परत्वादीत्त्वं स्याद् । एकादेशो भवत्यन्तरङ्गतः ॥**

( प्रदीपः ) **खट्वीयतीति ।** खट्व आ य इति स्थिते यदि पूर्वमीत्त्वं स्यात् तत आद्गुणः प्रसज्येत ॥ नन्वाकारस्य कृते ईत्त्वे यस्येति लोपो भविष्यति । नैतदस्ति । **पूर्वविधावितीत्त्वस्य** स्थानिवद्भावात् ॥

( उद्द्योतः ) ननु खट्वाशब्दे सुबुत्पत्तेः प्रागेवैकादेशोऽत आह—**खट्व आ इति ।** विभज्यान्वाख्याने दोषः ॥ सुप्सु लिङ्गविशिष्टपरिभाषयेति भावः ॥ **लोप इति ।** खट्वाशब्दाकारस्येत्यर्थः ॥

( उदाहरणसमन्वयभाष्यम् )

**लोपादेकादेशः—कामण्डलेयः । माद्रबाहेयः । लोपश्च प्राप्नोत्येकादेशश्च । परत्वाल्लोपः स्याद् । एकादेशो भवत्यन्तरङ्गतः ॥**

( आक्षेपभाष्यम् )

**अथ किमर्थम् 'ईत्त्वलोपाभ्याम्' इत्युच्यते, न 'लोपेत्त्वाभ्याम्' इत्येवोच्येत ? ।**

( प्रदीपः ) **न लोपेत्त्वाभ्यामिति ।** ऊङ ईत्त्वासंभवादयं क्रमोऽयुक्त आश्रयितुमिति भावः ॥ यद्यप्यजाद्यदन्तमिति ईत्त्वशब्दस्य पूर्वनिपातो न्याय्यः । तथापि लक्षणे प्रायेणासौ नाद्रियते ॥

( उद्द्योतः ) नन्वजाद्यदन्तत्वादीत्त्वशब्दस्यैव पूर्वनिपातो युक्तोऽत आह—**ऊङ इति । न्याय्य इति ।** शास्त्रीयत्वात् क्रमबाधोऽपि सोढव्य इति भावः ॥ **लक्षणे इति । अग्निकवाढयोर्निर्दृ**साधावित्यादिनिर्देशैः क्रमानुसारस्य सर्वपूर्वनिपातविधिभ्यो बलवत्त्वज्ञापनादिति भावः ॥

( समाधानभाष्यम् )

**संख्यातानुदेशो मा भूदिति ॥**

( उद्द्योतः ) भाष्ये—**संख्यातानुदेश इति** । ननु नात्र यथासंख्यसूत्रप्राप्तिस्तस्य विध्यङ्गत्वाद्, नापि स्थानाख्यप्रमाणस्य, समासनिर्देशादिति चेन्न । अनूद्यमानयोरपि तत्प्रवृत्तेरिष्टत्वादिति भावः ॥

( समाधानसाधकभाष्यम् )

**आपोऽप्येकादेशो लोपे प्रयोजयति—चौडिः बालाकिः ।**

( प्रदीपः ) **चौडिरिति ।** पूर्वमाकारलोपे सति तस्य स्थानिवत्त्वादसिद्धत्वाद्वाकारलोपाभावादाद्गुण इति गुणस्य प्रसङ्गः ॥

( उद्द्योतः ) **असिद्धत्वाद्वेति ।** चिणोलुङ्न्यायेनात्राभीयासिद्धत्वं बोध्यम् ॥

( १०२५ प्रयोजनवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ आत्त्वनपुंसकोपसर्जनह्रस्वत्वान्ययवायावेकादेशतुग्विधिभ्यः ॥ * ॥

(भाष्यम्) **आत्त्वनपुंसकोपसर्जनह्रस्वत्वानि अयवायावेकादेशतुग्विधिभ्यो भवन्त्यन्तरङ्गतः । वेञ् वानीयम् । शो शानीयम् । ग्लै ग्लानीयम् । म्लै म्लानीयम् । ग्लाछत्रम् । म्लाछत्रम् । आत्त्वं च प्राप्नोत्येते च विधयः । परत्वादेते विधयः स्युः । आत्त्वं भवत्यन्तरङ्गतः ॥**

( प्रदीपः ) **ग्लानीयमिति ।** विभज्यान्वाख्याने ग्लै अनीय इति स्थितेऽनैमित्तिकत्वादात्त्वमन्तरङ्गं भवति । **ग्लाछत्रमिति** ग्ला म्ला इति क्विबन्तम् । अत्रापि तथा विभज्यान्वाख्याने ग्लै छत्रमिति स्थिते यदि पूर्वं तुक् स्यात्तदैजन्तत्वाभावात् ।

१ न तु क्रमिकान्वाख्याने । एकादेशप्रवृत्तिसमये क्यचोऽभावादिति भावः । ( र. ना. ) २ प्रातिपदिकत्वमादायेति शेषः । ( र. ना. ) ३ 'काद्रवेयः' । ४ बाह्वन्तात् संज्ञायामिति भद्रबाहुशब्दादूङ् । स्त्रीभ्यो ढक् । एकादेशे कृते ढे लोपोऽकद्र्वा इत्यूकारलोपः । काद्रवेय इति पाठस्तु असंगतः । लोपा-

मावात् । ( र. ना. ) ५ अन्यथाऽजाद्यदन्तमित्येतत्परत्वाद्बाधित्वा अल्पाच्तरमित्यनेन बाढशब्दस्यैव पूर्वनिपातः स्यादिति भावः । ( र. ना. ) ६ समासे हि 'अजाविधनौ देवदत्तयज्ञदत्तौ'इत्यादौ न ज्ञायते कस्याजाधनं कस्यावय इतीति भावः । ( र. ना. ) ७ 'ऊत्वाचाका' ।

वादात्त्वं न स्याद् यथा ढौकितेति ॥ उपदेशग्रहणानपेक्षया चैतदुदाहरणम् ॥

( उद्द्योतः ) ननूपदेशे आत्त्वमनैमित्तिकमयादयस्तु प्रत्ययोत्पत्त्यनन्तरभाविन इति संप्रधारणाभावादाह—विभज्येति । अशितीति प्रसज्यप्रतिषेध इति भावः ॥ क्विबन्तमिति । कर्तरि क्विबन्तेन षष्ठीसमास इत्यर्थः ॥ नपेक्ष्येति । एवं चैतत्प्रयोजनमेकदेश्युक्तिरिति भावः ॥

( उदाहरणसमन्वयभाष्यम् )

**नपुंसकोपसर्जनह्रस्वत्वं च प्रयोजनम्। अतियंत्र। अतिन्वत्र। अतिरिच्छत्रम्। अतिनुच्छत्रम्। आराशस्त्रीदम्। धानाशष्कुलीदम्। निष्कौशाम्बीदम्। निर्वाराणसीदम्। निष्कौशाम्बिच्छत्रम्। निर्वाराणसिच्छत्रम्। नपुंसकोपसर्जनह्रस्वत्वं च प्राप्नोत्येते विधयश्च। परत्वादेते विधयः स्युः। नपुंसकोपसर्जनह्रस्वत्वं भवत्यन्तरङ्गतः॥**

( प्रदीपः ) अतियंत्रेति । अतिरै अत्र इति स्थिते आयादेशे सत्यनजन्तत्वाद्ध्रस्वो न स्यात् ॥ आराशस्त्रीदमिति । आराशस्त्री इदमिति स्थिते यद्यत्र पूर्वमेकादेशः स्यात्तदा तस्यान्तवद्भावाद् ह्रस्वे कृते रूपं न सिद्ध्येत् ॥

( उद्द्योतः ) अन्तवदिति । नपुंसकमिति नपुंसकत्वस्यापि शास्त्रीयत्वादतिदेश इति भावः ॥

( १०२६ प्रयोजनवार्तिकम् ॥ १४ ॥ )

**॥ * ॥ तुग्यणेकादेशगुणवृद्ध्यौत्त्वदीर्घेत्त्वमुमेत्त्वरीविधिभ्यः ॥ * ॥**

**यणेकादेशगुणवृद्ध्यौत्त्वदीर्घत्वेत्त्वमुमेत्त्वरीविधिभ्यस्तुग् भवत्यन्तरङ्गतः। यणादेशात्—[१]अग्निचिदत्र। सोमसुदत्र॥ एकादेशात्—अग्निचिदिदम्। सोमसुदुदकम्॥ गुणात्—अग्निचिते सोमसुते॥ वृद्धेः—प्रऋच्छकः प्राच्छकः॥ औत्त्वात्—अग्निचिति सोमसुति॥ दीर्घत्वात्—जगद्भ्याम्। जनगद्भ्याम्॥ ईत्त्वात्—जगत्यति जनगत्यति॥ मुमः—अग्निचिन्मन्यः सोमसुन्मन्यः॥ एत्त्वात्—जगद्भ्यः जनगद्भ्यः॥ रीविधेः—सुकृत्यति पापकृत्यति॥ [तुक् च प्राप्नोत्येते विधयश्च। परत्वादेते विधयः स्युः। तुग्भवत्यन्तरङ्गतः]॥**

( प्रदीपः ) अग्निचिदत्रेति । पदसमुदायस्य विभज्यान्वाख्याने अग्निचि अत्र इति स्थिते यदि पूर्वं यण् स्यात् तदा तुङ् न स्यात् । नपुंसकं चात्राग्निचि इति द्रष्टव्यम् । पुंसि विभक्त्या व्यवधानात् ॥

( उद्द्योतः ) पदसमुदायस्येति । पदस्य पदादित्यादौ पदसमुदायस्याप्यन्वाख्यानदर्शनादिति भावः ॥ पुंसि विभक्त्येति । न च सुबपेक्षया परत्वात्प्रथमं तुगिति कथं सुपा व्यवधानोक्तिरिति वाच्यम् । अग्निचिते इत्यादौ गुणतुकोः संप्रधारणाया अग्रे भाष्ये कृतत्वेन तुकः पूर्वमन्तरङ्गत्वाद्विभक्ति सिद्धवत्कल्पैवास्य भाष्यस्य प्रवृत्तिरित्याशयात् ॥ भाष्ये प्रऋच्छकः प्राच्छक इति । परत्वतुकोरित्यनपेक्ष्येदम् ॥ बहिरङ्गत्वेनापि सिध्यति । नाजानन्तर्ये इति तु नास्त्येवेत्यभिप्रायः ॥

( १०२७ प्रयोजनवार्तिकम् ॥ १५ ॥ )

**[॥ * ॥ अनङानङ्भ्यां च ॥ * ॥]**

**( भाष्यम् ) अनङानङ्भ्यां चेति वक्तव्यम् ॥ अनङ्—सुकृत् । आनङ्—सुकृद्दुष्कृतौ । [तुक् प्राप्नोति अनङानङौ च । परत्वादनङानङौ स्याताम् । तुग्भवत्यन्तरङ्गतः ॥]**

( प्रदीपः ) सुकृद्दुष्कृताविति । कथं पुनरत्रानङ् प्राप्नोति । यावता विद्यायोनिसंबन्धवाचिनामृदन्तानां द्वन्द्वे स विहित इति चिन्त्यमेतत् ॥

( उद्द्योतः ) चिन्त्यमेतदिति । सुकृदादिशब्दयोः प्रकरणादिना यदा ऋत्विग्विशेषे पर्यवसानं तदेदमुदाहरणमित्याहुः ॥

( १०२८ प्रयोजनवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ इयङादेशो गुणात् ॥ * ॥**

**( भाष्यम् ) इयङादेशो गुणाद्भवत्यन्तरङ्गतः । प्रयोजनम् । धियति रियति । इयङादेशः प्राप्नोति गुणश्च । परत्वाद्गुणः स्यात् । इयङादेशो भवत्यन्तरङ्गतः ॥**

( प्रदीपः ) धियतीति । धि धारणे तिपि शे कृते तिबाश्रयो गुणः प्राप्नोति । विकरणाश्रय इयङ् भवत्यन्तरङ्गत्वात् ॥

( उद्द्योतः ) ननु शस्य ङित्त्वाद्गुणस्य कथं प्राप्तिर्द्वयोरप्येकनिमित्तत्वेनान्तरङ्गत्वाद्यभावश्चेत्यत आह—तिबाश्रय इति । गुणो, लघूपधगुणः ॥

( १०२९ प्रयोजनवार्तिकम् ॥ १७ ॥ )

**॥ * ॥ उवङादेशश्च ॥ * ॥**

**( भाष्यम् ) उवङादेशश्चेति वक्तव्यम् । प्रादुद्धुवत् । प्रासुसुवत् ।**

---

१ तदपेक्षायां तु तुकि सत्यपि उपदेशे एजन्तत्वमादायात्वप्रवृत्तिः स्यादेवेति भावः । ( र. ना. ) २ अयं च कोष्ठकान्तर्गतः पाठोऽत्र क्वापि पुस्तके नोपलभ्यते । किं तु 'आनङ्—सुकृद्दुष्कृतौ' इत्यस्याग्र एवोपलभ्यते । ३ अपरनिमित्तकत्वेनेति शेषः । ( र. ना. ) ४ अपिना परत्वतुकोरित्यसिद्धत्वसमुच्चयः । ( र. ना. ) ५ बहिरङ्गपरिभाषाया अनित्यत्वेनैव तत्फलसिद्धेरिति भावः । ( र. ना. ) ६ अयं कोष्ठकान्तर्गतः पाठः क्वापि पुस्तके नोपलभ्यते । ७ अयं कोष्ठकान्तर्गतः पाठोऽत्र केष्वपि पुस्तकेषु नोपलभ्यते किंतु पूर्ववार्तिकभाष्यशेषे कोष्ठकमध्यदर्शित एव । तथाप्यस्माभिर्योग्यतयाऽत्रत्यपाठस्तत्र वर्धितः । अत्र च कोष्ठकमध्ये वर्धित इति क्षन्तव्यम् । ८ 'ऋकारान्तानां' । ९ अयं कोष्ठकान्तर्गतः पाठः क्वापि पुस्तके नोपलभ्यते । १० इह—'उवङादेशः प्राप्नोति गुणश्च । परत्वाद् गुणः स्यात् । उवङ् भवत्यन्तरङ्गतः' ॥ इति पाठो भाष्ये त्रुटितो वा । किंचिद्गलयेन पूर्वपाठोऽध्याहार्य, इति सूचयितुं भाष्यकृतैव नोक्त इति न निश्चयः ।

( १०३० प्रयोजनवार्तिकम् ॥ १८ ॥ )

**॥ * ॥ श्वेः संप्रसारणपूर्वत्वं यणादेशात् ॥ * ॥**

( भाष्यम् ) श्वेः संप्रसारणपूर्वत्वं यणादेशाद् भवत्यन्तरङ्गतः ॥ प्रयोजनम्—शुशुवतुः । शुशुवुः । पूर्वत्वं च प्राप्नोति यणादेशश्च । परत्वाद्यणादेशः स्यात् । पूर्वत्वं भवत्यन्तरङ्गतः ॥

( प्रदीपः ) यणादेशश्चेति । परनेकाच इति यण् ॥

( उद्योतः ) एरिति । इको यणिति लियङ्गा बाधितमिति भावः । उस्थानिकयणस्तु पूर्वरूपमपवाद इति तात्पर्यम् ॥

( १०३१ प्रयोजनवार्तिकम् ॥ १९ ॥ )

**॥ * ॥ ह्व आकारलोपात् ॥ * ॥**

( भाष्यम् ) ह्व आकारलोपात् पूर्वत्वं भवत्यन्तरङ्गतः । प्रयोजनम्—जुहुवतुः जुहुवुः । पूर्वत्वं च प्राप्नोत्याकारलोपश्च । परत्वादाकारलोपः स्यात् । पूर्वत्वं भवत्यन्तरङ्गतः ॥

( प्रदीपः ) जुहुवतुरिति । ह्वा अतुस् । ह्वः सम्प्रसारणमभ्यस्तस्य चेति सम्प्रसारणे कृते यद्याकारस्य लोपः स्यात्तदा स्थानिवत्वाद्सिद्धवदत्राभादित्यसिद्धत्वाच्चोवङ् न स्यात् ॥

( उद्योतः ) यद्याकारेति । ननु कृदतिङ्सूत्रस्थाकररीत्या चिकीर्षतीत्यादावचः परस्मिन्निति स्थानिवत्त्वेन तुंगभाववद् जुहुवतुरित्यत्र पूर्वरूपेपि तस्य स्थानिवत्त्वादुवङोऽप्राप्तिरिति चेन्न । पूर्वस्य धातुत्वाभावेन तदुद्देश्यकविधेरभावादित्याहुः ।

( १०३२ प्रयोजनवार्तिकम् ॥ २० ॥ )

**॥ * ॥ स्वरो लोपात् ॥ * ॥**

( भाष्यम् ) स्वरो लोपाद्भवत्यन्तरङ्गतः । प्रयोजनम् । औपगवी । सौदामनी । स्वरश्च प्राप्नोति लोपश्च । परत्वाल्लोपः स्यात् । स्वरो भवत्यन्तरङ्गतः ।

( प्रदीपः ) औपगवीति । उपगोरियमित्यणि ङीपि च कृते यदि प्रत्ययाद्युदात्तत्वात्पिदनुदात्तत्वाद्वा पूर्वं लोपः स्यात्तदोदात्तनिवृत्तिस्वर ईकारस्य न स्यात् ॥

( उद्योतः ) उपगोरियमिति । अनन्तरापत्यमिति शेष इत्येके । गोत्राणि तु जातित्वान्ङीषेव स्यादिति न स्वरः प्रयोजनमिति भावः ॥ प्रत्ययाद्युदात्तत्वादिति । एतदणः ॥ पिदनुदात्तत्वाद्वेति ॥ एतन्ङीपः ॥ पिदनुदात्तत्वमप्युभयापेक्षलोपादन्तरङ्गमेवेति बोध्यम् ॥

( १०३३ प्रयोजनवार्तिकम् ॥ २१ ॥ )

**॥ * ॥ प्रत्ययविधिरेकादेशात् ॥ * ॥**

( भाष्यम् ) प्रत्ययविधिरेकादेशाद्भवत्यन्तरङ्गतः । प्रयोजनम्—अग्निरिन्द्रः वायुरुदकम् । प्रत्ययविधिश्च प्राप्नोत्येकादेशश्च । परत्वादेकादेशः स्यात् । प्रत्ययविधिर्भवत्यन्तरङ्गतः ॥

( प्रदीपः ) अग्निरिन्द्र इति । यद्यपि प्रत्ययरहितायाः प्रकृतेः प्रयोगो नास्ति तथापि वाक्यस्य विभज्यान्वाख्याने क्रियमाणेऽयं विचारः क्रियते । यद्यपि प्रत्ययस्य नित्यत्वं तथाप्यन्तरङ्गत्वेनैव सिद्धत्वाच्च तदाश्रितम् ॥

( उद्योतः ) प्रत्ययस्येति । एकादेशेपि पूर्वान्तवत्त्वेन सुपः प्राप्तेस्तस्य नित्यत्वम् ॥

( १०३४ प्रयोजनवार्तिकम् ॥ २२ ॥ )

**॥ * ॥ यणादेशाच्च ॥ * ॥**

( भाष्यम् ) यणादेशाच्चेति वक्तव्यम् । अग्निरत्र वायुरत्र ॥

( १०३५ प्रयोजनवार्तिकम् ॥ २३ ॥ )

**॥ * ॥ लादेशो वर्णविधेः ॥ * ॥**

( भाष्यम् ) लादेशो वर्णविधेर्भवत्यन्तरङ्गतः । प्रयोजनम् । पचत्वत्र पठत्वत्र । लादेशश्च प्राप्नोति यणादेशश्च । परत्वाद्यणादेशः स्यात् । लादेशो भवत्यन्तरङ्गतः ।

( प्रदीपः ) पचत्वत्रेति । यद्यत्र पूर्वं यण् स्याद् अनल्विधाविति स्थानिवत्त्वनिषेधादुत्वं न स्यात् ॥

(उद्योतः) भाष्ये—परत्वाद्यणिति । शब्दान्तरप्राप्तेर्नित्यत्वं नोक्तम् । लादेशशब्देन लादेशस्थानिक आदेशस्तदाह—उत्वं नेति ॥

( १०३६ प्रयोजनवार्तिकम् ॥ २४ ॥ )

**॥ * ॥ तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरात् ॥ * ॥**

( भाष्यम् ) तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वराद्भवत्यन्तरङ्गः । प्रयोजनं पूर्वशालाप्रियः अपरशालाप्रियः । तत्पुरुषान्तोदात्तत्वं च प्राप्नोति पूर्वपदप्रकृतिस्वरत्वं च । परत्वात्पूर्वपदप्रकृतिस्वरत्वं स्यात् । तत्पुरुषान्तोदात्तत्वं भवत्यन्तरङ्गतः ।

( प्रदीपः ) पूर्वशालाप्रिय इति । पूर्वा शाला प्रिया अस्येति त्रिपदे बहुव्रीहौ कृते तद्धितार्थेति द्वयोः पदयोस्तत्पुरुषः । तत्र त्रिपदाश्रयबहुव्रीहिनिमित्तः पूर्वपदप्रकृति

१ संप्रसारणे कृते 'शु इ अतुस्' इत्यवस्थायामुकारेकारयोः पूर्वरूपे प्राप्ते । इकारस्य यणि प्राप्ते इति भावः । २ अयं भावः । कृदतिङ्त्यित्रातिङ् ग्रहणाभावे तिपः कृत्संज्ञायां चिकीर्षेत्यस्य धातुत्वेन 'ह्रस्वस्य पिति कृति तुगिति' तुगागमः स्यादित्याशङ्क्य सनकारशकारयोरेकादेशस्याचः परस्मिन्निति स्थानिवत्त्वेन शकारेण व्यवधानात्तुगागमो न भवतीति । ( र. ना. ) ३ स्थानिवत्त्वा-

प्रवृत्तेरिति शेषः । ( र. ना. ) ४ प्रकृतिप्रत्ययोभयेत्यर्थः । ( र. ना. ) ५ इतः परम्—'प्रत्ययविधिश्च प्राप्नोति । यणादेशश्च । परत्वाद्यणादेशः स्यात् । प्रत्ययविधिर्भवत्यन्तरङ्गतः ॥' इति भाष्ये लेखकप्रमादेन त्रुटितं वा भाष्यकृता स्वयमेव नोक्तमिति न जानीमः । ६ लादेश तिप् स्थानिकः तुरादेशः इत्यर्थः । ( र. ना. )

स्वरो बहिरङ्गत्वान्न प्रवर्तते। तेन तत्पुरुषसमासाश्रयं शाला-शब्दस्यान्तोदात्तत्वं भवति। पूर्वशब्दः **स्वाङ्गशिटामदन्ता-नामित्याद्युदात्तः**।

( **उद्योतः** ) **तत्रेति**। यद्यपि सति शिष्टत्वादिदं सिद्धं तथा-प्यन्तरङ्गन्यायादपीष्टसिद्धिरिति भावः।

**( उपसंहारभाष्यम् )**

**एतान्येतस्याः परिभाषायाः प्रयोजनानि यदर्थ-मेषा परिभाषा कर्तव्या॥**

**( सिद्धान्तिभाष्यम् )**

**यदि सन्ति प्रयोजनानीत्येषा क्रियते॥ ननु चेयं च कर्तव्या "असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे" इति। किं प्रयोजनम्?। पचावेदम्। पचामेदम्। बहिरङ्गलक्षणगुणस्यान्तरङ्गलक्षणमैत्वं मा भूदिति॥**

( **प्रदीपः** ) **पचावेदमिति**। अन्तरङ्गबलीयस्त्वेनैतन्न सिद्ध्यति। बहिरङ्गे[१] कृते **आद्गुणे एत ऐ** इति प्राप्नोति॥

( **उद्योतः** ) **बहिरङ्गे कृते इति**। अयं हि न्यायो युगपत्प्रा-प्तावन्तरङ्गस्य प्रथमं प्रवृत्तिबोधक एवेति भावः।

**( तृतीयाक्षेपभाष्यम् )**

**उभे तर्हि कर्तव्ये॥**

**( सिद्धान्तिभाष्यम् )**

**नेत्याह। अनयैव सिद्धम्। इहापि स्योनः स्यो-नेति असिद्धत्वाद्बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गल-क्षणो यणादेशो भविष्यति॥**

( **प्रदीपः** ) **अनयैवेति**। इयं हि व्यापिका। पूर्वोक्तप्र-योजननिष्पादनात्। शास्त्रासिद्धत्वाश्रयणाद्बहिरङ्गलक्षणं न तावत्प्रवर्तते। अन्तरङ्गलक्षणे तु प्रवृत्ते यत्र निमित्तसद्भावस्तत्र बहिरङ्गलक्षणप्रवृत्तिः॥

( **उद्योतः** ) **पूर्वोक्तेति**। अन्तरङ्गे कर्तव्ये बहिरङ्गमसिद्धम्। तद्बहिरङ्गं कृतं चिकीर्षितं वेत्यन्यत्॥ ननु स्योन इत्यत्र परत्वाद्गुणे तस्यासिद्धत्वेपीकोऽभावाद्यण् न स्यादत आह—**शास्त्रेण**॥ नन्वेवं सौत्थितिरित्यादौ स्योने गुणशास्त्रवद्बहिरङ्गमाद्यदात्तशास्त्रं नै प्रवर्ते-तेत्यत आह—**अन्तरङ्गे चेति**। युगपत् प्राप्तौ बहिरङ्गस्य न पूर्वं प्रवृत्तिः, प्रवृत्ते त्वन्तरङ्गे भवत्येव बहिरङ्गमिति भावः॥

**( आक्षेपभाष्यम् )**

**यदि 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इत्यु-च्यते अक्षद्यूः हिरण्यद्यूः असिद्धत्वाद्बहिरङ्गलक्षण-स्योठोऽन्तरङ्गलक्षणो यणादेशो न प्राप्नोति॥**

( **उद्योतः** ) भाष्ये—**बहिरङ्गलक्षणस्येति**। ऊठ इति शेषः।

**( समाधानभाष्यम् )**

**नैष दोषः। 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गल-क्षणे' इत्युक्त्वा ततो वक्ष्यामि "नाजानन्तर्ये बहि-ष्ट्वप्रक्लृप्तिः" इति॥**

( **प्रदीपः** ) **नाजानन्तर्ये इति**। अचोरानन्तर्यमाश्रित्य यत्र कार्यं विधीयते तत्रैषा परिभाषा नोपतिष्ठते॥

( **उद्योतः** ) अत्रैकदेशी समाधत्ते—**नाजानन्तर्ये इति**॥ **अचोरिति**। द्वित्वमविवक्षितं, तेन वक्ष्यमाणेन षत्वतुग्ग्रहणरूपेण ज्ञापकेन न विरोधः। अचोन्यानन्तर्यनिमित्तकेन्तरङ्गे कर्तव्ये, कृते च तस्मिन् प्राप्तेऽन्तरङ्गे कर्तव्ये, जातस्य बहिरङ्गस्यासिद्धत्वं नेति तदर्थः॥ एतेनै पचावेदमित्यादौ गुणेऽजानन्तर्याश्रयणादसिद्धत्वा-नापत्तिरित्यपास्तम्॥ अयजे इन्द्रं धियतीत्यादि च सिद्धम्। अक्षद्यू-रित्यत्र यणि लोपाभावश्च सिद्धः॥

**( आक्षेपभाष्यम् )**

**सा तर्ह्येषा परिभाषा कर्तव्या।**

**( सिद्धान्तिभाष्यम् )**

**न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं "षत्वतुकोरसिद्धः" इत्याह॥**

( **प्रदीपः** ) **यदयमिति**। कोसिचदधीत्येति बहिरङ्गस्यै-कादेशस्यासिद्धत्वात्षत्वं न भविष्यति तुक् प्रवर्तिष्यते इति किमसिद्धवचनेन॥

( **उद्योतः** ) **तुक् तु प्रवर्तिष्यत इति**। समासोत्तरं ल्यप्प्र-वृत्त्या पूर्वं पूर्वपदसंबन्धेन समासे जाते तत्र संहिताया नित्यत्वादे-कादेशे ल्यपि तुगपेक्षया पदद्वयसंबन्धिवर्णापेक्षैकादेशस्य दध्यत्रे-त्यादौ संयोगान्तलोपापेक्षया यणो बहिरङ्गत्वेनासिद्धत्ववदसिद्धत्वेन तत्प्रवृत्तिरिति भावः। षत्वग्रहणं तु न युक्तं ज्ञापकं, त्रैपादिकेन्तरङ्ग एतत्परिभाषायाः कार्यकालपक्षेप्यप्रवृत्तेर्विसर्जनीयसूत्रभाष्यसंमत-त्वात्॥ षत्वस्यापि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनान्तरङ्गत्वाभावाच्च॥ न चाधीत्येत्यादौ **पूर्वं धातुरुपसर्गेण युज्यते** इत्येकादेशोऽन्तरङ्ग इति वाच्यम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पदान्तरसंबन्धनिमित्त-कार्यात्पूर्वमुपसर्गसंबन्धेन तन्निमित्तकस्यान्तरङ्गत्वमिति तदर्थो न तु प्रत्ययनिमित्तादपीति तदर्थं इति **संप्रसारणाच्चेति** सूत्रे भाष्ये स्पष्टत्वात्। तत्र हि खट्वा आ ऊढेत्यत्र सवर्णदीर्घाद् गुणोऽन्तरङ्ग इत्युक्तम्॥ **सुट् कात्पूर्वः** इत्यादिसूत्रेष्वप्युक्तम्—उपसर्गार्थेन पूर्वं संबन्धस्ततः प्रत्यये कृते उपसर्गेण संबन्ध इति संकृति इति स्थिते-ऽन्तरङ्गतरार्थकोपसर्गनिमित्तकः सुट् द्वित्वादितः पूर्वमिति। एवं च विशिष्टोपसर्गनिमित्तकत्वादुपसर्गार्थाश्रितमुपसर्गनिमित्तं कार्यमन्तर-ङ्गम्, यत्तु न तथा तत्र पूर्वागतसाधनकार्यमेवान्तरङ्गम्। अत एव प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्ये उक्तम्। अस्याश्च परिभाषाया भाष्येऽन्यत्र क्वाप्यव्यवहारादियमेकदेश्युक्तिः। एतज्ज्ञापकेनान्तर-ङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यमिति तत्त्वम्॥

**( आक्षेपभाष्यम् )**

**इयं तर्हि परिभाषा कर्तव्या—"असिद्धं बहिर-ङ्गलक्षणमन्तरङ्गलक्षणे" इति॥**

**( सिद्धान्तिभाष्यम् )**

**एषा च न कर्तव्या, आचार्यप्रवृत्तिर्ज्ञापयति**

१ 'यत' इत्यादौ शेषः। ( र. ना. ) २ न तु जातस्य बहिरङ्गस्यासिद्धत्व-बोधक इत्येवकारार्थः। ( र. ना. ) ३ काकुवाक्यमिदम्। ( र. ना.) ४ स्योनः स्योनेतीत्यादौ शेषः। ( र. ना. ) ५ कदाऽपीति शेषः। ( र. ना. ) ६ बहि-रङ्गपरिभाषेत्यर्थः। ( र. ना. ) ७ अन्तरङ्गेऽचोऽन्यानन्तर्यनिमित्तकत्वस्या-श्रयणेनेत्यर्थः। ( र. ना. ) ८ ऊठो बहिरङ्गासिद्धत्वमाश्रित्य प्राप्तस्य लोपो व्योरिति लोपस्याभाव इत्यर्थः। ( र. ना. )

भवत्येषा परिभाषेति, यदयं "वाह ऊठ्" इति ऊठं शास्ति ॥

( प्रदीपः ) यदयमिति । दित्यवाह् अस् इति स्थिते वाहः सम्प्रसारणेव कर्तव्यम् । तत्र कृते पूर्वैकादेशे च ण्व्याश्रये गुणे वृद्धिरेचीति वृद्धौ सिद्धं दित्यौह इति ॥ अनकारान्ते चोपपदे वहेश्छन्दसि ण्विर्न दृश्यते । प्रयोगदर्शने वा सत्यूहतेः क्विपि प्रयोगो भविष्यति किमूडादेशविधानेनेति परिभाषया ज्ञापक ऊड्विधिः । तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादित्यूठ् विधीयते ॥

( उद्द्योतः ) वृद्धौ सिद्धमिति । परिभाषासत्त्वे तु विभक्तिनिमित्तसंप्रसारणस्य ण्व्याश्रयेऽन्तरङ्गे गुणेऽसिद्धत्वात्तदभावे वृद्धौ गुणस्यासिद्धत्वात्तदभावे च वृद्ध्यर्थमूडावश्यक इति भावः ॥ नन्वनकारान्तेऽकारान्तोपसर्गे चोपपदेऽवर्णाभावात्पररूपेण बाधाच्च वृद्धिरेचीत्यस्याप्राप्तावूठ्संप्रसारणयोः फले विशेष इत्यत आह—अनकारान्तेति । इदमकारान्तोपसर्गोपलक्षणम् ॥ छन्दसीति । न च ण्यन्तात् क्विपि वच्यादिभ्यो विहितत्वाभावेन सम्प्रसारणाभावे विश्ववाट्च्छन्दो लोकेप्यस्त्येवेति वाच्यम् । क्वौ लुप्तमित्यस्य क्वाचित्कतया णिलोपस्य स्थानिवत्त्वेन तत्र वाह ऊठ्सूत्रस्य प्राप्तेरेवाभावादित्याहुः । वस्तुतो [१]लोकेपि वहेर्ण्विदर्शनाच्छन्दसीत्युपलक्षणम् । ऊहतेरिति । धातूनामनेकार्थत्वान्नार्थभेदः ॥

( अन्तरङ्गपरिभाषादूषणकरणम् )

( १०३७ दूषणवार्तिकम् ॥ २५ ॥ )

## ॥ * ॥ तस्य दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावेकादेशात् ॥ * ॥

( भाष्यम् ) तस्यैतस्य लक्षणस्य दोषः पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशादन्तरङ्गतोभिनिर्वृत्तान्न प्राप्नुतः । पूर्वैषुकामशमः अपरैषुकामशमः गुडोदकं तिलोदकम् । "उदकेऽकेवले" इति पूर्वोत्तरपदयोर्व्यपवर्गाभावान्न स्यात् ॥

( प्रदीपः ) पूर्वैषुकामशम इति । पूर्व इषुकामशमी अ इति स्थिते यद्यन्तरङ्गत्वादाद्गुणः स्यात्तदा पूर्वोत्तरपदयोर्व्यपवर्गाभावादुभयत आश्रयणेन्तादिवद्भावनिषेधाच्च 'दिशोऽमद्राणां' 'प्राचां ग्रामनगराणा'मित्युत्तरपदवृद्धिर्न स्यात् । उत्तरपदवृद्धौ सर्वं चेति चशब्दाद्दिक्शब्दश्चेति तथैव पूर्वपदान्तोदात्तत्वं न स्यात् । सावकाशं चैतदुभयं पूर्वकार्ष्णमृत्तिक इति ॥ गुडोदकमिति । उदकेऽकेवले इति पूर्वपदान्तोदात्तत्वं न स्यात् । उदश्विदुदकमित्यादावेव तु स्यात् ॥

(उद्द्योतः) भाष्ये—तस्यैतस्येति । असिद्धं बहिरङ्गमित्यस्येत्यर्थः ॥ दिशोऽमद्राणामिति । इत्यनुवर्तमाने इति शेषः ॥ अत्रापि स्वर उदाहर्तुं शक्य इत्यभिप्रायेणाह—उत्तरपदेति ॥ चशब्दाद्दिक्शब्दश्चेति ॥ अनेन विहितं पूर्वपदान्तोदात्तत्वं तथैव व्यपवर्गाभावान्न स्यादित्यन्वयः ॥ भाष्ये—उदकेऽकेवले इति । मिश्रवाचिनि समासे उदके परे पूर्वमन्तोदात्तमिति तदर्थः ॥ एतदुदाहरणमेकदेशिनः । अन्तादिवच्चेतिसूत्रे पूर्वान्तवद्भावेनात्रैतत्स्वरसाधनात् । उभयाश्रयत्वं तु नात्र, एकदेशविकृतस्यानन्यत्वाद्दकशब्दस्याप्युदकशब्देन ग्रहणादिति तत्र कैयटः ॥

( दूषणपरिहारभाष्यम् )

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति–'पूर्वोत्तरपदयोस्तावत्कार्यं भवति, नैकादेशः' इति, यदयं "नेन्द्रस्य परस्य" इति प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम् ? । इन्द्रे द्वावचौ । तत्रैको "यस्येति च" इति लोपेन [६]ह्रियते, अपर एकादेशेन, ततोऽनचूक इन्द्रः संपन्नः, तत्र कः प्रसङ्गो वृद्धेः । पश्यति त्वाचार्यः—'पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेशः' इति । ततो "नेन्द्रस्य परस्य" इति प्रतिषेधं शास्ति ॥

( उद्द्योतः ) भाष्ये—नेन्द्रस्येति । ननूभयत आश्रयणेन्तादिवत्त्वाभावेप्यन्तादिवत्त्वेपि व्यपवर्गाभावे वा सौमेन्द्र इति तदुदाहरणे विकारविशिष्टेन्तवद्भावेन पूर्वपदत्वे न्द्रशब्दे एकदेशविकृतन्यायेनेन्द्रशब्दत्वात्सामर्थ्येनान्त्यवृद्धिनिषेध एवास्त्वत आह—इन्द्रे द्वावचाविति ॥ एको यस्येतीति । यद्यपि वृद्धिः परा तथापि लोपो नित्य इति भावः । न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम् । एकदेशविकृतन्यायस्याप्याहार्यारोपबोधकत्वेन व्यपवर्गस्य निरूपयितुमशक्यत्वात् । किं चेन्द्ररूपोत्तरपदाद्यच्स्थानिकवृद्धेस्तदभावेनाप्राप्तेस्तद्रूप्यानतिदेशादिति दिक् ॥

( १०३८ दूषणवार्तिकम् ॥ २६ ॥ )

## ॥ * ॥ यणादेशादियुवौ ॥ * ॥

( भाष्यम् ) यणादेशादियुवौ अन्तरङ्गतोभिनिर्वृत्तान्न प्राप्नुतः । वैयाकरणः सौवश्व इति । लक्षणं हि भवति—'य्वोरचि वृद्धिप्रसङ्गे इयुवौ भवतः' इति ॥

( प्रदीपः ) प्रसङ्गेन व्याकरणान्तरे लक्षणं विचारयितुमाह—यणादेशादिति ॥

( उद्द्योतः ) पाणिनीये तादृशलक्षणाभावादाह—प्रसङ्गेनेति । तदेव दर्शयति—भाष्ये—लक्षणं हि भवति य्वोरिति ॥

१ 'ये च गुणे' 'ये गुणे च' । २ 'स प्रयोगे' । ३ 'ज्ञापकपरं' । ४ लोकेपीति । 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति सूत्रभाष्ये 'प्रष्ठौह आगतम् प्रष्ठवाड्रूप्यम्' इति विग्रहदर्शनेन लोकेपि ण्विर्भाष्यसंमत इति भावः ॥ परेतु—'प्रष्ठवाट् च मे प्रष्ठौही च मे' इति वेददृष्टप्रष्ठवाट्शब्दस्यैव विग्रहकथनान्नैव लोके वहेर्ण्विर्भाष्यसंमतः इति वदन्ति । ५ 'यस्येति लोपे' । ६ 'लोपेन ह्रियते' । ७ 'लक्षणं भवति' । ८ 'लक्षणं भवति' ।

( दूषणनिरासभाष्यम् )

नैष दोषः । अनवकाशावियुवौ । अचीत्युच्यते ॥

(उद्द्योतः) अनवकाशत्वे हेतुः—अचीत्युच्यत इति । यत इत्यादिः ॥

( आक्षेपभाष्यम् )

किं पुनः कारणमचीत्युच्यते ? ॥

( आक्षेपभञ्जनभाष्यम् )

इह मा भूताम्—ऐतिकायनः औपगव इति ॥

( आक्षेपरञ्जनभाष्यम् )

स्तामत्रेयुवौ, "लोपो व्योर्वलि" इति लोपो भविष्यति ॥

( प्रदीपः ) लोपो भविष्यतीति । ननु बहिरङ्गत्वादियुवोरसिद्धत्वाल्लोपो न प्राप्नोति । अत्राहुः—समुदायस्यासिद्धत्वं नावयवस्येति ॥ समुदायस्यासिद्धत्वे सामर्थ्यात्तदवयवस्याप्यसिद्धत्वमिति चिन्त्यमेतत् ॥

( उद्द्योतः ) बहिरङ्गत्वादिति । वृद्धिप्रसङ्ग इत्युक्तेस्तन्निमित्तनिमित्तकत्वादित्यर्थः ॥ चिन्त्यमिति । एवं च स्तामत्रेत्यादिग्रन्थः पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरिति भावः ॥ वस्तुतः परिभाषारम्भे दोषात्परिभाषा न कार्येति पूर्वपक्षिणो वाक्ये तामादाय दोषोद्भावनमयुक्तमिति चिन्त्यमेव चिन्त्यम्[1] ॥

( आक्षेपभञ्जनभाष्यम् )

तत्र तर्हि लोपो नास्ति—प्रैयमेधः प्रैयङ्गव इति ।

( १०३९ दूषणवार्तिकम् ॥ २७ ॥ )

॥ * ॥ उसि पररूपाच्च ॥ * ॥

( भाष्यम् ) उसि पररूपाच्चान्तरङ्गतोभिनिर्वृत्तादियादेशो न प्राप्नोति । पचेयुः यजेयुः ॥

( प्रदीपः ) पचेयुरिति । पच् अ या उस् इति स्थिते यद्यत्रान्तरङ्गत्वात्पररूपं क्रियेत तदा व्यपवर्गाभावादियादेशो न स्यात् ॥ एकादेशस्यान्तवत्त्वाद्भविष्यतीति चेद्, एवमपि रूपं न सिध्येत् ॥

( उद्द्योतः ) या उसिति स्थिते इति । अन्तरङ्गत्वादियः पूर्वं सलोपः ॥ व्यपवर्गाभावादिति । याशब्दाभावादिति भावः । न सिध्येदिति ॥ उकारान्तस्येयापत्तेरिति भावः ॥

( दूषणभञ्जनभाष्यम् )

नैष दोषः । नैवं विज्ञायते—या इत्येतस्य इय् भवतीति ॥ कथं तर्हि ? । यासित्येतस्य इय् भवतीति ॥

( प्रदीपः ) यासित्यस्येति । सलोपापवाद इयादेशः । अकृते सलोपे नास्ति पररूपप्रसङ्गः ॥

( उद्द्योतः ) यासिति च्छेदे येय इति सौत्रो निर्देश इति भावः ॥ अतो या इय इत्येव पाठ इत्यानेमुक्तस्त्रे भाष्ये ॥ ननु नित्यान्तरङ्गत्वे सलोपे यासेव दुर्लभोऽत आह—सलोपापवाद इति । वार्णपरिभाषयेदं सिध्यति । तदनाश्रयणेन तु भाष्यम् ॥

( १०४० दूषणवार्तिकम् ॥ २८ ॥ )

॥*॥ लुक्लोपयणयवायावेकादेशेभ्यः ॥*॥

( भाष्यम् ) लोपयणयवायावेकादेशेभ्यो लुक् बलीयानिति वक्तव्यम् ॥ लोपात्—गोमान् प्रियो यस्य गोमत्प्रियः । गोमानिवाचरति गोमत्यते यवमत्यते ॥ यणादेशात्—ग्रामण्यः कुलं ग्रामणिकुलम् । सेनान्यः कुलं सेनानिकुलम् ॥ अयवायावेकादेशेभ्यः—गवे हितं गोहितम् । रायः कुलं रैकुलम् । नावः कुलं नौकुलम् । वृकाद्भयं वृकभयम् । लुक् च प्राप्नोत्येते विधयश्च परत्वादेते विधयः स्युः । लुग्बलीयानिति वक्तव्यम् । लुक् यथा स्यात् ॥ विप्रतिषेधे परं कार्यम् ॥ २ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

( प्रदीपः ) गोमत्प्रिय इति । यद्यत्र लोपः स्यात्तदा प्रत्ययलक्षणेन नुमादि स्यात् ॥ ग्रामणिकुलमिति । यणादिषु कृतेषु लुकि सति रूपं न सिध्येत् ॥ वृकादिति । पूर्वमेकादेशे कृते तस्यादिवद्भावाल्लुकि सति रूपं न सिध्येत् ॥ 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्यस्य प्रत्ययोत्तरपदयोश्चेत्यत्र ज्ञापितत्वात्सिद्धम् ॥ २ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

( उद्द्योतः ) लुग्लोपयोः फले विशेषमाह—यद्यत्रेति । लुकि तु न लुमतेति निषेध इति भावः ॥ भाष्ये—परत्वादेत इति ॥ परत्वादुत्कृष्टत्वादन्तरङ्गत्वादित्यर्थस्तदाह—अन्तरङ्गानपीति ॥ २ ॥

इति शिवभट्टसुतसतीगर्भजनागोजी(नेश)भट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

[1] चिन्त्यत्वेनोक्तमेवेत्यर्थः । ( र. ना. )

# प्रथमाध्यायस्य चतुर्थपादे द्वितीयमाह्निकम् ।

( विधिशेषप्रकरणे नदीसंज्ञाप्रकरणम् )

( १६६ नदीसंज्ञासूत्रम् ॥ १ । ४ । २ आ. १ सू. )

## २४३ यू स्त्र्याख्यौ नदी ॥ १ । ४ । ३ ॥

( यूपदनिर्णयाधिकरणम् )

( अनुयोगभाष्यम् )

**यू इति किमर्थम् ? ।**

( प्रदीपः ) **यूस्त्र्याख्यौ नदी ॥ ३ ॥ यू इति किमर्थमिति ।** स्त्र्याख्यं नदीत्येतावदेवास्तु, ज्ञापकादापो न भविष्यतीति प्रश्नः ॥

( उद्योतः ) **यू स्त्र्याख्यौ ॥ ३ ॥** ननु यूपदाभावे स्त्र्याख्यमात्रेऽतिप्रसङ्गः स्त्र्याख्याविति द्विवचनवैयर्थ्यं चेत्यत आह—**स्त्र्याख्यं नदीत्यादि ॥**

( समाधानभाष्यम् )

**खट्वा । माला ॥ किंच स्यात् ? । खट्वाबन्धुः मालाबन्धुः "नदी बन्धुनि" इत्येष स्वरः प्रसज्येत ॥ इह च बहुखट्वक इति "नद्यृतश्च" इति नित्यः कप्प्रसज्येत ॥**

( प्रदीपः ) **एष स्वर इति ।** पूर्वपदप्रकृतिस्वरं बाधित्वा पूर्वपदान्तोदात्तत्वमित्यर्थः । इष्यते च पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । खट्वाशब्दस्य नित्स्वरेणाद्युदात्तत्वात् ।

( उद्योतः ) ननु खट्वाशब्दस्य फिषोन्तोदात्तत्वेन पूर्वपदप्रकृतिस्वरतत्स्वरयोर्न[1] विशेषोऽत आह—**नित्स्वरेणेति ।** खटेः क्वनि खट्वाशब्दनिष्पत्तेरिति भावः ॥

( समाधानबाधकभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—नापो नदीसंज्ञा भवतीति यदयं "ङेराम्नद्याम्नीभ्यः" इति पृथगाब्ग्रहणं करोति ॥**

( समाधानान्तरभाष्यम् )

**इह तर्हि-मात्रे मातुरिति "आण्नद्याः" इत्याट् प्रसज्येत ॥**

( प्रदीपः ) **मातुरिति ।** मातृशब्दः संबन्धिवचनः स्त्रीविषय एवेति नाख्याग्रहणेन निवर्त्यते । परिच्छेत्तृवाची त्वन्य एव मातृशब्दः । **नद्यृतश्चेति** ऋग्रहणमकृदर्थं स्याद् बहुपितृक इत्यज्ञापकमृकारान्तानां नदीसंज्ञाऽभावस्य ॥

( उद्योतः ) ननु मातृशब्दस्य जननीपरिच्छेत्तृवाचकतया नानालिङ्गत्वेन स्त्र्याख्यत्वाभावोऽत आह—**मातृशब्द इति ।** आख्याग्रहणसामर्थ्याच्च लिङ्गव्यतिरिक्तार्थभेदः शब्दभेदनियामक इति न दोष इति भावः ॥ बहुपितृक इत्यनन्तरमितिरध्याहार्यः ॥

( इवर्णोवर्णयोर्दीर्घत्वनिर्णयाधिकरणम् )

( अनुयोगभाष्यम् )

**किं पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोः ? ।**

( प्रदीपः ) **किं पुनरिति ।** ननु समानधर्मानुपपत्त्यसन्देहाभावात्प्रश्नानुपपत्तिः । नहि दीर्घनिर्देशे यू इति निर्देशोपपत्तिः । एवं तर्हि युक्तायुक्तत्वनिरूपणाय प्रश्नः ॥

( उद्योतः ) समानधर्मानुपपत्तिमेव दर्शयति—**नहीति ॥ एवं तर्हीति ।** निर्देशानुपपत्त्या ह्रस्वपक्षस्यैव युक्तत्वमिति व्युत्पादनाय प्रश्न इति भावः ॥

( प्रत्यनुयोगभाष्यम् )

**किं चातः ? ।**

( दीर्घग्रहणे दूषणभाष्यम् )

**यदि दीर्घयोर्ग्रहणं, यू इति निर्देशो नोपपद्यते । दीर्घाद्धि पूर्वसवर्णदीर्घः प्रतिषिध्यते[2] ॥ उत्तरत्र[3] च संज्ञिविशेषणं[4] न प्रकल्पेत—यू ह्रस्वाविति । यदि यू, न ह्रस्वौ । अथ ह्रस्वौ, न यू । यू ह्रस्वौ चेति विप्रतिषिद्धम् ॥**

( प्रदीपः ) **उत्तरत्र चेति ।** ह्रस्वनिर्देशे[5] तु ह्रस्[6] इत्येकत्वस्याविवक्षितत्वाद्यू ह्रस्वाविति विशेषणविशेष्यभावोपपत्तिः[7] । असति तु विशेषणे मात्रे मातुरित्यत्रापि प्रसङ्गः ॥

( उद्योतः ) भाष्ये—**निर्देशो नोपपद्यत इति ।** छान्दसत्वकल्पनं वृथेति भावः ॥ दीर्घमात्रग्रहणार्थं तत्स्यादिति न वृथात्वमत आह—**उत्तरत्र चेति ।** ननु ह्रस्वनिर्देशेऽपि यू ह्रस्व इति भिन्नार्थकवचनत्वात्सामानाधिकरण्यानुपपत्तिरत आह—**ह्रस्व इतीति ।** वेदाः प्रमाणमित्यादावप्येवमेव ॥ नन्वेकत्वाविवक्षापेक्षया यू इत्यस्यासंबन्ध एव कल्प्य इत्यत आह—**असतीति ॥**

( ह्रस्वग्रहणे दूषणभाष्यम् )

**अथ ह्रस्वयोः 'हे शकटे' अत्रापि प्रसज्येत ॥**

( प्रदीपः ) **अथ ह्रस्वयोरिति ।** दीर्घयोरर्ण्यणसवर्णान् गृह्णातीति सिध्यति[8] ॥ ननु चोक्तम्—**अणुदित्सवर्णस्येत्यत्र**ाशब्दसंज्ञाग्रहणमनुवर्तते । ततश्च सवर्णग्रहणेन न भाव्यम् ॥ नैष दोषः । **नेयङुवङ्स्थानावस्त्रीति** प्रतिषेधात्सवर्णग्रहणं भविष्यतीति । नहि ह्रस्व इयङुवङ्स्थानः

---

१ 'स्वरपूर्वपदान्तोदात्तत्वयोर्न' । २ 'सवर्णः प्रतिषिध्यते' । ३ ङिति ह्रस्वश्चेति सूत्रे इत्यर्थः । (र. ना.) ४ 'चविशेषणं' । ५ यू इतीति शेषः । (र. ना.) ६ ङिति ह्रस्वश्चेत्यत्रेति शेषः । ( र. ना. ) ७ अनियतवचनानां संभवत्यपि समानवचनत्वे भिन्नवचनत्वमपि न विशेषणविशेष्यभावव्याघातकमिति सूचनायैवेदृशप्रयोगः सूत्रकारस्यान्यत्रापि—यथा—"आदिर्ञिटुडवः" इति । एकवचनस्यौत्सर्गिकत्वेन संख्यानिमित्तकत्वाभावात् ॥ परंत्विदं तु बोध्यम्—विशेष्यस्य बहुवचनान्तत्वे विशेषणस्य बहुवचनान्तत्वम्—यथा "फढखछघां प्रत्ययादीनाम्" "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति । विशेषणस्यैकवचनान्तत्वं यथा "आदिर्ञिटुडवः" "वेदाः प्रमाणम्" इति भवति ॥ विशेष्यस्यैकवचनान्तत्वे विशेषणस्य बहुवचनान्तत्वं तु विना नियतवचनशब्दं न दृश्यते ॥ इति ॥ ८ दीर्घयोरपि नदीसंज्ञाऽण् सवर्णान् गृह्णातीति वाक्येन सिद्ध्यतीत्यर्थः । ( र. ना. )

स्त्र्याख्योऽस्ति । अस्त्रीत्ययमपि निषेधपर्युदासः सवर्णग्रहणस्य ज्ञापकः ॥

(उद्योतः) ननु ह्रस्वनिर्देशे दीर्घयोर्न स्यादिति कुतो नोक्तमत आह—दीर्घयोरपीति ॥ अनुवर्तते इति । तच्च सप्तम्या विपरिणमय्य शब्दसंज्ञायां विधेयायां सवर्णग्रहणं नेत्यर्थकरणादिति भावः ॥ भाष्ये—हे शकटे इति । पर्जन्यवल्लक्षणप्रवृत्त्याऽम्बार्थनद्योरिति ह्रस्वे कृते हे गौरि इतिवद्गुणो न स्यादिति भावः ॥

(दूषणबाधकभाष्यम्)

**नैष दोषः । अवश्यमत्र विभाषा नदीसंज्ञैषितव्या । उभयं हीष्यते—हे शकटि, हे शकटे इति च ॥**

(प्रदीपः) अवश्यमत्रेति । तत्र दीर्घग्रहणपक्षे शकटिशब्दस्याप्राप्ता पक्षे नदीसंज्ञा विधेया । ह्रस्वपक्षे तु नित्यंप्राप्ता पक्षे बाध्येति नास्ति विशेषः । अथ तु बह्वादिषु शकटिशब्दो विभाषा ङीषर्थः पठ्यते तदा दीर्घनिर्देशपक्षे पाक्षिके ङीषि हे शकटि इति भवति, शकटिशब्दस्य हे शकटे इति । ह्रस्वनिर्देशे तु ङीषि सत्यसत्यपि हे शकटीति प्राप्नोतीत्यस्ति भेदः ॥

(उद्योतः) नास्ति विशेष इति । वचनारम्भं प्रतीति शेषः ॥ अथ त्विति । असंदिग्धे संदिग्धवचनमेतत् ॥ पठ्यते इति । पाठाभावेऽपि सर्वतोऽक्तिन्नर्थादिति ङीषि शकटीशब्दस्य सत्त्वमिति बोध्यम् ॥ अस्ति भेद इति । एवं चोभाभ्यामप्यवश्यं वचनं कार्यमित्याशयकभाष्यमेकदेश्युक्तिरिति भावः ॥

(दूषणान्तरभाष्यम्)

**इह तर्हि शकटिबन्धुरिति "नदी बन्धुनि" इत्येष स्वरः प्रसज्येत । इह च बहुशकटिरिति "नद्यृतश्च" इति कप्रसज्येत ॥**

(प्रदीपः) एष स्वर इति । पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरेण तु शकटिशब्दे त्रयोऽप्यचः पर्यायेण उदात्ता भवन्ति, शकटिशकट्योरक्षरमक्षरं पर्यायेणेति वचनात् ॥ इह चेति । शेषाद्विभाषेति विभाषा कबिष्यते, नित्यश्च प्राप्नोति ॥

(नियमेन दूषणपरिहारभाष्यम्)

**नैष दोषः । "ङिति ह्रस्वश्च" इत्ययं नियमार्थो[1] भविष्यति—ङित्येव यू ह्रस्वौ नदीसंज्ञौ भवतः, नान्यत्रेति ॥**

(नियमत्वबाधकाक्षेपभाष्यम्)

**कैमर्थक्यान्नियमो भवति ? ॥**
**विधेयं नास्तीति कृत्वा ॥**

**इह चास्ति विधेयम् ॥ किम् ? । नित्या[1] नदीसंज्ञा प्राप्ता[3], सा विभाषा विधेया । तत्रापूर्वो विधिरस्तु नियमो वास्त्विति । अपूर्व एव विधिर्भविष्यति न नियमः[4] ॥**

(प्रदीपः) कैमर्थक्यादिति । कोर्थोऽस्येति किमर्थकम् । तस्य भावः कैमर्थक्यम् । प्रश्नविषयविषयिणोः सम्बन्धो भावप्रत्ययेनोच्यते । यत्र तत्साध्यस्यार्थस्य सिद्धत्वात्किमर्थमिति प्रश्नस्तस्यैव नियमार्थत्वं न तु प्रयोजने सतीत्यर्थः ॥

(उद्योतः) ननु किंशब्दोऽनिर्धारितविशेषविषये प्रश्ने, प्रश्नविषयत्वं[5] च नियमार्थत्वे प्रयोजकमत आह—कोर्थ इति । अर्थः प्रयोजनम् । संबन्धो विषयविषयिभावः । समासकृत्तद्धितोत्तरत्वादेः[6] संबन्धार्थकत्वादित्यर्थः ॥ प्रश्नविषयत्वे बीजं दर्शयन् तस्य नियमप्रयोजकत्वमाह—यत्रेत्यादि ॥

(उद्योतः) एवं च विधेयत्वाभिमतान्यथासिद्धिर्नियमप्रयोजिकेति फलितम् । तदाह—भाष्ये—विधेयं नास्तीत्यादि । अस्त्री वा नदीसंज्ञो नेति केवलस्त्रीशब्दादौ प्राप्त्या तदन्ते चाद्यापि नित्यस्त्रीलिङ्गाविल्यर्थाज्ञानात्प्राप्तिं मत्वैवं व्याख्यातम् ॥

(नियमत्ववादिनः प्रश्नभाष्यम्)

**अथायं नित्यो योगः स्यात् प्रकल्पेत नियमः ? ॥**

(विधित्ववादिनः समाधानभाष्यम्)

**बाढं प्रकल्पेत ।**

(नियमत्वसंपादकनित्यत्वसाधकभाष्यम्)

**नित्यस्तर्हि भविष्यति । तत्कथम् ? । योगविभागः करिष्यते—इदमस्ति "यू स्त्र्याख्यौ नदी" "नेयङुवङ्स्थानावस्त्री" "वामि" । ततो "ङिति" ङिति चेयङुवङ्स्थानौ यू वा अस्त्री नदीसंज्ञौ न भवतः । ततो "ह्रस्वौ" ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ्स्थानौ वा नेति निवृत्तम् ॥**

(अनुपपत्तिभाष्यम्)

**यद्येवं शकटये । अत्र गुणो न प्राप्नोति ॥**

(प्रदीपः) यद्येवं शकटय इति । नित्यया नदीसंज्ञया घिसंज्ञाया बाधितत्वात् ॥

(उद्योतः) ननु शेषग्रहणप्रत्याख्यानाद् घित्वेन गुणो भविष्यतीत्यत आह—नित्ययेति । विभक्तेन ह्रस्वावित्यनेन नित्यसंज्ञाया एव विधानादिति भावः ।

(अनुपपत्तिपरिहारभाष्यम्)

**द्वितीयो योगविभागः करिष्यते । शेषग्रहणं न करिष्यते ॥ कथम् ? । इदमस्ति—"यू स्त्र्याख्यौ नदी" "नेयङुवङ्स्थानावस्त्री" "वामि" । ततो**

---

१ 'नित्या' । २ 'इत्येतन्नियमार्थं' । ३ 'प्राप्नोति' । ४ न नियम इति । 'विधिनियमसंभवे विधिरेव ज्यायान्' इति परिभाषणादिति भावः ।

५ 'प्रश्नविषययोः । ६ समासकृत्तद्धितोत्तरो यस्त्वादिमत्ययस्तस्येत्यर्थः । (र. ना.)

"ङिति" ङिति चेयङुवङ्स्थानौ यू वा अस्त्री नदीसंज्ञौ न भवतः । ततः "ह्रस्वौ" ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ्स्थानौ वा नेति निवृत्तम् । ततो "घि" घिसंज्ञौ भवतः स्त्र्याख्यौ यू ह्रस्वौ ङिति । ततः—"असखि" । सखिवर्जितौ च यू ह्रस्वौ घिसंज्ञौ भवतः ॥ स्त्र्याख्यौ ङितीति च निवृत्तम् ॥

( प्रदीपः ) ततो घीति । एकविषयत्वाच्च घिनदीसंज्ञयोरेकसंज्ञाधिकाराच्च पर्यायेण प्रवृत्तौ शकट्यै शकटये इति च सिध्यति ॥

( उद्द्योतः ) भाष्ये—शेषग्रहणं न करिष्यत इति । तत्सत्त्वे हि स्त्रीलिङ्गह्रस्वयोर्नदीसंज्ञाया उक्तत्वेनानुक्तनदीत्वाभावात् तत्र घिसंज्ञा विधातुमशक्येति भावः ॥ ननु घित्वेपि नदीत्वानिवृत्तेराङ्गद्यपि स्यादत आह—एकविषयत्वादिति एकसंज्ञाधिकाराच्चेति पर्याये हेतू ॥

( योगविभागवैयर्थ्यभाष्यम् )

यदि तर्हि शेषग्रहणं न क्रियते नार्थ एकेनापि योगविभागेन । अविशेषेण नदीसंज्ञोत्सर्गः । तस्याः ह्रस्वयोर्घिसंज्ञा बाधिका । तस्य नित्यं प्राप्तायामियं ङिति विभाषाऽऽरभ्यते ॥

( प्रदीपः ) अविशेषेणेति । ह्रस्वयोर्दीर्घयोश्चेत्यर्थः । बाध्यत्वादुत्सर्गसामान्यादुत्सर्ग इत्युक्तम् । परत्वात्तु पुन्नपुंसकयोः कृतार्था घिसंज्ञा नदीसंज्ञाया बाधिका ॥ तस्यामिति । अङिति तु शकटिबन्धुर्बहुशकटिरित्यादौ घिसंज्ञया नदीसंज्ञाया बाधितत्वाद्दोषाभावः ॥

( उद्द्योतः ) अविशेषेणेत्यस्य स्त्रीपुंसाविशेषेणेति नार्थं इत्याह—ह्रस्वयोरिति ॥ ननु स्त्रियां नदीत्वं घित्वं लिङ्गत्रयसाधारणमिति सावकाशत्वात्कथमुत्सर्गापवादभावोऽत आह—बाध्यत्वादिति । सामान्यम् । बाध्यत्वलक्षणसादृश्यम् ॥

( दीर्घग्रहणपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्तु दीर्घयोः ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—निर्देशो नोपपद्यते । दीर्घाद्धि पूर्वसवर्णदीर्घः प्रतिषिध्यत इति ॥

( समाधानभाष्यम् )

"वा[3] छन्दसि" इत्येवं भविष्यति ॥

( समाधानबाधकभाष्यम् )

छन्दसीत्युच्यते । न चेदं छन्दः ॥

( समाधानसाधकभाष्यम् )

छन्दोवत्सूत्राणि भवन्तीति ॥

( प्रदीपः ) छन्दोवदिति । तादर्थ्यात्सूत्रेष्वपि छन्दःशब्दो वर्तत इति च्छन्दोविषयं कार्यं सूत्रेष्वपि प्रवर्तते । गौणमुख्यन्यायश्छन्दःप्रदेशेषु निर्देशान्यथानुपपत्त्या नाश्रीयते ॥

( उद्द्योतः ) सूत्रेष्वपीति । छन्दोवदित्यतिदेशादिति भावः ॥ तादर्थ्यादिति । छन्दोवदतिदेशे बीजमुक्तम् ॥ निर्देशान्यथानुपपत्त्येति । निर्देशकल्पितातिदेशान्यथानुपपत्त्येत्यर्थः । अतिदेशविषये तैदर्थ्यापत्त्या गौणमुख्यन्यायाप्रवृत्तिरिति भावः ॥

( दूषणान्तरनिराकरणभाष्यम् )

यदप्युच्यते—'उत्तरत्र विशेषणं न प्रकल्पेत—यू ह्रस्वाविति । यदि यू न ह्रस्वौ । अथ ह्रस्वौ, न यू । यू ह्रस्वाविति च विप्रतिषिद्धम्' इति ॥ नैतद्धि प्रतिषिद्धम् । आहायं यू ह्रस्वाविति । यदि यू न ह्रस्वौ, अथ ह्रस्वौ न यू ॥ त एवं विज्ञास्यामः—य्वोर्यौ ह्रस्वाविति ॥ कौ च य्वोर्ह्रस्वौ ? । सवर्णौ ॥

( स्त्र्याख्यशब्दसाधनाधिकरणम् )

( अनुयोगभाष्यम् )

अथ स्त्र्याख्याविति कोयं शब्दः ? ।

( प्रदीपः ) अथेति । यथाऽर्थोभिप्रेतस्तथा न शब्दसंस्कारोस्तीति प्रश्नः ॥

( उद्द्योतः ) शब्दे संदेहाभावात् कोयमिति प्रश्नोऽनुपपन्न इत्यत आह—यथार्थ इति ॥

( समाधानभाष्यम् )

स्त्रियमाचक्षाते स्त्र्याख्यौ ॥

( उद्द्योतः ) भाष्ये एकदेश्याह—स्त्रियमिति ।

( समाधानबाधकभाष्यम् )

यद्येवं स्त्र्याख्यायाविति प्राप्नोति । अनुपसर्गे हि को विधीयते ॥

( प्रदीपः ) अनुपसर्गे हीति । यस्त्वातश्चोपसर्गे इति कः स परत्वा त्कर्मण्यणित्यणा बाध्यते ।

( उद्द्योतः ) इतर आह—यद्येवमिति ॥ स्त्र्याख्यायाविति । कर्मण्यण्यातोयुका भाव्यमिति भावः ॥ यस्त्विति । यद्यप्याचष्टे इत्याख्य इति व्युत्पाद्य पश्चात्षष्ठीसमासे सिध्यति तथापि स्त्रियमाचक्षाते इति विग्रहोल्लेखादेवमुक्तम् ॥

( एकदेशिसमाधानसाधकभाष्यम् )

न तर्हीदानीमिदं भवति—

"यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोयमुञ्छेन जीवति ॥"

छ[4]न्दोवत्कवयः कुर्वन्ति ॥

( प्रदीपः ) न तर्हीति । शिष्टप्रयोगादस्मिन्विषये कप्र-

---

1 'च भवतः' । 2 'नैष दोष वा' । 3 अतिदेशस्तत्पदार्थः । ( र. ना. )
4 "छन्दोवत्कवयः कुर्वन्ति" इति भाष्यमपि "नञ्जेषेष्टिः" इति समाधानबाधकभाष्येण संबद्धं स्यात् तर्हि वरम् ॥ अस्माभिस्तु नागेशलिखित 'पुनरेकदेश्याह' 'स एवाह' 'इतर आह' इति लेखानुसारेण विभागो दर्शित इति बोध्यम् ।

त्ययस्य साधुत्वमेष्टव्यमिति भावः ॥ **छन्दोवत्कवय इति।** तेन च्छान्दसत्वाद्भविष्यति ॥

**( उद्द्योतः )** पुनरेकदेश्याह—**न तर्हीदानीमिति।** सौत्रप्रयोगे विप्रतिपन्नं प्रति श्लोकानुपपत्तिकथनमसङ्गतमत आह—**शिष्टेति॥** स एवाह—**छन्दोवदिति।** इदमेष्टव्यमिति भावः।

**( समाधानबाधकभाष्यम् )**

**नह्येषा इष्टिः॥**

**( प्रदीपः ) नह्येषेति।** असाधव एवैवमादायः। न तु तत्प्रामाण्यात्साधुत्वव्यवस्था॥

**( उद्द्योतः )** इतर आह—**नह्येषेति॥** तद्व्याचष्टे—**असाधव इति।** ऋषीणां तपोमाहात्म्यात्तु तदुच्चारयितॄणामस्माकं न प्रत्यवाय इति बोध्यम्।

**( समाधानान्तरभाष्यम् )**

**एवं तर्हि कर्मसाधनो भविष्यति। स्त्रियामाख्यायेते स्त्र्याख्यौ॥**

**( प्रदीपः ) आख्यायेते इति। घञर्थे कविधानमिति** कप्रत्ययः। **साधनं कृतेति** सप्तमीसमासः।

**( उद्द्योतः ) स्त्रियामाख्यायेते** इति भाष्ये शास्त्रेणेति शेषः। ननूपपदत्वाभावात्समासो न स्यादत आह—**साधनमिति॥**

**( समाधानबाधकभाष्यम् )**

**यदि कर्मसाधनः कृत्स्त्रिया धातुस्त्रियाश्च न सिद्ध्यति तन्व्यै लक्ष्म्यै श्रियै भ्रुवै।**

**( प्रदीपः ) कृत्स्त्रिया इति।** नहि तयोरीकारोकारौ स्त्रियां विहितौ यथा ङ्यूङाविति भावः॥

**( उद्द्योतः ) नहीति।** ईकाराद्यन्तस्य स्त्रियां विधानाभावाद्वर्णयोः संज्ञेति वाच्यम्। एवं च ङ्यूङोरेव स्यान्न तु तन्व्यादेरिति भावः।

**( समाधानान्तरभाष्यम् )**

**एवं तर्हि बहुव्रीहिर्भविष्यति—स्त्रियामाख्या अनयोः स्त्र्याख्यौ॥**

**( प्रदीपः ) एवं तर्हीति।** आख्यानमाख्या। **आतश्चोपसर्ग इत्यङ्।** स्त्रियामाख्यानमनयोरिति बहुव्रीहिः। अत्र पक्षे सूत्रेणैवं प्रत्ययः समासश्च सिद्ध्यतीति भावः॥ **स्त्रियां** स्त्रीविषये **आख्या** प्रतिपादनमित्यर्थः॥

**( उद्द्योतः ) प्रतिपादनं,** शास्त्रेणेत्यर्थः॥

**( समाधानबाधकभाष्यम् )**

**एवमपि कृत्स्त्रिया धातुस्त्रियाश्च न सिध्यति तन्व्यै लक्ष्म्यै श्रियै भ्रुवै॥**

**( प्रदीपः ) एवमपीति।** नहि तयोः स्त्रियां विधानमित्यर्थः॥

**( समाधानान्तरभाष्यम् )**

**एवं तर्हि विच् भविष्यति॥**

**( प्रदीपः ) एवं तर्हीति।** असरूपत्वादणा पक्षे विज् न बाध्यते। समुदायधर्मस्यावयव आरोपात् कृत्स्त्रिया अप्यत्र पक्षे संज्ञा सिद्ध्यति॥

**( उद्द्योतः )** भाष्ये **एवं तर्हि विजिति।** सूत्राणां छन्दोवत्त्वादिति भावः॥ किन्तु नोक्तस्तस्यादन्तेभ्योऽनभिधानात्। अत एव शङ्का इत्यादौ नेत्त्वम्। एवं चादन्तधातुप्रकृतिकमादन्तं प्रातिपदिकं लोकेऽसाध्विति बोध्यम्। आदन्तेभ्यो विचश्छन्दसि विधानादित्याहुः॥ वर्णयो स्त्र्याख्यानकर्तृत्वाभावात्कथं तन्व्यादौ सिद्धिरत आह—**समुदायेति।** ङ्यूङोस्तु शास्त्रकल्पितं तदस्तीति भावः॥ अत्र पक्षे तदन्तसंज्ञापक्षो वक्तुं शक्य इति चिन्त्यम्। अत्र पक्षे आच्छीनद्योरित्यादिविषयेऽवयवे समुदायरूपारोपेण निर्वाह इति बोध्यम्॥

**( कप्रत्ययाभ्युपगमभाष्यम् )**

**अथ वा पुनरस्तु क एव—स्त्रियमाचक्षाते स्त्र्याख्याविति॥**

**( आक्षेपस्मारणभाष्यम् )**

**ननु चोक्तम् 'स्त्र्याख्यायाविति प्राप्नोति अनुपसर्गे हि को विधीयते' इति॥**

**( समाधानभाष्यम् )**

**मूलविभुजादिपाठात्को भविष्यति। एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तम्—**

**"यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ॥**
**ब्राह्मणेभ्यः प्रियाख्येभ्यः सोयमुञ्छेन जीवति"॥**

**इति॥**

**( आख्याग्रहणप्रयोजनाधिकरणम् )**

**( अनुयोगभाष्यम् )**

**अथाख्याग्रहणं किमर्थम्?॥**

**( प्रदीपः ) आख्याग्रहणमिति।** विच्पक्षे आख्याशब्द एवायम्। कप्रत्ययपक्षे तु प्रवृत्तिनिमित्तनिर्देशः॥ यू स्त्रियामित्येव स्त्र्यर्थवृत्तित्वं लभ्यत इति प्रश्नः॥

**( उद्द्योतः )** कप्रत्ययपक्षे आख्यशब्दसत्त्वेनाख्याग्रहणमित्ययुक्तमत आह—**विजिति॥ प्रवृत्तिनिमित्तेति।** एवं चाख्याबोधकं ग्रहणमित्यर्थ इति भावः॥

---

१ 'इष्टिरस्ति'। २ नतु छन्दोवदतिदेशेनेति भावः। (र. ना.) ३ **सूत्राणामिति।** एवं च लोके विचोऽसंभवात्सुगणित्यादीनामसाधुत्वमेवेति सूचितम्। वेदे तु दृष्टानुविधित्वादापाद्यमानरूपाभाव एव। तथा च **'ङ्मोह्रस्वात्'** इत्युदाहरणे **'सुगण्णीशः'** इत्युक्तिरसाध्वेव॥ सूत्रकृतो ङ्मुप्रत्याहारोक्तिस्तु मकाराप्रत्याख्याने यथा लोके णकाराभावेन णकार आगमो न भवति तथैव मकारप्रत्याख्यानेऽपि आगमाभावे कथमागमापत्तिरिति ङमयोरभावेन ङमावागमौ नेति भाष्योक्तौ स्वसंमतत्वसूचनाय। एतदेव ध्वनयितुम् **'इकोयणचि'**त्यादौ ङमुड् न कृत इति बोध्यम्। वस्तुतो लोके आदन्तेभ्यो विचोऽभावेऽपि तदन्येभ्योऽपि तदभावे न मानं पश्याम इति इति सुगण्णीश इत्युदाहरणं सम्यगेवेति वयम्। (र. ना.)

( १०४१ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ नदीसंज्ञायामाख्याग्रहणं स्त्रीविषयार्थम् ॥ * ॥**

**( भाष्यम् ) नदीसंज्ञायामाख्याग्रहणं क्रियते स्त्रीविषयार्थम् । स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात् । इह मा भूत्—ग्रामण्ये सेनान्ये स्त्रियै इति ।**

( प्रदीपः ) **स्त्रीविषयार्थमिति** । आख्याग्रहणसामर्थ्यान्नियम आश्रीयते ॥ स्त्रियमेव यावाचक्षाते न तु लिङ्गान्तरयुक्तमपीत्यर्थः ॥ **ग्रामण्ये इति** । ग्रामणीशब्दः क्रियाशब्दत्वात् त्रिलिङ्गत्वात् स्त्रीविषयो न भवतीति स्त्रियामपि वर्तमानो नदीसंज्ञो न भवति ॥ यद्येवमिष्टश्रशनिप्रभृतीनामुभयलिङ्गानां पट्वादीनां च गुणवचनत्वात्सर्वलिङ्गानां स्त्रीविषयत्वाभावात् स्त्रियां वृत्तौ **ङिति ह्रस्वश्चेति** नदीसंज्ञा न प्राप्नोति ॥ एवं तर्हि **ङिति ह्रस्वश्चेत्य**त्रैवंविधो नियमो नाश्रीयते । केवलस्य स्त्रीशब्दस्यानुवर्तनादित्यदोषः ॥

( उद्द्योतः ) **नियम इति** । वार्तिके विषयशब्दोऽनन्यभावे, तद्द्योतक एवकारो भाष्ये एवकारार्थ एव च नित्यग्रहणेनान्वाख्यायत इति बोध्यम् ॥ **स्त्रियमेवेति** । स्त्रीत्वविशिष्टमेवेत्यर्थः ॥ **क्रियाशब्दत्वादिति** । प्रवृत्तिनिमित्तभेद एव शब्दभेदप्रयोजको न तु विशेष्यभेदो नापि लिङ्गभेदस्तद्भेदेपि भेदव्यवहाराभावादिति भावः ॥ **ङिति ह्रस्वश्चेत्यत्रेति** । ह्रस्वघटितवाक्ये दीर्घघटितवाक्ये च । एतदुपसंहारे स्फुटीभविष्यति ॥

( उपसर्जने नदीसंज्ञासाधनाधिकरणम् )

( १०४२ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रथमलिङ्गग्रहणं च ॥ * ॥**

**( भाष्यम् ) प्रथमलिङ्गग्रहणं च कर्तव्यम् । प्रथमलिङ्गे यौ य्वाख्यौ इति वक्तव्यम् ।**

( प्रदीपः ) **प्रथमलिङ्गग्रहणमिति** । यः शब्दः प्रथमं स्त्रीत्वविशिष्टार्थमाह पश्चात्तु प्रकारान्तरेणार्थान्तरं लिङ्गान्तरयुक्तं, तस्य तदानीमय्वाख्यत्वादप्राप्ता नदीसंज्ञानेन विधीयते ॥

( उद्द्योतः ) भाष्ये **प्रथमलिङ्गेति** । वृत्तेः[1] पूर्वं लिङ्गबोधके वृत्तिघटकशब्दे विद्यमानौ य्वाख्यौ यू तयोर्वृत्तौ य्वाख्यत्वाभावेपि नदीत्वार्थमित्यर्थः ॥ तदन्तसंज्ञापक्षे वृत्तिघटकशब्दे विद्यमानत्वं तस्य व्यपदेशिवद्भावेन बोध्यं तदाह—**यः शब्द इति** । यद्यप्यर्थभेदाच्छब्दभेदस्तथापि श्रुत्यैक्यमात्रेणाभेदाध्यवसायाद्यत्तच्छब्दबोधितैक्योपपत्तिः ॥ **प्रकारान्तरं**, वृत्त्यन्तरप्राप्तिः ॥

( अनुयोगभाष्यम् )

**किं प्रयोजनम् ? ।**

( १०४३ समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रयोजनं क्विब्लुप्समासाः ॥ * ॥**

**( भाष्यम् ) क्विप्—कुमार्यै ब्राह्मणाय ॥ लुप्—खरकुट्यै ब्राह्मणाय ॥ समास—अतितन्त्र्यै ब्राह्मणाय । अतिलक्ष्म्यै ब्राह्मणाय ॥**

( प्रदीपः ) **क्विबिति** । कुमारीमिच्छत्यात्मनः कुमारीयति । ततः कर्तरि क्विप् । अथ वा कुमारीवाचरतीत्याचारे क्विपं विधाय कर्तरि क्विब्विधेयः ॥ **खरकुट्यै इति** । खरकुटीवेतीवार्थे **संज्ञायामिति** कनो **लुम्मनुष्य** इति लुप् । यद्यप्यत्र युक्तवद्भावात् स्त्रीत्वमस्ति तथापि स्वाश्रयस्य पुंस्त्वस्यानिवर्तनान्नायं स्त्रियामेव वर्तते । किं तर्हि ? पुंस्यपीत्याख्याग्रहणान्नियमार्थादप्राप्ता नदीसंज्ञा विधीयते ॥ **अतितन्त्र्यै इति** । तन्त्रीमतिक्रान्त इति तत्पुरुषः ॥

( उद्द्योतः ) **आचारे क्विपमिति** । प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणादिति भावः । ङ्यन्तादाचारक्विप्पक्षे इदम् ॥ **खरकुटीवेति** । खरकुटशब्दात्पिप्पल्यादेराकृतिगणत्वाद् ङीष् । कुटीशब्देन समासो वा ॥ **पुंस्त्वस्यानिवर्तनादिति** । न च तदनिवृत्तौ खरकुटीः पश्येत्यादौ नत्वापत्तिः, **प्रकृतिवदित्य**तिदेशेन प्रकृतिलिङ्गप्रयुक्तकार्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याप्रवृत्तेः ॥ स्पष्टं चेदं **स्त्रियामिति**सूत्रे भाष्ये ॥ यद्वा तेन स्वप्रयुक्तकार्याभावोप्यतिदिश्यते । स्पष्टं चेदं **तस्माच्छस** इति सूत्रे भाष्यकैयटयोः ॥ अत्रापि पक्षे प्रकृते स्वाश्रयलिङ्गनिवृत्तौ मानाभाव इत्याशयः । तत्प्रत्याख्यानेपि स्त्र्याख्याविरुस्य स्त्रीत्वेनैव य आहेति नार्थः, किं तु स्त्रीत्वविशिष्टमेव य आहेत्यर्थः । न चायं तथा, स्त्रीत्वेन रूपेण वस्तुनः पुंस्त्वादिविशिष्टस्याभिधानात् । न च पदार्थमात्रे शास्त्रीयलिङ्गत्रयस्य सत्त्वेनासंभवः, व्यक्तिवचनसुपदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपेजनेपि स्त्रीपदादिबोध्यत्वदशायां तत्सत्त्वे मानाभावात् । प्रकृते तु ब्राह्मणायेत्यादिविशेष्यदर्शनेन तत्सत्त्वानुमानात् । तत्फलं तु श्रियै ब्राह्मणायेत्यत्र लुपि **ङिति ह्रस्वश्चेति** विकल्पाभावः ॥ **प्रथमलिङ्गे** चेति तु न तद्विषयमिति वक्ष्यते ॥ एतेन 'यथा दारादिशब्दैः शब्दशक्तिस्वाभाव्याच्छास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्याभिधानं तथा लुबन्तैरपि शास्त्रीयस्त्रीत्वविशिष्टस्यैव पुमादेरभिधानम् । अत एव तद्शिष्यमित्यनेन तत्प्रत्याख्यानं सङ्गच्छते । एवं चास्यापि नित्यस्त्रीत्वमस्त्येवे'त्यपास्तम् ॥ अतिशयिता तन्त्रीरिति विग्रहे दोषाभावादाह—**तन्त्रीमतीति** ।

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ।**

( समाधानभाष्यम् )

**न वक्तव्यम् ।**

( १०४४ समाधानसाधकवार्तिकम् ॥ ४ ॥ )

**॥*॥ अवयवस्त्रीविषयत्वात्सिद्धम् ॥*॥**

**( भाष्यम् ) अवयवोत्र स्त्रीविषयः । तदाश्रया नदीसंज्ञा भविष्यति ॥**

( प्रदीपः ) **अवयवस्त्रीविषयत्वादिति** । अन्तरङ्गत्वात् पूर्वमेव य्वाख्यत्वात्प्रवृत्ता नदीसंज्ञा पश्चादुपजायमाने लिङ्गान्तरयोगे बहिरङ्गे न निवर्तत इति भावः ॥

---

[1] वृत्तिरत्र शक्तिः । ( र. ना. ) [2] स्त्रीविषयावेव यौ नित्यमित्येवं रूपनियमार्थादित्यर्थः । ( र. ना. ) [3] स्वप्रयुक्तकार्याभावातिदेशपक्षेऽपीत्यर्थः । ( र. ना. ) [4] युक्तवद्भावविधिप्रत्याख्यानेऽपीत्यर्थः । ( र. ना. ) [5] तत्तल्लिङ्गप्राप्तावपीत्यर्थः । ( र. ना. )

(उद्योतः) बहिरङ्गे इति । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः ॥ यथोद्देशे इदम् । अवयवशब्देनात्र वृत्तिप्रकृतिभूतशब्दमात्रग्रहणम् । अत एव क्यजाद्यन्ते न दोषः । समुदाये कार्यप्रवृत्तिस्तु नद्यन्तत्वाद्बोध्या ॥ वस्तुतः—कार्यकालपक्षेपि समासे स्पष्टैव तदवयवस्य तत्प्राप्तिः । अत एव भाष्ये **तदाश्रया नदीसंज्ञा भविष्यतीत्युक्तम्** कार्यवेलायामपि भविष्यतीत्यर्थस्तस्य । कैयटरीत्या तु तदाश्रया नदीसंज्ञास्तीति वदेत् । कुमारील्यादावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वमस्त्येव । प्राधान्येन तन्मात्रबोधकत्वनिवेशे तु न मानमित्याशयः ॥

( १०४५ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधप्रसङ्गे यण्स्थानप्रतिषेधप्रसङ्गोवयवस्येयङुवङ्स्थानत्वात् ॥ * ॥

**(भाष्यम्) अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधप्रसङ्गे यण्स्थानयोरपि य्वोः प्रतिषेधः प्रसज्येत । आध्यै ब्राह्मण्यै ॥ किं कारणम्? । अवयवस्य इयङ्स्थानत्वात् । अवयवोऽत्र इयङ्स्थानः ॥**

(प्रदीपः) आध्यै इति । आध्यायतीति **ध्यायतेः सम्प्रसारणं चेति** क्विप् सम्प्रसारणं च । अत्रावयवो धीशब्द इयङ्स्थानः ॥ समुदायस्य त्वे**रनेकाच** इति यणा बाधितत्वादियङ्स्थानत्वाभावः ॥ नन्वाधीप्रधीशब्दौ क्रियाशब्दत्वात्त्रिलिङ्गत्वात् स्त्रीविषयौ न भवतः । यथैव ग्रामणीसेनानीशब्दाविति नदीसंज्ञया न भाव्यमिति पूर्वापरव्याघातदर्शनाच्चिन्त्यमेतत् ॥

(उद्योतः) चिन्त्यमेतदिति । आध्यायतीत्यादिविग्रह इत्यभिमानः । वस्तुतस्तु ध्यानं धीः आ ईषत् प्रकृष्टा वा धीर्यस्या इति विग्रहः । एवं च गतिपूर्वत्वाद्यणपि सुलभः । अवयवस्येयङ्स्थानत्वमिति भाष्यं च रमणीयमेव । आध्यै इत्यादौ समुदायस्य नित्यस्त्रीत्वाभावान्नदीत्वाप्राप्तेरवयवस्य सा वाच्या सा च न प्राप्नोति तस्येयङ्स्थानत्वाद् । वार्तिकारम्भे तु न दोषस्तेन हि नित्यस्त्रीत्वाभावेपि प्राक्तननित्यस्त्रीत्वं गृहीत्वेदानीं सा प्रवर्तते । न चेदानीमसावियङ्स्थान इति निषेधाप्रवृत्तिः, प्राक्तनेयङ्स्थानत्वं गृहीत्वा निषेधस्य तु न प्रवृत्तिर्मानाभावादिति भावः ॥ न च **गतिकारकपूर्वस्येत्यत्र** प्रतिपदोक्तपरिभाषया नित्यसमासस्यैव ग्रहणमित्यत्र यण् दुर्लभः । अत एव **कृन्मेजन्तसूत्रे मा नः समस्य दूढ्य** इति मन्त्रव्याख्यावसरे दुर्धिय इति कैयटेन प्रयुक्तमिति वाच्यम् । मानाभावात् । कैयटप्रयोगे दुःस्थिता धीर्येषामिति विग्रहेण धीशब्दे गतित्वाभावान्न दोषः । अत्र चेदमपि भाष्यं मानम् ॥

( १०४६ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ सिद्धं त्वङ्गरूपग्रहणाद् यस्याङ्गस्येयुवौ तत्प्रतिषेधात् ॥ * ॥

**(भाष्यम्) सिद्धमेतम् । कथम् । अङ्गरूपं गृह्यते यस्याङ्गस्य इयुवौ भवतस्तस्येदं ग्रहणम् । न चैतस्याङ्गस्य इयुवौ भवतः ।**

(प्रदीपः) सिद्धं त्विति । **अचि श्नुधात्वित्यनेन** अङ्गस्येयङुवङ्विधानात् सामर्थ्याक्षिप्तमत्राङ्गम् । तेन यस्याङ्गस्येयङुवङौ निर्वर्त्येते तस्य नदीसंज्ञानिषेधः । आध्यै इत्यत्रावयवस्याङ्गत्वं नास्ति । अङ्गस्य तु **एरनेकाच** इति यण्विधानादियङुवङ्स्थानता नास्तीति निषेधाभावः । एतदर्थमेव स्थानग्रहणं कृतम् । इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्याद् यदा त्वपवादेन बाधस्तदा मा भूत् ।

(उद्योतः) सामर्थ्याक्षिप्तमिति । इयङुवङ्स्थानत्वस्याङ्ग एव संभवादिति भावः । एतद्वार्तिकभाष्यप्रामाण्यादियङुवङ्भ्यामुपस्थितस्याङ्गस्य शाब्देऽन्वय इति तात्पर्यम् । **अङ्गत्वं नास्तीति ।** ननु त्वदुक्तविग्रहेऽन्तर्वर्तिविभक्त्या धीशब्दस्याप्यङ्गत्वमस्त्येवेति चेन्न । नदीसंज्ञाकार्यप्रयोजकश्रूयमाणविभक्तिनिरूपिताङ्गे यत्र क्वापीयङादेः स्थितिस्तत्र निषेधात् । अत एव हे श्रीरित्यादौ निषेधस्तदाह—**एतदर्थमेवेति** । यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङुवङोः स्थितिः क्वचित्प्रयोगे दृष्टा तस्य शब्दस्य सति सम्भवे तदवयवस्य च नदीत्वं नेत्यर्थ इति भावः । प्रध्यै इत्यत्र चावयवनित्यस्त्रीत्वमादाय नित्यैव संज्ञा । इयङ्स्थानत्वाभावाच्च न **ङिति ह्रस्वश्चेति** विकल्पः । न च प्रधीशब्दावयवस्य नदीत्वे **नद्यृतश्चेति** कबापत्तिः, समासात्पूर्वावस्थायामुत्तरपदस्य नदीत्व एव कपः प्रवृत्तेः ॥

( १०४७ नियमवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ ह्रस्वेयुवस्थानप्रवृत्तौ च स्त्रीवचने ॥ * ॥

**(भाष्यम्) ह्रस्वौ च इयुवस्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् ॥ शकट्यै अतिशकट्यै ब्राह्मण्यै । क्व मा भूत्? । शकटये अतिशकटये ब्राह्मणाय ॥ धेन्वै अतिधेन्वै ब्राह्मण्यै । क्व मा भूत्? । धेनवे अतिधेनवे ब्राह्मणाय ॥ श्रियै अतिश्रियै ब्राह्मण्यै । क्व मा भूत्? । श्रिये अतिश्रिये ब्राह्मणाय ॥ भ्रुवै अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत्? । भ्रुवे अतिभ्रुवे ब्राह्मणाय ॥**

---

१ 'इयङुवङ्' । २ 'इयङुवङ्' । ३ 'आध्यायतीति' इत्ययं पाठो न सार्वत्रिकः । किं तु पुस्तकयोरेव । ४ 'यणविधानादि' । ५ अन्यथा वृत्त्याऽनुपस्थापितस्याङ्गस्य शाब्देऽन्वयो न स्यादिति भावः । ( र. ना. ) ६ अत्र तु समासात्पूर्वं धीशब्दस्य नदीत्वं नास्ति, इयङ्स्थानत्वादिति भावः । ( र. ना. ) ७ इदं सप्तम्यन्तम् । ( र. ना. )

(प्रदीपः) ह्रस्वेति ॥ अवयवस्त्रीविषयत्वात् सिद्ध-मित्यस्यायमपवादः । ह्रस्वेयङुवङ्स्थानानां प्रवृत्तिरर्थान्तर-संक्रान्तिस्तस्यां सत्यां स्त्रीवचने एव संज्ञा भवति न लिङ्गान्त-रवचने । चशब्दादप्रवृत्तौ चेति ज्ञेयम् । एतदेव प्राक्प्रवृत्ते-रिति भाष्ये स्पष्टीकृतम् ।

(उद्द्योतः) नन्वेवमतिश्रिये ब्राह्मणायातिशकट्यै ब्राह्मणाये-त्यादाववयवस्त्रीत्वमादाय विकल्पापत्तिरित्याशङ्क्य भाष्ये ह्रस्वेयुवि-त्यादि ॥ ङित्प्रत्ययाक्षिप्ताङ्गस्यैव स्त्रियामिति विशेषणमित्यनेनान्वाख्या-यत इति बोध्यम् । आख्यापदं त्वत्र न संबध्यतेऽतिश्रियाइत्यादाव-ङ्गस्य तत्त्वाभावात् पाक्षिकनदीत्वानापत्तेः । एवं च समुदायस्यानेन नदीत्वं क्रियते । तत्र प्रथमलिङ्गग्रहणं चेत्यस्य प्रत्याख्यानरीत्या प्राप्त्यभावान्नत्वं निवर्त्यं विधित्वेनैव व्याचष्टे—नदीसंज्ञौ भवत इति ॥ वस्तुतो वार्तिकेनाप्यतिलक्ष्म्यै इत्यादाववयवस्यैव सा क्रियते इति समुदायस्य नैव प्राप्तिः, अतिश्रिये इत्यादाववयवस्य तेन प्राप्ता नेयङिति निषिद्धा । तस्य तु नानेन संज्ञाविकल्पो, यतो ङिद्धिहितस्तदादित्वाभावात् । ह्रस्वावित्यादेर्ह्रस्वे वर्णाचन्ते इय-ङादिस्थाने वर्णाचन्ते च शब्दरूपे इति वार्तिकेऽर्थस्तादृशौ शब्दा-विति भाष्येऽर्थ इत्यलम् ॥ ननु प्रथमलिङ्गग्रहणस्य यू स्त्र्याख्यावि-त्यत्रोपसंख्यातत्वेन ङिति ह्रस्वश्चेत्यत्राप्रसक्तेर्ह्रस्वेयुवेत्यादि व्यर्थ-मत आह—अवयवेति ॥ न्यायस्तत्रापि समान इति भावः । प्रथमलिङ्गेत्यस्य ङिति ह्रस्वश्चेत्यत्रानुवृत्तिभ्रमवारणायेदमिति तु भाष्ये वक्ष्यति ॥ अतः कैयटे प्रत्याख्यानवाक्यमारम्भवाक्यस्या-प्युपलक्षणं बोध्यम् ॥

(व्याख्यान्तरभाष्यम्)

अपर आह—

॥ * ॥ ह्रस्वेयुवस्थानप्रवृत्तौ स्त्री-वचने ॥ * ॥

(भाष्यम्) ह्रस्वौ च इयुवस्थानौ च प्रवृत्तावपि स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् ॥ किं प्रयोजनम्? । शकट्यै अतिशकट्यै ब्राह्मण्यै । क्व मा भूत्? । शकटये अतिशकटये ब्राह्मणाय ॥ धेन्वै अतिधेन्वै ब्राह्मण्यै । क्व मा भूत्? । धेनवे अतिधेनवे ब्राह्मणाय ॥ श्रियै अतिश्रियै ब्राह्मण्यै । क्व मा भूत्? श्रिये अतिश्रिये ब्राह्मणाय ॥ भ्रुवै अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत्? । भ्रुवे अतिभ्रुवे ब्राह्मणाय ॥

(प्रदीपः) अपर आहेति । चशब्दोऽत्र न पठ्यत इति पूर्वस्माद्विशेषः । नहि प्राक् प्रवृत्तेः किंचिदनिष्टमापद्यते यदर्थः समुच्चयः क्रियते । पठ्यमानोऽपि[४] चशब्दः स्त्रीवचन-शब्देन सम्बध्यते स च नियमार्थः ॥ क्वचिद्भाष्ये पठ्यते—''अ-स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । शकट्यै अतिशकट्यै ब्राह्मणाय । क्व मा भूत्? । शकटये अतिशकटये ब्राह्मण्यै'' इत्यादि । एष त्वपपाठः । उपसंहारस्यान्यथाभिधानात् ॥

(उद्द्योतः) नहि प्राक् प्रवृत्तेरिति । ननु नयतीति नीस्त-मतिक्रान्तायै अतिनिये ब्राह्मण्यै हरिमतिक्रान्तायै अतिहर्यै इत्यत्र नदीत्वापत्तिरूपमनिष्टमस्त्येव । न चाङ्गस्य नित्यस्त्रीत्वाभावान्न दोषः, तस्य नित्यस्त्रीत्वेन विशेषणेऽतिश्रियै ब्राह्मण्यै इत्यसिद्ध्यापत्तेरिति चेन्न । तादृशानामनभिधानात् ॥ नियमार्थ इति । अस्त्रीवच-नाङ्गव्यावृत्त्यर्थं इत्यर्थः । शकट्ये इत्युदाहरणं तु ङेवन्तं बोध्यम् ॥ उपसंहारस्येति । प्रथमलिङ्गग्रहणं चोदितं तद्द्वेष्यमित्यादे-रित्यर्थः ॥

(अनुयोगभाष्यम्)

किमर्थं पुनरिदमुच्यते? ॥

(समाधानभाष्यम्)

प्रथमलिङ्गग्रहणं चोदितं तद्द्वेष्यं[६] विजानीयात्स-र्वमेतद्विकल्पते इति, तदाचार्यः सुहृद्भूत्वान्वा-चष्टे ह्रस्वौ चेयुवस्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवेति[७] ॥ यू स्त्र्याख्यौ नदी ॥ ३ ॥

(उद्द्योतः) द्वेष्यमित्यस्यानिष्टविषयकमपीत्यर्थः ॥ विकल्पत इत्यत्रोपसर्गोऽविवक्षितार्थः ॥ तदाचार्य इति । अस्याशय उक्तः ॥३॥

(इति नदीसंज्ञाप्रकरणम्)

(अथ घिसंज्ञाप्रकरणम्)

(१६७ घिसंज्ञाविकल्पसूत्रम् ॥ १ । ४ । २ आ. २ सू.)

## २४९ षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥

(१०४८ आक्षेपवार्तिकम् ॥ १ ॥)

[ ॥ * ॥ योगविभागः ॥ * ॥ ]

(भाष्यम्) योगविभागः कर्तव्यः ॥ ''षष्ठीयुक्त-श्छन्दसि'' षष्ठीयुक्तः पतिशब्दश्छन्दसि घिसंज्ञो भवति । ततो ''वा'' वा छन्दसि सर्वे विधयो भवन्ति ॥ सुपां व्यत्ययः । तिङां व्यत्ययः । वर्ण-व्यत्ययः । लिङ्गव्यत्ययः । कालव्यत्ययः । पुरुष-व्यत्ययः । आत्मनेपदव्यत्ययः । परस्मैपदव्यत्ययः ॥ सुपां व्यत्ययः—'युक्ता मातासीद्धुरि दक्षिणायाः' दक्षिणायामिति प्राप्ते ॥ तिङां व्यत्ययः—'चषालं ये अश्वयूपाय तक्षति' तक्षन्तीति प्राप्ते ॥ वर्णव्य-त्ययः—'त्रिष्टुभौजः शुभितमुग्रवीरम्' सुहितमिति प्राप्ते ॥ लिङ्गव्यत्ययः—'मधोर्गृह्णाति' 'मधोस्तृप्ता इवासते' मधुन इति प्राप्ते ॥ कालव्यत्ययः—'श्वो-

---

१ अवयवस्त्रीविषयत्वात्सिद्धमिति रीत्येत्यर्थः । (र. ना.) २ अवयवस्त्री-विषयत्वात्सिद्धमितीत्यादिः । (र. ना.) ३ अयं वार्तिकपाठः सर्वत्र नोपलभ्यते । ४ 'नो वा चश' । ५ प्रवृत्तौ स्त्रीवचनत्वाभावसंपत्तये इत्यादिः । (र. ना.)

६ सर्वमपि प्रथमलिङ्गे स्त्र्याख्यमीकारोकारात्मकं नदीसंज्ञायै कल्पते प्रसिध्य-तीत्येवमनिष्टविषयकमपि विजानीयादित्याशयः । (र. ना.) ७ 'स्त्रीवचन एव नदीसंज्ञौ भवतः' । ८ 'वा च च्छन्दसि' ।

**ऽग्नीनाधास्यमानेन' 'श्वः सोमेन यक्ष्यमाणेन' । श्व आधाता श्वो यष्टेति प्राप्ते ॥ पुरुषव्यत्ययः— 'अधा स वीरैर्दशभिर्वियूयाः' वियूयादिति प्राप्ते ॥ आत्मनेपदव्यत्ययः—'ब्रह्मचारिणमिच्छते' इच्छतीति प्राप्ते ॥ परस्मैपदव्यत्ययः—'प्रतीपमन्य ऊर्मिर्युध्यति' 'अन्वीपमन्य ऊर्मिर्युध्यति' युध्यत इति प्राप्ते ॥ षष्ठीयुक्तः ॥ ९ ॥**

(**प्रदीपः**) **षष्ठीयुक्तः ॥ ९ ॥ योगविभाग इति ।** तेन परिभाषा संपद्यते । यावदिह शास्त्रे कार्यं तच्छन्दसि वा भवति । तत्रानयैव सिद्धत्वाद्बहुलं छन्दसीत्यादि न वक्तव्यम् । एतदर्थश्च **व्यत्ययो बहुलमित्यत्र** योगविभागो न व्याख्येयः । उभयत्रविभाषा चेयं विज्ञेया ॥ **सुपामिति । कर्मणि द्वितीये**त्यादेर्नियमस्य विकल्पनादनियमोऽपि च्छन्दसि भवतीति सुपां व्यत्ययसिद्धिः ॥ **कालव्यत्यय इति ।** कालविहितप्रत्ययव्यत्यय इत्यर्थः ॥ ९ ॥

(**उद्द्योतः**) **षष्ठीयुक्तः ॥ ९ ॥** अत्र षष्ठीपदं तदन्तपरम् । षष्ठ्या युक्त इत्यर्थे तु षष्ठ्यामित्येव सिद्धे युक्तग्रहणवैयर्थ्यापत्तेः । तत्र समासे पूर्वेणैव सिद्धत्वात्कुलुङ्चानां पतये नम इत्यसमासार्थमेवेदम् । न चैवमपि समासे छन्दसि परत्वादयमेव विकल्पः स्यादिति वाच्यम् । वेदे आपाद्यरूपाभावेनेष्टापत्तेः । तत्र बहुलं छन्दसीत्यादिबहुतराकरणलाघवाय योगविभागो भाष्ये कृतः ॥ नन्वेवमपि स्थलान्तरविहितानां कथं विकल्पसिद्धिरत आह—**तेनेति ।** योगविभागसामर्थ्यगम्यसर्वविषयत्वेनेत्यर्थः ॥ **परिभाषेति ।** कार्यमात्रं चास्या लिङ्गं, तदाह—**यावदिति । उभयत्रभाषेति ।** यत्रयत्रास्या उपस्थितिस्ते केचित्प्राप्तविभाषारूपाः केचिदप्राप्तविभाषारूपाः पर्यवसन्तीति भावः । यद्यपि तेषु विधिषु नित्यं प्राप्तेषु 'छन्दसि वा' इत्यनेन सर्वापि प्राप्तविभाषैव, तथाप्यस्य विकल्पविधेर्व्यत्ययमात्रपर्यवसन्नतयाऽस्त्येव तत्संभव इति बोध्यम् ॥ ननु स्वादिवाक्येनानियमेन प्राप्ते कथं व्यत्यय इत्यत आह—**कर्मणीति ।** नियमस्यैव विकल्प इति भावः । यत्कर्मण्येवेति तच्छन्दसि वेति वचनव्यक्तेः । एवं च करणेऽप्राप्तद्वितीयाया **यवाग्वाऽग्निहोत्रं जुहोती**त्यादौ प्रयोगभेदेन करणाकरणाभ्यां विकल्पेऽप्राप्तविभाषा । अन्यप्राप्तावन्यस्य करणाद् व्यत्ययत्वं च बोध्यम् ॥ **सुहितमिति प्राप्ते इति ।** सकारहकारयोः शभौ[1] ॥ क्वचित्तु क्षुधितमिति[2] प्राप्ते इति पाठो दृश्यते ॥ **मधुन इति प्राप्ते इति ।** 'माध्वीर्गावो भवन्तु नः' इति क्षीरि[3]वाची नपुंसकलिङ्ग इति भावः ॥ कालव्यत्ययस्य ब्रह्माणोऽप्यशक्यत्वादाह—**कालविहितेति ॥ ९ ॥**

( इति घिसंज्ञाप्रकरणम् )

———

१ क्रियाऽक्रियाभ्यामित्यर्थः । ( र. ना. ) २ शुधितमिति । कुत्रचिन्मसीहरितालिकया निर्मितः शकारः ॥ Bangal Asiatic Society मुद्रितपुस्तके तु "शुभितमिति प्राप्ते" इति पाठः "सकारहकारयोः शभौ" इति व्यत्ययप्रदर्शकपूर्वग्रन्थविरुद्धः 'इति प्राप्ते' इति भाष्यविरुद्धश्च । ३ क्षीरिण्य इत्यर्थकस्य माध्वीरिति पदस्योपन्यासेन मधुपदस्य क्षीरवाचित्वं निश्चीयते । तस्य नपुंसकलिङ्गत्वं तु लोके तथा प्रयोगदर्शनादित्यभिसन्धिः । ( र. ना. )

( १६८ अङ्गसंज्ञासूत्रम् ॥ १ । ४ । २ आ. ३ सू. )

## २५३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १३ ॥

( पदकृत्यकथनाधिकरणम् )

( आक्षेपभाष्यम् )

**[ अथ यस्माद्ग्रहणं किमर्थम् ?[4] ॥ ]**

( समाधानभाष्यम् )

**यस्मादिति व्यपदेशाय ॥**

(**प्रदीपः**) **यस्मात्प्रत्ययविधिः ॥ १३ ॥ यस्मादिति व्यपदेशायेति ।** संज्ञिन इति शेषः । सति हि यस्मादित्यस्मिंस्तदादीत्यनेन संज्ञी निर्देष्टुं शक्यते नान्यथा । पराम्रष्टव्यसंश्यनिर्देशे तदिति परामर्शाभावात्तदादीत्यसम्बद्धमेव स्यात् ॥

(**उद्द्योतः**) **यस्मात् ॥ १३ ॥** ननु सर्वस्यापि शब्दस्य व्यवहाररूपव्यपदेशार्थत्वादत्रैव तत्कथनमनुचितमत आह—**संज्ञिन इतीति ॥** ननु तदादिपदमेव संज्ञिनिर्देशकं भविष्यतीत्यत आह—**सति हीति ॥** ननु यच्छब्दाभावे तच्छब्दप्रयोगो नेत्यसिद्धम् । 'ते तद्राजाः' 'कला च सा कान्तिमती कलावतः' 'सा गङ्गे'त्यादौ प्रकृतप्रसिद्धानुभूतार्थकेषु व्यभिचारादित्यत आह—**पराम्रष्टव्येति ।** प्रकृतादेरभावादिति भावः ॥ **तदिति परामर्शाभावादिति ॥** तदित्येतत्परामर्शयोग्याभावादित्यर्थः ॥ न च प्रत्ययविधीत्यत्र प्रकृतप्रत्ययस्यैव तदा परामर्शोऽस्तु यस्य प्रत्ययस्य विधिस्तदाद्यङ्गमित्यर्थोऽस्त्विति वाच्यम् । एवं हि विहितप्रत्ययादेरेवाङ्गसंज्ञा स्यादिति भविष्यतीत्यादौ धातोर्गुणानापत्तिः । एवं च विशिष्टसंज्ञिनिर्देशार्थं यस्मादित्युक्तमिति भावः । न च **प्रकृत्यादि प्रत्ययेऽङ्गमि**त्येवास्तु, प्रकृत्यादीत्यस्य यस्मात्प्रत्ययविधिस्तदादीत्यस्य च पर्यायत्वेन पर्यायेषु लाघवगौरवविचारानादरात् । योगविभागेन वक्ष्यमाणपरिभाषालाभाय तथान्यासस्यावश्यकत्वाच्च ॥

( अनुयोगभाष्यम् )

**अथ प्रत्ययग्रहणं किमर्थम् ॥**

( समाधानभाष्यम् )

**'यस्माद्विधिस्तदादि प्रत्ययेऽङ्गम्' इतीयत्युच्यमाने स्त्री इतीयं स्त्रीयतीत्यत्रापि प्रसज्येत । प्रत्ययग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

(**प्रदीपः**) **स्त्रीयतीति ।** स्त्रीशब्दात्सुशब्दस्य तल्लोपस्य च विधिरस्तीत्यङ्गसंज्ञा स्याद्भसंज्ञा चेति संज्ञाद्वयनिमित्तो **यस्येति चे**तिलोपः प्रसज्येत । ईश इदमादेशस्य **यस्येति**लोपस्यासिद्धवदत्राभादित्यसिद्धत्वं नास्ति । **प्राग्भादसिद्धत्वमिति**

———

४ अयं कोष्ठकान्तर्गतपाठः कुत्रापि नोपलभ्यते । समाधानग्रन्थेनोपलभ्यमानेन प्रश्नस्योन्नयनसंभवादनुपलभ्यमानप्रश्नपाठकल्पनं दाधिमथस्य स्वान्तसाहसमनुमापयतीति वयम् । ( र. ना. )

केषांचिदभ्युपगमात् । पदान्तरनिरपेक्षपदसंस्कारपक्षे स्थानिवद्भावो नास्ति [1]नानादिष्टादचः पूर्वः स्त्रीशब्द इति ॥

( उद्द्योतः ) स्त्री इयतीति । इदंशब्दात्परिमाणे वतुः, वस्य घस्तस्य इयादेश इदम इश् यस्येति लोपः । उगित्त्वान्ङीप् ॥ ननु यस्माद्विधिस्तदादि प्रत्ययेऽङ्गमित्युक्ते यत्र प्रत्ययेऽङ्गत्वं तस्यैव विधेः प्रत्यासत्त्या लाभेन प्रकृते न दोषोऽत आह—स्त्रीशब्दादिति । तदभावे तु व्याप्तिन्यायेनेहापि स्यात् । सति तु प्रत्ययग्रहणे तत्सामर्थ्यात्प्रत्यासत्तिरेवाश्रीयत इति भावः ॥ असिद्धत्वं नास्तीति । श्विणो लुङ्न्यायेन प्राप्तिः ॥ [2]प्राग्भादिति । वस्तुतस्त्वियङापत्तिर्दोषः । न च तत्रापीलोपस्यासिद्धत्वं, व्याश्रयत्वात्तत्प्राप्तेरभावात् । यस्येतिलोपप्राप्तिनिमित्तसमुदायापेक्षयाऽतिरिक्तस्य स्त्रीशब्दस्येयङापेक्षणादित्यादि षष्ठे निरूपयिष्यामः ॥ नानादिष्टादिति । इयङि न पदान्तेतिनिषेधोऽपि बोध्यः ॥

( अनुयोगभाष्यम् )

**अथ विधिग्रहणं किमर्थम् ? ।**

( प्रदीपः ) अथेति । यस्मात्प्रत्यय इत्यत्र विधीयत इत्यध्या[3]हरिष्यत इति प्रश्नः ॥

( उद्द्योतः ) ननु विधिग्रहणाभावे यस्मात्प्रत्यय इत्यस्य क्रियाकाङ्क्षा न शान्तेत्यत आह—अध्याहारिष्यत इति ॥

( समाधानभाष्यम् )

**'यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्गम्' इतीयत्युच्यमाने दधि अधुना, मधु अधुना, अत्रापि प्रसज्येत । विधिग्रहणे पुनः क्रियमाणे न दोषो भवति । तदेतत्प्रत्ययग्रहणेन विधिग्रहणेन च समुदितेन क्रियते संनि[4]र्योगः—यस्माद्यः प्रत्ययो विधीयते तदादि तस्मिन्नङ्गसंज्ञं भवतीति ॥**

( प्रदीपः ) दधि अधुनेति । असति विधिग्रहणे परशब्दस्याप्यध्याहारः स्यात् । इदमो यदा अधुनाप्रत्ययो निपात्यते इदमा देशस्य चेशो यस्येति । लोपस्तदेदं प्रत्युदाहरणम् ॥ यदा त्विदमोऽश्भावः धुना च प्रत्ययः । तदा स्त्रीयतीत्येतदेव प्रत्युदाहरणम् ॥ ननु क्रियमाणेऽपि विधिग्रहणेऽत्राङ्गसंज्ञा प्राप्नोति । अस्ति हि दधिशब्दात्सुप्रत्ययविधिरधुनाप्रत्ययश्च परः । ततश्चाङ्गसंज्ञायां भसंज्ञायां च सत्यां यस्येति लोपः प्राप्नोतीत्याह—तदेतदिति । प्रत्यासत्तिन्यायाश्रयणाद्यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव प्रत्यये परतस्तदाद्यङ्गमित्यर्थः ॥

( उद्द्योतः ) परशब्दस्यापीति । यद्यपि यस्मादिति पञ्चम्या परशब्दाध्याहारस्योभयोरप्यावश्यकत्वं तथापि तावतैव विश्रान्तिः स्याद् न तु विधीयत इत्यस्यापि ॥ अपिरेवार्थे ॥ विधिग्रहणे इति । प्रत्ययग्रहणस्याप्युपलक्षणम् ॥ भसंज्ञायां चेति । न च सति प्रत्ययविधिग्रहणे यचि भमित्यत्रापि यस्माद्यजादिप्रत्ययविधिरित्यर्थलाभान्नात्र भसंज्ञाप्राप्तिरिति वाच्यम् । यस्मात्प्रत्ययविधिस्तस्य यजादौ प्रत्यये भत्वमित्यर्थः स्यात् प्रत्यासत्तिन्यायानाश्रयणेनैवास्य ग्रन्थस्य प्रवृत्तेरिति भावः ॥ यस्येति लोप इति । इकोचीति[5]नुमः प्राप्तिरित्यन्ये । प्राग्दिशीयत्वेनास्य विभक्तित्वाद् भत्वाच्च न [6]नलोप इति तदाशयः ॥ इत्याहेति । इत्याशङ्कायामाहेत्यर्थः ॥ प्रत्यासत्तीति । तन्न्यायप्रवृत्तिलाभार्थमेवोभयमिति भावः । विधिग्रहणं भनक्तीत्यादावतो दीर्घ इति दीर्घव्यावृत्त्यर्थमित्यपि बोध्यम् । ध्वनितं चेदं श्नम्विधायके भाष्ये ॥

( अनुयोगभाष्यम् )

**अथ तदादिग्रहणं किमर्थम् ? ।**

( उद्द्योतः ) भाष्ये—अथ तदादीति । आदिग्रहणविषयः प्रश्नः ॥

( १०४९ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अङ्गसंज्ञायां तदादिग्रहणं स्यादिनुम[7]र्थम् ॥ * ॥

( भाष्यम् ) **अङ्गसंज्ञायां तदादिग्रहणं क्रियते स्याद्यर्थं नुमर्थं च ॥ स्याद्यर्थं तावत्—करिष्यावः करिष्यामः ॥ नुमर्थम्—कुण्डानि वनानि ॥**

( प्रदीपः ) करिष्याव इति । विकरणान्तस्याङ्गसंज्ञायां सत्यां तन्निबन्धनमतो दीर्घो य[8]ञीति दीर्घत्वं भवति । अन्यथा पापाव इत्यादावेव स्यात् । पय्धातोर्यङ्लुगन्तस्य वलि लोपो व्योर्वलीति यलोपे दीर्घत्वे च रूपम् ॥ कुण्डानीति । यदा नुम्परादिस्तदात्र सुपि चेति दीर्घत्वं सिध्यति । दधीनीत्यादौ तु अनकारान्तत्वान्न सिध्यति । पूर्वान्तपक्षे सामानीत्यादिवत्सिध्यति । यदा त्वभक्तत्वपक्षस्तदेदं प्रयोजनमादिग्रहणस्य । पूर्वान्तपक्षस्तु स्थापित इत्यप्रयोजनमेतत् ॥

( उद्द्योतः ) ननु दीर्घग्र[9]हणविधानसामर्थ्यादनङ्गत्वेपि दीर्घोऽत आह—अन्यथेति । चिकीर्षामीत्यादौ शबेकादेशस्य पूर्वान्तवत्त्वेनाङ्गत्वात्तत्रापि दीर्घस्य चारितार्थ्यं बोध्यम् । करोतीत्यादौ गुणोपि प्रयोजनं बोध्यम् ॥ तदेदमिति । कुण्डानीत्येतदित्यर्थः ॥

( १०५० आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ मित्सुटोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) **सित्वतः सुड्वतश्चोपसंख्यानं कर्तव्यम् ॥ सित्वतः—भिनत्ति छिनत्ति । अभिनत् । अच्छिनत् ॥ सुड्वतः—संचस्करतुः संचस्करुः ॥**

( प्रदीपः ) मित्सुटोरिति । मित्सुटोः कृतयोरित्यर्थः । भाष्यकारस्तु वस्तुतोर्थं व्याचष्टे—सित्वत इति ॥ भिनत्तीति । रूपोदाहरणमेतत् । कार्योदाहरणं च अभिनदिति । नित्यत्वात् श्नमि कृते अङ्गसंज्ञायामसत्यामडागमो न

---

[1] यत इत्यादिः । ( र. ना. ) [2] Bangal Asiatic Society मुद्रितपुस्तकेपि 'प्राग्भाशादिति' इत्येवं पाठ उपलभ्यते । तस्याशयश्चिन्त्यः । पाठभाष्यमनुसृत्यात्रापि कैयटेन 'प्राग्भाद्' इत्येवोक्तत्वात् ॥ [3] 'ध्याहारिष्यत-इति प्रतीकोपलब्धिरुद्द्योते । [4] संबन्ध इत्यर्थः । (र. ना.) [5] नुम इत्यादिः । ( र. ना. ) [6] 'पयेर्यङ' । [7] ग्रहणेत्यधिकं भाति । ( र. ना. ) [8] उकारस्येत्यादिः । ( र. ना. ) [9] 'तो व्याख्यानं करोति' ।

स्यादित्यङ्गसंज्ञोपसंख्यायते ॥ **संचस्करतुरिति** । द्विर्वचने कृतेऽड**भ्यासव्यवायेपी**ति सुटि चानङ्गत्वाद्**ऋतश्च संयोगादे**रिति गुणो न स्यात् । यदा तु **पूर्वं धातुरुपसर्गेण युज्यत** इत्येष पक्षस्तदान्तरङ्गत्वात्सुटि कृते तद्भक्तस्य तद्ग्रहणेन ग्रहणात्स्कृशब्दादेव प्रत्ययविधिरित्यङ्गसंज्ञा सिद्ध्यत्येव । स्कृशब्दस्य द्विर्वचने कृते **शर्पूर्वाः खय** इति खयः शेषे संचस्करतुरिति सिद्ध्यति । किं तु संस्कृषीष्ट संस्क्रियत इति इड्गुणनिवृत्तये कात्पूर्वग्रहणेनाभक्तत्वं सुटो ज्ञापितमिति पूर्वमपि प्रत्ययोत्पत्तेः सुटि कृते नास्ति सुट्सहितस्याङ्गसंज्ञेति गुणो न स्यादित्युपसंख्यानम् ॥

**( उद्द्योतः )** ननु मित्सुटोरङ्गत्वे न किंचित्प्रयोजनमत आह—**कृतयोरिति** । सति सप्तमीति भावः ॥ **भाष्येति** । सत्सप्तम्यैव सिद्धे मत्वध्याहाराश्रयणमयुक्तमतः फलितार्थकथनपरं भाष्यमित्यर्थः ॥ **रूपोदाहरणमिति** । मित्वद्रूपमीदृशमित्यर्थः ॥ अन्ये तु भिनत्तीत्यादावङ्गत्वाभावे लघूपधगुणाशङ्का[2] कर्मधारयेण समाधानं च वृद्धोक्तमसंगतं स्यादिति भाष्याशयमाहुः ॥ ननु परत्वात्पूर्वमेवाडागमोऽत आह—**नित्यत्वादिति** । **लावस्थायामडिति** पक्षे[3] भिन्धीत्यादावाङ्गं धित्वं न स्यादिति बोध्यम् ॥ ननु संशब्दमात्रापेक्षत्वेनान्तरङ्गत्वात्सुटि ततो लिडादिकमिति न दोषोऽत आह—**द्विर्वचन इति** । **पूर्वं धातुः साधनेन युज्यत** इति सिद्धान्तादिति भावः ॥ ननु टित्त्वाद्धात्ववयवत्वेन न दोषोऽत आह—**अडभ्यासेति** । नायं टित्त्वादाद्यवयवः किं त्वनेन मध्यं प्रवेशित इत्यभक्त इति भावः ॥ **तद्भक्तस्येति** । टित्त्वादित्यर्थः ॥ **स्कृशब्दादेवेति** । इदं चिन्त्यम् । एवं ह्यत्र धातूपसर्गयोः समासो दुर्वारः । स हि **पूर्वं धातुः साधनेने**ति न्यायेनोपपदमितिसूत्रे भगवता वारितः ॥ **इड्गुणेति** । **ऋतश्च संयोगादेर्गुणो**र्लिंसंयोगाद्योरिति विहितेत्यर्थः ॥ **अभक्तत्वं सुटो ज्ञापितमिति** । इदं ज्ञापकं कथमिति चिन्त्यम्[4] ॥ यद्वास्य इति मत्वेति शेषः । अत एवेड्गुणनिवृत्तये वचनमेव करिष्यति भाष्यकृत् पष्ठे । किं च सुटोऽभक्तत्वे सकारादेर्धातुत्वाभावात् स्कृशब्दस्य कथं द्वित्वमिति सुधीभिर्विभाव्यम् । यद्यप्यत्रत्यपूर्वपक्षिणः सुटोऽनवयवत्वाभिमानात्संचस्करतुरित्यादौ संयोगादित्वाभावादपि गुणो न प्राप्नोति तथापि **संयोगोपधग्रहणं कर्तव्य**मिति वार्तिकेन साध्यः । यद्यप्यवयवावयविभावस्य षष्ठ्यर्थस्याभावात्कथं तेनापि सिद्धिस्तथापि यदन्त्यवर्णनिरूपितमुपधात्वं संयोगस्येति निरूपकत्वलक्षणे षष्ठ्यर्थे बहुव्रीहिरित्यभिमानः[5] ॥

**( आक्षेपबाधकभाष्यम् )**

**किं पुनः कारणं न सिध्यति, सुटो बहिरङ्गत्वात् । बहिरङ्गः सुट् अन्तरङ्गो गुणः । असिद्धं बहिरङ्गमन्तरङ्गे ॥**

**( उद्द्योतः )** भाष्ये—**किं पुनरिति** प्रश्नमुपपादयति—**सुटो बहिरङ्गत्वादिति** ॥ बहिर्भूतोपसर्गनिमित्तत्वात्सुटो बहिरङ्गत्वम् । एवं च तस्यासिद्धत्वात्सिध्यत्येवाङ्गत्वमिति भावः ॥

**( आक्षेपबाधकभाष्यम् )**

**वक्ष्यत्येतत् *संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम्* ॥**

**( उद्द्योतः )** नन्वसिद्धत्वेनाङ्गत्वसाधने तेनैव संयोगादित्वाभावात्कथं गुणः स्यादत आह—**वक्ष्यत्येतदिति** । तथा च तत्सामर्थ्यात्तदंशे नासिद्धत्वमिति[6] भावः ॥

**( संयोगादिग्रहणवैयर्थ्यभाष्यम् )**

**यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन । इहापि सस्वरतुः सस्वरुरिति संयोगोपधस्येत्येव सिद्धम् ॥**

**( वैयर्थ्यनिरासभाष्यम् )**

**भवेदेवमर्थेन नार्थः । इदं तु न सिध्यति संचस्करतुः संचस्करुरिति ॥**

**( उद्द्योतः )** सस्वरतुरित्यस्य संयोगोपधग्रहणेन सिद्धावपि तदा सामर्थ्याभावादसिद्धत्वाभावानुपपत्तौ संचस्करतुरित्यादि न सिध्यतीत्याह—**भवेदित्यादि संचस्करुरित्यन्तम्** । तस्मात्संयोगोपधग्रहणसामर्थ्योपपत्तये संयोगादिग्रहणमपि कार्यमिति भावः ॥

**( अनुयोगभाष्यम् )**

**किं पुनः कारणं न सिध्यति ? ॥**

**( उद्द्योतः )** तत्र संयोगोपधग्रहणे कृते यदि तत्सामर्थ्यादसिद्धत्वाभावस्तर्ह्यङ्गत्वेपि तद्विषये तदभावः स्यादिति तत्करणेऽपि[7] तर्दसिद्धिरित्यत्रार्थोप्यभिप्रेतस्तत्रासिद्धत्वाभावे कुतोऽङ्गत्वं न सिध्यतीति पुनः पृच्छति—**किं पुनरिति** । एवं **सुटो बहिरङ्गत्वादि**त्यादि भाष्यं योजयन्ति केचित् ॥

परे तु भाष्ये **सुटो बहिरङ्गत्वादि**त्यादिः **किं पुनः कारणं न सिध्यती**त्यन्तो ग्रन्थ उपसर्गार्थसंबन्धो धातोः पूर्वमेव । ततश्च प्रत्यये कृते द्विर्वचनात्पूर्वमन्तरङ्गतरार्थकोपसर्गनिमित्तकः सुट् इति लिटः स्कृशब्दाद्विध्यभावेन संयोगादेरङ्गत्वाभावाद्गुणो न प्राप्नोतीति भाष्याशय इति प्रामाणिकाः ॥

**( अनुयोगसमाधानभाष्यम् )**

**इह तस्य वा ग्रहणं तदादेर्वा । न चेदं तद्, नापि तदादि ॥**

**( प्रदीपः ) तस्य वेति** । व्यपदेशिवद्भावादिति भावः ॥

**( उद्द्योतः )** ननु तदादिग्रहणे सति कथं तस्य केवलस्य ग्रहणमत आह—**व्यपदेशिवदिति** ।

**( १०५१ समाधानवार्तिकम् ॥ ३ ॥ )**

**॥ * ॥ सिद्धं तु तदाद्यादिवचनात् ॥ * ॥**

**( भाष्यम् ) सिद्धमेतम् ॥ कथम्? । तदाद्याद्यङ्गसंज्ञं भवतीति वक्तव्यम् ॥ किमिदं तदाद्यादीति ? ।**

---

१ सुट् टित्त्वादेव कृधातोराद्यवयवो भविष्यति इति कात्पूर्वग्रहणं व्यर्थं सत्सुटोऽभक्तत्वं ज्ञापयति 'सुट् कात्पूर्वोऽनवयव एव स्यान्न तु आद्यवयव' इति । ( र. ना. ) २ लघूपधपदे इत्यादिः । ( र. ना. ) ३ श्नमः पूर्वमडागमेऽभिनदित्यादेः सिद्ध्येति शेषः । ( र. ना. ) ४ ज्ञापकत्वमुपपादितं कैयटाशयमालम्ब्य मयेति चिन्त्यत्वोक्तिरेव चिन्त्या । ( र. ना. ) ५ अभिमानोक्तिर्बीजन्तु उपधाद्यवयववाचकपदसन्निधाने अवयवावयविभावार्थकत्वमेव षष्ठ्या न्याय्यम्, निरूपकत्वस्य षष्ठ्यर्थत्वाङ्गीकारेऽपि उपधात्वेऽन्त्यवर्णनिरूपितत्वं स्वरसतो न लभ्यते, समुदायनिरूपितत्वस्यैव लाभादिति च । ( र. ना. ) ६ नासिद्धत्वमिति । एवं च नैव सिध्यति ससुट्कस्याङ्गत्वमित्युपसंख्यानमावश्यकमेवेति तात्पर्यम् । ७ संयोगोपधग्रहणकरणेऽपीत्यर्थः । ( र. ना. ) ८ सुटोऽभक्तत्वेन ससुट्कस्य अङ्गत्वासिद्ध्या संचस्करतुरित्यस्यासिद्धिरित्यर्थः । ( र. ना. )

**तस्यादिस्तदादिस्तदादिरादिर्यस्य तदिदं तदाद्यादीति ॥**

( प्रदीपः ) **तस्यादिरिति** । भिद आदिर्भकारः स आदिर्भिनदित्यस्येति भवत्यङ्गसंज्ञा । एवं करोतेर्द्विर्वचने कृते चस्कृशब्दे स्थिते यस्मात्कृशब्दात्प्रत्ययविधिस्तस्यादिश्चकारः स एवादिश्चस्कृशब्दस्य ॥

( उद्द्योतः ) **तस्यादिश्चकार इति** । द्विर्वचने द्विःप्रयोगत्वस्वीकारादित्यर्थः ॥

**( आक्षेपभाष्यम् )**

**स तर्हि तथा निर्देशः कर्तव्यः? ॥**

**( समाधानभाष्यम् )**

**न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा— उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः, खरमुखः ॥ एवं तदाद्यादि तदादीति ॥**

( प्रदीपः ) **उष्ट्रमुख इति** । यथा गतार्थत्वान्मुखशब्दनिवृत्तिस्तथा पूर्वं प्रतिपादितम् । इहापि प्रतिलक्ष्यं लक्षणमेदात्तदवयवे तच्छब्दो वर्तत इति तदवयवादित्वान्मित्वुटोः कृतयोरङ्गसंज्ञा सिध्यति ॥

( उद्द्योतः ) ननूष्ट्रमुखे बाधात्तथाङ्गीकारेऽपि करिष्याम इत्यादौ मुख्यार्थत्वेऽपि चारितार्थ्यादत्र लक्षणायां मानाभावोऽत आह— **इहापीति** ॥ **प्रतिलक्ष्यमिति** । तस्य लक्ष्यत्वनिश्चयः शिष्टप्रयोगादिति भावः ॥ **तदवयवे इति** । तदाद्यवयवे इत्यर्थः ॥

**( १०५२ समाधानान्तरवार्तिकम् ॥ ४ ॥ )**

## ॥*॥ तदेकदेशविज्ञानाद्वा सिद्धम्[1] ॥*॥

**( भाष्यम् ) तदेकदेशविज्ञानाद्वा सिद्धमेतत् । तदेकदेशभूतं तद्ग्रहणेन गृह्यते । तद्यथा गङ्गा यमुना देवदत्तेति । अनेका नदी गङ्गां यमुनां प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । तथा—देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते ॥**

**( समाधानबाधकभाष्यम् )**

**विषम उपन्यासः । इह केचिच्छब्दा अव्यक्तपरिमाणानामर्थानां वाचका भवन्ति—य एते संख्याशब्दाः, परिमाणशब्दाश्च । पञ्च सप्तेति । त एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति । नैवाधिके भवन्ति न च न्यूने । केचिद्यावदेव तद्भवति तावदेवाहुः—यथैते जातिशब्दा गुणशब्दाश्च । तैलं घृतमिति खार्यामपि भवति द्रोणेऽपि । शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेऽपि द्रव्ये । अङ्गसंज्ञा चाप्यव्यक्तपरिमाणानां क्रियते, सा केनाधिकस्य स्यात् ॥**

( प्रदीपः ) **एकेनाप्यपाये इति** । अपाये तस्य रूपस्यापगमे । एकेन करणेन । एकाभावेनेत्यर्थः । यथा वर्षेकृतं[2] दुर्भिक्षमिति वर्षमभवत् करणं संपद्यते ॥ **अङ्गसंज्ञा चापीति** । यस्मात्प्रत्ययविधिस्तदादीति विशिष्टरूपपरिग्रहात् ॥

( उद्द्योतः ) भाष्ये—**अव्यक्तपरिमाणानाम्** । नियतपरिमाणानाम् ॥ **एकेनाप्यपाये इति** तृतीया न कर्तरि, षष्ठ्या बाधादत आह—**अपाये इति** । न चैकस्य विद्यमानस्यापाये करणता संभवतीति सामर्थ्यात्तस्याभावेनेति ज्ञायते । एवं चैकाभावेन पञ्चादिशब्दवाच्यरूपापाये पञ्चादिशब्दा न प्रवर्तन्त इति भावः । तत्र दृष्टान्तमाह—**यथेति** ॥ **विशिष्टरूपपरिग्रहादिति** । एवमुपसर्गादिसंज्ञा अप्यव्यक्तपरिमाणनिष्ठत्वान्न न्यूने । लौकिकैकदेशविकृतन्यायेनेत्यपि बोध्यम् ॥

**( समाधानसाधकभाष्यम् )**

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति यदयं "नेदमदसोरकोः" इति सककारयोः प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम्? इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यः—'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति, ततः सककारयोः प्रतिषेधं शास्ति ॥**

( प्रदीपः ) **तदेकदेशभूतमिति** । तन्मध्यपतितत्वात्तदेकदेशत्वावसायः ॥

( उद्द्योतः ) नन्वभक्तत्वात्तदेकदेशत्वमेवासिद्धमत आह—**तन्मध्येति** ॥

**( अनुयोगभाष्यम् )**

**अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्? ।**

**( १०५३ समाधानवार्तिकम् ॥ ५ ॥ )**

## ॥*॥ प्रत्ययग्रहणं पदादावप्रसङ्गार्थम् ॥*॥

**( भाष्यम् ) प्रत्ययग्रहणं क्रियते । पदादावङ्गसंज्ञा मा भूदिति । किं च स्यात्? 'स्त्र्यर्थं भ्र्वर्थं भ्वर्थम्' अङ्गस्येयङुवङौ स्याताम् ॥**

( प्रदीपः ) **स्त्र्यर्थमिति** । असति द्वितीये प्रत्ययग्रहणे प्रत्ययविधानमात्रप्रतिबद्धाङ्गसंज्ञा स्त्रीशब्दस्य प्राप्नोति । ततश्चतुर्थीविधानात् । ततश्चाङ्गाश्रय इयङ् स्यात् । पुनः प्रत्ययग्रहणे तु यस्माद्यः प्रत्ययो विहितः स एवं यदि परो[3] भवति तदा तस्याङ्गसंज्ञा भवति । यश्चात्र प्रत्ययो विहितो नासौ परः, लुप्तत्वात् । न च प्रत्ययलक्षणं भवति, **न लुमताङ्गस्येति** निषेधात् । इयङ्देशकार्यस्याङ्गत्वात्तस्मिन्कर्तव्ये निषेधप्रवर्तनात् ॥

( उद्द्योतः ) भाष्ये—**पदादाविति** । पदादौ परे इत्यर्थः ॥ **असतीति** । तदभावे प्रत्यासत्तिर्न्यायोत्थानाभावादित्यर्थः[4] ॥ **निषे-**

१ 'सिद्धम्' इत्यंशस्तु पूर्ववार्तिके उक्तत्वेनात्र केनचित्प्रक्षिप्तो भवेत् ।
२ वृष्टिरजायमानेत्यर्थः । ( र. ना. )
३ 'एवायं यदा परो' । 'एव यदि परो' ।
४ 'न्याये माना' ।

धादिति । अङ्गसंज्ञापि प्रत्यये परतः पूर्वस्य कार्यमिति भावः ॥ तस्मिन्कर्तव्ये इति । तन्निमित्तेऽङ्गत्वे कर्तव्ये इत्यर्थः ॥

( १०५४ समाधानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ परिमाणार्थं च ॥ * ॥**

( भाष्यम् ) **परिमाणार्थं च द्वितीयं प्रत्ययग्रहणं क्रियते । 'यस्मात्प्रत्ययविधिस्तदाद्यङ्गम्' इतीयत्युच्यमाने दाशतयस्याप्यङ्गसंज्ञा प्रसज्येत ॥**

( प्रदीपः ) **परिमाणार्थं चेति** । अन्यथा देवदत्त ओदनमपाक्षीदिति देवदत्तशब्दात्सुप्रत्ययविधिरिति तदादेः संघातस्याङ्गसंज्ञायां सत्यां देवदत्तशब्दात्पूर्वोऽडागमः स्यात् । प्रत्ययग्रहणे तु सति यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव परतस्तदाद्यङ्गमिति विज्ञायमाने न भवत्यतिप्रसङ्गदोषः ॥ **दाशतयस्येति** । दशावयवा येषां ते दशतयं । तेषु भवो दाशतयः । एतच्चानियमप्रतिपादनार्थं, न त्वत्र दशसंख्या विवक्षिता ॥

( उद्योतः ) तदादेः संघातस्येति । वाक्यसंस्कारपक्षे इदम् । दाशतयशब्देन ऋक्संहितेत्यन्ये ॥ **एतच्चेति** । इदमपिना सूचितमिति भावः ॥

( प्रत्ययग्रहणपरिभाषाधिकरणम् )

( आक्षेपभाष्यम् )

**तत्तर्हि कर्तव्यम् ? ॥**

( प्रदीपः ) अवयवान्विचार्य सूत्रमाक्षेप्तुं प्रश्नं करोति— **तत्तर्हीति** । सूत्रमित्यर्थः ॥

(उद्योतः) यदि तत्तर्हीत्यनेनाव्यवहितत्वाद् द्वितीयप्रत्ययग्रहणं परामृश्यते तदा केनेदानीमित्यादिभाष्यासंगतिः । नहि तदकरणेऽङ्गकार्ये काचिदनुपपत्तिः । अङ्गसंज्ञायामङ्गस्येत्यधिकृत्य दीर्घादिविधिसंभवादत आह—**अवयवानिति** ॥

( समाधानभाष्यम् )

**न कर्तव्यम् ॥ केनेदानीमङ्गकार्यं भविष्यति ? ॥ प्रत्यये इति प्रकृत्याङ्गकार्यमध्येष्ये ॥**

( प्रदीपः ) **प्रत्यय इति प्रकृत्येति** । तेन ब्राह्मणभिस्सा क्रिमिणां पश्येत्यादावैसूदीर्घाद्यभावः ॥

( उद्योतः ) **भिस्सा** ओदनः । क्रिमिशब्दाल्लोमादित्वान्नेटापि द्वितीयैकवचनम् । एवं च यदङ्गाधिकारव्यावर्त्यं तदेव प्रत्ययग्रहणस्यापीति भावः । नामः प्रत्ययसमुदायत्वेन प्रत्ययत्वाभाव इति बोध्यम् । एतद्द्वयमप्यर्थवत्परिभाषया सिद्धमिति चिन्त्यम् ॥

( आक्षेपभाष्यम् )

**यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे । प्राकरोत् उपैहिष्ट । उपसर्गात्पूर्वावडाटौ प्राप्नुतः ॥**

( प्रदीपः ) **प्राकरोदिति** । लङि परतः पूर्वस्यानियततावधेरडागमो विधीयमान उपसर्गादेः स्यात् ॥

( उद्योतः ) अनियतावधेरिति । एवं च देवदत्तः प्राकरोदित्यत्र देवात्पूर्वमप्यट् स्यादिति बोध्यम् ॥

( १०५५ समाधानवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ॥ * ॥**

( भाष्यम् ) **सिद्धमेतत् । कथम् ? । 'प्रत्ययग्रहणे यस्मात्स प्रत्ययो विहितस्तदादेस्तदन्तस्य च ग्रहणं भवति' इत्येषा परिभाषा कर्तव्या ॥**

( प्रदीपः ) **सिद्धं त्विति** । यत्र पूर्वः कार्यित्वेनाश्रीयते तत्र तदादेः कार्यं भवति । यत्र तु प्रत्ययान्तः संघात आश्रीयते तत्र तदादेः प्रत्ययान्तस्य ग्रहणं भवतीत्यर्थः ॥

( उद्योतः ) ननु केण इत्यादौ तदन्तग्रहणाभावात्समुच्चयोऽयुक्तोऽत आह—**यत्रेति** । व्यवस्थितत्वान्न समुच्चयः । तत्र तदन्तविधेः प्रत्ययग्रहणे चापञ्चम्या इति निषेधादिति भावः । प्रत्ययविधौ तु नास्याः प्रवृत्तिर्विहितप्रत्ययविषयत्वादस्या इति बोध्यम् ॥ **यत्र त्विति** । कृत्तद्धितेत्यादौ । एतेन प्रकृते तदादीत्यंशस्यैवोपयोगेन तदन्तस्येत्ययुक्तमित्यपास्तम् । प्रसङ्गात्तदुक्तेः । एवमेङ्ह्रस्वात्संबुद्धेरित्यादौ तदादेरिति पञ्चम्यन्तमित्यपि बोध्यम् ॥

( अनुयोगभाष्यम् )

**कः पुनरत्र विशेषः, एषा परिभाषा क्रियेत, प्रत्ययग्रहणं वा ? ॥**

( प्रदीपः ) **प्रत्ययग्रहणं वेति** । प्रत्ययो गृह्यते यस्मिन्सूत्रे तत्, अङ्गसंज्ञासूत्रमित्यर्थः ॥

( उद्योतः ) सूत्रप्रश्नस्य प्रक्रान्तत्वात् प्रत्ययग्रहणमित्ययुक्तमत आह—**प्रत्यय इति** ॥

( समाधानभाष्यम् )

**अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि ॥**

( प्रदीपः ) **अवश्यमिति** । क्रियमाणेऽप्यस्मिन्सूत्रे परिभाषावश्यं कर्तव्येति व्यापित्वात्परिभाषैवाश्रयणीया न तु सूत्रमित्यर्थः ॥

( १०५६ प्रयोजनवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ प्रयोजनं धातुप्रातिपदिकप्रत्ययसमासतद्धितविधिस्वराः ॥ * ॥**

( भाष्यम् ) **धातु—देवदत्तश्चिकीर्षति । संघातस्य धातुसंज्ञा प्राप्नोति ॥ प्रातिपदिक—देवदत्तो**

---

१ तस्य निमित्ते इति षष्ठीतत्पुरुषः । (र.ना.) २ 'तया' । ३ सूत्रमिति । अङ्गसंज्ञाविधायकमङ्गपदघटितमित्यर्थः कल्पनीयः अग्रे परिभाषार्थकखण्डस्यावश्यकरणीयत्वसाधनात् । ४ एषा सत्सप्तमी । ( र. ना. ) ५ इदं सप्तम्यन्तम् ।

( र. ना. ) ६ विहित इति भाष्योक्तेरिति भावः । ( र. ना. ) ७ देवदत्तादेरित्यादिः । एवमग्रेऽपि । ( र. ना. )

**गार्ग्यः । संघातस्य प्रातिपदिकसंज्ञा प्राप्नोति ॥ प्रत्यय—महान्तं पुत्रमिच्छति । संघातात्प्रत्ययोत्पत्तिः प्राप्नोति ॥ समास—ऋद्धस्य राज्ञः पुरुषः । संघातस्य समाससंज्ञा प्राप्नोति ॥ तद्धितविधि—देवदत्तो गार्ग्यायणः । संघातात्तद्धितोत्पत्तिः प्राप्नोति ॥ स्वर—देवदत्तो गार्ग्यः । संघातस्य "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वं प्राप्नोति । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवति' इति न दोषो भवति ॥**

( प्रदीपः ) **संघातस्येति ।** ततश्च सुब्लुक्[1] प्राप्नोति ॥ **महान्तं पुत्रमिति ।** समुदायस्यान्ते सुप्श्रवणात्सुबन्तत्वात् । सत्यां तु परिभाषायां समुदायस्यासुबन्तत्वादवयवस्य सापेक्षत्वादसामर्थ्याच्च भवति प्रत्ययः ॥ **ऋद्धस्येति ।** सुप्सुपेति विवक्षितायामपि संख्यायां समुदायस्य सुबन्तत्वात्समासप्रसङ्गः । परिभाषायां तु सत्यां समुदायस्यासुबन्तत्वात्सुबन्तसमुदायस्य च संख्या[2]विवक्षायां समासाप्रसङ्गात् । अवयवस्य च सापेक्षत्वात्समासाभावः ॥ **संघातात्तद्धितोत्पत्तिरिति ।** ततश्च वृद्धिस्वरौ संघातस्य स्यातां पूर्वस्य च सुपो लुक् ॥

( उद्द्योतः ) **ततश्चेति ।** संघातस्य धातुत्वात्प्रातिपदिकत्वाच्चेत्यर्थः । न च समासग्रहणकृतनियमेन प्रातिपदिकत्वं दुर्लभं, नियमस्य भेदसंसर्गद्वारकार्थवत्समुदायविशेषविषयकत्वात् । न च तद्धितान्तस्य तादृशमर्थव[3]त्त्वमित्याशयात् । **असामर्थ्यादिति ।** यदि स्यात् तदा महान्तं पुत्रीयतीत्यपि स्यादिति भावः । **विवक्षितायामपीति ।** वस्तुतस्तत्र संख्याविवक्षायां फलाभाव इति वक्ष्यामः ॥ **ततश्च वृद्धीति ।** ननु देवदत्तो गार्ग्यायण इत्यत्र यदि गार्ग्यापत्यं देवदत्तस्तदा समुदायात्प्राप्तिरेव न, असामर्थ्यात् । अपत्यप्रत्ययो ह्यपत्यवता समर्थो न त्वपत्यसमानाधिकरणविशेषणेनापि, यदि देवदत्तो यो गार्ग्यस्तस्यापत्यमित्यर्थस्तर्हि देवदत्तस्य गार्ग्यस्यापत्यमित्याद्युदाहार्यमिति चेन्न । देवदत्तो गार्ग्यायणो भक्तिरस्येति विवक्षायां **गोत्रक्षत्रियाख्येभ्य** इति वुञ् स्यादित्यभिप्रायात् ॥

( आक्षेपभाष्यम् )

**सा तर्ह्येषा परिभाषा कर्तव्या ? ॥**

( समाधानभाष्यम् )

**न कर्तव्या । एवं वक्ष्यामि—"यस्मात्प्रत्ययविधिस्तदादि प्रत्यये" गृह्यमाणे गृह्यते । ततः "अङ्गम्" अङ्गसंज्ञं च भवति यस्मात्प्रत्ययविधिस्तदादि प्रत्यये ॥**

( प्रदीपः ) **एवं वक्ष्यामीति ।** योगविभागोऽत्र क्रियते । **यस्मात्प्रत्ययविधिस्तदादि प्रत्यय** इत्येकं सूत्रम् । अत्र सोपस्कारत्वात्सूत्राणां **गृह्यमाणे गृह्यते** इति वाक्यशेषः समर्थ्यते । प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादि गृह्यत इत्यर्थः ॥

( उद्द्योतः ) **योगविभाग इति ।** न च द्वितीयस्योपयोगाभावादिदमयुक्तम् । ह्रस्वादङ्गाद् न लुमताङ्गस्येत्यादिव्यवहारनिर्वाहाय द्वितीययोगोऽप्यावश्यक इति भावः ॥ **सोपस्कारत्वादिति ।** पूरणापेक्षत्वादित्यर्थः ॥

( कृद्ग्रहणपरिभाषाधिकरणम् )

( आक्षेपभाष्यम् )

**यदि 'प्रत्ययग्रहणे यस्मात्स विहितः तदादेर्ग्रहणं भवति' इत्युच्यते, 'अवतप्तेनकुलस्थितं त एतत्' 'उदकेविशीर्णं त एतत्' सगतिकेन सनकुलेन च समासो न प्राप्नोति ॥**

( उद्द्योतः ) अवतप्ते इत्यादौ नकुलस्थितविशीर्णशब्दयोरनया परिभाषया क्तान्तत्वाभावात् कृदन्तरूपोत्तरपदत्वाभावाच्च क्तेन 'क्षेपे' तत्पुरुषे कृतीतिसमासविभक्त्यलुकौ न स्याताम् । अद्य चापलम् । अन्त्येऽत्य[4]न्तालभ्यत्वं द्योत्यम् ॥

( समाधानभाष्यम् )

**एवं तर्हि 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवति' इत्युक्त्वा ततो वक्ष्यामि—'कृद्ग्रहणे गतिकारकपूर्वस्यापि' 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवति' इत्येषा परिभाषा कर्तव्या ॥**

( आक्षेपभाष्यम् )

**कान्येतस्याः परिभाषायाः प्रयोजनानि ? ॥**

**( १०५७ प्रयोजनवार्तिकम् ॥ ९ ॥ )**

## ॥ * ॥ प्रयोजनं समासतद्धितविधिस्वराः ॥ * ॥

( भाष्यम् ) **समास—अवतप्तेनकुलस्थितं त एतत् । उदकेविशीर्णं त एतत् । सगतिकेन सनकुलेन च समासः सिद्धो भवति । समास ॥ तद्धितविधि—सांकूटिनम् । व्याक्रोशी । संघातात्तद्धितोत्पत्तिः सिद्धा भवति । तद्धितविधि ॥ स्वर—दूराद् आगतः दूरादागत इति । 'अन्तः' "थाथघञ्क्ताजबित्रकाणाम्" इत्येष स्वरः सिद्धो भवति 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवति' इति ॥**

( प्रदीपः ) **सांकूटिनमिति ।** **अणिनुण** इति यदि कूटिन्नित्येतस्मात्क्रियेत तदा तस्यैवादिवृद्धिः स्यात् ॥ **दूरागत इति ।** आगम्यते स्मेति कर्मणि क्तः । तत्र गतिस्वरेणाद्युदात्त आगतशब्दः । ततो दूरशब्दस्य **स्तोकान्तिकेति** समासः । **पञ्चम्याः स्तोकादिभ्य** इत्यलुक् । अत्र समासान्तोदात्तत्वे प्राप्ते तदपवादकृत्स्वरेणाद्युदात्ते आगत-

१ धातुप्रातिपदिकावयवत्वादित्यादिः । ( र. ना. ) २ सुप् सुपेतीत्यादिः । ( र. ना. ) ३ किन्तु सुबन्तस्येति शेषः । ( र. ना. ) ४ Bangal Asiatic Society मुद्रितपुस्तके तु 'सता लभ्यत्वं' इति पाठं स्थापयञ्शोधक एवार्थं प्रष्टव्यः ।

शब्दे प्राप्ते सगतेरपि क्तान्तत्वात् स्थानान्तरप्राप्तत्वाद्गतिस्वरस्य बाधकस्यापि बाधकत्वात् थाथघञ्क्तेति सिद्धमन्तोदात्तत्वम् ॥

( उद्द्योतः ) [सांकूटिने अभिविधौ भाव इनुण् ॥ सांकुटिनमिति ह्रस्वपाठोपि भाष्ये ॥] व्यावक्रोशीत्यत्र कर्मव्यतिहारे णच् 'णचः स्त्रियामञ्' न कर्मव्यतिहार इत्यैजूनिषेधः ॥ ननु दूरादागतेऽन्तोदात्तत्वं साध्यं, तच्च समासस्वरेण सिद्धमत आह— आगम्यते स्मेति । स्मशब्दप्रयोगो भूतकालद्योतनाय । गतिस्वरेण, कर्मणि क्तान्ते उत्तरपदे गतिरनन्तर इति विहितेन पूर्वपदप्रकृतिस्वरेण ॥ ततो दूरशब्दस्येति । अयमपि परिभाषासाध्य एव ॥ कृत्स्वरेणेति । कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः । एतत्प्राप्तिरपि परिभाषयैव ॥ सगतेरपीत्यनेन तत्प्राप्तियोग्यता ॥ ननु गतिस्वरेण पूर्वं बाधितस्य थाथेत्यस्य कथं पुनः प्राप्तिरत आह—स्थानान्तरप्राप्तत्वादिति । समासान्तरप्राप्तत्वादित्यर्थः । यतो गतेरुत्तरक्तान्तस्य यदन्तोदात्तत्वं तस्यैव सोपवादो न तु कारकादुत्तरक्तान्तस्यापीति तात्पर्यम् ॥ गतिस्वरस्य बाधकस्यापीति । थाथादिस्वरबाधकस्यापीत्यर्थः ॥ बाधकत्वादिति । समासान्तरे प्राप्त्या सतिशिष्टत्वेनेति भावः । यद्यपि परिभाषाऽभावे कृदन्तत्वाभावात् कृत्स्वराप्राप्तौ समासान्तोदात्तत्वेनेदं सिध्यति तथापि परिभाषासत्त्वेपि सिध्यतीत्युपन्यासः ॥

( आक्षेपभाष्यम् )

**सा तर्ह्येषा परिभाषा कर्तव्या ? ॥**

( समाधानभाष्यम् )

**न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येषा परिभाषेति, यदयं "गतिरनन्तरः" इत्यनन्तरग्रहणं करोति ॥ यस्मात्प्रत्यय ॥ १३ ॥**

( प्रदीपः ) यदयमिति । अनन्तरग्रहणस्य प्रयोजनमभ्युद्धतमित्यत्राभिशब्दस्य व्यवहितस्य प्रकृतिस्वरो मा भूदिति । यदि चैषा परिभाषा न स्यात् तत उद्धृतशब्दस्य अक्तान्तत्वात् क्तान्त उत्तरपदेऽनन्तरे परतो गतिस्वरो विधीयमानो नैव प्राप्नोति किमनन्तरग्रहणेन । तत् क्रियमाणमस्याः परिभाषायाः सद्भावं ज्ञापयतीत्यर्थः ॥ १३ ॥

( उद्द्योतः ) अस्या इति । एकदेशद्वारा कृत्स्ना परिभाषा ज्ञाप्यत इति भावः । अनन्तरग्रहणे तु तत्सामर्थ्यात्प्रत्ययग्रहणे यस्मादित्यस्या एवोपस्थानमिति तात्पर्यम् । एतच्च विस्तरेण गतिरनन्तर इति सूत्रे षष्ठे उपपादयिष्यते ॥ १३ ॥

( इत्यङ्गसंज्ञा )

—०००—

( अथ पदसंज्ञाप्रकरणम् ॥ )

( १६० पदसंज्ञासूत्रम् । १ । ४ । २ आ. ४ सू. )

## २५४ सुप्तिङन्तं पदम् ॥ १ । ४ । १४ ॥

( संज्ञाविधिपरिभाषाधिकरणम् ॥ )

( आक्षेपभाष्यम् )

**अन्तग्रहणं किमर्थम् । न "सुप्तिङ् पदम्" इत्येवोच्येत ? ॥**

**केनेदानीं तदन्तानां भविष्यति ? ।**

**तदन्तविधिना ॥**

( प्रदीपः ) सुप्तिङन्तं पदम् ॥ १४ ॥ अन्तग्रहणमिति । असत्यन्तग्रहणे सुप्तिङामेव पदसंज्ञा स्यात् ततश्चाग्निष्वित्यादौ सात्पदाद्योरिति षत्वनिषेधप्रसङ्ग इत्येतदर्थं यद्यन्तग्रहणं क्रियते तन्न कर्तव्यम् । प्रत्ययग्रहणे यस्मात्स विहित इत्यनन्तरोक्तया परिभाषया तदन्तविधेर्लब्धत्वादिति प्रश्नः ॥

( उद्द्योतः ) सुप्तिङन्तम् ॥ १४ ॥ तिङ्साहचर्यात्सुबपि प्रत्याहारः । न ङिसंबुद्ध्योरिति निषेधाच्च[३] ॥ तदन्तविधेरिति । शब्दस्वरूपस्य विशेष्यत्वात्तदन्तलाभ इति भावः । न च तदन्तविधिलाभेपि व्यपदेशिवद्भावेन केवलप्रत्ययस्यापि प्राप्तौ तदप्रवृत्तये पुनरन्तग्रहणमिति वाच्यम् । हलि सर्वेषामित्यादिनिर्देशैस्तत्रेहाप्रवृत्तिकल्पनादिति तात्पर्यम् ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( १०५८ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् ॥ * ॥**

( भाष्यम् ) **पदसंज्ञायामन्तग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? । एतज्ज्ञापयत्याचार्यः "अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न भवति" इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? । "तरप्तमपौ घः" तरप्तमबन्तस्य घसंज्ञा न भवति ॥ किं च स्यात् ? कुमारी गौरितरा । घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ॥**

( प्रदीपः ) कुमारीगौरितरेति । तरबन्तस्य घसंज्ञायां सत्यां तत्रोत्तरपदे परतो ह्रस्वत्वं कुमारीशब्दस्य पुंवद्भावं परत्वाद्बाधित्वा स्यात् । तरपि तु परतो गौरीशब्दस्य न

---

१ यद्यपि सर्वेष्वपि पुस्तकेषु कोष्ठकान्तर्गतोऽयं पाठः 'व्यावक्रोशीत्यत्र' इत्यतः प्राङ्नोत्तरमुपलभ्यते तथापि भाष्योपलब्धक्रमानुरोधेन मया व्यत्यासः कृत इति क्षन्तव्यमुचितकारिभिः । २ तस्मिन्निति निर्दिष्टे इति परिभाषयेति भावः ।

( र. ना. ) ३ यदि सुबिति प्रत्याहारो न स्यात्तदा ङ्यन्तसंबुद्ध्यन्तयोः पदत्वाभावात्परमेव्योमन्नित्यादौ नलोपाप्राप्त्या निषेधो व्यर्थ इतीति भावः । (र. ना.) ४ 'वचन' ।

स्यात् । ततः कुमारिगौरतरेति प्राप्नोति । कुमारगौरितरेति चेष्यते । भाष्ये तु समासप्रदर्शनपरं वाक्यमुपात्तम् ॥

( उद्द्योतः ) परत्वाद्बाधित्वेति । पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेनेत्युक्तेरिति भावः । न च पुनः पुंवत्त्वम् । सकृद्गति-न्यायाश्रयणात् । अत एव तत्सार्थकम् ॥ तरपि त्विति । अत्र पक्षे घसंज्ञकस्योत्तरपदस्य संभवेन घेनोत्तरपदविशेषणात् केव-लस्य चोत्तरपदत्वाभावात्तत्र परतो न ह्रस्वप्राप्तिरिति भावः ॥ कुमारिगौरतरेति । गौरीशब्दे तसिलादिष्विति पुंवत्त्वं प्राप्नोति । कुमारिगौरीतरेत्यपपाठः । न च तदन्तविध्यभावे ज्ञापितेप्यन्तपदं व्यर्थं प्रत्ययमात्रस्य संज्ञायामपि पदप्रदेशेषु तदन्तविधिना सिद्धेरिति वाच्यम् । पदत्वस्य प्रत्ययाप्रत्ययसाधारणत्वात् । उञि च पदे इत्याद्यसङ्गतेश्चेति दिक् ॥

( आक्षेपभाष्यम् )

**यद्येतज्ज्ञाप्यते "सनाद्यन्ता धातवः" इत्यन्तग्रहणं कर्तव्यम् । "कृत्तद्धितसमासाश्च" अन्तग्रहणं कर्तव्यम् । इदं तृतीयं ज्ञापकार्थम् ॥**

( प्रदीपः ) सनाद्यन्ता धातव इति । अन्यथा सनादीनामेव केवलानां धातुसंज्ञा स्यात् । ततश्चाचिकीर्षीदित्यादौ सन एव धातुत्वात्प्रत्ययोत्पत्तौ तदादेरेवाङ्गत्वात्ततः पूर्वोऽट् स्यात् । कृत्तद्धितेत्यत्रासत्यन्तग्रहणे केवलयोः कृत्तद्धितयोः प्रातिपदिकसंज्ञा स्यात् । ततश्च भिद् छिद् इति क्विबन्तस्य न स्यात् । अर्थवत्सूत्रेण तु न भवति, अधातुरिति निषेधात् । नापि प्रत्ययलक्षणेन प्राप्नोति, प्रत्ययनिमित्तमन्यस्य यत्कार्यं विधीयते तत्प्रत्ययलोपे भवति, न तु प्रत्ययस्यैव यत्कार्यं तदपि । नह्यसत्कार्यित्वेन वचनशतेनापि शक्यमाश्रयितुम् । केवलस्य च तद्धितस्य प्रातिपदिकसंज्ञायां सत्यामौपगव इत्यत्रापि षष्ठ्याः प्रातिपदिकेऽनन्तर्गतत्वाल्लुग्न स्यात् । तदन्तविधौ तु दोषानवतारः ॥

( उद्द्योतः ) अधातुरिति । विशेषणतया क्रियाबोधकस्यापि क्विबन्तादे स्त्वसन्तस्येतिसूत्रेऽधातोरित्युक्त्या धातुत्वानपगमज्ञापनादिति भावः ॥ प्रत्ययनिमित्तमिति । लक्षणग्रहणादिति भावः । न च केवलकृतां तद्धितानां च प्रातिपदिकत्वे फलाभावः । ङ्याप्प्रातिपदिकादित्यादौ शब्दरूपं विशेष्यमादाय तदन्तविध्याश्रयणेन तल्लाभात् ॥

( समाधानभाष्यम् )

**द्वे तावत्क्रियेते न्यास एव ॥ यदप्युच्यते— "कृत्तद्धितसमासाश्च" इत्यन्तग्रहणं कर्तव्यमिति ॥ न कर्तव्यम् । अर्थवदिति वर्तते । कृत्तद्धितान्तं चैवार्थवत्, न केवलाः कृतस्तद्धिता वा ॥ सुप्तिङन्तम् ॥ १४ ॥**

( प्रदीपः ) न केवला इति । ननु ययर्थवत्ता लौकिक्याश्रीयते सा पदस्यैव न तु कृत्तद्धितान्तस्यापि । पदस्यैव लोके प्रयोगार्हत्वात् । अन्वयव्यतिरेकगम्या त्वर्थवत्ता केवलानामपि कृत्तद्धितानामस्तीति किमुच्यते—न केवला इति । एवं तर्ह्यर्थवद्ग्रहणानुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते इत्यदोषः ॥१४॥

( उद्द्योतः ) लौकिकी, लोकविदिता । अत्र पक्षेऽर्थवद्ग्रहणात्तदन्तस्यापि न प्राप्नोतीति भावः ॥ सामर्थ्यादिति । कृत्तद्धितयोरर्थवत्त्वाव्यभिचारादिति भावः ॥ लौकिकार्थप्रत्यासन्न इति । लौकिकार्थकं यत्पदं तदर्थस्य प्रत्यासन्नः शास्त्रकल्पितत्वादिप्रकृतेरर्थः । तदाह—अभिव्यक्ततर इति । तदेवाह—प्रत्ययान्तेष्विति । कृत्तद्धितप्रत्ययार्थस्तु न तादृशः कल्पितावयवार्थत्वात्तस्य । प्रत्ययान्तेषु । सुबन्तेषु, सुबर्थत्वात्, तस्याः सुपो द्योतकत्वात्तत्रैव स लक्ष्यते न तु तद्रहिते इत्यर्थः । एवमेव पूर्वसूत्रे । इहाप्यर्थाधिकारानुवृत्तिसामर्थ्येन तद्ग्रहः । तदुक्तमनुवृत्तिसामर्थ्यादिति न तु तत्सामर्थ्यादित्युक्तम् । भाष्येप्यर्थवदित्यस्यार्थवत्पदगृहीतार्थवदित्यर्थः ॥ १४ ॥

( १६२ पदसंज्ञानियमसूत्रम् ॥ १ । ४ । २ आ. ५ सू. )

## २५५ नः क्ये १ । ४ । १५ ॥

( नियमत्वस्थापनाधिकरणम् )

( अनुयोगभाष्यम् )

**किमर्थमिदमुच्यते । न "सुबन्तं पदम्" इत्येव सिद्धम् ? ॥**

( प्रदीपः ) नः क्ये ॥ १५ ॥ किमर्थमिति । लुप्तेपि सुपि प्रत्ययलक्षणेन सिद्धा पदसंज्ञेति प्रश्नः ॥

( उद्द्योतः ) नः क्ये ॥ १५ ॥ नलोपार्थत्वात्पदत्वप्रयोजनप्रश्नोऽनुपपन्नोऽत आह—लुप्तेपीति ।

( समाधानभाष्यम् )

**नियमार्थोयमारम्भः । नान्तमेव क्ये पदसंज्ञं भवति नान्यत् । क मा भूत् ? । वाच्यति स्रुच्यति ॥ नः क्ये ॥ १५ ॥**

( प्रदीपः ) नान्तमेवेति । क्य एव नान्तमिति विपरीतनियमो न भवति । न ङिसंबुद्ध्योरिति नलोपनिषेधाज्ज्ञापकात् ॥ वाच्यतीति । नन्वत्र क्यचा न भाव्यम् गोसमानाक्षरनान्तादिति वचनात् ॥ एकीयमतं तदित्यदोषः । तन्मते तु क्यङ्क्यषोरनान्तं व्यावर्त्यं तपस्यतीत्यादौ ॥ १५ ॥

( उद्द्योतः ) ज्ञापकादिति । न च नान्तात्क्यचि ततः क्विपि सुपि प्रत्ययलक्षणेन क्यसत्त्वादनेन नियमेन पदत्वस्याव्यावृत्तेः प्राप्तनलोपवारणाय तदावश्यकम् । तथा प्रयोगाभावात् । अन्तरङ्गनलोपस्य बहिरङ्गेण निषेधेन बाधायोगाच्च । वचनं त्वन्यथा-नियमे चरितार्थमिति भावः । क्ये नान्तं पदमेवेत्यपि न, व्याख्यानात् । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ इति दश समाना.

१ स्वादिष्वसर्वनामस्थाने इत्यादिना प्रकृतेरपि पदत्वादिति भावः । (र. ना.) २ सुतिङन्तमित्यत्रत्यमित्यर्थः । ( र. ना. ) ३ 'कीर्षदि' । ४ क्विप इत्यादिः । ( र. ना. ) ५ 'प्रत्ययान्तरेषु' । ६ तस्याः प्रकृतार्थवत्ताया इत्यर्थः । (र. ना.)

७ द्वितीयस्येत्यादिः । ( र. ना. ) ८ 'प्रत्ययलक्षणेन प्राप्तस्य पदत्वस्य अनेन नियमेनाव्यावृत्तेरिति भावः' ।

क्षराणि । लकारस्य दीर्घाभावात्त्वेवेति प्रातिशाख्ये ॥ तपस्वतीति । अत्र पदत्वे रुत्वं स्यादिति भावः ॥ १५ ॥

( १७० पदसंज्ञासूत्रम् ॥ १ । ४ । २ आ. ६ सू० )

## २५७ स्वादिष्वसर्वनामस्थाने

## ॥ १ । ४ । १७ ॥

( इष्टानुपपत्तिवारणाधिकरणम् )

( आक्षेपभाष्यम् )

**असर्वनामस्थान इत्युच्यते, तत्र ते[1] राजा तक्षा 'असर्वनामस्थान' इति प्रतिषेधः प्रसज्येत ॥**

( प्रदीपः ) **स्वादिष्वसर्वनामस्थाने** ॥ १७ ॥ **राजेति** । प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् ॥

( १०५९ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नाप्रतिषेधात् ॥ * ॥

( भाष्यम् ) **नायं प्रसज्यप्रतिषेधः—'सर्वनामस्थाने न-' इति ॥ किं तर्हि ? ॥ पर्युदासोयम्—यदन्यत्सर्वनामस्थानादिति । सर्वनामस्थानेऽव्यापारः । यदि केन चित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति ॥**

( प्रदीपः ) **नाप्रतिषेधादिति** । प्रसज्यप्रतिषेधः प्रतिषेधशब्देनोक्तः ॥

( उद्द्योतः ) **स्वादिष्व** ॥ १७ ॥ पर्युदासेप्यार्थः प्रतिषेधोऽस्त्येवेत्यत आह—**प्रसज्येति** । शाब्दप्रतिषेध इति भावः ॥

( १०६० समाधानान्तरवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अप्राप्तेर्वा ॥ * ॥

( भाष्यम् ) **अथ वा—अनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत एतत् ? । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति ॥**

( प्रदीपः ) **अप्राप्तेर्वेति** । प्रसज्यप्रतिषेधाश्रयणेपि न दोष इत्यर्थः ॥

( आक्षेपभाष्यम् )

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥**

( प्रदीपः ) **ननु चेयमिति** । परत्वादिति भावः । स्वादिष्विति प्राप्तिं प्रतिषेधो बाधते । तत्र यथा देवदत्तस्य हन्तरि हतेपि न पुनः प्रादुर्भाव एवं पदसंज्ञा न स्यादित्यर्थः ॥

( परिहारभाष्यम् )

**नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥**

( प्रदीपः ) **नोत्सहत इति** । **स्वादिष्विति** प्राप्तिः किं पूर्वस्याः प्राप्तेर्बाधिकाऽऽस्त्वथ निषेधस्य बाध्येति । तत्र प्राप्तेर्बाधो न युज्यते इत्यप्राप्त्यनुमानं बाध इत्यपवादविषयपरिहारेणोत्सर्गस्य प्रवर्तनात्स्वादिष्विति प्राप्तिस्तत्रासती कथं बाधकत्वमासादयेत् । यथा वृक्षावित्यत्र **नादिचीति** प्रतिषेधारम्भात्तद्विषये पूर्वसवर्णदीर्घस्याभावाद् वृद्धिं प्रति बाधकत्वाभावाद् वृद्धिः प्रवर्तते तथेदं सुबन्तं पदमिति पदसंज्ञेत्यर्थः ॥

( उद्द्योतः ) **प्राप्तबाधो न युज्यत इति** । गौरवादिति भावः ॥ **आसादयेदिति** । अनेन देवदत्तहन्तृहतन्यायस्यायमविषय इति दर्शितम् । हननजातीयप्राप्तेरेवाभावादिति भावः ॥

( १०६१ समाधानान्तरवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ योगविभागाद्वा ॥ * ॥

( भाष्यम् ) **अथ वा योगविभागः करिष्यते—"स्वादिषु" पूर्वं पदसंज्ञं भवति । ततः "सर्वनामस्थानेऽयचि" पूर्वं पदसंज्ञं भवति । ततः "भम्" भसंज्ञं च यजादावसर्वनामस्थान इति ॥**

( प्रदीपः ) **सर्वनामस्थानेऽयचीति** । असर्वनामस्थाने इत्यत्र नञ् श्रुतो यचीत्यनेन संबन्धं नीयते । यकारादि सर्वनामस्थानं नास्तीति यग्रहणमुत्तरार्थम् । तेनाजादौ सर्वे नामस्थाने पदसंज्ञा निषिध्यते, न तु हलादाविति राजेत्यत्रापि भवति ॥ **भसंज्ञं चेति** । भसंज्ञाविधौ असर्वनामस्थानेनैव नञ्संबध्यते ॥

( उद्द्योतः ) अयजादौ सर्वनामस्थाने इत्यर्थभ्रमं वारयति—**असर्वेति** । यजादौ सर्वनामस्थाने पदं नेत्यर्थः । तादृशार्थे हि योगविभागवैयर्थ्यं स्यादिति भावः ॥ ननु यग्रहणं व्यर्थं तदादिसर्वनामस्थानाभावादत आह—**यकारादीति** ॥ नन्वेवं भविधावपि तथैव संबन्धः स्यादत आह—**भसंज्ञेति** ॥

( आक्षेपभाष्यम् )

**यदि तर्हि सावपि पदं भवति, पचः प्लुतविकारे पदान्तग्रहणं चोदितम् । इह मा भूत्—भद्रं करोषि गौरिति । तस्मिन्क्रियमाणेपि प्राप्नोति ॥**

( प्रदीपः ) **गौरिति** । अत्र स्वादिष्वितिपदसंज्ञायां सत्यां **पूर्वस्यार्धस्यादुत्तरस्येदुताविति** प्रसज्येत ॥

( समाधानभाष्यम् )

**वाक्यपदयोरन्त्यस्येत्येवं तत् ॥**

---

१ असर्वनामस्थाने इति वदतस्तव राजा तक्षा इत्यत्रासर्वनामस्थाने इति प्रतिषेधः प्रसज्येतेत्यर्थः । ( र. ना. ) २ 'नेत्सव्या' । ३ 'प्राप्तौ बाधो' । ४ अयं कोष्ठकान्तर्गतपाठः कुत्रापि नोपलभ्यते ॥ "न लुमताऽङ्गस्य" इत्यत्र तु 'एवं तर्हि योगविभागः करिष्यते—' इत्युपक्रमेण भाष्यस्वतन्त्रग्रन्थत्वं प्रतीयते । अत्र तु 'अथवा योगविभागः करिष्यते' इति ग्रन्थेन समाधानान्तरत्वप्रतीत्या व्याख्याग्रन्थत्वं वार्तिकपाठमन्तरा न संभवति । तस्मात्—वार्तिकपाठस्त्रुटितो भवेदिति मत्वा वार्तिकं लिखितमस्माभिः ॥ भाष्यकृतैव पक्षान्तरत्वेनोक्तमिति चेद् नैवावश्यको वार्तिकपाठ इति कोष्ठकमध्ये स्थापित इति बोध्यम् ।

( प्रदीपः ) वाक्यपदयोरिति । वाक्यस्य चात्र विसर्जनीयोन्त्यो नत्वौकारः ॥

( शेषपूरणाधिकरणम् )

( १०६२ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सुवद्वद्भ्यो धारयद्वद्भ्यः पदसंज्ञा ॥ * ॥

( भाष्यम् ) एतयोः पदसंज्ञा वक्तव्या । सुवद्भ्यः धारयद्भ्यः ॥ स्वादिष्वसर्वनामस्थाने ॥ १७ ॥

( प्रदीपः ) सुवद्भ्य इति । तसौ मत्वर्थे इति भसंज्ञाप्राप्तौ पदसंज्ञाविधिः ॥ १७ ॥

( उद्द्योतः ) मतुपि स्वादिष्वित्यनेनैव सिद्धमत आह—तसाविति ॥ १७ ॥

( इति पदसंज्ञाप्रकरणम् )

( अथ भसंज्ञाप्रकरणम् ॥ )

( १७२ भसंज्ञासूत्रम् ॥ १ । ४ । २ आ. ७ सू. )

## २५८ यचि भम् ॥ १ । ४ । १८ ॥

( अनिष्टापत्तिवारणाधिकरणम् )

( १०६३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधः ॥ * ॥

( भाष्यम् ) भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधो वक्तव्यः । अनुकम्पितः षडङ्गुलिः षडिकः ।

( प्रदीपः ) यचि भम् ॥ १८ ॥ षडिक इति । षडङ्गुलीशब्दादनुकम्पायां बह्वचो मनुष्यनाम्न इति ठचि कृते ठाजादावूर्ध्वमिति ङ्गुलिशब्दस्य लोपे यस्येति चेत्यकारलोपे च कृते तुल्यावधिकया भसंज्ञया प्रत्ययलक्षणेन सुबन्तं पदमिति प्राप्तायाः पदसंज्ञाया बाधनाज्जश्त्वं न स्यादिति वचनम् ॥

( उद्द्योतः ) यचि भम् ॥ १८ ॥ संपूर्णोत्तरपदस्य लोपविधायकाभावादुत्तरपदलोपे इत्यसंगतमत आह—षडङ्गुलीति । एवं च स फलित इति भावः ॥ जश्त्वं न स्यादिति । तत्तत्पादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया पूर्वं न जश्त्वमिति भावः ॥

( १०६४ समाधानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ सिद्धमचः स्थानिवत्त्वात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । अचः स्थानिवद्भावाद्भसंज्ञा न भविष्यति ॥

( प्रदीपः ) सिद्धमच इति । अचो लोपस्येत्यर्थः । तत्र भसंज्ञायां विधीयमानायामकारलोपस्य स्थानिवत्त्वादकारान्तमेतद्भसंज्ञां प्रतीति भिन्नावधिविषयत्वाद्भपदसंज्ञयोर्बाध्यबाधकभावाभावः । न पदान्तेति स्थानिवत्त्वनिषेधोत्र न भवति । यत्र पदान्तो विधीयते तत्रासौ निषेधः यथा कौ स्तः कानि सन्तीति । अत्र हि वकारो यकारश्च पदान्तो विधेयः । इह तु पूर्वमेव जश्त्वं प्रवृत्तम् , न त्विदानीं विधेयम् ॥

( उद्द्योतः ) ननु नाचः स्थानिवत्त्वं किं तु तदादेशस्येत्यत आह—लोपस्येति ॥ यत्र पदान्त इति । पदचरमावयव इत्यर्थः ॥ न त्विति । उक्तरीत्या पूर्वमप्रवृत्तेरिदं चिन्त्यम् । तस्मादयमर्थः—षषष्ठाजादीतिवचनबोधितद्वितीयादच ऊर्ध्वं लोपविधायकवचनप्रवृत्तिप्रामाण्यादत्र भत्वे न स्थानिवत्त्वप्रतिषेध इति ॥

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—वागाशीर्दत्तः वाचिक इति ॥

( समाधानभाष्यम् )

वक्ष्यत्येतत्—"*सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् * ॥"

( प्रदीपः ) सिद्धमिति । उत्तरपदलोपस्य हलजादेशत्वान्नास्ति स्थानिवत्त्वमिति तुल्यावधिकया भसंज्ञया पदसंज्ञा बाध्यते ॥

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—षडङ्गुलिः षडिक इति ॥

( परिहारभाष्यम् )

वक्ष्यत्येतत्—" * षषष्ठाजादिवचनात्सिद्धम् *" इति ॥

( उद्द्योतः ) भाष्ये—षषष्ठेति । एकाक्षरपूर्वपदानामित्यत्र षड्भिन्नैकाक्षरेति वाच्यमित्यर्थः ॥

( शेषपूरणाधिकरणम् )

( १०६५ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ नभोङ्गिरोमनुषां वत्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) नभोङ्गिरोमनुषां वत्युपसंख्यानं कर्तव्यम् । नभस्वत् । अङ्गिरस्वत् । मनुष्वत् ॥

( प्रदीपः ) मनुष्वदिति । सत्यां पदसंज्ञायां रुत्वं स्याद् न तु षत्वमपदान्तस्येति वचनात् ॥

( उद्द्योतः ) नभोङ्गिर इति भाष्ये । अत्र वतिस्तेन तुल्यमित्यादिविहितः ॥ ननु मनुषशब्दे सान्तत्वाभावेन रुत्वाप्राप्तेर्भत्वमनर्थकमत आह—सत्यामिति । मनेरुसिर्बाहुलकादिति भावः ॥

( १०६६ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ वृषण्वस्वश्वयोश्च ॥ * ॥

( भाष्यम् ) वृषण् इत्येतस्य वस्वश्वयोर्भसंज्ञा व-

१ भवदित्येवं प्रयोगे प्राप्ते छान्दसत्वाड्वद् । ( र. ना. ) २ ठज्वलत्तेरुत्तरपदलोपाचेत्यादिः । ( र. ना. ) ३ 'वधिकत्वा' ।

**त्कव्या । वृषणवसुः । 'वृषणश्वस्य यच्छिरः' 'वृषणश्वस्य मेने' ॥ यचि भम् ॥ १८ ॥**

( प्रदीपः ) **वृषणवसुरिति** । पदत्वे सति पदान्तस्येति निषेधाण्णत्वं न स्याद् नलोपश्च प्रसज्येत । भत्वे तु सत्यल्लोपोऽन इत्यकारलोपोऽत्र न भवति । अङ्गसंज्ञाया अभावात् । अङ्गस्येति च तत्राधिकारात् । उपसंख्यानान्येतानि च्छन्दोविषयाणीत्याहुः ॥ १८ ॥

( उद्योतः ) ननु वार्तिके वृषणिति णान्तश्रवणेन णान्तशब्दे भत्वं व्यर्थमत आह—**पदान्तस्येति** । प्रयोगस्थकृतणत्वानुकरणं तदिति भावः ॥ **अङ्गसंज्ञाया अभावादिति** । अन्तर्वर्तिविभक्तेर्लुका लुप्तत्वाद् वसोश्च प्रत्ययत्वाभावादिति भावः ॥ **छन्दोविषयाणीति** । भाषायामप्रयोगादिति भावः ॥ १८ ॥

( १७३ भसंज्ञासूत्रम् ॥ १ । ४ । २ आ. ८ सू. )

## २५९ तसौ[२] मत्वर्थे ॥ १ । ४ । १९ ॥

( अर्थग्रहणप्रयोजनाधिकरणम् )

( अनुयोगभाष्यम् )

**अर्थग्रहणं किमर्थम् । न "तसौ मतौ" इत्येवोच्येत ? ॥**

( प्रदीपः ) **तसौ मत्वर्थे** ॥ १९ ॥ **अर्थग्रहणमिति । स्वादिष्विति** वर्तते तत्रैवं संबन्धः क्रियते—मतौ यः स्वादिर्वर्तत इति । शब्दे च वृत्त्यसंभवात्तदर्थवृत्तिर्विज्ञायते इति प्रश्नः ॥

( उद्योतः ) **तसौ** ॥ १९ ॥ नन्वर्थग्रहणाभावे मतावेव स्यान्नान्यत्रेत्यत आह—**स्वादिष्वितीति** ॥ **मतौ य इति** । सामानाधिकरण्ये हि तदनुवृत्तिर्निष्फला स्यादव्यभिचारादिति भावः ॥

( समाधानभाष्यम् )

**"तसौ मतौ" इतीयत्युच्यमाने इहैव स्यात्—पयस्वान् यशस्वान् । इह न स्यात्—पयस्वी यशस्वी । अर्थग्रहणे पुनः क्रियमाणे मतुपि च सिद्धं भवति, यश्चान्यस्तेन समानार्थस्तस्मिंश्च ॥**

( प्रदीपः ) **इहैव स्यादिति** । मतौ स्वादाविति सामानाधिकरण्येन मुख्यकल्पनया संबन्धे संभवत्यर्थग्रहणं न लभ्यत इति भावः ॥ **पयस्वानिति** । मत्वर्थीयप्रकरणेऽन्यतरस्यांग्रहणानुवर्तनाद् विनिना मतुव् न बाध्यते ॥

(उद्योतः) **मुख्येति** । उपरञ्जकतया विशेषणमिति भावः । नन्वसन्तत्वाद्विनिना मतुव् बाध्येतेत्यत आह—**मत्वर्थीयेति** ।

( आक्षेपभाष्यम् )

**यद्यर्थग्रहणं क्रियते, पयस्वान्, अत्र न प्राप्नोति । किं कारणम् ? । नहि मतुब् मतुबर्थे वर्तते ॥**

( प्रदीपः ) **नहि मतुबिति** । उपलक्षणस्यान्योपलक्षणे चरितार्थत्वात् स्वतः कार्यं प्रति निमित्तत्वावगमाभावात् ॥

( उद्योतः ) **अन्योपलक्षणे** । अन्यबोधने । जहल्लक्षणाया-मतद्गुणबहुव्रीहौ चोपलक्षणस्य कार्ययोगो न दृष्टचर इति भावः ॥

( परिहारभाष्यम् )

**मतुबपि मतुबर्थे वर्तते । तद्यथा—देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते यदि देवदत्तोपि ब्राह्मणो भवति, सोप्यानीयते ॥ तसौ मत्वर्थे ॥१९॥**

( प्रदीपः ) **मतुबपीति** । अस्मिन्निति मतुपोऽर्थः । स च विन्नादीनामिव मतुपोपीति भावः ॥ **तद्यथेति** । अयमत्रार्थः—यत्र रूपान्तरेणोपलक्षणत्वं रूपान्तरेण च कार्ययोगः प्रतिपाद्यते तत्रोपलक्षणस्याप्युपलक्ष्यरूपसद्भावे सति कार्ययोगो भवति । तद्यथा—देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते सति ब्राह्मण्ये देवदत्तस्याप्यानयनं भवति । कार्यनिमित्तरूपान्तराभावे तु न भवत्युपलक्षणस्य कार्ययोगः । यथा देवदत्तशाला भियतामिति ॥ १९ ॥

( उद्योतः ) ननूपलक्षणस्यापि कार्यान्वयेऽतिप्रसङ्गोत आह—**अयमत्रेति । यत्र रूपान्तरेणेति** । यथा दृष्टान्ते देवदत्तत्वेनोपलक्षणता ब्राह्मणत्वेन कार्ययोगस्तथा प्रकृते मतुत्वेनोपलक्षणता मत्वर्थकत्वेन कार्ययोग इति भावः ॥ **रूपान्तराभावे त्विति** । उपलक्ष्यतावच्छेदकरूपस्योपलक्षणेऽभावे त्वित्यर्थः । यथा शालात्वं न देवदत्ते इति भावः ॥ १९ ॥

( १७४ भसंज्ञासूत्रम् १ । ४ । २ आ. ९ सू. )

## २६० अयस्मयादीनि छन्दसि ॥ १ । ४ । २० ॥

( १०६७ आक्षेपवार्तिकम् ॥ १ ॥ )

**[ ॥ * ॥ उभ[३]यसंज्ञान्यपि ॥ * ॥ ]**

( भाष्यम् ) **उभयसंज्ञान्यपीति वक्तव्यम् । स सुष्टुभा स ऋक्वता गणेन ॥ अयस्मयादीनि ॥ २० ॥**

( प्रदीपः ) **अयस्मयादीनि** ॥ २० ॥ आनन्तर्याद्भसंज्ञाविधानद्वारेणैव निपातनं प्राप्तमित्याह—**उभयसंज्ञान्य-**

१ 'तद्भावः' । २ मनोरमायां तु ककुद्मन्त इत्यत्रानुनासिकवारणायात्र सूत्रे तकारात्प्राक् दकारप्रश्लेषोङ्गीकृतः । स च 'यचि भन्तसौ मत्वर्थे' इति संहितापाठे 'झरो झरि सवर्णे' इति लोपेन संभवति । तथाच व्यञ्जनदकारसस्वरतकारयोः समाहारं कृत्वा सकारेणेतरेतरयोगद्वन्द्व इति तकारद्वयवान्सूत्रपाठोऽसंहितापाठे बोध्यः । स च सस्वरतकारपाठे न संभवतीति स्वररहितकारपाठ एव समीचीनः । तथा पाठे च 'न व्यञ्जनपरस्यैकस्यानेकस्य वा (सजातीयव्यञ्जनस्य) श्रवणं प्रति विशेषोस्ति' इति पाष्ठभाष्यदर्शितरीत्या विशेषाभावात् समावेशः संभवतीति लेखकप्रमादकृत एवैकतकारपाठ इति बोध्यम् । वस्तुतस्तु संहितायां दकारप्रश्लेषेऽपि तदितरत्र एकतकारपाठ एव शोभनः । यथासंहिताया अभावे स्थानेऽन्तरतम इति प्रथमान्तपाठः । (र.ना.) ३ परिचायकतयेत्यर्थः । (र.ना.) ४ अयं कोष्ठकान्तर्गतपाठो न कुत्राप्युपलभ्यते ।

पीति । ऋकतेति । पदत्वात्कुत्वं[1] भत्वाजश्त्वं न भवति । जश्त्वविधानार्थपदसंज्ञाबाधनाय भसंज्ञाप्रवर्तनात् तन्निबन्धनकार्याभावः ॥ २० ॥

( उद्योतः ) अयस्मया ॥ २० ॥ इत्याहेति । इत्यत आहेत्यर्थः ॥ ननु भत्वे किं फलमत आह—जश्त्वमिति ॥२०॥

( इति भसंज्ञाप्रकरणम् ॥ )

( अथ वचननियमप्रकरणम् । )

( १७५ बहुवचननियमसूत्रम् ॥ १ । ४ । २ आ. १० सू. )

## २६१ बहुषु बहुवचनम् ॥ १ । ४ । २१ ॥

( बहुष्वित्यस्य गुणप्रधानताधिकरणम् )

( अनुयोगभाष्यम् )

**"बहुषु बहुवचनम्" इत्युच्यते । केषु बहुषु ? ।**

( प्रदीपः ) बहुषु बहुवचनम् ॥ २१ ॥ केषु बहुष्विति । जातिवादी प्रत्यवतिष्ठते । जातेः प्रातिपदिकार्थत्वे तस्या एकत्वाद्बहुत्वासंभवात्तत्सहचरितद्रव्यगतं[2] बहुत्वमाश्रयणीयम् । ततश्च वृक्ष इत्यत्रावयवगतबहुत्वसद्भावात्स्याद्बहुवचनमिति भावः ॥

( उद्योतः ) बहुषु ॥ २१ ॥ ननु बहुष्वित्युक्तेऽस्य प्रत्ययनियमत्वात् प्रकृत्यर्थेषु बहुष्वित्यर्थः सुलभोऽत आह—जातिवादीति ॥ अवयवगतेति । अवयवानामपि वृक्षे शाखेत्यादिव्यवहाराज्जातिसहचरितत्वादिति भावः ॥

( समाधानभाष्यम् )

**अर्थेषु ।**

( प्रदीपः ) अत्रोत्तरम्—अर्थेष्विति । अस्याप्ययं भावः—द्रव्यं पदार्थः । तत्राभिधेयगतमेव बहुत्वमाश्रीयते । वृक्षशब्दस्य चावयवी वाच्यो न त्ववयवाः । आकृतिपक्षेपि प्रत्यासत्त्या तदाधारद्रव्यगतं बहुत्वमाश्रीयते, न त्ववयवगतम् । दारा इत्यादौ त्ववयवावयव्यभेदविवक्षायां बहुत्वमाकृत्याधारगतमेव बहुवचनवाच्यमित्यदोषः ॥

( उद्योतः ) नत्ववयवेति । तादृशपरम्पराग्रहणे मानाभावादिति भावः ॥ नन्वेवं दारा इत्यादावाधारगतबहुत्वाभावादव्याप्तिः । अवयवगततदाश्रयणे तु वृक्षा इत्यादावपि दोषोऽत आह—दारा इति । ईदृशाभेदोपचारेण वृक्षा इत्यादौ नानिष्टापादनमनभिधानादिति भावः ॥

( आक्षेपभाष्यम् )

**यद्येवं 'वृक्षः प्लक्षः' अत्रापि प्राप्नोति । बहवस्तेऽर्थाः—मूलं स्कन्धः फलं पलाशमिति ॥**

( प्रदीपः ) इतरोऽगृहीताभिप्राय आह—यद्येवमिति । अर्थशब्दो भवता वस्तुपर्यायः प्रयुक्तः । मूलादीनि च बहूनि वस्तूनि मन्यते ॥

( उद्योतः ) वस्त्विति । दारा इत्याद्यनुरोधाद्वस्तुपर्याय अवयवाश्रयणीयः । एवं च वृक्ष इत्यादौ दोष इति भावः ॥

( समाधानभाष्यम् )

**एवं तर्हि एकवचनं द्विवचनं बहुवचनमिति शब्दसंज्ञा एताः । येष्वर्थेषु स्वादयो विधीयन्ते तेषु बहुषु ॥ केषु च स्वादयो विधीयन्ते ? । कर्मादिषु ॥**

( प्रदीपः ) एवं तर्हीति । अयमर्थः—नेदं स्वातन्त्र्येण विधायकं किं तर्हि ? विहितानामनेन नियमः क्रियते । बहुवचनादिभिर्निष्पन्नशब्दसंज्ञाभिः सुप्तिङोत्र प्रत्याय्यन्ते । तेषां च शास्त्रान्तरेण स्थिते विधाने इदमारभ्यमाणं नियमाय भवति । न त्विदमेव विशिष्टार्थानुवादेन सुप्तिङोर्विधायकमित्येतच्छब्दसंज्ञा एता इत्यनेन प्रदर्श्यते ॥ येष्वर्थेष्विति ॥ क्वचित्तु पाठः एवं तर्हि येष्वर्थेष्विति । एकवचनमित्यादि तु भाष्यं नास्त्येव ॥ अयमर्थः—पञ्चकः प्रातिपदिकार्थः । तथा हि—दधि पश्येत्यादौ विभक्तिश्रवणमन्तरेणापि पञ्चार्थाः प्रतीयन्ते स्वार्थोदयः । विभक्तयस्तु क्वचिद्द्योतकत्वेनापेक्ष्यन्ते । तत्रानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति संख्यायां कर्मादिषु च सिद्धा एव स्वादयः । अनेन तु नियम्यन्ते । तत्र कर्मादिशक्त्यैकार्थसमवेत एव बहुत्वे बहुवचनं भवति, न त्ववयवगते ॥

( उद्योतः ) नन्ववयवगतबहुत्वाश्रयेण बहुवचने प्रसक्तिते एकवचनादीनां शब्दसंज्ञात्वकथनमसंगतमत आह—नेदमिति ॥ विहितानामिति । न च सुप्तिङ्ध्येकवाक्यतया विधायकमेवेदम् । अन्योन्याश्रयपरिहाराय भाविसंज्ञाविज्ञानाश्रयणापत्तेः ॥ निष्पन्नशब्दसंज्ञाभिरिति । निष्पन्नशब्दस्य संज्ञाभूतैरित्यर्थः ॥ प्रदर्श्यत इति । नियमश्च यद्गतैकत्वादिषु प्राप्तिस्तद्विषय एव, कर्मादिगतैकत्वादिषु च तेषां प्राप्तिरिति न मूलादिगतबहुत्वे तेषां प्राप्तिरिति भावः । तदाह—भाष्ये—येष्वर्थेष्विति । इदं द्योत्यपरं, पूर्ववाक्योपदर्शितनियमोपपादकत्वात् ॥ तत्र द्योत्यत्वमुपपादयति—पञ्चक इति ॥ नन्वेवं विभक्त्युपादानं व्यर्थमत आह—विभक्तयस्त्विति ॥ कर्मादिशक्त्येति । अनेन कर्मादिशब्देभ्यो विभक्तीनां वैधर्म्यं दर्शितम् ॥

( समाधानबाधकभाष्यम् )

**न वै कर्मादयो विभक्त्यर्थाः । के तर्हि ? । एकत्वादयः ।**

( प्रदीपः ) न वै कर्मादय इति । अनभिहितें इति सूत्रारम्भसामर्थ्यात्कर्मादीनां नैव विभक्तिवाच्यत्वमिति मन्यन्ते । तेषां हि विभक्त्यर्थत्वे तिङ्कृत्तद्धितसमासैस्तेषूक्तेषु गतार्थत्वाद्वितीयादीनां प्रसङ्ग एव नास्ति किमनभिहिताधिकारेण ॥

( उद्योतः ) इतरः प्रत्यासत्त्या कर्मगतबहुत्वे बहुवचनमिति नावयवगतबहुत्वमादायातिप्रसङ्ग इति मत्वाह—न वै इत्यादि । भाष्ये ॥ प्राधान्येन सूत्रे विभक्तिद्योत्यतयोक्ता इत्यर्थः । तत्रैकत्वादिषु

1 'कुत्वम्' इत्यस्य 'भवति' इत्यत्रान्वयः । 2 सहचरितत्वं सामानाधिकरण्यम् । (र. ना.) 3 'वस्तूनि इति' । 4 पञ्चार्थाः' । 5 बह्वर्थोक्तौ सत्यां बहुवचनं जाते च बहुवचने बह्वर्थोक्तिरित्येवंरूपेत्यादिः । (र. ना.)

6 कर्मादिशक्ति संबद्धैकत्वबहुत्वाद्यर्थबोधकत्वेनेत्यर्थः । (र. ना.) 7 'अनभिहितसूत्रा' । 8 किन्तु एकत्वादिविशेषणतयेत्यपि बोध्यम् । (र. ना.)

बहुष्विति तु वक्तुमशक्यमिति भावः ॥ ननु कर्मणि द्वितीयेत्याद्यनुशासनात्कथं तेषामवाच्यत्वमत आह—अनभिहितेति । अनुशासनं तु द्योतकत्वेनाप्युपपन्नमिति भावः ॥ किमनभिहिताधिकारेणेति । द्योतकत्वे तु यथा प्रकृत्युक्ते भवन्ति एवं तिङादिभिरभिहितेपि स्युरिति तद्व्यावृत्त्यर्थमनभिहिताधिकार आवश्यक इति भावः ॥ अनभिहितसूत्रेत्यादेर्ग्रन्थस्यात्र प्रतीके उपयोगश्चिन्त्यः । अत एव न वै कर्मादय इति प्रतीकपाठोऽसांप्रदायिक इति बहवः ॥ तदा पञ्चकप्रातिपदिकार्थपक्षोपपादकोयं ग्रन्थः ॥

( समाधानसाधकभाष्यम् )

**एकत्वादिष्वपि वै विभक्त्यर्थेष्ववश्यं कर्मादयो निमित्तत्वेनोपादेयाः—कर्मण एकत्वे, कर्मणो द्वित्वे, कर्मणो बहुत्वे इति ।**

( प्रदीपः ) **एकत्वादिष्वपीति** । वाक्यैकवाक्यत्वे सति महावाक्यं संपद्यते—कर्मण्यनभिहिते यदेकत्वं तत्रैकवचनमित्यादि ॥

( उद्द्योतः ) अत्रापि पक्षे एकत्वादीनामाश्रयाकाङ्क्षायां कर्मादीनामेव प्रत्यासत्त्या संभवेन च तत्त्वमित्याशयेनाह—भाष्ये—एकत्वादिष्वपीति । सूत्रे प्राधान्येन विभक्तिद्योत्यतयोक्तेष्वित्यर्थः ॥ तत्र प्रत्यासत्तिं दर्शयति—**वाक्यैकेत्यादिना** ॥ **कर्मण्यनभिहिते यदेकत्वमिति** । एकत्वादेराश्रयाकाङ्क्षानिवृत्तये एवमेकवाक्यतेति भावः ॥ भाष्ये—**कर्मादयो निमित्तत्वेनेति** । विशेषणत्वेनेत्यर्थः ॥

( आक्षेपभाष्यम् )

**स तर्हि तथा निर्देशः कर्तव्यः । नह्यन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः ॥ इह च 'इत्येके मन्यन्ते' 'तदेके मन्यन्ते' इति परत्वादेकवचनं प्राप्नोति ॥**

( प्रदीपः ) **स तर्हीति** । बहुत्वे इत्येवमित्यर्थः ॥ **एके मन्यन्त इति** । प्रातिपदिकार्थ एकत्वमप्यस्ति बहुत्वं च । द्व्येकयोरित्यत्र च विशेषानुपादाना[1]द्यावान् कश्चिदेकशब्दार्थः तस्य ग्रहणेन भाव्यम् । तत्र परत्वादेकवचनप्रसङ्गः ॥

( उद्द्योतः ) **नह्यन्तरेणेति** । तदर्थं भावप्रत्ययस्य साधुतया विधानेन केवलस्यासाधुत्वादिति भावः ॥ नन्वस्य संख्यावाचकत्वाभावान्न दोषोऽत आह—**द्व्येकयोरित्यत्रेति** ॥

( आक्षेपबाधकभाष्यम् )

**"बहुषु बहुवचनम्" इत्येष योगः परः करिष्यते ॥**

( आक्षेपसाधकभाष्यम् )

**सूत्रविपर्यासः कृतो भवति ॥ इह च 'बहुरोदनो' 'बहुः सूप' इति परत्वाद्बहुवचनं प्राप्नोति ॥**

( प्रदीपः ) **इह चेति** । इह यदि द्व्येकयोरिति योगात्परोयं योगः क्रियते तदा विशेषाभावाद्वैपुल्यरूपस्यापि बहुत्वस्य ग्रहणे सति परत्वाद्बहुवचनप्रसङ्गः ॥

(उद्द्योतः) नन्वस्य पूर्वत्वेन परत्वादित्यसंगतमिति मत्वाह—**इह यदीति** ॥

( समाधानभाष्यम् )

**नैष दोषः । यत्तावदुच्यते—नह्यन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देश इति ॥ [तन्न][2] अन्तरेणापि भावप्रत्ययं गुणप्रधानो भवति निर्देशः । कथम् ? । इह कदाचिद्गुणो गुणिविशेषको[3] भवति । तद्यथा—'पटः शुक्लः' इति । कदाचिच्च गुणिना गुणो व्यपदिश्यते[4] 'पटस्य शुक्लः' इति । तद्यदा तावद्गुणो गुणिविशेषको भवति 'पटः शुक्लः' इति तदा सामानाधिकरण्यं गुणगुणिनोः, तदा नान्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः । यदा तु गुणिना गुणो व्यपदिश्यते 'पटस्य शुक्लः' इति स्वप्रधानस्तदा गुणो भवति,—तदा द्रव्ये षष्ठी, तदान्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः ॥ न चेह वयमेकत्वादिभिः कर्मादीन्विशेषयिष्यामः । किं तर्हि ? । कर्मादिभिरेकत्वादीन् विशेषयिष्यामः ॥ कथम् ? । एकस्मिन्नेकवचनम् ॥ कस्यैकस्मिन् ? । कर्मणः ॥ द्वयोर्द्विवचनम् । कयोर्द्वयोः ? । कर्मणोः ॥ बहुषु बहुवचनम् । केषां बहुषु ? । कर्मणामिति ॥**

( प्रदीपः ) **गुणिविशेषक इति** । [5]अत एव वचनादनित्यः[6] षष्ठीसमासप्रतिषेधः । शेषषष्ठ्या वा समासः ॥ **सामानाधिकरण्यमिति** । मतुब्लोपादभेदोपचाराद्वा ॥ **तदा नान्तरेणेति** । गुणिवाचिनः शुक्लशब्दाद्भावप्रत्यये कृते गुणः प्रतीयते नान्यथेत्यर्थः ॥ **द्रव्ये षष्ठीति** । षष्ठीग्रहणं व्यतिरेक[7]विभक्तेरुपलक्षणार्थम् । गुणिनो ह्याधारत्वविवक्षायां सप्तम्यपि भवति । यथैवेह कर्मणि या संख्येति ॥

( उद्द्योतः ) ननु कर्तरि[8] चेत्यादिषष्ठीसमासनिषेधः स्यादत आह—**अत एवेति** ॥ अनित्यत्वस्य भाष्यानुक्तत्वादाह—**शेषेति** ॥ **सामानाधिकरण्यमेकार्थवृत्तिता** ॥ ननु गुणगुणिनोरत्यन्तभेदात्कथं तदित्यत आह—**मतुब्लोपादिति** ॥ **अभेदोपचाराद्वेति** । उपचरिताभेदस्योद्भूतत्वेन विवक्षणादिति भावः ॥ **गुणः प्रतीयते इति** । निष्कृष्टो गुणः प्रतीयत इत्यर्थः ॥ ननु द्रव्ये षष्ठीतिभाष्यदर्शनाद्विभक्त्यन्तरस्य किमसाधुत्वम् ?, नेत्याह—**उपलक्षणेति** । पटे शुक्ल इति प्रयोगात्सप्तम्यन्तस्य कर्त्रा-

---

१ 'द्यावत्' । २ 'तन्न' इत्ययं पाठः सर्वेषु पुस्तकेषूपलभ्यमानोपि न सांप्रदायिकः सार्वत्रिकभाष्यशैलीविरुद्धत्वात् । भाष्यकृता क्वापि तादृशलेखस्याकृतत्वात् । 'नैष दोषः' इत्यनेन पौनरुक्त्यापत्तेश्च । 'तत्र' इत्ययमपि भाष्यशैलीविरुद्ध एव । ३ गुणिपरः इत्यर्थः । ४ विशेष्यते इत्यर्थः । गुणिनिष्ठविशेषणतानिरूपितविशेष्यताशाली गुणो विवक्ष्यते, इति यावत् । ५ 'तत्प्रयोजक' इति सौत्रनिर्देशाच्चेत्यपि बोध्यम् । ६ 'दनित्यस्तृजकाभ्यां कर्तरीति षष्ठी' इति क्वाचित्कः पाठस्तु न सांप्रदायिक उद्द्योतविरोधात् । ७ व्यतिरेके भेदे सति जायमाना विभक्तिस्तस्या इत्यर्थः । (र. ना.) ८ कर्तरि चेत्यादीति । कर्तरिचेति इत्यस्य आदिः प्रथमः—'तृजकाभ्यां कर्तरि' इति तत्सूत्रेणेत्यर्थः । यथाश्रुते 'गुणिकर्तृकविशेषणाश्रया—' इति बोधे द्वितीयपक्षतो भेदानुपपत्तेरिति बोध्यम् ।

धन्वयद्वारैव क्रियान्वय इति गुणिनो गुणव्यपदेशकत्वेपि सप्तमी भवतीति भावः ॥ अत्र व्यतिरेकविभक्तिर्भावप्रधानतातात्पर्यग्राहकोपलक्षणम् । तेन जात्याख्यायामित्यादिसूत्रस्थभाष्येण न विरोधः ॥ तदान्तरेणापीति । अयं भावः—मञ्चाः क्रोशन्तीत्यादौ यथा मञ्चत्वस्य तत्स्थे आरोपान्मञ्चत्वेनैव तद्बोधस्तथा शुक्लगुणे तस्यैव भेदेनारोपाद्गुणप्रकारक एव गुणबोधः । गुणे भेदेन गुणारोपश्चाहार्य इति । किं बहुना सर्वत्र लक्षणास्थले प्रवृत्तिनिमित्तारोप आहार्य एव ॥ भाष्ये—न चेह वयमिति । एकं कर्मेत्येवमित्यर्थः । एवं च पटस्य शुक्ल इतिवद् भेदनिबन्धनसंसर्गबोधकविभक्त्यैव निष्कृष्टगुणप्रतीतेरुपपन्नत्वाद्भावप्रत्ययापेक्षा नास्तीति भावः ॥

(आक्षेपभाष्यम्)

**कथं बहुषु बहुवचनमिति ?।**

(प्रदीपः) **कथमिति** । बहुत्वस्यैकत्वाद्ब्रह्मावेति भाव्यमिति प्रश्नः ॥

(उद्योतः) **बहुत्वस्येति** । षष्ठ्यन्तपदेन संबन्धिनिर्देशाद्गुणपरतयेति भावः ॥

(समाधानभाष्यम्)

**एतदेव ज्ञापयत्याचार्यः—'नानाधिकरणवाची यो बहुशब्दस्तस्येदं ग्रहणम् । न वैपुल्यवाचिनः' इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? । यदुक्तम् 'बहुरोदनो बहुः सूप इति परत्वाद्बहुवचनं प्राप्नोति' इति, न स दोषो भवति ॥**

(प्रदीपः) **एतदेवेति** । आश्रयगतं बहुत्वं बहुत्वे गुणे आरोप्य निर्देशः कृतः । तस्यैतत्प्रयोजनं भिन्नवस्त्वाधारस्य बहुत्वस्य संख्यारूपस्य ग्रहणं यथा स्यात् । एकाश्रयवर्तिनो वैपुल्यरूपस्य मा भूदिति ॥

(उद्योतः) नन्वसाधुत्वे शङ्किते प्रयोजनकथनमसङ्गतमत आह—**आश्रयगतमिति** । एवमेव द्वयोर्द्विवचनम् । कयोर्द्वयोः । कर्मणोरिति भाष्ये[1] द्वयोरित्यादिद्विवचनाद्युपपत्तिर्द्रष्टव्या । एवं च धर्मपरत्वेपि न द्विशब्दस्यैकवचनान्तत्वम् ,किं तु दारशब्दवद् आरोपितसंख्यानिमित्त एव प्रत्ययस्तस्मात् । समासे तु विभक्त्यश्रवणादारोपे मानाभावेन द्व्येकयोरिति द्विवचनम् । एवं च दारपती[3] अप्तेजसी इत्येव साधुरिति बोध्यम् ॥ **एकाश्रयेति** । एवं च वैपुल्यवाचिग्रहणे बहुवचनमनुपपन्नं स्यादिति भावः ॥

(समाधानभाष्यशेषभाष्यम्)

**यदप्युच्यते—'इत्येके मन्यन्ते, तदेके मन्यन्ते' इति परत्वादेकवचनं प्राप्नोतीति ॥ नैष दोषः । एकशब्दोयं बह्वर्थः । अस्त्येव संख्यावाची ॥ तद्यथा—एको द्वौ बहव इति । अस्त्यसहायवाची ॥ तद्यथा—एकाग्नयः । एकहलानि । एकाकिभिः क्षुद्रकैर्जितमिति ॥ अस्त्यन्यार्थे वर्तते । तद्यथा—सधमादो द्युम्न एकास्ताः । अन्या इत्यर्थः ॥ तदो ऽन्यार्थे वर्तते तस्यैव प्रयोगः ॥**

(प्रदीपः) **एकशब्दोयमिति** । द्व्येकयोरित्यत्र संख्यापदेन द्विशब्देन साहचर्या[2]देकशब्दस्यास्ति संख्यावाचिनो ग्रहणम् । द्वित्वैकत्वयोश्च द्व्येकशब्दौ वर्तेते इति **द्व्येकयोरिति** द्विवचनेन निर्देशः । अन्यथा बहुवचनं स्यात् । प्रसिद्ध्या च संख्येयार्थत्वमेकादीनामष्टादशान्तानामुच्यते ॥

(उद्योतः) नन्वस्त्वेके मन्यन्ते इति प्रयोगोऽन्यार्थस्य, सूत्रे तस्यापि ग्रहणं कुतो नेत्यत आह—**द्व्येकयोरिति** ॥ नन्वेवं बहुवचनापत्तिरत आह—**द्वित्वेति** । नन्वेवमादशतः संख्याः संख्येय इति संख्ययाव्ययेति सूत्रस्थभाष्यसंमतप्रवादविरोधोऽत आह—**प्रसिद्ध्या चेति** । संख्यार्थकत्वं तु काचित्कमप्रसिद्धमित्याशयः ॥

(नियमार्थतानिर्णयाधिकरणम्)

(अनुयोगभाष्यम्)

**किमर्थं पुनरिदमुच्यते ?।**

(प्रदीपः) **किमर्थमिति** । लौकिकादेव प्रयोगाद्बहुत्वादिषु बहुवचनादीनां व्यवस्था भविष्यतीति प्रश्नः ॥

(उद्योतः) **लौकिकादेवेति** । महासंज्ञाकरणाच्चेत्यपि बोध्यम् । द्विसाहचर्यादेकबहुशब्दावपि संज्ञाघटकौ संख्याशब्दावेवेति नातिप्रसङ्गः ॥ **बहुत्वादिष्विति** । प्रातिपदिकार्थबहुत्वादिष्वित्यर्थः ॥

(१०६८ समाधानवार्तिकम् ॥ १ ॥)

**॥ * ॥ सुप्तिङामविशेषेण[4] विधानाद् दृष्टविप्रयोगाच्च[5] नियमार्थं वचनम् ॥ * ॥**

(भाष्यम्) **सुपोऽविशेषेण प्रातिपदिकमात्राद्विधीयन्ते । तिङो ऽविशेषेण धातुमात्राद्विधीयन्ते ॥ तत्रैतत्स्याद्यद्यप्यविशेषेण विधीयन्ते नैव विप्रयोगो लक्ष्यते इति । 'दृष्टविप्रयोगाच्च'[6] । दृश्यते खल्वपि विप्रयोगः । तद्यथा—'अक्षीणि मे दर्शनीयानि' 'पादा मे सुकुमाराः' इति । सुप्तिङोरविशेषविधानाद् दृष्टविप्रयोगत्वाच्च[7] व्यतिकरः[8] प्राप्नोति । इष्यते चाव्यतिकरः स्यादिति । तच्चान्तरेण यत्नं**

---

१ कर्मणामितीत्यादिः । ( र.ना. ) २ षष्ठ्यर्थे त्रिपदो बहुव्रीहिः । (र.ना.) ३ दारपती इति । दाराश्च पतिश्च दारपती इत्यत्र विग्रहे दारशब्दाद्बहुवचनेऽपि समासे द्व्येकयोरित्यत्रेव द्विवचनमेवेति भावः.। एवं च Bangal Asiatio Society मुद्रितपुस्तकेपि दारयती इत्यन्तस्थोपान्त्यपाठश्चिन्त्य एव । जायापती इत्यत्रेव दारशब्दसमभिव्याहारे पतिशब्दस्यैवौचित्याद्यतिशब्दस्यानौचित्यम् । 'दारयति' इति क्वचित्को ह्रस्वपाठस्तु प्रसङ्गाज्ञानेन क्रियापदभ्रान्त्या सर्वथैव चिन्त्यः । ४ 'मविशेषविधा' । ५ 'योगत्वाच्च' । ६ 'योगत्वाच्च' । ७ 'योगाच्च' । ८ एकवचनद्विवचनबहुवचनानां स्वेतरविषयेऽपि समापत्तिरूपं संमिश्रणमित्यर्थः । ( र. ना. )

**न सिद्ध्यतीति नियमार्थं वचनम् । एवमर्थमिद-मुच्यते ॥**

(प्रदीपः) **सुप्तिङादिति** । सुप्तिङ्विधानवाक्ये संख्याविशेषानिर्देशाद् विशेषानुपादानेन तेषां विधानमित्यर्थः ॥ **यद्यपीति** । शास्त्रेऽनुपात्तोऽप्यर्थः प्रयोगादेव व्यवस्थाप्यते इत्यर्थः । सुपस्तावत् स्वार्थे विधीयमानाः 'स्वार्थद्रव्यलिङ्गसंख्याकर्मादिलक्षणः पञ्चकः प्रातिपदिकार्थः' इति दर्शने संख्यायां सिद्धाः । संख्याविशेषावगतिस्तु लोकात्सिद्धा । तिङोपि कर्तृकर्मणोर्विधीयमानाः संख्यायुक्तयोरेव तयोर्वाचका भविष्यन्ति स्वभावतः । संख्याविशेषः प्रयोगदर्शनादवगम्यते इति भावः ॥ **अक्षीणीति** । द्वित्वेपि लोके बहुवचनं दृश्यत इत्यर्थः ॥ विरुद्धः प्रयोगो **विप्रयोगः** ॥

(उद्द्योतः) ननु स्वार्थे विहितानां कथमविशेषविधानमत आह—**संख्याविशेषेति** । इदमुपलक्षणं कारकविशेषस्यापि । अत एव **कर्मणि द्वितीयेत्यादेर्नियमत्वसिद्धिः** ॥ **प्रयोगादेवेति** । असति विरुद्धप्रयोगे प्रयोगाद् व्यवस्था सिध्यतीति भावः ॥ भाष्ये **लक्ष्यत इतीत्यन्ता दृष्टविप्रयोगत्वाचेत्यादेरवतारणिका** ॥ ननु स्वार्थे विधानेपि संख्यायां विधानार्थमेतदत आह—**सुप इति** । **स्वार्थद्रव्येति** । अत्र **स्वार्थ**शब्देन प्रवृत्तिनिमित्तं द्रव्यशब्देन विशेष्यमतो गुणपरशुक्लादिशब्दे नाव्याप्तिः ॥ **लौकिकादिति** । घट इत्यादौ जातौ व्यक्तौ वेत्यादिनिर्णयवदिति भावः । एवं **कर्मणि द्वितीयेत्यादीनामपि** नियमत्वं पञ्चकपक्ष एवेति स एव पक्षो मुख्यः । त्रिकादिपक्षस्त्वभ्युच्चय इति तत्त्वम् ॥ नन्वेवमपि तिङ्ष्वनुपपत्तिः, नहि तत्प्रकृत्यर्थः संख्या वक्तुं शक्येत्यत आह—**तिङोपीति** ॥ **संख्यायुक्तयोरेव तयोरिति** । तयोः संख्याश्रयत्वादिति भावः ॥ पचन्ति भवति पच्यन्ते भवतीत्यादौ कर्तृकर्मणोर्भवत्यादिघटकतिङर्थसंख्यायुक्तयोरभावादिदं चिन्त्यम् ॥ तस्मादारोपितानारोपितसंख्यायुक्तक्रियाकारकभूतयोरित्युचितम् । उक्तोदाहरणयोरनारोपितैकत्ववती क्रिया । कर्तृगतसंख्यारोपस्तु न, तत्र आरोपितस्यान्यत्रारोपाभावात् ॥ **स्वभावत इति** । इदं चिन्त्यमेवं स्वभाववादाश्रयणे **तस्यापत्यमित्यादेर्वैयर्थ्यापत्तिः** शास्त्रारम्भवैयर्थ्यं च । तस्मात्तिङोप्यविशेषेण । **धातुमात्राद्विधीयन्त** इति भाष्यात्संख्याविशेषाद्यनुपादानेनेत्यर्थकात्प्रातिपदिकस्येव धातोरपि संख्याकारके अर्थः । **लः कर्मणीत्यपि** नियम एव, **वर्तमाने लडित्यादिना** स्वार्थे विहितलानुवादेन तत्प्रवृत्तेः । करणादि च व्यावर्त्यम् । पाकेन कृतं वैरमित्यादौ तत्प्रतीतेः । तिङि तु नियमे द्योतकाभावात्तदर्थाप्रतीतिरित्यन्यत् ॥ **लः कर्मणि** चेत्यस्यापि कर्मादिवृत्तेर्धातोर्ले इत्येवार्थो **वर्तमाने लडितिवत्** । ध्वनितं चेदं **सुक्रमोरितिसूत्रे भावकर्मणोरित्यस्य** भावकर्मवृत्ताद्धातोरित्यर्थं प्रदर्शयता भाष्यकारेण ॥ संख्यायाश्च कारकस्येव क्रियायामेवान्वयस्तिङीति **ङ्याप्सूत्रे** उपपादयिष्यामः ॥ **कर्मादयः** शब्दाः सुबुनियामकेषु शक्तिपराः, तिङ्संबन्धिशास्त्रेषु शक्तिमत्पराः । अत एव तिङ्द्योत्यानां प्रकृत्यर्थविशेषणता । नहि शक्तिः साक्षात्क्रियागता । एवं च सुपां तिङां च [ द्योतकतैत्व भाष्यसंमतम् ॥ न च शत्रादिविषयलस्यापि द्योतकत्वापत्तौ ] तत्रापि कर्त्रादिविशेषणतैव स्यादिति महदनिष्टम् । तिङामसत्त्वभूतभावार्थत्वेन तत्स्थानिलस्य तदर्थकत्वेप्यास्यमाने शय्यमाने च गत इत्यादौ शानचि सत्त्वभूतभावप्रतीत्या तत्स्थानिलस्य तदर्थकत्वाय **भावे** इत्यस्यावृत्त्वाऽर्थद्वयबोधकत्ववत्कर्त्रोर्वैशेष्यावृत्त्या कर्त्रादौ वर्तमानात् कर्त्रादावर्थे च लकाराणां विधानेनाक्षतेरित्यलं विस्तरेण ॥ भाष्ये—**नियमार्थमिति** । अक्षीणीत्यादेरसाधुत्वमिति भावः ॥ वाक्यभेदेन च नियमो, मन्दमतेरेकवाक्यताज्ञानासम्भवात् । एकवाक्यतापक्षेपि फलतो नियम एव, तद्विनापि तत्र सिद्धेरिति तात्पर्यम् ॥

(अनुयोगभाष्यम्)

**अथैतस्मिन्नियमार्थे सति किं पुनरयं प्रत्ययनियम एकस्मिन्नेवैकवचनं, द्वयोरेव द्विवचनं, बहुष्वेव बहुवचनमिति । आहोस्विदर्थनियमः—एकस्मिन्नेकवचनमेव, द्वयोर्द्विवचनमेव, बहुषु बहुवचनमेवेति ? ॥ कश्चात्र विशेषः ? ॥**

(१०६९ प्रत्ययनियमपक्षदूषणवार्तिकम् ॥ २ ॥)

**॥ * ॥ तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञाऽभावोऽसुबन्तत्वात् ॥ * ॥**

(भाष्यम्) **तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञा न प्राप्नोति—उच्चैः नीचैरिति । किं कारणम् ? । असुबन्तत्वात् ॥**

(प्रदीपः) **तत्र प्रत्ययनियम इति** । प्रत्यया विशिष्टायां संख्यायां नियता इति निःसंख्येभ्योऽव्ययेभ्यस्तेषामनुत्पादात्पदत्वाभावात्तन्निबन्धनरुत्वाद्यभावप्रसङ्गः ॥

(उद्द्योतः) ननु प्रत्ययनियमेपि सजातीयापेक्षनियमाश्रयणादव्ययेभ्यः सिध्यतीत्यत आह—**प्रत्यया इति** । सामान्यापेक्षनियमेऽयं दोष इति भावः ॥

(१०७० अर्थनियमस्य निर्दोषतावार्तिकम् ॥ ३ ॥)

**॥ * ॥ अर्थनियमे सिद्धम् ॥ * ॥**

(भाष्यम्) **अर्थनियमे सिद्धं भवति ।**

(प्रदीपः) **अर्थनियम इति** । अर्था नियता इति तेषु वचनान्तराभावः । प्रत्ययास्त्वनियतत्वादव्ययेभ्योपि सिद्ध्यन्तीत्यर्थः ॥

(उद्द्योतः) नन्वर्थनियमेपि प्रत्ययनियमस्य त्यागे मानाभावाद्दोष एवात आह—**प्रत्ययास्त्विति** ॥ उभयविधनियमस्यैकवाक्येनालाभादित्यर्थः ॥

---

१ पच् धातूपस्थाप्यपाकक्रियात्मकेत्यादिः । (र.ना.) २ तादृशसंख्यायुक्तत्वं क्रियाविशेषणम् । (र. ना.) ३ भवतिक्रियेत्यर्थः । (र. ना.) ४ पाकक्रियारूपेत्यादिः । (र. ना.) ५ पाकक्रियारूपे कर्तरि आरोपितस्येत्यर्थः । अयं भावः । यत्रैकक्रियाकर्तृकाऽपरक्रिया तत्र मुख्यक्रिया अनारोपितसंख्यावती । यत्र तु द्रव्यादिकर्तृका तत्र कर्तृगतसंख्यायाः क्रियायामारोप इति । (र. ना.) ६ पाकक्रियायाः करणत्वप्रतीतेरित्यर्थः । (र. ना.) ७ न तु 'धातोः कर्मणि ल' इत्यर्थमाश्रित्य लकारस्य कर्मादिवृत्तत्वमिति भावः । (र. ना.)

८ अयं कोष्ठकान्तर्गतपाठः सर्वत्रोपलभ्यमानोपि Bengal Asiatic Society मुद्रितपुस्तके नोपलभ्यते । तत्पाठनिःसारणेऽपि तैः कथं ग्रन्थो योजित इति शोधकाः प्रष्टव्याः । ९ सूत्रं विनाऽपि प्रयोगदर्शनादेवैकत्वादिष्वेकवचनादीनां सिद्धेरित्यर्थः । (र. ना.) १० संख्यावदर्थयोग्यप्रातिपदिकादेकस्मिन्नेवैकवचनमित्यादिरूपः सजातीयापेक्षनियमः । (र. ना.) ११ एकस्मिन्नेवैकवचनमित्यादिरूपः प्रकृतः सामान्यापेक्षनियमः । (र. ना.) १२ सकृदुच्चरित इति न्यायादितिभावः । (र. ना.)

( अर्थनियमपक्षाभ्युपगमभाष्यम् )

अस्त्वर्थनियमः ।

( प्रत्ययनियमपक्षाभ्युपगमभाष्यम् )

अथ वा पुनरस्तु प्रत्ययनियमः ।

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्-* तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञाभावोऽसुबन्तत्वाद् * इति ।

( आक्षेपपरिहारभाष्यम् )

नैष दोषः ।

( १०७१ आक्षेपपरिहारसाधकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम् ॥ * ॥

( भाष्यम् ) सुपां संख्या चैवार्थः कर्मादयश्च । तथा तिङाम् ।

( प्रदीपः ) सुपामिति । कर्मणि द्वितीयेत्यादेः प्रकरणस्य बहुषु बहुवचनमित्यादेश्च स्वादिसूत्रेण सहैकवाक्यता । तिङर्थे त्विह तस्माद्भेदेन सूत्रद्वयमुपात्तम् । तत्रैकस्मिन्कर्मणीत्येवं गुणगुणिनोः सामानाधिकरण्येन संबन्धे सति संख्या कर्मादयश्च सुपामर्था भवन्ति ॥

( उद्द्योतः ) ननु प्रकरणान्तरविहितसुपां तिङां च कथमेतेऽर्था अत आह—कर्मणीति । आकाङ्क्षावशाद्वाक्यैकवाक्यतामनुभूयैव तेषां लक्ष्यसंस्कारत्वमित्यर्थः ॥ स्वादिसूत्रेणेति तिङ्सूत्रस्याप्युपलक्षणम् । पदैकवाक्यतयाऽन्वये तु 'कर्मत्वादियोग्यार्थकप्रातिपदिकार्थमात्रगते एकत्वे प्रथमैकवचनं सुः, कर्मशक्तिसमानाधिकरणे एकत्वे द्वितीयैकवचनम्' इत्यादिप्रकारेण वोधादन्यत्राव्ययादौ प्राप्तिरुपपादयितुमशक्यैव । किं चार्थनियमप्रकृतार्थापेक्षप्रत्ययनियमशुद्धप्रत्ययनियमेति कथोच्छेद एव । एकवचनादिशब्दे भाविसंज्ञाविज्ञानगौरवं च अतो वाक्यैकवाक्यतैवात्रैकवाक्यतापदेन विवक्षितेति दिक् ॥ नन्वेवमत्र पाठो व्यर्थोऽत आह—तिङर्थे[1] त्विति[2] ॥ सुपामर्था इति । द्योत्या इत्यर्थः । तिङ्ष्वपि द्योतकतेत्युपपादितम् ॥

( १०७२ अर्थनियमवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ प्रसिद्धो नियमस्तत्र ॥ * ॥

( भाष्यम् ) प्रसिद्धस्तत्र नियमः ।

( प्रदीपः ) प्रसिद्धो नियम इति । अर्थनियम इत्यर्थः ॥

( उद्द्योतः ) भाष्ये तत्रेति तच्छब्देन पूर्वोपक्रान्तार्थं एव परामृश्यत इत्याह—अर्थेति । पूर्वार्धेन सामान्यापेक्षप्रत्ययनियमासंभवो दर्शितः । अर्थद्वैयसत्त्वे[3] कर्मण्येवेत्यादेर्वक्तुमशक्यत्वमिति भावः ॥

१ 'तिङर्थे' । २ 'तिङर्थेत्विति' । ३ संख्याकर्मरूपेत्यादिः । ( र. ना. )

( १०७३ प्रकृतापेक्षप्रत्ययनियमपक्षवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ नियमः प्रकृतेषु वा ॥ * ॥

( भाष्यम् ) अथ वा प्रकृतानर्थानपेक्ष्य नियमः । के च प्रकृताः ? । एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । बहुष्वेव बहुवचनं न द्वयोर्नैकस्मिन्निति ।

( प्रदीपः ) नियमः प्रकृतेषु वेति । तुल्यजातीयस्य नियमेन व्यावृत्तिः क्रियत इत्यव्ययेभ्यः स्वादीनामव्यावृत्तिः ॥

( उद्द्योतः ) प्रत्ययनियमपक्षेप्यव्ययेभ्यः स्वाद्युत्पत्तये आह—प्रकृतेषु वेति ॥ नन्वेकत्वे एव नान्यत्रेत्येतावल्लभ्यते तत्कथं प्रकृतविषये नियमोऽत आह—तुल्यजातीयस्येति । तत्र प्रकृतापेक्षप्रत्ययनियमेऽयमर्थः कर्मत्वादियोग्यार्थकप्रातिपदिकाच्चेत्प्रातिपदिकार्थे एव कर्मण्येव नान्यत्र करणादाविति । पचतिकल्पमित्यादौ च या विभक्तिर्नेष्यते साऽनभिधानाद्वारणीयेति । एवमर्थनियमपक्षेपि बोध्यम् ॥

( सामान्यापेक्षप्रत्ययनियमपक्षेऽपि दूषणोद्धारभाष्यम् )

अथ वा आचार्यप्रवृत्तिर्ज्ञापयति—'उत्पद्यन्ते ऽव्ययेभ्यः स्वादयः' इति । यदयम् "अव्ययादाप्सुपः" इत्यव्ययाल्लुकं शास्ति ॥ बहुषु बहुवचनम् ॥२१॥

इति श्रीव्याकरणमहाभाष्ये प्रथमाध्यायस्य चतुर्थपादे द्वितीयमाह्निकम् ॥

( प्रदीपः ) अथ वेति । भवतु प्रत्ययानां सामान्येन नियमस्तथापि ज्ञापकादव्ययेभ्यः स्वादिसिद्धिरित्यर्थः ॥ २१ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य चतुर्थपादे द्वितीयमाह्निकम् ॥

( उद्द्योतः ) पदैकवाक्यतयान्वये सामान्यापेक्षप्रत्ययनियमे चाव्ययेभ्यः स्वाद्युत्पत्तिमाह—भाष्येऽथ वाचार्येति ॥ २१ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजी(नेश) भट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य चतुर्थे द्वितीयमाह्निकम् ॥

# अथ प्रथमाध्यायस्य चतुर्थपादे तृतीयमाह्निकम् ।

( आदितः सप्तदशम् )

( अथ कारकप्रकरणम् )

( तत्र )

( १७६ अधिकारसूत्रम् ॥ १ । ४ । ३ आ० १ सू० )

## २६३ कारके ॥ २३ ॥

( कारकशब्दार्थनिर्णयाधिकरणम् )

( अनुयोगभाष्यम् )

किमिदं 'कारके' इति ? ।

( प्रदीपः ) **कारके** ॥ २३ ॥ **किमिदमिति** । सप्तमीनिर्देशान्न तावत्संज्ञात्वेनाधिकारः । संज्ञाया भाव्यमानत्वात् प्रथमानिर्देशस्य न्याय्यत्वात् । अथ विशेषणत्वेनाधिकारस्तदा कारकाद्दत्तश्रुतयोरित्यादावपादानादिसंज्ञाविकलस्यापि कारकस्य ग्रहणं प्राप्नोति । षड्विधस्यैव चेष्यते । तद्व्यतिरिक्तं च कारकमस्ति । यथा—नटस्य शृणोतीति प्रश्नः ॥

( उद्योतः ) कारके ॥ २३ ॥ विधेयानिर्देशेन स्वार्थत्वा[1]संभवादयमधिकार एव, तत्राधिकारासंभवमाह—**सप्तमीति** ॥ **अथेति** । कारके इत्यस्य क्रियायामित्यर्थो विषयसप्तमी चेयमिति भावः ॥ ननु षड्विधकारकातिरिक्तकारकाप्रसिद्धिरत आह—**यथेति** । क्रियाजनकत्वं हि कारकत्वम् ॥

( समाधानभाष्यम् )

**संज्ञानिर्देशः** ।

( प्रदीपः ) **संज्ञानिर्देश इति** । सुपां सुपो भवन्तीति प्रथमायाः स्थाने सप्तमी कृतेति भावः ॥

( अनुयोगभाष्यम् )

**किं वक्तव्यमेतत्?** ।

( प्रदीपः ) **किं वक्तव्यमिति** । सप्तमीनिर्देशादयुक्तः संज्ञापक्ष इति भावः ॥

( समाधानभाष्यम् )

**नहि** ।

**कथमनुच्यमानं गंस्यते?** ।

**इह हि व्याकरणे ये वा एते लोके प्रतीतपदार्थकाः शब्दास्तैर्निर्देशाः क्रियन्ते, या वा एताः कृत्रिमाष्टिघुभादिसंज्ञाः । न चायं लोके ध्रुवादीनां प्रतीतपदार्थकः शब्दः, न खल्वपि कृत्रिमा संज्ञा, अन्यत्राविधानात् । संज्ञाधिकारश्चायम् । तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः ॥**

( प्रदीपः ) **नहीति** । सुब्व्यत्यय उक्तः ॥ **न चायमिति** । शास्त्रे लोके च प्रसिद्ध्यभावाद्भूतविभक्त्यनुपपत्त्या भाव्यमानविभक्तेः प्रथमायाः स्थाने सप्तमी कृतेति भावः ॥

( उद्योतः ) भाष्ये समाधाता स्वाशयमाह—**इह हीति** ॥ **प्रतीतेति** । अपत्यसमूहादिशब्दा इत्यर्थः ॥ **निर्देशाः** व्यवहाराः । भादिसंज्ञा इत्यस्य ताभिर्वेति शेषः ॥ **निर्देशा** इत्यनेनान्वयः ॥ **ध्रुवादीनां प्रतीतेति** । ध्रुवादीनां वाचकोऽयं शब्दो न लोके प्रतीतपदार्थक इत्यर्थः, किं तु क्रियाजनकपरत्वेनैव प्रसिद्ध इति भावः ॥ **अन्यत्रेति** । अतः सूत्रादित्यर्थः ॥ तदाशयमाह—**शास्त्रे इति** ॥

( १०७४ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ कारकइति संज्ञानिर्देशश्चेत्संज्ञिनो निर्देशः ॥ * ॥

( भाष्यम् ) **कारकइति संज्ञानिर्देशश्चेत्संज्ञिनोपि निर्देशः कर्तव्यः । साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम् ।**

( प्रदीपः ) **संज्ञिनो निर्देश इति** । यद्यपि वक्ष्यमाणा ध्रुवादयः संज्ञिनो लभ्यन्ते तथापि विशिष्टसंज्ञी निर्देष्टव्यः । यत् क्रियायाः साधकं ध्रुवादि तत्कारकसंज्ञमपादानसंज्ञं च भवतीति ॥ ननु संज्ञापक्षे कारकसंज्ञाया अपादानादिसंज्ञाभिः समावेशो न प्राप्नोति । एकसंज्ञाधिकारात् ॥ नैष दोषः । **ध्रुवमपाय** इति योगविभागेन कारकसंज्ञा क्रियते । ततोऽ**पादान**मित्यत्र कारकग्रहणमनुवर्तते **ध्रुवमपाय** इति च, तेन कारकं सदपादानसंज्ञमित्येवं समावेशः सिध्यतीति । अन्तरेणाप्यनुवृत्तिं वचनसामर्थ्यात्पर्याये सिद्धे समावेशार्थानुवृत्तिर्विज्ञायते । एवं संप्रदानादिसंज्ञास्वपि समावेशो व्याख्येयः । समावेशस्य च प्रयोजनं स्तम्बेरम इत्यादावधिकरणत्वात्सप्तमी कारकत्वात्कृदन्तस्योत्तरपदस्य प्रकृतिस्वरः ॥

( उद्योतः ) **निर्देष्टव्य** इत्यस्य 'इति भाष्यार्थः' इति शेषः । तत्फलं तु ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति भाष्य एव वक्ष्यति ॥ भाष्ये साधकमित्यस्य पर्यायो **निर्वर्तकमिति—साधकमि**त्यस्य च क्रियाया इत्यादिः ॥ **वचनसामर्थ्यादिति** । योगविभागसामर्थ्यादित्यर्थः ॥ **स्तम्बेरम इति** । चिन्त्यमिदम् । उपपदत्वादेव गतिकारकोपपदात्कृदिति स्वरस्य सिद्धेः । न च स्तम्बशब्द उपपदं, न स्तम्बेशब्द इति वाच्यम् । सुबन्तस्यैवोपपदताया उपपदसंज्ञासूत्रे भाष्ये वक्ष्यमाणत्वात् । तस्माद् ग्रामेवास इत्युदाहार्यम् । तत्र हि थाथादिस्वरः ॥ **प्रकृतिस्वर इति** । थाथादिस्वरस्तु न । अपासाहचर्यादेरच एव तत्र ग्रहणात् । **भीत्रार्थानां भयहेतु**रित्यादावप्यावृत्त्याऽनुवृत्त्या च समावेशो व्याख्येयः ॥

( १०७५ अन्यथानुपपत्तिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्य ॥ * ॥

( भाष्यम् ) **इतरथा ह्यनिष्टं प्रसज्येत । अकारकस्याप्यपादानसंज्ञा प्रसज्येत । क? । ग्रामस्य समीपादागच्छतीति ।**

( प्रदीपः ) **ग्रामस्य समीपादिति** । यथा यो वृक्षशाखायाः पतति वृक्षादप्यसौ पतति । एवं यो ग्रामसमीपादागच्छति ग्रामादप्यसावागच्छति । ततश्चाप्राये ग्रामस्य

1 स्वातन्त्र्येण स्वार्थबोधजनकत्वासंभवादित्यर्थः । ( र.ना. ) 2 अस्य 'तैर्निर्देशाः क्रियन्ते' इत्यत्रान्वयः । (र. ना.) 3 'भसंज्ञाः' । 4 भूतार्थान्वितस्वार्थबोधिकाविभक्तिर्भूतविभक्तिः, एवं भाव्यमानविभक्तेरित्यत्रापि । ( र. ना. )

5 Bangal Asiatic Society मुद्रितपुस्तके तु "तदाश्रयमाह" इति काशीमुद्रित एव पाठः स्थापितः । 6 'विशिष्टः' । 7 भीत्रार्थानां भयहेतुरित्यस्यावृत्त्येत्यर्थः । (र. ना. )

ध्रुवता भवति । आगमने तु निर्वर्तकत्वाभावः । समीपविशेषणत्वेनोपात्तत्वात् ॥

( उद्द्योतः ) नन्वत्र समीपस्यैवावधित्वं न तु ग्रामस्येत्यत आह—यथेति ॥ ग्रामसमीपादिति । वाटिकादेर्निर्वर्तकत्वमपादानस्यापि, तदभावे तदभावात् ॥ ग्रामादपीति । विभागः संश्लेषपूर्वक एवेति नियमो नेत्यभिमानः ॥ समीपविशेषणत्वेनेति । एवं च तन्निर्वर्तकत्वेन न विवक्षितः स इति भावः ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । नात्र ग्रामो ऽपाययुक्तः । किं तर्हि ? । समीपम् । यदा च ग्रामोऽपाययुक्तो भवति, भवति तदा ऽपादानसंज्ञा । तद्यथा—ग्रामादागच्छतीति ।**

( प्रदीपः ) नात्र ग्राम इति । समीपविशेषणत्वेनोपादानादेव ग्रामस्यापाययोगो नास्ति । स हि संश्लेषपूर्वकः । संश्लेषश्च सन्नसन्वा बुद्ध्या कल्प्यते । स च समीपस्यैव विवक्षितो न ग्रामस्येत्यर्थः । ग्रामात्समीपादिति चोक्ते वस्त्वन्तरापेक्षं ग्रामस्यैव सामीप्यं प्रतीयते न तु ग्रामापेक्षमन्यस्य सामीप्यम् ॥

( उद्द्योतः ) ननु ग्रामसमीपविभागे ग्रामविभागोप्यार्थिकोऽस्त्येवेत्यत आह—स हि संश्लेषेति ॥ विवक्षित इति । नात्रेति भाष्यस्य नात्र ग्रामोऽपाययुक्तत्वेन विवक्षित इत्यर्थ इति भावः ॥ नन्वेवं ग्रामात्समीपादित्यादावपि ग्रामस्यापादानत्वं न स्यादत आह—ग्रामोऽपाययुक्तो भवतीति । ग्रामोऽपाययुक्तत्वेन विवक्षित इत्यर्थ इति भावः ॥ नन्वेवं ग्रामात्समीपादित्यादावपि ग्रामस्यापादानत्वं न स्यादत आह—ग्रामात्समीपादिति ॥ वस्त्वन्तरेति । सामानाधिकरण्येनान्वयादिति भावः ॥

( १०७६ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ कर्मसंज्ञाप्रसङ्गोऽकथितस्य, ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ॥ * ॥

**( भाष्यम् ) कर्मसंज्ञा च प्राप्नोत्यकथितस्य ॥ क ? ॥ ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । अयमकथितशब्दोऽस्त्येवासंकीर्तिते वर्तते तद्यथा—कश्चित्कंचित्संचक्ष्याह—'असावत्राकथितः' असंकीर्तित इति गम्यते ॥**

( प्रदीपः ) **संचक्ष्येति** । वर्जयित्वेत्यर्थः । **वर्जने प्रतिषेध** इति ख्याञादेशाभावः । वर्जनं च प्रसक्तस्य सजातीयस्यैव भवतीति कारकस्यैव कर्मसंज्ञा भवति न तु ब्राह्मणस्य पुत्रं प्रति विशेषणत्वेनोपात्तस्य ॥

( उद्द्योतः ) संचक्ष्येत्यस्योक्तेत्यर्थेऽसंगतिरत आह—वर्ज......नमिति । ब्राह्मणस्यात्रापादानत्वाद्यप्रसक्तिरिति भावः । यत्र तत्प्रसक्तिपूर्वकं तदविवक्षा तत्रैव तत्प्रवृत्तिरिति तात्पर्यम् ॥

( आक्षेपसाधकभाष्यम् )

**अस्त्यप्राधान्ये वर्तते । तद्यथा—'अकथितोऽसौ ग्रामे' 'अकथितोऽसौ नगरे' इत्युच्यते यो यत्राप्रधानो भवति । तद्यदा—अप्राधान्येऽकथितशब्दो वर्तते तदैष दोषः—* कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ॥**

( प्रदीपः ) **तद्यदेति** । अप्राधान्यस्य प्रसङ्गनिरपेक्षत्वाद् ब्राह्मणेऽपि पुत्रवद्भावात् । पन्था हीप्सिततमत्वात्प्रधानं, न पुत्रो, नापि ब्राह्मणः ॥

( उद्द्योतः ) अप्राधान्यस्येति । प्रधानभिन्नत्वमेव तत्र तु वर्जितप्राधान्यकत्वम् । प्रधानत्वसम्भावनाभावेऽप्यपि लोकेऽप्रधानशब्दप्रयोगादिति भावः ॥ पुत्रवद्भावादिति । पुत्रे इवाप्राधान्यस्य सत्त्वादिति भावः ॥ तदेवोपपादयति—पन्था हीति । एवं चानीप्सिततमत्वमेवाप्राधान्यम् ॥ तथायुक्तमित्यपि न सर्वथाऽनीप्सितत्वाभावादिति भावः । तद्येत्यनेन भाष्येणात्र पक्षेऽरुचिर्ध्वनिता सा चाग्रे स्फुटीकरिष्यते ॥

( १०७७ आक्षेपान्तरवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अपादानं च वृक्षस्य पर्णं पततीति ॥ * ॥

**( भाष्यम् ) अपादानसंज्ञा च प्राप्नोति । क ? । वृक्षस्य पर्णं पतति, 'कुड्यस्य पिण्डः पततीति ॥**

( प्रदीपः ) **वृक्षस्य पर्णमिति** । ग्रामस्य समीपादित्यत्रापाययुक्तार्थान्तरसद्भावान्नास्ति ग्रामस्यापाययोगः । इह त्वर्थान्तरस्यानिर्देशाद् वृक्षस्यैवापाययुक्तत्वमिति भावः ॥

( उद्द्योतः ) ननु ग्रामस्य समीपादित्यत्रेवात्रापि न भविष्यतीत्यत आह—ग्रामस्येति ।

( १०७८ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥*॥ न वाऽपायस्याविवक्षितत्वात् ॥*॥

**( भाष्यम् ) न वा एष दोषः । किं कारणम् ? । अपायस्याविवक्षितत्वात् । नात्रापायो विवक्षितः । किं तर्हि ? । संबन्धः ॥ यदा चापायो विवक्षितो भवति भवति तदाऽपादानसंज्ञा । तद्यथा—वृक्षात्पर्णं पततीति । सम्बन्धस्तु तदा न विवक्षितो भवति, न ज्ञायते कङ्कस्य वा कुररस्य वेति ॥**

( प्रदीपः ) **न वाऽपायस्येति** । पर्णविशेषणत्वेनैव वृक्षस्य विवक्षितत्वात् । तथा हि—वृक्षमजहत्यपि पर्णे शाखास्थे भूमिं स्पृशति वृक्षस्य पर्णं पततीति प्रयोगो भवति । सति ह्यवधौ गतिरपायो भवति नान्यथा, गतिविशेषत्वादपायस्य ॥ **न ज्ञायत इति** । शब्देनासमर्पणात्संबन्धिविशेषस्येति भावः ॥ प्रत्यासत्त्या तु वृक्ष एव संबन्धित्वेन प्रतीयते ॥

---

१ वाटिकादेरपादानस्यापि निर्वर्तकत्वमित्यन्वयः । ( र. ना. ) २ ग्रामादागच्छतीत्यादावपीति पाठो भाति । (र.ना.) ३ वर्जनवदित्यादौ शेषः । (र.ना.) ४ संज्ञिनो निर्देशाभावे इत्यर्थकम् 'इतरथा' इति अत्रापि संबध्यते । (र.ना.)

५ वृक्षपर्णयोरवयवावयविभावरूप इत्यर्थः । ( र. ना. ) ६ अपायोऽपगमः । अपपूर्वकादिण् धातोर्घञ् । विभागजन्यसंयोगानुकूलो व्यापार इति यावत् । ( र. ना. )

(उद्द्योतः) नन्वपायाविवक्षायां वृक्षशब्दवैयर्थ्यमत आह—पर्णेति ॥ ननु पतत्पर्णं प्रति वृक्षस्य विशेषणत्वेऽपायविवक्षाप्यावश्यकीत्यत आह—वृक्षमजहत्यपीति[1] ॥ ननु पतेरेवापायत्वेन तस्य चावध्याकाङ्क्षत्वेन तत्वमावश्यकमत आह—सति हीति ॥ नन्वेवमन्योन्याश्रयोऽत[3] आह—गतिविशेषत्वादिति । विभागजन्यसंयोगानुकूलव्यापार एवापायः । इह तूत्तरदेशसंयोगानुकूलव्यापार एव पतेरर्थ इति भावः ॥ कङ्ककुररौ वृक्षविशेषौ पक्षिविशेषौ च ॥ प्रत्यासत्त्या त्विति ग्रन्थोपयोगश्चिन्त्यः[6] । पतत्रिपर्णे पतत्यपि वृक्षात्पर्णं पततीति प्रयोगाच्च ॥

(आक्षेपभाष्यम्)

**अयं तर्हि दोषः—*कर्मसंज्ञाप्रसङ्गश्चाकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छति* इति ॥**

(प्रदीपः) **कर्मसंज्ञाप्रसङ्ग इति ।** अप्रधानवाच्यकथितशब्दाश्रयण इति भावः ॥

(उद्द्योतः) अप्रधानेति । वस्तुतोऽसंकीर्तितपर्यायेऽपि[7] दोषः । प्राप्तिपूर्वकाविवक्षायां सर्वथा तदप्राप्तौ चासंकीर्तितत्वं तत्र विवक्षितम् । अत एव नटस्य शृणोतीत्यादौ सर्वथापादानत्वाद्यप्राप्तिविषये कर्मत्वमाशङ्क्य परिगणनेन समाहितमाख्यातोपयोग इति सूत्रे भाष्ये । कारकाधिकाराभावे[8] च पृच्छिकर्मणो[9] निमित्तत्वात्प्राप्तिरत्र कर्मत्वस्य । प्रश्नजनकता तु न, पुत्रेणान्यथासिद्धत्वादिति भाष्याशयः । अत एव यान्विपृच्छिभिक्षीणामकथितं चेत्युदाहरणता । तत्र हि न कस्यापि प्राप्तिरिति तत्रैव भाष्ये स्पष्टम् ॥

(आक्षेपबाधकभाष्यम्)

**नैष दोषः । कारक इति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥ कुत एतत्? । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—करोतीति कारकमिति ॥**

(प्रदीपः) **अन्वर्थसंज्ञेति ।** महत्याः संज्ञायाः करणादनुमीयते नूनं विशिष्टा ध्रुवादयः संज्ञित्वेन निर्दिष्टाः । यद्विशेषदर्शनात्तदनुरूपा[11] तेषां संज्ञा क्रियते ॥ **करोतीति कारकमिति ।** साध्यत्वेन क्रियैव शब्दात्प्रतीयते इति क्रियाया निर्वर्तकस्य कारकसंज्ञाऽपादानादिसंज्ञा च प्रवर्तते ॥

(उद्द्योतः) नन्वन्वर्थत्वं नाम योगरूढत्वम् । एवं च कथं यौगिकार्थमुद्दिश्य संज्ञाविधानमत आह—महत्या इति ॥ विशिष्टा महासंज्ञोपस्थितक्रियानिर्वर्तकत्वविशिष्टा इत्यर्थः ॥ यद्विशेषेति । क्रियानिर्वर्तकत्वरूपविशेषेत्यर्थः ॥ ननु करोतीत्यस्य निष्पादयतीत्यर्थः । एवं च निष्पादकत्वे लब्धेपि क्रियानिर्वर्तकमित्यर्थालाभोऽत आह—क्रियैवेति । क्रियाया एव शब्देन[12] साध्यत्वप्रतीतेर्निर्वर्तकार्थे कारकशब्दे संबन्ध्याकाङ्क्षायां सैव संबध्यत इति भावः ॥ संप्रदानादीनामपि स्वज्ञानद्वारा जनकत्वं बोध्यम् ॥

(१०७९ आक्षेपसाधकवार्तिकम् ॥ ६ ॥)

**॥ * ॥ अन्वर्थमिति चेदकर्तरि कर्तृशब्दानुपपत्तिः ॥ * ॥**

(भाष्यम्) **अन्वर्थमिति चेदकर्तरि कर्तृशब्दो नोपपद्यते करणं कारकमधिकरणं कारकमिति ॥**

(प्रदीपः) **अन्वर्थमिति चेदिति ।** करोतीति कारकमिति यद्याश्रीयते तदा स्वतन्त्रस्यैव कर्तृसंज्ञावत्कारकसंज्ञापि प्राप्नोति न तु करणादीनां कर्तृपरतन्त्राणाम् ॥ **कर्तृशब्द इति ।** कर्तृवाची कारकशब्द इत्यर्थः ॥

(उद्द्योतः) ननु करणादीनामपि क्रियानिर्वर्तकत्वमस्त्येवेत्यत आह—स्वतन्त्रस्येति । स्वतन्त्रवाचिकर्तृपदार्थे ण्वुलो विधानादिति भावः ॥ नन्वकर्तरि कर्तृशब्दाप्रयोग इष्ट एवेत्यत आह कर्तृवाचीति ॥

(१०८० समाधानवार्तिकम् ॥ ७ ॥)

**॥ * ॥ सिद्धं तु प्रतिकारकं क्रियाभेदात्पचादीनां करणाधिकरणयोः कर्तृभावः ॥ * ॥**

(भाष्यम्) **सिद्धः करणाधिकरणयोः कर्तृभावः । कुतः? । प्रतिकारकं क्रियाभेदात्[13] । पचादीनां हि प्रतिकारकं क्रिया भिद्यते । किमिदं प्रतिकारकमिति? । कारकं कारकं प्रति प्रतिकारकम् ।**

(प्रदीपः) **सिद्धं त्विति ।** स्वव्यापारे सर्वेषां स्वातन्त्र्यात्तदनुष्ठानद्वारेण प्रधानक्रियायामुपयोगात्[14] कर्तृसन्निधावपि स्वव्यापारस्यानिवर्तनात्पारतन्त्र्यावस्थायामप्यनिवृत्तं कारकत्वमित्यर्थः ॥

(उद्द्योतः) ननु समूहरूपा क्रिया प्रतिकारकं न भिन्नाऽत आह—स्वव्यापार इति । एवं च स्वव्यापारे स्वातन्त्र्यात्कारकत्वं पच्यादिवाच्यसमूहं प्रति पारतन्त्र्यात्करणत्वं चेति भावः ॥ ननु तदा तस्य धात्वर्थत्वाभावात् कथं क्रियात्वं कथं च तदाश्रयत्वेन करणादीनां कारकत्वमिति चेन्न । तदानीं तस्य प्रकृतधात्वर्थत्वाभावेपि कृधात्वर्थत्वाक्षतेः । विभक्तिस्तु प्रकृतधात्वर्थनिबन्धनसंज्ञयैवेति बोध्यम् ॥ तदनुष्ठानद्वारेणेति । तदनुगमनद्वारेणेत्यर्थः ॥

(अनुयोगभाष्यम्)

**कोसौ प्रतिकारकं क्रियाभेदः पचादीनाम्? ।**

(१०८१ समाधानसाधकवार्तिकम् ॥ ८ ॥)

**॥ * ॥ अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः प्रधानस्य कर्तुः पाकः ॥ * ॥**

(भाष्यम्) **अधिश्रयणोदकासेचनतण्डुलावपनै-**

---

१ पत्यर्थस्यैवापायत्वेनेत्यर्थः । (र. ना.) २ वृक्षस्यावधित्वमावश्यकमित्यर्थः । (र. ना.) ३ पत्यर्थापायपरिज्ञानेऽवधित्वपरिज्ञानम् । अवधित्वपरिज्ञाने च तादृशापायपरिज्ञानमिति इत्यावन्योन्याश्रय इति भावः । (र. ना.) ४ अपायस्य पत्यर्थत्वाभावं दर्शयति—विभागेति । (र. ना.) ५ ननु वृक्षात्पर्णं पततीत्यत्र प्रत्यासत्त्या वृक्षस्य संबन्धित्वनिर्णयः, तत्कथमुच्यते 'न ज्ञायते कङ्कस्य कुररस्य वेतीति चेन्न । शब्दतो वृक्षस्य संबन्धितयाऽत्रापरिज्ञानमित्येवंपरत्वात् 'न ज्ञायते' इत्यादिभाष्यस्य । तथा चानया रीत्या 'प्रत्यासत्त्यात्वित्यादि कैयटग्रन्थस्योपयोगसंभवे चिन्त्यत्वोक्तिरेव चिन्त्या । (र. ना.) ६ इदमपि चिन्त्यम् । प्रत्यक्षादिरूपबाधकप्रमाणासत्त्वे एव प्रत्यासत्त्या वृक्षस्य संबन्धित्वनिर्णय इत्येवं परत्वात्प्रदीपस्येति । (र. ना.) ७ कैयटस्तु प्रकृतसंदर्भानुसारेण नेय इति नागेशाशयः । (र. ना.) ८ 'वाऽसं' । ९ 'कारकेऽधि' । १० पृच्छिकर्मपुत्रनिरूपितनिमित्तत्वाद् ब्राह्मणस्येत्यर्थः । (र. ना.) ११ यद्विशेषेति कर्मधारयः । (र. ना.) १२ धातुशब्देनेत्यर्थः । (र. ना.) १३ 'भेदात् पचादीनाम्' पचादीनां हि' । १४ करणादीनामिति शेषः । (र. ना.)

धोपकर्षणादिक्रियाः कुर्वन्नेव देवदत्तः पचतीत्युच्यते। तत्र तदा पचिर्वर्तते। एष प्रधान[स्य] कर्तुः पाकः। एतत्प्रधानकर्तुः कर्तृत्वम्॥

(उद्योतः) तदेति। यदा देवदत्तः पचतीत्युच्यते तदा, तत्राधिश्रयणादावित्यर्थः॥ एवमग्रेऽपि॥

(१०८२ समाधानसाधकवार्तिकम्॥ ९॥)

**॥ * ॥ द्रोणं पचत्याढकं पचतीति सम्भवनक्रिया धारणक्रिया चाधिकरणस्य पाकः॥ * ॥**

(भाष्यम्) द्रोणं पचत्याढकं पचतीति सम्भवनक्रियां धारणक्रियां च कुर्वती स्थाली पचतीत्युच्यते। तत्र तदा पचिर्वर्तते। एषोऽधिकरणस्य पाकः। एतदधिकरणस्य कर्तृत्वम्।

(प्रदीपः) सम्भवनक्रियामिति। ग्रहणक्रियामित्यर्थः॥ धारणक्रियामिति। स्थिरत्वादा क्रियासमाप्तेस्तण्डुलानां धारणमित्यर्थः॥

(उद्योतः) द्रोणं पचतीत्यादेः स्थालीत्यादिः। ज्ञानरूपस्य सम्भवनस्य स्थाल्यां बाधादाह—ग्रहणेति॥ ननु स्थालीविषयकबुद्ध्या व्यापारो धारणं स कथं स्थाल्या अत आह—तण्डुलानामिति॥

(१०८३ समाधानसाधकवार्तिकम्॥ १०॥)

**॥ * ॥ एधाः पक्ष्यन्त्या विक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रिया करणस्य पाकः॥ * ॥**

(भाष्यम्) एधाः पक्ष्यन्त्या विक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रियां कुर्वन्ति काष्ठानि पचन्तीत्युच्यन्ते। तत्र तदा पचिर्वर्तते। एष करणस्य पाकः। एतत्करणस्य कर्तृत्वम्।

(प्रदीपः) एधा पक्ष्यन्तीति। भविष्यन्निर्देशः कर्तृगतसम्भावनापेक्षः। कर्त्रा हि सम्भावितक्रियाः नियुज्यन्ते। नियुक्ताश्च व्याप्रियन्ते न तु प्रागेव। न त्वत्र भविष्यन्निर्देशस्तन्त्रम्। अनेकार्थत्वाद्धातूनां तादर्थ्याद्वा तद्रूपासङ्गात्करणादिव्यापारे पचेर्वृत्तिर्द्रष्टव्या॥

(उद्योतः) नन्वत्र ऌण्निर्देशो व्यर्थोऽत आह—भविष्यदिति॥ ननु धात्वन्तरवाच्यज्वलनादौ पचेः कथं वृत्तिरत आह—अनेकार्थत्वादिति॥ तादर्थ्याद्वेति। समूहरूपक्रियार्थत्वात् स्ववाच्यसमूहरूपारोपः करणव्यापारे इत्यर्थः॥

(१०८४ समाधानसाधकवार्तिकम्॥ ११॥)

**॥ * ॥ उद्यमननिपातनानि कर्तुश्छिदिक्रिया॥ * ॥**

(भाष्यम्) उद्यमननिपातनानि कुर्वन्नेव देवदत्तश्छिनत्तीत्युच्यते। तत्र तदा छिदिर्वर्तते। एष प्रधानकर्तुश्छेदः। एतत्प्रधानकर्तुः कर्तृत्वम्।

(१०८५ समाधानसाधकवार्तिकम्॥ १२॥)

**॥ * ॥ यत्तन्न तृणेन तत्परशोश्छेदनम्॥ * ॥**

(भाष्यम्) यत्तत्समाने उद्यमने निपतने च परशुना छिद्यते, न तृणेन तत्परशोश्छेदनम्। अवश्यं चैतदेवं विज्ञेयम्॥

(प्रदीपः) यत्तन्न तृणेनेति। अन्वयव्यतिरेकाभ्यां करणस्य विशिष्टव्यापारावेशनिदर्शनाय दर्शयति॥

(उद्योतः) नन्वेकत्र करणस्य कर्तृत्वे दर्शितेऽन्यत्रापि ज्ञातुं शक्यत इति परशौ तत्कथनमनुपयुक्तमत आह—अन्वयेति। निदर्शनायेति। प्रतिपादयितुमित्यर्थः। परशौ यथा विशिष्टः करणव्यापार एवं सर्वत्रापीति। एवं च तत्तत्स्वव्यापारे कर्तृत्वात्कारकत्वं बलाश्रयत्वादिविवक्षायां च कर्मत्वादि। कारकत्वं चोपलक्षणं सत्कर्मकारकादिसंज्ञोपयोगीति बोध्यम्॥ अन्ये तु प्रधानक्रियाजनकोक्तस्वस्वव्यापारे [कर्तारः प्रधानकर्त्रा न्यक्कृतेऽपि स्वगततत्तद्व्यापारे स्वातन्त्र्यसत्वात्। अकुर्वतः साधनत्वानुपपत्तेः। एवं च तत्तद्व्यापारलब्धकरणत्वादिमन्त एव कर्तृपारतन्त्र्येऽपि स्वस्वव्यापारे] स्वातन्त्र्यसत्त्वात्तद्द्वारा मुख्यक्रियायामपि स्वतन्त्रा इति प्रधानक्रियाकर्तृत्ववन्तोऽपि। यथा युद्धकर्तारोऽपि योद्धारो राजनियोगापेक्षणादस्वतन्त्रा अपि नियोगोत्तरं स्वतन्त्रा एव। नियोगमात्रात्तु तन्निष्ठजयादिभाग्राजा। नियोगमात्रेण च मुख्यकर्तर्येव कर्तृत्वव्यवहारोऽपीत्याहुः॥

(१०८६ अन्यथानुपपत्तिवार्तिकम्॥ १३॥)

**॥ * ॥ इतरथा ह्यसितृणयोश्छेदनेऽविशेषः स्यात्॥ * ॥**

(भाष्यम्) यो हि मन्यते उद्यमननिपातनादेवैतद्भवति छिनत्तीति, असितृणयोश्छेदने न तस्य विशेषः स्याद् यदसिना छिद्यते तृणेनापि तच्छिद्येत॥

(१०८७ आक्षेपवार्तिकम्॥ १४॥)

**॥ * ॥ अपादानादीनां त्वप्रसिद्धिः॥ * ॥**

(भाष्यम्) अपादानादीनां तु कर्तृत्वस्याऽप्रसिद्धिः। यथा हि भवता करणादीनां कर्तृत्वं निदर्शितं न तथाऽपादानादीनां निदर्श्यते॥

(प्रदीपः) न तथेति। नह्यपादाने ग्रामे ग्राम आगच्छतीति प्रयोगोऽस्ति॥

(उद्योतः) भाष्ये—अपादानादीनामिति। आदिना सम्प्रदानम्। बहुवचनं तु प्रयोगबाहुल्याभिप्रायेण। एवं च तयोः कारकसंज्ञाऽप्राप्तिरिति भावः। कर्मणः कर्तृत्वं तु कर्मवत्कर्मणेति

१ पक्ष्यन्त्या इत्यस्य आविक्लित्तेर्ज्वलिष्यन्तीति व्याख्यानम्। (र. ना.) २ 'स्वाधा'। ३ 'नस्य कर्तुः'। ४ ननु स्वस्वव्यापारे स्वातन्त्र्यरूपकर्तृत्वविवक्षा फलाश्रयत्वादिविवक्षा च युगपन्न संभवतीत्यत आह—कारकत्वञ्चेति। (र. ना.) ५ अयं कोष्ठकान्तर्गतः पाठो नोपलभ्यते क्वचित्पुस्तके।

सूत्रेण स्पष्टमेवोक्तमिति तत्र दर्शितम् ॥ नन्ववधीभवनमेव तद्व्यापारोऽत आह—नहीति । अपादाने ग्रामे इति । अपादानभूतग्रामविषये इत्यर्थः ।

( १०८८ समाधानवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा ॥ * ॥**

( भाष्यम् ) **न वा एष दोषः । किं कारणम् । स्वतन्त्रपरतन्त्रत्वात् । सर्वत्रैवात्र स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितम् ॥ तयोः पर्यायेण वचनम् । तयोः स्वातन्त्र्यपारतन्त्र्ययोः पर्यायेण वचनं भविष्यति ॥ वचनाश्रया च संज्ञा भविष्यति । तद्यथा—बलाहकाद्विद्योतते विद्युत् । बलाहके विद्योतते । बलाहको विद्योतत इति ॥**

( प्रदीपः ) **बलाहकादिति** । निःसरणाङ्गे विद्योतने द्युतिर्वर्तते पृथग्भावश्च विवक्षित इत्यपादानत्वम् ॥ **बलाहक इति** । स्थित्यङ्गे द्योतनेऽत्र द्युतिर्वर्तते । बलाहके स्थित्वा ज्योतीरूपा विद्युद् विद्योतत इत्यर्थः ॥ **बलाहक इति** । विद्युतो बलाहकस्य चाभेदविवक्षायामयं प्रयोगः ॥

( उद्द्योतः ) भाष्ये—**वचनं** विवक्षा ॥ **वचनाश्रया चेति** । कादाचित्कस्वातन्त्र्यविवक्षाश्रया च कारकसंज्ञा भविष्यति तात्कालिकपारतन्त्र्यविवक्षाश्रया चापादानसंज्ञेत्यर्थः ॥ नन्वपादानस्य कर्तृत्वं न दृष्टमित्यतो भाष्ये—**तद्यथेत्यादि** ॥ ननु विद्युद्बलाहकयोरविभागात्कथं निःसरणमत आह—**पृथग्भाव इति** । बौद्धो भेद इत्यर्थः ॥ ननूक्तार्थे बलाहकस्याधारत्वानुपपत्तिरत आह—**स्थित्यङ्गे इति** ॥ **अभेदविवक्षायामिति** । धूमज्योतिःसलिलमरुतां संघातस्य मेघपदार्थत्वविवक्षायामिति भावः ॥

( अनुयोगभाष्यम् )

**किं तर्ह्युच्यते—'*अपादानादीनां त्वप्रसिद्धिः*' इति ? ॥**

( उद्द्योतः ) भाष्ये—**किं तर्हीति** । अपादानस्य कर्तृत्वप्रसिद्धौ तेषां कर्तृत्वाप्रसिद्धिरित्यभिप्रायेण कथमपादानादीनां त्वप्रसिद्धिरिति वार्तिकं व्याख्यातमित्यर्थः ॥

( समाधानभाष्यम् )

**एवं तर्हि न ब्रूमः—'अपादानादीनां कर्तृत्वस्याप्रसिद्धिः' इति[३] । पर्याप्तं करणाधिकरणयोः कर्तृत्वं निदर्शितमपादानादीनां कर्तृत्वनिदर्शनाय, पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनाय ॥ किं तर्हि ? ॥ संज्ञाया अप्रसिद्धिः ॥ यावता सर्वत्रैवात्र स्वातन्त्र्यं विद्यते पारतन्त्र्यं च । तत्र परत्वात्कर्तृसंज्ञैव प्राप्नोति ॥**

( प्रदीपः ) **पर्याप्तमिति** । स्वव्यापारानुष्ठानमन्तरेण प्रधानक्रियायामुपयोगाभावात् । ग्राम आगच्छतीत्यर्थान्तरावगमादपादानव्यापारानवसायात्प्रयोगाभावः । एवं ब्राह्मणाय ददातीत्यर्थे ब्राह्मणो ददातीति प्रयोगाभावः । शब्दशक्तिस्वाभाव्याच्चापादानसम्प्रदानव्यापारे धातुर्न वर्तते । वस्तुतस्त्वपादानस्यावधिभावेनावस्थानं व्यापारोऽस्ति सम्प्रदानस्याप्यनुमननादिलक्षणः, प्रतीयमानोऽपि व्यापारः कारकव्यपदेशनिबन्धनम् । यथा प्रविश पिण्डीमिति ॥ **परत्वादिति** । अपादानादीनामवकाशा यदा स्वातन्त्र्यं नास्ति । कर्तृसंज्ञाया अवकाशो देवदत्तः पचतीति ॥ ननु सर्वत्र स्वातन्त्र्यस्य सद्भावान्नास्ति कर्तृसंज्ञावियुक्तोऽपादानादिसंज्ञानामन्यत्रावकाशः ॥ सत्यमेतत् । पूर्वपक्षस्त्वयं तत्र च न्यायाभासेनैव भाष्यम् । अन्यथा पूर्वपक्ष एव न स्यात् ॥

( उद्द्योतः ) उत्तरयति—**एवं तर्हीत्यादिना** । एवं तर्हि—'अपादानादीनां त्वप्रसिद्धिः' इति वाक्यं नोक्ताभिप्रायं किं तर्हीत्यन्वयः ॥ **पर्याप्तमिति** । कर्मेण इवेत्यर्थः ॥ तद्व्याचष्टे—**स्वेत्यादि** ॥ नन्वेधाः पचन्तीतिवद् ग्राम आयातीति प्रयोगः स्यादत आह—**ग्राम आगच्छतीति** ॥ ननु काष्ठं पचतीत्यत्राप्यर्थान्तरावगमस्तुल्यः, एवमपि तद्व्यापारस्य धात्वर्थत्वेऽपादानादिव्यापारोऽपि तथा स्यादत आह—**शब्दशक्तीति** ॥ नन्वपादानादिषु व्यापाराभावादेव न तथा प्रयोगोऽत आह—**वस्तुतस्त्विति** ॥ ननु तस्य प्रकृतधातुवाच्यत्वाभावात्कथं कर्तृप्रत्ययान्तकारकव्यपदेशोऽत आह—**प्रतीयमानोऽपीति** । धात्वर्थत्वाभावेऽपि ग्रामादिपदैरेव तस्य प्रतीत्या तन्निरूपितं कारकत्वं, कारकशब्दघटकक्रधात्वर्थत्वात्तस्य व्यापारस्येति भावः ॥ **न स्यादिति** । अयं भावः—यद्यनवकाशत्वादपादानादिसंज्ञाः स्युस्तदा स्थाली पचतीति न स्यादिति ॥

( अपादानादिसंज्ञोपपादकभाष्यम् )

**अत्रापि * न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा * इत्येव ॥**

( प्रदीपः ) **अत्रापीति** । उद्भूतस्वातन्त्र्यविवक्षायां कर्तृसंज्ञा—यथा स्थाली पचतीति । उद्भूतपारतन्त्र्यविवक्षायां तु न्यग्भावात्सदपि स्वातन्त्र्यं स्वकार्यं न प्रयुङ्क्ते । यथा राजसन्निधौ तदनुपयोगि स्वकार्यममात्या नारभन्ते ॥

( उद्द्योतः ) नन्वेवमपि स्वव्यापारं प्रति स्वातन्त्र्यस्यानिवर्तनात् कर्तृत्वं न व्यावर्तितमत आह—**उद्भूतेति** । स्वतन्त्रपदसामर्थ्यादित्यर्थः । स्वातन्त्र्ये उद्भूतत्वं च विवक्षितप्रकृतप्रधानसंपूर्णधात्वर्थाश्रयत्वरूपत्वमेव । पारतन्त्र्ये उद्भूतत्वं च प्रकृतधात्वर्थानाश्रयत्वरूपत्वमेवेति बोध्यम् ॥ **यथा राजेति** । तदा हि राजा स्वकार्यभागिति तत्रामात्यानां न स्वातन्त्र्यं तद्व्यवाये तु राजकार्येऽपि तेषां नियोगात् स्वातन्त्र्यमेव, तथा कर्तृसन्निधाने स्थाल्यादियत्नस्य धात्व-

---

१ 'विद्युत्' पदं नास्ति क्वचित् । २ निःसरणाङ्गे विद्योतने इत्यर्थः । (र. ना.) ३ एतदन्तग्रन्थस्य 'किं तर्हि' इत्यनेन संबन्धः । ( र. ना. ) ४ निदर्शितं करणाधिकरणयोः कर्तृत्वमपादानादीनां कर्तृत्वनिदर्शनाय पर्याप्तमिति योजना । ( र. ना. ) ५ अपादानादिसंज्ञाया इत्यर्थः । ( र. ना. ) ६ वस्तुगत्येत्यर्थः । शब्दावाच्य इति यावत् । ( र. ना. ) ७ शब्दावाच्योऽपीति फलितार्थः । ( र. ना. )

वाच्यत्वात्तेषां पारतन्त्र्यमेव तद्व्यवाये तद्यत्नस्यापि तद्वाच्यत्वात् स्वातन्त्र्यमिति भावः। अन्यथाऽपादानादीनां निरवकाशत्वादित्याशयः॥

(आक्षेपभाष्यम्)

**यथा पुनरिदं भवता स्थाल्याः कर्तृत्वं निदर्शितं, संभवनक्रियां च धारणक्रियां च कुर्वती स्थाली स्वतन्त्रेति॥ क्वेदानीं परतन्त्रा स्यात्?॥**

(उद्द्योतः) भाष्ये—यथा पुनरिति। येन प्रकारेणेत्यर्थः।

(समाधानभाष्यम्)

**यत्तत्प्रक्षालनं परिवर्तनं वा॥**

(उद्द्योतः) क्वेति प्रश्ने उत्तरं यत्तदिति॥

(निराकरणभाष्यम्)

**न वा एवमर्थं स्थाल्युपादीयते प्रक्षालनं परिवर्तनं च करिष्यामीति। किं तर्हि संभवनक्रियां धारणक्रियां च करिष्यतीति तत्र चासौ स्वतन्त्रा। क्वेदानीं परतन्त्रा?॥**

(प्रदीपः) न वा एवमर्थमिति। प्रक्षालनाद्यभावेपि पाकनिष्पादात्तेषां तत्रानङ्गत्वात्॥

(उद्द्योतः) तत्खण्डयति—नवेति॥

(समाधानभाष्यम्)

**एवं तर्हि स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा। कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा॥**

(उद्द्योतः) स्थालीस्थे यत्न इति। अत्र यत्नशब्देन व्यापारसामान्यम्॥

(आक्षेपभाष्यम्)

**ननु च भोः कर्तृस्थेपि यत्ने कथ्यमाने स्थाली संभवनक्रियां धारणक्रियां च करोति तत्रासौ स्वतन्त्रा। क्वेदानीं परतन्त्रा स्यात्?॥**

(उद्द्योतः) समीचीने समाधाने उक्तेपि तदबुद्ध्वोक्तमेव पुनराह—ननु चेति॥

(समाधानभाष्यम्)

**एवं तर्हि प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा। तद्यथा—अमात्यानां राज्ञा सह समवाये पारतन्त्र्यं, व्यवाये स्वातन्त्र्यम्॥**

(उद्द्योतः) स्वाशयं प्रकटयति समाधाता—एवं तर्हीति। प्रधानेन समवाये इति॥ धात्वर्थानाश्रयायाः प्रधानधात्वर्थाश्रयेण समवाये इत्यर्थः॥ व्यवाये इति। तस्य धात्वर्थाश्रयत्वाभावे स्थाल्या एव धात्वर्थाश्रयत्वे इत्यर्थः॥ राज्ञा सहेति। व्यवहारद्रष्टृत्वाद्याश्रयराज्ञेत्यर्थः। अस्याशय उक्तः॥

(अनुयोगभाष्यम्)

**किं पुनः प्रधानम्?।**

(प्रदीपः) किं पुनः प्रधानमिति। सामग्रीतः क्रियोत्पादात्सर्वेषां तत्र सामान्यात्र कस्यचित्प्राधान्यमिति भावः॥

(उद्द्योतः) सामान्यादिति। समानत्वादित्यर्थः॥

(समाधानभाष्यम्)

**कर्ता। कथं पुनर्ज्ञायते—कर्ता प्रधानमिति?। यत्सर्वेषु साधनेषु संनिहितेषु कर्ता प्रवर्तयिता भवति॥**

(प्रदीपः) कर्त्रा प्रवर्तयितेति। तदधीनप्रवृत्तिनिवृत्तित्वात्करणादीनां, तस्य च प्रागन्यतः शक्तिलाभात्प्रतिनिध्यदर्शनात्करणाद्यभावेप्यास्ते शेते इत्यादौ केवलस्य कर्तुर्दर्शनात्कर्तृरहितानां करणादीनामदर्शनात्प्राधान्यं कर्तुरित्यर्थः॥

(उद्द्योतः) नन्वन्यतराभावेपि प्रवृत्तेरदर्शनात्सर्वस्य प्रवर्तयितृत्वमविशिष्टं साधकतमत्वात्करणस्यैव च प्राधान्यमत आह—तदधीनेति। भाष्ये—प्रवर्तयितेत्यस्य साधनानामिति शेषः। अनेन कारकचक्रप्रयोक्तृत्वं कर्तुः स्वातन्त्र्यमित्युक्तम्॥ नन्वीप्सिततमत्वेन कर्मणः प्राधान्यमत आह—तस्य चेति। कर्तुरित्यर्थः॥ अन्यतः प्रागिति। अन्येभ्यः कारकेभ्यः प्रागित्यर्थः। नैवं करणादीनामिति भावः॥ प्रतिनिधीति। करणादीनां हि सोमादीनां स दृश्यते न तु कर्तुरिति भावः॥ करणाद्यभावेपीति। अन्वयव्यतिरेकाभ्यां कर्तुः प्राधान्यमित्यर्थः।

(आक्षेपभाष्यम्)

**ननु च भोः प्रधानेनापि वै समवाये स्थाल्या अनेनार्थः अधिकरणं कारकमिति।**

**नहि कारकमित्यनेनाधिकरणत्वमुक्तम्, अधिकरणमिति वा कारकत्वम्। उभौ चान्योन्यविशेषकौ भवतः। कथम्?। एकद्रव्यसमवायित्वात्। तद्यथा गार्ग्यो देवदत्त इति। नहि गार्ग्य इत्यनेन देवदत्तत्वमुक्तं देवदत्त इत्यनेन वा गार्ग्यत्वम्। उभौ चान्योन्यविशेषकौ भवत एकद्रव्यसमवायित्वात्॥**

(प्रदीपः) उभौ चान्योन्यविशेषकाविति। ततश्च स्वातन्त्र्यपारतन्त्र्ययोर्युगपद्विरोधाद्विशेषणविशेष्यत्वे न प्रकल्पेते इत्यर्थः॥

(उद्द्योतः) भाष्ये—अनेनेति॥ कारकव्यपदेशेनेत्यर्थः। अयं व्यवहार इष्यते तत्रोद्भूतस्वातन्त्र्याभावाद्यथा कर्तृशब्दाप्रवृत्तिस्तथा तदर्थककारकशब्दस्याप्यप्रवृत्तिः स्यादिति भावः॥ ननु पुनरुक्तत्वादेवं व्यवहारोऽनिष्ट इवेत्यतो नहीति। एवं च न पौनरुक्त्यमिति भावः। किं तु विशेषणविशेष्यभाव

---

१ परिवर्तनं, परिचालनं परिघट्टनं वा। (र. ना.) २ समवायः सन्निधानम्। (र. ना.) ३ तथा चोक्तं हरिणा—

'प्रागन्यतः शक्तिलाभान्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्तनात्॥
अदृष्टत्वात्प्रतिनिधेर्व्यतिरेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरिष्यते॥' इति॥

४ अन्यतमपदोपादानं न्याय्यम्। (र. ना.)

इत्याह—**उभौ चेति** । तदाशयं पूर्वपक्षसाधकत्वेनाह—**ततश्चेति** ॥ नन्वेताभ्यामेकस्यैव द्रव्यस्य बोधेन तयोर्भेदनियतस्य परस्पर[1]संबन्धस्याभावादन्योन्यविशेषकाविलयुक्तमिति पृच्छति—भाष्ये—**कथमिति** ॥ उत्तरयति—**एकद्रव्यसमवायित्वादिति** । शब्दद्वयोपात्ते एकत्र द्रव्ये उभयोः समवायात्संबन्धादित्यर्थः ॥ **अन्योन्यविशेषकाविलस्य** परस्परं विशेष्यविशेषणभावं प्राप्ताविलर्थः । **एकद्रव्यसमवायित्वादि**त्यनेन द्रव्यैक्येपि धर्मभेदे विशेष्यविशेषणभावो न तूभयैक्ये इति दर्शितम् । यद्वा कारकशब्दोपात्तद्रव्यस्याधिकरणत्वरूपोर्थोऽधिकरणपदोपात्तद्रव्यस्य कारकत्वरूपोर्थः परिच्छेदक इत्यर्थः ॥ ननु भिन्नद्रव्यवृत्तिधर्मयोः कथं परस्परंपरिच्छेदकत्वमत आह—**एकेति** । शब्दद्वयोपात्तैकद्रव्यसंबद्धत्वादित्यर्थः ॥

**( समाधानभाष्यम् )**

**एवं तर्हि सामान्यभूता क्रिया वर्तते । तस्या निवर्तकं कारकम् ॥**

**( प्रदीपः ) एवं तर्हीति** । सर्वेषां कारकाणां साध्यत्वेन साधारणी क्रिया, ततश्च सर्वेषां तस्यां कर्तृत्वम् । अवान्तरव्यापारविवक्षायां तु करणादिरूपत्वम् । यथा मातापित्रोरपत्योत्पादने कर्तृत्वं भेदविवक्षायां त्वयमस्यामियमस्माज्जनयतीत्यधिकरणत्वमपादानत्वं च व्यवतिष्ठते । कर्तृसंज्ञा तु करणत्वाद्यवस्थायां न भवति । **स्वतन्त्रः कर्ते**त्यत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतिर्नियमार्था, तेन स्वतः स्वातन्त्र्यमेव यस्य कर्तृसंज्ञा तस्य, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य । कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमुद्भूतत्वेनाविवक्षितमपि स्वातन्त्र्यमाश्रित्य करणादीनां विधानसामर्थ्यात्प्रवर्तते । यत्र च शक्तीनां निमित्तनिमित्तिभावेन युगपद्विवक्षा तत्र संज्ञानां विप्रतिषेध उच्यते । यथा धनुषा विध्यतीति, विनापायविवक्षया धनुषः साधकतमत्वाभावात् संज्ञाद्वयप्रसङ्गे परत्वात्करणसंज्ञा । असिश्छिनत्तीति सत्येव साधकतमत्वे स्वातन्त्र्यस्य विवक्षितत्वात्परत्वात्कर्तृसंज्ञा । तदा तु तैक्ष्ण्यादीनां करणत्वम् । तैक्ष्ण्यादीनां तु कर्तृत्वविवक्षायामात्मनः करणत्वम् । तैक्ष्ण्यमेव हि विवक्षावशाद्द्वेधावतिष्ठते कर्तृत्वेन करणत्वेन च । वस्तुस्थित्या त्वेक एवार्थात्मेति कर्तृत्वं करणत्वस्य बाधकमुच्यते ॥

**( उद्योतः )** यद्यपि तद्व्यवायकालिकस्वातन्त्र्यमादाय तदापि कारकत्वव्यवहारस्तत्कालिकपारतन्त्र्यमादाय चाधिकरणत्वव्यवहार इति शक्यते वक्तुं तथापि प्रकारान्तरेणापि समाधातुमाह—**एवं तर्हीति** भाष्ये ॥ ननु सर्वेषामेकक्रियाभावात्सामान्यभूतेत्यनुपपन्नमत आह—**सर्वेषामिति** । **साधारणीति** । प्रधानक्रिया तत्तद्व्यापारजन्यत्वेन सर्वसाधारणीति भावः ॥ **तस्यां कर्तृत्वमिति** । जनकत्वादिति भावः ॥ **अवान्तरेति** । अपादानत्वादिनिमित्तभूतव्यापारविशेषविवक्षायामित्यर्थः ॥ अपादानस्यापि कचित्कर्तृत्वं दर्शयति—**यथा मातेति** ॥ नन्वेवं करणत्वाद्यवस्थायामपि कर्तृत्वप्रसङ्गः, प्रधानक्रियां प्रति साधनत्वाविशेषादित्यत आह—**कर्तृसंज्ञा त्विति** ॥ नन्वेवं कर्तृण्वुलन्तकारकसंज्ञापि तेषां न स्यादत आह—**कारकसंज्ञा त्विति** ॥ नन्वेवं करणादीनां विप्रतिषेधानुपपत्तिस्तद्व्यापाराणां परस्परपरिहारेण वर्तमानानामेकत्र युगपदसत्त्वादत आह—**यत्र च शक्तीनामिति** । करणत्वादीनामित्यर्थः ॥ **परत्वात्करणसंज्ञेति** । शक्तिद्वयस्यापि विप्रतिषेधसूत्रबलात्तृतीयैव वाचिकेति भावः ॥ नन्वेवं काष्ठानि पचन्तीति न स्यादत आह—**असिश्छिनत्तीति** । वस्तुतस्तदा स्वातन्त्र्यमेव विवक्षितमिति न परत्वोपयोगोऽन्यथा करणाकाङ्क्षैव न स्यात् स्वगतैकशक्त्यभिधाने स्वगतसकलशक्तीनामभिहितवत्प्रकाशान्न कदापि तृतीया तत्रेति कैयटाशयः ॥ छेदनस्य नियमेन करणाकाङ्क्षत्वात्तद्दर्शयति—**तदा त्विति** ॥ नन्वेकस्यैव कर्तृत्वकरणत्वे युगपद्विरुद्धे अत आह— **विवक्षेति** ॥ नन्वेवं परस्परं बाध्यबाधकत्वं कथमत आह—**वस्तुस्थित्या त्विति** ॥

**( पक्षान्तरभाष्यम् )**

**अथ वा यावद् ब्रूयात्—'क्रियायाम्' इति, तावत्—'कारके' इति । एवं च कृत्वा निर्देश उपपन्नो भवति 'कारके' इति । इतरथा हि 'कारकेषु' इति ब्रूयात् ॥ कारके ॥ २३ ॥**

**( प्रदीपः ) अथवेति** । क्रियात्र सूत्रे कारकशब्देनोच्यते । सा हि कर्त्रादीनि विशिष्टव्यपदेशयुक्तानि करोति । विषयत्वेन चायमधिकारः क्रियायां विषये यद् ध्रुवमित्यादि वस्तु संपद्यते ॥ **एवं च कृत्वेति** । निर्धारणसप्तम्यां हि कारकेष्विति वाच्यम् । निर्धारणस्यानेकाश्रयत्वात् । **कारकाद्दत्तश्रुतयो**रित्यादौ तु कारकशब्दस्य स्वरितत्वात्तदधिकारोपात्तानामपादानादीनां ग्रहणम् ॥ २३ ॥

**( उद्योतः )** ननु कारकशब्दाल्लोके क्रियाप्रतीतिर्न दृष्टेत्यत आह—**सूत्र इति** । सौत्रत्वादेकवचनपुंसकत्वे ॥ **विषयत्वेनेति** । विषयत्वं च जनकत्वमेव ॥ **वस्तु** वाक्यार्थः ॥ भाष्ये—**एवं च कृत्वेति** । पूर्वमते हि प्रथमोचितेति भावः ॥ ननु मास्तु संज्ञापक्षः कारकपदस्य क्रियापरत्वं च निर्धारणसप्तम्याद्यनुपदोक्तार्थलाभादत आह—**इतरथा हीति** ॥ **कारकेष्वितीति** । भिदत्रोन्त्यादित्यादिषु सौत्रः प्रयोगः । बहुवचनस्थाने एकवचनस्वीकारात्, तत्रागत्या तथा स्वीकार इति भावस्तदाह—**निर्धारणस्येति** । कारकाणां मध्ये यद् ध्रुवं तदपादानमित्यादिक्रमेण हि तदर्थः । **द्वन्द्वः सामासिकस्य चे**ति त्वार्षम् । लोके तु निर्धारणस्थले एकवचनप्रयोगो न साधुरिति बोध्यम् ॥ नन्वेवं **कारकाद्दत्ते**त्यादौ क्रियाजनकमात्रस्य ग्रहणं स्यादत आह—**कारकाद्दत्तेति** ॥ २३ ॥

—∘—

१ 'परस्परं संब' । २ अन्योन्यविशेषकाविलस्येति शेषः । ( र. ना. )

३ कारकसंज्ञाविधानसामर्थ्यादित्यर्थः । (र.ना.) ४ इत्येकवचनमित्यर्थः । (र.ना.)

( अथापादानसंज्ञाप्रकरणम् )

( १७७ अपादानसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. २ सू. )

## २६४ ध्रुवमपायेऽपादानम् ॥ १ । २४ ॥

( ध्रुवग्रहणप्रयोजनाधिकरणम् )

( अनुयोगभाष्यम् )

**ध्रुवग्रहणं किमर्थम् ? ।**

( प्रदीपः ) **ध्रुवमपाये ॥ २४ ॥ ध्रुवग्रहणमिति ।** अध्रुवस्य परत्वात्संज्ञान्तरं प्रवर्तिष्यते इति प्रश्नः ॥

( उद्द्योतः ) ध्रुवमपाये ॥ २४ ॥ अपायोत्र विभागजसंयोगानुकूलोऽवधिसाकाङ्क्षो गतिविशेषः ॥ "गतिर्विना त्ववधिना नापाय इति कथ्यते" इति हर्युक्तेः ॥ नन्वध्रुवनिवृत्त्यर्थं तत्स्यादत आह—अध्रुवस्येति ॥

( समाधानभाष्यम् )

**ग्रामादागच्छति शकटेन ।**

( प्रदीपः ) **शकटेनेति** । अपाये शकटस्यापि साधनत्वादपादानसंज्ञा प्राप्नोति ॥

( उद्द्योतः ) ननु शकटस्य विभागाश्रयत्वाभावात्कथं प्रसक्तिरत आह—अपाये इति । अपाये यत्साधनमित्येव शब्दमर्यादया लभ्यते न त्वदुक्तमिति भावः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । करणसंज्ञात्र बाधिका भविष्यति ॥**

( प्रदीपः ) **करणसंज्ञेति** । यथा धनुषा विध्यतीति क्रियमाणेपि ध्रुवग्रहणे परत्वात्करणसंज्ञा भवति एवमक्रियमाणेपि शकटस्य भविष्यतीत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि ग्रामादागच्छन्कंसपात्र्यां पाणिनौदनं भुङ्क्ते इति ॥**

( प्रदीपः ) **इदं तर्हीति ।** ननु कंसपात्री साधनमेवागमने न भवति, भुजिक्रियायां तु साधनं ध्रुवा च । तत्र परत्वादधिकरणसंज्ञेति **आकडारसूत्र** उक्तम् । एवं तर्हि वस्तुस्थित्यात्रागमनं प्रधानं तदङ्गं तु भोजनम् । शब्दात्तु विपरीतो गुणप्रधानभावः प्रतीयते । तदुक्तं हरिणा—

**चङ्क्रम्यमाणोधीष्वात्र जपंश्चङ्क्रमणं कुरु ।**
**तादर्थ्यस्याविशेषेपि शब्दाद्भेदः प्रतीयते ॥**

इति । तत्र कंसपात्री भुजेः साधनत्वात्तद्द्वारेणागमनस्यापि भवत्येव साधनम् ॥

( उद्द्योतः ) भाष्ये—ग्रामादागच्छन्निति । ग्रामात्काशीमागच्छन् बलाधानाय मध्ये कंसपात्र्यामोदनं भुङ्क्ते इत्यर्थः ॥ नन्विति । न च भोजनद्वारा गमनसाधनत्वम् । भोजनस्य प्राधान्येन गमनाङ्गत्वाभावात् । एवं च पुनरत्र कथनमनुचितमिति भावः ॥ वस्तुस्थित्येति । भोजनस्यागमनोद्देश्यकत्वादार्थिकं प्राधान्यमिति भावः ॥ जपंश्चङ्क्रमणं कुर्विति पाठः । अधीयंश्चङ्क्रमणमिति पाठे इङ्धार्योः शत्रकृच्छ्रिणीति शतेत्यन्ये ॥ तादर्थ्यस्य । चंक्रमणार्थित्वस्य ॥ प्रेरकस्य हि गवादिरक्षणाय चङ्क्रमणमात्रमपेक्षितमिति तस्यैवार्थे प्राधान्यम् ॥ नन्वेवमपि भुजिसाधनकंसपात्र्याः कथमागमनसाधनत्वमत आह—तत्रेति । कंसपात्र्यधिकरणकभोजनस्य गमनोद्देशेन प्रवृत्तेरिति भावः ॥

( समाधानबाधकभाष्यम् )

**अत्राप्यधिकरणसंज्ञा बाधिका भविष्यति ॥**

( प्रदीपः ) **अत्रापीति ।** शब्देन भोजनस्यैव प्राधान्यं प्रतीयते इति तत्प्रयुक्तयैव संज्ञया भाव्यम् । यथा भोक्तुं ग्राममभिनिविशत इति प्रधानक्रियापेक्षया ग्रामस्य कर्मसंज्ञा भवति । न तु भुज्यपेक्षयाऽधिकरणसंज्ञा ॥

( उद्द्योतः ) **शब्देनेति** । शब्दसंस्कारे तस्यैव प्रत्यासत्त्या ग्रहीतुमुचितत्वादिति भावः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि वृक्षस्य पर्णं पतति, कुड्यस्य पिण्डः पततीति ॥**

( प्रदीपः ) **वृक्षस्येति** । अस्त्यत्रापाय इति भावः ॥ नन्वत्र कारकत्वाभावात्संज्ञा न भविष्यति अपायाभावाच्च । सत्येव ह्यवधावपायो भवतीति पूर्वसूत्रे उक्तत्वात् ॥ तत्र केचिदाहुः—सुज्ञानत्वात्पूर्वसूत्रे उक्तत्वाच्च भाष्यकारेणायमर्थो नोक्तः ॥ अन्येत्वाहुः—सतीह ध्रुवग्रहणे विशिष्टोऽपायो लभ्यते, असति तु तस्मिन् पातमात्रस्य लोकेऽपायत्वेन प्रसिद्धत्वात्कारकाधिकारानपेक्षया च प्रत्युदाहरणमुपन्यस्तम् ॥

( उद्द्योतः ) **सत्येवावधाविति ।** विभागजसंयोगानुकूलव्यापार एवापायः, इह तु संयोगानुकूलव्यापार एवार्थ इति भावः ॥ **सुज्ञानत्वादिति ।** एवं च संज्ञिनिर्देशस्य कारकाक्षिप्तेन सिद्धत्वाद् ध्रुवग्रहणं चिन्त्यप्रयोजनमिति भावः ॥ **सतीहेति ।** ध्रुवत्वेनावधित्वेन विवक्षित इत्यर्थो भवतीति भावः ॥ इह त्वन्वयित्वेन विवक्षा नावधित्वेनेति तात्पर्यम् ॥ **कारकाधिकारानपेक्षयेति** । वृक्षस्य पर्णेऽन्वये क्रियाजनकत्वाभावादिति भावः । वस्तुतः पर्णसंबन्धेपि वृक्षस्य पातजनकत्वं वास्तवमस्त्येवेति तदपेक्षायामपि न दोषः। न च कारक इति सूत्रे तद्व्यावर्त्यत्वेनेदमाशङ्क्य नात्रापायो विवक्षित इत्यादिभाष्यादपायपदव्यावर्त्यत्वमुक्तं तत्कथमत्र ध्रुवपदव्यावर्त्यत्वोक्तिर्ध्रुवपदेनाचलार्थकेन तद्व्यावृत्त्यसंभवश्चेति वाच्यम् । **ध्रुव इति किमर्थमित्यस्य ध्रुवमपाये इति किमर्थमित्याशयात्** । तत्सूत्रोक्तरीत्यैव चास्य व्यावृत्तिः । अपायजनकं यद् ध्रुवमचलं तदपादानमिति सूत्रार्थः । ध्रुवत्वं चावधित्वोपयोगि चेष्टानाश्रयत्वम् । तेनास्या-

१ कंसपात्र्यां ध्रुवग्रहणस्य प्रयोजनकथनमित्यर्थः । ( र. ना. ) २ 'आधीयन्' इत्येवं पाठे न च्छन्दोभङ्गः ॥ ३ प्रधानेति । 'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥' इति हर्युक्तेरिति भावः । ४ स्वरूपव्याक्रियैव पराक्रियेत्यभिप्रायेणेति भावः । ( र. ना. ) ५ वृक्षस्येति शेषः । ( र. ना. )

वधित्वोपगमातिरिक्तस्वव्यापाराभावो ध्वन्यते । करणादौ तु तत्त्वोपगमातिरिक्तोपि स्वव्यापारोऽस्तीत्याहुः ॥

( शेषपूर्त्यधिकरणम् )

( १०८९ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **जुगुप्साविरामप्रमादार्थानामुपसंख्यानं कर्तव्यम् ॥ जुगुप्सा—अधर्माज्जुगुप्सते । अधर्माद्बीभत्सते ॥ विराम—धर्माद्विरमति । धर्मान्निवर्तते ॥ प्रमाद—धर्मात्प्रमाद्यति । धर्मान्मुह्यति ॥**

**इदं चोपसंख्यानं कर्तव्यम् । सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति ॥**

( प्रदीपः ) **जुगुप्सेति** । संश्लेषपूर्वको विश्लेषोऽपायः स चात्र नास्ति । बुद्धिकल्पितस्तु गौण इति भावः ॥ कारकशेषत्वाच्चात्र षष्ठी प्राप्नोति यथा नटस्य शृणोतीति ॥ **सांकाश्यकेभ्य इति । पञ्चमी विभक्ते** इत्यनपेक्ष्य वचनम् । अत्र **यतश्च निर्धारण**मिति षष्ठीसप्तम्यौ प्राप्नुतः ॥

( उद्द्योतः ) **जुगुप्सा** निन्दा । **गौण इति** । अपायत्वेनाप्रसिद्ध इत्यर्थः ॥

( तटस्थाक्षेपभाष्यम् )

**तत्तर्हीदं बहु वक्तव्यम् ? ।**

( वार्तिकप्रत्याख्यानभाष्यम् )

**न वक्तव्यम् । इह तावद्—अधर्माज्जुगुप्सते अधर्माद्बीभत्सते इति । य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति दुःखोऽधर्मो नानेन कृत्यमस्तीति । स बुद्ध्या संप्राप्य निवर्तते । तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम् ॥**

**इह धर्माद्विरमति धर्मान्निवर्तते इति । धर्मात्प्रमाद्यति धर्मान्मुह्यतीति । इह य एष मनुष्यः संभिन्नबुद्धिर्भवति स पश्यति—नेदं किंचिद्धर्मो नाम नैनं करिष्यामीति स बुद्ध्या संप्राप्य निवर्तते । तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम् ॥**

**इह च सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति यस्तैः साम्यं गतवान् भवति स एतत्प्रयुङ्क्ते ॥**

( प्रदीपः ) **न वक्तव्यमिति । साधकतमं करण**मिति तमग्रहणेन **स्वरितेनाधिकार** इत्यधिकः कारोधिकार इत्यस्यार्थस्याश्रयणेन च बुद्धिव्यवस्थितापायाश्रयाऽपादानसंज्ञा प्रवर्तते ॥ **अधर्माज्जुगुप्सत इति** । जुगुप्सादयो निवृत्त्यङ्गे जुगुप्सादौ वर्तन्ते ॥ **संभिन्नबुद्धिरिति** । धर्माधर्मयोरेकाकारबुद्धिर्नास्तिक इत्यर्थः ॥ **यस्तैरिति** । तैः सांकाश्यकैः पाटलिपुत्रकाणां समगुणत्वाद्यः साम्यमवगतवान्स प्रकर्षाश्रयेण पुनः पृथक् कृत्वा वाक्यं प्रयुङ्क्ते इत्यर्थः ॥

त्रिविधं चेदमपादानम्—निर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियं चेति । तत्र **निर्दिष्टविषयम्**—यत्र धातुनाऽपायलक्षणो विषयो निर्दिष्टः यथा—ग्रामादागच्छतीति ॥ **उपात्तविषयम्**—यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह । यथा बलाहकाद्विद्योतत इति । निःसरणाङ्गे द्योतनेऽत्र द्युतिर्वर्तते । यथा वा कुसूलात्पचतीत्यादौ आदानाङ्गे पाके पचिर्वर्तते ॥ **अपेक्षितक्रियम्**—यत्र क्रियावाचि पदं न श्रूयते केवलं क्रिया प्रतीयते । यथा—सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति ।

( उद्द्योतः ) **तमग्रहणेनेति** । कारकाधिकारादेव साधकत्वे लब्धे साधकग्रहणेनैव प्रकर्षे लब्धे तमग्रहणं व्यर्थं सदप्रसिद्धार्थकत्वेन गौणस्यापि ग्रहणं ज्ञापयतीत्यर्थः ॥ युक्त्यन्तरमप्यमाह **स्वरितेनाधीत्यादि** ॥ ननु प्रयोक्तुस्तैः साम्याभावाद् यस्तैः साम्यं गतवानित्यनुपपन्नमत आह—**तैरिति** ॥ नन्वत्र क्रियाभावात्कारकत्वाभावेन कथमपादानत्वमत आह—**त्रिविधं चेति** ॥ **केवलं प्रतीयतइति** । प्रविश पिण्डीमित्यादाविवोपात्तपदेनेत्यर्थः ॥ **यथेति** । अत्र विभक्ता इति क्रिया गम्यत इत्याशयः ॥

( अनुपपत्तिपरिहाराधिकरणम् )

( १०९० आक्षेपवार्तिकम् ॥ २ ॥)

**॥ * ॥ गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वात् ॥ * ॥**

( भाष्यम् ) **गतियुक्तेष्वपादानसंज्ञा नोपपद्यते । रथात्प्रवीतात्पतितः । अश्वात्त्रस्तात्पतितः । सार्थाद्गच्छतो हीन इति । किं कारणम् । अध्रुवत्वात् ॥**

( प्रदीपः ) **गतियुक्तेष्विति** । अचलं ध्रुवमेकरूपं चेति परिस्पन्दे ध्रुवता नास्तीति मन्यते ॥ **अश्वात्त्रस्तादिति** । त्रासपूर्वके परिस्पन्देऽनेकार्थत्वाद्धातूनां त्रसिर्वर्तते । त्रस्तश्चाश्वः पातस्य निमित्तमिति पूर्वमश्वस्य त्रस्तत्वेन संबन्धः पश्चात्पतित इत्यनेनेति ध्रुवताश्वस्य नास्ति ॥

( उद्द्योतः ) **गतियुक्तेष्विति** । त्रासादीनामवधित्वोपयोगित्वं मन्यमानस्य प्रश्नः ॥ उत्तराशयस्तु—न तदवधित्वोपयोगि, अश्वात्पतितो वृक्षात्पतित इत्यादावभावात् । अत्र विद्यमानमपि तदविवक्षितत्वान्नावधित्वोपयोगितया विवक्षितम्, किं त्वश्वत्वादिकमेवेति तत्त्वम् ॥ ननु त्रासो नाम मनोधर्मो न हि तावता पिण्डस्य ध्रुवत्वमपैतीत्यत आह—**त्रासपूर्वके इति** ॥ ननु त्रासक्रियान्वयात्पूर्वमेव पतनक्रियासंबन्धे ध्रुवत्वमस्त्येवेत्यत आह—**त्रस्तश्चाश्व इत्यादि** ॥

१ 'अधर्मात्' । २ 'अधर्मात्' । ३ 'अधर्मो' । ४ 'अधर्मो' । ५ निवृत्त्यङ्गे इत्यत्र षष्ठीतत्पुरुषः । जुगुप्सापूर्वकनिवृत्तावित्यर्थः । ( र. ना. ) ६ अत्र बहुव्रीहिः । (र.ना.) ७ 'त्याहुः' । ८ प्रपूर्वकाद् गत्यर्थकाद् वीधातोः कर्तरि क्तः । प्रगतवत इत्यर्थः । (र. ना.) ९ उत्तरेति । * नवाऽध्रौव्यस्याविवक्षितत्वात् * इति वार्तिकेन वक्ष्यमाणोत्तरेत्यर्थः । १० विवक्षितत्वरूपव्यापकधर्माभावादवधित्वोपयोगितया विवक्षितत्वरूपव्याप्यधर्मस्याभाव इत्याशयः । ( र. ना. )

( १०९१ समाधानवार्तिकम् ॥ ३ ॥ )

॥*॥ न वाऽध्रौव्यस्याविवक्षितत्वात् ॥*॥

( भाष्यम् ) न वा एष दोषः । किं कारणम्? । अध्रौव्यस्याविवक्षितत्वात् । नात्राध्रौव्यं विवक्षितम् किं तर्हि? । ध्रौव्यम् । इह तावद्—अश्वात्त्रस्तात्पतित इति यत्तदश्वेऽश्वत्वमाशुगामित्वं, तद्ध्रुवं तच्च विवक्षितम् ॥

रथात्प्रवीतात्पतित इति यद्रथे रथत्वं रमन्तेऽस्मिन् रथ इति तद्ध्रुवं तच्च विवक्षितम् ॥

सार्थाद्गच्छतो हीन इति यत्तत्सार्थे सार्थत्वं सहार्थीभावः तद्ध्रुवं तच्च विवक्षितम् ॥

( प्रदीपः ) न वेति । अयमर्थः—ध्रुवमेकरूपमुच्यते । तच्च ध्रौव्यमपायविषयमाश्रीयते । न त्वनवच्छिन्नम्[1] । ततोऽपाये यदनाविष्टं तदपाये ध्रुवमुच्यते । देवदत्तकर्तृके च पाते त्रस्तस्याप्यश्वस्यापायानावेशाद् ध्रुवत्वम् । देवदत्तस्यैवापायावेशादध्रुवत्वम् । अथ वाश्वस्य त्रस्तत्वाद्यदध्रौव्यं तत्प्रथममविवक्षितमित्यर्थः । तथा हि—कारकस्य पूर्वं क्रियया समन्वयः । स च श्रुतिप्रापित उच्यते । पश्चाद्विशेषणेन वाक्यीयः संबन्धः । ततश्चाश्वात्पतित इति संबन्धे नास्त्यश्वस्याध्रुवत्वम् । पश्चात्त्रस्तत्वेन संबन्धे सत्यप्यध्रौव्येऽन्तरङ्गा संज्ञा न निवर्तते । विशेषणस्यासत्यप्यपादानत्वे सामयिकी विभक्तिः । सा च विशेष्यानुरोधेन प्रवर्तते न त्वनियमेन ॥ अथवा त्रस्तस्याप्यपादानत्वं, सत्यपि त्रासापेक्षेऽध्रुवत्वे पातं प्रति ध्रुवत्वात् । यथोक्तं प्राक् ॥ आशुगामित्वमिति । अयमर्थः । व्युत्पत्तिमात्रमाशुगामित्वमिति[3] तदपेक्षयाऽध्रौव्यं न शङ्कनीयम् । जातिरेव शब्दप्रवृत्तिनिमित्तमिति नास्त्यत्राध्रौव्यम् ॥ आशुगामित्वशब्देनैकार्थसमवायात्साहचर्यादश्वत्वमेवोच्यते ॥

( उद्द्योतः ) एकरूपमिति । ध्रुवस्य शीलमित्यादिदर्शनाद् ध्रुव स्थैर्ये इत्यादिधात्वर्थानुसाराच्चेति भावः ॥ अपायविषयमिति । प्रत्यासत्तेरिति भावः ॥ विभागजसंयोगानुकूलो गतिविशेषो ह्यपायः । स च प्रधान एव गृह्यते युक्तत्वात् स चात्र पत्युं[4]पात्तः । न च तदाश्रयोऽश्वः, तथात्वे कर्तृत्वापत्तिरिति भावः ॥ अनवच्छिन्नमिति । अनिरूपितमित्यर्थः ॥ अपाये यदनाविष्टमिति । अपाये सति प्रकृतधातूपात्तया क्रियया यदनाविष्टमित्यर्थः । एवं च प्रकृतधातूपात्तगत्यनाविष्टत्वमेव ध्रुवत्वमिति तात्पर्यम् ॥ हरिरप्याह—अपाये यदुदासीनं चलं वा यदि वाऽचलम् । ध्रुवमेवातदावेशादिति ॥ परं तु सिद्धान्तभाष्याक्षराणामत्रार्थे न सामञ्जस्यं, किं तर्हि ध्रौव्यं विवक्षितम् , अश्वात्त्रस्तात्पतित इत्यत्राश्वत्वं ध्रुवं तदेव विवक्षितम् , धावतः पतित इत्यादौ सतोऽप्यध्रौव्यस्याविवक्षेत्यक्षराणामसामञ्जस्यात् । प्रधानव्यापाराश्रयत्वरूपत्वरूपस्य त्वदभिमताध्रौव्यस्यात्र कदाप्यसत्त्वात् । तस्मान्मदुक्त एव सूत्रार्थ उचितो भाष्यार्थश्चेति सुधियो विभावयन्तु ॥ कारकस्य पूर्वमिति । क्रियानिर्वर्तकरूपस्य तस्यान्तरङ्गत्वात्पूर्वं क्रिययाऽन्वय इत्यर्थः । श्रुतिः, पञ्चम्यादिः । वाक्यं, पदसमूहः । पूर्वमश्वात्पतित इति बोधे पातहेत्वाकाङ्क्षायां पश्चात् त्रस्तादित्यस्यान्वय इति भावः ॥ नन्वेवमपि त्रस्तादिति पञ्चम्यनुपपन्नैवेत्यत आह—विशेषणस्येति ॥ सामयिकीति । न केवला प्रकृतिरिति समयाद्विभक्तिरुत्पाद्या । सा चाभिन्नविशेष्यसमानशक्तिकत्वनियमाद्विशेषणानां तेभ्यो विशेष्यसमानैव विभक्तिरिति भावः ॥ आद्यपक्षस्यैव युक्तत्वबोधनाय पुनस्तं स्मारयति—अथ वेति । भाष्यस्वारस्यं द्वितीयव्याख्याने एव ॥ न शङ्कनीयमिति ॥ पूर्वोक्तद्वितीयव्याख्यारीत्येयं शङ्का बोध्या, त्रस्तत्वस्य प्रथममनन्वयेप्याशुगामित्वस्य शब्दादुपस्थित्या तत्कृतमध्रौव्यं न शङ्क्यं, जातेरेव प्रवृत्तिनिमित्तत्वादिति भावः ॥ भाष्ये— सहार्थीभाव इति । सहार्थो येषां तद्भाव इत्यर्थः ॥ परे त्वाशुगमनाश्रयत्वमश्वशब्देन योगतो बुध्यते रमणक्रियाश्रयत्वं रथशब्देनोच्यते सहमिलनक्रियाश्रयत्वं च सार्थशब्देन । अश्वत्वादिकं च रूढ्या । एवं चाश्वात्पतित इति प्रयोगे यद्यश्वस्य तदविवक्षयाऽश्वत्वमात्रविवक्षया ध्रुवत्वं तवाभिमतं तर्हि त्रस्तादिति विशेषणेपि न क्षतिरिति भावः । अश्वनिष्ठाश्वत्वाशुगामित्वयोर्मध्ये तदश्वत्वमेव ध्रुवताप्रयोजकं तच्च विवक्षितं तदेव विवक्षितमित्यक्षरार्थ इत्याहुः ॥

( आक्षेपभाष्यम् )

यद्यपि तावदत्रैतच्छक्यते वक्तुम् । ये त्वेतेऽत्यन्तं गतियुक्तास्तत्र कथम् । धावतः पतितस्त्वरमाणात्पतित इति ॥

( प्रदीपः ) यद्यपीति । यत्र क्रिया न प्रवृत्तिनिमित्तं किं तु व्युत्पत्तिमात्रनिमित्तं तत्रैतद्वक्तुं युज्यते । यत्र तु शब्दप्रवृत्तिनिमित्तं क्रिया तत्र कथं नाध्रौव्यमिति प्रश्नः ॥

( समाधानभाष्यम् )

अत्रापि—*न वाऽध्रौव्यस्याविवक्षितत्वाद् * इत्येव? ॥

कथं पुनः सतो नामाविवक्षा स्यात्? ॥

सतोप्यविवक्षा भवति । तद्यथा—'अलोसिकाएडका' । अनुदरा कन्येति ॥ असतश्च विवक्षा भवति—'समुद्रः कुण्डिका' 'विन्ध्यो वर्धितक'-मिति ॥ ध्रुवमपायेऽपादानम् ॥ २४ ॥

( प्रदीपः ) अत्रापीति । सरणक्रियोपलक्षितं द्रव्यमात्रमपादानत्वेन विवक्षितम्[5] । तच्च देवदत्तकर्तृके पाते पूर्वोक्तन्यायाद् ध्रुवमेवेत्यर्थः ॥ कथं पुनरिति । शब्दोपात्तमपि सरणं द्रव्योपलक्षणार्थत्वादध्रौव्यनिमित्तं न भवतीति कुत एतदिति प्रश्नः ॥ अलोसिकेति । अल्पत्वाल्लोम्नां तत्कार्याकरणादेवमुच्यते ॥ असतश्चेति । निदर्शनार्थमिदमुच्यते । यथाऽसतो विवक्षा भवति एवं सतोप्यविवक्षेत्यर्थः ॥ समुद्रः

१ अविशिष्टम्, अपायानपायसाधारणमित्यर्थः । उद्योतव्याख्याया अप्यत्रैव तात्पर्यम् । (र. ना.) २ प्रकृतधातूपात्तविभागजन्यसंयोगानुकूलव्यापारानाश्रय इत्यर्थः । ( र. ना. ) ३ 'व्युत्पत्तिनिमित्तमात्र' ॥ ४ पतधातुनोपात्त इत्यर्थः । ( र. ना. ) ५ अत्र विद्यमानमपि तदविवक्षितत्वान्नावधित्वोपयोगितया विवक्षितं किन्त्वश्वत्वमिति मदुक्त इत्यर्थः । (र. ना.)

कुण्डिकेति । कुण्डिकायां पानीयबाहुल्यात्समुद्रत्वं विवक्षितं समुद्रस्य वा सुतरत्वात्कुण्डिकात्वम् ॥ विन्ध्यो वर्द्धितकमिति । पूर्ववदन्यतररूपारोपेण व्याख्येयम् । मेषो मेषादपसर्पतीत्यत्रैकस्य कर्तृत्वविवक्षापरस्यापादानत्वविवक्षा ॥ यदा तु मेषावपसरत इति प्रयोगस्तदाऽवध्यन्तरमपेक्षणीयम् ॥ २४ ॥

(उद्द्योतः) ननु प्रवृत्तिनिमित्तमविवक्षितमित्ययुक्तमत आह—सरणक्रियोपलक्षितमिति । अनेन प्रवृत्तिनिमित्तस्याप्यविवक्षा दर्शिता ॥ तदेव भाष्ये उक्तं सतोप्यविवक्षेति ॥ पूर्वोक्तेति । त्रस्तादित्यादावुक्तरीत्येत्यर्थः ॥ नन्वसतश्चेति प्रकृतानुपयुक्तमत आह—निदर्शनार्थमिति । अग्रे सूक्ष्मो मूले स्थूल ओदनपिण्डो वर्द्धितकम् ॥ यदा त्विति । परस्परस्मान्मेषावपसरत इत्यत्र तु

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥

इति बोध्यम् । किं च मेषपदोपात्तयोरेव क्रियाश्रयत्वं परस्परपदोपात्तयोर्विभागाश्रयत्वमेवेति तत्र न दोषः । अन्यथा वस्तुतस्तदाश्रयक्रियाभेदेपि धातुना विभागद्वयस्य तज्जनकक्रियाद्वयस्य च निवृत्तभेदस्यैवोपादानात्परत्वात्कर्तृत्वं दुर्वारमेव स्यात् । आत्मानमात्मनेत्यादावन्तःकरणाद्युपाधिना भेदस्येव शब्दरूपोपाधिकृतभेदस्यात्रापि सत्त्वाच्च ॥ अस्मन्मते शब्दानुविद्धार्थस्यैव भानाच्च ॥ हरिकारिकायामप्यवधित्वमित्यस्य परस्परपदोपात्तयोरिति शेषः । कर्तृत्वमित्यस्य मेषपदोपात्तयोरिति शेष इति वदन्ति ॥ २४ ॥

( १७८ अपादानसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. ३ सू. )

## २६५ भीत्रार्थानां भयहेतुः ॥१।४।२५॥

( प्रत्याख्यानाधिकरणम् )

( प्रत्याख्यानभाष्यम् )

**अयं योगः शक्योऽवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कथं वृकेभ्यो बिभेति दस्युभ्यो बिभेति चोरेभ्यस्त्रायते दस्युभ्यस्त्रायत इति ? ॥**

( प्रदीपः ) भीत्रार्थानाम् ॥ २५ ॥ कथमिति । भयमाकुलीभावः, त्राणमनर्थप्रतिघात इति । तत्र च नास्ति मुख्योऽपाय इति प्रश्नः ॥

( उद्द्योतः ) भीत्रार्थानां ॥ २५ ॥ सूत्रे भीत्राशब्दौ भावक्विन्तौ ॥ चौरेभ्य इति पाठे प्रज्ञाद्यणन्तो बोध्यः । चुरा स्तेयं शीलमस्येति णान्तो वा ॥ अनर्थप्रतिघात इति । अनर्थश्च भयं तद्धेतुश्चोर इति त्राणार्थानामपि भयहेतुः कारकं संभवतीति बोध्यम् ॥

( आक्षेपबाधकभाष्यम् )

**इह तावद्-वृकेभ्यो बिभेति दस्युभ्यो बिभेतीति। य एष मनुष्यः प्रेक्षापूर्वकारी भवति । स पश्यति-यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति । स बुद्ध्या संप्राप्य निवर्तते, तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम् ॥**

**इह चौरेभ्यस्त्रायते दस्युभ्यस्त्रायत इति, य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद्भवति । स पश्यति-यदीमं चोराः पश्यन्ति ध्रुवमस्य वधबन्धनादिपरिक्लेशा इति । स बुद्ध्या संप्राप्य निवर्तयति । तत्र "ध्रुवमपायेपादानम्" इत्येव सिद्धम् ॥ भीत्रार्थानाम् ॥ २५ ॥**

( प्रदीपः ) प्रेक्षापूर्वकारीति । बुद्धिव्यवस्थापितोऽत्रापायोऽस्तीति भावः । तत्र निवृत्त्यङ्गे भये बिभेत्यादयो वर्तन्त इत्युपात्तविषयमेतदपादानम् । चोरेभ्यस्त्रायत इत्यनर्थपरिहाराय निवर्तयतीत्यर्थः । चोरमध्यगतस्यापि त्राणे चोरसंपर्कफलस्य वधबन्धनापहरणादेर्निवर्तनात्तेभ्यो निवर्तयतीत्युच्यते । वारणार्थानामीप्सित इत्यनेनात्रापादानसंज्ञा न प्राप्नोति, चोराणामनीप्सितत्वात् । सूत्रारम्भपक्षे तु कारकशेषत्वात् षष्ठ्यां प्राप्तायामिदं वचनम् ॥ २५ ॥

( उद्द्योतः ) भाष्ये—पश्यति । विचारयतीत्यर्थः ॥ ननु निवृत्तेरेव वारणत्वाद्वारणार्थानामित्यनेन सिद्धिरिति कुतो नोक्तमत आह—वारणार्थानामिति ॥ अनीप्सितत्वात् । तद्धात्वर्थप्रयोज्यफलानाश्रयत्वात् ॥ इदं वचनमिति । प्रत्याख्याने तु षष्ठ्या अनभिधानान्निवृत्तिर्बोध्या । क्रियां प्रति जनकत्वेन विवक्षायामेषा संज्ञा । संबन्धित्वेन विवक्षायां तु षष्ठ्यामिष्टापत्तिरेव । सूत्राणि प्रपञ्चार्थान्येवेति हरयः ॥ २५ ॥

( १७९ अपादानसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. ४ सू. )

## २६६ पराजेरसोढः ॥ १ । ४ । २६ ॥

( प्रत्याख्यानाधिकरणम् )

( प्रत्याख्यानभाष्यम् )

**अयमपि योगः शक्योऽवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कथम्—अध्ययनात्पराजयते इति ? ॥**

( प्रदीपः ) पराजे ॥२६॥ पराजिः क्वचिदभिभवे वर्तते । यथा शत्रून्पराजयते इति । इह त्वसोढग्रहणात्न्यूनीभाववृत्तिर्गृह्यते । अध्ययनात्पराजयते हसति । अध्येतुं ग्लायतीत्यर्थः । अत्र चार्थेकर्मकत्वात्षष्ठ्यां प्राप्तायां वचनम् ॥

( उद्द्योतः ) पराजेर ॥ २६ ॥ असोढग्रहणादिति । अत्र कालोऽविवक्षितः । तेन पराजेष्यत इत्यपि भवति ॥ न्यूनीभावेति । शक्तिवैकल्येत्यर्थः । षष्ठ्यामिति । तत्संबन्धिशक्तिवैकल्यमित्यर्थादिति भावः ॥

१ अत्र षष्ठीतत्पुरुषः । ( र. ना. ) २ चोरमध्यगतस्यापि पुरुषस्य त्राणे सति इत्यर्थः । (र. ना.) ३ अध्ययनसंबन्धिशक्तिवैकल्यमित्यर्थः । (र. ना.)

( आक्षेपबाधकभाष्यम् )

**य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति दुःखमध्ययनं दुर्धरं च, गुरवश्च दुरुपचारा इति, स बुद्ध्या संप्राप्य निवर्तते । तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम् ॥ पराजेरसोढः ॥ २६ ॥**

( प्रदीपः ) पूर्ववदस्यापि प्रत्याख्यानं निवृत्त्यङ्गे पराजये पराजेर्वर्तनात् ॥ २६ ॥

( उद्योतः ) निवृत्त्यङ्गे इति । षष्ठीसमासः । शक्तिवैकल्येन ततो निवर्तेत इत्यर्थात् ॥ २६ ॥

( १८० अपादानसंज्ञासूत्रम् । १ । ४ । ३ आ० ५ सू० )

## २६७ वारणार्थानामीप्सितः ॥ २७ ॥

( उदाहरणनिर्णयाधिकरणम् ॥ )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

( प्रदीपः ) **वारणार्थानाम्** ॥ २७ ॥ **किमुदाहरणमिति** । अव्याप्तिं मन्यमानस्य प्रश्नः ॥

( समाधानभाष्यम् )

**माषेभ्यो गा वारयति ॥**

( समाधानबाधकभाष्यम् )

**भवेद्यस्य माषा, न गावस्तस्य माषा ईप्सिताः स्युः । यस्य तु खलु गावो, न माषाः; कथं तस्य माषा ईप्सिताः स्युः ॥**

( प्रदीपः ) **भवेद्यस्येति** । यस्यात्मीया माषास्तस्य त ईप्सिता इत्यर्थः । अभिप्रेतपर्यायमीप्सितशब्दं मन्यते ॥ **यस्य त्विति** । यस्यात्मीया गावः परकीयास्तु माषास्तस्य न त ईप्सिताः ॥

( उद्योतः ) **वारणार्थां** ॥ २७ ॥ अव्याप्त्युपपादकं—यस्य खल्विति भाष्ये ॥ ननु धात्वर्थजन्यफलशालित्वरूपमीप्सितत्वं सर्वत्राप्यस्तीत्यत आह—**अभिप्रेति** ॥

( समाधानसाधकभाष्यम् )

**तस्यापि माषा एवेप्सिताः ॥ आतश्चेप्सिताः, यदेभ्यो गा वारयति ॥**

( प्रदीपः ) **तस्यापीति** । ईप्सितशब्दः क्रियाशब्द आश्रीयते न तु रूढिशब्दः । तत्र वारणक्रियया परकीया अपि माषा वारयितुराप्तुमिष्टा भवन्ति मा नशन्नेते इत्येतेभ्योऽसौ गा वारयति ॥ **माषा एवेति** । एवकारो भिन्नक्रमः । ईप्सिता एवेत्यर्थः ॥

( उद्योतः ) **आप्तुमिष्टा इति** । वारणं प्रवृत्तिविघातः । स च तद्व्यापारजन्यतत्फलाभावप्रयोजको भक्षणादिजनकव्यापाराभावानुकूलो व्यापारः क्वचित्, क्वचित्तद्व्यापारजन्यतत्फलाभावप्रयोजकः संयोगानुकूलव्यापाराभावानुकूलव्यापारः ॥ एवं च तद्धात्वर्थप्रयोज्यफलाश्रया इत्यर्थस्तदाह—**मा नशन्निति** । नाशाभावरूपफलेन व्याप्तुमिष्टा इत्यर्थः । नाशाभावश्च [३]भक्ष्यमाणाभावपर्यवसन्नस्तस्य च फलस्य धात्वर्थत्वपर्यन्तं नाग्रहः । माषनाशे हि सति राजभयमधर्मश्च स्यादिति भावः ॥ नन्वेवं **माषा एवेति** भाष्याद्गवामीप्सितत्वाभावो लभ्यते इति सुतरामीप्सिततमत्वाभावेन कर्मत्वाभावाद्द्वितीया न स्यादत आह—**भिन्नक्रम इति** । गवादिनिष्ठव्यापाराभावस्यैव मुख्यतयोद्देश्यत्वेन तदाश्रयत्वेनेच्छाविषयत्वात्तासां कर्मत्वमिति भावः ॥

( अनुपपत्तिपरिहाराधिकरणम् )

( आक्षेपभाष्यम् )

**इह कूपादन्धं वारयतीति कूपेऽपादानसंज्ञा न प्राप्नोति । नहि तस्य कूप ईप्सितः । कस्तर्हि ? । अन्धः ॥**

( प्रदीपः ) **कूपादिति** । अन्धसंबन्धे कूपस्य न विनाशो नापि राजभयमिति प्रश्नः ॥ **कस्तर्ह्यन्ध इति** । तं प्रत्यनुकम्पायाः सद्भावात्तस्येप्सितत्वं मन्यते ॥

( उद्योतः ) ननु पूर्वोदाहरणादस्य को विशेष इत्यत आह—**अन्धेति** ॥ ननु तदसंबन्धिनस्तस्य कथं तदीप्सितत्वमत आह—**तं प्रतीति** ॥

( समाधानभाष्यम् )

**तस्यापि कूप एवेप्सितः । पश्यत्ययम्—अन्धः कूपं मा प्रापदिति ॥ अथ वा यथैवास्यान्यत्रापश्यत ईप्सा एवं कूपेऽपि ॥**

( प्रदीपः ) **तस्यापीति** । वारणक्रिययाप्तुमिष्ट इत्यर्थः । **अथ वेति** । ईप्सित इत्यनेन कर्मणा कर्तृमात्रस्याक्षेपाद्विवार्यमाणस्यान्धस्य गमनादिक्रियया कूप आप्तुमिष्टो भवतीति प्रवर्ततेऽपादानसंज्ञा । अन्धस्य च प्रवृत्त्यनुमेयेप्सा तदाह—**अन्यत्रापश्यत इति** । अन्धस्येत्यर्थः । स ह्यपश्यन्नपि गन्तव्यं जिगमिषति । अन्यथा न क्वचित्तस्य प्रवृत्तिः स्यात् ॥

( उद्योतः ) माषाणां राजभयादितो नाशाभावरूपफलाश्रयत्वेन गोस्वाम्यभिप्रेतत्वेप्यस्य कथं तत्त्वमत आह—**वारणक्रियेति** । क्रियाशब्दस्य ग्रहणात् कूपस्यापि तत्संयोगाभावरूपफलाश्रयत्वादिति भावः ॥ **गमनादिक्रिययेति** । वारणधात्वर्थघटकयेत्यर्थः । अत्र पक्षे भक्षणादिजनकव्यापाराभावानुकूलव्यापार एव वारयतेरर्थः । एवं च वारणार्थकधातुप्रतिपाद्यव्यापारजन्यफलाश्रयत्वमेवात्रेप्सितत्वमिति भावः ॥ नन्वेवमपि प्रधानकर्तुरनीप्सितत्वात्कथमेतत्प्राप्तिरत उक्तं **कर्तृमात्रस्येति** । कर्तृग्रहणं चोपलक्षणम् ॥ नन्वन्धस्य पदार्थज्ञानाभावात्कथं तद्विषयेप्सेत्यत आह—**अन्धस्य चेति** ॥

१ माषेभ्यो गा वारयतीत्यत्र । ( र. ना. ) २ अग्नेर्माणवकं वारयतीत्यत्र । ( र. ना. ) ३ 'भक्ष्यमाणाभाव' इति पाठ० । परंतु 'भक्षणाभाव' इति तूचितम् ॥ ४ कर्तुरसंबन्धिन इत्यर्थः । ( र. ना. ) ५ अपश्यतोऽन्धस्यास्य यथैव कूपादन्यत्रेप्सा तथा कूपेऽपीति संबन्धः । ( र. ना. )

( आपत्तिपरिहाराधिकरणम् )

( आक्षेपभाष्यम् )

**इहाग्नेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) इदानीमतिप्रसङ्गमुद्भावयति—**इहाग्नेरिति** ॥

( समाधानभाष्यम् )

**कर्मसंज्ञात्र बाधिका भविष्यति ॥**

( प्रदीपः ) **कर्मसंज्ञात्रेति** । परत्वादिति भावः । कर्मसंज्ञाया अवकाशो वारणार्थेभ्योऽन्ये धातवः । अपादानसंज्ञायास्तु प्रकर्षरहितमीप्सितम् । ईप्सिततमस्य तूभयप्रसङ्गे परत्वात्कर्मसंज्ञा ॥

( आक्षेपभाष्यम् )

**अग्नावपि तर्हि बाधिका स्यात् । तस्माद्वक्तव्यम् "कर्मणो यदीप्सितम्" इति । "ईप्सितेप्सितम्" इति वा ॥**

( प्रदीपः ) **अग्नावपीति** । कारकाधिकारे प्रकर्षो न विवक्ष्यते इत्यतन्त्रं तमनिर्देशं[1] मन्यते ॥ **कर्मणो यदीप्सितमिति** । तत्र कर्मसंज्ञा निमित्तमेवापादानसंज्ञाया इति माणवके प्रवर्तते । ततस्तस्येप्सितस्याग्नेरपादानसंज्ञेत्यर्थः ॥ **ईप्सितेप्सितमिति** । वारयितुर्यदीप्सितं कर्म तस्य यदीप्सितमित्यर्थः । शेषषष्ठ्या चात्र समासः । अन्यथा क्तेन च पूजायामिति निषेधः स्यात् ॥

( उद्योतः ) सामर्थ्यगम्यस्यैव प्रकर्षस्यानाश्रयणं न तूपात्तस्येत्यत उक्तम्—**मन्यत इति** । नन्वीप्सितमाषाणां न गवादीप्सितं नापि तस्यापादानत्वमिष्टमत आह—**वारयितुरिति** ॥ **यदीप्सितं कर्मेति** । कर्मशब्दोऽत्र क्रियापरः । ईप्सितो यो धात्वर्थ इत्यर्थः ॥ **तस्य यदीप्सितमिति** । तज्जन्यफलाश्रय इत्यर्थः । भक्षणादिजनकव्यापाराभावस्य हि नाशाभावान्धापतनादि फलमिति भावः ॥ एवं च पूर्वोक्तसमाधानद्वयाभिप्रायकं लक्षणद्वयं बोध्यम् । एतेनार्थाभेदाच्छन्दभेदमात्रेण लक्षणद्वयकथनमयुक्तमित्यपास्तम् ॥

( १०९२ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनात् ॥ * ॥**

( भाष्यम् ) **वारणार्थेषु कर्मग्रहणमनर्थकम् । किं कारणम्? । कर्तुरीप्सिततमं कर्मेति वचनात् । "कर्तुरीप्सिततमं कर्म" इत्येव सिद्धम् ॥**

( प्रदीपः ) **कर्तुरिति** । प्रकर्षप्रत्ययोपादानसामर्थ्यात्कर्मसंज्ञायां प्रकर्षो विवक्ष्यत एव । तत्र द्वयोः संज्ञयोः सावकाशयोः परत्वादीप्सिततमस्य कर्मसंज्ञा ॥ २७ ॥

( उद्योतः ) ननु प्रकर्षाविवक्षणेनानवकाशत्वादिदमेव भविष्यतीत्यत आह—**प्रकर्षेति** । अयं भावः—तरबादिः प्रवृत्तिनिमित्तगतप्रकर्षे विधीयते । प्रवृत्तिनिमित्तं चात्रेच्छा, तस्यां स्वतः प्रकर्षासंभवेपि[4] व्याख्यानाद्विशेषणीभूतव्याप्तिगतः स गृह्यते । व्याप्तिप्रकर्षश्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यधात्वर्थफलीयत्वरूपः ॥ एवं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यधात्वर्थफलाश्रयत्वमीप्सिततमत्वम् । तच्च नाग्नाविति ॥ ननु कर्तृग्रहणासिद्धमेतत् प्रकृतसूत्रे इवेप्सितेति कर्मणा कर्तुराक्षेपेणैव सिद्धे पुनः कर्तृग्रहणेन प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयस्यैव ग्रहणादिति चेन्न । लघुना तमग्रहणेन कर्तुरित्यस्य प्रत्याख्याने तात्पर्यादित्याहुः ॥

( सूत्रप्रत्याख्यानाधिकरणम् )

( प्रत्याख्यानभाष्यम् )

**अयमपि योगः शक्योऽवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कथं माषेभ्यो गा वारयतीति? ॥**

( समाधानभाष्यम् )

**पश्यत्ययं यदीमा गावस्तत्र गच्छन्ति ध्रुवः सस्यविनाशः, सस्यविनाशेऽधर्मश्चैव राजभयं च । स बुद्ध्या संप्राप्य निवर्तयति तत्र "ध्रुवमपायेऽपादानमि"त्येव सिद्धम् ॥ वारणार्थानामीप्सितः ॥२७॥**

( उद्योतः ) भाष्ये—**पश्यत्ययमिति** । विचारयतीत्यर्थः ॥२७

---

( १८१ अपादानसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. ६ सू. )

## २६८ अन्तर्द्धौ येनादर्शनमिच्छति ॥ १ । ४ । २८ ॥

( उद्योतः ) अन्तर्द्धौ ॥ २८ ॥ अन्तर्द्धिर्व्यवधानं, यस्य च भावेनेतिसप्तमी । येनेति सौत्री तृतीया । उभयोः प्रयोगाभावेनोभयप्राप्तावित्यस्याप्रवृत्तेः । उभयप्रयोगे एव तत्प्रवृत्तिरित्याश्मान इतिसूत्रे भाष्ये स्पष्टम् । अन्तर्द्धिनिमित्तकं यत्कर्तृकमात्मकर्मकादर्शनमिच्छति तदपादानमित्यर्थः ॥

( प्रत्याख्यानाधिकरणम् )

( प्रत्याख्यानभाष्यम् )

**अयमपि योगः शक्योऽवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कथम्—उपाध्यायादन्तर्धत्त इति? ॥**

( प्रदीपः ) **अन्तर्द्धौ येनादर्शनमिच्छति** ॥ २८ ॥ **अन्तर्धत्ते इति** । तिरोभवतीत्यर्थः ॥

( उद्योतः ) नन्वन्तर्धत्त इत्यस्य विभजत इत्यर्थेऽपादानत्वं सिध्यतीत्यत आह—**तिरोभवतीति** । आत्मकर्मकोपाध्यायकर्तृकदर्शनाभावेच्छया तिरोभवतीत्यर्थः ॥

---

१ कर्तुरीप्सिततममित्यत्र तमनिर्देशमप्रयोजकं मन्यते इत्यर्थः । ( र. ना. ) २ गवादेरित्यर्थः । ( र. ना. ) ३ कर्मणो यदीप्सितम्, ईप्सितेप्सितमित्यनयोर्भिन्नार्थत्वोपवर्णनेनेत्यर्थः । ( र. ना. ) ४ मकर्षासंभवेऽपीति पाठः समुचितः ।

विषयप्रकर्ष एवेच्छायां प्रतीयते इति भावः । ( र. ना. ) ५ माणवकस्य कर्मत्वं कर्तृग्रहणात्सिद्धमिति तदर्थं तमग्रहणं व्यर्थमिति शङ्कित्राशयः । ( र. ना. )

( समाधानभाष्यम् )

**पश्यत्ययं 'यदि मामुपाध्यायः पश्यति ध्रुवं मे प्रेषणमुपालम्भो वेति, स बुद्ध्या संप्राप्य निवर्तते तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम् ॥**

**अन्तर्धौ येनादर्शनमिच्छति ॥ २८ ॥**

(उद्द्योतः) निवृत्तिपूर्वकतिरोभवने धातोर्वृत्तेर्ध्रुवमिति सूत्रेणैव सिद्धमिति बोध्यम् ॥ २८ ॥

( १८२ अपादानसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. ७ सू० )

## २६९ आख्यातोपयोगे ॥ १ । ४ । २९ ॥

( पदकृत्यकथनाधिकरणम् )

( अनुयोगभाष्यम् )

**उपयोग इति किमर्थम् ? ॥**

( प्रदीपः ) आख्यातोपयोगे ॥ २९ ॥ उपयोगो व्यापारः स चाविशिष्टो नटोपाध्याययोरिति मत्वा पृच्छति— उपयोग इति किमर्थमिति ॥

( उद्द्योतः ) आख्यातोप ॥ २९ ॥ व्यापार इति । उपयुज्यते फलायेति व्युत्पत्तेरिति भावः ॥

( समाधानभाष्यम् )

**नटस्य शृणोति, ग्रन्थिकस्य[1] शृणोति ॥**

( समाधानबाधकभाष्यम् )

**उपयोग इत्यप्युच्यमानेऽत्र प्राप्नोति । एषोपि ह्युपयोगः । आतश्चोपयोगः ॥ यदारम्भका रङ्गं गच्छन्ति नटस्य श्रोष्यामः ग्रन्थिकस्य श्रोष्याम इति ॥**

( प्रदीपः ) आरम्भका रङ्गं गच्छन्तीति । रङ्गं सामाजिकस्थानम् । आरम्भका यत्नेन प्रवृत्तिमन्तो गच्छन्तीत्यर्थः ॥

( उद्द्योतः ) आरम्भकाः । गीतश्रोतॄणां मध्ये मुख्याः । यत्नेन प्रवृत्तिमन्तो गच्छन्तीति । अत्यावश्यकत्वबुद्ध्या गच्छन्तीति यावत् । प्रवृत्तिरत्र व्यापारसामान्यं यत्नेनेत्यस्यातियत्नेनेत्यर्थः ॥

( समाधानसाधकभाष्यम् )

**एवं तर्ह्युपयोग इत्युच्यते । सर्वश्चोपयोगः । तत्र प्रकर्षगतिर्विज्ञास्यते साधीयो य उपयोग इति । कश्च साधीयः ? । यो ग्रन्थार्थयोः ॥**

( प्रदीपः ) प्रकर्षगतिरिति । व्यापारमात्रे लब्धे उपयोगग्रहणं विशिष्टव्यापारपरिग्रहार्थम् । तेन ग्रन्थार्थधारणार्थं यद्ग्रहणं स उपयोगः ॥

( उद्द्योतः ) व्यापारमात्रे इति । कारकाधिकारादिति भावः ॥ ग्रन्थार्थधारणार्थमिति । यदा तु नटादिभ्योपि तथाध्ययनं तदा नटाच्छृणोतीति भवत्येवेति बोध्यम् ॥

( समाधानान्तरभाष्यम् )

**अथ वा उपयोगः को भवितुमर्हति ? ॥ यो नियमपूर्वकः तद्यथा—उपयुक्ता माणवका इत्युच्यन्ते य एते नियमपूर्वकमधीतवन्तो भवन्ति ॥**

( प्रदीपः ) अथ वेति । उपयोगशब्दस्यैवायमर्थो नियमपूर्वकं विद्याग्रहणम् ॥

( उद्द्योतः ) अयमर्थ इति । उपयोगशब्दस्य तत्रैव रूढिरन्यत्र तु लक्षणया प्रयोग इत्यर्थः । नियमो भिक्षाचरणशुश्रूषादिः । इदं च तत्तद्विद्याश्रवणनियमानामुपलक्षणमित्याहुः ॥

( अनुपयोगे आख्यातुः कारकत्वनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनराख्यातानुपयोगे कारकमाहोस्विदकारकम् ? ॥**

( प्रदीपः ) किं पुनरिति । उभयथा संभवाद्दोषदर्शनाच्च प्रश्नः ॥

( उद्द्योतः ) उभयथेति । नटं विना गीतश्रवणाद्ययोगात्तस्य तज्जनकतया कारकत्वं कुलालपितृवदन्यथासिद्धत्वसंभावनया चाकारकत्वमिति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**कश्चात्र विशेषः ? ॥**

( १०९३ कारकत्वदूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञा प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये—अनुपयोगे इति । अनियमपूर्वकश्रवणे इत्यर्थः ॥ कर्मसंज्ञाप्रसङ्ग इति । अपादानादिभिरसंकीर्तितत्वं च तत्प्राप्तिपूर्वकाविवक्षायामिव सर्वथा तदप्राप्तावपीति तात्पर्यम् । कर्मयुक्त्वांशोपि तत्र परिगणनलभ्य[2] एवेति बोध्यम् ॥

( अकारकत्वाभ्युपगमभाष्यम् )

**अस्तु तर्ह्यकारकम् ॥**

( १०९४ अकारकत्वदूषणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अकारकमिति चेदुपयोगवचनानर्थक्यम् ॥ * ॥**

( भाष्यम् ) **यद्यकारकमुपयोगवचनमनर्थकम्[1] ॥**

( कारकत्वाभ्युपगमभाष्यम् )

**अस्तु तर्हि कारकम् ॥**

( उद्द्योतः ) अस्तु तर्हि कारकमिति । गीतद्वारा तस्य तज्जनकत्वाद्द्वारिणो नान्यथासिद्धिरिति तद्विवक्षैवेति भावः ॥

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्—*आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्गः इति ॥**

---

[1] ग्रन्थोऽस्यास्ति ज्ञातत्वेनेति ग्रन्थिकः । मत्वर्थीयष्ठन् । ( र. ना. )
[2] दुहियाचीत्यादिपरिगणनानाश्रयणेनेदमित्याशयः । ( र. ना. )

[1] कारकत्वाभावादेव नटादीनामपादानत्वाभावेरिति भावः । ( र. ना. )

( समाधानभाष्यम् )

**नैष दोषः । परिगणनं तत्र क्रियते—"दुहियाचिरुधिप्रच्छिभिक्षिचिञाम्" इति ॥**

( सूत्रप्रत्याख्यानाधिकरणम् )

( प्रत्याख्यानभाष्यम् )

**अयमपि योगः शक्योऽवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कथमुपाध्यायादधीत इति ? ॥**

( समाधानभाष्यम् )

**अपक्रामति तस्मात्तदध्ययनम् ॥**

**( उद्द्योतः ) अपक्रामति, तस्मात्तदध्ययनमिति ।** अधीयमानवाक्यजातमध्ययनमित्युच्यते । एवं चापक्रमजनितविश्लेषाश्रयत्वादुपाध्यायस्यापादानत्वं सिद्धम् । उपाध्यायादपक्रान्तं शब्दजातमुपादत्ते इत्यर्थादिति भावः ॥

( आक्षेपभाष्यम् )

**यद्यपक्रामति किं नात्यन्तायापक्रामति ? ॥**

**( प्रदीपः ) यद्यपक्रामतीति ।** यथा फलं वृक्षादपक्रान्तं न पुनर्वृक्षे तद्भवति एवं शब्देपि प्रसङ्ग इत्यर्थः ॥

**( उद्द्योतः )** शब्दानामपक्रमणं न युक्तमिति शङ्कते—**यद्यपेति ॥**

( समाधानभाष्यम् )

**सन्ततत्वात् । अथ वा ज्योतिर्वज्ज्ञानानि भवन्ति ॥ आख्यातोपयोगे ॥ २९ ॥**

**( प्रदीपः) सन्ततत्वादिति ।** शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना भिन्ना अपि सादृश्यात्तत्त्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रप्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्तीत्यर्थः ॥ **अथ वेति ।** यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वेनाध्यवसीयमानं संततं तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि संततान्युच्यन्ते । ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकारस्य । तथा चोक्तम्—

**'वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।**
**कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः ॥'**

इति ॥ २९ ॥

**( उद्द्योतः ) शब्दस्य व्यञ्जका** ध्वनय इति । पुनःपुनरुत्पाद्यमानत्वेन सन्ततत्वमिति भावः ॥ ननु तेषां भिन्नत्वात्कथं तद्रूपानुषक्तस्य स्फोटस्य स एवायमित्येकताप्रत्ययोऽत आह—**सादृश्यादिति ॥ यथा ज्वालारूपमिति ।** प्रतिक्षणं विनश्यदपीत्यर्थः ॥ सन्ततमिति । तथा व्यवहारविषय इति भावः ॥ **वायोः** कैश्चित्परमाणूनां शब्दतन्मात्रादिरूपाणां कैश्चित्कैश्चिद् **ज्ञानस्य** शब्दत्वमिष्यते । तदुक्तं हरिणा—

**"लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।**
**स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते" ॥**

वक्तुरिच्छेत्यनेनैकस्यैव वयोरनेकाशब्दत्वोपपत्तिरुक्ता ॥

तथा—

**"अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः ।**
**छायातपतमःशब्दभावेन परिणामिनः ॥**
**स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।**
**अभ्राणीव प्रतीयन्ते शब्दाख्याः परमाणवः" ॥**

तथा—

**"अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।**
**व्यक्तये स्वस्वरूपस्य शब्दत्वेन विवर्तते" ॥**

ज्ञाता वृत्तिविशिष्टमन्तःकरणम् ।

**"स मनोभावमापद्य तेजसा पाकमागतः" ।**

तेजसा जाठरेण । पाकं दाहम् ॥

**"वायुमाविशति प्राणमथासौ समुदीर्यते" ।**

असौ सवृत्तिमनोयुतः प्राणः ॥

तदाह—

**"अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।**
**तद्धर्मेण समाविष्टस्तेजसा सोपि पच्यते" ॥**

तद्धर्मेण दाहेन ।

दाहवशादेव

**विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ॥**

श्रुतिरूपैः, ध्वनिरूपैः सहेति शेषः ।

**"प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते" ॥**

इति । प्राणः सवृत्तिकमनोरूपान्तःकरणयुतः । एतावतैव ज्ञानस्य शब्दत्वमिति द्रष्टव्यम् ॥ **दर्शनं** सिद्धान्तः । **प्रवादः** शास्त्राणि । नटस्य शृणोतीत्यादावीदृशबुद्धिकृतापायविवक्षानभिधानान्नेति नातिप्रसङ्गः ॥ २९ ॥

---

( १८३ अपादानसंज्ञासूत्रम् । १ । ४ । ३ आ. ८ सू. )

## २७० जनिकर्तुः प्रकृतिः ॥ १ । ४ । ३० ॥

( प्रत्याख्यानाधिकरणम् )

( प्रत्याख्यानभाष्यम् )

**अयमपि योगः शक्योऽवक्तुम् ॥**

---

१ वक्तुरिच्छानुसारिणा प्रयत्नेन लब्धक्रियो वायुरूर्ध्वमाक्रामन् ताल्वादिस्थानेष्वभिहतः सन् शब्दत्वं प्राप्नोतीत्यर्थः । ( र. ना. ) २ भेदो विभागः । तथा च कदाचिद्विभागानुकूलव्यापारवन्तः कदाचिच्च संयोगानुकूलव्यापारवन्तः इत्यर्थः । ( र. ना. ) ३ वक्तुरिति शेषः । ( र. ना. ) ४ प्रचीयन्ते इति पाठः साधुर्भाति । ( र. ना. ) ५ सूक्ष्मवाग्रूपात्रासना इत्यर्थः । ( र. ना. ) ६ वर्णेष्वेवोपलीयमानेषु सत्सु तैः साकं प्राणोऽपि मनस्येवोपलीयते इत्यर्थः । ( र. ना. ) ७ अत्र प्रकृतिः समवाय्यसमवायिनिमित्तरूपत्रिविधकारणमध्येऽप्युपादानकारणम् । तेन मृदो घटो जायते तन्तुभ्यो वस्त्रं जायते 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यादिषु पञ्चमी उपादानकारणे जायते । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतौ दर्शितेन मृद उपादानकारणभूताया दृष्टान्तत्वेन ब्रह्मणोपि उपादानकारणत्वमेव वेदस्य भगवतोऽभिप्रेतम् । अत एव 'यत्प्रयन्त्यभिसंविशन्ति च' इत्यत्र दर्शितोऽभिसंवेशो घटस्य मृदीव पटस्य तन्तुष्विव प्रपञ्चस्य ब्रह्मणि संगच्छते ।

'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ।

इत्यत्रापि प्रजाया अन्नामिव अन्नस्य वृष्टिरिव वृष्टेरादित्योपि पश्चाभिविद्योपक्रमानुरोधादुपादानकारणमेव । तथाहि किं वृष्टिर्न जायते स्वरूपसत

( आक्षेपभाष्यम् )

**कथं गोमयाद् वृश्चिको जायते । गोलोमाविलोमभ्यो दूर्वा जायन्त इति ? ॥**

( समाधानभाष्यम् )

**अपक्रामन्ति तास्तेभ्यः ॥**

( प्रदीपः ) **जनिकर्तुः ॥ ३० ॥ अपक्रामन्ति ता इति ॥** लोकप्रसिद्ध्याश्रयेणैतदुच्यते । लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीत्युच्यते । तर्काश्रयास्तु प्रक्रिया भिद्यन्ते । वैशेषिकदर्शने परमाण्वादिसमवेतं कारणेभ्योऽपृथग्देशं कार्यमुत्पद्यत इति नास्ति कार्यस्यापक्रमः । सांख्यदर्शनेप्याविर्भावतिरोभावलक्षणजन्मनाशरूपपरिणामाभ्युपगमान्नास्त्यपक्रमः ॥

( उद्योतः ) **जनिकर्तुः** ॥ ३० ॥ ननूपादानकारणे समवेततयोत्पद्यमानस्य कथं ततोपक्रम इत्यत आह—**लोकेति** । यथा वृक्षजन्यफले वृक्षादपक्रान्तत्वव्यवहारः ॥ **तन्त्राश्रयाः** शास्त्राश्रयाः । **तर्काश्रया** इति पाठेपि स एवार्थः ॥

( आक्षेपभाष्यम् )

**यद्यपक्रामन्ति किं नात्यन्तायापक्रामन्ति ? ॥**

( प्रदीपः ) **यदीति** । यद्यतोपक्रामति तत्पुनस्तत्र न दृश्यते इति प्रसिद्धम् । इह तु तत्रास्ति दर्शनमिति प्रश्नः ॥

( उद्योतः ) **तत्रास्तीति** । जन्मोत्तरमिति भावः ॥

( समाधानभाष्यम् )

**सन्ततत्वात् । अथ वान्याश्चान्याश्च प्रादुर्भवन्ति ॥ जनिकर्तुः ॥ ३० ॥**

( प्रदीपः ) **संततत्वादिति** । अविच्छेदादित्यर्थः । यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यर्थः । **अथ वेति** । क्षणिकपक्षं द्रव्यान्तरारम्भपक्षं वा परिणामपक्षं[1] वाश्रित्यैतदुक्तमित्याहुः ॥ ननु सतो जन्मायोगादसतश्च कर्तृत्वासंभवात्पक्षान्तराभावाच्च कथमङ्कुरो जायत इति प्रयोगः । नैष दोषः । बुद्धि[2]व्यवस्थापितस्यार्थस्य क्रियायां कारकरूपोपगमात् ॥ ३० ॥

( उद्योतः ) **द्रव्यान्तरारम्भेति** । खण्डपटादिरीत्येत्यर्थः । **परिणामेति** । सांख्यमते । प्रतिक्षणपरिणामित्वात्पदार्थानां गोरोमादेस्तत्तदवस्थदूर्वारूपेण परिणाम इति भावः । **जन्मायोगादिति** । वैफल्यादिति भावः ॥ **कर्तृत्वासंभवादिति** । किं चैवं शशविषाणादेरप्युत्पत्तिप्रसङ्गः । किं चैतन्मते कलिकावस्थायामसत एव गन्धस्य विकासावस्थायामुत्पत्तिर्वाच्या । एवं च सर्वपुष्पेषु विकासमात्रेण गन्धोत्पत्त्यापत्तिः । एवं बाल्येऽविद्यमानस्य शुक्रशोणितादेर्यौवने उत्पत्तौ तृतीयप्रकृतावपि[3] तदुत्पत्तिप्रसङ्ग इति बोध्यम् ॥ उत्तरम्—**बुद्धीति** । कारकरूपं, कारकत्वम् ॥ ३० ॥

( १८४ अपादानसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. ९ सू. )

## २७१ भुवः प्रभवः ॥ १ । ४ । ३१ ॥

( प्रत्याख्यानाधिकरणम् )

( प्रत्याख्यानभाष्यम् )

**अयमपि योगः शक्योऽवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कथं हिमवतो गङ्गा प्रभवतीति ? ॥**

( समाधानभाष्यम् )

**अपक्रामन्ति तास्तस्मादापः ॥**

( आक्षेपभाष्यम् )

**यद्यपक्रामन्ति किं नात्यन्तायापक्रामन्ति ॥**

( समाधानभाष्यम् )

**सन्ततत्वात् ॥ अथ वान्याश्चान्याश्च प्रादुर्भवन्ति ॥ भुवः प्रभवः ॥ ३१ ॥**

( प्रदीपः ) **भुवः प्र ॥३१॥ संततत्वादिति** । सादृश्यनिबन्धनतत्त्वाध्यवसायादविच्छेदेन तासामुपलम्भादित्यर्थः ॥ **अथ वेति** । वस्तुस्तोत्र भेद एवापामिति भावः ॥ ३१ ॥

( उद्योतः ) **भुवः प्र—॥ ३१ ॥ भेद एवापामिति** । सादृश्यमूलकोपि नाभेदाध्यवसाय इति भावः ॥ ३१ ॥

( इति कारकप्रकरणेऽपादानसंज्ञाप्रकरणम् )

( अथ कारकप्रकरणे संप्रदानसंज्ञाप्रकरणम् )

( १८५ संप्रदानसंज्ञासूत्रम् ॥ १ । ४ । ३ आ० १० सू० )

## २७२ कर्मणा यमभिप्रैति स संप्रदानम् ॥ १ । ४ । ३२ ॥

( पदकृत्याधिकरणम् )

( अनुयोगभाष्यम् )

**कर्मग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) **कर्मणायम् ॥ ३२ ॥ कर्मग्रहणमिति** । उपाध्यायाय गां ददातीत्यत्र गोरुपाध्यायस्याप्यभिप्रेयमाण-

---

आदित्यस्य सर्वदा विद्यमानत्वात् । तस्मादादित्यपदं तत्र विलक्षणधर्मपर्यायज्योतिःपरमेव । एवं च तादृग्ज्योतिरेव वृष्टिरूपेण परिणमते, वृष्टिरेवान्नरूपेण, अन्नमेव प्रजारूपेण परिणमते इत्येव पञ्चाग्निविद्याप्रक्रमतो निश्चीयते ॥ एवं पुत्रस्यापि न स्वरूपसतः प्रमोदशोकहेतुत्वम् । किंतु तदीयजन्मगुणापगुणज्ञानमेव प्रमोदशोकरूपेण परिणमते इति बोध्यम् ॥ अतएव गोलोमादीनामपि दूर्वारूपेण परिणाम एवेति भाष्यसंमतम् ॥ अत एव भाष्ये संततत्वादित्युक्तम् । तस्य च तूलराशेरिव गोलोमादीनामपि परिणामित्वाङ्गीकारसूचनपूर्वकोपादानकारणत्वसूचन एव तात्पर्यम् ॥ अस्तु वा पुत्रात्प्रमोदो जायत इत्यत्र धूमादग्न्यनुमितिर्जायत इत्यत्रेव "विभाषा गुणे" इत्यत्र विभाषेति योगविभागेन पञ्चमी । तथा च न तद्दृष्टान्तेन ब्रह्मणो निमित्तकारणत्वं पञ्चम्या सिध्यति । किंच 'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतौ 'कुर्याम्' इत्यनुक्त्वा 'स्याम्' 'प्रजायेय' इत्युक्त्यापि ब्रह्मण उपादानकारणत्वमेव सिध्यतीत्यलं वेदविरुद्धहरिखण्डनेनेति शम् ॥ अत्रेदमवधेयम् । वृष्टेरुपादानकारणत्वमादित्येऽन्नस्य च तत्त्वं वृष्टौ बाधितमेव । तथा चाग्निपुराणे—विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम् । नालैर्निक्षिपतेऽभ्रेषु धूमाग्न्यनिलमूर्तिष्वित्यादिना स्पष्टीकृतम् । अन्नस्य च बीजोपादानकत्वं प्रसिद्धमेव । आदित्याद् वृष्टिर्वृष्टेरन्नमित्यत्र पञ्चमी तु विभाषेति योगविभागादिति । ( र. ना. )

१—परिणामपक्षमिति । परिणामविवर्तयोरवान्तरभेदस्त्वकिंचित्कर इति भावः ॥ २ तदानीं बाह्यार्थाभावेऽपीति आदौ शेषः । ( र. ना. ) ३ नपुंसकेऽपीत्यर्थः । ( र. ना. )

लम्। यतो गौर्दानक्रियया करणभूतयाऽभिप्रेयते गवा तूपाध्यायः। तत्र परत्वाद्गोः कर्मसंज्ञेति पारिशेष्यादुपाध्यायस्यैव संप्रदानसंज्ञा भविष्यतीति प्रश्नः॥

(उद्योतः) कर्मणायम् ॥ ३२ ॥ नन्वसत्यस्मिन् कर्मण्यपि स्यादित्यत आह—उपाध्यायायेति ॥ करणभूतयेति स्वरूपकथनम्॥

(समाधानभाष्यम्)

**"यमभिप्रैति स संप्रदानम्" इतीयत्युच्यमाने कर्मण एव संप्रदानसंज्ञा प्रसज्येत। कर्मग्रहणे पुनः क्रियमाणे न दोषो भवति। कर्म निमित्तत्वेनाश्रीयते॥**

(प्रदीपः) कर्मण एवेति। सत्यप्युभयसंभवेन्तरङ्गत्वात्कर्मण एव गवादेः स्यादित्यर्थः। नन्वेवं कर्मसंज्ञानवकाशा स्यात्। वचनसामर्थ्यात्तर्हि पर्यायः स्यात्। कारकप्रकरणे च प्रकर्षयोगो नाश्रीयते न त्वन्तरङ्गबहिरङ्गव्यवहारः। ननु पर्याये सति गत्यर्थकर्मणीत्यारम्भोऽनर्थकः स्यात्। तस्य प्रत्याख्यातत्वाददोषः॥

(उद्योतः) अन्तरङ्गत्वादिति। दानक्रियाभिप्रेतगव्योपाध्यायोऽभिप्रेत इति तस्य क्रियासंबन्धो बहिरङ्ग इति भावः॥ नन्वेवमिति। दायोग एव संप्रदानत्वमित्यस्यानाश्रयणादिति भावः॥ प्रकर्षयोगः, सामर्थ्यगम्यप्रकर्षयोगः॥ प्रत्याख्यातत्वादिति। सिद्धान्तेप्यनुवादत्वेनेदानीमपि तत्त्वमेवेति भावः॥ अत्र कर्मणेति निर्दिष्टस्य शेषत्वं यमिति निर्दिष्टस्योद्देश्यत्वलक्षणं शेषित्वं प्रतीयते इत्यजां ग्रामं नयतीत्यादौ ग्रामस्य न संप्रदानत्वमिति बोध्यम्। यदा तु ग्रामोऽजासंयुक्तो भवत्वित्युद्देशेनाजानयनं तदा भवत्येवाजां ग्रामाय नयतीति॥

(अनुयोगभाष्यम्)

**अथ यंसग्रहणं किमर्थम्?॥**

(प्रदीपः) अथेति। अध्याहारेणापि सर्वनामद्वयार्थो लभ्यत इति प्रश्नः॥

(उद्योतः) ननु संज्ञिनिर्देशार्थं तदावश्यकमत आह—अध्याहारेणापीति।

(समाधानभाष्यम्)

**"कर्मणाभिप्रैति सम्प्रदानम्" इतीयत्युच्यमाने अभिप्रयत एव संप्रदानसंज्ञा प्रसज्येत। यंसग्रहणे पुनः क्रियमाणे न दोषो भवति। यंसग्रहणादभिप्रयतः संप्रदानसंज्ञा निर्भज्यते॥**

(प्रदीपः) अभिप्रयत एवेति। श्रुतपदार्थसंबन्धेनैव निराकाङ्क्षत्वेऽध्याहारानुपपत्तिरिति भावः। कर्तृसंज्ञायास्त्वकर्मको धातुरवकाशः स्यात्। ततश्चोपाध्यायाय शिष्येण गौर्दीयते इत्यत्रार्थे शिष्यायोपाध्यायस्य गौर्दीयत इति स्यात्॥ ननु शिष्यस्य कर्तृत्वाभावे कथं गोः कर्मसंज्ञा। नैष दोषः। कर्मसंज्ञायां स्वातन्त्र्यस्य कर्तृग्रहणेनोपलक्षणात्। तथा च सार्थाद्धीयत इत्यत्र कर्मणि लकारोत्पत्तिः॥ निर्भज्यत इति। आकृष्यत इत्यर्थः॥

(उद्योतः) श्रुतेति। तिङ्श्रुत्योपस्थापितेत्यर्थः। एवं च यः स इत्येव लभ्येतेति भावः॥ सार्थादिति। प्रधानधात्वर्थव्यापाराश्रयत्वेऽपि अपादाने चाहीयरुहोरितिसूत्रेण कर्मप्रत्ययान्तहीधातुयोगेऽपादानत्वज्ञापनात्पञ्चमी। सार्थेन त्यज्यते इत्यर्थकोयं प्रयोगः॥ आकृष्यत इति। निराक्रियत इत्यर्थः॥

(अनुयोगभाष्यम्)

**अथाभिप्रग्रहणं किमर्थम्?॥**

(प्रदीपः) अथेति। कर्मणा यमेति गच्छति प्राप्नोति संबध्नातीत्यर्थः। अभिप्रैतीत्युक्ते स एवार्थ इति प्रश्नः॥

(समाधानभाष्यम्)

**"कर्मणा यमेति स संप्रदानम्" इतीयत्युच्यमाने यमेव संप्रत्येति तत्रैव स्यात्—उपाध्यायाय गां ददातीति। इह न स्याद्—उपाध्यायाय गामदादुपाध्यायाय गां दास्यतीति। अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति। अभिराभिमुख्ये वर्तते, प्रशब्द आदिकर्मणि। तेन यं चाभिप्रैति यं चाभिप्रैष्यति यं चाभिप्रागादाभिमुख्यमात्रे सर्वत्र सिद्धं भवति॥**

(प्रदीपः) आभिमुख्य इति। उपसर्गद्वयोपादानसामर्थ्यात्कालानवच्छिन्ना क्रियाश्रीयत इत्यर्थः। ननु यथा तेन दीव्यतीत्यादौ संख्याकालयोर्न विवक्षा तथेहापि संख्यावत्कालस्याविवक्षा भविष्यतीति किमुपसर्गेनयोपादानेन। एवं तर्हि न्यायसिद्ध एवार्थ उपसर्गद्वयोपादानेन प्रदर्श्यत इति भाष्यकारस्याभिप्रायः॥

(उद्योतः) भाष्ये—यं संप्रत्येतीति। संनिहितसंप्रदानस्थले दानस्य तत्काले विप्रसन्तोषरूपदृष्टफलेनापि फलवत्त्वात्तत्रैव स्याद्, असंनिहितसंप्रदानस्थले विप्राय ददातीति न स्यादिति भावः॥ उपाध्यायायेत्यत्र संनिहितायेति शेषः। अग्रे विप्रकृष्टायेति शेषः॥ आभिमुख्यमात्रे इति। कर्मणा करणभूतेन क्रियारम्भे यमुद्दिशतीत्यर्थः॥ स चोद्देशः सर्वत्रास्तीति भावः॥ संख्यावदिति। अन्यथा विप्रेभ्यो गां ददातीति न स्यादिति भावः॥ न्यायसिद्ध एवेति। अयमभ्युपगमवादः॥

(न्यूनतापूर्त्यधिकरणम्)

(१०९५ आक्षेपवार्तिकम् ॥ १ ॥)

## [॥ * ॥ क्रियाग्रहणम् ॥ * ॥]

**(भाष्यम्) क्रियाग्रहणमपि कर्तव्यम्। इहापि यथा स्यात्—श्राद्धाय निगर्हते युद्धाय सन्नह्यते पत्ये शेते इति॥**

(प्रदीपः) श्राद्धायेति। श्राद्धं निन्दति नास्तिकत्वाद

१ उभयत्राभिप्रेयमाणत्वसंभवेऽपीत्यर्थः। (र. ना.) २ वस्तुतोऽपूर्व एवार्थः प्रदर्श्यते इत्याशयः। (र. ना.) ३ श्राद्धमुद्दिश्य निन्दां करोतीत्यर्थः। (र. ना.)

दित्यर्थः ॥ **युद्धायेति** । युद्धविषयं संनहनपूर्वकं निश्चयं करोतीत्यर्थः ॥ **पत्ये शेत इति** । पतिमुपसृत्य शेते इत्यर्थः ॥

( उद्द्योतः ) निन्दतीति । गर्ह कुत्सायामिति स्मृतेः । निश्चयं करोतीति । उद्देश्यत्वप्रदर्शनायेदम् । एवमुत्तरत्रोपसृत्येत्यपि । उपाश्रित्येति पाठान्तरम् ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् ॥ कथम् ? । क्रियां हि[1] नाम लोके कर्मेत्युपचरन्ति—कां क्रियां करिष्यसि—किं कर्म करिष्यसीति ॥**

( उद्द्योतः ) भाष्ये क्रियां हीति । एवं च बहुलक्ष्यसंस्कारानुरोधेन कर्मशब्देनोभयं गृह्यते ॥

( समाधानबाधकभाष्यम् )

**एवमपि कर्तव्यम् । कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति ॥**

( समाधानसाधकभाष्यम् )

**क्रियापि कृत्रिमं कर्म ॥**

( समाधानबाधकभाष्यम् )

**न सिद्ध्यति । "कर्तुरीप्सिततमं कर्म" इत्युच्यते । कथं च नाम क्रियया क्रियेप्सिततमा स्यात् ? ॥**

( प्रदीपः ) **न सिध्यतीति** । क्रियान्तरानुपादानादिति भावः ॥ **कथं च नामेति** । क्रियान्तरानुपादाने एकस्या एव क्रियायाः कर्मकरणभाव एकदा एकात्मन्येव नोपपद्यत इति भावः ॥

( उद्द्योतः ) भाष्ये—**न सिध्यतीति** । कृत्रिमकर्मत्वं क्रियाया न सिध्यतीत्यर्थः ॥ ननु पश्य धावतीत्यादौ क्रियाया अपि तत्त्वदर्शनादाह—**क्रियान्तरेति** ॥ भिन्नकाले भिन्नरूपेण च कर्तृकर्मताया एकस्मिन्नपि दर्शनादाह—**एकदा एकात्मन्येवेति** । अत्रत्यं भाष्यं कर्तरि कर्मेत्यत्र व्याख्यातम् ॥

( समाधानसाधकभाष्यम् )

**क्रियापि क्रिययेप्सिततमा भवति । कया क्रियया ? । संदर्शनक्रियया प्रार्थयतिक्रिययाऽध्यवस्यतिक्रियया च । इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति । स बुद्ध्या तावत्कंचिदर्थं पश्यति, संदृष्टे प्रार्थना, प्रार्थनायामध्यवसायः, अध्यवसाय आरम्भः, आरम्भे निर्वृत्तिः, निर्वृत्तौ फलावाप्तिः । एवं क्रियापि कृत्रिमं कर्म ॥**

( प्रदीपः ) **क्रियापीति** । प्रतीयमानक्रियापेक्षः कारकभावः प्रविश पिण्डीमित्यादाविवात्रेत्यर्थः । यदा तु संदर्शनादयो धात्वर्थाद्भेदेन विवक्ष्यन्ते तदा संप्रदानसंज्ञा अन्यदा तु कर्मसंज्ञैव यथा कटं करोतीति । सा च भेदाभेदविवक्षा प्रयोगदर्शनवशेन नियतविषयैवाश्रीयत इति प्रयोगस्यासंकरः ॥

( उद्द्योतः ) ननु संदर्शनादीनां सर्वत्र भावात्सर्वत्र संप्रदानत्वं स्यादत आह—**यदा त्विति** । एवं च पत्ये शेते इत्यादेः दर्शनादिपूर्वकारम्भकर्म पत्युद्देश्यकं शयनं करोतीत्यर्थः ॥ **भेदेनेति** । तत्तद्रूपेण बोधविषयतया विवक्ष्यत इत्यर्थः ॥ **यथा कटं करोतीति** । तत्र हि कटकर्मकक्रियेत्येव बोधो, न तु तस्याः क्रियाया विद्यमानमपि संदर्शनादिपूर्वकारम्भकर्मत्वं तत्तद्रूपेण बोधविषय इति भावः ॥

( भाष्यम् )

**एवमपि—**

( १०९६ आक्षेपवार्तिकम् ॥ २ ॥ )

## [ ॥ * ॥ कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा ॥ * ॥ ]

( भाष्यम् ) **कर्मणः करणसंज्ञा वक्तव्या संप्रदानस्य च कर्मसंज्ञा । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः । अग्नौ किल पशुः प्रक्षिप्यते[2] तदुरुद्रायोपह्रियत इति ॥ कर्मणा यमभिप्रैति ॥ ३२ ॥**

( प्रदीपः ) **कर्मणः करणसंज्ञेति** । एतच्छन्दोविषयम् । **सर्वे विधयश्छन्दसि विकल्प्यन्त** इति यथाप्राप्तमपि प्रयोगो भवति ॥ **पशुना रुद्रं यजत इति** । रुद्रं देवतामुद्दिश्य पशुं त्यजतीत्यर्थः ॥ कैश्चिदन्वर्थसंज्ञाविज्ञानाद्ददातिविषय एव संप्रदानसंज्ञेत्यभ्युपगतम् । **दानं च** स्वत्वनिवृत्तिः परस्वत्वापत्तिपर्यन्तेति प्रत्यज्ञायि ॥ तदुभयमप्ययुक्तम् । अन्यत्रापि भाष्यकारेण संज्ञाया अभ्युपगमात् । तथा च क्रियाग्रहणस्य **गत्यर्थकर्मणी**ति सूत्रस्य च प्रत्याख्यानं कृतम् । तथा स्वत्वनिवृत्त्यभावेपि ददातेः प्रयोगो दृश्यते **न शूद्राय मतिं दद्यादिति । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति च** ॥ ३२ ॥

( उद्द्योतः ) **पशुं रुद्राय ददातीति** भाष्यप्रयोगानुपपत्तेराह—**एतच्छन्द इति** ॥ ननु पूजायां पशोः करणत्वाद्रुद्रस्य च कर्मत्वात्किमुपसंख्यानेनेत्यत आह—**त्यजतीत्यर्थ इति** । अत्रार्थे त्वदुक्तं न संभवतीत्यर्थः ॥ त्यजतीत्यस्याभाविति शेषः । तदुक्तं भाष्ये— **अग्नौ किल पशुः प्रक्षिप्यते इति** ॥ नन्वेवं रुद्राय ददातीत्युक्तमनुपपन्नमत आह—**तद्रुद्रायोपह्रियते इति** । तत् तेन प्रक्षेपेण रुद्राय रुद्रमुद्दिश्य उपह्रियते ददातीति व्यवहार इत्यर्थः । अग्नौ दग्धे स्वत्वानुत्पत्त्या तदुद्देश्यकत्यागे ददातिर्भाक्त इति भावः[3] ॥ **अन्वर्थेति** । सम्यक् प्रदीयतेऽस्मै इतीत्यर्थः ॥ नन्वेवमपि रजकस्य वस्त्रं ददातीत्यत्रापि स्यादत आह—**दानं चेति** । तत्र ददातिप्रयोगस्तूपमानात्[4] , कारकशेषत्वात् षष्ठीति भावः ॥ **अन्यत्रापीति** । पत्ये शेते इत्यादावपीत्यर्थः ॥ **पूर्वोक्तप्रयोगे तु शेषत्वविवक्षायां**

१ 'हि लोके' । २ 'प्यते रुद्राय' । ३ सादृश्यादित्यर्थः । ( र. ना. )

४ रजकस्य वस्त्रं ददातीत्यत्रेति भावः । ( र.ना. )

षष्ठी॥ न शूद्रायेत्यस्य मतिं तज्जनकशास्त्रं नोपदिशेदित्यर्थः। द्वितीये ददातिः संयोगे लाक्षणिक इति बोध्यम्॥ ३२॥

(१८६ संप्रदानसंज्ञासूत्रम्॥ १।४।३ आ. ११ सू.)

## २७७ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः॥ १।४।३७॥

(क्रोधादीनां कोपजन्यत्वसाधनाधिकरणम्॥)

(आक्षेपभाष्यम्)

**किमेत एकार्थाः, आहोस्विन्नानार्थाः?॥**

(प्रदीपः) **क्रुधद्रुह॥३७॥ किमेत इति।** ननु लोकव्यवहारादेवार्थावगमात्संदेहानुपपत्तिः। एवं तर्हि चित्तदोषरूपता सर्वेषामस्तीति सामान्यापेक्षायामेकार्थत्वम्, अवान्तरभेदविवक्षायां तु भिन्नार्थत्वमित्यदोषः॥

(प्रत्याक्षेपभाष्यम्)

**किं चातः?।**

(प्रत्याक्षेपसमाधानभाष्यम्)

**यद्येकार्थाः किमर्थं पृथङ्निर्दिश्यन्ते?॥ अथ नानार्थाः, कथं कुपिना शक्यन्ते विशेषयितुम्?॥**

(प्रदीपः) **किमर्थमिति।** एकेनैव धातुनार्थस्योपलक्षितत्वादन्येषां वैयर्थ्यप्रसङ्गः॥ **नानार्था इति। क्रोधो** रोषः। **द्रोहो**ऽभिचारः। **ईर्ष्या** परगुणासहनम्। **असूया** परगुणविध्वंसनम्॥

(उद्द्योतः) **क्रुधद्रुहेर्ष्या॥ ३७॥** ननु तेषां सर्वेषां योगे यथा स्यादित्येतदर्थं तदत आह—**एकेनैवेति।** सूत्रेऽर्थग्रहणसत्त्वादिति भावः॥ **अभिचार इति।** दुःखजनको व्यापार इत्यर्थः॥ **परगुणासहनं** एतत्स्वस्य तदधिकगुणसंपादनफलकम्॥ **गुणविध्वंसनं** गुणेषु दोषत्वाविष्करणम्॥

(समाधानभाष्यम्)

**एवं तर्हि नानार्थाः। कुपौ त्वेषां सामान्यमस्ति नह्यकुपितः क्रुध्यति। न वाऽकुपितो द्रुह्यति। न वाऽकुपित ईर्ष्यति। न वाऽकुपितोऽसूयति॥ क्रुधद्रुहेर्ष्या॥ ३८॥**

(प्रदीपः) **कुपाविति।** कुपौ धातौ वाच्यत्वेन यदवस्थितं तदेषां साधारणमित्यर्थः। कोपपूर्वाणां सर्वेषां ग्रहणार्थं **यं प्रति कोप** इति विशेषणमित्यर्थः। तेनेह न भवति—भार्यामीर्ष्यतीति। परैर्दृश्यमानां न सहत इत्ययमत्रार्थ इति नास्ति कोपप्रभवत्वमत्रेर्ष्यायाः **नह्यकुपितः क्रुध्यतीति॥** ननु कोपः क्रोध एवेति भेदाभावात्कथं पौर्वापर्यम्। एवं तर्हि प्रथमामनुद्भूतां कोपावस्थां द्वितीयां चोद्भूतां विकृतवाक्कायव्यापारानुमीयमानामाश्रित्यैतदुक्तमित्यदोषः॥ **न वाऽकुपितो द्रुह्यतीति।** यत्र विषये संप्रदानसंज्ञेष्यते तदुद्देशेनैतदुच्यते, न तु सर्वविषयापेक्षया। अन्यथा व्यभिचाराभावाद्यं **प्रति कोप** इति विशेषणमनुपादेयं स्यात्। भार्यामीर्ष्यतीति विनापि कोपात्प्रयोगदर्शनाच्च। **अस्मान्द्वेष्टी**त्यत्र संप्रदानसंज्ञा न भवति, द्विषेरक्रोधार्थत्वात्। अनभिनन्दने द्विषिर्वर्तते यथौषधं द्वेष्टीति॥ ३७॥

(उद्द्योतः) नन्विदमयुक्तं नहि रोषादीनां सामान्यं कुपिधातावस्तीत्यत आह—**कुपौ धाताविति।** अनभिनन्दनं प्रीत्यभावः॥ ३७॥

(इति कारकप्रकरणे संप्रदानप्रकरणम्)

(अथ कारकप्रकरणे करणसंज्ञाप्रकरणम्॥)

(१८७ करणसंज्ञासूत्रम्॥ १।४।३ आ. १२ सू.)

## २८२ साधकतमं करणम्। १।४।४२॥

(तमग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**तमग्रहणं[३] किमर्थम्। न "साधकं करणम्" इत्येवोच्येत॥**

(प्रदीपः) **साधकतमं॥ ४२॥ तमग्रहणमिति।** कारकाधिकारात्साधकत्वे लब्धे पुनः साधकश्रुतिः प्रकर्षमवगमयतीति प्रश्नः॥

(उद्द्योतः) **साधकतमं॥ ४२॥** अत्र कारकाधिकारात् क्रियानिरूपितातिशयितकारकत्ववत्करणमित्यर्थः। अतिशयश्च यद्व्यापारानन्तरमव्यवधानेन फलोत्पत्तिस्तत्त्वम्॥ ननु पूर्वोक्तातिशयबोधकतया तत्सार्थकमत आह—**कारकाधिकारादिति।**

(आक्षेपबाधकभाष्यम्)

**"साधकं करणम्" इतीयत्युच्यमाने सर्वेषामेव कारकाणां करणसंज्ञा प्रसज्येत। सर्वाणि हि कारकाणि साधकानि[४]। तमग्रहणे[५] पुनः क्रियमाणे न दोषो भवति॥**

(प्रदीपः) **सर्वेषामेवेति।** प्रकर्षगतिरुत्तरत्र प्रतिपादयिष्यते। तत्र वचनसामर्थ्यादेकसंज्ञाधिकाराच्च करणसंज्ञायाः[६] संज्ञान्तराणां च विकल्पः स्यात्॥ नन्वसति विशेषाश्रयणे करणकारकसंज्ञाद्वयोपादानमनर्थकं स्यात्॥ तर्हि संज्ञाद्वयविधानसामर्थ्यात्करणसंज्ञा कंचिदेव विषयं परिहरतीति लभ्यते। न त्वनिष्टविषयपरिहारेणेष्टविषये[७] तस्याः प्रवृत्तिर्लभ्या॥

(उद्द्योतः) ननु सर्वेषां करणत्वे संज्ञान्तराणां का गतिरत आह—**तत्रेति॥ संज्ञाद्वयेति।** कारकसंज्ञैव कार्याऽन्वर्थसंज्ञया च स्वानुरूपः संज्ञ्याक्षेपस्थः 'कारके तृतीया' इत्येव कार्यमिति भावः॥

---

१ विष्णाय चपेटां ददातीत्यत्र। (र.ना.) २ धातूनामिति शेषः। (र. ना.) ३ 'तमप्ग्र'। ४ 'कानि भवन्ति'। ५ 'तमप्ग्र'। ६ कारकसंज्ञाया इति शेषः। परिहरतीति—यत्र कर्तृकर्मादि संज्ञाभिर्बाध इति भावः। (र. ना.) ७ 'इष्ट एव विषये'।

( आक्षेपसाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । पूर्वास्तावत्संज्ञा अपवादत्वाद्बाधिका भविष्यन्ति। पराः परत्वादनवकाशत्वाच्च॥**

( प्रदीपः ) परत्वादनवकाशत्वाच्चेति । विषयभेदापेक्षो हेतुद्वयोपन्यासः । सावकाशत्वे सति परत्वं हेतुः, अन्यत्र निरवकाशत्वम् ॥

( उद्द्योतः ) ननु सावकाशत्व एव परत्वस्य व्यवस्थापकत्वादेकविषये द्वयोः परत्वानवकाशत्वयोरसंभवादाह—विषयभेदेति । सावकाशत्वे इत्युक्तिरभ्युपगम्यवादेन, नहि तमाभावे करणत्वविनिर्मुक्तः संज्ञान्तरविषयोऽस्ति । वस्तुतो भाष्ये परत्वाच्चेत्यस्योत्कृष्टत्वाच्चेत्यर्थकस्य व्याख्याऽनवकाशत्वाच्चेति ॥

( आक्षेपबाधकभाष्यम् )

**इह तर्हि 'धनुषा विध्यति'अपाययुक्तत्वाच्चापादानसंज्ञा साधकत्वाच्च करणसंज्ञा प्राप्नोति । तमग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) इह तर्हीति । अत्र संज्ञाद्वयप्रसङ्गे निरवकाशत्वादपादानसंज्ञैव स्यात् । करणसंज्ञा ह्यपादानादन्यत्र सावकाशा । तमग्रहणे तु सति विविक्तविषयलाभादुभयोर्धनुषा विध्यतीत्यत्र परत्वात्करणसंज्ञा सिध्यतीति ॥

( उद्द्योतः ) ननु संज्ञाद्वयप्रसङ्गे परत्वात्करणत्वं सिध्यतीत्यत आह—अन्येति ॥ अपादानादन्यत्रेति । काष्ठैः पचतीत्यादौ ॥

( आक्षेपसाधकभाष्यम् )

**एवं तर्हि लोकत एतत्सिद्धम् । तद्यथा लोके 'अभिरूपायोदकमानेयमभिरूपाय कन्या देया' इति । न चानभिरूपे प्रवृत्तिरस्ति । तत्र 'अभिरूपतमाय' इति गम्यते । एवमिहापि साधकं करणमित्युच्यते । सर्वाणि च कारकाणि साधकानि, न चासाधके प्रवृत्तिरिति तत्र 'साधकतमम्' इति विज्ञास्यते ॥**

( प्रदीपः ) उदकमानेयमिति । कन्यादानार्थम् । न चानभिरूप इति । दृष्टादृष्टप्रयोजनत्वात्कन्यादानस्येति भावः ॥

( उद्द्योतः ) उदकादाने आभिरूप्यस्यानियामकत्वादाह—कन्यादानार्थमिति । दृष्टं कन्यासुखसन्तानादि । अदृष्टं परलोकः ॥ न चासाधके इति । संज्ञाया इति शेषः ।

( समाधानभाष्यम् )

**एवं तर्हि सिद्धे सति यत्तमग्रहणं करोति तज्ज्ञापयत्याचार्यः—कारकसंज्ञायां तरतमयोगो न भवतीति ॥**

( प्रदीपः ) तरतमयोगो नास्तीति । कथं पुनः केवलयोः प्रत्यययोः प्रयोगः । नैष दोषः । प्रत्ययानुकरणत्वात् । तत्रानुकरणाभ्यामनुकार्यौ प्रत्ययौ प्रतीयेते ताभ्यामपि साहचर्यात्तदर्थो लक्ष्यते ॥ तत्र तमश्रुतिरेतज्ज्ञापयति प्रकर्षप्रत्ययग्रहणमन्तरेणेह प्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयते ॥

( उद्द्योतः ) लक्ष्यते इति । अत एव ततः स्वार्थे ष्यञि तारतम्यमित्यतिशये सिध्यति ॥ तरतमेत्यतिशयार्थमव्ययमित्यन्ये । एवमेवातिशयार्थकं तरामित्यप्यव्ययं बोध्यम् ॥ उच्चारितस्यैव प्रत्ययत्वाचत्प्रतीतावनुकार्येणातिशयप्रतीतिरिति चिन्त्यम् ॥ नन्वत्र प्रकरणे तरतमयोगाभावे ईप्सितमात्रस्य कर्मत्वं प्राप्नोतीत्यत आह—तत्र तमेति ॥

( प्रयोजनप्रश्नभाष्यम् )

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

( प्रयोजनभाष्यम् )

**अपायमाचार्यः किं न्याय्यं मन्यते ? । यत्र संप्राप्य निवृत्तिः । तेनेहैव स्यात्—ग्रामादागच्छति । सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इत्यत्र न स्यात् । 'कारकसंज्ञायां तरतमयोगो न भवति' इत्यत्रापि सिद्धं भवति ॥**

( प्रदीपः ) सांकाश्यकेभ्य इति ॥ बुद्धिकल्पितोऽत्रापायो न तु मुख्यः ॥

( उद्द्योतः ) बुद्धिकल्पित इति । अपादानमिति महासंज्ञयैवापाये ध्रुवे लब्धे पुनस्तद्ग्रहणसामर्थ्यात्प्रकर्षविवक्षायामत्र न स्यादिति भावः ॥

( प्रयोजनभाष्यम् )

**तथाधारमाचार्यः किं न्याय्यं मन्यते ? यत्र कृत्स्न आधारात्मा व्याप्तो भवति । तेनेहैव स्यात्—तिलेषु तैलं दध्नि सर्पिरिति । गङ्गायां गावः कूपे गर्गकुलमित्यत्र न स्यात् । कारकसंज्ञायां तरतमयोगो न भवतीत्यत्रापि सिद्धं भवति ॥ साधकतमं करणम् ॥ ४२ ॥**

( प्रदीपः ) यत्र कृत्स्न इति । सर्वैरवयवैः सह यत्रावयवी व्याप्त इत्यर्थः । गङ्गायामिति । गोभिर्गङ्गाया व्याप्त्यभावान्न स्यादधिकरणसंज्ञा । अस्माज्ज्ञापकात्सामीप्यमात्राश्रयेण प्रकल्पिताधारनिबन्धना सा भवति ॥ अथ सामग्रीसाध्यायां क्रियायां कोतिशयः करणस्येति चेत् । यद्व्यापारानन्तरं क्रियाप्रसिद्धिः । यस्य च यदातिशयविवक्षा तदा तस्य करणत्वं यथा स्थाल्या पच्यत इति । कारकान्तरापेक्षश्च करणस्यातिशयो न तु स्वकक्षायामित्यश्वेन दीपिकया पथा व्रजतीति सर्वेषां क्रियानिष्पत्तौ संनिपत्योपकारकत्वात्करणत्वं सिद्धम् ॥ ४२ ॥

( उद्द्योतः ) सामीप्यमात्राश्रयेणेति । तेनापीत्यर्थः । अपि नैकदेशवृत्तिताश्रयेणेत्यस्य संग्रहः ॥ प्रकल्पितेति । संपूर्णप्रवाहे एकदेशधर्मस्य तीरधर्मस्य वाऽऽधारत्वस्योपचार इति भावः । तादृशमाधा-

१ 'परत्वाचान' । २ 'तमपूग्र' । ३ उभयोरिति लाभान्वयि । ( र. ना. )
४ 'रक्षि' । ५ उदकानयने इत्यर्थः । ( र. ना. )
६ 'अत्र' । ७ प्रकर्षबोधकप्रत्ययोपादानं विनेत्यर्थः । ( र. ना. )
८ 'अपादान' ।

रत्वमपि सप्तम्याः शक्यमेवेति बोध्यम् ॥ स्थाल्या पच्यत इति। प्रतनुतरकपालतयात्रातिशयविवक्षा बोध्या। अग्नेन पथेत्यादिष्वपि प्रत्यासन्नस्य कस्यचिदेव करणत्वं स्यादिति भावः ॥ संनिपत्येति। खलेकपोतन्यायेन सर्वेषां साक्षादुपकारकत्वविवक्षणादित्यर्थः ॥४२॥

( इति कारकप्रकरणे करणसंज्ञाप्रकरणम् )

---

( अथ कारकप्रकरणे कर्मसंज्ञाप्रकरणम् )

( १८८ कर्मसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. १३ सू.)

## २८८ उपान्वध्याङ्वसः । १ । ४ । ४८ ॥

( अनिष्टवारणाधिकरणम् )

( १०९७ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ वसेरश्यर्थस्य प्रतिषेधः ॥ * ॥

**( भाष्यम् ) वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः। ग्रामे उपवसतीति ॥**

( प्रदीपः ) उपान्व ॥ ४८ ॥ वसेरश्यर्थस्येति। अर्थशब्दो निवृत्तिवाची। व्यधिकरणे षष्ठ्यौ। अश्यर्थस्य वाचको यो वसिस्तस्येत्यर्थः। अथवा शीङोर्थः श्यर्थः न श्यर्थोऽश्यर्थः। तस्य अस्थानार्थस्येत्यर्थः। स्थाने हि शीङ् वर्तते यथा जलाशय इति। तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति प्रयोगः। अस्थानार्थत्वे तु ग्राम उपवसतीति ॥

( उद्द्योतः ) उपान्वध्या ॥ ४८ ॥ ननूपपूर्वो वसिरश्यर्थेऽप्रसिद्ध इत्यत आह—अर्थशब्द इति। अशिश्च तदर्थपर इत्यपि बोध्यम्। अश्यर्थनिवृत्तिवाचकस्य वसेरित्यक्षरार्थः ॥ व्यधिकरणे इति। उक्तेर्थे सामानाधिकरण्यासम्भवादिति भावः ॥ अश्यर्थस्येति। अशिनिवृत्तेरित्यर्थः ॥ सामानाधिकरण्यायाह—अथवेति। अनयोराद्यव्याख्यैव युक्ता, भाष्यस्वारस्यात् ॥

( तृतीयाक्षेपभाष्यम् )

**स तर्हि वक्तव्यः? ॥**

( सिद्धान्तिसमाधानान्तरभाष्यम् )

**न वक्तव्यः। नात्रोपपूर्वस्य वसेर्ग्रामोधिकरणम्। कस्य तर्हि?। अनुपसर्गस्य। ग्रामेसौ वसंस्त्रिरात्रमुपवसतीति ॥ उपान्वध्या ॥ ४८ ॥**

( प्रदीपः ) नात्रेति। विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिं विशिष्टकालां प्रत्याययितुमिदं प्रयुज्यते ग्राम उपवसतीति। तत्रान्तरङ्गत्वात्प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः। उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवास्यान्तरङ्गः संबन्धः। ग्रामादिना तु बहिरङ्ग इत्यर्थः ॥ ४८ ॥

(उद्द्योतः) ननु कथं न तदधिकरणं ग्रामोऽत आह—विशिष्टेति ॥ अन्तरङ्गत्वादिति। ग्रामे वासाधिकरणत्वस्यैव प्रसिद्धत्वेन शीघ्रोपस्थितिकत्वरूपान्तरङ्गत्वादित्यर्थः ॥ प्रतीयमानेति। एवमुपवासाधिकरणकालोपि प्रतीयमान एवेति बोध्यम् ॥ ननु बोधकपदाभावात् कथं विशिष्टकालमुजिनिवृत्तिप्रतीतिरत आह—उपवसनं त्विति। एवकारेण नित्याकाङ्क्षा दर्शिता। तदुक्तं भाष्ये—त्रिरात्रमिति। आरम्भे त्वत्रापि द्वितीया न स्यादिति तात्पर्यम् ॥ अन्तरङ्ग इति। आवश्यक इत्यर्थः ॥ बहिरङ्ग इति। आकाङ्क्षाभावादनावश्यक इत्यर्थः ॥ असंबन्ध एवेति वक्तुं युक्तम् ॥४८॥

( १८९ कर्मसंज्ञासूत्रम्। १। ४। ३ आ. १४ सू.)

## २८९ कर्तुरीप्सिततमं । १ । ४ । ४९ ॥

( तमग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**तमग्रहणं किमर्थम्? ॥**

( प्रदीपः ) कर्तुरीप्सित ॥४९॥ तमग्रहणमिति। असत्यपि तमग्रहणे ग्रामं गच्छतीत्यादौ कर्मसंज्ञा सिध्यतीप्सिततमस्यापीप्सितत्वसद्भावादिति प्रश्नः ॥

( उद्द्योतः ) कर्तुरी ॥ ४९ ॥ असत्यपीति। अव्याप्तिर्नास्तीति भावः ॥

( आक्षेपबाधकभाष्यम् )

**'कर्तुरीप्सितं कर्म' इतीयत्युच्यमाने इहाग्नेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्रसज्येत ॥**

( प्रदीपः ) माणवक इति। विशेषविहितत्वादपादानसंज्ञायाः।

( उद्द्योतः ) विशेषेति। अनवकाशत्वादित्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**नैष दोषः कर्मसंज्ञात्र बाधिका भविष्यति ॥**

( प्रदीपः ) कर्मसंज्ञेति। परत्वात् ॥

( समाधानभाष्यम् )

**अग्नावपि तर्हि बाधिका स्यात्। इह पुनस्तमग्रहणे क्रियमाणे तदुपपन्नं भवति यदुक्तं *वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनाद् * इति ॥**

( प्रदीपः ) अग्नावपीति। अग्निमाणवकयोरीप्सितत्वसद्भावात्। कर्मापादानसंज्ञाविषयविभागाज्ञानपरमेतत्, न तु निरवकाशाप्यपादानसंज्ञा सावकाशया कर्मसंज्ञया बाधितुं शक्यते। तमग्रहणे तु सति संज्ञयोर्विषयविभागलाभः ॥

( उद्द्योतः ) विषयविभागाज्ञानेति। अग्नावेव कर्मसंज्ञा माणवक एवापादानत्वमित्यपि स्यादिति भावः ॥ तमग्रहणे त्विति। तद्यथा तथा वारणार्थानामिति सूत्रे उपपादितम् ॥

( ओदनादीनां निर्वर्त्यत्वसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

**इहोच्यते—ओदनं पचतीति, यद्योदनः पच्येत द्रव्यान्तरमभिनिर्वर्तेत ॥**

---

१ 'तमपूग्रह'।

(प्रदीपः) **इहेति** । लोकः शास्त्रं च सामान्येन निर्दिश्यते। लोके प्रयुज्यमानत्वात्, शास्त्रे चोदाह्रियमाणत्वात् ॥ **द्रव्यान्तरमिति** । ओदनशब्दस्य तण्डुलविकारे प्रयुज्यमानत्वात्पचेश्च विक्लित्त्युपसर्जनविक्लेदनवचनत्वान्निर्वृत्तस्यौदनस्य विक्लेदनान्तरकरणात् ॥

(उद्योतः) ननु लोकेऽपि तथा व्यवहारादिहेत्ययुक्तमत आह—**लोकः शास्त्रं चेति** ॥ नन्वोदनपाके कथं द्रव्यान्तरस्योत्पत्तिरत आह—**ओदनशब्दस्येति** । भाष्ये—यद्योदनः पच्येतेत्यस्यौदनकर्मकः पाको यदि बुध्येतेत्यर्थः ॥ **द्रव्यान्तरमभिनिर्वर्तेतेत्यस्य** च द्रव्यान्तराभिनिर्वृत्तिः प्रतीयेतेत्यर्थः ॥ **विक्लेदनान्तरकरणादिति** । विक्लेदनान्तरप्रतीतिप्रसङ्गादित्यर्थः ॥

(समाधानभाष्यम्)

**नैष दोषः। तादर्थ्यात्ताच्छब्द्यं भविष्यति। ओदनार्थास्तण्डुला ओदन इति ॥**

(प्रदीपः) **ओदनार्था इति** । गौणार्थाश्रयणेनैव सर्वलोकस्य प्रयोगदर्शनादिदमत्र न चोदनीयम्—मुख्यस्यैव त्वोदनस्य पुनर्विक्लित्तिकरणे कस्मादयं प्रयोगो न भवतीति। विकारविशेषप्रतिपादनाय गौणार्थपरिग्रहः । तण्डुलान्पचतीत्युक्ते विकारान्तरमपि प्रतीयते ॥

(उद्योतः) ननु गौणार्थेन प्रयोगे किं फलमत आह—**विकारेति** । ओदनस्वरूपेत्यर्थः ॥ विकारान्तरं, भर्जनादिरूपं विक्लित्तिपदेन च पाकफलमात्रमुच्यते ॥

(आक्षेपभाष्यम्)

**अथेह कथं भवितव्यम्—तण्डुलानोदनं पचतीति, आहोस्वित्—तण्डुलानामोदनं पचतीति? ॥**

(प्रदीपः) **अथेहेति** । उभयथा प्रयोगदर्शनात्प्रकृतिविकृत्योः साक्षादुपादानात्तादर्थ्यात्ताच्छब्द्यानुपपत्त्या विक्लेदनवचने तु पचौ तण्डुलानामोदनं पचतीति प्रयोगायोगाद् द्रव्यान्तरनिर्वृत्तिप्रत्ययप्रसङ्गाच्च । निर्वर्तनवचने तु पचौ तण्डुलानां कर्मभावाघटनात्तण्डुलानोदनं पचतीति प्रयोगाभावप्रसङ्गाच्च प्रश्नः ॥

(उद्योतः) ननूभयविधव्यवहारात्प्रयोगद्वयेनापि भाव्यमेवेति केन प्रयोगेण भाव्यमित्यर्थकप्रश्नानुपपत्तिरत आह—**प्रकृतीत्यादि** । **कर्मभावाघटनादिति** । नहि तत्र तण्डुला निष्पाद्यन्ते इति भावः ॥

(समाधानभाष्यम्)

**उभयथापि भवितव्यम्। कथम्!। इह हि तण्डुलानोदनं पचतीति द्व्यर्थः पचिस्तण्डुलान्पचन्नोदनं निर्वर्तयतीति ॥ इहेदानीं तण्डुलानामोदनं पचतीति द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनं निर्वर्तयतीति ॥**

(प्रदीपः) **द्व्यर्थः पचिरिति** । विक्लेदनोपसर्जने निर्वर्तने पचिर्वर्तते । तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः । तत्रोपसर्जनविक्लेदनक्रियापेक्षं तण्डुलानां कर्मत्वम् । प्रधानभूतक्रियापेक्षं त्वोदनस्य ॥ **द्व्यर्थश्चैवेति** । तण्डुलानां संबन्धिनं विकारविशेषमोदनं विक्लित्त्या निर्वर्तयतीत्यर्थः । सा च विक्लित्तिः सामर्थ्यात्तण्डुलानामेवेति विज्ञायते ॥

(उद्योतः) ननु फलव्यापारावादाय सर्वस्यापि द्व्यर्थत्वं नापि तावतोक्तप्रयोगोपपत्तिरत आह—**विक्लेदनेति** । निर्वर्तनरूपद्वितीयार्थमादाय द्व्यर्थत्वमिति भावः ॥ **विक्लित्त्या निर्वर्तयतीति** । विक्लित्तिविशिष्टं निर्वर्तनं पचेरर्थः । वैशिष्ट्यं च क्वचित् सामानाधिकरण्येन क्वचित्करणत्वेन । विक्लित्तिशब्देनात्र विक्लेदनमेव । एवं च तण्डुलानां धात्वर्थफलाश्रयत्वाविवक्षणान्न द्वितीयेत्यर्थः । षष्ठी त्वोदनयोगे इति भावः ॥ नन्वेवं विक्लित्तेः संबन्ध्याकाङ्क्षाऽनिवृत्तेत्यत आह—**सा चेति** ॥ ननु पूर्वोक्तेऽर्थेऽपि मातुः स्मरतीतिवत् कर्मणः शेषत्वेन षष्ठीप्रयोगसिद्धेर्विकारयोगेषष्ठीति भाष्यमनुपपन्नमिति चेन्न । ओदनस्य संबन्ध्याकाङ्क्षासत्त्वेन क्रियायाश्च तदनाकाङ्क्षत्वेन तथोक्तेः, षष्ठ्यन्तस्य स्वाकाङ्क्षितान्वययोग्यनामसमभिव्याहारे तत्रैवान्वय इत्युत्सर्गतो व्युत्पत्तेश्चेति दिक् ॥

(आपत्तिवारणाधिकरणम्)

(आक्षेपभाष्यम्)

**इह कश्चित्कंचिदामन्त्रयते—सिद्धं भुज्यतामिति। स आमन्त्र्यमाण आह—प्रभूतं भुक्तमस्माभिरिति । आमन्त्रयमाण आह—दधि खलु भविष्यति पयः खलु भविष्यति। आमन्त्र्यमाण आह—दध्ना खलु भुञ्जीय पयसा खलु भुञ्जीयेति । अत्र कर्मसंज्ञा प्राप्नोति। तद्धि तस्येप्सिततमं भवति ॥**

(प्रदीपः) **इह कश्चिदिति** । अन्वयव्यतिरेकाभ्यां दधिपयसोरीप्सिततमत्वं न त्वोदनस्येति दर्शयति ॥

(उद्योतः) **रीप्सिततमत्वमिति** । ईप्सितशब्दोऽभिप्रेतपरो रूढ इति पूर्वपक्ष्याशयः ॥

(समाधानभाष्यम्)

**तस्याप्योदन एवेप्सिततमः । न तु गुणेष्वस्यानुरोधः । तद्यथा—भुञ्जीयाहमोदनं यदि मृदुविशदः स्यादिति । एवमिहापि दधिगुणमोदनं भुञ्जीय पयोगुणमोदनं भुञ्जीयेति ॥**

(प्रदीपः) **तस्याप्योदन इति** । दधिपयसोस्तु संस्कारकत्वात्करणभावः ॥ **न तु गुणेष्विति** । गुणेषूपकारकेषु केवलेषु नास्यादरः, किं तर्हि तत्संस्कृत ओदन इत्यर्थः ॥ **मृदुविशद इति** । मृदुश्चासौ विशदश्चेति कर्मधारयः । यदि मार्दवमात्रे आदरः स्यात्पङ्कमपि भक्षयेत् । विशदमात्रादरे सिकता अपि ॥

(उद्योतः) ननूद्देश्यत्वाद् दध्यादि ईप्सिततममत आह—**दधीति** । संस्कारकत्वेनैव तदुद्देश्यम्, न तु साक्षात् फलाश्रयत्वेनेत्यर्थः । अन्यथा दधिपयोमात्रभोजनेनापि कृती स्यात् ॥ ननु

१ 'मेवविज्ञा' । २ तण्डुलानोदनं पचतीत्यत्र । (र. ना.) ३ तण्डुलानामोदनं पचतीत्यत्र । (र. ना.) ४ विकारयोगे षष्ठ्यभ्युपगमे चेत्यर्थः । (र.ना.)

गुणेष्वादराभावे दधिसत्ताज्ञानात्पूर्वमपि प्रवृत्तिः स्यादत आह—केवलेष्विति । मृदुविशद इति । द्वन्द्वे प्रयोगानुपपत्तिरत आह—कर्मधारय इति ॥ यदीति । एवं च यथा तत्र तथागुणविशिष्ट ओदन एवेप्सितः । एवमिहापि दध्यादिविशिष्ट ओदन ईप्सित इति भावः ॥ अत्रेदं बोध्यम्—तस्याप्योदन एवेत्याद्युत्तरं क्रियाशब्दोयमित्याशयेनैव । ओदन एव फलाश्रयत्वविवक्षा, न तु गुणे दध्यादौ तन्मात्रेऽनुरोधः फलाश्रयत्वविवक्षेत्यक्षरार्थः । दृष्टान्तेऽसंभवात्तदविवक्षा, दार्ष्टान्तिके ऐच्छिकीति भेदः । ईप्सिततमत्वं वारणार्थसूत्रोक्तरीत्या तद्धात्वर्थफलवत्त्वेनेच्छाविषयत्वरूपमेव भाष्यसंमतम् । अन्यथा विशिष्टस्याभिप्रेतत्वे विशेषणस्याभिप्रेतत्वात्समाधानानुपपत्तिः । पञ्चकस्य प्रातिपदिकार्थत्वात् उभयविवक्षायां तु परत्वात्कर्मत्वमेव सत्यभिधाने, आकडारसूत्रे * करणं पराणि * इत्यस्यासिरिछनत्तीति कर्तृसंज्ञाविषये एवोदाहरणदानात्तदभिधानसंदेह इति नास्य तदा तमपा कर्मत्ववारणमुचितम् ॥ नवीनग्रन्थास्तु चिन्त्या एव, क्रियाशब्दत्वेपि सनेष्यमाणत्वस्यापि गर्भीकरणात् ॥

( अनुपपत्तिवारणाधिकरणम् )

( १०९८ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाऽप्रसङ्गः क्रियेप्सितत्वात् ॥ * ॥**

( भाष्यम् ) ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञा न प्राप्नोति । गुडं भक्षयतीति । किं कारणम् ? । क्रियेप्सितत्वात् । क्रिया तस्येप्सिता ॥

( प्रदीपः ) **ईप्सितस्येति** । ईप्सिततममेवेप्सितपदेन सामान्यशब्देन निर्दिष्टम् । विशेषेषु सामान्यस्य भावात् । तत्र यन्निर्वृत्तं क्रिययाऽनाधेयविकारं क्रियाया निष्पत्त्यर्थं केवलमुपादीयते तत्क्रियासंबन्धात् प्राप्यमपि नेप्सितमिति तस्य कर्मसंज्ञा न प्राप्नोति । यत्र हि कर्मार्था क्रिया निष्पत्तिसंस्कारप्रतिपत्तिभिस्तत्र कर्मेप्सितम् । अन्यत्र तु क्रियैव प्रतीयमानसंदर्शनादिक्रियापेक्षयेप्सितेति भावः ॥ **गुडं भक्षयतीति** । भक्षणाय गुडस्योपादानं न तु गुडाय भक्षणानुष्ठानम् ॥

( उद्योतः ) शङ्कते—भाष्ये—**ईप्सितस्येत्यादि** । नन्वीप्सिततमस्य कर्मत्वादीप्सितस्येत्यनुवादोऽयुक्तोऽत आह—**ईप्सिततममेवेति** । तमस्यान्यार्थत्वमभिप्रेत्य तावत एवोल्लेख इत्यन्ये ॥ ननु निर्वृत्तस्यापि काष्ठादेर्विकार्यस्येप्सिततमत्वं विकारवत्तयाऽस्त्येवेत्यत आह—**अनाधेयविकारमिति** । **प्राप्यमपीति** । क्रियाजन्यसंयोगादिरूपफलाश्रयमपीत्यर्थः । **नेप्सितं**, नाभिप्रेतम् । **निष्पत्तिसंस्कारप्रतिपत्तीति** । **निष्पत्तिः**, कटादेः । **संस्कारः**, प्रोक्षणादिना व्रीह्यादेः । **प्रतिपत्तिर्**दाहादिना हविरादेः ॥ ननु कर्तृक्रिययाप्तुमिष्यमाणं कर्मेत्यर्थस्तत्र कथं क्रिया स्वात्मनेप्सिता भवेद् । एवं च क्रिया तस्येप्सितेति भाष्यमनुपपन्नमत आह—**प्रतीयमानसंदर्शनादीति** । तज्जन्यारम्भक्रियापेक्षयेत्यर्थः ॥ ननु गुडभक्षणस्येप्सितत्वे गुडोपि तथेत्यत आह—**भक्षणायेति** । भक्षणक्रियोत्पत्त्यर्थमित्यर्थः ॥

( १०९९ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वोभयेप्सित्वात् ॥ * ॥**

( भाष्यम् ) न वा एष दोषः । किं कारणम् ? । उभयेप्सितत्वात् । उभयं हि तस्येप्सितम् ॥ आतश्चोभयम् । यस्य हि गुडभक्षणे बुद्धिः प्रसक्ता भवति नासौ लोष्टं भक्षयित्वा कृती भवति ॥

( प्रदीपः ) **न वेति** । गुडभक्षणं यस्येप्सितं तस्य गुडो भक्षणक्रिययेप्सितः । यस्मान्नासौ गुडस्य दर्शनस्पर्शनादिना कृती भवति नापि लोष्टादिभक्षणेनेति न भक्षणमात्रमीप्सितं नापि गुडमात्रमित्यर्थः ॥

( समाधानबाधकभाष्यम् )

यद्यपि तावदत्रैतच्छक्यते वक्तुम् । ये त्वेते राजकर्मिणो मनुष्यास्तेषां कश्चित्कंचिदाह—कटं कुर्विति । स आह—नाहं कटं करिष्यामि घटो मया आहृत इति । तस्य क्रियामात्रमीप्सितम् ॥

( प्रदीपः ) **ये त्वेत इति** । ते हि यां कां चित् क्रियामनुष्ठाय कालमतिवाहयन्ति न तेषां द्रव्यविशेषे तात्पर्यम् । ततश्च **नाहं कटं करिष्यामी**त्यत्र कटस्य कर्मत्वानुपपत्त्या द्वितीया न प्राप्नोतीति कटकर्मिका क्रिया न निषिद्धा भवेत् । तथा **घटो मयाऽऽहृत** इत्यत्र घटस्य कर्मत्वाभावादाहृत इत्यत्र कर्मणि निष्ठा न प्राप्नोति ॥

( उद्योतः ) शङ्कते—भाष्ये—**ये त्वेत इति** ॥ ननु क्रियामात्रेप्सायां हस्तचालनमात्रेणापि तिष्ठेयुरत आह—**यां कांचिदिति** । स्वाम्यभिमतामित्यर्थः । वेतनग्रहणे तात्पर्यात् ॥ **ततश्चेति** । कटस्यानिष्यमाणत्वात् । तच्च **नाहं करिष्यामीति** शब्देन प्रतिपादितम् । आहरणक्रियया च घटे निष्पाद्यत्वाभावः स्पष्ट एव आहरणकर्तुरभिप्रेतत्वाभावश्चेति घटस्य कटस्य च तत्त्वाभाव एवेति भावः ॥

( समाधानसाधकभाष्यम् )

यद्यपि तस्य क्रियामात्रमीप्सितं, यस्त्वसौ प्रेषयति तस्योभयमीप्सितमिति ॥ कर्तुरीप्सिततमम् ॥ ४९ ॥

( प्रदीपः ) **यस्त्वसौ प्रेषयतीति** । प्रयोजकचित्तानुवर्तनं तस्य स्वार्थसिद्धये कर्तव्यम् । यदा च विशिष्टकर्मिका क्रिया तेन संपाद्यते तदाज्ञानुष्ठिता भवतीति प्रयोजकवत्प्रयोज्यस्याप्युभयमीप्सितमिति भाष्यकारस्याभिप्रायः ॥ अन्ये तु प्रयोजककर्त्रपेक्षया प्रयोज्यस्य कर्तुरनीप्सितमपि कर्मेत्याचक्षते ।

---

१ मृदुत्वे विशदत्वे च भुज्यर्थफलाश्रयत्वासंभवादित्यर्थः । (र. ना.) २ 'फलाश्रयत्वेन' । ३ ईप्सिततमशब्दस्याभिप्रेतमात्रपरत्वे इत्यर्थः । विशिष्टस्य, दधिसंस्कृतौदनस्य । विशेषणस्य, दध्नः । (र. ना.) ४ यदीति शेषः । (र. ना.) ५ किन्तु अग्नेर्माणवकं वारयतीत्यत्राग्नेरिति शेषः । (र. ना.) ६ पयसा ओदनं भुङ्क्ते इत्यत्र पयसः तमपाकर्मत्ववारणपरा इति भावः । (र. ना.) ७ 'अत्र' । ८ 'क्रियानिष्प' । ९ प्रतिपत्तिरुपयुक्तस्याकीर्णकरता निवर्तकं कर्म । (र. ना.) १० प्रयोज्यस्य कर्तुरनीप्सितमपि प्रयोजककर्त्रपेक्षया कर्मेति योजना । (र. ना.)

तत्तु प्रयोजकव्यापारस्याशब्दार्थत्वात्पूर्वोक्तोदाहरणेऽयुक्तमिति न्यायविदो मन्यन्ते ॥ ४९ ॥

( उद्योतः ) समाधत्ते—यद्यपि तस्येत्यादिना । ननु प्रेषयितुरुभयेप्सायामपि न प्रेष्यस्येति तदीयप्रयोगे तयोः कर्मत्वानापत्तिस्तथैवेत्यत आह—प्रयोजकेत्यादि । स्वार्थो वेतनलाभः ॥४९॥

( १९० कर्मसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. १५ सू. )

## २९० तथा युक्तं चानीप्सितम् ॥ ५० ॥

( उद्योतः ) तथा युक्तम् ॥ ५० ॥ तथेति भिन्नं पदम् । ईप्सिततमवत्क्रियाजन्यफलाश्रय इत्यर्थः ॥

( उदाहरणनिर्णयाधिकरणेऽनुयोगभाष्यम् )

**किमुदाहरणम् ? ॥**

( उद्योतः ) भाष्ये—किमुदाहरणमिति । पूर्वेण सिद्धिं मन्वानस्य प्रश्नः ॥

( समाधानभाष्यम् )

**विषं भक्षयतीति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति । पूर्वेणाप्येतत्सिध्यति ॥**

( समाधानसाधकभाष्यम् )

**न सिध्यति । 'कर्तुरीप्सिततमं कर्म' इत्युच्यते कस्य च नाम विषभक्षणमीप्सितं स्यात्[१] ॥**

( प्रदीपः ) तथा युक्तम् ॥ ५० ॥ कस्य च नामेति । विषमिति वक्तव्ये विषभक्षणमिति किमर्थमुच्यते । यदि भक्षणमीप्सितं तदा विषमपीप्सितं विषभक्षणस्य त्वनीप्सितत्वे विषमपि प्राणहरत्वादनीप्सितं भवेति । भक्षणक्रियया च विषं नेप्सितं परिहारादिक्रियापेक्षया तदीप्सितं भवत्येवेति भक्षणग्रहणेन प्रदर्श्यते ॥

( उद्योतः ) कस्य च नामेति । सनेच्छाविषयत्वस्य बोधनात् प्रश्नः ॥ तदा विषमपीति । कर्मत्वानालिङ्गितभक्षणस्याभावादित्यर्थः ॥

( समाधानबाधकभाष्यम् )

**विषभक्षणमपि कस्यचिदीप्सितं भवति । इह य एष मनुष्यः दुःखार्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते ॥ आतश्चेप्सितं यत्तद्भक्षयति ॥**

( प्रदीपः ) विषभक्षणमपीति । यथा लोकस्य सुखप्राप्त्यर्था क्रियायां प्रवृत्तिस्तथा भयादिभ्यो दुःखनिवृत्त्यर्थापि विषादिष्विस्यर्थः ॥

( उद्योतः ) ननु सुखसाधने एव लोके ईप्सितत्वं प्रसिद्धं न चेदं तथाऽत आह—यथेति । दुःखनिवृत्तिसाधनमपि तथेति भावः ॥ क्रियाशब्द ईप्सितशब्दः, सना तत्तत्क्रियोद्देश्यत्वमात्रमुपलक्ष्यत इत्याशयेन समाधत्ते—भाष्ये—आतश्चेति । एवं पराधीनतया द्वेष्यमपि विषं भक्षयतीत्युपपन्नः प्रयोग इति भावः ॥

( समाधानभाष्यम् )

**यत्तर्ह्यन्यत्करिष्यामीत्यन्यत्करोति तदुदाहरणम् । किं पुनस्तत् ? । ग्रामान्तरमयं गच्छन् चोरान्पश्यति अहिं लङ्घयति कण्टकान्मृद्नातीति ॥**

( प्रदीपः ) चोरान्पश्यतीति । विषयेन्द्रियसंबन्धसामर्थ्याद्दर्शनेनाप्तुमनिष्टतमा अपि चोरास्तथायुक्ताः पूर्वेणासिद्धकर्मभावा अनेन कर्मसंज्ञया संबध्यन्ते ॥

( उद्योतः ) अनिष्टतमा अपीति । अनुद्देश्या इत्यर्थः । भयजनकत्वात् । इदमपि द्वेष्यं कर्मेति भावः ॥ पूर्वेणासिद्धेति । सनोद्देश्यत्वं विवक्षितम् । नह्येते दर्शनादिक्रियोद्देश्या इति भावः ॥

( आक्षेपभाष्यम् )

**इहेप्सितस्यापि कर्मसंज्ञा आरभ्यतेऽनीप्सितस्यापि । यदिदानीं नैवेप्सितं नाप्यनीप्सितं तत्र कथम् ? ग्रामान्तरमयं गच्छन्वृक्षमूलान्युपसर्पति कुड्यमूलान्युपसर्पतीति ॥**

( प्रदीपः ) ईप्सितस्यापीति । ईप्सिततमस्यापीत्यर्थः ॥

( समाधानभाष्यम् )

**अत्रापि सिद्धम् । कथम् ? । अनीप्सितमिति नायं प्रसज्यप्रतिषेधः ईप्सितं नेति । किं तर्हि ? । पर्युदासोऽयम् । यदन्यदीप्सितात्तदनीप्सितमिति । अन्यच्चैवेदमीप्सिताद्यन्नैवेप्सितं नाप्यनीप्सितमिति ॥ तथा युक्तम् ॥ ५० ॥**

( प्रदीपः ) नायं प्रसज्यप्रतिषेध इति । यथाऽधर्मानृतादिभिरुत्तरपदार्थप्रतिपक्षभूतं वस्तु तत्प्रतिषेधद्वारेण प्रतिपाद्यते तथानीप्सितशब्देनापि द्वेष्यं वस्तु यदभिधीयते तदेव न गृह्यते, किं तु सर्वमीप्सितादन्यदित्यर्थः ॥ ५० ॥

( उद्योतः ) ननु प्रसज्यप्रतिषेधे ईप्सितं कर्म नेत्यर्थः स्यात्स चायुक्तः पूर्वेण कर्मत्वस्येष्टेरत आह—यथेति । एवं च नायं प्रसज्यप्रतिषेध इत्यस्य नायं प्रतिपक्षवाचीत्यर्थः । प्रतिषेधस्य भावविरोधित्वात्तेन तदर्थलक्षणाद्वा । ईप्सितं नेत्यस्य च यदीप्सितप्रतिपक्षभूतं तदेव नोच्यते इत्यर्थः ॥ किं तर्हीत्यादेश्च भिन्नमात्रमस्यार्थ इतीति भावः । तत्प्रतिषेधद्वारेणेति । आरोपितत्वबोधद्वारेणेत्यर्थः ॥ धर्मभिन्नबोधेपि प्रतिपक्षभूतमेव धर्मभिन्नं गृह्यते तथात्र नेत्यर्थः ॥ ५० ॥

( १९१ कर्मसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. १६ सू. )

## २९१ अकथितं च ॥ ५१ ॥

( अनुयोगभाष्यम् )

**केनाकथितम् ? ॥**

( प्रदीपः ) अकथितं च ॥ ५१ ॥ केनेति ॥ किं

१ स्वार्थसिद्धये इति कैयटे इति भावः । ( र. ना. ) २ 'भवति' । ३ एतावान् पूर्वपक्षः । भक्षणक्रिययेत्यादि तु समाधानम् । ( र. ना. )

साधारण्या कारकसंज्ञया, अथ विशेषसंज्ञाभिरपादानादिभिरिति प्रश्नः ॥

(उद्द्योतः) अकथितं च ॥ ५१ ॥ 'कथ वाक्यप्रबन्धे' इत्यस्मान्निष्पन्नः क्रियाशब्दोऽयम् । तत्र कथनस्य करणाकाङ्क्षत्वाद् द्वयोश्चोपस्थितत्वादाह—किमिति ॥

(समाधानभाष्यम्)

**अपादानादिभिर्विशेषकथाभिः ॥**

(प्रदीपः) **अपादानादिभिरिति** । कर्तरि करणे वाऽत्र तृतीया । भूतकालश्चात्र न विवक्ष्यते । यथा **पराजेरसोढ** इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति अध्ययनात्पराजेष्यत इति । तेन हेतुकर्तृ[1]संज्ञाभ्यां कथयिष्यमाणस्यापि कर्मसंज्ञा न भवति । इह **कारक** इत्यनुवर्तनात्सत्येव कारकत्वेऽकथितस्य कर्मसंज्ञया भाव्यमिति सामर्थ्याद्विशेषकथाभिरकथितत्वमाश्रीयते । प्रश्नप्रतिवचनाभ्यां चासंकीर्तितवचनोऽकथितशब्दो, न त्वप्रधानवाची रूढिशब्दोत्राश्रित इति दर्शितम् । रूढिषु हि व्युत्पत्त्यर्थमेव क्रियोपादीयते । न तु प्रवृत्तिनिमित्तत्वेन । तथा च गच्छतीतिगौरिति व्युत्पत्तावपि यथा गच्छतीत्युक्ते केनेति प्रश्ने रथेनेति प्रतिवचनं भवति तथा गौरित्युक्ते प्रश्नप्रतिवचने न भवतः ॥

(उद्द्योतः) करणस्यापि कर्तृत्वेन विवक्षामभिप्रेत्याह—**कर्तरीति** ॥ **भूतकालश्चात्र न विवक्ष्यत इति** । तत्फलं तु निवृत्तैकप्रेषणदुहादिभ्यो णिचि दुहसमानार्थत्वेन गत्यादिनियमास्कर्तुरीप्सिततममित्याद्यप्राप्तौ प्रयोज्यकर्तुर्गवादेः कर्तृत्वात् तदविवक्षया शुद्धजनकत्वविवक्षायां बोध्यम् । न च प्रयोज्यस्य कर्तृत्वाविवक्षायां कर्तुः प्रयोजकत्वाभावाण्णिजनापत्तिः । अन्तरङ्गत्वात्पूर्वं णिचि ततस्तस्याविवक्षणात् तत्प्रयोजक इत्यत्र तत्पदेन स्वतन्त्रस्योपलक्षणाद्वा । अत एव ग्रामं गमयतीत्यादिसिद्धिरिति भावः ॥ परं त्वत्र मानं चिन्त्यम् । किं च गत्यादिनियमेन परत्वादस्यापि बाधो दुर्वार इति दिक् ॥ **न भवतीति** क्वचित्पाठः । पूर्वोक्तविषयाभावेन कर्तृत्वविवक्षायामपि स्यात् । अधुना तु नेत्यर्थः । परया कर्तृसंज्ञया बाधाच्चिन्त्यमिदम् । **कर्मसंज्ञा भवतीति**पाठे तत्त्वाविवक्षायामित्यादिः ॥ परं तु स पाठोप्युक्तरीत्या चिन्त्य एव ॥ नन्वेवमपि कारकसंज्ञयाऽकथितत्वमेव किं नाश्रीयतेऽत आह—**इहेति** ॥ **न त्वप्रधानवाचीति** । तद्ग्रहणे हि दुह्यादिव्यतिरिक्तविषये सावकाशाधिकरणापादानविषये गोर्दोग्धि पय इत्यादाववधित्वविवक्षायामपि परत्वादनेन कर्मत्वापत्तिरिति भावः ॥ प्रश्नप्रतिवचनाभ्यां रूढ्यग्रहणं कथमिति व्युत्पादयति—**रूढिषु हीति** । रूढ्यात्यन्ततिरस्काराद्योगार्थस्य तत्र भानमेव नास्तीति भावः ॥ न च **रूढिर्योगमपहरती**तिन्यायाद्यौगिकार्थस्यैव कथं ग्रहणं, न चानिष्टनिवारणाय तत्, लक्षणैकशरणानां लक्ष्यायत्तप्रमाणस्थितेरभावादिति वाच्यम् । लक्ष्यैकशरणभाष्यकारादिव्याख्यानेन तस्यैव ग्रहणादित्याहुः

(उदाहरणनिर्णयाधिकरणम्)

(अनुयोगभाष्यम्)

**किमुदाहरणम् ? ॥**

(प्रदीपः) **किमुदाहरणमिति** । नटस्य शृणोतीत्यादावपि कर्मसंज्ञाप्रसङ्ग इति प्रश्नः ॥ अथवाऽपादानादिभिः सर्वस्य विषयस्य व्यापनादुदाहरणासंभवं मत्वा पृच्छति ॥

(उद्द्योतः) अथ वेत्यादि चिन्त्यम् । नटस्य शृणोतीत्यादेः संभवात् । नटान्निःसरन्तं शब्दं शृणोतीत्यर्थे तूपयोगे इत्यस्य वैयर्थ्यापत्त्याऽनभिधानेन तस्य प्रयोगस्याभावात् । अत एव प्रत्याख्यानेन फलैक्य[2]सिद्धिः ॥

(समाधानभाष्यम्)

**दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ॥**

**ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥ १ ॥**

(प्रदीपः) **उपयोगनिमित्तमिति** । उपयुज्यत इत्युपयोगः पयःफलादि तस्य निमित्तं गवादि । अनेन गां दोग्धि पय इत्यत्र पयस उपयुज्यमानत्वादीप्सिततमत्वम्, गोस्तु पयोर्थत्वादपादानस्यानीप्सिततमत्वं दर्शयति । तथायुक्तत्वाभावाच्च **गोस्तथायुक्त**मित्यनेनापि कर्मसंज्ञा न सिध्यति ॥ **अपूर्वविधाविति** । पूर्वत्वम[3]न्यत्वोपलक्षणमिति परविधावपीयं संज्ञा न भवति ॥ **ब्रुविशासिगुणेनेति** । ब्रुविशास्योर्गुणः साधनं प्रधानकर्म धर्मादिकं तेन च यत्सचते संबध्यत इत्यर्थः । क्रियायाः साध्यत्वात्प्राधान्यं तदर्थत्वात्प्रवृत्तेः, कारकाणां गुणत्वम् ॥ **कविनेति** । कविशब्दो मेधाविवचनः, क्रान्त[4]दर्शनात् ॥ दुह्यादीनां चार्थोपलक्षणायोपादानात्पर्यायप्रयोगेपि कर्मसंज्ञा भवति ॥ ननु गां दोग्धि पय इत्यस्यायमर्थः—गौः पयस्त्यजति, देवदत्तो गवा पयस्त्याजयति । तत्र प्रयोजकव्यापारेणाप्यमानत्वाद्गोः कर्मत्वं सिद्धम् । नैतदस्ति । यथा ण्यन्तेषु धातुषु क्रियाविष्टः प्रयुज्यत इति प्रतीतिः । नैवमिह । निष्क्रियस्यापि गवादेर्दोहनादिषु विनियोगात् ॥

(उद्द्योतः) **तस्य निमित्तमिति** । कर्मनिष्ठधात्वर्थविशिष्टस्य कर्मणो निमित्ततया संबन्धीत्यर्थ इति वदन्ति । स्पष्टमिदं सूत्रशेषे भविष्यति । एतत्फलं तु करणभूतपाण्यादिनिवृत्तिः । तस्य दोग्धृव्यापारजनकतयान्यथासिद्धत्वेन विभागविशिष्टपयोरूपकर्मणोऽनिमित्तत्वात् ॥ यत्तु वृत्तिकृता तस्याप्युपयोगनिमित्तत्वमुपेत्यापूर्वविधामित्यनेन वारणं कृतम्—विहिता तत्र करणादिसंज्ञेति ॥ तन्न, गवादीनामपादानत्वाद्यविवक्षायामिवास्यापि करणत्वाद्यविवक्षायां कर्मत्वापत्तेर्दुर्वारत्वात् । उपयोगपदेन मुख्यं कर्मेत्युक्तम्, **तस्य निमित्त**मित्यनेन धात्वर्थव्यापारात्प्राक् तत्संबद्धत्वमुक्तम् । **अन्ववरुणद्धि गां व्रजमि**त्यत्रापि पुनर्निर्गमप्रतिबन्धेन स्थितिस्थैर्यमर्थः । एवं च तत्र प्रतिबन्धानुकूलव्यापारात्प्राक् व्रजस्य गोसंबन्धोस्त्येव । उपयो-

---

1 हेतुत्वकर्तृत्वाविवक्षायामित्यर्थः । (र. ना.) 2 आख्यातोपयोगे इति सूत्रप्रत्याख्यानेनेत्यर्थः । (र. ना.) 3 'मन्योप' । 4 अतिक्रान्तपदार्थदर्शित्वं हि कवित्वमिति भावः । उद्द्योते त्वन्यथा व्याख्यास्यते । (र. ना.)

गसाहचर्याच्चाग्रे गुणपदेनाप्यस्यैव ग्रहणम् । तेन संबध्यते धात्वर्थव्यापारानन्तरमित्यर्थं बहवः ॥ **अनीप्सिततमत्वं दर्शयतीति ।** इदं च विभागजन्यवहिर्देशसंयोगानुकूलव्यापारार्थत्वे दुहधातोर्बोध्यम् । यदा तु त्याजनाऽर्थस्तदा प्रयोजकव्यापारेणेप्सिततमत्वमस्त्येवेति बोध्यम् । इदं चाकडारसूत्रभाष्ये ध्वनितम् ॥ **तथायुक्तस्वाभावाच्चेति ।** फलाश्रयत्वाभावादित्यर्थः ॥ **अपूर्वविधाविति ।** कर्मसंज्ञापेक्षया पूर्वसंज्ञानां विधिविषयाभावे इत्यर्थः ॥ यत्त्वेतद्विधेयकर्मसंज्ञापेक्षया पूर्वसंज्ञाविषयाभावे इत्यर्थ इति ॥ तन्न । अनेन वा पूर्वेण वा कर्मत्वे विशेषाभावात् ॥ न च पूर्वविषयकर्मत्वाविवक्षायां कर्मत्वार्थमिदं षष्ठ्यपवादः । एवं च संबन्धत्वेन बोधार्थमिदमिति वाच्यम् । सर्वसूत्रबोधिते कर्मसंज्ञकेऽर्थे विहितप्रत्ययानां कर्मत्वशक्त्यैव कर्मबोधकत्वात् । किं च कर्तुरित्याद्यपि षष्ठ्यपवाद एव, तदभावे तद्विषये षष्ठ्या एव प्राप्तेः । अनेनापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ वा गवादेर्जनकत्वसमानाधिकरणशक्तिविशेषेणान्वयविवक्षायामनेन कर्मत्वं भवतीत्युक्तम् ॥ **परविधावपीत्याद्युक्तमुक्तरीतेः ॥ गुणः साधनमिति ।** क्रियानिरूपितं शाब्दं गुणत्वम् । आर्थं तूद्देश्यत्वात्प्राधान्यमिति बोध्यम् ॥ **सचत इति ।** धात्वर्थव्यापारादनन्तरमिति शेषः ॥ **षच सेचन** इत्यतोऽनुदात्तेतः संबध्नातेः कर्मव्यापारे वर्तमानादात्मनेपदम् । **षच समवाये** इत्ययं तु परस्मैपदी ॥ भाष्ये **आचरितं** व्यवहृतमित्यर्थः ॥ **क्रान्तदर्शनादिति ।** क्रान्तदर्शनत्वादित्यर्थः । **कविः क्रान्तदर्शनो भवतीति** निरुक्तादिति भावः । क्रान्तानि दर्शनानि येनेति विग्रहः स चात्र पाणिनिरिति बोध्यम् ॥ **अर्थोपलक्षणायेति ।** अत एव **शकारमसि चोदित** इति **परस्मैपदानामिति**सूत्रे भाष्ये पृच्छिपर्यायस्य चुदेर्द्विकर्मकप्रयोगः संगच्छते ॥ केचित्तु चुदेर्व्यापारद्वयार्थत्वे कर्तुरित्यनेन द्विकर्मकत्वे प्रधानव्यापारजन्यफलाश्रयत्वेन प्रधानकर्मणि क्तेनोक्तप्रयोगोपपत्तेरर्थपरत्वे मानं चिन्त्यमित्याहुः ॥ **गवा पय इति ।** इदं चिन्त्यम् । 'त्याजितैः फलमुत्खातैः'-रित्यादिप्रयोगात्

> **"तारेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च संग्रहः ।**
> **कारिकायां चशब्देन सुधाकरमुखैः कृतः ॥"**

इत्युक्तेश्च गत्यादिसूत्रे षष्ठ्यामुपसंख्यानावश्यकतया कर्तरि तृतीयाया दुर्लभत्वादिति केचित् ॥ वस्तुतस्तु भाष्यानुक्तत्वेन गमकाभावेन च गत्यादिसूत्रे नोपसंख्यानम् । त्याजितैरित्यादिप्रयोगाश्च चिन्त्या एव कैयटस्वरसादित्याहुः ॥ **सिद्धं कर्मत्वमिति । कर्तुरीप्सिततममित्यनेन ॥ निष्क्रियस्यापीति ।** तद्व्यापाराप्रतीतावपि दोहनादिविषयेऽस्य प्रयोगादित्यर्थः । एवं च विभागजन्यसंयोगानुकूलव्यापारमात्रस्य धात्वर्थत्वे गोरवधित्वात्तदविवक्षायामिदमावश्यकमिति भावः ॥

**( उदाहरणभाष्यम् )**

**दुहि—गां दोग्धि पयः ॥**

**( प्रदीपः ) गां दोग्धीति ।** दोहेनाप्यमानत्वेऽपि गोरीप्साप्रकर्षाभावात्तमप उपादानात्प्रकर्षस्य विवक्षितत्वादप्राप्ता कर्मसंज्ञाऽनेन विधीयते । दुह्यादिपरिगणनात्तस्य शृणोतीत्यादौ न भवति ॥

**( उद्योतः ) दोहेनाप्यमानत्वेऽपीति ।** दुहधात्वर्थगोपनिष्ठव्यापारजन्यगोनिष्ठव्यापाररूपफलाश्रयत्वेपीत्यर्थः ॥ **ईप्साप्रकर्षेति ।** विभागजन्यसंयोगानुकूलव्यापारानुकूलव्यापारस्य दुहर्थत्वे इदम् । उद्देश्यत्वाभावाद् व्यापारद्वयजन्यफलाश्रयत्वाभावाच्च तत्त्व पयस्येवेति भावः ॥ **अप्राप्तेति । तथा युक्तमित्यपि** न, ईप्सितत्वस्य सत्त्वेनानीप्सितत्वाभावादिति बोध्यम् ॥ चिन्त्यमिदम् । **गां दोग्धि पयः** परत्वात्कर्तुरीप्सिततममिति कर्मत्वमित्याकडारसूत्रस्थभाष्यविरोधात् । तत्र सूत्रे धातूपात्तफलाश्रयत्वरूपस्यैवेप्सिततमत्वस्य ग्रहाच्च । तस्मात्पयोनिष्ठविभागजसंयोगानुकूलव्यापारस्यैव धात्वर्थत्वे इदं भाष्यमिति तत्त्वम् । एवमग्रेऽपि । एवंरूपेऽर्थेऽपादानत्वाविवक्षाभिप्रायेण सिद्धान्तिन उदाहरणदानम्, तदजानतः पूर्वपक्षिणः खण्डनमित्येव सारम् ॥ किं च तण्डुलानोदनं पचतीत्यत्र ब्यर्थत्वेन द्वयोरपि कर्तुरित्येव कर्मत्वमिति तत्सूत्रस्थभाष्यविरोधः । त्वद्रीत्या गवीव तण्डुलेष्वपीप्साप्रकर्षाभावात् ॥

**( उदाहरणत्वबाधकभाष्यम् )**

**नैतदस्ति । कथिताऽत्र पूर्वापादानसंज्ञा ॥ दुहि ॥**

**( प्रदीपः ) कथितात्रेति ।** गोः पय आदत्त इत्यर्थावगमात् ॥

**( उद्योतः )** ननु विभागजसंयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वेऽपादानत्वाप्राप्तेराह—**गोः पय इति ।** एवं चेदृशार्थकदुहधातुयोगेऽपादानत्वप्राप्त्याऽस्याप्रवृत्तिः । पूर्वोक्तार्थे तु सिद्धमेव कर्मत्वमिति भावः । एवमग्रेपि बोध्यम् । अत एव सिद्धाऽत्र कर्मसंज्ञेति, कथिता पूर्वा कर्मसंज्ञेति वा नोक्तम्, कर्मसंज्ञाया विधेयत्वात्तदतिरिक्तपूर्वविधेरेवापूर्वे विधावित्यत्र ग्रहणौचित्यादिति तात्पर्यम् । तदविवक्षायामुदाहरणत्वं त्वसौ न जानाति ॥

**( उदाहरणभाष्यम् )**

**याचि—इदं तर्हि—पौरवं गां याचत इति ॥**

**( प्रदीपः ) पौरवं गामिति ।** पौरवेण गां दिदापयिषत इत्यर्थः प्रतीयते गोश्चेप्सिततमत्वं न पौरवस्य ॥

**( उदाहरणत्वबाधकभाष्यम् )**

**नैतदस्ति । कथितात्र पूर्वाऽपादानसंज्ञा ॥**

**( प्रदीपः ) कथितात्रेति ।** पौरवाद्गां जिघृक्षत इत्यर्थसम्प्रत्ययात् ॥

**( उदाहरणत्वसाधकभाष्यम् )**

**न याचनादेवापायो भवति । याचितोऽसौ यदि ददाति ततोऽपायेन युज्यते ॥ याचि ॥**

**( प्रदीपः ) न याचनादेवेति ।** याचितापि याचनकाले नाध्यवस्यति नूनमस्मादिकं वस्तु निर्गत्य मां प्राप्नोतीति भावः ॥

**( उद्योतः )** ननु बुद्धिकृतापायमादाय संज्ञा स्यादत आह—**याचितापीति ।** एवं च बुद्धिकृतस्यापि तस्याभाव इति भावः ॥

---

[१] परया संज्ञया बाधादेतस्या अप्राप्तिरित्युक्तरीतिः । (र. ना.) [२] क्रान्तानि बुद्ध्याविषयीकृतानि दर्शनानि सिद्धान्ता येनेति विग्रहवाक्यार्थः । (र. ना.)

( उदाहरणभाष्यम् )

**रुधि—अन्ववरुणद्धि गां व्रजम् ॥**

( प्रदीपः ) अन्ववरुणद्धीति । गौर्व्रजं प्रविशति गवा व्रजं प्रवेशयतीत्यर्थः ।

( उद्योतः ) गवा व्रजमिति । बलात्कारेण प्रवेशनस्यैवाव-रुध्यर्थतया नायं समानार्थो रुधेरिति भावः । गौर्व्रजे तिष्ठति गां व्रजे निर्गमप्रतिबन्धेन स्थापयतीत्यर्थाभिप्रायेणैवोदाहरणमधिकरण-त्वाविवक्षाभिप्रायेण ॥

( उदाहरणत्वबाधकभाष्यम् )

**नैतदस्ति । कथितात्र पूर्वाधिकरणसंज्ञा ॥ रुधि ॥**

( प्रदीपः ) कथितेति । गां व्रजे स्थापयतीति संप्रत्ययाद् व्रजस्य स्थानिक्रियापेक्षमाधारत्वम् ॥

( उद्योतः ) तद[1]जानतस्तु खण्डनं पूर्ववत् ॥

( उदाहरणभाष्यम् )

**प्रच्छि—माणवकं पन्थानं पृच्छति ॥**

( प्रदीपः ) माणवकमिति । आचिख्यापयिषति पन्थानं माणवकेनेत्यर्थः ॥

( उदाहरणत्वबाधकभाष्यम् )

**नैतदस्ति । कथितात्र पूर्वापादानसंज्ञा ॥**

( प्रदीपः ) कथितेति । माणवकान्मार्गोपदेशं जिघृक्षत इति संप्रत्ययात् ॥

( उदाहरणत्वसाधकभाष्यम् )

**न प्रश्नादेवापायो भवति । पृष्टोऽसौ यदाचष्टे ततोऽपायेन युज्यते ॥ प्रच्छि ॥**

( प्रदीपः ) न प्रश्नादेवेति । प्रश्नमात्रमनङ्गीकृतापायं धात्वर्थ इत्यर्थः ॥

(उद्योतः) बुद्धिकृतोऽप्यपायो नास्तीत्याह—प्रश्नमात्रमिति । एवं च प्रश्नस्य विश्लेषाजनकत्वेन पृच्छिं प्रति माणवकस्यापादानत्वं न प्रसक्तमिति भावः ॥

( उदाहरणभाष्यम् )

**भिक्षि—पौरवं गां भिक्षते ॥**

( उदाहरणत्वबाधकभाष्यम् )

**नैतदस्ति । कथितात्र पूर्वाऽपादानसंज्ञा ॥**

( उदाहरणत्वसाधकभाष्यम् )

**न भिक्षणादेवापायो भवति भिक्षितोऽसौ यदि ददाति ततोऽपायेन युज्यते ॥ भिक्षि ॥**

( प्रदीपः ) भिक्षिर्याचिवद्व्याख्येयः । अथ याचिभिक्ष्योरेकार्थत्वात् किमर्थमुभयोरुपादानम् । उच्यते—अनुनयार्थस्यापि याचेर्ग्रहणार्थम् । तेनाविनीतं विनयं याचत इत्यत्रापि कर्मसंज्ञा भवति ॥

( उद्योतः ) अनुनयार्थस्यापि याचेरिति । भिक्षेरप्युभयार्थत्वेन विनिगमनाविरहाच्चिन्त्यमिदम् । किं चोभयार्थकयाचिग्रहणेनैव सिद्धे भिक्षिग्रहणमर्थग्रहणाभावे लिङ्गमेवोचितम् ॥

( उदाहरणभाष्यम् )

**चिञ्—वृक्षमवचिनोति फलानि ॥**

( प्रदीपः ) वृक्षमिति । वृक्षेण त्याजयति फलानीत्यर्थः ॥

( उदाहरणत्वबाधकभाष्यम् )

**नैतदस्ति । कथितात्र पूर्वाऽपादानसंज्ञा ।**

( प्रदीपः ) कथितेति । वृक्षात् फलान्यादत्त इत्यर्थावसायात् ॥

( उद्योतः ) एवं च वृक्षमवचिनोतीत्यपि वृक्षात् फलान्यादत्त इत्यर्थे एवोदाहरणम् । तदविवक्षायामुदाहरणमिति तु न जानाति पूर्वपक्षी ॥

( उदाहरणभाष्यम् )

**ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥ ब्रुविशासिगुणेन यत्सचते तच्चोदाहरणम् । किं पुनस्तत् ? । पुत्रं ब्रूते धर्मं, पुत्रमनुशास्ति धर्ममिति ।**

( प्रदीपः ) पुत्रमिति । पुत्रो धर्मं प्रतिपद्यते पुत्रं धर्मं प्रतिपादयतीत्यर्थः ॥

( उद्योतः ) विषयतासंबन्धावच्छिन्नज्ञानानुकूलो वचनरूपो व्यापारो ब्रूञादेरर्थः ।

( उदाहरणबाधकभाष्यम् )

**नैतदस्ति । कथितात्र पूर्वा संप्रदानसंज्ञा ॥**

( प्रदीपः ) कथितेति । धर्मेण वचनानुशासनकर्मणा पुत्रस्याभिप्रेयमाणत्वात् ॥

( उद्योतः ) संप्रदानत्वाविवक्षायामुदाहरणमिति तु न जानाति, कैयटोक्तार्थे तु कर्तुरिति सिद्धमेव कर्मत्वम् ॥

( उदाहरणोपसंहारभाष्यम् )

**तस्मात्त्रीण्येवोदाहरणानि । पौरवं गां याचते, माणवकं पन्थानं पृच्छति, पौरवं गां भिक्षते इति ।**

(उद्योतः) भाष्ये—तस्मात्त्रीण्येवेति । यदि तेष्वपायाप्रतीतिस्तदा त्रीणि । अकथितत्वं च सर्वथाऽप्राप्तापादानत्वादिकमेव । याचतेश्च स्वत्वनिवृत्तिस्स्वत्वोत्पत्त्यनुकूलो व्यापारविशेषोऽर्थः । तत्र स्वत्वे पौरवस्य जनकतासमानाधिकरणनिरूपकत्वेनान्वयः । पृच्छेस्तु जिज्ञासाविषयार्थज्ञानानुकूलव्यापारोऽर्थः। व्यापारे च माणवकस्य जनकत्वमात्रेणान्वय इत्यप्राप्तकर्मत्वार्थमिदम् । यदि तु तेष्वप्यपायप्रतीतिस्तदा तेष्वपि पूर्वविधिविषयत्वात्तान्यपि नोदाहरणानि । परिगणितातिरिक्ते च तवाप्येतत्प्रवृत्तिरनिष्टेति सूत्रमिदमसङ्गतमित्येतत्तात्पर्यम् ॥

( प्रधानाप्रधानयोः प्रत्ययनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ ये धातूनां द्विकर्मकास्तेषां किं कथिते लादयो भवन्ति, आहोस्विदकथिते ? ॥**

( प्रदीपः ) अथेति । सर्वोदाहरणवाद्याचार्यं उदाहरणत्रयवादिनं स्वमतात्प्रच्यावयितुमाह । इहासङ्कीर्तितपर्यायस्या-

---

१ अधिकरणत्वस्याविवक्षितत्वमजानत इत्यर्थः । ( र. ना. )

कथितशब्दस्य ग्रहणे विवक्षाभेदाद्गां दोग्धि पय इत्याद्यपि भवति गोर्दोग्धि पय इत्याद्यपि । पूर्वोक्त तूदाहरणत्रये कर्मसंज्ञैवेत्येषा व्यवस्था । अप्रधानवचनाकथितशब्दोपादाने त्वपादानसंप्रदानसंज्ञे बाधित्वा दुह्यादिषु कर्मसंज्ञैव स्यादित्यसङ्कीर्तितमकथितमिहाश्रितम् । तत्र कर्मणि लादय उत्पद्यमानाः प्राधान्याप्राधान्याभ्यां भिन्नकक्ष्यमनेकं कर्म युगपदभिधातुमसमर्थाः किं प्रधानकर्मण्युत्पद्यन्ते अथ गुणकर्मणीति प्रश्नः ॥

**( उद्द्योतः )** **उदाहरणत्रयवादिनमिति** । सूत्रासङ्गतिवादिनमित्यर्थः ॥ **विवक्षाभेदादिति** । अपादानत्वविवक्षायां पञ्चमी तदविवक्षायामनेन कर्मत्वमित्यर्थः ॥ **कर्मसंज्ञैवेति** । तन्त्रितययोगे सर्वदापायाप्रतीतेरिति भावः । **नहि याचनादेर्वेत्यादेर्भाष्ये** पूर्वं सिद्धान्त्युक्तित्वाद् **याचितापील्यादिना** बौद्धापायाभावस्यापि स्वयं कथनादिति तात्पर्यम् ॥ **एषा व्यवस्थेति** । सिद्धान्तिनः संमतेति भावः ॥ **अपादानसंप्रदानसंज्ञे इति** । अपादानत्वादिविवक्षायामपीति भावः ॥ अन्ववरुणद्धि गां व्रजमित्यत्राधिकरणसंज्ञाबाधस्तदुपलक्षणम् । यदि तु व्रजोऽपि प्रधानं तदा तत्र नैव कर्मत्वं स्यादित्यस्योपलक्षणं बोध्यम् ॥ **कर्मसंज्ञैवेति** । तथा युक्तमित्यस्यात्र संबन्धो नास्तीति भावः ॥ **प्रश्न इति** । सर्वोदाहरणवादिन इति भावः ॥

**( समाधानभाष्यम् )**

**कथिते[1] लादयः ॥**

**( प्रदीपः ) कथित इति** । प्रधाने ईप्सिततमे इत्यर्थः । प्रधानाप्रधानसन्निधौ प्रधानस्यैवाभिधानस्य न्याय्यत्वात् । अथ वाऽपरः कथितस्यैवाभिधानं मन्यते, अकथितस्य तु कारकत्वाभावादभिधानासंभवमवैति । यद्वक्ष्यति **षष्ठीं कुर्यात्तदा गुणे इति** ।

**( उद्द्योतः )** सूत्रासंगतिवादिन उत्तरम्—**कथित इति** । कर्तुरीप्सिततममित्यादिना कृतकर्मसंज्ञे इत्यर्थस्तद्व्याचष्टे—**प्रधाने इति** । तत्र हेतुमाह—**प्रधानेति** ॥ **कारकत्वाभावादिति** । कर्त्रादिषट्कान्यतमत्वाभावादित्यर्थः । इदं तु सूत्रं मूकमेवापूर्वविधावित्युक्तेरिति भावः ॥

**( आक्षेपभाष्यम् )**

**कथिते लादिभिरभिहिते गुणकर्मणि का कर्तव्या ? ॥**

**( उद्द्योतः )** सर्वोदाहरणवादी एतत्सूत्रोदाहरणत्वेन संमते गुणकर्मणि का कर्तव्येतिसूत्रासंगतिवादिनं पृच्छति—**कथिते लादिभिरिति** ॥

**( ११०० समाधानवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात्तदा गुणे ॥ * ॥

**( भाष्यम् ) कथिते लादयश्चेत्स्युः षष्ठी गुणकर्मणि तदा कर्तव्या । दुह्यते गोः पयः, याच्यते पौरवस्य कम्बल इति ।**

**( उद्द्योतः )** सूत्रासंगतिवादी किं गवादि तवापादानत्वादिना न विवक्षितमुत विवक्षितमिति विकल्प्याद्ये आह—**षष्ठीमिति** । **गुणे** तत्र गुणकर्मत्वेनाभिमते ॥ यदि तूदाहरणत्रयमस्य वादिनोऽभिमतं स्यात्तदा पौरवस्य याच्यते इति षष्ठीकरणमसंगतम् , अनेन कर्मत्वे शेषत्वाभावादिति बोध्यम् ॥

**( आक्षेपभाष्यम् )**

**कथम् ? ॥**

**( ११०१ समाधानवार्तिकम् ॥ २ ॥ )**

## ॥ * ॥ अकारकं ह्यकथितात्[2] ॥ * ॥

**( भाष्यम् ) अकारकं ह्येतद्भवति ॥ किं कारणम् ? ॥ अकथितत्वात् ॥**

**( प्रदीपः ) अकारकमिति** । अपादानादिष्वेव विशेषेषु कारकत्वं सामान्यं स्थितं न तु विशेषरहितस्य सामान्यस्य स्थितिरस्तीति भावः ॥

**( उद्द्योतः )** षष्ठ्यां हेतुमाह—**अकारकं हीति** ॥ **अकथितादिति** । भावप्रधानो निर्देशः । कचिदकथितत्वादित्येव पाठः । अपादानादिषड्रूपत्वाभावात्कारकशेषत्वमित्यर्थः ॥ अस्य सूत्रस्यासंगत्याऽनेन कर्मत्वस्याप्राप्तेरिति भावस्तदेवाह—**अपादानादिष्वेवेति** ॥

**( ११०२ व्यतिरेकवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ कारकं चेत्तु नाकथा ॥ * ॥

**( भाष्यम् ) अथ कारकं नाकथितम् ।**

**( उद्द्योतः )** एतदेव व्यतिरेकमुखेनोपपादयति—**भाष्ये कारकं चेत्तु नाकथेति** ॥ एवं चेदं सूत्रमसंगतमेवेति भावः । अपूर्वविधावित्यस्य च पूर्वविधिविषयाभावे इत्येवार्थो न तु तद्विषयाविवक्षायामितीत्यभिमानः ॥

**( आक्षेपभाष्यम् )**

**अथ कारके सति का कर्तव्या ? ॥**

**( प्रदीपः ) अथ कारक इति** । यदा विशेषाश्रयणादस्ति सामान्यमित्यर्थः ॥

**( उद्द्योतः )** अपादानत्वादिरूपेण विवक्षारूपे द्वितीयपक्षे आह—**अथ कारके इति** ॥ तद्व्याचष्टे—**यदा विशेषेति** ॥ **अस्ति सामान्यमित्यस्य** तदा का कर्तव्येति शेषः ॥ तदा न शेषत्वमिति भावः ॥

**( ११०३ समाधानवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत् ॥ * ॥

**( भाष्यम् ) कारकं चेद्विजानीयाद्याया प्राप्नोति**

[1] कथिते । 'कथिते लादयः ॥' 'कथिते' ।

[2] 'थितत्वात्' ।

**सासा कर्तव्या । दुह्यते गोः पयः, याच्यते पौरवात्कम्बल इति ।**

(प्रदीपः) **यांयामिति** उद्देश एव वीप्सा प्रतिपन्नेति सा भवेदिति प्रतिनिर्देशे न विवक्षिता ॥ **दुह्यते गोरिति** । अपादानं गौः ॥ **याच्यते पौरवादिति** । ननूदाहरणत्रयवादी पौरवस्य कर्मत्वमिच्छत्येवेति कथं पौरवादित्युक्तम् । अत्रोच्यते—न्यायस्य समानत्वादत्राप्यपादानत्वं मन्यते । तथाहि—याच्यते पौरवात्कम्बल इत्यस्य पौरवात्कम्बल आदित्स्यत इत्यर्थः । ततो बुद्धिकृतस्यापायस्यात्र संभवः ॥

(उद्योतः) **कर्मत्वमिच्छत्येवेति** । कर्मत्वमेवेच्छतीत्यर्थः ॥ **ततो बुद्धिकृतस्येति** । एवं च सूत्रासंगतिरेवास्य मते इति भावः ॥ तस्मात्त्रीण्येवेति भाष्यं मदुक्तरीत्या व्याख्येयम् । एवं च भाष्ये षष्ठ्युच्चारणवदेवेदं पञ्चम्युच्चारणं पूर्वपक्षिणः । न त्वेतद्वलात्सिद्धान्ते याच्ञियोगे पञ्चम्यभिमतेति भ्रमितव्यम् । न याचनादेवेत्यादेः पूर्वं सिद्धान्त्युक्तित्वात् । अत एवापादानत्वं मन्यत इत्युक्तम्[1] ॥

**( ११०४ समाधानबाधपूर्वकनियमवार्तिकम् ॥ ५ ॥ )**

**॥ * ॥ कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे ॥ * ॥**

(भाष्यम्) **कथिते लादिभिरभिहिते त्वविधिरेष भवति । किमिदं त्वविधिरिति ? । तव विधिस्त्वविधिः ॥ त्वमतिः । किमिदं त्वमतिरिति ? । तव मतिस्त्वमतिरिति ॥ नैवमन्ये मन्यन्ते ॥ कथं तर्ह्यन्ये मन्यन्ते ? । गुणकर्मणि लादिविधिः सपरे । गुणकर्मणि लादयो भवन्ति सह परेण योगेन "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" इति ।**

(प्रदीपः) **कथित इति** । प्रधानकर्मणि लादिभिरभिहिते तवेयं मतिर्यदुक्तं गुणे षष्ठी भवति चतुर्थीपञ्चम्यौ चेति ॥ **तव विधिस्तव मतिरिति** । अस्वपदेन विग्रहः । त्वशब्दस्त्वन्यवाची । यथोत त्वः पश्यन्निति पस्पशायामुक्तम् । युष्मदर्थस्यापि त्वपेक्षावशादन्यत्वमस्तीत्येवमुक्तम् ॥ इदानीं न्याय्यं पक्षं दर्शयति—**गुणकर्मणीति** ॥ **लादयो** लकृत्यक्तखलर्थाः । गौर्दुह्यते पयः । गौर्दोग्धव्या पयः । गौर्दुग्धा पयः । गौः सुदोहा पयः । अनेन दुह्यादयः सर्वे एवोदाहरणानीति दर्शितम् । तत्र सन्नप्यपायो यदा न विवक्ष्यते निमित्तभावमात्रविवक्षैव तु गोस्तदानेन कर्मता । अपादानादिविशेषविनिर्मुक्तं च विद्यते कारकं यथा नटस्य शृणोतीति । यतश्च पयोर्थी प्रथमं गवि प्रवर्तते ततोऽन्तरङ्गत्वाद् दुह्यादिषु गुणकर्मणि लादयो भवन्ति । सत्यपि चान्तरङ्गत्वे गवादीनामीप्सिततमत्वाभावोऽन्यार्थत्वात् तत्र क्रियाप्रवृत्तेः । पयसस्त्वविवक्षायां गोरेवेप्सिततमत्वम् । यथोक्तमपादानमुत्तराणि[2] । गां दोग्धीति । पयोविवक्षायां च प्राधान्येऽप्यन्तरङ्गत्वाद्गुणे लादयः । उक्तं च—

**गुणकर्मणि लादिविधिः पूर्वं[3] गुणकर्मणा भवति योगात् ।**

**'मुख्यं कर्म प्रेप्सुर्यस्माद्गव्येव यतते प्राक् ।**
**तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव संबन्धः ॥**
**गोदुहिना पयसस्तु प्राक् तस्माल्लादयस्तस्मिन्'**

इति । अपादानविवक्षायां तु पञ्चमी भवति—गोर्दुह्यते पय इति । यदा तु पयोविशेषणत्वेन गोर्विवक्षा तदा षष्ठी गोः पयो दोग्धीति । माणवकाय धर्मं ब्रूत इत्यपि भवति, यदा धर्मेण कर्मणा माणवकस्याभिप्रेयमाणत्वं लक्ष्यते । तदविवक्षायां त्वनेन कर्मत्वम् ॥ **सपर इति** । उत्तरसूत्रेऽप्ययमेव विधिरित्यर्थः । बोध्यते माणवकं धर्मः, श्राव्यते माणवकं श्लोकः, भोज्यते माणवकमोदन इति । प्रयोजकव्यापारेणाप्यमानत्वान्माणवकस्य प्राधान्यं धर्मादेस्तु गुणभावः ॥

(उद्योतः) सर्वोदाहरणवाद्याह—भाष्ये—**कथितेऽभिहिते इति** । प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि त्वस्यान्यस्य षष्ठ्यादेर्विधिरिति त्वस्यान्यस्य संसारविलक्षणस्य मतिरित्यर्थः ॥ **चतुर्थीपञ्चम्याविति** चतुर्थ्युक्तिर्ब्रूशासाद्यभिप्रायेण ॥ इदमुपलक्षणं व्रजमवरुणद्धीत्यत्र सप्तम्यपीति बोध्यम् ॥ ननु तव विधिरित्यसंगतमत आह—**अस्वपदेनेति** ॥ युष्मच्छब्दोऽप्यहंकारानास्पदचेतनत्वेनान्यमेवाहेत्याह—**युष्मदर्थस्येति** ॥ तद् ध्वनयन्वक्ष्यति—भाष्ये—**नैवमन्ये मन्यन्त इति** ॥ **अनेनेति** । परसूत्रसहितैतत्सूत्रविषये दुहादौ ॥ **गुणकर्मणी**त्याचार्योक्त्याऽप्रधाने दुहादीनामित्याचार्यान्तरोक्त्या च सर्वेषामेवैतदुदाहरणत्वम् । अपूर्वविधावित्यस्य च पूर्वविधिविषयाभावे तद्विषयाविवक्षायां चेत्यर्थं इति भावः ॥ अत्र गुणकर्मत्वं प्रधानकर्मभिन्नत्वम् । प्रधानकर्मत्वं प्रधानकर्तृनिष्ठव्यापारजन्यफलाश्रयत्वम् ॥ तद्भेदश्चैकव्यापारार्थकदुहादिष्वनेन कर्मत्वे फलाश्रयत्वाभावाद् । ण्यन्ते तु धर्मादेः प्रधानकर्तृव्यापारजन्यफलाश्रयत्वाभावादिति बोध्यम् । ये तूद्देश्यत्वानुद्देश्यत्वरूपे व्यापारद्वयजन्यफलाश्रयत्वतदभावरूपे वा प्राधान्याप्राधान्ये वदन्ति, तेषां दुहादीनां द्व्यर्थतायामपि गवादावीदृशाप्राधान्यसत्त्वेन पयसि च प्राधान्यसत्त्वेन तदादायैवैतदुपपत्तावस्य भाष्यस्य सर्वोदाहरणत्वतात्पर्यानुपपत्तिरेवेति दिक् ॥ **निमित्तभावमात्रविवक्षेति** । क्रियाजनकत्वमात्रविवक्षेत्यर्थः ॥ परिगणनफलं दर्शयति—**अपादानादिविशेषेति** ॥ **गुणकर्मणि लादिविधि**रित्यर्थस्य न्यायसिद्धत्वं दर्शयति—**यतश्चेति** ॥ नन्वेवं पूर्वेणैव सिद्धं स्यादत आह—**सत्यपि चेति** । वस्तुत ईप्सिततमत्वसत्त्वेऽपि न क्षतिः ॥ **आकडारसूत्रस्थभाष्योपपत्तिश्च प्रागुक्तैवेति न विस्मर्तव्यम्** । किं च विभागजसंयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वं तदुदाहरणे आवश्यकमुभयोः प्राप्तये । तत्र विभागस्य संबन्धिद्वयाकाङ्क्षत्वेन पयसोऽविवक्षेति वक्तुमप्यशक्यम् ॥

---

१ न त्वस्तीति इति शेषः । ( र. ना. )

२ कारकाणि बाधन्ते इति शेषः । ( र. ना. )

३ पूर्वं गुणकर्मणा गवादिना दुह्यादेर्योगाद् गुणकर्मणि लादिविधिरिति योजना । ( र. ना. )

प्रसिद्धेरप्रयोग इति त्वन्यत् । किं च व्यापारद्वयार्थत्वे मुख्यगोपालव्यापारजन्यफलाश्रयत्वरूपं गोः प्राधान्यमादाय तत्रैव कर्मणि लादयः । तच्च **प्रधानकर्मण्याख्येये** इत्यादिना वक्ष्यति ॥ यदा त्वेकव्यापारार्थत्वं दुहादीनां तदाऽनेन कर्मत्वे तादृशप्राधान्यस्य गव्यभावात् तत्र लाद्यप्राप्तौ **गुणकर्मणि लादय** इत्युक्तम् , गम्यते ग्रामं देवदत्त इत्यादौ देवदत्तस्य मदुक्तमेव प्रधानकर्मत्वमिति दिक् ॥ **अन्तरङ्गत्वादिति** । प्रधानन्यायान्तरङ्गन्याययोः समत्वाद् ॥ **गतिबुद्धीतिसूत्रस्य** नियमत्वपराद्धेतुमति चेतिसूत्रस्थभाष्यादन्तरङ्गन्यायात्प्रधानन्यायस्य वलवत्त्वाच्चास्यार्थस्य वाचनिकत्वमेवेत्यपरे ॥ **उक्तंचेति** । हरिणेति शेषः[1] ॥ **पूर्वंगुणकर्मणे**-त्यस्य यत इति शेषः । एवं गुणकर्मयोगे हेतुमाह—**मुख्यं कर्मेति** । **शुद्धस्य दुहेः** पयोनन्वितस्य दुहेः ॥ तदेवाह—**पूर्वमेवेति** । पयःसंवन्धात्पूर्वमेवेत्यर्थः ॥ **गोदुहिना** गवान्वितदुहिना[2] । तु यतः प्राक्[3] गवा संवन्धस्तस्मात्तस्मिन् लादय इत्यर्थः ॥ **उत्तरसूत्रे इति** । गतिबुद्धीतिसूत्रे ह्रक्रोरितिसूत्रे चेत्यर्थः ॥ **अयमेव विधिरिति** । अयमेव प्रकार इत्यर्थः ॥ **माणवकस्य प्राधान्यमिति** । एवं च प्रयोज्यव्यापारजन्यफलाश्रयो गुणकर्मेत्यर्थः ॥

( ११०५ नियमवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ ध्रुवचेष्टितयुक्तिषु[4] चाप्यगुणे[5] तदनल्पमतेर्वचनं स्मरत ॥ * ॥

( भाष्यम् ) **ध्रुवयुक्तिषु चेष्टितयुक्तिषु चाप्यगुणे कर्मणि लादयो भवन्तीत्येतदनल्पमतेराचार्यस्य वचनं स्मर्यताम्** ॥

( प्रदीपः ) **ध्रुवेति** । **अगुणे** प्रधानकर्मणि । **ध्रुवयुक्तिष्वकर्मकेषु चेष्टितयुक्तिषु च** गत्यर्थेषु च लादयो भवन्ति । पूर्वाचार्यप्रसिद्ध्या ध्रुवयुक्तयोऽकर्मका उच्यन्ते । तेषां हि क्रिया स्वात्मन्येवावस्थिता न तु कर्मार्था । तत्र ध्रुव इव ध्रुव इति स्वात्मनिष्ठोऽकर्मको धात्वर्थ उच्यते । तेन मासमास्यते देवदत्तः शाय्यते क्रोशं देवदत्त इति प्रयोज्ये देवदत्ते प्रयोजकव्यापारस्य तत्रैव[6] पूर्वं संनिपाताल्लादयो भवन्ति । तथा गम्यते ग्रामं देवदत्त इत्यत्रापि । **अनल्पमतेरिति** । मेधाविन आचार्यस्येत्यर्थः ॥ **स्मरतेति** । आगमस्याविच्छेदमनेन दर्शयति ॥

( उद्योतः ) **स्वात्मन्येव** स्ववाँनात्मा[7] यस्य तस्मिन्कर्तरीत्यर्थः । स्वसमानाधिकरणफलार्थेति यावत् ॥ **न तु कर्मार्थेति** । न कर्मनिष्ठफलार्थेत्यर्थः ॥ **अकर्मको धात्वर्थ इति** । तेन युक्तिः संवन्धो येषामित्यर्थः ॥ एवं **चेष्टितयुक्तिपदमपि** व्याख्येयम् ॥ **तत्रैव पूर्वमिति** । अनेनान्तरङ्गत्वमपि तस्य दर्शितम् । अनया युक्त्या बुद्धिप्रत्यवसानार्थेष्वपि प्रधान एवापत्तिरित्यस्यार्थस्य वाचनिकत्वमेव युक्तम् ॥ **आगमस्य** परम्परोपदेशस्य ॥

( आचार्यान्तरोक्तिभाष्यम् )

**अपर आह—**

( ११०६ नियमवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ॥ * ॥

( भाष्यम् ) **प्रधानकर्मण्यभिधेये द्विकर्मणां धातूनां कर्मणि लादयो भवन्तीति वक्तव्यम् । अजां नयति ग्रामम् । अजा नीयते ग्रामम् । अजा नीता ग्राममिति ।**

( प्रदीपः ) आगम एवायं न स्वमतिपरिकल्पनेति दर्शयितुमाह—**अपर इति** । **अजा नीयत इति** । अजायाः प्राधान्यान्नेतुश्च तस्यामेव पूर्वं क्रियाप्रवर्तनादन्तरङ्गत्वाच्च तस्यामेव लादयः ॥

( उद्योतः ) प्रधानकर्मणि प्रवृत्तौ युक्तिमाह—**अजाया इति** । ध्रुवचेष्टितयुक्तिष्विति पूर्वश्लोकेऽपि चेष्टितयुक्तित्वेन नयत्यादीनामपि ग्रहणमिति न तस्य न्यूनता । प्राधान्यं चाजायाः कर्तृव्यापारजन्यफलाश्रयत्वात् ॥ अत्र व्यापारद्वयार्थकतया कर्तुरीप्सिततममित्यनेन येषु द्वयोः कर्मत्वं तेऽत्र द्विकर्मका उच्यन्ते । न्यादीनां च तेनैव द्विकर्मकतेति बोध्यम् ॥

( ११०७ नियमवार्तिकम् ॥ ८ ॥)

## ॥ * ॥ अप्रधाने दुहादीनाम् ॥ * ॥

( भाष्यम् ) **अप्रधाने दुहादीनां 'कर्मणि लादयो भवन्तीति वक्तव्यम्' । दुह्यते गौः पयः ।**

( ११०८ नियमवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ ण्यन्ते कर्तुश्च कर्मणः ॥ * ॥

( भाष्यम् ) **ण्यन्ते कर्तुश्च कर्मणः 'लादयो भवन्तीति [ वक्तव्यम् ]' । गम्यते यज्ञदत्तो ग्रामं देवदत्तेन ।**

( प्रदीपः ) **ण्यन्ते कर्तुश्च कर्मण इति** । कर्तुः सतो ण्यन्ते धातौ कर्मणो वाचका लादयो भवन्ति । **गतिबुद्धी**-त्यनेन यस्य प्रयोज्यस्य कर्मसंज्ञा विधीयते तस्मिन्वाच्ये सर्वेषु गत्यर्थादिषु धातुषु लादयो भवन्तीत्यर्थः । पूर्वश्लोके तु भेदेनोक्तं गत्यर्थाकर्मकेषु प्रधाने कर्मणि । बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु तु **स्मपर** इत्यनेन वचनेन लादयो गुणकर्मणि ॥ प्रयोज्यकर्मण्येव लादयो दृश्यन्त इत्येकेषां मतम् ॥ माणवकं धर्मं बोधयतीत्यादावनियतो गुणप्रधानभाव इत्याहुः । धर्मप्रतिपादनपरत्वे वाक्यस्य धर्मस्य प्राधान्यं, माणवकस्य गुणभावः । माणवकसंस्कारपरायां तु प्रवृत्तौ माणवकस्य प्राधान्यं धर्मस्य गुणभावः । तथाऽभिधानव्यापारेण प्रयोजकव्यापारस्य प्राधान्यात्प्रयोज्यस्यैव कर्मणः प्राधान्यम् । गुणभूतप्रयोज्य-

---

१ इदश्च 'योग' इति प्रथमान्तपाठमभिप्रेत्य । ( र. ना. ) २ पयसः संबन्ध इत्यर्थः । ( र. ना. ) ३ पयःसंबन्धात्प्रागित्यर्थः । ( र. ना. ) ४ ध्रुवेण कर्तृनिष्ठेन व्यापारसमानाधिकरणफलेन चेष्टितेन गत्या च युक्तिः संबन्धो येषां ते ध्रुवचेष्टितयुक्तयोऽकर्मका गत्यर्थकाश्च । ( र. ना. ) ५ च अपि अगुणे इति छेदः । ( र. ना. ) ६ प्रयोज्ये एव पूर्वं संबन्धादित्यर्थः । ( र. ना. )

७ स्ववान् स्वतन्त्र आत्मा स्वरूपं यस्येत्यर्थः । ( र. ना. ) ८ 'अयं व्याख्येयांशः सर्वेषु पुस्तकेषु नोपलभ्यते । क्वचिदेवोपलभ्यते । तत्र व्याख्येयव्याख्यानयोः समानानुपूर्वीदर्शनेन द्विर्लेखभ्रान्त्या यथाजातलेखकैर्निःसारितो भवेदिति प्रतीमः । एवमेवान्यत्रापि बोध्यम् ।

व्यापारकर्मणस्तु गुणभावः । आर्थेन तु न्यायेन प्रयोज्यव्यापारस्य प्राधान्यम् । तदर्थत्वात्प्रयोजकव्यापारस्य, तत्प्राधान्यात्तत्कर्मणोऽपि प्राधान्यमिति वदन्त आचार्याः ॥

( उद्योतः ) भाष्ये—ण्यन्ते कर्तुश्चेति । यद्यपि प्रधानकर्मणीत्यनेनैवेदं सिद्धं तथापि गुणकर्मणि लादिविधिः सपरे इत्युक्तेर्दुहादीनामित्यनेन तस्य ग्रहणमिति भ्रमवारणार्थं पुनरिदमुक्तं तच्च सामान्योक्तेर्बुद्ध्यादिविषयमपि । तद्ध्वनयन्नाह—पूर्वश्लोके त्विति । प्रधाने कर्मणि प्रयोज्यरूपे कर्मणि गुणकर्मणि प्रयोज्यनिष्ठव्यापारजन्यफलाश्रये ॥ प्रयोज्यकर्मण्येवेति । बुद्धिप्रत्यवसानार्थादिष्वपीत्यादिः ॥ एकेषां मतमिति । एवं च बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु विकल्पः फलित इति भावः ॥ तत्र विकल्पे युक्तिमाह—माणवकमित्यादिना । वस्तुत इदं सर्वं वाचनिकमिति तत्त्वम् ॥ अभिधानव्यापारेणेति । शाब्देनेत्यर्थः । एतच्च द्वैविध्यं गत्यर्थण्यन्तव्यतिरिक्तविषयमिति नातिप्रसङ्गः ॥ इदमत्रावधेयम्—अकर्मकव्यतिरिक्तहृक्रप्रकृतिकण्यन्तयोर्हारयतिकारयत्योर्द्विकर्मकत्वे पूर्वमते गौणे प्राप्नोति । अपर आहेति मते प्रधाने प्राप्नोतीत्यत्रापि विकल्प एवेत्येके ॥ अन्ये तु ध्रुवचेष्टितयुक्तिषु चापीत्यत्र चकारेण चेष्टितयुक्तिपतेन हृक्रोर्ग्रहणेन वा तयोरपि प्रयोज्यकर्मण्येवेत्याहुः ॥ अत्र निश्चयो बहुद्रष्टृभिः कार्यः ॥

( द्विकर्मकधातुनिर्णयाधिकरणम् )

( अनुयोगभाष्यम् )

**के पुनर्धातूनां द्विकर्मकाः ? ।**

( प्रदीपः ) दुह्यादिपरिगणनादन्यत्र द्विकर्मकत्वं न प्राप्नोति दृश्यते चेति मत्वा पृच्छति—के पुनरिति ॥

( उद्योतः ) ननु दुहादिव्यतिरिक्ता द्विकर्मका अप्रसिद्धा इति प्रधानकर्मणीत्याद्यसंगतमित्याशयेन पृच्छति—के पुनरिति ॥

( समाधानभाष्यम् )

**नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।**
**द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥ १ ॥**

**अजां नयति ग्रामम्, भारं वहति ग्रामम्, भारं हरति ग्रामम् ॥ गत्यर्थानाम्—गमयति देवदत्तं ग्रामम्, यापयति देवदत्तं ग्रामम् ॥**

( प्रदीपः ) गत्यर्थानामिति । उत्तरसूत्रोपात्तधातूपलक्षणं गत्यर्थग्रहणम् ॥ तथैव चेति । चकारेण जयत्यादयः समुच्चीयन्ते इत्याहुः ॥ शतं जयति देवदत्तम् । शतं मुष्णाति देवदत्तम् । शतं दण्डयति देवदत्तम् ॥

( उद्योतः ) नीत्यादि । इदं व्यापारद्वयार्थकधातूपलक्षणम् । एषां च कर्तुरीप्सिततममिति द्विकर्मकत्वम्, न त्वेषां दुह्यादिषु पाठे मानमस्ति । एवं च जिदण्ड्यादीनामपि सिद्धं द्विकर्मकत्वम् । अत्र प्रधानव्यापारजन्यफलाश्रयत्वरूपप्रधानकर्मत्वाद्विवदन्त्यादौ लादिः । उद्देश्यतालक्षणं प्राधान्यं तु शतस्येति अनुद्देश्यगर्गानुरोधाद् नोद्देश्यशतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोध इत्याहुः ॥

( ११०९ द्विकर्मकत्वबाधकवार्तिकम् ॥ १० ॥ )

**॥ * ॥ सिद्धं वाप्यन्यकर्मणः ॥ * ॥**

( भाष्यम् ) **सिद्धं वा पुनरेतद्भवति ॥ कुतः ? । अन्यकर्मणः । अन्यस्यात्राजा कर्म, अन्यस्य ग्रामः । अजामसौ गृहीत्वा ग्रामं नयति ।**

( प्रदीपः ) सिद्धं वेति । अन्यस्याश्रूयमाणस्य क्रियाविशेषस्य कर्मणः संभवादित्यर्थः । अथ वा कर्मशब्देन कर्मत्वमुच्यते । अन्यकर्मत्वादित्यर्थः । विभाषा गुण इति पञ्चमी । यथा प्रविश पिण्डीमिति भक्षणापेक्षं पिण्ड्याः कर्मत्वम्, तथाऽजां ग्रामं नयतीत्यत्र ग्रहणापेक्षमजायाः कर्मत्वम् । नयतिस्तु प्राप्तिमात्रवाची । तेनाजां गृहीत्वा ग्रामं प्राप्नोतीति वाक्यार्थः संपद्यते ॥

( उद्योतः ) भाष्ये—ऽन्यस्येति । अश्रूयमाणस्य ग्रहणादेरित्यर्थः । व्यधिकरणे षष्ठ्यौ ॥

( १११० द्विकर्मकत्वसाधकवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ अन्यकर्मेति चेद् ब्रूयाल्लादीनामविधिर्भवेत् ॥ * ॥**

( भाष्यम् ) **अन्यकर्मेति चेद् ब्रूयाल्लादीनामविधिरयं भवेत् । अजा नीयते ग्राममिति । परसाधन उत्पद्यमानेन लेनाजाया अभिधानं न प्राप्नोति ॥**

( प्रदीपः ) परसाधन इति । नीयते इति नयतेः परेण लकारेण नयतिकर्मैवाभिधानीयम् । ग्रहणस्य त्वजा कर्म, न नयतेरिति कथं सा लेनाभिधीयते, तस्मादन्यकर्मत्वमजाया नैष्टव्यम् ॥

( उद्योतः ) परसाधने इति । नयतिसाधने ग्रामादावित्यर्थः । तदयं निष्कर्षः—

"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।
बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ।
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।
हृक्रोर्निजेच्छया किं वा प्रयोज्ये बहुदर्शिभिः ।
लक्ष्यं दृष्ट्वा निर्णयोऽत्र कर्तव्यो भाष्यपारगैः"रिति ॥

( न्यूनतापूरकाधिकरणम् )

( ११११ न्यूनतापूरकवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ॥ * ॥**

( भाष्यम् ) **कालभावाध्वगन्तव्या अकर्मकाणां धातूनां कर्मसंज्ञा भवन्तीति वक्तव्यम् ॥ काल—मासमास्ते । मासं स्वपिति ॥ भाव—गोदोहमास्ते । गोदोहं स्वपिति ॥ अध्वगन्तव्य—क्रोशमास्ते । क्रोशं स्वपिति ॥**

---

१ प्रयोज्यव्यापारस्य प्राधान्यादित्यर्थः । ( र. ना. ) २ ननु वृद्धिसूत्रे भाष्ये शतस्यैव प्राधान्यमुक्त्वा प्रधानशतानुरोधेन गर्गावृत्तिर्न तु अप्रधानगर्गानुरोधेन शतावृत्तिरित्युक्तं तद्विरुध्यते इत्यत आह । ( र. ना. ) ३ अन्यस्य कर्मण इत्यादिः । ( र. ना. ) ४ ग्रहधात्वपेक्षयाऽन्यधातुकर्मणि उत्पद्यमानेनेत्यर्थः । ( र. ना. )

( प्रदीपः ) **कालेति** । मासादय एव कालवाचित्वेन लोके प्रसिद्धाः न तु गोदोहनपानादय इति सत्यपि भावस्य कालत्वे पृथगुपादानं कृतम् ॥ निर्ज्ञातपरिमाणा हि क्रिया अनिर्ज्ञातपरिमाणायाः क्रियायाः परिच्छेदायोपादीयमाना मासगोदोहादिशब्दवाच्या काल इति दर्शनम् ॥ अध्वा चासौ गन्तव्योऽध्वगन्तव्यः । अत एव निपातनाद् विशेषणस्यापि परनिपातः । गन्तव्यतया लोके यः प्रसिद्धः क्रोशयोजनादिर्नियतपरिमाणः तस्यैव कर्मत्वं नान्यस्येत्यध्वानं स्वपितीति न भवति ॥ केचिद्**ध्वगत्यन्ता** इति पठन्ति । तत्रायमर्थः—गतेरन्तो निष्ठा निश्चयो वा येषु ते गत्यन्ताः क्रोशयोजनादयः । अध्वनो गत्यन्ता इति षष्ठीसमासः ॥ **कर्मसंज्ञा हीति** । ननु **कालाध्वनोरि**ति द्वितीया सिद्धेति किं कर्मसंज्ञया । गोदोहादीनां कालत्वेनाप्रसिद्धत्वाद् द्वितीया न प्राप्नोतीति भावस्य तावत्कर्मसंज्ञा विधेया । कालाध्वनोरपि लादिविधानार्थं कर्मत्वमेषितव्यम् । आस्यते मासः । आसितव्यो मासः । आसितो मासः । स्वासो मासः । एवं शय्यते क्रोश इत्यादि द्रष्टव्यम् ॥ यदा त्वङ्गीकृतसकर्मकधात्वन्तरार्थे आसनादावास्यादयो वर्तन्ते तदा पूर्वेणैव कर्मत्वं सिद्धम् । तथाहि—मासमास्त इत्यस्यायमर्थः । मासमासनेन व्याप्नोतीति । तथा च वक्ष्यति—[१]**प्राकृतमेवेदं कर्म यथा कटं करोतीति** । अत्र दर्शने न केवलकर्मकाणां कालादयः कर्मत्वं प्रतिपद्यन्ते अपि तु सकर्मकाणामपि । न्यायस्य तुल्यत्वात् ॥

( उद्द्योतः ) नन्वकर्मकाणां ण्यर्थकर्मसत्त्वेऽपि द्विकर्मकत्वाभावाद् ध्रुवयुक्तिष्वगुण इत्यसंगतमतो भाष्ये **कालेति** ॥ ननु गोदोहादीनामपि कालत्वादेव सिद्धिरत आह—**मासादय एवेति** । गोदोहमास्ते इत्यस्य यावन्तं कालं गौर्दुह्यते तावदास्ते इत्यर्थः ॥ **पानादय इति** । गवामित्यादिः । गोपानमास्त इत्यस्य यावत्कालं गावो जलं पिबन्ति तावदास्ते इत्यर्थः ॥ क्वचित्पाकादय इति पाठः ॥ **निर्ज्ञातपरिमाणेति** । इदं कालाः **परिमाणिने**ति सूत्रस्थभाष्यविरुद्धम् ॥ **लादिविधानार्थमिति** । अनत्यन्तसंयोगे द्वितीयार्थमित्यपि बोध्यम् । द्वितीयाविधानमपि मासं गुडधाना इत्यादावक्रियायोगे चरितार्थम् । इदमपूर्वकर्मसंज्ञाविधायकमिति मत्वाह—**यदा त्विति** ॥ **पूर्वेणैव कर्तुरीप्सिततमं कर्मेत्यनेन** ॥ **वक्ष्यतीति** । **कालाध्वनोरिति सूत्रे इति शेषः** । **यथा कटमिति** दृष्टान्तेन कर्तुरित्येव तत्र प्राकृतशब्देन विवक्षितमिति भावः ॥ अस्य प्रकारस्यावश्यकत्वमित्याह—**सकर्मकाणामपीति** । न चेयमपि कल्पनाऽकर्मकविषयैव न सकर्मकविषयेति वाच्यम् । अनया रीत्या सकर्मकाकर्मकसाधारणकालाध्वनोरित्यतद्विषयस्य **न तर्हीदानीमिदं** वाच्यमिति प्रश्नस्य **यत्राक्रियया**ऽत्यन्तसंयोगस्तदर्थमित्युत्तरस्य च **कालाध्वनोरि**तिसूत्रभाष्यस्यासंगत्यापत्तेः । इष्यते च मासमधीते इत्यादौ कालस्य कर्मत्वम् । अनया रीत्याऽकर्मकधातुयोगे कटादीनां कर्मत्वं तु नापाद्यमनभिधानादित्याहुः ॥ वस्तुतोऽनयैव कल्पनयैषां सकर्मकत्वम् , न त्वत्रत्यमिदं वचनं विधायकं, हिशब्दयोगात् । व्याख्यानभाष्यस्यापि कालादयोऽकर्मकधातूनां कर्मसंज्ञा यथा भवन्ति तथा धात्वर्थरूपं वक्तव्यमुक्तमित्येवार्थ इति ध्रुवयुक्तिष्वगुण इति सम्यगेवेत्यर्थ इति युक्तमाभाति । अन्यथा वचनस्य यदा त्वित्यादिनोक्त्या कालाध्वनोरितिसूत्रभाष्यसंमतया रीत्या प्रत्याख्याने आरम्भप्रत्याख्यानयोः फलभेदापत्तिः । आरम्भेऽपि तदावश्यकत्वेनारम्भपरतयैवैतद्ग्रन्थव्याख्याया ज्यायस्त्वात् ॥

( १११२ न्यूनतापूरकवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ देशश्च ॥ * ॥

( भाष्यम् ) **देशश्चाकर्मकाणां कर्मसंज्ञो भवतीति वक्तव्यम् । कुरून्स्वपिति पञ्चालान्स्वपिति ॥**

( प्रदीपः ) **देशश्चेति** । संस्त्यायविशेषः कुरुपञ्चालादिर्देश इह गृह्यत इति भाष्ये उदाहरणाद्विज्ञायते ॥

( उद्द्योतः ) **संस्त्यायविशेषः** ग्रामादीनां समूहविशेषः ॥

( पूर्वाचार्यकृतसंज्ञानिराकरणाधिकरणम् )

( कल्मसंज्ञाभाष्यम् )

**विपरीतं तु यत्कर्म तत्कल्म कवयो विदुः ।**
**किमिदं कल्मेति ? । अपरिसमाप्तं कर्म कल्म । न वा अस्मिन्सर्वाणि कर्मकार्याणि क्रियन्ते ॥ किं तर्हि ? ॥ द्वितीयैव ॥**

( प्रदीपः ) इदानीमकथितस्य पूर्वाचार्यकृतं संज्ञान्तरं दूषयितुमुपन्यस्यति—**विपरीतमिति** । कर्मधर्माणां विपर्यस्तत्वाद्विपरीतमुच्यते । ईप्सिततमं द्वेष्यमितरच्चेति पूर्वं त्रिविधं कर्म निर्दिष्टमिदं तद्विपरीतम् । कपिलकादित्वाच्च लत्वे कल्मेति भवति ॥ **अपरिसमाप्तमिति** । ईप्साप्रकर्षाभावादित्यर्थः ॥ **नवेति** । लकृत्यक्तखलर्थानामविधानात्, **प्रधानकर्मण्यभिधेय** इति पूर्वमुक्तत्वात् ॥ दुहादीनां त्वप्रधानकर्मणि लादिविधानात्तुच्छ एवायं पक्षः । तथा च परस्ताद्दूषयिष्यते ॥

( उद्द्योतः ) **इतरदिति** । उदासीनमित्यर्थः ॥ **इदं तद्विपरीतमिति** । धात्वर्थफलाश्रयत्वाभावादिति भावः ॥ श्लोकस्थविपरीतशब्दं व्याचष्टे—भाष्ये **अपरिसमाप्तमिति** । अपरिसमाप्तत्वं व्याचष्टे—**नवेति** ॥ **कल्मकर्मणोर्द्वितीयेति** कार्यम् । अत्र पक्षे ईप्साप्रकर्षाभावादपरिसमाप्तत्वं तु न युक्तमुदासीनेऽपि तथात्वापत्तेः । भीष्येन्यस्यैवोक्तेश्च ॥ सर्वकर्मकार्याभावे हेतुमाह—**प्रधानकर्मणीति** । कथिते लादय इति येनोक्तं स एवायं वादीति भावः ॥ तदेतत्स्वयं दूषयति—**दुहादीनां चे**त्यादिना ।

( विपरीतकर्मलक्षणभाष्यम् )

**यस्मिंस्तु कर्मण्युपजायतेऽन्यद्धात्वर्थयोगापि च यत्र षष्ठी ।**
**तत्कर्म कल्मेति च ।**

---

१ प्रकृतमेव प्राकृतम् । प्रज्ञादित्वात्स्वार्थेऽण् । ( र. ना. ) २ 'तद्दर्शने' । ३ 'युज्यते' । ४ सकर्मकेष्वित्यादिः । ( र. ना. ) ५ 'भाष्योदा' । ६ सर्वकर्मकार्यपरिसमाप्तिशून्यमित्यर्थः । ( र. ना. ) ७ निरस्तत्वात् । अभावादिति यावत् । ( र. ना. ) ८ 'चाप्रधा' । ९ कर्मणि द्वितीयेत्यस्य स्थाने इति शेषः । ( र. ना. ) १० विपरीतं तु यत्कर्मेत्यनेनेति शेषः । ( र. ना. )

(प्रदीपः) तस्यैव विपरीतकर्मणो लक्षणं दर्शयति—**यस्मिंस्त्विति**। यस्मिन् गवादौ कर्मणि सत्यन्यत्पयःप्रभृत्युपजायते तत्कर्म कल्म॥ **धात्वर्थयोगेति**। धातुशब्देन धात्वर्थ उच्यते। तस्यार्थः प्रयोजनं पयःप्रभृति तेन योगो यस्याः सा षष्ठी यत्र भवति गोर्दुह्यते पयः पौरवस्य कम्बलो याच्यत इति। प्रधाने तु न भवति षष्ठी दुह्यते पयसो गौरिति॥

(उद्योतः) अन्यत्पयःप्रभृतीति। ननु पौरवं विनापि गोरुपजननात्तत्राव्याप्तमिदं, याचादिकर्मत्वविशिष्टस्य तत्सत्त्वे एवोपजननेनादोषात्। एवं चोपजायत इत्यस्य प्रकृतधात्वर्थकर्मताविशिष्टमित्यर्थः॥ **तेन योग इति**। तेन योगो वाच्यो यस्याः सा षष्ठीत्यर्थः। धात्वर्थव्यापारप्रयोजनफलविशिष्टपयआदिनिरूपितसंबन्धार्थिका यत्र षष्ठीत्यर्थः[१]। एवं च दुहादियोगे पयसो गव्यन्वयं कृत्वा षष्ठीप्रयोगो न दृश्यते किं तु गोः पयस्यन्वये सा दृश्यते इति भावः॥

(कल्मलक्षणानावश्यकताभाष्यम्)

**कल्म नोक्तं, धातोर्हि वृत्तिर्न रलत्वतोऽस्ति॥**

(प्रदीपः) इदानीं संज्ञान्तरमनारभमाण आह—**कल्म नोक्तमिति**। यस्मात्तत्कर्मैव तस्मात् पृथक्कल्मेति नोक्तमस्मिन् शास्त्रे, दुहादीनामप्रधाने कर्मणि लादिदर्शनात् सर्वकर्मकार्योपपत्त्याऽपरिसमाप्तत्वाभावाद् भेदेन च कल्मसंज्ञाविधाने कर्मकार्याप्रसङ्गादिति भावः॥ **धातोर्हि वृत्तिरिति**। रेफस्य लत्वमात्रेण धातोरर्थान्तरे वृत्तिर्नास्तीत्यर्थः॥ क्वचित्तु पाठः **धातोर्निवृत्तिरिति**। तत्रायमर्थः—धातोः करोते रेफस्य लत्वमात्रेण स्वार्थान्निवृत्तिर्नास्तीति। एतदुक्तं भवति—वर्णविकारेपि कृते कर्मकल्मशब्दयोः पर्यायतैव। यथा पांसुरपांसुलशब्दयोः तत्र किं संज्ञाभेदेनेत्यर्थः॥

(उद्योतः) **कर्मकार्येति**। द्वितीयादीत्यर्थः॥ **रलत्वत इति**। सार्वविभक्तिकस्तसिः। रस्य लत्वमात्रेणेत्यर्थः॥

(आक्षेपभाष्यम्)

**एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन।**
**तत्रेप्सितस्य किं स्यात् प्रयोजनं कर्मसंज्ञायाः॥**

(प्रदीपः) **एतेनेति**। अकथितं कर्मेत्येवास्तु माभूत्पूर्वसूत्रद्वयम्। तद्विषयेऽनेनैव कर्मसंज्ञायाः सिद्धत्वात्। परिगणनं च न करिष्यत इति प्रश्नार्थः॥

(उद्योतः) ननु परिगणनस्य सत्त्वात्सर्वत्र न सिध्यतीत्यत आह—**अकथितमित्यादि**। एवं चाकथितेन अकथितं चेति सूत्रेणैव सर्वा सर्वविषया कर्मसंज्ञा सिद्धा किं पूर्वसूत्रद्वयेनेति श्लोकार्थः। अनेन सूत्रत्रयविहितसंज्ञासंज्ञिनी शक्तिरेकैवेति सूचयति। आद्यसूत्रद्वये फलाश्रयताजनकतोभयसमानाधिकरणा, इहतु जनकतामात्रसमानाधिकरणेत्यन्यत्॥

(समाधानभाष्यम्)

**यत्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थम्। ईप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेन॥**

(प्रदीपः) **यत्त्विति**। यवेभ्यो गा वारयतीति गवां कथितत्वात्कर्मसंज्ञा न स्याद् **वारणार्थानामि**त्यपादानसंज्ञैव तु स्यादिति **कर्तुरीप्सिततम**मित्यारब्धम्। तस्मिन्नारब्धे अनीप्सितस्य कर्मसंज्ञा न प्राप्नोतीति **तथायुक्त**मित्यारब्धव्यम्[२]॥ ननु तथायुक्तस्यानेन भविष्यति। नैतदस्ति। दुह्यादिपरिगणनं नटस्य शृणोतीत्यादावतिप्रसङ्गनिवृत्त्यर्थमवश्यं वक्तव्यम्[३]॥ **ईप्सितयुक्तं चेति**। ईप्सितेन यवादिना युक्तं यद्गवादि वार्यमाणं तस्य कर्मसंज्ञासिद्ध्यर्थं पूर्वसूत्रं कर्तव्यमित्यर्थः। चशब्दात्कर्मापादानसंज्ञयोर्विषयविभागसिद्ध्यर्थं चेत्युक्तं भवति॥ **ईप्सितमेवेति**। अवधारणेनेप्साप्रकर्षाभावं दर्शयति॥ **अकथितेनेति**। सूत्रैकदेशानुकरणमेतत्। अनेन सूत्रेणेत्यर्थः॥

(उद्योतः) उत्तरमाह—**यत्त्विति**। यत्पुरस्ताद्वारणार्थानामिति सूत्रेण कीर्तितं यदीप्सितेन यवादिना युक्तं गवादि तस्य संज्ञार्थमाद्यं सूत्रमावश्यकमित्यर्थः। तद्व्याचष्टे—**यवेभ्य इत्यादिना**॥ **अवश्यं कर्तव्यमिति**। सति परिगणने ओदनं पश्यतीत्याद्यसिद्धेः पूर्वयोगारम्भ आवश्यकः। परिगणनत्वं चास्याख्यातोपयोग इति सूत्रे भाष्ये उक्तम्॥ ननु वारणार्थानामीप्सित इत्यनेनेप्सितस्यापादानत्वेऽपीप्सिततमस्याकथितत्वात्सिध्यत्येवानेन कर्मत्वमित्यतो भाष्ये चेति। तद्व्याचष्टे—**चशब्दादिति**। **विषयविभागेति**। विशेषेति पाठान्तरम्॥ ईप्सितमपादानत्वविषय ईप्सिततमं कर्मत्वस्य विपरीतं वेत्यत्र विनिगमकाभावादिति भावस्तदेवाह—भाष्ये **ईप्सितमेव त्वित्यादिना**। विनिगमनाविरहेणेप्सितस्यैव कर्मत्वमीप्सिततमस्यैवापादानत्वं स्यादिति भावस्तदेवाह—**अवधारणेनेति**। एतेनैतद्भाष्यबलेनाकथितं चेति सूत्रे ईप्सिततममित्यनुवर्त्य फलाश्रयस्यैवानेन कर्मसंज्ञां वदन्तः परास्ताः॥

(आक्षेपभाष्यम्)

**अथेह कथं भवितव्यम्—नेताश्वस्य स्रुघ्नम् इति। आहोस्वित्-नेताश्वस्य स्रुघ्नस्येति॥**

(प्रदीपः) **अथेहेति**। प्रधाने **कर्मण्यभिधेये लादीनाहुरि**त्युक्तम्। तत्र लादिग्रहणेन किं षष्ठ्यपि गृह्यते उत न। यद्यादिशब्दो व्यवस्थायां तदा **लः कर्मणि च भावे चाकर्मकेभ्यस्तयोरेव कृत्यक्तखलर्था** इत्येतेषां ग्रहणं न्याय्यम्। अथ प्रकारे तदा षष्ठ्यपि लादिग्रहणेन गृह्यते इति प्रधानकर्मण्येव सा भवतीति मत्वा प्रश्नः॥

(उद्योतः) ननु लक्तक्तखलर्थवत् षष्ठ्यपि भविष्यतीत्यत आह—**प्रधाने इत्यादि**॥

(समाधानभाष्यम्)

**उभयथा गोणिकापुत्रः॥ अकथितं च॥ ५१॥**

---

१ धात्वर्थव्यापारप्रयोजनीभूतं धात्वर्थफलविशिष्टं यत्पयआदि तन्निरूपितसंबन्धार्थिकेत्यर्थः। (र. ना.) २ 'रब्धम्'। ३ 'कर्तव्यम्'।

( प्रदीपः ) उभयथेति । गुणकर्मणि षष्ठीद्वितीयादर्शनादुभयमपि स्मर्यते । वाचनिकं चेदं न तु न्याय्यम् । यत्र ह्येकेनैव शब्देन भिन्नकक्ष्योर्गुणप्रधानयोः कर्मणोरभिधानं न संभवति तत्र प्रधानकर्मण्येवाभिधानं न्याय्यम् । षष्ठी तु पृथग्गुणप्रधानाभ्यां द्वितीयावद्विधीयते विरोधाभावादुभाभ्यां प्राप्ता शिष्टस्मरणाद्गुणकर्मणि विकल्प्यते ॥ ५१ ॥

( उद्द्योतः ) ननु षष्ठीवत्तदभावस्य न्यायेनाप्राप्तेरुभयथेत्ययुक्तमत आह—गुणकर्मणीति ॥ ननु लादिवत् षष्ठ्यपि प्रधानकर्मण्येव न्याय्येत्यत आह—यत्र हीति ॥ गोणिकापुत्रो भाष्यकार इत्याहुः ॥ ५१ ॥

( १९२ कर्मसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. १७ सू. )

## २९२ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥ ५२ ॥

( शब्दकर्मशब्दार्थनिर्णयाधिकरणम् ॥ )

( आक्षेपभाष्यम् )

**शब्दकर्मेति कथमिदं विज्ञायते—शब्दो येषां क्रियेति, आहोस्विच्छब्दो येषां कर्मेति ? ॥**

( प्रदीपः ) गतिबुद्धि ॥५२॥ कथमिति । कर्मशब्देन क्वचित् क्रिया गृह्यते यथा—कर्तरि कर्मव्यतिहार इति । क्वचित्तु साधनं कर्म यथा—वेः शब्दकर्मण इति । ततश्चोभयथा व्यवहारदर्शनात् संशयानः पृच्छति ॥

( उद्द्योतः ) गतिबुद्धि ॥ ५२ ॥ ननु कृत्रिमत्वात् कर्मकारकस्यैव ग्रहणमुचितमत आह—कर्मशब्देनेति ॥

( प्रत्याक्षेपभाष्यम् )

**कश्चात्र विशेषः ? ॥**

( १११३ प्रथमपक्षे आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेधः ॥ * ॥

**( भाष्यम् ) शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेधो वक्तव्यः ॥ के पुनर्ह्वयत्यादयः ? । ह्वयति क्रन्दति शब्दायते ॥ ह्वयति देवदत्तः 'ह्वाययति देवदत्तेन' ॥ क्रन्दति देवदत्तः 'क्रन्दयति देवदत्तेन' ॥ शब्दायते देवदत्तः 'शब्दाययति देवदत्तेन' ॥**

( प्रदीपः ) ह्वयत्यादीनामिति । ह्वयत्यादयो धातवः साध्यमानावस्थं क्रियारूपं शब्दमभिदधतीति शब्दकर्मत्वादतिप्रसङ्गे सति प्रतिषेधो विधेयः ॥ ह्वयति देवदत्त इति । पुत्रादेः कर्मणो भावादकर्मकत्वं ह्वयतेर्नाशङ्कनीयम् ॥ शब्दायते इति । शब्दं करोतीति शब्दवैरेति क्यङ् । शब्दलक्षणस्यात्र कर्मणोन्तर्भावात् कर्मान्तरायोगाचाकर्मकत्वादपि कर्मसंज्ञाप्रसङ्गः ॥

( उद्द्योतः ) ननु शब्दस्य गुणत्वात् क्रियात्वं कथमत आह—ह्वयत्यादय इति ॥ कर्मणो भावादिति । कर्मणः सत्त्वादित्यर्थः ॥ अकर्मकत्वादपीति । यो जातः कर्मसंज्ञाप्रसङ्गस्तस्याप्ययं निषेध इत्यर्थः ॥ अत्र वदन्ति—ह्वेञ् स्पर्धायां शब्दे चेत्यभियुक्तैः शब्दशब्देन ह्वेञ्धात्वर्थनिर्देशात्तदर्थकशब्दशब्दात् क्यङि ह्वयतेरिवास्येव पुत्रादिकर्मयोग इति शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेध इति भाष्यसामञ्जस्येऽन्यादृशशब्दायतेरकर्मकत्वप्रयुक्तप्राप्तेर्निषेधे मानाभावे चिन्त्योऽयं कैयट इति ॥

( १११४ आक्षेपान्तरवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ शृणोत्यादीनामुपसंख्यानमशब्दक्रियत्वात् ॥ * ॥

**( भाष्यम् ) शृणोत्यादीनां चोपसंख्यानं कर्तव्यम् । के पुनः शृणोत्यादयः ? । शृणोति विजानात्युपलभते । शृणोति देवदत्तः 'श्रावयति देवदत्तम्' । विजानाति देवदत्तः 'विज्ञापयति देवदत्तम्' । उपलभते देवदत्तः 'उपलम्भयति देवदत्तम्' । किं पुनः कारणं न सिध्यति ? । अशब्दक्रियत्वात् ॥**

( प्रदीपः ) शृणोत्यादीनामिति । शब्दोपलब्धिरूपेऽर्थे वर्तमानाः शृणोत्यादयः शब्दक्रिया न भवन्ति, शब्दसाधनकर्माणस्तु, तद्विषयत्वेन प्रयोगात् । न चैषां बुद्ध्यर्थत्वम्[1] शृणोत्यादयो हि न ज्ञानमात्रवचनाः । बुद्ध्यर्थौ तु जानात्युपलभत इत्येतौ यद्यप्युपलब्धिमात्रवचनौ तथापि प्रयोजकव्यापारविवक्षायां प्रकरणादिवशाद्यदा शब्दविषयामेवोपलब्धिं प्रत्याययतस्तदा साधनकर्मग्रहणे सिध्यति, न तु क्रियाग्रहण इत्युपसंख्यानं कर्तव्यम् । एवं च बुद्ध्यर्थत्वादनयोः सिध्यतीति चिन्त्यमेतत् ॥

( उद्द्योतः ) न ज्ञानमात्रेति । ज्ञानसामान्यवचना एव बुद्ध्यर्थास्तत्र गृह्यन्ते, न तु तद्विशेषवचना इति भावः ॥ शब्दविषयामेवेति । श्रोत्रेन्द्रियजज्ञानरूपामित्यर्थः । एवं च ज्ञानविशेषार्थत्वेन न बुद्ध्यर्थत्वात्सिद्धिरिति भावः ॥ बुद्ध्यर्थत्वादिति । ज्ञानसामान्यार्थत्वमाश्रित्य बुद्ध्यर्थत्वादपि सिध्यतीत्यभिमानः ॥ चिन्त्यमेतदिति । चिन्तावीजं तु—यदा जानात्यादीनां शब्दविषये श्रावणज्ञाने वृत्तिस्तदाप्यणौ कर्तुर्णौ कर्मत्वमिष्टम् । न च तदा बुद्ध्यर्थत्वेन

१ 'णस्त्वभि' ।

२ आहुरिति । अरुचिवीजं तु—"तत्प्रसङ्गाच्चारायणः साधारणमधिकरणं पृथक् प्रोवाच, सुवर्णनाभः सांप्रयोगिकम्, घोटकमुखः कन्यासंप्रयुक्तकम्, गोनर्दीयो भार्याधिकारम्, गोणिकापुत्रः पारदारिकम्, कुचुमार औपनिषदिकम्—इत्येवं बहुभिराचार्यैस्तच्छास्त्रं खण्डशः प्रणीतमुत्सन्नकल्पमभूत् ॥" इति कामसूत्रे प्रथमाध्याये शास्त्रसंग्रहे वात्स्यायनेन गोनर्दीय—गोणिकापुत्रयोः पार्थक्येनोपादानेन 'गोनर्दीयः पतञ्जलिः' इति कोशप्रामाण्येन गोनर्दीयस्य भाष्यकारपतञ्जलिनामत्वाङ्गीकारेऽपि गोणिकापुत्रस्य भाष्यकारनामत्वे प्रमाणानुपलम्भ एव—इति ।

३ कर्माणस्त्विति । भवन्तीति शेषः ।

सिद्धिर्ज्ञानसामान्यार्थत्वाभावात् ॥ एवमेवं[1] दृशेरुपसंख्यानम्[2] । अत एव यदा रूपादिविषयकचाक्षुषज्ञाने वृत्तिस्तदा न भवति । यथा विजानाति रूपतर्कः[3] कार्षापणं[4] विज्ञापयति रूपतर्केणेति भाष्याशय[5] इति ॥

(द्वितीयपक्षाभ्युपगमभाष्यम्)

**अस्तु तर्हि—शब्दो येषां कर्मेति ॥**

(१११५ द्वितीयपक्ष आक्षेपवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानम् ॥ * ॥

**(भाष्यम्) शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानं कर्तव्यम् ॥ के पुनर्जल्पतिप्रभृतयः? । जल्पति विलपति आभाषते ॥ जल्पति देवदत्तः 'जल्पयति देवदत्तम्' ॥ विलपति देवदत्तः 'विलापयति देवदत्तम्' ॥ आभाषते देवदत्तः 'आभाषयति देवदत्तम्' ॥**

(प्रदीपः) **जल्पतिप्रभृतीनामिति** । जल्पत्यादयः शब्दनक्रियायां वर्तन्त इति क्रियाग्रहणे सिध्यति न तु साधनकर्मग्रहणे । पुत्रं जल्पतीत्यादौ शब्दकर्मत्वाभावात् ॥

(उद्योतः) **पुत्रं जल्पतीति** । लाडनपूर्वके जल्पने जल्पेर्वृत्तेरिति भावः ॥ एतेनाकर्मत्वात्सिद्धिरित्यप्यपास्तम् ॥

(न्यूनतापूरणाधिकरणम्)

(१११६ आक्षेपवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ दृशेः सर्वत्र ॥ * ॥

**(भाष्यम्) दृशेः सर्वत्रोपसंख्यानं कर्तव्यम् । पश्यति रूपतर्कः कार्षापणम् 'दर्शयति रूपतर्कं कार्षापणम्' ॥**

(प्रदीपः) **दृशेः सर्वत्रेति** । यदि क्रियाग्रहणमथ साधनग्रहणमथोभयगत्याश्रयणं सर्वत्र दृशेर्न प्राप्नोतीति भावः ॥ **पश्यति रूपतर्क इति** । चक्षुःप्रणिधानद्वारक उपलम्भे यदा दृशिर्वर्तते तदैतद्वक्तव्यम् । अन्यत्र तु बुद्ध्यर्थत्वात् सिध्यति ॥ तत्र साधनकर्मग्रहणमित्येष पक्ष आश्रीयते । क्रियाग्रहणे कर्मग्रहणानर्थक्यप्रसङ्गात् । गतिबुद्धिशब्दप्रत्यवसानार्थाकर्मकाणामित्येव सिद्धत्वात् । पुत्रादिकर्मत्वे जल्पतिप्रभृतीनामुपसंख्यनं कर्तव्यमेव । श्लोकादिशब्दविशेषकर्मकत्वे तु शब्दकर्मत्वात्सिद्धिः । दृशेर्बुद्ध्यर्थत्वादेव ग्रहणं सिद्ध्यति ॥

(उद्योतः) **सर्वत्र दृशेरिति** । ज्ञानसामान्यार्थकत्वा[7]भावादिति भावः ॥ ननु **पश्यार्थै[6]श्चानालोचन** इति दर्शनाद् दृशेर्ज्ञानसामान्यार्थकत्वाद् बुद्ध्यर्थत्वेन सिद्धिरत आह—**चक्षुरिति** ॥ दृशेरिति । ज्ञानसामान्यार्थत्वे इति शेषः । चाक्षुषज्ञानार्थकार्थं तु वचनमावश्यकमेवेति बोध्यम् । इदमेव ज्ञापयति ज्ञानसामान्यार्थकानां तत्र ग्रहणमिति ॥

(प्रतिषेधाधिकरणम्)

(१११७ आक्षेपवार्तिकम् ॥ ५ ॥)

## ॥*॥ अदिखादिनीवहीनां प्रतिषेधः ॥*॥

**(भाष्यम्) अदिखादिनीवहीनां[8] प्रतिषेधो वक्तव्यः ॥**

(प्रदीपः) **अदिखादीति[9]** । अदिखाद्योः[11] प्रत्यवसानार्थत्वात्प्राप्तिः । नीवह्योर्गत्यर्थत्वात् ॥ यद्यपि **न गतिहिंसार्थेभ्य** इत्यत्र **न वहिर्गत्यर्थ** इत्युक्तं भाष्ये । तथापि **वहेरनियन्तृकर्तृकस्येत्यभिधानाय** वहेरुपक्षेपः ॥

(उद्योतः) **इत्युक्तं भाष्ये इति** । तच्च तत्रैव निरूपितम् । अत एव न चेति । सूत्रे हृक्रोरित्यस्योभयत्र विभाषात्वमुक्त्वाऽप्राप्ते हरति भारं देवदत्तो हारयति भारं देवदत्तमिति प्रापणार्थे उदाहृतः । विपूर्वो हरतिर्गत्यर्थ[12] इति च कैयटः । एवं च वहेः प्रतिषेधो नापूर्वः[13] ॥ **तथापीति** । एवं च नियन्तृकर्तृकवहेरुपसंख्यानं कार्यमिति तात्पर्यम् ॥ नयतेस्तु गत्युपसर्जनं प्रापणमर्थ इति गत्यर्थकत्वमस्त्येव प्रापयतेस्तु शुद्धं प्रापणमेव वहिवदर्थ इति न स गत्यर्थ इति बोध्यम् ॥

(उदाहरणभाष्यम्)

**अत्ति देवदत्तः 'आदयते[14] देवदत्तेन' ॥**

(मतान्तरभाष्यम्)

**अपर आह—सर्वमेव प्रत्यवसानकार्यमदेर्न भवतीति वक्तव्यं परस्मैपदमपि ॥**

(प्रदीपः) **परस्मैपदमिति । निगरणचलनार्थेभ्यश्चेति** प्राप्तम् ॥

(बाधकभाष्यम्)

**इदमेकमिष्यते—"क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" 'इदमेषां जग्धम्' ॥**

(उद्योतः) भाष्ये इदमेकमिष्यते इति । एवं च सर्वमेवेत्यसङ्गतं, परस्मैपदकर्मत्वयोः प्रतिषेधो वक्तव्य इत्यर्थः ॥

---

१ Bengal Asiatic Society मुद्रितपुस्तकेऽपि काशीमुद्रितमशुद्धमेव 'एवमेवेदृशेऽनुपसंख्यानं क्रियते' इति पाठं रक्षितवन्तः शोधका धन्यवादार्हाः । २ वस्तुतस्तु 'एवमेवेदृशेऽनुपसंख्यानं क्रियते, इति समुपलभ्यमान पाठरक्षैव श्रेयसी । तथा हि—एतादृशपाठे 'एवमेव' बुद्धिसामान्यार्थानामपि तदा बुद्धिविशेषार्थकत्वं स्वीकृत्यैवेदृशे विषये प्रयोज्यकर्तुः कर्मसंज्ञानिषेधार्थमुपसंख्यानं न क्रियते इति वाक्यार्थः । एवमेव दृशेरुपसंख्यानमिति पाठे तु एवमेवेत्यस्य बुद्धिविशेषार्थकस्य बुद्ध्यर्थत्वेनाग्रहणादेवेत्यर्थः स्यात्—स च प्रकृतानुपयुक्त इत्येवधेयम् । (र. ना.) ३ रूपतर्को रूपविषयको विचारः । (र. ना.) ४ 'कार्षापणम्' । इति कर्म मध्यमणिन्यायेनोभाभ्यामन्वेयम् । ५ वस्तुतस्तु प्रकृतभाष्यस्यैकदेश्युक्तत्वमभिप्रेत्य कैयटीया चिन्त्यत्वोक्तिरेव रम्या । तथा हि—विज्ञापयति देवदत्तमित्यादौ जानात्यादीनां बुद्धिसामान्यार्थानामपि प्रकरणादिना बुद्धिविशेषपरत्वे स्थिते तेषां बुद्धिविशेषे शक्तौ लक्षणायां वा तत्र मानाभावः । तथा च तत्र शक्तिर्बुद्धिसामान्ये एवेति तत्र सूत्रेणैव प्राप्तिरस्तीति । विज्ञापयति कार्षापणं रूपतर्केणेति तु न भवत्येव किन्तु अत्र प्रयोज्यकर्तरि द्वितीयैव साध्वीति कैयटाशय इति विभावयामः । (र. ना.) ६ 'गृह्यत इत्येप' । ७ काशीमुद्रितम् 'ज्ञानसामान्यार्थकत्वादिति' इति अशुद्धमेव पाठं Bengal Asiatic Society मुद्रितपुस्तकशोधका अपि स्थापितवन्तः इति त एव संगतिं प्रष्टव्याः । ८—११ 'आदि' इत्येव पाठं कस्मिंश्चित्पुस्तके दृष्टमेव मुद्रकाः स्थापितवन्तः परंतु स पाठो नैव समञ्जसः सर्वत्राण्यन्तानामेव धातूनामुपादानेन प्रकरणविरोधात् । १२ न तु केवलस्तस्य प्रापणार्थत्वादिति तदाशयः । (र. ना.) १३ किन्तु प्राप्त्यभावानुवादः । (र. ना.) १४ 'आदयति' । १५ न भवतीति वक्तव्यमिति योजना । (र. ना.)

( उदाहरणभाष्यम् )

खादि—खादति देवदत्तः,'खादयति देवदत्तेन' ॥
नी—नयति देवदत्तः 'नाययति देवदत्तेन' ॥

( ११९८ विशेषवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ वहेरनियन्तृकर्तृकस्य ॥ * ॥

( भाष्यम् ) वहेरनियन्तृकर्तृकस्येति वक्तव्यम् । वहति भारं देवदत्तः 'वाहयति भारं देवदत्तेन' ॥ अनियन्तृकर्तृकस्येति किमर्थम् ? । वहन्ति बलीवर्दा यवान् 'वाहयति बलीवर्दान्यवान्' ॥

( प्रदीपः ) वहेरिति । नियन्ता सारथिः ॥

( उद्द्योतः ) सारथिरिति । पशुप्रेरक इत्यर्थः । अन्यथा रथप्रेरक एव सारथिशब्दस्य प्रसिद्धत्वेन भाष्योदाहरणासङ्गतेरिति बोध्यम् ॥

( १११९ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ भक्षेरहिंसार्थस्य ॥ * ॥

( भाष्यम् ) भक्षेरहिंसार्थस्येति वक्तव्यम् । भक्षयति पिण्डीं देवदत्तः 'भक्षयति पिण्डीं देवदत्तेन' ॥ अहिंसार्थस्येति किमर्थम् ? । भक्षयन्ति यवान्बलीवर्दाः 'भक्षयति बलीवर्दान् यवान्' ॥

( प्रदीपः ) भक्षेरिति । अणिकर्तेति हेतुमण्णिचो निषेधाच्चुरादिण्यन्तोऽप्यण्यन्त एवेति प्राप्तिः ॥ भक्षयन्ति यवानिति । क्षेत्रस्थानां प्ररोहाद्यवस्थायां यवानां भक्षणाद्धिंसा भवति । तदवस्थायां कैश्चिच्चैतन्यस्याभ्युपगमात् । परकीययवभक्षणे वा परो हिंसितो भवति । हिंसाङ्गे भक्षणेऽत्र भक्षिर्वर्तते ॥

( उद्द्योतः ) ननु भक्षयतेर्नित्यण्यन्तत्वेनाणौ कर्त्रभावादाह—अणि कर्तेति । णावित्यत्र सर्वगत्यर्थादिभ्यो हेतुमण्णिच एव संभवेन तस्यैव ग्रह इति भावः । भक्षेः प्रत्यवसानार्थत्वात्प्राप्तिः । वार्तिके प्रतिषेध इति शेषः ॥ पिण्ड्या अप्राणित्वादुदाहरणे भक्षेरहिंसार्थत्वम् ॥ ननु यवानामप्यचेतनत्वात्तद्विषयस्यापि कथं हिंसार्थत्वमत आह—क्षेत्रस्थानामिति । इदमुपलक्षणं वीजावस्थानामपि भक्षणे हिंसासत्त्वात् ॥ हिंसाङ्गे इति । इदमुभयसाधारणम् । तत्राद्ये यवान् हिंसन् भक्षयतीत्यर्थः, द्वितीये तु परानित्यध्याहार्यम् । परान् हिंसन् यैवान् भक्षयतीत्यर्थः । अत्राद्यमेव युक्तं भाष्यस्वरसादित्याहुः ॥ उदाहरणकक्षायां भक्षयन्तीति बहुवचनपाठे तत्स्वामिन इति शेषः ॥

( कालादिकर्मकाणामकर्मकत्वाधिकरणम् )

( ११२० आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ अकर्मकग्रहणे कालकर्मणामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) अकर्मकग्रहणे कालकर्मणामुपसंख्यानं कर्तव्यम् । मासमास्ते देवदत्तः 'मासमासयति देवदत्तम्' । मासं शेते देवदत्तः 'मासं शाययति देवदत्तम्' ॥

( प्रदीपः ) कालकर्मणामिति । कालग्रहणेन साहचर्यात् पूर्वं सहनिर्दिष्टत्वाद्भावाध्वदेशानामपि ग्रहणम् । वक्ष्यमाणन्यायस्य तुल्यत्वाद् वा ॥

( उद्द्योतः ) तुल्यत्वाद्वेति । वाशब्दश्चार्थः ॥

( ११२१ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ सिद्धं तु कालकर्मणामकर्मकवद्वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । कालकर्मका अकर्मकवद्भवन्तीति वक्तव्यम् ॥

( प्रदीपः ) सिद्धं त्विति । तेन मासमास्यते देवदत्तेनेत्यादावकर्मकेभ्यो भावे विधीयमाना लादयः सिद्धा भवन्ति । स्वाश्रयं चाव्यावृत्तं कर्मत्वम् । तेन मास आस्यते देवदत्तेनेत्यादौ कर्मण्यपि भवन्ति ॥

( उद्द्योतः ) नन्वकर्मकवद्भावे कर्मणि लो न स्यादत आह—स्वाश्रयमिति । सकर्मकेत्यत्र कर्ममात्रस्य ग्रहणादिति भावः । अकर्मकेत्यत्र निषेध्यकोटौ त्वन्तरङ्गद्रव्यकर्मण एव ग्रहणमिति तात्पर्यम् ॥

( तृतीयाक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । अकर्मकाणामित्युच्यते । न च केचित्कालभावाध्वभिरकर्मकाः, त एवं विज्ञास्यामः—क्वचिद्ये अकर्मका इति ॥

( प्रदीपः ) न च केचिदिति ॥ ननु क्रियामात्रविवक्षायां कालादीनामविवक्षितत्वात् तैरप्यकर्मकत्वं भवत्येव । यथा शेते देवदत्तो न भुङ्क्ते इति ॥ अत्राहुः—अत्यन्ताविद्यमानकर्माणो धातवोऽकर्मकग्रहणेन गृह्यन्ते न त्वविवक्षितकर्माणः । अन्यथा पचादीनामपि कर्माविवक्षायामकर्मकनिबन्धनानि कार्याणि भवेयुः । अकर्मकशब्दस्य च धातवो-

१ वहेः शुद्धस्य त्वनियन्तृकर्तृकत्वमेव पशुकर्तृकत्वात् कथं निषेधप्रतिषेधः इति चेत् । अत्र नियन्तृशब्दो नियन्तृप्रयोज्यपशुपरः । तथाच पशुकर्तृकस्य वहेरण्यन्तस्य कर्तुः पशोः कर्मसंज्ञा प्रतिप्रसूयते इति बोध्यम् ॥ केचित्तु णौ जाते वहेर्नियन्तृकर्तृकस्य प्रतिप्रसव इति वदन्ति । २ कर्त्रभाव इत्यत आहेति पाठः साधुः । ( र. ना. ) ३ Bengal Asiatic Society मुद्रितपुस्तके काशीमुद्रितानुकृते तु निरर्थकं 'सर्वान्' इति मुद्रितमुपलभ्यते तच्च सर्वमूललिखितपुस्तकविरुद्धमेव । ४ साहचर्यादित्यस्य व्याख्यैव 'पूर्वं सहनिर्दिष्टत्वा-दिति । ( र. ना. )

ऽन्यपदार्थत्वेनाश्रीयन्ते न त्वर्थाः । अर्थाश्रयणे हि कर्माविवक्षायामर्थस्याकर्मकव्यपदेशः स्यात् । धातुष्वाश्रीयमाणेषु क्वचिदपि कर्मसंबन्धदर्शनेन सारूप्यात्त एवैत इति तत्त्वप्रत्ययविषया नाकर्मकत्वेन व्यपदिश्यन्ते । अर्थास्तु कारकादिभेदाद्भिन्ना एवेत्यन्ये सकर्मका अन्य एवाकर्मका इति स्याद् व्यपदेशः । यदा त्वर्थस्यापि स्वतो नास्ति भेद इति दर्शनं तदार्थेष्वप्यन्यपदार्थेष्वदोषः ॥ **क्वचिदिति** । द्रव्य एव कर्मणि सत्यकर्मका इत्यर्थः ॥

(**उद्द्योतः**) **गृह्यन्त इति** । इह शास्त्र इत्यर्थः । तदेवाह—**अन्यथेति** ॥ **कर्माविवक्षायामिति** । तदविवक्षा हि द्वेधा,—तदन्वययोग्यधात्वर्थत्यागात्, सत्येव तस्मिन्नर्थे तत्र कर्मत्वेनान्वयाविवक्षायां संबन्धित्वेनान्वयस्य विवक्षणाद्वेति ॥ **कार्याणि** लादयः ॥ अत्रारुचिबीजं तु लः **कर्मणी**त्यादिशास्त्रे एवं वक्तुमशक्यम् । कृतपूर्वी कटमित्यत्र[१] कस्याविवक्षितकर्मतया भावे साधनस्य **कर्तृकर्मणो**रिति भाष्यादौ स्पष्टत्वात् ॥ **अकर्मकशब्दस्य** चेत्यादि तदुपपादनमप्यनुचितं, कर्मसंज्ञाया अर्थसंज्ञात्वेनार्थानामेवान्यपदार्थत्वस्यौचित्याद् । **अर्थस्यापि स्वतो नास्ति भेद** इति दर्शनमप्यसंगतमेव, धातूनां नानार्थत्वोच्छेदापत्तेः ॥ तस्मादयमर्थः—किमकर्मकशब्दे कर्मपदस्य कर्मसंज्ञाप्रयोजके लक्षणया 'न विद्यते कर्मसंज्ञाप्रयोजकोऽर्थो येषां धातूनाम्' इत्यर्थः, उत 'कर्मरहितार्थप्रतिपादकानाम्' इत्यर्थः । लक्षणोभयत्र तुल्या, तत्र नाद्य इत्याह—भाष्ये-**न च केचिदिति** । तथा च कर्मसंज्ञाप्रयोजकार्थरहितानामित्यर्थे सर्वेषां तदर्थसंभवेनाकर्मकाणामित्यस्योदाहरणासम्भव इत्यर्थः । अन्त्येऽविवक्षितकर्मतयोदाहरणसम्भवो वाच्यः । न च कालस्य क्रियामात्रेणाकाङ्क्षिततया तदविवक्षाऽसम्भवः । आख्यातार्थकालेनैव तदाकाङ्क्षाशान्त्या बाह्यकालकर्मणोऽविवक्षासम्भवात् । एवं च सति **गत्यादिसूत्रे** तुल्यजातीयापेक्षतया नियमस्य सकर्मकविषयतयाऽकर्मकविषये **कर्तुरीप्सिततम**मित्यनेन तदुपपत्तावकर्मकग्रहणं व्यर्थं स्यात् । तस्मात्सामर्थ्यं मनसि निधायाह—**न एवमित्यादि** । एतच्च सामान्यापेक्षं ज्ञापकं शास्त्रेऽकर्मकपदमात्रे ईदृशार्थग्रहणमिति ॥ **क्वचिदि**त्येतद् व्याचष्टे—**द्रव्य एव कर्मणि सतीति** । सतीत्यस्य प्रतियोगिनि सतीति शेषः । एवं च कालाद्यतिरिक्तकर्मप्रतियोगिकाभाववन्त इत्यर्थः । तादृशाश्च सर्वथा द्रव्यकर्माभाववन्तः शेत्यादयः, अविवक्षितकर्माणश्चेत्युभयेपि । प्रयोगानुसारित्वाच्चाविवक्षायाः पचादिष्वविवक्षया नाकर्मकत्वनिबन्धनकार्याणि । न चैवमपि तुल्यजातीयतया सकर्मकविषयनियमेन सिद्धावकर्मकग्रहणं व्यर्थम्, सकर्मकत्वेन कालादिकर्मकाणामपि ग्रहणेन तद्विषयनियमस्याप्यापत्तौ मासमासयति देवदत्तमित्यसिद्ध्यापत्तेः[५] । प्रतियोगिसमर्पककर्मपदेन तु न कालादीनां ग्रहणमेतत्सामर्थ्यादिति न दोषः । वस्तुतो भाष्ये **क्वचिदि**त्यस्य कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिरहितेऽर्थ इत्यर्थः । कैयटोक्तव्याख्यायां हि **कालभावाध्वभिरि**ति पूर्वं तृतीयानिर्देशात्केनचिदित्येव वदेत् । एवं च तदवस्थायामकर्मकत्वेनाकर्मकत्वव्यवहारो धातूनामकर्मकपदसामर्थ्याच्च तदवस्थायां कर्मरहिता गृह्यन्ते इति बोध्यम् ॥

**( समाधानान्तरभाष्यम् )**

**अथ वा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणाम् । न चैतेन कर्मणा कश्चिदप्यकर्मकः ॥**

(**प्रदीपः**) **अथवा येनेति** । संभवव्यभिचाराभ्यां विशेषणविशेष्यभावे सर्वत्र वस्तुस्थित्याऽविवक्षिता अपि कालादयः सन्तीति न तैः केचिदकर्मका इत्यर्थः ॥

(**उद्द्योतः**) भाष्ये—**न चैतेनेति** । कालादिनेत्यर्थः । तद्व्याचष्टे—**सम्भवेति** । कालादीनां तु व्यभिचारो नास्त्युक्तरीत्या व्यापनादिरूपधात्वर्थपूर्वके स्वार्थे सकर्मकाणामपि वृत्तेस्तेषामपि तत्सम्भवादिति भावः । अयं भावः—कालादेरपि प्रतियोगिभूतकर्मपदेन [कर्म]ग्रहणेऽकर्मको धातुरसम्भवीति सामर्थ्याद्द्रव्यकर्मण एव प्रतियोगित्वेन ग्रहणमिति ॥ ननु तदविवक्षायां तत्सम्भव इत्यत आह—**वस्तुस्थित्येति** । धातुरेवान्यपदार्थ इति भावः ॥ वस्तुतो व्याप्त्यादिविवक्षासत्त्वेऽप्यकर्मकत्वोपपत्तिर्दर्श्यते—**अथवेति** भाष्येण । उपपत्तिरत्रैव । **न चैतेने**त्यादिना भाष्येण व्यभिचाराभाव उच्यते ॥

**( समाधानान्तरभाष्यम् )**

**अथ वा यत्कर्म भवति न च भवति, तेनाकर्मकाणाम् । न चैतत् कर्म क्वचिदपि न भवति ॥ गतिबुद्धि—॥ ५२ ॥**

(**प्रदीपः**) **अथ वेति** । अकर्मकश्रुत्यान्तरङ्गं द्रव्यकर्म निषिध्यते न बहिरङ्गं कालादिकर्म । तथाहि—पूर्वं क्रियाया द्रव्यकर्मणा सह संबन्धो भवति पश्चात् कालादिभिः परिमाणनिर्धारणाय । तथा चोक्तम्—

**शक्तिप्रमाणसंख्यादेर्द्रव्यधर्मात्प्रवर्तते ।**
क्रियासु कालयोगोऽतः प्राग्योगो द्रव्यकर्मणा ॥ इति ।

सूत्रं चेदं नियमार्थमिति **आकडारसूत्र** उक्तं तत एवावधार्यम् ॥ ५२ ॥

(**उद्द्योतः**) पूर्वसाङ्केदव्युत्पादनायान्तरङ्गत्वतात्पर्यकतया योजयति—**अकर्मकेति** ॥ **पूर्वं क्रियाया इति** । तदुद्देशेनैव क्रियाप्रवृत्तेरिति भावः ॥ **शक्तिप्रमाणेति** । द्रव्यधर्मरूपात् शाभावः ।

१ कस्येति साधनान्वयि । ( र. ना. ) २ 'अन्वर्थ' । ३ कर्मत्वप्रयोजकव्याप्त्यादिराहित्यावस्थायामित्यर्थः । ( र. ना. ) ४ 'तदवस्थायस्थाकर्म' । ५ तेन मासमासयति देवदत्तमिति सिध्यत्येव । तदवस्थायां कर्मराहित्यादिति भावः । ( र. ना. ) ६ एषा सत्सप्तमी । ( र. ना. ) ७ कर्मपदं प्रमादपतितं भवेत्, कर्मण इति लेखनीये प्रमादतः 'कर्म' इत्येव लिखितं भवेत् ।

क्त्यादेः सकाशात् क्रियासु कालयोगः प्रवर्तते इत्यर्थः । तत्र शक्तेर्यथा वसन्तादिकालयोगः पल्लवजन्मादेः । प्रमाणवशाद् यथा दीर्घशष्कुल्यादिचर्वणस्य दण्डादिकालयोगः । संख्यावशाद् यथा नानाद्रव्यकर्मैकपाकस्य ॥ सकर्मकपदे तु कालादेः कर्मसंज्ञाविधानसामर्थ्यात् कालादिकर्मणोपि ग्रहणम् । अत एवास्यते मास इति कर्मणि लः सिध्यति । अत्रैतत्सूत्रस्थाकर्मकपदवत्सकर्मकपदे कालादिकर्मणोऽग्रहणे तात्पर्यग्राहकाभावादिति तत्त्वम् ॥ न चैतत्कर्मेति भाष्येण द्रव्यकर्मणोऽव्यभिचार एव दर्श्यते न त्वन्तरङ्गत्वमिति चिन्त्यम् ॥ वस्तुतो द्वितीयपक्षोक्तमेवार्थं भङ्गयन्तरेणाह—**अथ वेति** । न चैतेनेत्यादेः **[कश्चिदप्यकर्मक] एतेन** कर्मणा रहितो नेत्यर्थेन सकर्मकाणामेतत्कर्माभावादेषामपि व्यभिचारित्वमिति कश्चिद् भ्राम्येत्तद्भ्रमनिवृत्त्यर्थं तस्यार्थस्य पुनः कथनम् । एवं चाकर्मकपदेन व्यभिचारिद्रव्यकर्मरहितानामित्यर्थबोधनेन मासादिकर्मसत्त्वेऽप्यकर्मकत्वमित्येतत्पक्षेऽर्थः । न त्वेतद्भाष्यबलेनात्यन्ताविद्यमानकर्मकाणामेवात्र ग्रहणमिति वक्तुं युक्तम् । कालाध्वनोरिति सूत्रे लः कर्मणीतिसूत्रस्थाकर्मकपदविषयेपीदृशस्यैव भाष्यस्य सत्त्वेन तत्राप्यत्यन्ताविद्यमानकर्मकाणामेव ग्रहणापत्तौ पूर्वोक्तकृतपूर्वीत्यादिभाष्यासङ्गत्यापत्तेः ॥ किं चात्यन्ताविद्यमानकर्मकाणामत्र ग्रहणमिति पक्षे लुनातेर्निवृत्तप्रेषणाण्णिचि लावयति केदारं देवदत्त इति **णेरणाविति** सूत्रस्थकैयटप्रयोगे केदारस्य कर्मत्वानापत्तिरिति दिक् ॥ ५२ ॥

( १९३ कर्मसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. १८ सू० )

## २९३ हृक्रोरन्यतरस्याम् ॥ १ । ४ । ५३ ॥

( प्रदीपः ) **हृक्रोर** ॥ ५३ ॥ उभयत्र विभाषेयमिति **नवेति विभाषेत्यत्रोक्तम्** ॥

( उद्द्योतः ) **हृक्रोर** ॥ ५३ ॥ **इत्यत्रोक्तमिति** । वार्तिककृतेति शेषः ॥

( न्यूनतापूर्त्यधिकरणम् )

( ११२२ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ हृक्रोर्वावचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानम् ॥ * ॥

( भाष्यम् ) **हृक्रोर्वावचने अभिवादिदृशोरात्मनेपद उपसंख्यानं कर्तव्यम् । अभिवदति गुरुं देवदत्तः 'अभिवादयते गुरुं देवदत्तेन । अभिवादयते गुरुं देवदत्तम्' । पश्यन्ति भृत्या राजानम् 'दर्शयते भृत्यै राजा, दर्शयते भृत्यान् राजा'** ॥

( प्रदीपः ) **अभिवादिदृशोरिति** । अभिवादयतावप्राप्ता कर्मसंज्ञा पक्षे विधीयते दृशेर्बुद्ध्यर्थत्वान्नित्यं[३]प्राप्ता पक्षे निवर्त्यते ॥

( अनुयोगभाष्यम् )

**कथं चात्रात्मनेपदम् ?** ॥

( उद्द्योतः ) भाष्ये—**कथं चात्रात्मनेपदमिति** । एतद्वार्तिकोदाहरणयोरित्यर्थः । अभिवादयतावणौ कर्मणो णौ कर्तृत्वाभावाद्, दर्शयतावणौ कर्मातिरिक्तकर्मणः सत्त्वादिति प्रश्नः ॥

( समाधानभाष्यम् )

**एकस्य "णेरणौ" इति, अपरस्य "णिचश्च" इति** ॥

( उद्द्योतः ) **एकस्येति** । आद्यान्यस्य दृशेरित्यर्थः अणौ कर्तृकर्मातिरिक्तकर्माभावो विवक्षित इति भावः ॥ **अपरस्येति** । आद्यस्याभिवादयतेरित्यर्थः । उक्त आशयः ॥ ५३ ॥

( १९४ कर्तृसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. १९ सू. )

## २९४ स्वतन्त्रः कर्ता ॥ ५४ ॥

( स्वतन्त्रशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किं यस्य स्वं तन्त्रं स स्वतन्त्रः ?** ॥

( प्रदीपः ) **स्वतन्त्रः कर्ता** ॥ ५४ ॥ **किं यस्येति** । तन्तुवायस्य स्वतन्त्रशब्दवाच्यत्वाद्विशेषानुपादानाच्च प्रश्नः ॥

( उद्द्योतः ) **स्वतन्त्रः कर्ता** ॥ ५४ ॥ **स्वं तन्त्रमिति** । विततास्तन्तवस्तन्त्रम् ॥ किमयं बहुव्रीहिरिति प्रश्नतात्पर्यम् ॥

( दूषणप्रत्याक्षेपभाष्यम् )

**किं चातः ?** ॥

( प्रत्याक्षेपसमाधानदूषणभाष्यम् )

**तन्तुवाये प्राप्नोति** ॥

( प्रदीपः ) **तन्तुवाय इति** । यद्यपि तन्तुवायो वयति भुङ्क्ते इत्यादौ तन्तुवायस्य कर्तृसंज्ञेष्यते तथापि विशेषविहितत्वात् परत्वाच्चापादानादिसंज्ञाविषयेऽपि सा प्राप्नोति । ब्राह्मणोऽधीत इत्यादौ च ब्राह्मणादेर्न प्राप्नोतीति दोषः ॥

(उद्द्योतः) विशेषविहितत्वादित्यभ्युच्चयः, निरवकाशत्वाभावात् ॥ अपादानादिसंज्ञेति । तन्तुवायाद् गृह्णातीत्यादौ ॥ ब्राह्मणादेर्नेति । तन्तुवाय इत्यस्य भाष्यस्य तत्रैवेत्यर्थ इति भावः ॥

( समाधानभाष्यम् )

**नैष दोषः । अयं तन्त्रशब्दोऽस्त्येव विताने वर्तते । तद्यथा—आस्तीर्णं तन्त्रम्, प्रोतं तन्त्रमिति । विताननमिति गम्यते ॥ अस्ति प्राधान्ये वर्तते । तद्यथा—स्वतन्त्रोऽसौ ब्राह्मण इत्युच्यते । स्वप्रधान इति गम्यते ॥ तद्यः प्राधान्ये वर्तते तन्त्रशब्दस्तस्येदं ग्रहणम्** ॥

( प्रदीपः ) **वितान इति** । वितन्यत इति वितानम् ॥ **स्वतन्त्रोऽसौ ब्राह्मण इति** । स्वशब्द आत्मवाची । स आत्मा

१ दण्डादिकालयोग इति संबध्यते । ( र. ना. ) २ कालातिरिक्तेत्यादिः । ( र. ना. ) ३ 'नित्या' । ४ णे रणौ इति सूत्रमात्रेरिति भावः । ( र. ना. )

तन्त्रं प्रधानं यस्य स स्वतन्त्र उच्यते । तत्र कारकाधिकारात् क्रियासिद्धौ प्राधान्यस्योपयोगात्तन्तुवायस्यापि तन्तुवायरूपतया तत्रानुपयोगात् प्रधानवाचिनः स्वतन्त्रशब्दस्येह ग्रहणम् । अनेककारकसाध्यायामपि क्रियायां यथा कस्यचित् स्वातन्त्र्यं तथा कारकसूत्रे प्रतिपादितम् । यस्य धातुना व्यापारोऽगुणभावेनोच्यते स एवासौ स्वतन्त्र इत्येतदपि तत्रैव भाष्यकृता प्रतिपादितम् ॥

( उद्योतः ) वितन्यत इति । स च सन्निवेशविशेषविशिष्टस्तन्तुसमूहः ॥ स्वतन्त्र उच्यत इति । यथाकथंचिद् व्युत्पन्नोऽयं प्रधानार्थे रूढ इति भावः ॥ प्राधान्ये वर्तमानस्यैव ग्रहणं कुत इत्यत आह—तत्रेति । क्रियासिद्धौ यः स्वतन्त्र इत्यर्थे प्राधान्यस्यैवान्वययोग्यत्वम् ॥ तन्तुवायरूपतयेति । कारकं इत्यनेन क्रियामात्रस्योपस्थितेस्तत्सिद्ध तत्त्वेनानुपयोग इत्यर्थः । बहुलक्ष्यसंस्कारानुरोधाच्च प्रधानस्यैव ग्रहणमित्यपि बोध्यम् ॥ ननु किं प्राधान्यं कर्तुरित्यत आह—अनेकेति । सकलकारकप्रवर्तकत्वादिति भावः ॥ नन्वेवं स्थाली पचतीत्यादि न स्यादत आह—यस्य धातुनेति । अगुणभावेन प्राधान्येन ॥ स्वतन्त्र इति । स्वातन्त्र्येण विवक्षित इत्यर्थः । तच्चारोपितमनारोपितं वेत्यन्यत् । कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थव्यापाराश्रयो हि सः । तादृश एव च सकलकारकप्रवर्तकः । प्रायेण कर्मप्रत्ययसमभिव्याहारे फलव्यापारयोर्वैयधिकरण्यासदर्शनात्समभिव्याहारे इत्यन्तमित्यादि निरूपितं मञ्जूषायाम् ॥

( प्रयोज्यस्य कर्तृसंज्ञासाधनाधिकरणम् )

( ११२३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानमस्वतन्त्रत्वात् ॥ * ॥

**( भाष्यम् ) स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानं कर्तव्यम् । पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति ॥ किं पुनः कारणं न सिध्यति ? । अस्वतन्त्रत्वात् ॥**

( प्रदीपः ) हेतुमतीति । प्रयोज्य इत्यर्थः । यथा कर्तृसन्निधौ करणादीनां नास्ति स्वातन्त्र्यं तथा प्रयोजकसन्निधौ प्रयोज्यस्य पारतन्त्र्यात् स्वातन्त्र्याभावात् कर्तृसंज्ञाया अप्रसङ्गात् पाचयत्योदनं देवदत्तेनेति कर्तृतृतीया न प्राप्नोति । तत्प्रयोजक इत्यत्र च तच्छब्देन परामर्शो नोपपद्यते ॥

( उद्योतः ) ननु हेतुमतिचेत्यत्र हेतुमच्छब्देन प्रयोजकव्यापार उच्यते न च तत्र संज्ञेष्यतेऽत आह—प्रयोज्य इति । स एवात्र हेतुमच्छब्दार्थत्वेन विवक्षित इत्यर्थः ॥ स्वातन्त्र्यमिति । उद्भूतमिति शेषः ॥ दूषणान्तरमाह—तत्प्रयोजक इति । तत्र हि तत्पदेन स्वतन्त्र एव पूर्वसूत्रोपात्तः परामृश्यते ॥

( ११२४ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ न वा स्वातन्त्र्याद् इतरथा ह्यकुर्वत्यपि कारयतीति स्यात् ॥ * ॥

**( भाष्यम् ) न वा कर्तव्यम् । किं कारणम् ? । स्वातन्त्र्यात् । स्वतन्त्रोऽसौ भवति ॥ इतरथा ह्यकुर्वत्यपि कारयतीति स्यात् । यो हि मन्यते नासौ स्वतन्त्रः, अकुर्वत्यपि तस्य कारयतीत्येतत्स्यात् ॥**

( प्रदीपः ) न वेति । प्रयोजकसन्निधानेऽपि प्रयोज्यस्य करणादिसाधनविनियोगादिना स्वातन्त्र्यस्य क्रियासिद्धौ सद्भावादित्यर्थः ॥ अकुर्वत्यपीति । यदि प्रयोज्यस्य स्वातन्त्र्यं न स्यान्नैवासौ साधनान्तरविनियोगादिना क्रियां कुर्यात् तथा चाकुर्वत्यपि प्रयोज्ये प्रयोजकः कारयतीति व्यपदिश्येत ॥

( उद्योतः ) क्रियासिद्धाविति । स्वक्रियासिद्धावित्यर्थः । अयं भावः—स्वक्रियाकारकप्रवर्तकत्वरूपस्वातन्त्र्यमस्यास्त्येव परप्रेर्यत्वेऽपि ॥ ननु प्रेरणायाः क्रियाविषयत्वात्कथमकुर्वति कारयतीति प्रयोगोऽत आह—यदीति । साधनान्तरविनियोगेन क्रियासाधकत्वमेव हि स्वातन्त्र्यम् ॥ मूले आदिपदार्थः क इति चिन्त्यम् ॥ व्यपदिश्येतेति । तदापि तस्यौपसंख्यानिककर्तृत्वेन कर्तुः प्रयोजकत्वात्तस्य हेतुत्वे णिजापत्तिः । एवं चोपसंख्यानमतिव्यापकमिति भावः ॥

( ११२५ आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ नाकुर्वतीति चेत्स्वतन्त्रः ॥ * ॥

**( भाष्यम् ) न चेदमकुर्वति तस्मिन्कारयतीत्येतद्भवति । स्वतन्त्रोऽसौ भवति ॥**

( उद्योतः ) भाष्ये न चेदमकुर्वति तस्मिन् कारयतीत्येतद्भवतीत्यनन्तरं किं तु कुर्वत्येवेति शेषः ॥ स्वतन्त्रोऽसाविति । असावुपसंख्यानलभ्यकर्तृसंज्ञकः स्वतन्त्र इत्यर्थः । एवं चोपसंख्यानातिप्रसङ्गवारणाय वार्तिकेपि स्वतन्त्रपदमनुवर्त्य तत्सामर्थ्याद्गौणार्थकत्वमाश्रित्य कुर्वतः स्वतन्त्रत्वात्तत्रैव कर्तृसंज्ञा नाकुर्वत इति वाच्यमित्याह ॥

( समाधानभाष्यम् )

**शक्यं तावदनेनोपसंख्यानं कुर्वता वक्तुम् कुर्वन्स्वतन्त्रोऽकुर्वन्नेति ॥**

( प्रदीपः ) शक्यं तावदिति । उपसंख्यानवाद्यपि प्रयोज्यस्य स्वातन्त्र्यमस्तीत्यभ्युपगच्छतीति प्रतिपाद्यते । प्रयो-

---

१ 'सर्वोसौ' । २ अत्र मात्रं कारकार्थे । ( र. ना. ) ३ विशेषणविशेष्यभाववैपरीत्यदर्शनादित्यर्थः । ( र. ना. ) ४ कर्तृलक्षणे इत्यादिः । ( र. ना. )

५ मूले इत्यस्य प्रदीप इत्यर्थः । विलक्षणैवैषा सरणिरिति बोध्यम् । ६ अकुर्वति तस्मिन् कारयतीति न भवतीति चेत्स्वतन्त्रोऽसौ भवतीति योजना । (र.ना.)

ज्यस्य स्वातन्त्र्येण स्वव्यापारं प्रत्यप्रवर्तनात् किलोपसंख्यानमारभ्यते। तेन चेदमवश्याभ्युपगन्तव्यम्—यः करोति स स्वतन्त्रः न त्वकुर्वन्निति। एवं चेत् प्रयोजकसन्निधानेऽपि स्वार्थदर्शनात् प्रयोज्यः करोति नान्यथेति तस्य स्वातन्त्र्यमस्त्येव। तथा चोक्तं भाष्यकृता—**न हि कश्चित्परोनुग्रहीतव्य इति प्रवर्तते, सर्वे इमे स्वभूत्यर्थं यतन्त इति ॥**

**( उद्द्योतः )** **शक्यं तावदिति।** एवंच सूत्र एव गौणमुख्यसाधारणस्वतन्त्रपदार्थमाश्रित्य वार्तिकं न कार्यमिति भावस्तदाह—**उपसंख्यानवादीति ॥ तेन चेदमिति।** उक्तदोषवारणायेत्याशयः। अकुर्वन्नितीत्यन्तमभ्युपगमे कर्म ॥ **एवं चेदिति।** प्रेरणोत्तरमप्यकरणं चेदित्यर्थः ॥ **स्वातन्त्र्यमस्त्येवेति।** अन्यथा स्वार्थाभावेऽपि कुर्यादित्यर्थः। एवं च सूत्रेणैव सिद्धे उपसंख्यानं व्यर्थमिति भावः ॥

**( समाधानसाधकभाष्यम् )**

**साधीयो ज्ञापकम्। प्रेषिते च किलायं क्रियां चाक्रियां च दृष्ट्वाऽध्यवस्यति—कुर्वन्स्वतन्त्रोऽकुर्वन्नेति। यदि च प्रेषितोऽसौ न करोति स्वतन्त्रोऽसौ भवतीति ॥ स्वतन्त्रः कर्ता ॥ ५४ ॥**

**( प्रदीपः )** **प्रेषिते चेति।** कर्तुरधिकरणत्वेन विवक्षितत्वात्सप्तमी ॥ **क्रियामिति।** स्वार्थदर्शनादिच्छायां सत्यां क्रियां, तददर्शने त्वक्रियाम् ॥ **यदि चेति।** स्वार्थादर्शनादिच्छायामसत्यामित्यर्थः ॥ ५४ ॥

**( उद्द्योतः )** भाष्ये—**ज्ञापकम्** अनुमापकम् ॥ **अयम्** उपसंख्यानवादी ॥ **प्रेषिते** पुरुषे ॥ **क्रियाम्** क्रियाप्रयोज्यमनेन कारयतीति प्रयोगम्। **अक्रियां** तत्प्रयोज्यमनेन कारयतीति प्रयोगाभावं च **दृष्ट्वा** निश्चिनोति कुर्वन् स्वतन्त्रोऽकुर्वन्नेतीत्यर्थः। एतेन प्रेषिते क्रियादर्शनादेव तस्य पारतन्त्र्यनिर्णय इति स एव कथं स्वातन्त्र्ये हेतुरित्यकुर्वन्न स्वतन्त्र इत्यस्य प्रकृतेऽनुपयोगश्चेति परास्तम् ॥ एवमुपसंख्यानारम्भेऽतिप्रसङ्गवारणाय स्वतन्त्रपदसंबन्धाद्यभिधायैवं सति मुख्यस्वातन्त्र्यग्रहणेऽपि प्रयोज्यस्य तदस्तीत्याह—**यदि चेति।** भाष्ये। असेच्छायामसत्यामिति शेषः। तदाह—**स्वार्थादर्शनादिति।** एवं च यद्ययमस्वतन्त्रः स्यात्सर्वथा कुर्यादेव कदाचिन्न करोत्यपि, तस्मात्स्वतन्त्र इति भावः ॥ एवं च स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वं स्वातन्त्र्यमित्युक्तं तस्यैव च प्रागुक्तं सकलकारकप्रयोक्तृत्वम्। तच्चारोपितमनारोपितं च संज्ञोपयोगि। तत्रारोपितं स्थाल्यादौ, अन्यं पुरुषे। यस्य च स्वातन्त्र्यविवक्षा तद्व्यापार एव च धातुना प्राधान्येनोच्यते शब्दशक्तिस्वभावात्। तदुक्तं कारके इति सूत्रे भाष्ये—**संभवनक्रियां धारणक्रियां च कुर्वती स्थाली पचतीति यदोच्यते तदा तत्र व्यापारे पचिर्वर्तते स्थालीस्थे च यत्ने कथ्यमाने स्थाली स्वतन्त्रेति।** आरोपितस्वातन्त्र्यवतीति तदर्थः ॥ **कर्तुरधिकरणत्वेने**त्यादि चिन्त्यम्। नह्यत्र वाक्ये प्रेषितो दर्शनक्रियायामध्यवसतिक्रियायां वा कर्ता, अयमित्यस्य कर्तुरुपादानात्। क्रियामित्येतत्कर्मनिरूपितं त्वस्याधिकरणत्वं, स्थाल्यां तण्डुलमित्यादिवत्। अन्यथा देवदत्ते पचतीत्यस्याप्यापत्तिः। कर्तृकर्मद्वारा क्रियाश्रयस्यैवाधिकरणत्वाच्च। न च क्रियामित्येतन्निरूपितं कर्तृत्वं, तस्य सत्त्वभूतार्थप्रतिपादकत्वात् ॥ ५४ ॥

( १९५ हेतुसंज्ञासूत्रम् ॥ १ । ४ । ३ आ. २० सू. )

## २९५ तत्प्रयोजको हेतुश्च ॥ ५५ ॥

**( प्रयोज्यस्य स्वतन्त्रत्वसाधनाधिकरणम् )**

( ११२६ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्रैषेऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाऽप्रसिद्धिः ॥ * ॥

**( भाष्यम् ) प्रैषेऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाया अप्रसिद्धिः प्राप्नोति। स्वतन्त्रप्रयोजको हेतुसंज्ञो भवतीत्युच्यते। न चासौ स्वतन्त्रं प्रयोजयति ॥**

**( प्रदीपः )** **तत्प्रयोजकः॥५५॥ प्रैष इति।** ननु पूर्वसूत्र एव प्रयोज्यस्य स्वातन्त्र्यमुपपादितं तत्किमर्थं चोद्यते॥ एवं मन्यते प्रैषादूर्ध्वं प्रयोज्यस्य स्वव्यापारे प्रवर्तनात् स्वातन्त्र्यम्। प्रैषकाले तु स्वव्यापाराप्रवर्तनात् प्रवृत्तौ प्रैषवैयर्थ्यात्स्वातन्त्र्यं नास्ति। तस्य च प्रयोजको न हेतुः स्यात्। ततश्चात्र न णिज्भवेत् ॥ प्रैषग्रहणमध्येषणनिवृत्त्यर्थमिति केचित्। अध्येषणे किल व्यापार्यमाणस्य गुर्वादेः स्वव्यापारे स्वातन्त्र्यमस्तीति। तत्त्वयुक्तम्। न्यायस्य तुल्यत्वात्। तस्मादत्र प्रैषग्रहणेन नियोगमात्रमुच्यते न तु निकृष्टविषय एव नियोगः ॥

**( उद्द्योतः )** **तत्प्रयोजको ॥ ५५ ॥** शेषषष्ठ्या समासः ॥ **प्रवर्तनात् स्वातन्त्र्य**मित्यस्यास्तु नामेति शेषः ॥

( ११२७ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ स्वतन्त्रत्वात्सिद्धम् ॥ * ॥

**( भाष्यम् ) स्वतन्त्रत्वात्सिद्धमेतत्। स्वतन्त्रमसौ प्रयोजयति ॥**

**( प्रदीपः )** **स्वतन्त्रत्वादिति।** दृष्टसामर्थ्यो वा संभावितसामर्थ्यो वा क्रियायां स्वातन्त्र्येण समाश्रित एव नियुज्यत इत्यर्थः ॥

१ अकुर्वत्यपि कारयतीति प्रसङ्गवारणायेत्यर्थः। ( र. ना. ) २ '–दर्शनात्वक्रि' ॥ 'दर्शनात् अक्रि' ॥ ३ अल्पज्ञलेखकस्य प्रमादेन कुतर्केण वा 'यद्ययमस्वतन्त्रः' इति पाठे मकारे निःस्वरे जाते कथं संहितायां मकार एव स्थित इति ज्ञात्वा कृतानुस्वारः पाठो लिखितपुस्तकत्रये 'यद्ययं स्वतन्त्रः' इत्युपलभ्यते तत्रैकस्मिन्पुस्तके 'यद्ययं परतन्त्रः' इति हरितालादिना शोधनं दृश्यते एकस्मिन्पुस्तके तु 'यद्ययं परतन्त्रः' इति स्फुटं लिखित एवोपलभ्यते। ४ वस्तुतस्तु क्रियामित्येतद्घटकप्रकृत्यर्थक्रियानिरूपितं प्रेषितस्य कर्तृत्वमिति कैयटाशयः। ( र. ना. ) ५ '–सिद्धिः। स्वतन्त्र–'। ६ अन्यथा तृजकाभ्यां कर्तरीति समासनिषेधः स्यात्। ( र. ना. )

( उद्द्योतः ) समाश्रितो विवक्षितः ॥

( ११२८ समाधानबाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ स्वतन्त्रत्वात्सिद्धमिति चेत्स्वतन्त्र-परतन्त्रत्वं विप्रतिषिद्धम् ॥ * ॥**

( भाष्यम् ) यदि च स्वतन्त्रो न प्रयोज्यः, अथ प्रयोज्यो न स्वतन्त्रः, प्रयोज्यः स्वतन्त्रश्चेति विप्रतिषिद्धम् ॥

(प्रदीपः) स्वतन्त्रपरतन्त्रत्वमिति । प्रयोजकसन्निधौ पारतन्त्र्येण स्वातन्त्र्यस्य तिरस्कृतत्वाद्यौगपद्यानुपपत्तिरिति भावः ॥

( ११२९ समाधानसाधकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) किमुक्तम् ? । एकं तावदुक्तम्—*न[1] वा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीत्येतत्स्यात्* इति । अपरमुक्तम्—*न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम्* । *स्वतन्त्र[2]प्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम्* इति ॥ तत्प्रयोजको ॥५५॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये प्रथमस्याध्यायस्य चतुर्थपादे तृतीयमाह्निकम् ॥

( प्रदीपः ) उक्तं वेति । वक्ष्यमाणस्यापि बुद्ध्या विषयीकृतत्वाद्भूतत्वसमारोपादुक्तं वक्ष्यमाणं चाभेदेनोक्तं वेति निर्दिष्टम् ॥ न वा सामान्यकृतत्वादिति । हेतुमति चेत्यत्र वार्तिककारेणैतदुक्तम् ॥ मुक्तसंशयेनेति । अप्रयुक्तो यः स्वयं करोति तेन तुल्यः प्रयोज्योऽपीत्यर्थः ॥ ५५ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

( उद्द्योतः ) ननु न वा सामान्येत्यादेर्हेतुमति चेत्यत्र वक्ष्यमाणतयाऽपरमुक्तमित्यसङ्गतमत आह—वक्ष्यमाणस्यापीति । अयं हि न वा सामान्येति वार्तिकार्थः—कंसं घातयतीत्यादौ हेतुमति चेत्येव सिद्धत्वादुपसंख्यानं न कार्यम् ॥ कथं सामान्यकृतत्वमत आह—हेतुत इति । मुख्याद्धेतुतः पौराणिकादिरविशिष्ट इत्यर्थः । स्वतन्त्रप्रयोजकस्य हेतुत्वादयमप्रयोजको हेतुरिति चेदित्यर्थः ॥५५॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजी(गेश) भट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य चतुर्थे तृतीयमाह्निकम् ॥

( इति विधिशेषप्रकरणे कारकप्रकरणम् )

## प्रथमाध्यायस्य चतुर्थपादे चतुर्थमाह्निकम्

( अथ विधिशेषप्रकरणे निपातसंज्ञाप्रकरणम् )

( १९६ अधिकारसूत्रम् ॥ १ । ४ । ४ आ० १ सू० )

### २९६ प्राग्रीश्वरान्निपाताः ॥ ५६ ॥

( रेफोच्चारणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं रेफाधिक ईश्वरशब्दो गृह्यते ? ॥

( प्रदीपः ) प्राग्रीश्वरात् ॥ ५६ ॥ किमर्थमिति । प्रागीश्वरादित्येव क्रियतां प्रत्यासत्त्याऽधिरीश्वर ई[3]तीश्वरशब्दो ग्रहीष्यत इति प्रश्नः ॥

( उद्द्योतः ) प्राग्रीश्वरा ॥ ५६ ॥ अधिरीश्वर इतिसूत्रस्थे ईश्वरे इति पदे प्रकृतिभागस्य पूर्वान्तरेफेण सहानुकरणं रीश्वरादिति ॥ नन्वन्यस्यापीश्वरशब्दस्यावधित्वं स्यादत आह—प्रत्यासत्त्येति ॥

( ११३० समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ रीश्वराद्वीश्वरान्मा भूत् ॥ * ॥**

( भाष्यम् ) रीश्वरादित्युच्यते, वीश्वरान्मा भूदिति—"शकिणमुल्कमुलावीश्वरेतोसुन्कसुनौ" इति ॥

( प्रदीपः ) वीश्वरादिति । व्याप्तिन्यायाद्वीश्वरात्प्राक् स्यात् । य[4]दा संहितया सूत्रपाठस्तदा वकारसहित ईश्वरशब्दोऽस्तीत्येतदभिप्रेत्यैवमुक्तम् ॥

( उद्द्योतः ) ननु प्रथमोपस्थितत्वादस्यैव ग्रहणं स्यादत आह—व्याप्तीति ॥ वीश्वरादिति । तत्रापीश्वरशब्दोऽस्तीति । भावः ॥ वीश्वरशब्दस्य क्वाप्यश्रवणादाह—यदेति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—अनन्तरो य ईश्वरशब्दस्तस्य ग्रहणमिति । यदयं "कृन्मेजन्तः" इति कृतो मान्तस्यैजन्तस्याव्ययसंज्ञां शास्ति ॥

( प्रदीपः ) यदयमिति । सेर्कसेन्प्रभृतीनां णमुल्कमुलोश्च निपातत्वादेवाव्ययसंज्ञायां सिद्धायां कृन्मेजन्त इत्यव्ययसंज्ञाविधानाज्ज्ञापकाद्व्याप्तिर्बाध्यतेँ इत्यर्थः ॥

( ११३१ समाधानसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ कृन्मेजन्तः परोऽपि सः ॥ * ॥**

( भाष्यम् ) परोऽप्यतस्मात्कृन्मेजन्तश्चास्ति तदर्थमेतत्स्यात् ॥

---

१ अथवा आख्यानात्कृतस्तदाचष्टे इति वार्तिकं नारब्धव्यम् । कंसं घातयतीत्यादौ सामान्यसूत्रेण हेतुमति चेत्यनेन णिचः सिद्धत्वात् । हि यतो मुख्याद्धेतुतः कंसवधे हेतुकर्तुरिन्द्रादेः पौराणिकादिः कंसवधहेतुरविशिष्टः । पौराणिकादौ तत्त्वारोपादिति भावः । ( र. ना. ) २ स्वतन्त्रप्रयोजकस्य हेतुत्वात्प्रयोज्यस्य च स्वातन्त्र्याभावात्तत्प्रयोजकस्य हेतुसंज्ञा न सिध्यतीति चेन्मुक्तसंशयेन मुक्तः स्वातन्त्र्यसंशयो यस्य तेन निश्चितस्वातन्त्र्यवता तुल्यं प्रयोज्यं कर्तृ । तथा च प्रयोज्यकर्तुः स्वातन्त्र्यात्तत्प्रयोजकस्य हेतुसंज्ञा सिध्यतीति भावः । ( र. ना. ) ३ 'इत्ययमेवेश्वर' । ४ अत्र यदेत्यनेन "यदि वेदाः प्रमाणं स्युः" इत्यत्रेवा-निश्चितत्वं निश्चितेऽपि दर्शयन् संहितापाठस्यैव पाणिनिकृतत्वमिति निश्चाय्यते । अत एव स्थानेन्तरतमउरण्रपर इत्यत्र प्रथमान्तसप्तम्यन्तपाठसंभावना । अन्यथा व्यस्तपाठेऽन्यतरपाठस्य निर्णये संभावनानुत्थानमेव स्यात् । ५ '–जन्तस्य चाव्य' । ६ व्याप्तिन्यायस्वीकारे वीश्वरात्प्राक् निपातसंज्ञायामित्यादिः । ( र. ना. ) ७ तथा च प्रत्यासत्त्याऽधिरीश्वरे इत्यतः प्राक् निपातसंज्ञायां सेकसेन्प्रभृतीनां णमुल्कमुलोश्च निपातत्वाभावात् कृन्मेजन्त इत्यव्ययसंज्ञाविधानं सार्थकमिति भावः । ( र. ना. )

(प्रदीपः) परोपीति । कृत्यार्थे तवैकेनित्यादिरेजन्तः खमुञादिश्च मान्तोऽस्ति तदर्थमेतस्मादित्यज्ञापकं व्याप्तेर्बाधस्य ॥

(समाधानबाधकभाष्यम्)

**यत्तर्ह्यव्ययीभावस्याव्ययसंज्ञां शास्ति तज्ज्ञापयत्याचार्यः—अनन्तरो य ईश्वरशब्दस्तस्य ग्रहणमिति ॥**

(प्रदीपः) **यत्तर्हीति** । व्याप्तावाश्रीयमाणायां निपातत्वादव्ययीभावस्याव्ययसंज्ञा सिद्धैव किं तद्विधानेनेति ज्ञापकं संपद्यते ॥

(११३२ समाधानसाधकवार्तिकम् ॥ ३ ॥)

**॥ * ॥ समासेष्वव्ययीभावः ॥ * ॥**

(भाष्यम्) **समासस्यैतज्ज्ञापकं स्याद्—अव्ययीभाव एव समासोऽव्ययसंज्ञो भवति नान्य इति ॥**

(प्रदीपः) **समासेष्विति** । तुल्यजातीयव्यावृत्तये नियमार्थमेतत्स्याद् न तु व्याप्त्यग्रहणज्ञापनार्थमेतदित्यर्थः ॥

(उद्द्योतः) ननु नियमापेक्षया ज्ञापकत्वं युक्तमत आह—तुल्येति । न्यायबाधकल्पने बहुषु शास्त्रबाधः कल्प्यः । नियमे तु सजातीयविषय एवेति लाघवं नियमे इति भावः ॥ **समासे** एतज्ज्ञापकमिति भाष्ये ज्ञापकशब्दो नियमपर इति बोध्यम् ॥

(समाधानबाधकभाष्यम्)

**एवं तर्हि लोकत एतत्सिद्धम् । तद्यथा—'लोके आ वनान्तादा उदकान्तात् प्रियं पान्थमनुव्रजेत्' इति । य एव प्रथमो वनान्त उदकान्तश्च ततोनुव्रजन्ति ॥**

(प्रदीपः) **एवं तर्हीति** । लोके प्रत्यासत्तिराश्रीयते । यथा **कपिञ्जलानालभेतेति** त्रय एवालभ्यन्ते न चतुरादयः । शास्त्रे च लोकव्यवहारोऽङ्गीक्रियते इति भावः ॥

(उद्द्योतः) ननु लोकन्यायस्य शास्त्रे कथमाश्रयणमत आह—**शास्त्रे चेति** । लक्ष्यानुरोधात्प्रत्यासत्तिरेवाश्रयिष्यते इति भावः ॥ भाष्ये **प्रियं प्रोथमिति** क्वचित्पाठः । तत्र प्रोथोऽध्वगः । प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु । प्रोथोध्वगेऽश्वघोणायां कटिस्त्रीगर्भयोरपीति मेदिनीविश्वोक्तेः ॥ यत्तु हरदत्तेन—प्रोथं पर्याप्तमित्यर्थकं क्रियाविशेषणं, प्रोथ पर्याप्ताविति धातोः पचाद्यजित्युक्तम् । तदुक्तकोशानुक्तेस्तस्य धातोरभावाच्च प्रकृतेर्थासङ्गतेर्गूथयूथप्रोथा इत्युणादिसूत्रेण थप्रत्ययान्ततया साधनाच्चोपेक्ष्यम् ॥

(११३३ समाधानसाधकवार्तिकम् ॥ ४ ॥)

**॥ * ॥ लौकिकं चातिवर्तते ॥ * ॥**

(भाष्यम्) **द्वितीयं तृतीयं च वनान्तमुदकान्तं चानुव्रजन्ति तस्माद्रेफाधिक ईश्वरशब्दो ग्रहीतव्यः ॥**

(प्रदीपः) **लौकिकमिति** । लौकिकं प्रत्यासत्तिलक्षणं न्यायं लोक एव परित्यजति । स्नेहादिवशाद् द्वितीयमप्युदकान्तं प्राप्य निवर्तते ॥ **कपिञ्जलानित्यत्र** तु प्रथमातिक्रमे कारणाभावान्न **हिंस्यात्सर्वा भूतानीति** चतुर्थादिषु निषेधावताराञ्चय एवालभ्यन्ते । इह तु विरोधकाभावाद्व्याप्तिन्यायाश्रयः स्यात् । **न लोकाव्ययेत्यव्ययत्वाल्लोकादीनां** सिद्धे षष्ठीनिषेधे पुनस्तेषामुपादानमव्ययसंज्ञाया एवाभावं ज्ञापयेत् । निपातसंज्ञा तु स्यादेव । ततश्चिकीर्ष्वैर्थमित्यादौ **निपात एकाजिति** प्रगृह्यसंज्ञा स्यात् ॥

(उद्द्योतः) प्रथमातिक्रमे इति । सकलकपिञ्जलालम्भासंभवात्केषुचिदालब्धव्येषु त्रयो वाऽथ चतुरादय इति संदेहे इति भावः ॥ व्याप्तिन्यायाश्रये बाधकमाह—**निषेधावतारादिति** । बहुषु न हिंस्यादिति निषेधबाधकल्पनाभिया[1] प्रथमातिक्रमन्यायस्यैव[2] तत्राङ्गीकार इति भावः[3] ॥ **पर्यग्निकृतानारण्यानुत्सृजन्तीत्युक्ते**र्हिंसाप्रसक्त्यभावार्दोथैव युक्तिरिति बोध्यम् ॥ ननु न लोकेतिसूत्रे लोकादिग्रहणमिह व्याप्तिन्यायबाधकं स्यादत आह—**न लोकेति** । एवं चात्र रेफोच्चारणमेव ज्ञापकमत्र शास्त्रे प्रथमातिक्रमन्यायानाश्रयणस्येति[4] बोध्यम् ॥ अत एव **णिजां त्रयाणामित्यादौ**[5] त्रयाणां ग्रहणं चरितार्थम् ॥

(प्राग्ग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ प्राग्वचनं किमर्थम् ? ॥**

(प्रदीपः) **अथेति** । प्राग्ग्रहणद्वारेणावधिनिर्देशश्चोद्यते । निपाता इत्येवास्तु यथा प्रत्यय इत्यादिरधिकारो विनाप्यवधिनिर्देशेनाभिमतविषये प्रवर्तते तथायमपि प्रवर्तिष्यते इति भावः ॥

(उद्द्योतः) ननु प्राग्ग्रहणाभावे परशब्दोप्यध्याह्रियेतेत्यत आह—**प्राग्ग्रहणेति** ॥

(११३४ समाधानवार्तिकम् ॥ ५ ॥)

**॥ * ॥ प्राग्वचनं संज्ञाऽनिवृत्त्यर्थम् ॥ * ॥**

(भाष्यम्) **प्राग्वचनं क्रियते निपातसंज्ञायां अनिवृत्तिर्यथा स्यात् । अक्रियमाणे हि प्राग्वचनेऽनवकाशाः गत्युपसर्गकर्मप्रवचनीयसंज्ञाः निपातसंज्ञां बाधेरन् । ताः मा बाधिषतेति प्राग्वचनं क्रियते ॥**

(प्रदीपः) **निपातसंज्ञामिति** । चादिषु प्रादिष्वप्यक्रियायोगे विकल्पितगतिसंज्ञाविषयेषु साक्षात्प्रभृतिषु च गतिसंज्ञा-

---

[1] काशीमुद्रितपुस्तकशोधकैरविचार्यैव 'निषेधकल्पनाभिया' इति पाठो मुद्रितः स एव B. A. S. मुद्रकैरनुकृतः ॥ [2] प्रथमेति । तथाच जैमिनिसूत्रम् "प्रथमं वा नियम्येत कारणादतिक्रमः स्यात्" (११।१।४३)

इति । [3] प्रथमातिक्रमे मानाभाव इति न्यायाकारः । (र. ना.) [4] व्याप्तिन्यायस्यैवाश्रयणमिति भावः । (र. ना.) [5] आदिना भृञामिदित्यत्रानुवृत्तस्य त्रयाणामित्यस्य ग्रहणम् ।

भावपक्षे सावकाशा निपातसंज्ञा गत्यादिसंज्ञाभिर्बाध्येतेत्यर्थः ॥

(उद्द्योतः) नन्वियमपि निरवकाशेत्यत आह—चादिष्विति। चादिषु सावकाशा, अक्रियायोगे प्रादिषु सावकाशेत्यादिक्रमेणान्वयः ॥ बाध्येतेति। तत्तद्विशेषसंज्ञाविषये अस्या अनुपस्थितिरेव स्यादिति भावः ॥

(आक्षेपभाष्यम्)

**अथ क्रियमाणेपि प्राग्वचने यावताऽनवकाशा एताः संज्ञाः कस्मादेव न बाधन्त इति ॥**

(उद्द्योतः) भाष्ये—अथ क्रियमाणेपीति। प्राग्रीश्वरादित्युक्तावपि विशेषसंज्ञाऽविषय एवोपस्थितिः स्यादित्यर्थः ॥

(समाधानभाष्यम्)

**क्रियमाणे हि प्राग्वचने सत्यां निपातसंज्ञायामेता अवयवसंज्ञा आरभ्यन्ते तत्र वचनात्समावेशो भविष्यति ॥ प्राग्रीश्वरात् ॥ ५६ ॥**

(प्रदीपः) क्रियमाण इति। रीश्वरादिति पञ्चम्या प्राक्शब्दाध्याहारे लब्धे पुनःश्रुति प्राग्ग्रहणं संपद्यते ॥ परशब्दाध्याहारेण तु पञ्चमी न भविष्यति। चादयोऽसत्त्वे इत्यादीनामसंबद्धत्वप्रसङ्गात्। तत्रैव वा द्वौ प्राक्शब्दावुच्चार्येते। तेनायमर्थः—प्राग्रीश्वराद्ये व्यवस्थितास्ते प्राङ्निपातसंज्ञा भवन्तीति निपाताः सन्तो गत्यादिसंज्ञा इति समावेशः सिद्धः। केवले तु निपाता इत्यधिकारे क्रियमाणे सत्यामपि प्रतियोगमनुवृत्तावेकसंज्ञाधिकारात्पर्यायः स्यान्न तु समावेशः ॥ अवयवसंज्ञा इति। विशिष्टावधिपरिच्छिन्नस्य समुदायस्यान्तरालपतिता गत्यादिसंज्ञाभाजोऽवयवा भवन्ति तेषां संज्ञां इत्यर्थः ॥ ५६ ॥

(उद्द्योतः) समाधत्ते—क्रियमाणे हीति। अवधिनिर्देशसामर्थ्यात्प्रतिसूत्रमुपस्थितौ तत्सामर्थ्याद् समावेश इति भावः ॥ नन्वेवमपि पर्यायः स्यादत आह—रीश्वरादिति ॥ असंबद्धत्वेति। विधेयानिर्देशादिति भावः ॥ निपाताः सन्त इति। प्राक्ग्रहणसामर्थ्यादेतदर्थलाभस्तेन गत्यादिसंज्ञानां निमित्तमेव निपातसंज्ञेति समावेशसिद्धिरिति भावः ॥ विशिष्टावधीति। रीश्वररूपावधिपरिच्छिन्नसमुदायस्येत्यर्थः ॥ अवयवसंज्ञा इति षष्ठीतत्पुरुष इति भावः ॥ ५६ ॥

(१९७ निपातसंज्ञासूत्रम्। १। ४। ४ आ. २ सू.)

## २९७ चादयोऽसत्त्वे ॥ ५७ ॥

(सत्त्वशब्दार्थनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**अयं सत्त्वशब्दः—अस्त्येव द्रव्यपदार्थकः। तद्यथा—सत्त्वमयं ब्राह्मणः सत्त्वमियं ब्राह्मणीति। अस्ति क्रियापदार्थकः सद्भावः सत्त्वमिति। कस्येदं ग्रहणम्? ॥**

(प्रदीपः) चादयोऽसत्त्वे ॥ ५७ ॥ अयमिति। अर्थद्वयेपि सत्त्वशब्दस्य प्रयोगदर्शनाद्विशेषावगतौ प्रमाणानुपलम्भात्प्रश्नः। तत्र सीदन्त्यस्मिन्जातिगुणक्रिया इति सत्त्वं द्रव्यमुच्यते। यदा तु सतो भावः सत्त्वमिति तदा साध्यमानतया क्रियारूपापन्ना सत्ता सत्त्वशब्देनोच्यते ॥

(उद्द्योतः) चादयोऽसत्त्वे ॥ ५७ ॥ सीदन्त्यस्मिन्निति। विशेषणत्वेनावतिष्ठन्तेऽस्मिन्नित्यर्थः। सदेरौणादिकस्त्वः ॥ साध्यमानेति। वस्तुतः साध्यमानावस्थः क्रियारूपापन्नो योर्थः सत्तारूपः स सत्त्वपदेनोच्यत इत्यर्थः ॥

(समाधानभाष्यम्)

**द्रव्यपदार्थकस्य ॥ कुत एतत्? । एवं च कृत्वा विधिर्हि सिद्धो भवति, प्रतिषेधश्च ॥**

(प्रदीपः) एवं च कृत्वेति। यदि सत्त्वशब्देन सत्तोच्येत तदा प्रतिषेधोऽनर्थकः स्यात्। नहि चादिषु सत्तावाची कश्चिच्छब्दोस्ति यदर्थो निषेधः स्यात्। पशुर्वै पुरुष इत्यत्र च निपातसंज्ञा स्यात्। चाद्यनुकरणानां चः पठितो ह्यर्थस्यादर्थ इत्यादावपि विधिनिषेधौ यथाभिमतविषयं न व्यवतिष्ठेयाताम्। द्रव्यग्रहणे तु व्यवतिष्ठेते। द्रव्यशब्देन चात्र सिद्धरूपं वस्त्वभिधीयते। तदुक्तम्—

> **वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।**
> **द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥**

इति ॥

(उद्द्योतः) चाद्यनुकरणार्थानामिति पाठे चादीनामनुकरणं स्वरूपबोधनमर्थः प्रयोजनं येषां तेषामित्यर्थः ॥ इत्यादावपीति। निपातसंज्ञा स्यादित्यनुषज्यते ॥ विधिनिषेधाविति। अस्येति हेतोरित्यादिः ॥ यथाभिमतविषयमिति। अनुकार्ये निपातत्वं नानुकरणे, नापि गवादिपरपश्वादावित्यादीति भावः ॥ सिद्धरूपमिति। तत्त्वं च लिङ्गसंख्याकारकान्वयित्वेन सर्वनामपरामर्शयोग्यत्वेन वा। तदाह—वस्तूपेति ॥ लक्षणान्तरमाह—भेद्यत्वेनेति। लिङ्गसंख्याविशेष्यत्वेनेत्यर्थः ॥

(असत्त्वेइत्यत्रप्रसज्यप्रतिषेधाधिकरणम् ॥)

(एकदेशिभाष्ये आक्षेपभाष्यम्)

**किं पुनरयं पर्युदासः—यदन्यत्सत्त्ववचनादिति, आहोस्वित्प्रसज्यायं प्रतिषेधः—सत्त्ववचने नेति? ॥**

(प्रदीपः) किं पुनरिति। उभयथा शास्त्रे दर्शनात्प्रश्नः ॥

(उद्द्योतः) उभयथेति ॥ द्रव्यभिन्नेर्थे वर्तमानाश्चादय इति पर्युदासेऽर्थः। सत्त्वे वर्तमानं चादिस्वरूपं न निपातसंज्ञमिति प्रसज्यप्रतिषेधेऽर्थः ॥

---

१ शास्त्रबाधे शास्त्रस्याप्रामाण्यं प्रसज्येतेति अनुपस्थितिकल्पनमेववरमिति भावः। (र. ना.) २—'न्ति- निपा—' ३—'वेशसिद्धिः। ४ 'तत्पुरुषः ॥ ५ ननु साध्यत्वेन प्रतीयमान इति भावः। (र. ना.) ६ 'विधिश्च'। ७ 'सिद्धावस्थारूपं'। ८ यत्र लिङ्गसंख्याकारकरूपं वस्तु उपलक्षणं व्यावर्तकं, यत्रार्थे सर्वनाम प्रयुज्यते यश्च भेद्यत्वेन लिङ्गसंख्याविशेष्यत्वेन विवक्षितः सोऽर्थो द्रव्यमित्युच्यते इत्यन्वयः। तथाचात्रोद्योतोक्तं लक्षणत्रयं लब्धमिति भावः। (र. ना.) ९ इष्टमिति शेषः। (र. ना.) १० काशी B. A. S. पुस्तकयोः 'न' इत्यसंगतः पाठः।

( विशेषप्रश्नभाष्यम् )

**किं चातः ? ॥**

( पर्युदासदूषकभाष्यम् )

**यदि पर्युदासः, विप्र इत्यत्रापि प्राप्नोति । क्रियाद्रव्यवचनोयं संघातः । द्रव्यादन्यश्च विधिनाश्रीयते । अस्ति च प्रादिभिः सामान्यमिति कृत्वा तदन्तविधिना निपातसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) **विप्र इति** । विप्रातीति विप्रः । **आतश्चोपसर्गे** इति कप्रत्ययान्तः । क्रियोपसर्जनद्रव्यवाचित्वात् केवलाद् द्रव्यात् क्रियाद्रव्यसमुदायस्यान्यत्वाद्द्रव्यादन्यस्मिन्नर्थे वर्तते ॥ **प्रादिभिरिति** । निपातत्वेनाभिमतैः ॥ **सामान्यमिति** । सारूप्यम् ॥ **तदन्तविधिनेति** ॥ ननु विशेष्यासन्निधानात्कथं तदन्तविधिः । एवं तर्ह्ययमर्थः—निपातस्य संज्ञा निपातसंज्ञा सा चाव्ययसंज्ञा । तस्यां चास्ति तदन्तविधिः॥**प्रयोजनं सर्वनामाव्ययसंज्ञायाम्**॥इति । तत्र विप्रशब्दे प्रशब्दस्य निपातसंज्ञायां सत्यां यथा परमोच्चैरिति स्वराद्यन्तस्याव्ययसंज्ञा भवति, एवं निपातान्तस्यापि स्यात् । ततो लुक् प्रसज्येत । विप्रकम्बल इत्यत्र च निपातान्तस्य पूर्वपदप्रकृतिस्वरः स्यात् ॥ ५७ ॥

( उद्द्योतः ) चादिष्वपाठात्कथं प्राप्तिरित्यतो भाष्ये—**अस्ति च प्रादिभिरिति** ॥ **निपातत्वेनेति** । एवं चोत्तरसूत्रविषयेऽयं दोष इत्यर्थः ॥ तथापि समुदाये कथं प्राप्तिरतो भाष्ये—**तदन्तविधिनेति** ॥ **निपातस्य संज्ञेति** । सकलनिपातमुद्दिश्यैकवाक्यविहिता संज्ञेत्यर्थः[1] ॥ प्रगृह्यसंज्ञा तु न तन्मात्रोद्देशेन विहितेति भावेनाह—**सा चाव्ययेति** ॥ **तस्यां चास्तीति** । **प्रयोजनमित्यादेर्गमकाच्छब्दरूपं** विशेष्यमादाय तदन्तविधिरिति भावः ॥ अत्रेदं बोध्यम्—एवं हि पशुशब्दस्य जातिविशिष्टद्रव्यवाचिनोप्यसत्त्वभूतार्थत्वादसत्त्व इत्यस्य व्यावर्त्यप्रसिद्धिस्तस्मात्किं पुनरित्यादिभाष्यमेकदेशिनोरुक्तिरित्याहुः ॥ ५७ ॥

( प्रसज्यप्रतिषेधभाष्यम् )

**अथ प्रसज्यप्रतिषेधः । न दोषो भवति ॥**

( सिद्धान्तिभाष्यम् )

**यथा न दोषस्तथास्तु ॥ चादयोऽसत्त्वे ॥ ५७ ॥**

---

( १९८ उपसर्गसंज्ञासूत्रम् ॥ १ । ४ । ४ आ० ३ सू० )

## २९८ प्रादय उपसर्गाः क्रियायोगे ॥ १ । ४ । ५८[2] ॥

( योगविभागावश्यकताधिकरणम् )

( ११३५ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रादय इति योगविभागः [ निपातसंज्ञार्थः, एकयोगे हि निपातसंज्ञाभावः ] ॥ * ॥**

( भाष्यम् ) **"प्रादयः" इति योगविभागः कर्तव्यः । प्रादयोऽसत्त्ववचना निपातसंज्ञा भवन्ति । तत "उपसर्गाः क्रियायोगे" इति ॥ किमर्थो योगविभागः ? । निपातसंज्ञार्थः । निपातसंज्ञा यथा स्यात् ॥ एकयोगे हि निपातसंज्ञाभावः । एकयोगे हि सति निपातसंज्ञाया अभावः स्यात् । यस्मिन्नेव विशेषे गत्युपसर्गकर्मप्रवचनीयसंज्ञास्तस्मिन्नेव विशेषे निपातसंज्ञा स्यात् ॥**

( प्रदीपः ) **प्रादयः** ॥ ५८ ॥ यदा प्रागेव **"प्रादयः"** इति योगो विभज्यते तदा प्रयोजनकथनाय वार्तिकम् । यदा तु **"प्रादय उपसर्गाः क्रियायोगे"** इत्येको योगः पठ्यते तदा योगविभागः कर्तव्यत्वेन चोद्यते ॥ **एकयोगे हीति** । अक्रियायोगे निपातसंज्ञा न स्यात् । क्रियायोग एव तु गत्युपसर्गसंज्ञावत्स्यात् । ततश्च प्रगत आचार्यः प्राचार्य इत्यत्र पूर्वपदप्रकृतिस्वरो न स्यात् ॥ **यस्मिन्नेवेति** । **कर्मप्रवचनीयसंज्ञा सुः पूजायामि**त्यादिभिर्योगैः प्रादीनां विहिता ॥

( उद्द्योतः ) प्रादय उपसर्गाः ॥ ५८ ॥ ननु विभक्तस्यैव पाठात् कर्तव्य इत्यनुपपन्नमत आह—**यदेति** ॥ **प्रागेवेति** । सूत्रकृता सूत्रप्रणयनकाले एवेत्यर्थः । एवं व्याख्याने भाष्यस्य कर्तव्यपदस्वारस्यभङ्गः ॥ ननु **निपाता** इत्यस्याधिकारादेकयोगेपि निपातत्वं सिद्धमत आह—**अक्रियते** ॥ तदाह—भाष्ये—**यस्मिन्नेव विशेष इति** । क्रियायोगरूपे इत्यर्थः ॥ ननु प्रादयः क्रियायोगे उपसर्गा गतय इतिवत् प्रादयः कर्मप्रवचनीया इति वचनाभावादाह[3]—सुः पूजायामिति ॥

( न्यूनतापूरणाधिकरणम् )

( ११३६ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ मरुच्छब्दस्योपसंख्यानम् ॥**

( भाष्यम् ) **मरुच्छब्दस्योपसंख्यानं कर्तव्यम् ।**

---

१ प्रकृतेननिपातसंज्ञाविधायक सूत्रेणेत्यर्थः । ( र. ना. )

२ केषुचित्पुस्तकेषु "प्रादयः ॥ ५८ ॥ उपसर्गाः क्रियायोगे ॥ ५९ ॥ इत्यत्र पृथक् संख्याङ्कयोजनं दृश्यते, तत् प्रमादकमेव ॥ न चैवम् 'आकडाराद्धुष्वनुप्रतिगृणऊर्यादिच्छन्दांसि तिङो देश' इति पादसमाप्तिलेखोऽसङ्गतः स्याद् इति वाच्यम्, प्राचीनपुस्तके 'आकडाराद्धुष्वनुप्रतिगृणोनुकरणं विभाषाव्यवहितास्तान्येकवचन नव' इति लेखस्योपलभ्यमानत्वेन तादृशलेखस्यासंगताविरहापत्तेः ।

३ वचनाभाव इत्यत आहेति पाठः साधुः । ( र. ना. )

**मरुद्त्तो मरुत्तः "अच उपसर्गात्" इति तत्वं यथा स्यात्॥**

(प्रदीपः) **मरुद्त्त इति**। प्रक्रियायां रूपमलौकिकमिदमुपात्तम्। तत्वेन हि नित्यं भाव्यम्। उपसर्गसंज्ञैव चाश्रीयते न निपातसंज्ञा। तस्यां हि सत्यां **निपाता आद्युदात्ता** इत्याद्युदात्तत्वं **तृतीया कर्मणीति** पूर्वपदप्रकृतिस्वरेण स्यात्। अन्तोदात्तश्च मरुच्छब्द इष्यते। अव्ययसंज्ञा च स्यात्। तत्र एवोपसर्गसंज्ञेष्यते। अनभिधानाद्धि किरञ्चे[2] न भवति। संज्ञावचनसामर्थ्याच्चानजन्तत्वेपि तत्वं प्रवर्तते। अनेन तु न्यायेन मरुन्नयती[3]ति तवर्गव्यवायेपि णत्वं प्राप्नोति। तस्मात्तत्व एवोपसर्गसंज्ञा वक्तव्या॥ प्रकारान्तरेणापि मरुत्तशब्दो व्युत्पादयिष्यते **तप्पर्वमरुद्भ्यामिति**॥

(उद्योतः) नन्वच उपसर्गादित्यत्र त्त इति द्वितकारकनिर्देशात्सर्वादेशस्तत्वमनजन्तत्वेपि संज्ञाविधानसामर्थ्याद्भवति। तच्च नित्यमिति मरुद्त्त इत्ययुक्तमत आह—**प्रक्रियायामिति**॥ नन्वलौकिकप्रक्रियावाक्यं मरुत्दात इति दर्शयितुमुचितं न तु दत्त इतीति चेदत्राहुः—मरुद्भिर्दत्त इत्यर्थकलुप्तविभक्तिकमरुच्छब्देन श्रुतौ मरुत्तशब्दस्य विग्रहप्रदर्शनं कृतं तथैव भगवतोक्तमिति॥ **इष्यत इति**। **तृतीयाकर्मणीति**। पूर्वपदप्रकृतिस्वरेणेत्यर्थः। मृग्रोरुतिप्रत्ययान्तत्वादन्तोदात्तः सः। एवं च मरुत्तपदं मध्योदात्तमिति भावः॥ **अव्ययसंज्ञा च स्यादिति**। तथा च मरुद्भिर्दत्त इति मत्वर्थीयप्रकरणस्थभाष्यप्रयोगे विभक्तिश्रवणं न स्यादिति भावः॥ नन्वस्योपसर्गत्वे **उपसर्गे घोः किरातश्चोपसर्गे** इति अङ्की स्यातामत आह—**अनभिधानादिति**॥ **अनेन न्यायेन** संज्ञावचनसामर्थ्यरूपेण॥ **तस्मात्तत्व एवेति**। अत एवोपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वमपि न॥ नन्वेवं तत्वविधावेव मरुत उप-[संख्यानेनेन सिद्धे संज्ञाविधावुप]संख्यानं[5] व्यर्थं स्यादिति चिन्त्यम्॥ केचित्तु[6]त्रोपसंख्यानेन निपातत्वमिष्यते एव। तेनाद्युदात्त एव मरुत्शब्दः। निपातसंज्ञापि तत्वविषये एवेति मरुद्भिर्दत्त इति पाश्चमिकभाष्यप्रयोगस्य नानुपपत्तिः। पञ्चमेपि **तन् पर्वमरुद्भ्यामिति** निदेव पाठ इत्याहुः॥ कैयटस्वारस्येन तु स पिदिति बोध्यम्॥ **व्युत्पादयिष्यत इति**। मत्वर्थीयप्रकरणे इति शेषः॥५८॥

(११३७ आक्षेपवार्तिकम्॥३॥)

## ॥ * ॥ श्रच्छब्दस्योपसंख्यानम्॥ * ॥

(भाष्यम्) **श्रच्छब्दस्योपसंख्यानं कर्तव्यम्। श्रद्धा॥ प्रादय उपसर्गाः॥ ५८॥**

(प्रदीपः) **श्रच्छब्दस्येति**। तेन मिदादिषु श्रद्धाशब्दो न पठितव्यो भवति॥ ५८॥



(१९९ गतिसंज्ञासूत्रम्। १। ४। ४ आ. ४ सू.)

# २९९ गतिश्च॥ १। ४। ५९॥

(न्यूनतापूर्त्यधिकरणम्)

(११३८ आक्षेपवार्तिकम्॥ १॥)

## ॥ * ॥ कारिकाशब्दस्य॥ * ॥

(भाष्यम्) **कारिकाशब्दस्योपसंख्यानं कर्तव्यम्। कारिकाकृत्य॥**

(प्रदीपः) **गतिश्च॥ ५९॥ कारिकाशब्दस्येति**। कारिका क्रिया मर्यादा स्थितिरित्यर्थः। यत्न इत्यपरे। यस्तु श्लोकवाची कारिकाशब्दस्तस्य ग्रहणं न भवति। क्रियायोगग्रहणेन कारिकाशब्दस्य विशेषणात्क्रियावृत्तेर्ग्रहणात्॥

(उद्योतः) **गतिश्च॥ ५९॥ कारिकेति**। भावे ण्वुल्। श्लोकादौ तु कारके॥ **श्लोकवाचीति**। दासीवाचिनोप्युपलक्षणम्। **क्रियायोगेति**। क्रियारूपे युज्यमाने वर्तमानादित्यर्थः॥

(११३९ आक्षेपवार्तिकम्॥ २॥)

## ॥ * ॥ पुनश्चनसौ छन्दसि॥ * ॥

(भाष्यम्) **पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम्। पुनरुत्स्यूतं वासो देयम्। पुनर्निष्कृतो रथः। उशिग्दूतश्चनोहित इति॥**

(प्रदीपः) **पुनश्चनसाविति**। ततश्च पुनराधेयमित्यत्र कृदन्तोत्तरपदप्रकृतिस्वरेण **यतो नाव** इति धेशब्द उदात्तः॥ **पुनरुत्स्यूतमिति**। गतित्वात्समासः। स्वरस्तु प्रवृद्धादेराकृतिगणत्वादन्तोदात्तत्वम्॥ **चनोहित इति**। निपातत्वादाद्युदात्तस्य चनःशब्दस्य **गतिरनन्तर** इति प्रकृतिस्वरः॥

(उद्योतः) पुनःशब्दस्य गतित्वे स्वयं फलं दर्शयति—**ततश्चेति**। एतेन पुनरुत्स्यूतमिति भाष्योदाहरणे **सुप् सुपेति** समासेनैव सिद्धे पुनःशब्दस्य गतिसंज्ञा व्यर्थेत्यपास्तम्। तद् ध्वनयन्वक्ष्यति—**स्वरस्त्विति**। **सह सुपेति**सूत्रे भाष्ये त्वसमस्तत्वाभिप्रायेण **गतिर्गताविति** निघात इत्युक्तम्॥

(क्रियाविशेषावधारणाधिकरणम्)

(११४० आक्षेपवार्तिकम्॥ ३॥)

## ॥ * ॥ गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रतीति वचनम्॥ * ॥

(भाष्यम्) **गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञा भवन्तीति वक्तव्यम्॥**

---

१ उद्योते एतादृशपाठदर्शनेनेदं संपातायातमिति भाति। (र. ना.) २ 'रत्र न'। ३ 'न्नमयती'। ४ B. A. S. मुद्रितपुस्तके तु 'निपात्यते' इत्येवं पाठो मुद्रितः काशीमुद्रितपाठानुरोधात्। ५ अयं कोष्ठकान्तर्गतपाठो B. A. S. मुद्रितपुस्तकेपि न मुद्रितः काशीमुद्रितपुस्तकेऽनुपलम्भात्। ग्रन्थयोजनातु ग्रन्थकृन्मनस्येवेति तेष माशयः स्यात्। ६ तत्वविषये एव निपातसंज्ञेति वादिकैयटस्वारस्येनेत्यर्थः। तन्मते हि मरुच्छब्दोऽन्तोदात्त इति भावः। (र.ना.)

( प्रदीपः ) गत्युपसर्गसंज्ञा इति । क्रियायोग इति सामान्येनोपादानाद्विशेषावधारणार्थं वचनम् । अथ वा प्रत्यासन्नैव क्रिया गृह्यते इति न्यायव्युत्पादनार्थम् ॥

( प्रयोजनप्रश्नभाष्यम् )

किं प्रयोजनम् ? ॥

( ११४१ प्रयोजनवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ प्रयोजनं घञ् षत्वणत्वे ॥ * ॥

( भाष्यम् ) घञ् [ प्रयोजयति ] प्रवृद्धो—भावः प्रभावः "अनुपसर्गे"[1] इति प्रतिषेधो मा भूत् ॥

[ षत्वणत्वे च प्रयोजयतः ] षत्वम्—विगताः सेचका अस्माद्ग्रामाद्विसेचको ग्रामः "उपसर्गाद्—" इति षत्वं मा भूत् ॥ णत्वम्—प्रगता नायका अस्माद्ग्रामात्प्रनायको ग्रामः "उपसर्गाद्—" इति णत्वं मा भूत् ॥

( ११४२ लाघववार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ वृद्धिविधौ च धातुग्रहणानर्थक्यम् ॥ * ॥

( भाष्यम् ) वृद्धिविधौ च धातुग्रहणमनर्थकम्—"उपसर्गादृति धातौ" इति । तत्र धातुग्रहणस्यैतत्प्रयोजनमिह मा भूत्—प्रर्षभं वनमिति ॥ क्रियमाणे चापि धातुग्रहणे प्रर्छक इत्यत्र प्राप्नोति । यत्क्रियायुक्तास्तं प्रतीति वचनान्न भवति ॥

( प्रदीपः ) वृद्धिविधौ चेति । उपसर्गेणैव धातोराक्षेपात् ॥ प्रर्छक इति । प्रगता ऋच्छका अस्मादिति बहुव्रीहिः । तत्र धातुग्रहणस्य शाकलनिवृत्तिः प्रयोजनं वक्ष्यते ॥

( उद्योतः ) शाकलनिवृत्तिः प्रयोजनमिति ॥ शाकलम् ऋत्यक इति । योगविभागेन पुनर्विधानद्वारेति भावः ॥

( ११४३ दूषणवार्तिकम् ॥ ६ ॥ )

## [॥ * ॥ वद्विधिनस्भावाबीत्त्वस्वाङ्गादिस्वरणत्वेषु दोषः ॥ * ॥]

( भाष्यम् ) वद्विधिनस्भावाबीत्त्वस्वाङ्गादिस्वरणत्वेषु दोषो भवति । वद्विधि—यदुद्वतो निवतो यासि वप्सन् । वद्विधिः ॥ नस्भाव—प्रणसं मुखम् । उन्नसं मुखम् । नस्भाव ॥ अबीत्त्व—प्रेपं परेपम् । अबीत्त्व ॥ स्वाङ्गादिस्वर—प्रस्फिक् प्रोदरः । स्वाङ्गादिस्वर ॥ णत्व—'प्र णः शूद्रः' 'प्र ण आचार्यः' 'प्र णो राजा' 'प्र णो वृत्रहा' । उपसर्गादित्येते विधयो न प्राप्नुवन्ति ॥

( प्रदीपः ) उद्वत इति । क्रियाशब्दस्याप्रयोगादुपसर्गत्वाभावः ॥

( उद्योतः ) उपसर्गाच्छन्दसि धात्वर्थे इति वतिः । अत्र नासिकाया इति वर्तमाने उपसर्गाच्चेत्यज् नस्भावौ । द्व्यन्तरुपसर्गेभ्योप ईद् । उपसर्गात्स्वाङ्गमित्युत्तरपदाद्युदात्तत्वरूपः स्वरः । उपसर्गाद्बहुलमिति । णत्वम् ॥ ननु धात्वर्थे वतेर्विधानादस्त्येव क्रियायोगोऽत आह—क्रियाशब्दस्येति । धात्वर्थे वर्तमानात् स्वार्थे स इति भावः ॥ प्रत्ययार्थत्वेपि तदशायां तस्य क्रियात्वाभाव इत्यन्ये ॥ उद्वत इत्यादेरुद्गतान् निगतान् इत्यर्थः[4] । प्रेपमित्यादेः प्रगता आपो यस्मिन्नित्यादिरर्थः । प्रणइत्यादेः प्रकृष्टानामस्माकमित्यर्थः ॥

( ११४४ दूषणपरिहारवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ वद्विधिनस्भावाबीत्त्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यात्सिद्धम् ॥ * ॥

( भाष्यम् ) अनवकाशा एते विधयस्ते वचनप्रामाण्याद्भविष्यन्ति ॥

( प्रदीपः ) अनवकाशा इति । येषां हि क्रियाशब्दप्रयोगे तं प्रत्युपसर्गसंज्ञा ते संप्रत्यनुपसर्गसंज्ञा अपि गृह्यन्त इत्यर्थः ॥

( उद्योतः ) इत्यर्थ इति । तत्र सर्वत्रोपसर्गग्रहणं प्रायुपलक्षणमिति भावः ॥

( ११४५ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ सुदुरोः प्रतिषेधो नुम्विधितत्त्वषत्वणत्वेषु ॥ * ॥

( भाष्यम् ) सुदुरोः प्रतिषेधो नुम्विधितत्त्वषत्वणत्वेषु वक्तव्यः । नुम्विधि—सुलभं दुर्लभम् । "उपसर्गाद्—" इति नुम्मा भूदिति । "न सुदुर्भ्यां केवलाभ्याम्" इत्येतन्न वक्तव्यं भवति ॥

( प्रयोजनपरिहारभाष्यम् )

नैतदस्ति प्रयोजनम् । क्रियत एतन्न्यास एव ॥

( प्रदीपः ) क्रियत इति । केवलाभ्यामिति विशेषणाभिधानार्थमवश्यं कर्तव्यम् । तेनातिसुलम्भमित्यत्रेरुपसर्गत्वे नुम् भवत्येव ॥

( उद्योतः ) ननु लघुना गुरोः प्रत्याख्याने क्रियते एवेत्यसंगतमत आह—केवलाभ्यामितीति ॥ अवश्यमिति । वार्तिककृतापीति भावः ॥ इत्यत्रोपसर्गत्वे नुम् भवत्येवेति । सोरुपभूदित्यर्थः । ४ 'स्वाङ्गं ध्रुवमपर्श्विति' । ५ 'उद्गतान् वनावयवान् वृक्षादीन् नीचांश्च गुल्मादीनित्यर्थ इति ऋग्वेदभाष्ये स्पष्टम्' इति परमगुरुश्रीविभवरामशर्मणां पुस्तके टिप्पणी । ६ मादीनामित्यर्थः । ( र. ना. )

१ अत्र 'घञ्' पदं बहुत्र नोपलभ्यतेऽपि तु क्वचिदेव । २ इदं घञ्प्रयोजनोपपादनमपि क्वचिदेवोपलब्धम् । ३ अनुपसर्ग इति । "श्रिणीभुवोऽनुपसर्गे" इत्यत्रानुपसर्ग इति प्रसज्यप्रतिषेधो यत्क्रियायुक्तास्तं प्रतीति वचनान्मा

सर्गत्वे सतीत्यर्थः ॥ निषेधाभावादित्याशयः ॥ इत्यतेरुपसर्गत्वे इति पाठेऽतेः परस्य सोरुपसर्गत्वे इत्यर्थः ॥ इत्यते परस्योरुपसर्गत्वे इति पाठस्तु युक्त एव ॥

( उदाहरणसमन्वयभाष्यम् )

**तत्व—सुदत्तम् "अच उपसर्गात्तः" इति तत्वं मा भूदिति ॥ षत्व—सुसिक्तं घटशतेन । सुस्तुतं श्लोकशतेन । "उपसर्गाद्" इति षत्वं मा भूदिति ॥ "सुः पूजायाम्" इत्येतन्न वक्तव्यं भवति ॥**

( उद्योतः ) सुः पूजायामित्येतत्कर्मप्रवचनीयसंज्ञाविधायकम् ॥

( प्रयोजनपरिहारभाष्यम् )

**नैतदस्ति प्रयोजनम् । क्रियत एतन्न्यास एव ॥**

( प्रदीपः ) क्रियत इति । पूजायामिति विशेषणोपादानार्थम् । तेन सुषिक्तं किं तवात्रेत्यादौ षत्वं भवत्येव ॥५९॥

( उदाहरणसमन्वयभाष्यम् )

**णत्व—दुर्नयं दुर्नीतमिति । "उपसर्गाद्" इति णत्वं मा भूदिति ॥ गतिश्च ॥ ५९ ॥**

( उद्योतः ) भाष्ये—णत्वं मा भूदिति । न च दुसमादाय णत्वं दुर्वारम्, कृतरोर्दुसोप्यत्रानुकरणेन तस्यापि निषेधात् ॥ ५९ ॥

---

( २०० गतिसंज्ञासूत्रम् ॥ १ । ४ । ४ आ. ५ सू.)

## ३०० ऊर्यादिच्विडाचश्च ॥ ६० ॥

( उद्योतः ) ऊर्यादि ॥ ६० ॥ च्विडाचोः केवलयोः प्रत्यययोः क्रियायोगासंभवात्सामर्थ्येन संज्ञाविधावपि तदन्तविधिः ॥

( अनिष्टपरिहाराधिकरणम् )

( ११४६ आक्षेपवार्तिकम् ॥ १ ॥ )

**[॥ ❀ ॥ कृभ्वस्तियोगे ॥ ❀ ॥]**

**( भाष्यम् ) कृभ्वस्तियोग इति वक्तव्यम् । इहैव यथा स्यात्—ऊरीकृत्य ऊरीभूय । इह मा भूत्—ऊरी पक्त्वा ॥**

( प्रदीपः ) ऊर्यादि ॥ ६० ॥ ऊरीपक्त्वेति । प्रयोगापर्यालोचनेन संभवमात्राश्रयेणैतदुदाहृतम् ॥

( उद्योतः ) वक्ष्यमाणरीत्यास्य प्रयोगस्यैवाभावादाह—प्रयोगेति ॥ ६० ॥

( तृतीयाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्? ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**न वक्तव्यम् । क्रिययोग इत्यनुवर्तते । न चान्यया क्रिययोर्यादिच्विडाचां योगोस्तिः ॥ ऊर्यादिच्वि० ॥ ६० ॥**

( प्रदीपः ) न चान्ययेति । च्विडाचौ तावत् कृभ्वस्तियोग एव विहितौ । ऊर्यादयोपि कृभ्वस्तिविषया एव प्रयुज्यन्ते नान्यत्र ॥ ६० ॥

---

( २०१ गतिसंज्ञासूत्रम् ॥ १ । ४ । ४ आ. ६ सू. )

## ३०१ अनुकरणं चानितिपरम् ॥ १ । ४ । ६१ ।

( समासनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**कथमिदं विज्ञायते—इतेः परमितिपरं न इतिपरमनितिपरमिति । आहो स्विदितिः परो यस्मात्तदिदमितिपरं न इतिपरमनितिपरमिति ॥**

( प्रदीपः ) अनुक ॥ ६१ ॥ कथमिति । द्वयोरपि समासयोः संभवाद्दोषदर्शनाच्च प्रश्नः ॥

( उद्योतः ) अनुकरणं ॥ ६१ ॥ इतेः परमिति । सुप्सुपेति योगविभागात्समासः ॥

( विशेषप्रश्नभाष्यम् )

**किं चातः? ।**

( प्रथमपक्षदूषकभाष्यम् )

**यदि विज्ञायते—इतेः परमितिपरं न इतिपरमनितिपरमिति, खाडितिकृत्वा निरष्ठीवदित्यत्र प्राप्नोति ॥**

( प्रदीपः ) खाडिति कृत्वेति । गतिसंज्ञायां समासः स्यात् । धातोश्चानन्तरं प्रयोग इति रूपमेतन्न सिध्येत् । इति खाट्कृत्येत्यत्र च निषेधप्रसङ्गः ॥

( उद्योतः ) धातोश्चानन्तरमिति । तदव्यवधानेन गतेः प्रयोग इत्यर्थः ॥ इति खाट्कृत्येति । इति हेतोः खाट्कृत्य गत इत्यर्थः ॥

( द्वितीयपक्षदूषकभाष्यम् )

**अथ विज्ञायते—इतिः परो यस्मात्तदितिपरं न इतिपरमनितिपरमिति, श्रौषड्वौषडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोति ॥**

( प्रदीपः ) श्रौषडिति । श्रौषट्शब्द इतिपरो न भवति वौषटा व्यवधानादिति गतिसंज्ञाप्रसङ्गः ॥ ननु व्यवहितेपि परशब्दस्य दर्शनाद्भवत्येवेतिपरत्वम् । नैष दोषः । अव्यवधान एवास्य मुख्या वृत्तिः । अन्यत्र त्वन्तरालस्थमसमीक्ष्याव्यवधानमेवाश्रित्य प्रयुज्यते । इह तु वौषटो व्यवधायकस्योच्चारणायुक्तमनपेक्षणम् । खाट्कृत्येति निरष्ठीवदित्यत्र धातुव्यवधानेपि प्रतिषेधप्रसङ्गात् ॥

( उद्योतः ) नन्वितेः परत्वसत्त्वेन कथमत्र प्राप्तिरत आह—श्रौषडिति । एवं गतिसमासस्य नित्यत्वादयं प्रयोगो न स्यादिति स्यादिति ध्येयम् । ( र. ना. )

---

१ किन्तु समासे संहिताया नित्यत्वाद्वौषडिति श्रौषट् कृत्येति प्रयोगः

भावः ॥ तस्मिन्नितिसूत्रे निर्दिष्टग्रहणाद् व्यवहितसाधारण एवाय-मित्यतो दूषणान्तरमाह—खाट्कृत्येतीति । इति हेतोः खाट्कृत्य निरष्ठीवदित्यर्थः । वस्तुत इतेः परमिति विग्रहवाक्ये उत्तराङ्गविकल-तस्मादितिपरिभाषोपस्थित्याऽव्यवहितपरत्वबोधाद्वृत्तावपि तदन्तर्भा-वेणैकार्थीभाव इति भाष्याशयः ॥

( समाधानभाष्यम् )

**अस्तु तावद्—इतिः परो यस्मात्तदितिपरं न इतिपरमनितिपरमिति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—श्रौषड्वौषडिति कृत्वा निरष्ठीव-दित्यत्र प्राप्नोतीति ॥**

( आक्षेपपरिहारभाष्यम् )

**नैष दोषः । इदं तावदयं प्रष्टव्यः—यथेह "ते प्राग्धातोः" इति कथं गतिमात्रस्य पूर्वप्रयोगो भ-वति—उपोद्धरतीति? ॥**

( प्रदीपः ) इदं तावदिति । यो व्यक्त्याश्रयेण व्यव-धानं मन्यते ॥

( उद्द्योतः ) अयंपदार्थं दर्शयति—य इति ॥

( तद्देयोत्तरभाष्यम् )

**गत्याकृतिः प्रतिनिर्दिश्यते? ॥**

( प्रदीपः ) गत्याकृतिरिति । तस्याश्च भिन्नास्वपि व्य-क्तिषु अभिन्नाया नास्त्यत्र व्यवधानम् ॥

( उद्द्योतः ) तस्याश्चेति । गतिशब्देन तत्संज्ञकानेकव्यक्ति-ग्रहणं लक्ष्यानुसारादित्याशयः ॥

( तद्दत्तोत्तरस्यैव समाश्रयणभाष्यम् )

**इहापि तर्ह्यनुकरणाकृतिः प्रतिनिर्दिश्यते ॥**

( अनितिपरपदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते? ॥**

( प्रदीपः ) किमर्थमिति । अनितिपरमित्येतदित्यर्थः । संज्ञानियमपक्षे सिद्धिं मत्वा प्रश्नः ॥

( उद्द्योतः ) गतिसंज्ञार्थं सूत्रमावश्यकमिति प्रश्नानुपपत्तिरत आह—अनितिपरमित्येतदिति ॥ संज्ञेति । प्राक् प्रयुक्ता एव गत्यादिसंज्ञा इति तदर्थः ॥ ६१ ॥

( ११४७ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनुकरणस्येतिकरणपरत्वप्रति-षेधोऽनिष्टशब्दनिवृत्त्यर्थः ॥ * ॥**

( भाष्यम् ) **अनुकरणस्येतिकरणपरत्वप्रतिषेध उच्यते । किं प्रयोजनम्? । अनिष्टशब्दनिवृत्त्यर्थः । अनिष्टशब्दता मा भूदिति । इदं विचारयिष्यते—प्राग्धातुवचनं प्रयोगनियमार्थं वा स्यात्संज्ञानिय-मार्थं वेति । तद्यदा प्रयोगनियमार्थं तदानिष्टशब्द-निवृत्त्यर्थमिदं वक्तव्यम् । यदा हि संज्ञानियमार्थं तदा न दोषो भवति ॥ अनुकरणम् ॥ ६१ ॥**

( प्रदीपः ) **अनिष्टशब्दनिवृत्त्यर्थ इति** । खाडिति-कृत्वेति प्रयोक्तव्ये इति खाट्कृत्येतिप्रयोगः स्यात् । प्रयोग-नियमे चायं दोषः । तत्र ह्ययमर्थः—गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति । ततो व्यवहितस्य प्रयोगाप्रसङ्गः ॥ संज्ञानियमे तु न दोषः । तेनैव नियमेन खाडितिकृत्वेत्यत्र व्यवहितस्य संज्ञानिवारणादस्य प्रयोगस्य सिद्धत्वात् ॥ ६१ ॥

—————

( २०२ गतिसंज्ञासूत्रम् ॥ १ । ४ । ४ आ. ७ सू. )

## ३०२ आदरानादरयोः सदसती ॥ १ । ४ । ६२ ॥

( उद्द्योतः ) आदरानादरयोः ॥ ६२ ॥ आदरः प्रत्यु-त्थानादिविषयस्त्वराख्यः । अनादरः परिभव औदासीन्यं च, तच्चावश्यकोत्थानादिविषयोपेक्षा ॥

( अनादरासङ्ग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**इदमतिबहु क्रियते—आदरे अनादरे सद् अस-दिति । 'आदरे सद्' इत्येव सिद्धम् ॥**

( प्रत्याक्षेपभाष्यम् )

**कथमसत्कृत्येति? ॥**

(प्रदीपः) **आदरा ॥६२॥ कथमसत्कृत्येति** । यदि—न सत्कृत्यासत्कृत्येति नञ्समासः क्रियते, तदा सतिशिष्टत्वात्कृ-दुत्तरपदप्रकृतिस्वरं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्यात् । अथ—न सदसदिति समासः क्रियते, तदा सच्छब्दस्य गतिसंज्ञाविधीयमाना ऽसच्छब्दस्य न स्यादिति भावः ॥

( प्रत्याक्षेपपरिहारभाष्यम् )

**तदन्तविधिना भविष्यति ॥**

( प्रदीपः ) **तदन्तविधिनेति** । यद्यपीह प्रकृतं विशेष्यं नास्ति तथापि कार्यार्थत्वात्संज्ञायाः कार्यप्रदेशेषु प्रकृतस्य गतिना विशेषणात्तदन्तविधिर्भवति । तत्र समासविधौ सुबिति प्रकृतं **गतिरनन्तर** इत्यत्र पूर्वपदं **गतिर्गता**वित्यत्र पद-स्येति । अव्ययसंज्ञायामस्त्येव तदन्तविधिः ॥

( उद्द्योतः ) कार्यार्थत्वादिति । तेनासच्छब्देन समासादि-सिद्धिः । गतिसंज्ञा तु सच्छब्दस्यैवेति भावः ॥ **सुबिति** ॥ **प्रकृत-मिति** । समर्थ इति प्रकृतमित्यपि बोध्यम् ॥

( प्रत्याक्षेपान्तरभाष्यम् )

**केनेदानीमनादरे भविष्यति? ॥**

( उद्द्योतः ) ननु तदन्तविधिना कार्यसम्भवेऽप्यनादर इत्यस्या-सत्त्वे कथमत्र तत्प्रतीतिरित्याह—भाष्ये **केनेदानीमिति** ॥

---

१ अनितिपरमिति समासेऽपीत्यर्थः । ( र. ना. )

२ इतिकरणमितिशब्दः । ( र. ना. )

३ इति खाट्कृत्येति प्रयोगस्येत्यर्थः । ( र. ना. )

४ विषयः कार्यम् । ( र. ना. )

( प्रत्याक्षेपान्तरपरिहारभाष्यम् )

**नञाऽऽदरप्रतिषेधं विज्ञास्यामः—न आदरेऽनादर इति ॥**

**( प्रदीपः ) न आदर इति ।** अनेनासच्छब्दस्यानादरार्थवृत्तितां दर्शयति । ततश्चानादरग्रहणेन यत्साध्यं तदन्यथापि सिध्यतीत्येवंपरमेतत् ॥

**( उद्द्योतः )** नन्वनादर इत्यस्यासत्त्वे कथं नञाऽऽदरप्रतिषेधो विज्ञास्यतेऽत आह—**अनेनेति ।** आदरप्रतिषेधम् । इत्यस्य सदर्थादरप्रतिषेधम् इत्यर्थः ॥

( समाधानभाष्यम् )

**नैवं शक्यम् । आदरप्रसङ्गे एव स्यादनादरप्रसङ्गे न स्यात् ॥ अनादरग्रहणे पुनः क्रियमाणे बहुव्रीहिरयं विज्ञायते—अविद्यमानादरे अनादरे इति । तस्मादनादरग्रहणं कर्तव्यम् ॥ असतस्तु तदन्तविधिना सिद्धम् ॥ आदरानादरयोः ॥ ६२ ॥**

**( प्रदीपः ) आदरप्रसङ्ग इति ।** गुरुमसत्कृत्येत्यादौ तु स्यात्, पाखण्डिनमसत्कृत्येत्यादौ तु न स्यात् । तथाहि—अब्राह्मण इति क्षत्रियादिरेवोच्यते न तु गोलोष्ठादिः ॥ **बहुव्रीहिरिति ।** स चात्यन्ताभावेपि प्रसक्त्यभावे च भवतीति सर्वत्र संज्ञा सिध्यति ॥ **असतस्त्विति । आदरानादरयोः सदित्येव** वक्तव्यम् । तत्रानादरे सच्छब्दस्य वृत्त्यर्थसंभवात्सामर्थ्यात्तदन्तविधिनाऽसच्छब्दस्य गतिसंज्ञा भविष्यति । यथा **गोष्पदं सेवित**इत्यत्रासेविते गोष्पदशब्दस्य वृत्त्यसंभवादगोष्पदार्थमसेवितग्रहणम् ॥ ६२ ॥

**( उद्द्योतः ) त्यादौ तु स्यादिति ।** नञ्समासे सदृशस्यैव प्रतीतेर्गुर्वादिविषये एव प्रयोगः स्यात् । पाखण्ड्यादिविषये तु प्रयोगो न स्यादिति भावः ॥ **प्रसक्त्यभावे चेति** पाठः ॥ नन्वनादरग्रहणेऽसद्ग्रहणमपि कार्यमेव । अन्यथा सच्छब्दस्यानादरेऽवृत्तेरत्र तदन्तविध्यभावाच्च कस्य तत्र वर्तमानस्य संज्ञा स्यादत आह—**आदरेत्यादि ॥ सामर्थ्यादिति ।** प्रकृतविशेष्याभावेपि शब्दरूपं विशेष्यमादायेत्यर्थः ॥ ६२ ॥

( २०३ गतिसंज्ञासूत्रम् । १ । ४ । ४ आ० ८ सू० )

## ३०४ अन्तरपरिग्रहे ॥ ६४ ॥

( ११४८ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अन्तःशब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानम् ॥ * ॥

**( भाष्यम् ) अन्तःशब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानं कर्तव्यम् । अङ्—अन्तर्द्धा । किविधिः—अन्तर्द्धिः । समास—अन्तर्हत्य । णत्वम्—अन्तर्हण्याद् गोभ्यो गाः ॥ अन्तरपरिग्रहे ॥ ६४ ॥**

**( प्रदीपः ) अन्तरप ॥ ६४ ॥ अन्तःशब्दस्येति ।** अङ्किविधिणत्वानि उपसर्गसंज्ञाश्रयाणि । समासस्तु गतिसंज्ञाश्रय इत्यपूर्ववचनं सूत्रोपादानं च सामान्येनोपसंख्यानमुच्यते । गतिसंज्ञाया अनेनैव सिद्धत्वादपूर्ववचनाभावात् ॥ **अन्तर्हण्यादिति । हन्तेरत्पूर्वस्येति**णत्वस्य सिद्धत्वाद् **अन्तरदेशे** इति न वक्तव्यं भवति । देशे तु क्षुभ्नादित्वाण्णत्वाभावः । **तथैवायनं चेति** न वक्तव्यम्, **कृत्यच** इति सिद्धत्वात् । अन्तर्णयतीत्यत्राप्युपसर्गादिति णत्वं सिध्यति ॥ ६४ ॥

**( उद्द्योतः ) अन्तरपरिग्रहे ॥ ६४ ॥** ननु समासस्य सूत्रेणैव सिद्धेर्वार्तिके समासग्रहणं व्यर्थमत आह—**सामान्येनेति ।** एवं चोपसंख्यानशब्देनापूर्ववचनमेव नोच्यते किं तु विधानमात्रम् । एवं चोपसर्गसंज्ञाविषयमपूर्ववचनं गतिसंज्ञाविषयसूत्रं चोपसंख्यानशब्देनोच्यत इति न समासग्रहणं व्यर्थमिति भावः ॥ ननु गतिसंज्ञांशेप्यपूर्वत्वमस्त्वित्यत आह—**गतिसंज्ञाया इति ॥ अनेनैवेति ।** सूत्रेणैवेत्यर्थः । तदतिरिक्तविषये त्वनेनापि नेष्यत इति भावः ॥ नन्वन्तरदेशे इत्यादिनैव सिद्धेर्णत्वे उपसंख्यानं व्यर्थमत आह—**हन्तेरित्यादि ॥ तथैवेति ।** अन्तरयणमित्यस्यानेनैव सिद्धेः, देशे प्रतिषेधोपि क्षुभ्नादित्वात्सिद्ध इति भावः ॥ तदारम्भेप्यस्यावश्यकतां दर्शयति—**अन्तर्णयतीति** ॥ ६४ ॥

( २०४ गतिसंज्ञासूत्रम् ॥ १ । ४ । ४ आ. ९ सू. )

## ३१३ साक्षात्प्रभृतीनि च ॥ १।४।७३ ॥

( न्यूनतापूर्णाधिकरणम् )

( ११४९ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ साक्षात्प्रभृतिषु च्व्यर्थवचनम् ॥ * ॥

**( भाष्यम् ) साक्षात्प्रभृतिषु च्व्यर्थवचनं कर्तव्यम् । असाक्षात्साक्षात्कृत्वा साक्षात्कृत्य । यदा हि साक्षादेव सत् किंचित्क्रियते तदा मा भूदिति ॥**

**( प्रदीपः ) साक्षात् ॥ ७३ ॥ साक्षात्प्रभृतिष्विति ।** अभूततद्भावविषयाणामेव यथा स्याद् यदा तु साक्षाद्भूता रूपान्तरेण क्रियन्ते तदा मा भूदित्यर्थः ॥

**( उद्द्योतः ) साक्षात्प्र ॥ ७३ ॥ साक्षाद्भूता इति ।** प्रत्यक्षा इत्यर्थः । तदुक्तं भाष्ये—**यदा हि साक्षादेव सत् किंचित्क्रियत इति ॥**

( ११५० आक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ मकारान्तत्वं च गतिसंज्ञासंनियुक्तम् ॥ * ॥

**( भाष्यम् ) मकारान्तत्वं च गतिसंज्ञासंनियोगेन वक्तव्यम् । लवणंकृत्य ॥**

---

१ असत्कृत्येत्यादौ आदरप्रतिषेधरूपं वस्तु इत्यर्थः । ( र. ना. ) २ आदरप्रसङ्गाभावे पाखण्डिनमसत्कृत्येत्यादावित्यर्थः । ( र. ना. ) ३ तत्र ब्राह्मणत्वप्रसक्त्यभावादिति भावः । ( र. ना. ) ४ 'वृत्त्यभावा' । ५ संज्ञाविधित्वेनेत्यादिः । ( र. ना. ) ६ 'साक्षादेव किंचि' । ७ 'साक्षाद्भूतं' । ८ 'क्रियते' ।

(उद्द्योतः) लवणमित्यादिगणपाठान्मान्ता अपि एते शब्दाः स्वतन्त्रा इति भ्रमं व्यावर्तयति—भाष्ये—मकारान्तत्वं चेति ॥

(११५१ आक्षेपवार्तिकम् ॥ ३ ॥)

॥ * ॥ तत्र च च्विप्रतिषेधः ॥ * ॥

(भाष्यम्) तत्र[1] च च्व्यन्तस्य प्रतिषेधो वक्तव्यः। लवणीकृत्य ॥

(प्रदीपः) लवणीकृत्येति । अत्र हि परत्वादनेन विभाषा प्राप्नोति । नित्या च गतिसंज्ञेष्यते ॥

(११५२ आक्षेपपरिहारवार्तिकम् ॥ ४ ॥)

॥ * ॥ नवा पूर्वेण कृतत्वात् ॥ * ॥

(भाष्यम्) नवा वक्तव्यम् । किं कारणम्? । पूर्वेण कृतत्वात् । अस्त्वनेन विभाषा, पूर्वेण नित्या भविष्यति ॥

(प्रदीपः) पूर्वेणेति । पुनःप्रसङ्गविज्ञानादिति भावः ॥

(उद्द्योतः) पुनःप्रसङ्गेति । परत्वाद्विकल्पेपि तदभावे नित्यविधिप्राप्त्या न दोष इति भावः ॥ न च प्राप्तविभाषाविषये वैकल्पिकाभावे नित्याङ्गीकारे विकल्पशास्त्रस्य वैयर्थ्यापत्तिः । अच्व्यन्ते चारितार्थ्यात् ॥

(प्रयोजनान्तरस्मारणभाष्यम्)

इदं तर्हि प्रयोजनम्—*मकारान्तत्वं च गतिसंज्ञासन्नियुक्तम्* इत्युक्तं तच्च च्व्यन्तस्य मा भूदिति ॥

(प्रदीपः) च्व्यन्तस्य मा भूदिति । एकदेशविकृतस्यानन्यत्वात् प्राप्नोति ॥

(उद्द्योतः) भाष्ये गतिसंज्ञासन्नियुक्तमिति । वैकल्पिकगतिसंज्ञासंनियुक्तमित्यर्थः ॥ एकदेशेति । एवं च लवणींकृत्येत्यनिष्टं स्यादिति भावः ॥

(प्रयोजनान्तरपरिहारभाष्यम्)

एतदपि नास्ति प्रयोजनम् । लवणशब्दस्यायं विभाषा लवणंशब्द आदेशः क्रियते । यदि च लवणीशब्दस्यापि विभाषा लवणंशब्द आदेशो भवति न किंचिद् दुष्यति । त्रैशब्द्यं चेह साध्यं, तच्चैवं सति सिद्धं भवतीति ॥ साक्षात्प्रभृतीनि च ॥ ७३ ॥

(प्रदीपः) त्रैशब्द्यमिति । त्रय एव शब्दास्त्रैशब्द्यम् । लवणं कृत्वा लवणंकृत्य लवणीकृत्येति ॥ ७३ ॥

(उद्द्योतः) भाष्ये—लवणंशब्द इति । लवणमिति गणपाठः । तस्य लवणशब्दस्य लवणमित्यादेश इत्यर्थः । गतिसंज्ञासंनियुक्तत्वाद् गतिसंज्ञाभावे आदेशाभाव इति भाष्ये विभाषेत्युक्तम् । अनेन गतित्वाभावे च लवणीशब्दे पूर्वेण गतित्वमिति भावः॥७३॥

(२०५ संज्ञानियमसूत्रम् ॥ १ । ४ । ४ आ. १० सू.)

# ३१९ ते प्राग्धातोः ॥ १ । ४ । ७९ ॥

(नियमाकारनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

किमिदं प्राग्धातुवचनं प्रयोगनियमार्थम्—एते प्रागेव धातोः प्रयोक्तव्याः । आहोस्वित्संज्ञानियमार्थम्—एते प्राक् चाप्राक् च प्रयोक्तव्याः प्राक्प्रयुज्यमानानां गतिसंज्ञा भवतीति ॥

(प्रदीपः) ते प्राग्धातोः ॥ ७९ ॥ किमिदमिति । नियमद्वयसंभवात्प्रश्नः । तत्र यदा प्रयोगनियमस्तदा त इत्यनेन लब्धगत्युपसर्गसंज्ञाः परामृश्यन्ते । यदा तु संज्ञानियमस्तदा प्रादय उपनिषत्पर्यन्ताः स्वरूपेणैव प्रत्यवमृश्यन्ते संज्ञाया अनिष्पादात्।अनेनैकवाक्यतामापन्नैः पूर्वसूत्रैस्तस्या विधानात्॥

(उद्द्योतः) ते प्राग्धातोः ॥ ७९ ॥ ननु ते इत्यनेन यदि लब्धसंज्ञानां परामर्शस्तदा द्वितीयपक्षानुत्थितिरेव, केवलानां परामर्शे त्वेतत्संज्ञारहितानामप्याद्यपक्षे व्यवहितप्रयोगानापत्तिरत आह—तत्र यदेति ॥ अनिष्पादादिति । संज्ञानियमपक्षेऽस्य परिभाषात्वेनैकवाक्यतयैव संज्ञाविधानादिति भावः । प्रत्यासत्तेश्च गत्युपसर्गसंज्ञाविषय एव नियमो न निपातसंज्ञाविषयक इति बोध्यम् ॥

(विशेषप्रश्नभाष्यम्)

कश्चात्र विशेषः? ॥

(११५३ प्रथमपक्षदूषणवार्तिकम् ॥ १ ॥)

॥ * ॥ प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ॥ * ॥

(भाष्यम्) प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम्? । अनिष्टशब्दनिवृत्त्यर्थः । अनिष्टशब्दता मा भूदिति ॥

(प्रदीपः) अनुकरणस्येति । अनुकरणं चानितिपरमित्यत्रैतद्व्याख्यातम् ॥

(११५४ दूषणान्तरवार्तिकम् ॥ २ ॥)

॥ * ॥ छन्दसिपरव्यवहितवचनं च ॥ * ॥

(भाष्यम्) "छन्दसि परेपि" "व्यवहिताश्च" इति वक्तव्यम् ॥

(११५५ द्वितीयपक्षइष्टापत्तिवार्तिकम् ॥ ३ ॥)

॥ * ॥ संज्ञानियमे सिद्धम् ॥ * ॥

(भाष्यम्) संज्ञानियमे सति सिद्धमेतद्भवति ॥

---

[1] च्व्यर्थवचनेऽपि च्व्यन्तस्य प्रतिषेध इत्यर्थः । अयं भावः । यत्राभूततद्भावरूपश्च्व्यर्थो विषयस्तत्रानेन विभाषागतिसंज्ञा च्व्यन्ते तु अस्याः प्रतिषेधात्पूर्वेण नित्यैवेति । (र. ना.) [2] लवणंकृत्वादौ । (र. ना.) [3] 'जीविकोपनिषदावौपम्ये' इति सूत्रस्थेत्यादिः । (र. ना.)

(प्रदीपः) **संज्ञानियमे सिद्धमिति** ॥ अनितिपरमिति न वक्तव्यम्[1] । अनेनैव नियमेन खाडिति कृत्वेत्यत्र संज्ञानिरासस्य सिद्धत्वात् । उत्तरं च सूत्रद्वयं न कर्तव्यं भवति । परव्यवहितानां गत्युपसर्गसंज्ञयोर्निवारणान्न तु प्रयोगस्येत्यर्थः ॥

(उद्द्योतः) ननु संज्ञानियमे इदं[2] व्यर्थम्, अप्राक्प्रयुज्यमानानामपि संज्ञायां जातायामनिष्टाभावादत आह—**अनितीति** । एवं चैवमाद्यकरणमेवात्र पक्षे सूत्रस्य फलमिति भावः ॥ **ननु प्रयोगस्येति** । न चाप्राप्तसंज्ञानां[3] परव्यवहितानां संज्ञार्थमुत्तरसूत्रम्, फलाभावात् परव्यवहितानामेकाकिनामेव छन्दसि प्रयोगेण गतिर्गताविति फलस्य वक्तुमशक्यत्वात् । एवं च संज्ञानियमे प्रयोगनियमपक्षीयफलसिद्धि[4]स्थितयाकरणलाघवं चेति भावः ॥

(द्वितीयपक्षाङ्गीकारभाष्यम्)

**अस्तु तर्हि संज्ञानियमः ॥**

(प्रदीपः) **अस्त्विति** । लाघवादस्यैव पक्षस्य युक्तत्वात् ॥

(सूत्रप्रत्याख्यानाधिकरणम्)

(११५६ प्रत्याख्यानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ उभयोरनर्थकं वचनमनिष्टादर्शनात् ॥ * ॥

(भाष्यम्) **उभयोरपि पक्षयोर्वचनमनर्थकम् । किं कारणम्? । अनिष्टादर्शनात् । नहि कश्चित्प्रपचतीति प्रयोक्तव्ये पचति प्रेति प्रयुङ्क्ते । यदि चानिष्टं दृश्येत, ततो यत्नार्हं स्यात् ॥**

(प्रदीपः) **उभयोरिति** । भाषायां परव्यवहितप्रयोगो न दृश्यते, तत्र किं प्रयोगनियमेन वा संज्ञानियमेन वा । यत्र हि लोके संकीर्णः प्रयोगो यथा गौर्गावीति तत्रासाधुपरिहाराय साध्वनुज्ञानं कर्तव्यम् । न त्वसंकीर्ण एव प्रयोगे स्थिते शास्त्रस्य किंचिदस्ति प्रयोजनम् । छन्दसि तु परव्यवहितप्रयोगो दृश्यत एव ॥

(उद्द्योतः) नन्वापाद्यमानव्यवहितपरप्रयोगनिवृत्तये सूत्रं स्यादत आह—**भाषायामिति** । एवं चानभिधानेन प्रत्याख्यानमिति भावः ॥ **न दृश्यत इति** । शिष्टानां यज्ञकर्मणोऽन्यत्रापीति शेषः ॥

(११५७ प्रत्याख्यानपरिहारवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थम् ॥ * ॥

(भाष्यम्) **उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थमेतद्वक्तव्यम्—'ऋषभं कूलमुद्रुजम्' 'ऋषभं कूलमुद्वहम्' । अत्र गतेः[5] प्राग्धातोः प्रयोगो यथा स्यात् ॥**

(प्रदीपः) **उपसर्जनसन्निपात इति** । यद्यपि लोके विपरीतः प्रयोगो न दृश्यते, तथापि कूलमुद्रुजमित्यादौ द्वयोरप्युपपदत्वात्समासे कृते **उपसर्जनं पूर्वमिति** शास्त्रदर्शनात्पर्यायेण पूर्वनिपातेन भाव्यं कूलमुद्रुज उत्कूलंरुज इत्येवं यो भ्राम्येत्तं प्रतीदं सूत्रं कर्तव्यमित्यर्थः ॥

(उद्द्योतः) **द्वयोरप्युपपदत्वादिति** । यद्यपि समासः क्रमेणैव, तथापि कदाचित्पूर्वं कूलशब्देन समासः, तत उदेति विपरीतः प्रयोगः स्यादिति भावः । तथा च सूत्रसार्थक्याय प्रयोगनियमपक्ष एवादर्तव्यः । तस्मिंश्च कृतेऽनितीत्याद्यपि सर्वं कार्यमिति तात्पर्यम् ॥

(आक्षेपभाष्यम्)

**यद्युपसर्जनसन्निपाते पूर्वपरव्यवस्थार्थमिदमुच्यते, सुकटंकराणि वीरणानीत्यत्र गतेः प्राग्धातोः प्रयोगः प्राप्नोति ॥**

(प्रदीपः) **सुकटंकराणीति** । सुखेन कटाः[6] क्रियन्त इति कर्तृकर्मणोश्च भूकृञोरिति खल् । तत्रास्मान्नियमात्कटंसुकराणीति प्राप्नोति ॥

(उद्द्योतः) ननु सुस्थितं कटं कुर्वन्तीत्यर्थान्नायं गतिरुपसर्गो वेति न दोषोऽत आह—**सुखेनेति** । उत्तरसूत्रे एव खलः खित्त्वस्य सफलत्वादिति भावः ॥ ईषच्छब्दयोगे तु स खल् नानभिधानात् । अन्यथेषदाढ्यंभवं भवता, ईषदाढ्यंकरो मैत्रो भवतेत्यादावीषतोऽगतित्वेन खित्त्वस्य चारितार्थ्याद्भाष्यासंगतिरेव स्यादिति बोध्यम् ॥

(आक्षेपपरिहारभाष्यम्)

**आचार्यप्रवृत्तिर्ज्ञापयति—'नात्र गतेः प्राक्प्रयोगो भवति' । यदयम् "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खकारमनुबन्धं करोति ॥ कथं कृत्वा ज्ञापकम्? । खित्करणे एतत्प्रयोजनं "खिति" इति मुम् यथा स्यात् । यदि चात्र गतेः प्राक्प्रयोगः स्यात्, खित्करणमनर्थकं स्यात् । अस्त्वत्र मुम् । 'अनव्ययस्य' इति प्रतिषेधो भविष्यति । पश्यति त्वाचार्यः—'नात्र गतेः प्राग् धातोः प्रयोगो भवति' इति, ततः खकारमनुबन्धं करोति ॥**

(प्रदीपः) **अस्त्वत्रेति** । शास्त्रेण प्राप्नोतु प्रतिषेधात्तु नैव प्रयुज्यत इत्यर्थः ॥ खित्करणादव्ययस्यापि भवत्विति[7] चेत् । नैतदस्ति । **अनव्ययस्येति** निषेधस्य प्रत्यक्षत्वाद्बाधितुमशक्यत्वात्[8] । प्रयोगनियमस्यान्यत्र सावकाशत्वाद्बाधेपि न काचित्क्षतिः ॥

(उद्द्योतः) नन्वजन्तत्वात्सोर्मुमः प्राप्तिरस्त्येवेत्यत आह—भाष्ये—**अस्त्वत्रेति** । प्राप्नोत्वित्यर्थः ॥ **प्रत्यक्षत्वादिति** । विधित्वादित्यर्थः ॥ **प्रयोगनियमस्येति** । एवं च विधिबाधापेक्षयाऽन्यत्र चरितार्थस्य परिभाषारूपत्वेन गुणभूतस्य बाध उचित[9] इति भावः ॥

---

१ 'कर्तव्यम्' । २ ते प्राग्धातोरिति सूत्रमित्यर्थः । (र. ना.) ३ इयं समानाधिकरणषष्ठीबहुव्रीहिमङ्गीकृत्य । (र. ना.) ४ परव्यवहितानां प्रयोगरूपफलसिद्धिरित्यर्थः । (र. ना.) ५ धातोः प्राग् गतेः प्रयोगो यथा स्यादित्यर्थः । (र. ना.) ६ अकटाः कटाः क्रियन्ते इति च्व्यर्थोऽत्र बोध्यः वार्तिकबलात् । (र. ना.) ७ अनव्ययस्य मुम्संपादनेनेत्यादिः । (र. ना.) ८ प्रसज्यप्रतिषेधमाश्रित्य निषेधविधिरूपत्वादित्यर्थः । (र. ना.) ९ गुणेत्वन्याय्यकल्पनेति न्यायादिति भावः । (र. ना.)

( प्रत्याख्यानसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम् । यद्यत्र गतेः प्राक्प्रयोगः स्यात्, स्यादेवात्र मुमागमः कथम् ? । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवति' इति ॥**

( प्रदीपः ) **स्यादेवेति** । कटंसुकराणीत्येवमपि प्रयोगे स्यादेव मुमित्यर्थः ॥ ७९ ॥

( उपसंहारभाष्यम् )

**तस्मान्नार्थ एवमर्थेन प्राग्धातुवचनेन ॥**

( उद्द्योतः ) भाष्ये—एवमर्थेनेति । प्रयोगनियमार्थेनेत्यर्थः । सुकटंकराणीत्यसिद्धेरिति भावः ॥

( आक्षेपभाष्यम् )

**कथम्-ऋषभं कुलमुद्रुजम्''ऋषभं कूलमुद्वहम्?॥'**

( आक्षेपपरिहारभाष्यम् )

**नैष दोषः ॥ नैष उदिरुपपदम् । किं तर्हि ? । विशेषणम् । "उदि कूले रुजिवहोः" उत्पूर्वाभ्यां रुजिवहिभ्यां कूले उपपदे इति ॥ ते प्राग्धातोः ॥७९**

( उद्द्योतः ) नतु सूत्राभावे संज्ञानियमेपि वोत्कूलंरुज इति विपरीतप्रयोगापत्तिरत आह—भाष्ये—**नैष उदिरिति** । तस्मात्प्रयोगनियमार्थं संज्ञानियमार्थं वोभयथापि सूत्रं न कार्यमेव । आद्ये सुकटंकराणीत्यसिद्धेः, अन्त्ये **कटंसुकराणीत्यस्याप्यापत्तेः** । अनभिधानेन वारणे तु व्यर्थमेव सूत्रमित्याशयः ॥ यत्तु भ्रमनिवृत्त्यर्थेपि सूत्रे संज्ञानियमपक्ष एवादर्तव्यः कटंसुकराणि सुकटंकराणीत्युभयविधप्रयोगसिद्धये इति स्थितमिति । तन्न । कटंसुकराणीत्यस्येष्टत्वे मानाभावात् । अत्र गतेः प्राग्धातोः प्रयोगः प्राप्नोति । **यद्यत्र गतेः प्राक् प्रयोगः** स्यादित्यादिशब्दैस्तदनिष्टत्वस्यैव लाभादिति दिक् ॥ ७९ ॥

**( इति विधिशेषप्रकरणे निपातप्रकरणे गत्युपसर्गप्रकरणम् )**

---

**( अथ निपातसंज्ञाप्रकरणे कर्मप्रवचनीयसंज्ञाप्रकरणम् )**

**( २०६ कर्मप्रवचनीयसंज्ञाधिकारसूत्रम् ॥ १ । ४ । ४ आ. ११ सू. )**

## ३२२ कर्मप्रवचनीयाः ॥ १ । ४ । ८२ ॥

**( महासंज्ञाकरणस्यान्वर्थतासाधनाधिकरणम् )**

( आक्षेपभाष्यम् )

**किमर्थं महती संज्ञा क्रियते ? ॥**

( प्रदीपः ) **कर्मप्रवचनीयाः ॥ ८२ ॥ किमर्थमिति** । लाघवार्थत्वात्संज्ञाकरणस्य लाघवप्रकर्षाय एकाक्षरा द्व्यक्षरा वा संज्ञा कार्येति भावः ॥

( उद्द्योतः ) **कर्मप्रवचनीयाः ॥ ८२ ॥** ननु संज्ञां विना तत्प्रयुक्तकार्यासिद्धिरत आह—लाघवार्थत्वादिति ॥

( समाधानभाष्यम् )

**अन्वर्थसंज्ञा यथा विज्ञायेत—कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति ॥**

( प्रदीपः ) **अन्वर्थसंज्ञेति** । अर्थमनुगता अर्थेन वा अनुगता अङ्गीकृतप्रवृत्तिनिमित्ता या संज्ञा साऽन्वर्थसंज्ञा ॥ **कर्म प्रोक्तवन्त इति** । प्रयुज्यमाने क्रियापदे क्रियाविशेषं द्योतितवन्त इत्यर्थः ॥

( उद्द्योतः ) ननु सर्वापि संज्ञाऽर्थं प्रयोजनमनुगतैवेत्यत आह—**अर्थमिति** । अर्थशब्दोऽभिधेयपर इति भावः ॥ **अङ्गीकृतप्रवृत्तिनिमित्तेति** । अङ्गीकृतयोगार्थप्रवृत्तिनिमित्तेत्यर्थः । एवं च योगरूढा संज्ञाऽन्वर्थसंज्ञोच्यते ॥ भाष्ये—**कर्म प्रोक्तवन्त इति** । कर्म क्रियां क्रियागतविशेषमित्यर्थः ॥ भूते **कृत्यल्युटो बहुलमिति** कर्तर्यनीयः ॥ ननु निपातानां द्योतकत्वात् प्रोक्तवन्त इत्यसंगतमत आह—**प्रयुज्यमाने इति** । सुखमनुवभूवेत्यादौ द्योतकेपि प्रोक्तवत्त्वमस्त्येवेत्यर्थः ॥

( अनुयोगभाष्यम् )

**के पुनः कर्म प्रोक्तवन्तः ? ॥**

( समाधानभाष्यम् )

**ये संप्रति क्रियां नाहुः ॥**

( प्रदीपः ) **क्रियां नाहुरिति** । क्रियागतं[3] विशेषं न द्योतयन्तीत्यर्थः ॥

( उद्द्योतः ) ननु निपाताः कदापि क्रियां न वदन्तीति संप्रतीत्ययुक्तमत आह—**क्रियागतमिति** ॥

( अनुयोगभाष्यम् )

**के च संप्रति क्रियां नाहुः ? ॥**

( समाधानभाष्यम् )

**ये अप्रयुज्यमानस्य क्रियामाहुः ते कर्मप्रवचनीयाः ॥ कर्मप्रवचनीयाः ॥ ८२ ॥**

( प्रदीपः ) **ये अप्रयुज्यमानस्य क्रियामाहुरिति** । शाकल्यस्य संहितामनु प्रावर्षदिति[5] वाक्येऽप्रयुज्यमानस्य निशमेर्या क्रिया तत्कृतो वर्षसंहितयोर्हेतुहेतुमद्भावलक्षणः[6] संबन्ध इत्ययमर्थोऽनुशब्दसन्निधौ प्रतीयते । तदयमनुः संहितामिति द्वितीययाभिहितं संबन्धमवच्छिनत्ति । विशिष्ट[7]क्रियाभिजनितत्वेन हेतुहेतुमद्भावलक्षणविशेषरूपतया वा तत्सन्निधौ[8] संबन्धस्य संप्रत्ययात् । तथा हि—क्रियायास्तावदयं न वाचकः, कारकविभक्तिप्रसङ्गात् । शेषविभक्तिसंबन्धस्याप्रतीतिप्रसङ्गाच्च । अत एव न क्रियापदाक्षेपकः । यथा प्रादेशं विपरिलखतीति

---

1 कूले उपपदे उत्पूर्वाभ्यां रुजिवहिभ्यां खश् प्रत्ययः स्यादित्यर्थः । (र.ना.)
2 संवद्धेत्यर्थः । ( र. ना. ) 3 'क्रियाविशेषं' काशी Bangal Asiatic Society पुस्तकयोर्मुद्रितः । 4 Bangal Asiatic Society मुद्रितपुस्तकशोधकेन तु 'क्रियाविशेषमिति' इति पाठो मूलानुरोधेन कल्पितः ।

5 'दित्यत्र वाक्ये' । 6 'हेतुहेतुमद्भाव' । 7 निशमनरूपक्रियाविशेषजनितत्वेनेत्यर्थः । इदं संबन्धस्येत्यनेनान्वेति । ( र. ना. ) 8 अनुसंनिधावित्यर्थः । ( र. ना. ) 9 अनुरिदंपदार्थः । ( र. ना. )

विशब्दो विमानक्रियाया आक्षेपक इति प्रादेशमिति कर्मणि द्वितीया । क्रियाविशेषद्योतकत्वमपि क्रियापदसन्निधाने दृष्टमिति अत्र न संभवतीति पारिशेष्यात्संबन्धावच्छेदहेतुरनुः संपद्यते । तथा चोक्तं हरिणा—

**'क्रियाया द्योतको नायं संबन्धस्य न वाचकः ।**
**नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः' ॥**

इति ॥ तत्र **क्रियामाहुरि**ति क्रियाशब्देन तदुपजनितसंबन्धविशेष उपचाराडुच्यते ॥ **आहुरि**त्यस्यापि द्योतयन्तीत्ययमर्थः ॥ क्वचित्तु प्रवृत्तिनिमित्ताभावेपि वचनसामर्थ्यादियं संज्ञा प्रवर्तते । यथा सुः **पूजायामि**ति षत्वादिनिवृत्तये गत्युपसर्गसंज्ञाबाधनार्था ॥ ८२ ॥

( **उद्योतः** ) यदि संप्रति क्रियागतं विशेषं न द्योतयन्ति किं तर्हि द्योतयन्तीत्यत्राह—भाष्ये—**येऽप्रयुज्यमानस्येति** । **तद्वाच्यां क्रियां** तद्वाच्यक्रियाकृतसंबन्धविशेषम् ॥ तदेवोपपादयति—**शाकल्यस्येति** ॥ तत्र संबन्धावच्छेदप्रकारमाह— **विशिष्टक्रियेति** । निशमनक्रियाजनितसंबन्धेन संहितासंबन्धि वर्षणमिति बोध इति भावः ॥ एवं बोधाननुभवादाह—**हेतुहेतुमदिति** । संहिताहेतुकं प्रवर्षणमिति बोधः ॥ वस्तुतः क्रियाद्वारको यः संबन्धः स हेतुत्वादिना भासते इति तत्त्वम् ॥ **क्रियायाः**, क्रियागतविशेषस्य **वाचको** द्योतक इत्यर्थः ॥ **कारकविभक्तिप्रसङ्गादिति** । वृक्षंवृक्षं प्रति सिञ्चतीत्यादावुपपदविभक्तेरिति न्यायेन कर्मणि द्वितीयैव स्यादित्यर्थः ॥ मम तु प्रतियोग्यसंबन्धेनान्वये कारकविभक्तेरप्राप्तिरियमिति भावः ॥ ननु को विशेषोऽत आह—**शेषेति** । शेषविभक्त्यर्थसंबन्धस्येत्यर्थः । अनेन कारकविभक्त्यर्थस्यापि संबन्धत्वं सूचितम् । संबन्धस्यापि न वाचको, द्वितीययैव तत्प्रतीतेः ॥ **अत एवेति** । संबन्धाप्रतीतिप्रसङ्गादेवेत्यर्थः । तदाक्षेपे तां प्रति कर्मत्वादिनैवान्वयसंभवादिति भावः ॥ **कर्मप्रवचनीययुक्ते** इत्यस्य वैयर्थ्यं च स्यादित्यपि बोध्यम् ॥ क्रियागतविशेषद्योतकत्वाभावे युक्त्यन्तरमप्याह—**क्रियाविशेषेत्यादि** ॥ **न संभवतीति** । अनु हरिं सुरा इत्यादौ क्रियापदासन्निधानादिति भावः ॥ **पारिशेष्यादिति** । एवं च संबन्धसामान्ये प्राप्तषष्ठीबाधाय द्वितीयार्थमयमारम्भ इति भावः ॥ कारिकायां **क्रियाया** इत्यस्य क्रियागतविशेषस्येत्यर्थः । **भेदको** द्योतकः ॥ ८२ ॥

---

( २०४ कर्मप्रवचनीयसंज्ञासूत्रम् ॥ १।४।४ आ. १२ सू. )

# ३२३ अनुर्लक्षणे ॥ १ । ४ । ८३ ॥

( सूत्रारम्भप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( प्रदीपः ) **अनुर्ल** ॥ ८३ ॥ **किमर्थमिति** । लक्षणेत्थंभूताख्यानेत्यनेनैव सिद्धत्वादिति प्रश्नः ॥

( समाधानभाष्यम् )

**कर्मप्रवचनीयसंज्ञा यथा स्यात् । गत्युपसर्गसंज्ञे मा भूतामिति ॥ किं च स्यात्? । शाकल्यस्य संहितामनु प्रावर्षत् "गतिर्गतौ" इति निघातः प्रसज्येत ॥**

( प्रदीपः ) इतरः शिष्यबुद्धिपरीक्षार्थं जात्युत्तरं ददाति—**कर्मप्रवचनीयसंज्ञेति ॥ निघात इति** । निपातत्वादाद्युदात्तोऽत्राऽनुरिष्यते ॥

( **उद्योतः** ) **अनुर्लक्षणे** ॥ ८३ ॥ **जात्युत्तरम्** असदुत्तरम् । तत्त्वं च लक्षणेत्थमित्यनेनैव गत्यादिसंज्ञाबाधसिद्धेरिति भावः ॥

( समाधानबाधकभाष्यम् )

**यद्येवं वेरपि कर्मप्रवचनीयसंज्ञा वक्तव्या । वेरपि निघातो नेष्यते—प्रादेशं विपरिलिखति ॥**

( समाधानसाधकभाष्यम् )

**अस्त्यत्र विशेषः । नात्र वेर्लिखिं प्रति क्रियायोगः ॥ किं तर्हि? । अप्रयुज्यमानम्—प्रादेशं विमाय परिलिखतीति ॥**

( प्रदीपः ) **नात्र वेरिति** । नहि प्रादेशो लिख्यते ॥ **किं तर्हीति** । धातुं प्रतीति वाक्यशेषः । प्रादेशे च योग्या क्रिया वेराक्षेप्येति सामर्थ्याद्विमानक्रियाया आक्षेपः ॥

( **उद्योतः** ) **नहि प्रादेश इति** । किं तु तत्परिच्छिन्नं भूम्यादीति भावः ॥ **धातुं प्रतीति** । अप्रयुज्यमानधातुबोध्यक्रियया योगे इति फलितोर्थः ॥ ननु या काचित् क्रियाक्षेप्येत्यत आह—**प्रादेशे चेति** । प्रादेशान्वये इत्यक्षरार्थः । एवं च गतिर्गतावित्यत्र प्रत्यासत्त्यैकक्रियानिरूपितगतित्ववतोर्ग्रहणेन नात्र निघातप्राप्तिरिति भावः ॥

( समाधानबाधकभाष्यम् )

**यद्येवम्, अनोरपि कर्मप्रवचनीयसंज्ञया नार्थः । अनोरपि हि न वृषिं प्रति क्रियायोगः ॥ किं तर्हि? । अप्रयुज्यमानम्—शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत् ॥**

( प्रदीपः ) **शाकल्येन सुकृतामिति** । अत्र वाक्ये या निशमनक्रिया तत्कृतो वर्षसंहितयोः संबन्धावच्छेदोऽनुना प्रतिपाद्यत इति नास्ति वर्षक्रियायोगोऽनोरित्यर्थः ॥

( **उद्योतः** ) ननु शाकल्यस्य संहितामित्याद्युदाहरणे संबन्धावच्छेदकताया अन्वादीनामुक्तत्वेन क्रियापदाक्षेपोऽसङ्गतो, **द्वितीया** यथा स्यादित्युत्तरग्रन्थासङ्गतिश्चेत्यत आह—**अत्र वाक्ये इति** ॥ शाकल्येन सुकृतामिति वाक्ये ॥ **प्रतिपाद्यते इति** । **शाकल्यस्य**

---

१ हेतुहेतुमद्भावरूपसंबन्धविशेषनिर्णायक इत्यर्थः । ( र. ना. ) २ निपातानां द्योतकत्वादिति भावः । (र. ना.) ३ संबन्धविशेषनिर्णयप्रकारमित्यर्थः । ( र. ना. ) ४ व्याप्यव्यापकभावरूपेणेति भावः । ( र. ना. ) ५ कारकविभक्त्यर्थसंबन्धस्येत्यर्थः । ( र. ना. ) ६ संबन्धं विशेषयन् तस्य द्योतक इत्यर्थः । ( र. ना. ) ७ अनुः इष्यते इति छेदः । ( र. ना. ) ८ प्रतिक्रियायोग इति पूर्वेण संबध्यते । ( र. ना. ) ९ 'किम्' इति विभक्तिप्रतिरूपकमव्ययम् । कं तर्हि धातुं प्रतीति प्रश्नार्थ इति भावः । १० 'रपि न वृषिं' ।

संहितामित्युदाहरणे इति शेषः । गत्यादिसंज्ञापवादत्वं त्वस्या एकशेषस्य द्वन्द्वापवादत्ववद् बोध्यम् । शाकल्येन सुकृतामित्युक्त्या तत्तदृषिकृतत्वं शाखास्वभ्युपैति[1] । स्पष्टं चेदं तेन प्रोक्तमितिसूत्रे भाष्ये ॥ नास्ति वर्षेति । एवं च गतिर्गताविल्यस्य न प्राप्तिः । क्रियायोगश्च तद्गतविशेषद्योतकतारूप एव गतिसंज्ञानिमित्तमिति भावः । एवं चैतद्द्योत्यसंबन्धस्य क्रियान्वये[2]ऽपि न क्षतिरिति तात्पर्यम् ॥

( समाधानसाधकभाष्यम् )

**इदं तर्हि प्रयोजनम्—द्वितीया यथा स्यात् "कर्मप्रवचनीययुक्ते द्वितीया" इति ॥**

( समाधानपरिहारभाष्यम् )

**अत उत्तरं पठति[3] ॥**

( उद्योतः ) अत उत्तरमिति । सार्वविभक्तिकस्तसिः । अस्योत्तरमित्यर्थः ॥

( ११५७ वैयर्थ्यवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अनुर्लक्षणेवचनानर्थक्यं सामान्यकृतत्वात् ॥ * ॥

( भाष्यम् ) **अनुर्लक्षणेवचनमनर्थकम्[4] ॥ किं कारणम् ? । सामान्यकृतत्वात् । सामान्येनैवात्र कर्मप्रवचनीयसंज्ञा भविष्यति "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" इति ॥**

( प्रदीपः ) अनुर्लक्षण इति । सूत्रानुकरणमेतत् ॥ सामान्यकृतत्वादिति । सामान्यं साधारणं यत्सूत्रमर्थान्तरसंज्ञ्यन्तरनिर्देशात् । तेनैव कृतत्वात्सिद्धत्वादित्यर्थः ॥

( उद्योतः ) नन्वनुरिति प्रथमान्तस्य वचनमनर्थकमित्यनेनान्वयोऽनुचित इत्यनोरिति वक्तुमुचितमत आह—सूत्रेति । अनुर्लक्षणे इत्येतद्वचनमित्यर्थः ॥ ननु तस्यापि विशेषत्वात्सामान्येनेत्ययुक्तमत आह—सामान्यमिति ॥

( ११५८ वैयर्थ्यबाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ हेत्वर्थं तु वचनम् ॥ * ॥

( भाष्यम् ) **हेत्वर्थमिदं वक्तव्यम् । हेतुः शाकल्यस्य संहिता वर्षस्य, न लक्षणम् ॥**

( प्रदीपः ) हेत्वर्थमिति । हेतुरर्थः प्रयोजनम्—प्रयोजक एतस्य वचनस्येत्यर्थः ॥ हेतुरिति । अन्वयव्यतिरेकाभ्यां वर्षं प्रति संहितायाः कारणत्वावगमादित्यर्थः ॥

( उद्योतः ) ननु साध्यतयाऽस्य हेतुः[5] प्रयोजनं नेत्यत आह—हेतुरिति ॥ प्रयोजक इति । प्रयुज्यतेऽनेनेति व्युत्पत्तेः ॥

भाष्ये—हेतुः शाकल्यस्येति । लक्षणेत्थमितिसूत्रे ज्ञापकस्यैव लक्षणशब्देन ग्रहाद् हेतोश्च तत्त्वाभावान्न तेन सिद्धिरित्यर्थः ॥ तत्र हेतुत्वमुपपादयति—अन्वयेति ॥

( तृतीयाक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ? ॥**

( प्रदीपः ) किं वक्तव्यमिति । हेतोर्लक्षणत्वं नास्तीति किं परिभाषितव्यमिति[6] पृच्छति ॥

( सिद्धान्तिसमाधानभाष्यम् )

**नहि ॥ कथमनुच्यमानं गंस्यते ? । लक्षणं हि नाम स भवति येन पुनःपुनर्लक्ष्यते, न यः सकृदपि निमित्तत्वाय कल्पते । सकृच्चासौ शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत्[7] ॥**

( प्रदीपः ) येन पुनःपुनरिति । पौनःपुन्येन साहचर्यावगमे लक्ष्यलक्षणभावो भवतीति भावः ॥

( उद्योतः ) भाष्ये—येन पुनःपुनरिति । गृहीतसंबन्धेनेति शेषः ॥ लक्ष्यलक्षणभाव इति । तद्व्यवहार इत्यर्थः ॥ न यः सकृदपीति । गृहीतसंबन्ध इति शेषः ॥ निमित्तत्वाय । तेन तत्कारणमेवेत्यर्थः ॥

( तृतीयाक्षेपभाष्यम् )

**स तर्हि तथा निर्देशः कर्तव्यः "अनुर्हेतौ" इति ॥ अथेदानीं[8] लक्षणेन हेतुरपि व्याप्तः । नार्थोऽनेन ? ॥**

( प्रदीपः ) अथेदानीमिति । येनोक्तं स तर्हि तथेति, स एव सन्दिहानः पृच्छति—व्याप्त इति । हेतुविषयत्वा[9]ल्लक्षणस्य तेन हेतुर्व्याप्तो भवति ॥

( उद्योतः ) स तर्हीति । कृतेऽपि सूत्रे हेतोर्लक्षणशब्देन व्यवहाराभावादिति भावः ॥ ननु हेत्वर्थमिदमित्युक्तवन्तं प्रति हेतोर्लक्षणत्वाभावादनुर्हेताविति वक्तव्यमित्यन्येनोक्ते, अथेदानीमितिग्रन्थः स्वरसतो हेत्वर्थवादिन इति लभ्यते । तन्न युक्तं नार्थोऽनेनेति वाक्यशेषविरोधात्, नापि सूत्रप्रत्याख्यानवादिनस्तस्य विच्छिन्नत्वादत आह—येनोक्तमिति ॥ ननु हेतुत्वं विना लक्षणत्वस्य विद्युद्वृक्षविषये सत्त्वेन लक्षणत्वं विना हेतुत्वस्य च दण्डादौ दर्शनेन 'लक्षणेन हेतुर्व्याप्त' इत्यसङ्गतमत आह—हेतुविषयत्वादिति[10] । प्रकृतोदाहरणे इति शेषः ॥ व्याप्त[11] इत्यस्य संबद्ध इत्यर्थो द्रष्टव्यः ॥

( समाधानभाष्यम् )

**लक्षणेन हेतुरपि व्याप्तः । नह्यवश्यं तदेव लक्षणं भवति—येन पुनःपुनर्लक्ष्यते ॥ किं तर्हि ? ।**

---

१ अभ्युपैतीति । पूर्वपक्षीति शेषः स्यात् ॥ तथा च जैमिनिः प्रथमाध्यायस्य प्रथमे पादे—'यतः पुरुषाख्याः काठकं कौथुमं माध्यन्दिनीयम्' इत्यादिपुरुषनामघटिता वेदानामाख्या नामानि दृश्यन्ते ततः पौरुषेया वेदाः' इत्यर्थकम् "वेदांश्चैके संनिकर्षं पुरुषाख्याः" इति सूत्रं 'अनित्यानां जन्ममरणवतां पुरुषाणां "बर्बरः प्रावाहणिरकामयत" इत्यादिना वेदे दर्शनाच्च वेदानामाधुनिकत्वम्' इत्यर्थकम् "अनित्यदर्शनाच्च" इति सूत्रं च प्रलिखितवान् ॥ सिद्धान्तस्तु "आख्या प्रवचनात्" "परं तु श्रुतिसामान्यादित्यादि सूत्रैरनादितैव बोधिता वेदस्येति तेन प्रोक्तमितिसूत्रे निरूपयिष्यामः । २ निशमनक्रियाजनितसंबन्धेन संहिताहेतुकं प्रवर्षणमित्यनया रीत्येति भावः ।(र.ना.) ३ पूर्ववादीति शेषः । ( र. ना. ) ४ 'वचनानर्थक्यम्' इति पाठस्तु प्राचीनलेखकलिखित एव । ५ हेतुः संहितादिः साध्यतयाऽस्य सूत्रस्य प्रयोजनं नेत्यर्थः । ( र. ना. ) ६ 'मिति मत्वा पृ' । ७ 'प्रावर्षदिति' । ८ अथ शब्दः प्रश्ने । लक्षणेन हेतुरपि व्याप्त इतीदानीमनेन हेताविति निर्देशेननार्थो न प्रयोजनं किमित्यर्थः । ( र. ना. ) ९ 'हेत्वहेतुविषय' । १० अत्र हेतुपदेन तद्विषयो लक्ष्यते । हेतुविषयविषयकत्वादित्यर्थः । ( र. ना. ) ११ पूर्वोक्तव्यभिचारेण व्याप्तेरसंभवादिति भावः । ( र. ना. )

यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणं भवति। तद्यथा—अपि भवान्कमण्डलुपाणिं छात्रमद्राक्षीदिति। सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवति॥

(प्रदीपः) लक्षणेनेति। सिद्धान्तवादी॥ तदपि लक्षणमिति। कार्योत्पत्तिनिमित्तमपि तद्विशेषावगमहेतुत्वाल्लक्षणं भवतीत्यर्थः॥

(उद्योतः) ननु भूयो दर्शनाभावात्कथं ज्ञापकत्वमत आह भाष्ये—नह्यवश्यमिति॥ तद्विशेषावगमेति। कालविशेषावच्छिन्नवृष्ट्यवगमेत्यर्थः। यो मे कमण्डलुपाणिश्छात्रः पूर्वं दृष्टः सोऽद्य त्वया दृष्ट इत्यपि भवानिति वाक्यार्थः॥ लक्षणत्वं न व्याप्यत्वापरपर्यायमेव, किं तूपलक्षकत्वरूपमपीति भावः। एवं च लक्षणेत्थमित्यत्रापि लक्षणशब्देन हेतोरभिधानादिदं व्यर्थं स्यादत आह भाष्ये—तदेवेति॥

(प्रयोजनभाष्यम्)

एतदेव तर्हि प्रयोजनम्—द्वितीया यथा स्यात् "कर्मप्रवचनीययुक्ते द्वितीया" इति॥

(परिहारभाष्यम्)

एतदपि नास्ति प्रयोजनम्। सिद्धात्र द्वितीया "कर्मप्रवचनीययुक्ते" इत्येव॥

(परिहारबाधकभाष्यम्)

न सिध्यति। परत्वाद्धेत्वाश्रया तृतीया प्राप्नोति॥ [एवमर्थमिदमुच्यते]॥ अनुर्लक्षणे॥८३॥

(प्रदीपः) परत्वादिति। येन नाप्राप्तिन्यायेन "कर्मप्रवचनीययुक्ते द्वितीया" षष्ठ्या एव बाधिका। तां तु परत्वात्तृतीया बाधेत। पुनःसंज्ञाविधाने तु स्थानान्तरप्राप्त्या द्वितीया हेतुतृतीयां बाधते॥ ८३॥

(उद्योतः) ननु विध्यन्तरपूर्वकत्वेन द्वितीयाया अपवादत्वात्कथं तृतीयाबाध्यत्वमत आह—येन नेति॥ बाधेतेति। यत्र हेतुत्वं न भासते तत्र लक्षणेत्थमित्येतत्संज्ञाप्रयुक्ता द्वितीया सावकाशा यथा वृक्षमनु विद्योतत इत्यादौ, धनेन कुलमित्यादौ चानोरभावाद्धेतुतृतीया सावकाशेति भावः॥ ननु कृतेप्यस्मिन् द्वितीयया कथं बाधोऽत आह—पुनः संज्ञेति। पुनः संज्ञाविधानेन पुनर्द्वितीयाविधानं कल्प्यते। तच्च तृतीयाप्राप्त्युत्तरकालत्वात् स्थानान्तरप्राप्तमित्युच्यते इति बोध्यम्॥ ८३॥

---

(२०८ कर्मप्रवचनीयसंज्ञासूत्रम्॥ १।४।४ आ० १३ सू.)

## ३२८ आङ्मर्यादावचने॥१।४।८८॥

(अभिविधौ कर्मप्रवचनीयसंज्ञासाधनाधिकरणम्)

(११५९ आक्षेपवार्तिकम्॥ १॥)

॥ * ॥ आङ् मर्यादाभिविध्योः॥ * ॥

(भाष्यम्) आङ्मर्यादाभिविध्योरिति वक्तव्यम्। इहापि यथा स्यात्—आकुमारं यशः पाणिनेरिति।

(प्रदीपः) आङ् मर्या॥ ८८॥ आङ् मर्यादाभीति। अन्यत्र मर्यादाभिविध्योर्भेदेन निर्देशदर्शनाद् 'विना तेनेति मर्यादा, सह तेनेत्यभिविधिरित्यर्थभेदं मत्वा वार्तिकं पठति॥ आकुमारमिति। कुमारानपि यशः प्राप्तमित्यर्थः॥

(उद्योतः) आङ् मर्यादा॥ ८८॥ ननु परिच्छेदहेतुमात्रं मर्यादेति सिद्धमेवाभिविधावपीत्यत आह—अन्यत्रेति॥

(तृतीयाक्षेपभाष्यम्)

तत्तर्हि वक्तव्यम्?॥

(सिद्धान्तिभाष्यम्)

न वक्तव्यम्। "मर्यादावचने" इत्येव सिद्धम्। एषास्य यशसो मर्यादा॥ आङ्मर्यादावचने॥८८॥

(प्रदीपः) मर्यादावचन इत्येवेति। वचनग्रहणस्येदं प्रयोजनमवान्तरभेदपरिहारेण परिच्छेदहेतुमात्रं मर्यादा यथा गृह्येत॥ ८८॥

(उद्योतः) अवान्तरेति। मर्यादाविशेष एवाभिविधिः। मर्यादैव यदा कार्येण युज्यते तदाऽभिविधिः, यदा तु न, तदा मर्यादेति विशेषाविवक्षणादिति भावः। तदुक्तं भाष्ये—एषाऽस्य यशसो मर्यादेति। अस्य पाणिनेः। एषा कुमाररूपा। मर्यादा परिच्छेदहेतुरित्यर्थः॥ ८८॥

---

(२०९ कर्मप्रवचनीयसंज्ञासूत्रम्॥ १।४।४ आ. १४ सू.)

## ३२९ लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः॥१।४।८९॥

(लक्षादीनां प्रत्यादिद्योत्यत्वाधिकरणम्)

(अनुयोगभाष्यम्)

कस्य लक्षणादयोऽर्था निर्दिश्यन्ते?॥

(प्रदीपः) लक्षणेत्थम्॥ ८९॥ कस्येति। किं यथा विभक्तिसमीपादयोऽव्ययार्थास्तथा लक्षणादयः प्रत्यादी-

---

१ 'सकृदप्यसौ'। २ तथाच लक्षणेत्थमित्यत्र हेतुरूपं लक्षणं न गृह्यते इति भावः। (र. ना.) ३ 'तदेव'। ४ 'तदर्थं'॥ अयं कोष्ठकान्तर्गतः पाठो न सर्वत्र। ५ अनुर्लक्षणे इति कर्मप्रवचनीयसंज्ञामाश्रित्य पुनर्द्वितीयाविधाने इत्यर्थः। (र. ना.) ६ प्रयोजनमिति। मर्यादाया वचनं यत्रार्थयुगले तद् मर्यादावचनम् इति बहुव्रीहिणा "आङ्मर्यादाभिविध्योः" इतीतिसूत्रोपात्तार्थयुगलस्यैव ग्रहणं लक्ष्यानुरोधादिति तत्त्वम्।

नाम् । अथ पदान्तरवाच्याः सन्तो विषयभावेन[1] संज्ञाया-प्रत्यादीनां वा निर्दिष्टा इति प्रश्नः ॥

( उद्द्योतः ) लक्षणेत्थं ॥ ८९ ॥ प्रत्यादीनां वेति तेषां तद्विषयत्वं च तद्धटितसंबन्धपरिच्छेदकत्वाद्बोध्यम् ॥

( समाधानभाष्यम् )

**वृक्षादीनाम् ॥**

( प्रदीपः ) **वृक्षादीनामिति** । वृक्षं प्रति विद्योतते विद्युदिति वृक्षो विद्योतनस्य लक्षणम् । प्रत्यादयस्तु प्राप्ति-क्रियाजनितसंबन्धविशेषावच्छेदहेतवः ॥

( उद्द्योतः ) भाष्ये—वृक्षादीनामिति । तदुत्तरविभक्ती-नामित्यर्थः । प्रत्यादयस्तु तद्द्योतका इति भावः ॥ **संबन्धविशे-षेति** । वृक्षविद्योतनयोः प्राप्तिक्रियाजनितो लक्ष्यलक्षणभाव इति भावः । महासंज्ञाकरणेन क्रियाजनितसंवन्धद्योतकताया एव प्रायेण कर्मप्रवचनीयानामुचितत्वादिति तात्पर्यम् ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ॥**

( प्रदीपः ) **किमर्थमिति** । वृक्षं वृक्षं प्रति सिञ्चतीत्यत्र कर्मत्वाद् द्वितीया सिद्धेति तद्विधानार्थं तावदिदं न भवति । प्रत्यादीनां च क्रियाविशेषानवद्योतनात् क्रियायोगाभावाद्गत्यु-पसर्गसंज्ञाबाधनार्थमपि नोपयुज्यत इति प्रश्नः ॥

( उद्द्योतः ) ननु द्वितीयार्थमिदमावश्यकमत आह—**वृक्षं वृक्षं प्रतीति** ॥ **क्रियायोगाभावादिति** । तेषां समभिव्याहृत-विभक्त्यर्थसंवन्धमात्रद्योतकत्वादिति भावः ॥

( समाधानभाष्यम् )

**कर्मप्रवचनीयसंज्ञा यथा स्यात् गत्युपसर्गसंज्ञे मा भूतामिति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः । न च वृक्षादीन्प्रति क्रिया-योगः ॥**

( उद्द्योतः ) भाष्ये—न च वृक्षादीन्प्रतीति । प्रतियोगे वृक्षादीनिति द्वितीया संबन्धार्थिका वृक्षाद्युत्तरविभक्त्यर्थसंबन्धिना-मेषामित्यर्थः । तत्संवन्धश्च तदर्थसंवन्धपरिच्छेदकत्वेनेति बोध्यम् ॥

( समाधानसाधकभाष्यम् )

**इदं तर्हि प्रयोजनम्, द्वितीया यथा स्यात् "कर्म-प्रवचनीययुक्ते द्वितीया" इति । वृक्षं प्रति विद्योतते वृक्षमनु विद्योतते इति ॥ एवमर्थमिदमुच्यते ॥ लक्षणे० ॥ ८९ ॥**

( प्रदीपः ) **वृक्षं प्रतीति** । अकर्मकत्वाद् द्युतेः कर्मणि द्वितीया नास्ति ॥ ८९ ॥

( उद्द्योतः ) अकर्मकत्वादिति । एवमर्थमर्थं प्रति शब्द-निवेश इत्यादौ निविशत्यधिकरणे द्वितीयार्थमपीदं बोध्यम् । सक-र्मकयोगेपि कर्मत्वाविवक्षायां संवन्धत्वेन विवक्षायां प्रत्यादिद्योत्य-संवन्धेनान्वयविवक्षायां च द्वितीयार्थमित्यपि बोध्यम् । एतेनाकर्म-कत्वाद्'''द्वितीया नास्तीति कैयटोक्तेः सकर्मकधातुयोगे कर्मणि द्वितीयैव[3] सिद्धमिति भ्राम्यन्तः परास्ताः ॥ ८९ ॥

( २१० कर्मप्रवचनीयसंज्ञासूत्रम् ॥ १।४।४ आ. १५ सू. )

## ३३२ अधिपरी अनर्थकौ ॥ १।४।९२ ॥

( उक्तार्थस्यापि प्रयोगाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमधिपर्योरनर्थकयोः कर्मप्रवचनीयसंज्ञो-च्यते ? ॥**

( प्रदीपः ) **अधिपरी** ॥ ९२ ॥ **किमर्थमिति** । अन-र्थकयोः क्रियायोगाभावात्संज्ञान्तरबाधनार्थं संज्ञाविधानं नोप-युज्यते । नापि परियोगे पञ्चमीविधानार्थम् । अपेन साह-चर्याद्वर्जनविषयपरियोगे तस्या विधानात्, अपादानसद्भावे चाधिशब्दस्य प्रयोग इव परियोगे तन्निमित्तायाः पञ्चम्याः सिद्धत्वादिति प्रश्नः ॥

( उद्द्योतः ) अधिपरी ॥ ९२ ॥ ननु गत्यादिसंज्ञाबाधनं फलमित्यत आह—अनर्थकयोरिति ॥ पञ्चमीति । पञ्चम्यपा-ङ्परिभिरिति सूत्रेणेति शेषः ॥ किंचाधिशब्दयोगे पञ्चम्यविधा-नेपि यथाऽपादानत्वात्सा तथा परियोगेऽपीत्याह—अपादानेति । आगमनादिक्रियानिरूपितेत्यर्थः । द्वितीयार्थमपि न, अर्थाभावेन कर्मप्रवचनीययुक्तत्वस्य निरूपयितुमशक्यत्वादिति भावः ॥

( समाधानभाष्यम् )

**कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपसर्गसंज्ञे मा भूतामिति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तौ तं प्रति गत्युपसर्गसंज्ञौ भवतः । अनर्थकौ चेमौ[4] ॥**

( समाधानसाधकभाष्यम् )

**इदं तर्हि प्रयोजनम्—पञ्चमी यथा स्यात् "पञ्च-म्यपाङ्परिभिः" इति, कुतः पर्यागम्यत इति ॥**

( समाधानबाधकभाष्यम् )

**सिद्धं तु "पञ्चम्यपादाने"[5] इत्येव । आतश्चापादान-पञ्चम्येव, यत्राधिशब्देन योगे पञ्चमी न विधीयते तत्रापि च श्रूयते—कुतोऽध्यागम्यते इति ॥**

( समाधानसाधकभाष्यम् )

**एवं तर्हि सिद्धे सति यदनर्थकयोरुपसर्गसंज्ञा-बाधिकां कर्मप्रवचनीयसंज्ञां शास्ति तज्ज्ञापयत्या-**

---

१ संज्ञाया विषयभावेन प्रत्यादीनां वा विषयभावेनेति योजना । ( र. ना. ) २ प्रत्यादीनां लक्षणादिविषयकत्वञ्च लक्षणादिघटितसंवन्धनिर्णायकत्वादित्यर्थः । यथा वृक्षं प्रति विद्योतते विद्युदित्यत्र लक्षणघटितः संबन्धः प्राप्तिक्रियाजन्यत्व-विशिष्टो लक्ष्यलक्षणभावः । तन्निर्णायकत्वं प्रतेः । ( र.ना. ) ३ एवकारो भिन्न-क्रमः । द्वितीयया सिद्धमेवेत्यन्वयः । ( र. ना. ) ४ 'चैतौ' । ५ 'चतुर्थी संप्रदाने' 'सप्तम्यधिकरणे च' 'षष्ठी शेषे' इत्यत्रेव 'पञ्चम्यपादाने' इत्येव-मेव सूत्रपाठो भाष्यसंमतो भवेत् ॥ 'सिद्धाऽत्र' इति वात्र पाठो भवेत् ।

**चार्यः—'अनर्थकानामप्येषां भवत्यर्थवत्कृतम्' इति। किमेतस्य ज्ञापने प्रयोजनम्?। निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितं तन्न वक्तव्यं भवति॥**

**( समाधानान्तरभाष्यम् )**

**अथ वा नेमावनर्थकौ॥ किं तर्ह्यनर्थकावित्युच्यते?। अनर्थान्तरवाचिनावनर्थकौ, धातुनोक्तां क्रियामाहतुः। तदविशिष्टं भवति। यथा शङ्खे पयः॥**

**( प्रदीपः ) अथ वेति।** पूर्वापरितोषेणेदमुच्यते। यस्य शब्दस्य वाच्यं द्योत्यं वा वस्तु न संभवति तस्य वाक्यार्थेऽनुपयोगात् प्रयोगानुपपत्तिः। तस्मादर्थशब्द इह प्रयोजनवाची, तेन योर्थोऽनयोर्द्योत्यस्तस्य प्रकरणादिवशात्संप्रत्ययान्निष्प्रयोजनावेतावुच्येते॥ **धातुनोक्तामिति।** प्रकरणादिसामर्थ्यावगतविशेषां धातुनोक्तां क्रियामित्यर्थः॥ **आहतुरिति।** द्योतयत इत्यर्थः॥ **तदविशिष्टमिति। तत्** क्रियालक्षणं वस्त्वविशिष्टम्। अधिपरिसन्निधानेऽप्यनाहितविशेषमित्यर्थः। **यथेति।** शङ्खे न्यस्तं क्षीरं शौक्ल्येनाभिन्नं शङ्खादित्यर्थः॥

**(उद्योतः) पूर्वापरितोषेणेति। नेमावनर्थकाविति** भाष्येण स्फुटं तदावेदनादिति भावः। किंचोक्तार्थे ज्ञापितेऽपि न चारितार्थ्यं, क्रियागतविशेषद्योतकत्वरूपक्रियायोगाभावेन गतिसंज्ञाद्यप्राप्तेरिति बोध्यम्॥ **प्रयोगानुपपत्तिरिति।** तस्माद् द्योत्यार्थेनार्थवत्त्वमस्याप्येषितव्यमित्यर्थः॥ नन्वेवमनर्थकावित्यसङ्गतमत आह—**तस्मादिति।** अर्थान्तरबोधकत्वाभावान्निष्प्रयोजनावित्यर्थः[१]॥ ननु धातुना क्रियोक्तावपि तद्गतोपरिभावसर्वतोभावरूपविशेषद्योतनमनयोः फलमत आह—**प्रकरणेति॥** पूर्वं क्रिया[२]क्रमेण तदिति नपुंसकमनुपपन्नमत आह—**तदिति।** एवं च क्रियायोगसत्त्वात्प्राप्तगत्यादिसंज्ञाबाधनार्थमिदमावश्यकमिति भावः॥

**( आक्षेपभाष्यम् )**

**यद्येवं धातुनोक्तत्वात्तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति "उक्तार्थानामप्रयोगः" इति॥**

**( प्रदीपः ) यद्येवमिति।** धातोर्वाचकत्वात्तस्य प्रयोगं नाक्षिपति, तेन विना तयोः प्रयोगासंभवाद्। उपसर्गग्रहणं चाधिपर्योरुपलक्षणार्थम्॥

**( उद्योतः )** ननु विपरीतं कुतो न शङ्कितमत आह—**धातोरिति।** धातोः प्रयोगं व्यर्थत्वेन नाक्षिपतीत्यर्थः॥ तदेवाह—**तेन विनेति।** तयोर्वाचकत्वाभावादित्यर्थः॥ नन्वनयोरुपसर्गत्वाभावादुपसर्गेत्यनुपपन्नमत आह—**उपसर्गेति॥**

**( समाधानभाष्यम् )**

**उक्तार्थानामपि प्रयोगो दृश्यते। तद्यथा—अपूपौ द्वावानय ब्राह्मणौ द्वावानयेति॥ अधिपरी ९२**

**( प्रदीपः ) उक्तार्थानामपीति।** प्रकरणादिवशादवगतार्थानामपि स्फुटतरावगत्यर्थः प्रयोगो लोके भवति। न चानियमप्रसङ्गः। येषामेव हि गतार्थानां प्रयोगो दृश्यते त एव प्रयुज्यन्ते, न तु वृक्षस्तरुः पादप इति, तथा प्रयोगादर्शनात्॥ **अपूपौ द्वाविति।** अपूपावित्यत एवावगते द्वित्वे द्विशब्दस्यापि प्रयोगो लोके दृश्यते। एतदुक्तं भवति—यथा यावशब्दो वाक्यान्तरविषयोऽन्य एव। अन्यश्च यावकशब्दः। यथा च ऋषभशब्दो वृषभशब्द इति च। तथैवागच्छत्यध्यागच्छति पर्यागच्छतीति च। तदत्र विषये धातोरधिपर्योश्च सहाभिधायित्वमङ्गीकर्तव्यम्॥ ९२॥

**( उद्योतः ) आगच्छत्यध्यागच्छतीत्यादि पाठः।** अत्रेदं बोध्यम्—कैयटोक्तयावयावकदृष्टान्तेन भाष्योक्तेनापूपौ द्वाविति दृष्टान्तेन वाऽऽगच्छतीत्यर्थापेक्षयाऽधिकोर्थो नानयोर्द्योत्यो नापि प्रकरणादिनाप्यागच्छतीत्यस्योपरिभावसर्वतोभावार्थकत्वं, किं त्वागमनमात्रार्थकत्वमेवाध्यागच्छतीत्याद्यप्यागमनमात्रार्थकमेव। किं तु वोद्धुस्ततो मिलितादेवार्थबोधेन तस्याप्यनुवादकत्वेन धात्वर्थद्योतकतेति व्यवहारः। फलं तु न किंचिदिति तत्त्वम्॥ एतेन प्रकरणादिसामर्थ्यावगतविशेषामित्यादिकैयटश्चिन्त्यः, सर्वत्र प्रकरणसत्त्वे तद्विषये एव वैतत्प्रयोगे मानाभावाच्च॥ **अपूपौ द्वाविति।** अत्र द्विशब्दापूपशब्दयोर्वाचकयोः, प्रत्ययर्योर्द्योतकयोः, प्रकृतिप्रत्यययोर्वाचकद्योतकयोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयो दृश्यत इत्यर्थः॥ ९३॥

---

**( २११ कर्मप्रवचनीयसंज्ञासूत्रम्॥ १।४।४ आ. १६ सू. )**

## ३३५ अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु॥ १। ४। ९५॥

**( द्वितीयावारणाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**इह कस्मान्न भवति—सर्पिषोपि स्यात्, गोमूत्रस्यापि स्यात्?॥ किं च स्यात्?। द्वितीया प्रसज्येत "कर्मप्रवचनीययुक्ते द्वितीया" इति॥**

**( प्रदीपः ) अपिः पदार्थे॥ ९५॥ इहेति।** यथाऽपिशब्दस्य कर्मप्रवचनीयसंज्ञायां सत्यां स्यादित्यत्रोपसर्गाश्रयं षत्वं न भवत्येवं सर्पिःशब्दाद्द्वितीया कस्मान्न भवतीति प्रश्नः॥ इतरो भवत्येवात्रापेः संज्ञेत्याह—**किं च स्यादिति॥**

**( उद्योतः ) अपिः पदार्थे॥ ९५॥** ननूपसर्गत्वप्रयुक्तषत्वस्य स्यादित्यत्र निवृत्तये एतत्संज्ञाप्रवृत्तिरस्त्वेवेत्यत आह—**यथेति॥ इत्याहेति।** इत्याशयेनाहेत्यर्थः॥

**( आक्षेपबाधकभाष्यम् )**

**नैष दोषः। नेमे अप्यर्था निर्दिश्यन्ते॥ किं तर्हि?। परपदार्था इमे निर्दिश्यन्ते—एतेष्वर्थेषु यत्पदं वर्तते तत्प्रति अपिः कर्मप्रवचनीयसंज्ञो भवतीति॥**

---

१ अर्थान्तरावोधकौ निष्प्रयोजनौ इत्यर्थः। ( र. ना. ) २ क्रियाया निर्देशेनेत्यर्थः। ( र. ना. ) ३ द्योत्यार्थेनार्थवत्त्वस्वीकारे चेत्यर्थः। ( र. ना. )

४ संभेदे नान्यतरवैयर्थ्यमिति न्यायमाश्रित्य धातूपसर्गयोर्द्वयोरपि सार्थक्यमित्यपि बोध्यम्। ( र. ना. )

( प्रदीपः ) **नेमे इति** । यद्यपि शब्दार्थो इमे निर्दिश्येरन्, पदार्थग्रहणमनर्थकं स्यात् । स्वपदार्थाव्यभिचारात् । संभावनादीनां चोपादानमनर्थकं स्यात्, तेषामपि पदार्थत्वात् ॥ **परपदार्था इति** । **स्यादित्यादेः परस्य पदस्यामी अर्था इत्यर्थः । तदयमर्थः—स्यादित्यादिपदं कर्तृसामान्यवाच्यपि यदा सामर्थ्यात्कर्तृविशेषे बिन्दौ वर्तते तदा तत्प्रत्यपिः कर्मप्रवचनीयः । सर्पिःशब्दस्तु समुदाय एव वर्तते नावयवे । अत एवावयवो[1]पजनितव्यतिरेके षष्ठी भवति ॥**

( उद्योतः ) **यद्यपीति** । यदि अपिशब्दार्था इति च्छेदः ॥ **स्वपदार्थेति** । स्वपदार्थेन पदस्याव्यभिचारादित्यर्थः ॥ **संभावनादीनां चेति** । तेषामप्यपिरूपस्वपदार्थत्वादिति भावः । एषु वर्तमानोऽपिरिति नार्थस्तथासंति प्रत्यासत्त्या पदार्थशब्देनापेः स्वपदार्थ एव गृह्येतेति तद्वैयर्थ्यम्[2] । अपिः कर्मप्रवचनीय इत्येव वदेदिति तात्पर्यम् ॥ **यदा सामर्थ्यादिति** । अपिशब्दसामर्थ्यादित्यर्थः । अयं भावः—कर्मप्रवचनीययुक्तत्वं तद्द्योत्यसंबन्धप्रतियोगित्वमिव तद्द्योत्यबोधकत्वमपि, तच्च[3] स्यादित्यस्यैव न सर्पिष इति न ततो द्वितीया । कर्मप्रवचनीयानां संबन्धद्योतकत्वं तु प्रायिकमधिपर्यादौ व्यभिचारादिति ॥ स्यादित्याख्यातेन बिन्दुत्वेनाश्रयत्वेन वाश्रयबोध[4] इत्येतत्पक्षतात्पर्यम् ॥

( समाधानान्तरभाष्यम् )

**अथ वा यदत्र कर्मप्रवचनीययुक्तं नादः प्रयुज्यते । किं पुनस्तत् ? । बिन्दुः ॥ बिन्दोस्तर्हि कस्मान्न भवति ? । "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति प्रथमा भविष्यति ॥ अपिः पदार्थ० ॥ ९५ ॥**

( प्रदीपः ) **अथ वेति** । बिंदुकर्तृकत्वं क्रियायाः द्योतयितुमपिः प्रयुज्यते इति बिन्दुं प्रति कर्मप्रवचनीयोऽपिः न तु सर्पिः प्रतीति भावः ॥ **बिन्दोस्तर्हीति** । ननु यदा बिन्दुशब्दो न प्रयुज्यते तदापिः कर्मप्रवचनीयः । तदुच्यते वृत्तिकारैः—पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थ इति । न चाप्रयुक्ते द्वितीया विधातुं शक्या ॥ अत्राहुः—पदार्थग्रहणमिहोपलक्षणार्थमुपात्तं[5], तेन यस्मिन् पदार्थे पदान्तरस्याभिधानशक्तिर्नास्ति तत्रापिः कर्मप्रवचनीयः । ततश्च गतार्थो बिन्दुशब्दो यदा विस्पष्टप्रतिपत्तये प्रयुज्यते तदाप्यपिः कर्मप्रवचनीयसंज्ञो भवति ॥ **उपपदविभक्तेरिति** । कारकविभक्तिरत्र प्रथमा । सर्वत्रैव वाक्येऽवश्यभाव्यं क्रिययाऽन्ततः सत्तया । तत्र बिन्दोः प्रथमं स्यादित्यनेन संबन्धोन्तरङ्गः, पश्चात्तु तद्द्वारकोऽपिशब्देन ॥ ९५ ॥

( उद्योतः ) भाष्ये—**अथ वेति** । अयं भावः—अपिना परपदार्थो बिन्दुस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यं संबन्धश्च द्योत्यते । तत्रापिद्योत्यसंबन्धप्रतियोगित्वस्य बिन्दौ सत्त्वात्तस्यैव कर्मप्रवचनीययुक्तत्वमिति । तदाह—**बिन्दुकर्तृकत्वमिति** । तद्दौर्लभ्यप्रयुक्तदौर्लभ्यं चेत्यपि बोध्यम् ॥ पृथग्बिन्दूपस्थितिस्तस्य चाख्यातार्थेऽभेदान्वय इत्येतत्पक्षतात्पर्यम् ॥ **यदत्र कर्मप्रवचनीययुक्तं** कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगीति भाष्याक्षरार्थः ॥ **उपलक्षणार्थमिति** । यत्पदप्रयोगं विनापि तदर्थोऽपिशब्देनावश्यं द्योत्यते तादृशापेः कर्मप्रवचनीयत्वमित्यर्थस्तत्फलितमाह—**तेन यस्मिन्निति** । **पदान्तरस्य** तद्वाचकत्वेन प्रसिद्धातिरिक्तस्य **अभिधानशक्तिर्नास्ति** अपिशब्दसमभिव्याहारं विनेति शेषः । अर्थात्तत्समभिव्याहारेऽस्तीति लब्धम् । एवं च सर्पिष इत्येतत्तत्संबन्धिबिन्दुपरं बोध्यम् । वागादिशब्दे स्त्रीत्वस्य प्रकृतिवाच्यत्वेऽपि द्योतकटाबादिप्रयोगवत् तस्य द्योतकत्ववच्च बिन्दुशब्दप्रयोगेऽप्यपेस्तद्द्योतकत्वाक्षतिरित्याह—**ततश्चेति** ॥ ननु प्रथमायाः कारकाधिकारेऽपठितत्वात्कथं कारकविभक्तित्वमत आह—**सर्वत्रैवेति** । क्रियाजनकार्थकत्वमेव कारकविभक्तित्वमिति भावः ॥ **अन्तरङ्ग इति** । अपिद्योत्यो बिन्दुरिति तस्य कथमपि संबन्धो बहिरङ्ग इति चिन्त्यम् ॥ अपिना द्योत्यद्योतकभावः संबन्धः स्वाभाविक इति तस्य कथं स्यादित्येतत्संबन्धोत्तरकालिकता, तस्माद्वाचनिकोऽयं न्याय इति तत्त्वम् ॥ ९५ ॥

(२१२ कर्मप्रवचनीयसंज्ञासूत्रम् ॥ १ । ४ । ४ आ. १७ सू.)

## ३३६ अधिरीश्वरे । १ । ४ । ९६ ॥

( स्वं प्रति कर्मप्रवचनीयतासाधनाधिकरणम् )

( ११६० वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अधिरीश्वरवचने उक्तम् ॥ * ॥

( भाष्यम् ) **किमुक्तम् ? । *यस्य[6] चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम्* । *प्रथमा[7]नुपपत्तिस्तु* । *स्ववचनात्तु[8] सिद्धम्* इति । अधिः स्वं प्रति कर्मवचनीयसंज्ञो भवतीति वक्तव्यम् ॥ अधिरीश्वरे ॥ ९६ ॥**

( प्रदीपः ) अधि ॥ ९६ ॥ **उक्तमिति** । वक्ष्यमाणमपि बुद्ध्या निरूपितत्वादुक्तमित्युक्तम् ॥ **कर्तृनिर्देशश्चेदिति** । यदीश्वरवचनमित्यनेन पदेनेश्वरः स्वामी भृत्यनियोगादौ यः कर्ता स निर्दिश्यते तदानेन स्वामिनः सप्तमी विधीयते—अधि ब्रह्मदत्ते पञ्चाला इति । तत्राधिकरणत्वादेव सप्तमी सिद्धा । ब्रह्मदत्ते स्थिताः पञ्चाला इत्यर्थावगमात् ॥ पञ्चाला इति च प्रथमा न प्राप्नोति, कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीयया बाधितत्वात् ॥ **स्ववचनादिति** । अधि ब्रह्मदत्ते पञ्चाला इत्यस्याऽन्यथासिद्धत्वादधिः स्वे इति वक्तव्यम् अधि पञ्चालेषु

---

१ अवयवकृतभेदे इत्यर्थः । ( र. ना. ) २ संभावनादिग्रहणवैयर्थ्यमित्यर्थः । (र. ना.) ३ अपिद्योत्यकर्तृविशेषबिन्दुबोधकत्वमित्यर्थः । (र. ना.) ४ 'वाश्रयोपस्थितिरित्ये–'....काशी Bengal Asiatic Society मुद्रितपुस्तकयोः । ५ लक्षणया वक्ष्यमाणार्थबोधार्थमित्यर्थः । ( र. ना. ) ६ यदीश्वरवचनमित्यनेन भृत्यनियोगादौ यः कर्ता स्वामी स निर्दिश्यते तदैतद्वचनं विनाऽपि स्वामिनः सप्तमी अधिकरणत्वादेव सिद्धेति वार्तिकार्थः । (र.ना.)

७ अधि ब्रह्मदत्ते पञ्चाला इति च स्ववाचकात्प्रथमाया अनुपपत्तिः । कर्मप्रवचनीययुक्ते द्वितीयया बाधितत्वात् । ( र. ना. ) ८ अधिः स्वे इति वचनात् अधि पञ्चालेषु ब्रह्मदत्त इति सिद्धम् । इदमेव चोदाहरणं न्याय्यम् । अधि ब्रह्मदत्ते पञ्चाला इत्यस्यान्यथासिद्धत्वादिति कैयटनिष्कर्षः । ( र. ना. ) ९ 'काशी' Bengal Asiatic Society मुद्रितपुस्तकयोस्तु 'अधिस्वे' इति निर्विसर्ग एव पाठोधेरव्ययत्वं मत्वा सूत्रपाठमनालोच्यैव स्थापितः ।

ब्रह्मदत्त इत्यर्थम् । ईश्वरवचनमिति च कर्तृषष्ठ्या समासः । ईश्वरेण यदुच्यते स्वं तत्र कर्मप्रवचनीययुक्ते सप्तमीति । यदि वा यस्य संबन्धिन ईश्वरस्य वचनं सप्तमी । तत्र पञ्चालेष्वासनादिक्रियोपजनिते संबन्धे षष्ठ्यां प्राप्तायां सप्तमी विधीयते । स्वं च प्रत्यधेः कर्मप्रवचनीयसंज्ञा न तु स्वामिनमिति स्वामिनः प्रथमैव भवति ॥ ९६ ॥

( उद्द्योतः ) अधिरी ॥ ९६ ॥ वक्ष्यमाणमपीति । यस्मादधिकं यस्य चेश्वरवचनमिति सूत्रे इत्यर्थः ॥ स निर्दिश्यते इति । यन्निष्ठमीश्वरत्वमुच्यते इत्यर्थादिति भावः ॥ प्रथमा न प्राप्नोतीति । सूत्रे ईश्वरेणेशितव्यस्याक्षेपात् तं प्रत्यपि कर्मप्रवचनीयत्वादिति भावः ॥ ईश्वरेण यदुच्यते इति । संबध्यत इत्यर्थः । ईश्वरेण स्वनिरूप्यधर्मवत्तया यदुच्यत इत्यर्थो वा । निरूपकस्यैव कर्तृत्वविवक्षा न त्वीशितव्यस्य ॥ देशरूपत्वेन पञ्चालानामप्याधारत्वेन सप्तमी सिद्धेत्यत आह—अत्रेति । आसनादिक्रियोपजनितः संबन्धः स्वस्वामिभावादिः ॥ ननु ब्रह्मदत्तादपि द्वितीयापत्तिरत आह—स्वं चेति । तस्यैव कर्मप्रवचनीयोक्तसंबन्धप्रतियोगित्वेन ब्रह्मदत्तान्न द्वितीयेति भावः ॥ ९६ ॥

( इति कर्मप्रवचनीयसंज्ञाप्रकरणम् )

( इति निपातसंज्ञाप्रकरणम् ॥ )

---

( अथ परस्मैपदात्मनेपदसंज्ञासूत्रे )

( २१३ परस्मैपदसंज्ञासूत्रम् ॥ १ । ४ । ४ आ. १८ सू. )

## ३३८ लः परस्मैपदम् । १ । ४ । ९८ ॥

( प्रदीपः ) लः परस्मैपदम् ॥ ९८ ॥ लः इत्यादेशापेक्षा षष्ठी । लादेशाः परस्मैपदसंज्ञा इत्यर्थः ॥

( उद्द्योतः ) लः पर ॥ ९८ ॥ नन्वस्य प्रथमान्तत्वे लकाराणामेव परस्मैपदसंज्ञा स्यात्, तथा चानुदात्तङिद्भ्यो लकारा एव न स्युः । किं च तङानावित्यत्र प्रथमान्तस्य संबन्धो न प्राप्नोत्यत आह—षष्ठीति । अत एव टित आत्मनेपदानामित्यादि चरितार्थम् । तङानावित्यादेश्च तङानभाविनि लक्षणायां गौरवमतः षष्ठ्यन्तत्वमेवादेशापेक्षया युक्तमिति भावः ॥

( परस्मैपदात्मनेपदसंज्ञयोः पुरुषसंज्ञाभिः समावेशाधिकरणम् )

( ११६१ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ लादेशे परस्मैपदग्रहणं पुरुषबाधितत्वात् [ दिह वचने हि संज्ञाबाधनम् ] ॥ * ॥

( भाष्यम् ) लादेशे परस्मैपदग्रहणं कर्तव्यम् । किं कारणम् ? । पुरुषबाधितत्वात्, इह वचने हि संज्ञाबाधनम् । इह हि क्रियमाणे अनवकाशा पुरुषसंज्ञा परस्मैपदसंज्ञां बाधेत ॥

( प्रदीपः ) लादेश इति । लस्येत्यत्र परस्मैपदमिति वक्तव्यम् । इह तु वचने एकसंज्ञाधिकारात्परस्मैपदसंज्ञां शतृक्वस्वोः सावकाशां पुरुषसंज्ञास्तिङ्क्षु बाधेरन्नित्यर्थः ॥

( उद्द्योतः ) लस्येत्यत्रेति । लस्य तिप्तस्झीत्यत्रेति भावः । भाष्ये—लादेश इत्यस्य लादेशप्रकरणे इत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**परस्मैपदसंज्ञाप्यनवकाशा सा वचनाद्भविष्यति।**

( आक्षेपसाधकभाष्यम् )

**सावकाशा परस्मैपदसंज्ञा । कोवकाशः ? । शतृक्वसू अवकाशः ॥**

( ११६२ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिचि वृद्धौ तु परस्मैपदग्रहणं ज्ञापकं पुरुषाबाधकत्वस्य ॥ * ॥

( भाष्यम् ) यदयं "सिचिवृद्धिः परस्मैपदेषु" इति परस्मैपदग्रहणं करोति तज्ज्ञापयत्याचार्यः 'न पुरुषसंज्ञा परस्मैपदसंज्ञां बाधते' इति ॥ लः परस्मै० ॥९८

( प्रदीपः ) सिचि वृद्धौ त्विति । अस्मादेव लिङ्गादेकसंज्ञाधिकारोऽत्र बाध्यत इति भावः । आत्मनेपदसंज्ञया परस्मैपदसंज्ञाया बाधनं यथा स्यादित्येवमर्थं त्विह प्रकरणेऽनयोः संज्ञयोर्विधानम् । सामान्यापेक्षं च ज्ञापकमित्यात्मनेपदसंज्ञयापि पुरुषसंज्ञानां समावेशो भवति । अन्यथा पुरुषसंज्ञाः सावकाशास्तङ्क्षु अनवकाशया आत्मनेपदसंज्ञया बाध्येरन् ॥ ९८ ॥

( उद्द्योतः ) बाध्यत इति । इष्टानुरोधादिति भावः ॥ एतेन पर्यायज्ञापनेनापीदं चरितार्थमित्यपास्तम् ॥ ननु तृतीय एव परस्मैपदसंज्ञाऽस्तु किं ज्ञापकाश्रयणेनेत्यत आह—आत्मनेपदेति ॥ ननु ज्ञापकात्परस्मैपदसंज्ञया समावेशेऽप्यात्मनेपदसंज्ञया पुरुषसंज्ञानां समावेशो न स्यादत आह—सामान्यापेक्षं चेति । पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्त्या समावेशसिद्धिः । अनुवृत्तिरेव लिङ्गेन विवक्षिता । एतदर्थमेव चात्र प्रकरणे पुरुषसंज्ञादिविधानमित्यन्ये ॥ ९८ ॥

---

१ इदं 'तत्र' इति पदं देहलीदीपकन्यायेन 'सप्तमी' इत्यत्राप्यन्वेयम् । २ वचनेत्यादिः । (र.ना.) ३ स्वामित्वरूपसंबन्धप्रतियोगित्वेनेत्यर्थः । (र. ना.) ४ प्रथमान्तलपदसामानाधिकरण्येनेति शेषः । ( र. ना. ) ५ पूर्वोक्तरीत्या तिङ्क्ष्विति शेषः । ( र. ना. ) ६ तृतीयाध्याये 'लस्य' इत्यधिकार एवेत्यर्थः । ७ सिचि वृद्धौ परस्मैपदग्रहणरूपेणेत्यर्थः। ( र. ना. )

( अथ प्रथममध्यमोत्तमपुरुषसंज्ञासूत्रम् )

( २१४ प्रथममध्यमोत्तमसंज्ञासूत्रम् ॥१।४।४आ० १९सू० )

## ३४० तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः ॥ १ । ४ । १०० ॥

( यथासंख्योपपादनाधिकरणम् )

( ११६३ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं [1]समसंख्यार्थम् ॥ * ॥

( भाष्यम् ) प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं कर्तव्यम् । आत्मनेपदानां च प्रथममध्यमोत्तमसंज्ञा भवन्तीति वक्तव्यम् ॥ किं प्रयोजनम् ? । समसंख्यार्थम् । संख्यातानुदेशो यथा स्यात् । अक्रियमाणे ह्यात्मनेपदग्रहणे तिस्रः संज्ञाः, षट् संज्ञिनः, वैषम्यात्संख्यातानुदेशो न स्यात् ॥

( प्रदीपः ) तिङस्त्रीणि ॥ १०० ॥ तिङां षट् त्रिकाः संज्ञास्तिस्र इति वैषम्याद्यथासंख्यं न प्राप्नोतीति मत्वाह— प्रथमेति । आत्मनेपदग्रहणे च पृथक् क्रियमाणे सूत्रं परस्मैपदविषयमेव भवतीति वाक्यभेदादेकेन वाक्येन परस्मैपदानां त्रयाणां तिस्रः संज्ञा द्वितीयेनात्मनेपदानामिति सिद्धमिष्टम् ॥ वैषम्यादिति । यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाकरणे प्रयोजनाभावः तथापि कस्यचित्त्रिकस्य काचित्संज्ञेत्येतावल्लभ्येत न तु यथाभिमतविषयविभागलाभः ॥

( उद्द्योतः ) तिङस्त्रीणि ॥ १०० ॥ ननु तिङस्त्रीणित्रीणीत्यनेनात्मनेपदत्रिकाणामपि ग्रहणं सिध्यतीत्यत आह— तिङां षडिति ॥ नन्वात्मनेपदग्रहणे कृते परस्मैपदसंबन्धिनां संज्ञा न स्यादिति दोषस्तदवस्थ एवेत्यत आह—आत्मनेपदेति ॥

( भाष्यम् ) क्रियमाणेऽपि चात्मनेपदग्रहणे—॥

( ११६४ आक्षेपान्तरवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ आनुपूर्व्यवचनं च ॥ * ॥

( भाष्यम् ) आनुपूर्व्यवचनं च कर्तव्यम् । अक्रियमाणे हि कस्यचिदेव त्रिकस्य प्रथमसंज्ञा स्यात् कस्यचिदेव मध्यमसंज्ञा कस्यचिदेवोत्तमसंज्ञा ॥

( प्रदीपः ) आनुपूर्व्यवचनं चेति । अत्र सूत्रे त्रिकाणामुच्चारणं नास्ति, केवलं त्रीणित्रीणीति वीप्सया प्रतिपत्तिस्तेषाम् । तत्रानियमप्रसङ्गे नियमार्थमानुपूर्व्यग्रहणं च कर्तव्यमित्यर्थः ॥

( ११६५ परिहारवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ नवैकशेषनिर्देशात् ॥ * ॥

( भाष्यम् ) यत्तावदुच्यते—*आत्मनेपदग्रहणं कर्तव्यं समसंख्यार्थम्* इति, तन्न कर्तव्यम् । संज्ञा अपि षडेव निर्दिश्यन्ते । कथम् ? । एकशेषनिर्देशात् । एकशेषनिर्देशोऽयम् ॥

( प्रदीपः ) एकशेषनिर्देशादिति । आकृत्यभिधानाश्रयेण प्रत्याख्यातं सूत्रं शास्त्रप्रक्रियासंपत्त्यर्थमेव संपद्यते ॥

( उद्द्योतः ) सहविवक्षाभावादेकशेषो न प्राप्नोतीत्यत आह— आकृतीति । इदमुपलक्षणं, व्यक्तिपक्षेऽपि तत्प्रत्याख्यानात् ॥ यद्वैकशेषशब्देन तन्त्रं लक्ष्यते ॥

( कृतद्वन्द्वानामेकशेपसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

अथैतस्मिन्नेकशेषनिर्देशे सति किमयं कृतैकशेषाणां द्वन्द्वः—प्रथमश्च प्रथमश्च प्रथमौ । मध्यमश्च मध्यमश्च मध्यमौ । उत्तमश्चोत्तमश्चोत्तमौ । प्रथमौ च मध्यमौ च उत्तमौ च प्रथममध्यमोत्तमा इति ॥ आहोस्वित्कृतद्वन्द्वानामेकशेषः—प्रथमश्च मध्यमश्चोत्तमश्च प्रथममध्यमोत्तमाः प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति ॥

( प्रदीपः ) अथैतस्मिन्निति । उभयथा संभवात्प्रश्नः ॥

( विशेषजिज्ञासाभाष्यम् )

किं चातः ? ॥

( विशेषदर्शकभाष्यम् )

यदि कृतैकशेषाणां द्वन्द्वः; प्रथममध्यमयोः प्रथमसंज्ञा प्राप्नोति । उत्तमप्रथमयोर्मध्यमसंज्ञा प्राप्नोति । मध्यमोत्तमयोरुत्तमसंज्ञा प्राप्नोति ॥ अथ कृतद्वन्द्वानामेकशेषः, न दोषो भवति ॥

( प्रदीपः ) प्रथममध्यमयोरिति । प्रसिद्धिमाश्रित्यैतदुच्यते ॥ व्याख्यानान्निर्णय इति मत्वाह—कृतद्वन्द्वानामिति ॥

( उद्द्योतः ) नन्वेतत्संज्ञाप्रवृत्तेः पूर्वं प्रथममध्यमयोरिति व्यवहारो न युक्तोऽत आह—प्रसिद्धिमिति । सिद्धान्तकालिकीं प्रसिद्धिमित्यर्थः ॥

( सिद्धान्तिभाष्यम् )

यथा न दोषस्तथास्तु ॥

( आक्षेपभाष्यम् )

किं पुनरत्र न्याय्यम् ? ॥

( उद्द्योतः ) भाष्ये किं पुनरत्रेति । यद्यप्यत्र व्याख्यानतः कृतद्वन्द्वानामेवैकशेषस्तथापि लोके कथं न्याय्यमिति प्रश्नः ॥

---

१ 'समसंख्यार्थम्' इत्ययमंशोऽत्र नोपलभ्यते द्वित्रपुस्तकेषु । २ त्रिकाणामिति शेषः । ( र. ना. ) ३ आनुपूर्व्यग्रहणे इति शेषः । ( र. ना. ) ४ 'संज्ञा स्यात्' । ५ परस्मैपदोत्तमात्मनेपदप्रथमयोरित्यर्थः । ( र. ना. )

( समाधानभाष्यम् )

उभयमित्याह। उभयं हि दृश्यते। तद्यथा—बहु शक्तिकिटकम्, बहूनि शक्तिकिटकानि। बहु स्थालीपिठरम्, बहूनि स्थालीपिठराणि॥

( प्रदीपः ) बहु शक्तिकिटकमिति। एकशेषे कृते द्वन्द्वः। जातिरप्राणिनामित्येकवद्भावः। बहुशब्दश्चात्र वैपुल्यवचन इत्येकवचनम्। समुदायस्य वैपुल्यमवयवानां प्रचयाद्भवति। यदा तु समाहारद्वन्द्वे कृते एकशेषः क्रियते तदा बहूनि शक्तिकिटकानीति भवति॥

( उद्द्योतः ) नन्वस्य बहुशब्दस्य बहुत्वार्थकत्वे एकवचनानुपपत्तिरत आह—बहुशब्दश्चेति॥ नन्वेवमवयवबहुत्वप्रतीतिर्न स्यादत आह—समुदायस्येति॥

( द्वितीयाक्षेपपरिहारभाष्यम् )

यदप्युच्यते-क्रियमाणेऽप्यात्मनेपदग्रहणे *आनुपूर्व्यवचनं कर्तव्यमिति। न कर्तव्यम्। लोकत पतत्सिद्धम्। तद्यथा लोके "विहव्यस्य द्वाभ्यां द्वाभ्यामग्निरुपस्थेय"इति। न चोच्यते—आनुपूर्व्येणेति। आनुपूर्व्येण चोपस्थीयत इति॥ तिङ् त्रीणि॥ १००॥

( प्रदीपः ) लोकत इति। यथा पङ्क्तिस्थेषु ब्राह्मणेषु द्वौद्वौ ब्राह्मणावानयेत्युक्ते आनुपूर्व्येणानयनं भवति न तु व्युत्क्रमेण तथेहापि भवतीत्यर्थः॥ विहव्यस्येति। विहव्याख्यस्य सूक्तस्य द्वाभ्यां द्वाभ्यामग्निरुपस्थेय इत्युक्ते आनुपूर्व्येण ऋग्द्वयं गृह्यते न तु व्युत्क्रमेण॥ १००॥

( उद्द्योतः ) भाष्ये—लोकत इति। विहव्यस्येत्यादिस्मृतेरित्यर्थः॥ तथेहापीति। प्रथममध्यमेत्यादि महासंज्ञाकरणं तु आचामनुरोधेनैवेति भावः॥ "ममाग्ने वर्चो विहव्य" इति सर्वानुक्रमः॥ १००॥

---

( अथ तिङ्सुपोर्विभक्तिसंज्ञासूत्रम् )

( २१५ विभक्तिसंज्ञासूत्रम् १। ४। ४ आ. २० सू. )

## ३४३ विभक्तिश्च॥ १। ४। १०३॥

( आक्षेपभाष्यम् )

त्रीणित्रीणीत्यनुवर्तते, उताहो न?॥

( प्रदीपः ) विभक्तिश्च॥ १०३॥ सति प्रयोजने स्वरितत्वप्रतिबद्धे शब्दानामनुवृत्त्यननुवृत्ती भवतः। लिङ्गदर्शनं च पक्षद्वयेऽप्यस्ति इति संदेहात्प्रश्नः—त्रीणित्रीणीति॥

( उद्द्योतः ) विभक्तिश्च॥ १०३॥ अननुवृत्तौ स्वरितत्वप्रतिबद्धत्वमभावप्रतियोगितया बोध्यम्। स्वरितत्वमस्ति नवेति विचारतात्पर्यम्। स्वरितत्वमाचार्याणामप्यनुमेयमेवेति बोध्यम्॥

( पक्षद्वयविशेषजिज्ञासाभाष्यम् )

किं चातः?।

( प्रथमपक्षदूषणभाष्यम् )

यद्यनुवर्तते,—"अष्टन आ विभक्तौ" इत्यात्वं न प्राप्नोति॥

( प्रदीपः ) आत्वं न प्राप्नोतीति। नह्यष्टन्शब्दात्परं युगपत्त्रिकमस्ति॥

( द्वितीयपक्षदूषणभाष्यम् )

अथ निवृत्तम्, "प्रथमयोः पूर्वसवर्णः" इत्यत्र प्रत्यययोरेव ग्रहणं प्राप्नोति॥

( प्रदीपः ) प्रथमयोरिति। प्रत्येकं संज्ञित्वे विभक्तिसमुदायस्य विभक्तिग्रहणेनाग्रहणात्प्रथमयोरिति समुदायद्वयापेक्षानुपपत्तौ प्रत्यययोरेव द्वयोर्ग्रहणं प्राप्नोतीत्यर्थः॥

( उद्द्योतः ) प्रत्येकमिति। नन्वस्याः प्रत्येकं सत्त्वेऽपि द्वितीयायां चेत्यादिव्यवहारात् त्रिकस्य त्रिकस्य प्रथमादयः सप्त संज्ञा अवश्यमभ्युपेयाः। एवं च तया प्रथमयोरित्यत्राप्युपपत्तिरिति चेन्न। पाणिनिना तासामकृतत्वात्। सिद्धान्ते तु त्रिकस्य विभक्तित्वेऽवयवधर्मविभक्तित्वस्य त्रिके आरोपे वा यौगिका एव ते[11] व्यवहाराः संभवन्तीति ताः संज्ञाः सूत्रकृता न कृता इति प्रतीमः॥ विभक्तिसमुदायस्येति। जनपदसमुदायस्य जनपदग्रहणेनाग्रहणवदिति भावः॥ समुदायद्वयापेक्षानुपपत्ताविति। तदपेक्षद्विवचनानुपपत्तावित्यर्थः॥

( सिद्धान्तिभाष्यम् )

यथेच्छसि तथास्तु॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

अस्तु तावद्—अनुवर्तत इति॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—"अष्टन आ विभक्तौ" इत्यात्वं न प्राप्नोतीति॥

( आक्षेपपरिहारभाष्यम् )

वचनाद्भविष्यति॥

( प्रदीपः ) वचनादिति। त्रिकस्य युगपत्प्रयोगाभावात्सामर्थ्यात्समुदायवृत्तिर्विभक्तिशब्दोऽवयवे वर्तिष्यत इति भावः॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अथ वा पुनरस्तु—निवृत्तम्॥

---

१–२ 'किटि–'॥ किट [ टि ] कः शर्कराविशेषः स्यात्। ३ 'द्वाभ्यामृग्भ्यामग्नि'। ४ सूक्तमिदम् ऋक्संहितायाम् ( १०।१२८ ) अथर्वसंहितायाम् ( ५।३ ) उपलभ्यते। ५ अत्र लोकपदार्थः स्मृतिरित्याह विहव्यस्येत्यादीति। ( र. ना. ) ६ ममाग्ने इत्यृचमारभ्य नवर्चो विहव्याख्यं सूक्तमित्यर्थः। सर्वानुक्रमो ग्रन्थविशेषः। ( र. ना. ) ७ 'नवानामेतासां शाखान्तरप्रसिद्धदशमर्क्संबन्धेन पञ्च युग्मानि भवन्ति इति वदन्ति॥ इति परमगुरुश्रीविश्वरामशर्मणां पुस्तके टिप्पणी। ८ स्वरितत्वसंबन्धवती इत्यर्थः। ( र. ना. ) ९ अन्यथा भाष्यकृतो विचारासंभवादिति भावः। ( र. ना. ) १० 'प्रथमयो'। ११ प्रथमाद्वितीयादय इत्यर्थः। ( र. ना. )

( आक्षेपसारणभाष्यम् )

**ननु चोक्तं "प्रथमयोः पूर्वसवर्णः" इति प्रत्यययोरेव ग्रहणं प्राप्नोतीति ॥**

( आक्षेपपरिहारभाष्यम् )

**नैष दोषः । अचीत्यनुवर्तते । न चाजादी प्रथमौ प्रत्ययौ स्तः ॥**

( प्रदीपः ) **न चाजादी इति ।** सुशब्दौशब्दौ प्रथमौ सुश्चाजादिर्न भवतीति प्रत्यययोरजादित्वासंभवादवयवशब्दस्त्रिके समुदाये उपचाराद्वर्तत इति भावः ॥

( उद्द्योतः ) सुशब्दौशब्दाविति । प्रथमयोरिति विशेष्यमचीति विशेषणमिति भावः ॥ अजादित्वासंभवादिति । यद्यपि शिवोर्च्यं इत्यादावुत्वे कृते संभवोस्ति तथापि तत्र नादिचीति निषेध इति भावः ॥

( आक्षेपभाष्यम् )

**ननु चैवं विज्ञायते—अजादी यौ प्रथमौ, अजादीनां वा यौ प्रथमाविति ॥**

( प्रदीपः ) **अजादी याविति ।** अजादी विशेष्यौ प्रथमयोरिति विशेषणं तेनौ[2]जसोरेव ग्रहणमस्त्वित्यर्थः । **अजादीनां वेति ।** अचीत्यनुवर्तते । तत्र व्याख्यानात्तदादिविधिः । निर्धारणं चाश्रयिष्यते—अजादिषु यौ प्रथमाविति । एवमप्यौजसोरेव ग्रहणं स्यादिति चोद्यम् ॥

( उद्द्योतः ) एकदेशी शङ्कते—ननु चेति । तद्व्याचष्टे—अजादी विशेष्याविति । व्याख्या[3]नाच्छब्दरूपं विशेष्यमादाय तदादिविधिरिति भावः ॥

( समाधानभाष्यम् )

**यत्तर्हि "तस्माच्छसो नः पुंसि" इत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति । तज्ज्ञापयत्याचार्यः—विभक्त्योर्ग्रहणम्—इति ॥**

( प्रदीपः ) **यत्तर्हीति ।** एतान् गाः पश्येत्यत्र नत्वनिवृत्त्यर्थं तस्मादित्युच्यते । औजसोरेव ग्रहणेऽनन्तरात् पूर्वसवर्णदीर्घादुत्तरः शसः सकारो न भवतीति किं तस्मादित्यनेन । तत्क्रियमाणं त्रिकद्वयग्रहणस्य ज्ञापकं संपद्यते ॥ १०३ ॥

( उद्द्योतः ) वस्तुतो निर्धारणमेकवचनान्तेन नेति कारक इतिसूत्रे भाष्ये उक्तम् । शब्दरूपं विशेष्यमादाय तद[4]न्तविधिश्चासति गमके नेतीयं शङ्काऽयुक्तैव तथापि तामुपगम्य पर एकदेशी समाधत्ते—**यत्तर्हीति** ॥ भाष्ये—**विभक्त्योरिति ।** विभक्तिसमुदाययोरित्यर्थः । तौ च समुदायौ प्राचां वैयाकरणानां प्रथमाद्वितीयादिसंज्ञत्वेन प्रसिद्धावेव गृह्येते । न च तस्मादित्यनेन गा इत्येतद्व्यावृत्तये सवर्णदीर्घ एव परामृष्टव्यः, तस्य व्यवहितत्वादित्याशयः। एतद्भाष्यमूलिका एव प्रथमादयः सप्तम्यन्ताः स्वौजसादीनां सप्तानां त्रिकाणां संज्ञा इति बोध्यम् ॥ १०३ ॥

( ज्ञापकान्तरभाष्यम् )

**अथ वा वचनग्रहणमेव कुर्याद् "औजसोः पूर्वसवर्णः" इति ॥ विभक्तिश्च ॥ १०३ ॥**

---

(२१६–२१८ नियमसूत्राणि ॥१।४।७ आ. २१–२३ सू.)

## ३४४, ३४६–३४७ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०४ ॥ अस्मद्युत्तमः ॥ १०६ ॥ शेषे प्रथमः ॥ १०७ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( प्रदीपः ) **युष्म ॥१०४॥ किमर्थमिति ।** किं लादेशविधानवाक्येनै[5]कवाक्यत्वाद्विध्यर्थमिदम् । अथ विहितेषु लादेशेषु नियमार्थमिदमिति प्रश्नः ॥

( ११६६ समाधानवार्तिकम् ॥ १ ॥ )

**॥*॥युष्मदस्मच्छेषवचनं नियमार्थम्॥*॥**

**( भाष्यम् ) नियमार्थोऽयमारम्भः ॥**

( प्रदीपः ) तत्रैकवाक्यतापक्षे इतरेतराश्रयपरिहाराय भाविनी संज्ञाश्रयितव्येति प्रतिपत्तिलाघवार्थं वाक्यभेदेन नियमपक्षं दर्शयितुमाह—**युष्मदस्मदिति ।**

( उद्द्योतः ) युष्मद्यु ॥ १०४ ॥ विधिनियमसंभवे विधेर्ज्यायस्त्वादाह—तत्रेति । वस्तुत एकवाक्यतापक्षेपि फलतो नियमत्वमेवैतैर्विनापि सिद्धेः । शुद्धविध्यर्थमिति पूर्वपक्षः । अन्यथापि सिद्धेरितरनिवृत्त्यर्थमिति सिद्धान्त इति तत्त्वम् ॥

( आक्षेपभाष्यम् )

**अथैतस्मिन्नियमार्थे विज्ञायमाने किमयमुपपदनियमः—युष्मदि मध्यम एव, अस्मद्युत्तम एव । आहोस्वित्पुरुषनियमः—युष्मद्येव मध्यमः, अस्मद्येवोत्तम इति ? ॥**

( प्रदीपः ) **किमयमिति ।** ननु प्रत्ययस्य प्राधान्यात्तन्नियम एव युक्तः । नैष दोषः । समुदायस्य संचिस्कीर्षितत्वात् प्राधान्यं, तदङ्गत्वात्तु प्रत्ययोपपदयोर्द्वयोरप्यप्राधान्यमित्युभयोरपि नियम आशङ्क्यते ॥ **युष्मदि मध्यम एवेति ।** तुल्यजातीयव्यावृत्तेर्नियमफलत्वादुत्तमप्रथमौ निवार्येते न तृजादयः । तृजादिविधिसामर्थ्याद्वा नास्ति तेषां निवारणम् ॥

( उद्द्योतः ) समुदायस्येति । विधेये शाब्दं प्राधान्यमुद्दे[6]श्ये तूद्देश्यतालक्षणमार्थं प्राधान्यमिति संदेहे बीजं वक्तुं युक्तम् ॥ सामान्यनियमेप्याह—तृजादीति ॥

---

१ 'प्रथमयो' । २ अजाद्योरौजसोरजाद्यन्तरापेक्षया प्रथमत्वमस्त्येवेति भावः । ( र. ना. ) ३ अचः सामानाधिकरण्येन प्रथमपदार्थविशेषणत्वाभावेनेति भावः । ( र. ना. ) ४ तदादिविधिरिति पाठः शोभनः । ( र. ना. )

५ लादेशविधिनैकवाक्यता तु पक्षद्वयेऽपि समानेति ध्येयम् । ( र. ना. ) ६ प्रकृते चोपपदस्योद्देश्यत्वं बोध्यम् । ( र. ना. )

( विशेषप्रश्नभाष्यम् )

किं चातः ? ॥

( द्वितीयपक्षे गौरवदर्शनभाष्यम् )

यदि पुरुषनियमः शेषग्रहणं कर्तव्यं "शेषे प्रथमः" इति । किं कारणम् ? । मध्यमोत्तमौ नियतौ, युष्मदस्मदी अनियते, तत्र प्रथमोऽपि प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं प्रथमनियमार्थम्—शेष एव प्रथमो भवति नान्यत्रेति ॥

( प्रथमपक्षेपि गौरवदर्शनभाष्यम् )

अथाप्युपपदनियमः, एवमपि शेषग्रहणं कर्तव्यम् "शेषे प्रथमः" इति । युष्मदस्मदी नियते, मध्यमोत्तमावनियतौ, तौ शेषेपि प्राप्नुतः । तत्र शेषग्रहणं कर्तव्यं शेषनियमार्थम्—शेषे प्रथम एव भवति नान्य इति ॥

( प्रथमपक्षे गौरवपरिहारभाष्यम् )

उपपदनियमे शेषग्रहणं शक्यमकर्तुम् । कथम् ? । युष्मदस्मदी नियते मध्यमोत्तमावनियतौ तौ शेषेपि प्राप्नुतः । ततो वक्ष्यामि 'प्रथमो भवति' इति । तन्नियमार्थं भविष्यति । यत्र प्रथमश्चान्यश्च प्राप्नोति तत्र प्रथम एव भवतीति ॥

( प्रदीपः ) यत्र प्रथमश्चेति । युष्मदि मध्यम एव, अस्मद्युत्तम एवेति युष्मदस्मदोर्नियतत्वात् तयोः पुरुषान्तरं न भवति । मध्यमोत्तमयोस्त्वनियतत्वात् शेषेपि तत्प्रसङ्गे प्रथम इति सूत्रमारभ्यमाणं सिद्धे प्रथमे मध्यमोत्तमयोर्निवारणाय नियमार्थं संपद्यते प्रथम एव भवति न मध्यमोत्तमाविति । यथा समे देशे यजेतेति पाक्षिक्यां प्राप्तौ नियमः ॥

( उद्योतः ) सिद्धे प्रथमे इति । तिबादिसूत्रेण पक्षे सिद्धे इति भावः ॥ प्रथम एव भवतीति । नियमान्तरस्यासंभवादित्यर्थः ॥ पाक्षिक्यां प्राप्ताविति । नन्वेवमेतन्नियमापेक्षया पुरुषनियमस्य परिसंख्यात्वेन गुरुतयोपपदनियम एवोचित इति चेन्न । अनुवादत्वस्यैवकारार्थगर्भत्वस्य प्राप्तबाधकल्पनस्य चोभयत्राप्यविशिष्टत्वेन तयोः समत्वमेवेत्याशयात् ॥

( अनिष्टवारणाधिकरणम् )

( ११६७ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तत्र युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधः शेषत्वात् ॥ * ॥

( भाष्यम् ) तत्र युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधो वक्तव्यः । त्वं च देवदत्तश्च पचथः । अहं च देवदत्तश्च पचावः ॥ किं कारणम् ? । शेषत्वात् । "शेषे प्रथमः" इति प्रथमः प्राप्नोति ॥

( प्रदीपः ) तत्रेति । उभयथा नियमे इत्यर्थः ॥ शेषत्वादिति । यत्र केवले युष्मदस्मदी उपपदे स एवाशेषस्तत्र मा भूत् प्रथमः । यत्र त्वन्यसहिते ते स्तः तत्र समुदायस्य युष्मदस्मद्ग्रहणेनाग्रहणाच्छेषत्वमेवेति प्रथमप्रतिषेधो वक्तव्यः ॥

( उद्योतः ) नन्वत्र युष्मदस्मदोः सत्त्वात्कथं शेषत्वमत आह—यत्र केवले इति । असहाये इत्यर्थः ॥

( ११६८ आक्षेपपरिहारवार्तिकम् ॥ ३ ॥ )

## ॥*॥ सिद्धं तु युष्मदस्मदोः प्रतिषेधात् ॥*॥

( भाष्यम् ) सिद्धमेतत् । कथम् ? । युष्मदस्मदोः प्रतिषेधात् । "शेषे प्रथमः" "युष्मदस्मदोर्न" इति वक्तव्यम् ॥

( प्रदीपः ) स एवाह—सिद्धं त्विति । यत्र शेषे युष्मदस्मदी स्तस्तत्र शेषे प्रथमो नेति वक्तव्यमित्यर्थः ॥

( उद्योतः ) सिद्धं त्वित्युक्तिर्न सिद्धान्तिनो वचनारम्भस्यात्रापि सत्त्वादत आह—स एवाहेति । पूर्वस्य वचनस्य गुरुत्वात्स एव लाघवाश्रयेण सिद्धं त्वित्याहेत्यर्थः ॥ ननु युष्मदस्मदोर्नेत्युक्तेपि यत्र केवले ते तत्रैव निषेधः स्यादत आह—यत्र शेषे इति । शेषग्रहणं तत्रानुवर्तत इति भावः ॥

( ११६९ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) युष्मदि मध्यमादस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन "युष्मदि मध्यम" इत्यस्यावकाशः—त्वं पचसि । "अस्मद्युत्तम" इत्यस्यावकाशः—अहं पचामि । इहोभयं प्राप्नोति—त्वं चाहं च पचावः । "अस्मद्युत्तमः" इत्येतद्भवति विप्रतिषेधेन ॥

( तृतीयाक्षेपभाष्यम् )

स तर्हि विप्रतिषेधो वक्तव्यः ? ॥

( प्रदीपः ) चोदक आह—स तर्हीति ।

( उद्योतः ) चोदक इति । तृतीय इत्यर्थः ॥

( सिद्धान्त्येकदेशिसमाधानभाष्यम् )

न वक्तव्यः । 'त्यदादीनां यद्यत्परं तत्तच्छिष्यते' इत्येवमस्मदः शेषो भविष्यति । तत्र "अस्मद्युत्तमः" इत्येव सिद्धम् ॥

( प्रदीपः ) आचार्यदेशीय आह—न वक्तव्य इति ॥ अस्मदः शेष इति । आवां पचाव इति ॥ तत्रास्मद्युत्तम इति । ननु शिष्यमाणस्यास्मदो द्व्यर्थत्वादप्रयुज्यमानेपि युष्मदि तदर्थगतौ[3] मध्यमविधानात् तस्याप्यत्र प्रसङ्ग इति विप्रतिषेध एवाश्रयितव्यः । अत्राहुः—युष्मदर्थे साहचर्याद्यदास्मद्रूपत्वमारोप्यते तदा भेदाभावात् पृथग्युष्मदर्थाभावाद् अस्मदुपपदनिमित्तः सिद्ध उत्तम एवेत्यदोषः ॥

---

१ प्राप्तिश्चात्रोपपदस्य लोकतः पुरुषस्य शास्त्रतो बोध्या । (र.ना.) २ युष्मदस्मद्भ्यामन्येपूपपदेष्वित्यर्थः । (र. ना.) ३ युष्मदर्थज्ञाने सतीत्यर्थः । (र. ना.)

( उद्द्योतः ) आरोप्यत इति । तं विना चासच्छब्दात्तद्धर्मभव इति भावः ॥ तदा पृथगिति । संबोध्यत्वेनाबोधादित्यर्थः । तदा भेदाभावात् । पृथगिति पाठे तदारोपादेव युष्मदर्थे भेदकधर्माभावाद् भेदकधर्माप्रतीतेर्हेतोः पृथग्युष्मदर्थाभाव इत्यर्थः ॥

( ११७० आक्षेपसाधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अनेकशेषभावार्थं तु ॥ * ॥

( भाष्यम् ) अनेकशेषभावार्थं तु स विप्रतिषेधो वक्तव्यः । यदा चैकशेषो न ॥ कदा चैकशेषो न ? । सहविवक्षायामेकशेषः । यदा न सहविवक्षा तदैकशेषो नास्ति ॥

( प्रदीपः ) चोदकस्त्वाह—अनेकशेषभावार्थं त्विति त्वं चाहं च पचाव इत्यत्र प्रयोगे ॥

( उद्द्योतः ) अत्र प्रयोगे इति । चशब्देनैव साहित्यस्य द्योतनादनैकशेषो नेत्यर्थः ॥ भाष्ये यदा न सहविवक्षेत्यस्य चं विना केवलपदैर्यदा न साहित्यबोध इत्यर्थः ॥

( ११७१ एकदेशिसमाधानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ नवा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः ॥ * ॥

( भाष्यम् ) नवार्थो विप्रतिषेधेन । किं कारणम् ? । युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामपि युष्मदस्मदधिकरणानामपि एकशेषेण न भवितव्यम् । त्वं चाहं च पचसि पचामि चेति ॥

( प्रदीपः ) आचार्यदेशीय आह—नवेति । सहविवक्षाया अभावे यथा युष्मदस्मदोरेकशेषाभावः । एवं तदधिकरणयोरपि क्रिययोर्भेदस्य विवक्षितत्वादाख्यातयोरप्येकशेषाभावे पचसि पचामि चेति पृथगेव प्रयोगान्नार्थो विप्रतिषेधेनेत्यर्थः ॥

( उद्द्योतः ) तदधिकरणयोरिति बहुव्रीहिः ॥ भाष्ये तदधिकरणानामिति बहुवचनं त्वनेकयुष्मदस्मच्छब्दप्रयोगाभिप्रायेण ॥

( ११७२ समाधानसाधकैकदेशिवार्तिकम् ॥ ७ ॥ )

॥*॥ क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्य ॥ * ॥

( भाष्यम् ) क्रियापृथक्त्वे च द्रव्यपृथक्त्वं दृश्यते । तद्यथा—पचसि च पचामि च त्वं चाहं चेति । तदनुमानमुत्तरयोरपि क्रिययोरेकशेषो न भवतीति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तम्—*तत्र युष्मदस्मदन्येषु प्रतिषेधः शेषत्वाद्* इति । तत्रापि ह्येवं भवितव्यम्—त्वं च देवदत्तश्च पचसि च पचति चेति । अहं च देवदत्तश्च पचामि च पचति चेति ॥

(प्रदीपः) एतदेव समर्थयितुमाह—क्रियापृथक्त्व इति । यथा क्रियापृथक्त्वे सति द्रव्यपृथक्त्वं न तु सहविवक्षा एवं द्रव्यपृथक्त्वेपि क्रियापृथक्त्वेन भाव्यं परस्परसाहचर्याव्यभिचारात् ॥ एवं च कृत्वेति । द्रव्यपृथक्त्वे सति क्रियापृथक्त्वादित्यर्थः ॥

( उद्द्योतः ) न तु सहविवक्षेति । न तन्निबन्धन एकशेष इति भावः ॥ एवं द्रव्येति । क्रियापृथक्त्वोपक्रमवाक्ये यथा द्रव्यपृथक्त्वमेवं द्रव्यपृथक्त्वोपक्रमे क्रियापृथक्त्वमेवेत्यर्थः ॥

( सिद्धान्तिभाष्यम् )

यत्तावदुच्यते—*नवा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः* इति ॥ दृश्यते हि युष्मदस्मदोश्चानेकशेषस्तदधिकरणानां चैकशेषः । तद्यथा—"त्वं चाहं च वृत्रहन्नुभौ संप्रयुज्यावहै" इति ॥ यदप्युच्यते—*क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्य* इति । क्रियापृथक्त्वे खल्वपि द्रव्यैकशेषो भवतीति दृश्यते । तद्यथा—अक्षाः भज्यन्तां भक्ष्यन्तां दीव्यन्तामिति ॥

( प्रदीपः ) इदानीमाचार्य आह—यत्तावदिति । एकशेषफलत्वादेकशेषं इत्युच्यते । न तु प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वादिति वाचनिक एकशेषः । एवं ह्येकशेषे आश्रीयमाणे नार्थो विप्रतिषेधेन । तस्मात्कारकभेदेपि क्रियाया अभेदादेक एव धातुः प्रयुज्यते । तस्माच्च परो लकार एवानेकार्थाभिधायी विरोधाभावात् । तत्र पुरुषद्वयप्रसङ्गे युक्तो विप्रतिषेधः ॥ अक्षा इति । शकटाक्षविभीतकाक्षदेवनाक्षाणां सहविवक्षायामेकशेषः । तत्रावयवैक्रियायाः समुदाये आरोपाद्भज्यन्तामित्यादि बहुवचनं सामानाधिकरण्यं चोपपद्यते । यथा द्रव्यैकशेषेपि क्रियापृथक्त्वमेवं द्रव्यपृथक्त्वेपि क्वचिदेकशेष इत्यर्थः ॥

( उद्द्योतः ) न खित्यस्य वाचनिक एकशेष इत्यत्रान्वयः ॥ तदेव वचनमाह—प्रथमेत्यादि । इदं सरूपसूत्रे वार्तिकम् ॥ वाचनिकैकशेषे दूषणमाह—एवं हीति । विप्रतिषेधस्थापनाय ह्येतद्भाष्यप्रवृत्तिरिति भावः ॥ अथ भाष्याशयमाह—तस्मादिति ॥ लकार एवानेकार्थाभिधायीति । क्रियायामनेकार्थगतारोपितसंख्याभिधायीत्यर्थः ॥ नन्वक्षा इति भज्यन्तामिति च बहुवचनं कथमत आह—शकटाक्षेति ॥ तत्रैकैकाक्षस्यैकैकक्रियायामन्वयेन सहविवक्षा कथमित्याशङ्क्य तामुपपादयति—तत्रेति । एकैकाक्षस्यैकक्रिया विवक्षितेत्यभिमानः ॥ वस्तुतः सहविवक्षाभावेपि लोकन्यायसिद्धं विद्वन्मानसेतिवत् तत्र बहुवचनान्तानामत्रापीति भाष्याशयः । एकशेषशब्देन च तन्त्रमेव लक्ष्यत इत्याहुः ॥

१ तौ युष्मदस्मदर्थौ अधिकरणे कर्तृकारकरूपे द्रव्ये यासां क्रियाणां तासामित्यर्थः । ( र. ना. ) २ इमे समानाधिकरणसप्तम्यौ पूर्वत्र बहुव्रीहिस्त्वीका रात् । ( र. ना. ) ३ एकैकक्रियाया भक्षाणां समुदाये इत्यर्थः । ( र. ना.

( आक्षेपभाष्यम् )

**एवं च कृत्वा सोपि दोषो भवति—यदुक्तम्—*तत्र युष्मदस्मदन्येषु प्रतिषेधः शेषत्वाद्* इति ॥**

( उद्द्योतः ) भाष्ये सोपि दोष इति । विप्रतिषेधाङ्गीकाररूपो यो दोषस्तेनोक्तस्तदङ्गीकारे तदुक्तो द्वितीयो दोषोपि लग्न इत्यर्थः ॥

( आक्षेपपरिहारस्मारणभाष्यम् )

**नैष दोषः । परिहृतमेतत्—*सिद्धं तु युष्मदस्मदोः प्रतिषेधाद्* इति ॥**

( उद्द्योतः ) परिहृतमेतदिति । शङ्कितैवेति शेषः ॥

( तदस्थाक्षेपभाष्यम् )

**स तर्हि प्रतिषेधो वक्तव्यः ? ॥**

( समाधानभाष्यम् )

**न वक्तव्यः । शेषे प्रथमो विधीयते । नहि शेषश्चान्यश्च शेषग्रहणेन गृह्यते ॥**

( प्रदीपः ) नहि शेषश्चान्यश्चेति । उपयुक्तादन्यः शेषः । युष्मदस्मदोश्चोपयुक्तयोः सद्भावान्नास्ति शेषत्वम् ॥

( उद्द्योतः ) उपयुक्तादन्य इति । अस्योपयुक्तासमभिव्याहृत इत्यादिः । शेषपदस्य तत्रैवार्थे शक्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**भवेत्—प्रथमो न स्यात् । मध्यमोत्तमावपि न प्राप्नुतः ॥ किं कारणम् ? । युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते । न च युष्मदस्मदी अन्यश्च युष्मदस्मद्ग्रहणेन गृह्यते ॥**

( प्रदीपः ) इतर एतत्सामर्थ्यमविदित्वाह—भवेदिति ॥

( उद्द्योतः ) एतत्सामर्थ्यं, शब्दशक्तिम् । तेनावधारणमाश्रितमिति भ्रमस्तस्येति भावः ॥

( आक्षेपबाधकभाष्यम् )

**यदत्र युष्मद् यच्चास्मद्[१] तदाश्रयौ मध्यमोत्तमौ भविष्यतः ॥**

( प्रदीपः ) इतर आह—यदत्रेति । तत्सन्निधौ शेषत्वाभावात्तन्निबन्धनमेव कार्यं भवतीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—यदत्र युष्मदिति । समुदायस्य युष्मत्त्वाभावेपि तदवयवयुष्मदमादाय मध्यम इत्यर्थः ॥

( आक्षेपभाष्यम् )

**यथैव तर्हि यदत्र युष्मद्यच्चास्मच्च[२] तदाश्रयौ मध्यमोत्तमौ भवतः, एवं योऽत्र शेषस्तदाश्रयः प्रथमो भविष्यति ॥**

( प्रदीपः ) इतरः शेषपदार्थमविद्वानाह—यथैवेति ॥

( समाधानभाष्यम् )

**एवं तर्हि शेष उपपदे प्रथमो विधीयते । उपोच्चारि पदमुपपदम् । यच्चात्रोपोच्चारि, न स शेषः । यश्च शेषः, न तदुपोच्चारि ॥**

( प्रदीपः ) एतद्विवरणीयमप्युपेक्ष्योपपदार्थं वर्णयितुमाह—एवं तर्हीति ॥ यच्चात्रेति । युष्मदस्मदोः श्रवणात्तदभावे च शेषसद्भावात् ॥ यश्च शेष इति । देवदत्तश्चेति ॥ न तदिति । नहि तस्यैव साधनत्वं किं तर्हि युष्मदस्मदर्थयोरपि ।

( उद्द्योतः ) एतद्विवरणीयमपीति । एतत् शेषपदशक्यं विपरीतुं योग्यमपीत्यर्थः ॥ उपेक्ष्येति । स्फुटत्वादिति भावः ॥ उपपदार्थमिति । उपपदानि तद्विशेषणान्युपपदसमानाधिकरणपदस्थानि पदानि तदर्थमित्यर्थः ॥ सूत्रावकाशं दर्शयति—तदभावे चेति ॥ नहि तस्यैवेति । न तदितिभाष्यस्य न तदेवेत्यर्थः इति भावः । अनेन—न पारिभाषिकमुपपदम्, किं तु यौगिकमिति निर्णीतम् ॥

( आक्षेपभाष्यम् )

**भवेत्—प्रथमो न स्यान्मध्यमोत्तमावपि न प्राप्नुतः ॥ किं कारणम् ? । युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते । उपोच्चारि पदमुपपदं यच्चात्रोपोच्चारि, न ते युष्मदस्मदी । ये च युष्मदस्मदी, न तदुपोच्चारि ॥**

( समाधानभाष्यम् )

**एवं तर्हि—शेषेण सामानाधिकरण्ये प्रथमो विधीयते । न चात्र शेषेणैव सामानाधिकरण्यम् ॥**

( प्रदीपः ) न चात्र शेषेणैवेति । किं तर्हि युष्मदस्मदर्थेनापि, तद्भावाच्च शेषत्वाभाव इत्यर्थः ॥

( आक्षेपभाष्यम् )

**भवेत्—प्रथमो न स्यात्, मध्यमोत्तमावपि तु न प्राप्नुतः ॥ किं कारणम् ? । युष्मदस्मद्भ्यां सामानाधिकरण्ये मध्यमोत्तमावुच्येते । न चात्र युष्मदस्मद्भ्यामेव सामानाधिकरण्यम् ॥**

( समाधानभाष्यम् )

**एवं तर्हि "त्यदादीनि सर्वैर्नित्यम्" इत्येवमत्र युष्मदस्मदोः शेषो भविष्यति । तत्र युष्मदि मध्यमः अस्मद्युत्तम इत्येव सिद्धम् ॥**

( प्रदीपः ) एवं तर्हीति । यद्यप्यनेकशेषे दोष उपक्रान्तस्तथाप्येकशेषेपि दूषणार्थोयमुपक्रमः ॥

( उद्द्योतः ) नन्वनेकशेषे दोषे प्रक्रान्ते कथमेकशेषेणान्यथासिद्धिरुक्तेत्यत आह—यद्यपीति । एवं चैकशेषे तयोरेवावस्थानान्नास्त्यत्र शेष इति न प्रथम इति भावः ॥

( समाधानबाधकभाष्यम् )

**न सिध्यति । स्थानिन्यपीति प्रथमः प्राप्नोति ॥**

( प्रदीपः ) स्थानिन्यपीति । अप्रयुज्यमाने प्रयुज्यमाने च शेषे प्रथमविधानात् ॥

( उद्द्योतः ) एकशेषेपि दोषमाह—भाष्ये न सिध्यतीति ।

१ 'यच्चासत्तदा' । २ 'सत्तदा' ।

३ 'द्विवरणीय' इति नागेशस्वीकृतः पाठः ।

स्थानिन्यपीति । तद् व्याचष्टे—अप्रयुज्यमाने इति । अनेन कैयटेन स्थानिपदार्थो निर्णीतः ॥

( आक्षेपान्तरभाष्यम् )

**'त्यदादीनां खल्वपि यद्यत्परं तत्तच्छिष्यते' इति यदा भवतः शेषस्तदाश्रयः प्रथमः प्राप्नोति ॥**

( प्रदीपः ) दोषान्तरमप्याह—**त्यदादीनामिति** ॥

( आक्षेपान्तरभाष्यम् )

**युष्मदि मध्यमः 'अस्मद्युत्तमः' इत्येवोच्यते ताविह न प्राप्नुतः—परमत्वं पचसि परमाहं पचामीति ॥**

( प्रदीपः ) एतदपरिहार्यं मन्यमानो लब्धोच्छेदो[1]न्यदप्याह—**युष्मदीति** ॥ **परमत्वमिति** । युष्मद्यस्मदीति विशिष्टरूपपरिग्रहादस्य च शब्दान्तरत्वात् ॥

( आक्षेपबाधकैकदेशिभाष्यम् )

**तदन्तविधिना भविष्यति ॥**

( प्रदीपः ) आचार्यदेशीय आह—**तदन्तविधिनेति** । युष्मदस्मदोरुपपदस्य विशेषणत्वात्तदन्तविधिः ॥

( आक्षेपभाष्यम् )

**इहापि तर्हि तदन्तविधिना प्राप्नुतः—अतित्वं पचति, अत्यहं पचतीति ॥**

( प्रदीपः ) चोदको दोषमाह—**इहापीति** । **अतित्वमिति** । त्वामतिक्रान्त इति समासः ॥

( उद्द्योतः ) अतिशयितस्त्वमिति विग्रहे इष्टापत्तिरत आह—त्वामतीति ॥

( आक्षेपान्तरभाष्यम् )

**ये चाप्येते समानाधिकरणवृत्तयस्तद्धितास्तत्र मध्यमोत्तमौ न प्राप्नुतः—त्वत्तरः पचसि मत्तरः पचामीति । त्वद्रूपः पचसि, मद्रूपः पचामि । त्वत्कल्पः पचसि, मत्कल्पः पचामीति ॥**

(प्रदीपः) एवं तदन्तविधावतिव्याप्तिमुक्त्वाऽव्याप्तिमाह—**ये चाप्येते इति** ॥ **त्वत्कल्प इति** । ईषदसमाप्तस्त्वं त्वत्कल्प इति कालान्तरप्रसिद्धगुणरहितो युष्मदर्थ एव त्वत्कल्पशब्देनोच्यते । न तु तत्सदृशं पदार्थान्तरम् । तदभिधाने युष्मदर्थस्य[2] साधनत्वाभावाद् मध्यमाभावात् । एवं मत्कल्प इति बोद्धव्यम् ॥

( एकदेशिसमाधानभाष्यम् )

**एवं तर्हि "युष्मदस्मद्वति" इत्येवं भविष्यति ॥**

( प्रदीपः ) आचार्यदेशीय आह—**एवं तर्हीति** । सौत्रत्वान्निर्देशस्य मतुब्लोपोऽभिधास्यते इति भावः ॥

( आक्षेपभाष्यम् )

**इहापि तर्हि प्राप्नुतः—अतित्वं पचति अत्यहं पचतीति ॥**

( प्रदीपः ) चोदक आह—**इहापीति** ॥

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि युष्मदि साधने 'अस्मदि साधने' इत्येवं भविष्यति । एवं च कृत्वा सोऽप्यदोषो भवति, यदुक्तम्—*तत्र युष्मदस्मदन्येषु प्रतिषेधः शेषत्वाद्* इति ॥**

( प्रदीपः ) आचार्य आह—**एवं तर्हीति** । समानाधिकरणे इति वचनाद्युष्मदस्मदर्थेन यत्र लान्तस्य सामानाधिकरण्यं तत्र मध्यमोत्तमाभ्यां भवितव्यमिति नास्ति कश्चिद्दोषः ॥ **एवं च कृत्वेति** । युष्मदस्मदर्थस्य साधनत्वाच्छेषत्वाभावः ॥

( उद्द्योतः ) यत्र लान्तस्येत्यन्तं[5] पदं वृथेति केचित् ॥ शेषत्वाभाव इति । उपयुक्तासमभिव्याहृत उपयुक्तादन्यः शेषपदेनोच्यत इति भावः । एवं तर्हि युष्मदि साधने इत्यनेन समानाधिकरण इत्यस्यार्थो निर्णीतः । साधने इत्यस्य लकारवाच्यसाधने क्रियया समानाधिकरणे इत्यर्थः । एतदर्थमेवान्तपदमित्यन्ये[6] ॥

( समाधानान्तरभाष्यम् )

**अथ वा "प्रथमः" उत्सर्गः करिष्यते । तस्य युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावपवादौ भविष्यतः । तत्र युष्मद्वन्यश्चास्मद्वन्यश्चास्तीति कृत्वा मध्यमोत्तमौ भविष्यतः ॥**

( प्रदीपः ) **अथ वेति** । **प्रथम** इत्येतावत्सूत्रं क्रियते । अनाश्रितविषयविशेषः प्रथमो विधीयमान उत्सर्गो भवति । तस्य विषयविशेषे विधीयमानौ मध्यमोत्तमावपवादौ भवतः । तत्रापवादनिमित्तसद्भावाद्यामिश्रेऽपि विषये मध्यमोत्तमावेव भविष्यतः, न तु प्रथम इत्यर्थः ॥

( उद्द्योतः ) अनाश्रितेति । तिप्तस्झिति सिद्धे इदं सूत्रं तदनुवादो विषयविशेषेऽपवादबोधनायेति भावः । अत एव भावे प्रथमपुरुषसिद्धिरिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**अथेह कथं भवितव्यम्—अत्वं त्वं संपद्यते इति त्वद्भवति मद्भवतीति । आहोस्वित्त्वद्भवसि मद्भवामीति ? ॥**

( प्रदीपः ) **अत्वं त्वमिति** । प्रकृतिविकृत्योरभेदविवक्षायां च्विप्रत्ययः तत्र किं प्रकृत्याश्रयेण प्रथमेन भाव्यमथ विकृत्याश्रयेण मध्यमेनेति प्रश्नः ॥

( समाधानभाष्यम् )

**त्वद्भवति मद्भवतीत्येवं भवितव्यम् ॥**

( प्रदीपः ) अत्रोत्तरम्—**त्वद्भवतीति** । प्रकृतेरेव विकाररूपेण संपत्तौ कर्तृत्वमिति भावः ॥

( उद्द्योतः ) विकाररूपेणेति । आरोपितविकाररूपेणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**मध्यमोत्तमौ कस्मान्न भवतः ? ॥**

---

[1] भवच्छब्दस्येत्यर्थः' । ( र. ना. ) [2] 'लब्धोच्छेदो' । अत्र पाठेऽलब्धोच्छेद इति पदच्छेदः कार्यः । ( र. ना. ) [3] 'स्वासाधनत्वाद्' । [4] 'मध्यमाभावः' । [5] यत्र लस्येति वक्तुमुचितमिति भावः । ( र. ना. ) [6] कैयटे लान्तस्येत्यत्र । ( र. ना. )

(प्रदीपः) **मध्यमोत्तमौ कस्मादिति ।** यथा प्रकृतिस्तद्धर्मसमाचाराद्युष्मदस्मद्व्यपदेशं लभते तथा मध्यमोत्तमावपि प्राप्नुतः ॥

(समाधानभाष्यम्)

**'गौणमुख्ययोर्मुख्ये संप्रत्ययो भवति' । तद्यथा— "गौरनुबन्ध्योऽजोऽग्नीषोमीयः" इति न वाहीकोनुबध्यते ॥**

(प्रदीपः) **गौणमुख्ययोरिति ।** तद्धर्मसमाचारादारोपितमत्र युष्मदर्थरूपत्वमिति भावः ॥ शिष्टं भाष्यम् **"ओत्"** इत्यत्र व्याख्यातम् । तत एवावधार्यताम् ॥

(आक्षेपभाष्यम्)

**कथं तर्हि वाहीके वृद्ध्यात्वे भवतः—गौर्वाहीकस्तिष्ठति गामानयेति ? ॥**

(समाधानभाष्यम्)

**अर्थाश्रयएतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे । युष्मद्युप० ॥ १०४ ॥ १०६ ॥ १०७ ॥**

(प्रदीपः) यदुक्तं भवतः शेषइति, तत्रोत्तरमाहुः—युष्मदस्मद्भवतु इत्येवं न संनिवेश आश्रयणीयः । [किं[2] तु भवतु युष्मदस्मदिति । ] ततश्चास्मद एव शेषो न तु भवतः । **पूर्वशेषदर्शनाच्चेति** वचनाद्वा ॥ १०४ ॥ १०६ ॥ १०७ ॥

(उद्योतः) **न संनिवेश आश्रयणीय** इत्यस्य किं तु भवतु युष्मदस्मदितिशेषः ॥ **वचनाद्वेति ।** अलिङ्गश्चेतनविषयो युष्मदर्थो, भवदर्थस्तु न तथेति न युष्मदर्थसमानार्थत्वमिति बोध्यम् । यदा भवतः शेषस्तदा भवत्येव प्रथम इत्याशयेन भाष्ये तत्रोत्तरानुक्तिरित्यन्ये ॥ १०४ ॥ १०६ ॥ १०७ ॥

---

(२१९ संहितासंज्ञासूत्रम् ॥ १ । ४ । ४ आ० २४ सू०)

## ३४८ परः संनिकर्षः संहिता ॥१।४।१०८

(प्रदीपः) **परः सं० ॥ १०८ ॥** पूर्ववर्णोच्चारणानन्तरमेव यद्वर्णान्तरमुच्चार्यते न तु तच्छून्यान्तरालसद्भावः स पर उत्कृष्टः सन्निकर्षः प्रत्यासत्तिलक्षणः संहितासंज्ञ इति सूत्रार्थः ॥

(उद्योतः) **परः सं ॥ १०८ ॥ परो** वर्णान्तराव्यवहित इत्यर्थे मध्यमादिवृत्तावपि सेत्स्यतीत्यग्रिमभाष्यासंगतिरत आह—**पूर्वेति ।** वर्णान्तरव्यवायेऽव्यवहितपरत्वाभावादेवातिप्रसङ्गविरहाद्दिकोयणचीत्यादौ संहिताधिकारवैयर्थ्यापत्तेः स नार्थ इति भावः ॥

(मध्यमाविलम्बितयोरपि संहितासंज्ञासाधनाधिकरणम्)

(११७३ आक्षेपवार्तिकम् ॥ १ ॥)

**॥ * ॥ परः संनिकर्षः संहिता चेद् द्रुतायामसंहितम् ॥ * ॥**

(भाष्यम्) **परः संनिकर्षः संहिता चेद्द्रुतायां वृत्तौ संहितासंज्ञा न प्राप्नोति । द्रुतायामेव हि परः सन्निकर्षो वर्णानां नाद्रुतायाम् ॥**

(प्रदीपः) एवं स्थिते चोद्यते—**पर इति ।** द्रुतायामेव वृत्तावनन्तरोक्तः परः सन्निकर्षः संभवति न तु मध्यमायां विलम्बितायां चेत्यर्थः ॥ **असंहितमिति ।** संहितासंज्ञाया अभाव इत्यर्थाभावेऽव्ययीभावः । अविद्यमाना वा संहिता अस्मिन्निति बहुव्रीहिः ॥

(उद्योतः) ननु नञ्तत्पुरुषे उत्तरपदार्थप्रधानतया नपुंसकनिर्देशोऽयुक्तोऽत आह—**अव्ययीभाव इत्यादि ।** पूर्वपदार्थप्राधान्येऽव्ययीभाव उत्तरपदार्थप्राधान्ये तत्पुरुष इति व्यवस्थितेरिति भावः ॥ वस्तुतः संहितशब्दोपि परसंनिकर्षवाची क्लीबः, तेनायं तत्पुरुष एव । असंहितमारोपितं संधानं परसंनिकर्षः, तेन तदभावात्संहितासंज्ञा न प्राप्नोतीत्यर्थः ॥ नञाऽव्ययीभावस्तु नास्त्येवेति नञ्सूत्रे वक्ष्यते ॥ **बहुव्रीहिरिति ।** पौर्वापर्यं चान्यपदार्थं इत्यभिमानः ॥ अत्राद्यमेव युक्तं संहितासंज्ञा न प्राप्नोतीति भाष्यव्याख्यानाद्[3] बहुव्रीहेस्तत्पुरुषस्येवाव्ययीभावस्यापि लघुत्वाच्च योग्यान्यपदार्थाभावाच्च ॥

(११७४ सिद्धान्तवार्तिकम् ॥ २ ॥)

**॥ * ॥ तुल्यः सन्निकर्षः ॥ * ॥**

(भाष्यम्) **तुल्यः सन्निकर्षो वर्णानां द्रुतमध्यमविलम्बितासु वृत्तिषु ॥**

(प्रदीपः) **द्रुतमध्यमविलम्बितास्विति ।** द्रुता च मध्यमा च विलम्बिता चेति द्वन्द्वे कृते भाष्यकारवचनप्रामाण्याद्ध्रस्वः । सर्वासु वृत्तिषु तुल्यः सन्निकर्षः, नैरन्तर्योच्चारणात् ॥

(उद्योतः) आद्यस्योत्तरपदपरत्वाभावान्मध्यमस्य पूर्वपदत्वाभावात्सामानाधिकरण्याभावाच्च पुंवत्त्वाप्राप्तेराह—**भाष्यकारेति ।** ङ्यापोः संज्ञाछन्दसोर्बहुलमित्यनेनेति भावः ॥

(आक्षेपभाष्यम्)

**किंकृतस्तर्हि विशेषः ? ॥**

(प्रदीपः) **विशेष इति ।** वृत्तीनामिति शेषः । क्वचिद्वृत्तिविशेष इत्येव पाठः ॥

(११७५ समाधानवार्तिकम् ॥ ३ ॥)

**॥ * ॥ वर्णकालभूयस्त्वं तु ॥ * ॥**

(भाष्यम्) **वर्णानां तु कालभूयस्त्वम् । तद्यथा— हस्तिमशकयोस्तुल्यः सन्निकर्षः प्राणिभूयस्त्वं तु ॥**

(प्रदीपः) **वर्णानां त्विति ।** वर्णोपलब्धिकालभेदाद्वर्णकालभूयस्त्वमुच्यते । द्रुतायां खल्प उपलब्धिकालः । मध्यमायामधिकः । विलम्बितायामधिकतरः । प्राकृतवैकृतभेदाद्विधा ध्वनयः । तत्र वैकृतध्वनिवशात्तस्यैव वर्णस्य पुनः पुनरुपलब्धिर्भवतीति ध्वनिभेदाद्वृत्तिभेदः ॥ **किंकृत** इति कारणे

---

१ युष्मदस्मदर्थधर्मसमारोपादित्यर्थः । (र. ना.) २ 'अयं कोष्ठकान्तर्गतः क्वाचित्कः प्रदीपे पाठः उद्द्योतमद्रष्टवता केनचिद् विदुषा प्रक्षिप्तः । ३ न तु संहिताया अभाव इति भाष्ये व्याख्यानमिति भावः । (र.ना.) ४ तत्पुरुषाव्ययीभावयोर्वर्तिपदार्थप्रधानत्वाद् बहुव्रीहेस्त्वन्यपदार्थप्रधानत्वादिति भावः । (र.ना.)

पृष्ठे **वर्णकालभूयस्त्वं त्विति** सामर्थ्यात्करणमेवोक्तं भवतीति ॥ **हस्तिमशकयोरिति** । हस्तिनो हस्तिना यः सन्निकर्षः, मशकस्य मशकेन, स तुल्यः परस्परापेक्षयेत्यर्थः ॥ **प्राणिभूयस्त्वमिति** । हस्तिनो महान्तं देशं व्याप्नुतो मशकौ तु स्वल्पम् । नैरन्तर्यं त्वविशिष्टमित्यर्थः ॥

**(उद्योतः)** ननु सर्ववृत्तिषु वर्णानामेकरूपत्वात्कथं वर्णकालभूयस्त्वमत आह—**वर्णोपलब्धीति** । वैकृत आलस्यादिजन्यो ध्वनिः॥ पुनःपुनरुप [ [१]लब्धिश्चाविच्छेदेनोप ] लब्धिधारा न तु विच्छिद्य विच्छिद्य ग्रहणमिति । एतच्च तपरसूत्रे विस्तरेण निरूपितम् ॥ **ध्वनिभेदादिति** । वैकृतध्वनिभेदादित्यर्थः ॥ ननु किंकृत इति कारणप्रश्ने फलकथनेनोत्तरमसंगतमत आह—**कारणमेवेति** । **वर्णकालभूयस्त्वं त्विति** भाष्यस्य कारणं वृत्तिविशेषस्येति शेषः । तच्च [२]वैकृतध्वनिरूपं स्वयमुक्तमिति भावः ॥ हस्तिमशकयोः परस्परसंनिकर्ष इति नार्थ इत्याह—**हस्तिन इति** । अत एव प्राणिभूयस्त्वमित्यग्रिमग्रन्थसंगतिरिति भावः । प्राणिशब्देनात्र शरीरम् ॥

**( आक्षेपशेषभाष्यम् )**

**यद्येवम्,**

**( प्रदीपः )** वर्णानां व्यञ्जकध्वनिकृतं यथोक्तं भेदमप्रतिपद्यमानः स्वगतमेव भेदं मत्वा चोदयति—**यद्येवमिति** । शिष्टं भाष्यं **तपरस्तत्कालस्ये**त्यत्र व्याख्यातं तत एवावधार्यताम् ॥

**( उद्योतः )** **व्यञ्जकध्वनीति** । उपलब्धिधाराजनकध्वनीत्यर्थः ॥

**( द्रुतमध्यमविलम्बितासु तपरफलाधिकरणम् )**

**( ११७६ आक्षेपवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् ॥*॥

**( भाष्यम् ) द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यम् ॥ किं कारणम् ? । कालभेदात् । ये द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम् । ये मध्यमायां वृत्तौ वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ॥**

**( ११७७ समाधानवार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ उक्तं वा ॥ * ॥

**( भाष्यम् ) किमुक्तम् ? । *सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते* इति ॥**

**(उद्योतः)** भाष्ये—**उक्तं वेति** । वचनारम्भापेक्षो विकल्पः॥

**( न्यासान्तरभाष्यम् )**

**अथवा "शब्दाविरामः संहिता" इत्येतल्लक्षणं करिष्यते ॥**

**( प्रदीपः ) शब्दाविराम इति** । यदा प्रयोक्ता शब्दोच्चारणान्न विरमति तदा शब्दाविरामः । स च मध्यमविलम्बितयोरपि परसन्निकर्षाभावेप्यस्तीति सिद्धा संहितासंज्ञा ॥

**( उद्योतः )** ननु शब्दानां नित्यत्वाद्विरामाभावेऽविराम इति विशेषणं व्यर्थमत आह—**यथेति** । शब्दशब्देन तदुच्चारणं लक्ष्यत इति भावः ॥

**( ११७८ आक्षेपवार्तिकम् ॥ ६ ॥ )**

## ॥ * ॥ शब्दाविरामे प्रतिवर्णमवसानम् ॥ * ॥

**( भाष्यम् ) शब्दाविरामे प्रतिवर्णमवसानसंज्ञा प्राप्नोति ॥ किमिदं प्रतिवर्णमिति ? । वर्णे वर्णे प्रति प्रतिवर्णम् । येनैव प्रयत्नेनैको वर्ण उच्चार्यते विच्छिन्ने वर्णे उपसंहृत्य तमन्यमुपादाय द्वितीयः प्रयुज्यते तथा तृतीयस्तथा चतुर्थः ॥**

**( प्रदीपः ) शब्दाविरामे प्रतिवर्णमिति** । भिन्नप्रयत्नजनितध्वनिव्यङ्ग्यत्वाद्वर्णानां प्रतिवर्णं प्रयत्नभेदादेकप्रयत्नाविच्छेदाभावात् प्रथमप्रयत्नोच्चारितवर्णानन्तरं प्रयत्नान्तरेण वर्णान्तरोच्चारणादेकैकस्य वर्णस्य विरामसद्भावादवसानसंज्ञा प्राप्नोति ॥

**( उद्योतः )** नन्वविरामेऽवसानसंज्ञा[३]प्राप्तिरित्यसंगतमत आह—**भिन्नेति** । ध्वनिपदेनात्र कण्ठताल्वाद्यभिघातः । प्रयत्नभेदे एकप्रयत्नाविच्छेदाभावो हेतुः । **अविच्छेदाभाव** इत्यस्यारोपितविच्छेदप्रतियोगिकोऽभाव इत्यर्थः । तेनाभावप्रतियोगिकोऽभावः कथं, तस्य भावप्रतियोगिकत्वनियमादिति न शङ्क्यम् ॥ विच्छेदश्च निवृत्तिविरामापरपर्यायः क्रियाविशेष इति बोध्यम् ॥ **एकैकस्य वर्णस्येति** । एकवर्णोच्चारणानन्तरं तन्नाशकाले द्वितीयवर्णोच्चारणफलकद्वितीययत्नोत्पत्त्यधिकरणकाले च [४]वर्णाभावात्तद्विरामोऽस्त्येवेत्यर्थः । यद्यप्य-[५]वच्छेदकभेदेनानेकयत्नोत्पत्तिरपि युगपत्, तथापि प्रकृते नाभिरूपैकदेशावच्छेदेनानेकयत्नोत्पत्तिर्युगपद्विरुद्धा ॥ वस्तुतो यत्नायौगपद्यमेव । नर्तक्या नानावयवावच्छिन्नक्रियाः क्षणभेदेनैव । कालसौक्ष्म्यात्तु तदग्रह इत्याशयः ॥ **अवसानसंज्ञा प्राप्नोतीति** । एवं चैकसंज्ञाधिकारात्संहितासंज्ञा न स्यादिति भावः ॥ **विच्छिन्ने वर्णे** तेनैव यत्नेन नष्टे इत्यर्थो बोध्यः ॥ एतेन **येनैवे**त्यत्रैवकारो व्यर्थ इत्यपास्तम् ॥ **उपसंहृत्य** पूर्वयत्नं त्यक्त्वेत्यर्थः ॥ **अन्यमिति** । यत्नान्तरमित्यर्थः ॥

**( समाधानभाष्यम् )**

**एवं तर्ह्यनवकाशा संहितासंज्ञाऽवसानसंज्ञां बाधिष्यते ॥**

**( प्रदीपः ) अवसानसंज्ञामिति** । वर्णान्तरानुच्चारणे वृक्ष इत्यादौ सावकाशामिति भावः । तेन सर्वथा वर्णानां यो विरामः सोऽवसानसंज्ञो न तु नान्तरीयक इत्यर्थः ॥

**( समाधानान्तरभाष्यम् )**

**अथ वा अवसानसंज्ञायां प्रकर्षगतिर्विज्ञास्यते—**

१ काशी B. A. S. मुद्रितपुस्तकयोः कोष्ठकान्तर्गतः पाठो नोपलभ्यते । किन्तु स एव न्याय्य इति बोध्यम् । ( र. ना. ) २ वर्णकालभूयस्त्वस्य वैकृतध्वनिप्रयोज्यत्वात्प्रयोज्यप्रयोजकयोरभेदारोपादिदमुक्तम् । ( र. ना. ) ३ विरामे तस्या विधानादिति भावः । ( र. ना. ) ४ पूर्वपरयोर्द्वयोरपि वर्णयोरभावादित्यर्थः । ( र. ना. ) ५ अवच्छेदकभेदेनापीति शेषः । ( र. ना.

साधीयो यो विराम इति ॥ कश्च साधीयः? । यः शब्दार्थयोर्विरामः ॥

( प्रदीपः ) अथ वेति । सर्वत्र विरामसद्भावात्पुनः- श्रुत्या विशेष आश्रीयते ॥ शब्दार्थयोरिति । अन्यत्र तु सत्यपि शब्दविरामे पदार्थस्य वाक्यार्थस्य वाऽविरामान्न भवत्यवसानसंज्ञा ॥

( उद्द्योतः ) प्रकर्षबोधकशब्दाभावात्कथं तत्प्रतीतिरत आह— सर्वत्रेति । शब्दस्य विरामः श्रवणकृतः । अर्थस्य बोधकृतः ॥ अन्यत्र त्विति । वर्णानन्तरं वर्णान्तरोच्चारणे मध्यकाले इत्यर्थः ॥

( न्यासान्तरभाष्यम् )

अथ वा "ह्रादाविरामः संहिता" इत्येतल्लक्षणं करिष्यते ॥

( प्रदीपः ) ह्रादाविराम इति । प्रयत्नविशेषजनितो वर्णविरामेऽप्यनुरणनरूपो वर्णान्तरोच्चारणेऽप्यनुवर्तमानो घोषो ह्राद उच्यते ॥

( उद्द्योतः ) घोषः । ध्वनिविशेषः ।

( ११७९ आक्षेपवार्तिकम् ॥ ७ ॥ )

॥ * ॥ ह्रादाविरामे स्पर्शाघोषसंयोगेऽसन्निधानादसंहितम् ॥ * ॥

( भाष्यम् ) ह्रादाविरामे स्पर्शानामघोषाणां च संयोगेऽसंनिधानात्संहितासंज्ञा न प्राप्नोति— कुकुटः पिप्पकः[2] पित्तमिति ।

( प्रदीपः ) स्पर्शाघोषसंयोग इति । वर्ग्याणां प्रथमद्वितीयानां शषसानां च संयोगे घोषविच्छेदादसन्निधानात्संहितासंज्ञाया अप्राप्तिरित्यर्थः ॥ अघोषसंयोग इत्येव सिद्धत्वात् स्पर्शग्रहणमनर्थकम्, अस्पर्शानामप्यघोषाणां शषसानां संयोगे तुल्यन्यायत्वात् संज्ञाया अप्रसङ्गात् । न च स्पर्शानाम् अघोषाणां चेति समुच्चयः । घोषवतां स्पर्शानां संयोगे दोषाप्रसङ्गात् ॥ कुकुट इति । कुक्कुट इवायमिति कनो लुम्मनुष्ये इति लुपि कृते संज्ञायामुपमानमित्याद्युदात्तत्वं शिष्टमनुदात्तं ततः संहितायां विधीयमानमुदात्तादनुदात्तस्य स्वरितत्वं न स्यात् ॥

( उद्द्योतः ) घोषविच्छेदादिति । असत्त्वादेव विच्छेदस्तदाह—असंनिधानादिति ॥ घोषवतामिति । तृतीयचतुर्थानामित्यर्थः ॥ दोषाप्रसङ्गादिति । तथा व्याख्याने हि तत्रापि दोष इति भाष्याल्लभ्यते तच्चासंगतं स्यात्तत्र दोषाप्राप्तेरिति भावः । स्पर्शानां मध्येऽघोषस्येत्यर्थः ॥ शषससंयोगे फलं नास्तीति भाष्याशयमन्ये ॥ ननु कुकुटादौ न किंचित्संहिताकार्यमत आह— कन इति ॥

( प्रत्याक्षेपभाष्यम् )

किमुच्यते संयोग इति । अथ यत्रैकः पचतीति ॥

( प्रदीपः ) पचतीति । अत्रापि चकारस्याघोषत्वादकारोच्चारणे घोषविच्छेदात् स्वरितत्वाप्रसङ्गः ॥

( उद्द्योतः ) घोषविच्छेदादिति । असत्त्वादेव विच्छेदः ॥ भाष्ये—पचतीत्यस्य तत्र कथमिति शेषः ॥

( प्रत्याक्षेपपरिहारभाष्यम् )

एकः पूर्वपरयोर्ह्रादेन प्रच्छाद्यते । तद्यथा । द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते। बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते ॥

( प्रदीपः ) ह्रादेनेति । द्वयोरकारयोर्घोषवतोर्मध्ये चकारो घोषवानिव लक्ष्यत इत्यर्थः । आश्रयान्तरगतोपि गुण आश्रयान्तर उपलभ्यत इति दृष्टान्तेन दर्शयति—द्वयोरिति ॥

( उद्द्योतः ) कुक्कुट इत्यादौ कृतशङ्कः पचतीत्यत्र परिहरति— एकः पूर्वेति ॥

( समाधानभाष्यम् )

एकेन तुल्यः सन्निधिः ॥ यथैवैको वर्णो ह्रादेन प्रच्छाद्यत एवमनेकोपि ।

( प्रदीपः ) एकेनेति । अनेकस्य यः सन्निकर्षः स एकेन तुल्यः । यथैकोऽतद्गुणोपि तद्गुणवस्त्वन्तरसन्निधौ तद्गुण उपलभ्यते तथाऽनेकोपि स्फटिकादिरित्यर्थः ॥

( उद्द्योतः ) तन्न्यायेन कुक्कुटादावपि समाधत्ते—एकेनेत्यादिना ॥

( न्यासान्तरभाष्यम् )

अथवा "पौर्वापर्यमकालव्यवेतं संहिता" इत्येतल्लक्षणं करिष्यते[6] ॥

( प्रदीपः ) अथ वेति । वर्णान्तरोच्चारणकालादन्येन वर्णशून्येन कालेनाव्यवहितं पौर्वापर्यं संहितेति लक्षणं क्रियते । तेन मध्यमविलम्बितयोः परमसन्निकर्षाभावेपि संहितासंज्ञा सिध्यति ॥

( उद्द्योतः ) वर्णान्तरेति । वर्णान्तरोच्चारणे नान्तरीयकाधंमात्राकालादन्येनाधिकेनेत्यर्थः ॥

( ११८० आक्षेपवार्तिकम् ॥ ८ ॥ )

॥ * ॥ पौर्वापर्यमकालव्यवेतं संहिता चेत्पूर्वापराभावादसंहितम् [एकवर्णवर्तित्वाद्वाचः, उच्चरितप्रध्वंसित्वाच्च वर्णानाम् ] ॥ * ॥

( भाष्यम् ) पौर्वापर्यमकालव्यवेतं संहिता चेत्पूर्वापराभावात्संहितासंज्ञा न प्राप्नोति । नहि वर्णानां पौर्वापर्यमस्ति । किं कारणम्? । एकवर्णवर्तित्वाद्वाचः, उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्चारयति ।

१ 'कश्चात्र' । २ 'पिप्पिका' । पिप्पकं । ३ ननु स्पर्शेषु येऽघोषास्तत्संयोगे इत्यर्थे स्पर्शग्रहणं सार्थकमित्यत आहास्पर्शानामपीति । ( र. ना. ) ४ स्पर्शानामघोषाणाञ्च संयोगे इति व्याख्याने इत्यर्थः । ( र. ना. ) ५ बदरफलैः परिपूर्णे पिटके स्थितोरिक्तकोवस्त्वन्तररूप्य इत्यर्थः । ( र.ना. ) ६ 'क्रियते' ।

**गौरिति गकारे यावद्वाग्वर्तते, नौकारे, न विसर्जनीये। यावद् औकारे, न गकारे, न विसर्जनीये। यावद्विसर्जनीये, न गकारे, नौकारे॥ उच्चरितप्रध्वंसित्वात्—। उच्चरितप्रध्वंसिनः खल्वपि वर्णाः। उच्चरितः प्रध्वस्तः। अथापरः प्रयुज्यते न वर्णो वर्णस्य सहायः॥**

( प्रदीपः ) **पूर्वापराभावादिति**। युगपत्स्थितानां देशकृतं पौर्वापर्यं दृष्टम्। वर्णास्त्वेकैकश उपलभ्यमाना यौगपद्येनासन्निधानात्कथं[1] पौर्वापर्यमश्नुवीरन्॥ **एकवर्णवर्तित्वादिति**। सामान्येनोपक्रमात्[2] स्त्रीप्रत्ययाभावः॥ **उच्चरितेति**। क्रमोत्पन्ना अपि वर्णा यद्यवतिष्ठेरंस्तदा स्यात् पूर्वापरव्यपदेशो ज्येष्ठमध्यमकनिष्ठव्यपदेशवत्। अनवस्थानात्तु नास्ति तात्त्विकः पूर्वापरभाव इत्यर्थः। व्यञ्जकध्वन्यपेक्षया चैतदुक्तम्। ध्वनिस्फोटभेदस्त्वन्यत्र निर्णीतत्वान्नेहोपन्यस्यते॥ **न द्वौ युगपदिति**। युगपद् द्वयोरुच्चारणे स्यादेवाव्यवधानम्। कालेन पौर्वापर्यं तु मा भूदित्यर्थः॥ **वागिति**। वागिन्द्रियमित्यर्थः। एतेन युगपदनवस्थानात् सन्निकर्षोऽप्याक्षिप्त इति विज्ञेयम्॥

( उद्योतः ) ननु पूर्वः पूर्वकालः परश्च परकाल इति कथं पूर्वापरभावोऽत आह—**युगपदिति**। अयं भावः—यदि कालिकं पौर्वापर्यं तदेकोयणचीत्यादिसंहिताकार्यासंभवः पूर्वपरयोर्युगपत्स्थित्यभावादत एव न दैशिकमपीति॥ **अनेकश इति**। भिन्नकाले इत्यर्थः। एकैकश इति पाठान्तरम्। तत्रापूपौ द्वावितिवत् व्यतिलुनत इतिवच्च द्विर्वचनशसोर्यौगपद्यं बोध्यम्। तद्धितमात्रेण तु न वीप्साप्रतीतिरल्पश इत्यर्थस्यापि प्रतीतेः॥ नन्वेकैकवर्णवर्तिनीत्वादित्युचितमगुणवचनत्वेन पुंवत्त्वाप्राप्तेरत आह—**सामान्येनेति**। तेनोपक्रमे च नपुंसकत्वमेवेति भावः॥ अनेन युगपदुपलम्भं निरस्य युगपद्वास्तवीं सत्तामपि निरसितुमाह—भाष्ये **उच्चरितेति**॥ **उच्चरितप्रध्वंसित्वम्**। उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वरूपम्। उच्चारणाधिकरणकालोऽपि क्षणसमूहरूपः प्रत्यक्षयोग्यः। क्षणिकस्य प्रत्यक्षायोगात्॥ **यद्यवतिष्ठेरन्निति**। कालिकपौर्वापर्यमपि युगपदवस्थितेष्वेव ग्रहीतुं शक्यं न तु नष्टविद्यमानयोस्तदाह—**ज्येष्ठेत्यादि**। अयं ज्येष्ठोऽयं कनिष्ठ इति व्यवहारवदयं पूर्वोऽयं पर इति व्यवहारस्य नष्टविद्यमानयोरसंभवः। नष्टविद्यमानयोः संबन्धस्य निरूपयितुमशक्यत्वादिति भावः॥ वर्णानां स्फोटरूपाणां नित्यत्वादिदमयुक्तमत आह—**व्यञ्जकेति**। स्फोटस्य तु सर्वसाधारण्येनैकत्वात्तमादाय[3] पौर्वापर्यस्योक्तिसंभवोऽपि नास्तीति भावः॥ **अन्यत्र** तपरसूत्रे॥ **स्यादेवेति**। कालकृतमव्यवधानं स्यादेवेत्यर्थः। एवं च युगपदुच्चारणाभावान्न संनिकर्षो नापि पौर्वापर्यमिति भावस्तदाह—भाष्ये **अथापर इति**। तद्वर्णध्वंसानन्तरमपरो वर्णः प्रयुज्यते तावतापि स पौर्वापर्यादिव्यवहारे न वर्णान्तरस्य सहाय इत्यर्थः॥

( समाधानभाष्यम् )

**एवं तर्हि—**

**"बुद्धौ[4] कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः। शब्देनार्थान्वाच्यान्दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम्॥" बुद्धिविषयमेव शब्दानां पौर्वापर्यम्। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः, अस्मिंस्तावच्छब्देऽयं तावद्वर्णः ततोयं ततोयमिति॥ परः संनिकर्षः॥१०८॥**

( प्रदीपः ) **एवं तर्हीति**। बुद्धिप्रकल्पितः सर्वः पौर्वापर्यसन्निकर्षादिव्यवहार इत्यर्थः॥ **धीरः** पण्डितः॥ **तत्वन्नीतिरिति**। तननं तत् साऽस्ति यस्याः सा तत्वती सकलविषयव्यापिनी नीतिर्बुद्धिर्यस्य स तत्वन्नीतिरिति। अन्ये तु **तन्वन्नीतिरिति** पठन्ति। तन्वती विषयान् व्याप्नुवती बुद्धिर्यस्येति[5] स एवार्थः॥ १०८॥

( उद्योतः ) **बुद्धौ कृत्वेति**। बुद्धावन्तःकरणे **चेष्टाः** कण्ठताल्वाद्यभिघातव्यापारजन्यान् शब्दान् कृत्वा प्रतिबिम्बितान् कृत्वा शब्देन वाच्यानर्थान् बुद्धौ बुद्धिरूपे देशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः॥ **बुद्धिविषयमित्यस्य** बुद्धिस्थशब्दविषयमित्यर्थः। तत्र वक्तृबुद्धिस्थत्वमुपपादयति—**य इति**। तदर्थमेव शास्त्रप्रवृत्तेस्तस्यैव शास्त्रफलधर्मोक्तिः॥ **अस्मिन्नर्थे इति**। एतदर्थमेव बुद्धावर्थदर्शनमप्युक्तं श्लोके पौर्वापर्यमित्युपलक्षणम्[6]॥ **अयमिति** बुद्ध्युपारूढस्वमात्रश्रव्यसूक्ष्मोच्चारणव्यङ्ग्यशब्दपरामर्शः। अन्यथेदमः। प्रत्यक्षपरामर्शकत्वादेतदनुपपत्तिः॥ **प्रयोक्तव्यः**। परप्रत्यययोग्यस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यक्तव्यः॥ **अस्मिन् शब्दे** इत्यस्य व्यञ्जनीये इति शेषस्तदाह—**बुद्धिप्रकल्पित इति**। बुद्धिस्थप्रकल्पितशब्दविषय इत्यर्थः॥ **प्रकल्पितेत्यस्य** प्रतिबिम्बेन तत्तद्रूपतया प्रकल्पितेत्यर्थः॥ १०८॥

( २२० अवसानसंज्ञासूत्रम्। १। ४। ४ आ. २५ सू.)

## ३४९ विरामोऽवसानम्॥ १। ४। १०९

( पाठनिर्णयाधिकरणम् )

**( भाष्यम् ) इदं विचार्यते—अभावो वावसान[7]लक्षणं स्याद्, विरामो वेति॥**

( प्रदीपः ) **विरामः॥ १०९॥ इदं विचार्यत इति**। विचरति नाना गच्छति यद्वस्तु तद्विचार्यते परीक्ष्यत इत्यर्थः॥ **अभावो वेति**। केचिद्—**अभावोऽवसान**मिति पठन्ति, अन्ये तु **विरामोऽवसान**मिति। तत्र युक्तायुक्तविचारः क्रियते॥

( उद्योतः ) **विरामो॥ १०९॥ नाना प्रकारं गच्छति** प्राप्नोति यत्तन्नानाप्रकारं गम्यते तथा प्रापय्य किं युक्तमिति परीक्ष्यत इत्यर्थः॥ अत्र लक्षणे संदेहाभावादाह—**केचिदिति**॥

( विशेषप्रश्नभाष्यम् )

**कश्चात्र[8] विशेषः?॥**

---

१ यौगपद्याभावादिति शेषः। ( र. ना. ) २ वाग्गतं स्त्रीपुंससाधारणरूपमाश्रित्यैकवर्णवर्तित्वादित्युपक्रमे उक्त्वा पश्चाद् वाच इति संबध्यतेऽत एकवर्णवर्तिनीत्वादिति न भवतीति भावः। ( र. ना. ) ३ सर्वध्वन्यभिव्यङ्ग्यत्वेनेत्यर्थः। ( र. ना. ) ४ कर्ता प्रयोक्ता धीरो धियं विषयेषु ईरयति इति धीरः पण्डितः तत्वन्नीतिः सकलविषयव्यापकबुद्धिविशिष्टः सर्वाः चेष्टाः सर्वान् कण्ठताल्वाद्यभिघातव्यापारजन्यशब्दान् बुद्धौ कृत्वा तत्र प्रतिबिम्बितान् कृत्वा शब्देन वाच्यानर्थान् बुद्धिदेशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादिति वाक्यार्थः। (र.ना.) ५ 'रस्येति'। ६ संनिकर्षाव्यवधानादेरिति शेषः। (र.ना.) ७ अवसानस्य लक्षणमुपलक्षणमित्यर्थः। अभावोपलक्षितो वर्णोऽवसानमिति विरामोपलक्षित इति वोच्यते इत्यर्थः। (र.ना.) ८ पयन्तस्यायं प्रयोगः। (र. ना.)

( ११८१ प्रथमपक्षे दूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अभावे[1]ऽवसानलक्षणे उपर्यभाववचनम् ॥ * ॥

**( भाष्यम् ) अभावेऽवसानलक्षणे उपर्यभावग्रहणं कर्तव्यम्। उपरि यः अभाव इति वक्तव्यम्। पुरस्तादपि हि शब्दस्याभावस्तत्र मा भूदिति ॥ किं च स्यात्? । रसः, रथः "खरवसानयोर्विसर्जनीयः" इति विसर्जनीयः प्रसज्येत ॥**

( प्रदीपः ) उपरीति । वर्णोच्चारणादूर्ध्वं योऽभावः तदुपलक्षितो वर्णोऽवसानमिति वक्तव्यं, प्रागभावस्योपलक्षणत्वनिवृत्त्यर्थम् ॥ रस इति । परवत् पूर्वस्यापि रेफस्याभावविषयत्वाद्विसर्जनीयप्रसङ्गः ॥

( उद्द्योतः ) प्रागभावस्येति । प्राग्वर्तिनः शब्दाभावस्येत्यर्थः ॥ भाष्ये—रसः रथ इत्यत्र ॥ खरवसानयोरिति विसर्जनीयः प्रसज्येतेति । पदावयवस्यावसाने रेफस्य विसर्ग इति सूत्रार्थ इति भावः ॥ खरीति वाक्ये तु रेफान्तस्य पदस्येत्यर्थ इति बोध्यम् ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि—विरामः ॥**

( ११८२ द्वितीयपक्षे दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ विरामे विरामवचनम् ॥ * ॥

**( भाष्यम् ) यस्य[2] विरामः, विरामग्रहणं तेन कर्तव्यम् ॥**

( प्रदीपः ) विरामे विरामवचनमिति । अधिकं कर्तव्यमित्यर्थः ॥

( विरामवादिभाष्यम् )

**ननु च यस्याप्यभावः, तस्याप्यभावग्रहणं कर्तव्यम् ॥**

( अभाववादिभाष्यम् )

**परार्थं मम भविष्यति—'अभावो लोपः' ततः 'अवसानं च' इति ॥**

( प्रदीपः ) ततोऽवसानं चेति । अदर्शनमभाव इत्येक एवार्थः । तेन पुनरभावग्रहणं न कर्तव्यमित्यर्थः । तत्र लोपसंज्ञायामभावः संज्ञित्वेनाश्रीयते, अवसानसंज्ञायां तूपलक्षणत्वेन । तेन वर्णान्तराभावोपलक्षितो वर्णोऽवसानसंज्ञ इत्यर्थः । उत्तरत्र[3] त्वभावस्यैव लोपावसानसंज्ञे व्याख्यास्येते । अस्मिन् पक्षे खरवसानयोरिति षष्ठी । खरः समीपस्य रेफस्यावसानस्य च रेफस्येत्यर्थः । अथवैकापि सप्तमी विषयभेदाद्भिद्यते—खरि परतो रेफस्य विसर्जनीयोऽवसाने च रेफे स्थानिनि विसर्जनीय इत्यादेशस्य विषयत्वेन[4] स्थानी विवक्ष्यते ॥

( उद्द्योतः ) अदर्शनमिति । यद्यपि तद्दर्शनाभावः, अभावश्च वर्णस्य[6] तथाप्यभावपदेन तस्यापि लाभः । वर्णदर्शनाभाववर्णाभावयोः समनियतत्वादिति भावः ॥ अस्मिन् पक्षे इति । वर्णान्तराभावोपलक्षितवर्णस्यावसानत्वपक्षे इत्यर्थः ॥

( विरामवादिभाष्यम् )

**ममापि तर्हि विरामग्रहणं परार्थं भविष्यति "विरामो लोपः" 'अवसानं च' इति ॥**

( प्रदीपः ) ममापीति । अभावो विराम इति पर्यायत्वं मन्यते ॥

( ११८३ आक्षेपवार्तिकम् ॥ ३ ॥ )

## [॥ * ॥ उपरिविरामवचनम् ॥ * ॥]

**( भाष्यम् ) उपरि यो विराम इति वक्तव्यम्। पुरस्तादपि हि शब्दस्य विरामः, तत्र मा भूत् ॥ किं च स्यात्? । रसः रथः "खरवसानयोर्विसर्जनीयः" इति विसर्जनीयः प्रसज्येत ॥**

( आक्षेपपरिहारभाष्यम् )

**नैष दोषः। आरम्भपूर्वको मम विरामः ॥**

( प्रदीपः ) आरम्भपूर्वक इति । निवृत्तिर्विरामः, स च प्रवृत्तस्य भवतीति भावः ॥

( उद्द्योतः ) स च प्रवृत्तस्येति । एवं च पुरस्तान्न विरामव्यवहार इति भावः ॥

( पक्षान्तरव्याख्याभाष्यम् )

**अथ वा नेदमवसानलक्षणं विचार्यते। किं तर्हि?। संज्ञी। अभावोऽवसानसंज्ञी स्याद्विरामो वेति ॥**

( प्रदीपः ) अवसानलक्षणमिति । अभावोपलक्षितो वर्णोऽवसानं विरामोपलक्षितो वेति पूर्वं विचारितम् । इदानीं तु तावेव संज्ञित्वेन विचार्येते । अभावो[7] लोप इत्येकस्य संज्ञाद्वयविधानसामर्थ्याद्विषयविभाग आश्रीयते । प्रसक्ताभावो लोपसंज्ञः, अभावमात्रमवसानसंज्ञमिति ॥

( उद्द्योतः ) भाष्ये—नेदमवसानलक्षणमिति । अवसानव्यवहारविषयस्य वर्णस्योपलक्षणभूतं वस्तु न विचार्यते इत्यर्थः ॥ प्रसक्ताभाव इति । प्रसक्तोच्चारणाभाव इत्यर्थः ॥

( विशेषप्रश्नभाष्यम् )

**कश्चात्र विशेषः?।**

---

१ * "अभाव उपर्यभाववचनम्" इत्येवमेव वार्तिकपाठो भवेत्। 'विरामे विरामवचनम्' इति द्वितीयपक्षवार्तिकानुपूर्वीसंवादानुरोधात्। वार्तिकमध्ये 'अवसानलक्षणे' इति तु व्याख्यायां भाष्यकृता पूरितमवलोक्य भाष्यस्य वार्तिकसमानानुपूर्वीकत्वमेव प्रायो दृश्यत इति मन्वानेन केनचित्प्राचीनतरपुस्तक एव वर्धितम् । एवमेव विचारान्तरवार्तिके वक्ष्यमाणे 'अवसानसंज्ञिनि' इत्येतदपि वर्धितमेव। तथा चोभयत्र वार्तिकानुपूर्वी समानैव व्याख्याभाष्ये 'अवसानलक्षणे' इति प्रथमविचारव्याख्यावसरे 'अवसानसंज्ञिनि' इति द्वितीयविचारव्याख्यावसरे भाष्यकृता पूर्तिः कृता। अत एव द्वितीयविचारावसरेऽपि प्रथमविचारोक्तं परिहारस्मारणं कृतम् ॥ अन्यथा प्रथमविचारवार्तिकेभ्यो द्वितीयविचारवार्तिकाक्षेपादीनां पृथक्त्वे 'ननु चोक्तम्' इति परिहारस्मारणमसंगतं स्यात्। तस्मात् पूर्वविचारवार्तिकान्येव द्वितीयविचारे व्याख्यातानि इति ध्येयम्। एषा सर्वाऽपि कल्पना संभावनामात्रभित्तिकाऽतो हेयेति वयम्। ( र. ना. ) २ यस्य वादिनो विरामोऽवसानोपलक्षणं तेन विरामग्रहणमधिकं कर्तव्यं नाभावोपलक्षणवादिनेति भावः । (र.ना.) ३ अभावोऽवसानसंज्ञी स्याद्विरामो वेत्युत्तरग्रन्थे तु इत्यर्थः । (र. ना.) ४ अवसानात्मको यो रेफः स्थानी तद्विषयको विसर्जनीय इत्यपरवाक्यार्थः । (र.ना.) ५ 'लोपसंज्ञीति शेषः'। ६ अवसानसंज्ञीति शेषः । तथाच कथं संज्ञैक्यमिति भावः। ७ अभावो लोपोऽवसानश्चेत्येकस्येति पाठः साधुः । ( र. ना.

( ११८४ प्रथमपक्षदूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अभावेऽवसानसंज्ञिन्युपर्यभाववचनम् ॥ * ॥

( भाष्यम् ) अभावेऽवसानसंज्ञिन्युपर्यभावग्रहणं कर्तव्यम् । उपरि योऽभाव इति वक्तव्यम् । पुरस्तादपि हि शब्दस्याभावस्तत्र मा भूदिति । किं च स्यात्? । रसः रथः "खरवसानयोर्विसर्जनीय" इति विसर्जनीयः प्रसज्येत ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि—विरामोऽवसानम् ॥

( ११८५ द्वितीयपक्षदूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ विरामे विरामवचनम् ॥ * ॥

( भाष्यम् ) यस्य विरामस्तेन विरामग्रहणं कर्तव्यम् ॥

( विरामवादिभाष्यम् )

ननु च यस्याप्यभावस्तेनाप्यभावग्रहणं कर्तव्यम् ।

( अभाववादिभाष्यम् )

परार्थं मम भविष्यति—अभावो लोपस्ततोऽवसानं चेति ॥

( विरामवादिभाष्यम् )

ममापि तर्हि विरामग्रहणं परार्थं भविष्यति—विरामो लोपोऽवसानं चेति ॥

( आक्षेपभाष्यम् )

उपरि यो विराम इति वक्तव्यम् ॥

( परिहारस्मारणभाष्यम् )

ननु चोक्तम्—'आरम्भपूर्वके—' इति ।

( परिहारबाधकभाष्यम् )

नावश्यमयं रमिः प्रवृत्तावेव वर्तते । किं तर्हि ? । अप्रवृत्तावपि । तद्यथा—'उपरतान्यस्मिन्कुले व्रतानि' 'उपरतः स्वाध्याय' इति । न च तत्र स्वाध्यायो भूतपूर्वो भवति, नापि व्रतानि ॥

( प्रदीपः ) नावश्यमिति । प्रवृत्तौ सत्यां या निवृत्तिस्तस्यामित्यर्थः ॥ उपरतान्यस्तस्मिन्निति । न प्रवृत्त्य निवृत्तानि । किं तर्हि ? । पूर्वमेवाप्रवृत्तानीत्यर्थः । नियतविषयत्वाच्च शब्दप्रयोगस्य शशविषाणमुपरतमिति प्रयोगाभावः ॥ क्वचिद्वनानीति पाठः ॥

( उद्द्योतः ) प्रवृत्तौ रमेः प्रयोगस्य क्वाप्यभावादाह—प्रवृत्तौ सत्यामिति । न प्रवृत्त्य निवृत्तानीति पाठः । उपरतविरतौ च पर्यायौ । क्वचिद्वनानीति पाठ इति । व्रतानीत्यस्य स्थाने तथा पाठ इत्यर्थः । तत्र वनपदं वानप्रस्थाश्रमोपलक्षणम् । एतदन्तेन लक्षणयोः साम्यमुपपादितम् ॥

( ११८६ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ भावाविरामभावित्वाच्छब्दस्यावसानलक्षणं न ॥ * ॥

( भाष्यम् ) भावाविरामभावित्वाच्छब्दस्यावसानलक्षणं नोपपद्यते । किमिदं भावाविरामभावित्वादिति ? । भावस्याविरामः भावाविरामः, भावाविरामेण भवतीति भावाविरामभावी, भावाविरामभाविनो भावो भावाविरामभावित्वम् ॥

( प्रदीपः ) भावाविरामभावित्वादिति । इह शब्दस्य स्वसंबन्धी ह्यभावोऽवसानलक्षणं स्यात्, शब्दान्तरस्य संबन्धी वा । न तावत् स्वसंबन्धी, विरोधात् । नहि यस्य सत्ता तस्य तदानीमेवासत्ता युज्यते । नापि शब्दान्तरसंबन्धी । नहि घटाभावः पटस्याभावो भवति । भावस्य सत्ताया अविच्छेदेन भवत्यवश्यमिति भावाविरामभावी शब्दः । नहि शब्दस्य भवनकाले सत्ता विच्छिद्यते इत्यर्थः ॥

( उद्द्योतः ) अथोभयत्रापि दोषं शङ्कते—भावाविरामेति ॥ नापि शब्दान्तरेति । वावसाने इत्यादाववसाने स्थितस्येत्यर्थः प्रत्यासत्त्योचित इति भावः ॥ अविच्छेदेनेति । अविच्छेदाविरामौ पर्यायौ तत्प्रतियोगिनौ विच्छेदविरामौ च क्रियाविशेषरूपौ भावपदार्थौ । एतेनाभावस्य भावप्रतियोगिकत्वादिदं चिन्त्यमिति परास्तम् । अन्याभावपरो वर्ण इत्यादि त्वग्रे वक्ष्यत्येव ॥

( व्याख्यान्तरभाष्यम् )

अपर आह—भावभावित्वादविरामभावित्वाच्च शब्दस्यावसानलक्षणं नोपपद्यते—इति ॥

( प्रदीपः ) अपर आहेति । भावाविरामशब्दयोर्द्वन्द्व इत्यर्थः ॥ इदानीं लक्षणद्वयस्याप्यनुपपत्तिः प्रतिपाद्यते । भावेन सत्तयाऽविरामेण अविच्छेदेन भवतीत्यर्थः । उपाधिरहितस्याभावस्य प्रतीतिर्नास्ति ॥

( उद्द्योतः ) इदानीम् । अपर आहेति व्याख्यानकाले ॥ अन्ये तु वर्णानामभाव इत्युक्ते वर्णत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । स च न वर्णसत्त्वे इति भाष्यार्थ इत्याहुः ॥ ननु शब्दस्य भावाविरामभावित्वेऽप्यभावोऽवसानमिति लक्षणे को दोषस्तत्र शब्दस्यानिवेशादित्यत आह—उपाधिरहितस्येति । प्रतियोगिरहितस्येत्यर्थः । शब्दशास्त्रत्वाच्च शब्द एव प्रतियोगीति भावः ॥ विरामोऽभावपदार्थोऽपि संबन्धादिवदभावसमानाधिकरणत्वाच्च प्रतियोगिसापेक्ष इति भावः ॥

( ११८७ न्यासान्तरवार्तिकम् ॥ ५ ॥ )

## ॥*॥ तत्परं इति वा वर्णस्यावसानम् ॥*॥

( भाष्यम् ) विरामपरो वर्णः अवसानसंज्ञो भवतीति वक्तव्यम् ॥

( प्रदीपः ) तत्पर इति वेति । इदानीं शब्दान्तराभावपरो वर्णोऽवसानसंज्ञो भवतीति प्रतिपाद्यते, अभावेनापि बुद्धिपरिकल्पितं पौर्वापर्यमाश्रीयते ॥

---

१ अभावविरामयोरिति भावः । ( र. ना. ) २ शब्दस्य भावाविरामभावित्वाद् भावस्य सत्ताया योऽविरामोऽविच्छेदस्तेन भावित्वाद् अभावोऽवसानलक्षणं नेत्यर्थः । ( र. ना.) ३ अथवा तत्पर इत्युक्त्वा वर्णस्यावसानमिति संज्ञा क्रियते इति वार्तिकार्थः । ( र. ना. ) ४ नागेशेन तु 'बुद्धिकल्पितपौर्वापर्य' इत्येवमेव पाठ उपलब्धो भवेत् ।

(उद्योतः) बुद्धिकल्पितेति । बुद्धिदेशेऽभेदभावं दृष्ट्वा तत्र कल्पितं पौर्वापर्यमित्यर्थः ॥

(११८८ न्यासान्तरवार्तिकम् ॥ ६ ॥)

**॥ * ॥ वर्णोऽन्त्यो वावसानम् ॥ * ॥**

(भाष्यम्) अथ वा व्यक्तमेव पठितव्यम्—अन्त्यो वर्णोऽवसानसंज्ञो भवतीति ॥

(प्रदीपः) अथ वेति । यद्यपि विरामशब्दे करणसाधने आश्रीयमाणेऽयमर्थो लभ्यते, तथापि भावसाधनस्यापि संभवात् करणसाधनत्वं संदिग्धमिति व्यक्तमेव पठितव्यमित्युक्तम् ॥

(तटस्थाक्षेपभाष्यम्)

तत्तर्हि वक्तव्यम्? ॥

(समाधानभाष्यम्)

न वक्तव्यम् ॥

(११८९ प्रत्याख्यानवार्तिकम् ॥ ७ ॥)

**॥ * ॥ संहितावसानयोर्लोकविदितत्वात् सिद्धम् ॥ * ॥**

(भाष्यम्) संहिता अवसानमिति लोकविदितावेतावर्थौ । एवं हि कश्चित्कंचिदधीयानमाह—'शन्नोदेवीयं संहितयाधीष्व' इति । स तत्र परमसन्निकर्षमधीते । अपर आह—'केनावस्यसि' इति । स आह—अकारेणेकारेणोकारेणेति । एवमेतौ लोकविदितावर्थौ तयोर्लोकविदितत्वात्सिद्धमिति ॥ विरामोऽवसानम् ॥ १०९ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥

पादोऽध्यायश्च समाप्तः ॥

(प्रदीपः) संहितयाधीष्वेति । यथा पदनैरन्तर्यं संहिताव्यवहारस्तथैकपदेऽपि वर्णनैरन्तर्ये । अवसानशब्दोऽपि विधिप्रदेशेषु भावसाधनः करणसाधनो वा आश्रयिष्यते इति नार्थः संज्ञाद्वयविधानेन, तेन विनापीष्टस्य सिद्धत्वात् ॥१०९॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य चतुर्थपादे चतुर्थमाह्निकम् ॥

पादोऽध्यायश्च समाप्तः ॥

(उद्योतः) ननु लोके संहिताशब्दः पदनैरन्तर्ये एव प्रसिद्धो न वर्णनैरन्तर्ये इत्यत आह—यथेति ॥ ऐकपद्ये इति एकपदे इत्यर्थः ॥ भावसाधन इति । अत्र पक्षे खरवसानयोरित्यत्र बौद्धं पौर्वापर्यमाश्रयणीयमिति शिवम् ॥ १०९ ॥

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागोजी(नागेश)-भट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य चतुर्थे चतुर्थमाह्निकम् ॥

पादोऽध्यायश्च समाप्तः ॥ १ ॥ शुभम् ॥

१ 'कारेण वेति' । २ संहितावसानेत्यादिः । (र. ना.)

### अस्मिन् पादे सूत्रसंख्या

"आकडाराद्बहुष्वनुप्रतिगृणोऽनुकरणं विभाषाव्यवहितास्त्वान्येकनव"

| | प्राक्तनयोगः | अस्मिन्पादे | | | | | समग्रयोगः |
|---|---|---|---|---|---|---|---|
| | | १ म आह्निके | २ य आह्निके | ३ य आह्निके | ४ र्थं आह्निके | योगः | |
| व्याख्यातसूत्राणि | १६३ | २ | १० | २० | २५ | ५७ | २२० |
| अव्याख्यातसूत्राणि | ७७ | ० | १० | १३ | २९ | ५२ | १२९ |
| समुदितसूत्राणि | २४० | २ | २० | ३३ | ५४ | १०९ | ३४९ |

### वार्तिकसंख्यासूचककोष्टकम् ।

| प्राक्तनयोगः | अस्मिन् पादे वार्तिकसंख्या | | | | | समग्रयोगः |
|---|---|---|---|---|---|---|
| | १ आह्निके | २ आह्निके | ३ आह्निके | ४ आह्निके | योगः | |
| ९६९ | ७१ | ३३ | ५६ | ६० | २२० | ११८९ |

### प्रथमाध्यायसूत्रसंख्याकोष्टकम् ।

| | १ मपादे | २ यपादे | ३ यपादे | ४ र्थपादे | समग्रेध्याये |
|---|---|---|---|---|---|
| आह्निकानि | ९ | ३ | २ | ४ | १८ |
| व्याख्यातसूत्राणि | ६८ | ५३ | ४२ | ५७ | २२० |
| अव्याख्यातसूत्राणि | ६ | २० | ५१ | ५२ | १२९ |
| समुदितसूत्राणि | ७४ | ७३ | ९३ | १०९ | ३४९ |

श्रीदधिमती(थी) जयति ॥

# अथ द्वितीयाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ।

( २२१ समर्थपरिभाषासूत्रम् ॥ २ । १ । १ आ. १ सू. )

## ३५० समर्थः पदविधिः ॥ २ । १ । १ ॥

( अथ विधिशब्दार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**विधिरिति कोयं शब्दः ? ॥**

( प्रदीपः ) **समर्थः पदविधिः ॥ १ ॥ विधिरिति कोयं शब्द इति** । अर्थानिश्चयात् संदेहे सति प्रश्नः । किं भावसाधनः, उत कर्मसाधनः । तत्र भावसाधने पदानां विधीयमानत्वात् कर्मणि षष्ठी । इतरत्र शेषषष्ठी ॥ तत्र येषामर्थभेदाच्छब्दभेद इति दर्शनं सादृश्यनिबन्धना च प्रत्यभिज्ञा, तद्दर्शने क इति प्रश्नो विशिष्टशब्दनिर्धारणाय । ये त्वर्थभेदेपि शब्दस्यैक्यमिच्छन्ति तत्पक्षेऽर्थभेदाच्छब्दभेदमारोप्य क इति प्रश्नः ॥

( उद्योतः ) **समर्थः पद ॥ १ ॥ विधिरिति कोयमिति** भाष्यस्य न स्वरूपप्रश्ने तात्पर्यं तस्य श्रोत्रेण निश्चितत्वादित्यतोऽभिप्रायमाह—**अर्थेति** ॥ **कोयमित्यस्य** किमर्थकोयमित्यर्थः ॥ शब्दार्थयोरभेदादिति भावः ॥ **किं भावेति** । करणाधिकरणसाधनस्त्वनन्वितत्वात् प्रयोजनाभावाच्च नोल्लिखितः ॥ **विधीयमानत्वादिति** । वत्वसादिविधाविति शेषः ॥ **इतरत्रेति** । कर्मसाधने इत्यर्थः ॥ अर्थभेदाच्छब्दभेद इति मते प्रत्यभिज्ञानुपपत्तिः, तद्भेदेपि शब्दैक्ये तु कः शब्द इत्यनुपपन्नमत आह—**तत्रेति** ॥

( समाधानभाष्यम् )

**विपूर्वाद्धाञः कर्मसाधन इकारः-विधीयते विधिरिति ॥ किं पुनर्विधीयते ? ॥ समासो विभक्तिविधानं पराङ्गवद्भावश्च ॥**

( प्रदीपः ) **विपूर्वादिति** । 'विध विधाने' इत्यस्यौणादिकेन्प्रत्ययान्तस्य निवृत्त्यर्थं **विपूर्वाद्धाञ** इत्युक्तम् । स्वरे चानयोर्भेदः । इन्प्रत्ययान्तस्याद्युदात्तत्वात् किप्रत्ययान्तस्यान्तोदात्तत्वात् ॥ तस्यैव[1] प्रयोगदर्शनमुत्तरे हेतुः ॥ **कर्मसाधन इति** । एतद्भावसाधननिवृत्त्यर्थमुक्तम् ॥ **विधीयतइति** वाक्यप्रदर्शनं सुखप्रतिपत्त्यर्थम् ॥ **किं पुनरिति** । कार्यविशेषस्येहानिर्देशात् प्रश्नः ॥ इतरो वक्ष्यमाणान् कार्यविशेषान् पर्यालोच्याह—**समास इति** । अनन्तरस्यापि **पराङ्गवद्भाव**स्याल्पविषयत्वादनादरात्तन्निमित्तग्रहणाच्चातिप्रसङ्गनिरासस्य सिद्धत्वात् मुख्यप्रयोजनत्वाभावात् पश्चान्निर्देशः कृतः । तत्र समासशब्देन संज्ञा वोच्यते समुदायो[3] वा संज्ञी । **विभक्तिविधानशब्देन** सामान्यविहितानां विभक्तीनां **कर्मणि** द्वितीयेत्यादिना यो नियमः स उच्यते । एवं हि पदविधिर्भवति । अथाप्येकवाक्यताश्रयणेन विभक्तीनां विधानं तथापि पदान्तरसंबन्धेन यासां विभक्तीनां विधान**मन्तरान्तरेणयुक्त इति, तिङ्विभक्तीनां नेर्विश इति**, तदाश्रयेण पदविधित्वमस्त्येव । तथा चोक्तम्—**निरपि पदं विशिरपि पदमिति** । तत्र विभक्त्यवच्छिन्नत्वाद्विशिष्टं विधानं कर्म[4] सामान्यविधानक्रियाया भवति । यथोक्तम्—**सामान्यपुषेरवयवपुषिः कर्मेति** ॥

( उद्योतः ) **औणादिकेनिति** । इगुपधात्किदित्यनेनेति भावः ॥ **स्वरे चेति** । बहुलग्रहणादौणादिकस्यापि कर्मणि संभव इति भावः ॥ **प्रयोगदर्शनमिति** । त्रैस्वर्येणाष्टाध्यायीपाठादिह वेदे लोके चेति शेषः ॥ **एतद्भावेति** । तथा सति पदकर्मके विधाने इत्यर्थापत्तौ समासाद्यसंग्रहः स्याद्, वत्वसाद्यादेशविधौ चातिप्रसङ्गः स्यादिति भावः ॥ **इह सूत्रे ॥ इतर इति** । प्रकरणपर्यालोचनयेति भावः ॥ समासपदं वृत्तिमात्रोपलक्षणम् ॥ **समुदायो चेति** । स ह्यवयवभूतपदानां कार्यैः, समूहस्यावयवातिरिक्तताया अपि स्वीकारादिति भावः ॥ विभक्त्यन्तस्य पदत्वाद् विभक्तिविधानस्य कथं पदोद्देश्यकविधित्वमित्याशङ्क्याह—**विभक्तीति ॥ एवं हीति** । विहितानां नियमस्य विधिना पक्षप्राप्तेतरविभक्त्यन्तानां निवृत्तिरूपस्याश्रयणेन सा निवृत्तिः पदोद्देश्यिकेत्यर्थः ॥ केचित्तु पदोद्देश्यकः पदत्वसंपादको वा सर्वोपि पदसंबन्धित्वात्पदविधिरेवेति वदन्ति ॥ ननु किं **विधीयत** इति प्रश्ने **विभक्तिविधान**मित्युत्तरमयुक्तं विधानस्य विधानकर्मत्वाभावादत आह—**तत्र विभक्त्यवेति** । एवं च पाकं पचतीतिवत् सामान्यविशेषभावेनान्वय इति भावः । क्रियाविशेषणत्वाच्च कर्मत्वम् ॥

( इति विधिशब्दार्थनिरूपणम् )

( परिभाषात्वनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयमधिकारः, आहोस्वित् परिभाषा ? ॥**

( प्रदीपः ) कार्यविशेषानिर्देशादस्य पारार्थ्यमवगत्य परार्थेषु रूपद्वयं दृष्ट्वा पृच्छति—**किं पुनरिति** ॥ नन्वधिकारेस्मिन् पदविधिग्रहणमनर्थकम् । उत्तरेषां पदविधित्वाव्यभिचारात् । तस्मात् पदविधिग्रहणात् परिभाषात्वनिश्चयात् प्रश्नानुपपत्तिः ॥ एवं तर्हि युक्तायुक्तत्वापेक्षया प्रश्नः । तत्र यद्यधिकारपक्षस्य युक्तत्वं तदा न कर्तव्यं पदविधिग्रहणम् । परिभाषाया युक्तत्वे कर्तव्यम् । अधिकारपक्षेपि वा[5] विस्पष्टार्थं भविष्यति ॥

१ 'तु' । २ किप्रत्ययान्तस्यैव विधिशब्दस्य प्रयोगदर्शनम्, उत्तरे, विपूर्वाद् धाञः कर्मसाधन इकारो विधीयत इति समाधाने हेतुरित्यर्थः । ( र. ना. )

३ 'पदसमुदायो' । ४ 'कर्मविधान' । ५ 'संज्ञया' ।

( उद्योतः ) रूपद्वयमिति । यद्यपि संज्ञात्वमपि तत्र, तथाप्येतद्रूपया तया शास्त्रे व्यवहाराभावात्तन्नोक्तम् ॥

( प्रत्याक्षेपभाष्यम् )

**कः पुनरधिकारपरिभाषयोर्विशेषः ? ॥**

( प्रदीपः ) **कः पुनरिति** । अन्योत्र प्रष्टा विज्ञेयः ॥ आद्येन तु तद्विशेषज्ञेन भवितव्यम् । अन्यथा **किं पुनरयमधिकार** इति प्रश्नो नोपपद्यते ॥

( उद्योतः ) अन्येनेति । पूर्वपक्षिणा सिद्धान्तिना चेत्यर्थः ॥ आद्येनेति पाठे किं पुनरिति सन्देहकर्त्रेत्यर्थः ॥ अन्यथा । अधिकारपरिभाषयोर्विशेषाज्ञाने ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगेयोगे उपतिष्ठते ॥ परिभाषा पुनरेकदेशस्था सती कृत्स्नं शास्त्रमभिज्वलयति प्रदीपवत् । तद्यथा— प्रदीपः सुप्रज्वलित एकदेशस्थः सर्वं वेश्माभिज्वलयति ॥**

( प्रदीपः ) **अधिकारः प्रतियोगमिति** ॥ स्वरूपे पृष्टे फलाख्यानं तद्द्वारेण स्वरूपावबोधार्थम् । अधिक्रियमाणस्य हि प्रतियोगमुपस्थाने सति तदनिर्देशः फलं संपद्यते ॥ **परिभाषा पुनरिति** । लिङ्गोपादानेन परिभाषा क्रियमाणा यत्रयत्र तल्लिङ्गोपलम्भस्तत्तद्व्याप्नोतीत्यर्थः । प्रदेशान्तरेषु तु परार्थतासामान्यादधिकारपरिभाषयोरभेदेन व्यवहारो भाष्यकारस्य **अधिकारो नाम त्रिःप्रकार** इति । तथा **द्वयोः परिभाषयोः सावकाशयोः समुपस्थितयोरिति** ॥

( उद्योतः ) फलाख्यानम् । तस्यानिर्देशार्थ इत्येतत् ॥ स्वरूपम् । योगेयोगेऽनुपस्थितिरूपम् ॥ लिङ्गोपादानेनेति । स्वरितत्वप्रयुक्ताधिकारेणोत्तरत्र तत्तत्पदोपस्थितिरधिकारान्तरं दृष्ट्वा व्याख्यानाद्वा निवृत्तिश्च । परिभाषायास्तु लिङ्गवति सर्वत्र तेषां सर्वेषामत्रोपस्थित्या परिभाषाया वा तत्रतत्रोपस्थित्या स्वार्थोपस्थितिद्वारा व्याप्तिरिति भावः । इदं च षष्ठी स्थाने इति सूत्रे निरूपितम् तदुक्तम्—

"एकदेशस्थिता शास्त्रभवने याति दीपताम् ।
परितो व्यापृतां भाषां परिभाषां प्रचक्षते" ॥

प्रदेशान्तरेष्विति । षष्ठी स्थाने इति सूत्रे आद्यं, निपात एकाजनाङिल्त्यत्र चान्त्यम् । तत्र च पारार्थ्यसामान्यादतिदेशसंज्ञयोः परिभाषात्वेन व्यवहार इति बोध्यम् ॥

( प्रत्याक्षेपान्तरभाष्यम् )

**कः पुनरत्र प्रयत्नविशेषः ? ॥**

( प्रदीपः ) **कः पुनरत्रेति** । कस्मिन् पक्षे यत्नस्य लाघवं भवति, कस्मिन् वा गौरवमिति प्रश्नः ॥

( प्रत्याक्षेपान्तरसमाधानभाष्यम् )

**अधिकारे सति स्वरयितव्यम् । परिभाषायां तु सर्वमपेक्ष्यम् ॥**

( प्रदीपः ) **स्वरयितव्यमिति** । स्वरितगुणयुक्तं समर्थग्रहणं पठितव्यमित्यर्थः । तत्र स्वरितो गुणः क्रियारूपेण स्वरयितव्यमिति निर्दिष्टः, यथा श्वेतो गुणः श्वेतते इति । पदविधिग्रहणं चात्र पक्षे न कर्तव्यमित्यर्थादुक्तं भवति ॥ **सर्वमपेक्ष्यमिति** । यावन्ति पदकार्याणि तानि सर्वाण्यपेक्ष्य पदविधिशब्दोपादानेन च परिभाषा कर्तव्येत्यर्थः । अन्यास्वपि परिभाषासु यल्लिङ्गमुपादीयते तल्लिङ्गयुक्तापेक्षा क्रियते ॥

( उद्योतः ) स्वरितगुणयुक्तमिति । स्वरवच्छब्दाद्धात्वर्थे णिचि मतोर्लुकि टिलोपाभावेप्यङ्गवृत्तपरिभाषया वृद्ध्यभावे आद्गुणे रूपमिति भावः ॥ यद्वाऽर्शआद्यजन्तस्वरशब्दाद् णिचीदं रूपम् ॥ यावन्तीति । भाष्ये सर्वमित्यस्य लिङ्गवत्सर्वं शास्त्रमित्यर्थः । तानि सर्वाणि पदविधिशब्दोपादानेन सामान्यतः पदविधित्वेन । अपेक्ष्य अनूद्येत्यर्थः ॥

( संदेहान्तरभाष्यम् )

**तथेदमपरं द्वैतं भवति—एकार्थीभावो वा सामर्थ्यं स्यात्, व्यपेक्षा वेति ? ॥**

( प्रदीपः ) **द्वैतमिति** । द्वयोर्भावो द्विता तत्र भवं द्वैतं संशयरूपं ज्ञानमुच्यते । अथ वा द्वाभ्यामितं प्रकारद्वयेन विरुद्धत्वाद्भिन्नाधारवर्तिना युक्तं वस्तु द्वीतं तत्र भवं द्वैतं तदेव संशयज्ञानम् ॥ **एकार्थीभाव इति** ॥ यत्र पदान्युपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानाद्यर्थानि, अर्थान्तराभिधायीनि वा स **एकार्थीभावः** ॥ परस्पराकाङ्क्षारूपा **व्यपेक्षा** ॥

( उद्योतः ) द्वयोर्भावो द्वितेति । कोटिद्वये सत्येव संशयोदयाद् द्वित्वभवः संदेह इति भावः ॥ द्विविषयनिश्चयस्यापि द्वित्वभवत्वादाह—अथ वेति । विरुद्धत्वाद्भिन्नाधारवर्तिना प्रकारद्वयेन युक्तमित्यन्वयः । परस्परविरुद्धधर्मद्वयवद्वस्तुद्वयमित्यर्थः ॥ अनेकार्थस्यैकार्थत्वमेकार्थीभाव इति शब्दशक्तिमनुसृत्य जहत्स्वार्थाजहत्स्वार्थयोस्तं दर्शयिष्यन्नादावजहत्स्वार्थायां तं दर्शयति—यत्र पदानीति ॥ उपसर्जनपदानीत्यर्थः ॥ तदेव ध्वनयन्नाह—उपसर्जनभूतस्वार्थानीति । इतरविशेषणभूतस्वार्थोपस्थापकानीत्यर्थः । न तु पृथक्स्वार्थोपस्थापकानीति तात्पर्यम् । एवं च तत्पुरुषादावेकं पदं तादृशम्, बहुव्रीहौ द्वन्द्वे च पदद्वयमपीति बोध्यम् ॥ जहत्स्वार्थायामाह—निवृत्तस्वार्थानि वेति । उभयत्रापि हेतुः—प्रधानार्थोपादानादिति । आद्ये प्रधानार्थेन स्वोपस्थितिकाले एवोपसर्जनपदार्थस्य विशेषणतयोपादानादित्यर्थः । अन्त्ये प्रधानेन पदेन तदर्थस्याप्युपादानादित्यर्थः । बहुव्रीहौ तु प्रधानं पदं समुदाय इति बोध्यम् ॥ एवं द्वन्द्वेऽपि प्रधानं पदं समुदायस्तदर्थेन साहित्येन

१ परार्थेष्वित्यर्थः । ( र. ना. ) २ 'ऽनया' । ३ 'अन्येन' । ४ 'प्र' । ५ 'स्थिता सर्वं शा-' । ६ 'प एकदेशस्थः सुप्र' । ७ लिङ्गवति सर्वत्रेत्यस्य व्याप्तिरित्यनेन संबन्धः । ( र. ना. ) ८ अधिकारे इति पदविधिशब्दोऽनुपादेयः, परिभाषायां तु उपादेय इति परिभाषापक्षे प्रयत्नगौरवमिति भावः । ( र. ना. ) ९ 'नेन परि' ।

स्वविशेषणतया धवाद्यर्थस्योपादानादुपसर्जनभूतस्वार्थानि । यद्वा विशेष्यसाहित्योपस्थापकतया प्रधानेन समुदायेनैव धवाद्यर्थस्याप्युपादानान्निवृत्तस्वार्थानि वेति । तत्राप्ययमेकार्थीभावः, समाहारेतरेतरयोगयोरुभयोरपि साहित्यं विशेष्यम् । आद्येऽनुद्भूतावयवभेदमन्त्ये उद्भूतावयवभेदमित्येव तयोर्भेद इति बोध्यम् ॥ **स्वार्थानीति ।** संनिहितत्वान्निवृत्तस्वार्थानीत्येतत्पक्षान्वयि ॥ आद्ये आह—**अर्थान्तरेति ।** अर्थान्तरान्वितस्वार्थाभिधायीनीत्यर्थः । प्रत्येकशक्तिसहकृतसमुदायशक्त्या विशिष्टार्थप्रतिपादकानीति भावः ॥ **पदानीति ।** बहुवचनं तु बहुव्रीह्याद्यभिप्रायेण ॥ **स एकार्थीभाव इति ।** आद्ये एकीभूतार्थानि मिलितार्थानीत्यर्थः । तत्र मिलनस्येतरसाकाङ्क्षत्वाद् द्वयोरपि समर्थत्वं तत्पुरुषादौ । अन्त्ये पदद्वयार्थयोरेकपदार्थत्वप्राप्तिरित्यर्थः ॥ **परस्परेति ।** विशब्दस्य क्रियाव्यतीहारवृत्तित्वादिति भावः ॥

### ( एकार्थीभावव्यपेक्षयोर्विशेषप्रदर्शकभाष्यम् )

**तत्रैकार्थीभावे सामर्थ्येऽधिकारे च सति समास एकः संगृहीतो भवति । विभक्तिविधानं पराङ्गवद्भावश्चासंगृहीतः ॥**

**व्यपेक्षायां पुनः सामर्थ्येऽधिकारे च सति विभक्तिविधानं पराङ्गवद्भावश्च संगृहीतौ भवति । समासस्त्वेकोऽसंगृहीतः ॥ अन्यत्र खल्वपि समर्थग्रहणानि युक्तग्रहणानि च कर्तव्यानि भवन्ति ॥ कान्यत्र ? । "इसुसोः सामर्थ्ये" "न चवाहाहैवयुक्ते" इति ॥**

**व्यपेक्षायां पुनः सामर्थ्ये परिभाषायां च सत्यां यावान् व्याकरणे पदगन्धो नाम स सर्वः संगृहीतो भवति । समासस्त्वेकोऽसंगृहीतः ॥**

( प्रदीपः ) **समास एक इति ।** तत्रैवैकार्थीभावस्य सद्भावात् ॥

( उद्द्योतः ) **तत्रैवैकार्थीभावस्येति ।** तदुक्तत्रयाणां मध्ये तत्रैवेत्यर्थः ॥ व्यपेक्षासहिताधिकारत्वेऽधिकारत्वप्रयुक्तदोषमाह—भाष्ये—**अन्यत्र खल्वपीति ॥** एकार्थीभावसहिताधिकारत्वेऽधिकारत्वप्रयुक्तो दोषस्तु मध्ये पादद्वये निवृत्त्या तृतीयाध्यायादावसंबन्धो बोध्यः ॥ एतेनाधिकारत्वसहितोभयविधसामर्थ्याश्रयणपक्षोपि निरस्तः ॥

### ( सिद्धान्तभाष्यम् )

**तत्रैकार्थीभावः सामर्थ्यं परिभाषा चेत्येवं सूत्रमभिन्नतरकं भवति ॥**

( प्रदीपः ) **तत्रेति ।** एकार्थीभावः सामर्थ्यमधिकार इत्येकः पक्षः । व्यपेक्षा सामर्थ्यमधिकार इति द्वितीयः पक्षः । द्विविधं सामर्थ्यमधिकार इति तृतीयः । एवं परिभाषायामपि त्रयः पक्षा इति षट्पक्षीसंभवे एकार्थीभावः परिभाषा चेति निर्णयः ॥ **अभिन्नतरकमिति ।** उभयविधे सामर्थ्ये आश्रीयमाणेऽर्थस्य भेदात् सूत्रस्य भेदः स्यात् । भिन्नेन सामर्थ्येन भिन्नेषु वाक्येषु उपस्थानात् ॥ व्यपेक्षायामपि सामर्थ्ये यद्यपि सूत्रमभिन्नं भवति, तथाप्येकार्थीभावे सामर्थ्ये दोषाभावात् प्रकर्षयोगादभिन्नतरकमित्युच्यते ॥ तत्र पराङ्गवद्भावे तन्निमित्तग्रहणाद्दोषाभावः । विभक्तिविधानेपि कारकविभक्तिषु क्रियाकारकयोर्व्यपेक्षाऽविनाभावित्वादुपपदविभक्तिषु युक्तयोगग्रहणसद्भावात् क्वचित् तृतीयया योगस्याक्षेपादेतदनुपस्थानेपि न दोषः । परिभाषायां च सुब्धातुप्रभृतयः सर्वा वृत्तयः संगृहीता भवन्ति । एकार्थीभावे चेहाश्रितेऽन्यत्र युक्तग्रहणं समर्थग्रहणं च कृतमेवेति तत्रापि न दोषः ॥

( उद्द्योतः ) **उभयविधे इति ।** अधिकारत्वे परिभाषात्वे चेत्यर्थः ॥ **भेदो** वैरूप्यलक्षणः ॥ ननु पराङ्गवद्भावविधानासंग्रहो दोषोऽत आह—**तत्रेति ॥ व्यपेक्षाऽविनाभावित्वादिति ।** व्यपेक्षाया नियतत्वादित्यर्थः । एवं चैतदुपस्थितिं विनापि तत्र न दोषः, क्रियाकारकयोरेकार्थीभावासंभवश्चेति भावः ॥ अत्र क्रियाकारकयोरित्युक्त्या प्रकृत्यर्थविभक्त्यर्थयोः सर्वथा व्यपेक्षाभावो दर्शितः ॥ इदानीमेकार्थीभावसहितपरिभाषापक्षे उक्तं प्रकर्षयोगमुपपादयति—**सुब्धातुप्रभृतय इति ।** एतेनाधिकारत्वे एतदसंग्रहो दोष इति ध्वनितम् ॥ **अन्यत्र युक्तग्रहणमिति ।** तथा च तदेवात्रैकार्थीभावसामर्थ्याश्रयणे लिङ्गमिति भावः ॥

### ( आक्षेपभाष्यम् )

**एवमपि क्वचिदकर्तव्यं समर्थग्रहणं क्रियते । क्वचिच्च कर्तव्यं न क्रियते । अकर्तव्यं तावत्क्रियते—"समर्थानां प्रथमाद्वा" इति । कर्तव्यं न क्रियते—"कर्मण्यण्" समर्थादिति ॥**

( प्रदीपः ) **समर्थानामिति ।** घकालतनेषु कालनाम्न इत्यलुग्विधानाल्लिङ्गाद्विभक्त्यन्तात् तद्धित उत्पद्यते इति पदविधित्वादेतत्परिभाषोपस्थितौ असामर्थ्ये प्रत्ययाप्रसङ्गात् ॥ **कर्मण्यणिति ।** पञ्चकप्रातिपदिकार्थपक्षे प्रातिपदिकेनैव कर्मण उपादानान्नास्ति पदविधित्वम् । त्रिकादिपक्षे तु विभक्तिवाच्यत्वात् कर्मणः पदविधित्वादेतत्परिभाषोपस्थानान्नास्ति दोषः ॥

( उद्द्योतः ) **समर्थानां** प्रथमादित्यत्र समर्थपदस्य कृतसन्धिकार्थार्थकत्वमजानान आह—**एवमपि क्व चिदिति ॥ लिङ्गादिति ।** एतल्लिङ्गमूलकाकुत्सितइतिसूत्रभाष्योक्तन्यायादित्यर्थः । कृतसन्धिकार्यत्वार्थकमपि तत्र तद्व्यर्थम्, सौत्थितावन्तरङ्गत्वेनैव पूर्वं सन्धिकार्यप्रवृत्तेर्विप्रतिषेधसूत्रे भाष्ये उक्तत्वात् ॥ **पञ्चकेति ।** इदं चिन्त्यम् । तत्पक्षेपि तदर्थद्योतकतया विभक्तेरावश्यकत्वात् ॥ भाष्ये पूर्वपक्ष्याशयस्त्वेवं पदविधिशब्देन पदोद्देश्यकविधिग्रहणम् । एवं च साक्षात्पदोद्देश्यके समासतद्धितादावेव स्यान्न त्वत्र । अत्र हि यः साक्षादुद्देश्यो धातुर्न स पदम् । किं च धातोरण्

१ 'तः स्यात्' । २ 'संगृहीतः' । ३ 'मेव' । ४ व्यापकत्वादित्यर्थः । कारकविभक्तयो व्याख्याः । ( र. ना. ) ५ 'परस्थानाद्' । ६ स्वार्थे परिपूर्णं पदं पदान्तरेणाभिसंबध्यते इति न्यायादित्यर्थः । ( र. ना. )

कर्म चोपपदसंज्ञमिति सूत्रार्थात्सन्नियोगशिष्टन्यायेन तत्र सति प्रत्यय इति न तदुद्देश्यकः प्रत्ययविधिः । उपपदसंज्ञायास्तदुद्देश्यकत्वेपि तत्रैकार्थीभावयोग्यद्वितीयाभाव[1] इति ॥

( आक्षेपबाधकभाष्यम् )

**ननु च गम्यते तत्र सामर्थ्यं कुम्भकारो नगरकार इति ॥**

**( प्रदीपः ) ननु चेति** । यदि कुम्भकारशब्दः समर्थाभिधायी चासमर्थाभिधायी च स्यात् ततोऽसमर्थाभिधायिप्रयोगनिवृत्त्यर्थो यत्नः कर्तव्यः स्यान्न त्वन्यथेत्यर्थः ॥

**( उद्द्योतः )** देवदत्तस्य कुम्भं करोतीत्यादौ प्रत्ययनिवृत्तये समर्थग्रहणस्यावश्यकत्वात्किमुच्यते गम्यते तत्र सामर्थ्यमित्यत आह—यदीति । प्रयुक्तानामिदमन्वाख्यानं लोकप्रयुक्तासाधोरेव निवर्तकमिति न दोष इति भावः ॥

( आक्षेपसाधकभाष्यम् )

**सत्यम् । गम्यते उत्पन्ने हि[2] प्रत्यये । स एव तावत्समर्थादुत्पाद्यः ॥**

**( प्रदीपः ) स एव तावदिति** । यथा समासादयोऽसमर्थानां मा भूवन्नित्येवमर्थमिदं वचनं क्रियते तद्वदत्रापि समर्थग्रहणमसामर्थ्ये प्रत्ययनिवृत्त्यर्थं कर्तव्यमित्यर्थः । प्रतिविधानं तु सुज्ञानत्वाद्भाष्यकृता नोक्तम् । यत उपपदमिति महत्याः संज्ञायाः करणं प्रत्ययस्य पदाश्रयत्वे सति समर्थपरिभाषाव्यापारार्थमेव ॥

**( उद्द्योतः )** भाष्ये—उत्पन्ने हीति हिस्त्वर्थे ॥ **यथा समासादय इति** । अन्यथात्रापि तद्वैयर्थ्यं स्यात् । प्रयुक्ताप्रयुक्तत्वविवेकरहितानामर्थे इहेव तत्रापि कर्तव्यमित्यर्थः ॥ **महत्याः संज्ञाया इति** । संज्ञासूत्रस्थतन्त्रग्रहणस्य चेत्यपि बोध्यम् । यथाकथंचित्पदसंबन्धिविधेस्तत्र ग्रहणमिति भावः ॥

( इति परिभाषात्वनिरूपणम् )

—→∘←—

## ( अथ समर्थपरिभाषाप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ समर्थग्रहणं किमर्थम् ? ॥**

**( प्रदीपः ) अथेति** । प्रधानपर्यनुयोगद्वारेण सूत्रस्यैवाक्षेपः । यद्यप्यनेन सामर्थ्यं न विधीयते, नहि स्वतोऽसमर्थस्य सामर्थ्यं वचनेन कर्तुं पार्यते । तथापि पदविधौ सामर्थ्योपस्थानार्थत्वाद् अस्य समर्थपदस्य प्राधान्यमुच्यते ॥

**( उद्द्योतः ) न विधीयत इति** । एवं च न तस्य प्रधानत्वमिति भावः ॥ **सामर्थ्योपस्थानं** समर्थपदोपस्थानम् ॥

( समाधानभाष्यम् )

**वक्ष्यति—'द्वितीया श्रितादिभिः समस्यते' कष्टश्रितो नरकश्रित इति ॥ समर्थग्रहणं किमर्थम् ? ॥ पश्य देवदत्त कष्टं, श्रितो विष्णुमित्रो गुरुकुलम् ॥**

**"तृतीया तत्कृतार्थेन गुणवचनेन" उपादानविकलः[3], शङ्कुलाखण्डः, किरिकाणः[4] ॥ समर्थग्रहणं किमर्थम् ? त्वं तिष्ठ शङ्कुलया, खण्डो धावति मुसलेन । किं त्वं करिष्यसि शङ्कुलया, खण्डो विष्णुमित्र उपलेन ॥**

**"चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" । गोहितम् । वृषभहितम् । अश्वहितम् ॥ समर्थग्रहणं किमर्थम् ? । सुखं गोभ्यो, हितं देवदत्ताय ॥**

**"पञ्चमी भयेन" वृकभयं दस्युभयं चोरभयम् ॥ समर्थग्रहणं किमर्थम् ? । गच्छ त्वं मा वृकेभ्यो, भयं देवदत्तायज्ञदत्तस्य ॥**

**'षष्ठी सुबन्तेन समस्यते' । राजपुरुषः । ब्राह्मणकम्बलः ॥ समर्थग्रहणं किमर्थम् ? । भार्या राज्ञः, पुरुषो देवदत्तस्येति ॥**

**"सप्तमी शौण्डैः" अक्षशौण्डः स्त्रीशौण्डः ॥ समर्थग्रहणं किमर्थम् ? । कुशलो देवदत्तोऽक्षेषु, शौण्डः पिबति पानागारे ॥**

**( प्रदीपः ) समस्यत इति** । यद्यपि समाससंज्ञामात्रं विधीयते । तथाप्यबुधबोधनाय भिन्नयोः शब्दयोः संश्लेषः प्रक्रियायां क्रियत इति समस्यत इत्युक्तम् ॥ **पश्येति** । असति सूत्रे द्वितीयान्तमात्रं श्रितादिभिः समस्येताविरोधात् । एकार्थीभावाभावेपि वचनात् समाससंज्ञा स्यात् । अनर्थकस्यापि च समासस्य वचनात् प्रातिपदिकसंज्ञा स्यात् । विध्यर्थत्वसंभवे च समासग्रहणस्य नियमार्थत्वानुपपादनाद्वाक्यस्य[5] प्रातिपदिकसंज्ञानिषेधः कर्तव्य एव स्यात् । एकार्थीभावाभावेपि चोत्तरपदार्थस्य बाह्यसंबन्धिनं प्रति योग्यत्वाहानाद्विभक्तयः स्युरेव ॥ **खण्डो धावतीति** । तृतीयान्तार्थकृतत्वमत्रास्तीति समासः स्यात् ॥

**( उद्द्योतः )** पश्य देवदत्त कष्टमिति कष्टपदार्थमाह[6]—**श्रित इति** ॥ नन्वसत्यपि समर्थग्रहणे एकार्थीभावाभावेऽनर्थकत्वेन प्रातिपदिकसंज्ञाऽप्रवृत्तौ फलाभावात्समासोऽपि न स्यात् सूत्रं त्वेकार्थीभाववति चरितार्थमित्यत आह—**असति सूत्रे इति** ॥ नन्वेकार्थीभावविषये एव समासः शिष्टैः प्रयुज्यते इति कथमेतदत आह—**वचनादिति** ॥ लक्षणमात्रशरणं प्रति सूत्रारम्भ इति भावः ॥ ननु फलाभावोऽत आह—**वचनादिति** । कृत्तद्धितेतिवचनादित्यर्थः ॥ **बाह्यसंबन्धिनमिति** । विष्णुमित्रादयो बाह्यसंबन्धिनः ॥ भाष्ये—**उपादानविकल इति** । उपादानेन कृतो विकल इत्यर्थः ॥ **तिष्ठ त्वमिति** । तिष्ठ त्वं, शङ्कुलया न प्रयोजनं, मुसलेन कृतः खण्डो धावतीत्यर्थः ॥ **शङ्कुलयेति** सहयोगे तृतीयेत्यपि कश्चित् । हे विष्णुमित्र, त्वं शङ्कुलया किं करिष्यस्युपलेन पाषाणेन कृतः खण्ड इति द्वितीयार्थः ॥ ननु खण्डस्य

---

१ एकार्थीभावयोग्यस्य द्वितीयस्योपपदसंज्ञायामभाव इत्यर्थः । ( र. ना. ) २ 'तु' । ३ उपादीयते गृह्यतेऽनेनेत्युपादानं करणमिन्द्रियं तेन विकल इत्यर्थः । ( र. ना. ) ४ किरिः कश्चन नेत्ररोगः । ( र.ना. ) ५ 'वाक्यस्यापि' । ६ कष्टपदसंबन्ध्यार्थमित्यर्थः । ( र. ना. )

प्रकृततृतीयान्तार्थकृतत्वं नास्तीत्यत आह—**तृतीयान्तार्थेति** । तच्छब्देन तृतीयान्तमात्रं परामृश्यते, तचात्र खण्डनस्य करणसाध्यत्वावश्यम्भावादवश्यमस्त्येवेति भावः । प्रत्यासत्तिर्नाश्रीयत इत्यभिप्रायः ॥ **वृकेभ्य** इत्यस्य मा भैषीरिति क्रियां प्रत्यपादानत्वं, यज्ञदत्ताद्देवदत्तोऽवश्यं रक्ष्य इति मार्गे संभावितमपि वृकभयं त्यक्त्वा तद्रक्षणार्थं त्वं गच्छेति वाक्यार्थः ॥

**( आक्षेपभाष्यम् )**

**अथ क्रियमाणेपि समर्थग्रहणे इह कस्मान्न भवति–महत्कष्टं श्रित इति ? ॥**

**( प्रदीपः ) महत्कष्टमिति ।** अस्त्येवात्र श्रयणक्रियया सामर्थ्यमिति प्रश्नः ॥ यद्यत्र कष्टश्रितशब्दयोः समासः स्यात्तदा महत्कष्टश्रित इति स्यात् । अथापि त्रयाणां पदानां समासः स्यात्तथाप्युत्तरपदे विधीयमानमात्त्वं मध्यमपदे न स्यात् । अथापि त्रयाणां समासे कृते **सन्महदिति** द्वयोः समासः । य एव च महाकष्टं श्रितो महाकष्टश्रित इत्यत्राहीने **द्वितीयेति** स्वरो भवति, तत्र स एव **समासस्येत्य**नेन, तथापि महारण्यातीत इत्यत्र स्वरो भिद्यते । महारण्यमतीत इति द्विपदे समासे कृते **थाथादिस्वरः**, त्रिपदे तु समासे कृते **सन्महदिति** द्वयोस्तत्पुरुषे कृते सति महारण्यशब्दः समासस्वरेणान्तोदात्तः स्यात् । यथा पूर्वं शालाप्रियं[1] इत्यत्र शालाशब्द उदात्तः ॥ अन्येत्वाहुः—त्रयाणां समासे कृते प्रधानार्थाभिधायित्वान् महत्कष्टशब्दयोः परस्परसंबन्धाभावात् पूज्यमानत्वं विशेषणविशेष्यत्वं च नास्तीति समासो न स्यात् ततश्चात्त्वं न स्यात् । **अहीने द्वितीयेति** महच्छब्दस्य प्रकृतिस्वरश्च प्रसज्येत ॥

**( उद्द्योतः ) अस्त्येवात्रेति ।** सर्वेषां कारकाणां साक्षात्परम्परया वा क्रियायामन्वयादिति भावः ॥ भाष्ये **इह कस्मान्नेति ।** समास इति शेषः । ननु यदि सामर्थ्यमस्ति, अस्तु समासः को दोष इत्यत आह—**यद्यत्रेति ॥ तदा महत्कष्टेति ।** महदिति पृथक् पदम् ॥ **महाकष्टं श्रित इति ।** एतद्विग्रहके समासे य एवाहीने **द्वितीयेत्य**नेन पूर्वपदप्रकृतिस्वरे ष्टकाराकार उदात्तः, त्रिपदसमासेऽवान्तरतत्पुरुषे तस्य समासान्तोदात्तत्वेपि स एवेत्यर्थः ॥ **समासस्येत्यनेनेति ।** अवान्तरतत्पुरुषनिमित्तकेनेत्यर्थः ॥ **थाथादिस्वर इति ।** क्तप्रत्ययाकार उदात्त इत्यर्थः । तेनान्तोदात्तविधानात् ॥ **यथेति ।** तत्र हि त्रिपदे बहुव्रीहाववान्तरतत्पुरुषे **तद्धितार्थेत्य**नेन जाते सति शिष्टत्वाद्वावान्तरतत्पुरुषयुक्तः[2] स्वर इत्यर्थः ॥ परे तु महान्देवदत्तः प्रियो यस्येति त्रिपदबहुव्रीहौ महादेवदत्तप्रिय इत्यस्याभावाय महद्देवदत्तप्रिय इत्यस्य सिद्धये त्रिपदसमासेऽवान्तरपदयोः **सन्महदिति** समासाप्रवृत्तिर्वहुलग्रहणादिति महत्कष्टश्रित इत्येवैकपर्यायेनैकस्वरः स्यात्तच्च नेष्यत इति भाष्याभिप्रायः ॥ **विशेषणं विशेष्येणेत्यस्य** त्रिपदे समासेऽवान्तरपदयोरप्रवृत्तिं सूत्रशेषे[3] वदता तत्प्रपञ्चभूतानां पूर्वनिपातनियमार्थानां च तत्राप्रवृत्तिरुक्तप्रायैवेत्याहुः ॥ **परस्परं संबन्धाभावादिति ।** पृथगेकार्थीभावाभावादित्यर्थः ॥ **पूज्यमानत्वमिति ।** कष्टेन महत्त्वस्यान्वयाभावादिति भावः ॥ **विशेषणविशेष्यत्वं चेति ।** अन्येनैकार्थीभावादेव परस्परं तत्त्वाभाव इत्यर्थः ॥ **समासो न स्यादिति ।** अवान्तरतत्पुरुषो न स्यादित्यर्थः ॥ **स्वरश्च प्रसज्येतेति ।** सौवरीणां सप्तमीनां तदन्तसप्तमीत्वादहीनवाचिक्तान्तोत्तरपदान्तस्य समासस्य संबन्धि द्वितीयान्तं पूर्वपदं प्रकृत्येत्यर्थादिति भावः ॥ अत्रारुचिवीजं तु त्रयाणामेकार्थीभावे द्वयोरपि सोऽस्त्येव पृथगेकार्थीभावाभावेपि न क्षतिरिति ॥

**( प्रत्याक्षेपभाष्यम् )**

**न वा भवति महाकष्टश्रित इति ? ॥**

**( प्रदीपः ) न वा भवतीति ।** यथा भार्या राज्ञः पुरुषो देवदत्तस्येत्यत्रात्यन्तमसमासो, नैवमिहेति भावः ॥

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**भवति, यदैतद्वाक्यं भवति—महत्कष्टं महाकष्टं महाकष्टं श्रितो महाकष्टश्रित इति । यदा त्वेतद्वाक्यं भवति—महत्कष्टं श्रित इति, तदा न भवितव्यम् । तदा च प्राप्नोति ॥**

**( प्रदीपः ) भवति यदेति ।** श्रितशब्दमनपेक्षमाणयोः परस्परापेक्षायां महत्कष्टयोः समासे कृते श्रितशब्देन समासः ।

**( उद्द्योतः ) [ महाकष्टश्रित इति ।** यदैवं वाक्यं तदा समासेन महाकष्टश्रित इति भवतीत्यर्थः ॥ **तदा न भवितव्यमिति ।** समासेनेति शेषः ॥ ]

**( आक्षेपभाष्यम् )**

**तदा कस्मान्न भवति ? ॥**

**( प्रत्याक्षेपभाष्यम् )**

**कस्य कस्मान्न भवति । किं द्वयोः, आहोस्विद्बहूनाम् ? ॥**

**( प्रदीपः ) कस्य कस्मादिति ।** सामान्यनिर्देशः पदद्वयात्मकस्य पदत्रयात्मकस्य च समुदायस्य प्रदर्शनार्थः ॥

**( उद्द्योतः ) सामान्येति ।** अन्यथैकपदस्य समासाभावेनैकवचननिर्देशोऽसंगतः स्यादिति भावः । तत्फलं दर्शयति—**पदद्वयात्मकस्येति ॥**

**( आक्षेपाशयाविष्कारभाष्यम् )**

**बहूनां कस्मान्न भवति ? ॥**

**( प्रदीपः ) बहूनां कस्मान्न भवतीति ।** द्वयोरपि श्रितापेक्षया कर्मत्वे श्रितेन सामर्थ्यं द्वयोरप्यस्ति । कष्टस्यैव वा कर्मत्वे तद्द्वारेण महतोपि श्रितेन सामर्थ्यमस्तीति भावः ॥

**( समाधानभाष्यम् )**

**सुप्सुपेति वर्तते ॥**

---

1 'प्रिये शाला' । 2 शिष्टत्वादवान्तरेत्यादि पाठः साधुः । ( र. ना. ) 3 विशेषणं विशेष्येणेति सूत्रे इति शेषः । ( र. ना. ) 4 महत्कष्टशब्दे इति भावः । ( र. ना. ) 5 किन्तु भवत्येवेति काका गम्यते । ( र. ना. ) 6 अयं कोष्ठकान्तर्गतः पाठो यद्यपि सर्वेषूपलभ्यमानपुस्तकेषु "भाष्ये–इह कस्मान्नेति । समास इति शेषः ॥" इत्युत्तरं समुपलभ्यते । तथापि योग्यस्थानेऽस्माभिः स्थापित इति बोध्यम् ।

(प्रदीपः) **सुप्सुपेति वर्तत इति** । संख्याया विवक्षितत्वादेकस्यैव सुबन्तस्यैकेनैव सुबन्तेन समासस्ततो बहूनां न भवतीत्यर्थः । यथा पशुना यजेतेत्यनेकस्य पशोरुपादानाभावस्तथेहापि ॥

(उद्द्योतः) सुबित्यनेन सुबन्तसमुदायाग्रहणे हेतुमाह—**संख्याया इति** ॥ अनियतसंख्यावच्छिन्नस्य संज्ञित्वेऽव्यवस्थापत्तेस्तद्विशेषाकाङ्क्षायामुपात्तसंख्यैव विवक्ष्यत इत्याशयेन दृष्टान्तमाह—**यथा पशुनेति** ॥

(आक्षेपभाष्यम्)

**ननु च भो आकृतौ शास्त्राणि प्रवर्तन्ते । तद्यथा—'प्रातिपदिकाद्' इति वर्तमानेऽन्यस्माच्चान्यस्माच्च प्रातिपदिकादुत्पत्तिर्भवति ॥**

(प्रदीपः) **ननु च भो इति** । यथा ब्राह्मणो न हन्तव्य इति सर्वस्य[1] ब्राह्मणस्य हननप्रतिषेधस्तथेहापि बहूनां समासेन भाव्यमिति भावः ॥

(उद्द्योतः) आकृतौ प्रवर्तमानस्य शास्त्रस्यापि तदाश्रयबहुव्यक्तिषु युगपत्प्रवृत्तिर्न दृष्टेत्याशङ्क्याह— **यथा ब्राह्मण इति** ॥

(समाधानभाष्यम्)

**सत्यमेवमेतत् । आकृतिस्तु प्रत्येकं परिसमाप्यते, न समुदाये । यावत्येतत् परिसमाप्यते प्रातिपदिकादिति, तावत उत्पत्त्या भवितव्यम्, प्रत्येकं चैतत्परिसमाप्यते, न समुदाये । एवमिहापि यावत्येतत्परिसमाप्यते सुप्सुपेति, तावतः समासेन भवितव्यम् । द्वयोश्चैतत्परिसमाप्यते, न बहुषु ॥**

(प्रदीपः) **आकृतिस्त्विति** । एकैकस्यां व्यक्तौ जातिनिमित्त[2]प्रत्ययाभिधानसद्भावात्तत्र यथा प्रातिपदिकसमुदायस्याप्रातिपदिकत्वात्ततो विभक्तीनामनुत्पत्तिः । तथा सुबन्तसमुदाय[3]स्यासुबन्तत्वात् श्रितेन समासाभावः । प्रत्ययस्य सुबन्त[4]समुदायस्य च चिकीर्ष्यस्य[5] प्रधानत्वाद् गुणत्वाच्च प्रातिपदिकस्यावयवयोश्च सुबन्तयोराधारगताया एकत्वसंख्याया विवक्षणात् । ब्राह्मणसमुदायस्य हनने तु शास्त्रार्थोऽतिक्रान्त एव भवतीति ब्राह्मणो न हन्तव्य इत्यादौ निषेधे संख्या न विवक्ष्यते ॥

(उद्द्योतः) **एकैकस्यामिति** । तस्यामेवेत्यर्थः ॥ **प्रत्ययाभिधानेति** । ज्ञानव्यवहारेत्यर्थः ॥ **तथा सुबन्तसमुदायस्येति** । प्रत्ययग्रहणपरिभाषया तस्यासुबन्तत्वात्सुबन्तसमुदायस्य विवक्षितैकत्वकसुप्पदेन वक्तुमशक्यत्वादिति भावः ॥ **चिकीर्ष्यत्वं** विधेयत्वम् ॥ संचिस्कीर्ष्यस्येत्यपाठः । भूषणाद्यर्थाभावात्सुटोऽप्राप्तेः समोऽनुपयोगाच्चेति बोध्यम् ॥ **गुणत्वाच्च प्रातिपदिकस्येति** । प्रधानगता संख्या विवक्ष्यते इति ग्रन्थास्त्वार्थप्राधान्यमादाय बोध्याः ॥ **आधारगताया इति** । जात्याधारद्रव्यगता संख्या विवक्ष्यत इत्यर्थः ॥ नन्वेवं ब्राह्मणो न हन्तव्य इत्यत्रापि जात्याश्रयसंख्याया विवक्षा स्यात्तस्यापि गुणत्वादत आह—**ब्राह्मणसमुदायस्येति** । **शास्त्रार्थोऽतिक्रान्त एवेति** । न्यायेनैवं शास्त्रार्थे जाते कस्यातिक्रम इति चिन्त्यम् ॥ परे तु **सुप्सुपेति वर्तत** इति भाष्यस्य **आकृतिस्तु प्रत्येकं समाप्यत** इति वक्ष्यमाण आशयः । इतरस्त्वेकत्व[6]विवक्षयैकसुबन्तस्यैकसुबन्तेन समास इत्युक्तमिति मत्वा शङ्कते—**ननु च भो इति** ॥ **आकृताविति** । प्रवृत्तिनिमित्ताश्रयसर्वव्यक्तावित्यर्थः । अन्यथा व्यक्तिवादेपि विनिगमनाविरहाद्रूपसामान्येन सर्वत्र कार्यप्रवृत्त्यैतदुक्तिरसंगता स्याद् । एवं चैकत्वविवक्षा कर्तुमशक्येति भावः ॥ सिद्धान्ती स्वाशयं प्रकाशयति—**आकृतिस्त्विति** । शब्दप्रवृत्तिनिमित्तं त्वित्यर्थः । तदेवाह—**यावत्येतत्समाप्यते प्रातिपदिकादितीति** । एतत्पदप्रवृत्तिनिमित्तं प्रातिपदिकत्वादीत्यर्थः ॥ **द्वयोश्चेति** । पदद्वयप्रवृत्तिनिमित्तं प्रत्येकं द्वयोरित्यर्थः । अयं भावः—यथा स्वाङ्गत्वजनपदत्वादेः प्रत्येकं समाप्त्या स्वाङ्गसमुदायजनपदसमुदाययोर्न स्वाङ्गजनपदग्रहणेन ग्रहणं तथा प्रकृतेपि । न च स्वाङ्गादित्यादावप्येकत्वविवक्षया तदर्थलाभः, तत्रत्यैकत्वस्य स्ववाचकप्रत्ययप्रकृत्यर्थस्वाङ्गवाचकशब्दान्वितत्वेपि स्वाङ्गानन्वितत्वेनैकस्वाङ्गवाचकादित्यर्थालाभात् । एको यः स्वाङ्गवाचकः शब्द इत्येतावत एव ततो लाभात् । एवं चोद्देश्यगता संख्याऽविवक्षितैवेति मीमांसकसिद्धान्तविरोधोपि न । किं च प्रातिपदिकसमुदायात्तद्धितशङ्कायां तत्समाधानपरे मतुप्सूत्रस्थे भाष्ये न कैयटोक्तप्रकारो न्याय्यस्तत्र ङ्याप्प्रातिपदिकादित्यस्य समस्तत्वेन समासे संख्याया अभानेनैकत्वस्याभानात् । श्रूयमाणविभक्त्यर्थैकत्वं तु समाहारान्वयीति बोध्यम् । न च तत्पर्याप्त्य[7]धिकरणैरनेकैः समासादिवारणार्थं सां[8], स्त्रीभ्यो ढगित्यादेः स्त्रीप्रत्ययान्तसमुदायादापत्तेस्तत्रापि सत्त्वात् । यथा च तत्र बहुवचनसत्त्वेप्येकैकस्त्रीप्रत्ययान्तादेव प्रत्ययस्तथान्यत्रापीत्याहुः ॥

(आक्षेपभाष्यम्)

**द्वयोस्तर्हि[9] कस्मान्न भवति ? ॥**

(समाधानभाष्यम्)

**असामर्थ्यात् ॥ कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति ॥**

(प्रदीपः) **सापेक्षमसमर्थं भवतीति** । न्यायोयम् । वृत्तौ ह्युपसर्जनपदेन[10] प्रधानार्थाभिधायिना भाव्यम् । स्वविशेषणापेक्षायां च तस्य प्राधान्यमिति कथमेकस्यैकदा प्राधान्यं[11] मेकार्थीभावश्च स्यात् ॥

(उद्द्योतः) **प्रधानार्थाभिधायिनेति** । प्रधानार्थविशेषणीभूतस्वार्थोपस्थापकेनेत्यर्थः । प्राधान्यं स्वार्थमात्रोपस्थापकत्वम् ॥

---

१ 'सर्वब्राह्मणस्य' । २ जातिहेतुकस्य प्रत्ययस्य ज्ञानस्याभिधानस्य च सद्भाव इत्यर्थः । (र. ना.) ३ 'दायस्य श्रितेन' इत्येवमेव बहुत्रोपलभ्यते । ४ लक्षणया समासस्येत्यर्थः । प्रतिपदिकस्यावयवयोश्च सुबन्तयोर्गुणत्वादिति संबन्धः । (र. ना.) ५ 'संचिस्कीर्ष्यस्य' । 'संचिस्कीर्षितस्य' । ६ तथाच सुबन्तान्तरस्य सुबन्तान्तरेण समासो न स्यादिति भावः । (र. ना.) ७ सुबन्तत्वपर्याप्त्यधिकरणैरित्यर्थः । (र. ना.) ८ सुप् सुपेत्यत्रैकत्वसंख्या विवक्ष्यते इत्यर्थः । (र. ना.) ९ महत्कष्टं श्रित इत्यत्र कष्टश्रितशब्दयोरित्यर्थः । (र. ना.) १० 'नीभूतपदेन' 'नभूतपदेन' । ११ 'प्राधान्यं कथमेकार्थीभावश्च' ।

कथमेकार्थीभावश्चेति । कथमन्यविशेषणत्वेनैवोपस्थितिरित्यर्थः ॥ इतरविशेषणत्वेनोपस्थितस्य स्वविशेषणे आकाङ्क्षाऽभाव इति भावः ॥

( आक्षेपभाष्यम् )

**यदि सापेक्षमसमर्थं भवतीत्युच्यते, राजपुरुषोऽभिरूपः 'राजपुरुषो दर्शनीयः' अत्र वृत्तिर्न प्राप्नोति ॥**

( प्रदीपः ) इतरखु वचनमेतदिति मत्वा चोदयति—**यदि सापेक्षमिति ॥**

( समाधानभाष्यम् )

**नैष दोषः । प्रधानमत्र सापेक्षम् । भवति च प्रधानस्य सापेक्षस्यापि समासः ॥**

(प्रदीपः) **भवति चेति** । प्राधान्यादेवानेकेनोपकारकेणोपकार्यत्वाविरोधात् । **सामान्याप्रयोग**[1] इति लिङ्गदर्शनाच्च ॥

(उद्द्योतः) प्रधानस्य सापेक्षत्वेपि वृत्तावुपपत्तिमाह—**प्राधान्यादेवेति** ॥ नन्वेवं राजपुरुषो[2] भार्याया इत्यपि स्यादत आह—**सामान्येत्यादि** । उपात्तविशेषणविजातीय[3]विशेषणयोगः प्रधानस्य भवतीति ज्ञाप्यत इति भावः । यद्यपि समासे विशिष्ट एवान्वय इति प्रधानस्य न सापेक्षत्वं, तथापि दर्शनीयत्वाद्यन्वये पुरुषत्वमेव विशेष्यतावच्छेदकं न राजसंबन्धोपीत्याशयेन तथोक्तिरिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**यत्र तर्ह्यप्रधानं सापेक्षं भवति तत्र वृत्तिर्न प्राप्नोति—'देवदत्तस्य गुरुकुलम्' 'देवदत्तस्य गुरुपुत्रः' 'देवदत्तस्य दासभार्ये'ति ॥ [अत्र[4] वृत्तिर्न प्राप्नोति ॥]**

( समाधानभाष्यम् )

**नैष दोषः । समुदायापेक्षात्र षष्ठी सर्वं गुरुकुलमपेक्षते ॥**

( प्रदीपः ) **समुदायापेक्षेति** । गुरुकुलादिना समुदायेन समुपजनिते व्यतिरेके[5] देवदत्तस्येति षष्ठी । अवयवद्वारकश्च देवदत्तस्य समुदायेन संबन्ध इति सामर्थ्यादवयवमपि विशेषणं स्पृशति । तदुक्तम्—

**समुदायेन संबन्धो येषां गुरुकुलादिना ।**
**संस्पृश्यावयवांस्ते[6] तु युज्यन्ते तद्वता सह ॥** इति ॥

( उद्द्योतः ) भाष्ये—**सर्वं गुरुकुलमिति** । गुरुसंबन्धविशिष्टं कुलं सर्वमपेक्ष्यँते न तु तदवयवो गुरुरित्यर्थः । तदाह—**गुरुकुलादिनेति** ॥ नन्वेवं गुरौ देवदत्तसंबन्धित्वं न लभ्येतेत्यत आह—**सामर्थ्यादवयवमपीति** ॥ येषामर्थानां गुरुकुलादिरूपसमुदायेन संबन्धस्तेप्यर्था अवयवान्संस्पृश्य संबन्ध्य तद्वता युज्यन्त इति नात्र पक्षेऽवयवानां तत्सम्बन्धालाभ इत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**यत्र तर्हि न समुदायापेक्षा षष्ठी तत्र[7] ते वृत्तिर्न प्राप्नोति—'किमोदनः शालीनाम्' 'सक्त्वाढकमापणीयानाम्' 'कुतो भवान्पाटलिपुत्रक' इति । इह चापि 'देवदत्तस्य गुरुकुलं' 'देवदत्तस्य गुरुपुत्रो' 'देवदत्तस्य दासभार्ये'ति । यद्येषां समुदायापेक्षा षष्ठी स्यान्नैतन्नियोगतो गम्येत—देवदत्तस्य यो गुरुस्तस्य पुत्र इति । किं तर्हि ? । अन्यस्यापि[8] गुरुपुत्रः, देवदत्तस्य किंचिदित्येषो[9]ऽर्थो गम्येत । यतस्तु खलु नियोगतो देवदत्तस्य यो गुरुस्तस्य यः पुत्र इत्येषोऽर्थो गम्यते, अतो मन्यामहे—नैषा समुदायापेक्षा षष्ठीति ॥ अन्यत्र खल्वपि समर्थग्रहणे सापेक्षस्यापि कार्यं भवति । क्वान्यत्र ? । "इसुसोः सामर्थ्ये" ब्राह्मणस्य सर्पिष्करोतीति । तस्मान्नैतच्छक्यं वक्तुं—सापेक्षमसमर्थं भवतीति ॥**

( प्रदीपः ) **किमोदन इति** । केषां शालीनां किं कलमानामथ रक्तानां[11] शालीनामन्येषां वौदन इति प्रश्नः ॥ **सक्त्वाढकमिति** । आपणीयानां सक्तूनामाढकमित्यर्थः ॥ **कुतो भवानिति** । कस्मात् पाटलिपुत्राद्भवानागत इत्यर्थः । अनेकत्वात् पाटलिपुत्रस्य तदवयवानां[12] वा प्रश्नः ॥ अत्र रोपधेतोः प्राचामिति तद्धितवृत्तिर्न प्राप्नोति ॥ **इह चापीति** । समुदायसंबन्धे सति सामीप्यादेरपि प्रतिपत्तिप्रसङ्ग इत्यर्थः ॥ **नैषेति** । गुर्वपेक्षयात्र षष्ठी संबन्धिशब्दत्वाच्चात्र स्वार्थवदपेक्षाया[13] वृत्तावप्यहानाद्भवत्येव वृत्तिः । उक्तश्च—

**संबन्धिशब्दः सापेक्षो नित्यं सर्वैः प्रयुज्यते ।**
**वाक्यवत् सा व्यपेक्षा हि[14] वृत्तावपि न हीयते** इति ।

**अन्यत्रेति** । ततो न वक्तव्यं सापेक्षमसमर्थं भवतीति । वाचनिके ह्यसामर्थ्ये यथा सर्पिः कालकमिति षत्वं न भवति **समानाधिकरणमसमर्थवद्**ति वचनात् । एवं ब्राह्मणस्य सर्पिष्करोतीत्यत्रापि न स्यात् ॥

( उद्द्योतः ) किमः षष्ठ्यन्तापेक्षत्वमुपपादयति—**केषां शालीनामिति** । न तु शालीनां कीदृश ओदन इत्यर्थ इति भावः ॥ **कलमाः** । श्यामशालयः ॥ आपणीयानां मध्ये सक्त्वाढकमित्यर्थो नेत्याह—**आपणीयानां सक्तूनामिति** ॥ उक्तार्थे उपपत्तिमाह—**अनेकत्वादिति** ॥ एकत्वेपि तस्याह—**तदवयवानां वेति** ॥ **सामीप्यादेरपीति** । सामीप्यादिनिरूपितसंबन्धस्यापीत्यर्थः । अवयवद्वारकसंबन्धस्यैवात्र भानमित्यत्र नियामकाभावादिति भावः । भाष्ये—**नैषा समुदायापेक्षेति** । एवं चाप्रधानस्यापि सापेक्षत्वे वृत्तिदर्शनात्सापेक्षमसमर्थमिति वक्तुमशक्यमिति भावः ॥ गमकत्वादत्र वृत्तिरिति वक्ष्यमाणाशयमाह—**संबन्धिशब्दत्वाच्चेति** । नित्यसापेक्षविषये आकाङ्क्षाया अशान्त्या प्रागुक्तन्यायविषया[15]भावा,

---

१ प्रधानस्य सापेक्षत्वेऽपि यदि समासो न स्यात्तदा पुरुषो व्याघ्र इव शूर इत्यत्र समासाप्राप्त्या सामान्याप्रयोगे इति व्यर्थं स्यादिति भावः । ( र. ना. ) २ यत्र पुरुषे राजसंबन्धो भार्यासंबन्धश्चैतदुभयं विधित्सितं तत्र पुरुषस्य भार्यासापेक्षत्वेऽपि राजशब्देन समासः स्यादिति भावः । ( र. ना. ) ३ तथा च पुरुषस्य भार्यारूपं विशेषणं षष्ठ्यन्तपदोपस्थाप्यत्वेनोपात्तविशेषणसजातीयमेव । नत्वेवं राजपुरुषो दर्शनीय इत्यादाविति भावः । ( र. ना. ) ४ कोष्ठकान्तर्गतः पाठो न सार्वत्रिकः । ५ व्यतिरेको भेदः । ( र. ना. ) ६ 'स्तेऽपि' । ७ देवदत्तस्येति षष्ठ्यन्तेनेति शेषः । ( र. ना ) ८ 'तत्र वृत्ति' । ९ 'स्यापि तु गुरु' । १० अपीति शेषः । ( र. ना. ) ११ 'रक्तशाली' । १२ इदमनेकत्वादित्यनेन संबध्यते । ( र. ना. ) १३ यथा स्वार्थस्य वृत्तावहानं तद्वदित्यर्थः । ( र. ना. ) १४ 'व्यपेक्षाऽस्य' । १५ इतरविशेषणत्वेनोपस्थितस्य स्वविशेषगे आकाङ्क्षाऽभाव इति न्यायेत्यर्थः । ( र. ना. )

न्नासामर्थ्यमिति भावः ॥ प्रयुज्यत इति । समस्तत्वेनेत्यर्थः ॥ स्वार्थवदिति । स्वार्थे इव स्वार्थवत् । स्वार्थशब्दो भावप्रधानः । स्वार्थमात्रोपस्थापकवाक्यघटकतादशायामिव वृत्तावपीत्यर्थः ॥ किमोदन इत्यादयस्त्वसामर्थ्येपि भाष्यकारप्रयोगादेवं साधव इति बोध्यम् ॥

सापेक्षमसमर्थमित्यस्य वाचनिकत्वे दूषणान्तरमाह—भाष्ये—अन्यत्र खल्वपीति । अन्यथा प्राक् कैयटोक्तन्यायस्यैकार्थीभावविषयत्वादिसुसोरित्यत्र व्यपेक्षारूपसामर्थ्यस्यैव ग्रहादसंगतिः स्पष्टैव ॥ तद्ध्वनयन्नाह—वाचनिके हीति ॥

( आक्षेपभाष्यम् )

**वृत्तिस्तर्हि कस्मान्न भवति महत्कष्टं श्रित इति?॥**

( प्रदीपः ) स एवाह—वृत्तिस्तर्हि कस्मादिति ॥

( उद्योतः ) स एवेति । मदीयं चोद्यं दुष्परिहरमित्याहेति भावः ॥

( ११६० समाधानवार्तिकप्रथमखण्डम् ॥ )

## [ ॥ * ॥ सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न ॥ * ॥ ]

( भाष्यम् ) **सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यते इति वक्तव्यम् ॥**

( प्रदीपः ) सविशेषणानामिति । वृत्तिर्नेति वचनात् [१]श्रत्यादि भवत्येव ॥ पूर्वोक्तानुसारेणायमपि न्याय एवोक्तः ॥

( आक्षेपभाष्यम् )

**यदि सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इत्युच्यते, 'देवदत्तस्य गुरुकुलम्' 'देवदत्तस्य गुरुपुत्रो' 'देवदत्तस्य दासभार्ये'त्यत्र वृत्तिर्न प्राप्नोति ॥**

( समाधानवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## [ ॥ * ॥ अगुरुपुत्रादीनाम् ॥ * ॥ ]

( भाष्यम् ) **अगुरुपुत्रादीनामिति वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यं सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यते अगुरुपुत्रादीनामिति ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् ॥ [३]वृत्तिस्तर्हि कस्मान्न भवति? । अगमकत्वात् ॥ इह समानार्थेन वाक्येन भवितव्यं समासेन च । यश्चेहार्थो वाक्येन गम्यते 'महत्कष्टं श्रितः' इति, नासौ जातुचित्समासेन गम्यते 'महत्कष्टश्रितः' इति । एतस्माद्धेतोर्ब्रूमः—अगमकत्वादिति, न ब्रूमः—अपशब्दः स्यादिति ॥ यत्र च गमको भवति, भवति तत्र वृत्तिः । तद्यथा—'देवदत्तस्य गुरुकुलं' 'देवदत्तस्य गुरुपुत्रो' 'देवदत्तस्य दासभार्ये'ति ॥**

( प्रदीपः ) न वक्तव्यमिति । न्यायसिद्धत्वात् ॥ इह समानार्थेनेति । वाक्येनाभिधाने प्राप्ते समास आरभ्यमाणस्तत्समानार्थ एव न्याय्यः ॥ महत्कष्टश्रित इति । यः कष्टश्रितः स महत्कर्म करोतीत्यादि प्रतीयेत, क्रियाविशेषणं वा महत्त्वं प्रतीयेत, न तु कष्टविशेषणम् ॥ न ब्रूम इति । लोके प्रयुज्यमानस्य साधुत्वमसाधुत्वं च विचार्यते गोगाव्यादिशब्दवत् । महत्कष्टश्रित इत्ययं तु महत्कष्टं श्रित इत्येतद्वाक्यार्थे नैव प्रयुज्यते । प्रयुक्तानां चेदमन्वाख्यानम् । अतो नात्र समासो भविष्यतीत्यर्थः ॥

( उद्योतः ) भाष्यकारो न्यायं दर्शयति—अगमकत्वादित्यादिना ॥ क्रियाविशेषणं वेति । महद्यथा भवति तथा करोतीत्यर्थ इति भावः ॥ न कष्टविशेषणमिति । तस्य पदैर्थैकदेशत्वादिति भावः । न चैवं कष्टं श्रित इत्यस्यापि विग्रहत्वं न स्यात्, तत्र समाससमानाकाराया एवोपस्थितेः ॥ एतेन वृत्तिविग्रहयोः समानविषयताकत्वं सूचितम् ॥ विशेषणसमभिव्याहारे तु महदन्वयाय कष्टादेर्विशेषणत्वानाक्रान्तविशेष्यतयोपस्थितिरावश्यकीति तयोः समानार्थत्वभङ्गः ॥ इदमेव पदार्थः पदार्थेनेतिव्युत्पत्तेर्मूलमिति दिक् ॥ भाष्ये—एतस्माद्धेतोर्ब्रूम इत्यादि ॥ अगमकत्वादित्येतस्माद्धेतोः सापेक्षमसमर्थमित्यादि ब्रूमः । न तु संभावितापशब्दस्य साधुत्वनिवृत्तये तद्वाचनिकं ब्रूम इत्यर्थः ॥ तद्ध्वनयन्नाह—यत्र गमक इत्यादिना ॥ एतदेवाभिप्रेत्य व्याचष्टे—लोके इत्यादिना । अगमकत्वादेव तदर्थे शिष्टलोकैरप्रयुक्तत्वात्समासो न भवतीति भावः ॥ एवं च गमकत्वादेव किमोदनः शालीनामित्यादेरुपपत्तिः । कैयटाद्युक्तसंबन्धिशब्दत्वादियुक्त्या देवदत्तस्य गुरुकुलमित्यादेः साधुत्वे उपपादितेपि किमोदना इत्यादेः साधुत्वं नोपपादितं स्यादतो भाष्योक्तमेव साधु ॥

( प्रत्याख्यानभाष्यम् )

**यद्यगमकत्वं हेतुः, नार्थः समर्थग्रहणेन । इहापि 'भार्या राज्ञः पुरुषो देवदत्तस्य' इति [४]योर्थो वाक्येन गम्यते, नासौ जातुचित्समासेन गम्यते 'भार्या राजपुरुषो देवदत्तस्य' इति । [५]तस्मान्नार्थः समर्थग्रहणेन ॥**

( प्रत्याख्यानबाधकभाष्यम् )

**इदं तर्हि प्रयोजनम् । अयमस्त्यसमर्थसमासो नञ्समासो गमकः, तस्य साधुत्वं माभूत्—'अकिंचित्कुर्वाणम्' 'अमाषं हरमाणम्' 'अगाधादुत्सृष्टम्' इति ॥**

( प्रदीपः ) नञ्समासो गमक इति । गाव्यादिवदसाधुरपि गमकत्वाभिमतो लोके प्रयुज्यते तस्यासति समर्थग्रहणे

१ नित्यसापेक्षत्वाभावादिति भावः । ( र. ना. ) २ इसुसोः सामर्थ्ये इत्यादिनेति शेषः । ( र. ना. ) ३ वृत्तिरिति । महत् कष्टं श्रित इत्यत्रेत्यादिः । ( र. ना. ) ४ कष्टश्रितेत्यादिः । ( र. ना. ) ५ पृथगर्थोपस्थापकत्वाद् वाक्यस्य, समासस्य तु विशिष्टार्थोपस्थापकत्वादिति भावः । ( र. ना. )

साधुत्वं प्राप्तं ततस्तन्निवृत्त्यर्थमेतदित्यर्थः ॥ किंचिदकुर्वाणं माषमहरमाणं गाथादनुत्सृष्टमित्येतेष्वर्थेष्वेते नञ्समासाः ॥

( उद्योतः ) गमकश्चेत्तन्निवृत्तिरशक्येत्यत आह—गमकस्त्वाभिमत इति । तत्र हेतुर्लोके प्रयोगः । अतोऽसौ गमकत्वेनेष्ट इत्यर्थः । परं त्वसाधुरिति भावः ॥ असमर्थत्वमुपपादयति—किंचिदकुर्वाणमिति ॥

( प्रत्याख्यानसाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । अवश्यं कस्यचिन्नञ्समासस्यासमर्थस्य गमकस्य साधुत्वं वक्तव्यम् । असूर्यंपश्यानि मुखानि 'अपुनर्गेयाः श्लोकाः' अश्राद्धभोजी ब्राह्मण इति ॥ "सुडनपुंसकस्य" इत्येतन्नियमार्थं भविष्यति—एतस्यैवासमर्थसमासस्य नञ्समासस्य गमकस्य साधुत्वं भवति नान्यस्येति । तस्मान्नार्थः समर्थग्रहणेन ॥**

( प्रदीपः ) **असूर्यंपश्यानीति** । सूर्यकर्मिकया दृशिक्रियया नञः संबन्धो न तु सूर्यस्थया सत्तयेत्यसामर्थ्यम् ॥ **अपुनर्गेया इति** । पुनर्न गेया इति गानेन नञः संबन्धो न तु पुनःशब्दार्थेन ॥ **अश्राद्धभोजीति** । भुजिना नञः संबन्धो न तु श्राद्धेन । श्राद्धे भोजननिषेधावगमात् ॥ **अनपुंसकस्येति** । प्रसज्यप्रतिषेधपक्षेऽयमसमर्थसमासः । असमर्थनञ्समासानां केषांचित् साधुत्वज्ञापनायानपुंसकस्येति प्रसज्यप्रतिषेध आश्रीयते । पर्युदासेपि ह्यत्र न क्षतिः । तदेवं समर्थग्रहणे क्रियमाणे विध्यर्थमेतेषां ग्रहणं कर्तव्यं तदेवाक्रियमाणे नियमार्थं भविष्यतीत्यर्थः ॥ **एतस्यैवेति** । अभेदमाश्रित्यैकवचनं कृतम् । एतेषां बहुत्वाद्बहुवचनप्रसङ्गः । असमर्थसमासेपि क्रियायामुभयोः सन्निपातादेकार्थीभावस्तद्वारकोऽस्त्येव ॥

( उद्योतः ) **न सूर्यस्थया सत्तयेति** । सूर्यपदार्थघटकधात्वर्थेनेत्यर्थः । कर्मणि न प्रेरयतीत्यसूर्यं इत्यर्थो नेति भावः ॥ सूर्यशब्दस्य रूढत्वेपि सूर्यभिन्नमिति तेनान्वयाभावादसामर्थ्यमित्यपि बोध्यम् ॥ **नियमार्थं भविष्यतीति** । एवं चाकिंचित्कुर्वाणमित्यादयः प्रयोगाः प्रागुक्ता असाधव इति भावः ॥ असूर्येत्यादीनां प्रागुक्तानां बहूनां साधुत्वस्येष्टत्वादेकवचनमनुपपन्नमत आह—**अभेदमिति** । एतस्यैवेतिभाष्यस्य प्रागुक्तस्येत्यर्थ इति भावः ॥ **क्रियायामुभयोरिति** । इदं चिन्त्यम् । कृतः सर्वो मृत्तिकयेत्यादौ समासापत्तेः । असामर्थ्येपि ज्ञापकात्कचित्समास इत्येव भाष्याशयमभिनास्योपयोगाभावाच । प्रातिपदिकसंज्ञाप्यसूर्यललाटयोरित्यनपुंसकस्येति च ज्ञापकादिति भाष्याशयः ॥

( अथ सामर्थ्यलक्षणभेदनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ क्रियमाणेपि समर्थग्रहणे समर्थमित्युच्यते । किं समर्थं नाम ? ॥**

( प्रदीपः ) **अथ क्रियमाणेपीति** । अबुधबोधनार्थं करणेऽभ्युपगम्यमाने इत्यर्थः ॥ **किं समर्थं नामेति** । यद्यपि पूर्वमेकार्थीभावो वा सामर्थ्यं व्यपेक्षा वेत्याद्युक्तं तथाप्येतद्विचारस्थानं तस्य । एतत्सिद्धेन तु पूर्वं व्यवहारः कृतः ॥

( उद्योतः ) **अबुधेति** । सर्वत्र गमकत्वागमकत्वे लक्षणैकचक्षुष्कैर्दुर्ज्ञेये इति भावः । कृतेपि कचित्परम्परोपदेशगम्यगमकत्वादिनैव सर्वप्रयोगनिर्वाह इति बोध्यम् ॥ **एतत्सिद्धेनेति** । अत्रत्यवार्तिककारीयसिद्धविचारमुपादाय पूर्वं भाष्यकृता व्यवहृतमिति भावः ॥

( ११९१ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ पृथगर्थानामेकार्थीभावः समर्थवचनम् ॥ * ॥

( व्याख्याभाष्यम् )

**पृथगर्थानां पदानामेकार्थीभावः समर्थमित्युच्यते ॥**

(प्रदीपः) **पृथगर्थानामिति** । एकार्थीभावं तावत् सामर्थ्यं दर्शयति ॥ परस्ताद्व्यपेक्षालक्षणं दर्शयिष्यति ॥ पृथगर्था येषां पदानां तानि पृथगर्थानि पदानि । वाक्ये हि राज्ञः पुरुष इत्यत्र राजशब्दो राजार्थमेवाचष्टे, पुरुषशब्दोपि पुरुषार्थमेव । वृत्तौ तु राजपुरुष इत्यत्र राजशब्दोपि पुरुषार्थमेवाचष्टे इति द्वयोरेकार्थीभावो भवति । अथ वान्य एवावयवार्थान्वितः समुदायार्थः प्रादुर्भवतीति तदपेक्षयैकार्थीभाव उच्यते पांसूदकवदेकभावापन्नत्वात् ॥ यद्यपि शब्दान्तरमेव वृत्तिः, अवयवा वर्णवदनर्थकाः । तथापि सादृश्यात् तत्त्वाध्यवसायं पदानामाश्रित्य **पृथगर्थानामेकार्थीभाव** इत्युक्तम् ॥ **समर्थवचनमिति** । समर्थशब्दस्य वाच्य इत्यर्थः । कर्मणि ल्युट् ॥

( उद्योतः ) **पृथगर्था इति** । अर्थेषु पृथक्त्वं भिन्नभिन्नोपस्थितिविषयत्वम् ॥ **आचष्टे** । उपस्थापयति ॥ **राजशब्दोपि पुरुषार्थमेवेति** । पुरुषार्थान्वितमेव स्वार्थमुपस्थापयतीत्यर्थः ॥ जहत्स्वार्थायामप्याह—**अथ वेति** ॥ **अवयवार्थान्वित इति** । पूर्वपदरूपावयवार्थसदृशार्थान्वित इत्यर्थः । तदुक्तमन्य **एवेति** ॥ **समुदायार्थः** । समुदायशक्तिगम्यः । कचित्तु—**अवयवार्थानन्वित** इति पाठः । तदा स्पष्टमेवान्य **एवे**त्यस्य विवरणमिदम् ॥ द्वन्द्वबहुव्रीह्योरेकार्थीभावस्तु सूत्रोपक्रमे दर्शितः ॥ एकार्थत्वमविभागापन्नार्थत्वमपृथगुपस्थितिविषयार्थकत्वं तदाह—**पांसूदकवदिति** । यथा मिलितपांसूदकेऽन्यतराविषयकज्ञानविषयत्वं नान्यतरस्य, तथा प्रकृतेप्यन्यतमाविषयकोपस्थितिविषयत्वं नान्यतमस्येत्यर्थः । यथा पांसूदकमिलने पिण्डाख्यं द्रव्यान्तरमेवैकभावमापन्नं तयोस्तदवयवत्वव्यवहारश्च तद्वदत्रापीति भावः । एवं चापृथगुपस्थितिविषयत्वमेकार्थीभाव इति फलितम् । गौणमेकार्थत्वं समासघटकपदानां बोधयितुं च्विनिर्देशः । पदानामसत्त्वाद्यथा तत्सत्ताव्यवहारो गौणस्तथा तेषामेकार्थत्वव्यवहारोपीति बोध्यं, तदाह—**यद्यपीति** ॥ **सादृश्यादिति** । यद्यप्येतत्पक्षे वाक्यमप्यखण्डमेव तथापि रेखादित्यर्थः । ( र. ना. ) ८ 'नैव प्रयोग' ।

१ 'अलवणभोजी ब्राह्मणः' इत्यधिकं पुस्तकद्वये । २ 'भवती' । ३–४ 'नञ्संबन्धो' । ५ 'कश्चिद्दोषः' । ६ 'वचनं' । ७ दर्शनेनान्वयाभावा-

गवयस्थानीयेन शास्त्रनिष्पन्नेन सखण्डेन सादृश्यं बोध्यम् ॥ **एकार्थीभाव** इत्यनेन **समर्थवचन**मित्यस्य सामानाधिकरण्यानुपपत्तेराह—**कर्मणीति** ॥ बाहुलकादिति शेषः ॥ सामान्ये च नपुंसकम्। तद्ध्वनितं भाष्ये—**समर्थमित्युच्यते इति** ॥

**( आक्षेपभाष्यम् )**

**क्व पुनः पृथगर्थानि, क्वैकार्थानि ? ॥**

**( प्रदीपः ) क्व पुनरिति ।** पृथगर्थत्वमेकार्थत्वं च विरुद्धत्वादेकस्मिन्विषये न संभवतीति प्रश्नः ॥

**( समाधानभाष्यम् )**

**वाक्ये पृथगर्थानि 'राज्ञः पुरुषः' इति । समासे पुनरेकार्थानि 'राजपुरुषः' इति ॥**

**( प्रदीपः ) राज्ञः पुरुष इति ।** राज्ञ इत्यनेन पदेन राजार्थोऽनियत[1]संबन्ध्यपेक्षयोद्भूतसंबन्धो विशेषणभावमापन्नोऽभिधीयते । पुरुष इत्यनेन तु पुरुषार्थः स्वनिष्ठो विधीयमानत्वात् प्राधान्यमापन्नोभिधीयते । वृत्तौ भेदस्य निवर्तनात्तदे[2]धिष्ठानस्यापि संबन्धस्यान्तर्भावात् षष्ठी निवर्तते । सैव च स्वाभाविकी निवृत्तिः **सुपो धातुप्रातिपदिकयो**रिति शास्त्रेणान्वाख्यायते प्रत्ययलक्षणसिद्धये ॥

**( उद्द्योतः )** वाक्यसमासयोर्विशिष्टपुरुषस्यैकस्यैवावगतेर्विशेषाभावमाशङ्क्याह—**राज्ञ इति** । **अनियतसंबन्ध्यपेक्षये**ति च्छेदः ॥ **उद्भूतसंबन्धशब्देन** तद्वृत्तितया प्रतीयमानसंबन्धः ॥ **विशेषणभावमापन्न इति** । विशेषणत्ववैशिष्ट्येनोपस्थित इत्यर्थः । स्वप्रकृत्यर्थगतविशेषणत्वस्यापि प्रथमातिरिक्तविभक्त्यर्थत्वादिति भावः ॥ **अभिधीयते** । शक्त्योपस्थाप्यते ॥ **स्वनिष्ठः** । प्राति[3]पदिकार्थमात्रनिष्ठः । प्रातिपदिकार्थमात्ररूप इति यावत् । न तु संबन्ध्यन्तरापेक्षयोद्भूतसंबन्ध इत्यर्थः ॥ **विधीयमानत्वात्** । विधेयताख्यविषयतावत्त्वात् । प्रथमाया विधेयविभक्तित्वादिति भावः ॥ तदेवाह—**प्राधान्यमिति** ॥ **वृत्तौ भेदस्य** भिन्नोपस्थितिविषयत्वस्य । यथा घटघटत्वयोः घटशब्दजन्यसंबन्धाविषयकोपस्थित्यविषयत्वं तथा वृत्तौ राजपुरुषयोरिति भावः ॥ **संबन्धस्यान्तर्भावात्** । राजपुरुष इति समुदायेनैवोपस्थापनादित्यर्थः ॥ **उक्तार्थानामप्रयोग** इति षष्ठ्या निवृत्तिरिति भावः ॥

**( आक्षेपभाष्यम् )**

**किमुच्यते—पृथगर्थानीति । यावता 'राज्ञः पुरुष आनीयताम्' इत्युक्ते राजपुरुष आनीयते । 'राजपुरुषः' इति च स एव ? ॥**

**( प्रदीपः ) किमुच्यत इति ।** एवं हि वाक्ये पदानां पृथगर्थत्वं स्याद्यद्येक एव विशिष्टार्थो न प्रतीयेत । वृत्तौ च पुरुषमात्रप्रतीतौ स्यादेकार्थीभावः । यतस्तु वृत्तिवाक्ययोरेक एवार्थः प्रतीयते तदा सामर्थ्यभेदोपि नास्ति ॥

**(उद्द्योतः)** उक्तविशेषस्य गम्यमानतयाऽविशेषोक्तिः कथमित्यत आह—**एवं हीति** । **पृथगर्थत्वं स्यादिति** ॥ समासापेक्षया परस्परापेक्षया च भिन्नार्थत्वं स्यादित्यर्थः ॥ **न प्रतीयेतेति** । पदाभ्यामिति शेषः ॥ **सामर्थ्यभेदोपीति** । व्यपेक्षैकार्थीभावरूप इत्यर्थः ॥

**( समाधानभाष्यम् )**

**नापि ब्रूमः—अन्यस्या[4]नयनं भवतीति ॥**

**( प्रदीपः ) नापि ब्रूम इति ।** वाक्ये पृथगर्थत्वेपि पदानामाकाङ्क्षायोग्यतावशाद्विशेषणविशेष्यभावाद्विशिष्टार्थप्र[5]तीतिः । वृत्तावपि विशिष्ट एवार्थो राजपुरुषशब्दाभ्यामभिधीयत इति कुतोऽन्यस्यानयनम् । न चैतावता वृत्तिवाक्ययोरेकार्थता । यथा ब्राह्मणानां शतं भोज्यतां शतं ब्राह्मणा भोज्यन्तामिति सत्यपि कार्यस्याभेदे शब्दार्थो भिद्यते तथेहापीत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**नापि ब्रूम इति** । नैव ब्रूम इत्यर्थः ॥ **वाक्ये पृथगर्थत्वेपीति** । पृथगुपस्थितिविषयत्वेपीत्यर्थः ॥ **एकार्थता**, एकसामर्थ्यवत्ता ॥

**( एकार्थीभावफलनिरूपणाधिकरणम् )**

**( व्यपेक्षावादिन आक्षेपभाष्यम् )**

**कस्तर्ह्येकार्थीभावकृतो विशेषः ? ॥**

**( एकार्थीभाववादिनः समाधानभाष्यम् )**

**सुबलोपो व्यवधानं यथेष्टमन्यतरेणाभिसंबन्धः स्वर इति[6] ॥**

**( सुबलोपोदाहरणभाष्यम् )**

**सु[7]बलोपो भवति वाक्ये—राज्ञः पुरुष इति । समासे तु न भवति—राजपुरुष इति ॥**

**( प्रदीपः ) सुबलोप इति ।** एकार्थीभावाभावकृतोपि विशेष एकार्थीभावकृत इत्युच्यते । सन्निधानासन्निधानाभ्यां क्रियाभिनिर्वृत्तौ पदार्थानां कारणत्वात् । यथा वर्षकृतं सुभिक्षं वर्षकृतं दुर्भिक्षमिति चोच्यते । तत्र राज्ञः पुरुष इति वाक्ये भेदाधिष्ठानस्य संबन्धस्य प्रत्याययिषितत्वाद्विना विभक्त्या तस्यप्रत्याययितुमशक्यत्वान्नास्ति सुब्लोपः, समासे [8]कृते भेदनिवृत्तौ तदाश्रयस्य संबन्धस्योपरमात् स्वाभाविकी सुपो निवृत्तिः । सै[9]वं च शास्त्रेणानुज्ञायते । तदेवं सुपो भावाभावाभ्यामर्थस्य भावाभावानुमानं वाक्यसमासयोः ॥

**( उद्द्योतः )** एकार्थीभावकृतविशेषप्रश्ने सुबलोप इत्यादिकथनमसंगतमत आह—**एकार्थीभावाभावेति** । यथा मशकनिवृत्तिकारणमपि धूमो मशककारणमित्युच्यते मशकार्थो धूम इति, तथा तदभावकारणकमपि तत्कारणकमित्युच्यते । तदुक्तं पातञ्जलभाष्ये—

"उत्प[10]त्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम्" ॥

---

१ अनियतसंबन्धिवृत्तितया प्रतीयमानः संबन्धो यस्येत्यर्थः । ( र. ना. ) २ स भेदोऽधिष्ठानं प्रयोजकं यस्येत्यर्थः । भेदप्रयुक्तस्येति यावत् । ( र. ना. ) ३ प्रातिपदिकार्थमात्रे निष्ठा पर्यवसानं यस्य स तथा । अत एवाह—प्रातिपदिकार्थमात्ररूप इति । ( र. ना. ) ४ 'स्वार्थस्या' । ५ 'प्रतिपत्तिः' । ६ 'इत्येकार्थीभावकृता विशेषाः' । ७ 'सुपोऽलोपो' । ८ 'तु' । ९ 'सेयं' । १० व्याख्यातश्च तत्रैव—तत्रोत्पत्तिकारणं मनो भवति विज्ञानस्य, स्थितिकारणं मनसः पुरुषार्थता, शरीरस्येवाहार इति । अभिव्यक्तिकारणं यथा रूपस्यालोकस्तथा रूपज्ञानम्, विकारकारणं मनसो विषयान्तरम् । यथाऽग्निः पाक्यस्य । प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य । प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः । वियोगकारणं तदेवाशुद्धेः । अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः । धृतिकारणं शरीरमिन्द्रियाणाम् । इति । अत्र योगाङ्गानुष्ठानाभावकारणिकाऽप्यशुद्धिर्योगाङ्गानुष्ठानकारणिकेत्युच्यते । कारणं नवधेत्यस्य 'एतेषां कार्याणामित्यादिः । ( र. ना. )

उभयत्रापि राजसंबन्धवत्पुरुषप्रतीत्यविशेषे क्वचिद्विभक्त्यादिः क्वचिन्नेति विभागः कथमित्यत आह—तत्रेति । वा[1]क्यीयन्यायेति विशेषणत्वमेव षष्ठीप्रवृत्तौ निमित्तं तत्रैव संबन्धस्योद्भूततया भानादिति भावः ॥ भेदनिवृत्ताविति । भिन्नोपस्थितिविषयत्वमत्र भेदः संबन्धस्योपरमादिति । प्रातिपदिकोक्ततया तदाकाङ्क्षोपरमादित्यर्थः ॥ अर्थस्येति । अर्थगतभिन्नोपस्थितिविषयत्वस्येत्यर्थः ।

( व्यवधानोदाहरणभाष्यम् )

**व्यवधानं भवति वाक्ये—राज्ञः ऋ[2]द्धस्य पुरुष इति । समासे तु न भवति—राजपुरुष इति ॥**

**( प्रदीपः )** व्यवधानमपि सत्यर्थभेदे दृष्टं वाक्ये यथा भार्या राज्ञः पुरुषो देवदत्तस्येति । असति न दृष्टम् । देवद[3]त्त इत्यत्र पदमध्ये पदान्तरस्य प्रक्षेप्तुमशक्यत्वात् ॥

**( उद्द्योतः )** ऋद्धस्येत्यस्य राजसमानाधिकरणत्वेनैकार्थ्याद्व्यवधायकत्वमिति मन्वानं प्रति स्पष्टमुदाहरणमाह—**भार्या राज्ञ इति** । भार्या देवदत्तस्येत्यस्य मध्ये राज्ञः पुरुष इत्यनेन व्यवधानमिति बोध्यम् ॥

( यथेष्टाभिसंबन्धोदाहरणभाष्यम् )

**यथेष्टमन्यतरेणाभिसंबन्धो भवति वाक्ये—'राज्ञः पुरु[4]षः' पुरुषो राज्ञ इति ॥ समासे न भवति—राजपुरुष इति ॥**

**( प्रदीपः ) यथेष्टमिति** । वाक्येऽनियतपौर्वापर्येण पदानां प्रयोगः । समासे तु नियतपौर्वापर्यः ॥ स चार्थाभेदनिबन्धनः । यथा कर्क इति प्रयोक्तव्ये कर्क इति न प्रयुज्यते ॥

**( उद्द्योतः )** ननु वाक्येपि राज्ञो विशेषणताया एव नियतत्वाद्यथेष्टमभिसंबन्ध इत्यनुपपन्नमत आह—**वाक्ये अनियतेति** । पौर्वापर्यलक्षणः शब्दगतोऽभिसंबन्धो भाष्याभिप्रेत इति भावः ॥

( स्वरोदाहरणभाष्यम् )

**द्वौ स्वरौ भवतो वाक्ये—राज्ञः पुरुष इति । समासे पुनरेक एव—राजपुरुष इति ॥**

**( प्रदीपः ) द्वौ स्वराविति** । अर्थभेदे स्वरभेदो दृश्यते यथा देवदत्त गामभ्याजेति । तदभेदे न दृश्यते यथा– घट इति । अत्र राज्ञः पुरुष इति द्वे अपि पदे नित्स्वरेणाद्युदात्ते । राजपुरुष इति समासो[5]न्तोदात्तः ॥

**( उद्द्योतः )** समासासमासकृतः स्वरविशेषो नैकार्थीभावकृत इत्यत आह—**अर्थभेदे इति** ॥ **स्वरभेदे इति** । स्वरश[6]ब्देनोदात्तः स्वरितो वाऽत्र विवक्षित इति बोध्यम् ॥ **द्वे अपीति** । राजन्शब्दः कनिनन्तः पुरुषः कुषनन्त इति भावः ॥

( समाधानबाधकव्यपेक्षावादिभाष्यम् )

**नैत एकार्थीभावकृता विशेषाः ॥ किं तर्हि ? । वाचनिकान्येतानि । आह हि भगवान्—"सुपो धातुप्रातिपदिकयोः" "उपसर्जनं पूर्वम्" समासस्यान्त उदात्तो भवतीति ॥**

**( प्रदीपः ) वाचनिकानीति** । वचनेनैवंभूतानामन्वाख्यानाद्व्यभिचारान्नानुमानं सुब्लोपादिकमर्थभेदस्येत्यर्थः । यथा पयः पयो जरयतीत्यत्र विनापि विभक्त्या कर्तृकर्मप्रतीतिर्भवति पञ्चकप्रातिपदिकार्थदर्शने । तथा राजपुत्र इत्यत्र सत्येवार्थाभेदे राजपदमेव संबन्धमभिदध्यात् । अर्थाभेदे च सुब्लोपो दृष्टः । यथा वर्षासुजः गोषुचर इति ॥ तथा वृत्तावपि प्रयोगानियमो दृश्यते—अन्तादी आद्यन्तौ जातपुत्रः पुत्रजात इति ॥ वाक्ये च प्रयोगनियमो धवश्च खदिरश्चेति । नहि भवति 'च खदिरश्च धव' इति ॥ ऐकस्वर्यं च दृश्यते वाक्ये—'तीक्ष्णेन परशुना वृश्चन्नि'ति । अर्थाभेदे च स्वरभेदः –'कर्तवै, अन्वेतवै' इति "अन्तश्च तवै युगपत्" तवै चान्तश्च युगपदि"त्यत्र स्वरः ॥

**( उद्द्योतः ) सिद्धे** शब्दार्थसंबन्ध इत्युक्तेर्वाचनित्वं कथमत आह—**वचनेनेति** ॥ व्यभिचारमेव दर्शयति—**यथेति** ॥ ननु वाचकाभावे कथं तत्प्रतीतिरत आह—**पञ्चकेति** । तात्पर्यग्राहकं तु प्रकारणादीति भावः ॥ इदमेव दर्शनं सिद्धान्तिन इति । बोध्यम् ॥ **राजपदमेवेति** । शब्दशक्तिस्वभावादिति भावः ॥ एतेन विभक्त्यर्थस्य प्रातिपदिकार्थत्वं न दृष्टमित्यपास्तम् । शब्दाभावेऽर्थसद्भावं प्रदर्श्य शब्दसद्भावेप्यर्थाभवं दर्शयति—**अर्थाभेदे चेति** । अभिन्नोपस्थितिविषयत्वे चेत्यर्थः ॥ **वाक्ये चेति** । चादीनां निपातानां परप्रयोग एवेति भावः ॥ **तीक्ष्णेनेति** । पराङ्गवद्भावात्स्वरैक्यमत्रेत्यर्थः ॥ **अन्तश्च तवै इति** । आद्यं[9]मसमासे, ऽन्त्यं[10] समासे स्वरविधायकम् ॥

( एकार्थीभाववादिसमाधानान्तरभाष्यम् )

**इमे तर्ह्येकार्थीभावकृता विशेषाः—संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं च योग इति ॥**

( संख्याविशेषोदाहरणभाष्यम् )

**संख्याविशेषो भवति वाक्ये—राज्ञः पुरुषः 'राज्ञोः पुरुषः' राज्ञां पुरुष इति । समासे न भवति—'राजपुरुषः' इति ॥**

**( प्रदीपः ) संख्याविशेष इति** । वाक्ये उपसर्जनपदानि विभक्त्यर्थाभिधायित्वात् संख्याविशेषयुक्तं स्वार्थं प्रतिपादयन्ति । समासे त्वन्तर्भूतस्वार्थं प्रधानार्थमभिदधतीत्यभेदैकत्वसंख्यां गमयन्ति । संख्याविशेषाणामविभागेनावस्थानमभेदैकत्वसंख्या ॥ [यथो[11]क्तम्—]

"यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुरिति ॥

१ पृथगर्थोपस्थित्याकाङ्क्षायोग्यतादिनेत्यर्थः । ( र. ना.) २ 'सद्दशस्य' । ३ देवदत्तभार्येति पाठो भाति । ( र. ना. ) ४ 'पः इति' । ५ 'सोऽन्तो' । ६ तेनार्थभेदेऽनुदात्तस्वरभेदेऽपि न क्षतिः । ( र. ना. ) ७ नानुमापकमित्यर्थः । ( र. ना. ) ८ अर्थभेदे इति पाठः साधुः । ( र. ना. ) ९ आद्यम् "अन्तश्च तवै युगपत्" इति सूत्रम् 'तवैप्रत्ययान्तस्याद्यन्तौ युगपदुदात्तौ' इत्यर्थकम् । १० अन्त्यम् "तवै चान्तश्च युगपत्" इति सूत्रम् 'तवैप्रत्ययान्तस्यान्त उदात्तः, अनन्तरो गतिश्च प्रकृत्या युगपच्चैतदुभयं स्यात्' इत्यर्थकम् । ११ 'यथोक्तम्—' इति पाठो नैकस्मिन् पुस्तके । उद्द्योतकारस्याप्यसंमत इव प्रतीयते ।

अथवा परित्यक्तविशेषसंख्यासामान्यमभेदैकत्वसंख्या।

तदुक्तम्—

**भेदानां वा परित्यागात्संख्यात्मा स तथाविधः।**
**व्यापाराज्जातिभागस्य भेदापोहेन वर्तते॥**
**अगृहीतविशेषेण यथा रूपेण रूपवान्।**
**प्रख्यायते न शुक्लादिभेदरूपस्तु गम्यते"** इति॥

क्वचित्तु संख्याविशेषाभिव्यक्तिर्भवति। यथा द्विपुत्रः पञ्चपुत्र इत्यादौ प्रातिपदिकार्थ एव संख्याविशेषः॥ तावकीनो मामकीन इत्यत्रादेशाभिव्यङ्ग्यमेकत्वम्॥ शौर्पिकमिति प्रातिपदिकेन विशिष्टस्यैव परिमाणस्योपादानादेकत्वावगमः। तथा मासजात इति विशिष्टकालावगमाय प्रयोगादेकत्वावगतिः॥ एवमन्यत्रापि प्रकारान्तरेण संख्याभेदावसायो द्रष्टव्यः॥

**(उद्योतः) विभक्त्यर्थेति**। वाक्ये उपसर्जनबोधकपदानां विभक्त्यन्तत्वेन तदर्थसंख्याविशेषयुक्तार्थबोधकत्वमित्यर्थः॥ **अन्तर्भूतेति**। विशेषणीभूतस्वार्थकमित्यर्थः॥ **अभेदैकत्वेति**। विभक्त्यभावेन संख्याविशेषाणां तत्तद्रूपेणाप्रतीतेः संख्यात्वेन सर्वसंख्यानां भानं मधुनि सर्वरसानां रसत्वेन भानवदिति भावः। तदाह—**यथौषधीति**॥ **अथ वेति**। अत्र पक्षे संख्यात्वेन सामान्यं भासते, न तु विशेषा इति पूर्वस्माद्विशेषः॥ संख्यावद्राजसंबन्धीति पक्षद्वयेपि बोधः। अत एव भाष्ये **संख्याविशेष** इति विशेषपदोपादानम्। मधुनि सर्वरसवत्ताजन्यस्य तत्तद्रोगादिनिवृत्तिरूपस्य फलस्यानुभवात्तत्सत्ताकल्पनेप्यत्र सर्वसंख्याविशेषकल्पने मानाभाव इति तद्भावः॥ **भेदानां** विशेषाणाम्॥ **संख्यात्मा** संख्यासामान्यम्॥ **तथाविधः**। अभेदैकत्वसंख्यापदवाच्यः॥ निर्विशेषसामान्याभावादिदं कथमत आह—**व्यापारादिति**। संख्यात्वेनैव तत्प्रतीतेर्विशेषरूपाणां तत्तद्रूपेणाप्रतीतेश्च भेदापोह इति भावः॥ तदेव समर्थयति—**अगृहीतेति**॥ **शुक्लादिरूपभेदस्त्विति**। शुक्लादिरूपविशेष इत्यर्थः। **भेदरूप** इति पाठे शुक्लादिविशेषरूपोर्थस्त्वित्यर्थः॥ तत्र रूपत्वेन रूपप्रतीतिः सद्वस्तुविषयाऽत्र तु संख्यात्वेन प्रतीतिरसद्वस्तुविषया विकल्पात्मिकेति विशेषः॥

(संख्याविशेषानवगतौ कारणान्तरभाष्यम्)

**अस्ति कारणं येनैतदेवं भवति॥ किं कारणम्?। योसौ विशेषवाची शब्दस्तदसांनिध्यात्। अङ्ग हि भवांस्तमुच्चारयतु गंस्यते स विशेषः॥**

**(प्रदीपः) तदसान्निध्यादिति**। लुका विभक्तेर्निवर्तितत्वादित्यर्थः॥

**(उद्योतः)** नन्वेकार्थीभावकृतसंख्याविशेषाभावेनैव तदसांनिध्यमिति चेन्नेत्याह—**लुकेति**। लुक्शास्त्रपर्यालोचनयार्थसत्त्वमनुमीयत इति भावः॥

(कारणान्तरनिराकरणभाष्यम्)

**ननु च नैतेनैवं भवितव्यम्। नहि शब्दकृतेन नामार्थेन भवितव्यम्। अर्थकृतेन नाम शब्देन भवितव्यम्॥ तदेतदेवं दृश्यताम्—अर्थरूपमेवंजातीयं येनात्र विशेषो न गम्यते इति। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते—'योसौ विशेषवाची शब्दस्तदसांनिध्यादत्र विशेषो न गम्यते' इति इह तस्य विशेषो गम्येत—अप्सुचरो गोषुचरो वर्षासुज इति॥**

**(प्रदीपः) ननु चेति**। नहि विद्यमानेर्थे लुकमाचार्योन्वाचष्टे, अपि त्वर्थस्याभावात् स्वत एव या शब्दस्य निवृत्तिः सैवानुगम्यत इत्यर्थः॥ **अर्थकृतेनेति**। प्रत्याययिषितार्थप्रतिपादनाय शब्दप्रयोगात्॥ **अर्थरूपमिति**। अर्थस्वभावः॥ एतदुक्तं भवति—संख्याविशेषादियुक्तवस्तुप्रतिपादनेच्छायां वाक्यं प्रयुज्यते, अन्यदा तु वृत्तिः॥ **गोषुचर इति**। गोषुचरः कुक्कुट उच्यते। एकस्यां गवि द्वयोर्बहुषु वा यश्चरति स सर्वोसावविशेषेणोच्यते॥ जातौ चेदं बहुवचनमिति व्यक्तिगतसंख्याभेदानवगमः। यदि तु व्यक्तिगतं बहुत्वं प्रतीयेत ततस्तदाश्रयमेव बहुवचनं क्रियेत। यदा तु सत्यपि बहुवचने व्यक्तिबहुत्वं न प्रतीयते तदा जात्याश्रयं बहुवचनमभ्युपगम्यते॥ **वर्षासुज इति**। इन्द्रगोपः। अत्राप्येकस्मिन्नप्युतौ अवयवबहुत्वापेक्षो बहुवचनान्तो वर्षाशब्दो वर्तते। नत्वत्र ऋतुबहुत्वं प्रतीयत इत्यत्राप्यभेदैकत्वमुपजायते। **तत्पुरुषे कृति बहुलमित्यत्रालुक्**॥ लिङ्गविशेषस्यापि क्वचिद्वृत्तावुपादानं कुमारीपुत्र इति। क्वचित्त्यागः—कुक्कुटाण्डं मृगमांसमिति॥ वाक्येपि जात्यन्तरनिवृत्तिपरे लिङ्गविशेषाविवक्षा दृश्यते छागस्य मांसमिति॥

**(उद्योतः)** ननु लुक्शास्त्रपर्यालोचनयार्थसत्त्वमेवेत्यत आह—**नहीति**॥ **अनुगम्यते इति**। बोध्यत इत्यर्थः। प्रत्ययलक्षणसिद्धय इति शेषः॥ ननु जातौ बहुवचने कथं व्यक्तिगतसंख्याविशेषप्रतीत्यापादनमत आह—**यदि त्विति**। सत्यपि प्रत्यये तदनवगतेर्जातौ तदाश्रीयते इति भावः॥ **जात्याख्यायामितिसूत्र**प्रत्याख्यानादवयवबहुत्वारोपेण बहुवचनमित्यत्रापि वक्तुं युक्तम्॥ **अत्राप्यभेदैकत्वमिति**। अवयविगताभेदैकत्वमित्यर्थः। एवं हि दारा इत्यादावप्यवयविन्यभेदैकत्वं स्यादिति तस्य वृत्तिकृतविशेषत्वभङ्ग इति चिन्त्यम्॥ संख्याविशेषवल्लिङ्गविशेषोपि कुतो नोक्तस्तत्राह—**लिङ्गविशेषस्यापीति**। परे तु **संख्याविशेष** इत्यस्याप्रातिपदिकार्थसंख्याविशेष इत्यर्थः। तेन द्विपुत्रादौ न दोषः॥

१ परित्यक्तः संख्याविशेष एकत्वद्वित्वादिर्यस्मिन्नित्यर्थः। (र. ना.) २ वाऽथवा भेदानां विशेषाणामेकत्वद्वित्वादीनां परित्यागात्सवृत्तावनुभूयमानः संख्यात्मा संख्यासामान्यं तथाविधोऽभेदैकत्वसंख्या। जातिभागस्य संख्यात्वरूप सामान्यस्य व्यापाराद् विशेषणतयाभानाद् भेदापोहेन भेदानामेकत्वद्वित्वादिरूपविशेषाणामपोहेन निरासेन वर्तते प्रतीयते इत्यर्थः। तत्रोदाहरणमाह अगृहीतविशेषेणेति। यथारूपीघट इत्यादौ अगृहीतशुक्लनीलादिविशेषेण रूपेण रूपवान् घटः प्रख्यायते प्रतीयते शुक्लादिविशेषरूपस्तु पदार्थो न गम्यते न प्रतीयते तथा वृत्तौ संख्यासामान्यं ज्ञायते एकत्वद्वित्वादिकं तु न प्रतीयते इत्यर्थः। (र. ना.) ३ कालविशेषावगमायेत्यर्थः। (र. ना.) ४ वृत्तावखण्डार्थस्यैव सत्त्वाद् विशेषणगतसंख्याया असत्त्वमिति भावः। विकल्पलक्षणं तु शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति। (र. ना.) ५ कृतान्तमभावविशेषणम्। (र.ना.) ६ 'नैतदेवं'। ७ 'तदेवं'। ८ 'रूपमेवैतदेवं'। ९ 'जातीयकं'। १० 'गम्यते'। ११ 'अविवक्षया'=अप्रयुयुक्षया भाषणाभाव इत्यर्थः। १२ 'गतिः'।

मासजातादौ शब्दात्संख्याऽप्रतीतिरेव ॥ मासत्वेन त्वेकमासस्यैव बोधः, अनेकमासजाते द्विमासजात इत्यादिदर्शनात् ॥ शब्दशक्तिस्वभावान्न कदापि तेनानेकमासस्य मासत्वेन बोधः ॥ त्वत्पुत्रो युष्मत्पुत्र इत्यादावपि तत्तच्चेतनपुत्र इत्येव बोधः । आदेशतदभावौ तु तत्त्वेन वस्तुत एकबोधतदभावाभ्याम् ॥ यथा घटानित्यादितो बहुत्वेनैव कदाचित्त्रयाणां कदाचिच्चतुरादीनां भानं, न तु कदाचिदपि त्रित्वचतुष्त्वादिना, तथा वृत्तौ राजत्वादिनैवैकानेकव्यक्तिभानं तात्पर्यवशाद् न त्वेकत्वद्वित्वादिना । एकवचनत्वादिकं वस्तुत एकत्वादिविशिष्टव्यक्तिबोधकत्वं न त्वेकत्वद्वित्वादिनेत्येतावत्पर्यन्तमाग्रहः ॥ एवमन्यत्रापि बोध्यम् ॥ दन्तोष्ठस्य दन्ताः स्निग्धतरा इत्यादाववयवसंख्याया अभानाद्दन्तत्वेनोष्ठत्वेन दन्तौष्ठलक्षणार्थद्वयप्रतीतेस्तत्रैव, अनेकव्यक्तिसत्त्वेपि तासां शब्दतोऽभानात् । अत एव भाष्यकृतोपसर्जनविशेषणरूपविशेषस्य देवदत्तस्य गुरुकुलमित्यादाव्यापकत्ववदस्य मासजातादावव्यापकत्वं नोक्तम् । अभेदैकत्वसंख्या भासत इति तु भाष्ये न क्वापि दृश्यत इत्याहुः ॥

( व्यक्ताभिधानोदाहरणभाष्यम् )

**व्यक्ताभिधानं भवति वाक्ये—'ब्राह्मणस्य कम्बलस्तिष्ठति' इति । समासे पुनरव्यक्ताभिधानं 'ब्राह्मणकम्बलस्तिष्ठति' इति, संदेहो भवति–सम्बुद्धिर्वा स्यात्, षष्ठीसमासो वेति ॥**

( प्रदीपः ) **ब्राह्मणकम्बल इति** । यद्यप्यत्र स्वरान्निर्णयस्तथापि शब्दस्वरूपमात्रान्निश्चयाभाव इत्येवंपरमेतत् । यत्रापि नास्ति स्वरभेदः सम्बुद्धिषष्ठीसमासयोः 'तिष्ठति ब्राह्मणकम्बलः' इत्यादौ, तत्रापि प्रकरणादिवशादवश्यं निश्चयेन भाव्यम् । कम्बलशब्दो घृतादित्वान्निपातनाद्वान्तोदात्तः । एकार्थीभावे सति भेदनिबन्धनसंबन्धाभिधायिविभक्तिनिवर्तनात्तत्कृतो विशेषोऽव्यक्ताभिधानमुच्यते ॥

( उद्योतः ) **नास्ति स्वरभेद इति** । आमन्त्रितस्य चेति पदात्परस्य निघातविधानादित्यर्थः ॥ ननु नियमेन सन्देहस्यैव जनने दुष्ट एव प्रयोगः स्यादत आह—**तत्र प्रकरणादीति** ॥ **निपातनाद्वेति** । कम्बलाच्च संज्ञायामित्यादावित्यर्थः ॥

( विशेषबाधकभाष्यम् )

**एषोऽप्यविशेषः । भवति हि किंचिद्वाक्येऽव्यक्तम्, तच्च समासे व्यक्तम् । वाक्ये तावदव्यक्तम्—'अर्द्धं पशोर्देवदत्तस्य' इति, संदेहो भवति—पशुगुणस्य वा देवदत्तस्यार्द्धम्, अथ वा योसौ संज्ञीभूतः पशुर्नाम तस्य यदर्द्धमिति । तच्च समासे व्यक्तं भवति—अर्धपशुर्देवदत्तस्येति ॥**

( प्रदीपः ) **एषोपीति** । व्यभिचारात् । अपिशब्दः सुबलोपाद्यपेक्षया समुच्चयार्थः ॥

( उद्योतः ) संख्याविशेषरूपस्य विशेषस्य स्थितत्वादेषोपीत्यपिशब्दोऽयुक्त इत्यत आह—**अपिशब्द इति** ॥

( उपसर्जनविशेषणरूपविशेषोदाहरणभाष्यम् )

**उपसर्जनविशेषणं भवति वाक्ये—ऋद्धस्य राज्ञः पुरुष इति । समासे न भवति—राजपुरुष इति ॥**

( प्रदीपः ) **ऋद्धस्येति** । राजा स्वार्थादप्रच्युतः पदान्तरार्थमप्रतिपन्नो वाक्ये योग्यत्वाद्विशेषणसंबन्धमनुभवति । वृत्तौ तूपसर्जनीभूतस्वार्थमर्थान्तरं प्रत्याययतीति अयोग्यत्वाद्विशेषणेन न संबध्यते ॥

( उद्योतः ) पदान्तरार्थमप्रतिपन्नः । पदान्तरार्थान्वयित्वेनैवोपस्थित्यविषयः ॥ **अर्थान्तरं प्रत्याययतीति** । विशिष्टोपस्थितावस्यापि सहायत्वादिति भावः ॥ **अयोग्यत्वादिति** । पदार्थैकदेशत्वेनायोग्यत्वम् ॥

( बाधकभाष्यम् )

**एषोऽप्यविशेषः । समासेऽप्युपसर्जनविशेषणं भवति । तद्यथा—देवदत्तस्य गुरुकुलं देवदत्तस्य गुरुपुत्रो देवदत्तस्य दासभार्येति ॥**

( प्रदीपः ) **एषोपीति** । अव्यापित्वात् ॥

( चयोगरूपविशेषोदाहरणभाष्यम् )

**चयोगो भवति वाक्ये स्वचयोगः स्वामिचयोगश्चेति ॥ स्वचयोगः—राज्ञो गौश्चाश्वश्च पुरुषश्चेति । समासे न भवति—राज्ञो गवाश्वपुरुषा इति ॥ स्वामिचयोगः, देवदत्तस्य च यज्ञदत्तस्य च विष्णुमित्रस्य च गौरिति । समासे न भवति—देवदत्तयज्ञदत्तविष्णुमित्राणां गौरिति ॥**

( प्रदीपः ) **चयोग इति** । वाक्ये पदार्थानां भिन्नत्वाद्भेदनिबन्धनसमुच्चयद्योतनाय चशब्दः प्रयुज्यते । वृत्तौ तु समूहलक्षणैकार्थप्रादुर्भावाद्भेदस्य निवर्तनाद्द्योत्यार्थाभावाद्द्योतकस्यापि चशब्दस्य निवृत्तिः ॥

( उद्योतः ) **भिन्नत्वादिति** । भिन्नोपस्थितिविषयत्वादित्यर्थः ॥ **भेदनिबन्धनसमुच्चयेति** । घटपदजैकोपस्थितिविषययोर्घटघटत्वयोः समुच्चयाप्रतीतेरिति भावः ॥ **भेदस्य निवर्तनादिति** । पृथगुपस्थितिनिवृत्तेरित्यर्थः ॥ **द्योत्यार्थाभावादिति** । समुच्चयाभावादित्यर्थः ॥

( आक्षेपभाष्यम् )

**अथैतस्मिन्नेकार्थीभावकृते विशेषे किं स्वाभाविकं शब्दैरर्थानामभिधानम्, आहोस्विद्वाचनिकम्? ॥**

( प्रदीपः ) **अथैतस्मिन्निति** । अयं भावः—यदि वाचनिकमर्थाभिधानं तदाऽसत्यप्येकार्थीभावे चार्थे द्वन्द्वविधानाद् द्वन्द्वेनैव चार्थस्योक्तत्वाच्चस्याप्रयोगोऽन्यथासिद्धत्वान्नानुमानमेकार्थीभावस्य । स्वाभाविके तु चार्थे इत्यादिनिर्देशोऽनर्थकः ॥

( उद्योतः ) पूर्वग्रन्थेन संगतिं वदन् अभिप्रायमाह—**अयं भाव इति** । यद्यपि चार्थे द्वन्द्वसंज्ञकसमुदायस्य शक्तावेकार्थी-

१ तत्तच्चेतनत्वेनेत्यर्थः । ( र. ना. ) २ एकार्थीभावकृत इत्यर्थः । ( र. ना. ) ३ पशुगुणसजातीयगुणवत इत्यर्थः । ( र. ना. ) ४ वृत्तावपि अखण्डार्थस्य विषयत्वेन तद्भतीतेरिति शेषः । ( र. ना. ) ५ 'दिदर्थनि' ।

भावः सिद्धस्तथाप्यवयवैः समुदायेन च पृथगुपस्थितानामन्वय इत्यपि संभाव्येत । तथा सति विशेषणाद्यन्वयोपि संभाव्येतेति भावः ॥

( समाधानभाष्यम् )

**स्वाभाविकमित्याह ॥ कुत एतत् ? ॥ अर्थानादेशनात् । न ह्यर्था आदिश्यन्ते ।**

( प्रदीपः ) **अर्थानादेशनादिति** । अचतुरविचतुरेत्यादाविति भावः ॥

( आक्षेपभाष्यम् )

**कथं पुनरर्थानादिशन्नेवं ब्रूयात्–नार्था आदिश्यन्ते' इति । यदाह भगवान्–"अनेकमन्यपदार्थे" "चार्थे द्वन्द्वः" अपत्ये, रक्ते, निर्वृत्ते, इति ॥**

( प्रदीपः ) **आदिशन्निति** । प्रवृत्ताविरामलक्षणं वर्तमानत्वं शास्त्रप्रबन्धधातुपरमाहर्शयति । वाक्यभेदेन चार्थादेशनं मन्यते—'सुबन्तमनेकमन्यपदार्थे वर्तते, तच्च बहुव्रीहिसंज्ञम्' इति ॥ एवमन्यत्रापि वाक्यभेदो दर्शनीयः ॥

( उद्योतः ) सूत्रकृदादेशनस्य भूतत्वाद्वर्तमानप्रयोगोऽसंगत इत्यत आह—**प्रवृत्तेति** । प्रबन्धो, धारा ॥ अर्थादेशनपरत्वे संज्ञापरत्वं न स्यादत आह—**वाक्येति** ॥

( समाधानभाष्यम् )

**नैतान्यर्थादेशनानि । स्वभावत एतेषां शब्दानामेतेष्वर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियते । तद्यथा—'कूपे हस्तदक्षिणः पन्थाः, अभ्रे चन्द्रमसं पश्य' इति स्वभावतस्तस्य तत्रस्थस्य पथश्चन्द्रमसश्च निमित्तत्वेनान्वाख्यानं क्रियते । एवमिहापि चार्थे यः स द्वन्द्वः, अन्यपदार्थे यः स बहुव्रीहिरिति ॥**

( प्रदीपः ) यदा तु लोकप्रसिद्धार्थानुवादेन बहुव्रीहिसंज्ञा विधीयते यदन्यपदार्थेऽनेकं वर्तते तद्बहुव्रीहिसंज्ञमिति, तदा नार्थादेशनं नापि वाक्यभेदः ॥ **अर्थेष्वभिनिविष्टानामिति** । **अभिनिविशश्चेत्यत्र परिक्रयण** इत्यतोऽन्यतरस्यांग्रहणानुवर्तनाद्विकल्पेन कर्मसंज्ञाविधानात् सप्तमी कृता । एतदेव च भाष्यकारवचनं लिङ्गं तद्विकल्पस्य ॥ **कूप इति** । कूपो लक्षणत्वेनोपादीयते हस्तदक्षिणमार्गग्रहणस्य । **अभ्र** इत्यत्राप्यभ्रं चन्द्रमसो लक्षणत्वेन निर्दिश्यते ॥

( उद्योतः ) सिद्धान्ताभिप्रायमाह—**यदा त्विति** ॥ **विकल्पेन कर्मसंज्ञेति** । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः ॥ भाष्ये—**अन्वाख्यानं क्रियते इति** । समासप्रत्ययादिसंज्ञां प्रतीति शेषः ॥ **चन्द्रमसश्चेति** । ग्रहणे दर्शने च कूपाभ्रयोरिति शेषः । तदाह—**कूपो लक्षणत्वेनेति** । निमित्तशब्दो ज्ञापकसाधारण इति भावः ॥

( आक्षेपभाष्यम् )

**किं पुनः कारणमर्था नादिश्यन्ते ? ॥**

( प्रदीपः ) **किं पुनरिति** । प्रकृतिप्रत्ययोपदेशवद्बहुवाक्यभेदेनार्थादेशनमिति भावः ॥

( उद्योतः ) वाक्यभेदरूपकारणस्य सत्त्वात् किं पुनः कारणमित्यनुपपन्नमत आह—**प्रकृतीति** । यथा ऋतेरीयङित्यादौ ॥

( समाधानभाष्यम् )

**तच्च लघ्वर्थम् । लघ्वर्थं ह्यर्था नादिश्यन्ते । अवश्यं ह्यनेनार्थानादिशता केन चिच्छब्देन अर्थनिर्देशः कर्तव्यः स्यात् । तस्य च तावत्केन कृतः येनासौ क्रियते । अथ तस्य केनचित्कृतः, तस्य [ केन कृतः, तस्य ] केन कृत इत्यनवस्था च स्यात् ॥ असंभवः खल्वप्यर्थादेशनस्य । को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम् ॥**

( प्रदीपः ) **लघ्वर्थमिति** । लघुशब्दो लाघवे वर्तते । लाघवार्थमर्था नादिश्यन्ते । अन्यथा गौरवमनवस्था च प्राप्नोति । तथा हि—यदि 'चार्थे वर्तते अनेकं तच्च द्वन्द्वसंज्ञम्' इति वाक्यभेदेनार्थादेशनं क्रियते, तदैवं प्रष्टव्यं स्यात् 'कः पुनश्चार्थः' इति, तत्राचार्येण वक्तव्यं स्यात् 'समाहार इतरेतरयोगश्च' । ततः 'कः समाहारः, क इतरेतरयोग' इति प्रश्नप्रतिवचनयोरनवस्थागौरवं चानुषज्यते ॥ **असंभव इति** । असामर्थ्यात् ॥ दोषबाहुल्यप्रतिपादनाय चार्थादेशनस्य गौरवानवस्थासंभवाः परस्परान्तर्भावेऽपि पृथगुपन्यस्ताः ॥ **कोहीति** । अनेकार्थत्वादिति भावः । तत्र धातूनामनेकार्थत्वं कुर्दखुर्दगुर्दगुदक्रीडायामेवेति नियमार्थादेवकाराद्विज्ञायते । प्रातिपदिकानामपि यथेच्छं विनियोगदर्शनात् ॥ शक्तिनियमे तु पुरुषस्य व्यापारः ॥ प्रत्ययानां तु कृत्यल्युटो बहुलं शेष इति च लक्षणारम्भात् । निपातानामनेकार्थत्वं नानाविधस्यार्थस्य प्रयोगे द्योतनात् ॥

( उद्योतः ) लघ्वर्थमित्युक्त्याऽर्थादेशने गौरवमित्युक्तं, दोषान्तरमनवस्थामप्याह—**अवश्यं ह्यनेनेत्यादिना** ॥ **तस्य च तावत्केन कृत इति** । यया चार्थं इत्यत्र चस्यायमर्थ इति केन शब्देनोक्तं यत्करणकचार्थज्ञानेनासौ व्यवहारः क्रियते, येन शब्देन च तदुक्तं तत्रापि चायमेव पर्यनुयोग इत्यर्थः ॥ **अनुषज्यते इति** । भाष्येऽनवस्था च स्यादिति पाठे चेन गौरवमनुषज्यत इत्यर्थः ॥ **असंभवे हेतुरसामर्थ्यादिति** । आदेष्टुरिति शेषः ॥ गौरवानवस्थाऽसंभवानां परस्परान्तर्भावेण पृथगुपन्यासोऽसंगत इत्यत आह—**दोषबाहुल्येति** ॥ **एवकारादिति** । **अनेकार्था अपि धातव** इति तत्र तत्र भाष्योक्तेरित्यपि बोध्यम् ॥ **यथेष्टमिति** । गङ्गादिशब्दानां तीरादावपि प्रयोगादिति भावः ॥ नन्वेवं कोशासंगतिरत आह—**शक्तिनियमे त्विति** । शक्तिबोधने त्वित्यर्थः ॥

( आक्षेपभाष्यम् )

**न चैतम्मन्तव्यं प्रत्ययार्थे निर्दिष्टे प्रकृत्यर्थोऽनि-**

१ 'द्विविधिनेति' । २ अध्येतृपरम्परया शास्त्रसन्तत्यविच्छेदादित्यर्थः । (र.ना.) ३ 'मेष्व' । ४ 'वतस्तत्रस्थ' । ५ 'द्वन्द्वसमासः' । ६ कोष्ठकान्तर्गतः पाठो न सर्वत्र । ७ परस्परसामानाधिकरण्येनेति शेषः । ( र. ना. ) ८ 'नादिना' ।

र्दिष्ट इति । भवति हि गुणाभिधाने गुणिनः संप्रत्ययः । तद्यथा—शुक्लः कृष्ण इति ॥

( प्रदीपः ) न चैतन्मन्तव्यमिति । कस्यचिदेवार्थो निर्दिश्यते अन्यस्य तु संबन्धात् प्रतीतिर्भवतीति भावः ॥ भवतीति । एकत्वादिषु गुणेषु स्वादयो विधीयन्ते गुणैश्च गुणिन आक्षेपो भवति निराधारस्य गुणस्यासंभवात् ॥ तद्यथा शुक्ल इति । गुणमात्राभिधाने गुणिन आक्षेप इत्यर्थः । तथाऽपत्ये प्रत्यये विधीयमाने सामर्थ्यादपत्यवतः प्रकृत्यर्थस्याक्षेपान्निर्देशः सिध्यति ॥

( उद्द्योतः ) प्रकृतीनामर्थनिर्देशो नावश्यक इत्याक्षिपति भाष्ये—न चैतदिति ॥ प्रत्ययार्थे निर्दिष्टे इति । प्रत्ययार्थनिर्देशे प्रकृतीनामर्थस्य संबन्धादेव प्रतीतिसंभवेन प्रकृतीनामर्थनिर्देशो न कार्य इति भावः ॥ प्रत्ययार्थे निर्दिष्टे प्रकृत्यर्थस्य निर्देशो न कृत इत्येतन्न मन्तव्यमित्यक्षरार्थः ॥ एवं च प्रकृत्यर्थनिर्देशो नावश्यक इति भावः ॥ तदाह—कस्यचिदेवेति । भाष्ये पूर्वपक्षी स्वोक्तं साधयति—भवति हीति ॥ द्व्येकयोरित्यादाविति शेषः ॥ स एव गुणेन गुणिन आक्षेपे दृष्टान्तमाह—तद्यथेति ॥ गुणमात्रेति । सामर्थ्यादेव गुणिप्रतीतौ स्वाभाविकी मतुपो निवृत्तिरेव गुणवचनेभ्यो मतुपो लुगित्यनेनान्वाख्यायत इति भावः । इदमपि संबन्धिनः पदेनानुपादाने इति बोध्यम् ॥ गुणशब्दः संबन्धिशब्दोपलक्षणमित्याह—एवमपत्ये इति । तथाऽपत्ये इति पाठान्तरम् ॥

( समाधानभाष्यम् )

विषम उपन्यासः । सामान्यशब्दा एत एवं स्युः । सामान्यशब्दाश्च नान्तरेण प्रकरणं विशेषं वा विशेषेष्ववतिष्ठन्ते । यतस्तु खलु नियोगतो वृक्ष इत्युक्ते स्वभावतः कस्मिंश्चिदेव विशेषे वृक्षशब्दो वर्तते, अतो मन्यामहे—नेमे सामान्यशब्दा इति । न चेत्सामान्यशब्दाः, प्रकृतिः प्रकृत्यर्थे वर्तते । प्रत्ययः प्रत्यथार्थे वर्तते ॥

( प्रदीपः ) विषम इति । यथा शुक्लः कृष्ण इति गुणेन गुणिमात्रस्याक्षेपो, न गुणिविशेषस्य । एवं वृक्षः प्लक्ष इत्यत्राप्येकत्वाधारो द्रव्यमात्रं प्रतीयेत । यदि लोकादर्थावधारणं नाश्रीयेत, नापि शास्त्रेण प्रतिप्रकृति निर्दिश्येतार्थः । तदा वृक्षादयो द्रव्यमात्राभिधायिनः स्युरिति प्रकरणाद्यभावे विशेषसंप्रत्ययो न स्यात् । भवति च । तस्माद्वृद्धव्यवहारादेव शब्दार्थसंबन्धव्युत्पत्तिरनिच्छतापि युक्तिवशादेष्टव्येत्यर्थः ॥—

( उद्द्योतः ) समाधत्ते—विषम इति । शुक्लः कृष्ण इति दृष्टान्तो विषम इत्यर्थः । तत्र गुणिमात्राक्षेपस्तथा प्रतीतिश्च, अत्र तु नियमेन विशेषप्रतीतिरिति वैषम्यमिति भावः ॥ तदाह—यथा शुक्ल इत्यादि ॥ द्रव्यमात्रमिति । सुबर्थसंख्ययाऽऽक्षिप्येतेत्यर्थः ॥ निर्दिश्येतार्थइत्यस्य तदेति शेषः ॥ क्वचित्पंक्तस्तत्पाठः ॥ भवति चेति । विशेषसंप्रत्यय इत्यनुषङ्गः । तस्माद्धात्वादीनामप्यर्थादेशनमावश्यकं, न च तत्संभवतीति स्वाभाविकत्वपक्ष एवाश्रयणीयः । तदाह—तस्मादिति ॥

( समाधानान्तरभाष्यम् )

अप्रवृत्तिः खल्वप्यर्थादेशनस्य । बहवो हि शब्दा येषामर्था न विज्ञायन्ते—जर्भरी तुर्फरीतू ॥ अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते—अक्षिनिकोचैः पाणिविहारैश्च ॥ न खल्वपि निर्ज्ञातस्यार्थस्यान्वाख्याने किंचिदपि प्रयोजनमस्ति । यो ब्रूयात्पुरस्तादादित्य उदेति पश्चादस्तं गच्छति, मधुरो गुडः, कटुकं शृङ्गवेरमिति । किं तेन कृतं स्यात् ॥

( प्रदीपः ) येषामर्था न ज्ञायन्त इति । स्वर्गापूर्वदेवतादिशब्दानामर्थाः प्रत्यक्षापरिच्छेद्यत्वादिदंतया न ज्ञायन्ते तत्र तेषां कथमर्था निर्दिश्येरन्नित्यर्थः ॥ त्रैविद्यव्यवहारात् तेषामर्थो विज्ञायत एव ॥ अक्षिनिकोचैरिति । यथैतैर्व्यवहारवशादर्था गम्यन्ते तथा शब्दैरपीति भावः ॥ न खल्वपीति । साध्वसाधुसंकरनिरासाय शास्त्रारम्भान्नास्ति लोकव्यवहारावगतार्थान्वाख्याने प्रयोजनमिति भावः ॥

( उद्द्योतः ) इदंतया, तत्तद्वैजात्यरूपेण ॥ विज्ञायत एवेति । तत्तत्पदवाच्यः कश्चिदर्थ इत्येवंरूपेणेत्यर्थः॥ भाष्ये—जर्भरीति । यद्यपि जर्भरीत्यस्य भर्त्ताराविति तुर्फरीतू इत्यस्य हन्ताराविर्त्यर्थौ निरुक्तकारैर्दर्शितस्तथापि सर्वजनप्रसिद्धत्वाभावात् प्रकृतिप्रत्ययविभागेनान्वाख्यानासंभवाच्च न विज्ञायन्त इत्युक्तं भगवता ॥ अन्वाख्याने । वाक्यभेदेन विधाने । तस्माल्लोकसिद्धानामेव निमित्तत्वेनान्वाख्यानमित्येव युक्तमिति भावः ॥ भाष्ये—शृङ्गवेरम् आर्द्रकम् ॥ किं तेन कृतं स्यादिति । अनेनैषां प्रयोगानर्हत्वं सूचयति । यदि तु माधुर्यातिशयादिप्रतीतिः प्रयोजनं तदा तु प्रयोक्तव्यमेवेति बोध्यम् ॥

( ११९२ लाघवदर्शकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वावचनानर्थक्यं च स्वभावसिद्धत्वात् ॥ * ॥

( भाष्यम् ) वावचनमनर्थकम् ॥ किं कारणम् ? । स्वभावसिद्धत्वात् । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्चेति । स्वभावतश्चैतद्भवति—वाक्यं च समासश्च । तत्र स्वाभाविके वृत्तिविषये नित्ये समासे प्राप्ते वावचनेन किमन्यच्छक्यमभिसंबन्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाभावाविष्येते । तस्मान्नार्थो वावचनेन ॥

( प्रदीपः ) वावचनानर्थक्यं चेति । इह व्यपेक्षायां समासो न भवति, एकार्थीभावे वाक्यं नेति विविक्तविषयत्वादनयोर्बाध्यबाधकभावो न भविष्यतीति नार्थो विकल्पेन । एकार्थानां विकल्पनात् ॥ न च संज्ञाया इति । एकार्थी-

१ आक्षेपेणेति शेषः । ( र. ना. ) २ मङ्क्षौ पठित इत्यर्थः । ( र. ना. ) ३ वैदिकपुरुषव्यवहारादित्यर्थः । ( र. ना. ) ४ 'नं चान' ।

भावे चित्रगुरित्येवेष्यते, न तु चित्रा गाव इत्येवम्। तथा राजपुरुष इतीष्यते, न तु राज्ञः पुरुष इति। ऐकपद्यमैकस्वर्यमेकविभक्तित्वं च सर्वदैकार्थीभाव इष्यत इत्यर्थः॥

(उद्योतः) अर्थाभिधानस्य स्वाभाविकत्वपक्षे लाघवमपि दर्शयति—**वावचनानर्थक्यं चेति**। वाक्यभेदोपि न, वावचनानर्थक्यं चेत्यर्थः। वावचनपदेन महाविभाषोच्यते। इदमुपलक्षणं निषेधशास्त्राणां नित्यं क्रीडेत्यादिनित्यग्रहणस्य च॥ **किमन्यदिति**। न च विशेषणीभूतसामर्थ्येनैव संबन्धः, तस्य लोकस्वभावसिद्धत्वेनाविधेयतया विशेषणतया च विकल्पानन्वयादिति भावः॥ **न च संज्ञाया इति**। एकार्थीभावविषये इति शेषः। तदाह—**एकार्थीभावे इति**॥

## (अथ वृत्तिलक्षणभेदवर्णनाधिकरणम्)

### (कार्यशब्दिकपक्षाक्षेपभाष्यम्)

**अथ ये वृत्तिं वर्तयन्ति, किं त आहुः?॥**

(प्रदीपः) **अथेति**। कार्यशब्दिका वाक्यादेव विकल्पेन वृत्तिं निष्पाद्यां मन्यमानाः किं वृत्तेर्लक्षणं कुर्वन्तीति प्रश्नः॥ नैत्यशब्दिकास्तु वृत्तिवाक्ये नित्ये विविक्तविषये मन्यन्ते॥

(उद्योतः) अर्थाभिधानस्य वाचनिकत्वपक्षे आह भाष्ये—**अथ ये वृत्तिं वर्तयन्तीति**। **वृत्तिम्**, एकार्थीभावरूपां, **वर्तयन्ति** शास्त्रेण निष्पादयन्ति, ये शास्त्रैकगम्यं सामर्थ्यं मन्यन्ते इत्यर्थः। अयं भावः—एकार्थीभावकृतविशेषाः समर्थसूत्रविधेयाः। सुबन्तं सुबन्तेन सह सामर्थ्यवद्भवति समर्थं च समाससंज्ञकमित्यर्थः। एवं च विभाषाधिकारादि सर्वं चरितार्थम्। समासादौ वृत्तिव्यवहारस्तु वृत्तिवृत्तिमतोरभेदोपचाराद्बोध्यः॥ **किं ते इति**। स्वाभाविकत्वमते एकार्थीभावरूपा वृत्तिर्लोकत एव सिद्धेति न किंचित्तत्र वक्तव्यम्। ये तु शास्त्रनिष्पाद्यां मन्यन्ते ते किं तत्स्वरूपं शास्त्रविधानयोग्यमाहुरिति प्रश्नः॥ तद्भनयन्व्याचष्टे—**कार्यशब्दिका इति**। शब्दानां शास्त्रकार्यत्वे तेषां लोके सिद्धभावादर्थसंबन्धस्य लोकतो ज्ञानासंभवेन तस्यापि शास्त्रविधेयत्वमेव वाच्यम्, एवं च तद्विकल्पादिबोधकतया विभाषापदादि चरितार्थम्॥ एवं च शास्त्रैकगम्यत्वात्सामर्थ्यरूपवृत्तेर्लक्षणमपि कार्यमिति भावः॥ **वृत्तिं**, वृत्त्याश्रयसमासादिरूपाम्॥ तेषां मते वृत्तिव्यवहारप्रयोजकं वृत्तिधर्मैर्वृत्तिरूपं सामर्थ्यमपि विधेयमेवेति भावः॥ **किंवृत्तेरिति**। सामर्थ्यस्येत्यर्थः॥ **नैत्यशब्दिकास्त्विति**। कार्यं शब्दमाह नित्यं शब्दमाहेत्यर्थे तदाहेति माशब्दादिभ्य इति ठक्। शब्दस्य नित्यत्वे तदर्थसंबन्धस्यापि नित्यतया तन्मते उभयोरपि लोकत एव विविक्तविषयत्वेन सिद्धैकोपस्थितिजनकतावत्समुदायस्यैव वृत्तित्वेन तद्गतैकोपस्थितिजनकतासामर्थ्यं लोकसिद्धमिति न तन्मते प्रश्न इति भावः॥

### (समाधानभाष्यम्)

**परार्थाभिधानं वृत्तिरित्याहुः॥**

(प्रदीपः) **परार्थाभिधानमिति**। परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः। यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते॥

(उद्योतः) **परस्य शब्दस्येति**। प्रधानार्थकशब्दस्योपसर्जनशब्दस्य वेत्यर्थः॥ **यत्रेति**। समासादिषु वृत्तिव्यवहारादिति भावः। एवं च तन्निष्ठशब्दान्तरकरणकपदार्थाभिधायकत्वं तेषां स्वाश्रयत्वेन वृत्तिव्यवहारप्रयोजकं सामर्थ्यमिति फलितम्। तच्च स्वार्थविशेषणकपुरुषार्थोपस्थितौ राजपदशक्तिज्ञानस्य सहकारित्वाद्बोध्यम्॥

### (आक्षेपभाष्यम्)

**अथ तेषामेवं ब्रुवतां किं जहत्स्वार्था वृत्तिर्भवति, आहोस्विदजहत्स्वार्था भवति?॥ किं चातः?। यदि जहत्स्वार्था वृत्तिः; राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, औपगवमानयेत्युक्ते अपत्यमात्रस्येति॥ अथाजहत्स्वार्था वृत्तिः, उभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति॥ का पुनर्वृत्तिर्न्याय्या?॥**

(प्रदीपः) **अथ तेषामिति**। नित्यशब्दवादिपक्षे तु राजपुरुषादीनि वाक्यविषयपदसरूपावयवानि वर्णवदनर्थकोपलभ्यमानावयवानि तत्त्वतो निरवयवान्येव केवलमसत्यप्रक्रियाश्रयेणान्वाख्यायन्ते॥ जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था॥ **पुरुषमात्रस्येति**। राजपदोपादानमनर्थकमिति चेत्, तदा पर्यायत्वं पुरुषराजपुरुषशब्दयोर्यावयावकशब्दयोरिव स्यादिति दोषः॥ **द्विवचनं प्राप्नोतीति**। प्लक्षन्यग्रोधाविति यथा॥

(उद्योतः) भाष्ये वृत्तिर्वर्तनवादिनामित्यर्थकतेषांपदस्य व्याख्यां दर्शयति—**नित्येत्यादि**॥ पदसरूपावयवत्वमपि न वास्तवमित्याह—**वर्णवदिति**। वर्णेष्विवात्राप्यवयवभ्रम इति भावः। तदेवाह—**तत्त्वत इति**॥ नन्वेवं तत्पक्षे **समर्थः पदविधिरित्याद्यसंगतं**, तत्राह—**केवलमसत्येति**। वाक्यविषयपदसारूप्यादेव तद्वदर्थमप्यारोप्यान्वाख्यानमिति भावः॥ एवं च तत्पक्षे तेषामर्थस्यैवाभावात् तत्र त्यक्तत्वात्यक्तत्वसंदेहाभावादथ **तेषामि**त्युक्तमिति भावः॥ केचित्तु नित्यशब्दवादेप्युपलभ्यमानावयवानां नैरर्थक्ये समुदायस्य निरवयवत्वे च मानाभावः। न चैतावता नित्यत्वहानिः, शास्त्रानिष्पाद्यत्वरूपनित्यतायास्तथाप्यहानात्। न चैवं भाष्येऽथ तेषामित्यसंगतं स्यात्। शास्त्रनिष्पाद्यत्वं द्वेधा सावयवस्यैव लोकसिद्धत्वेनानादितया निरवयवतया वा। तत्राद्येऽजहत्स्वार्थैव, द्वितीये तु तेषामर्थाभाव एवेति जहत्स्वार्थैवेति वाक्यवदेव मतभेदेन नियमात्सन्देहाभावेन तदुक्तिरिति वक्तुं शक्यत्वात्। तत्राप्यन्त्यपक्षे आरोपितमर्थवत्त्वादि शास्त्रप्रवृत्तिमात्रफलकं, तेन महासुन्दर इत्यादावास्वमित्यन्यदेतत्॥ शास्त्रनिष्पाद्यत्वमते तु स्वार्थत्यागेऽर्थान्तराभिधायकत्वानुपपत्तिः। अर्थत्यागे तु पुरुषमात्राद्यानयनापत्तिरिति प्राहुः॥ **जहतीति** शत्रन्तम्। बहुवचनं प्रयोगबहुत्वाभिप्रायेण॥

१ वृत्तेः समासादिरूपाया धर्मभूता या वृत्तिः शक्तिस्तद्रूपं सामर्थ्यमित्यर्थः। (र. ना.) २ वाक्यसमासयोरित्यर्थः। (र. ना.) ३ तन्निष्ठं यत् शब्दान्तरकरणकपदार्थाभिधायकत्वं तद् वृत्त्याश्रयत्वमनुक्तो यः समासादिषु वृत्तिव्यवहारस्तत्प्रयोजकं सामर्थ्यमिति योजना। (र. ना.) ४ 'चेत्, पर्या'। ५ वृत्तिनिष्पत्तिवादिनामित्यर्थः। (र. ना.)

स्वार्थं, तत्त्वेन प्रसिद्धम् ॥ जहति स्वानि पदानि यमिति जहत्स्वः जहत्स्वोऽर्थो यस्याः सेत्यर्थं इत्यन्ये ॥ क्लृप्तेति । षष्ठ्यभावेन संबन्धाप्रतीत्या प्रातिपदिकार्थमात्रवृत्तित्वादित्यभिमानः ॥

( समाधानभाष्यम् )

**जहत्स्वार्था ॥**

( प्रदीपः ) **जहत्स्वार्थेति** । नहि स्वार्थमजहतः स्वेनार्थेन वशीकृतस्यार्थान्तरोपादानं घटते ॥

( उद्द्योतः ) **स्वेनार्थेन वशीकृतस्येति** । स्वार्थमात्रोपस्थाने व्यासक्तस्येत्यर्थः ॥ **अर्थान्तरोपादानम्** । अर्थान्तरं प्रति विशेषणत्वम् । यद्वाऽर्थान्तरस्य स्वं प्रति विशेष्यत्वेनोपादानम् । न च पृथगुपस्थितयोः पश्चादन्वयः, संबन्धबोधकविभक्त्यभावाद् । अभेदान्वयस्तु बाधित[1] एवानुभवबाधितश्चेत्यभिमानः[2] ॥

( आक्षेपभाष्यम् )

**युक्तं पुनर्जहत्स्वार्था नाम वृत्तिः स्यात् ? ॥**

( प्रदीपः ) **युक्तं पुनरिति** । उपात्तस्यार्थस्य त्यागाभावात् । अग्निरिवौष्ण्यस्य ॥

( उद्द्योतः ) **उपात्तस्येति** । अर्थोपादानस्यैव तत्त्यागस्याप्येतन्मते वचनं विनाऽशक्यत्वादिति भावः ॥

( समाधानभाष्यम् )

**बाढं युक्तम् । एवं हि दृश्यते लोके—पुरुषोयं परकर्मणि प्रवर्तमानः स्वं कर्म जहाति । तद्यथा—तक्षा राजकर्मणि प्रवर्तमानः स्वं[3] तक्षकर्म जहाति । एवं युक्तं यद्राजा[4] पुरुषार्थे वर्तमानः स्वमर्थं जह्याद् । उपगुश्चापत्यार्थे[5] वर्तमानः स्वमर्थं जह्यात् ॥**

( प्रदीपः ) **बाढं युक्तमिति** ॥ परार्थवृत्तित्वादेव ॥ अत्रैव दृष्टान्तमाह—**तक्षा राजकर्मणीति** । यदा राज्ञा तक्षा दूत्यादौ नियुज्यते तदा स्वकं कर्म जहाति ॥

( उद्द्योतः ) **परार्थवृत्तित्वादेव** । परार्थं प्रति विशेषणत्वेनोपस्थितिविषयत्वादेव ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तं राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति । औपगवमानयेत्युक्तेऽपत्यमात्रस्येति ॥**

( समाधानभाष्यम् )

**नैष दोषः । जहदप्यसौ स्वार्थं नात्यन्ताय जहाति, यः परार्थविरोधी स्वार्थस्तं जहाति । तद्यथा—तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति, न तु हिक्कितश्वसित[6]कण्डूयितानि । न चायमर्थः परार्थविरोधी विशेषणं नाम । तस्मात्तन्न हास्यति ॥**

( प्रदीपः ) **नात्यन्तायेति** । त्यागमात्रमभिसंधाय जहत्स्वार्थेत्युच्यते, न तु सर्वात्मना त्यागः । परोपकाराय तस्योपादानात् । सर्वथा च स्वार्थत्यागे परोपकारासंपादनादनुपादानमेव प्रयोजनाभावात्तस्य स्यादित्यर्थः ॥ **न तु हिक्कितेति** । तेषां प्राणिधर्मत्वात्तत्त्यागे राजकर्मैव तस्य विच्छिद्येतेत्यर्थः ॥ **नचायमर्थ इति** । वाक्येपि राजार्थस्य विशेषणत्वात् कस्तस्य वृत्तौ विशेष इति चेत् । वाक्ये स्वविशेषणसंबन्धप्रतिपत्तौ[7] सामर्थ्याविघातः । वृत्तावुपसर्जनीभूतेन स्वार्थेन प्रधानार्थस्योपकारात् स्वविशेषणप्रतिपत्तौ सामर्थ्यहानिः ॥

( उद्द्योतः ) नात्यन्तायेत्यव्ययम् ॥ **त्यागमात्रमिति** । स्वार्थविशेष्यत्वरूपांशस्य[9] त्यागेन तथा व्यवहार इति भावः ॥ विषयतापि शब्दशक्येति विस्तरेण मञ्जूषायां निरूपितम् ॥ **परोपकारायेति** । परस्य पुरुषादेरितरसंबन्धव्यवच्छेदरूपोपकारायेत्यर्थः ॥ हिक्कितादीनां राजकर्मानुपकारकत्वाद्विषम उपन्यासस्तत्राह—**तेषामिति** । प्राणापगमे एव तत्त्यागादिति भावः ॥ भाष्ये—**न चायमर्थः परार्थविरोधीति** । राजपदेन परार्थस्य पुरुषरूपार्थस्याक्रन्दने तद्विशेषणत्वेन राजरूपार्थोपस्थितौ राजरूपोर्थः स्वतो न विरोधी, किं तु स्वगतं विशेष्यत्वमेव विरोधि, अतस्तन्न हास्यति, किं तु स्वगतं विशेष्यत्वमेव विरोधिभूतं त्यजतीत्यर्थं[11]स्तद्ध्वनयन् व्याचष्टे—**विशेषणं नामेति** । अन्यथा विशेषणविशिष्टपुरुषोपस्थितिर्न स्यादिति भावः ॥ अमुमेवार्थं शङ्कोत्तराभ्यां विशदयति—**वाक्येपीति** ॥ **स्वविशेषणेति** । इदमुपलक्षणं, संख्याविशेषसंबन्धप्रतीत्यप्रतीत्योः । एवं पुरुषपदमपीतरान्वितमेव स्वार्थमुपस्थापयति न केवलम् । अतो न भार्याया इत्याद्यन्वयस्तत्र ॥ अत्रायं भावः—पदानां तत्तद्विषयताविशिष्टेर्थे शक्तिः । अत एव बोधे विषयतानियमः । एवं च राजपदादे राजत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वा[12]वच्छिन्नं स्वार्थस्तत्र समासे विशेष्यत्वांश[13]त्याग इत्येतावता जहत्स्वार्थत्वमिति ॥ अत्र च बीजं समुदायशक्तिः । एवं चावयवशक्तिसहकृतसमुदायशक्त्या विशिष्टैकोपस्थितिरिति तत्त्वम् ॥

( समाधानान्तरभाष्यम् )

**अथ वाऽन्वयाद्विशेषणं भविष्यति[14] । तद्यथा—'घृतघटस्तैलघट' इति । निषिक्ते घृते तैले चान्वया[15]द्विशेषणं भवति—अयं घृतघटोऽयं तैलघट इति ॥**

( प्रदीपः ) **अन्वयादिति** । राजशब्दः स्वार्थनिमित्तं पुरुषार्थे विशेषमाधाय स्वार्थं जहाति, न च तन्निमित्तं विशेषदर्शनं निवर्तते पुरुषे । यथाग्निसंबन्धजनितपाकजरूपादिनिवृत्तिर्घटेऽग्निसंयोगे निवृत्तेपि न भवतीत्यर्थः ॥ **विशेषणमिति** । विशेषः पुरुषगतो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**अथ वाऽन्वयाद्विशेषणं भविष्यतीति** । **विशेषणं** विशेषकरः इतरव्यावर्तक इत्यर्थः । तद्व्याचष्टे—**राजशब्द इति** । वाक्यदृष्टस्वजन्योपस्थितिविषयार्थनिमित्तं विशेषं राजसंबन्धरूपं पुरुषपदजोपस्थितिविषये पुरुषे आधाय पुरुषं

---

1 बाधित एवेत्यस्यानुपपन्न एवेत्यर्थः । (र. ना.) 2 अभिमानोक्तिबीजन्तु समासेऽवयवशक्तिवत्समुदायशक्तिरपि स्वीक्रियते यथा पङ्कजादिपदे । ततश्च—समुदायशक्त्यैव संबन्धोपस्थितिरिति । तदुक्तम्—समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदिति । एवकारोऽप्यर्थः । ( र. ना. ) 3 'स्वं कर्म' । 4 राजन् शब्द इत्यर्थः । एवमग्रे उपगुश्चेत्यत्रापि । ( र. ना. ) 5 'दूतवणिग्भ्यां च' इति काशिकापाठानुसारेण । यदि तु 'भाष्ये तु 'दूतवणिभ्याम्' इति नास्त्येव' इति भट्टोजिदीक्षितोक्तमनुसरणीयम् तदा तु 'दौत्यादौ' इत्युचितम् । 6 'हसित' । 7 स्वस्मिन् विशेषणसंबन्धस्य प्रतिपत्तौ सत्यां व्यपेक्षालक्षणसामर्थ्यस्याविघात इत्यर्थः । (र.ना.) 8 एकार्थीभावलक्षणेत्यादिः । (र.ना.) 9 स्वार्थनिरूपितविशेष्यत्वरूपांशस्येत्यर्थः । (र. ना.) 10 स्वार्थनिरूपितविशेष्यत्वेन बोधने इत्यर्थः । (र. ना.) 11 'त्यत्राह—विशेषणं' । 12—13 इतरनिष्ठविशेष्यतानिरूपितप्रकारतान्यधिकरणविशेष्यत्वेत्यर्थः । 14 'भवति' । 15 'वा' ।

तद्वैशिष्ट्येन पुरुषपदेनोपस्थितिविषयं कृत्वा स्वार्थं तस्य स्वार्थत्वं स्वजन्योपस्थितिविषयत्वं जहाति तद्वाक्यनिष्पन्नवृत्ताविल्यर्थः ॥ अयं हि वाक्याद्वृत्तेर्निष्पत्तिं मन्यते ॥ न च तन्निमित्तमिति । एवं च राजशब्दात्तदर्थप्रतीत्यभावेपि तच्छब्दान्वयमात्रेण वाक्ये यादृशविशेषणविशिष्टः पुरुषः शब्दात्प्रतीतस्तादृशस्यैवात्राप्युपस्थितिरित्यनुमानात्पुरुषपदस्य तथा शक्तिग्रह इति भावः ॥ **विशेषः पुरुषगत इति** । राजपदकृतो वाक्ये पुरुषगतो विशेषो भविष्यति न निवर्त्स्यत इत्यर्थः । एवं च राज्ञो राजादिपदजोपस्थितिविषयत्वाभावेन जहत्स्वार्थत्वमिति बोध्यम् ॥

( समाधानान्तरबाधकभाष्यम् )

**विषम उपन्यासः । भवति हि तत्र या च यावती चार्थमात्रा । अङ्ग हि भवानग्नौ निष्टप्य घृतघटं तृणकूर्चेन प्रक्षालयतु न गंस्यते स विशेषः ॥**

( समाधानसाधकभाष्यम् )

**यथा तर्हि मल्लिकापुटश्चम्पकपुट इति । निष्कीर्णास्वपि सुमनःसु अन्वयाद्विशेषणं भवति—अयं मल्लिकापुटः, अयं चम्पकपुट इति ॥**

( प्रदीपः ) **मल्लिकापुट इति** । आमोदान्वयाद्विशेषावगतिरिति भावः ॥

( उद्द्योतः ) यथा पुष्पाणामभावेपि गन्धान्वयमात्रेण पूर्वतनीं पुष्पसत्तामनुमाय मल्लिकापुट इत्यादिव्यवहारस्तथा वृत्तौ राजपदस्यार्थाभावेपि वाक्यदृष्टसार्थकराजशब्दवर्णानुपूर्वीसत्त्वमात्रेण वाक्ये यथा राजसंबन्धवतः पुरुषस्यैव प्रतीतिस्तथेहापि राजसंबन्धवतः पुरुषस्यैव पुरुषपदात् प्रतीतिरित्यर्थः । तस्मादृश्यमात्रेणैवार्थवत्त्वप्रतीत्याऽस्त्वोचपीति न दोषः ॥ [१]

( समाधानान्तरभाष्यम् )

**अथ वा समर्थाधिकारोयं वृत्तौ क्रियते । सामर्थ्यं नाम भेदः, संसर्गो वा ॥ अपर आह—भेदसंसर्गौ वा सामर्थ्यमिति ॥ कः पुनर्भेदः संसर्गो वा ? । इह राज्ञ इत्युक्ते सर्वं स्वं प्रसक्तम्, पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः । इहेदानीं राजपुरुषमानयेत्युक्ते राजा पुरुषं निवर्तयत्यन्येभ्यः स्वामिभ्यः, पुरुषोपि राजानमन्येभ्यः स्वेभ्यः । एवमेतस्मिन्नुभयतो व्यवच्छिन्ने यदि स्वार्थं जहाति कामं जहातु न जातुचित्पुरुषमात्रस्यानयनं भविष्यति ॥**

( प्रदीपः ) **वृत्तौ क्रियत इति** । यदि च वृत्तौ भेदसंसर्गौ न स्यातां तदा सामर्थ्यमेव न स्यात् तदात्मकत्वात् सामर्थ्यस्येत्यर्थः । तत्र भेदः संसर्गाविनाभावित्वादनुमीयमानसंसर्गः सामर्थ्यम्, संसर्गो वा भेदाविनाभाव्यनुमेयभेदः ॥ उभौ वा यौगपद्येनाश्रीयमाणौ सामर्थ्यमित्यर्थः ॥ **सर्वं स्वमिति** । राज्ञ इति षष्ठ्या संबन्धिमात्रस्याक्षेपात् ॥ **सर्वः स्वामीति** । यदा पुरुषस्य पारतन्त्र्यं प्रमाणान्तरेण प्रतिपन्नं तदपेक्षयैतदुच्यते । अन्यथा पुरुष इत्युक्तेऽस्तीति प्रतीतिः स्यात्, न तु स्वामिमात्राक्षेपः । तत्र भेदपक्षे राजा पुरुषं स्वाम्यन्तरेभ्यो निवर्त्य स्वार्थं जहाति । पुरुषस्त्वजहदपि स्वार्थं स्वान्तरेभ्यो राजानं निवर्तयतीति । ततश्च कृतकार्यस्य भवतु राजार्थस्य निवृत्तिः । अकृतकार्यस्य निवृत्तौ निवृत्तिरेव न स्यात् । एवं संसर्गेपि योज्यम् ॥ **उभयत इति** । उभयस्मिन् परस्परेणावच्छिन्ने इत्यर्थः ॥

( उद्द्योतः ) भाष्ये—अथ वेति । समभिव्याहृतपदार्थनिरूपितसंसर्गतदतिरिक्तभेदैतदुभयवान् योर्थः स समासेन प्रत्याय्यते तादृशपुरुषाद्युपस्थितावेव राजादिपदं तात्पर्यग्राहकम् ॥ अन्वयादिति पक्षे पुरुषपदं राजसंबन्धवत्पुरुषत्वेनोपस्थापकम् । इह तु पुरुषपदात्पुरुषत्वेनैव पुरुषविशेषोपस्थितिरिति भेदः ॥ **सामर्थ्यमेव न स्यादिति** । अन्यथा राज्ञः पुरुषोऽश्वश्च राज्ञः पुरुषो भार्यायाश्चेतिवद् राजपुरुषोऽश्वश्च राजपुरुषो भार्यायाश्चेत्यपि स्यात् । अत एकार्थीभावरूपं स्वाभाविकं सामर्थ्यमाश्रयतापीदमवश्यं वक्तव्यम्—'भेदसंसर्गवानेवार्थो वृत्त्योपस्थाप्यते' इति, तदाह—तदात्मकत्वादिति । एवं च भेदसंसर्गवदर्थप्रतिपादकत्वमेवैकार्थीभावसामर्थ्यमित्यर्थः । तत्र युक्तिरुक्तैव ॥ **तत्र भेद इति** । स्वस्वसमानाधिकरणो राजभिन्नस्वामिकभेदो राजसंसर्गव्याप्यः । एवं वृत्त्युपस्थाप्यराजसंबन्धवद्व्यक्तिगतराजसंबन्धो राजभिन्नस्वामिकभेदव्याप्य इति भावः ॥ एवं च भेदवद्व्यक्तिबोधे सा राजसंसर्गवत्यपीति तद्वती व्यक्तिरपि बुद्धैव । एवमितरत्रापीति तात्पर्यम् ॥ **उभौ वा यौगपद्येनेति** । अयं भावः—उक्तरीत्योभयोः समनियतत्वेन विनिगमनाविरह इति । एवं च भेदवदर्थप्रत्यायकत्वं सामर्थ्यम् । न च संसर्गवतोपि प्रत्ययेनासंभवो लक्षणस्येति वाच्यम् । तद्व्याप्यत्वात्तद्वतोपि प्रत्ययेनादोषात् । लक्षणस्यावधारणागर्भत्वात् । संसर्गवदर्थप्रत्यायकत्वं वा सामर्थ्यम् । भेदवतः प्रतीतिस्तद्व्याप्यत्वात् ॥ तेनोक्तरीत्या नासंभवः ॥ एतत्क्लेशपरिहारायापरेणोभयगर्भं सामर्थ्यलक्षणमुक्तम् । **सर्वं वाक्यं सावधारणमिति**न्यायवाधश्च नेति तद्भावः ॥ **सर्वस्वं प्रसक्तमिति** भाष्यस्य प्रसक्तं सर्वस्वं वाक्ये प्रयुज्यत इति शेषः ॥ पुरुषस्य स्वामिनि नित्यसाकाङ्क्षत्वाभावादाह—यदेति ॥ **तत्र भेदपक्षे इति** । भेदघटितसामर्थ्यलक्षणपक्षे इत्यर्थः ॥ **स्वाम्यन्तरेभ्यो निवर्त्येति** । राज्ञः पुरुषो भार्यायाश्चेत्यादाविव भार्यादिसंबन्धवद्व्यक्त्युपस्थापकत्वान्निवर्त्येत्यर्थः । एतावतैव परार्थाभिधायकत्वमिति भावः ॥ **निवर्तयतीति** । राज्ञः पुरुषोऽश्वश्चेत्यादावश्वादिरूपस्वान्तरनिरूपितस्वामित्ववद्व्यक्त्युपस्थापकत्वं राजपदस्य निवर्तयतीत्यर्थः । इदं दृष्टान्तार्थम् । यथा विशेषणत्वेनानन्वितोपि पुरुषो राजानं स्वान्तरेभ्यो निवर्तयति, एवं राजा विशेषणत्वेनानन्वित एव पुरुषं स्वाम्यन्तरेभ्यो निवर्तयिष्यतीति भावः ॥ **भवतु राजार्थस्येति** । द्योतकतामात्रेण चारितार्थ्याद् राजपदात्तदनुपस्थितिरेव निवृत्तिरित्यर्थः ॥ **वृत्तिरेव न**

१ राजपदार्थप्रतीत्यभावेऽपीत्यर्थः । ( र. ना. ) २ अयं कोष्ठकान्तर्गतः पाठो यद्यपि प्राचीनपुस्तकेषु "भाष्ये-अथवा अन्वयाद्विशेषणं भविष्यतीति ।" इत्यतः परमेव दृश्यते तथापि योग्यस्थानेऽस्माभिः स्थापित इति ममादक्षेत् क्षन्तव्यमेव । ३ महापुरुष इत्यादाविति भावः । ( र. ना. )

**स्वादिति ।** अर्थवत्त्वाभावेन सुबन्तत्वाभावादिति भावः ॥ **एवं संसर्गेपीति ।** संसर्गघटितलक्षणपक्षेपीत्यर्थः । भेदस्य तद्व्याप्यत्वा-त्स्वाम्यन्तरेभ्यो निवर्त्येत्यादि बोध्यम् ॥ भाष्ये—**अन्येभ्यः स्वामिभ्यो निवर्तयतीत्युक्त्या** स्वस्वरूपस्वामिनो न निवर्तयतीत्यर्थ-लाभात्संसर्गो बोधितः ॥ एतेन **कः पुनर्भेदः संसर्गो** वेति प्रश्ने भेदप्रतिपादनेपि संसर्गाप्रतिपादनाद् न्यूनतेत्यपास्तम् ॥ **किं चान्येभ्यः स्वामिभ्यो निवर्तयतीत्यनेनान्यस्वामिसंबन्धनिवृत्तं** पुरुषं बोधविषयीकरोतीत्यर्थकेन भेदादेः शाब्दबोधविषयत्वं सूचयति ॥ **पुरुषो राजानमन्येभ्य** इति दृष्टान्तार्थम् । इतोपि तयोर्बोधविषयत्वं बोध्यम् । नहि राज्ञि तद्भिन्नतत्संसर्गभानं कस्यापि संमतमिति दिक् ॥ **स्वार्थं जहातीति ।** उपसर्जनपदमिति शेषः ॥ यत्तु भेदसंसर्गौ समासवाच्याविति ॥ तन्न, भेदप्रकारकबोधाननुभवात् ॥ किं च वृत्ति-वर्तनवादे जहत्स्वार्थत्वं वृत्तेर्व्युत्पादयितुमेष ग्रन्थः । तत्र संसर्गस्य समासवाच्यत्वे तत्र प्रतियोगित्वेन पूर्वपदार्थस्यान्वयावश्यकत्वे जह-त्स्वार्थत्वभङ्ग एव स्यात् । उक्तरीत्या भाष्याक्षरस्वारस्यविरोधाच्च । तस्माद्वेदान्तिमते तत्त्वमस्यादिवाक्यादावखण्डार्थबोध इव वृत्तौ बोधः । अयमेव चैकार्थीभावः । तन्नये वाक्ये पदेषु तत्तत्कार्यप्रवृत्ति-घटके आत्वादिप्रवृत्तिरिति सुधियो विभावयन्तु ॥ इमौ भेदसंसर्गौ द्वन्द्वेपि, समूहविशेषस्यैव प्रतीतेः । बहुव्रीहावपि संबन्धित्वेन व्यक्तिविशेषस्यैव भानमित्याभाति ॥ राजपुरुषयोरेव व्यवच्छिन्न-त्वादुभयतो व्यवच्छिन्नमन्यन्नास्तीत्यत आह—**उभयस्मिन्निति ।** सार्वविभक्तिकत्वात्सप्तम्यर्थे तसिरित्यर्थः ॥

( अथाजहत्स्वार्थाङ्गीकारभाष्यम् )

**अथ वा पुनरस्त्वजहत्स्वार्था वृत्तिः ॥**

( आक्षेपभाष्यम् )

**युक्तं पुनरिदं यदजहत्स्वार्था नाम वृत्तिः स्यात् ? ॥**

( प्रदीपः ) **युक्तं पुनरिति ।** स्वमर्थमजहतस्तेन वशी-कृतस्यार्थान्तरोपादानमयुक्तमिति भावः ॥

( समाधानभाष्यम् )

**बाढं युक्तम् । एवं हि दृश्यते लोके भिक्षुकोयं द्वितीयां भिक्षां समासाद्य पूर्वां न जहाति । संचयायैव प्रवर्तते ॥**

( प्रदीपः ) **संचयायेति ।** एवं शब्दोपि क्वचिद्विषय एकार्थः क्वचिदनेकार्थ इत्यर्थः ॥

( उद्द्योतः ) एवं च शब्दार्थस्य नियतत्वात्संचयोऽनुपपन्न इत्यत आह—**एवमिति ।** राजनिष्ठविशेष्यताया अत्यागेपि पुरुष-निष्ठविशेष्यतानिरूपितविशेषणताया राजपदार्थतास्वीकार एव संचय इति भावः ॥ एवं च स्वार्थमात्रोपस्थित्या न कृतार्थम्, किं त्वितरा-न्वितमेव स्वार्थमुपस्थापयतीत्यत्र पक्षे **जहदप्यसौ** नात्यन्तायेति पक्षे च परार्थाभिधानमित्यस्य परार्थान्वितस्वार्थाभिधानमित्यर्थः । मध्यमयोस्तु परार्थतात्पर्यग्राहकत्वमिति निष्कर्षः ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—'उभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति—' इति ॥**

( उद्द्योतः ) इतर आशयानभिज्ञः शङ्कते भाष्ये—**ननु चेति ।**

( प्रत्याक्षेपभाष्यम् )

**कस्याः पुनर्द्विवचनं प्राप्नोति ? ॥**

( प्रदीपः ) **कस्या इति ।** एकया विभक्त्या गुणप्रधान-भूतस्यार्थद्वयस्य प्रतिपादयितुमशक्यत्वादिति प्रश्नः ॥

( उद्द्योतः ) कस्या अपि भवतु द्वे अपि वा पर्यायेण भवेतां किं प्रश्नेनेत्यत आह—**एकयेति ॥ गुणप्रधानभूतस्येति ।** पर-स्परमित्यादिः ॥

( आक्षेपाशयभाष्यम् )

**प्रथमायाः ॥**

( प्रदीपः ) **प्रथमाया इति ।** प्रधानानुविधायित्वाद् गुणानां प्रधानविभक्तिः प्रथमा गुणेनापि प्रतिपत्तव्येति भावः ॥

( उद्द्योतः ) ननु प्रथमायां को हेतुरत आह—**प्रधानेति ॥**

( समाधानभाष्यम् )

**न प्रथमासमर्थो राजा ॥**

( प्रदीपः ) **न प्रथमासमर्थ इति ।** प्रथमाद्विवचन उत्पद्यमाने संबन्धासंप्रत्ययाद् गुणप्रधानभाव एव न प्रतीयेत ॥

( आक्षेपाशयान्तरभाष्यम् )

**षष्ठ्यास्तर्हि प्राप्नोति ॥**

( प्रदीपः ) **षष्ठ्यास्तर्हीति ।** संबन्धस्य प्रत्याय्यत्वात् तस्य चोभयाधिष्ठानत्वात् ॥

( समाधानभाष्यम् )

**न षष्ठीसमर्थः पुरुषः ॥**

( प्रदीपः ) **न षष्ठीति ।** यदि षष्ठीद्विवचनं स्यात् तदा द्वयोरपि समकक्ष्यत्वेन संबन्ध्यन्तरापेक्षया संबन्धः प्रतीयेत ॥

( उद्द्योतः ) **संबन्ध्यन्तरापेक्षयेति ।** न तु राजनि पुरुषा-पेक्ष इति भावः

( पूर्वोक्ताशयाभ्युपगमभाष्यम् )

**प्रथमाया एव तर्हि प्राप्नोति ॥**

( बाधकस्मारणभाष्यम् )

**ननु चोक्तम्—न प्रथमासमर्थो राजा—इति ॥**

( आक्षेपाक्षयसाधकभाष्यम् )

**अभिहितः सोर्थोन्तर्भूतः प्रातिपदिकार्थः संपन्नः । तत्र प्रातिपदिकार्थे प्रथमेति प्रथमाया एव द्विवचनं प्राप्नोति ॥**

( प्रदीपः ) **अभिहित इति ।** कश्चिदर्थोभिहितोपि ना-न्तर्भूतः । यथा राज्ञ इति षष्ठ्या संबन्धोभिहितो न क्वचिद-न्तर्भावं यातः ॥ कश्चिदन्तर्भूतोपि नाभिहितः । यथा राज-सख इति तत्पुरुषे राजा सखायेत्यर्थोन्तर्भवति न त्वभिधी-यते ॥ तथा कश्चिदर्थोभिहितोन्तर्भूतः । यथा पचतीति कर्ता-भिधीयमानो गुणभावादन्तर्भूतः, न त्वसौ प्रातिपदिकार्थ इति त्रयमुपात्तम् । तत्र संबन्धोऽभिहितोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति व्यतिरेकाभावात् प्रथमाद्विवचनं प्राप्नोति ॥

---

१ अलौकिकविग्रहवाक्यघटकपदेष्वित्यर्थः । ( र. ना. ) २ तत्तत्कार्यप्रवृत्ति-घटके इत्ययमधिकः प्रकृतासंबद्धश्च पाठः । ( र. ना.) ३ 'क्वचिद' । ४ समान-न्यायादिति भावः । ( र. ना. ) ५ तिङर्थकर्तुः प्रकृत्यर्थसमवेतत्वसंबन्धेन विशेषणत्वादित्यर्थः । ( र. ना. ) ६ संबन्धस्य प्रातिपदिकार्थाद् भेदाभावादि-त्यर्थः । ( र. ना. )

(उद्योतः) न क्वचिदन्तर्भावमिति । न राजसख इत्यादौ बहुव्रीह्यर्थ इव वाचकशब्दं विना नियमेन प्रतीतिविषयो, नापि तिङन्ते कर्तृवत् प्रकृत्यर्थे गुणभूत इत्यर्थः ॥ गुणभावादन्तर्भूत इति । धात्वर्थत्वात्तत्रान्तर्भूत इत्यर्थः ॥[1] अभिहितोन्तर्भूत इति । प्रथमा प्राप्नोतीत्युक्तावत्रापि प्रथमापत्तिभ्रमः[2] स्यादतः प्रातिपदिकार्थ इत्युक्तमिति भावः ॥ व्यतिरेकाभावादिति । षष्ठ्यभावे हेतुरुक्तः । पृथगुपस्थितिनिबन्धनसांसर्गिकविषयताया अभानादित्यर्थः ॥ एवं च राजपुरुष इत्यादिवृत्तौ स्वस्वामिभावादेर्घट इत्यादौ घटघटत्वयोः समवायस्येव प्रकृत्युपस्थितत्वेन प्रकारतैव, विभक्त्यर्थस्यैव च प्रायः संसर्गतया भानमिति बोध्यम् ॥

(११९३ समाधानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ संघातस्यैकार्थ्यान्नावयवसंख्यातः सुबुत्पत्तिः ॥ * ॥

(भाष्यम्) संघातस्यैकत्वमर्थः[3] । तेनावयवसंख्यातः सुबुत्पत्तिर्न भविष्यति[4] ॥

(प्रदीपः) संघातस्येति । इह राजपुरुषशब्दात् संघाताद्विभक्त्योत्पत्तव्यम् । तेन च संघातेनावयवार्थोपकृत एकत्वसंख्यायुक्तो विशिष्टोर्थः प्रतिपाद्यत इति तदाश्रयमेकवचनं प्रवर्तते, न तु गुणभूतावयवसंख्याश्रयं द्विवचनमित्यर्थः ॥

(उद्योतः) संघातस्यैकार्थत्वेपि धवखदिरादिसंघातवद् द्विवचनं स्यादत आह—इहेति ॥ अवयवार्थोपकृत इति । शास्त्रकॢप्तशक्त्योपस्थितार्थत्यागे तद्बोधायातिरिक्तशक्तिकल्पने च मानाभावादिति भावः ॥ तत्र यद्यप्यवयवार्थस्तत्तद्विशेष्यत्वावच्छिन्न एव तथापि विशेषणत्वेन तस्या विशेष्यताया आच्छादनात्तस्या अपि विशेषणत्वेनैव प्रतीतिर्न तु स्वरूपेणेति न विशेषणाद्यन्वय[5] इति तात्पर्यम् । वाक्ये तु प्रत्येकपदजबोधकाले राजादिगतविशेष्यतायाः स्वरूपेणैव[6] भानमिति विशेषणाद्यन्वयो भवत्येवेति बोध्यम् ॥ विशिष्टोर्थ इति । विशिष्टस्यैवोपस्थितिविषयत्वादित्यर्थः ॥ इयमजहत्स्वार्था वृत्तिवर्तन[7]वादिनस्तदवर्तनवादिनश्च तुल्या ॥ जहत्स्वार्था तु वृत्तिवर्तनवादिन एव । वृत्त्यवर्तनवादिनस्त्वखण्डानि निरवयवानि पदानीति मते उभयोरपि कदाप्यर्थाभावेन त्यक्तस्वार्थेत्यर्थकजहत्स्वार्थापदप्रयोगोप्यसंगतः । सावयवानीति मते कॢप्तशक्तेस्त्यागे मानाभावेनाजहत्स्वार्थैव । वृत्तिवर्तनवादिनस्तु यदर्थस्तदङ्गीकारस्तदुक्तमेव[8] । अक्षौहिणीरथन्तरादिपदे तु जहत्स्वार्थैवेति बोध्यम् ॥

(११९४ पक्षान्तरवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ परस्परव्यपेक्षां सामर्थ्यमेके ॥ * ॥

(व्याख्याभाष्यम्)

परस्परव्यपेक्षां सामर्थ्यमेक इच्छन्ति ॥ का पुनः शब्दयोर्व्यपेक्षा? । न ब्रूमः—शब्दयोरिति ॥ किं तर्हि? । अर्थयोः । इह राज्ञः पुरुष इत्युक्ते राजा पुरुषमपेक्षते ममायमिति, पुरुषोपि राजानमपेक्षते अहमस्येति । तयोरभिसंबन्धस्य षष्ठी वाचिका भवति । तद्यथा—कष्टं श्रित इति क्रियाकारकयोरभिसंबन्धस्य द्वितीया वाचिका भवति ॥

(प्रदीपः) परस्परेति । व्यपेक्षैवात्र सामर्थ्यम्, न त्वेकार्थीभाव इत्याहुः ॥ का पुनरिति । स्वं स्वमर्थं प्रति गुणभावाच्छब्दयोः परस्परव्यपेक्षा न संभवतीति प्रश्नः ॥ अर्थयोरिति । प्रमातृगतां व्यपेक्षामर्थे समारोप्य शब्दाः संस्क्रियन्ते ॥ ममायमिति । दानादिक्रियानिमित्तं[9] राज्ञः स्वाम्यमुपजायते ॥ अहमस्येति । पुरुषस्य प्रतिग्रहादिनिमित्तः[10] स्वत्वोत्पादः ॥ क्रियाकारकयोरिति । कारकशब्देनात्र शक्त्याधारो द्रव्यमुच्यते । क्रियाद्रव्ययोरभिसंबन्धनिमित्तत्वाच्छक्तिरेवाभिसंबन्धः । तेन कर्मशक्तेर्वाचिका द्वितीयेत्यर्थः ॥ अथ वा कारकशब्देन शक्तिरेवोच्यते । शक्तेश्च वाचिका द्वितीया । सामर्थ्यात् क्रियाकारकसंबन्धस्याप्यवगमात्तस्य वाचिकेत्युक्तम् ॥

(उद्योतः) एकार्थीभावस्यापि व्यपेक्षापूर्वकत्वात् कथमस्य पक्षान्तरत्वमत आह—व्यपेक्षैवेति । एकार्थीभाववादिनोपि राजपुरुषपदयोः परस्परं विना बोधाजनकत्वमूला[11]काङ्क्षासत्त्वे एव तद्बलात्संबन्धांशे विशिष्टशक्तिकल्पनम् । व्यपेक्षावादिनस्त्वाकाङ्क्षावशादेव तद्भानम्, न तु विशिष्टोपस्थापकशक्तिकल्पनेति भावः ॥ ननु शब्दयोरचेतनत्वात्स्वतो व्यपेक्षाभावः, एवमर्थस्यापि । अर्थे आरोपेण सेति चेत्, शब्देप्यारोपः स्यादत आह—स्वं स्वमिति । एतदर्थः क इत्येव शब्दविषयाकाङ्क्षा प्रमातुः न त्वन्वयिशब्दान्तरविषया । अर्थे ज्ञाते तु कोस्यान्वय्यर्थ इत्याकाङ्क्षा प्रमातुरिति भावः ॥ नन्वन्वययोग्यार्थान्तरजिज्ञासाकाङ्क्षा । सा च प्रमातृगता नार्थगतेत्यत आह—प्रमातृगतामिति । तस्याश्च तदुपस्थापितार्थे एवारोपो न तु गुणभूते शब्द इति भावः ॥ अर्थबोधोत्तरमेवास्यान्वय्यर्थः क इति जिज्ञासोदयात् ॥ तत्र षष्ठ्युपात्तार्थे[12] तदिच्छारोपः । अयमर्थोऽर्थान्तरमाकाङ्क्षत इति व्यवहारात् । अपरस्त्वाकाङ्क्षाविषयत्वात्साकाङ्क्ष इति बोध्यम् ॥ दानादीति । दानं वेतनादेः ॥ स्वाम्यमित्यस्य 'पुरुष'[13] इति शेषः ॥ भाष्ये—षष्ठी वाचिकेति । समासे त्वाकाङ्क्षावशादेव तद्बोधो वाक्यतुल्याकाङ्क्षाया एवात्र सत्त्वाद् । विरुद्धविभक्तिराहित्येपि भेदसंबन्धबोध इति भावः ॥ विशेषणविशेष्यभावांशे वाक्यन्यायेन समासस्यापि शक्तिः, न तु सा विशिष्टोपस्थितिनियामिकेति वा बोध्यम् ॥ आकाङ्क्षयापि राजार्थपुरुषार्थयोः संबन्धे इदं शक्तमिति शक्तिग्रहाद् न विशिष्टोपस्थितिरत्र पक्षे । अयमपि वृत्तिवर्तनवाद्येकदेशिन एव पक्षो न तु नित्यशब्दवादिन इति बोध्यम् ॥ वाक्ये त्वाकाङ्क्षितस्यास्य विभक्तिशब्दवाच्यत्वम् । न च संबन्धसंबन्धो वाक्येप्याकाङ्क्षालभ्यः, अनवस्थापत्तेरिति दिक् ॥ भाष्ये—क्रियाकारकयोरभिसंबन्धस्येति । शक्तिः संबन्धश्चोभयमपि विभक्तिशक्यं, घटमित्येतन्मात्रादपि घटकर्मिकेति बोधात्संबन्धस्य

---

१ धात्वर्थविशेषणत्वात्तत्रान्तर्भूत इति पाठः साधुर्भाति । (र. ना.) २ पूर्वा या आपत्तिस्तद्भ्रम इत्यर्थः । (र. ना.) ३ 'स्यैकार्थत्वादवयव' । ४ 'भवति' । ५ तथा च तत्र विशेषणाद्यन्वयः स्यादिति भावः । (र. ना.) ६ स्वरूपेण भासमानविशेष्यतावत्येव विशेषणाद्यन्वयस्वीकारादिति भावः । (र. ना.) ७ 'वृत्तिर्वृत्तिवर्त' । ८ तत्पदार्थो जहत्स्वार्थावृत्तिः । (र. ना.) ९ वेतनदानादि क्रियानिमित्तं यत्र तथाभूतं पुरुषनिरूपितं राज्ञि स्वाम्यमुपजायते इत्यर्थः । (र. ना.) १० अत्रापि वेतनप्रतिग्रहादिर्निमित्तं यत्रेति बहुव्रीहिः । (र. ना.) ११ राजपुरुषपदयोर्यत्परस्परं विना बोधाजनकत्वं तन्मूलभूताकाङ्क्षासत्त्वे एवेत्यर्थः । (र. ना.) १२ अस्यान्वय्यर्थः क इत्यत्रेति शेषः । (र. ना.) १३ निरूपितत्वं सप्तम्यर्थः । (र. ना.)

वाक्यार्थत्वासंभवात् । अत एव घटमित्युक्ते क्रियाविशेषाकाङ्क्षेति भावः ॥ शक्तिरेवाभिसंबन्ध इति । इदं चिन्त्यम् । षष्ठ्यामिवात्रापि संबन्धबोधकताया एव भाष्याभिप्रेतत्वस्य तदक्षरस्वारस्येन लाभात् लक्षणायां मानाभावाच्च । भाष्यान्तरस्यैतद्विरुद्धस्यानुपलम्भाच्च ॥ अथ चेतीत्यपि न, कारकशब्देन शक्तेरुक्तौ क्रियाकारकशक्त्योरभिसंबन्धस्येत्यर्थलाभेपि भाष्यतः शक्तेर्वाच्यत्वालाभात् । नापि शक्तिसंबन्धस्य द्वितीया वाचिकेति यत्किंचिदेतत् ॥

( आक्षेपभाष्यम् )

**अथ यद्येवैकार्थीभावः सामर्थ्यम्, अथापि व्यपेक्षा सामर्थ्यम् । किं गतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ? ॥**

( प्रदीपः ) **अथ यद्येवेति** । यद्यस्मात् सूत्राद् द्विविधस्यापि सामर्थ्यस्य संप्रत्ययः तदा युक्तायुक्तविचारणा युक्ता नान्यथेति प्रश्नः ॥

( उद्द्योतः ) भाष्ये—**अथ यद्येवेति** । ननु पूर्वं परार्थाभिधानमपि सामर्थ्यमुक्तं भेदसंसर्गादि च तत्कथमधुनैकार्थीभावव्यपेक्षयोरेवोल्लेख इति चेत् । न, तेषामेकार्थीभावपदार्थत्वादिति तात्पर्यात् ॥

( समाधानभाष्यम् )

**गतमित्याह ॥ कथम् ? । सं[1]मोयमर्थशब्देन सह समासः । सम् चोपसर्गः । उपसर्गाश्च पुनरेवमात्मकाः—'यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः' । न चेह कश्चित् क्रियावाची शब्दः प्रयुज्यते, येन समः सामर्थ्यं स्यात् । तत्र प्रयोगादेतद्गन्तव्यम्—'नूनमत्र कश्चित् प्रयोगार्हः शब्दो न प्रयुज्यते येन समः सामर्थ्यम्' इति । तद्यथा-धूमं दृष्ट्वा-'अग्निरत्र' इति गम्यते, त्रिविष्ट[2]ब्धकं दृष्ट्वा 'परिव्राजक' इति ॥ कः पुनरसौ प्रयोगार्हः शब्दो न प्रयुज्यते ? ॥ [उ[3]च्यते] सङ्गतार्थं समर्थं संसृष्टार्थं समर्थं संप्रेक्षितार्थं समर्थं संबद्धार्थं समर्थमिति ॥ तद्यदा तावदेकार्थीभावः सामर्थ्यम्, तदैवं विग्रहः करिष्यते—सङ्गतार्थः समर्थः, संसृष्टार्थः समर्थ इति । तद्यथा—सङ्गतं घृतं सङ्गतं तैलम्' इत्युच्यते, एकीभूतमिति गम्यते । संसृष्टार्थः समर्थ इति । तद्यथा—'संसृष्टोग्निः' इत्युच्यते, एकीभूत इति गम्यते ॥**

**यदा व्यपेक्षा सामर्थ्यम्, तदैवं विग्रहः करिष्यते—संप्रेक्षितार्थः समर्थः संबद्धार्थः समर्थ इति ॥ कः पुनरिह संबध्नात्यर्थः ? ॥ व्यतिषङ्गः ॥ संबद्ध इत्युच्यते यो रज्ज्वा अयसा वा कीलेन वा व्यतिषक्तो भवति ॥ नावश्यं बध्नातिर्व्यतिषङ्ग एव वर्तते । किं तर्हि ? अहानावपि वर्तते । तद्यथा—'संबद्धाविमौ दम्यौ' इत्युच्यते यावन्योन्यं न जहीतः ॥ अथ वा भवति चैवंजातीयकेषु बध्नातिर्वर्तते । तद्यथा 'अस्ति नो गर्गैः संबन्धः' 'अस्ति नो वत्सैः संबन्धः' इति ॥**

( प्रदीपः ) **सम् चोपसर्ग इति** । तेन तस्य द्रव्यवाचिनाऽर्थशब्देन सामर्थ्यं नोपपद्यत इति संशब्दोपादानाद्योग्या क्रियाक्षिप्यते इत्यर्थः ॥ **सङ्गतार्थं संसृष्टार्थमिति** तुल्यार्थधातुनिर्देशः । **संप्रेक्षितार्थं संबद्धार्थमिति** पर्यायनिर्देशः ॥ **व्यतिषङ्ग इति** । रज्ज्वादिनिमित्तः संश्लेषो व्यतिषङ्गः ॥ **एवंजातीयकेष्विति** । व्यपेक्षायुक्तेष्वित्यर्थः ॥ **अस्ति न इति** । सत्यामपि हानौ विद्यादिकृतापेक्षायां संबन्धशब्दस्य दर्शनादित्यर्थः ॥

( उद्द्योतः ) **संचोपसर्ग इति** । यद्यप्यनुपसर्गा अपि प्रादयः सन्ति तथापि प्रसिद्धत्वादेवमुक्तम् ॥ **क्रियाविशेषम्** । क्रियागतं विशेषम् ॥ **येन सम इति** । यदर्थेन समोर्थस्य सामर्थ्यमित्यर्थः । तस्मात्तदर्थान्तर्भावोऽत्रानुमीयते इति भावः । इयमेव शाकपार्थिवादौ गतिः ॥ ननु प्रक्रान्तार्थद्वयावगमकत्वे पृष्टेऽर्थचतुष्टयकथनमनुपयोगीत्यत आह—**तुल्यार्थेति** ॥ ननु गमिसृज्योरीक्षतिबध्नात्योस्तुल्यार्थत्वं न दृष्टमत आह—**पर्यायेति** । पूर्वत्र तुल्यार्थधातुनिर्देशद्वारा पर्यायत्वम्, इह तु धात्वोस्तुल्यार्थत्वाभावेपि समुदाययोः पर्यायत्वमित्यर्थः ॥ पर्यायोपादानं च तदर्थदार्ढ्याय ॥ परस्परसंसृष्टार्थोपस्थितिरेव, न पृथगुपस्थितिरित्येकार्थीभावपदार्थः स्पष्टमेवानेनोक्तः । व्यतिषङ्गोत्र न कर्मव्यतिहार इत्याह—**रज्ज्वादीति** ॥ भाष्ये—**अहानाविति** । अहानिः परस्परं विना शाब्दबोधाजनकत्वमेवेति बोध्यम् । अन्तरङ्गाकाङ्क्षावशादिति तात्पर्यम् । यथा च वत्सयोस्तयोरन्यासंबन्धस्तथाऽनयोर्विशेषणसंबन्धो विशेषणसजातीयविशेषणसंबन्धश्च नेति सूचितम् ॥ ननु संबद्धाविमावित्यत्रैकोपस्थितिविषयत्वमेव संबद्धत्वम्, न चैवं प्रकृते । भिन्नोपस्थितिविषयत्वं हि व्यपेक्षा । तत्र तु हानिरस्त्येवेत्यत आह—**अथ वा भवति चैवमिति** ॥ तद्व्याचष्टे—**सत्यामपि हानाविति** । भिन्नोपस्थितिविषयत्वे इत्यर्थः ॥

( सामर्थ्यदूषणाधिकरणम् )

( व्यपेक्षादूषणभाष्यम् )

**अथैतस्मिन्व्यपेक्षायां सामर्थ्ये योसावेकार्थीभावकृतो विशेषः स वक्तव्यः ॥**

( प्रदीपः ) **अथैतस्मिन्निति** । यदि वृत्तावेकार्थीभावो नाभ्युपगम्यते तदा वाक्यवत् संख्याविशेषोपसर्जनविशेषणादीनां प्रसङ्गात्तदभावो वचनेन प्रतिपाद्यो वावचनं च कर्तव्यं

---

१ सम् शब्दस्येत्यर्थः एवमग्रेऽपि । (र. ना.) २ त्रिदण्डमित्यर्थः । (र. ना.) ३ यद्यपि 'शब्दो न प्रयुज्यते' इत्ययं पाठः पुस्तकद्वय एवोपलभ्यते । अन्यत्र तु 'शब्द उच्यते' इत्येवमेव पाठ उपलभ्यते तथापि प्राक् 'प्रयोगार्हः शब्दो न प्रयुज्यते' इति सामान्याभिधाने विशेषजिज्ञासायामपि तथैव 'कः पुनरसौ प्रयोगार्हः शब्दो न प्रयुज्यते' इति प्रश्नाकारस्यैव भाष्यशैलीसिद्धत्वमिति बोध्यम् । ४ 'एवेति' ।

समानार्थस्य वाक्यस्यानिवृत्त्यर्थम् । तदेवं शब्दस्य स्वाभाविकं रूपं कदाचिन्नित्यदर्शनाश्रयणेनानुगम्यते कदाचिदबुधबोधनार्थं कार्यदर्शनाश्रयणेन ॥ कार्यपक्षे तु बहवो वार्त्ता धर्मा वचनेन प्रतिपाद्या इति गौरवप्रसङ्गः । तथा हि—निष्कौशाम्बिर्गोरथो घृतघटो गुडधानाः केशचूडः सुवर्णालङ्कारो द्विदशाः सप्तपर्णो गौरखर इत्यादिषु क्रान्तयुक्तपूर्णमिश्रसंघातविकारसुच्प्रत्ययलोपवीप्साजातिविशेषाभिधायित्वं च वचनप्रतिपाद्यम् ॥ नित्यदर्शने त्वेकार्थीभावकृत एवायं विशेष इति न किंचित् प्रतिपादनीयम् ॥

( उद्द्योतः ) एवमुभयोः सूत्रारूढत्वं कृत्वा व्यपेक्षापक्षं दूषयति—भाष्ये—अथैतस्मिन्निति ॥ संख्याविशेषेति । अप्सुचर इत्यादौ ॥ वचनेनेति । सविशेषणानां वृत्तिर्नेत्यादिना ॥ ननु विभाषाधिकारादाचार्यस्यायमेव पक्षोऽभिप्रेतो लक्ष्यतेऽत आह—तदेवमिति ॥ क्रान्तादिलोपाविधानं नित्यताश्रयेण । विभाषाधिकारश्च कार्यशब्दाश्रयेण, तत्पक्षेऽर्थस्यापि शास्त्रैकगम्यत्वेनैकार्थीभावस्य वैकल्पिकत्वं बोधयितुं सूत्रमावश्यकमिति भावः ॥ कार्यपक्षे तु बहवो वार्त्ता धर्मा इति । वाक्याद्वृत्तिर्निष्पद्यते इति वादिनां वाक्यश्रूयमाणक्रान्तादीनां शास्त्रं विना लोपासंभवो वीप्सादिबोधासंभवश्चेति भावः ॥ नित्यदर्शने त्विति । एकार्थीभाववादिनाऽर्थानां स्वाभाविकत्वपक्षस्यैव प्रागुपपादनान्नित्यदर्शनशब्देनैकार्थीभावदर्शनमत्रोच्यते इत्याहुः ॥ वस्तुतस्तु निरादिपूर्वपदानां क्रान्ताद्यर्थवृत्तित्वैषामर्थानां नैकार्थीभावकृतविशेषत्वम् । अत एव तत्कृतविशेषेषु भाष्ये नैतेषामुक्तिः । निरादयः क्रान्ताद्यर्थे इत्यादीनां क्रान्ताद्यर्थे वर्तमाना निरादय इत्यर्थः । एवं चोक्तार्थानामिति न्यायेन तेषामन्यपदार्थबोधकपदवदप्रयोगः सिद्धः । अत एव संख्ययाव्ययेति सूत्रे समासेनाभिहितत्वात्सुजर्थस्य सुचोऽभाव इति भाष्य उक्तम्, सुजर्थश्च जन्मेति तत्रैव वक्ष्यते ॥ किं चैकार्थीभावो नामैकोपस्थितिस्तत्कृतत्वं न क्रान्तादिलोपस्य, संख्याविशेषप्रतीतौ हि पृथगुपस्थापकपदज्ञानं कारणमिति तत्प्रतीत्यभावस्तत्कृतो भवत्येव । अन्यथा घटः घटपटावित्यादौ घटत्वादेरपि संख्यावत्त्वेनोपस्थित्यापत्तिः । एवं द्वन्द्वे चकाराप्रयोगोप्येतत्कृत एव । न च समासेन चार्थस्याभिहितत्वात्तदप्रयोगः, समासेन सत्त्वभूतस्य विशेष्यतयाऽभिधानेप्यसत्त्वभूतस्य विशेषणतया बोधार्थं चप्रयोगस्य दुर्वारत्वात् । पृथगुपस्थितयोरेव समुच्चयस्य चद्योत्यत्वेन तदप्रयोग इति तस्यापि तत्कृतत्वम् । लोकेपि पृथग्ज्ञातयोरेवैकदेशत्वे समूहादिव्यवहारात् । चार्थे द्वन्द्व इति तु सादृश्याच्चार्थत्वारोपेण नेयमिति दिक् ॥

( ११९५ दूषणदर्शकवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ तत्र नानाकारकान्निघातयुष्मदस्मदादेशप्रतिषेधः ॥ * ॥

( भाष्यम् ) तत्रैतस्मिन् व्यपेक्षायां सामर्थ्ये सति नानाकारकान्निघातयुष्मदस्मदादेशाः प्राप्नुवन्ति तेषां प्रतिषेधो वक्तव्यः ॥

निघात—अयं दण्डो हरानेन । अस्ति दण्डस्य हरतेश्च व्यपेक्षेति कृत्वा निघातः प्राप्नोति ॥

युष्मदस्मदादेशाः—ओदनं पच तव भविष्यति । ओदनं पच मम भविष्यति । अस्त्योदनस्य युष्मदस्मदोश्च व्यपेक्षेति कृत्वा वान्नावादयः प्राप्नुवन्ति ॥ तेषां प्रतिषेधो वक्तव्यः ॥

( प्रदीपः ) एवं व्यपेक्षासामर्थ्ये दोषमभिधायेदानीं ये सर्वथा दोषास्तानुदाहरति—तत्र नानाकारकादिति । नानाशब्दः पृथग्भाववचनः । तेन भिन्नायाः क्रियायाः यत्कारकं तन्नानाकारकम् । यथा—अयं दण्डो हरानेनेति दण्डोस्तिक्रियायाः कर्ता, न तु हरतिक्रियायाः ॥ तथा नाना भिन्नमन्यत्कारकं यस्य तदपि नानाकारकम् । यथा—ओदनं पच तव भविष्यतीत्यत्र पचेस्त्वेत्येतत्कारकत्वेन नोपात्तम् ततः पचेत्येतस्मादुत्तरस्य युष्मदादेशो न भवति । क्वचित्तु पचौदनं तव भविष्यतीति पाठः । ओदनस्य पचतिक्रियां प्रति कारकत्वम्, न तु भवतिक्रियां प्रतीति नानाकारकत्वं भिन्नक्रियापेक्षत्वात्कारकत्वस्य ॥ अस्ति दण्डस्येति । अनेनेति पदेन दण्डस्य हरणे करणत्वेन निर्देशात् ॥ अस्त्योदनस्येति । स्वस्वामिभावस्य भाविनः प्रतिपादनादित्यर्थः ॥

( उद्द्योतः ) ननु व्यपेक्षावादे एकार्थीभावकृतविशेषस्य वक्तव्यत्ववदेकार्थीभाववादेपि निघातयुष्मदस्मदाद्यादेशोदाहरणविषयैकार्थीभावाभावेन समर्थपरिभाषानुपस्थितौ तिष्ठति देवदत्तो गच्छ त्वमित्यादौ भिन्नवाक्ये निघातादिप्रतिषेधो वक्तव्यः स्याद् । व्यपेक्षावादे तु न दोषस्तत्रापि समर्थपरिभाषोपस्थितौ भिन्नवाक्ये सामर्थ्याभावात् ॥ एवं राज्ञो गौश्चाश्वश्च पुरुषश्चेत्यर्थे राज्ञो गवा गोश्वाश्वपुरुषाभ्यामेकार्थीभावस्य वक्तुं शक्यतया युगपत्षष्ठीतत्पुरुषद्वन्द्वौ प्राप्नुतस्तथा च स्वरद्वयं स्यादिति तत्प्रतिषेधो वाच्यः । व्यपेक्षावादे तु न, राज्ञस्त्रिभिरेव व्यपेक्षा न गवेति वक्तुं शक्यत्वादिति पूर्वपक्षे व्यपेक्षावादेपीदमवश्यं वाच्यमित्याह—भाष्ये—तत्र नानाकारकादिति । तत्र पक्षद्वयेपि ॥ इदमेवाभिप्रेत्य व्याचष्टे—ये सर्वथा दोषास्तानुदाहरतीति । सर्वथा पक्षद्वयेपीत्यर्थः । भाष्ये तत्र चेति पाठे तत्रैकार्थीभावे । चाद्व्यपेक्षायाम् ॥ तत्रैतस्मिन् व्यपेक्षायामिति । तत्रैकार्थीभावे ॥ एतस्मिन् व्यपेक्षासामर्थ्ये चेत्यर्थः ॥ हरतेर्नानाप्रकारानेककारकात्परत्वाभावादाह—नानाशब्द इति । पृथग्भावेति । पृथक्क्रियावचन इत्यर्थः ॥ भावशब्दः क्रियापरः तदाह—भिन्नायाः क्रियाया इति । निघातप्राप्तिविषयभिन्नाया इत्यर्थः ॥ अयं दण्ड इत्यत्र निघातविषया हरणक्रिया तद्भिन्नास्तिक्रिया तत्कारकं दण्डः । अत्र पक्षे ओदनं पचेत्यादेरनुदाहरणत्वमाशङ्क्याह—तथा नानेति । अन्यद् युष्मदस्मद्भिन्नं कारकं यस्य पचेत्यादेरित्यर्थः ॥ प्रतिषेधवचनारम्भे तत्रादेशाभावमुपपादयति—अत्र पचेरिति ॥ क्वचित्त्विति । युष्म-

१. नित्याः शब्दा इति सिद्धान्ताभ्युपगमेनेत्यर्थः । एवं कार्यदर्शनाश्रयणेनेत्यत्रापि व्याख्येयम् । ( र. ना. ) २ वृत्तौ भवा वार्त्ताः । ( र. ना. ) ३ 'यित्वं वच' । ४ संख्याविशेषप्रतीतौ पृथगुपस्थापकपदज्ञानस्य कारणत्वाभावे इत्यर्थः । ( र. ना. ) ५ ज्ञेयमित्यर्थः । ( र. ना. )

दस्तत्साध्यभवनक्रियाभिन्नपच्यादिक्रियाकारकत्वादोदनादि नानाकारकमिति भावः ॥ ननु हरतेः कारणमात्रापेक्षत्वेन न दण्डेन व्यपेक्षेत्यत्राह—**अनेनेतिपदेनेति** । अत एवास्ति सर्पिष्पिवानेन पय इत्यादौ षत्वम् ॥ पचौदनमित्यत्र संबन्धाभावात्कथं व्यपेक्षेत्यत आह—**भाविन इति** ॥ ओदनं पचेति पाठेप्योदनद्वारिका पच्चिनापि व्यपेक्षेति बोध्यम् । अर्थयोराकाङ्क्षैव व्यपेक्षेति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

**किमुच्यते—नानाकारकादिति, यदा तेनैवासज्य ह्रियते ॥**

( प्रदीपः ) **तेनैवासज्येति** । ततश्च दण्डस्य हरणं प्रति कारकत्वान्नास्ति नानाकारकत्वमिति प्रश्नः ॥

( समाधानभाष्यम् )

**नापि ब्रूमः—अन्येनासज्य ह्रियत इति ॥ किं तर्हि? । शब्दप्रमाणका वयम् । यच्छब्द आह, तदस्माकं प्रमाणम् । शब्दश्चेह सत्तामाह—'अयं दण्डः' अस्तीति गम्यते । स दण्डः कर्ता भूत्वान्येन शब्देनाभिसंवध्यमानः करणं संपद्यते । तद्यथा—कश्चित्कंचित्पृच्छति—'क देवदत्तः' इति । स तस्मायाचष्टे—'असौ वृक्षे' [ इति 'कतरस्मिन्' ] 'यस्तिष्ठति' इति स वृक्षोधिकरणं भूत्वाऽन्येन शब्देनाभिसंवध्यमानः कर्ता संपद्यते ॥**

( प्रदीपः ) **अयं दण्डोस्तीति** । यत्रान्यत् क्रियापदं न श्रूयते तत्रान्तरङ्गत्वादस्तिक्रियैव प्रतीयते । ततोस्तिक्रियायां दण्डस्य कर्तृत्वाद्भवत्येव नानाकारकत्वमित्यर्थः ॥ **क देवदत्त इति** ॥ यदा बहवः पुरुषा दूरस्था भवन्ति तदैते प्रश्नोत्तरे ॥ **यस्तिष्ठतीति** । यदान्ये निपातिता वृक्षाः, एकस्तूर्ध्वस्तदा विशिष्टवृक्षाधिकरणत्वेन देवदत्तः प्रतिपाद्यते ॥

( उद्द्योतः ) **एकस्तूर्ध्व इति** । तिष्ठतेश्चोर्ध्वदेशसंयोगोप्यर्थ इति भावः ॥

( ११९६ दूषणान्तरवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ प्रचये समासप्रतिषेधः ॥ * ॥

( भाष्यम् ) **प्रचये समासप्रतिषेधो वक्तव्यः । राज्ञो गौश्चाऽश्वश्च पुरुषश्च राजगवाश्वपुरुषा इति ॥**

( प्रदीपः ) **प्रचय इति** । अनेकस्मिन् संबन्धिनि विवक्षित इत्यर्थः । तत्र गो राज्ञापि सामर्थ्यमश्वपुरुषाभ्यामपि । तत्र युगपद् द्वौ द्वन्द्वतत्पुरुषौ प्राप्नुतः । पूर्वं वा तत्पुरुषः पश्चाद् द्वन्द्वः । विप्रतिषेधाभावाच्च न परत्वेन व्यवस्था, भिन्नसमुदायविषयत्वात् संज्ञाद्वयस्य । तत्र षष्ठीतत्पुरुषे सति **गोरतद्धितलुकीति** टच् प्राप्नोति । अर्थश्च भिद्यते राजगवाश्वपुरुषा इत्युच्यमानेऽश्वपुरुषयो राज्ञा संबन्धो न प्रतीयेत ॥

( उद्द्योतः ) भाष्ये—**प्रचयेति** । व्यपेक्षावादेपि समुदायेन व्यपेक्षायामवयवातिरिक्तसमुदायस्यावयवानालिङ्गितस्य निरूपयितुमशक्यत्वेनावयवैरपि व्यपेक्षाऽस्त्येवेति तन्मतेऽप्ययं दोषस्तदवस्थ इति भावः ॥ ननु प्रचयशब्दस्य समाहारपर्यायत्वेन समाहारे समासनिषेधेपीतरेतरयोगे स दुर्वार इत्यत आह—**अनेकस्मिन्निति** । प्रचय आधिक्यमिति भावः ॥ ननु युगपदेकस्यानेकसंबन्धानुपपत्तेः कथं युगपत्समासद्वयप्रसङ्गोऽत आह—**तत्रेति** ॥ **गोराज्ञापीति** । समुदायव्यपेक्षायामवयवव्यपेक्षायाः समुदायैकार्थीभावेऽवयवैकार्थीभावस्य च दुर्निवारत्वादिति भावः । अश्वादिभिश्च साहित्यसत्त्वादेव सं इति बोध्यम् ॥ **पूर्वं वा तत्पुरुष इति** । प्रथमातिक्रमे कारणाभावादिति भावः ॥ ननु परत्वाद् द्वन्द्व एव भविष्यतीति न दोषोऽत आह—**विप्रतिषेधेति** ॥ आकडारीयत्वेप्यविरोधमुपपादयति—**भिन्नसमुदायेति** ॥ **टजिति** । तथा च क्लीत्वे ङीप् स्यात् । किं च द्वन्द्वोत्तरतत्पुरुषेऽवङो वैकल्पिकत्वेन राजगोश्वपुरुषा इत्यपीष्यते तन्न स्यादिति भावः ॥

( ११९७ द्वितीयदूषणबाधकवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ समर्थतराणां वा ॥ * ॥

( व्याख्याभाष्यम् )

**समर्थतराणां वा पदानां समासो भविष्यति ॥ कानि पुनः समर्थतराणि? । यानि द्वन्द्वभावीनि ॥ कुत एतत्? । एषां ह्याशुतरा वृत्तिः प्राप्नोति । तद्यथा—'समर्थतरोयं माणवकोऽध्ययनाय इत्युच्यते 'आशुतरग्रन्थः' इति गम्यते ॥**

( प्रदीपः ) **समर्थतराणां वेति** । शक्ततराणामित्यर्थः ॥ **एषां ह्याशुतरेति** । प्रथमा प्रातिपदिकार्थमात्रे विधीयमाना न किञ्चिद्बाह्यं वस्तु अपेक्षते षष्ठी तु बाह्यसंबन्ध्यपेक्षत्वाद्बहिरङ्गा । तत्रान्तरङ्गप्रथमानिमित्तः पूर्वं द्वन्द्वो भवति । **असिद्धं बहिरङ्गमन्तरङ्गे** इति द्वन्द्वे कर्तव्ये षष्ठीसमासस्यासिद्धत्वात् ॥ **आशुतरग्रन्थ इति** । आशु प्रतिपत्तव्यो ग्रन्थः आशुतर उच्यते ॥

( उद्द्योतः ) **समर्थतराणामिति** भाष्यं नैकार्थीभावपरं तत्र तरतमायोगादत आह—**शक्तेति** ॥ समर्थतरत्वे आशुतरत्वं हेतुः, तत्त्वमन्तरङ्गत्वादिति व्युत्पादयति—**प्रथमेत्यादिना** ॥ आशुतरग्रन्थ इति बहुव्रीहिः । एवं चाशुतरं कार्यप्राप्तिमत्त्वमेव शक्ततरत्वं बोध्यम् ॥

( व्याख्यान्तरभाष्यम् )

**अपर आह—समर्थतराणां वा पदानां समासो भविष्यति ॥ कानि पुनः समर्थतराणि? । यानि द्वन्द्वभावीनि । कुत एतत्? । समानविभक्तीन्येतानि, अन्यविभक्ती राजा । भवति विशेषः स्वस्मिन् भ्रातरि पितृव्यपुत्रे च ॥**

( प्रदीपः ) **एतानीति** । तुल्यजातीयत्वं व्यपेक्षायामेकार्थीभावे च प्रत्यासन्नतरं कारणमित्यर्थः ॥

---

१ हरतीत्यनेनैव करणत्वेनासज्य संवध्य ह्रियते अन्यक्रियाकारकत्वात् पृथक् क्रियते इत्यर्थः । अयं भावः । अयं दण्डो हरानेन इत्यत्र क्रियान्तरस्याश्रुतत्वादेकक्रियानिरूपितमेव कारकत्वं दण्डस्येति नानाकारकत्वं नास्तीति । ( र. ना. ) २ हरणं प्रत्येवेति सावधारणं व्याख्येयम् । ( र. ना. ) ३ अन्येन, अस्तीत्यनेन, आसज्य, कर्तृत्वेन संवध्य, दण्डो हरणक्रियां प्रति करणत्वं ह्रियते प्राप्यते इति वयं नैव ब्रूमः किं तर्हि, आकाङ्क्षादि बलाद् दण्डशब्द एवाहेत्यर्थः । अयं भावः । पिण्डीमित्यत्र भुङ्क्ष्वेति क्रियाध्याहारवत् दण्ड इत्यत्राप्यस्तिक्रियाध्याहार इति व्याख्येयम् । (र. ना.) ४ अनेकत्वमिति तु कैयटानुसारिणो वयम् । ( र. ना. ) ५ द्वन्द्वसमास इत्यर्थः । ( र. ना. ) ६ इदं प्राप्यन्वयि । ( र. ना. ) ७ 'एतानि हि समानविभक्तीति' । ८ समानमातापितृजत्वादिति भावः । ( र. ना. )

(उद्द्योतः) तुल्येति। तुल्यजातीयैः प्रथमं झटित्येकार्थीभावस्य व्यपेक्षाया वा कल्पनात्पूर्वं द्वन्द्वे ततः षष्ठीतत्पुरुष इत्यर्थः॥

(११९८ द्वितीयदूषणबाधकवार्तिकान्तरम् ॥ ९ ॥)

## ॥*॥ समुदायसामर्थ्याद्वा सिद्धम् ॥*॥

(व्याख्याभाष्यम्)

**समुदायसामर्थ्याद्वा पुनः सिद्धमेतत्। समुदायेन राज्ञः सामर्थ्यं भवति, नावयवेन॥**

(प्रदीपः) **समुदायसामर्थ्यादिति**। समुदायद्वन्द्वार्थं प्रति राजा विशेषणत्वेनोपात्त इति तेनैव राज्ञः सामर्थ्यं नावयवेनेत्यर्थः॥

(उद्द्योतः) **नावयवेनेति**। प्रत्येकमवयवैरनुमीयमानस्य सामर्थ्यस्य सत्त्वेपि साक्षान्नेत्यर्थः॥ एवं च तस्य समुदायेन सामर्थ्यात् पूर्वं तत्समुदायप्रयुक्तो द्वन्द्व इति भावः॥ ननु द्वन्द्वे समुदायेनेव तदवयवगोशब्देनापि राजपदार्थस्य सामर्थ्यसत्त्वात्तत्समुदायस्यापि षष्ठीतत्पुरुषसंज्ञा स्यादिति टचूप्रसङ्ग इति चेन्न। नावयवेनेत्यस्याश्वपुरुषसापेक्षेणेति शेषेणादोषात्।

(व्याख्यान्तरभाष्यम्)

**अपर आह—**

(व्याख्यान्तराय न्यासान्तरम्)

### * समर्थतराणां वा समुदायसामर्थ्यात् * ॥

(व्याख्याभाष्यम्)

**समर्थतराणां वा पदानां समासो भविष्यति॥ कुत एतत्?। समुदायसामर्थ्यादेव॥**

(प्रदीपः) **अपर आहेति**। अत्र पक्षे समुदायसामर्थ्यं समर्थतरत्वे हेतुः। समुदायसंबन्धे चावयवस्याप्यनुमीयमानः संबन्धोऽस्तीति तदपेक्षः प्रकर्षप्रत्ययः॥

(उद्द्योतः) तदेव स्फुटं व्याख्यानान्तरव्याजेनाह—**अपर आहेति**॥ राज्ञः समुदायेनैव सामर्थ्यात्तरपो वैयर्थ्यमाशङ्क्याह—**समुदायेति**॥

(आक्षेपभाष्यम्)

**अस्मिन्पक्षे 'वा' इत्येतदसमर्थितं भवति॥**

(प्रदीपः) **अस्मिन् पक्ष इति**। एकस्मिन् साध्ये हेतुद्वयोपादाने विकल्पो भवति इह त्वन्यतरान्यो हेतुः॥

(समाधानभाष्यम्)

**एतच्च समर्थितम्॥ कथम्?। नैव वा पुनरत्र राज्ञोऽश्वपुरुषावपेक्षमाणस्य गवा सह समासो भवति॥ कथं तर्हि गोः राजानमपेक्षमाणस्याश्वपुरुषाभ्यां सह समासो भवति?॥ प्रधानमत्र तदा गौर्भवति। भवति च प्रधानस्य सापेक्षस्यापि समासः॥**

(प्रदीपः) **एतच्चेति**। सापेक्षत्वेनासामर्थ्याद्राज्ञो गवा समासो न भवतीत्यस्यार्थस्य वाशब्दः प्रतिपादकः॥

(उद्द्योतः) **इत्यस्यार्थस्येति**। विशेषणसापेक्षत्वे इव विशेष्यान्तरसापेक्षत्वमप्यसामर्थ्यप्रयोजकम्। एवं चेदं पक्षद्वयेप्यनावश्यकमिति भावः॥ भाष्ये—**प्रधानमत्रेति**। अवयवसंख्यया तत्र समूहस्य संख्यावत्त्वाश्रयणात्तस्य प्राधान्यमिति भावः॥

(वाक्यलक्षणाधिकरणम्)

(११९९ वाक्यलक्षणवार्तिकम् ॥ १० ॥)

## ॥*॥ आख्यातं साव्ययकारकविशेषणं वाक्यम् ॥*॥

(व्याख्याभाष्यम्)

**आख्यातं साव्ययं सकारकं सकारकविशेषणं वाक्यसंज्ञं भवतीति वक्तव्यम्॥**

**साव्ययम्—उच्चैः पठति नीचैः पठतीति॥**

**सकारकम्—ओदनं पचति॥**

**सकारकविशेषणम्-ओदनं मृदु विशदं पचति॥**

(प्रदीपः) **आख्यातमिति**। नानाकारकान्निघातादिनिवृत्तये क्वचित् प्रवृत्तये च समानवाक्ये निघातयुष्मदस्मदादेशा वक्ष्यन्ते। तत्र लौकिकवाक्यग्रहणनिषेधार्थं वाक्यं परिभाष्यते॥ अव्ययकारकविशेषणानि प्रत्येकं समुदितानि चाश्रीयन्ते यथा वृषलैर्न प्रवेष्टव्यम्। **अट्कुप्वाङ्नुम्व्यवायेपीति**। आख्यातमिति चैकत्वं विवक्ष्यते। लक्षणविधानसामर्थ्यात्। तथा च **तिङ्ङतिङ** इत्यत्र वक्ष्यते **तिङ्प्रतिषेधानर्थक्यं च समानवाक्याधिकारादिति**। भवतिपचतीत्यादौ सत्यपि साध्यसाधनभावे आख्यातयोर्द्वित्वात् समानवाक्यत्वाभावान्निघाताप्रसङ्गात्॥ **उच्चैरिति**। यद्यप्यव्ययं कारकं विशेषणं च तथापि प्रपञ्चार्थमस्योपादानम्। तथा च वक्ष्यते—**आख्यातं सविशेषणमित्येवेति**॥

(उद्द्योतः) वाक्यलक्षणकरणस्यासंगतिमाशङ्क्याह—**नानेति**॥ **क्वचिदिति**। नद्यास्तिष्ठति कूले इत्यादौ॥ अत्र ह्यसामर्थ्यान्न प्राप्नोति, यथा कथंचित्सामर्थ्यग्रहणेतु—अयं दण्डो हरानेनेत्यादावपि स्यादिति भावः॥ **लौकिकेति**। सुप्तिङन्तचयो वाक्यमित्यादि॥ **लक्षणविधानेति**। निष्क्रियवाक्याभावस्य लोकव्युत्पत्तिसिद्धत्वादिति भावः। अव्ययग्रहणवैयर्थ्यमाशङ्कते—**यद्यप्यव्ययमिति**। स्वर्गच्छतीत्यादौ कारकम्। उच्चैः पठतीत्यत्र विशेषणं, क्रियाविशेषणत्वादत्रापि कर्मत्वं वा॥

(१२०० वाक्यलक्षणवार्तिकम् ॥ ११ ॥)

## ॥*॥ सक्रियाविशेषणं च ॥*॥

(व्याख्याभाष्यम्)

**सक्रियाविशेषणं चेति वक्तव्यम्। सुष्ठु पचति दुष्ठु पचतीति॥**

---

१ कृते इति शेषः। (र. ना.) २ 'एतस्मिन्'। ३ मच्चयेसमासप्रतिषेध इत्याशङ्कितसमासापेक्षया समासनिषेधः पक्षान्तरमिति वाशब्द उपपन्न इति भावः। (र. ना.) ४ 'मृदु विशदमोदनं'॥ ५ नद्या इत्यस्य तिष्ठतीत्यनेनेति शेषः। (र. ना.)

(प्रदीपः) **सक्रियाविशेषणं चेति** । प्रत्यासत्त्या[1] कारकस्येव यद्विशेषणं तद् गृह्यते, न तु क्रियाया इति भावः ॥ आख्यातेन च क्रियाप्रधानत्वं लक्ष्यत इत्यतिङन्तेष्वपि देवदत्तेन शयितव्यमित्यादिषु वाक्यत्वं सिद्ध्यति ॥

(उद्द्योतः) सविशेषणमित्येव क्रियाविशेषणेपि सिध्यतीत्यत आह—**प्रत्यासत्त्येति** । यद्यपि कारकत्वादप्यस्य[2] सिध्यति तथाप्यव्ययग्रहणवदिदमपि ·प्रपञ्चार्थमिति तत्त्वमिति बोध्यम् ॥ **क्रियाप्रधानत्वमिति** । लक्ष्यतावच्छेदकप्रदर्शनमिदम्[3] । देवदत्तो गत इत्यादौ त्वस्तीत्यध्याहार्यमिति भावः ॥

(वाक्यलक्षणन्यासान्तरभाष्यम्)

**अपर आह—"आख्यातं सविशेषणम्" इत्येव । सर्वाणि ह्येतानि विशेषणानि ॥**

(१२०१ वाक्यलक्षणान्तरवार्तिकम् ॥ १२ ॥)

## ॥ * ॥ एकतिङ् ॥ * ॥

(व्याख्याभाष्यम्)

**एकतिङ् वाक्यसंज्ञं भवतीति वक्तव्यम् । ब्रूहि ब्रूहि[4] ॥**

(प्रदीपः) **एकतिङिति** । एकशब्दः समानवचनो, न तु संख्यावाची । बहुव्रीहिश्चायम् ॥ **ब्रूहिब्रूहीति** । ब्रूहि ब्रूहि देवदत्तेत्यत्र वाक्यत्वादामन्त्रितनिघातः सिद्ध्यति ॥

(उद्द्योतः) नन्वेकग्रहणात्पुनरप्यनुपपत्तिस्तदवस्थैवेत्यत आह—**एकशब्द इति** ॥ एकस्य पदस्य वाक्यसंज्ञायां प्रयोजनाभावादाह—**बहुव्रीहिरिति** । एकं तिङन्तं यत्र समुदाये इत्यर्थः ॥ परैस्त्वाख्यातं सविशेषणं वाक्यमिति लक्षणं **तिङ्ङतिङः** इति सूत्रेऽतिङ्ग्रहणं कुर्वतः सूत्रकारस्याभिमतं लौकिकमेव पचतिभवतीत्येतत्साधारणम् । तत्र सविशेषणत्वेन[5] विभागे साकाङ्क्षत्वं लब्धम् । तत्राख्यातपदेन क्रियाप्रधानं लक्ष्यते । तेन त्वया शयितव्यमित्यादेः संग्रहः । सविशेषणमित्यस्य साक्षात्परम्परया वा यद्विशेषणं तत्सहितमित्यर्थः । तेन नद्यास्तिष्ठति कूले इत्यादौ नद्या इत्यादेः समानवाक्यस्थत्वसिद्धिः । एतदेवाभिप्रेत्यामरकोशे कारकान्वितक्रियावाचकं सुबन्तचयतिङन्तचयसुप्तिङन्तचयान्यतमं वाक्यमित्युक्तम्—

**सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता-**

इत्यनेन । तत्र वाशब्दश्चेदर्थे । कारकं च तिङन्तवाच्यं[6] तदतिरिक्तपदवाच्यं वेत्यन्यत् । एकस्य तत्त्ववारणाय सुबन्तचयेत्यादि[7] । एतत्समानार्थकमेवाख्यातमित्यादीति स्पष्टमेव । एतदेवैकोद्देश्यकैकविधेयकत्वगर्भमेकवाक्यलक्षणं बोध्यम् । तदुक्तं हरिणा—

**"साकाङ्क्षावयवं भेदे[8] परानाकाङ्क्षशब्दकम् ।**
**क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते"**

इति । वाक्यमित्यस्यैकं वाक्यमित्यर्थः ॥ **अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति** जैमिनिसूत्रात्[9] । अत[10] एवोद्देश्यानेकत्वे विधेयानेकत्वे च वाक्यभेद इति मीमांसकोद्घोषः ॥ यत्तु कैयटेनास्य पारिभाषिकत्वमुक्तं, तत्प्रमादात् ॥ यदप्याख्यातमित्यत्रैकत्वविवक्षां कृत्वा पचति भवतीत्यत्र वाक्यत्ववारणं तेन कृतम् । तदपि न, आख्यातत्वपर्याप्त्यधिकरणमेकमेवेति प्रागुक्तभाष्यरीत्यैकत्वविवक्षायाः फलाभावात् ॥ किंच **व्यक्तिपक्षे न ब्राह्मणं हन्यादित्यादावेकं ब्राह्मणमहत्वा कृती स्यादिति** भाष्योक्त[11]न्यायेनात्रैकत्वविवक्षायामेकस्यैवाख्यातस्य वाक्यत्वं बोधितं स्यान्नाख्यातान्तरस्येति दोषात् । किं चानयैकत्वविवक्षया समकक्षाख्यातद्वित्वे पचतिकरोति चेत्यादौ तद्वारणेपि विशेषणमादाय तद्द्वित्वे[12] वारणमशक्यं सविशेषणे आख्याते एकत्वसत्त्वात् । अनेन च ब्रूहिब्रूहीत्यस्याप्यसंग्रहः । विशेषणानुपादानेन सविशेषणत्वाभावात् । वाक्यत्वफलं तु 'मया किंचिद्वक्तव्यम्' इति प्रश्नोत्तरे । अत्रानन्त्यस्यापि प्रश्नाख्यानेत्यनेन वाक्यस्य टेः प्लुतसिद्धिः । अतः स्वशास्त्रपरिभाषितं लक्षणमाह—**एकतिङिति** । यत्तु कैयटेन ब्रूहिब्रूहीतिभाष्योदाहरणं देवदत्तेति शेषपूरणेन व्याख्यातम् । तन्न, पूर्वलक्षणेनैव सिद्धेः । द्विःप्रयोगस्य भाष्ये व्यर्थत्वापत्तेश्च ॥ एतेन पूर्वलक्षणे एकत्वाविवक्षाशङ्कावारणेनैकत्वविवक्षाबोधनार्थमिदं लक्षणान्तरमुक्तमित्यष्टमे कैयटोक्तमपास्तम् ॥ यद्यप्यग्रेऽग्रे इत्यादौ पूर्वरूपाय द्वित्वेऽवान्तरपदत्वमप्यस्ति । एवं च ब्रूहिब्रूहीत्यत्र कथमेकतिङ्त्वं तथाप्येकानुपूर्वीकतिङन्तसमुदायो वाक्यमित्यर्थः । बहुव्रीहिसमासात् । तेन पचतीत्येतन्मात्रस्य न वाक्यत्वम् ॥ एतल्लक्षणानुसारेणैवातिङ इति प्रत्याख्यातमित्यन्यत् ॥ अत एव भगवतैकतिङ्वाक्यमित्यत्र चशब्दो वाशब्दो वा नोक्तः, भिन्नविषयत्वात् । एकविषयत्वे हि सोऽवश्यं वक्तव्यः स्यात् । दृश्यते हि भगवतस्तथा शैली, तस्मादाद्यलक्षणं वाक्यस्य टेरित्येतच्छास्त्रलोकसाधारणम् । अत एव पच पश्य च देवदत्तेत्यादौ प्लुतो भवत्येव । एकतिङित्येतन्मात्रोक्तौ तत्रापीदमेवेति भ्रमः स्यात्तदर्थमिदम् ॥ **समानवाक्ये** इत्येतद्विषयं क्वचित् प्लुतविषयं चैकतिङिति । अत एव ब्रूहिब्रूहीत्युदाहरणसंगतिः । अत एव **तिङ्ङतिङः** इति सूत्रे भाष्ये—**समानवाक्याधिकारादतिङ्ग्रहणानर्थक्यमिति** वार्तिकव्याख्यावसरे **न च समानवाक्ये द्वे तिङन्ते स्त** इति उक्तम् । तेनैवैकतिङिति बहुव्रीहिरिति च सूचितम् ॥ स्पष्टश्चायमर्थोऽग्रेऽत्र भाष्येपीत्यनुपदमेव स्फुटीभविष्यतीत्याहुः ॥

(१२०२ वाक्यलक्षणप्रयोजनवार्तिकम् ॥ १३ ॥)

## ॥ * ॥ समानवाक्ये निघातयुष्मदस्मदादेशाः ॥ * ॥

(व्याख्याभाष्यम्)

**समानवाक्य इति प्रकृत्य निघातयुष्मदस्मदादेशा वक्तव्याः ॥ किं प्रयोजनम् ? । नानावाक्येषु मा भूवन्निघातादय इति । अयं दण्डो हरानेन । ओदनं पच तव भविष्यति । ओदनं पच मम भविष्यति ॥**

(उद्द्योतः) **समानवाक्ये इति** । समानशब्द एकपर्यायः । एवंविधलक्षणलक्षिते एकवाक्ये इत्यर्थः ॥

---

१ साव्ययकारकविशेषणमित्यत्र पूर्ववार्तिके इति शेषः । (र. ना.) २ क्रियाविशेषणस्य कर्मकारकत्वादित्यर्थः । (र. ना.) ३ 'नार्थे' । ४ 'ब्रूहि देवदत्त' इत्येवं पाठस्तु केनचित् कैयटं दृष्ट्वा शोधितः । परंतु भाष्ये 'देवदत्त' इति नास्ति इति नागेशेनोद्द्योते स्पष्टमभिहितम् । ५ सविशेषणत्वेनेति लब्धमित्यनेनान्वेति । (र. ना.) ६ पचति भवतीत्यादौ । (र. ना.) ७ एकस्य पदस्य वाक्यत्ववारणायेत्यर्थः । (र. ना.) ८ भेदे विभागे सति परस्परं साकाङ्क्षावयवं परानाकाङ्क्षशब्दकम्, परस्मिन् वाक्यघटकपदार्थातिरिक्तेऽर्थेऽनाकाङ्क्षः शब्दः यस्य तत् । गुणवत्, सविशेषणम्, एकार्थम्, अन्वितैकार्थबोधकं क्रियाप्रधानं, क्रियामुख्यविशेष्यकबोधजनकं वाक्यमुच्यते इति कारिकार्थः । (र.ना.) ९ द्वितीयाध्याये द्वितीयपादे ४४ शं सूत्रमिदमिति बोध्यम् । १० अन्वितैकार्थबोधकस्य वाक्यत्वस्वीकारादेवेत्यर्थः । (र. ना.) ११ सरूपसूत्रभाष्याशयभूतमिदमिति भावः । १२ एकस्यैव द्विःप्रयोगे मृदुपचति पचतीत्यादौ विशेषणमादायवारणमशक्यमित्यर्थः । (र. ना.)

( १२०३ दूषणवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ योगे प्रतिषेधश्चादिभिः ॥ * ॥

( व्याख्याभाष्यम् )

**चादिभिर्योगे प्रतिषेधो वक्तव्यः । ग्रामस्तव च स्वं मम च स्वम् ॥**

( उद्योतः ) चादिभिर्योग इति । न चवाहेतिसूत्रे समानवाक्ये इत्यस्य संबन्धो नेत्यर्थं इति कश्चित् ॥ तन्न । यथान्यास एव चादिभिरित्युत्तरभाष्यासंगतेः । किं च तव मते भिन्नवाक्येऽपि निषेधप्रवृत्तिरप्यस्य[1] फलं वाच्यम् । तत्रादेशप्राप्त्यभावेन निषेधस्यैव वैयर्थ्यात् । तस्माद्युष्मदाद्यादेशप्रतिषेध इत्येवार्थः[2] ॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते । यथान्यास एव चादिभिर्योगे प्रतिषेध उच्यते ? ॥**

( उद्योतः ) किमर्थमिदमिति । इदं प्रतिषेधवचनमाख्यातं साव्ययेत्यादिवाक्यलक्षणं च किमर्थमिति प्रश्नः ॥ अत एवोत्तरग्रन्थे वाक्यसंज्ञेत्युक्तिः संगच्छते ॥

( समाधानभाष्यम् )

**इदमद्यापूर्वं क्रियते, वाक्यसंज्ञा[3] समानवाक्याधिकारश्च । तद् द्वेष्यं विजानीयात् सर्वमेतद्[4] विकल्पत इति । तदाचार्यः सुहृद् भूत्वान्वाचष्टे चादिभिर्योगे यथान्यासमेव भवतीति । सा चावश्यं वाक्यसंज्ञा वक्तव्या समानवाक्याधिकारश्च वक्तव्यः ॥**

( उद्योतः ) वाक्यसंज्ञेति । एकतिङित्येषा ॥ तद्द्वेष्यमिति । इदमसमर्थेऽप्राप्तावपूर्वविधायकमिव चादियोगेपि तदपवादतयाऽपूर्वविधायकम्, न त्वधिकार इति भ्राम्येत्तद्भ्रमनिवारणायेदमन्वाख्यातमित्यर्थः । न चवाहेत्यारम्भसामर्थ्यान्नैवमित्यन्वाख्यानतात्पर्यम् । एवमेकतिङिति वाक्यलक्षणस्यैवोक्तौ शास्त्रे सर्वत्र वाक्यस्य टेरित्यादावपीदमेव वाक्यलक्षणमिति भ्राम्येत्तं प्रतीदमपि वाक्यलक्षणं शास्त्र आश्रीयत इत्यन्वाख्यानाँयायं लक्षणम् । समानवाक्ये इत्यत्रैकतिङित्येव उदाहरणेन चान्यत्राप्यस्याश्रयणं सूचितम् । चादिभिर्योगे इत्याद्यप्युपलक्षणम् । एतच्चेदमद्यापूर्वं क्रियते वाक्यसंज्ञा समानवाक्याधिकारश्च तद्द्वेष्यमित्यनेन सूचितम् । इदं यद् द्वयं क्रियते तद्द्वेष्यमित्यर्थस्य स्वरसतः प्रतीतेरित्यलम् ॥ विकल्पत इत्यस्य व्याप्नोतीत्यर्थः । एवं च समानवाक्ये इत्यधिकारपरमेकतिङित्येव चात्र वाक्यपदार्थः । आद्यलक्षणेनायं दण्डो हरानेनेत्यस्यापि वाक्यत्वात्तत्र निघातापत्तिः । अयं दण्डोऽस्तीत्यस्यापि अनेनेत्येतदर्थपरिच्छेदद्वारा हरतिक्रियाविशेषणत्वात् ॥ पचौदनं तव भविष्यतीत्यत्र हेतुहेतुमद्भावेनान्वयाद् भवनक्रियां प्रति तस्य विशेषणत्वाद्वाक्यत्वमिति भावः ॥ साचावश्यमिति । वाक्यसंज्ञाफलमयं दण्डो हरानेनेत्युक्तम् ॥

( १२०४ समानवाक्याधिकारफलवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ समर्थनिघाते हि समानाधिकरणयुक्तेयुक्तेषूपसंख्यानमसमर्थत्वात् ॥ * ॥

( व्याख्याभाष्यम् )

**समर्थनिघाते हि सति समानाधिकरणयुक्तयुक्तेषूपसंख्यानं कर्तव्यं स्यात् ॥ समानाधिकरण— पटवे ते दास्यामि, मृदवे ते दास्यामि ॥ समानाधिकरण ॥ युक्तयुक्ते—नद्यास्तिष्ठति कूले, वृक्षस्य लम्बते शाखायाम्, शालीनां ते ओदनं ददामि, शालीनां मे ओदनं ददामि ॥ किं पुनः कारणं न सिद्ध्यति ? । असमर्थत्वात् ॥**

( प्रदीपः ) समर्थनिघाते हीति । निघात उपलक्षणम् । तेन युष्मदस्मदादेशा अपि गृह्यन्ते ॥ पटवे ते इति । अत्र समानाधिकरणमसमर्थवद्भवतीति वाचनिकमसामर्थ्यमिति । असति समानवाक्याधिकारे युष्मदस्मदादेशो न स्यात् । युक्तयुक्तेपि साक्षात् सामर्थ्याभावात् कार्यं न स्यात् । नद्या इत्यादि कारकविशेषणं विज्ञेयम् ॥

(उद्योतः) समानवाक्याधिकारफलमाह—भाष्ये—समर्थनिघाते हीति । निघाते इत्युक्त्वा पटवे ते इत्युदाहरणमनुपपन्नमत आह—उपलक्षणमिति ॥ कार्यं न स्यादिति । तिष्ठति लम्बत इत्यादौ निघातो न स्यात्, शालीनां ते इत्यादौ युष्मदाद्यादेशश्च न स्यादित्यर्थः ॥ नन्वाख्यातं सविशेषणमिति वाक्यलक्षणं नद्यास्तिष्ठति कूले इत्यादौ नास्तीति कथमत्र निघात इत्यत आह—नद्या इत्यादीति । तथा च सकारकविशेषणमाख्यातमिति लक्षणेन न दोष इति भावः ॥ वस्तुत एकतिङिति लक्षणेनात्र न दोष इति बोध्यम् । एवं च तत्प्रकरणे समर्थपरिभाषोपस्थितेः फलाभावेनैकार्थीभावसामर्थ्यग्रहणे न कश्चिद्दोष इति तात्पर्यम् ॥

( इति वाक्यलक्षणप्रयोजननिरूपणम् )

( अथ राजगवीक्षीरे समासनिर्णयाधिकरणम् )

( १२०५ आक्षेपवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ राजगवीक्षीरे द्विसमासप्रसङ्गो द्विषष्ठीभावात् ॥ * ॥

( व्याख्याभाष्यम् )

**राजगवीक्षीरे द्विसमासप्रसङ्गः ॥ किं कारणम् ? । द्विषष्ठीभावात् । द्वे ह्यत्र षष्ठ्यौ राज्ञः गोः क्षीरमिति ॥**

( प्रदीपः ) राजगवीक्षीर इति । राज्ञो या गौस्तस्याः क्षीरमित्येतस्मिन्नर्थे राजगोक्षीरमित्यपि प्राप्नोति ॥

( उद्योतः ) अर्थभेदेन समासद्वयस्येष्टत्वात्कथमापत्तिरत

---

१ नचवाहेति सूत्रस्य भिन्नवाक्येऽपि प्रवृत्तिरेव फलं वाच्यम्, समानवाक्ये प्रकृतवार्तिकस्य निषेधकत्वादिति भावः । ( र. ना. ) २ नचवाहेति सूत्रस्य प्रकृतवार्तिकस्य चेति शेषः । ननु भिन्नवाक्यत्वसमानवाक्यत्वाभ्यां व्यवस्थेति भावः । तथा सत्येव 'यथान्यास एव चादिभिरित्युत्तरभाष्यसंगतिरिति बोध्यम् । (र. ना.) ३ इदंपदार्थमेव दर्शयति चान्तेन वाक्येन । ( र. ना. ) ४ एतद्, वाक्यसंज्ञा समानवाक्याधिकारश्चेत्येतत्, सर्वम्, युष्मदाद्यादेशविधायकं तन्निषेधकं नचवाहेत्यादिरूपं च सर्वम्, यतो विकल्पते व्याप्नोति इति ततो हेतोस्तद् द्वयं नचवाहेत्यादिनिषेधशास्त्रस्य द्वेष्यं, तदपवादतयाऽपूर्वविधायकत्वेन शत्रुभूतं विजानीयाद् भ्राम्येत्कश्चिदिति योजना । ( र. ना. ) ५ ननु समानवाक्याधिकारे तदपवादभूतो युष्मदाद्यादेश इति भावः । ( र. ना. ) ६ इदं, समानवाक्ये इत्यादि वार्तिकम्, असमर्थे, समानाधिकरणयुक्तयुक्तेषु वक्ष्यमाणेष्वित्यर्थः । (र.ना.) ७ आख्यातं सविशेषणंवाक्यमित्येवंरूपमित्यर्थः । (र.ना.) ८ आख्यातं सविशेषणमिति, एकतिङिति वाक्ययोर्मध्ये इष्टानुरोधेन क्वचित् किञ्चिदाश्रीयते इत्यर्थस्येति शेषः । ( र. ना. ) ९ पूर्ववाक्यार्थस्य उत्तरवाक्यार्थे इति शेषः । ( र. ना. ) १० अतोऽत्र तदादेशवारणार्थमेकतिङित्येवात्रवाक्यलक्षणमाश्रयणीयमिति भावः । ( र. ना. )

आह—राज्ञो येति। अर्थविशेषे आपत्तिरिति भावः। इयमप्यापत्तिः सर्वपक्षेष्[1]विति बोध्यम्॥

(आक्षेपबाधकभाष्यम्)

**किमुच्यते—'द्विसमासप्रसङ्ग' इति। यदा सुप्सुपेति वर्तते न तदा द्विसमासप्रसङ्ग इति?॥**

(प्रदीपः) **किमुच्यत इति।** द्वयोः षष्ठ्यन्तयोः समा[2]सप्रसङ्ग इत्यर्थं मत्वा पर्यनुयुङ्क्ते॥ **सुप्सुपेति।** संख्याया विवक्षितत्वात् समुदायस्य चासुबन्तत्वान्नास्ति समासप्रसङ्ग इत्यर्थः॥

(उद्द्योतः) द्वौ समासावित्यर्थात्प्रश्नानुपपत्तिरत आह—द्वयोरिति। उक्तार्थे[3] स्त्रीत्वापत्तेरयमेवार्थ इति भावः॥ ननु संख्याविवक्षायामपि समुदायस्यैकत्वादस्त्येव प्रसङ्गोऽत आह—समुदायस्येति। प्रत्ययग्रहणपरिभाषयेत्यर्थः॥

(आक्षेपाशयभाष्यम्)

**नैवं विज्ञायते—द्वयोः सुबन्तयोः समासप्रसङ्गो द्विसमासप्रसङ्ग इति॥ कथं तर्हि?। द्विप्रकारस्य समासस्य प्रसङ्गो द्विसमासप्रसङ्ग इति॥ राजगोक्षीरमित्यपि प्राप्नोति॥**

(प्रदीपः) इतरोऽभिप्रायं प्रकाशयति—**नैवमिति।** द्वयोः समासयोः समाहारो द्विसमासं पात्रादिभ्यः प्रतिषेध इति स्त्रीत्वाभावः॥ अमुमेवार्थं शब्दान्तरेण व्यक्तीकरोति—**द्विप्रकारस्येति॥** एकस्मिन्नेवार्थे कदाचिद्राजगवीक्षीरं कदाचिद्राजगोक्षीरमिति प्राप्नोतीत्यर्थः॥

(उद्द्योतः) **अमुमेवेति।** केचित्तु—द्विप्रकारः समासो द्विसमास इति शाकपार्थिवादित्वान्मध्यमपदलोपिसमासे भाष्यतात्पर्यम्। एवं च पात्रादित्वं न कल्प्यमित्याहुः॥ अर्थान्तरे तस्यापीष्टत्वादित्यपि प्राप्नोतीत्यसंगतमित्यत आह—**एकस्मिन्निति॥**

(तृतीयाक्षेपभाष्यम्)

**न[4] चैवं भवितव्यम्?॥**

(तृतीयाक्षेपसमाधानभाष्यम्)

**भवितव्यं च यदैतद्वाक्यं भवति-गोः क्षीरं गोक्षीरम्; राज्ञा गोक्षीरं राजगोक्षीरमिति। यदा त्वेतद्वाक्यं भवति—राज्ञो गोः क्षीरमिति, तदा न भवितव्यम्, तदा च प्राप्नोति॥ तदा कस्मान्न भवति?॥**

(प्रदीपः) **भवितव्यं चेति।** अर्थान्तर इत्यर्थः। तथा च गवावच्छिन्नं क्षीरं राजस्वामिकमिति प्रतीयते। गौस्तु राजविशिष्टा न प्रतीयते॥

(१२०६ समाधानवार्तिकम्॥ १७॥)

## ॥ * ॥ सिद्धं तु राजविशिष्टाया गोः क्षीरेण सामर्थ्यात्॥ * ॥

(व्याख्याभाष्यम्)

**सिद्धमेतत्॥ कथम्?। राजविशिष्टाया गोः क्षीरेण सह समासो भवति, न केवलायाः॥ किं वक्तव्यमेतत्?। नहि॥ कथमनुच्यमानं गंस्यते?। यथैवायं[5] गवि यतते, न च क्षीरमात्रेण संतोषं करोति। एवं राजन्यपि यतते राज्ञो या गौस्तस्या यत् क्षीरमिति॥**

(प्रदीपः) **राजविशिष्टाया इति।** ततश्च गोः पूर्वं राज्ञा संबन्धः पश्चात् क्षीरेणेत्यर्थः॥

(उद्द्योतः) **गोः पूर्वमिति।** येन क्रमेण संबन्धस्तत्क्रमेणैव समासशास्त्रप्रवृत्तिरिति भावः॥

(समाधानान्तरभाष्यम्)

**नैव वा पुनरत्र गोराजानमपेक्षमाणायाः क्षीरेण सह समासः प्राप्नोति॥ किं कारणम्?। असामर्थ्यात्॥ कथमसामर्थ्यम्?। सापेक्षमसमर्थं भवतीति॥**

(प्रदीपः) **नैव वेति।** सत्यपि गोरुभाभ्यां संबन्धे सापेक्षमसमर्थं भवतीति असामर्थ्याद् गोः क्षीरेण समासो न भवति, राज्ञा तु भवति राजापेक्षया गोः प्राधान्यात्॥ एतदुक्तं भवति, महत्कष्टं श्रित इत्यत्रैवास्यार्थस्य विचारितत्वान्न पुनश्चोदनीयं * **राजगवीक्षीरे द्विसमासप्रसङ्ग** * इति॥

(उद्द्योतः) युगपत्संबन्धमङ्गीकृत्यापि भाष्ये—**नैव वेति** परिहारान्तरमित्याह—**सत्यपीति।** सापेक्षमुपसर्जनमसमर्थमित्यङ्गीकृत्य परिहारश्चेत् पुन[6]रुक्तमित्यत आह—**एतदुक्तमिति॥ महत्कष्टं श्रित इत्यत्रेति।** राजगवाश्वपुरुषा इत्यत्र चेत्यपि बोध्यम्॥ न च **येन विधिरित्यत्र** परमगार्ग्यायण इत्यादौ परमगार्ग्येति समासैकदेशगार्ग्यशब्दात् फगु[7]त्क्तिर्भाष्योक्ताऽसंगता स्याद् गार्ग्यस्य परमसापेक्षत्वादिति वाच्यम्। तत्रैकोपस्थितिविषयत्वेनेतरसाकाङ्क्षत्वरूपसापेक्षत्वाभावात्॥ **सविशेषणानां वृत्तिर्नेत्यत्र** सविशेषणत्वमप्याकाङ्क्षालभ्यविशेषणवत्त्वमेवेति न दोषः॥

(आक्षेपभाष्यम्)

**कथं तर्हि गोः क्षीरमपेक्षमाणाया राज्ञा सह समासो भवति?॥**

(समाधानभाष्यम्)

**प्रधानमत्र तदा गौर्भवति। भवति च प्रधानस्य सापेक्षस्यापि समासः॥**

(पदविधिग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ किमर्थं पदविधौ समर्थाधिकारः क्रियते?॥**

(प्रदीपः) **समर्थाधिकार इति।** पारार्थ्यसामान्यात्परिभाषाऽधिकारशब्देनोक्ता। विनियोगो ह्यधिकारः। स च परिभाषायामप्यस्ति। तथा च कुप्वोः ≍क≍पौ चेत्यत्र वक्ष्यते—**अधिकारो नाम त्रिप्रकार इति॥** अत्र पदग्रहणस्याक्षेपः। समर्थो विधिरित्येव वक्तव्यम्॥

(उद्द्योतः) **विनियोगः।** शास्त्रान्तरे उपस्थितिः॥

---

१ एकार्थीभावव्यपेक्षादिरूपपूर्वोक्तसर्वपक्षेष्वित्यर्थः। (र. ना.) २ क्षीरमित्यनेन सहेत्यादिः। (र. ना.) ३ द्वयोः समासयोः समाहार इत्यर्थे द्विसमासीति प्रयोगापत्तेरित्यर्थः। (र. ना.) ४ प्रश्नार्थककाका किन्तु भवितव्यमेवेति लभ्यते। तथाचेष्टमेवेति भावः। (र. ना.) ५ अयं प्रयोक्ता यथैव गोविषयकयत्नवान् इत्यर्थः। वैषयिकाधारे सप्तमी। गोर्यः क्षीरे विशेषणतया संबन्धस्तदनुकूलयत्नवानिति यावत्। क्षीरमात्रेण गवानवच्छिन्नक्षीरबोधेनेत्यर्थः। राजन्यपि यतते इत्यत्रापि पूर्वोक्तरीत्यैवार्थः। (र.ना.) ६ प्रकृतवार्तिकोक्तसमाधानमेव प्रकारान्तरेणेति शेषः। (र. ना.) ७ फगुत्पत्तिरिति पाठः साधुः उक्तेरुक्तिकर्मत्वासंभवात्। (र. ना.) ८ परमगार्ग्यायण इत्यादौ तु शब्दोपात्तविशेषणवत्त्वमिति न वृत्तिनिषेध इति भावः। (र. ना.) ९ 'मापाऽप्यधि'।

( १२०७ समाधानवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ पदविधौ समर्थवचनं वर्णाश्रये शास्त्र आनन्तर्यविज्ञानात् ॥ * ॥

( व्याख्याभाष्यम् )

**पदविधौ समर्थाधिकारः क्रियते । वर्णाश्रये शास्त्रे आनन्तर्यमात्रे कार्यं यथा विज्ञायेतेति । 'तिष्ठतु दध्यशान त्वं शाकेन' 'तिष्ठतु कुमारी च्छत्रं हर देवदत्तेति ॥**

( प्रदीपः ) आनन्तर्यमात्र इति । विनापि सामर्थ्येनेत्यर्थः ॥ तिष्ठतु कुमारीच्छत्रमिति । दीर्घादिति नित्यत्वुग् भवति । यस्तु पदान्ताद्वेति विकल्पितः स पदविधित्वादसामर्थ्ये न भवतीत्याहुः ॥ अन्ये तु पदाद्वेत्येव दीर्घेण पदे विशेष्यमाणे लब्धे तदन्तत्वेन्तग्रहणात्पदात्तुको विप्रकर्षो विज्ञायते—'पदान्तस्य दीर्घस्य तुग् भवति', न तु 'दीर्घान्तस्य पदस्ये'ति पदविधित्वाभावादसत्यपि सामर्थ्ये वा तुग् भवतीत्याहुः ॥

( उद्योतः ) नित्यस्तुगिति । असति पदग्रहणेऽपि समर्थपरिभाषोपस्थितौ प्रकृते तुग्न स्यादिति भावः ॥ इत्याहुरिति । अत्रारुचिबीजं त्वेकार्थीभावस्यैवात्र सामर्थ्यस्य ग्रहणमिति पक्षे कुमारी छादयतीत्यत्रासमासे न स्यादिति ॥ अन्ये त्विति । तुग्विधावन्तग्रहणं साक्षात्पदोद्देश्यकविधावेव समर्थपरिभाषाप्रवृत्तिरित्यर्थबोधनद्वारा प्रकृते तत्प्रवृत्तिबाधनार्थमिति भावः ॥ एवमन्यत्रापि पदान्तग्रहणेषूह्यम् ॥

( निर्देशानर्थक्यपरिहाराधिकरणम् )

( १२०८ आक्षेपवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ समर्थाधिकारस्य विधेयसामानाधिकरण्यान्निर्देशानर्थक्यम् ॥ * ॥

( व्याख्याभाष्यम् )

**समर्थाधिकारोयं विधेयेन समानाधिकरणः । किं च विधेयम् ? । समासः ॥ यावद् ब्रूयात्—'समर्थः समासः' इति, तावत्—'समर्थः पदविधिः' इति । न च राजपुरुष इत्येतस्यामवस्थायां समर्थाधिकारेण किंचिदपि शक्यं प्रवर्तयितुं निवर्तयितुं वा । समर्थाधिकारस्य विधेयसामानाधिकरण्याद् निर्देशोनर्थकः ॥**

( प्रदीपः ) समर्थाधिकारस्येति । विधिशब्द इह कर्मसाधन एव उपात्तः, तस्य पदसंबन्धी समासादिरर्थो वाच्यः ॥ तत्समानाधिकरणं च समर्थं इत्युपात्तम् । तत्र असमर्थानां पदानां समासस्यानिवर्तितत्वात्समर्थवचनेन न किंचित् कृतमित्यर्थः । तथा हि । समर्थानां यः समासः स समर्थ एव । योप्यसमर्थानां भार्या राज्ञः पुरुषो देवदत्तस्येत्यादौ सोपि नियमाभावान्निर्वृत्त एव । तस्यासमर्थस्यापि अनेन समर्थवचनेन न किंचित्क्रियते । निष्पन्नत्वाल्लक्षणान्तरेण साधुत्वव्यवस्थापनाच्च । अकिंचित् कुर्वाणमित्यादयोप्यसमर्था नञ्समासाः परिगणनेन निरस्ता इति तदर्थमप्येतन्न भवति ॥

( उद्योतः ) कर्मसाधन इति । भावसाधने तु समासाद्यसंग्रहः स्यात् तद्विधिभिः पदकर्मकविधानाभावादित्याहुः ॥ नन्वसमर्थानां समासनिवृत्तिरेव तत्फलमत आह—तत्रेति । नहि समासनिष्ठसामर्थ्यबोधकेन स निवर्तयितुं शक्य इति भावः ॥ ननु तस्य साधुत्वनिवृत्तिरेव तत्फलमत आह—लक्षणान्तरेणेति । न च तत्तल्लक्षणैः प्राप्तसाधुत्वस्य समासादेर्लौकिकसिद्धसामर्थ्याभाववतोऽसाधुत्वमनेन बोध्यत इति न दोष इति वाच्यम् । प्रकारान्तरेणैव सार्थक्यसंभवेन जातस्यासाधुत्वसंपादनापेक्षया समासाद्यप्राप्त्युपपादनस्यैवोचितत्वादिति भावः ॥

( १२०९ समाधानवार्तिकम् ॥ २० ॥ )

## ॥*॥ सिद्धं तु समर्थानामिति वचनात् ॥*॥

( व्याख्याभाष्यम् )

**सिद्धमेतम् ॥ कथम् ? ॥ समर्थानां पदानां विधिर्भवतीति वक्तव्यम् ॥**

( प्रदीपः ) सिद्धं त्विति । वचनाद्व्याख्यानादित्यर्थः । समर्थपदसंबन्धित्वात् पदविधिरुपचारात्समर्थशब्देनोच्यते ॥

( उद्योतः ) उपचारादिति । लोके गौणानामपि साधुत्वदर्शनादिति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि द्व्येकयोर्न प्राप्नोति ॥**

( प्रदीपः ) इतरथा पाठोयमिति मत्वाह—एवमपीति । यथा पशुना यजेतेति गुणेषु संख्या विवक्ष्यते तथेहापि बहुत्वस्य विवक्षितत्वात् ॥

( उद्योतः ) गुणेष्विति । ननु पदोद्देशेन विधीयमानस्य समर्थेषु नियमनार्थमिदं शास्त्रमिति ग्रहं संमार्ष्टीतिवदुद्देश्यगततया संख्याया अविवक्षैव स्यादिति चेन्न । यूपांश्छिनत्ति अग्नीनादधीतेतिवदुद्देश्यत्वेपि एकवचनेनैव प्रयोगोपपत्तौ बहुवचनकरणेन बहुत्वसंख्याविवक्षेति तात्पर्यम् । मूले तु संख्याविवक्षामात्रे दृष्टान्त उक्त इति ध्येयम् ॥

एवमपि द्व्येकयोर्न प्राप्नोतीत्युत्तरं भाष्ये—शब्दसंस्कारार्थमेव बहुत्वविवक्षया कृतं बहुवचनं तच्च कार्यानन्वयितयाऽविवक्षितमिति समाधानं त्रुटितम् । अन्यथैकशेषनिर्देशाद्वेति वाशब्दासंगतिः ॥

( १२१० समाधानवार्तिकम् ॥ २१ ॥ )

## ॥ * ॥ एकशेषनिर्देशाद्वा ॥ * ॥

( व्याख्याभाष्यम् )

**अथ वा एकशेषनिर्देशोयम् । समर्थस्य च समर्थयोश्च समर्थानां च समर्थानामिति ॥**

१ 'पदाद्दीर्घाद्वा' । २ तुका सह पदस्य साक्षात्संबन्धाभाव इत्यर्थः । (र.ना.) ३ 'तावद् ब्रूयात्' । ४ 'तदर्थमेतत्' । ५ अनुवाद्येत्यर्थः । ( र. ना. ) ६ बहुवचनकरणे दृष्टान्तता वर्तिना बोधिता । ७ 'मूले' प्रदीपे ।

( आक्षेपभाष्यम् )

**एवमपि षट्प्रभृतीनामेव प्राप्नोति । षट्प्रभृतिषु ह्येकशेषः परिसमाप्यते ॥**

( उद्द्योतः ) षट्प्रभृतीनामिति । कपिञ्जलाधिकरणन्यायानाश्रयणात् ॥

( समाधानभाष्यम् )

**नैष दोषः । प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति द्वयेकयोरपि भविष्यति ॥**

( प्रदीपः ) **प्रत्येकमिति** । आश्रितसंख्याविशेषाणां कृतैकशेषाणां पुनरेकशेषकरणसामर्थ्यात् ॥

( उद्द्योतः ) आश्रितसंख्येति । अन्यथैकवचनान्तानामेव षण्णां पदानामेकशेषः कृतः स्यादिति भावः । एवं चैकमेवेदमेकत्वद्वित्वबहुत्वविशिष्टानर्थानुपस्थापयतीति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

**एवमपि विभक्तीनां न प्राप्नोति—समर्थात्समर्थे पदात्पद इति ।**

( प्रदीपः ) **एवमपीति** । सर्वमेतद्वाचनिकमिति मत्वा पुनः पर्यनुयुङ्क्ते ॥ **समर्थादिति । तिङ्ङतिङ** इत्यादौ ॥ **समर्थ इति** । यथा **कुत्सने च सुप्यगोत्रादाविति** ॥

( उद्द्योतः ) ननु पदविधिरिति समासः । तत्र विशेषानवगमात्पदात्पदे इति असंगतमत आह—**सर्वमिति** । अन्यथा राजपुरुषादिवत्संख्याविशेषस्याप्यनवगतिः स्यादिति पूर्वोक्तमप्यनुपपन्नं स्यादिति पदविधिरिति त्यक्त्वा पदानामित्यपि वाचनिकमिति भावः ॥ तिङ्ङतिङ इति । निघातादिप्रकरणेपि समर्थपरिभाषोपतिष्ठत इति मतेनेदम् ॥ तद्धितविधौ प्रातिपदिकादित्यस्योपलक्षणमेतत् । सप्तमीसमासफलं तद्धितार्थोत्तरपदेति ॥

( समाधानभाष्यम् )

**एवं तर्हि समर्थपदयोरयं विधिशब्देन सर्वविभक्त्यन्तः समासः—समर्थस्य विधिः समर्थविधिः, समर्थयोर्विधिः समर्थविधिः, समर्थानां विधिः समर्थविधिः, समर्थाद्विधिः समर्थविधिः, समर्थे विधिः समर्थविधिः । पदस्य विधिः पदविधिः, पदयोर्विधिः पदविधिः, पदानां विधिः पदविधिः, पदाद्विधिः पदविधिः, पदे विधिः पदविधिः । समर्थविधिश्च समर्थविधिश्च समर्थविधिश्च समर्थविधिश्च समर्थविधिश्च समर्थविधयः । पदविधिश्च पदविधिश्च पदविधिश्च पदविधिश्च पदविधिश्च पदविधयः । समर्थविधयश्च पदविधयश्च समर्थः पदविधिः । पूर्वः समास उत्तरपदलोपी । याद्दच्छिकी विभक्तिश्च ॥**

( प्रदीपः ) **पूर्वसमास उत्तरपदलोपीति** । गतार्थत्वाद्विधिशब्दस्याप्रयोग इत्यर्थः । समर्थपदाश्रयत्वाद्विधिरेव समर्थशब्देनोच्यत इत्यर्थः । संबन्धसामान्यवचनषष्ठ्यन्तस्य च पदशब्दस्य विधिशब्देन समासे विभक्त्यन्तरार्थोऽप्यन्तर्भवतीति सर्वं सूत्रेणैव सिद्ध्यति ॥ **याद्दच्छिकी विभक्तिरिति** । भेदाभेदविवक्षासंभवे सति यदृच्छया अभेदविवक्षामाश्रित्य प्रथमया निर्देशः कृत इत्यर्थः ॥

( उद्द्योतः ) समर्थविधयश्चेति । सूत्रे जात्यभिप्रायेणैकवचनम् ॥ सूत्रे समर्थ इत्यस्य भिन्नपदत्वात् शाकपार्थिवादिवदुत्तरपदलोपासंभवादाह—**गतार्थेति** ॥ **संबन्धेति** । विधिशब्दस्य कर्मसाधनत्वात् शेषषष्ठ्यन्तेन समास इति भावः ॥ **अन्तर्भवतीति** । सर्वस्यापि विभक्त्यर्थस्य संबन्धत्वानपायादित्यर्थः ॥ नन्वेवमपि लक्षणामनङ्गीकृत्य स्पष्टप्रतिपत्तये षष्ठ्येवोचितेत्यतो भाष्ये उक्तम् याद्दच्छिकीति । तदभिप्रायमाह—**भेदेति** । लक्षणयाऽभेदविवक्षा अन्यथा भेदविवक्षेत्यर्थः । सर्वविभक्तीनां यौगपद्येन प्रयोगासंभवादिति भावः ॥

( सामानाधिकरण्योपपादनाधिकरणम् )

( १२११ आक्षेपवार्तिकम् ॥ २२ ॥ )

## ॥ * ॥ समानाधिकरणेषूपसंख्यानमसमर्थत्वात् [ द्रव्यं पदार्थ इति चेत् ] ॥ * ॥

( भाष्यम् ) **समानाधिकरणेषूपसंख्यानं कर्तव्यम् । वीरः पुरुषो वीरपुरुषः ॥ किं पुनः कारणं न सिद्ध्यति ? । असमर्थत्वात् ॥ कथमसामर्थ्यम् ? । द्रव्यं पदार्थ इति चेत् । यदि द्रव्यं पदार्थः, न भवति तदा सामर्थ्यम् । भेदाभावात् । अथ हि गुणः पदार्थः, भवति तदा सामर्थ्यम् । अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वम् ॥**

( प्रदीपः ) **समानाधिकरणेष्विति** । केचिदाचार्या द्रव्यं पदार्थं प्रतिपन्नाः । केचिदाकृतिम् । गुणशब्देनाप्याकृतिरुच्यते यथा यस्य गुणस्य भावादिति ॥

**संसर्गिभेदकं यद्यत् सव्यापारं प्रतीयते ।**
**गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ॥** इति

गुणलक्षणयोगात्, तत्र द्रव्ये पदार्थे वीरः पुरुष इत्येताभ्यां द्रव्यमेकमभिधीयते न तु वीरत्वं पुरुषत्वं च । तत्र भेदाभावे भेदाधिष्ठानस्य संसर्गस्येहासंभवाद् असति सामर्थ्ये समासो न प्राप्नोतीति वचनम् ॥ **अथ हि गुण इति** । वीरत्वं पुरुषत्वं चैकव्यक्तिगतमेताभ्यामभिधीयत इति भेदपूर्वकः संसर्गोऽस्तीति भावः ॥

( उद्द्योतः ) प्रतिपन्नाः । सर्वशब्दवाच्यत्वेन गृहीतवन्तः अत्र द्रव्यशब्देन प्रवृत्तिनिमित्ताश्रय उच्यते । अत एव रूपादिशब्दसंग्रहः ॥ **आकृतिमिति** । आकृतिशब्देन प्रवृत्तिनिमित्तमुच्यते ॥ नन्वेवं भाष्ये कथमर्थं हि गुण इत्युक्तमत आह—**गुणशब्देनेति** ॥ **संसर्गिभेदकमिति** । संसर्गिण इतरभेदानुमापकमित्यर्थः ॥ **सव्यापारमिति** । स्वविषयशक्तिग्रहेण स्वाश्रयोपस्थापनेऽपीत्यर्थः । ( र. ना. )

१ समर्थस्य च समर्थयोश्च समर्थानाञ्चेत्येवंरूप इति भावः । ( र. ना. )
२ कपिञ्जलाधिकरणन्यायाश्रयणे हि पूर्वोक्ते एकशेषस्थले समर्थानामित्यनेन त्रयाणामेव ग्रहणेन षट्स्वेव ह्येकशेषः परिसमाप्येतेति भावः । ( र. ना. )
३ समर्थानामिति वचनेन विधेयसामानाधिकरण्येन निर्देशस्य सार्थक्योपपादनेऽपीत्यर्थः । ( र. ना. )
४ समर्थशब्दः समर्थपदसंबन्धिनि लाक्षणिक इति न जानातीति भावः । ( र. ना. )
५ 'क्षी च विभक्तिः ।'
६ समर्थ इत्यत्रेत्यादिः । ( र. ना. )
७ 'तस्य भावः' ( ५।१।११९ ) इति सूत्रवार्तिकमिदम् ।
८ स्वेत्यादिः । ( र. ना. )

कत्वरूपव्यापारवदित्यर्थः ॥ स्वावच्छिन्नत्वेन सकलव्यक्त्युपस्थापकत्वव्यापारवदित्यर्थो वा ॥ **इत्येताभ्यामिति** । पदद्वयेन शुद्धद्रव्यविशेषस्योपस्थितिरित्यर्थः ॥ **भेदाधिष्ठानस्येति** । अन्यथा घटोघट इत्यपि स्यादिति भावः। पदार्थानां परस्परं विशेष्यविशेषणभावरूपसंसर्गे[1] एव हि सामर्थ्यमिति तात्पर्यम् ॥ **एकव्यक्तिगतमिति** । तत्तद्विशेषणवैशिष्ट्येन भेदात्तयोर्विशेष्यविशेषणभावलक्षणसंसर्गोऽस्तीति भावः । विशेषणत्वादिसंबन्धे[3]नियतमेवेत्यत्र तु न मानमिति तात्पर्यम् ॥

( अन्यत्वस्य सामर्थ्यहेतुत्वबाधकभाष्यम् )

**न 'अन्यत्वमस्ति' इतीयता सामर्थ्यं भवति । अन्यो हि देवदत्तो गोभ्यश्चाश्वेभ्यश्च । न च तस्यैतावता सामर्थ्यं भवति ॥**

(प्रदीपः) **नान्यत्वमिति** । उपकारविवक्षायां सामर्थ्यम्, नान्यत्वमात्रेणेत्यर्थः ॥

( उद्योतः ) **उपकारेति** । विशेष्यविशेषणभावेनान्वयरूपोपकारेत्यर्थः । अन्यथा देवदत्ताश्वयोरपि कर्मधारयप्रयोजकं सामर्थ्यं स्यादिति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**को वा विशेषः यद् गुणे पदार्थे सामर्थ्यं स्यात् । द्रव्ये च न स्याद् ? ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**एष विशेषः । एकं तयोरधिकरणम् । अन्यश्च वीरत्वं गुणः, अन्यः पुरुषत्वम् ॥**

( प्रदीपः ) **एकं तयोरिति** । ततस्तद्द्वारेणास्ति विशेषणविशेष्यभावः ॥

( समाधानबाधकभाष्यम् )

**द्रव्यपदार्थिकस्यापि तर्हि गुणभेदात्सामर्थ्यं भविष्यति ॥**

( प्रदीपः ) **द्रव्यपदार्थिकस्यापीति** । एकमपि द्रव्यं भिन्नगुणसंसर्गाद् भेदकार्यं लभते ॥

(उद्योतः) **भेदकार्यम्** । परस्परविशेषणविशेष्यभावरूपम् ॥

( समाधानसाधकभाष्यम् )

**अशक्यो द्रव्यपदार्थिकेन द्रव्यस्य गुणकृत उपकारः प्रतिज्ञातुम् ॥**

( प्रदीपः ) **अशक्य इति** । भेदहेतोर्विद्यमानस्यापि गुणस्य शब्देनावाच्यत्वादित्यर्थः ॥

( समाधानबाधकभाष्यम् )

**ननु चाभ्यन्तरोऽसौ भवति ॥**

( प्रदीपः ) **ननु चेति** । द्रव्यस्य गुणेन नित्यसंबन्धादित्यर्थः ॥

( उद्योतः ) **द्रव्यस्येति** । एवं च स्मर्यमाणगुणकृतभेदमादाय विशेषणविशेष्यभाव इत्यभिमानः ॥

( समाधानसाधकभाष्यम् )

**यद्यप्यभ्यन्तरः, न तु गम्यते । नहि गुड इत्युक्ते मधुरत्वं गम्यते, शृङ्गवेरमिति वा कटुकत्वम् ॥**

( प्रदीपः ) **यद्यपीति** । अनभिधीयमानोपि संनिधिनैव परिच्छेद[4]हेतुत्वादभ्यन्तरः ॥ **न तु गम्यत इति** । शब्देन नोच्यत इत्यर्थः ॥

(उद्योतः) नन्वभ्यन्तरत्वेभिधीयमानोपि स्यादत आह—**अनभिधीति** । **संनिधिना** स्मृतिमात्रेण ॥ **शब्देनेति** । वृत्त्यभावादभ्यन्तरस्यापि तस्य विशेष्यविशेषणभावेन प्रतीतिप्रयोजकता नेत्यर्थः । अयं भावः—द्रव्येण नित्यसंबन्धिनो बहवो गुणाः, नहि सर्वेषां सर्वदा स्मरणमनुभूयते इति शब्दजन्योपस्थितिं विना भेदकत्वं वक्तुमशक्यमिति भावः ॥

( समाधानबाधकभाष्यम् )

**गुणपदार्थिकेनापि तर्हि अशक्यो गुणस्य द्रव्यकृत उपकारः प्रतिज्ञातुम् ।**

( प्रदीपः ) **गुणपदार्थिकेनापीति** । यद्यवाच्यस्योपकारकत्वं नाश्रीयत इत्यर्थः ॥ अथावाच्यस्याप्युपकारकत्वमाश्रीयते तदा पक्षद्वयेपि साम्यम् ॥

(उद्योतः) **यद्यवाच्यस्येति** । गुणवादेति द्रव्यस्यावाच्यत्वेन तद्द्वारकं सामर्थ्यं वक्तुं न शक्यमिति भावः ॥ **अथावाच्यस्येति** । एवंरीत्या द्रव्यवादिनः प्रवृत्तिनिमित्तमपि उपकारकं भविष्यतीति भावः । द्रव्यवादे गुणस्यावाच्यत्वं नाम शक्यताविषयत्वम् । शक्यतावच्छेदके शक्यभावात् । गुणवादे द्रव्यमप्येवमिति तात्पर्यम् ॥

( समाधानसाधकभाष्यम् )

**अथ गुणपदार्थिकः प्रतिजानीते ॥**

( उद्योतः ) भाष्ये—**प्रतिजानीते इति** । समानाधिकरणयोः समासमिति शेषः ॥

( प्रतिबन्दीभाष्यम् )

**द्रव्यपदार्थिकोपि कस्मान्न प्रतिजानीते ? ॥**

( उद्योतः ) **न प्रतिजानीत इति** । प्रतिजानीत एवेत्यर्थः॥

( प्रतिबन्दीबाधकभाष्यम् )

**एवमनयोः सामर्थ्यं स्याद्वा न वा ॥**

( उद्योतः ) इतर एवमाशयमजानानः प्रतिबन्दीमात्रान्नार्थसिद्धिरित्याह—**एवमनयोरिति** ॥

( प्रत्याक्षेपभाष्यम् )

**क्व च तावदिदं स्यात्—समानाधिकरणेनेति ? ॥**

( प्रदीपः ) **क्व च तावदिति** । यद्यवाच्यस्योपकारकत्वं नाश्रीयेत इत्यर्थः ॥

(उद्योतः) असामर्थ्यात्समासाभावनिश्चय एवेत्याशयेनाह—**क्वेति** ॥ **समानाधिकरणेनेति** । विशेषणं विशेष्येण समानाधिकरणेनेतीत्यर्थः ॥

( प्रत्याक्षेपबाधकभाष्यम् )

**यत्र सर्वं समानम्—'इन्द्रः शक्रः पुरुहूतः पुरंदरः' 'कन्दुः कोष्ठः कुसूलः' इति ॥**

( प्रदीपः ) **यत्र सर्वमिति** । समानमेकमधिकरणमभिधेयं यस्य तेन पर्यायेणेत्यर्थ इति मन्यते । ततश्च यत्र प्रवृ-

---

१ इयं सत्सप्तमी । ( र. ना. ) २ धर्मिद्वयस्य परस्परेत्यादिः । ( र. ना. ) ३ धर्मद्वारेण धर्मिणोरपि भिन्नत्वाद् विशेषणविशेष्यभावोऽस्तीत्यर्थः । ( र. ना. )

४ असौ, गुणः, अभ्यन्तरः, द्रव्ये नित्यसंनिहित इत्यर्थः । (र. ना.) ५ इतरव्यावृत्तिहेतुत्वादित्यर्थः । ( र. ना. )

त्तिनिमित्तमप्येकं वाच्यं च तत्रैव स्यादित्यर्थः ॥ कथं पुनरत्र विशेषणविशेष्यभावः? । उच्यते—कश्चित् प्रति कयाचित् संज्ञया सोऽर्थः प्रसिद्धोऽन्यया त्वप्रसिद्ध इति प्रसिद्धस्य विशेषणत्वम्, इतरस्य तु विशेष्यत्वम् ॥

( उद्द्योतः ) सर्वसाम्ये भेदनिबन्धनविशेषणविशेष्यभावः सामानाधिकरण्यं च सर्वथा दुरुपपादमित्यत आह—अभिधेयं यस्येति । वाच्यपर्यायोधिकरणशब्द इत्यर्थः ॥ वाच्यं चेति । प्रवृत्तिनिमित्ताश्रयभूतमित्यर्थः ॥ विशेषणत्वमिति । परिच्छेदकत्वमित्यर्थः । विशेषणं विशेष्येणेतिसूत्रे परिच्छेद्यपरिच्छेदकभाव एव विशेषणविशेष्यभाव इत्यभिमानः[1] ॥

### ( प्रत्याक्षेपसाधकभाष्यम् )

**नैवंजातीयकानां समासेन भवितव्यं प्रत्ययेन वोत्पत्तव्यम् ॥ किं कारणम्? । अर्थगत्यर्थः शब्दप्रयोगः । अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् । किं कारणम्? । उक्तार्थानामप्रयोग इति ॥**

( प्रदीपः ) **नैवंजातीयकानामिति** । युगपत्प्रयोगाभावात् सामर्थ्याभावाच्चेत्यर्थः ॥

( उद्द्योतः ) एवंजातीयकानामिति भाष्यस्य पर्यायाणामित्यर्थस्तदाह—युगपदिति ॥ सामर्थ्याभावाच्चेति । भेदनिबन्धनविशेषणविशेष्यभावरूपस्य तन्मूलैकार्थीभावरूपस्य च सामर्थ्यस्याभावादित्यर्थः । विषयतारूपविशेषणत्वाचैव तत्र निविष्टमिति भावः ॥ भाष्ये—प्रत्ययेन वोत्पत्तव्यमिति । पर्यायाणां सहयोगे आकाङ्क्षाविरहात् बोधेन न भवितव्यमित्यर्थः प्रत्ययशब्दो ज्ञानपर इति बोध्यम् ॥

### ( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—भृत्यभरणीय इति? ॥**

( प्रदीपः ) **भृत्यभरणीय इति** । अस्ति चायं शिष्टप्रयोग इति भावः ॥

( उद्द्योतः ) शिष्टेति । तथा चाविगीतं साधुत्वं भाष्यस्थतर्हिशब्देन सूचितम् ॥

### ( समाधानभाष्यम् )

**नैतौ समानार्थौ । एकोऽत्र शक्यार्थे कृत्यः, अपरोऽर्हे । शक्यो भर्तुं भृत्यः । अर्हति भृतिं [भरणीयः । भृत्यो भरणीयो भृत्य][2] भरणीय इति ॥**

( प्रदीपः ) **नैताविति** । उपाधिभेदाद्भिन्नार्थावित्यर्थः ॥

( उद्द्योतः ) उपाधीति । कर्मरूपार्थसाम्येपि शक्यत्वार्हत्वरूपोपाधिभेदादित्यर्थः[3] । भृत्यभरणीयवदेव वीरपुरुषादिरप्युदाहरणमिति भावः[4] ॥

### ( आक्षेपभाष्यम् )

**यदि तर्हि यत्र किंचित्समानं कश्चिच्च विशेषः तत्र भवितव्यम् । इहापि तर्हि प्राप्नोति—दर्शनीयाया माता दर्शनीयमातेति । अत्रापि किंचित्समानं कश्चिच्च विशेषः । किं पुनस्तत्? । सद्भावान्यभावौ ॥**

( प्रदीपः ) **दर्शनीया मातेति**[5] । यदि सति भेदे किंचित् समानमाश्रित्य समासः क्रियते तदा यथा वीरपुरुष इत्यत्रानभिधीयमानमपि द्रव्यं[6] समानमाश्रित्य समासः क्रियते तथात्रापि सत्ता समानेति समासः प्राप्नोतीत्यर्थः ॥ ननु परत्वादपवादत्वाद्वात्र षष्ठीसमासो भविष्यति । नैतदस्ति । समानाधिकरणेन नेति प्रतिषेधः प्राप्नोति[7] । विधेः कोवकाश इति चेद्, इष्टा त्विह व्यवस्था न स्यात्[8] । समानाधिकरणोत्तरपदलक्षणश्च पुंवद्भावः प्रसज्येत ॥ **सद्भावान्यभावाविति** । सत्तान्यत्वे इत्यर्थः ॥

( उद्द्योतः ) यदि सति भेदे इति । अयं पूर्वपक्षोधिकरणशब्दस्य पदार्थपरत्वमाश्रित्य, तत्पक्षेपि शब्दो नान्यपदार्थः । किं तर्हि? अर्थ एव । तथा च समानमधिकरणं पदार्थो यस्याश्रयत्वेनाधेयत्वेन वा स समानाधिकरणस्ततद्वाचके लक्षणेत्याशयेन । अत एव न वक्ष्यमाणतृतीयसमाधानासंगतिरित्याहुः ॥ अनभिधीयमानमपीति । आक्षिप्तमित्यर्थः । शक्तिग्रहाविषय इत्यर्थो वा ॥ समासः प्राप्नोतीति । कर्मधारय इत्यर्थः ॥ भाष्ये—कश्चिच्च विशेष इति । दर्शनीयत्वं मातृत्वं चेत्यर्थः ॥ सत्तान्यत्वे इति । पदार्थवाचिभावशब्देन न कर्मधारयः, किंतु[9] त्वार्थवाचकेन भावशब्देन षष्ठीतत्पुरुष इति भावः ॥

### ( समाधानभाष्यम् )

**न कचित्सद्भावान्यभावौ न स्तः, उच्यते चेदं समानाधिकरणेनेति, तत्र प्रकर्षगतिर्विज्ञास्यते—यत्र साधीयः सामानाधिकरण्यम् ॥ क च साधीयः सामानाधिकरण्यम्? । यत्र सर्वं समानं सद्भावान्यभावौ द्रव्यं च ॥**

( उद्द्योतः ) भाष्ये—न कचिदिति । तयोः केवलान्वयित्वादिति भावः ॥

### ( समाधानान्तरभाष्यम् )

**अथ वा समानाधिकरणेनेति तत्समानमाश्रीयते यत्समानं भवति, न भवति च । न चैतत्समानं कचिदपि न भवति ॥**

( प्रदीपः ) **न चैतदिति** । सत्तायाः सर्वत्र भावाद् व्यभिचाराभावान्नासौ समानत्वेनाश्रीयते । पूर्वः परिहारः समानत्वमभ्युपगम्य पुनः श्रुत्या प्रकर्षाश्रयेणोक्तः । उत्तरस्तु सर्वसाधारण्यात् सत्तायाः समानव्यपदेशं प्रति निमित्तत्वानाश्रयणेनाभिहितः ॥

---

१ अभिमानोक्तिस्तु विषयतारूपं विशेषणत्वादिकमभिप्रेत्य । ( र. ना. ) २ अविप्रतिपन्नमित्यर्थः । ( र. ना. ) ३ 'अयं कोष्ठकान्तर्गतः पाठः कचिन्नोपलभ्यते । ४ उपाधिभेदेन भिन्नार्थत्वमादायेति भावः । ( र. ना. ) ५ 'दर्शनीया या मातेति' । ६ द्रव्यमितिभावप्रधानो निर्देशः । द्रव्यत्वमित्यर्थः । ( र. ना. )

७ तथा चानवकाशः षष्ठीसमासविधिः समानाधिकरणेन नेति प्रतिषेधं बाधिष्यते इति भावः । ( र. ना. ) ८ क षष्ठीसमासविधिः क च तत्प्रतिषेध इतीष्टा व्यवस्थेत्यर्थः । ( र. ना ) ९ वाराणसीमुद्रितपुस्तकानुसारि Bengal Asiatic Society मुद्रितपुस्तके तु 'किंत्वार्थे' इति पाठोऽसमञ्जस एवोपलभ्यते ।

(उद्द्योतः) व्यभिचाराभावादिति। एवं च समानाधिकरणपदव्यावर्त्त्यालाभ इति भावः॥ नासौ समानत्वेनेति। समानव्यवहारनिमित्तत्वेनेत्यर्थः॥ समानत्वमिति। समानव्यवहारनिमित्तत्वमभ्युपगम्येत्यर्थः॥

(समाधानान्तरभाष्यम्)

अथ वा यावद् ब्रूयात्—समानद्रव्येणेति, तावत्—समानाधिकरणेनेति। द्रव्यं हि लोके 'अधिकरणम्' इत्युपचर्यते। तद्यथा—'एकस्मिन्द्रव्ये व्युदितम्'। एकस्मिन्नधिकरणे व्युदितम्। तथा व्याकरणे 'विप्रतिषिद्धं चानधिकरणवाचि' अद्रव्यवाचीति गम्यते॥

(प्रदीपः) अथ वेति। अधिकरणशब्दोऽभिधेयवाचीति पर्यनुयोगो, द्रव्यवाचीति समाधानम्। दर्शनीयाया मातेत्यत्र तु द्रव्यभेदः। अभिधेयस्य तु सत्तायाः समानत्वात् समानत्वं स्यात्॥ व्युदितमिति। विवादः कृत इत्यर्थः॥

(उद्द्योतः) अभिधेयवाचीति। अभिधेयत्ववद्वाच्यभिधेयशब्देन पदार्थमात्रमुच्यते॥ द्रव्यवाचीति। समानशब्दश्चैककत्ववद्वाची सूत्रे॥ अभिधेयस्य त्विति। वाच्यस्य त्वित्यर्थः। तच्च धर्मो वा द्रव्यं वेत्यन्यत्। तस्य च सत्तया समानत्वमस्त्येव। तत्पक्षे समानशब्दो नैकपर्याय इति भावः॥

(आक्षेपभाष्यम्)

एवमपीदमवश्यं वक्तव्यम्—'समानाधिकरणमसमर्थवद्भवति' इति॥ किं प्रयोजनम्?। सर्पिःकालकं यजुःपीतकमित्येवमर्थम्॥

(प्रदीपः) सर्पिःकालकमिति। इसुसोः सामर्थ्य इति षत्वनिवारणार्थं वाचनिकमसामर्थ्यमिति वीरपुरुष इति समानाधिकरणसमासोऽपि न स्यादित्यर्थः॥

(उद्द्योतः) पुनः पूर्वपक्षयति प्रकारान्तरेण—भाष्ये—एवमपीदमिति॥

(प्रत्याक्षेपभाष्यम्)

यदि 'समानाधिकरणमसमर्थवद्भवति' इत्युच्यते सर्पिष्पीयते यजुष्क्रियत इत्यत्र षत्वं न प्राप्नोति॥

(प्रत्याक्षेपबाधकभाष्यम्)

अधात्वभिहितमित्येवं तत्॥

(प्रदीपः) अधात्वभिहितमिति। धातुसहचरितः प्रत्ययो धातुशब्देनोक्तः। तेनाभिहितं कर्मादि यदि भवति तदा सामर्थ्यमेवेत्यर्थः॥

(उद्द्योतः) कर्मादेर्धात्वभिहितत्वाभावादाह—धातुसहचरित इति॥ इसुसोरिति सूत्रस्थभाष्यरीत्या तिङां कर्मादिद्योतकत्वे तु यथाश्रुतमेव भाष्यं सम्यक्। एवं च वीरः पचन्नित्यादौ वक्ष्यमाणदोषशङ्कैव नेति बोध्यम्॥

(उपसंहारभाष्यम्)

एवं च कृत्वा समानाधिकरणेषूपसंख्यानं कर्तव्यम्। वीरः पुरुषो वीरपुरुष इति। किं कारणम्?। असमर्थत्वात्?॥

(१२१२ समाधानवार्तिकम्॥ २३॥)

॥ * ॥ न वा वचनप्रामाण्यात्॥ * ॥

(व्याख्याभाष्यम्)

न वा कर्तव्यम्॥ किं कारणम्?। वचनप्रामाण्यात्। वचनप्रामाण्यादत्र समासो भविष्यति॥ किं वचनप्रामाण्यम्?। "समानमध्यममध्यमवीराश्च" इति॥

(प्रदीपः) न वेति। वचनसामर्थ्याद्वाचनिकमसामर्थ्यं बाध्यत इत्यर्थः। वीरः पचन्नित्यादौ तु धात्वभिहिते अनभिधानाद्बहुलग्रहणाद्वा समासाभावं मन्यते॥

(उद्द्योतः) ननु वीरपुरुषादन्यत्र कथमित्यत आह—वचनेति। समानाधिकरणसमासप्रकरणे एतद्वचनाप्रवृत्तिर्ज्ञाप्यत इत्यर्थः॥ ननु वीरः पचन्नित्यादौ धात्वभिहिते चारितार्थ्यात्कथं ज्ञापकत्वमत आह—वीर इति। बहुलग्रहणस्याप्यनभिधानमूलकत्वादनभिधानादित्येव सारम्॥

(१२१३ आक्षेपसमाधानातिदेशवार्तिकम्॥ २४॥)

॥ * ॥ लुप्ताख्यातेषु च॥ * ॥

(व्याख्याभाष्यम्)

लुप्ताख्यातेषु चोपसंख्यानं कर्तव्यम्। निष्कौशाम्बिः निर्वाराणसिः॥

लुप्ताख्यातेषु च।

किम्?। वचनप्रामाण्यादित्येव॥ किं वचनप्रामाण्यम्?। "कुगतिप्रादयः" इति॥

(प्रदीपः) लुप्ताख्यातेषु चेति। वचनप्रामाण्यादित्यस्योपजीवनार्थमिदं वार्तिकम्। भाष्यकारस्तु प्रपञ्चार्थमुपसंख्यानं प्रतिविधानं च वाक्यभेदेनाचष्टे। आख्यातशब्देन क्रियापदं क्रान्ताद्यपि कथ्यते॥ निष्कौशाम्बिरिति। पूर्वपदोत्तरपदयोरसामर्थ्यं मन्यते। क्रियाविषयत्वादुपसर्गाणां द्रव्येण संबन्धाभावात्॥

(उद्द्योतः) वार्तिकपाठे एकस्यैव वाक्यस्य दर्शनेन कथमुपसंख्याने तन्निषेधे च तात्पर्यमत आह—भाष्यकारस्त्विति॥ वाक्यभेदेनेति। आवृत्त्येत्यर्थः॥ आख्यातपदस्य तिङन्ते प्रसिद्धेराह—आख्यातेति। क्रियाबोधकत्वसाम्येन गौण्या वृत्त्येत्यर्थः॥ असामर्थ्यं मन्यते इति। साक्षादन्वयाभावेनेत्यर्थः॥

(समाधानबाधकभाष्यम्)

अस्त्यन्यदेतस्य वचने प्रयोजनम्॥ किम्?।[३] सुराजा अतिराजेति॥

१ 'वद्वाच्यामि'। २ सामर्थ्यप्रयुक्तसमासप्राप्तिशङ्केत्यर्थः। (र. ना.) ३ न पूजनादित्यत्र स्वतिभ्यामेवेति वार्तिकेन टच्प्रतिषेधः। (र. ना.)

( उद्योतः ) भाष्ये—सुराजातिराजेति । दुष्कुलम् आकडार इत्यादेरप्युपलक्षणम् ॥ एतेन प्रादय इति बहुवचनं ज्ञापकमित्यपास्तम् ॥

( समाधानाशयभाष्यम् )

**न ब्रूमो वृत्तिसूत्रवचनप्रामाण्यादिति । किं तर्हि ? । वार्तिकवचनप्रामाण्यादिति । *सिद्धं तु काङ्क्षतिदुर्गतिवचनात्* । *प्रादयः क्तार्थे* इति ॥**

( प्रदीपः ) किं तर्हीति । वार्तिककारवचनस्यापि स्मृतिशास्त्रत्वात् प्रामाण्यमाश्रितमित्यर्थः ॥

( उद्योतः ) वृत्तिसूत्रेति । वार्तिकेष्वपि सूत्रलक्षणसत्त्वेनार्षत्वेन च सूत्रत्वमभ्युपगम्य पाणिनिसूत्राणां वृत्तिसद्भावाद्वार्तिकानां तदभावाच्च तयोर्वैषम्यबोधनायेदम् । वृत्तियुक्तं सूत्रं वृत्तिसूत्रमित्यर्थः ॥ क्वचित्तु वृत्तिः सूत्रेति पाठः तदा सूत्रप्रामाण्याद्वृत्तिरिति न ब्रूमः किं तर्हि वार्तिकप्रामाण्यादितीत्यर्थः । यथाऽनेकमन्यपदार्थे इति शास्त्रबलाद्बहुव्रीहावन्यपदार्थान्तर्भावस्तथा प्रकृते क्तार्थे इति वार्तिकबलात्तदर्थान्तर्भाव इति भावः ॥ स्मृतिशास्त्रत्वादिति । अन्यशास्त्रीयवार्तिकवद् नासदीयं वार्तिकं व्याख्यानमेवेति भावः ॥ न च वचनेत्यस्यापि वार्तिकत्वाद्वार्तिककृता स्वीयवचसः कथं प्रमाणत्वेनाश्रयणमिति भाष्ये वार्तिकेत्याद्यनुपपन्नमिति वाच्यम् । अन्योयं वार्तिककारो वार्तिककारान्तरीयतद्वचनं प्रमाणान्तरत्वेनाश्रयतीत्यदोषात् ॥

( १२१४ समाधानान्तरवार्तिकम् ॥ २५ ॥ )

**॥ * ॥ तदर्थगतेर्वा ॥ * ॥**

**( भाष्यम् ) तदर्थगतेर्वा पुनः सिद्धमेतम् ॥ किमिदं तदर्थगतेरिति ? । तस्यार्थस्तदर्थः तदर्थस्य गतिस्तदर्थगतिस्तदर्थगतेरिति । यस्यार्थस्य कौशाम्ब्या सामर्थ्यं स निसोच्यते ॥ अथ वा सोर्थस्तदर्थः तदर्थस्य गतिस्तदर्थगतिस्तदर्थगतेरिति । योर्थः कौशाम्ब्या समर्थः स निसोच्यते ॥**

( प्रदीपः ) तस्यार्थ इति । क्रान्तशब्दस्य [६]योर्थः संप्रतीयते निःशब्देन क्रियाविषयेण तस्यार्थस्य सामर्थ्यादाक्षिप्तत्वात्तद्द्वारेण पूर्वपदोत्तरपदयोः सामर्थ्यादित्यर्थः ॥ सोर्थ इति । निस एवायं वृत्तिविषये क्रान्तलक्षणोर्थ इति दर्शयति ॥

( उद्योतः ) नन्वन्यशब्दस्यार्थोन्येन कथं वक्तव्य इति निसोच्यत इत्यसङ्गतमत आह—संप्रतीयते इति । एवं च निसोच्यत इत्यस्य क्रियाविषयनिसर्थेनाक्षिप्यत इत्यर्थ इति भावः । तदाह—निःशब्देनेति ॥ ननु शक्यभावे कथं प्रतीतिरत आह—आक्षिप्तत्वादिति । भाष्ये—तस्यार्थ इति । क्रान्तशब्दस्यार्थ इत्यर्थः । तत्रान्यशब्दार्थस्यान्येन शक्त्या बोधनासंभवात् उच्यत इत्यस्याक्षिप्यत इत्यर्थ इति भावः । आक्षिप्तस्यापि शाब्देन्वयबोधे मानं भवतीति भावः ॥ तदसहमान आह—अथ वा सोर्थ इति । तदाह—निस एवेति ॥

( अथ समासयोग्यपदसंख्यानिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ यत्र बहूनां समासप्रसङ्गः किं तत्र [७]द्वयोर्द्वयोः समासो भवति, आहोस्विदविशेषेण ? ॥**

( प्रदीपः ) अथ यत्रेति । यत्र विशिष्टे पूर्वपदोत्तरपदे उपात्ते यथा द्वितीयाश्रितेति तत्र नास्ति बहूनां प्रसङ्गः । यत्र तु विशेषो नोपात्तः अनेकमन्यपदार्थे चार्थे द्वन्द्व इति । तत्र संदेहः । यदि सुप्सुपेति वर्तते ततो विवक्षितत्वात् संख्यायाः द्वयोर्द्वयोः समासेन भवितव्यम् । अथ [८]निर्वृत्तं ततो यावतामन्यपदार्थे चार्थे च वृत्तिस्तावतां भवितव्यम् ॥ नन्वनेकग्रहणाद् बहूनामपि भाव्यम् । अन्यथा तदनर्थकं स्यात् ॥ नैतदस्ति । अनेकग्रहणमुपसर्जनसंज्ञार्थं स्याचित्रगुरित्यादौ ह्रस्वार्थम् । यदा त्वेकविभक्तित्वेनोपसर्जनसंज्ञा सिध्यतीत्युच्यते तदानेकग्रहणं सुप्सुपेत्यस्य निवृत्त्यर्थं विज्ञायते । तेन बहूनां समासः सिध्यति ॥

( उद्योतः ) तत्र संशयविषयं दर्शयति—यत्रेति ॥ विवक्षितत्वादिति । सुबन्तत्वस्य प्रत्येकमेव समाप्तेरित्यपि बोध्यम् ॥ अनेकस्योपसर्जनत्वे पूर्वनिपातो न फलमित्यत आह—चित्रगुरिति ॥ सुप्सुपेत्यस्येति । तृतीयान्तनिवृत्तौ तात्पर्यम् । प्रथमान्तं तु वर्तत एवेति बोध्यम् ॥ तेन बहूनामिति । भाष्यं त्वनेकग्रहणाभावं मत्वा [९]कृत्वाचिन्तया प्रवृत्तमिति बोध्यम् ॥

( विशेषजिज्ञासाभाष्यम् )

**कश्चात्र विशेषः ? ॥**

( १२१५ प्रथमपक्षे दूषणवार्तिकम् ॥ २६ ॥ )

**॥ * ॥ [१०]समासो द्वयोर्द्वयोश्चेद् द्वन्द्वेनेकग्रहणम् ॥ * ॥**

( व्याख्याभाष्यम् )

**समासो[११] द्वयोर्द्वयोश्चेद् द्वन्द्वेनेकग्रहणं कर्तव्यम् । चार्थे द्वन्द्वोनेकमिति वक्तव्यम् । इहापि यथा स्यात्—प्लक्षन्यग्रोधखदिरपलाशा इति ॥**

( उद्योतः ) भाष्ये—द्वन्द्वेनेकग्रहणमित्युपलक्षणं बहुव्रीहेरपि ॥

१ सुराजेत्यादिषु दुष्कुलादिषु च कुगतिप्रादय इत्यस्य चारितार्थ्योपपादनेनेत्यर्थः । ( र. ना. ) २ 'वृत्तिसूत्र' इति सविसर्गपाठस्तु बहुषोपलभ्यते । निर्विसर्गपाठोऽपि केषुचित्समुपलभ्यते । स किम् उद्योतदर्शनेन केनचित् कल्पितः उत प्राचीन इत्यत्र विनिगमकाभावः । लेखकप्रमादाद् विसर्गलोपे नागेशेन नैव तस्य समन्वयः कृतो भवेत् । ३ वार्तिकेष्वपीति तथाचोक्तं पस्पशायां 'भवे च तद्धितः' 'प्रोक्तादयश्च तद्धिताः' इत्यनयोः पौनरुक्त्यपरिहारग्रन्थे "नचेदानीमाचार्याः सूत्राणि कृत्वा निवर्तन्ते" इति । ४ 'भाष्ये सर्वेषामेव वार्तिकानामपि व्याख्यारूपवृत्तिकरणादस्याभिप्रायः सुधीभिरूह्यः । ५ त्वदोषादिति । वस्तुतस्तु 'प्रादयः क्तार्थे इति' इत्यत्रेतिकारस्याद्यर्थत्वादग्रेवक्ष्यमाणसौनागवार्तिकोपलक्षणत्वेनादोष इति बोध्यम् । ६ 'योर्थः प्रती' । ७ 'तत्र द्वयोः समासो' । ८ 'निवृत्तम् यावता' । ९ असिद्धवत्कृत्वा चिन्तनेत्यर्थः । ( र. ना. ) १०-११ 'समासो द्वयोश्चेद्' ।

( दूषणबाधकभाष्यम् )

नैष दोषः । अत्रापि द्वयोर्द्वयोः समासो भविष्यति ॥

( १२१६ दूषणसाधकवार्तिकम् ॥ २७ ॥ )

॥ * ॥ द्वयोर्द्वयोः समास इति चेन्न बहुषु द्वित्वाभावात् ॥ * ॥

( व्याख्याभाष्यम् )

द्वयोर्द्वयोः समास इति चेत् । तन्न । किं कारणम्? । बहुषु द्वित्वाभावात् । न बहुषु द्वित्वमस्ति ॥

( प्रदीपः ) बहुषु द्वित्वाभावादिति । ननु बहुषु द्वौ विद्येते । तद्यथा—एषां ब्राह्मणानां द्वावानयेति । तत्र बहुषूपक्रान्तेषु प्लक्षन्यग्रोधयोरेका द्वन्द्वसंज्ञा । खदिरपलाशयोर्द्वितीया । पुनर्द्वन्द्वसमुदायस्य तृतीया भविष्यति ॥ नैष दोषः । यद्यपि बहुषु द्वौ स्तस्तथापि चतुर्षु सहविवक्षितेषु एकैकस्य शब्दस्य चत्वारोऽर्था इति द्वयोश्चार्थे वृत्त्यसंभवात् समासभाक्त्वं नास्तीति एतदनेन प्रतिपाद्यते ॥

( उद्योतः ) बहुषु द्वित्वाभावादिति । बहुषु बुद्धिस्थेषु तदवयवयोर्द्वित्वाभावादित्यर्थः । त्रिपुत्रे द्विपुत्रत्वव्यवहाराभावात् ॥ एवं च द्वयोः समास इति त्वदुक्तिरसंगतेति भावः ॥ ननु मास्तु तयोर्द्वित्वमन्यासंनिधाने यौ वस्तुतो द्वित्ववन्तौ तयोः समास इति तदर्थः । एवमेव शते पञ्चाशदित्युक्तिः । अन्यासंनिधाने ये पञ्चाशत्त्ववन्तस्ते शते सन्तीति तदर्थं इति शङ्कते—नन्विति ॥ समाधत्ते—यद्यपीति ॥ एकैकस्य चत्वार इति । अनेकस्य चार्थवृत्तित्वे समासविधानात् एकैकस्य चतुरवयवः समूहोऽर्थः । तत्र द्वयोः सत्त्वेपि तयोरितरद्वयसापेक्षयाऽसामर्थ्यान्न तयोः समास इति भावः । बहुषु द्वित्वाभावात्तदन्तर्गतद्वयोस्तत्समनियतसामर्थ्याभावादिति भाष्यार्थः ॥

( आक्षेपबाधकभाष्यम् )

नावश्यमेवं विग्रहः कर्तव्यः—प्लक्षश्च न्यग्रोधश्च खदिरश्च पलाशश्चेति ॥ किं तर्हि? । एवं विग्रहः करिष्यते—प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ, खदिरश्च पलाशश्च खदिरपलाशौ, प्लक्षन्यग्रोधौ च खदिरपलाशौ च प्लक्षन्यग्रोधखदिरपलाशा इति ॥

( प्रदीपः ) एवं विग्रह इति । द्वयोर्द्वयोः सहविवक्षा भविष्यति न तु युगपच्चतुर्णामित्यर्थः ॥

( उद्योतः ) द्वयोर्द्वयोः सहेति । अन्येषामबुद्धिस्थत्वान्न तयोः सापेक्षतेति ॥

( आक्षेपसाधकभाष्यम् )

होतृपोतृनेष्टोद्गातारस्तर्हि न सिद्ध्यन्ति । होतापोतानेष्टोद्गातार इति प्राप्नोति ॥

न चैतदेवं भवितव्यम्? ॥

भवितव्यं च, यद्येवं विग्रहः क्रियते—होता च पोता च होतापोतारौ, नेष्टा चोद्गाता च नेष्टोद्गातारौ, होतापोतारौ च नेष्टोद्गातारौ च होतापोतानेष्टोद्गातार इति । होतृपोतृनेष्टोद्गातारस्तु न सिद्ध्यन्ति ॥

( प्रदीपः ) होतृपोतृनेष्टोद्गातार इति । यदा बहूनां समासस्तदा सर्वान्त उत्तरपदे परत एकस्यैवानङ् भविष्यति द्वयोर्द्वयोस्तु समासे क्रियमाणे एकं वर्जयित्वा सर्वेषामानङा भाव्यम् । अत्र च भाष्यकारवचनप्रामाण्यादुद्गातृशब्दस्य दीर्घः । अन्यथा नप्त्रादिग्रहणस्य नियमार्थत्वाच्च स्यात् ॥

( उद्योतः ) सर्वान्त इति । तत्समासीयसर्वान्त इत्यर्थः । तत्रैवोत्तरपदशब्दस्य रूढेरिति भावः ॥ नियमार्थत्वादिति । तृज्ग्रहणेनैव सिद्धे नप्त्रादिग्रहणसुणादिव्युत्पन्नानां चेन्नप्त्रादीनामेवेति नियमार्थमिति भावः ॥ अयमनौणादिकतृन्तृजन्यतरान्त इति भाष्याशयः ॥ इदं "ण्वुल्तृचौ" तृन्निति सूत्रस्थभाष्यविरुद्धम् ॥ भाष्ये—इति प्राप्नोतीत्यस्य इत्येव प्राप्नोतीत्यर्थः ॥

( १२१७ दूषणान्तरवार्तिकम् ॥ २८ ॥ )

॥ * ॥ समासान्तप्रतिषेधश्च ॥ * ॥

( व्याख्याभाष्यम् )

समासान्तस्य च प्रतिषेधो वक्तव्यः । वाक्त्वक्स्रुग्दृषदमिति । वाक्त्वचस्रुग्दृषदमिति प्राप्नोति ॥

( प्रदीपः ) समासान्तप्रतिषेधश्चेति । द्वयोर्द्वयोर्द्वन्द्वसंज्ञायां प्रतिद्वन्द्वं समासान्तः प्राप्नोतीत्यर्थः ॥ यद्यपि प्रक्रियान्तरे प्रतिद्वन्द्वमानङादेशवत् समासान्तेन भाव्यम् । तथापि बहूनां समासाभावादेकसमासान्तता न कदाचित् प्राप्नोति इति चोद्यते ॥

( उद्योतः ) समासान्तेन भाव्यमिति । तथा च तस्येष्टतया तत्प्रतिषेधारम्भोनर्थक इति भावः ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः । अत्रापि परेण सह समासो भविष्यति । स्रुक्च दृषच्च स्रुग्दृषदं त्वक्च स्रुग्दृषदं च त्वक्स्रुग्दृषदम् । वाक्च त्वक्स्रुग्दृषदं च वाक्त्वक्स्रुग्दृषदमिति ॥

( प्रथमाक्षेपदार्ढ्यभाष्यम् )

होतृपोतृनेष्टोद्गातार एव तर्हि न सिद्ध्यन्ति ॥

---

१ "तृ" इत्युच्यमाने मातरौ मातरः पितरौ पितर इत्यत्रापि प्राप्नोति' इति "ण्वुल्तृचौ" इत्यत्रानुपादाने चकारस्य दोषस्य वारणाय 'स्वसृनप्तृग्रहणं नियमार्थं भविष्यति—एतयोरेव योनिसंबन्धानाम् इति" इति हि तत्रत्यं भाष्यम् । २ 'क्रमान्तरे' ।

( आक्षेपान्तरभाष्यम् )

इह च—

"सुसूक्ष्मजटकेशेन सुनताजिनवाससा ।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिद्ध्यति ॥

( प्रदीपः ) सुसूक्ष्मजटकेशेनेति । सुष्ठु सूक्ष्मा जटाः केशा अस्येति विग्रहः । यद्यनेकग्रहणं न क्रियते, क्रियमाणं वोपसर्जनसंज्ञार्थं विज्ञायते, सुप्सुपेति चानुवर्तते, तदात्र बहूनां बहुव्रीहिर्न प्राप्नोति ॥

( उद्द्योतः ) सुष्ठु सूक्ष्मा इति । भाष्यप्रामाण्याज्जटशब्दोऽदन्तः पुंलिङ्गो घनपर्यायो जटापर्यायो वा । संज्ञाछन्दसोरभावेपि सूक्ष्मशब्दस्योत्तरपदपरत्वाभावे बहुलग्रहणादुभयत्रापि ह्रस्व इति कश्चित् । तन्न, त्वेचेलस्य वैयर्थ्यापत्तेः ॥ एतेन पल्यो गर्भिण्य इत्यादावनुत्तरपदेपि बहुलग्रहणादनेन ह्रस्व इति हरदत्तोक्तमपास्तम् ॥ अम्बार्थेतिसूत्रे अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यं पल्यो गर्भिण्य इत्यर्थमिति भाष्यमुपादाय व्यत्ययो बहुलमिति दीर्घस्य ह्रस्व इति कैयटोक्तेश्च । यद्यपि पूर्वंपूर्वं कर्मधारयं कृत्वा बहुव्रीहिः क्रियते तथापि सुशब्दस्वरो न सिध्यतीत्यर्थः । यद्यपि सूक्ष्मा जटाः सूक्ष्मजटाः तादृशाश्च ते केशाश्च सूक्ष्मजटकेशाः सुष्ठु सूक्ष्मजटकेशा यस्येति बहुव्रीहौ द्विपदसमासेपि सिध्यति स्वरश्च, तथापि अत्र पक्षे सौष्ठवस्य शब्दमर्यादया सूक्ष्मविशेषणता न लभ्येतेति अनेकपद एव स एष्टव्यः । नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वापत्त्या स्वरासिद्धेश्च । इष्यते तु पूर्वपदप्रकृतिस्वरेण सुशब्दस्वर इति दिक् ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अस्तु तर्ह्यविशेषेण ॥

( उद्द्योतः ) भाष्ये—अस्तु तर्हीति । द्वन्द्वादिविधायकयोरनेकग्रहणसामर्थ्यात् सुबित्येव वर्तते सुपेति निवृत्तमिति भावः ॥

( १२१८ आक्षेपवार्तिकम् ॥ २९ ॥ )

॥*॥ अविशेषेण बहुव्रीहावनेकपदप्रसङ्गः [तत्र स्वरसमासान्तपुंवद्भावेषु दोषः]॥*॥

( भाष्यम् ) यद्यविशेषेण, बहुव्रीहावनेकपदप्रसङ्गः ॥ तत्र को दोषः ? । तत्र स्वरसमासान्तपुंवद्भावेषु दोषः । तत्र स्वरसमासान्तपुंवद्भावेषु दोषो भवति । स्वर—पूर्वशालाप्रियः अपरशालाप्रियः । स्वर ॥ समासान्त—पञ्चगवप्रियः पञ्चनावप्रियः । समासान्त ॥ पुंवद्भाव—खादिरेतरशम्यम् ॥

( प्रदीपः ) पूर्वशालाप्रिय इति । यदा बहूनां बहुव्रीहिसंज्ञा, तदा पूर्वपदप्रकृतिस्वरेण पूर्वशब्दः स्वाङ्गशिटामदन्तानामित्याद्युदात्तः स्यात्, यदा तु द्वयोरेव बहुव्रीहिसंज्ञा भवतीति पक्षः तदा पूर्वा शाला पूर्वाशालेति पूर्वापरप्रथमेति समासे कृते समासान्तोदात्तत्वे च पूर्वशाला प्रियास्येति द्विपदे बहुव्रीहौ कृते पूर्वपदप्रकृतिस्वरेण शालाशब्दाकार उदात्तः सिध्यति ॥ ननु त्रिपदे बहुव्रीहौ कृते तद्धितार्थोत्तरपदेति तत्पुरुषेणात्र भाव्यमिति कथं दोषोपन्यासः । एवं तर्हि परस्तादयं परिहारो वक्ष्यत इति न तावदत्राश्रितः ॥ पञ्चगवप्रिय इति । त्रिपदे बहुव्रीहौ समासान्तो न प्राप्नोति । यदा द्वयोर्बहुव्रीहिरिति पक्षस्तदा पञ्चानां गवां समाहारः पञ्चगवं तत् प्रियमस्येति रूपं सिध्यति । खादिरेतरशम्यमिति । खादिरी इतरा शम्यास्येति त्रिपदे बहुव्रीहौ क्रियमाणे उत्तरपदे पुंवद्भावो विधीयमानः खादिरीशब्दस्य न प्राप्नोति । यदा तु द्वयोर्बहुव्रीहिरिति पक्षस्तदेतरा शम्या इतरशम्येति समासे कृते खादिरी इतरशम्याऽस्येति बहुव्रीहौ सिध्यति पुंवद्भावः ॥

( उद्द्योतः ) अनेकपदप्रसङ्ग इति । अनेकपदसमासत्वप्रयुक्तदोषप्रसङ्ग इत्यर्थः ॥ समासान्तइति । गोरतद्धितेति टच् ॥ पञ्चगवमिति । टचः समासभक्तत्वेनाकारान्तोत्तरपदत्वाभावात् ङीत्वाभावः ॥ तदेतरशम्येति । पूर्वं कर्मधारयगर्भस्तु न कृतः, इतरशब्दस्य पूर्वनिपातापत्तेः । एवं च भाष्ये पुंवद्भाव इति दोषोपलक्षणम्—इतराशब्दस्य पूर्वनिपातापत्तिरपि दोषो बोध्यः । शम्यापेक्षया द्वयोर्विशेषणत्वेपि प्रथमानिर्दिष्टत्वेपि इतरा इत्यस्य सर्वनामत्वादिति वदन्ति ॥

( १२१९ समाधानवार्तिकम् ॥ ३० ॥ )

॥ * ॥ न वावयवतत्पुरुषत्वात् ॥ * ॥

( व्याख्याभाष्यम् )

न वा एष दोषः । किं कारणम् । अवयवतत्पुरुषत्वात् । अवयवोत्र तत्पुरुषसंज्ञः, तदाश्रयौ समासान्तपुंवद्भावौ भविष्यतः ॥

( प्रदीपः ) न वेति । क्वचित् त्रयाणां पदानां बहुव्रीहौ कृते द्वयोः पदयोस्तद्धितार्थोत्तरपदेति तत्पुरुषः । भिन्नविषयत्वाच्च बहुव्रीहितत्पुरुषसंज्ञयोरेकसंज्ञाधिकारेपि नास्ति विरोधः । खादिरेतरशम्यमित्यत्र पुंवद्भावसिद्धये कृते तत्पुरुषे खादिरी इतरशम्यास्येति द्विपदो बहुव्रीहिः क्रियते न तु त्रिपदः । विकारे च प्रत्ययविधानाद् वृद्धिनिमित्तस्येति प्रतिषेधो नास्ति ॥

( उद्द्योतः ) क्वचित् बहुव्रीहौ कृते तत्पुरुषः, क्वचित्तत्पुरुषे बहुव्रीहिरिति विषयविवेकं दर्शयति—क्वचिदिति ॥ आकडारीयत्वात् बहुव्रीहितत्पुरुषयोः कथं समावेश इत्यत आह—भिन्नेति । एका समुदायस्था पराऽवयवस्थेति भिन्नविषयत्वमिति भावः ॥

( आक्षेपभाष्यम् )

स्वरः कथम् ? ॥

१ सुष्ठु नतमजिनं वासो यस्येति विग्रहः । ( र. ना. ) २ समीचीनोऽन्तः शितिः ( कृष्णः ) रन्ध्रो यस्येति विग्रहः । ( र. ना. ) ३-४ 'गर्भिण्य' इति मुद्रितपुस्तके शोधनं तु भाष्यादर्शमूलकमेव । ५ पूर्वपदप्रकृतिस्वरेणेति शेषः । ( र. ना. ) ६ कोष्ठान्तर्गतपाठो न सार्वत्रिकः । ७ 'रौरवेतरशम्यम्' इत्यधिकं पुस्तकान्तरे । ८ उत्तरपदशब्दस्य समासचरमावयवे रूढत्वादिति भावः । ( र. ना. )

( प्रदीपः ) **स्वरः कथमिति** । पूर्वशालाप्रिय इत्यादावं[1]पवादत्वाद् बहुव्रीहिस्वरः प्राप्नोति ॥

( १२२० समाधानवार्तिकम् ॥ ३१ ॥ )

**॥*॥ तस्यान्तोदात्तत्वं विप्रतिषेधात् ॥*॥**

( व्याख्याभाष्यम् )

**अन्तोदात्तत्वं क्रियतां पूर्वपदप्रकृतिस्वर इति । अन्तोदात्तत्वं भवति विप्रतिषेधेन ॥**

( प्रदीपः ) **विप्रतिषेधादिति** । विरोधमात्रं विप्रतिषेधशब्देनात्रोच्यते । हेतुस्त्वन्तरङ्गत्वं निमित्तिस्वरबलीयस्त्वं च ॥

( समाधानबाधकभाष्यम् )

**नैष युक्तो विप्रतिषेधः । 'विप्रतिषेधे परम्' इत्युच्यते । पूर्वं चान्तोदात्तत्वम्, परं पूर्वपदप्रकृतिस्वरत्वम् ॥**

( प्रदीपः ) इतरस्तु विप्रतिषेधमूलं परत्वमनेन हेतुत्वेनोक्तमिति मत्वाह—**नैष युक्त इति** ॥

( समाधानाभिप्रायभाष्यम् )

**न परविप्रतिषेधं ब्रूमः ॥ किं तर्हि ? ॥ अन्तरङ्गविप्रतिषेधम् ॥**

( प्रदीपः ) **अन्तरङ्गेति । अनुदात्तं पदमेकवर्जमिति** वचनाद् द्वयोः स्वरयोरसंभवात् कक्ष्यान्तरप्राप्तत्वाच्च बाध्यबाधकभावाभावादवयवाश्रयत्वादन्तरङ्गत्वं व्यवस्थाहेतुराश्रीयत इत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**अन्तरङ्गविप्रतिषेधमिति** । अन्तरङ्गत्वलक्षणविरोधमित्यर्थः ॥ ननु द्वयोरपि संभवे कथं विरोधोत आह—**अनुदात्तं पदमिति** ॥ नन्वन्तोदात्तं प्रति बहुव्रीहिस्वरस्यापवादत्वात् कथमन्तरङ्गत्वं तत्राह—**कक्षान्तरेति** । बहुव्रीह्यनन्तरभावित्वात्तत्पुरुषस्य तत्स्वरस्य समासान्तरप्राप्तत्वरूपं कक्षान्तरप्राप्तत्वम् । एवं च बहुव्रीहिगतसमासत्वप्रयुक्तान्तोदात्तत्वस्यैवापवादोयम्, न तु पश्चात्प्राप्ततत्पुरुषप्रयुक्तस्येत्यर्थः । 'अप[2]वादोपि यद्यन्यत्र' इतिन्यायादिति भावः ॥ **अन्तरङ्गत्वमिति** । समासद्वये कृते तदनन्तरं स्वरद्वयप्रवृत्तिरित्यभि[3]मानः ॥ वास्तवसमाधानं तु सतिशिष्टस्वरबलीयस्त्वमेव ॥ तदेव शब्दान्तरेण पठितं **निमित्तिस्वरेति** ॥

( १२२१ समाधानहेत्वन्तरवार्तिकम् ॥ ३२ ॥ )

**॥ * ॥ निमित्तिस्वरबलीयस्त्वाद्वा ॥ * ॥**

( व्याख्याभाष्यम् )

**अथ वा निमित्तस्वरान्निमित्तिस्वरो बलीयानिति वक्तव्यम् ॥ किं पुनर्निमित्तम्, को वा निमित्ती ? । बहुव्रीहिर्निमित्तम्, तत्पुरुषो निमित्ती ॥**

( प्रदीपः ) अन्तरङ्गोपि सतिशिष्टेन बहिरङ्गेणापि स्वरेण बाध्यत इत्यनैकान्तिकमन्तरङ्गत्वं मत्वा हेत्वन्तरमाह—**निमित्तिस्वरबलीयस्त्वादिति** । सति बहुव्रीहौ तदवयवोत्तरपदाश्रयो द्वयोस्तत्पुरुष इति बहुव्रीहेर्निमित्तत्वम् ॥

( उद्द्योतः ) **अनैकान्तिकमिति** । पूर्वमेव बहुव्रीहिस्वरप्रवृत्त्या युगपत्प्राप्त्यभावेनान्तरङ्गपरिभाषाविषयाभाव इत्यत्र तात्पर्यमस्य बोध्यम् ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्—निमित्तस्वरान्निमित्तिस्वरो बलीयानिति ? ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् ।**

( १२२२ समाधानसाधकवार्तिकम् ॥ ३३ ॥ )

**॥ * ॥ एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य ॥ * ॥**

( व्याख्याभाष्यम् )

**यदयं युक्तारोह्यादिष्वेकशितिपाच्छब्दं पठति तज्ज्ञापयत्याचार्यो निमित्तस्वरान्निमित्तिस्वरो बलीयानिति ॥**

( प्रदीपः ) **एकशितिपादिति** । युक्तारोह्यादिषु पूर्वपदाद्युदात्तार्थः पाठः । एकशब्दश्च कन्नन्तत्वात् स्वाङ्गशितामिति वाद्युदात्तः । तत्र त्रिपदे बहुव्रीहौ कृते द्वयोश्च तत्पुरुषे बहुव्रीहौ प्रकृत्येति सिद्ध आद्युदात्तत्वे ज्ञापनार्थः पाठः संपद्यते ॥

( उद्द्योतः ) **स्वाङ्गशितामिति** । इदमव्युत्पत्तिपक्षे बोध्यम् ॥ **द्वयोस्तत्पुरुषे इति** । तद्धितार्थोत्तरपदेत्यनेनेत्यर्थः ॥

( ज्ञापकत्वनिरासभाष्यम् )

**कः पुनरर्हति युक्तारोह्यादिष्वेकशितिपाच्छब्दं पठितुम् । एवं किल नाम पठ्यते—एकः शितिः एकशितिः, एकशितिः पादो यस्येति । तच्च न । एवं विग्रहः करिष्यते—एकः शितिरेषु त इमे एकशितयः, एकशितयः पादा यस्येति एकशितिपादिति ॥ अथाप्येवं विग्रहः क्रियते—एकः शितिरेकशितिः, एकशितिः पादो यस्येति, एवमपि नार्थः पाठेन । "इगन्ते द्विगौ" इत्येष स्वरोत्र बाधको भविष्यति ॥**

( प्रदीपः ) **कः पुनरिति** । सर्वथा स्वरस्य सिद्धत्वादकर्तव्य एव पाठो न ज्ञापक इत्यर्थः । निमित्तिस्वरस्य तु बलीयस्त्वं वाचनिकं न तु ज्ञापकसिद्धम् ॥

( उद्द्योतः ) आचार्येण पठिते कथं पाठाभाव उक्त इत्यतस्तात्पर्यमाह—**सर्वथेति** । वि[4]ग्रहद्वयेपीत्यर्थः ॥ भाष्ये—**एवं किल नामेति** । तत्पुरुषपूर्वपदकबहुव्रीहौ ति[5]कारस्योदात्तत्वं प्राप्तं तद्बाधेनैकारोदात्तत्वाय स शब्दः पठ्येतेत्यर्थः । तच्च न युक्तम् । विग्र-

---

१ बहुव्रीहौ सर्वत्र कर्मधारयप्राप्त्याऽनवकाशत्वेनापवादत्वादित्यर्थः । (र.ना.) २ अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यत एवेति न्यायाकारः । ( र. ना. ) ३ अभिमानोक्तिबीजं तु समासद्वयक्रमानुरोधी स्वरद्वयस्य क्रम इति अवयवाश्रयत्वप्रयुक्तान्तरङ्गत्वस्याभावो युगपत्प्राप्त्यभावादिति । ( र. ना. ) ४ वक्ष्यमाणेत्यादिः । ( र. ना. ) ५ तीकारस्येति पाठो भाति । ( र. ना. )

हृणान्वरकरणात् ॥ तत्पुरुषपूर्वपदकबहुव्रीहावपि तद्धितार्थेति तत्पुरुषसमाससंज्ञायां द्विगुत्वमित्याशयेन भाष्ये आह—इगन्ते द्विगाविति । पूर्वपदप्रकृतिस्वरविधायकमेतत् ॥

( आक्षेपान्तरभाष्यम् )

अस्य तर्हि बहुव्रीह्यवयवस्य तत्पुरुषसंज्ञा प्राप्नोति—

सुसूक्ष्मजटकेशेन सुनताजिनवाससा ।
समन्तशितिरन्ध्रेणेति ।

तत्र को दोषः ? ॥ *तस्यान्तोदात्तत्वं विप्रतिषेधात्* इत्यन्तोदात्तत्वं स्याद्विप्रतिषेधेन ॥

( उद्द्योतः ) अवयवस्य तत्पुरुषसंज्ञा वाचनिक्यनेन कृतेति मत्वाह—अस्य तर्हीत्यादि ॥

( समाधानभाष्यम् )

नैष दोषः । नेदं बहुव्रीह्यवयवस्य तत्पुरुषस्य लक्षणमारभ्यते ॥ किं तर्हि ? । यस्य बहुव्रीह्यवयवस्य तत्पुरुषस्य तल्लक्षणमस्ति तस्यान्तोदात्तत्वं भविष्यति विप्रतिषेधेन ॥

( प्रदीपः ) नेदमिति । यद्यपूर्ववचनं क्रियेत—बहुव्रीह्यवयवस्तत्पुरुषो भवतीति, ततोऽत्र स्याद्दोषः । दिक्संख्ययोस्तूत्तरपदे तत्पुरुषो विधीयत इति दोषाभावः ॥

( उद्द्योतः ) भाष्ये—नेदमिति । न वावयवस्तत्पुरुषत्वादिलेतैव ॥

( आक्षेपभाष्यम् )

ननु चास्याप्यस्ति ॥ किम् ? । "विशेषणं विशेष्येण बहुलम्" इति ॥

( समाधानभाष्यम् )

बहुलवचनान्न भविष्यति ॥

( प्रदीपः ) बहुलवचनादिति । समुदायस्य वृत्तावयवस्यान्या संज्ञा विशेषलक्षणं विना बहुलवचनान्न प्रवर्तते ॥

( उद्द्योतः ) बहुलवचनादिति । क्वचिदन्यदेवेत्यर्थकादित्यर्थः । अनेन चैतत्प्रपञ्चभूतानां पूर्वनिपातनियमार्थानां च बहुलग्रहणेन निवृत्तिरिति सूच्यते । अन्यथा तेषां तत्त्वं भज्येत ॥ एतेन महत्कष्टं श्रित इति प्रतीकस्थस्यार्थां तत्पुरुषे सन्महदिति द्वयोः समासपरः कैयटः परास्तः । न च त्रयाणामेकार्थीभावेपि द्वयोर्निष्कृष्यैकार्थीभावाभावात्कथं विशेषणमित्यस्य प्राप्तिः, तद्धितार्थेति तु सामर्थ्यात् प्रवर्तत इति वाच्यम् । निष्कृष्यैकार्थीभाव एव शास्त्रप्रवृत्तिरित्यर्थे मानाभावादिति दिक् ॥ विशेषलक्षणं विनेति । तच्च तद्धितार्थेत्यादि ॥

( आक्षेपान्तरभाष्यम् )

अस्य तर्हि बहुव्रीह्यवयवस्य तत्पुरुषसंज्ञा प्राप्नोति—अधिकषष्टिवर्ष इति ॥ तत्र को दोषः ? । * तस्यान्तोदात्तत्वं विप्रतिषेधात् * इत्यन्तोदात्तत्वं स्याद्विप्रतिषेधेन ॥

( प्रदीपः ) अधिकषष्टिवर्ष इति । त्रिपदे बहुव्रीहौ कृते अधिकग्रहणं चाऽलुकीत्यधिकशब्दस्य संख्यासंज्ञात्वात्तद्धितार्थोत्तरपदेति पदद्वयस्य तत्पुरुषे कृते समासान्तोदात्तत्वं प्राप्नोतीत्यर्थः । अधिकशब्दः क्तान्तत्वादाद्युदात्तः ।

( उद्द्योतः ) विशेषलक्षणाभावोऽत्रापि तुल्य इत्यत आह—अधिकग्रहणं चेति ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः । "इगन्ते द्विगौ" इत्येष स्वरो बाधको भविष्यति ॥

( आक्षेपान्तरभाष्यम् )

यस्तर्हि नेगन्तः—अधिकशतवर्ष इति ॥

( प्रागुक्ताक्षेपस्यापि समञ्जसत्वभाष्यम् )

इह चाप्यधिकषष्टिवर्ष इति समासान्तः प्राप्नोति *डचः प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम्* इति ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः । अव्ययादेरित्येवं तत् ॥

( आक्षेपभाष्यम् )

किं पुनः कारणम्—अव्ययादेरित्येवं तत् ? ।

( समाधानभाष्यम् )

इह मा भूद्—गोत्रिंशद्, गोचत्वारिंशदिति ॥

( आक्षेपभाष्यम् )

बहुव्रीहिसंज्ञा तर्हि प्राप्नोति "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति ॥

( प्रदीपः ) बहुव्रीहिसंज्ञा तर्हीति । अधिकषष्टिवर्षेपि दोष इति भावः । त्रिपदे बहुव्रीहौ कृते पदद्वयस्य तद्धितार्थोत्तरपदेति तत्पुरुषं परत्वाद् बाधित्वा संख्ययाव्ययेति बहुव्रीहिः प्राप्नोति । ततश्च बहुव्रीहौ संख्येय इति डच्प्रसङ्गः ॥

( उद्द्योतः ) अधिकषष्टिवर्षेपीति । अधिकशतवर्षेपि डचः प्राप्त्या स्वरे विशेष इति भावः ॥

( समाधानभाष्यम् )

न संख्यां संख्येये वर्तयिष्यामः ॥ कथम् ? । एवं विग्रहः करिष्यते—अधिका षष्टिर्वर्षाणामस्येति ॥

( प्रदीपः ) न संख्यामिति । अधिकषष्टिवर्ष इत्येव यथा स्यादित्येवमर्थमव्यविकैन्याय आश्रीयते । तेनाधिका षष्टिर्वर्षाण्यस्येति वाक्यमेव भवति ॥

१ 'यद्यपूर्वं वचनं' । २ 'दिति एतत्' इत्येवं सर्वेषु पुस्तकेषु । ३ लक्षणेन । ४ अधिकाषष्टिर्वर्षाणि यस्येति विग्रहः । ( र. ना. ) ५ डचः प्रकरणे इत्यादि वार्तिकम् । ( र. ना. ) ६ 'तत्रैवं' । ७ यथाऽवोर्विकार इति विग्रहे आविकमित्येव भवति नतु आवमिति तथाधिका षष्टिर्वर्षाणामस्येति विग्रहे एवाधिकषष्टिवर्ष इति भवति न त्वधिकाषष्टिर्वर्षाण्यस्येति विग्रहे इति भावः । ( र. ना. )

(उद्योतः) संख्येयपरेण बहुव्रीहौ दोषः स्यादेवेत्यत आह—अधीति ॥ षष्टिशब्दस्याजहल्लिङ्गत्वमेकवचनान्तं च मत्वाह—अधिकाषष्टिर्वर्षाण्यस्येति । अधिकाषष्टिर्वर्षाणामिति ॥

(आक्षेपसाधकभाष्यम्)

**यथा तर्हि स योगः प्रत्याख्यायते तथा पूर्वेण प्राप्नोति ॥ कथं च स योगः प्रत्याख्यायते? । *अशिष्यः संख्योत्तरपदः संख्येयार्थाभिधायित्वात्* इति ॥**

(प्रदीपः) पूर्वेणेति । अधिका षष्टिर्येषां वर्षाणामिति वर्षेषु संख्येयेषु अनेकमन्यपदार्थे इति बहुव्रीहिः प्राप्नोति । संख्येयवृत्तित्वाच्च बहुव्रीहेस्तन्निबन्धनो डजपीति दोषः । बहुव्रीहिगर्भश्च पुनर्वयस्विन्यभिधेये बहुव्रीहिः प्राप्नोति ॥

(उद्योतः) यद्यपि अधिका षष्टिर्येषां वर्षाणामिति विग्रहे स्थितेपि संख्ययेतिसूत्रे पूर्वेण बहुव्रीहिः प्राप्नोतीति वक्तुं शक्यते, तथापि संख्येये संख्याया अवृत्त्या डचो प्राप्त्या प्रयोजनाभाव इति वक्तुं शक्यमित्याशयेन भाष्ये—'यथा तर्हि स योगः प्रत्याख्यायते तथा पूर्वेणेत्युक्तम् ॥ यदा तदेति क्वचित् पाठः स योगः संख्याव्ययेतियोगः ॥ डजपीति । तत्प्रत्याख्याने संख्येये वर्तमानबहुव्रीहेरित्यर्थात्स्यादेव डजिति भावः ॥ तर्हि वर्षोत्तरपदत्वं कथं तत्राह—बहुव्रीहिगर्भ इति । एवं चाधिकषष्टवर्ष इति प्रयोगो दुर्वार एवाधिकषष्टिर्वर्षाण्यस्येति विग्रहे वाक्याङ्गीकारेपीति भावः ॥

(आक्षेपबाधकभाष्यम्)

**प्रत्याख्याते तस्मिन्योगे संख्यां संख्येये वर्तयिष्यामः । तत्रैवं विग्रहः करिष्यते-अधिका षष्टिर्वर्षाण्यस्येति ।**

(प्रदीपः) प्रत्याख्यात इति । अव्यविकन्यायेन चाधिका षष्टिर्वर्षाणामस्येति वाक्यमेव भविष्यति ॥

(उद्योतः) तत्खण्डयति—भाष्ये—प्रत्याख्याते तस्मिन्निति ॥ अधिका षष्टिर्वर्षाण्यस्येति । अत्रावान्तरबहुव्रीहिस्तु न, संख्येयरूपान्यपदार्थाभावादिति भावः ॥ नन्वधिका षष्टिर्येषां वर्षाणामित्यस्यापि विद्यमानत्वात्कथं दोषपरिहार इत्यत आह—अव्यविकेति ॥

(आक्षेपसाधकभाष्यम्)

**सर्वथा वयमधिकषष्टवर्षान्न मुच्यामहे ॥ कथम्? । यावता स योगः प्रत्याख्यायते अयं च विग्रहोस्ति—अधिका षष्टिर्वर्षाणामस्येति ।**

(प्रदीपः) अव्यविकन्यायममत्वाह—सर्वथेति ।

(उद्योतः) यथाश्रुतग्राहिणश्चोद्यमित्याह—अव्यविकन्यायममत्वाहेति ॥ भाष्ये—अधिकषष्टिवर्षान्न मुच्यामह इति पाठः । ईदृशानिष्टरूपादित्यर्थः । क्वचित्त्वधिकषष्टिवर्षान्न मुच्यामहे इति पाठः । तदाऽधिकषष्टिवर्षविषयादनिष्टरूपान्न मुच्यामह इति अर्थः ॥ अधिकाषष्टिर्वर्षाणामस्येति । अधिका षष्टिर्येषां वर्षाणां तानि अस्येत्यर्थः ॥

१ 'सर्वथा वयमधिकषष्टवर्षान्न मुच्यामहे' इत्येतत्फलितमिदं स्यात् । २ 'स च' । ३ अवान्तरवाक्ये इति शेषः । समुदाये तु भवतीत एवेति भावः । (र.ना.)

(आक्षेपबाधकभाष्यम्)

**यत्तु तदुक्तम्—अधिकषष्टिवर्षो न सिद्ध्यतीति, स सिद्धो भवति ॥ कथम्? । यावता स योगः प्रत्याख्यायते । अयं च विग्रहोस्ति—अधिका षष्टिर्वर्षाण्यस्येति ॥**

(प्रदीपः) अव्यविकन्यायाश्रयेणाह—यत्तु तदुक्तमिति । वृत्तिविषये दशादीनामपि द्व्येकयोरिति निर्देशात् संख्यानमात्रवृत्तित्वात् संख्येयस्यान्यपदार्थत्वात् स योगः प्रत्याख्यायते ॥

(उद्योतः) आदशभ्यः संख्याः संख्येये इति नियमात्तद्विषये सूत्रस्यावश्यकत्वात्कथं प्रत्याख्यानं तत्राह—वृत्तिविषय इति । अधिका षष्टिर्वर्षाण्यस्येति विग्रहेवान्तरान्यपदार्थाभावादनेकमित्यस्याप्राप्तौ तद्योगप्रत्याख्यानेऽधिकषष्टिवर्षः सिद्धः । विग्रहान्तरे तु वाक्यमेव । एवं सूत्रारम्भे अधिका षष्टिर्वर्षाणामस्येति बहुव्रीहिगर्भे बहुव्रीहौ संख्येये वर्तमानसंख्यान्तर्बहुव्रीहेरित्यर्थान्न डच् । विग्रहान्तरे तु वाक्यमेवेत्यधिकषष्टिवर्षः सिद्ध इति भाष्याशयः ॥

(आक्षेपभाष्यम्)

**अधिकशतवर्षस्तु न सिध्यति ॥**

(प्रदीपः) अधिकशतवर्षस्त्विति । अधिकं शतं वर्षाण्यस्येति त्रिपदे बहुव्रीहौ कृते तद्धितार्थोत्तरपदेति तत्पुरुषे समासान्तोदात्तत्वं प्राप्नोति, आद्युदात्तत्वं चेष्यते ॥

(समाधानभाष्यम्)

**कर्तव्योत्र यत्नः ॥ समर्थः पदविधिः ॥ १ ॥**

इति श्रीमहाभाष्ये द्वितीयाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

(प्रदीपः) कर्तव्योत्र यत्न इति । युक्तारोह्यादिष्वधिकशतवर्षशब्द आद्युदात्तार्थो द्रष्टव्यः ॥ १ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

(उद्योतः) एवं च द्वन्द्वबहुव्रीहिविषयेऽविशेषेणेति पक्षः स्थितः ॥ १ ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते व्याकरणभाष्यप्रदीपोद्योते द्वितीयाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

## द्वितीयाध्याये प्रथमपादे द्वितीयमाह्निकम् ।

(२२२ अतिदेशसूत्रम् ॥ २ । १ । २ आ० १ सू०)

## ३५१ सुबामन्त्रिते पराङ्गवत्स्वरे ॥ १।२॥

(सुब्ग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**सुबिति किमर्थम्? ॥**

(प्रदीपः) सुबामन्त्रिते पराङ्गवत् ॥ २ ॥ सुबिति किमर्थमिति । आमन्त्रितस्य पदत्वात्तस्मिन् परतो विधीयमानस्य पराङ्गवद्भावस्य पदविधित्वात् समर्थपरिभाषोपस्थानात्तिङन्तस्य न भविष्यति । तथा हि । व्यधिकरणस्य

४ संख्येये वर्तमानं यत्संख्यावाचकं पदं तदन्तबहुव्रीहेरित्यर्थः । (र. ना.

तिङन्तस्य वास्तवमसामर्थ्यं समानाधिकरणस्य वाचनिकम्, अतिव्याप्तिनिवारणार्थमवश्यं कर्तव्यं षष्ठ्यामन्त्रितकारकवचनमिति तेनैव तिङन्तस्य सिद्धो निरासः । क्रियमाणे च सुबग्रहणे तीक्ष्णया सूच्या सीव्यन्नित्यादौ सुबन्तसमुदायस्याप्राप्तिरित्यव्याप्तिः प्राप्नोतीति भावः ॥

( उद्द्योतः ) सुबामन्त्रिते ॥ २ ॥ व्यधिकरणस्येति । उपात्तामन्त्रितानन्वयिन इत्यर्थः । यथा हे पीड्यमान त्वं शृणु अहं पीड्ये इत्यर्थके पीड्ये पीड्यमानेत्यादाविति भावः ॥ वाचनिकमिति । समानाधिकरणमसमर्थवदिति ॥ युक्त्यन्तरमप्याह—अतिव्याप्तीति । क्षत्रेणाग्रे इत्यादाविति भावः । भाष्यास्वाद एव प्रश्नाशय उपलभ्यते ॥ सुबन्तसमुदायस्येति । तस्यासुबन्तत्वादिति भावः ॥

( समाधानभाष्यम् )

**करोष्यटन् ॥**

( प्रदीपः ) करोष्यटन्निति । अधात्वभिहितमिति सापवादत्वाद्वास्ति वाचनिकमसामर्थ्यम् ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । असामर्थ्यादत्र न भविष्यति ॥ कथमसामर्थ्यम् ? । समानाधिकरणमसमर्थवद्भवतीति ॥**

( उद्द्योतः ) भाष्ये—नैवदस्तीति शङ्किता । नैष दोषोऽधात्वभिहितमिति च सिद्धान्त्येकदेशीति तत्त्वम् ॥ एकार्थीभावसामर्थ्यस्यैव तत्र सूत्रे ग्रहणेन तस्यात्रानुपस्थितेरित्याहुः ॥

( समाधानभाष्यम् )

**इदं तर्हि—पीड्ये पीड्यमानेति ॥**

( प्रदीपः ) पीड्ये पीड्यमानेति । हे पीड्यमान त्वदीयया पीडयाऽहं पीड्य इत्यस्ति सामर्थ्यम् । अथ वा संबोधनपदं क्रियाया एव विशेषकमित्यस्ति सामर्थ्यम् । तथा च—व्रजानि देवदत्तेति निघातो भवति । पीड्य इति तास्यनुदात्तेदिति लसार्वधातुकस्यानुदात्तत्वम्, यक उदात्तत्वादेकादेश उदात्तेनोदात्त इत्येकार उदात्तः । पीड्यमानेत्यस्य पदादुत्तरस्य निघातः ॥

( उद्द्योतः ) तिङन्तामन्त्रितयोः परस्परसंबन्धाभावादसामर्थ्यमित्यत आह—त्वदीययेति । पीड्यमानपदार्थविशेषणीभूतपीडाकरणकत्वेन तद्द्वारा सामर्थ्यमिति भावः ॥ साक्षादपि सामर्थ्यं दर्शयितुमाह—अथवेति ॥ तथा च व्रजानीति । वस्तुतः साक्षात्परस्परान्वयाभावेपि नद्यास्तिष्ठति कूले इत्यादाविव निघातसिद्धिरत्रास्त्येवेति बोध्यम् ॥ एकार उदात्त इति । पराङ्गवद्भावे तु पीड्ये इति पीकारेकार उदात्तः स्यादिति भावः ॥

( पूर्वोक्तासमाधानसाधकभाष्यम् )

**इदं चाप्युदाहरणम्—करोष्यटन् ॥**

( आक्षेबाधकपक्षारणभाष्यम् )

**ननु चोक्तम्—असामर्थ्यादत्र न भविष्यतीति । कथमसामर्थ्यम् ? । समानाधिकरणमसमर्थवद्भवतीति ॥**

( समाधानभाष्यम् )

**नैष दोषः । अधात्वभिहितमित्येवं तत् ॥**

( प्रदीपः ) अधात्वभिहितमिति । सर्वं नाम धातुजमिति दर्शनेन सर्पिःकालकमिति यद्यपि धात्वभिहितं तथापि यत्र क्रिया प्रवृत्तिनिमित्तं स्फुटा च धातुप्रत्ययेव कर्त्रादिप्रतिपत्तिस्तद्धात्वभिहितं गृह्यते ॥ यदप्युक्तं वचनान्तरेणातिव्याप्तिर्वार्यत इति । तदपि न युक्तम् । नहि सूत्रकारो वार्तिककारस्य वचनेनातिव्याप्तिनिवारणं मन्यते ॥

( उद्द्योतः ) स्फुटा चेति । क्रियाप्रवृत्तिनिमित्तकत्वे हि सा स्फुटा भवतीति बोध्यम् ॥ मन्यते इति । अग्रे वार्तिकस्य वक्ष्यमाणतयात्र पूर्वपक्षिसिद्धान्त्येकदेशिनोस्तदज्ञानाचेत्यपि बोध्यम् ॥ एतेन "वार्तिकानामपि वाक्यैकदेशन्यायेन सूत्रतात्पर्यविषयतायाः परपशायां भाष्ये ध्वनितत्वेनेदं चिन्त्य"मित्यपास्तम् ॥

( पराङ्गवद्भावविषयनिर्णयाधिकरणम् ॥ )

( १२२३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रितकारकवचनम् ॥ * ॥

( व्याख्याभाष्यम् )

**आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यन्तमामन्त्रितकारकं पराङ्गवद्भवतीति वक्तव्यम् । षष्ठ्यन्तं तावत्—मद्राणां राजन्, मगधानां राजन् ॥ आमन्त्रितकारकम्—कुण्डेनाटन् ॥**

( प्रदीपः ) आमन्त्रितस्येति । आमन्त्रिते यो विधीयते स आमन्त्रितसंबन्धी भवतीति षष्ठीनिर्देशः ॥ आमन्त्रितकारकमिति । आमन्त्रिते या धातुवाच्या क्रिया तस्याः कारकमित्यर्थः ॥

( उद्द्योतः ) आमन्त्रितस्येति षष्ठ्यनुपपत्तेराह—आमन्त्रिते इति ॥

( आमन्त्रितकारकोदाहरणबाधकभाष्यम् )

**नास्त्यत्र विशेषः सति च पराङ्गवद्भावेऽसति वा ॥**

( प्रदीपः ) नास्त्यत्रेति । कुण्डशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः आमन्त्रितस्य पदात्परस्य निघातः । सत्यपि पराङ्गवद्भावे सुबन्तसमुदायस्याद्युदात्तत्वं शेषनिघातश्चेति भेदाभावः ॥

( उद्द्योतः ) कुण्डशब्द इति । न च यदाऽटन्निति पादादौ वर्तते, यदा वा जीवति पत्यौ जारजवाची कुण्डशब्दः पुलिङ्गस्तदा स्वरभेदोऽस्त्येवेति वाच्यम् । पादादावेवंविधप्रयोगाभावात् वृषादित्वेन कुण्डशब्दमात्रस्याद्युदात्तत्वाच्चेति भाष्याशयः ॥

---

१ वक्ष्यमाणेत्यादिः । ( र. ना. ) २ मलयत्वेनेति शेषः । ( र. ना. ) ३ 'करणत्वेन' । ४ पीशब्देकार आमन्त्रितादित्वेनोदात्तः स्यादित्यर्थः । (र.ना.) ५ यथा मविश पिण्डीमित्यादौ वाक्यैकदेशे प्रयुक्ते एकदेशान्तरमपि आक्षिप्यते तथा सूत्ररूपवाक्यैकदेशप्रयोगे तदेकदेशान्तरभूतानि वार्तिकान्यप्याक्षिप्यन्ते इति भावः । ( र. ना. ) ६ आमन्त्रितस्य पराङ्गवद्भावे इति षष्ठीनिर्देशोऽनुपपन्नः । नहि आमन्त्रितस्य पराङ्गवद्भावो विधीयते किन्तु तत्र, इत्यत आह—आमन्त्रिते इत्यादि । ( र. ना. ) ७ तदा न निघातोऽपादादाविति निषेधादिति भावः । ( र. ना. )

( उदाहरणान्तरभाष्यम् )

**इदं तर्हि—परशुना वृश्चन् ॥**

( प्रदीपः ) परशुनेति । परशुशब्द आङ्परयोः खनिशृभ्यां डिच्चेति कुप्रत्ययान्तोऽन्तोदात्तः ॥

( १२२४ आक्षेपस्य प्रकारान्तरवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तन्निमित्तग्रहणं वा ॥ * ॥**

( व्याख्याभाष्यम् )

**अथ वा तन्निमित्तग्रहणं कर्तव्यम् । आमन्त्रितनिमित्तं परस्याङ्गवद्भवतीति वक्तव्यम् । मद्राणां राजन् ॥**

( प्रदीपः ) तन्निमित्तग्रहणं वेति । वाशब्दो विकल्पे । तस्यामन्त्रितस्य यन्निमित्तं तद्वाचि पराङ्गवद्भवतीत्यर्थः ॥ मद्राणां राजन्निति । मद्रनिमित्तं हि राजत्वमित्यस्ति तन्निमित्तत्त्वम् । भृत्यदेशनिमित्ता हि राजता ॥

( उद्योतः ) तस्यामन्त्रितस्येति । आमन्त्रितार्थस्येत्यर्थः । तत्प्रवृत्तिनिमित्तस्येति यावत् ॥

( अनन्यथासिद्धत्वसाधकभाष्यम् )

**तच्चावश्यमन्यतरद्वक्तव्यम् ॥**

( १२२५ अन्यथासिद्धिवारकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अवचने हि सुबन्तमात्रप्रसङ्गः ॥ * ॥**

( व्याख्याभाष्यम् )

**अनुच्यमाने त्वेतस्मिन्सुबन्तमात्रस्य पराङ्गवद्भावः प्रसज्येत । अस्यापि प्रसज्येत । "क्षत्रेणाग्ने स्वायुः संरभस्व" "मित्रेणाग्ने मित्रधेये यतस्व" ॥**

( प्रदीपः ) क्षत्रेणाग्न इति । क्षत्रमित्रयोराख्यातवाच्यक्रियापेक्षया करणत्वादामन्त्रितं प्रति निमित्तत्वाभावः । क्रियाद्वारकं तु व्यपेक्षालक्षणं सामर्थ्यमस्तीति स्यात्पराङ्गवद्भावः । इह वचनेनातिप्रसङ्गे निरस्ते पूर्वसूत्रे एकार्थीभाव एव सामर्थ्यमाश्रितम् । अन्यथा तु द्विविधमपि सामर्थ्यमाश्रीयेत ॥

( उद्योतः ) क्रियाद्वारकं त्विति । व्यपेक्षावादे कृतः सर्वो मृत्तिकयेत्यादौ समासापत्तेरिदं चिन्त्यम् ॥ भाष्यस्य तु समर्थपरिभाषानुपस्थितौ तदननुवृत्तौ च तात्पर्यम् ॥ समर्थसूत्रे एकार्थीभावस्यैव सिद्धान्तितत्वेन तस्या अत्रायोगात् । अत एव भो देवदत्त भगो देवदत्तेत्यादौ पराङ्गवत्त्वं नेति बोध्यम् ॥ षष्ठ्यामन्त्रितकारकत्वस्य तन्निमित्तस्य चाभावात् । 'ऋतेन मित्रावरुणावृतावृधावि'त्यत्र ऋतेनेत्यस्यानशाथे इति क्रियान्वयेनामन्त्रितऋतावृधावित्यर्थनिमित्तत्वाभावान्न पराङ्गवत्त्वम् । मित्रावरुणावित्यस्य तु ऋतस्य वर्द्धयितारावित्यर्थकऋतावृधावित्येतत्प्रवृत्तिनिमित्तभूतवर्धनं प्रति कर्तृतया मित्रावरुणयोर्निमित्तत्वात् सिद्ध इष्टः पराङ्गवद्भावः छान्दसत्वाद्वेति बोध्यम् । उपक्रमस्थभाष्यं तु पूर्वपक्षत्वान्नार्थसाधकम् ॥ नन्वेकार्थीभावसामर्थ्यस्यैव समर्थसूत्रे सिद्धान्तितया कथमत्र पराङ्गवद्भावे तदुपस्थितिरित्यत आह—इहेति । एवं च सुब्ग्रहणं व्यर्थमिति तत्त्वम् ॥

( आक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ? ॥**

( प्रदीपः ) किं पुनरत्रेति । गुरुलाघवमनादृत्य प्रयोजनापेक्षः प्रश्नः ॥

( उद्योतः ) गुरुलाघवेति । गुरुपदेन गुरुत्वपरेण लाघवपदस्य द्वन्द्वः ॥

( समाधानभाष्यम् )

**तन्निमित्तग्रहणमेव ज्यायः । इदमपि सिद्धं भवति—गोषु स्वामिन् पशुषु स्वामिन् । एतद्धि नैव षष्ठ्यन्तम्, नाप्यामन्त्रितकारकम् ॥**

( प्रदीपः ) गोषु स्वामिन्निति । स्वामीश्वरेति शेषषष्ठीविषये सप्तमीविधानान्नास्ति कारकत्वम् । निमित्तत्वं तु पूर्वोक्तन्यायेनास्ति ॥

( १२२६ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात्स्वरेऽवधारणाच्च ॥ * ॥**

( व्याख्याभाष्यम् )

**सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानं कर्तव्यम् । तीक्ष्णया सूच्या सीव्यन्, तीक्ष्णेन परशुना वृश्चन् ॥ किं पुनः कारणं न सिध्यति ? । अनन्तरत्वात् ॥**

**ननु च परस्य पराङ्गवद्भावे कृते पूर्वस्यापि भविष्यति ॥**

**स्वरेऽवधारणाच्च * । स्वरेऽवधारणाच्च न सिध्यति । स्वरेऽवधारणं क्रियते, नानन्तर्ये ॥**

(प्रदीपः) सुबन्तस्येति । क्रियमाणेऽपि सुब्ग्रहणे सुबन्तसमुदायस्यासुबन्तत्वात्पूर्वस्य च परेण व्यवधानान्न प्राप्नोति ॥ किं पुनरिति । व्यवहितस्यापि परत्वसंभवात् परस्य वा पराङ्गवद्भावादामन्त्रितानुप्रवेशादव्यवधानाद्भविष्यतीति प्रश्नः ॥ अनन्तरत्वादिति । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानान्निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादप्राप्तिरित्यर्थः ॥ स्वरेऽवधारणाच्चेति । प्रसिद्धे हि लौकिक आनन्तर्ये स्वरे विधीयमाने पराङ्गवद्भावो विधीयते, न तु पराङ्गवद्भाव एव कर्तव्ये पराङ्गवद्भावेनैवानन्तर्यं संपाद्यते । स्वात्मनि क्रियाविरोधादतिदेशान्तराभावाच्च । यथोक्तं हरिणा ग्रहणाणग्रहणे ग्रहणाभाव[6] इत्यादि । असति तु स्वरग्रहणे विषयभेदाल्लक्षणं भिद्यत इति परस्य[7] आनन्तर्यव्यपदेशे कर्तव्ये पराङ्गवद्भावे कृते पूर्वस्यापि पराङ्गवद्भावो लभ्यते । न च स्वरार्थमानन्तर्यं स्वरशब्देनेहोच्यते । मुख्यार्थसंभवे गौणार्थग्रहणायोगात् । न च तस्मिन्निति निर्दिष्टे पूर्वस्य तस्मादित्युत्तरस्येति परि-

---

१ न तु समुच्चये इति भावः । प्रकारान्तरेण पूर्ववार्तिकार्थस्यैवानेन संग्रहादिति भावः । (र. ना.) २ भृत्यः पालयितव्यो यो देशस्तन्निमित्तेति बहुव्रीहिः । (र. ना.) ३ समर्थः पदविधिरित्यत्रेत्यर्थः । (र.ना.) ४ समानाधिकरणस्यासमर्थत्वेन पराङ्गवद्भावाभावबोधकमित्यर्थः । (र. ना.) ५ 'अश्वेषु' । ६ ग्रहणे ग्रहणकशास्त्रे यदण्ग्रहणं तत्र ग्रहणाभावः, सवर्णग्रहणाभाव इत्यर्थः । स्वात्मनि क्रियाविरोधादिति हेतुः । ( र. ना. ) ७ लक्ष्ये लक्षणन्यायाप्रवृत्त्येत्यादिः । परस्येति पराङ्गवद्भावे कर्तव्ये इत्यनेनान्वेति । ( र. ना. ) ८ पूर्वापेक्षयाऽऽमन्त्रितस्येत्यादिः । ( र. ना. ) ९ तथा च तीक्ष्णयेत्यस्यामन्त्रिताद्युदात्तत्वार्थमानन्तर्ये कर्तव्ये परस्य पराङ्गवद्भावे पूर्वस्यापि पराङ्गवद्भावः स्यादिति भावः । ( र. ना. )

भाषाद्वयमादेशविधावेवोपतिष्ठते। गोतो णिद् रुदादिभ्यः सार्वधातुक इत्यादावप्युपस्थानदर्शनात्॥

(उद्योतः) सुबग्रहणेऽपि कृते दोषवारणाय यत्नः कार्यं इति गौरवमित्येतत्परं वार्तिकमित्याह—क्रियमाण इति॥ सुबन्तसमुदायस्यासुबन्तत्वादिति। अनेन सुप्सुपेत्यादौ दर्शितैकत्वविवक्षाया अतिस्थूलमतिविषयत्वं दर्शयति॥ भाष्ये—स्वरेऽवधारणाच्चेति वार्तिकखण्डमवतारयति—ननु चेति॥ प्रसिद्ध इति। सिद्ध इत्यर्थः॥ ग्रहणाणिति। अणुदिदितिग्रहणकशास्त्रीयाण्ग्रहणे ग्रहणकशास्त्राभाव इत्यर्थः॥ यथा तत्र वाक्यार्थबोधात् प्राक् तस्य लक्ष्यसंस्कारकताया वक्तुमशक्यत्वेनाप्रवृत्तिस्तथात्र स्वरेग्रहणात्स्वात्मन्यप्रवृत्तिरिति भावः॥ विषयभेदादिति। अत एव त्वप्रत्ययान्तात्त्वप्रत्ययसिद्धिः॥ गौणार्थेति। एतेन परम्परया स्वरस्य कर्तव्यत्वमस्त्येवेत्यपास्तम्। साक्षात्स्वरे कर्तव्ये शास्त्रस्य चरितार्थत्वात्॥ आदेशविधावेवेति। षष्ठीस्थाने इत्यस्य प्रवृत्तेरित्यभिमानः॥ एवं च तन्निमित्तग्रहणेन तिङन्तव्यावृत्तिसिद्धेः सुब्ग्रहणे समानाधिकरणे असिद्ध्या च सुब्ग्रहणं न कार्यमिति भाष्याशयः। उत्तरार्थं तु सुबिल्यधिकारसूत्रं कर्तव्यमिति बोध्यम्॥

(१२२७ आक्षेपवार्तिकम्॥ ५॥)

## ॥ * ॥ परमपि च्छन्दसि ॥ * ॥

(व्याख्याभाष्यम्)

**परमपि च्छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम्। आ ते पितर्मरुतां सुम्नमेतु। प्रति त्वा दुहितर्दिवः। वृणीष्व दुहितर्दिवः॥**

(प्रदीपः) पितर्मरुतामिति। पितरित्यामन्त्रितनिघातेनानुदात्तम्। तस्मात्परं मरुतामित्येतदप्यनुदात्तमेव भवति॥

(१२२८ आक्षेपवार्तिकम्॥ ६॥)

## ॥ * ॥ अव्ययप्रतिषेधश्च ॥ * ॥

(व्याख्याभाष्यम्)

**अव्ययानां च प्रतिषेधो वक्तव्यः। उच्चैरधीयान॥ नीचैरधीयान।**

(प्रदीपः) उच्चैरिति। उच्चैर्नीचैः स्वरादिष्वन्तोदात्तौ पठितौ। अधिकरणशक्तिप्राधान्याच्च तन्निमित्तसद्भावः॥

(उद्योतः) स्वरादिष्विति। एवं चानेनैव स्वरेणानयोरवस्थितेराभ्यां परस्याष्टमिकनिघातश्चेति भावः। फिट्स्वरेण प्रत्ययस्वरेण वान्तोदात्तत्वसिद्धेः स्वरादिष्वन्तोदात्तपाठः किमर्थ इति चिन्त्यम्॥

(१२२९ पर्युदासवार्तिकम्॥ ७॥)

## ॥ * ॥ अनव्ययीभावस्य ॥ * ॥

(व्याख्याभाष्यम्)

**अव्ययीभावस्य नेति वक्तव्यम्। इह मा भूत्—उपाग्न्यधीयान॥**

(प्रदीपः) अनव्ययीभावस्येति। प्रतिषेधप्रतिषेधाद्विधिर्भवति। एतच्च *लुङ्मुखस्वरोपचाराः प्रयोजनम्* इत्येतदनपेक्ष्योक्तं भाष्यकारेण। अन्यथा कार्यान्तरेऽव्ययत्वाभावादवक्तव्यमेतत्स्यात्॥

## (स्वरेऽवधारणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ किमर्थं स्वरेवधारणं क्रियते?॥**

(१२३० समाधानवार्तिकम्॥ ८॥)

## ॥ * ॥ स्वरेवधारणं सुबलोपार्थम् ॥ * ॥

(व्याख्याभाष्यम्)

**स्वरेवधारणं क्रियते सुपो लोपो मा भूदिति। परशुना वृश्चन्॥**

(प्रदीपः) परशुना वृश्चन्निति। वृश्चन्निति प्रातिपदिकम्। न चाप्रत्यय इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञानिषेधो, न ङिसंबुद्ध्योरिति नलोपप्रतिषेधाज्ज्ञापकात्। तत्रासति स्वरग्रहणे पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् सुपो धातुप्रातिपदिकयोरिति सुपो लुक् प्रसज्येत। स्वरग्रहणे तु सति सुब्लुकि कर्तव्ये पराङ्गवद्भावाभावः॥

(१२३१ समाधानानर्थक्यवार्तिकम्॥ ९॥)

## ॥ * ॥ न वा सुबन्तैकान्तत्वात् ॥ * ॥

(व्याख्याभाष्यम्)

**न वा कर्तव्यम्। किं कारणम्?। सुबन्तैकान्तत्वात्। सुबन्तैकान्तः पराङ्गवद्भावो भवति॥**

(प्रदीपः) सुबन्तैकान्त इति। पराङ्गवद्भावविषयत्वात्पराङ्गवद्भाव उच्यते। पराङ्गवदित्यत्र आमन्त्रितं संनिधानात्परशब्देन गृह्यते। तच्च सुबन्तमेवेति सुबन्तकार्य एव पराङ्गवद्भावोन्तरङ्गत्वान्न तु प्रातिपदिककार्य इत्यर्थः॥

(उद्योतः) पराङ्गवद्भावविषयत्वादिति। अन्यथा सुबन्तैकान्त इत्यनेनानन्वयापत्तिरिति भावः। पराङ्गवत् भावो यस्य स पूर्वशब्दस्तेनोच्यत इति कश्चित्॥ अन्तरङ्गत्वादिति। सूत्रस्थपरशब्देन वाच्यवृत्त्योपस्थानादित्यर्थः॥

(१२३२ आनर्थक्यबाधकवार्तिकम्॥ १०॥)

## ॥ * ॥ प्रातिपदिकैकान्तस्तु सुब्लोपे ॥ * ॥

(व्याख्याभाष्यम्)

**प्रातिपदिकैकान्तस्तु भवति सुब्लोपे कृते॥**

(प्रदीपः) प्रातिपदिकैकान्त इति। अस्याभिप्रायः—आमन्त्रिते परतो यत्सुबन्तं तत्पराङ्गवद्भवति। परं चात्र सुब्लोपे कृते प्रातिपदिकमेवेति तदङ्गत्वात्सुब्लोपः प्राप्नोत्येव॥

---

१ अत्र 'सुब्ग्रहणे' इति संबध्यते। (र. ना.) २ एतदादि 'भाष्ये स्वरेवधारणाचेति' इत्यन्तस्यैकसंदर्भत्वं दर्शयन् Bengal Asiatic Society मुद्रितपुस्तकशोधकस्त्वत्र किमपि न विचारितवान्। ३ अभिमानोक्तिबीजन्तु गुणानाञ्च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायेन षष्ठीस्थाने इत्यस्य तस्मिन्निति निर्दिष्टे पूर्वस्य, तस्मादित्युत्तरस्येत्यादावप्रवृत्तिरिति। (र. ना.) ४ इयं सत्सप्तमी। (र. ना.) ५ अव्युत्पत्तिपक्षे फिट्स्वरेण व्युत्पत्तिपक्षे प्रत्ययस्वरेणेत्यर्थः। (र. ना.) ६ 'मेव स्यात्'। ७ परशुनेत्यादेरामन्त्रितात्परत्वेऽपि शेषः। (र. ना.) ८ 'सुब्लोपे न कृते'।

(उद्योतः) प्रातिपदिकमेवेति । एवोप्यर्थे । परस्मिन्प्रातिपदिकत्वस्यापि सत्त्वेन तदवयवत्वस्याप्यापत्तिरिति भावः ॥

(आनर्थक्यसाधकभाष्यम्)

**प्रत्ययलक्षणेन सुबन्तैकान्तता स्यात् । तस्मात्स्वरेवधारणं न कर्तव्यं सुबलोपार्थं, प्रातिपदिकस्थायाः सुपो लुगुच्यते । तस्मात्स्वरग्रहणेन नार्थः ॥**

(प्रदीपः) **प्रत्ययलक्षणेनेति** । प्रत्ययो निमित्तं लक्षणं यस्यामन्त्रितव्यपदेशस्य तेन सुबन्तैकान्तत्वमित्यर्थः । विशेषणत्वेनाप्युपात्तमामन्त्रितं प्रत्यासत्त्या परशब्देन संबध्यत इति सुबन्ताङ्गवद्भावो विधीयते न तु प्रातिपदिकाङ्गवद्भाव इत्यर्थः ॥ **प्रातिपदिकस्थाया इति** । भाष्यकारवचनप्रामाण्यात् सुप्शब्दस्य स्त्रीलिङ्गत्वम् ॥

(उद्योतः) प्रत्ययलक्षणेन सुबन्तत्वे स्वतः प्रातिपदिकत्वेन तदवयवत्वमपि स्यादत आह—**प्रत्ययो निमित्तमिति** ॥ **तेन सुबन्तैकान्तत्वमिति** । अत्र प्रातिपदिकत्वस्य वस्तुगत्या सत्त्वेपि सूत्रेनुद्देश्यत्वान्न तदतिदेशेन तदवयवत्वव्यवहार इति भावः ॥ **विशेषणत्वेनापीति** । पराङ्गवद्भावस्येत्यर्थः ॥ **संबध्यते इति** । वाच्यतया[1] गृह्यत इत्यर्थः । न च **सुद्दतिथोरि**त्यादौ तथयोर्विहितस्य सुटः प्रत्ययावयवत्ववत्प्रकृतेपि प्रातिपदिकावयवत्वमिति वाच्यम् । अवयवावयवाङ्गुल्यादौ शरीरावयवत्वस्य लोकसिद्धत्वादुपपत्तेः । प्रकृते तु प्रातिपदिकावयवकसुबन्तावयवो न तदवयवो[2] भवति । नहि हस्तावयवकशरीरावयवोङ्घ्रिर्हस्तावयव इति भावः ॥ **भाष्यकारेति** । सुप इत्यस्य विभक्तिर्यदा विशेष्यं तदा न्यायत एव स्त्रीत्वमिति कश्चित् । औङः श्यामित्यादौ नित्यस्त्रीत्वेन नदीत्वाय स्वतः स्त्रीलिङ्गत्वस्यैव न्याय्यत्वात् ॥

(प्रयोजनान्तरभाष्यम्)

**इदं तर्हि प्रयोजनम्—षत्वणत्वे मा भूतामिति । कूपे सिञ्चन् । चर्म नमन्निति ॥**

(प्रदीपः) **कूपे सिञ्चन्निति** । पराङ्गवद्भावे सत्यैकपद्यात्सकारस्य पदादित्वाभावात् षत्वप्रसङ्गः ॥ **चर्म नमन्निति** । सति पराङ्गवद्भावे समानपदत्वाण्णत्वं स्यात् ॥

(उद्योतः) **समानपदत्वादिति** । अतिदेशेन परावयवतया विशिष्टस्याखण्डत्वे बोधिते स्वाश्रयस्य सखण्डत्वस्यातिदिश्यमानधर्मविरुद्धतया तत्प्रयुक्तणत्वप्रतिबन्धाभाव इति भावः ॥

(प्रयोजननिरासभाष्यम्)

**एतदपि नास्ति प्रयोजनम् । इह तावत्कूपे सिञ्चन्निति, स्वाश्रयं पदादित्वं भविष्यति ॥**

(प्रदीपः) **स्वाश्रयमिति** । विरोधाभावादतिदेशेन स्वाश्रयं पदादित्वं न बाध्यते । यच्चेहामन्त्रितस्य कार्यं शब्देन बोध्यते तत्पूर्वस्य पराङ्गवद्भावात्तत्सहितस्य भवतु, सकारस्य यत् स्वाश्रयं पदादित्वं तत्केन व्याहन्यते । न चात्रातिदेशिकं कार्यमस्तीति स्वाश्रयं भवत्येव । यथा नमते दण्डः स्वयमेवेत्यत्र शप् ॥

(उद्योतः) नन्वस्य उक्तरीत्या विरोधोस्त्येवेत्यत आह—**यच्चेहेति** । पूर्वस्य पराङ्गवद्भावोक्तेस्तेन पूर्वस्मिन् परप्रयुक्तकार्यप्रवृत्त्या पूर्वनिष्ठस्वाश्रयनिवृत्तावपि परस्मिन् पूर्वनिष्ठकार्यप्रवृत्तौ परनिष्ठस्वाश्रयनिवृत्तौ च मानाभावादिति भावः ॥ किं चामन्त्रिते परे पूर्व प्रत्यासत्त्या आमन्त्रितरूपपराङ्गवत् कार्यभागिति उक्ते आमन्त्रितत्ववैकल्यप्रयुक्ताप्राप्तकार्यातिदेश[3] एव लभ्यते न षत्वणत्वयोस्तद् ध्वनयन्नाह—**शब्देनेति** । आमन्त्रितशब्देनेत्यर्थः ॥ **यथा नमत इति** । अन्तर्भावितण्यर्थोत्र नमिः । नदुहेति कर्मवत्त्वाश्रययकि प्रतिषिद्धे कर्त्राश्रयः शप् तत्र निषेधादतिदेशाश्रयाप्रवृत्तिः[4] । इह तु अतिदेशस्याप्रवृत्तिरेवेति यथाकथंचित् दृष्टान्ततेति बोध्यम् ॥[5]

(प्रयोजननिराकरणैकदेशिभाष्यम्)

**चर्म नमन्निति "पूर्वपदात्संज्ञायामग" इत्येतस्मान्नियमान्न भविष्यति ॥**

(प्रदीपः) **पूर्वपदात्संज्ञायामिति** । पराङ्गवद्भावात् सत्यपि निमित्तनिमित्तिनोः समानपदस्थत्वे **पूर्वपदात्संज्ञायामिति** नियमादत्रासंज्ञायां णत्वं न भविष्यतीत्यर्थः ॥

(उद्योतः) यद्यप्यनेन णत्वमपि परिहृतं तथापि प्रकारान्तरेणापि समाधातुमेकदेश्याह—भाष्ये—**चर्म नमन्निति** । तद् ध्वनयन्नाह—**सत्यपि निमित्तेत्यादि** ॥ **नियमादत्रेति** । यद्यपि विध्यर्थत्वमेवाष्टमे स्थापयिष्यति तथापि योगविभागेनात्र नियमोपपत्तिरित्यभिमानः[6] ॥

(निराकरणबाधकभाष्यम्)

**ननु च समास एवैतद्भवति पूर्वपदमुत्तरपदमिति ॥**

(प्रदीपः) **ननु चेति** । पूर्वपदशब्दस्य समासावयव एव रूढत्वादिति भावः ॥

(उद्योतः) **समासावयव एवेति** । एवं च नियमेन वाक्यव्यावृत्तिः कर्तुमशक्येति भावः ॥

(निराकरणसाधकैकदेशिभाष्यम्)

**नेत्याह । अविशेषेणैव[7] तद्भवति—पूर्वं पदं पूर्वपदम् । उत्तरं पदमुत्तरपदम् ॥ सुबामन्त्रिते ॥ २ ॥**

(प्रदीपः) **अविशेषेणेति** । व्याप्तिन्यायाश्रयादत्र यौगिकः पूर्वपदशब्दो गृह्यत इत्यर्थः ॥ एवं स्वरग्रहणे प्रत्याख्याते समानाधिकरणस्योपसंख्यानं न कर्तव्यम् । परस्य पराङ्गवद्भावे कृतेपि विषयभेदाल्लक्षणस्यावर्तनात्[8] पूर्वस्य पराङ्गवद्भावस्य सिद्धत्वात् ॥ २ ॥

(उद्योतः) भाष्ये—**अविशेषेणेति** एकदेश्युक्तिः, अष्टमे रूढयोरेवानयोर्ग्रहणस्य सिद्धान्तयिष्यमाणत्वात्, अखण्डपदस्यैव तत्र

---

१ तथाच एकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणतयांऽन्वयायोग इति न्यायानवकाशः । भिन्नशब्दोपस्थापितत्वादिति भावः । (र. ना.) २ प्रातिपदिकावयव इत्यर्थः । (र. ना.) ३ 'त्रितत्वे' । ४ 'निषेधादित्यतिदे' इत्येवमितिशब्दघटितपाठं वाराणसीमुद्रितमेव मुद्रयन् Bengal Asiatic Society मुद्रितपुस्तकशोधकस्तु 'इति' शब्दप्रयोजनं किं विचारितवानिति स एव प्रष्टव्यः । ५ कर्मवत्त्वातिदेशमूलकस्य यकोऽप्रवृत्तिरित्यर्थः । (र. ना.) ६ अभिमानोक्तिस्तु नियमस्य स्वार्थहान्यादिदोषत्रयग्रस्तत्वेनानुचितत्वमिति । (र. ना.) ७ 'ऐतद्भवति' । ८ आवृत्तेरित्यर्थः । (र. ना.)

समानपदेन ग्रहणाच्च । उक्तयुक्त्यैव तु णत्ववारणं बोध्यम् ॥ एवं च स्वरग्रहणमपि व्यर्थमिति बोध्यम् ॥ २ ॥

(समाससंज्ञाप्रकरणम्)

(२२३ अधिकारसूत्रम् ॥ २ । १ । २ आ. २ सू.)

## ३५२ प्राक्कडारात्समासः ॥ २ । १ । ३ ॥

(प्राग्ग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**प्राग्वचनं किमर्थम्?॥**

(प्रदीपः) प्राक्कडारात् ॥ ३ ॥ प्राग्वचनमिति । अत्रावधित्वद्योतनेनाक्षेपद्वारेणावधेरप्याक्षेपः । समास इत्येव स्वरितत्वादधिकारोस्तु यथा प्रत्यय इति । अनवकाशत्वाच्च समाससंज्ञायाः संज्ञान्तरैः समावेशो भविष्यतीति प्रश्नः ॥

(उद्योतः) प्राक्क ॥ ३ ॥ अवधित्वद्योतनेन ॥ अत्र करणे ल्युट् कर्तुः करणत्वविवक्षया बोध्यः । द्योतकाक्षेपेत्यर्थः ॥

(१२३३ समाधानवार्तिकम् ॥ १ ॥)

### ॥ * ॥ प्राग्वचनं समाससंज्ञाऽनिवृत्त्यर्थम् ॥ * ॥

(व्याख्याभाष्यम्)

**प्राग्वचनं क्रियते समाससंज्ञाया अनिवृत्तिर्यथा स्यात् । अक्रियमाणे प्राग्वचने अनवकाशा अव्ययीभावादयः संज्ञाः समाससंज्ञां बाधेरन्, ता मा बाधिषतेति प्राग्वचनं क्रियते ॥**

(प्रदीपः) संज्ञाऽनिवृत्त्यर्थमिति । समाससंज्ञायाः संज्ञान्तरविषये अनिवृत्तिर्यथा स्यादित्यर्थः । अन्यथा एकसंज्ञाधिकारात् पर्यायः स्यात् ॥

(उद्योतः) पर्यायः स्यादिति । अधिकारलब्धसमाससंज्ञाया अनवकाशत्वादित्याशयः ॥ अनेन अग्रिमग्रन्थ एकदेशिनोक्तिरिति सूचितम् ॥

(एकदेशिन आक्षेपभाष्यम्)

**अथ क्रियमाणेपि प्राग्वचने यावता अनवकाशा अव्ययीभावादिसंज्ञाः कस्मादेव न बाधन्ते?॥**

(एकदेशिनः समाधानभाष्यम्)

**क्रियमाणे हि प्राग्वचने सत्यां समाससंज्ञायामेता अवयवसंज्ञा आरभ्यन्ते । तत्र वचनात्समावेशो भविष्यति ॥**

(प्रदीपः) सत्यां समाससंज्ञायामिति । स्वरितत्वादेवाधिकारे लब्धे प्राक्कडारादित्युपादानसामर्थ्यात् प्राग्ग्रहणमावर्तते । तेन प्राक् समाससंज्ञका भवन्ति, समासाः सन्तोऽव्ययीभावादिसंज्ञका इति समावेशः सिध्यति ॥ अवयवसंज्ञा इति । समाससमूहापेक्षया कस्यचित् समासस्य काचित् संज्ञेत्येवमुक्तम् ॥

(उद्योतः) भाष्ये—सत्यां समाससंज्ञायामिति । प्राक्पदोपादानेऽस्याधिकारताया एव तत्सामर्थ्येन वक्तव्यतया तत्साहित्येनासां विधानाद्वचनात्समावेशः ॥ नन्वेवमपि पर्यायः प्राप्नोति कथं समावेश इति चेत्तत्राह—स्वरितत्वादेवेति । प्रत्यय इत्यादिवत् । अन्यथा 'समासः सह सुपा' इत्येकमेव पठेदिति भावः॥

(समाधानबाधकभाष्यम्)

**समाससंज्ञाप्यनवकाशा । सा वचनाद्भविष्यति॥**

(प्रदीपः) समाससंज्ञापीति । ततश्चान्तरेणापि यत्नं समावेशः सिध्यति ॥

(उद्योतः) अधुनाधिकारत्वाभावेपि समावेशं शङ्कते—समाससंज्ञापीति । प्राग्ग्रहणाभावे 'समासः सह सुपा' इत्येव सर्वत्र समाससंज्ञाविधिः सह सुपेत्यंशस्य च स्वरितत्वप्रतिज्ञानादुत्तरत्र संबन्धोपि । अव्ययीभावादिसंज्ञाविनिर्मुक्तसमासस्य चाभाव इत्यभिमानः । अत एव विस्पष्टपट्वादयोऽवकाशा इत्यग्रिमभाष्यं संगच्छते । स ह्यव्ययीभावादिसंज्ञाविनिर्मुक्तो विषय इति भावः ॥

(समाधानसाधकभाष्यम्)

**सावकाशा समाससंज्ञा ॥ कोवकाशः? । विस्पष्टादीन्यवकाशः । विस्पष्टं पटुः विस्पष्टपटुः । व्यक्तं पटुः व्यक्तपटुः ॥**

(प्रदीपः) विस्पष्टपटुरिति । विस्पष्टं पटुरिति विग्रहः । विस्पष्टादयः प्रवृत्तिनिमित्तस्य पाटवादेर्विशेषणानि न तु द्रव्यस्येति विस्पष्टमिति नपुंसकत्वम् । अत एव मुख्यं सामानाधिकरण्यं नास्तीति तत्पुरुषाभावः । यथा शेष इत्येतल्लक्षणमधिकारश्च, तथा सह सुपेत्यपीति समाससंज्ञा प्रवर्तते ॥

(उद्योतः) मुख्यं सामानाधिकरण्यं नास्तीति ॥ विशेषणं विशेष्येणेत्यत्रोभयोपादानसामर्थ्येन शब्दजन्यबोधविशेष्ययोर्यत्र विशेषणविशेष्यभावस्तत्रैव तत्प्रवृत्तेरिति भावः । क्वचिदेकदेशान्वयोपि व्युत्पत्तिवैचित्र्यादिति तात्पर्यम् ॥

(समाधानबाधकभाष्यम्)

**नैषोवकाशः । एषा ह्याचार्यस्य शैली लक्ष्यते—येनैवावयवकार्यं भवति तेनैव समुदायकार्यमपि भवतीति । येनैव चात्रावयवकार्यं स्वरः क्रियते, तेनैव समुदायकार्यं समासोपि भविष्यति—"विस्पष्टादीनि गुणवचनेषु" इति ॥**

---

१ करणल्युडन्तद्योतनशब्दस्वीकारेण अवधित्वबोधकप्राक्शब्दस्याक्षेपद्वारेणेत्यर्थः । (र. ना.) २ 'द्योतका' । ३ यत इत्यर्थः । जहदजहल्लक्षणास्वीकारेण वत्यर्थस्याविवक्षया येन हेतुनेत्यर्थस्वीकारात् । (र. ना.) ४ 'यां ता अव' । ५ अधिकारमात्रत्वे इत्यर्थः । (र. ना.) ६ अत्रापि वाराणसीमुद्रित एव 'समासः । सहसुपेत्येव' पाठः पृथक्कृतिचिह्नभूषितो मुद्रितः Bengal Asiatic Society पुस्तकेपि । ७ अनुपदवक्ष्यमाणभाष्ये तु 'विस्पष्टादीन्यवकाशः' इत्येवमेवोपलभ्यते । ८ 'स्वरस्तैव' ।

( प्रदीपः ) अवकाशं निराकर्तुमाह—एषा हीति । शीले स्वभावे भवा वृत्तिः शैली । अवयवकार्यमिह पूर्वपदप्रकृतिस्वरः। समुदायकार्यं समाससंज्ञा। वृद्धकुमारीवरन्यायेनान्तरेणापि सहसुपेत्येतस्य लक्षणत्वं सिध्यति ॥

( उद्द्योतः ) अवयवकार्यमिति । समासविशेषप्रयुक्तः स्वर इत्यर्थः ॥ अन्तरेणापीति । समासाधिकारे स्वरविधानादिति भावः ॥

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि—काकतालीयमजाकृपाणीयम् ॥**

( प्रदीपः ) काकतालीयमिति । समासाच्च तद्विषयादिति भूतसमासानुवादेन च्छविधानाद्, विशेषलक्षणाभावाच्च, इवार्थस्यान्यपदार्थत्वेपि मत्वर्थे बहुव्रीहिविधानाद्, उपमानशब्दस्योपमेयवृत्तित्वादन्यपदार्थाभावाद्वा बहुव्रीहेरभावात् सहसुपेत्यनेनैवात्र समासः कार्यः । तत्र काकतालशब्दौ द्रव्यसहचरितायां क्रियायां वर्तेते । काकस्यागमनमिव चैत्रस्यागमनं तालस्य पतनमिवदस्योरुपनिपात इत्येक इवार्थः । तत्र समासः । ततस्तेन तालेन पतता यथा काकस्य वधस्तथा दस्युना चैत्रस्येति द्वितीय इवार्थः । तत्र च च्छप्रत्ययः ॥

( उद्द्योतः ) भूतसमासेति ॥ सिद्धसमासेत्यर्थः । इवार्थस्येति । इवद्योत्योपमानत्वनिरूपकोपमेयरूपार्थस्य समासवाच्यस्येत्यर्थः । तद्वक्ष्यति—उपमानशब्दस्योपमेयवृत्तित्वादिति ॥

( प्रयोजननिरासभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । अत्रापि येनैवावयवकार्यं प्रत्ययोत्पत्तिः क्रियते, तेनैव समुदायकार्यं समाससंज्ञा भविष्यति "समासाच्च तद्विषयाद्" इति ॥**

( प्रदीपः ) अत्रापीति । पूर्ववज्ज्ञापनेन समाससिद्धिः ॥

( उद्द्योतः ) भाष्ये—येनैवावयवकार्यमिति । कर्मधारयः । काकतालीयमित्यत्रावयवरूपच्छप्रत्ययाख्यं कार्यमित्यर्थः । तत्र काकतालेत्यादि पञ्चमे व्याख्यास्यते ॥

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि—पुनाराजः पुनर्गवः ॥**

( प्रदीपः ) पुनाराज इति । अँजिति योगविभागेन तत्पुरुषसंज्ञां विना रूपसिद्धिं मन्यते ॥

( प्रयोजननिरासभाष्यम् )

**अत्राप्यवश्यं तत्पुरुषसंज्ञा वक्तव्या । तत्पुरुषाश्रयः समासान्तो यथा स्यात् ॥**

( प्रदीपः ) तत्पुरुषाश्रय इति । पुनर्गवीतिङीबर्थष्टजेवेष्टव्यः । तत्राव्ययप्रवृद्धादिभिरिति वा मयूरव्यंसकादित्वाद्वा तत्पुरुषः ॥

( उद्द्योतः ) ङीबर्थ इति । पुनाराज इत्यत्रापि योगविभागस्य भाष्यानुक्तत्वेनाप्रमाणतया टजेष्टव्य इति बोध्यम् । पुनर्गवः पुनाराज इत्युपात्तोदाहरणमादायैव भाष्यप्रवृत्तिरिदं चिन्त्यम् ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि—पुनराधेयम् ॥**

( प्रदीपः ) पुनराधेयमिति । विशेषकार्यादर्शनात् समाससंज्ञामेव मन्यते ॥

( प्रयोजननिराकरणभाष्यम् )

**अत्राप्यवश्यं गतिसंज्ञा वक्तव्या "गतिकारकोपपदात्कृद्" इत्येष स्वरो यथा स्यात् ॥**

( प्रदीपः ) अत्रापीति । ततश्च कुगतिप्रादय इति तत्पुरुषः । तत्र यतो नाव इति धेयशब्दस्याद्युदात्तत्वात् पुनराधेयशब्दैकार उदात्तः । गतिसंज्ञायास्त्वभावे समासान्तोदात्तत्वं स्यात् ॥

( उद्द्योतः ) एकार उदात्त इति । कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि—पुनरुत्स्यूतं वासो देयम् ॥**

( प्रदीपः ) पुनरुत्स्यूतमिति । पुनःशब्दस्य गतिसंज्ञायां सत्यां थाथेत्यन्तोदात्तत्वेन भाव्यम् । असत्यां तु समासान्तोदात्तत्वेनेति विशेषाभावाद् गतिसंज्ञाया अभावात् समाससंज्ञाया एव भावं मन्यते ॥

( प्रयोजननिरासभाष्यम् )

**अत्राप्यवश्यं गतिसंज्ञा वक्तव्या "गतिर्गतौ" इति निघातो यथा स्यात् । यदि तत्रास्ति "*पुनश्चनसौ छन्दसि*" इति ॥ सति तस्मिंस्तेनैव सिद्धम् ॥**

( प्रदीपः ) अत्रापीति । असत्यां गतिसंज्ञायां समासान्तोदात्तत्वं स्यात्, सत्यां तु गतिरनन्तर इत्यत्रानन्तरग्रहणसामर्थ्यात् थाथादिस्वरं बाधित्वोच्छन्दस्य प्रकृतिस्वर उदात्तो भवति । पुनःशब्दस्य तु शेषनिघातं परत्वाद् बाधित्वा गतिर्गताविति निघातो भवति ॥ यदि तत्रास्तीति । छन्दसि स्वरव्यत्ययविधानान्नावश्यं कर्तव्यमिति भावः ॥ भाषायां तु पुनराधेयादौ स्वरसिद्धये पुनःशब्दस्य गतिसंज्ञा वक्तव्या । काठके तु पुनरुत्स्यूतशब्दोन्तोदात्तः पठ्यते । तत्र स्वरव्यत्ययो बोद्धव्यः प्रवृद्धादेराकृतिगणत्वाद्वा ॥

( उद्द्योतः ) निघातं परत्वाद्बाधित्वेति । एवं च भाष्यस्य निष्फलतापत्तिः, शेषनिघातेनैव तत्फलसिद्धेरिति चिन्त्यम् । गतिर्गताविति निघातो यथा स्यादिति भाष्ये । यद्यप्युच्छन्दस्य प्रकृतिस्वरे प्रवृद्धादित्वादन्तोदात्तत्वे वा शेषनिघातेनापि गतिश्चेति सूत्रस्थकैयटोक्तरीत्या अन्त्यकैयटरीत्या च पुनःशब्देऽनुदात्तत्वं सिद्धमिति तत्फलसिद्धयेऽवश्यं गतिसंज्ञा वक्तव्येति वक्तुमनुचितम् । गतिश्चेति—

---

१ 'प्रवृत्तिः' । २ सहसुपेति शास्त्रमन्तरेणापि एतस्य विस्पष्टादीनीति पूर्वपदप्रकृतिस्वरविधायकशास्त्रस्य लक्षणत्वं समासविधायकत्वं वृद्धकुमारीवर न्यायेन सिद्ध्यति इति योजना । वृद्धकुमारीवरन्यायं मूल एव वक्ष्यति । अयं भावः । यथा एकेन वरेणैव वृद्धकुमार्या विवाहसंपत्त्यादेर्लाभस्तथा प्रकृते समासाधिकारे पूर्वपदप्रकृतिस्वरविधानेनैव विस्पष्टपटुरित्यादौ समाससंज्ञालाभ इति । ( र. ना. ) ३ पुना राजेति विग्रहे आवृत्तं यद्राजत्वं तद्वानित्यर्थः । विस्पष्टं पटुरित्यत्रेवैकदेशान्वयः । भवनक्रियाया आवृत्तत्वं तत्कर्तरि राजत्वे आरोप्य प्रयोगः । पुनर्गौरिति विग्रहे आवृत्तं यदारोप्यमाणं गोत्वं तद्वान् इत्यर्थः । आरोपक्रियाया आवृत्तत्वेन तत्प्रकारस्य गोत्वस्यापि तत्त्वं बोध्यम् । आरोपस्तु मानसी क्रियेति स्पष्टं शारीरकभाष्यादौ । अत्राप्येकदेशान्वयः पूर्ववत् । (र.ना.) ४ अचूप्रत्यन्ववपूर्वात्सामलोम्न इति सूत्रे इति बोध्यम् । (र. ना.) ५ "कुगतिः—" इति सूत्रस्थमिदं वार्तिकमिति बोध्यम् । ६ पुनर्गवीत्यस्यानभिधाने पुनर्गव इत्यादेः पूर्वोक्तरीत्याऽचैव सिद्ध्या "अवश्यं तत्पुरुषसंज्ञा वक्तव्या" इति भाष्योक्तेरनुपपत्त्या पुनर्गवीत्यस्यापि अभिधाने भाष्यतात्पर्यं कल्प्यते इति चिन्त्यत्वोक्तिरेव चिन्त्या । ( र. ना. ) ७ "पुनश्चनसौ छन्दसि" इति गतिसंज्ञासूत्रस्थवार्तिकेनेति भावः । ८ तत्पुरुष इति शेषः । ( र. ना. ) ९ तस्मात् 'तथापि पुनरुत्स्यूतमित्यादौ असमासे पुनःशब्दस्य' इत्यादिनाऽग्रे मया वक्ष्यमाण एव भाष्याभिप्राय इति हृदयम् । ( र.ना. )

सूत्रे 'पुनरुत्स्यूतशब्दः प्रवृद्धादित्वादन्तोदात्तः' इत्युक्तम्, इह 'उच्छब्दस्य प्रकृतिस्वर' इत्युक्तम् । तथापि पुनरुत्स्यूतमित्यादौ असमासे पुनःशब्दस्य निघातरूपफलाय सावश्यं वाच्या, समस्तपुनरुत्स्यूतशब्दस्तु सुपेतिसूत्रेण समासादन्तोदात्त एवेति भाष्याभिप्रायः ॥ नच नित्यसमासत्वात्कथं वाक्यसंभव इति वाच्यम् । एतद्भाष्यप्रामाण्येन छान्दसत्वादेव समासे गतित्वाभावेन गतिसमासस्यात्राप्रवृत्तेः । अतं एवोत्तरसूत्रे सुपेत्यस्य लक्षणत्वेदमुदाहरणं वक्ष्यति भगवान् । अतं एव समासार्था गतीतिस्वरार्था वा गतिसंज्ञेति भाष्ये नोक्तम् ॥ छन्दसि पुनःशब्दस्य गतित्वेनैव सिद्धत्वेपि लोके पुनराधेयादौ समाससंज्ञा सावकाशा, तत्र गतिसंज्ञाभावेन गतिसमासाप्राप्तेरत आह—भाषायां त्विति । चिन्त्यमेतत् । पुनश्चनसौ छन्दसीति गतिसंज्ञाविधायकवार्तिकविरोधात्, लोके समस्तपुनराधेयशब्दानभिधानेन समासान्तोदात्तस्यैव तत्र स्वीकारेण वा भाष्योपपत्तेश्च । सति हि तस्मिंस्तेनैव सिद्धमित्यत्रत्यभाष्यस्वरसोप्येवमेवेति दिक् ॥

( प्रयोजनभाष्यम् )

**एवमप्येका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः । पर्यायः प्रसज्येत । तस्मात्प्राग्वचनं कर्तव्यम् ॥ प्राक्कडारात् ॥ ३ ॥**

( प्रदीपः ) ननु सहसुपेत्यत्र भाष्यकारो वक्ष्यति—**यस्य समासस्यान्यल्लक्षणं नास्ति इदं तस्य लक्षणं भविष्यतीति** । अत्र किमिति समाससंज्ञाया अवकाशो निराक्रियते ॥ एवं मन्यते । असंयुक्तविधानात् सर्वार्थत्वं समाससंज्ञाया न तु कतिपयविषयत्वम् । न्यायव्युत्पादनाय त्ववकाशनिराक्रिया ॥ ३ ॥

( उद्योतः ) एवं सहसुपेत्यस्य निरवकाशत्वे पूर्वपक्षिणा प्रतिपादिते तावतापि पर्याय एव प्राप्नोतीति न समावेश इत्याह—भाष्ये—**एवमप्येकासंज्ञेतीति** । तस्मात्प्राग्वचनं कर्तव्यमिति[5] सिद्धान्ताशयस्तु उक्त एव । एवं च किमित्यवकाशनिराक्रियेति शङ्का तत्समाधानं च कैयटोक्तमसंगतमेव । पूर्वपक्षिणोऽज्ञानस्यावश्यकत्वात् । तेनावकाशनिराकरणेपि सिद्धान्तिनोऽक्षतेः । अवकाशप्रदर्शनेन तद्खण्डनं तु समाधानान्तरसंभवादनादरेण । किंच ज्ञापकेन विस्पष्टपटुः काकतालीयमित्यादौ समासे परेणोक्ते तस्मादेव ज्ञापकादेतस्य सामान्येन विधायकतायामवकाश उक्तप्राय इति सुधियो विभावयन्तु ॥ **एवं मन्यतेऽसंयुक्तविधानादिति** । विपूर्वकधाञः करणे शक्तेः, **सहसुपेत्यनेन समास** इत्यस्यासंयुक्तकरणात्तत्संज्ञायाः सर्वार्थत्वं, न तु **सहसुपे**त्येतन्मात्रोदाहरणविषयत्वमित्यर्थः । एवं च तत्तद्विषयसमाससंज्ञाया अनवकाशत्वात्ताभिः समावेश इत्यभिमानः ॥ नन्वेवंविधनिर्दलविचारकरणं भाष्ये अनुचितमत आह—**न्यायव्युत्पादनायेति** ॥ ३ ॥

---

( २२४ केवलसमाससंज्ञासूत्रम् ॥ २।१।२ आ० ३ सू० )

## ३५३ सह सुपा ॥ २ । १ । ४ ॥

( सहवचनप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**सहवचनं किमर्थम् ?** ॥

( प्रदीपः ) सह ॥ ४ ॥ **वचनमिति** । सुपेति तृतीया सहार्थमाक्षिपति वृद्धो यूनेति यथेति प्रश्नः ॥

( १२३४ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सहवचनं पृथगसमासार्थम् ॥ * ॥**

( व्याख्याभाष्यम् )

**सहग्रहणं क्रियते सहभूतयोरेव समाससंज्ञा यथा स्याद् एकैकस्य समाससंज्ञा मा भूदिति ॥**

( प्रदीपः ) **एकैकस्येति** । यथा पुत्रेण सहागत इति द्वयोरपि पितापुत्रयोरागमनेन संबन्धः । एवं समाससंज्ञापि प्रत्येकं स्यात् । सहग्रहणे त्वेका समाससंज्ञा सहभूतयोर्भवति ॥

( उद्योतः ) सहसुपा ॥ ४ ॥ **सहग्रहणेत्विति** । तत्सामर्थ्यात्समास इत्येकत्वस्य विवक्षणाच्च सहभूतस्यैका संज्ञेति भावः ॥

( आक्षेपभाष्यम् )

**किंच स्यात्, यद्येकैकस्य समाससंज्ञा स्यात् ?** ॥

( प्रदीपः ) **किंच स्यादिति** । भवतु प्रत्येकं समाससंज्ञा, कार्ये दोषाभावात् । **कृत्तद्धितसमासाश्चे**त्यत्र सूत्रे समासश्च समासश्चेत्येकशेष आश्रयिष्यते, वाक्यस्य प्रातिपदिकसंज्ञानिवृत्त्यर्थम् । अन्यथा प्रत्ययान्तत्वादेकैकस्य समासस्य विध्यर्थं समासग्रहणं स्यात् । एकशेषे तु समाससमूहस्य संज्ञाविधिर्नियमार्थो भविष्यतीति न कश्चिद्दोषो भवति । **समासाच्च तद्विषयादि**त्यत्र प्रातिपदिकाधिकारात् समाससमूहस्य च प्रातिपदिकत्वात् **समासा**दित्येकवचनं न विवक्ष्यते अनभिधानाद्वा एकैकस्माच्छप्रत्ययो न भविष्यतीति भावः ॥

(उद्योतः) ननु यद्यपि प्रत्येकं समासत्वे प्रत्ययान्तत्वात्प्रत्येकं न प्रातिपदिकत्वं तथापि समासस्य समुदायानात्मकतया समासग्रहणस्य वाक्यनिवर्तकनियमार्थत्वं नोपपद्यते किंतु विध्यर्थत्वमेव स्यादत आह—**कृत्तद्धितेति** । **एकशेषेत्विति** । समुदायस्यैकार्थीभावेनार्थवत्त्वात्प्राप्तौ नियमार्थं तदिति भावः ॥ काकतालीयमित्यादौ प्रत्येकं छप्रत्ययोत्पत्तिरपि दोषो नेत्याह—**समासाच्चेति** ॥ ननु समुदाये समासत्वाभावोत आह—**प्रातिपदिकत्वादिति** । तत्सामर्थ्यात्समासपदं तत्समूहपरमिति भावः ॥ **एकत्वं न विवक्ष्यत इति** । प्रातिपदिकादित्यनेनान्वयादिति भावः ॥ ननु तद्विरोधात् प्रातिपदिकादित्यस्यासंबन्ध एव स्यादत आह—**अनभिधानाद्वेति** । एवं च लक्ष्यानुरोधादेव समासपदं तत्समूहपरमिति भावः ॥

---

१ पुनरुत्स्यूतमित्यत्र गतिसमासस्य भाष्यानभिप्रेतत्वादेवेत्यर्थः । ( र. ना. ) २ पुनरुत्स्यूतमित्यत्रासमासे पुनःशब्दे निघातरूपफलस्य प्रकृतभाष्याभिप्रेतत्वादेवेत्यर्थः । ( र. ना. ) ३ 'वक्तव्यम्' । ४ 'तत्र' । ५ एतद्रूपसिद्धान्तग्रन्थाशयस्तु एतत्सूत्रोद्योतारम्भे 'अधिकारलब्धसमाससंज्ञाया अनवकाशत्वा'दित्यादिना उक्त एवेत्यर्थः । ( र. ना. ) ६ वाराणसीमुद्रितानुकारि Bengal Asiatic Society मुद्रितपुस्तके 'तत्खण्डनं' इति पाठस्तु न रमणीयः । ७ अभिमानोक्तिवीजन्तु असंयुक्तकरणेनानवकाशत्वोपपादनेऽपि वचनद्वयप्रामाण्यात्पर्यायः स्यान्न तु समावेश इति । ( र. ना. )

(समाधानभाष्यम्)

**इह ऋक्पाद इति समासान्तः प्रसज्येत । इह राजाश्व इति द्वौ स्वरौ स्याताम् ।**

(प्रदीपः) **ऋक्पाद इति ।** ऋचपाद इति स्यात् ॥ **राजाश्व इति ।** यद्यप्यत्र समासान्तः प्राप्नोति, तथापि रूपभेदाभावात् स्वरद्वयप्रसङ्गो दोष उक्तः । ऋक्पादेपि स्वरद्वयप्रसङ्गो बोद्धव्यः ॥

(आक्षेपभाष्यम्)

**कथं च कृत्वैकैकस्य समाससंज्ञा प्राप्नोति ? ॥**

(प्रदीपः) **कथं च कृत्वेति ।** एकार्थीभावे समासविधानात् समुदायस्य च विशिष्टार्थाभिधायित्वात्तस्यैव संस्कार्यत्वात्[1] प्राधान्यात्परतन्त्रत्वादवयवानामप्राधान्यात्समुदायस्यैव हि द्विर्वचनवत् समाससंज्ञा भविष्यति[2] अन्वर्थसंज्ञाविज्ञानाद्वेति भावः ॥

(उद्योतः) **समुदायस्यैवेति ।** अवयवेभ्यः समुदायोतिरिक्तोपीति भावः ॥ इदं चिन्त्यम्, सुबन्तं समर्थं समर्थेन सुबन्तेन सह समस्यत इत्यर्थेन प्रत्येकं तस्य तस्य च संज्ञालाभात्समुदाये संस्कार्यत्वस्य दुर्लभत्वात् । किं च समुदायद्विर्वचनदृष्टान्तोऽयुक्तः, वैषम्यात्, समुदायसंज्ञयावयवानामननुग्रहणात् ॥ **अन्वर्थसंज्ञाविज्ञानाद्वेतीति ।** वस्तुतः समसनं संक्षेप इत्यन्वर्थः । नचासावनेकस्यैव, एकस्यापि विस्तृतस्य संक्षेपदर्शनाद् । अतोन्वर्थत्वेन कथमेतदर्थलाभ इति चिन्त्यम् ॥ तस्माद् गर्गदण्डनन्यायसत्त्वात्कथमेकैकस्य प्राप्तिः । लक्ष्यानुसाराच्च तस्यैव न्यायस्याश्रयणमिति सिद्धान्तिन एव प्रश्नः ॥

(आक्षेपबाधकभाष्यम्)

**'प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा' इति । तद्यथा— वृद्धिगुणसंज्ञे प्रत्येकं भवतः ॥**

(प्रदीपः) इतरोऽगृहीताभिप्राय आह—**प्रत्येकमिति ।** एतच्च वृद्धिवार्तिके व्याख्यातं तत एवानुगन्तव्यम् ॥

(उद्योतः) इतरो लक्ष्यानुसारमज्ञात्वा न्यायमात्राश्रयणेन सहग्रहणमित्याह—प्रत्येकमिति ॥

(आक्षेपसाधकभाष्यम्)

**ननु चायमप्यस्ति दृष्टान्तः—'समुदाये वाक्यपरिसमाप्तिः' इति । तद्यथा—'गर्गाः शतं दण्ड्यन्ताम्' इति, अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते, इहापि सहग्रहणं कर्तव्यम् । अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः, इहापि नार्थः सहग्रहणेन ॥**

(प्रदीपः) **सत्येतस्मिन्निति ।** पक्षद्वये स्थिते सामर्थ्यात्कश्चित् क्वचित्पक्ष आश्रीयते । तत्र संयोगसंज्ञावत् समाससंज्ञा पूर्वोक्तेनैव न्यायेन समुदायस्य संभविष्यति । अथ न्यायद्योतनायेह सहग्रहणं क्रियते, वृद्धिगुणसंज्ञयोरपि प्रत्येकमिति वक्तव्यम् । अथ तत्र लक्ष्यदर्शनादिवशात्प्रत्येकं गुणवृद्धिसंज्ञे भवतः, तद्देहापि पूर्वोक्तात् सामर्थ्यात्समुदायस्य समाससंज्ञा भविष्यतीति नार्थः सहग्रहणेन ॥

(उद्योतः) **लक्ष्यदर्शनादीति ।** आदिना मालादीनां चेति ज्ञापकसंग्रहः । अत्रापि गर्गदण्डनन्यायाश्रयणे लक्ष्यदर्शनमेव हेतुरिति तत्त्वम् ॥

(समाधानभाष्यम्)

**एवं तर्हि सिद्धे सति यत्सहग्रहणं करोति—तस्यैतत्प्रयोजनम्—योगाङ्गं यथा विज्ञायेत, सति च योगाङ्गे योगविभागः करिष्यते—"सह"। सुप् समस्यते । केन सह ? । समर्थेन । अनुव्यचलद् अनुप्राविशत् ॥ ततः "सुपा" सुपा च सह सुप्समस्यते । अधिकारश्च लक्षणं च । यस्य समासस्यान्यल्लक्षणं नास्ति इदं तस्य लक्षणं भविष्यति । 'पुनरुत्स्यूतं वासो देयम्' 'पुनर्निष्कृतो रथः' ॥**

(प्रदीपः) **योगाङ्गमिति ।** योगावयव इत्यर्थः ॥ **केनेति ।** सुपा चेन्नार्थो योगविभागेनेति प्रश्नः ॥ **समर्थेनेति ।** योगविभागात्तिङन्तेन सह सुपः समासो भवति । योगविभागश्चेष्टप्रसिद्ध्यर्थं इति सर्वत्र समासो न भवति ॥ **अनुव्यचलदिति ।** सुविति संख्याया विवक्षितत्वात् पूर्वं वेः समासः पश्चादनोः । तत्र समाससंज्ञायां सत्यां शाकलप्रतिषेधाद्यणादेशो भवति[3] । समासान्तोदात्तत्वं न भवति, **तिङ्ङतिङ** इति निघातेन बाधितत्वादिति केचिदाहुः ॥ तत्रानोर्गतिर्गतावितिं निघातः, विशब्द उदात्तः । **उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्ये**त्यकारः स्वरितः । एवं त्वनुप्राविशदिति प्रयोजनाभावाद् भाष्यकारेण उदाहरणमवक्तव्यं स्यात् । तस्मात्प्रतिशिष्टत्वात् समासान्तोदात्तत्वेनात्र भाव्यमित्यपरे ॥ तिङैकत्वस्योक्तत्वात् प्रातिपदिकत्वेपि सुबनुत्पत्तिः ॥ अन्ये त्वाहुः—वचनग्रहणादुक्तेष्वप्येकत्वादिषु प्रथमा स्यात् । केवलायाश्च प्रकृतेः प्रयोगाभावाद्भवितव्यमत्र प्रथमैकवचनेन, तस्य तु हल्ङ्यादिलोपः क्रियते । अतएवैकपद्यादामनुप्राविशद्देवदत्तेत्याम **एकान्तरमामन्त्रित**मिति निघातप्रतिषेधः समाससंज्ञायाः प्रयोजनमस्त्येवेति तिङन्तनिघातवादिन आहुः ॥[4] **अधिकारश्चेति ।** देवदत्तः पचतीति विशेषणसमासनिवृत्त्यर्थोऽतिङ्ग्यादावुत्तरपदानुपादानादुत्तरपदोपस्थापनार्थश्चेति भावः ॥ **लक्षणं चेति ।** ननु सहेतियोगविभागेनैव समा-

---

१ इदं संस्कार्यत्वे हेतुः । परतन्त्रत्वादिति तु अप्राधान्ये । (र.ना.) २ 'भविष्यति' । ३ सिञ्चित्यसमासयोः शाकलप्रतिषेध इति वचनेनेत्यर्थः । (र. ना.) ४ 'एवं चा' इति नागेशेन व्याख्यातः । ५ सुपेत्यस्याधिकारत्वस्वीकारे तदुत्तरविध्युपपत्तये सर्वत्र उत्तरपदेनेति विशेष्यस्योपस्थितिः स्वीक्रियते । तथा च उपपदमतिङित्यत्र बाधात्सुपेत्यस्यानुपस्थितावपि उत्तरपदेनेत्यस्योपस्थितिर्भवत्येव, एवं च [illegible] उत्तरपदेन सह समस्यते इत्यर्थः संपद्यते इति भावः । (र.ना.)

सस्य सिद्धत्वात्सुपेत्यस्य लक्षणत्वे नास्ति प्रयोजनम् । नैष दोषः । योगविभागः कतिपयतिङन्तविषय एव । एतच्चास्मादेव भाष्याद्विज्ञायते ॥ **पुनरुत्स्यूतमिति** । पुनःशब्दस्यास्यामपि गतिसंज्ञायां **परादिश्छन्दसि बहुलमिति** उद आद्युदात्तत्वं समासान्तोदात्तत्वापवादो भविष्यतीति मन्यते । अथ वा काठकेन्तोदात्तः पठ्यते तदभिप्रायेण पुनःशब्दस्य गतित्वाभावादिदमुदाहरणम् ॥

( उद्द्योतः ) **योगावयव इति** । योगोत्राष्टाध्यायी[1] ॥ यद्यपि योगविभागाभावेपि अवयवावयवस्य समुदायावयवत्वन्यायेनाष्टाध्याय्यवयवत्वमस्त्येव तथापि साक्षादवयवत्वमेवात्र विवक्षितं, तच्च योगविभागमन्तरेण न संभवतीति बोध्यम् ॥ **संख्याया विवक्षितत्वादिति** । सुबन्तत्वादेः प्रत्येकसमाप्तत्वाच्चेत्यपि बोध्यम् ॥ अनुव्यचलदित्यत्र समाससंज्ञायाः फलं दर्शयति—**शाकलेति** । अन्यथा पक्षे यणोऽश्रवणमपि स्यात् इत्यर्थः ॥ स्वरस्तु न फलमित्याह—**समासान्तोदात्तत्वमिति** । केचिन्मतसिद्धस्वरं दर्शयति—**तत्रानोरिति** । केचिन्मतदूषणमाह—**एवं चेति** ॥ **अवक्तव्यमिति** । समासासमासयोः स्वरे रूपे चाविशेषादित्यर्थः । एकादेशस्य सर्वथोदात्तत्वादिति भावः । अनुव्यचलदित्यत्र नित्ययण श्रवणं विशेषः । अयं च नित्यसमास इति तात्पर्यम् ॥ **सतिशिष्टत्वादिति** । वाक्येपि निघातप्रवृत्तेस्तदुत्तरकालिकतया समासस्वरस्य सतिशिष्टत्वमित्यर्थः ॥ **तिङैकत्वस्येति** । सुपां यद्यपि स्वप्रकृ[2]त्यर्थविशेष्यगतसंख्याभिधायित्वमुत्सर्गस्तथापि ङ्याप्प्रातिपदिकादितिसूत्रस्थभाष्यप्रामाण्येन तिङापि क्रियागतायाः कर्त्रादिसंबन्धादारोपितत्[3]त्संख्याया एव भानमिति सिद्धान्ते इदम् ॥ **वचनग्रहणादिति** । प्रातिपदिकार्थसूत्रस्थात्संख्यार्थकादित्यर्थः ॥ **केवलायाश्चेति** । प्रातिपदिकसंज्ञासत्त्वेनास्यापि प्रकृतित्वमिति भावः ॥ **हल्ङ्यादिलोप इति** । योगविभागस्येष्टसिध्यर्थतया छन्दसि तद्वि[4]षये एवैतत्समासप्रवृत्तिरिति भावः ॥ एतेन[5] प्रकुर्वीरन्नित्यादौ समासे नलोपः स्यादित्यपास्तम् ॥ सुबुत्पत्तिस्वीकारे संमतिमाह—**अतएवेति** । अन्ये त्वित्यरुचिबीजं तु पचतिकल्पमित्यादावेवं सति बहुवचनादेरापत्तिः । तस्माद्वचनग्रहणेन संख्याप्रवृत्तिनिमित्तकानामेव ग्रहणं नत्वेवंविधानाम् । किंचैषामेकपद्ये प्रागुक्ते निघातप्रतिषेधे च न मानमिति ॥ **अतिङित्यादाविति** । तत्रातिङित्यस्यानवक्लृप्त्यमर्षयोरितिसूत्रस्थभाष्यप्रामाण्येन समासविशेषणतया **समर्थेनेत्यनेनै**वोत्तरपदोपस्थित्या त[6]त्र **सुपेत्यस्यानन्वयेन च** चिन्त्यमेतत् ॥ ननु पुनःशब्दस्य गतित्वात्कुगतीत्येव सिद्धम् । त[7]दभावे तु अनेन समासेपि तत्पुरुषत्वाभावात् **गतिरनन्तर** इति उच्छब्दस्य स्वरानापत्तिरत आह—**पुनःशब्दस्येति** । छन्दसि सर्वविधीनां वैकल्पिकत्वादिति भावः ॥ **मन्यत** इति सूचितामरुचिमाह—**काठकेन्तोदात्त इति** ॥

( न्यूनतापूर्त्यधिकरणम् )

( १२३५ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ॥ * ॥**

( व्याख्याभाष्यम् )

**इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । वाससीइव । कन्येइव ॥ सह सुपा ॥ ४ ॥**

( प्रदीपः ) **इवेनेति** । सुपेत्यस्य लक्षणत्वात् समासे सिद्धे कार्यान्तरविधानार्थं वचनम् ॥ **वाससीइवेति** । वासःशब्दो **वस्तेर्णित्** इत्यसुन्प्रत्ययान्तत्वादाद्युदात्तः । समासादुत्पन्नस्य सोरव्ययादिति लुक् ॥ **कन्ये इति** । **कन्याराजन्यमनुष्याणा**मिति फिट्सूत्रपाठात्कन्याशब्दोऽन्तस्वरितः ॥ ४ ॥

( उद्द्योतः ) अव्ययादिति लुगिति । तदन्तस्याप्यव्ययत्वादिति भावः ॥ ४ ॥

---

( अव्ययीभावसमासप्रकरणम् )

( २२५ अधिकरसूत्रम् ॥ २ । १ । २ आ. ४ सू. )

## ३५४ अव्ययीभावः ॥ २ । १ । ५ ॥

( महासंज्ञाप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थं महती संज्ञा क्रियते ? ॥**

( प्रदीपः ) **अव्ययी ॥ ५ ॥ किमर्थमिति** । लाघवार्थत्वात् संज्ञाकरणस्याल्पाक्षरा संज्ञा कर्तव्येति प्रश्नः ॥

( समाधानभाष्यम् )

**अन्वर्थसंज्ञा यथा विज्ञायेत—अनव्ययमव्ययं भवतीत्यव्ययीभावः । अव्ययीभावोव्ययसंज्ञो भवतीत्येतन्न वक्तव्यं भवति ॥ अव्ययीभावः ॥ ५ ॥**

( प्रदीपः ) **अन्वर्थसंज्ञेति** । बृहत्संज्ञाकरणेन किंचिद् अव्ययकार्यं प्राप्यते, अनव्ययमव्ययमिति अव्ययकार्यलाभादित्यर्थः ॥ **न वक्तव्यमिति** । तदकरणे * **लुङ्मुखस्वरोपचाराः प्रयोजन**मिति कथं परिगणनं क्रियत इति चेत् । इह तु क्रियतामन्वर्थत्वेन वा विशिष्टकार्यविषयमव्ययत्वमनुमास्यत इत्यदोषः । पूर्वपदार्थप्राधान्यं त्वव्ययीभावस्य प्रायिकं, न तदन्वर्थसंज्ञया सूच्यते । सूपप्रतीत्यादावुत्तरपदार्थस्य प्राधान्यम् । उन्मत्तगङ्गमित्यादावन्यपदार्थप्रधानता ॥ ५ ॥

( उद्द्योतः ) अव्ययीभावः ॥ ५ ॥ च्विप्रत्ययेन क्वचिदेव कार्येव्ययत्वारोपबोधनात्तत्कार्यलाभः ॥ **न तदन्वर्थेति** । शब्दतोऽलाभादिति भावः ॥ प्रायिकत्वमेव दर्शयति—**सूपेत्यादि** ॥ ५ ॥

---

१ युज्यन्ते विधयो यत्रेति व्युत्पत्त्येति भावः । ( र. ना. ) २ सुप्प्रकृत्यर्थरूपं यद्विशेष्यं तद्गतसंख्याभिधायित्वमित्यर्थः । विशेषणविभक्तेरनर्थकत्वादिति भावः । ( र. ना. ) ३ कर्त्रादिरूपपदार्थः । ( र. ना. ) ४ हल्ङ्यादिलोपविषये इत्यर्थः । ( र. ना. ) ५ योगविभागस्येष्टसिद्ध्यर्थत्वेनेत्यर्थः । ( र. ना. )

६ उपपदमतिङित्यत्रोत्तरपदेन सहेत्यर्थः । ( र. ना. ) ७ काशीमुद्रितपुस्तके 'तद्भावे' इति दृष्ट्वा न जाने कथं Bengal Asiatic Society पुस्तके 'सद्भावे' इति मुद्रितम् । ८ गतित्वाभावे इत्यर्थः । ( र. ना. )

(२२६ अव्ययीभावसमाससंज्ञासूत्रम् ॥ २।१।२ आ. ५ सू.)

## ३५५ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ २ । १ । ६ ॥

( अनिष्टवारणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति सुमद्राः सुमगधाः सपुत्रः सच्छात्र इति। समृद्धौ साकल्य इति च प्राप्नोति ? ॥**

( प्रदीपः ) अव्ययम् ॥६॥ इह कस्मादिति । समुदायस्य संस्कार्यत्वात् प्राधान्यात्तस्यैव[1] विभक्त्यादयो विशेषणानि । अस्ति चात्र समुदायात् समृद्धिसाकल्यप्रतिपत्तिरिति प्रश्नः ॥ सपुत्र इत्यत्र साकल्यं प्रतीयते । सपुत्रो भोक्तुमागत इति प्रयोगे पुत्रा अप्यनेनानीताः न कश्चित् परिशेषित इति संप्रत्ययात् ॥

(उद्योतः) अव्ययं वि ॥६॥ समुदायस्येति । गर्गदण्डेन[2]न्यायेन सुपा सहितमव्ययं विभक्त्यर्थादिषु वर्तमानमव्ययीभावसंज्ञकमिति वचनव्यक्त्ये[3]त्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । इह कश्चित्समासः पूर्वपदार्थप्रधानः । कश्चिदुत्तरपदार्थप्रधानः । कश्चिदन्यपदार्थप्रधानः । कश्चिदुभयपदार्थप्रधानः । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । न चात्र पूर्वपदार्थप्राधान्यं गम्यते ॥**

( प्रदीपः ) इह कश्चिदिति । बाहुल्याभिप्रायेणैतदुच्यते, क्वचिदन्यथापि दर्शनादर्धपिप्पलीत्यादौ ॥ अन्यतमप्राधान्यसंभवे अन्वर्थसंज्ञाविज्ञानात्—पूर्वपदार्थप्राधान्य एवाव्ययीभावसंज्ञा भवति । वचनसामर्थ्यात्तु पूर्वपदार्थप्राधान्यासंभवेपि सूपप्रति उन्मत्तगङ्गमित्यादौ प्रवर्तत एव ॥

( उद्योतः ) अन्वर्थसंज्ञाविज्ञानादिति । प्राचीनोक्तमहासंज्ञाकरणेन तत्संमतोर्थोप्यस्य संमत इति भावः ॥

( आक्षेपबाधकयुक्त्यन्तरभाष्यम् )

**अथ वा नेमे समासार्था निर्दिश्यन्ते ॥ किं तर्हि ? । अव्ययार्था इमे निर्दिश्यन्ते । एतेष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेन सह समस्यत इति ॥ अव्ययं विभक्ति० ॥ ६ ॥**

( प्रदीपः ) अथ वेति । अव्ययस्य श्रुतत्वादन्तरङ्गत्वात्तस्यैव विभक्त्यादयो विशेषणानि । तत्र यदोत्तरपदार्थावच्छिन्नाः समृद्ध्यादयः प्रतिपिपादयिषितास्तदा[5]ऽव्ययसमृद्ध्यादीनां वाचकमिति तेषां तदर्थता भवति ॥ समुद्रा इत्यत्र तु मद्रशब्द एव समृद्धिविशिष्टमर्थमाह, सुशब्दस्तु समृद्धिद्योतको न तु वाचकः॥ सपुत्र इत्यत्रापि सहशब्दस्तुल्ययोगस्य वाचकः न तु साकल्यस्य । तत्तु प्रकरणादिसहितात्समुदायात्प्रतीयते ॥ ६ ॥

( उद्योतः ) अव्ययस्य श्रुतत्वादिति । श्रुतत्वरूपान्तरङ्गत्वादित्यर्थः । सूत्रे श्रुतयोरेव प्रथमं संबन्धः पश्चात्प्रकरणलब्धेनेत्येव युक्त[6]मिति भावः ॥ प्रतिपिपादयिषिता इति । विशेष्यतयेति शेषः । तदुक्तमुत्तरपदार्थावच्छिन्ना इति । द्योतकत्वपक्षे तु द्योत्यार्थस्य समभिव्याहृतार्थविशेषणत्वमेवेति भावः ॥ तदाह—**समृद्ध्यादीनां वाचकमिति** । निपातानां द्योतकत्वं वाचकत्वं च । लक्ष्यानुरोधाच्च व्यवस्थेति भावः ॥ वाचक इति । पुत्रसहित इति सहार्थविशेष्यकबोधादिति भावः ॥ नतु साकल्यस्येति । सतृणमत्तीत्यादौ तु तुल्ययोगस्य बाधेन[7] झटिति प्रथममेव सकलमत्तीति बोधात् साकल्यबोधकता सहशब्दस्येति भावः ॥ अपदिशमित्यादीन्यखण्डान्येवाव्ययानि दिशोर्मध्यादिवाचकानीत्याशयेन भगवता योगविभागो नाकारि ॥ ६ ॥

---

( २२७ अव्ययीभावसंज्ञासूत्रम् ॥ २ । १ । २ आ. ६ सू. )

## ३५६ यथाऽसादृश्ये ॥ २ । १ । ७ ॥

( सूत्रे यथाशब्दस्याव्युत्पन्नस्यैव ग्रहणाधिकरणम् )

( आक्षेपभाष्यम् )

**असादृश्य इति किमर्थम् ? ॥**

( प्रदीपः ) यथा ॥ ७ ॥ असादृश्य इति किमर्थमिति ।

सापेक्षत्वादसामर्थ्यं वृत्तिः सादृश्य एव च ।
पूर्वप्राप्त्यनिषेधश्च[8] प्रश्नेऽस्मिन्[9] कारणत्रयम् ॥

( उद्योतः ) यथाऽसा ॥ ७ ॥ 'यथाशब्दः सुबन्तेन समस्यते, सादृश्ये द्योत्ये न' इति सूत्रार्थः।यथाशक्तीत्याद्युदाहरणम्। यथार्थत्वेन तु न सिद्धिः,सूत्रगृहीताव्ययेन तेन समासाभावात्। अतः पृच्छति— असादृश्य इति किमर्थमिति ॥ अत एव सूत्रं किमर्थमिति न

---

१ प्राधान्यम् । 'तस्यैव' । २ गर्गदण्डन'यायेन समुदायपर्याप्तैव विभक्त्यर्थादिवृत्तिता नत्वव्ययरूपावयवपर्याप्ता, समुदायस्यैव प्राधान्यादिति भावः । ( र. ना. ) ३ वाक्यार्थबोधेनेत्यर्थः । ( र. ना. ) ४ उत्तरपदार्थविशिष्टा इत्यर्थः । ( र. ना. ) ५ 'पिता भवन्ति तदा' । ६ प्रकरणापेक्षया श्रुतेर्बलवत्त्वस्य न्यायसिद्धस्य श्रुतिलिङ्गवाक्यप्रकरणेत्यादिमीमांसासूत्रेण बोधितत्वादिति भावः । (र.ना.) ७ तृणस्य बाधात्तृणसाहित्यस्यापि बाधेनेत्यर्थः । (र.ना.) ८ असादृश्ये इति किमर्थमिति प्रश्ने किं कारणमित्याशङ्क्याह—सापेक्षत्वादिति । अयं भावः । यथा देवदत्तस्तथा यज्ञदत्त इत्यत्र बोधद्वयम् । तत्र यद्विशेषवान् देवदत्तस्तद्विशेषवान् यज्ञदत्त इति प्रथमोऽभिधया । उपमानदेवदत्ताऽभिन्न उपमेयो यज्ञदत्त इति द्वितीयस्तु व्यञ्जनया । उभयोरपि शाब्दत्वमत एवोपमानोपमेययोः समानविभक्तिकत्वसिद्धिः । तथा च उपमानत्वेन बुद्धस्य देवदत्तस्योपमेये साकाङ्क्षत्वेनासामर्थ्यात्समासो न प्राप्नोतीति तत्र निषेधो व्यर्थः । प्रधानस्य सापेक्षत्वेऽपि नासामर्थ्यमिति तु पूर्वपक्षी न जानाति । सिद्धान्ते तु वक्ष्यति । इत्येकं प्रश्ने कारणम् । सादृश्ये एव यथा शब्दस्य वृत्तिर्न तु तदितरत्रेति प्रकृतसूत्रोदाहरणप्रसिद्धिरिति द्वितीयम् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायेन यथेत्यनेन प्राप्तस्य समासस्य निषेधेऽपि अव्ययं विभक्तीत्यनेन सादृश्ये प्राप्तस्यानिषेधादसादृश्ये इति निषेधवैयर्थ्यमिति तृतीयमित्यर्थः । ( र. ना. ) ९ 'प्रश्नेतस्मिन्' ।

प्रश्नः ॥ पूर्वसूत्रे यथाग्रहणं तदर्थार्थकान्वादिभिः समासार्थम् ॥ **सापेक्षत्वादिति** । उपमानत्वेन बुद्धस्योपमेये साकाङ्क्षत्वादिति भावः ॥ **वृत्तिरिति** । शक्तिरित्यर्थः । एवं च उदाहरणाप्रसिद्धिरिति भावः ॥ **पूर्वंप्राप्नोतीति** । अनन्तरत्वात् । एवं च पूर्वेण तत्र समासो दुर्वार इति व्यावर्त्याप्रसिद्धिरिति भावः ॥

## ( समाधानभाष्यम् )

**यथा देवदत्तस्तथा यज्ञदत्तः ॥**

( प्रदीपः ) **यथा देवदत्त इति** । समुदायस्य चात्र सापेक्षत्वात्तस्य च प्राधान्यादुपमानस्य चोपमेयं प्रति नित्यसापेक्षत्वात्समासः प्राप्नोति ॥

( उद्योतः ) **समुदायस्य चेति** । यद्धर्मवान्देवदत्त इत्यर्थकस्य यथा देवदत्त इति समुदायस्येत्यर्थः ॥ ये तु देवदत्तसादृश्यवान्यज्ञदत्त इति बोधं वदन्ति, तेषां प्रधानस्य सदृशस्य सापेक्षत्वादित्येवास्तु, समुदायस्येत्युक्तिर्वैयर्थ्यम् । मम तु केवलप्रधानार्थस्यासापेक्षत्वात्तथोक्तिः ॥ **नित्यसापेक्षत्वादिति** । प्रधानस्योपमानस्य सापेक्षत्वान्नित्यसापेक्षत्वाच्चेत्यर्थः । नित्यसापेक्षं सर्वं समस्यत इति भाष्ये क्वास्तीति चिन्त्यम् । देवदत्तस्य गुरुकुलमित्यादिषु गमकत्वाद्वृत्तिः किमोदनः शालीनामित्यादीनामिवेत्येव **समर्थसूत्रे** भाष्ये उक्तम् । तत्र यथाशब्द उपमानत्वं द्योतयतीत्यभियुक्तोक्तेस्तस्य विशेषणत्वेन पूर्वपदार्थप्राधान्याभावेपि द्विमुनीत्यादिवत्समासप्राप्तिः, तदभावे प्रसिद्धत्वादस्यैव ग्रहणं स्यादिति तात्पर्यम् ॥

## ( आक्षेपभाष्यम् )

**असादृश्य इत्युच्यते, तत्रेदं न सिद्ध्यति—यथाशक्ति यथाबलमिति । किं कारणम् ? । यथेत्ययं प्रकारवचने थाल्, स च सादृश्ये वर्तते ॥**

(प्रदीपः) **स च सादृश्य इति** । प्रकारशब्दस्य सादृश्यार्थत्वात् प्रकारे व्युत्पादितस्य यथाशब्दस्य सादृश्ये वृत्तिरित्यर्थः ॥

( उद्योतः ) **सादृश्यार्थकत्वादिति** । सादृश्यप्रयोजकभेदकधर्मार्थकत्वादिति भावः ॥ अत एव थाल्विधायके वृत्तावुक्तं सामान्यस्य भेदको विशेषः प्रकार इति ॥ वचनपदस्वारस्यात्तु तद्वद्वाचकता । एवं च यथा देवदत्त इत्यादौ यद्धर्मवान्देवदत्तस्तद्धर्मवान्यज्ञदत्त इति बोधे यत्तद्भ्यां तस्य धर्मस्यैक्येऽवगते उपमानोपमेयत्वस्यावगतिरिति, **सादृश्ये** वर्तत इत्यस्य उपमानोपमेयत्वद्योतक इत्यर्थः । ईदृशसादृश्यद्योतकस्यापि ग्रहणेऽसादृश्ये इति प्रतिषेध एव मानमिति बोध्यम् । सादृश्यस्य थाप्रत्ययवाच्यत्वे तु यत्सदृशो देवदत्तस्तत्सदृशो यज्ञदत्त इत्येव बोधः स्यात् नतु देवदत्तयज्ञदत्तयोः सादृश्यबोध इति दिक् ॥ **सादृश्ये वृत्तिरिति** । सादृश्ये एव वृत्तिरित्यर्थः । एवं च सूत्रं व्यर्थमिति भावः ॥

## ( आक्षेपबाधकभाष्यम् )

**नैष दोषः । अयं यथाशब्दोऽस्त्येवाव्युत्पन्नः प्रातिपदिकं वीप्सावाचि । अस्ति प्रकारवचने थाल् । तत्र यदव्युत्पन्नं प्रातिपदिकं वीप्सावाचि तस्येदं ग्रहणम् ॥**

( प्रदीपः ) **अस्त्येवेति** । अर्थवत्सूत्रारम्भादव्युत्पन्नानामपि सम्भवोऽवगम्यते ॥ **वीप्सावाचीति** । वीप्साग्रहणमुपलक्षणं, तेन योग्यतापदार्थानतिवृत्ती अपि यथार्थौ ॥ **तस्येदमिति** । सूत्रेस्मिन्नित्यर्थः ॥

( उद्योतः ) **अर्थवत्सूत्रारम्भादिति** । बहुपटव इत्याद्यर्थं बहुच्पूर्व इत्येव कर्तव्यमिति भावः । कृदंशे **गतिकारकपूर्वस्य ग्रहणमिति** तु ज्ञापकसिद्धस्यासार्वत्रिकत्वान्नेत्याशयः ॥ भाष्ये इदमित्यस्य एतत्सूत्रीयमिति वाच्योर्थः । तद् ध्वनयन् व्याचष्टे—**सूत्रेस्मिन्निति** । इदमुपलक्षणं यथाशक्तीति प्रयोगे चेत्यप्यर्थः ॥

## ( आक्षेपभाष्यम् )

**अथ यः प्रकारवचने थाल्, तस्य ग्रहणं कस्मान्न भवति । पूर्वेण प्राप्नोति—'सादृश्यसंपत्ति' इति ॥**

( उद्योतः ) तत्र यथाशक्तीति प्रयोगे सादृश्यवाचिन एव ग्रहणं कुतो नेति शङ्कते—**अथ य इति** ॥ **तस्य** तदन्तस्य ॥ सादृश्यं तस्य वाच्यमेवास्तु, शक्तिसदृशमित्यादिरेवार्थोस्तु, एतत्सूत्रं च मास्तु इति भावः ॥ अव्युत्पन्नशब्दसत्त्वे मानमपश्यतोर्थघटितं साधुत्वमित्यजानतश्च शङ्केयम् ॥ प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहणमिति न शङ्कार्थः । **असादृश्य** इत्यस्य सूत्रे श्रवणात् **'पूर्वेण प्राप्नोति'** **'सामर्थ्यान्ने'**त्यस्यासंगतेश्च ॥ नन्वेवं समासो न स्यादत आह—**पूर्वेणेति** । **सादृश्यसंपत्तीति** । यथार्थत्वेन तु न प्राप्ति-

---

१ तथाप्रयोगस्य समासज्ञापकत्वादित्यर्थः नागेशसम्मतः । वस्तुतस्तु किमोदनः शालीनामित्याद्युदाहरणपरभाष्यादेव 'नित्यसापेक्षं सर्वं समस्यते' इति कल्प्यते इति कैयटाशयः । तथा भाष्याशयमुन्नीयैव 'संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' इति हर्युक्तिः । गमकत्वात्समास इत्यस्य च 'नित्यसापेक्षस्थले समासप्रयोगस्य समासज्ञापकत्वा-दित्यर्थः । किञ्च गमकत्वादित्यस्य पूर्वोक्तनागेशाभिप्रेतार्थाङ्गीकारेऽननुगमोऽपि । तस्मादिष्टप्रयोगानुगमार्थं हर्यादिसम्मत्या किमोदनः शालीनामित्यादि भाष्यस्य 'नित्यसापेक्षं समस्यते' इत्यत्रैवाशयः कल्प्य इति । (र.ना.) २ असादृश्य इति निषेधाभावे इत्यर्थः । अस्यैव, सादृश्यार्थकयथाशब्दस्यैवेत्यर्थः । (र.ना.) ३ सादृश्यस्यातिरिक्तपदार्थत्वपक्षे सादृश्यप्रयोजको यो भेदकधर्मोऽसाधारणधर्मस्तदर्थकत्वादित्यर्थः । यथा देवदत्त इत्यस्य यद्विशेषवान् देवदत्त इत्यर्थस्वीकारादिति भावः । ( र. ना. ) ४ वचनपदोपादानाद् 'यत्र प्रकार उच्यते अभिधया बोध्यते तत्र थालित्यर्थः । तथाच थालः प्रकाराभिधायकत्वं लब्धम् । किन्तु यत्र प्रकारबोधोऽभिधया तत्र तद्बोधानन्तरं व्यञ्जनया उपमानोपमेयभावावगतिरिति रीत्याभेदकधर्मरूपप्रकारस्य सादृश्यप्रयोजकत्वमुपेयते इति भावः । तद्वद्वाचकतेत्यस्य सदृशबोधकतेत्यर्थः । तद्रीतिश्च पूर्वमेवोपपादिता । ( र. ना. ) ५ प्रकारवचने थाला निष्पन्नस्य सादृश्यद्योतकस्य यथाशब्दस्य 'असादृश्ये' इत्यनेन समासनिषेधाभावे 'असादृश्ये' इति निषेध एव व्यर्थः स्यात् । अव्युत्पन्नयथाशब्दस्य सादृश्ये समासनिषेधेऽपि व्युत्पन्नस्य तस्य समासप्रसक्तेः । तथाचोभयोरपि निषेध इति भावः । ( र. ना. ) ६ देवदत्तसदृशो यज्ञदत्त इत्याकारक इति शेषः । (र. ना.) ७ 'वाची' । ८ ननु देवदत्ताय ददादित्यादेः 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इत्यनेन कृदन्तत्वात् कृत्तद्धितेतिसूत्रेण प्राप्तप्रातिपदिकत्ववारणाय समासग्रहणस्य नियमार्थत्वोपपत्तयेऽर्थवत्सूत्रारम्भ आवश्यक इति कथमुच्यतेऽर्थवत्सूत्रारम्भादव्युत्पन्नानामपि संभवोऽवगम्यते इतीत्यत आह—कृदंशे इत्यादि । तथाच गतिरनन्तर इत्यत्रानन्तरग्रहणज्ञापितायाः कृद्ग्रहणपरिभाषाया इष्टसिद्ध्यर्थत्वेन देवदत्ताय ददादित्यत्राप्रवृत्त्या कृत्तद्धितेति सूत्राप्राप्त्याऽर्थवत्सूत्रस्याव्युत्पन्नसत्त्वज्ञापकत्वं सुस्थिरमिति । ( र. ना. ) ९ एवञ्च ग्रहणमिति करणे ल्युडन्तं बोध्यम् । (र. ना.) १० यथा शक्तीत्यस्येति शेषः । ( र. ना. ) ११ अव्युत्पन्नयथाशब्दस्य सत्त्वज्ञाने हि तेनैव यथाशक्तीत्यादिप्रयोगनिर्वाहे तदर्थं प्रकारवचने थालो ग्रहणं नाशङ्किष्यत उदाहरणासंभवेन चैतत्सूत्रप्रत्याख्यानाशयं नाकरिष्यत् । यदि तु अर्थघटितं साधुत्वमज्ञास्यत्तदा प्रकारार्थे बोधितसाधुताकस्य थालन्तस्य सादृश्यार्थवाचकत्वं कथमभिप्रैष्यदिति भावः । ( र. ना. )

रुक्ता, सूत्रगृहीताव्ययेन तेन समासाभावात्। अत एव पश्चाच्छब्देन न तेन सूत्रेण समासः॥

( आक्षेपबाधकभाष्यम् )

**प्रतिषेधवचनसामर्थ्यान्न भविष्यति॥ यथाऽसादृश्ये॥७॥**

( प्रदीपः ) **प्रतिषेधवचनसामर्थ्यादिति।** यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य॥७॥

( उद्द्योतः ) उत्तरमाह—प्रतिषेधेति। प्रतिषेधयुक्तसूत्रारम्भेत्यर्थः। एतदर्थमेव सूत्रमावश्यकम्॥ यथार्थे यदव्ययमिति कैयटस्तु चिन्त्यः, तेनात्राप्राप्तेरुक्तत्वात्। उपक्रमभाष्यतस्तथैव लाभात्॥७॥

---

( २२८ अव्ययीभावसंज्ञासूत्रम्॥२।१।२ आ. ७ सू० )

## ३५८ सुप् प्रतिना मात्रार्थे॥९॥

( सुब्ग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**सुबिति वर्तमाने पुनः सुब्ग्रहणं किमर्थम्?॥**

( प्रदीपः ) **सुप्प्रतिना॥९॥ सुबिति वर्तमान इति। सुबामन्त्रित इत्यतः॥**

( आक्षेपबाधकभाष्यम् )

**'अव्ययम्' इत्येवं तदभूत्। सुंमात्रे यथा स्यात्—माषप्रति सूपप्रति ओदनप्रति॥ सुप्प्रतिना॥९॥**

(प्रदीपः) **अव्ययमित्येवमिति।** अव्ययग्रहणसंबद्धमभूदित्यर्थः। **"यावदवधारणे"** इत्यत्र यावच्छब्दोऽव्ययमेव संगृहीतः। तथा च यावन्त्यमत्राणीत्यनव्ययेन वाक्यं प्रदर्श्यते॥ अन्यथा नित्यसमासत्वाद्वाक्यं न स्यात्। खरादीनां च दोषामन्यमहर्दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनान्मात्रावति वृत्तिरविरुद्धेति अव्ययस्यैवायं समासः स्यात्॥९॥

( उद्द्योतः ) **सुप्प्रति॥९॥** नन्वव्ययग्रहणं यावदवधारणे इत्यत्रैव निवृत्तमयोग्यत्वादिति चेन्नेत्याह—**यावदिति।** यावदमत्रं ब्राह्मणानामन्त्रयस्वेत्युदाहरणम्॥ ननु प्रतिना समासयोग्यमात्रावदर्थाव्ययाभावादेव तन्निवृत्तिर्भविष्यतीत्यत आह—**खरादीनां चेति॥ मात्रावतीति।** तथा च दिवादोषादिभिरन्यैरेव प्रतिना समासः स्यादित्यर्थः॥९॥

---

( २२९ अव्ययीभावसंज्ञासूत्रम्॥२।१।२ आ. ८ सू. )

## ३५९ अक्षशलाकासंख्याः परिणा॥२।१।१०॥

( विभक्तिवचनव्यवहारनियमाधिकरणम् )

( १२३६ विभक्तिनियमवार्तिकम्॥१॥ )

**॥ * ॥ अक्षादयस्तृतीयान्ताः परिणा पूर्वोक्तस्य यथा न तद्यथाद्योतने॥ * ॥**

( व्याख्याभाष्यम् )

**अक्षादयस्तृतीयान्ताः परिणा सह समस्यन्त इति वक्तव्यम्। पूर्वोक्तस्य यथा न तत्। अयथाजातीयके द्योत्ये। अक्षेणेदं न तथा वृत्तं यथा पूर्वमिति। अक्षपरि शलाकापरि॥**

( प्रदीपः ) **अक्ष॥१०॥ तृतीयान्ता इति।** विभक्त्यन्तरनिरासार्थमेतदुक्तम्। न्यायाच्चैतत् सिध्यति। अक्षादीनां वर्तनक्रियायां कर्तृत्वादित्याहुः॥ **पूर्वोक्तस्येति।** पूर्ववृत्तस्येत्यर्थः। अनेकार्थत्वाद्धातूनां नियतविषयत्वाच्च वचिरिह वर्तने वर्तते। तदेव यथा न तदिति तच्छब्देन परामृश्यते। अभिधानार्थे तु वचौ तच्छब्देन परामर्शोऽसंबद्धः स्यात्॥ **अयथाद्योतन इति।** जयकाले अक्षादीनामेकरूपं यद्वर्तनं तद्विपरीतं पराजये यद्वर्तनं तद्यदा परिणा द्योत्यते तदा समासः॥

( उद्द्योतः ) **अक्षशला॥१०॥** विभक्त्यन्तरनिरासार्थमिति। विभक्त्यन्तरभ्रमनिरासार्थमित्यर्थः॥ **कर्तृत्वादिति।** वर्तनक्रिया च वृत्तावन्तर्भूता गुडधाना इत्यादौ मिश्रणक्रियावदिति भावः॥ **पूर्ववृत्तस्येत्यर्थ इति।** पूर्ववृत्तस्य जयस्य संबन्धि यथा वर्तनमभूत् संप्रति चेत्तद्वर्तनं तथा न भवति तदा समास इत्यर्थः। **पूर्वोक्तस्य यथेति** भाष्यस्येति भावः॥ **वचिरिहेति।** एतद्भाष्यप्रयोगे इत्यर्थः। **तदेव वर्तनमेव॥** तस्यैव फलितार्थमाह—भाष्ये—**अयथाद्योतन इति।** अयथाशब्दो वैपरीत्ये, विपरीतत्वद्योतने इत्यर्थः॥ पराजयद्योतने इति यावत्॥ **पराजय इति।** पञ्चानां मध्ये एकेन विपरीतवर्तनेऽयं प्रयोगः। तदा च पराजय एव भवतीत्याशयः। तदेतद् ध्वनयन्वक्ष्यति—**पञ्चिकानामद्यूतमिति।** तद्विषय एव चायं प्रयोग इष्यते॥

( १२३७ वचननियमवार्तिकम्॥२॥ )

**॥ * ॥ अक्षशलाकयोश्चैकवचनान्तयोः॥ * ॥**

( व्याख्याभाष्यम् )

**अक्षशलाकयोश्चैकवचनान्तयोरिति वक्तव्यम्। इह मा भूत्—अक्षाभ्यां वृत्तम्, अक्षैर्वृत्तम्॥**

---

१ प्रकारवचनथाल्न्तस्य यथेत्यनेन प्राप्तसमासनिषेधार्थमेवेत्यर्थः। (र. ना.) २ सूत्रगृहीताव्ययेन न समास इत्यनेनोक्तत्वादित्यर्थः। (र. ना.) ३ वीप्सादिवाचिनो यथाशब्दस्य पूर्वसूत्रेण समासाप्राप्तौ यथेतिविधायकम्, असादृश्ये इति च प्रकारवचने थाल्न्तस्य समासनिषेधकमिति प्रकारस्यैवोपक्रमभाष्यतो लाभादित्यर्थः। (र.ना.) ४ 'सुम्मात्रे'। ५ 'ब्दोऽप्यव्य'। ६ प्रतिना समासयोग्यं यद् मात्रावदर्थमव्ययं तदभावादित्यर्थः। (र. ना.) ७ "अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्" इत्येवमेव वार्तिकपाठः क्वचित्। ८ पूर्वनिष्पन्नस्येत्यर्थः। (र. ना.) ९ ननु धातूनामनेकार्थत्वस्वीकारे सर्वत्रैव सर्वेऽर्थाः प्रतीयेरन्नित्यत आह—नियतविषयत्वाच्चेति। नियतो विषयः तत्तदर्थे प्रयोगभूमिरूपो यस्य तत्त्वादित्यर्थः। (र.ना.) १० पूर्वविपरीतं वर्तनमेवेत्यर्थः। (र. ना.) ११ 'अयथाजातीयके द्योत्य इति'। १२ 'एकत्वेऽक्षशलाकयोः' इत्येवमेव वार्तिकपाठः क्वचिदुपलभ्यते।

(प्रदीपः) एकवचनान्तयोरिति । समासे द्वित्वाद्यनवगमादेकत्वस्यान्यनिरपेक्षत्वादन्तरङ्गत्वादवगतिसंभवान्न्यायप्राप्तमेतदित्याहुः ॥ यदुक्तम् 'अभेदैकत्वसंख्या वृत्तौ गम्यते' इति तद् बाहुल्याभिप्रायेण ॥

(उद्द्योतः) यद्यपि द्वयोस्त्रयाणामन्यथापातेऽपि पराजय एव तथापि तत्र नेष्यतेऽत आह—भाष्ये—एकवचनान्तयोरिति ॥ न्यायप्राप्तमेतदिति । वस्तुतस्तु—

भवद्भिरामवसरप्रदानाय वचांसि नः,

वध्वोरगारं वध्वगारमित्यादाविव प्रकरणादिनाक्षत्वेनैवानेकार्थावगमे समासवारणाय अक्षत्वेनैकाक्षबोधे एव च साधुत्वाय वचनमावश्यकम् ॥ अभेदैकत्वेति । अस्यार्थः प्रागुक्तः ॥

(१२३८ व्यवहारनियमवार्तिकम् ॥ ३ ॥)

॥ * ॥ कितवव्यवहारे च ॥ * ॥

(व्याख्याभाष्यम्)

कितवव्यवहार[1] इति वक्तव्यम् । इह मा भूत्—[2]अक्षेणेदं न तथा वृत्तं शकटेन यथा पूर्वमिति[3] ॥ अक्षशलाका ॥ १० ॥

(प्रदीपः) कितवव्यवहार इति । पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति । तत्र यदा सर्वे एकरूपाः पतन्ति तदा पातयिता जयति । अन्यथा तु पाते पराजीयते १०

(२३० अव्ययीभावसंज्ञासूत्रम् ॥ २ । १ । २ आ. ९ सू.)

## ३६० विभाषापपरिबहिरञ्चवः पञ्चम्या ॥ २ । १ । ११ ॥

(योगविभागाधिकरणम्)

(१२३९ वार्तिकम् ॥ १ ॥)

[॥ * ॥ वि[4]भाषेति योगविभागः ॥ * ॥]

(भाष्यम्) [विभाषेति] योगविभागः कर्तव्यः । "विभाषा" इत्ययमधिकारः । ततः—"अपपरिबहिरञ्चवः पञ्चम्या" इति ॥

(प्रदीपः) विभा ॥ ११ ॥ योगविभाग इति । अन्यथैहैवास्योपयोग आशङ्क्येत योगविभागे त्वधिकारो गम्यते ॥

(पञ्चमीग्रहणप्रयोजनाधिकरणम्)

(प्रत्याख्यानभाष्यम्)

अपपरिबहिरञ्चवः पञ्चम्या ॥ पञ्चमीग्रहणं शक्यमकर्तुम् ॥ कथम्? । सुबन्तेनेति वर्तते । एतैश्च कर्मप्रवचनीयैर्योगे पञ्चमी विधीयते । तत्रान्तरेणापि पञ्चमीग्रहणं पञ्चम्यन्तेन समासो भविष्यति ॥

(प्रदीपः) अपपरिशब्दौ परस्परसाहचर्याद्वर्जनार्थौ गृहीष्येते । तौ च कर्मप्रवचनीयौ । तद्योगे पञ्चम्येव विहिता । बहिर्योगेऽपि बहिर्योगे चोपसंख्यानमिति विहिता । अञ्चूत्तरपदलक्षणा च विहिता । प्राग्ग्राम इत्यादौ तु समासो न भविष्यति । पूर्वपदार्थप्राधान्य एव सति संभवे अव्ययीभावस्य विधानादित्यभिप्रायेणाह—पञ्चमीग्रहणमिति ॥ एतैश्चेति । वक्ष्यमाणापेक्षया बहुवचननिर्देशः ॥

(उद्द्योतः) विभाषाप ॥ ११ ॥ कर्मप्रवचनीययोरपि अपपर्योः संभवाल्लक्षणादौ कर्मप्रवचनीययोरपञ्चम्यन्तेनापि समासप्रसङ्गाच्चाह—वर्जनार्थाविति ॥ उपसंख्यानमिति । तच्च बहिर्ग्रामादित्यादिसिद्धये तवाप्यावश्यकमिति भावः ॥ विहितेति । कर्तव्येति शेषः । अन्यथास्योपसंख्यानस्य खपुष्पायमाणत्वादेवं सिद्धवदुक्तिरसंगता स्यात् ॥ अत एव भाष्यकारोपि बहिःशब्देन पञ्चमी न विधीयते इत्याह ॥ नन्वञ्चूत्तरपदाद्यदा प्रथमान्तादस्तातिं विधायाञ्चेर्लुगिति लुक् तदा प्रथमान्तेनापि समानाधिकरणेन तस्य समासः प्राप्नोतीत्यत आह—प्राग्ग्राम इति ॥ अपपर्योरेव कर्मप्रवचनीयत्वाद्बहुवचनानुपपत्तेराह—वक्ष्यमाणेति ॥ भाष्ये—एतैश्च कर्मप्रवचनीयैरित्यत्र छत्रिणो यान्तीतिवल्लक्षणया अञ्चुरपि गृह्यते । अत एव बहुवचनोपपत्तिरित्येके ॥

(प्रत्याख्यानबाधकभाष्यम्)

इदं तर्हि प्रयोजनम् । बहिःशब्देन योगे पञ्चमी न विधीयते तत्रापि यथा स्यात्—बहिर्ग्रामं बहिर्ग्रामात् ॥

(आक्षेपभाष्यम्)

अथ क्रियमाणे पञ्चमीग्रहणे यावता बहिःशब्देन योगे पञ्चमी न विधीयते कथमिवैतत्सिद्ध्यति ॥

(प्रदीपः) अथेति । बहिर्गतो ग्रामादित्यपादाने पञ्चमीसद्भावाद् कथं तद्विधानं ज्ञाप्यत इति प्रश्नः ॥

(उद्द्योतः) बहिर्गतो ग्रामादिति । ग्रामाद्यो गतः स बहिर्वर्तत इत्यर्थः ॥

(समाधानभाष्यम्)

पञ्चमीग्रहणसामर्थ्यात् ॥ विभाषापपरि ॥ ११ ॥

(प्रदीपः) पञ्चमीग्रहणसामर्थ्यादिति । बहिर्गतो ग्रामादित्यत्रासामर्थ्यात् समासेन न भवितव्यं, तस्मात् षष्ठीविषये पञ्चमी बहिर्योगेनुमीयते ॥ ततस्तदुपसंख्यानं न कर्तव्यम् ॥ ११ ॥

(उद्द्योतः) उपसंख्यानं न कर्तव्यमिति । अपूर्वं न कर्तव्यमित्यर्थः ॥ ११ ॥

---

१ कितवोऽत्र द्यूतकर्ता । (र. ना.) २ पूर्वं यथा शकटेन वृत्तं तथेदमक्षेण न वृत्तमिति योजना । (र. ना.) ३ 'इतःपरम्—'अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् । कितवव्यवहारे च एकत्वेऽक्षशलाकयोः' "इत्यपि क्वचिल्लभ्यते" क्वचित्तु "अक्षादयस्तृतीयान्ताः परिणा पूर्वोक्तस्य यथा न तत् । कितवव्यवहारे चाक्षशलाकयोश्चैकवचनान्तयोः ॥" इत्येवमुपलभ्यते ॥ परंत्वेवं श्लोकोपसंहारानुरोधेन 'कितवव्यवहारे च' इति वार्तिकस्य सभाष्यस्य पाठः 'अक्षशलाकयोः' इति वार्तिकात् प्राक् समुचितः स्यात् ।

४ अयं वार्तिकपाठो यद्यपि भाष्यपुस्तकेषु नोपलभ्यते । तथापि "ऊञ ऊं" "प्रादय उपसर्गाः" इति सूत्रभाष्य इवात्राप्युचितो लेखकप्रमादात्परिभ्रष्ट इत्यवगम्य कोष्ठकमध्ये वर्धितः ॥ एवं च "ऊञऊँ" इति सूत्रवट्टिप्पणी सूत्राङ्कदानविषयिणी कल्पनीया ॥ "समर्थस्तत्पुरुषो ध्वाङ्क्षेण वृन्दारकैकादश" इति प्राचीनपुस्तकोपलभ्यमानलेखविरोधात् आधुनिकाष्टाध्यायीपुस्तकोपलभ्यमानस्य "समर्थोऽन्यपदार्थे सिद्धशुष्कसन्महद् द्वादश" इति पादसमाप्तिलेखस्यानङ्गीकरणीयत्वात् । ५ 'मेवै' ।

( २३१ अव्ययीभावसंज्ञासूत्रम् ॥ २।१।२ आ. १० सू. )

## ३६१ आङ् मर्यादाभिविध्योः ॥२।१।१२॥

( प्रत्याख्यानभाष्यम् )

**मर्यादाभिविधिग्रहणं शक्यमकर्तुम्। कथम्?। पञ्चम्येति वर्तते। आङा च कर्मप्रवचनीयेन युक्ते पञ्चमी विधीयते। तयोश्चैवार्थयोराङ् कर्मप्रवचनीयसंज्ञो भवति नान्यत्र ॥ आङ्मर्यादाभिविध्योः १२**

( उद्योतः ) आङ्म ॥ १२ ॥ एतयोश्चैवार्थयोरिति । अपपरीतिसूत्रे एव चाङ् पठनीय इति भावः ॥ १२ ॥

( २३२ अव्ययीभावसंज्ञासूत्रम् ॥ २।१।२ आ. ११ सू. )

## ३६४ यस्य चायामः ॥ २ । १ । १५ ॥

( उदाहरणनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम्?॥**

( प्रदीपः ) यस्य ॥ १५ ॥ किमुदाहरणमिति । लक्ष्यलक्षणयोर्द्वयोरप्यायामवत्त्वात् संदिहानः पृच्छति ॥

( समाधानभाष्यम् )

**अनुगङ्गं हास्तिनपुरम्। अनुगङ्गं वाराणसी। अनुशोणं पाटलिपुत्रम् ॥**

( आक्षेपभाष्यम् )

**"यस्य चायाम" इत्युच्यते। गङ्गा चाप्यायता, वाराणस्यप्यायता, तत्र कुत एतत्—गङ्गया सह समासो भविष्यति, न पुनर्वाराणस्येति?॥**

( उद्योतः ) यस्यचा ॥१५॥ भाष्ये नपुनर्वाराणस्येति ॥ न पुनर्हास्तिनपुरेणेति पाठान्तरम्। यत्संबन्ध्यायामबोधकोऽनुः स तेन सुबन्तेनोपस्थितत्वात्षष्ठ्यन्तेन समस्यत इत्यर्थे गङ्गाया आयाम इत्यर्थेयं समासः स्यात्। वाराणसीशब्देन च तदायामो लक्ष्यः, मुख्यार्थेनान्वयबाधात्। एवं च गङ्गायामसदृशो वाराणस्यायाम इति बोध इति वाच्यम्। एवं च वाराणसीशब्देन मुख्यार्थेनानुना समासोऽस्तु, गङ्गाशब्द एव लक्षणयायामे वर्तताम्। एवं च प्रागुक्त एवार्थेऽनुवाराणसि गङ्गेति स्यादिति भावः ॥

( समाधानभाष्यम् )

**एवं तर्हि 'लक्षणेन' इति वर्तते। गङ्गा चैवं लक्षणम्, न वाराणसी ॥**

( प्रदीपः ) गङ्गा चैव लक्षणमिति । अनेकदेशव्याप्त्या गङ्गाया आयामवत्त्वेनानेकजनापेक्षया प्रसिद्धत्वात् तस्या एव लक्षणत्वम्। ततो यद्यपि कस्यचित् पुरुषस्य हास्तिनपुरमायामवत्त्वेन प्रसिद्धं, न गङ्गा, तथापि न तदपेक्षया प्रयोगव्यवस्था। किं तर्हि? प्रचुरलोकापेक्षया ॥

( समाधानान्तरभाष्यम् )

**अथ वा "यस्य चायामः" इत्युच्यते। गङ्गा चाप्यायता वाराणस्यप्यायता। तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो यस्यायामः' इति। साधीयश्च गङ्गायाः, न वाराणस्याः ॥ यस्य चायामः ॥ १५ ॥**

(प्रदीपः) अथ वेति। लक्षणेनेत्यस्यानुवृत्त्या विनापीष्टसिद्धिं दर्शयति। उपमानोपमेयभावे चायं समास इष्यते। न्यूनगुणं चोपमेयं परिपूर्णगुणमुपमानं तत्र संपूर्णगुणसन्निधौ न्यूनगुणमसद्गुणमिव प्रतिभातीति सामर्थ्यात् प्रकर्षगतिर्विज्ञायते। प्रकृष्टाप्रकृष्टसन्निधौ च प्रकृष्टस्य कार्येण संबन्धो नेतरस्य ॥१५॥

( उद्योतः ) भाष्ये—तत्र प्रकर्षगतिरिति। शब्दशक्तिस्वाभाव्यात् उपमानवाचकेनैवायं समास इति भावः ॥ १५ ॥

( २३३ अव्ययीभावसंज्ञासूत्रम् ॥ २।१।२ आ. १२ सू. )

## ३६५ तिष्ठद्गुप्रभृतीनि च ॥ २ । १ । १६ ॥

( चकारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थश्चकारः?॥**

( प्रदीपः ) तिष्ठद्गु ॥ १६ ॥ किमर्थ इति । समुचेतव्यस्याभावात् प्रश्नः ॥

( समाधानभाष्यम् )

**एवकारार्थः—तिष्ठद्गुप्रभृतीन्येव ॥ क्व मा भूत्?। परमं तिष्ठद्गु ॥**

( प्रदीपः ) एवकारार्थ इति । अनेकार्थत्वान्निपातानामिति भावः । तेन तिष्ठद्गुप्रभृतीन्येवैकार्थीभावविषयाणि भवन्ति । न तु शब्दान्तरेणैकार्थीभावं प्रतिपद्यन्त इत्यर्थः ॥

(उद्योतः) तिष्ठद्गु ॥१६॥ शब्दान्तरेणैकार्थीभावमिति। प्रकरणादेकार्थीभावविषयं समासमित्यर्थः। तद्ध्वनयन्नाह—भाष्ये-परमं तिष्ठद्ग्विति। ध्वनितं चेदं वृत्तौ ॥ आ तिष्ठद्गु जपन्संध्यामिति तु भिन्नपदमेव, पञ्चम्याश्चाव्ययादिति लुगिति बोध्यम् ॥

( अर्थविशेषनियमाधिकरणम् )

( १२४० वार्तिकम् ॥ १ ॥ )

**॥ * ॥ तिष्ठद्गु कालविशेषे ॥ * ॥**

( व्याख्याभाष्यम् )

**तिष्ठद्गु कालविशेष इति वक्तव्यम्। तिष्ठन्ति गावोऽस्मिन्काले स तिष्ठद्गु। वहद्गु ॥**

( प्रदीपः ) वहद्गु इति । अस्य कालविशेषवृत्तित्वप्रदर्शनार्थमुपक्षेपः ॥

( उद्योतः ) तिष्ठद्गु कालविशेष इत्युक्तत्वाद्वहद्गुरित्यसंगतमत आह—अस्य कालविशेषेति । वर्तिकमुपलक्षणमिति भावः । कालेऽन्यपदार्थे समासः ॥

---

१ 'पञ्चम्यन्तेनेति'। २ एवचेदं पृथक् सूत्रं न कर्तव्यमिति शेषः। (र.ना.) ३ किं लक्ष्यवाचिनाऽनुः समस्यते उत लक्षणवाचिनेतीति शेषः। (र. ना.) ४ 'भवति'। ५ इदं काकाक्षिन्यायेनोभाभ्यां संबध्यते। अनुनेत्यस्यानन्तरं परस्परमिति शेषः। एतन्मते आयाम एवानुशब्दस्य मुख्यार्थोऽभिप्रेतः। (र. ना.) ६ यद्यपि अनुवाराणसि गङ्गेत्यत्र वाराणस्यायामगङ्गायामयोरभेदबाधेन वाराणस्यायामसदृशो गङ्गायाम इति लभ्यते इति न प्रागुक्तार्थलाभः, तथापि सादृश्यस्य परस्परनिरूप्यत्वेन प्रागुक्तार्थस्यापि लाभ इति बोध्यम्। यद्वा गङ्गापदलक्ष्यार्थो गङ्गायामः सादृश्यमूलकाभेदाध्यवसायमाश्रित्यानुवाराणसीशब्दमुख्यार्थे वाराणस्यायामे प्रकार इति साक्षादेव प्रागुक्तार्थलाभ इति। (र. ना.) ७ 'चैवहि'। ८ प्रसिद्धं हि लक्षणं भवतीति भावः। (र. ना.) ९ 'विज्ञायते'। १० उपमानगतं प्रकर्षं तद्वाचके आरोप्य प्रकृष्टत्वात्तेनैव समासः, तथाविधारोपमूलकसमासाङ्गीकारे च शब्दशक्तिस्वाभाव्यं हेतुः। (र. ना.) ११ कालविशेषबोधकसमासत्वप्रदर्शनार्थमित्यर्थः। उपक्षेपो वार्तिकारम्भः। (र. ना.)

( १२४१ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ खलेयवादीनि प्रथमान्तान्यन्यपदार्थे ॥ * ॥

( व्याख्याभाष्यम् )

**खलेयवादीनि प्रथमान्तान्यन्यपदार्थे समस्यन्त इति वक्तव्यम् । खलेयवम् । खलेबुसम् । लूनयवम्[1] । पूनयवम्[2] । पूयमानयवम् ॥ तिष्ठद्गुप्रभृतीनि च ॥ १६ ॥**

( प्रदीपः ) **खलेयवादीनीति** । अव्यतिरिक्त एव प्रातिपदिकार्थे एषां प्रयोगः कर्तव्यो नान्यत्रेति भावः ॥ **अन्यपदार्थ इति** । न काल एव अपित्वन्यत्रापीत्यर्थः ॥ १६ ॥

( उद्द्योतः ) ननु व्यतिरिक्ते[3] प्रातिपदिकार्थे कथं प्रथमान्तान्येव प्रयोज्यानीत्यत आह—**अव्यतिरिक्त एवेति** । भेदान्वयायोग्य इत्यर्थः । खलेयवादीन्यन्यपदार्थे समस्यन्ते तानि च समस्तानि प्रथमान्तान्येव प्रयोक्तव्यानीत्यर्थौ वार्तिकस्येति बोध्यम् ॥ ननु तिष्ठद्ग्वादीनामपि कालरूपान्यपदार्थ एव वृत्तेः किं विशेषोक्त्येत्यत आह—**न काल एवापित्विति** । स्वाम्यादावपीत्यर्थः ॥ १६ ॥

—•—

( २३४ अव्ययीभावसंज्ञासूत्रम् ॥ २ । १ । २ आ. १३ सू. )

## ३६६ पारेमध्ये षष्ठ्या वा ॥ २।१।१७ ॥

( वावचनप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**वावचनं किमर्थम्? ॥**

( प्रदीपः ) **पारे ॥ १७ ॥ वावचनमिति** । महाविभाषयैव च वाक्यस्य षष्ठीसमासस्य च सिद्धत्वादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**विभाषा समासो यथा स्यात् । समासेन मुक्ते वाक्यमपि यथा स्यात्—पारं गङ्गाया इति ॥**

( प्रदीपः ) इतरो न्यायप्रपञ्चार्थं स्ववाचा वा[4] जल्पयितुं स्वाशयमप्रकाशयन्नाह—**विभाषेति** ॥

( उद्द्योतः ) **पारेमध्ये ॥ १७ ॥ स्ववाचेति** । जल्पनापेक्षया करणे तृतीया । सिद्धान्ती उभयत्रापि स्वपदार्थः । पुनर्यदि मां प्रक्ष्यति तदा स्वाशयं वक्ष्यामीत्याशयेनेति भावः ॥

( आक्षेपसाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा । तया वाक्यमपि भविष्यति ॥**

( आक्षेपबाधकभाष्यम् )

**इदं तर्हि प्रयोजनम् । अव्ययीभावेन मुक्ते षष्ठीसमासो यथा स्यात्—गङ्गापारमिति ॥**

( आक्षेपसाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । अयमपि विभाषा, षष्ठीसमासोपि, तावुभौ वचनाद्भविष्यतः ॥**

( प्रदीपः ) **अयमपीति** । षष्ठीसमासे प्राप्ते अव्ययीभाव आरभ्यते स नित्यं बाधकः प्राप्त इति महाविभाषाधिकाराद्विकल्पेन बाधको भवतीति पक्षे षष्ठीसमासः सिध्यति सोऽपि विकल्पेन विधीयत इति वाक्यमपि भविष्यतीत्यर्थः ॥

( उद्द्योतः ) **विकल्पेन बाधक इति** । वृत्तिवर्तनवादिनां विधेयसंज्ञाविशेषणं विभाषाधिकारः । तत्र यत्र संज्ञान्तरप्राप्तिस्तत्र साऽभ्यनुज्ञायते, यत्र न, तत्र वाक्यमेवेत्यभिप्रायः ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( १२४२ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ पारेमध्ये षष्ठ्या वावचनम् [ अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने[5] ] ॥ * ॥

( व्याख्याभाष्यम् )

**पारेमध्ये षष्ठ्या वेति वक्तव्यम् ॥ अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने । अक्रियमाणे हि वावचने षष्ठीसमासस्याभावः स्यात् ॥ यथैकदेशिप्रधाने । तद्यथा—एकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति ॥ किं पुनः कारणमेकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति? । समासतद्धितानां वृत्तिर्विभाषा, वृत्तिविषये नित्योपवादः ॥ इह पुनर्वावचने क्रियमाणे एकया वृत्तिर्विभाषा, अपरया वृत्तिविषये नित्योऽपवादः ॥**

( प्रदीपः ) **अत उत्तरमिति** । एतस्मात् पक्षादुपरीत्यर्थः ॥ **वक्तव्यमिति** । कृत्याश्चेत्यावश्यके कृत्यः ॥ **एकदेशिप्रधान इति** । ननु पूर्वकाय इत्यादौ पूर्वपदार्थ एकदेशः प्रधानम्, न त्वेकदेशी ॥ एवं तर्हि–एकदेशिनोनूद्यमानत्वादप्राधान्यं समासस्य तु विधेयत्वात् प्राधान्यम् । तत्रैकदेशिनः प्रधानमिति षष्ठीसमासेन समास उच्यते । अथ वा प्राधान्येन[6] निमित्तत्वं लक्ष्यत इति बहुव्रीहावपि न दोषः ॥ **समासतद्धितानामिति** । तुल्यन्यायत्वाद्विचाराय तद्धिता अपि निर्दिष्टाः । इह वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा वाक्यस्य बाधिका प्राप्नोतीति विकल्पेन वाक्यस्य पक्षेनुज्ञानं क्रियते ॥ तत्रापवादेपि विकल्पेन[7] विधीयमाने विकल्पो वाक्यस्यैवानुज्ञानं करोतीति उत्सर्गस्य नित्येन बाधेन भाव्यम् । तत्र वाग्रहणेनोत्सर्गोपि पक्षे अभ्यनुज्ञायत इति त्रैरूप्यं सिद्ध्यति ॥ **एकयेति** ।

१ 'लूयमानयवम्' इत्यपि क्वचिदधिकम् । २ पूता विनष्टा यवा यस्मिन् काले यस्य स्वाम्यादेर्वेति विग्रहः । पूलो विनाशे इत्यन्तर्गणसूत्रसहकारेण ल्वादिभ्यश्चेति नत्वम् । ( र. ना. ) ३ भेदान्वययोग्ये इत्यर्थः । तत्र द्वितीयान्तादिप्रयोगस्योचितत्वात्कथं प्रथमान्तान्येव प्रयोज्यानीति भावः । ( र. ना. ) ४ वाशब्दो भिन्नक्रमो जल्पयितुमित्यस्यानन्तरं द्रष्टव्यः । वाशब्दस्य सार्थक्ये युक्तीनां यत्प्रपञ्चनं तदर्थं, सिद्धान्तिवाचा वावचनप्रयोजनं जल्पयितुं वेत्यर्थः । ( र. ना. ) ५ अयं कोष्ठकान्तर्गतो वार्तिकांशः प्रायः पुस्तकेषु नोपलभ्यते । ६ प्राधान्याभिन्नं निमित्तत्वं प्रधानपदेन लक्षणया बोध्यते इत्यर्थः । अभेदे प्रकृत्यादित्वात्तृतीया । ( र. ना. ) ७ महाविभाषयेत्यादिः । ( र. ना. )

विभाषयेत्यर्थः ॥ अपरयेति । इदमेव वावचनमुदश्वितोन्यतरस्यामित्यन्यतरस्यांग्रहणं च ज्ञापकम्—यत्रोत्सर्गापवादौ वृत्तिषु विभाषा, तत्रापवादेन मुक्त उत्सर्गो न भवतीति ॥

( उद्द्योतः ) एतस्मादिति । एतस्माद् वावचनं किमर्थमिति पूर्वपक्षाद् उपरि तदुत्तरकाले तत्समाधानभूतं वार्तिकं पठतीत्यर्थः ॥ सूत्रकारेण वाग्रहणस्य कृतत्वाद् वक्तव्यम् इत्यसंगतमित्यत आह—आवश्यके कृत्य इति ॥ समास उच्यते इति । एकदेशिनः प्रधाने विधीयमाने, एकदेशिघटितसमुदायस्य विधीयमाने समास इत्यर्थं इति भावः ॥ भाष्ये—वृत्तिर्विभाषेति । वृत्तिरेकार्थीभावः । अयं भावः—अपपरीत्यादौ समास इति अनुवृत्तम्, समर्थ इति च परिभाषयोपस्थितम् । तत्र लोकसिद्धैकार्थीभावः क्वास्ति, क्व नेति ज्ञातुमसमर्थानां बालानां स्फुटबोधनाय तत्र तत्र सूत्रे समासादिसंज्ञादिवदेकार्थीभावरूपसामर्थ्यमपि विधेयम् । विभाषाग्रहणं च सामर्थ्येनैव संबध्यते, व्याख्यानाद् । सामर्थ्ये समासविकल्पानिष्टेश्च 'सुबन्तं श्रितादिभिः सहोच्चार्यमाणं वा समर्थं भवति, समर्थं च समाससंज्ञं भवति' इत्यर्थः । निषेधसूत्रैरपि समासनिषेधे सन्नियोगशिष्टन्यायेन सामर्थ्यनिषेधोपि, सामर्थ्यस्यैव वा निषेधः ॥ इह पुनर्वावचनं तु सामर्थ्यादेकार्थीभाव एव संज्ञाया विकल्पबोधकमिति ध्वनयन्नाह—वृत्तिरारभ्यमाणेति ॥ वाक्यस्य । वाक्यविषयव्यपेक्षायाः ॥ वृत्तिषु । एकार्थीभावविषयेषु ॥ विभाषेति । महाविभाषया विकल्पितावित्यर्थः ॥ न भवतीति । महाविभाषा विशेषणीभूतसामर्थ्येनैव संबध्यत इति ज्ञाप्यत इति तात्पर्यम् ॥

( एकारान्तनिपातनाधिकरणम् )

( १२४३ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ एकारान्तनिपातनं च ॥ * ॥

( व्याख्याभाष्यम् )

**एकारान्तनिपातनं च कर्तव्यम् । पारेगङ्गमिति ॥**

( निपातननिराकरणभाष्यम् )

**न कर्तव्यम् । सप्तम्या अलुका सिद्धम् ॥**

( प्रदीपः ) सप्तम्या अलुकेति । तत्पुरुषे कृतीति बहुलग्रहणादिति भावः ॥

( निपातनावश्यकताभाष्यम् )

**भवेत् सिद्धं यदा सप्तमी । यदा त्वन्या विभक्तयस्तदा न सिध्यति ॥ पारेमध्ये ॥ १७ ॥**

( प्रदीपः ) यदा त्वन्या इति । पारेगङ्गादागत इत्यादौ सप्तम्यर्थाभावात् सप्तम्यभावः ॥ १७ ॥

( उद्द्योतः ) सप्तम्यर्थाभावादिति । गङ्गायाः पारादिति हि तत्रार्थः ॥ १७ ॥

( २३५ अव्ययीभावसंज्ञासूत्रम् ॥ २ । १ । २ आ. १४ सू. )

# ३६८ नदीभिश्च ॥ २ । १ । १९ ॥

( समाहारमात्रविषयकत्वाधिकरणम् )

( १२४४ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधः ॥ * ॥

( व्याख्याभाष्यम् )

**नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधो वक्तव्यः । द्वीरावतीको देशः । त्रीरावतीको देशः । "नदीभिः संख्या" इति प्राप्नोति ॥**

( प्रदीपः ) नदीभिः ॥ १९ ॥ अर्थविशेषमनुपादाय पूर्वपदोत्तरपदमात्रनिर्देशेन समासोयं विधीयमानो द्विगोरिव बहुव्रीहेरपि बाधकः स्यादिति नदीभिरिति वार्तिकारम्भः ॥

( उद्द्योतः ) नदीभिः ॥ १९ ॥ भाष्ये—अन्यपदार्थ इति । समाहारातिरिक्ते इत्यर्थः ॥ तद्ध्वनयन्नाह—द्विगोरिवेति । समाहारद्विगोरिवेत्यर्थः । परत्वादपि बहुव्रीहेरनवकाशत्वाद्बाध्यसामान्यचिन्तापक्षे बाधकः स्यादिति भावः ॥

( वार्तिकप्रत्याख्यानभाष्यम् )

**न वक्तव्यः । इह कश्चित्समासः पूर्वपदार्थप्रधानः । कश्चिदुत्तरपदार्थप्रधानः । कश्चिदन्यपदार्थप्रधानः । कश्चिदुभयपदार्थप्रधानः । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । न चात्र पूर्वपदार्थप्राधान्यं गम्यते ॥**

( प्रदीपः ) न वक्तव्य इति । भाष्यकारो वार्तिकं प्रत्याचष्टे । पूर्वाचार्यविहितगुरुसंज्ञाश्रयणात्तदुपाधीनां पूर्वाचार्याः संज्ञां व्यधिषत तदुपाधीनामेवैता भवन्ति ॥ न चात्रेति । द्वीरावतीक इत्यादौ ॥ ननु पञ्चनदं द्वियमुनमित्यादौ मूलोदाहरणेपि पूर्वपदार्थप्राधान्यं नास्ति । समाहारो ह्यत्र समासार्थः । स च यदि समाहरणं समाहार इति भावरूपस्तदान्यपदार्थप्राधान्यम् । अथ समाह्रियत इति समाहारस्तथापि द्वेयमुने समाहृते द्वियमुनमिति पूर्वपदार्थविशिष्ट उत्तरपदार्थः प्रधानम् ॥ नैष दोषः । समाह्रियमाणार्थः समाहारः । तत्र पूर्वं द्विशब्दार्थप्रक्रमे 'के द्वे' इत्याकाङ्क्षायां यदा यमुने इत्युच्यते, तदोत्तरपदार्थस्य विशेषणत्वं विशेष्यत्वं पूर्वपदार्थस्य ॥ अथवा वृत्तिविषये द्व्यादयः संख्यानमात्रे वर्तन्त इति यमुनयोर्द्वित्वमित्यत्रार्थे द्वियमुनशब्दो वर्तत इति भवत्येव पूर्वपदार्थप्राधान्यम् ॥

( उद्द्योतः ) ननु पूर्वपदार्थप्राधान्ये एवाव्ययीभाव इत्यत्र न मानमत आह—पूर्वाचार्येति ॥ गुरुसंज्ञया प्रकृतार्थलाभं दर्शयतीत्यर्थः ।

१ स्वोपादानेत्यादिः । ( र. ना. ) २ इदं संबध्यते इत्यस्य कर्तृ । ( र. ना. ) ३ समस्यमानपदेत्यादिः । एवकारेण समाससंज्ञाव्यवच्छेदः । ( र. ना. ) ४ द्वे इरावत्यौ यस्मिन्निति विग्रहः । ( र. ना. ) ५ अष्टाध्यायीकृतपरत्ववतोऽ- ... पीत्यर्थः । ( र. ना. ) ६ द्विपदार्थपरिच्छेदकत्वादिति भावः । ( र. ना. ) ७ 'सात्रेपि' ।

यति—यदुपाधीनामिति । उपाधिश्चात्र तत्तदर्थप्रधानत्वमेव । एवं च तत्कृतमहासंज्ञयाचार्येण व्यवहारात्तदुक्तार्थोस्यानुमत इति ज्ञायत इति भावः ॥ समाह्रियमाणार्थः समाहार इति । समाहारशब्दः कर्मव्युत्पन्न एवेत्यर्थः ॥ तदोत्तरपदार्थस्येति । ननु परिच्छेदकत्वरूपं विशेषणत्वं परिच्छेद्यत्वरूपं विशेष्यत्वं यद्यपि तत्रायाति, तथापि विषयताविशेषरूपं तत्पूर्वपदार्थस्य दुर्लभम्, गुणद्रव्ययोर्द्रव्यस्यैव विशेष्यत्वात् ॥ पूर्वपदार्थप्राधान्यमित्यादौ च प्राधान्यं विषयताविशेषरूपविशेष्यत्वमेव विवक्षितमन्यत्र सर्वत्र तस्यैव संभवादित्यरुचेराह—अथवेति । इदमपि प्रौढिवादः । पञ्चनदीसमूहस्य पञ्चतोत्यन्तभेदाभावात्पूर्वपदार्थप्रधानत्वमपि [तत्र] वक्तुं शक्यम् । अत्र[8?] तु न तत्सम्भवोपीति भाष्याशय इति तत्त्वम् ॥

( आक्षेपभाष्यम् )

**ननु च यद्येनोच्यते स तस्यार्थो भवति । अत्र च वयमेताभ्यां पदाभ्यामेतमर्थमुच्यमानं पश्यामः ॥**

( प्रदीपः ) इदानीं चोदकोन्यपदार्थमाक्षिपति—ननु चेति । अयं भावः—द्वीरावतीक इति देशविशेषोभिधीयते । स च पूर्वोत्तरपदयोः सहितयोरर्थ इति द्वाभ्यामप्यसौ व्यपदिश्यते । ततः पूर्वपदार्थत्वाद्देशस्य तस्य प्राधान्यात् प्राप्नोत्यव्ययीभावः ॥

( उद्द्योतः ) द्वाभ्यामप्यसाविति । इयमपि रीतिर्द्वियमुनमित्यादौ वक्तुं युक्ता ॥

( आक्षेपबाधकभाष्यम् )

**एतदेव न जानीमः—यद्येनोच्यते स तस्यार्थ इति ॥ अपि चान्यपदार्थप्रधानता न कल्पेत—चित्रगुः शबलगुरिति । किं कारणम्? । अत्रापि हि वयमेताभ्यां शब्दाभ्यामेतमर्थमुच्यमानं पश्यामः ॥**

( प्रदीपः ) एतदेवेति सिद्धान्तवादी । अस्याभिप्रायः—समासेनान्यपदार्थः प्रतीयते, नतु पूर्वोत्तरपदाभ्याम् । तयोरन्वयव्यतिरेकाभ्यामर्थान्तराभिधायित्वावधारणात् । तथा हि—द्विशब्दो द्वित्वावच्छिन्नं संख्येयमात्रमाह, न देशम्; इरावतीशब्दोपि नदीविशेषमाह, न देशमिति द्विशब्दो देशस्यावाचक इति कथं पूर्वपदार्थप्राधान्यमभिधीयते ॥ अपि चेति । त्वत्पक्षाभ्युपगमो दोषवानित्यर्थः ॥

( उद्द्योतः ) भाष्ये—एतदेवेति । यद्येनोच्यते इत्यादिन्यायेन यत्पूर्वपदार्थप्राधान्यमुक्तं एतदेव न जानीमः, अत्र न पश्याम इत्यक्षरार्थः । तदेवाह—समासेनेति ॥ दोषवानिति । त्वद्रीत्या चित्रग्वादावपि समस्यमानपदाभ्यामेवार्थप्रतीतेर्वास्तवबहुव्रीहावप्यन्यपदार्थप्राधान्यं भज्येतेत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**यद्यप्येताभ्यां पदाभ्यामेषोर्थ उच्यते, अन्यपदार्थोपि[10] तु गम्यते । तत्रान्यपदार्थाश्रयो बहुव्रीहिर्भविष्यति ॥**

**इहापि तर्हि यद्यप्यन्यपदार्थो[11] गम्यते, स्वपदार्थोपि[12] गम्यते । तत्र स्वपदाश्रयोऽव्ययीभावः प्राप्नोति ॥**

(प्रदीपः) चोदकश्चोद्यमुद्भावितं परिहरति—यद्यपीति ॥ स एव परस्य चोद्यमापादयति—इहापीति—प्राप्नोतीत्यन्तम् । अयमभिप्रायः—पूर्वपदोत्तर[13]पदव्यतिरेकेण समासाभावात् तयोरेव समुदितयोर्देशोर्थ इति पूर्वोक्तन्यायेन पूर्वपदस्याप्यसावर्थ इति प्राप्नोत्येवाव्ययीभावः ॥

( उद्द्योतः ) भाष्ये—अन्यपदार्थोपि त्विति । विग्रहवाक्येन्यपदेन प्रतीयमानस्येह समासेन प्रतीयमानत्वादित्यर्थः ॥ सिद्धान्त्युक्तित्वासंभवात् इहापि तर्हीति भाष्ये तर्हिशब्द एवमर्थे । तद् ध्वनयन्नाह—स एव परस्येति ॥ केचित्तु देशस्यान्यपदार्थत्वेपि तद्देशस्वरूपे त्रीरावतीरूपस्वपदार्थस्याप्यन्तर्भावात् तस्य[15] च त्रिपदार्थानतिरेकेणान्यपदार्थघटकतया पूर्वपदार्थस्य समाहारे इव यथाकथंचित्प्रधानत्वसत्त्वाद्दुर्वारोऽव्ययीभाव इति भाष्यार्थमाहुः ॥

( समाधानभाष्यम् )

**एवं तर्हीदमिह संप्रधार्यम्—अव्ययीभावः क्रियतां बहुव्रीहिरिति । बहुव्रीहिर्भविष्यति विप्रतिषेधेन ॥**

( प्रदीपः ) एवं तर्हीति । पुरस्तादपवादन्यायेनायं द्विगुमेव बाधते । बहुव्रीहिणा तु परत्वाद्बाध्यते । शेषग्रहणञ्च तत्र प्रत्याख्यातम् । त्रिकापेक्षो वा शेषः ॥

( उद्द्योतः ) शेषग्रहणं चेति । अन्यथा तयोः पदयोरुक्तसमाससत्त्वाद्बहुव्रीहिर्न स्यादिति भावः ॥

( पूर्वपक्षिभाष्यम् )

**भवेदेक[16]संज्ञाधिकारे सिद्धम्, परं[17]कार्यत्वे तु न सिद्ध्यति । आरम्भसामर्थ्यादव्ययीभावः प्राप्नोति, परंकार्यत्वाच्च बहुव्रीहिः ॥**

( उद्द्योतः ) भाष्ये भवेदेकसंज्ञाधिकार इति । बाध्यविशेषचिन्तायामिति शेषः ॥ परंकार्यत्वे तु न सिध्यतीति । तत्र हि पाठे पूर्वयाऽनवकाशया बाधे प्राप्ते परविधानार्थमिदम् । एवं च समाहारेपि द्विगुः सामर्थ्यादव्ययीभावश्चेत्येष्टव्यम् । एवं च पुरस्तादपवादन्यायाभावेन द्विग्वव्ययीभाववदन्यपदार्थविषये बहुव्रीह्यव्ययीभावावपि स्यातामिति भावः ॥

---

१ पूर्वाचार्यकृतमहासंज्ञया पाणिनिना व्यवहारादित्यर्थः। (र.ना.) २ B.A.S. मुद्रितपुस्तकशोधकेन तु प्रतीकत्वमस्य न ज्ञातमिति बोध्यम्। ३ त्रिशेष्यत्वमित्यर्थः । ( र. ना. ) ४ 'प्रधान' इति मुद्रयता B. A. S. पुस्तकशोधकेन भाष्यं नैवालोकितमिति प्रतीयते । ५ वृत्तिविषये द्व्यादीनां संख्यानमात्रे वृत्तौ मानाभावादिति भावः । ( र. ना. ) ६ तर्हि को भाष्याशय इत्यत आह–पञ्च नदीत्यादि । ( र. ना. ) ७ द्वीरावतीक इत्यादावित्यर्थः । ( र. ना. ) ८ अत्रेति शपः । (र.ना.) ९ 'तस्या' । १० 'ऽपि ग' । ११ 'पदार्थोत्र गम्य'। १२ 'दार्थोऽपि तु ग' । १३ 'पूर्वोत्तर' । १४ काशी B. A. S. मुद्रितपुस्तकयोस्तु 'तत्रच' इति शोधितमिव प्रतीयते । १५ प्रथमाविभक्तिरूपत्रिकापेक्ष इत्यर्थः । ( र. ना. ) १६ आकडारादेका संज्ञेति पाठे इति भावः । ( र. ना. ) १७ प्राक् कडारात्परं कार्यमिति पाठे इति भावः । ( र. ना. )

( सिद्धान्तिभाष्यम् )

परंकार्यत्वे च न दोषः । नदीभिः संख्यायाः समाहारेऽव्ययीभावो वक्तव्यः । स चावश्यं वक्तव्यः । सर्वैमेकनदीतरे ॥ नदीभिश्च ॥ १९ ॥

( प्रदीपः ) एकनदीतर इति । यदि समाहारग्रहणं न क्रियते तदा पुरस्तादपवादा इत्यनेन न्यायेनायं समासः पूर्वकालैकेति समासं बाधेत, समाहारे तु परत्वाद्द्विगुः स्यात् । ततश्चैकनदीत्यत्राव्ययीभावे कृते तन्निबन्धनो नदीपौर्णमास्याग्रहायणीभ्य इति वा टच् प्राप्नोति नपुंसकत्वं च यत्तु गोदावर्याश्च नद्याश्चेत्यच्‌समासान्तः सोऽचप्रत्ययवेत्यत्र योगविभागेन क्रियते स चेष्टप्रसिद्ध्यर्थं इति तत्पुरुषे प्रयोगादर्शनादेकनदीत्यत्र न प्रवर्तते । अव्ययीभावे तु पञ्चनदमित्यत्र भवत्येव । एकापूपीवत्समाहारविवक्षायामेकनदमेकनदीति भवतीत्याहुः ॥ १९ ॥

( उद्द्योतः ) भाष्ये—सिद्धान्त्याह—नदीभिः संख्यायाः समाहार इति । परंकार्यमिति पाठे द्विगोः परत्वाव्ययीभावप्रकरणं कार्यमित्यर्थः । एवं च द्विगुविषये न दोषः, अन्यपदार्थे तु प्राप्तिरेव नेति भावः ॥ स चावश्यमिति । एका संज्ञेति पाठेपि समाहार इत्यवश्यं वाच्यमित्यर्थः ॥ भाष्ये तत्फलमाह—सर्वैमेकनदीतरइति । तदभावे पुरस्तादितिन्यायेन पूर्वकालैकेति बाधित्वात्रैवाव्ययीभावः स्यात् । तथा च तत्प्रयुक्तं सर्वं टच् नपुंसकत्वं चात्र स्यादिति भावः ॥ सर्वैमेकनदीतर इति कस्यचित्पचस्य शेष इति बहवः । तॄधातोस्तर इति रूपम् ॥ तीर इति कचित्पाठः ॥ इत्यत्र भवत्येवेति । नदीपौर्णमासीति टजिति शेषः ॥ एकापूपीवत् समाहारेति । प्रत्यवयवमपूपत्वारोपेणेत्यर्थः ॥ भवतीत्याहुरिति । अत्रारुचिबीजं तद्वदत्र समाहारविवक्षायां मानाभाव इति ॥ १९ ॥

इति समासप्रकरणेऽव्ययीभावप्रकरणम् ॥

( अथ तत्पुरुषप्रकरणम् )

( २३६ द्विगोस्तत्पुरुषसंज्ञासूत्रम् ॥२।१।२ आ. १५ सू० )

## ३७१ द्विगुश्च ॥ २।१।२२ ॥

( आक्षेपभाष्यम् )

द्विगोस्तत्पुरुषत्वे कानि प्रयोजनानि ? ॥

( १२४५ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् ॥ * ॥

( व्याख्याभाष्यम् )

द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजयन्ति—पञ्चगवं दशगवं पञ्चराजं दशराजम् ॥ द्विगुश्च ॥२२

( प्रदीपः ) द्विगुः ॥२२॥ समासान्ता इति । यद्यपि टजचावेव तत्पुरुषनिबन्धनौ पञ्चगवं व्यङ्गुलमिति, तथापि प्रकृतिभेदाद्बहुवचननिर्देशः ॥ पञ्चराजमिति । अकारान्तोत्तरपदत्वाभावात् स्त्रीत्वाभावः । यदा तु समासार्थोत्तरपदान्ताः समासान्ता इति पक्षस्तदा तु पात्रादित्वात् स्त्रीत्वाभावः ॥२२॥

( उद्द्योतः ) द्विगुश्च ॥ २२ ॥ पात्रादित्वादिति । वस्तुत उत्तरपदावयवत्वपक्षो नास्त्येव, अन्त इति सूत्रस्थभाष्यविरोधादिति समासान्ता इति शब्देन्दुशेखरे स्पष्टं निरूपितमस्माभिः ॥ २२ ॥

( २३७ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. १६ सू. )

## ३७२ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २।१।२३ ॥

( न्यूनतापूर्त्यधिकरणम् )

( १२४६ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ॥ * ॥

( व्याख्याभाष्यम् )

श्रितादिषु गमिगाम्यादीनामुपसंख्यानं कर्तव्यम् । ग्रामं गमी ग्रामगमी ग्रामं गामी ग्रामगामी ॥

( प्रदीपः ) द्वितीया ॥ २३ ॥ गमिगाम्यादीनामिति । औणादिकानामन्येषां च संग्रहार्थमुभयोरुपादानम् ॥ ग्रामगमीति । गत्यर्थकर्मणीत्यत्र द्वितीयाग्रहणमपवादविषयेपि विधानार्थमिति कृत्प्रयोगे द्वितीयैव भवति इति षष्ठ्याः प्राप्तिरेव नास्तीति ये तस्या अकेनोरिति प्रतिषेधं वर्णयन्ति ते पूर्वापरविस्मरणशीलत्वादुपेक्ष्याः ॥ भाष्यकारेण तु गत्यर्थसूत्रस्य प्रत्याख्यानात् कृत्प्रयोगे षष्ठ्येवेष्यत इति तद्दर्शने सौत्रः षष्ठीनिषेधः ॥

( उद्द्योतः ) द्वितीयाश्रिता ॥ २३ ॥ गमिशब्दो गमेरिनिरित्यौणादिकः । गामीति वृद्धिर्बाहुलकात् ॥ अन्येषां चेति । सनाशंसेत्युप्रत्ययादीनामित्यर्थः । ओदनं बुभुक्षुः ओदनबुभुक्षुरित्युदाहरणम् ॥ उभयोरपि उणादिप्रत्ययान्तत्वेन कथमुभयोपादानेनान्येषां चेत्यर्थलाभ इति चिन्त्यम् । तस्मादादिग्रहणस्य प्रकारार्थत्वेन व्याख्यानादेतदर्थलाभो बोध्यः । उभयोपादानं तु स्पष्टार्थमेवेति परे ॥ पूर्वापरेति । गत्यर्थकर्मणीतिसूत्रस्यैतत्सूत्रस्ययोरित्यर्थः । नास्तीत्यन्तो गत्यर्थसूत्रस्थः । अकेनोरिति प्रतिषेध इत्यत्रत्यः । प्राप्तिरेव नास्तीति वदन्तो येऽत्र सूत्रे तस्याः प्रतिषेधं वर्णयन्ति ते इत्यन्वयः ॥ सौत्रइति । अकेनोरिति सूत्रविहित इत्यर्थः । एवं च गत्यर्थकर्मणीति सूत्रस्थो ग्रन्थो वृत्तिकृतो भाष्यविरुद्धोपीति तात्पर्यम् ॥

---

१ ननु तत्पुरुषेऽपि एकनदमित्येव भवति, गोदावर्याश्चेत्यादिना समासान्तस्याचःस्वीकारात्तथा चाव्ययीभावेऽपि टजभावे पक्षेऽचः स्वीकारेणाव्ययीभावे तत्पुरुषे वा को विशेषो यदर्थं प्रकृते समाहारग्रहणं क्रियते इत्याशङ्क्याह—यत्तु इत्यादि । प्रयोगादर्शनादिति । एकनदमिति प्रयोगादर्शनादित्यर्थः । तथा च तत्पुरुषे एकनदीति प्रयोगसिद्ध्यर्थं प्रकृते समाहारग्रहणं कर्तव्यमिति भावः । ( र. ना. ) २ नदीपौर्णमासीति विकल्पविहितटचेति भावः । ( र. ना. ) ३ अन्यथा घरूपेति ह्रस्वः स्यादिति भावः । ( र. ना. ) ४ 'निषेध' ।

( तत्पुरुषविधानानर्थक्यपरिहाराधिकरणम् )

( १२४७ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ श्रितादिभिरहीने द्वितीयासमासवचनानर्थक्यं, बहुव्रीहिकृतत्वात् ॥ * ॥

( व्याख्याभाष्यम् )

श्रितादिभिरहीनवाचिन्या द्वितीयायाः समासवचनमनर्थकम् ॥ किं कारणम्? । बहुव्रीहिकृतत्वात् । इह—यः कष्टं श्रितः, कष्टमनेन श्रितं भवतीत्ति तत्र बहुव्रीहिणा सिद्धम् ॥

( प्रदीपः ) श्रितादिभिरिति । यः कष्टं श्रितः कष्टमनेन श्रितमिति बहुव्रीहिणैव विवक्षितार्थावगमादर्थरूपस्वरभेदाभावात् तत्पुरुषो न विधेय इत्यर्थः ॥ अहीनवाचिन्या इति । यः कष्टं श्रितः कष्टं तेन न हीनमित्यर्थ इति भावः । श्रयतिर्ह्यत्र गतौ वर्तत इति गत्यर्थत्वात् कर्तरि क्तः । ततः श्रितपतितगतैः समासोयं न विधेयः । अतीतादिभिस्तु स्वरसिद्ध्यर्थो विधेयः । तर्हि तत्पुरुषे सति थाथादिस्वरेण भाव्यम्, अतीतात्यस्तयोरहीन इति निषेधात्, प्राप्तापन्नयोरहीने द्वितीयानुपसर्ग इति निषेधात् पूर्वपदप्रकृतिस्वरो नास्ति । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यम् । यदा तु जातिकालसुखादीनि पूर्वपदानि तदा तत्रापि बहुव्रीहितत्पुरुषयोः स्वरभेदाभावः ॥ बहुव्रीहिकृतत्वादिति । बहुव्रीहिणा रूपस्य साधितत्वादित्यर्थः ॥

( उद्द्योतः ) भाष्ये—अहीनेद्वितीयेति ॥ अहीनवाचकद्वितीयान्तस्येत्यर्थः ॥ विवक्षितार्थावगमादिति । कष्टकर्मकश्रयणकर्तृत्वविशिष्टोर्थ उभाभ्यामपि प्रतिपाद्यत इत्यर्थः । बहुव्रीहौ श्रितादीनां पूर्वनिपातः स्यादिति तु न शङ्क्यं, तत्प्रकरणानित्यत्वादिति बोध्यम् ॥ तेन न हीनमिति । न त्यक्तमित्यर्थः । यथा कान्तारमतीतेन कान्तारः ॥ अतीतात्यस्तयोरिति । यो हि कान्तारमतीतोत्यस्तो वा तेन कान्तारो हीनो भवतीति द्वितीयान्तस्य हीनवाचित्वादित्यर्थः । यद्यप्यत्राप्यनुपसर्ग इति निषेधोप्यस्ति तथाप्ययमप्यस्तीति अयमेवोक्तः ॥ यदा त्विति । वाजातादिष्विति वक्ष्यमाणत्वादिति भावः ॥ ननु समासवचनपक्षकानर्थकत्वानुमाने बहुव्रीहिकृतत्वहेतुर्व्यधिकरणेत आह—बहुव्रीहिणेति । एवं च बहुव्रीहिसिद्धस्यसाध्यरूपकत्वादिति हेतुरिति भावः ॥

( १२४८ बहुव्रीहिवादिवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अहीने द्वितीयास्वरवचनानर्थक्यं च ॥ * ॥

( व्याख्याभाष्यम् )

अहीने द्वितीया पूर्वपदं प्रकृतिस्वरं भवतीत्येतत् स्वरवचनमनर्थकम् ॥ किं कारणम्? । बहुव्रीहिकृतत्वादेव ॥

( उद्द्योतः ) भाष्ये—इत्येतत्स्वरवचनमिति । एतदर्थप्रतिपादकं स्वरस्य वचनमहीने द्वितीयेति सूत्रमित्यर्थः ॥

( १२४९ तत्पुरुषवादिवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ जातिस्वरप्रसङ्गस्तु ॥ * ॥

( व्याख्याभाष्यम् )

जातिस्वरँस्तु प्राप्नोति—ग्रामगतः अरण्यगत इति "जातिकालसुखादिभ्योनाच्छादनात् कोऽकृतमितप्रतिपन्ना" इति ॥

( प्रदीपः ) जातिस्वरप्रसङ्ग इति ॥ यदि बहुव्रीहिरेव क्रियेते तदा जातिकालेत्यन्तोदात्तत्वं प्राप्नोतीत्यर्थः ॥

( उद्द्योतः ) अन्तोदात्तत्वमिति । तदेवेत्यर्थः । इष्यते तु समासभेदेन स्वरद्वयमिति भावः ॥

( १२५० बहुव्रीहिवादिवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ तत्र जातादिषु वावचनात्सिद्धम् ॥ * ॥

( व्याख्याभाष्यम् )

यदेतद् "वा जाते" इति, एतद् "वा जातादिपु" इति वक्ष्यामि । इमे जातादयो भविष्यन्ति ॥

( प्रदीपः ) बहुव्रीहिवादी स्वरदोषं परिहरति—तत्रेति ॥ "वा जाते" इति न्यासमपास्य वा जातादिष्विति वक्ष्यते, तेन पक्षे अन्तोदात्तत्वं पक्षे पूर्वपदप्रकृतिस्वरत्वमिति स्वरद्वयसिद्धिः ॥ इमे इति । श्रितगतपतितशब्दाः । ततश्चाहीने द्वितीयेति न वक्तव्यमिति लाघवं भवति ॥

( आक्षेपभाष्यम् )

ननु च भेदो भवति—बहुव्रीहौ सति समासान्तोदात्तत्वेनापि भवितव्यं पूर्वपदप्रकृतिस्वरत्वेनापि । तत्पुरुषत्वे सति पूर्वपदप्रकृतिस्वरत्वेनैव ॥

( प्रदीपः ) तत्पुरुषवाद्याह—ननु चेति ॥

( आक्षेपबाधकभाष्यम् )

नास्ति भेदः । योपि हि तत्पुरुषमारभते, न तस्य दण्डवारितो बहुव्रीहिः । तत्र तत्पुरुषे सति द्वौ समासौ द्वौ स्वरौ, बहुव्रीहौ सति एकः समासो द्विस्वरत्वम् ॥

( प्रदीपः ) बहुव्रीहिवाद्याह—नास्ति भेद इति ॥ द्वौ स्वराविति । तत्पुरुषे अहीने द्वितीयेति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ जातिकालेत्यन्तोदात्तत्वम् ॥ द्विस्वरत्वमिति । वा जातादिष्विति सूत्रन्यासेन ॥

१ कष्टं श्रितं येनेति तृतीयान्तार्थे बहुव्रीहिरित्यर्थः । ( र. ना. ) २ अर्थस्य, रूपस्य, स्वरस्य च भेदाभावादित्यर्थः । द्वितीयासमासे बहुव्रीहौ वा पूर्वपदप्रकृतिस्वरस्यैवेष्टत्वादिति भावः । (र. ना.) ३ अयं वैधर्म्ये दृष्टान्तः । (र.ना.)

४ B. A. S. मुद्रितपुस्तकेपि काशीमुद्रित एव '–नुमानेन' इति पाठो रक्षितः । ५ द्वितीयान्तमित्यर्थः । ( र. ना. ) ६ 'तत्र' । ७ 'स्वरप्रसङ्गस्तु' । ८ 'क्रियते जाति' । ९ 'तद्' । १० 'एकसमासो' ।

( तत्पुरुषसाधकज्ञापकवादिभाष्यम् )

**एवं तर्हि सिद्धे सति यत्तत्पुरुषं शास्ति, तज्ज्ञापयत्याचार्यः 'समानार्थे केवलं विग्रहभेदाद्यत्र तत्पुरुषः प्राप्नोति बहुव्रीहिश्च, तत्र[1] तत्पुरुष एव भवति'। किमेतस्य ज्ञापने प्रयोजनम्?। राज्ञः सखा राजसखः, राजा सखा अस्येति बहुव्रीहिर्न भवति॥**

( प्रदीपः ) **एवं तर्हीति**। ततश्च बहुव्रीह्यभावात् कष्टश्रित इत्यादावहीने द्वितीयेति पूर्वपदाद्युदात्तत्वं भवति। निष्ठा च द्व्यजनादित्याद्युदात्तत्वात् कष्टशब्दस्य। न तु जातिलक्षणबहुव्रीहिनिबन्धनमन्तोदात्तत्वम्। अव्यविकन्यायश्चानेन ज्ञापकेन स्मारितः॥ **राज्ञः सखेति**। सख्यस्योभयाधिष्ठानत्वाद्राजा सखास्येत्ययमर्थोन्तर्भूत इति बहुव्रीहिः स्यात् अस्मात्तु ज्ञापकान्न भवति॥

( उद्योतः ) **पूर्वपदाद्युदात्तत्वमिति**। तदेवेत्यर्थः॥ **अन्तोदात्तत्वमिति**। तदपीत्यर्थः॥ **अव्यविकेति**। अवेर्मांसमिति विग्रह एव अविकादेव च प्रत्ययोत्पत्तिराविकमिति, तथा कष्टं श्रितमनेनेति वाक्यमेव। कष्टं श्रित इति विग्रहे एव समास इत्यर्थः॥ ननु राज्ञः सखेत्यस्य राजनिरूपितसखित्ववानर्थः। बहुव्रीहौ राजाऽभिन्नसखिसंबन्धीति बोधेऽन्यनिरूपितं सखित्वं राजनि प्रतीयते इति समानार्थकत्वाभावात् कथं पूर्वोक्तज्ञापकेनात्र समासाभाव इत्यत आह—**सख्यस्योभयेति**॥

( बहुव्रीहिसाधकापवादवादिभाष्यम् )

**नैतज्ज्ञापकसाध्यम्॥ 'अपवादैरुत्सर्गा बाध्यन्ते' इति[2] बाधकेनानेन भवितव्यं सामान्यविहितस्य विशेषविहितेन॥ अथ[3] न सामान्यविहितः॥**

( प्रदीपः ) अत्र कश्चिदुत्सर्गापवादन्यायेन बहुव्रीह्यभावं मन्यमान आह—**नैतदिति**। अर्थाभेदे बहुव्रीहौ प्राप्ते तत्पुरुषस्यारम्भात्॥ ज्ञापकवाद्यपवादवादिनोश्चात्राहोपुरुषिकैव। तत्पुरुषारम्भे बहुव्रीहिबाधलक्षणं तु फलं न भिद्यते॥ **विशेषविहितेनेति**। श्रिताद्युपादानेन विधानादस्य विशेषविहितत्वम्॥ **अथ नेति**। कष्टं श्रित इति स्वपदार्थे तत्पुरुषविधानात्तत्र च बहुव्रीहेरप्राप्तत्वान्नास्ति सामान्यविहितत्वम्। अन्त[4]र्भूतश्चार्थो न शब्दसंस्कारे निमित्तं किन्तु शब्दवाच्य एव॥

( उद्योतः ) कश्चिदुत्सर्गापवादभावं मन्यमानो ज्ञापकं दूषयति—**नैतज्ज्ञापकेति**। एतत् उक्तं वस्तु ज्ञापकसाध्यं न ज्ञापकत्वस्यैवासम्भवादित्यर्थः। एवं च श्रितादिविषयतत्पुरुषेणानवकाशतया बहुव्रीहिबाधे कष्टश्रितादौ पूर्वपदाद्युदात्तत्वमेवं[5] भवति। एवं च राजा सखास्येति विग्रहे बहुव्रीहिः स्यादेव, षष्ठीति शास्त्रस्य राजपुरुषादौ सावकाशत्वेन बहुव्रीहिबाधकत्वाभावादिति भावः। किं च उभयोश्चरितार्थयोः परत्वाद्बहुव्रीहिरेव स्यात्, षष्ठीतत्पुरुषो न स्यादेव। टज्विधानं तु सुन्दरसख इत्यादौ कर्मधारये चरितार्थमित्याशयः॥ एवं च ज्ञापकवाद्यपवादवादिनोरत्राहोपुरुषिकैव। तत्पुरुषारम्भे बहुव्रीहिबाधलक्षणं तु फलं न भिद्यते इति कैयटाशयश्चिन्त्यः॥ **स्वपदार्थे तत्पुरुषेति**। स्वपदार्थप्रधानविग्रह इत्यर्थः। बहुव्रीहिस्तु नैवंविधे विग्रहे, किन्तु कष्टं श्रितमनेनेति विग्रहे॥ एवं च विषयभेदान्न सामान्यविहितत्वं बहुव्रीहेरिति भावः॥ ननु कष्टं श्रित इत्यत्र बहुव्रीहिविग्रहार्थोऽप्यन्तर्भूत इत्यत आह—**अन्तर्भूतश्चार्थ इति**॥

( तत्पुरुषसाधकसिद्धान्तिभाष्यम् )

**यदुच्यते—बहुव्रीहिकृतत्वादिति॥ एतदयुक्तम्। अस्ति खल्वपि विशेषो बहुव्रीहेस्तत्पुरुषस्य च॥**

( प्रदीपः ) **यदुच्यत इति**। अर्थभेदात् श्रितादिग्रहणं कृतमिति भावः॥ ननु कष्टश्रित इति समासप्रयोगे लोके विग्रहवाक्याप्रयोगात् तात्पर्याभेदादस्ति बहुव्रीहिकृतत्वमित्याशङ्क्याह—**अस्ति खल्वपीति**॥

( उद्योतः ) **अर्थभेदादिति**। एवं च सूत्रसार्थक्यात् स्वदीयज्ञापकत्वमप्यसंगतमिति भावः॥ **लोके विग्रहेति**। समासप्रयोगे कर्तव्ये लोके विग्रहवाक्यस्याप्रयोगात्तत्पुरुषत्वबहुव्रीहित्वानवगमादिति भावः॥ अर्थद्वयबोधेप्याह—तात्पर्येत्यादि। एवं च ज्ञापकत्व[6]वादिनोपवादत्ववादिनश्च खण्डनायास्तिखल्वपीत्यादि सिद्धान्तिनो ग्रन्थ इति भावः॥

( आक्षेपभाष्यम् )

**किं शब्दकृत,: अथार्थकृतः?॥**

( प्रदीपः ) पूर्वोक्तेन न्यायेनार्थरूपस्वरेषु विशेषमपश्यन् पृच्छति—**किमिति**॥

( समाधानभाष्यम् )

**शब्द[7]कृतश्चार्थकृतश्च। शब्दकृतस्तावद्-बहुव्रीहौ सति कपा भवितव्यम्। तत्पुरुषे सति न भवितव्यम्॥ अर्थकृत[8]ः—तत्पुरुषे सति रुहादीनां क्तः कर्तरि भवति धात्वर्थस्यानपवर्गे—आरूढो वृक्षं देवदत्तः। बहुव्रीहौ व्यपवृक्ते कर्मणि भवति—आरूढो वृक्षो देवदत्तेनेति॥ अन्यथाजातीयकः खल्वपि प्रत्यक्षेणार्थसंप्रत्ययः, अन्यथाजातीयकः संबन्धाद्। राज्ञः सखा राजसखः। संबन्धादेतद्गन्तव्यम्—नूनं राजाप्यस्य सखेति॥ उभयं खल्वपीष्यते—स्व[9]स्ति 'सोमसखा', पुनरेहि[10] 'गवांसख' इति॥ द्वितीया श्रिता०॥ २३॥**

( प्रदीपः ) **बहुव्रीहाविति**। शेषाद्विभाषेत्यनेन कष्टश्रितक इति॥ **तत्पुरुष इति**। कष्टश्रित इत्यादौ॥ **रुहादीनामिति**। आदिशब्दः प्रकारे। तेन गत्यर्थादयोपि गृह्यन्ते॥ **धात्वर्थस्येति**। सर्वस्य धात्वर्थस्यानिष्ठितत्वेपि[11]

१ 'तत्पुरुषस्तत्र भवति'। २ न्यायमाश्रित्येति शेषः। ( र. ना. ) ३ अथवा बहुव्रीहिः सामान्यविहितोऽपि न भवति अप्राप्तत्वादित्यर्थः। अप्राप्तत्वाच्च स्वपदार्थे तत्पुरुषविधानाद् बोध्यम्। ( र. ना. ) ४ ननु कष्टं श्रित इति तत्पुरुषार्थे कष्टं श्रितमनेनेति बहुव्रीह्यर्थस्यापि अन्तर्भावादस्ति बहुव्रीहिप्राप्तिरित्याशङ्क्याह—अन्तर्भूतश्चेत्यादि। ( र. ना. ) ५ न तु पूर्वोक्तरीत्या बहुव्रीहिप्राप्त्यान्तोदात्तत्वमिति भावः। ( र. ना. ) ६ सूत्रसार्थक्याज् ज्ञापकत्वखण्डनमर्थभेदेनैव बहुव्रीह्यप्राप्त्याऽपवादत्वखण्डनमपीति भावः। ( र. ना. ) ७ 'कृतोऽर्थ'। ८ 'कृतस्तु'। ९ अस्तीति पाठो भाति। ( र. ना. ) १० पुनरेतीति क्वचित्पाठः। ( र. ना. ) ११ असमाप्तत्वेऽपीत्यर्थः। ( र. ना. )

तदेकदेशभूतत्वाश्रयेणारोहणक्रियाविशिष्टे एव वृक्षमारूढ इति शब्दशक्तिस्वाभाव्यादिदमभिधीयते । यथा बद्धो बन्धनमनुभवन्नेवोच्यते तथा कष्टश्रित इति कष्टमनुभवन्नेवोच्यते ॥ व्यपवृक्त इति । सर्वात्मना धात्वर्थे निष्ठित इत्यर्थः । यथा भुक्त ओदन इति भुजिक्रियायाः समाप्तौ प्रयुज्यते ॥ भेदान्तरमप्याह—अन्यथेति ॥ प्रत्यक्षेणेति । शब्दादव्यवधानेनेत्यर्थः । अव्यवधानोपलक्षणत्वात्प्रत्यक्षस्य ॥ ज्ञापकफलमपि निराकर्तुमाह—उभयमिति ॥ सोमसखेति । बहुव्रीहित्वात् समासान्ताभावः ॥ गवांसख इति । तत्पुरुषत्वात् समासान्तः, तत्पुरुषे कृति बहुलमिति षष्ठ्या आक्रोश इति वा षष्ठ्या अलुक् ॥ २३ ॥

( उद्योतः ) भाष्ये—बहुव्रीहौ सतीति । तस्मिन्नेवसतीत्यर्थः ॥ तत्पुरुषे सतीति । तस्मिन्नपि सतीत्यर्थः ॥ न भवितव्यमिति । पूर्वपदप्रकृतिस्वरसन्नियोगेन न भवितव्यमित्यर्थः ॥ तत्पुरुषारम्भे वा जातादिष्विलस्याभावाद्वामगत इत्यादावन्तोदात्तत्वमेव बहुव्रीहाविति पूर्वपदप्रकृतिस्वरसंनियोगेन न कदापि कप् । तदनारम्भे तु वा जातादिष्विलारम्भात्पक्षे बहुव्रीहावपि पूर्वपदप्रकृतिस्वरसत्त्वात्तत्संनियोगेनापि कबापत्तिरिति भावः ॥ कैयटोक्तोदाहरणे समासद्वयेपि पूर्वपदप्रकृतिस्वरसत्त्वात् कपो वैकल्पिकत्वाच्च न विशेष इति चिन्त्यम् ॥ भाष्ये—अर्थकृत इति । अर्थभेदे सत्येकेनापरस्य न गतार्थतेति भावः ॥ धात्वर्थस्यानपवर्ग इति । सर्वधात्वर्थासमाप्तौ धात्वर्थाविष्ट एव कर्तरि एकदेशस्य भूतत्वाश्रयेण क्तो भवति तत्पुरुषे । बहुव्रीहौ तु सर्वधात्वर्थसमाप्तौ धात्वर्थानाविष्टे कर्मण्येव क्त इति विशेष इत्यर्थः ॥ अन्यथाजातीय इति । शाब्दत्वाक्रान्त इत्यर्थः ॥ अन्यथाजातीयकः सम्बन्धादिति । आनुमानिक इत्यर्थः ॥ नन्वेवं राज्ञः सखाऽस्येति विग्रहे बहुव्रीहिः स्यादत आह—उभयं खल्वपीति ॥ २३ ॥

( २३८ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ० १७ सू० )

## ३७४ खट्वा क्षेपे ॥ २ । १ । २५ ॥

( उदाहरणनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

( प्रदीपः ) खट्वा ॥ २५ ॥ खट्वारूढ इत्यत्र क्षेपहेतोर्धर्मस्यानिर्देशात् क्रियाकारकसंबन्धमात्रावगमात् पृच्छति—किमुदाहरणमिति ॥

( समाधानभाष्यम् )

**खट्वारूढः ॥**

( प्रदीपः ) समासस्य क्षेपोर्थः स चात्रास्तीत्याह—खट्वारूढ इति ॥

( आक्षेपभाष्यम् )

**क्षेप इत्युच्यते । कः क्षेपो नाम ? ॥**

( समाधानभाष्यम् )

**अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या । य इदानीमतोऽन्यथा करोति स उच्यते खट्वारूढोयं जाल्मो नातिव्रतवान् ॥ खट्वा क्षेपे ॥ २५ ॥**

( प्रदीपः ) अधीत्येति । ब्रह्मचारिणा वेदाध्ययने निष्पादिते गृहस्थाश्रमः कर्तव्यः ॥ अन्यथेति । असमाप्तेऽध्ययने भूमिशयनार्हो यः खट्वारोहणं करोतीत्यर्थः । खट्वारोहणं चाविनयोपलक्षणार्थमित्याह—नातिव्रतवानिति ॥ २५ ॥

( उद्योतः ) खट्वा ॥ २५ ॥ अधीत्य स्नात्वेति । अधीत्य स्नात्वा चेत्यर्थः ॥ २५ ॥

( २३९ तत्पुरुषसंज्ञासूत्रम् । २ । १ । २ आ. १८ सू. )

## ३७७ अत्यन्तसंयोगे च ॥ २।१।२८ ॥

( १२५१ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ अत्यन्तसंयोगे समासस्याविशेषवचनात् क्तेन समासवचनानर्थक्यम् ॥ * ॥**

( व्याख्याभाष्यम् )

**अत्यन्तसंयोगे समासस्याविशेषवचनात् कान्तेन चाकान्तेन च, "कालाः क्तेन" इत्येतत्समासवचनमनर्थकम् । "अत्यन्तसंयोग" इत्येव सिद्धम् ॥**

( प्रदीपः ) अत्यन्त ॥ २८ ॥ काला इति पृथग्योगेन क्तान्तेन समासविधानं न कर्तव्यम् । काला अत्यन्तसंयोग इत्येक एव योगः कर्तव्यः । तत्र च क्तेनेत्यस्य निवृत्तत्वात् सर्वत्र समासः सिध्यतीति मत्वाह—अत्यन्तसंयोग इति ॥

( उद्योतः ) अत्यन्त ॥ २८ ॥ ननु काला इत्यस्याभावेऽत्र तल्लाभो न स्यादत आह—काला इति ॥ ननु क्तान्तेन समासार्थं तत्, अक्तान्तार्थं चेदमपीत्यत आह—तत्र चेति ॥

( १२५२ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अनत्यन्तसंयोगार्थं तु ॥ * ॥**

( व्याख्याभाष्यम् )

**अनत्यन्तसंयोगार्थं तर्हीदं वक्तव्यम् । षण्मुहूर्ताश्चराचराः । ते कदाचिदहर्गच्छन्ति कदाचिद्रात्रिम् । अहर्गताः । रात्रिगताः ॥**

( प्रदीपः ) चराचरा इति । चरन्तीत्यर्थः । चरिचलिपतिवदीनामच्याक्चाभ्यासस्येति द्विर्वचनमागागमश्च ॥ कदाचिदहरिति उत्तरायणे ॥ कदाचिद्रात्रिमिति दक्षिणायने । ततश्च षड्भिर्मुहूर्तैरह्नो रात्रेश्च नास्त्यत्यन्तसंयोगः ...

१ जातिकालसुखादिभ्य इत्यन्तोदात्तत्वमेवेत्यर्थः । ( र. ना. ) २ तत्पुरुषे 'अहीने द्वितीये'ति विहितेत्यादिः । ( र. ना. ) ३ कष्टश्रित इत्युदाहरणे इत्यर्थः । ( र. ना. ) ४ तत्पुरुषे 'अहीने द्वितीये'ति, बहुव्रीहौ तु 'बहुव्रीहौ' प्रकृत्या पूर्वपदमिति सूत्राभ्यामित्यर्थः । कष्टशब्दो न सुखादिषु पठितो नापि सुखादिराकृतिगण इति वामगत इत्यनेन साम्यशङ्का न कार्येति भावः । (र. ना.) ५ वेदानिति शेषः । ( र. ना. ) ६ अत्र स्नानेन समावर्तनसंस्कारो लक्ष्यते । (र.ना.) ७ भार्यया सहेत्यादिः । गृहस्थाश्रमः कर्तव्य इति फलितम् । (र.ना.) ८ अतिशयितव्रतवानित्यर्थः । (र. ना.) ९ काला इति सूत्रमित्यर्थः । (र.ना.)

न्तसंयोगः । क्रमेण च गच्छन्तः संकलय्य व्यपदिश्यन्ते । अथवैकदेशगमनाद् गच्छन्तीत्युच्यन्ते ॥

( उद्द्योतः ) अनत्यन्तसंयोगे क्तान्तार्थं काला इति, अत्यन्तसंयोगेऽक्तान्तार्थमिदमित्युत्तरम् ॥ षण्मुहूर्ता इति । तावत्पर्यन्तं हि दिनरात्रवृद्धिह्रासौ देश[1]विशेषे ॥ २८ ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । गतग्रहणादप्येतत्सिद्धम् ॥**

( प्रदीपः ) गतग्रहणादिति । द्वितीयाश्रितेत्यत्र निर्दिष्टात् ॥

( समाधानभाष्यम् )

**इदं तर्हि—अहरतिसृताः । रात्र्यतिसृताः । मासप्रमितश्चन्द्रमाः ॥ अत्यन्तसंयोगे च ॥ २८ ॥**

( प्रदीपः ) मासप्रमित इति । आदिकर्मणि कर्तरि क्तः । मासं परिच्छेत्तुमारब्धवानित्यर्थः । प्रतिपच्चन्द्रेण च मासस्यात्यन्तसंयोगाभावः ॥ २८ ॥

( २४० तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. १९ सू. )

## ३७८ तृतीया तत्कृतार्थेन गुणवचनेन ॥ २।१।२९ ॥

( तत्कृतार्थग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**तत्कृतार्थेनेति किमर्थम् ? ॥**

( प्रदीपः ) तृतीया त ॥ २९ ॥ तत्कृतार्थेनेति किमर्थमिति । अयं भावः—दध्ना पटुरित्यत्र यदि दधिकृतं पाटवं विवक्षितं, तदा भवितव्यं समासेन, विशिष्टद्रव्यसंस्कृतं दध्यपि पाटवं करोतीति तत्कृतत्वसंभवात् । अथ भोजनाद्यपेक्षो दध्नः करणभावो दध्ना भुङ्क्ते पटुरिति, तदा सामर्थ्याभावात्समासो न भविष्यति ॥

( उद्द्योतः ) तृतीया ॥ २९ ॥ केवलदध्नः पाटवजनकत्वं वैद्यकविरुद्धमत आह—विशिष्टद्रव्येति । शुण्ठिलवणादिरूपेत्यर्थः ॥

( समाधानभाष्यम् )

**दध्ना पटुः । घृतेन पटुः ॥**

( प्रदीपः ) दध्ना पटुरिति । अस्याप्ययं भावः—सर्वत्र क्रियाद्वारकेण संबन्धेन भवितव्यम् । ततश्चेहापि क्रियाद्वारकसंबन्धसंभवात् समासः स्यात् ॥

( उद्द्योतः ) सर्वत्र क्रियेति । उत्तरसूत्रे सदृशनिपुणादिग्रहणेन साक्षात्परस्परान्वये एतदप्रवृत्तिरिति भावः ॥ क्रियाद्वारकसंबन्धेति । भुजिक्रियाद्वारकेत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । असामर्थ्यादत्र न भविष्यति ॥ कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति । नहि दध्नः पटुना सामर्थ्यम् ॥ केन तर्हि ? । भुजिना । दध्ना भुङ्क्ते पटुरिति ॥**

( प्रदीपः ) असामर्थ्यादिति । यत्र साक्षात्सामर्थ्यं नास्ति दध्योदन इत्यादौ तत्र वचनसामर्थ्यात् प्रतीयमानक्रियाद्वारकसंबन्धाश्रयेण समासः । इह तु शङ्कुलया खण्ड इत्यादौ साक्षात्सामर्थ्यसंभवे वचनस्य सावकाशत्वाद्दध्ना पटुरित्यत्र न भविष्यति ॥

( उद्द्योतः ) यत्रेति । अन्नेन व्यञ्जनमित्यादिविषये ॥ साक्षात्सामर्थ्येति । खडि भेदने इत्यस्माद् घञि[2] निष्पन्नखण्डशब्दार्थक्रियायां करणत्वेनान्वयः ॥ सदृशादिग्रहणं च प्रपञ्चार्थमित्यभिमानः[3] ॥

( समाधानसाधकभाष्यम् )

**इहापि तर्हि न प्राप्नोति—शङ्कुला[4]खण्डः किरिकाण[5] इति । अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यम् ॥ केन तर्हि ? । करोतिना । शङ्कुलया कृतः खण्ड इति ॥**

( प्रदीपः ) इहापीति । खण्डशब्दस्य गुणोपसर्जनद्रव्यवाचित्वात् साक्षात् संबन्धाभावाच्छङ्कुलया अवश्यं क्रियापेक्षितव्या तामन्तरेण कारकत्वायोगात् ॥

( उद्द्योतः ) गुणोपसर्जनद्रव्येति[6] । खण्डशब्दो हि तत्र रूढः, नतु साध्यावस्थापन्नकारकान्वययोग्यक्रियोपसर्जनद्रव्यवाची, तादृशखण्डशब्देन तु कर्तृकरणेकृतेत्येव समासः सिद्ध इति भावः ॥ भाष्ये—किरिकाण इति । किरिः सूकरो रोगविशेषो वा ॥

( समाधानबाधकभाष्यम् )

**वचनाद्भविष्यति ॥**

( प्रदीपः ) वचनादिति । करोतिक्रियाकृतसंबन्धाश्रयेणेत्यर्थः ॥

( समाधानसाधकभाष्यम् )

**इहापि तर्हि वचनात्प्राप्नोति—दध्ना पटुः घृतेन पटुरिति[7] । तस्मात्तत्कृतार्थग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) इहापीति । परस्परसंबन्धाय चेत्सर्वत्र क्रिया व्यतिरिक्तापेक्ष्यते, तदात्रापि तदपेक्षसामर्थ्यसद्भावात् समासप्रसङ्ग इत्यर्थः ॥ परस्तात्तु तत्कृतार्थग्रहणं निराकरिष्यते ॥

(उद्द्योतः) व्यतिरिक्तेति । पूर्वपदोत्तरपदार्थव्यतिरिक्तेत्यर्थः ॥ तदपेक्षेति । भुजिद्वारकेत्यर्थः । कारकतृतीयातिरिक्ततृतीयान्ते तु

---

१ मुहूर्तपट्कस्य द्वादशघट्यात्मककालस्य चरपलसमूहरूपत्वे परमरात्रिदिनार्धस्य सप्तविंशतिघट्यात्मकत्वे चतुष्पञ्चाशद्घट्यात्मकत्वं परमरात्रिदिनमानस्य स्यात् । स च देशो दक्षिणोत्तरध्रुवाभिमुख ६५।२८।३० मिताक्षांशक एव भवेत् ॥ मुहूर्तपदस्य राशिपरत्वसंभवे तु सर्वदेशसाधारण एवायं व्यवहारः सिध्यति । सर्वत्रैव दिवा रात्रौ चाशीत्यधिकैकशत १८० संख्याकांशसमूहात्मकभचक्रार्धरूपराशिषट्कसंबन्धस्य पर्यायेण सत्त्वात् । २ कर्मणि क्तादि । (र. ना.)

३ अभिमानोक्तिस्तु 'कारकतृतीयातिरिक्ततृतीयान्ते तु नेदं प्रवर्तते' इत्यर्थे सदृशादिग्रहणज्ञापकत्वस्य वक्ष्यमाणत्वादिति । ( र. ना. ) ४ 'शङ्कुलयां खण्डः' । ५ 'किरिणा काण' । ६ खण्डत्वं भागत्वं तद्रूपगुणोपसर्जनद्रव्यवाचित्वादित्यर्थः । ( र. ना. ) ७ यत्र दध्ना कृतः पटुरिति न विवक्ष्यते किन्तु दधिहेतुकपटुत्ववानिति तत्रेत्यर्थः । ( र. ना. )

नेदं प्रवर्तते, उत्तरसूत्रे निपुणादिग्रहणाज्ज्ञापकादिति भावः ॥ भाष्ये—तत्कृतार्थग्रहणं कर्तव्यमिति । कृधात्वर्थद्वारके सामर्थ्ये एव यथा स्यान्नतु भुज्यादिद्वारके इत्येतदर्थमित्यर्थः ॥

( गुणवचनग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**गुणवचनेनेति किमर्थम्? ॥**

( प्रदीपः ) **गुणवचनेनेति किमर्थमिति ।** अयं भावः—जातेर्नित्यत्वात्तत्कृतत्वाभावाज्जातिवचनेन समासो न भविष्यति । क्रियावचनेन तु **कर्तृकरणे कृता बहुलमिति** भाव्यं समासेन । 'स्वभावसिद्धं च द्रव्यम्' इति तत्कृतत्वाभावाद् द्रव्यवाचिनापि न भविष्यति ॥

( उद्द्योतः ) स्वभावसिद्धमिति । शब्दशक्तिस्वभावेन सिद्धत्वेनैव घटादिपदाद् द्रव्यभानमिति तत्कृतत्वाभाव इति भावः । क्रियत इति पदान्तरसमभिव्याहारेण तु तत्र साध्यत्वप्रतीतिरित्यन्यत् । एवं च दण्डेन घट इत्यादौ दण्डहेतुको घट इत्येव बोधो न तु तत्कृतत्वप्रतीतिरिति तात्पर्यम् ॥

( समाधानभाष्यम् )

**गोभिर्वैपावान् । धान्येन धनवान् ॥**

( प्रदीपः ) **गोभिर्वैपावानिति ।** गोसंबन्धिदध्याद्युपयोगाद्वपावत्त्वमिति तत्कृतत्वमस्ति । वपावच्छब्दस्तु गुणवचनो न भविष्यति । यो हि गुणमुक्त्वा द्रव्यमभिधत्ते यथा शुक्लः पट इति शुक्लशब्दः स गुणवचनः । वपावच्छब्दस्तु सर्वदा वपासंबन्धविशिष्टं द्रव्यमाहेति नासौ गुणवचनः ॥

( उद्द्योतः ) भाष्ये—धान्येन धनवानिति । धान्येन हेतुना धनवत्त्वात्तत्कृतत्वमत्रापीति भावः ॥

( आक्षेपभाष्यम् )

**किं पुनरिहोदाहरणम्? ॥**

( प्रदीपः ) **किं पुनरिति ।** दध्ना जाड्यं घृतेन पाटवमित्यादौ केवलगुणवाचिना समासो नेष्यते । गुणोपसर्जनद्रव्यवचनस्तु द्रव्यवचनत्वाद् गुणवचनो न भविष्यतीति प्रश्नः ॥

( समाधानभाष्यम् )

**शङ्कुलाखण्डो देवदत्त इति ॥**

( उद्द्योतः ) शङ्कुलाखण्डो देवदत्त इति । शङ्कुलाकृतखण्डगुणको देवदत्त इत्यर्थः ॥

( आक्षेपभाष्यम् )

**कथं पुनर्गुणवचनेन समास उच्यमानो द्रव्यवचनेन स्यात्? ॥**

( समाधानभाष्यम् )

**इह "तृतीया तत्कृतार्थेन गुणेन" इतीयता सिद्धम् । सोयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत्प्रयोजनम्—एवं यथा विज्ञायेत—'गुणमुक्तवता गुणवचनेन' इति ॥**

( प्रदीपः ) **गुणेनेति ।** अर्थेन च समासासंभवाद् गुणवचनेन भविष्यति । तत्र वचनग्रहणाद् भूतकालपरिग्रहाद् गुणमुक्तवता संप्रति गुणोपसर्जनद्रव्यवाचिना समासो भवतीत्यर्थः ॥

( उद्द्योतः ) भूतकालेति । बाहुलकाद्भूते कर्तरि ल्युडिति भावः ॥ गुणमुक्तवतेति व्याचष्टे—संप्रतीति । तत्त्वं च केवलगुणवाचकत्वेनापि प्रसिद्धस्य यथा शुक्लादेः, पार्थक्येन गुणावाचिनो विशिष्टद्रव्यवचनस्यापि यथा पट्वादेः ॥

( आक्षेपभाष्यम् )

**कथं पुनरयं गुणवचनः सन् द्रव्यवचनः संपद्यते? ॥**

( प्रदीपः ) **कथं पुनरिति ।** नित्यत्वाच्छब्दार्थसंबन्धस्योपात्तार्थपरित्यागेनार्थान्तराभिधानं न संभवतीति प्रश्नः ॥

( समाधानभाष्यम् )

**आरभ्यते तत्र मतुब्लोपः—*गुणवचनेभ्यो मतुपो लुग्* इति । तद्यथा—शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः । एवं खण्डगुणः खण्डः ॥**

( प्रदीपः ) **आरभ्यत इति ।** अर्थभेदेन शब्दभेदात् सादृश्यनिबन्धनत्वाच्च प्रत्यभिज्ञायाः । एकत्वे वानेकशक्तियोगात् प्रयोगभेदेनानेकार्थसंबन्ध इति भावः ॥

( उद्द्योतः ) भाष्ये—गुणवचनेभ्यो मतुप इति । तत्रापि धर्ममात्रं गुण इति भावः ॥ यद्वेदमर्शआद्यच उपलक्षणम् ॥ नन्वर्थभेदेन शब्दैक्ये मतुपो लोपो व्यर्थोत आह—अर्थभेदेनेति ॥ नन्वेवं गुणमुक्तवतेत्युक्तं गुणवचनत्वमनुपपन्नमत आह—सादृश्येति ॥ अनेकशक्तीति । प्रकरणादितश्च तत्तच्छक्त्युद्बोध इति भावः ॥

( लाघवभाष्यम् )

**यद्येवं, नार्थस्तत्कृतार्थग्रहणेन । भवति हि शङ्कुलायाः खण्डेन सामर्थ्यम् । असामर्थ्याच्चात्र न भविष्यति दध्ना पटुर्घृतेन पटुरिति । तस्मान्नार्थस्तत्कृतार्थग्रहणेन ॥**

( प्रदीपः ) **भवति हीति ।** अव्यतिरिक्तकल्पान्तरङ्गप्रतीयमानसमासार्थान्तर्भूतकरोतिक्रियाद्वारकमिति भावः । दध्ना पटुरित्यत्र तु विपर्ययादसामर्थ्यात्समासाभावः ॥

( उद्द्योतः ) भाष्ये—यद्येवं नार्थस्तत्कृतार्थग्रहणेनेति । एवं, गुणवचनेनेत्यस्यात्र करणे । अयं भावः—तृतीयान्तं गुणवचनेन समस्यत इत्युक्ते गुणस्य जन्यतानियमेन तृतीयान्तार्थस्य तदुत्पत्तिप्रयोजकत्वेन च प्रत्यासत्त्या तृतीयान्तार्थकृतगुणवचनेनैव तृती-

---

1 शङ्कुलयाकृतः खण्डो गुणो यस्येत्यर्थः । शङ्कुलाखण्ड इत्यत्र कर्मणि घञिति भावः । ( र. ना. ) 2 गुणरूपार्थेनेत्यर्थः । ( र. ना. ) 3 आदिना संयोगविप्रयोगादि । ( र. ना. ) 4 काशीमुद्रितानुकारि Bengal Asiatic Society मुद्रितपुस्तके तु 'प्रयोजनक' इति मुद्रितस्यार्थश्चिन्त्यः । तदुत्पत्तिप्रयोजनकत्वेनेति पाठेऽपि गुणोत्पत्तिप्रयोजनकत्वेनेत्यर्थलाभात्फलत ऐक्येन चिन्त्यत्वोक्तिरेव चिन्त्येति वयम् । ( र. ना. )

यान्तस्य समासो भविष्यतीति दध्ना भुङ्क्ते पटुरक्ष्णा काण इत्यादौ न भविष्यतीति ॥ ननु तृतीयात्र सूत्रे न हेतौ, उत्तरसूत्रे निपुणश्लक्ष्णग्रहणात्। एवं च तृतीयान्तगुणवचनयोः साक्षात्सामर्थ्यासम्भवेन क्रियाद्वारकं तद् ग्राह्यम्। एवं च यतो दध्ना भुङ्क्ते अतः पटुरित्यर्थके दध्ना पटुरित्यादावपि स्यादत आह—अव्यतिरिक्तकल्पेति। गुणवचनतृतीयान्तयोः समभिव्याहारे उक्तरीत्या तत्प्रतीतिरिति भावः ॥ अन्तरङ्गत्वेयमेव हेतुः। अत एव समासार्थान्तर्भूतत्वम्। राजसख इत्यादावन्तर्भूतस्याप्रतीयमानत्वात्प्रतीयमानेति ॥

( अर्थपदस्य शब्दपरत्वाधिकरणम् )

( १२५३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तृतीयासमासेऽर्थग्रहणमनर्थकमर्थगतिर्ह्यवचनात् ॥ * ॥

( व्याख्याभाष्यम् )

**तृतीयासमासेऽर्थग्रहणमनर्थकम् ॥ किं कारणम्?। अर्थगतिर्ह्यवचनात्। अन्तरेणापि वचनमर्थगतिर्भविष्यति ॥**

( प्रदीपः ) **अर्थगतिरिति।** तत्कृतस्यार्थत्वाव्यभिचारादित्यर्थः ॥

( उद्योतः ) उक्तन्यायसिद्धमपि तत्कृतार्थग्रहणं स्पष्टप्रतिपत्तये अभ्युपगम्य तत्रार्थग्रहणं व्यर्थमाह वार्तिककारः—तृतीयासमास इति ॥

( १२५४ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ निर्देश्यमिति चेत् तृतीयार्थनिर्देशोपि ॥ * ॥

( व्याख्याभाष्यम् )

**अथैवमपि निर्देशः कर्तव्य इति चेत्, तृतीयार्थनिर्देशोपि कर्तव्यः स्यात्—'तृतीया तदर्थकृतार्थेन' इति वक्तव्यम् ॥**

( प्रदीपः ) **निर्देश्यमिति चेदिति।** सामर्थ्यलभ्यस्यापि यदि विस्पष्टार्थमुपादानमित्यर्थः ॥

( तटस्थाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्? ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**न वक्तव्यम् ॥ नायमर्थनिर्देशः ॥ किं तर्हि?। योगाङ्गमिदं[2] निर्दिश्यते। सति च योगाङ्गे योगविभागः करिष्यते—"तृतीया तत्कृतेन[3] गुणवचनेन" समस्यते ॥ ततः—"अर्थेन" अर्थशब्देन च तृतीया समस्यते। धान्यार्थः वसनार्थः हिरण्यार्थः। "पूर्वसदृशसमोनार्थ" इत्यर्थग्रहणं न कर्तव्यं भवतीति ॥ तृतीया ॥ २९ ॥**

( प्रदीपः ) **योगविभाग इति। तत्कृतेति** तृतीयायाश्छान्दसो लुक्। **अर्थेनेति** पृथक्पदमिति वाक्यभेदः संपद्यते ॥ **न कर्तव्यमिति।** अर्थशब्देन समासार्थमिति भावः। **सत्त्वे निविशतेऽपैतीति** लक्षितस्य गुणस्येह ग्रहणम्, कुङ्कुमलोहितादीन्यप्यत्रोदाहरणानीति करोतिक्रिया तत्रावश्यापेक्ष्येति खण्डादीनां संभवदपि धातुवाच्यक्रियारूपत्वं भाष्यकारेण नोक्तम् ॥ २९ ॥

( उद्योतः ) नायमर्थनिर्देश इति। उभयत्राप्यर्थपरत्वस्य व्याख्यानेनैव सिद्धेरिति भावः ॥ **योगविभाग इति।** योगविभागफलक इत्यर्थः। तदाह—**वाक्यभेदः संपद्यत इति** ॥ भाष्ये—**धान्यार्थ इति।** अत्रार्थ्यत इत्यर्थः प्रयोजनम्, अर्थनमर्थः प्रार्थना वा, करणतृतीयया समास इति हरदत्तादयः। तन्न। कर्तृकरणे इत्येव सिद्धत्वात् ॥ तस्माद्धनपर्यायार्थशब्देन सह प्रकृत्यादित्वप्रयुक्ततृतीयान्तस्य समासः। प्रथमार्थे च तृतीया। यद्वा धान्येन कृतोर्थ इति विग्रह इति नव्याः ॥ **अर्थशब्देन समासार्थमिति।** फलान्तरार्थमर्थग्रहणमावश्यकमित्यग्रिमसूत्रे वक्ष्यति कैयटः ॥ **सत्त्वेइत्यादि।** इदं गुणवचनशब्दस्यैव लक्षणमिति गुणपदेन धर्ममात्रं तदुपसर्जनद्रव्यवाचिनायं समास इति बोध्यम्। खण्डस्य तल्लक्षितत्वाभावाच्च ॥ **नोक्तमिति।** रूढ्यर्थस्यैव ततः प्रतीतिरिति भावः ॥ २९ ॥

( २४१ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. २० )

## ३७९ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ २।१।३० ॥

( प्रदीपः ) **पूर्व ॥ ३० ॥** पूर्वसूत्रे अर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमूनेनाभिसंबध्यमानं तदर्थानां विकलादीनां समासं साधयति। पूर्वसूत्रे त्विहत्यमर्थग्रहणं प्रत्याख्यातम्। अर्थप्रधानत्वान्निर्देशस्योनार्थानामन्तरेणाप्यर्थग्रहणं समासस्य सिद्धत्वात् ॥

( उद्योतः ) **पूर्वसदृश ॥ ३० ॥ अर्थग्रहणमूनेनेति।** अत एवोनार्थकलहमिति स्वरविधायकसूत्रेऽर्थग्रहणं चरितार्थम्। तत्र हि लक्षणप्रतिपदोक्तपरिभाषयैतत्सूत्रविहितसमासस्यैव ग्रहणम्। समसदृशयोः पृथगुपादानाच्चानेनैव संबन्ध इति बोध्यम् ॥ **अर्थप्रदानत्वान्निर्देशस्येति।** ऊनशब्दोऽर्थपरः अर्थेन समासासंभवाच्च तद्वाचिनां ग्रहणं तच्चाविशेषात्सर्वेषामिति भावः[6] ॥ केचित्तु माषेण कृतो विकल इत्यर्थे माषविकल इति पूर्वेणैव सिद्धम् ॥ ऊनार्थेति सूत्रेऽर्थग्रहणं तु धान्यार्थ इत्यादावन्तोदात्तत्वायेति स्पष्ट[7]-

---

1 Bengal Asiatic Society मुद्रितपुस्तके तु पूर्वग्रन्थेनैव सहास्यापि मुद्रणं कुर्वन् संदर्भसमाप्तिप्रारम्भौ न दर्शितवान्। २ 'मिति विज्ञायते'। ३ 'तत्कृतगुणवचनेन'। ४ 'ग्रहणे'। ५ तच्छब्दे कृत शब्दे चेति भावः। (र.ना.)

६ कैयटोक्तं निराचष्टे इदमित्यादिना। (र. ना.) ७ समासस्येति विहितान्तोदात्तत्वायेत्यर्थः। (र. ना.)

मेव वृत्त्यादौ । तत्र समासोऽपि पूर्वसूत्रस्यार्थग्रहणात् सिद्धः । एवं च मापविकलादौ पूर्वपदप्रकृतिस्वरत्वमेवेत्येव भाष्याशयः । अत एव समर्थसूत्रभाष्ये तृतीयातत्कृतेति सूत्रस्योपादानविकल इत्युदाहरणं दत्तमित्याहुः ॥

( न्यूनतापूर्व्यधिकरणम् )

( १२५५ वार्तिकम् ॥ १ ॥ )

## ॥*॥ पूर्वादिष्ववरस्योपसंख्यानम् ॥*॥

( व्याख्याभाष्यम् )

**पूर्वादिष्ववरस्योपसंख्यानं कर्तव्यम् । मासावरोयं संवत्सरावरोयम् ॥**

( उद्द्योतः ) अवरस्येति । न च कैयटरीत्योनार्थत्वादेव सिद्धिरिति वाच्यम् । चैत्रादवरः फाल्गुन इत्यादौ पूर्वशब्दसमानार्थताया अपि अवरशब्दस्य दर्शनात् ॥

( सदृशग्रहणप्रत्याख्यानाधिकरणम् )

( सदृशग्रहणप्रत्याख्यानभाष्यम् )

**सदृशग्रहण *उक्तम्* ॥ किमुक्तम् ? । *सदृशग्रहणमनर्थकं तृतीयासमासवचनात्* *षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम्* इति ॥ पूर्वसदृश ॥ ३० ॥**

( प्रदीपः ) सदृशग्रहण उक्तमिति । वक्ष्यमाणस्यापि बुद्ध्या निरूपितत्वाद्धेतुकालसंप्रेक्षितत्वाद्वा भूतनिर्देशः ॥ सदृशप्रतिरूपयोः सादृश्य इत्यत्र वक्ष्यते ॥ पूर्वपदप्रकृतिस्वरविधानार्थं सदृशग्रहणमनर्थकं, मात्रा सदृशो मातृसदृश इति । पूर्वसदृशेति समासे कृते तत्पुरुषे तुल्यार्थेति प्रकृतिस्वरो भविष्यति ॥ अथोच्यते—तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते ततश्च मातुः सदृशो मातृसदृश इति यदा षष्ठीसमासः क्रियते, तदा पूर्वपदप्रकृतिस्वरार्थं सदृशग्रहणम् । तथा च दास्याः सदृश इत्याक्रोशे षष्ठ्या अलुकि स्वरः सिद्ध्यति, तदा तृतीयासमासे सदृशग्रहणं न कर्तव्यम् । षष्ठीसमासेनैव स्वररूपयोः सिद्धत्वात् ॥ अथोच्यते—हेतुतृतीयार्थमिह सदृशग्रहणं विद्यया सदृशो विद्यासदृश इति । तदपि न, संबन्धमात्रविवक्षायां षष्ठीसमासेनैव स्वररूपयोः पूर्वसूत्रेण वा तत्कृतत्वात् सिद्धत्वात् ॥ ३० ॥

( उद्द्योतः ) सदृशग्रहणे उक्तमिति भाष्यकारवचनमित्यभिप्रेत्याह—हेतुकालसंप्रेक्षितत्वाद्वेति । हेतुर्वार्तिककारोच्चारणं तस्य यः कालस्तस्य संप्रेक्षितत्वान्मनसि स्थापितत्वादित्यर्थः । कारणकालं कार्ये उपचर्य प्रयोग इति तात्पर्यम् ॥ वार्तिककारवचनमित्यभिप्रेत्य त्वाचम् ॥ तदेव युक्तमिति भाति ॥ तदा पूर्वपदप्रकृतिस्वरार्थमिति । अन्यथान्तोदात्तत्वं स्यादित्यर्थः ॥ नन्वत्रानभिधानात्षष्ठीसमास एव मास्त्वित्यत आह—तथा च दास्याइति ॥ सिद्धत्वादिति । न च मनसः संज्ञायामित्यलुकि मनसासदृश इति सिद्ध्यर्थमिदमप्यावश्यकमिति वाच्यम् । तत्कृतत्वेनैव सिद्धत्वात्, अनभिधानेन तत्र समासाभावाच्च । ईदृशसंज्ञायां मानाभावाच्चेति दिक् ॥ संबन्धमात्रविवक्षायामिति । अनेन—'अवश्यं तृतीयासमासो वक्तव्यो यत्र षष्ठ्यर्थो नास्ति भोजनसदृशः' इदमप्यवश्यं वक्तव्यं यत्र षष्ठी श्रूयते दास्याः सदृश इत्याद्यर्थम्' इति सदृशप्रतिरूपयोरिति सूत्रशेषस्थं भाष्यमेकदेशयुक्तिरिति सूचयति । तत्रापि षष्ठ्यर्थस्य संभवात् । प्रतिपदोक्तपरिभाषया तुल्यार्थैरिति तृतीयान्तेनैव तत्समासप्रवृत्तेश्च ॥ पूर्वसूत्रेण वेति । उपादानविकल इतिवदिति भावः ॥ ३० ॥

---

( २४२ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ० २१ )

# ३८० कर्तृकरणे कृता बहुलम् ॥ २ । १ । ३१ ॥

( अनिष्टवारणाधिकरणम् )

( १२५६ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ कर्तृकरणे कृता क्तेन ॥ * ॥

( व्याख्याभाष्यम् )

**कर्तृकरणे कृता क्तेनेति वक्तव्यम्—अहिहतः । नखनिर्भिन्नः । दात्रलूनम् । परशुच्छिन्नम् ॥ कृता क्तेनेति किमर्थम् ? । इह मा भूत् । दात्रेण लूनवान् परशुना छिन्नवान् ॥**

( उद्द्योतः ) कर्तृकरणे ॥ ३१ ॥ कृताक्तेनेति । भाष्ये—कृतेति क्तस्योपरक्षकं विशेषणमिति बोध्यम् ॥ कृतेत्यस्य स्थाने क्तेनेति वक्तव्यं कृतेति व्यर्थमिति वार्थः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् । बहुलवचनात्सिद्धम् ॥ कर्तृकरणे ॥ ३१ ॥**

---

१ तत्पुरुषे तुल्यार्थेति विहितेत्यादिः । ( र.ना. ) २ वक्ष्यमाणस्यापीति । अतएव—

"यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥"

इत्यादिमन्त्रेषु भूतकालनिर्देशेऽपि वेदस्य नार्वाचीनत्वम् ॥ इति सकलार्यसिद्धान्तः । ३ तृतीया तत्कृतेति सूत्रेणेत्यर्थः । (र.ना.) ४ 'च इत्य' । ५ तदेवेति । भाष्यकारीयत्वमेव । वार्तिककारीयत्वकल्पने भूतनिर्देशोपपत्तये बुद्धिनिष्ठत्वादिकं कल्पनीयं स्यात् ॥ भाष्यकारीयत्वे तु निराबाध एव भूतकालप्रयोगः, वार्तिककारस्य भाष्यकारतः प्राक्तनत्वात् ॥ एवं च सर्वाण्युक्तपदघटितवचनानि भाष्यकारस्यैव । इदानींतनवार्तिकपाठस्तु वार्तिकगणसूत्रघटितसूत्रपाठवत् भाष्यवाक्यघटित एव लेखकप्रमादात्संजात इति बोध्यम् । इदं सर्वं चिन्त्यम् । सर्वनाम्नां समनन्तरपरामर्शकत्वस्यैव स्वारसिकत्वात् । तथाच तदनुरोधेन वार्तिककारवचनत्वाङ्गीकार एव नागेशस्याभिमत इति गम्यते । तथाच न तथाविधानां निरपवादवार्तिकत्वप्रसिद्धिमुल्लङ्घ्य लेखकप्रमादादिजत्वकल्पनाऽपि । ( र. ना. ) ६ 'भावः' । ७ परिचायकमित्यर्थः ( र. ना. ) ।

(प्रदीपः) कर्तृ ॥ ३१ ॥ बहुलवचनादिति । अयं भावः—क्तेनेत्युच्यमाने घञादिभिर्नखनिर्भिन्न इत्यादौ समासो न प्राप्नोति । तस्माद् बहुलग्रहणमेवाव्याप्त्यतिव्याप्तिपरिहारार्थमाश्रयणीयम् ॥ ३१ ॥

(उद्द्योतः) ननु लाघवात्क्तेनेति युक्तमत आह—अयं भाव इति ॥ ३१ ॥

(२४३ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. २२)

## ३८१ कृत्यैरधिकार्थवचने ॥ २।१।३२ ॥

(प्रदीपः) कृत्यैः ॥ ३२ ॥ स्तुतिनिन्दापरत्वात् क्रियोपादानस्य कर्तृकरणयोर्गौणत्वात्[1] पूर्वेणा[2]प्राप्तः समासोनेन विधीयत इति केचिदाहुः ॥ अन्ये तु प्रपञ्चार्थमेतदित्याहुः । तथा च काकपीता नदीत्यत्राकृत्यैरप्यधिकार्थवचने समासो दृश्यते ॥

(उद्द्योतः) कृत्यै ॥ ३२ ॥ स्तुतिनिन्देति । काकपेयेत्यादौ काककर्तृकपानकर्म नदीति बोधे अल्पाम्भस्त्वपूर्णाम्भस्त्वादिना निन्दास्तुतिमात्रे तात्पर्यात् क्रियाया निष्प्रयोजनत्वेन गौणत्वात्कर्तृकरणयोरपि[3] गौणत्वमिति भावः ॥ केचिदाहुरिति । कर्तृ[4]त्वादेरतृतीयाप्रयोजकत्ववत्समासप्रयोजकत्वस्यापि संभवादित्यरुचिः[5]॥ तदाह—अन्यस्त्विति ॥ ननु कृत्यैरेवाधिकार्थवचन इति नियमार्थं स्यादत आह—काकपीतेति ॥

(इष्टानुपपत्तिपरिहाराधिकरणम्)

(१२५७ वार्तिकम् ॥ १ ॥)

### ॥ * ॥ कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यते ॥ * ॥

(व्याख्याभाष्यम्)

**कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यतइति वक्तव्यम् । बुसोपेन्ध्यं तृणोपेन्ध्यं घनघात्यम् ॥**

(प्रदीपः) कृत्यैरिति । ततश्च नेदं नियमार्थमपि तु प्रपञ्चार्थम् ॥ बुसोपेन्ध्यमिति । अग्नेरल्पत्वात् काष्ठमेतद्बुसेन प्रज्वलनीयमित्यर्थः ॥ घनघात्यमिति । घनेनायःप्रभृतिना घात्यस्य काठिन्यं प्रतिपाद्यते ॥

(उद्द्योतः) नेदं नियमार्थमिति । कृत्यैरधिकार्थवचन एवेत्येवं नियमार्थं नेदमित्यर्थः । भाष्ये—अन्यत्रापि, स्तुतिनिन्दाफलकत्वरूपाधिकार्थवचनत्वाभावेपि ॥

(११५८ वार्तिकम् ॥ २ ॥)

### ॥ * ॥ साधनं कृतेति वा पादहारकाद्यर्थम् ॥ * ॥

(व्याख्याभाष्यम्)

**अथ वा साधनं कृता समस्यत इति वक्तव्यम् ॥ किं प्रयोजनम्? । पादहारकाद्यर्थम् । पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपकः ॥ कृत्यैरधि ॥ ३२ ॥**

(प्रदीपः) साधनं कृतेति । बहुलग्रहणसहितसूत्रसंदर्भापेक्षो विकल्पः ॥ पादाभ्यामिति । अपादाने पञ्चमी ॥ हारक इति । कृत्यल्युटो बहुलमिति बहुलग्रहणात् कर्मणि ण्वुल् ॥ चोपक इति । चुपेर्ण्यन्तस्य, कर्मणि ण्वुल् ॥ ३२ ॥

(उद्द्योतः) सूत्रसंदर्भेति । 'कर्तृकरणे' 'कृत्यैरि'त्येतत्सूत्रद्वयरूपेत्यर्थः ॥ बहुलग्रहणसहितमिदं वा कर्तव्यं तत्सहितसूत्रसंदर्भो वेतितात्पर्यम् । बहुलग्रहणं त्वत्रापि कर्तव्यमेव, परशुना छिन्नवानित्याद्यर्थम् ॥ पादाभ्यामित्यस्य कर्तृकरणतृतीयान्तत्वे यथान्यासेपि सिध्यतीत्यत आह—अपादाने पञ्चमीति । पादयोर्ह्रियमाणमञ्जीराद्यपेक्षयावधित्वेनापादानत्वम् । गले चोपक इति । हलदन्तादिति तत्पुरुषेति कृतीति अमूर्धमस्तकादिति वाऽलुक् । गले मन्दं प्रापणीय इत्यर्थः ॥ ३२ ॥

(२४४ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. २३)

## ३८२ अन्नेन व्यञ्जनम् ॥ २।१।३३ ॥

(२४५ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ० २४)

## ३८३ भक्ष्येण मिश्रीकरणम् ॥२।१।३४॥

(इष्टानुपपत्तिपरिहाराधिकरणम्)

(१२५९ आक्षेपवार्तिकम् ॥ १ ॥)

### ॥ * ॥ अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमित्यसमर्थसमासः [[6]कारकाणां क्रियासमर्थत्वात्] ॥ * ॥

(व्याख्याभाष्यम्)

**"अन्नेन व्यञ्जनम्" "भक्ष्येण मिश्रीकरणम्" इत्यसमर्थसमासोयं द्रष्टव्यः[7] ॥ किं कारणम्? । कारकाणां क्रियासमर्थत्वात् । कारकाणां क्रियया सा[8]मर्थ्यमस्ति, न तेषामन्योन्येन । तद्यथा—निश्रयण्या[9] द्वाभ्यां काष्ठाभ्यां सामर्थ्यं न तेषामन्योन्येन ॥**

(प्रदीपः) अन्नेन ॥ ३३ ॥ ३४ ॥ तुल्यन्यायत्वाद् युगपत् सूत्रद्वयस्य विचारः ॥ दध्योदन इत्यादौ क्रियावाची शब्दो न प्रयुज्यते, यथा[10] कष्टश्रित इति । क्रियामन्तरेण च द्रव्याणां परस्परसंबन्धो नास्तीत्याह—अन्नेनेति ॥ किंकारणमिति । समासादुपसेकादिक्रियावगमात्तत्कृतमस्त्येव सामर्थ्यमिति प्रश्नः ॥ क्रिययेति । तस्याश्च वाचको नास्तीति तदभावात् सामर्थ्याभावः ॥ निश्रयण्या इति । निश्रयणी-

---

१ स्तुतिनिन्द्योरेव मुख्यत्वेन क्रियाया गौणत्वादिति शेषः । (र. ना.)
२ अपीतिशेषः । (र. ना.) ३ गौणमुख्यन्यायेनेति भावः । (र. ना.)
४ तथाविधेत्यादिः । (र. ना.) ५ लक्ष्यानुरोधेनेति भावः । (र. ना.)

६ कोष्ठकान्तर्गतो वार्तिकभागो न क्वाप्युपलभ्यते । ७ 'वेदितव्यः' । ८ 'र्थं भवति' । ९ यथा सोपानफलकानामूर्ध्वाभ्यां काष्ठाभ्यामेव संबन्धो न तु तेषां परस्परं संबन्ध इत्यर्थः । (र. ना.) १० वैधर्म्ये दृष्टान्तः । (र. ना.)

शब्देन समुदायवृत्तिना उपचारात् सोपानफलकान्यभिधीयन्ते ॥ द्वाभ्यामिति । ऊर्ध्वाभ्यामित्यर्थः ॥

( उद्योतः ) अन्नेनव्य ॥३३॥३४॥ अनेनापि करणतृतीयथैव समासः, शब्दशक्तिस्वभावात् करणेइत्यनुवृत्तेर्वा इत्यभिप्रायेणासामर्थ्याशङ्का ॥ द्रव्याणामिति । कारकविभक्त्यन्तवाच्यत्वे इति भावः । फलकानीति । आरोहणावरोहणोपयोगितिर्यक्काष्ठानीत्यर्थः ॥ भाष्ये—निश्रयण्या इति । जातावेकवचनम् ॥

( एकदेशिसमाधानभाष्यम् )

एवं तर्ह्यांहायम्—"अन्नेन व्यञ्जनम्" "भक्ष्येण मिश्रीकरणम्" इति । न चास्ति सामर्थ्यम् । तत्र वचनात्समासो भविष्यति ॥

( प्रदीपः ) एवमसामर्थ्ये प्रतिपादिते आचार्यदेशीय आह—एवं तर्हीति ॥

( १२६० समाधाननिराकरणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ वचनप्रामाण्यादिति चेद् नानाकारकाणां प्रतिषेधः ॥ * ॥**

( व्याख्याभाष्यम् )

वचनप्रामाण्यादिति चेन्नानाकारकाणां प्रतिषेधो वक्तव्यः । तिष्ठतु दध्ना, ओदनो देवदत्तेन[3] भुज्यत इति ॥

( प्रदीपः ) नानाकारकाणामिति । भिन्नक्रियापेक्षया कारकाणामित्यर्थः ॥ तिष्ठतु दध्नेति । दध्ना ध्रियतां जीवत्वित्यर्थः । तत्र दध्नः करणत्वम् ॥

( उद्योतः ) दध्नेतिसहयोगतृतीयार्थामुक्तरीत्या करणतृतीयाभावात् समासाप्राप्तेराह—जीवत्विति ॥

( १२६१ न्यासान्तरेण समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सिद्धं तु समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्च ॥ * ॥**

( व्याख्याभाष्यम् )

सिद्धमेतत् ॥ कथम् ? । समानाधिकरणाधिकारे वक्तव्यम्—'क्तान्तस्तृतीयापूर्वपदः समस्यते सुपा, उत्तरपदस्य च लोपो भवति' इति । दध्ना उपसिक्तः दध्युपसिक्तः । दध्युपसिक्तः ओदनो दध्योदनः । गुडेन संसृष्टाः=गुडसंसृष्टाः । गुडसंसृष्टा धानाः= गुडधानाः ॥

( प्रदीपः ) एवं सूत्रन्यासं दूषयित्वा वार्तिककार आत्मीयं न्यासं दर्शयति—सिद्धं त्विति ॥

( उद्योतः ) सिद्धं त्विति । वार्तिकारम्भेपि दासीभारादित्वात्पूर्वपदप्रकृतिस्वरो बोध्यः । एवंच सूत्रारम्भेण समफलता । तच्च वार्तिकं विशेषणमित्येव सिद्धे समासे पूर्वपदावयवोत्तरपदलोपार्थं कर्तव्यम् ॥

( १२६२ वार्तिकम् ॥ ४ ॥ )

**॥ * ॥ षष्ठीसमासश्च युक्तपूर्णान्तः ॥ * ॥**

( व्याख्याभाष्यम् )

षष्ठीसमासस्य युक्तपूर्णान्तः समस्यते, उत्तरपदस्य च लोपो वक्तव्यः । अश्वानां युक्तोऽश्वयुक्तः अश्वयुक्तो रथोऽश्वरथः । दध्नः पूर्णो दधिपूर्णः दधिपूर्णो घटो दधिघटः ॥

( प्रदीपः ) उत्तरपदलोपप्रसङ्गेनान्यदप्याह—षष्ठीसमासश्चेति ॥ अश्वानामिति । संबन्धविवक्षया षष्ठी । तथा दध्न इति ॥

( उद्योतः ) संबन्धविवक्षायामिति । कर्तुः करणस्य वा संबन्धत्वेन विवक्षायामित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

तर्त्तर्हीदं बहु वक्तव्यम् ? ॥

( १२६३ समाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ नवाऽसमासेऽदर्शनात् ॥ * ॥**

( व्याख्याभाष्यम् )

न वा वक्तव्यम् । किं कारणम् ? ॥ असमासेऽदर्शनात् । यद्ध्यसमासे दृश्यते समासे च न दृश्यते तद्धि लोपारम्भं प्रयोजयति । न चासमासे उपसिक्तशब्दः संसृष्टशब्दो युक्तशब्दः पूर्णशब्दो वा दृश्यते ॥

( प्रदीपः ) असमासेऽदर्शनादिति । असमासो वाक्यं तत्रैव युक्तादयो न दृश्यन्ते । अश्वानां रथोऽश्वरथः दध्नो घटो दधिघट इति युक्तादिशब्दप्रयोगमन्तरेणापि संबन्धप्रतीत्यैव युक्ताद्यर्थानामाक्षेपात् । दधिपूर्णो घट इत्येतत्तु शब्दान्तरमेव तत्समानार्थम्, न तु दधिघट इत्येतस्यैतद्वाक्यम् । अन्यत्र तु प्रत्ययलक्षणार्थो लोपारम्भो यथाऽभिचिद् दधिपचेति । इह तु लोपान्वाख्याने प्रयोजनाभावः ॥

( उद्योतः ) युक्ताद्यर्थानामाक्षेपादिति । संबन्धत्वेन संबन्धस्यैवात्र भानादिति भावः । तदर्थघटितस्य संबन्धत्वे त्वन्तरङ्गत्वात् तृतीयैव स्यादिति भावः ॥

( वार्तिकावतरणभाष्यम् )

कथं तर्हि सामर्थ्यं गम्यते ? ॥

( १२६४ समाधानसाधकवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ युक्तार्थसंप्रत्ययाच्च सामर्थ्यम् ॥ * ॥**

( व्याख्याभाष्यम् )

दध्ना युक्तार्थता संप्रतीयते ॥

( प्रदीपः ) युक्तार्थसंप्रत्ययादिति । युक्तग्रहणं योग्यक्रियोपलक्षणमित्युपसेकादयोपि गृह्यन्ते ॥ एतदुक्तं भवति—दध्योदन इत्युक्ते दध्नः संस्कारकत्वम्, ओदनस्य च संस्कार्यत्वं

१ लक्षणयेत्यर्थः । (र. ना.) २ निश्रयणीशब्दस्यात्र लक्षणया सोपानफलकपरत्वात्तेषाञ्च नानात्वादिति भावः । ( र. ना. ) ३ 'भुज्यते देवदत्तेन' । ४ शब्दशक्तिस्वभावात्करणे इत्यनुवृत्तेर्वेत्युक्तरीत्येत्यर्थः । ( र. ना. ) ५ तृतीयान्तं पूर्वं पदं यस्मादिति तद्गुणसंविज्ञानो बहुव्रीहिः । ( र. ना. ) ६ अपिना सूत्रारम्भे इत्यर्थः । (र.ना.) ७ कर्मवन्तमाश्रित्य संबन्धित्वेनेत्यर्थः । (र.ना.) ८ 'दं वक्त' । ९ 'तल' ।

प्रतीयते न चोपसेकमन्तरेण संस्कार्यसंस्कारकभावोस्तीति सामर्थ्यादुपसेकप्रतीतिः ॥

( उद्द्योतः ) भाष्ये—दध्ना युक्तार्थता संप्रतीयत इति । दध्नेतिपदे वाच्येन युक्तो योर्थ उपसेकक्रियादिरूपस्तदर्थता तस्य प्रतीयत इत्यर्थः । "वाक्येऽपि वाक्यैकदेश" न्यायेन दध्नेत्यस्यैव सोर्थ इति बोध्यम् ॥

( वार्तिकावतरणभाष्यम् )

**कथं पुनर्ज्ञायते—दध्ना युक्तार्थता संप्रतीयत इति?॥**

( १२६५ समाधानसाधकवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ संप्रत्ययाच्च तदर्थाध्यवसानम् [ संप्रतीयमानार्थलोपे ह्यनवस्था ॥ * ॥ ]

( व्याख्याभाष्यम् )

**संप्रत्ययाच्च तदर्थोऽध्यवसीयते ॥ अवश्यं चैतदेवं विज्ञेयम् । संप्रतीयमानार्थलोपे ह्यनवस्था ॥ यो हि मन्यते संप्रतीयमानार्थानां शब्दानां लोपो भवतीति । अनवस्था तस्य लोपस्य स्यात् । दधीत्युक्ते बहवोर्था गम्यन्ते मन्दकमुत्तरकं निलीनकमिति । तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात् । तथा गुड इत्युक्ते मधुरशब्दस्य, शृङ्गवेरमिति च कटुकशब्दस्य । अन्तरेणापि खलु शब्दप्रयोगं बहवोऽर्था गम्यन्तेऽक्षिनिकोचैः पाणिविहारैश्च । तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात् ॥ अन्नेन ॥ ३३ ॥ भक्ष्येण ॥ ३४ ॥**

( प्रदीपः ) **संप्रत्ययाच्चेति** । सर्वलोकव्यवहारप्रसिद्धत्वादिति भावः । अत एव न प्रतिज्ञातार्थैकदेशो हेतुः ॥ **तदर्थाध्यवसानमिति** । संदेहरहितस्तदर्थनिश्चय इत्यर्थः ॥ **मन्दकमिति** । मन्दजातम् ॥ **उत्तरकमिति** । परिपक्वावस्थोपरि घनभावः ॥ **निलीनकमिति** । पक्वावस्थायां भ्रष्टम् । एषां विशेषणानां संभवाद्दधीत्युक्ते संप्रत्ययः ॥ **अक्षिनिकोचैरिति** । प्रकारान्तरेण विधिनिषेधलक्षणार्थावसायाच्चरितार्थत्वाद् यथा शब्दानां प्रयोगो नास्ति तथा युक्तादीनामपीत्यर्थः ॥ ३३ ॥ ३४ ॥

( उद्द्योतः ) नन्वध्यवसानं संप्रत्यय इति पर्यायस्तथा च हेतुसाध्ययोरविशेष इत्यत आह—**सर्वलोकव्यवहारेति** । अर्थविशिष्टं ज्ञानं प्रतिज्ञातोर्थः, तदेकदेशो ज्ञानं हेतुरित्यर्थः ॥ **निश्चय** इत्यस्यैव विवरणं **संदेहरहित** इति ॥ **दधीत्युक्ते संप्रत्यय इति** । अयं च प्रत्यय आनुमानिको वाक्यैकदेशन्यायेन वा प्रकारान्तरेणेति । चेष्टेत्यर्थः ॥ **चरितार्थत्वादिति** । शब्दप्रयोगकार्यस्य बोधस्य प्रकारान्तरेण संपन्नत्वादिति भावः ॥ ३३ ॥ ३४ ॥

( २४६ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. २५ )

# ३८४ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ २।१।३५ ॥

( प्रदीपः ) **चतुर्थी** ॥ ३५ ॥ **चतुर्थी चाशिषीति** हितयोगे या चतुर्थी तदन्तस्य समासो न भवति । समासादाशिषोऽनवगमादिति केचिदाहुः ॥

( उद्द्योतः ) चतुर्थी तद ॥ ३५ ॥ **समासादाशिषोऽनवगमादिति** । एवं चानभिधानात्समासो नेति भावः ॥ यत्तु—आशिषि आशीर्विषयस्य विधेयत्वं तदाश्रयस्योद्देश्यत्वं च प्रतीयते । न च वृत्तावुद्देश्यविधेयभावेनान्वयो व्युत्पत्तिसिद्ध इति ॥ तन्न । समासतोपि अभ्यासलोप इत्यादावुद्देश्यत्वादिप्रतीतेः ॥ वस्तुतस्तु आशीर्विषयक्रियान्वय्यर्थकात्प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे चतुर्थीति तदर्थात् उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात्समासस्तेन न । एवं चैतज्ज्ञापकसिद्धैव हितयोगे चतुर्थीति तात्पर्यम् ॥

( पाणिनीयन्यासे दूषणाधिकरणम् )

( आक्षेपभाष्यम् )

**किं चतुर्थ्यन्तस्य तदर्थमात्रेण समासो भवति?॥**

( प्रदीपः ) पाणिनीये लक्षणेऽतिव्याप्तिं पुनरुक्तिं च दृष्ट्वा पूर्वाचार्यन्यासे त्वव्याप्तिं मत्वा विचारः क्रियते—**किं चतुर्थ्यन्तस्येति** । विशेषानुपादानाद्दोषदर्शनाच्च प्रश्नः ॥

( उद्द्योतः ) अतिव्याप्तिः । रन्धनाय स्थालीत्यादौ ॥ पुनरुक्तिः । बलिरक्षितग्रहणस्य ॥ अव्याप्तिः । अश्वघासे ॥

( इष्टापत्तिभाष्यम् )

**एवं भवितुमर्हति ॥**

( प्रदीपः ) इतरः स्ववचनेनैव दोषमभिधापयितुमाह—**एवं भवितुमर्हतीति ॥**

( उद्द्योतः ) **स्ववचनेनैवेति** । स्वशब्देनात्र पूर्वपक्षी । सर्वनाम्नां बुद्धिस्थपरामर्शकत्वादिति भावः ॥ **तद्वचनेनैवेति** युक्तः पाठः ॥

( १२६६ दूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात् ॥ * ॥

( व्याख्याभाष्यम् )

**चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गः, सर्वस्य चतु-**

---

१ कोष्ठकान्तर्गतो वार्तिकभागो न क्वाप्युपलभ्यते । २ 'सोऽर्थो' । ३ 'अन्तरेण खल्वपि' । ४ 'यथा वृथा शब्दानां' । ५ आशिषोऽन्यत्रेति शेषः । (र.ना.) ६ हितसुखग्रहणस्य तु न ज्ञापकता,अतादर्थ्ये चतुर्थ्यन्तेनापि तयोः समाससंभवात्—अतादर्थ्ये चतुर्थी तु ताभ्यां हितयोगे चेतिवार्तिकाद् एतत्समासविधानरूपाद्वा ज्ञापकादिति बोध्यम् । ( र. ना. ) ७ 'मर्हति—ब्राह्मणार्थः पयः ब्राह्मणार्थः सूपः ब्राह्मणार्था यवागूः' ।

र्थ्यन्तस्य तदर्थमात्रेण सह समासः प्राप्नोति । अनेनापि प्राप्नोति—रन्धनाय स्थाली, अवहननायोलूखलमिति ॥ किं कारणम्? । अविशेषात् । नहि कश्चिद्विशेष उपादीयते—एवंजातीयकस्य चतुर्थ्यन्तस्य तदर्थेन सह समासो भवतीति । अनुपादीयमानविशेषे सर्वप्रसङ्गः ॥

( प्रदीपः ) सर्वप्रसङ्ग इति । असत्यपि प्रकृतिविकारभाव इत्यर्थः ॥

( १२६७ दूषणवार्तिकम् ॥ २ ॥ )

॥ * ॥ बलिरक्षिताभ्यां चानर्थकं वचनम् ॥ * ॥

( व्याख्याभाष्यम् )

बलिरक्षिताभ्यां च समासवचनमनर्थकम् । यो हि महाराजाय बलिः स महाराजार्थो भवति । तत्र तदर्थ इत्येव सिद्धम् ॥

( प्रदीपः ) यो हीति । देयस्य बलेः संप्रदानार्थतास्तीति तादर्थ्याश्रयः समासः सिद्धः ॥

( पूर्वाचार्यन्यासे दूषणाधिकरणम् )

( पूर्वाचार्यन्यासभाष्यम् )

यदि पुनर् "विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते" इत्येतल्लक्षणं क्रियेत ॥

( प्रदीपः ) इदानीं पूर्वाचार्यसूत्रं विचार्यते—यदि पुनरिति ॥

( १२६८ दूषणवार्तिकम् ॥ ३ ॥ )

॥ * ॥ विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम् ॥ * ॥

( व्याख्याभाष्यम् )

"विकृतिः प्रकृत्या" इति चेदश्वघासादीनामुपसंख्यानं कर्तव्यम् । अश्वघासः श्वश्रूसुरं हस्तिविधेति ॥

( प्रदीपः ) अश्वघास इति । तादर्थ्यमत्रास्ति न तु प्रकृतिविकारभावः ॥ श्वश्रूसुरमिति । विभाषासेनासुरेति नपुंसकत्वम् ॥ हस्तिविधेति । विधा हस्त्यन्नं माषादि ॥

( १२६९ वार्तिकम् ॥ ४ ॥ )

॥ * ॥ अर्थेन नित्यसमासवचनम् ॥ * ॥

( व्याख्याभाष्यम् )

अर्थशब्देन नित्यं समासो वक्तव्यः । ब्राह्मणार्थं क्षत्रियार्थम् ॥

( प्रदीपः ) अर्थेनेति । महाविभाषाधिकाराद् विकल्पनिवृत्त्यर्थं वचनम् ॥

( आक्षेपभाष्यम् )

किं विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत इत्यतोऽर्थेन नित्यसमासो वक्तव्यः? ॥

( प्रदीपः ) किं विकृतिरिति । तदनन्तरमभिधानात्तस्यैव लक्षणस्य दोषान्तरं मन्यते ॥

( समाधानभाष्यम् )

नेत्याह । सर्वथाऽर्थेन नित्यसमासो वक्तव्यः, विग्रहो मा भूदिति ॥

( प्रदीपः ) नेत्याहेति । आनन्तर्यं सामर्थ्याभावे सत्यकारणमित्यर्थः ॥

( उद्द्योतः ) आनन्तर्यमिति । सर्वन्यासेषु वचनारम्भस्यावश्यकत्वरूपसामर्थ्ये सति तन्न कारणमित्यर्थः ॥ सामर्थ्याभावे इति क्वचित्पाठः । तदा न्यासान्तरे कर्तव्यतायोग्यत्वाभावे इत्यर्थो बोध्यः ॥

( १२७० द्वितीयखण्डवार्तिकम् ॥ ५ ॥ )

॥ * ॥ सर्वलिङ्गता च ॥ * ॥

( व्याख्याभाष्यम् )

सर्वलिङ्गता च वक्तव्या । ब्राह्मणार्थं पयः ब्राह्मणार्थः सूपः ब्राह्मणार्था यवागूरिति ॥

( प्रदीपः ) सर्वलिङ्गता चेति । परवल्लिङ्गमिति पुंस्त्वमेव प्राप्नोति ॥ अभिधेयवशेन च सर्वलिङ्गता विज्ञेयेति दर्शयति—ब्राह्मणार्थमिति ॥

( उद्द्योतः ) परवल्लिङ्गमिति पुंस्त्वमिति । परस्योत्तरपदार्थस्य प्रधानत्वात्तद्वदेव लिङ्गं समासेपि प्राप्नोतीत्यर्थः । ननु सूत्रस्यात्र विषय इति बोध्यं, तस्य पूर्वपदार्थप्रधानैकदेशिसमासविषयकत्वात् ॥ तद्वक्ष्यति भगवान् अर्थशब्दोयं पुल्लिङ्ग इत्यादि ॥ अभिधेयवशेनेति । समुदायार्थनिरूपितविशेष्यतावदर्थवशेनेत्यर्थः ॥

( आक्षेपभाष्यम् )

किमर्थेन नित्यसमास उच्यते इत्यतः सर्वलिङ्गता वक्तव्या? ॥

( प्रदीपः ) किमर्थेनेति । पूर्ववत् प्रश्नप्रतिवचने ॥

( समाधानभाष्यम् )

नेत्याह । सर्वथा सर्वलिङ्गता वक्तव्या । किं

---

१ 'तदर्थाश्र' ।

२ कन्यासंप्रयुक्तकाधिकरणे—"तान्यन्येषां वरयितॄणां दोषान्प्रत्यक्षानागमिकांश्च श्रावयेयुः । कौलान्पौरुषेयानभिप्रायसंवर्धकांश्च नायकगुणान् । विशेषतश्च कन्यामातुरनुकूलांस्तदात्वायतियुक्तान्दर्शयेयुः", "अपरे पुनरस्यान्यतो विशिष्टेन कन्यालाभेन कन्यामातरमुन्मादयेयुः" इति कामसूत्रे वात्स्यायनेन

"वरयित्रन्तरदोषं दिशतां निजसंस्तवेनैव ॥ १६ ॥
अनुकूलयेयुरनिशं कथया कौलादि तद्गुणायन्त्या ।
कन्यामातुर्हृदयं बहुना मित्राणि यत्नेन ॥ १७ ॥
कन्यान्तरलाभकथाः कथयित्वाग्रे च कन्यकामातुः ।
उन्मादयेयुरस्या हृदयं केचित् प्रवञ्चेन ॥ १८ ॥"

इति कन्दर्पचूडामणौ वीरभद्रदेवेन प्रयुक्तस्य 'उन्मादयेयुः' इति क्रियापदस्यार्थे करणभूता सुरा कन्यामात्रे देशविशेषे च दीयते सेति स्यात् । ३ इदमावश्यकत्वान्वयि । (र.ना.) ४ अर्थेन नित्यसमासवचनमितीत्यादिः । (र.ना.) ५ पूर्वोक्तवचनारम्भस्येत्यादिः । ( र. ना. ) ६ अन्यत्र प्राधान्येन परवल्लिङ्गतायाः स्वतः प्राप्तत्वादिति भावः । ( र. ना. )

कारणम्?। [1]अर्थशब्दोयं पुल्लिङ्गः, उत्तरपदार्थप्रधानश्च तत्पुरुषः, तेन पुल्लिङ्गस्यैव समासस्याभिधानं स्यात् स्त्रीनपुंसकलिङ्गस्य न स्यात् ॥

( उद्द्योतः ) भाष्ये—समासस्याभिधानमिति । समासार्थस्येत्यर्थः ॥

( आक्षेपभाष्यम् )

तत्तर्हीदं बहु वक्तव्यम् । *विकृतिः प्रकृत्येति वक्तव्यम्* । *अश्वघासादीनामुपसंख्यानं कर्तव्यम्* । *अर्थेन नित्यसमासो वक्तव्यः सर्वलिङ्गता च वक्तव्या* ॥

( प्रदीपः ) इदानीं भाष्यकारः पाणिनीयं सूत्रं समर्थयितुं चोदकमुखेनाह—तत्तर्हीति ॥

( समाधानभाष्यम् )

न वक्तव्यम् । यत्तावदुच्यते—"विकृतिः प्रकृत्येति वक्तव्यम्" इति । न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—'विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते' इति । यदयं बलिरक्षितग्रहणं करोति ॥ कथं कृत्वा ज्ञापकम्? । यथाजातीयकानां समासे बलिरक्षितग्रहणे[3]नार्थः तथाजातीयकानां समासः । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते न तदर्थमात्रेण । ततो बलिरक्षितग्रहणमर्थवद्भवति ॥

( प्रदीपः ) यदयमिति । यदि तदर्थमात्रेण चतुर्थीसमासः स्यात् तदा बलिरक्षितग्रहणं न कुर्यात्तादर्थ्यस्य संभवात्तदर्थग्रहणेनैव समासस्य सिद्धत्वात् ॥

( द्वितीयवार्तिकप्रत्याख्यानभाष्यम् )

यदप्युच्यते—"अश्वघासादीनामुपसंख्यानं कर्तव्यम्" इति ॥ न कर्तव्यम्[4] । अश्वघासादयः षष्ठीसमासा भविष्यन्ति । यद्धि यदर्थं भवति अयमपि तत्राभिसंबन्धो भवति—'अस्येदम्[5]' इति । तद्यथा—गुरोरिदं—गुर्वर्थमिति ॥

(प्रदीपः) अयमपीति । तादर्थ्यं संबन्धविशेषः । विशेषे च सामान्यं संभवतीति तन्मात्रविवक्षायां षष्ठी प्रवर्तत एवेति भावः । अथवाश्वानां घास इति योग्यतामात्रं विवक्ष्यते न तु तादर्थ्यम् ॥

( उद्द्योतः ) तन्मात्रेति । संबन्धत्वमात्रेत्यर्थः । इदमेव युक्तं, गुरोरिदं गुर्वर्थमित्यत्रास्यैव प्रकारस्य संभवात् । भाष्ये—गुरोरिदं गुर्वर्थमिति । षष्ठीसमासोप्येतद्विषये नित्य एव भाष्यप्रामाण्यादिति बोध्यम् ॥

( आक्षेपभाष्यम् )

ननु च स्वरे[6] भेदो भवति—चतुर्थीसमासे सति पूर्वपदप्रकृतिस्वरत्वेन भवितव्यम् । षष्ठीसमासे सति पुनरन्तोदात्तत्वेन ॥

( समाधानभाष्यम् )

नास्ति भेदः । चतुर्थीसमासेपि[7] सत्यन्तोदात्तत्वेनैव भवितव्यम् । कथम्? । आचार्यप्रवृत्तिर्ज्ञापयति—'विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवति, न चतुर्थीमात्रम्' इति । यदयं "चतुर्थी तदर्थे" "अर्थे" "क्ते च" इत्यर्थग्रहणं क्तग्रहणं च करोति ॥ कथं कृत्वा ज्ञापकम्? । यथाजातीयकानां प्रकृतिस्वरत्वेऽर्थग्रहणेन क्तग्रहणेन चार्थः, तथाजातीयकानां प्रकृतिस्वरत्वम् । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या भवति न चतुर्थीमात्रम्, ततोर्थग्रहणं क्तग्रहणं चार्थवद्भवति ॥

( प्रदीपः ) रन्धनस्थाल्यादयस्त्वनभिधानात् षष्ठीसमासा न भवन्ति । यूपदार्वादिषु 'चतुर्थी तदर्थे[8]' इति स्वरसिद्ध्यर्थं तादर्थ्यमेव संबन्धविशेषो विवक्ष्यते, न संबन्धसामान्यमिति षष्ठीसमासाभावः ॥

( उद्द्योतः ) भाष्ये—अर्थे क्ते चेति । न च क्तग्रहणं हितार्थं तत्रातादर्थ्येपि हितयोगे चेति चतुर्थीविधानादिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनात्रापि तदर्थं इत्यस्य संबन्धेनादोषात् । न च रक्षितार्थम् । तत्र तादर्थ्ये चतुर्थ्या एव सत्त्वात् । वृत्त्युक्तसंप्रदानचतुर्थी तु न । तत्त्वस्योपपादयितुमशक्यत्वात् । भाष्यप्रामाण्येनानभिधानात्संप्रदानत्वाभावकल्पनाच्च ॥ रंधनस्थाल्यादयस्त्वनभिधानादिति । अत एवोपक्रमस्थं भाष्यं संगच्छते ॥ ननु यूपदार्वादावपि अश्वघासादिवत् संबन्धसामान्यविवक्षायां षष्ठीसमासेन्तोदात्तत्वमपि स्यादत आह—यूपदार्वादिष्विति ॥ तादर्थ्यमेवेति । तादर्थ्यरूपः संबन्धविशेष एवेत्यर्थः ॥ नन्वेवमश्वघासादौ चतुर्थीसमास एवास्तु, बलिरक्षितग्रहणं तज्ज्ञापितं प्रकृतिविकृतिग्रहणं च मास्तु, पूर्वपदप्रकृतिस्वरत्वं तु भाष्योक्तरीत्यैव[10] न भविष्यति, रन्धनाय स्थालीत्यादौ षष्ठीसमासवदयमपि अनभिधानान्न भविष्यतीति चेत् ॥ न, रन्धनाय स्थालीत्यादौ षष्ठ्येव न, तादर्थ्यत्वेनैव तत्र संबन्धस्य प्रतीतेः । एवं च तत्र चतुर्थीसमासवारणार्थं तस्यावश्यकत्वादिति भाष्याशयात् । कैयटेऽनभिधानादित्यस्य षष्ठ्यनभिधानादित्येवार्थः ॥

( तृतीयवार्तिकप्रत्याख्यानभाष्यम् )

यदप्युच्यते—"अर्थेन नित्यसमासो वक्तव्यः" इति । न वक्तव्यः । सर्थेप् प्रत्ययः करिष्यते ॥ किं कृतं भवति? ॥ न चैव हि कदाचित्प्रत्ययेन विग्रहो भवति । अपि च सर्वलिङ्गता सिद्धा भवति ॥

( प्रदीपः ) सर्थबिति । तदर्थे[11] विकृतेरित्यत्र तदर्थे सर्थबिति क्रियते । तादर्थ्येन चतुर्थी विभक्तिराक्षिप्यते[12] । तस्मै हितमित्यतो वानुवर्तते । तेन चतुर्थ्यन्तात् तादर्थ्येभिधाने तत एवात्र चतुर्थीसमासस्याप्यसंभवे इत्यर्थः ।

१ 'यावतार्थशब्दो' । २ विकृतिभिन्नवाचकानां चतुर्थ्यन्तानामित्यर्थः । ( र. ना. ) ३ प्रयोजनमित्यर्थः । ( र. ना. ) ४ 'वक्तव्यम्' । ५ 'तस्येद' । ६ 'स्वरभेदो' । ७ 'से सत्यप्य' । ८ अनेनापि प्राप्नोति रन्धनाय स्थाली इत्याकारकमिति शेषः । ( र. ना. ) ९ रन्धनस्थाल्यादीनामनभिधानात्षष्ठीसमासाभावे तत एवात्र चतुर्थीसमासस्याप्यसंभवे इत्यर्थः । ( र. ना. ) १० विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवतीत्यादिनोक्तेत्यर्थः । ( र. ना. ) ११ तदर्थे विकृतेः प्रकृताविति सूत्रानन्तरमित्यर्थः । ( र. ना. ) १२ 'समर्थविभक्ति' ।

धेये सर्थप्प्रत्ययो भवति । सकारः पदत्वाय । तेन राजार्थं भवदर्थमित्यादौ नलोपादीनि भवन्ति । पकारोनुदात्तार्थः । तेन प्रकृतेर्यथाप्राप्तः स्वरो भवतीति अर्थे इति स्वरार्थं सूत्रं न कर्तव्यं भवति ॥ न चैवेति । प्रत्यये कृते तद्धितान्तत्वात् प्रातिपदिकत्वात् सुब्लुका भवितव्यमिति विग्रहाभावः ॥

( आक्षेपभाष्यम् )

**यदि सर्थप् प्रत्ययः क्रियते, इत्संज्ञा न प्राप्नोति॥ अथापि कथंचिदित्संज्ञा स्यात्, एवमपि श्यर्थं ३र्वर्थम् "अङ्गस्य" इतीयङुवङौ स्याताम् ॥**

( प्रदीपः ) अथापीति । आदिर्ञिटुडवष्षः प्रत्ययस्येति संहितया सूत्रपाठे सकारस्यापि कृतष्टुत्वस्य निर्देशादिति भावः ॥

( उद्योतः ) भाष्ये—इत्संज्ञा न प्राप्नोतीति । आद्यसकारस्येत्यर्थः ॥

( समाधानभाष्यम् )

**एवं तर्हि बहुव्रीहिर्भविष्यति ॥ किं कृतं भवति? । भवति वै कश्चिदस्वपदविग्रहो बहुव्रीहिः । तद्यथा—शोभनं मुखमस्याः सुमुखीति ॥**

( प्रदीपः ) शोभनमिति । सुशब्दपर्यायेण शोभनशब्देन विग्रहः सुशब्दस्य त्वसत्त्ववाचित्वात् तेन नास्ति विग्रहः । अत्र च ब्राह्मणायार्थोस्येति विग्रहो न भवतीति विवक्षितम् । ब्राह्मणोर्थोस्येत्येवं समानाधिकरणस्तु विग्रहो भवत्येव । अत्र चार्थशब्दः प्रयोजनवाची ॥

( उद्योतः ) भवति वै कश्चिदिति । एवं च वैकल्पिकेपि बहुव्रीहौ यथान्यत्रापि क्वचिदस्वपदत्वम् । एवमत्रापि ब्राह्मणोर्थः प्रयोजनमुपकार्यत्वेन यस्येति प्रयोजनवाच्यर्थशब्देन विग्रहः, न तु चतुर्थ्यन्तेन विग्रहः ब्राह्मणायार्थमुपकारोस्येतीति भावः ॥ तद् ध्वनयन्नाह—अत्र चेति ॥ प्रयोजनवाचीति । उपकार्यत्वेन हि ब्राह्मणस्य प्रयोजनता ॥ प्रयोजकवाचीति पाठे यद्ब्राह्मणार्थं पयस्तस्य ब्राह्मणः प्रयोजको भवतीति भावः ॥

( आक्षेपभाष्यम् )

**नैवं शक्यम् । इह हि महदर्थमित्यात्वकपौ प्रसज्येयाताम् ॥**

( समाधानभाष्यम् )

**एवं तर्हि तदर्थस्योत्तरपदस्यार्थशब्द आदेशः करिष्यते ॥ किं कृतं भवति? । न चैव हि कदाचिदादेशेन विग्रहो भवति । अपि च सर्वलिङ्गता सिद्धा भवति ॥**

( प्रदीपः ) एवं तर्हीति । ब्राह्मणाय पय इति समासे कृते पयःशब्दस्य स्थाने अर्थशब्द आदेशः क्रियते । तेन ब्राह्मणपय इति तादर्थ्ये प्रयोगो न भवति । चतुर्थ्याश्च समासे निवृत्तत्वादादेशेनार्थशब्देन विग्रहाभावः । अर्थविशेषाभिव्यक्त्ये च पयःशब्दस्य प्रयोगः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्? ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् । योगविभागः करिष्यते—"चतुर्थी" सुबन्तेन सह समस्यते ॥ ततः—"तदर्थार्थ" तदर्थस्य चोत्तरपदस्यार्थशब्द आदेशो भवति ॥**

( आक्षेपभाष्यम् )

**इहापि तर्हि समासः प्राप्नोति—छात्राय रुचितं छात्राय स्वदितमिति ॥**

( प्रदीपः ) इहापीति । यदि चतुर्थीत्येतावल्लक्षणं क्रियेत इत्यर्थः ॥

( समाधानभाष्यम् )

**आचार्यप्रवृत्तिर्ज्ञापयति—'तादर्थ्ये या चतुर्थी सा समस्यते, न चतुर्थीमात्रम्' इति । यदयं हितसुखग्रहणं करोति ॥ कथं कृत्वा ज्ञापकम्? । यथाजातीयकानां समासे हितसुखग्रहणेनार्थस्तथाजातीयकानां समासः ॥ यदि च तादर्थ्ये या चतुर्थी सा समस्यते, न चतुर्थीमात्रम्; ततो हितसुखग्रहणमर्थवद्भवति ॥**

( उद्योतः ) भाष्ये—यदयं हितेति । हितयोगे चेति वार्तिकात्तद्योगे चतुर्थीति भावः । न च सुखग्रहणस्य न ज्ञापकत्वं तद्योगे चतुर्थ्यभावात् इति वाच्यम् । हितयोगे चेति चेन सुखयोगेपि सेति भाष्याशयात् ॥

( आक्षेपभाष्यम् )

**इहापि तदर्थस्योत्तरपदस्यार्थशब्द आदेशः प्राप्नोति—यूपाय दारु यूपदारु ॥**

( समाधानभाष्यम् )

**वा च विधास्यते ॥**

( प्रदीपः ) वाचेति । महाविषयार्थादेशो विकल्प्यते । तेन यूपार्थं दारु, यूपदार्विति द्वैरूप्यं भवति ॥

( आक्षेपभाष्यम् )

**इहापि तर्हि विभाषा प्राप्नोति—ब्राह्मणार्थं क्षत्रियार्थमिति ॥**

( समाधानभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'प्रकृतिविकृत्योर्यः समासः तत्र तदर्थस्योत्तरपदस्य वाऽर्थ-**

१ सर्थप्प्रत्ययप्रकृतेरित्यर्थः । ( र. ना. ) २ 'श्वर्थम्' । ३ 'ष्ष्पः' इति त्रिषकारकपाठे विभक्तिसकारस्य कृतष्टुत्वस्य द्वित्वेनावद्यके मध्यमः सकार इत्संज्ञार्थमुपदिष्ट इति भावः । वस्तुतस्तु मध्यमसकारस्य कृतष्टुत्वस्य झरोझरीति लोपः, तेन संहितया श्रूयमाणद्विषकारकपाठे न कोऽपि बाधकः । ( र. ना. )

४ 'भवति चैव कश्चि' । ५ शोभनं मुखं यस्या इत्यादौ इत्यर्थः । ( र. ना. ) ६ 'कश्चिदा' । ७ 'चतुर्थी सुबन्तेन' । ८ 'रथाय दारु रथदारु' इत्यधिकम् । ९ इतः पूर्वं 'वावचनं च' इत्यप्यधिकं दृश्यते ।

शब्द आदेशो भवति अन्यत्र नित्यः, इति। यदयं बलिरक्षितग्रहणं करोति॥

(प्रदीपः) यदयमिति। कुबेरार्थो बलिः कुबेरबलिरिति रूपद्वये सिद्धे बलिरक्षितग्रहणं ज्ञापकं प्रकृतिविकारभावादन्यत्र नित्योऽर्थादेशः तदर्थस्य भवतीति॥

(आक्षेपभाष्यम्)

एवं तर्हि—'उदकार्थो वीवधः' स्थानिवद्भावादुदभावः प्राप्नोति। तस्मान्नैवं शक्यम्। न चेदेवम्, *अर्थेन नित्यसमासो वक्तव्यः* *सर्वलिङ्गता च*॥

(प्रदीपः) उदकार्थ इति। यदि वीवधशब्दस्यार्थादेशः क्रियते तदा तस्य स्थानिवद्भावान्मन्थौदनेति पक्षे उदकशब्दस्योदादेशः प्राप्नोति॥

(समाधानभाष्यम्)

नैष दोषः। इदं तावदयं प्रष्टव्यः—यथेह 'ब्राह्मणेभ्यः' इति कैषा चतुर्थी?॥ तादर्थ्य इत्याह॥ यदि तादर्थ्ये चतुर्थी, अर्थशब्दस्य प्रयोगेण न भवितव्यम्—उक्तार्थानामप्रयोग इति॥

(उद्योतः) भाष्ये—उक्तार्थानामिति। न च तादर्थ्यस्य चतुर्थ्योक्तत्वेप्याश्रयबोधकार्थशब्दस्य कथमुक्तार्थकत्वमिति वाच्यम्। संम्बन्धेन द्वितीयसम्बन्ध्याऽऽक्षेपेणैव तल्लाभस्याप्युपपत्तेः॥

(आक्षेपभाष्यम्)

समासोपि तर्हि न प्राप्नोति॥

(प्रदीपः) समासोपीति। चतुर्थ्यन्तस्यार्थशब्देन समासो विधीयते न चैतयोर्यौगपद्येन भाव इति भावः॥

(समाधानभाष्यम्)

वचनात्समासो भविष्यति॥

(प्रदीपः) वचनादिति। असत्यपि लौकिके युगपत्प्रयोगे प्रक्रियायां यौगपद्यमस्त्येवेत्यर्थः॥

(उद्योतः) वचनादिति। चतुर्थीतदर्थार्थेति वचनात्॥

(चतुर्थवार्तिकप्रत्याख्यानभाष्यम्)

यदप्युच्यते—'*सर्वलिङ्गता वक्तव्या*' इति॥ न वक्तव्या। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य॥ चतुर्थी॥ ३५॥

(प्रदीपः) लिङ्गमिति। ततश्च परवल्लिङ्गमित्यस्य लक्षणस्याभावाल्लौकिकप्रयोगाश्रयात् सर्वलिङ्गता भविष्यतीत्यर्थः॥ ३५॥

(उद्योतः) लक्षणस्याभावादिति। परस्योत्तरपदस्य प्रधानत्वात्प्रधानवल्लिङ्गं समासस्येति लक्षणस्याभावादित्यर्थः॥ यद्वा—एकदेशिसमासविषयतया तस्यात्राभावात्प्रत्याख्यास्यमानत्वाद्वेत्यर्थः॥ ३५॥

(२२७ तत्पुरुषसंज्ञासूत्रम्॥ २। १। २ आ. २६)

## ३८५ पञ्चमी भयेन॥ २। १। ३६॥

(न्यूनतापरिहाराधिकरणम्)

(वार्तिकावतरणभाष्यम्)

अल्पमिदमुच्यते—'भयेन' इति॥

(१२७१ वार्तिकम्॥ १॥)

[॥ * ॥ भयभीतभीतिभीभिः॥ * ॥]

(भाष्यम्) भयभीतभीतिभीभिरिति वक्तव्यम्॥ वृकाद्भयं वृकभयम्॥ वृकाद्भीतः वृकभीतः। वृकाद्भीतिः वृकभीतिः। वृकाद्भीः वृकभीरिति॥

(प्रदीपः) पञ्चमी॥ ३६॥ भयेनेति स्वरूपग्रहणादव्याप्तिं मत्वा वार्तिकारम्भः। व्याख्यानादर्थग्रहणे वृकेभ्यस्त्रास इत्यादावपि प्रसङ्गः॥

(भाष्यम्) अपर आह—

(१२७२ वार्तिकन्यासान्तरवार्तिकम्॥ २॥)

[॥ * ॥ भयनिर्गतजुगुप्सुभिः॥ * ॥]

(भाष्यम्) भयनिर्गतजुगुप्सुभिरिति वक्तव्यम्। वृकभयं ग्रामनिर्गतः अधर्मजुगुप्सुः॥ पञ्चमी भयेन॥ ३६॥

(२४८ तत्पुरुषसंज्ञासूत्रम्॥ २। १। २ आ. २७)

## ३८८ सप्तमी शौण्डैः॥ २। १। ३९॥

(न्यूनताशङ्कापरिहाराधिकरणम्)

(१२७२ वार्तिकम्॥ १॥)

[॥ * ॥ शौण्डादिभिः॥ * ॥]

(व्याख्याभाष्यम्)

शौण्डादिभिरिति वक्तव्यम्। इहापि यथा स्यात्। अक्षधूर्तः स्त्रीधूर्तः अक्षकितवः स्त्रीकितव इति॥

(प्रदीपः) सप्तमी॥ ३९॥ शौण्डादिभिरिति वक्तव्यमिति। बहुवचनमर्थग्रहणे सति पर्यायार्थं वा स्याद् बहुवचनान्तसमासविधानार्थं वा। गणपाठस्तु सत्रप्यसंगृहीतत्वादकिंचित्करः स्यादिति भावः॥

(उद्योतः) सप्तमी॥ ३९॥ अर्थग्रहणे सतीति। अर्थग्रहणद्वारा पर्यायार्थं स्यादित्यर्थः।

(आक्षेपभाष्यम्)

तत्तर्हि वक्तव्यम्?॥

१ तादर्थ्यरूपेत्यादिः। (र. ना.)

२ सूत्रेणासंगृहीतत्वादित्यर्थः। (र. ना.)

(समाधानभाष्यम्)

**न वक्तव्यम् । बहुवचननिर्देशाच्छौण्डादिभिरिति विज्ञास्यते ॥ सप्तमी शौण्डैः ॥ ३९ ॥**

(प्रदीपः) बहुवचननिर्देशादिति । धूर्तादीनां साहचर्यादारोपितशौण्डशब्दरूपाणां शौण्डशब्दस्य च शौण्डशब्देनाभिधानाद् यथा छत्रिणो गच्छन्तीति भावः । वृत्त्यन्तर्भूतप्रसक्त्यादिक्रियापेक्षोऽक्षादीनामाधारभावः ॥ अन्तःशब्दोऽत्र पठ्यते, तद्योगे अवयविन आधारत्वविवक्षायां सप्तमी ॥ ३९ ॥

(उद्योतः) भाष्ये—बहुवचनेति । गणपाठसहकृतादिति शेषः ॥ साहचर्यादारोपितशौण्डशब्दस्वरूपाणां धूर्तादीनां शौण्डशब्दस्य च तेनाभिधानादित्यन्वयः ॥ यथेति । अच्छत्रिषु छत्रित्वारोपेण तत्र प्रयोग इति भावः ॥ एवं काकेभ्यो दधीत्यादावपि दध्युपघातकत्वसादृश्येन सर्वेषु काकत्वारोपात्प्रयोग इति बोध्यम् ॥ कारकस्य शौण्डादिभिः सामर्थ्यायोगादाह—वृत्त्यन्तरिति । यदि तु यद्द्वारकं यस्य कारकत्वं तदन्वयद्वारैव तस्य क्रियान्वय इत्यङ्गीक्रियते तदा साक्षादपि सामर्थ्यमस्त्येवेति बोध्यम् ॥ अन्तःशब्दोऽत्रेति । मध्यरूपाधिकरणे इत्यर्थकः । वनान्तरित्युदाहरणम् । वनवर्तिमध्ये इत्यर्थस्तस्य । यस्त्वधिकरणशक्तिमात्रवृत्तिस्तेनाव्ययीभाव एवान्तर्वणमिति यथा ॥ आधारविवक्षायामिति । आधारत्वविवक्षायामित्यर्थः ॥ ३९ ॥

(२४९ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. २८)

## ३९० ध्वाङ्क्षेण क्षेपे ॥ २ । १ । ४१ ॥

(इष्टानुपपत्तिपरिहाराधिकरणम्)

(१२७३ वार्तिकम् ॥ १ ॥)

### ॥ * ॥ ध्वाङ्क्षेणेत्यर्थग्रहणम् ॥ * ॥

(व्याख्याभाष्यम्)

**ध्वाङ्क्षेण क्षेपेऽर्थग्रहणं कर्तव्यम् । इहापि यथा स्याद्—तीर्थकाक इति ॥**

(आक्षेपभाष्यम्)

**क्षेप इत्युच्यते । क इह क्षेपो नाम ? ॥**

(प्रदीपः) ध्वाङ्क्षेण ॥ ४१ ॥ आधाराधेयमात्रावगमात् क्षेपासंभवं मत्वा पृच्छति—क इति ॥

(समाधानभाष्यम्)

**यथा तीर्थकाका न चिरं स्थातारो भवन्ति । एवं यो गुरुकुलानि गत्वा न चिरं तिष्ठति स उच्यते तीर्थकाक इति ॥ ध्वाङ्क्षेण ॥ ४१ ॥**

(प्रदीपः) उपमानोपमेयभावेन कार्येष्वस्थिरत्वात् क्षेपः समासात्प्रतीयत इत्यर्थः ॥ ४१ ॥

(२५० तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. २९)

## ३९१ कृत्यैर्ऋणे ॥ २ । १ । ४२ ॥

(इष्टानुपपत्तिपरिहाराधिकरणम्)

(१२७४ वार्तिकम् ॥ १ ॥)

### ॥ * ॥ कृत्यैर्नियोगे यद्ग्रहणम् ॥ * ॥

(व्याख्याभाष्यम्)

**कृत्यैर्नियोगे यत्प्रत्ययेनेति वक्तव्यम् । इहापि यथा स्यात्—पूर्वाह्णेगेयं साम, प्रातरध्येयोऽनुवाक इति ॥**

(प्रदीपः) कृत्यैर्ऋणे ॥ ४२ ॥ पूर्वाह्णेगेयमिति । तत्पुरुषे कृति बहुलमित्यलुक् ॥

(उद्योतः) कृत्यै ॥ ४२ ॥ भाष्ये नियोगे इति । आवश्यके इत्यर्थः ॥

(आक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम् ? ॥**

(समाधानभाष्यम्)

**न वक्तव्यम् । ऋण इत्येव सिद्धम् । इह यद्यस्य नियोगतः कार्यम्, ऋणं तस्य तद्भवति । तत्र ऋण इत्येव सिद्धम् ॥**

(प्रदीपः) यद्यस्येति । अवश्यकर्तव्यतासामान्यादुपचारादन्यत्राप्यृणशब्दस्य प्रयोगदर्शनाद् गौणस्याप्यर्थस्य शास्त्रे लक्ष्यवशेन क्वचिद् ग्रहणादित्यर्थः ॥ ४२ ॥

(उद्योतः) गौणस्याप्यर्थस्येति । ऋणग्रहणमावश्यकोपलक्षणमित्यर्थः ॥

(अभ्युपगमभाष्यम्)

**यद्ग्रहणं च कर्तव्यम् । इह मा भूत्पूर्वाह्णे दातव्या भिक्षेति ॥ कृत्यैः ॥ ४२ ॥**

(उद्योतः) यद्ग्रहणं चेति । यद्ग्रहणं त्वित्यर्थः ॥ ४२ ॥

(२५१ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. ३०)

## ३९५ क्षेपे ॥ २ । १ । ४६ ॥

(उदाहरणनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**किमुदाहरणम् ? ॥**

(समाधानभाष्यम्)

**अवतप्तेनकुलस्थितं त एतत् ॥**

(प्रदीपः) क्षेपे ॥ ४६ ॥ अवतप्तेनकुलेति । चापल्यादिति भावः ॥ ४६ ॥

---

१ 'स्यैव' । २ अयं भावः । यथा छत्रिसहचरितेषु अच्छत्रिषु साहचर्यादेव छत्रित्वमारोप्याजहल्लक्षणया छत्रिणो यान्तीति प्रयोगस्तेन च छत्रिणामच्छत्रिणाञ्च बोधः तथा शौण्डादिगणे पाठेन साहचर्यात् शौण्डशब्दस्वरूपं धूर्तादिशब्देष्वारोप्य तेषां शौण्डशब्दस्य च प्रकृतसूत्रे शौण्डपदेनाजहल्लक्षणया बोध इति । (र. ना.) ३ अक्षशौण्ड इत्यस्याक्षेषु प्रसक्तः शौण्ड इत्यर्थः । (र.ना.) ४ धूर्तादिशब्दानामित्यर्थः । (र. ना.)

( आक्षेपभाष्यम् )

क्षेप इत्युच्यते क इह क्षेपो नाम? ॥

( समाधानभाष्यम् )

यथा अवतप्ते नकुलाः न चिरं स्थातारो भवन्ति, एवं कार्याण्यारभ्य यो न चिरं तिष्ठति स उच्यते 'अवतप्ते नकुलस्थितं त एतद्' इति ॥

( आक्षेपभाष्यम् )

क्षेपे सप्तम्यन्तं क्तान्तेन सह समस्यत इत्युच्यते तत्र ते सगतिकेन सनकुलेन च समासो न प्राप्नोति ॥

( समाधानभाष्यम् )

॥ क्षेपे सगतिकसकारकसमासे उक्तम् ॥

किमुक्तम्?। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि-' इति ॥ क्षेपे ॥ ४६ ॥

( २५१ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. ३१ )

## ३९६ पात्रेसमितादयश्च ॥ २।१।४७ ॥

( चकारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थश्चकारः? ॥

( समाधानभाष्यम् )

एवकारार्थः। पात्रेसमितादय एव ॥ क्व मा भूत्?। परमं पात्रे समिता इति ॥ पात्रेसमि ॥४७॥

( प्रदीपः ) पात्रे ॥ ४७ ॥ परमं पात्रेसमिता इति । वैयधिकरण्येपि विस्पष्टपटुवत्सुपेति समासः प्राप्नोति ॥ परममिति । क्रियाविशेषणम् । परमाः पात्रेसमिता इति तु पाठो ज्यायान् ॥ ४७ ॥

( २५२ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । २ आ. ३२ )

## ३९७ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ २ । १ । ४८ ॥

( एकनदीशब्देऽव्ययीभाववारणाधिकरणम् )

( आक्षेपभाष्यम् )

इह कस्मादव्ययीभावो न भवति—एका नदी एकनदी "नदीभिः संख्या" इति प्राप्नोति ॥

( प्रदीपः ) पूर्व ॥ ४८ ॥ एकशब्दप्रसङ्गेन नदीभिश्चेत्यत्रोक्तं वस्तु स्मारयितुमाह—इह कस्मादिति ॥

( उद्द्योतः ) पूर्वका ॥ ४८ ॥ भाष्ये—इह कस्मादिति। समाहारद्विगोरिवास्यापि बाध्यसामान्यचिन्तया बाधः स्यादिति प्रश्नः ॥

( समाधानभाष्यम् )

नैष दोषः । इह कश्चित्समासः पूर्वपदार्थप्रधानः। कश्चिदुत्तरपदार्थप्रधानः। कश्चिदन्यपदार्थप्रधानः। कश्चिदुभयपदार्थप्रधानः। पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वन्द्वः। न चात्र पूर्वपदार्थप्राधान्यं गम्यते ॥

( प्रदीपः ) न चात्रेति । एकत्वविशेषणान्नद्यत्र प्राधान्येन प्रतीयते ॥

( उद्द्योतः ) एकत्वविशेषणादिति । एकत्वेन विशिष्टस्य[3] विशेषणत्वादित्यर्थः ॥ नद्यत्रेति । नदीत्वेन नदी प्रधानं नत्वेकत्वेनेत्यर्थः ॥

( समाधानभाष्यम् )

अथ वाव्ययीभावः क्रियताम्, तत्पुरुष इति, तत्पुरुषो भविष्यति विप्रतिषेधेन ॥

( उद्द्योतः ) विप्रतिषेधेनेति । एकशब्दातिरिक्तसंख्याशब्देऽव्ययीभावस्य चारितार्थ्यमिति भावः ॥

( आक्षेपभाष्यम् )

भवेदेकसंज्ञाधिकारे सिद्धम्। परं कार्यत्वे तु न सिद्ध्यति। आरम्भसामर्थ्याच्चाव्ययीभावः प्राप्नोति, परंकार्यत्वाच्च तत्पुरुषः प्राप्नोति ॥

( समाधानभाष्यम् )

परं कार्यत्वे च न दोषः ॥ कथम्?। नदीभिः समाहारेऽव्ययीभावो वक्तव्यः । स चावश्यं वक्तव्यः। सर्वैकनदीतरे ॥ पूर्वका ॥ ४८ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

( प्रदीपः ) अवशिष्टं भाष्यं तत्रैव व्याख्यातम् ॥ ४८ ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

( उद्द्योतः ) समाहारे इति । स च नात्रेति भावः[4] ॥ ४८ ॥ इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

१ परस्परमिल्यादिः । ( र. ना. )

२ सगतिकसकारकयोः समास इत्यर्थः । ( र. ना. )

३ अभेदेनेति शेषः । ( र. ना. )

४ समाहारे द्विगुं बाधित्वेति भावः । ( र. ना. )

# द्वितीयाध्यायस्य प्रथमपादे तृतीयाह्निकम्

( २५४ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । ३ आ. १ सू. )

## ३९९ तद्धितार्थोत्तरपदसमाहारे च ॥ २ । १ । ५० ॥

( समाहारशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**समाहार इति कोयं शब्दः ? ॥**

( प्रदीपः ) **तद्धितार्थो ॥ ५० ॥ समाहार इति कोयमिति** । किं भावसाधनोऽथ कर्मसाधनः । तत्र भावसाधने द्रव्यस्यानयनादिकं[2] न प्राप्नोति । समूहरूपत्वाच्च समाहारस्य तद्धितार्थग्रहणेन समासस्य सिद्धत्वाद्भेदेनोपादानमनर्थकं प्राप्नोति । कर्मसाधने तु उपसर्जनह्रस्वत्वं न प्राप्नोति द्विगुरेकवचनमित्येतच्च वक्तव्यं भवतीति प्रश्नः ॥

( उद्द्योतः ) **तद्धितार्थो ॥ ५० ॥ इत्येतच्च वक्तव्यमिति** । समाह्रियमाणानां प्रधानानां बहुत्वादिति भावः ॥

( समाधानभाष्यम् )

**समाङ्पूर्वाद्धरतेः कर्मसाधनो घञ्—समाह्रियते समाहार इति ॥**

( प्रदीपः ) **कर्मसाधन इति** । द्रव्यस्यैव कार्यसंबन्धदर्शनादिति भावः । संज्ञाग्रहणं च घञ्विधौ प्रत्याख्यातमित्यसंज्ञायामपि घञ् भवति ॥

( आक्षेपभाष्यम् )

**यदि कर्मसाधनः, पञ्च कुमार्यः समाहृताः पञ्चकुमारि दशकुमारि "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वं न प्राप्नोति । "द्विगुरेकवचनम्" इत्येतच्च वक्तव्यम् ॥**

( प्रदीपः ) **यदीति** । कुमार्यर्थस्य प्राधान्यात् समासशास्त्रे च प्रथमानिर्देशाभावाद् ह्रस्वाप्रसङ्गः । यद्यप्यत्र नपुंसकह्रस्वत्वं[3] सिध्यति, पञ्चखट्वीति तु न सिध्यति । अत्र हि **वाबन्त इति** पक्षे स्त्रीत्वम् । पक्षे क्लीबत्वम् । तत्र क्लीबत्वे ह्रस्वत्वे सति पञ्चखट्वमिति सिध्यति । स्त्रीत्वे तु अनुपसर्जनत्वात् अह्रस्वत्वेऽनदन्तत्वाद् ङीबभावात् पञ्चखट्वा इति स्यात् ॥ **द्विगुरिति** । अनेकार्थत्वात्समासस्येति भावः ॥

( उद्द्योतः ) **कुमार्यर्थस्य प्राधान्यादिति** । एवं च प्रधानत्वेन नानाक्रियासम्बन्धयोग्यतया नानाविभक्त्युत्पत्तेरेकविभक्तीति नोपसर्जनत्वमिति भावः ॥ **पक्षे स्त्रीत्वमिति** । एवं च स्त्रीत्वेऽप्यनुपसर्जनत्वादह्रस्वत्वेऽनदन्तत्वात् ङीबभावे पञ्चखट्वा इति स्यादिति तात्पर्यम् । क्वचित्तु मूल एवेदं दृश्यते ॥ परे तु नात्र नपुंसकह्रस्वप्राप्तिः, एतद्भाष्यप्रामाण्येनास्यार्थेचादित्वेन पुंस्त्वस्यापि स्वीकारात् । पञ्चकुमारिरित्यत्र विसर्गो लेखकप्रमादाद् भ्रष्टः । अत एव स नपुंसकमिति शास्त्रं **विभाषा वृक्षेति** सूत्रे लिङ्गमशिष्यमित्यादिना प्रत्याख्यातम् । व्यभिचारदर्शनात्तत्र कार्यमिति तदाशयः । अन्यथा संख्यादेरपि लोकाश्रयत्वात्[5] किम् अत्रैव तत्कथनेनेत्यलम् ॥

( समाधानभाष्यम् )

**एवं तर्हि भावसाधनो भविष्यति—समाहरणं समाहारः ॥**

( आक्षेपभाष्यम् )

**अथ भावसाधने सति किमभिधीयते ? ॥**

( प्रदीपः ) **अथेति** । लोके समाहार एकप्रदेशसंघट्टनमुच्यते । तस्य पञ्चग्राम्यादावसंभव[6] इति भावः ॥

( समाधानभाष्यम् )

**यत्तदौत्तराधर्यम् ? ॥**

(प्रदीपः) **यत्तदिति** । पञ्चपूल्यादौ[7] तस्य संभवादिति भावः ॥

( आक्षेपभाष्यम् )

**कः पुनर्गवां समाहारः ॥**

( प्रदीपः ) **कः पुनरिति** । औत्तराधर्यस्यासंभवात्प्रश्नः ॥

( समाधानभाष्यम् )

**यत्तदर्जनं क्रयणं भिक्षणमपहरणं वा ॥**

( प्रदीपः ) **यत्तदर्जनमिति** । एकस्यां क्रियायां गुणे वा बुद्ध्या समीपीकरणं समाहार इत्यर्थो विवक्षितः । तत्रार्जननिमित्तत्वादर्जनं[8] समाहार इत्युक्तम् । तच्च क्रयादिना भवतीति तन्निर्देशः कृतः ॥

( उद्द्योतः ) **बुद्ध्या हस्तादिवत्करणभूतया एकस्यां क्रियायां** क्रियारूपे वस्तुनि समीपीकरणं संघट्टनमित्यर्थः ॥ **अर्जननिमित्तत्वादिति** । बहुव्रीहिः, अर्जने हि एताभ्यन्मयेदमर्जितमित्येकक्रियायां संघट्टनं भवतीति भावः ॥ **अर्जनं** स्वस्वत्वाक्रान्तताकरणम् ॥

( आक्षेपभाष्यम् )

**यद्येवं विक्षिप्तेषु पूलेषु, गोषु चरन्तीषु न सिद्ध्यति ॥**

( प्रदीपः ) यथोक्तमप्रतिपद्यमानः पर आह—**यद्येवमिति** ॥ **गोष्विति** । नानास्वामिकानामर्जनाभावमाह ॥

( उद्द्योतः ) भाष्ये—**विक्षिप्तेष्विति** । विक्रयार्थं विक्षिप्य स्थापितेष्वित्यर्थः । तत्र नौत्तराधर्यमिति भावः ॥

---

१ 'धन उत कर्म' । २ पञ्चगवमित्यादावित्यादिः । समूहस्यैव प्रधानत्वादानयनाद्यन्वयः स्यादिति भावः । ( र. ना. ) ३ नपुंसकत्वप्रयुक्तह्रस्वत्वे इत्यर्थः । ( र. ना. ) ४ समाहारे द्विगौ द्वन्द्वे च नपुंसकत्वस्येत्यादिः । (र.ना.) ५ वाराणसी Bengal Asiatic Society मुद्रितपुस्तकयोस्तु 'लोकाश्रयत्वात् किमत्रैव तत्कथनेन' इत्येवं पाठो मुद्रित उपलभ्यतेऽनन्वित इव । वस्तुतस्तु 'लोकाश्रयत्वात् किमत्रैव तत्कथनेन' इति पाठ एव प्रकृतोपयुक्तत्वाच्छोभनः । अस्यार्थः, अन्यथा, विभाषा वृक्षेति सूत्रस्थोक्तभाष्यस्य तदाशयानङ्गीकारे, संख्यादेरपि लोकाश्रयत्वात्तत्रापि तत्प्रयुक्तैकवचनद्विवचनादीनामशिष्यत्वं वक्तव्यमिति किम् अत्रैव, लिङ्गे एव, तत्कथनेन, लोकाश्रयत्वप्रयुक्तस्य सनपुंसकमिति शास्त्राशिष्यत्वस्य कथनेनेत्यर्थः । तस्मात् अनन्वित इवेत्युक्तिरसंगतेति वयम् । ( र. ना. ) ६ नहि पृथगवस्थितानां ग्रामाणामेकदेशे संघट्टनं पञ्चग्रामीति प्रयोगे प्रतीयते न वा संभवि इति भावः । ( र. ना. ) ७ 'पञ्चपूल्यादौ' । ८ अर्जनधेत्यर्थः । तन्निर्देशः, अर्जनसामानाधिकरण्येन क्रयणादीनां निर्देश इत्यर्थः । ( र. ना. )

( समाधानभाष्यम् )

**एवं तर्हि समभ्याशीकरणं समाहारः ॥**

( प्रदीपः ) **समभ्याशीकरणमिति** । समीपीकरणमित्यर्थः ॥

(उद्योतः) **समीपीकरणमित्यर्थ इति** । तच्चैकदेशे क्रियायां बुद्धौ वेत्यन्यत्[1] ॥

( आक्षेपभाष्यम् )

**एवमपि पञ्चग्रामी षण्णगरी त्रिपुरीति न सिध्यति ॥ किं कारणम् ? । समेकत्ववाची, आङाभिमुख्ये वर्तते, हरतिर्देशान्तरप्रापणे ॥**

( प्रदीपः ) **एवमपीति** । ग्रामादीनां नियतदेशावस्थानत्वात्समीपीकरणाभाव इति भावः । यदायं ग्रामशब्दो देशविशेषवाची तदायं दोषः । पुरुषवाचिनि तु न दोषः । तेषां समीपीकरणसंभवात् ॥ **समेकत्ववाचीति** । भिन्नदेशानामेकवर्गीकरणेन देशान्तरप्रापणं समाहारः । स च ग्रामादीनां नास्तीति भावः ॥

( उद्योतः ) **एकवर्गीकरणेनेति** । फलरूपे हेतौ तृतीया । आभिमुख्यार्थाङा वर्गीकरणं लब्धम् ॥

( समाधानभाष्यम् )

**नावश्यं हरतिर्देशान्तरप्रापण एव वर्तते । किं तर्हि ? ॥ सादृश्येपि वर्तते । तद्यथा—मातुरनुहरति पितुरनुहरतीति ॥**

( प्रदीपः ) **नावश्यमिति** । ततश्च ग्रामादीनामपि लाभादिसदृशधर्मानुगमात्समाहारसद्भावः[2] ॥

( उद्योतः ) भाष्ये—**सादृश्येपि वर्तत इति** । एकक्रियाकारकत्वादिरूपं सादृश्यमेव समाहारशब्दार्थः अनुहरतिवत्[3] ॥

( समाधानान्तरभाष्यम् )

**अथ वा पञ्चग्रामी षण्णगरी त्रिपुरीति । नैवेदमियत्येवावतिष्ठते । अवश्यमसौ ततः किंचिदाकाङ्क्षति क्रियां गुणं वा । यदाकाङ्क्षति तदेकं, स च समाहारः ॥**

( प्रदीपः ) **अथ वेति** । केवलेन पदार्थेन व्यवहाराभावादवश्यं क्रिया गुणो वापेक्ष्यते तत्र च बुद्ध्या भिन्नदेशानामप्यस्ति समीपीकरणमित्यर्थः ॥ **स च समाहार इति** । तन्निमित्तत्वादित्यर्थः ॥

( उद्योतः ) नन्वनुपूर्वकस्यैव तत्र शक्तिरत आह—भाष्ये—**अथ वेति** ॥ **नैवेदमिति** । पञ्चग्रामीत्यादिपदं, इयमिति पाठे उक्तिरिति शेषः ॥ **इयत्येव** । पञ्चग्रामादिमात्र एव ॥ **असौ** । प्रयोक्ता द्रष्टा वा ॥ **ततः** । ग्रामादितः । अतिरिक्तं इति शेषः ॥ **आकाङ्क्षति** । बोधयितुम् ॥ **क्रियां**, नदीतीरस्थत्वादिरूपाम् ॥ **गुणं**, समृद्धत्वादिरूपम् ॥ **तत्र च बुद्ध्येति** । तत्र क्रियादौ बुद्ध्या करणभूतया तेषां सामीप्यं संघट्टनं क्रियत इत्यर्थः ॥

( आक्षेपभाष्यम् )

**अयं तर्हि भावसाधने सति दोषः—'पञ्चफली[5] आनीयताम्' इति भावानयने चोदिते द्रव्यानयनं न प्राप्नोति ॥**

( समाधातुं प्रश्नभाष्यम् )

**नैष दोषः । इदं तावदयं प्रष्टव्यः—'अथेह "गौरनुबन्ध्योऽजोऽग्नीषोमीयः" इति कथमाकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनानि क्रियन्ते' इति ॥**

( तद्देयप्रश्नोत्तरभाष्यम् )

**"असंभवाद्" आकृतौ आरम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादीनि क्रियन्ते ॥**

( प्रश्नोत्तरस्यैव स्वार्थसाधकताभाष्यम् )

**इदमप्येवंजातीयकमेव । असंभवाद्भावानयनस्य द्रव्यानयनं भविष्यति ॥ अथ वा—अव्यतिरेकाद् द्रव्याकृत्योः ॥**

( प्रदीपः ) **असंभवादिति** । द्रव्यानयनमन्तरेणेत्यर्थः ॥ **अथ वेति** । पूर्वमुपायभावेनाज्ञानयने पात्रस्येव द्रव्यस्य क्रियायामनुप्रवेशः कथितः ॥ इदानीं तु वास्तवभेदाभावाद् बुद्धिपरिकल्पितभेदसद्भावादिति विशेषः ॥

( उद्योतः ) **असंभवादिति** । जातेरेवानयनान्वयः, क्रिया तु तत्रासम्भवात्तत्सम्बद्धे द्रव्ये इति द्रव्यद्वारा तदानयनादीति भावः । तद्ध्वनयन्नाह—**अज्ञानयने पात्रस्येवेति** । अग्निरानेय इति बोधिते शब्दाबुद्धपात्रस्यापि यथा आनयनं केवलतदानयनासम्भवात्तथेहापीति भावः । मञ्जूषायां चेदमुपपादितम् ॥ **वास्तवभेदाभावादिति** । द्रव्याकृत्योरिव समाहारसमाह्रियमाणयोरपि वास्तवभेदाभाव इति भावः ॥ नन्वेवं घटानां समाहार इति न स्यादत आह—**बुद्धिपरिकल्पितेति** । यतोयं बुद्धिकल्पितोऽतो वास्तवभेदस्यैवाभाव इति भावः ॥ **अव्यतिरेकादित्यस्य** व्यतिरेकमात्रस्याभावादित्यर्थ इति भावः[6] ॥

( सूत्रन्यासविचाराधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनर्द्विगुसंज्ञा प्रत्ययोत्तरपदयोर्भवति ? ॥**

( प्रदीपः ) **किं पुनरिति** । काशकृत्स्नस्य "प्रत्ययोत्तरपदयोः" इति सूत्रम् । तद्विचारयति । पाणिनीयं तु पश्चाद्विचारयिष्यति ॥

( अभ्युपगमभाष्यम् )

**एवं भवितुमर्हति ॥**

( प्रदीपः ) दोषस्य सुप्रतिविधानत्वादाह—**एवमिति** ॥

---

१ एकदेशे इत्यस्यैव व्याख्यानं क्रियायां बुद्धौ वेति । (र.ना.) २ लाभादिरूपो यः सदृशो धर्मस्तदनुगमादित्यर्थः । एकलाभादिक्रियाकारकत्वरूपसादृश्यसत्त्वादित्यर्थः फलितः । (र.ना.) ३ अनुपूर्वकस्यैव हरतेः सादृश्ये शक्तिरित्यर्थः । (र. ना.) ४ बोद्धेत्यर्थः । (र. ना.) ५ 'पूली' । ६ वास्तवभेदमात्रस्यैवेत्यर्थः । कल्पितभेदस्तु अस्त्येवेति भावः । (र. ना.)

( १२७५ अभ्युपगमे दोषवार्तिकम् ॥ १ ॥ )

**॥ * ॥ द्विगुसंज्ञा प्रत्ययोत्तरपद्योश्चे-दितरेतराश्रयत्वादप्रसिद्धिः ॥ * ॥**

( व्याख्याभाष्यम् )

**द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः ॥ का इतरेतराश्रयता ? । द्विगुसंज्ञानिमित्ते प्रत्ययोत्तरपदे । प्रत्ययोत्तरपदनिमित्ता च द्विगुसंज्ञा । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

( प्रदीपः ) **द्विगुसंज्ञानिमित्ते इति**[2] । पञ्चसु कपालेषु संस्कृत इति समासे सति प्रातिपदिकत्वात् प्रत्ययेन भाव्यम् प्रत्यये च परतो द्विगुरितीतरेतराश्रयः । पञ्च गावो धनमस्येत्यत्रापि पदद्वयस्य तत्पुरुषे कृते बहुव्रीहिः क्रियते इति पक्षाश्रयेणेतरेतराश्रयोद्भावनम् । धनशब्दस्य सत्युत्तरपदत्वे पूर्वयोः पदयोः समासेन भवितव्यम् । सति च पदद्वयस्य समासे बहुव्रीहिणा, तस्मिन्सति धनशब्दस्योत्तरपदत्वेन । **सुप्सुपेति** संख्याया विवक्षितत्वात् त्रयाणां पदानां बहुव्रीहिणा न भवितव्यमिति मन्यते । यदा त्वनेकग्रहणात्पदत्रयस्यापि बहुव्रीहिर्भवति तदा नास्तीतरेतराश्रयदोषः ॥ अथ वायं भावः—समास इत्यन्वर्थसंज्ञेयं समसनं समासः संक्षेपः । स चासंक्षिप्तानां क्रियते । यदि च पूर्वं बहुव्रीहिः प्रवर्तते तदा संक्षिप्तत्वादेकार्थीभावात् किमपरः संक्षेपः क्रियते । तस्मात्तत्पुरुषगर्भो बहुव्रीहिः कर्तव्यस्तत्र चेतरेतराश्रयत्वम् ॥

( उद्द्योतः ) द्विगोरित्येवमविधानात्कथं प्रत्ययो द्विगुनिमित्तोत आह— **पञ्चस्विति** । द्विगुनिमित्तप्रातिपदिकत्वनिमित्तत्वात्तन्निमित्तत्वमिति[3] भावः ॥ नन्वेवमप्युत्तरपदे न सः, द्विगोरुत्तरपदनिमित्तत्वेपि बहुव्रीहेस्त्रयाणामपि भावेन उत्तरपदत्वस्य द्विगुनिमित्तत्वाभावादत आह—**पञ्चगाव इति** ॥ तत्पुरुषे कृत एव बहुव्रीहिर्न[4] प्रागिति कुतोत आह—**सुप्सुपेति** । संख्याया विवक्षितत्वमुपलक्षणं सुबन्तत्वं समुदाये न पर्याप्तमित्यस्यार्थस्य ॥ अविशेषेण बहुव्रीहिरिति पक्षेऽप्याह—**अथ वेति** ॥ संक्षिप्तत्वे हेतुरेकार्थीभावादिति ॥

( समाधानभाष्यम् )

**एवं तर्हि "अर्थे" इति वक्ष्यामि ॥**

( प्रदीपः ) पाणिनीयलक्षणं निरूपयितुमाह—**एवं तर्हीति** । तद्धितार्थे तद्धिताभिधेये अनुत्पन्न एव तद्धिते द्विगुरिति नास्त्यन्योन्याश्रयत्वमिति भावः ॥

( उद्द्योतः ) अर्थशब्दो न प्रयोजनवाचीत्याह—**तद्धिताभिधेय इति** । तत्र वाच्ये समास इत्यर्थः ॥

( १२७६ वार्तिकम् ॥ २ ॥ )

**॥ * ॥ अर्थे चेत्तद्धितानुत्पत्ति-र्बहुव्रीहिवत् ॥ * ॥**

( व्याख्याभाष्यम् )

**अर्थे चेत्तद्धितोत्पत्तिर्न प्राप्नोति । द्वैमातुरः । त्रैमातुरः । पाञ्चनापितिः ॥ किं कारणम् ? । द्विगुनोक्तत्वात् । बहुव्रीहिवत् । तद्यथा—चित्रगुः शबलगुरिति बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति ॥**

( प्रदीपः ) **अर्थे चेदिति**[5] । यदि तद्धितार्थेऽभिधेये समासः क्रियते तदा समासेन तस्यार्थस्याभिहितत्वात्प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावात् पाञ्चनापितिरित्यादौ तद्धितो न प्राप्नोति ॥

( उद्द्योतः ) प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावादिति । वाचकप्रत्ययस्थले स आवश्यक इति भावः ॥

( न्यासान्तरभाष्यम् )

**एवं तर्हि "समासतद्धितविधौ" इति वक्ष्यामि ।**

( प्रदीपः ) **समासतद्धितविधाविति** । न्यासद्वये दोषदर्शनान्न्यासान्तरमाश्रीयते । समासे विधीयमाने तद्धिते च दिक्संख्ये सुपा सह समस्येते इति लक्षणाश्रयान्नास्तीतरेतराश्रयदोषः । परनिमित्तानपेक्षणात्तद्विषये प्रागेव समासविधानादिति भावः ॥

( उद्द्योतः ) द्वितीयं दोषमुद्धर्तुमाह—**परनिमित्तेत्यादि** ॥

( १२७७ वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ समासतद्धितविधाविति चेद-न्यत्र समाससंज्ञाभावः ॥ * ॥**

( व्याख्याभाष्यम् )

**समासतद्धितविधाविति चेदन्यत्र समाससंज्ञा न प्राप्नोति ॥ क्वान्यत्र ? । स्वरे । पञ्चारत्निः दशारत्निः "इगन्ते द्विगौ" इत्येष स्वरो न प्राप्नोति ॥**

( प्रदीपः ) **अन्यत्रेति** । यथा स्वरे पराङ्गवद्भावो विधीयमानः षत्वणत्वयोर्न भवति, एवं स्वरे द्विगुसंज्ञा न स्यात् । **इगन्तेति** च लक्षणं समाहारद्विगौ सावकाशम् । यानि तु **द्विगोर्लुगनपत्ये** इत्यादीनि तेषु वचनसामर्थ्याद् द्विगुसंज्ञा प्रवर्तत इत्यभिप्रायेणान्यत्र सावकाशे स्वरे दोष उक्तः ॥ **पञ्चारत्निरिति** । पञ्चारत्नयः प्रमाणमस्येति **प्रमाणे लो द्विगोर्नित्यमिति** मात्रचो लुक् ॥

( उद्द्योतः ) **यानि तु द्विगोरिति** । द्विगोः परस्य तद्धितस्य लुगिति सूत्रार्थे तु समाहारद्विगोः परस्य तद्धितस्य लुगर्थमिदमपि सावकाशमेव, **अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति**[6] वार्तिकाद् द्विगोर्निमित्तं यस्तद्धित इत्यर्थे तु तत्र दोषस्यैवाभाव इति चिन्त्यम् ॥

---

१ 'द्विगुनिमित्ते' । २ 'द्विगुनिमित्ते इति' ।
३ अस्मिन् वाक्ये बहुव्रीहित्रयम् । एवमग्रेऽपि बहुव्रीहिरेव । ( र. ना. )
४ नेतरेतराश्रयत्वदोष इत्यर्थः । ( र. ना. )

५ 'तद्धितार्थे' । ६ स तद्धितो निमित्तं यस्य तदतिरिक्तादपि द्विगोः परस्य तद्धितस्य लुग् भवति, तन्निमित्तातन्निमित्तद्विग्वोरर्थवैलक्षण्यस्यासंप्रत्यये इत्यर्थः । ( र. ना. )

( १२७८ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् ॥ * ॥

( व्याख्याभाष्यम् )

सिद्धमेतत् ॥ कथम् ? । प्रत्ययोत्तरपदयोश्चेति वचनात् । प्रत्ययोत्तरपदयोर्द्विगुसंज्ञा भवतीति वक्तव्यम् ॥

( प्रदीपः ) सिद्धं त्विति । पाञ्चनापितिः पञ्चगवधन इति च[1] स्थितानामेव शब्दानामनुशासनं क्रियते । तत्र प्रत्ययोत्तरपदे स्थिते एवेति नास्ति दोषः ॥

( आक्षेपसारणभाष्यम् )

ननु चोक्तम्—*द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः* इति ॥

( समाधानसाधकभाष्यम् )

नैष दोषः । इतरेतराश्रयमात्रमेतच्चोदितम् । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि—*सिद्धं तु नित्यशब्दत्वाद्* इति ॥

( समाधानबाधकभाष्यम् )

नेदं तुल्यमन्यैरितरेतराश्रयैः । नहि संज्ञा नित्या ॥

( प्रदीपः ) नहि संज्ञेति । प्रत्ययसंज्ञासंबन्धं समाससंज्ञाप्रतिबद्धं[2] चोत्तरपदत्वमाश्रित्यायं समासः क्रियते, न च प्रत्ययसमाससंज्ञे लोके स्तः ॥

( उद्योतः ) प्रत्ययसंज्ञासंबन्धमिति । प्रत्ययशब्देनोपादानादिति भावः ॥ लोके स्त इति । नित्यत्वेपि संज्ञानां तदीयसंकेतग्रहस्य शास्त्रनिरपेक्षं लोकेऽसत्त्वमिति भावः ॥

( समाधानसाधकभाष्यम् )

एवं तर्हि भाविनी संज्ञा विज्ञास्यते । तद्यथा । कश्चित्कंचित्तन्तुवायमाह—"अस्य सूत्रस्य शाटकं वय" इति । स पश्यति—'यदि शाटकः न वातव्यः । अथ वातव्यो न शाटकः । वातव्यः शाटकश्चेति[3] विप्रतिषिद्धं भवति । भाविनी खल्वस्य संज्ञाभिप्रेता । स मन्ये वातव्यः यस्मिन्नुते 'शाटक' इत्येतद्भवति' इति ॥ एवमिहापि तस्मिन् द्विगुर्भवति यस्याभिनिर्वृत्तस्य प्रत्यय उत्तरपदमिति चैते संज्ञे भविष्यतः ॥

( प्रदीपः ) एवं तर्हीति । प्रत्ययोत्तरपदयोरिति विषयसप्तमी न तु परसप्तमीत्यत्र तात्पर्यम् ॥

( उद्योतः ) भाष्ये—एते संज्ञे इति । उत्तरपदशब्दोपि समाससंज्ञानिमित्तकत्वात्संज्ञैवेति भावः ॥

( अभ्युपगमभाष्यम् )

अथ वा पुनरस्तु—'अर्थे' इति ॥

( प्रदीपः ) प्राणिनीयं समर्थयितुमाह—अथ वेति । तद्धितश्चासावर्थः प्रयोजनं तस्मिन् कर्तव्ये द्विगुर्भवतीत्यर्थः ॥

( आक्षेपसारणभाष्यम् )

ननु चोक्तम्—*अर्थे चेत्तद्धितानुत्पत्तिर्बहुव्रीहिवद्* इति ॥

( समाधानभाष्यम् )

नैष दोषः । नावश्यमर्थशब्दोऽभिधेय एव वर्तते ॥ किं तर्हि ? । स्यादर्थेपि वर्तते । तद्यथा—दारार्थं घटामहे । धनार्थं भिक्षामहे । दारा नः स्युः । धनानि नः स्युरिति । एवमिहापि तद्धितार्थे द्विगुर्भवतीति तद्धितः स्यादिति ॥

( प्रदीपः ) स्यादिति । प्रार्थने लिङ् ॥

( १२७९ वार्तिकम् ॥ ५ ॥ )

॥ * ॥ द्विगोर्वा लुग्वचनं ज्ञापकं तद्धितोत्पत्तेः ॥ * ॥

( व्याख्याभाष्यम् )

अथ वा यदयं "द्विगोर्लुगनपत्ये" इति द्विगोरुत्तरस्य तद्धितस्य लुकं शास्ति तज्ज्ञापयत्याचार्यः—'उत्पद्यते द्विगोस्तद्धितः' इति ॥

( प्रदीपः ) अत्रापि पक्षे स्वरे द्विगुसंज्ञा न प्राप्नोतीत्याह—द्विगोरिति । अभिधेयवचनेऽप्यर्थशब्दे तद्धितानुत्पत्तिदोषो नास्तीत्यर्थः ॥

( उद्योतः ) द्विगोर्वा लुग्वचनं ज्ञापकमिति । एवं तद्धितार्थे विषयभूत इत्यर्थेन च सिध्यति । न चात्र पक्षे अर्थग्रहणं व्यर्थं तद्धिते विषयभूत इत्येव वक्तुं युक्तत्वादिति वाच्यम् । स्वरे दोषप्रसङ्गात् । वस्तुतो ज्ञापकेनायमेवार्थो बोध्यत इति बोध्यम्[4] ॥

( समाहारग्रहणसार्थक्याधिकरणम् )

( १२८० वार्तिकम् ॥ ६ ॥ )

॥ * ॥ समाहारसमूहयोरविशेषात्समाहारग्रहणानर्थक्यं तद्धितार्थेन कृतत्वात् ॥ * ॥

( व्याख्याभाष्यम् )

समाहारः समूह इत्यविशिष्टावेतावर्थौ । समाहारसमूहयोरविशेषात्समाहारग्रहणमनर्थकम् ॥ किं कारणम् ? । तद्धितार्थेन कृतत्वात् । 'तद्धितार्थे द्विगुः' इत्येवमत्र द्विगुर्भविष्यति ॥

( प्रदीपः ) समाहारसमूहयोरिति । स्वरूपपदार्थकत्वाद्द्विचार्थत्वादेकशेषाभावः ॥ अविशेषादिति । एकार्थत्वादित्यर्थः ॥

---

1 'इति च व्यवस्थिताना' । 2 संबद्धमित्यर्थः । ( र. ना. ) 3 'शाटको वातव्यश्चेति' । 4 तद्धितार्थे विषयभूते इत्ययमर्थ इत्यर्थः । ( र. ना. )

(उद्द्योतः) भिन्नार्थत्वे हेतुः स्वरूपेत्यादिः॥

(आक्षेपभाष्यम्)

यदि 'तद्धितार्थे द्विगुः' इत्येवमत्र द्विगुर्भविष्यति, तद्धितोत्पत्तिः प्राप्नोति॥

(आक्षेपबाधकभाष्यम्)

उत्पद्यताम्। लुग् भविष्यति॥

(आक्षेपसाधकभाष्यम्)

लुक्कृतानि प्राप्नुवन्ति॥ कानि?। पञ्चपूली दशपूली "अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि"[1] इति प्रतिषेधः प्राप्नोति॥

पञ्चगवं दशगवम् "गोरतद्धितलुकि" इति टच् न प्राप्नोति॥

(प्रदीपः) प्रतिषेधः प्राप्नोतीति। यथा पञ्चभिरश्वैः क्रीता पञ्चाश्वेति॥

(समाधानभाष्यम्)

नैष दोषः। अविशेषेण 'द्विगोर्ङीब् भवति' इत्युक्त्वा "अपरिमाणबिस्ताचितकम्बल्येभ्यः समाहारे" इति वक्ष्यामि तन्नियमार्थं भविष्यति 'समाहार एव नान्यत्र' इति॥

गोरकारो द्विगोः समाहारे॥

अविशेषेण 'गोष्टज् भवति' इत्युक्त्वा 'द्विगोः समाहारे' इति वक्ष्यामि तन्नियमार्थं भविष्यति—'समाहार एव नान्यत्र' इति॥

(प्रदीपः) अपरिमाणेति। न तद्धितलुकि, अतद्धितलुकीत्यपास्य सूत्रद्वयेऽपि[2] समाहारग्रहणं क्रियते, समाहार एव तद्धितलुकि ङीप्समासान्तौ भवतो नान्यत्रेति नियमविधानान्नास्ति दोषः॥ अविशेषेणेति। गोरित्येकं सूत्रं क्रियते। गोशब्दान्तस्य तत्पुरुषस्य टज् भवति ब्राह्मणगव इति। ततो द्विगोः समाहार इति द्वितीयं सूत्रं नियमार्थमित्यर्थः॥

(उद्द्योतः) समाहार एव तद्धितलुकीति। नियमस्य सजातीयापेक्षत्वात्। तेन पञ्चगवधन इत्यादौ टच्सिद्धिरिति भावः॥ भाष्ये द्विगोः समाहार इति। अनवयवभूतद्विगोश्चेत्समाहार एवेत्यर्थः[3]। तेन पञ्चगवधनमित्यस्य सिद्धिः॥

(१२८१ वार्तिकम्॥ ७॥)

## ॥*॥ अभिधानार्थं तु[4]॥*॥

(व्याख्याभाष्यम्)

अभिधानार्थं तु समाहारग्रहणं कर्तव्यम्। समाहारेणाभिधानं यथा स्यात्, तद्धितार्थेन मा भूदिति॥ किं च स्यात्?॥ तद्धितोत्पत्तिः प्रसज्येत॥

(प्रदीपः) अभिधानार्थं त्विति। समासेन समाहारस्याभिधानं यथा स्यात्। तद्धितेन मा भूदित्यर्थः॥ समाहारेणेति। समाहारेऽभिधेये द्विगुरित्यभिधानं यथा स्यात्। एवं चाभिधाने समासेनोक्तत्वात्तद्धितो नोत्पद्यते॥ तद्धितार्थेनेति। तद्धितार्थे द्विगुरित्यभिधानं मा भूदित्यर्थः। एवमभिधाने हि तद्धितः स्यात्। अर्थशब्दस्य स्यादर्थत्वाज्ज्ञापकाद्वा॥

(उद्द्योतः) समाहारेणेति। समाहारेण समाहारशब्दप्रतिपाद्येनाभिधानं विधानं यथा स्यादित्यर्थः। एवं तद्धितार्थेन तद्धितार्थशब्दप्रतिपाद्येनेत्यर्थः॥ तत्फलितमाह—समाहारेऽभिधेय इति॥ एवं च समाहारशब्देनेव समासेनापि तस्य तस्य पुंस्त्वेनैव बोधः। नपुंसकत्वातिदेशात्तु तत्प्रयुक्तं कार्यमात्रमिति बोध्यम्॥

(अतिप्रसङ्गबाधकभाष्यम्)

उत्पद्यताम्। लुग् भविष्यति॥

(लुकि दूषणभाष्यम्)

लुक्कृतानि प्राप्नुवन्ति॥

(लुकि दूषणपरिहारभाष्यम्)

सर्वाणि परिहृतानि॥

(दूषणपरिहारबाधकभाष्यम्)

न सर्वाणि परिहृतानि। पञ्चकुमारि दशकुमारि "लुक् तद्धितलुकि" इति ङीपो लुक् प्रसज्येत॥

(अवान्तरसमासविधानाधिकरणम्)

(१२८२ विधानान्तरवार्तिकम्॥ ८॥)

## ॥*॥ द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्॥*॥

(भाष्यम्) द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासो वक्तव्यः। वाग्दृषदप्रियः। छत्रोपानहप्रियः। पञ्चगवप्रियः। दशगवप्रियः॥ किं प्रयोजनम्?। समुदायवृत्तावबयवानां मा कदाचिदवृत्तिर्भूदिति॥

(प्रदीपः) उत्तरपदप्रसङ्गेन विचारान्तरमाह—द्वन्द्वेति॥ वाग्दृषदप्रिय इति। वाक् च दृषच्च प्रिये अस्य, पञ्च गावः प्रिया अस्येति, त्रिपदे बहुव्रीहौ कृते उत्तरपदे परतो महाविभाषाधिकाराद्विकल्पेन द्वन्द्वतत्पुरुषौ प्राप्तौ नित्यौ तु वक्तव्यौ। अन्यथा समासाभावपक्षे समासान्तो न स्यात्। जातिरप्राणिनामिति चात्र समाहारद्वन्द्वः। यदि त्वितरेतरयोगेऽप्यत्र द्वन्द्वः स्यात् तदा कार्ये नैव भेदः स्यात्॥ समुदायवृत्ताविति। बहुव्रीहावित्यर्थः॥

(उद्द्योतः) तदा कार्ये नैव भेदः स्यादिति। स्वरे भेदस्य सत्त्वात्समर्थसूत्रभाष्ये उक्तत्वाच्च चिन्त्यमेतत्॥ कश्चित्तु

---

१ अपरिमाणबिस्ताचितेति सूत्रे, गोरतद्धितेति सूत्रे चेत्यर्थः। (र. ना.)

२ कैयटरीत्या नियमाकारे तद्धितलुकीति संयोज्यताम्, अथवाऽनया रीत्याऽनवयवभूतेति संयोज्यतां न कोऽपि फले विशेष इति भावः। (र. ना.)

३ बहुव्रीहिसमासे कुर्ले विशेष्यम्। (र. ना.)

४ अयं भावः। यथा पुत्रार्थो याग इत्यत्र पुत्रः स्यादित्येतदर्थो याग इत्यर्थप्रतीत्या स्यादर्थकत्वमर्थशब्दस्य तथा तद्धितार्थे द्विगुरित्यत्र तद्धितः स्यादित्येतदर्थसत्त्वे द्विगुरित्यर्थस्य भानेन तद्धितोत्पत्तिः प्रसज्येतेति अथवा ज्ञापकात्तद्धितः स्यात्, तथा हि—तद्धितोत्पत्तिं विना समाहारस्य तद्धितार्थत्वाभावेन तद्धितार्थे द्विगुरित्युक्तिरेवानुपपन्ना सती तत्र तदुत्पत्तिं ज्ञापयतीति। (र. ना.)

५ समासस्येत्यादिः। (र. ना.)

६ उत्तरपदे परतो यत्र द्वन्द्वस्य तत्पुरुषस्य वा विधानं तत्र नित्यसमासो वक्तव्य इत्यर्थः। एष एवार्थ एतद्व्याख्याभाष्येऽपि। (र. ना.)

७ 'दप्यवृ'।

८ 'विधाना'।

९ अवयवानामितरेतरयोगपक्षे तत्प्रयुक्तस्वरे तदभावपक्षे समुदायसमासप्रयुक्तस्वरे न भेदस्य सत्त्वादित्यर्थः। (र. ना.)

रूपे नैव भेदः स्यादिति पाठः। क्वचित्तु कार्येणैवेति पाठः। स्वररूपकार्येणैव भेदो न तु रूपेणेत्यर्थः॥ भाष्ये—**अवयवानामिति**। द्वन्द्वतत्पुरुषविषयाणामित्यर्थः॥

(आक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम्?॥**

(समाधानभाष्यम्)

**न वक्तव्यम्। इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च। यदा वृत्तिपक्षः तदा सर्वेषामेव वृत्तिः। यदाऽवृत्तिः पक्षः तदा सर्वेषामवृत्तिः॥**

(प्रदीपः) **वृत्तिपक्ष इति**। एकार्थीभाव इत्यर्थः। न च समुदायस्यैकार्थीभावे तदभावोऽवयवयोर्युक्तः। विरोधादित्यर्थः॥ **यदाऽवृत्तिरिति**। द्वन्द्वतत्पुरुषभाविनां पदानां यदा व्यपेक्षालक्षणं सामर्थ्यं तदा बहुव्रीहिर्न भवतीत्यर्थः॥

(उद्द्योतः) **तदभावोऽवयवयोरिति**। न चैकार्थीभावेपि विभाषानुवृत्तिसामर्थ्यात्समासविकल्पोस्तु, तस्य[2] सर्वत्र सामर्थ्येनैव सम्बन्धस्य क्लृप्ततया समासेनासम्बन्धात्॥ नन्वेवं द्वन्द्व[3]योग्यपदयोर्निष्कृष्य चार्थान्तर्भावेणैकार्थीभावे मानाभावः, पदत्रयस्यैव त[4]थैकार्थीभावकल्पनात्। एवं च द्वन्द्वो दुर्लभः। इदं वचनं[5] तु प्रत्याख्यातम्। चार्थे इति सूत्रं तु धवखदिरावित्यादौ चरितार्थम्। किं चैवं द्वौ मुनी वंश्यौ प्रियौ यस्येति बहुव्रीहौ पूर्वयोरव्ययीभावापत्तिः। तथा च स्वरे दोषः। एवं द्वित्रिंशत्प्रिया अस्येति शैषिकबहुव्रीहौ संख्ययाव्ययेत्यवान्तरबहुव्रीह्यापत्तौ बहुव्रीहौ संख्येय इति डजापत्तिः सुचः श्रवणानापत्तिश्चेति चेन्न। निष्कृष्यैकार्थीभावस्यैव समासादिनिमित्तत्वे मानाभावात्, समासान्तरं त्वनभिधानान्नेति अधिकषष्टिवर्षप्रसङ्गेन समर्थसूत्रशेषे भाष्ये ध्वनितम्। द्वन्द्वोपि बहुव्रीह्यवयव एव, न द्वन्द्वावयव इति होतृपोतृनेष्टोद्गातार इति भाष्येण ध्वनितम्। नव्यानां तत्र प्रमाद एवेति दिक्॥

(१२८३ बहूनां तत्पुरुषविधायकवार्तिकम्॥ ९॥)

## ॥ * ॥ उत्तरपदेन परिमाणिना द्विगो[6]ः समासवचनम्॥ * ॥

(भाष्यम्) **उत्तरपदेन परिमाणिना द्विगोः समासो वक्तव्यः। द्वौ मासौ जातस्य यस्य सः द्विमासजातः त्रिमासजातः। किं पुनः कारणं न सिद्ध्यति?। सुप्सुपेति वर्तते॥**

(प्रदीपः) **द्विगोरिति**। द्विगोर्निष्पत्तय इत्यर्थः॥ **द्वौ मासौ जातस्येति। कालाः परिमाणिनेति त्रिपदः समास इष्यते। स च सुप्सुपेति संख्याया विवक्षितत्वान्न प्राप्नोति। तस्मिंश्च कृते उत्तरपदे परतो द्विमासशब्दयोः समासः क्रियते कालान्ते द्विगौ पूर्वपदप्रकृतिस्वरो यथा स्यात्। द्व्यहजात इत्यत्र च समासान्तः॥**

(उद्द्योतः) भाष्ये—**परिमाणिनेति**। परिमाणिवाचकोत्तरपदेनेत्यर्थः। समासपदं च सामर्थ्यात्तत्पुरुषपरम्। एवं च तेन[7] करणेन पूर्वयोर्द्विगुसिद्धये त्रयाणां तत्पुरुषो वक्तव्य इत्यर्थः॥ ननु द्विगोरन्येन समासाभावाद् द्विगोः समास इत्ययुक्तमत आह—**द्विगोरिति**॥ **निष्पत्तये** इति पाठः। **निष्पत्ताविति** पाठे निष्पादने कर्तव्य इत्यर्थः॥ तदुपपादयति—**द्वौ मासाविति**॥

(विग्रहान्तरेण विधानवैयर्थ्यभाष्यम्)

**एवं तर्हि इदं स्यात्—द्वौ मासौ द्विमासं द्विमासं जातस्येति॥**

(प्रदीपः) **द्वौ मासौ द्विमासमिति**। समाहारे द्विगुः। **पात्रादिभ्यः प्रतिषेध** इति स्त्रीत्वाभावः॥

(विग्रहान्तरदूषणभाष्यम्)

**नैवं शक्यम्। स्वरे हि दोषः स्यात्। द्विमासजात इति प्राप्नोति। द्विमासजात इति चेष्यते॥**

(प्रदीपः) **स्वरे हि दोष इति**। समासान्तोदात्तत्वेन जाताकार उदात्तः स्यादित्यर्थः॥

(दूषणान्तरभाष्यम्)

**द्व्यहजातश्च न सिद्ध्यति। द्व्यहजात इति प्राप्नोति॥**

(उद्द्योतः) भाष्ये—**द्व्यहजातश्चेति**। न संख्यादेः समाहार इति तत्र समासान्तनिषेधादिति भावः॥

(आक्षेपभाष्यम्)

**न चैवं भवितव्यम्?॥**

(समाधानभाष्यम्)

**भवितव्यं च यदा समाहारे द्विगुः॥ द्व्यहजातस्तु न सिद्ध्यन्ति॥**

(आक्षेपभाष्यम्)

**किमुच्यते परिमाणिनेति, नपुनरन्यत्रापि पञ्चगवप्रियः दशगवप्रियः?॥**

(१२८४ विधानसाधकवार्तिकम्॥ १०॥)

## ॥ * ॥ अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदप्रसिद्धिः॥ * ॥

(व्याख्याभाष्यम्)

**अन्यत्र समुदायो बहुव्रीहिसंज्ञः। अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदं प्रसिद्धम्। उत्तरपद[10]प्रसिद्धेः 'उत्तरपदे' इति द्विगुर्भविष्यति॥**

(प्रदीपः) **अन्यत्रेति। पञ्चगवधन इत्यादौ बहुव्रीहौ कृते पूर्वयोः समासान्तादिकार्यसिद्धये एकार्थीभावे प्रागपि सत्येव पुनः समासः क्रियते। एतेन पूर्वोक्त इतरेतराश्रयदोषोऽपि परिहृतः।**

---

१ द्वन्द्वतत्पुरुषान्यतररूपेण भविष्यतामित्यर्थः। (र. ना.) २ विभाषाऽधिकारस्येत्यर्थः। (र. ना.) ३ वाग्दृषदप्रिय इत्यादावित्यादिः। (र. ना.) ४ निष्कृष्येत्यर्थः। (र. ना.) ५ द्वन्द्वतत्पुरुषयोरित्यादिरूपमित्यर्थः। (र.ना.) ६ सिद्धये इति शेषः। परिमाणि, परिच्छेद्यं तद्वाच्युत्तरपदहेतुकद्विगुसिद्धये पदत्रयस्य समासो वक्तव्य इत्यर्थः। (र. ना.) ७ उत्तरपदेन करणेनेत्यर्थः। (र. ना.) ८ सति शिष्टस्वरस्य बलीयस्त्वेन द्विमासं जातस्य यस्येति विग्रहे समाहारद्विगोरनन्तरं जायमानसमासप्रयुक्तान्तोदात्तत्वमेव प्राप्नोतीत्यर्थः। (र. ना.) ९ एतद्वचनेन त्रिपदतत्पुरुषे जाते पश्चात्तद्धितार्थेति द्विगौ सति शिष्टत्वाद् इगन्तकालकपालेति विहितः पूर्वपदप्रकृतिस्वर एवेष्यते इति भावः। (र. ना.) १० '–पदे प्रसिद्धे उत'।

( उद्योतः ) एकार्थीभावे प्रागपि सत्येवेति । बहुव्रीहिसमासकृतैकार्थीभावे सत्येव तत्पुरुषभाविपदमात्रयोः पृथगेकार्थीभावाभावेपि समासः क्रियत इत्यर्थः । न च पृथगेकार्थीभावाभावेपि वृत्तिश्चेदत्रोत्तरपदग्रहणं व्यर्थम्, अतिप्रसङ्गस्त्वनभिधानादेव त्वयेव मयापि वारणीय इति वाच्यम् । द्विगुसंज्ञार्थत्वात् । तत्फलं तु द्विमासप्रिय इत्यादौ कालान्तद्विगुत्वप्रयुक्तः पूर्वपदप्रकृतिस्वर इति दिक् ॥ एतेनेति । त्रिपदबहुव्रीहिसत्त्वेनेत्यर्थः । तदुक्तं भाष्ये—उत्तरपदं प्रसिद्धमिति ।

( १२८५ वार्तिकम् ॥ ११ ॥ )

**॥ * ॥ सर्वत्र मत्वर्थे प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **सर्वेषु पक्षेषु द्विगुसंज्ञायाः मत्वर्थे प्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम् ? । पञ्चखट्वो दशखट्वः । "द्विगोः" इतीकारो मा भूत् । पञ्चगुर्दशगुः "गोरतद्धितलुकि" इति टच् मा भूदिति ॥ तद्धितार्थोत्तरपद० ॥ ५० ॥**

( प्रदीपः ) **सर्वत्रेति** । यद्यर्थशब्दः स्वादर्थे यदि वाभिधेयवचनो ज्ञापकाच्च तद्धितोत्पत्तिः तदा मतुपस्तद्धितत्वात् तदर्थेऽयमेव समासः स्यान्न तु बहुव्रीहिः । अशेषत्वात् । तस्य तु चित्रग्वादिरवकाशः । तस्मान्मत्वर्थे प्रतिषेधो वक्तव्यः ॥ **पञ्चखट्वेति** । पञ्च खट्वा यस्या विद्यन्त इति यदि द्विगुः स्यात्तदा **यावन्तः स्त्रियां भाष्यत** इति पक्षे **द्विगो**रिति ङीप् प्राप्नोति पक्षे च नपुंसकत्वम् ॥ **पञ्चगुरिति** । तत्पुरुषत्वे सति टच् प्राप्नोति ॥ नन्वस्मिन् समासे सति मतुपः श्रवणं प्रसज्येत । न च **द्विगोर्लुगि**ति लुगस्ति, **प्राग्दीव्यत** इत्यधिकारात् ॥ एवं तर्हि दोषोपलक्षणं भाष्यम् । मतुपो लुग् वक्तव्य इति दोषः । तल्लुकि च ङीप्समासान्तौ प्रतिषेधादेव न भविष्यतः । पञ्च आढका यस्याः सा पञ्चाढकेत्यत्र तु ङीप् प्राप्नोति ॥ ५० ॥

( उद्योतः ) अशेषत्वादिति । अनुक्तसमासः शेष इति भावः । त्रिकतः शेषे तु परत्वाद्बहुव्रीहिसिद्धिरिति बोध्यम् ॥ **एवं तर्हीति** । केचित्तु तद्धितार्थेऽभिधेय इत्यर्थः । तद्धितोत्पत्तिज्ञापकं सजातीयापेक्षत्वात्प्राग्दीव्यतीयविषयमेव । किं चैतत्पक्षेकवाक्यतया स्वादर्थेऽपि प्राप्तस्यानभिधानादनुत्पत्तिः स्वादिति सम्भावनायामपि लिङि, तन्मूलकमेव मतुप्सूत्रे मत्वर्थे द्विगावन्यतद्धितवन्मतुरपि स्यादित्याशङ्क्य **द्विगोर्मत्वर्थतद्धितस्य प्रतिषेधो वक्तव्यो यदि तन्नास्ति सर्वत्र मत्वर्थे प्रतिषेध इति, सति तस्मिंस्तेनैव सिद्धमित्युक्तम्** । प्रत्ययप्रतिषेधारम्भेपि ङीप्टचोर्न्यावृत्तये इदमावश्यकमिति तदाशयः । तद्वचनाभिप्रायेण चात्रैतयोरापादनमिति भाष्याशय इत्याहुः ॥ **त्यत्र तु ङीप् प्राप्नोतीति** । परिमाणान्तत्वादिति भावः ॥ **न तद्धितलुकीति** निषेधस्तु अपरिमाणान्तादिविषय इति तात्पर्यम् । पञ्चकुमारिरित्यादौ ङीपो लुँक्प्राप्तिरपि बोध्या ॥ ५० ॥

( २५५ तत्पुरुषे द्विगुसंज्ञासूत्रम् ॥ २ । १ । ३ आ. २ सू. )

## ४०० संख्यापूर्वो द्विगुः ॥ २।१।५१ ॥

( अनन्तरयोगस्यैव संबन्धाधिकरणम् )

( आक्षेपभाष्यम् )

**किमनन्तरे योगे यः संख्यापूर्वः स द्विगुसंज्ञः, आहोस्वित्पूर्वमात्रे ? ॥**

( प्रदीपः ) **संख्यापू ॥ ५१ ॥** इह क्वचिदवयवोपेक्ष्यते, यत्रैतदुच्यते—**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति**, क्वचित्तु समुदायो यथा नान्तःपादमिति पाठे संहिताधिकारविहितस्य सर्वस्य कार्यस्य निषेधः क्रियते, ततः संदेहात् पृच्छति-**किमनन्तर इति** ॥ **पूर्वमात्र इति** । अत्र पक्षे समानाधिकरणसमासत्रिसूत्रीविहितस्तत्पुरुष एव गृह्यते । अन्यथा द्विमुनि व्याकरणस्येत्यव्ययीभावस्यापि द्विगुसंज्ञा स्यात् ततश्चेगन्ते द्विगाविति स्वरः प्रसज्येत ॥

( उद्योतः ) संख्यापूर्वो ॥ ५१ ॥ ततः संदेहादिति । व्याप्तिन्यायानन्तर्यन्याययोर्द्वयोरपि शास्त्रे आश्रयणादिति भावः ॥

( विशेषजिज्ञासाभाष्यम् )

**किं चातः ? ॥**

( विशेषप्रदर्शकभाष्यम् )

**यद्यनन्तरयोगे । एकशाटीति "द्विगोः" इतीकारो न प्राप्नोति ॥ अथ पूर्वमात्रे । एकभिक्षा । अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **एकशाटीति** । एकः शाट इति **पूर्वकाले**ति समासः । शाटशब्दश्चाकारान्तोस्ति तस्यैव कनि कृते शाटक इत्येवं रूपं संभवति ॥ **एकभिक्षेति** । भिक्षशब्दो घञन्तोस्ति । तथा च **भिक्षदं न प्रकाशयेदि**ति प्रयोगः । तत्रैको भिक्ष इति पूर्ववत् समासे कृते समासार्थस्य स्त्रीलोपेजनाद् ङीप् प्रसज्येत । यथा जनानां पदं जनपद इति समासे कृते समासार्थस्य पुंस्त्वमेवमिहापि स्त्रीत्वमिति मन्यते ॥

( उद्योतः ) इहापि स्त्रीत्वमिति । एकभिक्ष इति तु नेष्यत एवेति भावः ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अस्त्वनन्तरे ॥**

( आक्षेपभाष्यम् )

**कथमेकशाटी ? ॥**

( समाधानभाष्यम् )

**ईकारान्तेन समासो भविष्यति—एका शाटी एकशाटी ॥**

---

१ यस्य विभक्तिरूपत्रिकस्य समासो विहितस्तस्मादित्यर्थः । ( र. ना. )
२ प्रत्ययप्रतिषेधवचनाभिप्रायेणेत्यर्थः । ( र. ना. )
३ लुक् तद्धितलुकीत्यनेनेति भावः । ( र. ना. )
४ उपजन उत्पत्तिः । ( र. ना. )

(प्रदीपः) ईकारान्तेनेति । शादशब्दाज्जातिलक्षणे ङीषि कृत इति भावः ॥

(उद्योतः) ङीषि कृत इति । एकशाट इति विष्यंत एवेति भावः ।

(समाधानबाधकभाष्यम्)

**इह तर्ह्येकापूपी "द्विगोः" इतीकारो न प्राप्नोति ॥**

(प्रदीपः) एकापूपीति । एकश्चासावपूपश्चेति पूर्ववत्समासः । अत्र द्विगुत्वे सत्यकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति द्विगोरितीकारः सिध्यति नान्यथा । केवलश्चापूपशब्दः पुंसि वर्तत इति जातिलक्षणो ङीष् नास्ति ॥

(द्वितीयपक्षाभ्युपगमभाष्यम्)

**अस्तु तर्हि पूर्वमात्रे ॥**

(आक्षेपभाष्यम्)

**कथमेकभिक्षा ? ॥**

(समाधानभाष्यम्)

**टाबन्तेन सह समासो भविष्यति—एका भिक्षा एकभिक्षा ।**

(प्रदीपः) टाबन्तेनेति । भिक्षाशब्देन समासे कृते अत इत्यधिकाराद् ङीबभाव इत्यर्थः । भिक्षाशब्दश्च गुरोश्च हल इति स्त्रियां व्युत्पाद्यते । टाबन्त इत्यनेन पक्षे नपुंसकत्वं न भवति । व्यवस्थितविभाषाविज्ञानाद् ॥ यत्रापो ह्रस्वत्वं क्रियते पञ्चखट्वं पञ्चखट्वीत्यादौ तत्रैव वा स्त्रीत्वं विधीयते । भिक्षाशब्देन त्वनभिधानात्समासो न भवतीति मन्यते । अन्यथा तत्रैकभिक्षीति स्यात् ॥

(उद्योतः) शाच्छोरिति सूत्रे परिगणितव्यवस्थितविभाषात्वस्यानुल्लेखादरुचेराह—यत्रापो ह्रस्वत्वमिति । स नपुंसकमिति प्रकरणात्समाहारद्विगुविषये एव तत्प्रवृत्तिरिति भावः ॥ ननु भिक्षाशब्देन समासे वक्ष्यमाणरीत्या समाहारविवक्षायां एकभिक्षीत्यपि स्यादत आह—भिक्षाशब्देन त्वनभिधानादिति । अत्र मानं चिन्त्यम् ॥

(आक्षेपान्तरभाष्यम्)

**इदं तर्हि—सप्तर्षयः 'इगन्ते द्विगौ' इत्येष स्वरः प्राप्नोति ॥**

(प्रदीपः) सप्तर्षय इति । दिक्संख्ये संज्ञायामिति समासः ॥

(प्रथमपक्षाभ्युपगमभाष्यम्)

**अस्तु तर्ह्यनन्तरे ॥**

(आक्षेपभाष्यम्)

**कथमेकापूपी ? ॥**

(समाधानभाष्यम्)

**समाहार इत्येव सिद्धम् ॥**

(आक्षेपभाष्यम्)

**कः पुनरत्र समाहारः ॥**

(उद्योतः) कः पुनरिति । अनेकविषयत्वात् समाहारस्य एकस्य तदसंभवात् प्रश्नः ॥

(समाधानभाष्यम्)

**यत्तद्दानं संभ्रमो वा ॥**

(प्रदीपः) यत्तदिति । एकमप्यपूपं कश्चित् कृपणो ददद्दनेकमिति मन्यते । दाने श्रद्धातिशयाद्वा महत्त्वाद्वा अनेकस्मिन्यः संभ्रमः स एकस्मिन्नपि कर्तव्यो भवति ॥

(उद्योतः) दददनेकमिति । अवयवगतबहुत्वस्यावयविन्यारोपात् गौणः समाहारोऽत्रापि सुलभ इति भावः ॥ कर्तव्यो भवतीति । एकापूपी क्रियत इत्यादौ प्रतिग्रहीत्रेति भावः ॥

(आक्षेपभाष्यम्)

**इह तर्हि पञ्चहोतारो दशहोतारः । "इगन्ते द्विगौ" इत्येष स्वरो न प्राप्नोति ॥**

(द्वितीयपक्षाभ्युपगमभाष्यम्)

**अस्तु तर्हि—पूर्वमात्रे ॥**

(आक्षेपभाष्यम्)

**कथं सप्तर्षयः ? ।**

(समाधानभाष्यम्)

**"*अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दसि*" इत्येवमेतत्सिद्धम् ॥**

(प्रथमपक्षाभ्युपगमभाष्यम्)

**अथ वा पुनरस्तु—अनन्तरे ॥**

(आक्षेपभाष्यम्)

**कथं पञ्चहोतारः दशहोतारः ? ॥**

(समाधानभाष्यम्)

***आद्युदात्तप्रकरणे दिवोदासादीनां छन्दसि* इत्येव सिद्धम् ॥ संख्यापूर्वो ॥ ५१ ॥**

(प्रदीपः) अथ वेति । पूर्वत्रापरितोषेणैतदुच्यते । भाषायामपि सप्तर्षिशब्दोन्तोदात्त इष्यते । प्रकृतिस्वरपूर्वपदश्च स्यात् । अत एवैकशाटीत्यादावपि द्विगुस्वराभावः ॥ ५१ ॥

(उद्योतः) पक्षद्वयेऽपि उपसंख्यानद्वयेन स्वरसिद्धेः साम्यशङ्कां वारयति—पूर्वत्रापरितोषेणेति । अन्तोदात्त इष्यते इति । अत्र बीजं चिन्त्यम् । किं च प्रवृद्धादिगणपाठेन लोकेप्यन्तोदात्तत्वं सुसाधमिति बोध्यम् ॥ प्रकृतिस्वरपूर्वपद इति बहुव्रीहिः ॥ केचित्तु पक्षयोः साम्येपि पूर्वमात्र इति पक्षस्य फलाभावाद्बहुप्रतिविधेयत्वाच्च नादर इत्याहुः ॥ ५१ ॥

---

(२५६ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । ३ आ. ३ सू.)

## ४०१ कुत्सितानि कुत्सनैः ॥ २।१।५२ ॥

(उदाहरणनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**किमुदाहरणम् ? ॥**

---

१ विभाषासु अस्येति च्छेदः । (र. ना.) २ एकापूपीशब्दार्थमित्यादिः । (र. ना.) ३ एतद्भाष्यमेव मानमनभिधाने कैयटो मन्यते । (र. ना.) ४ अपूपस्येत्यादिः । (र. ना.) ५ आदरः । (र. ना.) ६ यागविशेषे होतृसंज्ञेयम् । (र. ना.) ७ सप्तर्षिशब्दस्यान्तोदात्तत्वमिति भावः । (र. ना.) ८ पञ्चहोत्रादेराद्युदात्तत्वमिति भावः । (र. ना.) ९ पूर्वमात्र इतिपक्षेऽपीत्यादिः । (र. ना.)

( समाधानभाष्यम् )

**वैयाकरणखसूचिः ॥**

( आक्षेपभाष्यम् )

**किं व्याकरणं कुत्सितम्, आहोस्विद्वैयाकरणः?॥**

**( प्रदीपः ) कुत्सितानि ॥ ५२ ॥ किं व्याकरणमिति ।** अयं भावः—शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते वैयाकरणश्चौर इत्यादौ मा भूदिति । तत्र व्याकरणस्य वेदाङ्गत्वान्नास्ति कुत्सा, नापि तदधीयानस्य ॥

**( उद्द्योतः ) कुत्सितानि ॥ ५२ ॥ इष्यत इति ।** तथैव लक्ष्यदर्शनात्प्रयासश्चेति भावः ॥ **चौर इति ।** यथा खसूचनेन व्याकरणाध्ययनस्य निष्फलत्वं प्रतीयते न तथा चौर्येणेति भावः ॥ **नापि तदधीयानस्येति ।** एवं च प्रवृत्तिनिमित्तकुत्साभावादिदं नोदाहरणमित्याशयेन भाष्ये किं व्याकरणमित्यादि प्रश्न इति भावः॥

( समाधानभाष्यम् )

**वैयाकरणः कुत्सितः । तस्मिन्कुत्सिते तत्स्थमपि कुत्सितं भवति ॥ कुत्सितानि ॥ ५२ ॥**

**( प्रदीपः ) वैयाकरण इति ।** यः पृष्टो निष्प्रतिभत्वात् खं सूचयति अहो गगनं निर्मलमिति प्रश्नं विसारयितुम्, स निष्फलव्याकरणाध्ययनत्वात् कुत्स्यते ॥ **तत्स्थमपीति ।** आश्रयदोषादाश्रितस्यापि निष्फलत्वात् कुत्सा ॥ ५२ ॥

**( उद्द्योतः ) आश्रयदोषादिति ।** स चाप्रतिभत्वम् । अयं च निष्फलत्वे हेतुः ॥ ५२ ॥

---

( २५७ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । ३ आ० ४ सू० )

# ४०३ उपमानानि सामान्यवचनैः ॥ २ । १ । ५४ ॥

( उपमानोपमेयभावनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**उपमानानीत्युच्यते कानि पुनरुपमानानि । किं यदेवोपमानं तदेवोपमेयम्, आहोस्विदन्यदेवोपमानमन्यदुपमेयम्? ॥**

**( प्रदीपः ) उपमानानि ॥ ५४ ॥ कानीति ।** सूत्रानुरोधेन बहुवचनं कृतम् ॥ **किं यदेवोपमानमिति ।** अत्र तूपमानमात्रस्य जिज्ञासितत्वाद् बहुत्वविवक्षायाः प्रयोजनाभावादेकवचननिर्देशः ॥ ननु कर्मकरणयोर्भेदादेकत्वविषये संदेहाभावात् प्रश्नानुपपत्तिः ॥ अयं भावः—शस्त्रीश्यामा देवदत्तेति श्यामत्वं सर्वाश्रयव्यापि यद्यभिन्नं विवक्षितं तदा तद्द्वारेण शस्त्रीदेवदत्तयोरुपमानोपमेयत्वात्तस्य च तयोरविशिष्टत्वात् तद्द्वारकस्तयोरभेद इति यदेवोपमानं तदेवोपमेयमित्यभ्युपगतं भवति । न चैतद्युक्तम् । शस्त्रीशब्दप्रयोगवैयर्थ्यप्रसङ्गात् । अथाधारभेदात् श्यामत्वस्य भेदस्तदा शस्त्रीदेवदत्तास्थयोः श्यामगुणयोर्भेदान्नास्ति तद्द्वारक उपमानोपमेयभावः—इति ॥

**( उद्द्योतः ) उपमानानि ॥ ५४ ॥ उपमानत्वं** साधारणधर्मैहेतुकपरिच्छेदकरणत्वं, तद्वति तस्य रूढत्वात् । तच्चोपमेयसाकाङ्क्षम् । तत्रोपमानोपमेयपदार्थयोरभेदो भेदो वा । रावण इव रावणः चन्द्र इव मुखमित्युभयत्रापि इवशब्ददर्शनात् ॥ तत्र यदि सर्वथाऽभेदे उपमानोपमेयभावस्तदा तत्र तद्गतभूयोधर्मपरिच्छेद्यत्वरूपोपमेयत्वासंभवः । अत एव सर्वथा भेदेपि नेत्याशयेन पृच्छति—भाष्ये—**कानि पुनरिति ।** उपमेयात्सर्वथाऽभिन्नानि सर्वथा भिन्नानि वेत्यर्थः ॥ साधारणधर्मरूपेणाभेदस्तत्तद्रूपेण भेद इति त्वसौ न जानाति । तदेवाह—**किं यदेवेति ।** एवकारेण तयोरत्यन्ताभेदः सूचितः । एवमन्यदेवेत्यनेनात्यन्तभेदः सूचितः । कर्मकरणरूपार्थभेदेपि द्वितीयसदृशान्यवच्छेदफलकस्य गौरिव गौरिति प्रयोगस्य दर्शनात्सर्वत्र तथैव किमिति प्रश्नः । **के इहोपमार्थ** इति भाष्ये उपमानोपमेयभावबोधकेवादिशब्दप्रयोगे किं फलं कर्मकरणत्वरूपोपमानोपमेयत्वबोधस्यैकत्रासंभवादित्यर्थः ॥ द्वितीयोपमानव्यवच्छेदार्थत्वे तु नोपमानत्वादिव्यवहारः । किंच गोसदृशो गौरित्यादिनैव तद्व्यवच्छेदबोधसंभवेनावाचकैतत्प्रयोगोऽसंगतः, सादृश्यस्याभेदेप्यङ्गीकारेण नास्यावाचकत्वमिति भावः ॥ उपमानोपमेयभावप्रतीतावुपमा, तदभावेऽनन्वय इति बोध्यम् ॥ गौरिवगौरिति । अत्र पक्षेस्यैवोदाहरणत्वेन तत्र चोपमानत्वाद्यप्रतीत्या सर्वथैवादिघटितप्रयोगस्य बोधकस्य मुख्यस्यासंभव इति उपमोदाहरणासंभवः प्रकृतसूत्रवैयर्थ्यं चेति तात्पर्यम् ॥ **गौरिवाश्व इति ।** अयं भावः—सर्वथा भेदे तत्स्वीकारे इदमुदाहरणं वाच्यम्, तच्चायुक्तं,साधारणधर्ममूलकोपमानोपमेयभावाप्रतीतेरिति केचित् ॥ **एकत्वविषये संदेहाभावादिति** पाठे एकत्वरूपे विषये संदेहविषयत्वाभावादित्यर्थः ॥ **अयं भाव** इत्यादिग्रन्थेनोच्यमानो भावः कथं भाष्याक्षरस्वरससिद्धः । किं च शस्त्रीश्यामेत्यादौ शस्त्रीशब्दवैयर्थ्यस्योपमानोपमेयभावासंभवस्य च भाष्येनुक्तेस्तस्य निर्दलत्वेति बहुश्रुता विचारयन्तु ॥ **वैयर्थ्यप्रसङ्गादिति ।** तेन कस्यचिद्विशेषस्यानभिधानादिति भावः ॥ श्यामत्वमात्रप्रतीतेः श्यामापदेनैवोपपत्तेः । एवं चोपमाप्रयोजकीभूतसाधारणधर्मे आश्रयभेदेप्येक इति तयोरैक्यशङ्का, अनेक इति मते धर्मभेदात्तद्भेदशङ्केति तात्पर्यम् ॥

---

१ 'निष्फलत्वद्वारा व्याकरणस्य निष्फलत्वं' । २ नहि चौर्येण वैयाकरणस्याप्रतिभत्वं सूच्यते किन्तु खसूचनेनेति भावः । ( र. ना. ) ३ इत्यन्तं सूचयति क्रियान्वयि न तु प्रश्नाकारप्रदर्शनम् । ( र. ना. ) ४ सूत्रस्थबहुवचनान्तपदानुरोधेनेत्यर्थः । ( र. ना. ) ५ तयोरभेदे संदेहाभावादित्यर्थः । ( र. ना. ) ६ स्वगतेत्यादिः । चन्द्रेण हि स्वगताह्लादकत्वरूपसाधारणधर्मेण मुखमनाह्लादकत्वपरिच्छिद्यते इति भावः । ( र. ना. ) ७ परिच्छेदकरणत्वस्य हि स निरूपकत्वेन परिच्छेद्यसाकाङ्क्षत्वमिति भावः । ( र. ना. ) ८ अभेदे भेदे चेत्यर्थः । ( र. ना. ) ९ अन्यगतभूयोधर्मैरन्यत्परिच्छिद्यमानं दृष्टमिति भावः । ( र. ना. ) १० सर्वथाभेदे साधारणधर्मत्वाद्यनुपपत्त्या तत्परिच्छेद्यत्वरूपोपमेयत्वासंभवादेवेत्यर्थः । ( र. ना. ) ११ कर्मकरणरूपार्थयोर्भेदस्य लोकप्रसिद्धत्वेऽपीत्यर्थः । ( र. ना.) १२ अभेदेऽपीत्यादिः । ( र. ना.) १३ काशीमुद्रितानुकारि B. A. S. मुद्रितपुस्तकेपि 'कइहोपमापदार्थः' इति लभ्यमानस्तु पाठो भाष्यादर्शनमूलक एवेति बोध्यम् । वस्तुतस्तु अयमपि पाठोऽसंगत एव । तथाहि–उपमाबोधकस्य पदस्येवादेरिह कोऽर्थः किं फलमिति तदर्थः । ( र. ना. ) १४ क इहोपमार्थ इति भाष्ये उपमापदं तद्बोधकपरम्, तथा चोपमाबोधकेवादिपदप्रयोगस्येह किं फलमित्यर्थो लभ्यः । ( र. ना. ) १५ लोके इति शेषः । ( र. ना. ) १६ द्वितीयसदृशव्यवच्छेदबोधसंभवेनेत्यर्थः । अवाचकेति । सदृशावाचकेत्यर्थः । इवशब्दस्य हि उपमानोपमेयभावसमानाधिकरणसादृश्यवाचकत्वं न तु सदृशवाचकत्वमिति । ( र. ना. ) १७ उपमानोपमेयभावासमानाधिकरणेत्यादिः । ( र. ना. ) १८ यदेवोपमानं तदेवोपमेयमिति पक्षे इत्यर्थः । ( र. ना. ) १९ एतत्प्रतीकदर्शनेन 'गौरिव गौः' 'गौरिवाश्वः' इत्युदाहरणद्वयं लेखकप्रमादात्त्रुटितं भवेत्, इति बोध्यम् ।

( प्रत्याक्षेपभाष्यम् )

**किं चातः? ॥**

( प्रदीपः ) **किंचात इति** । स्ववाचाभिप्रायमभिधापयितुं प्रश्नः[1] ॥

( उद्द्योतः ) स्ववाचेति । करणम् । स्वशब्देन शङ्किता । प्रयोजककर्ता तु प्रष्टा बोध्यः ॥

( प्रथमपक्षे आक्षेपभाष्यम् )

**यदि यदेवोपमानं तदेवोपमेयम्, क इहोपमार्थः —गौरिव गौरिति ॥**

( प्रदीपः ) **गौरिवेति** । व्यक्तिगतानां भेदानां शब्देनासंस्पर्शात्[2] सामान्यमुखेन द्रव्यावसायादिति[3] भावः ॥

( उद्द्योतः ) शब्देनासंस्पर्शादिति । कैयटकृतप्रश्नव्याख्याने अस्योपयोगश्चिन्त्यः, साधारणधर्मस्य गोत्वस्यैक्येन गौरिवेत्यस्य वैयर्थ्यमिति तद्व्याख्यायां दोषोपपत्तेः । केचित्तु व्याख्यातपूर्वपक्षे त्वत्रैवं व्याख्योचिता ॥

( द्वितीयपक्षे आक्षेपभाष्यम् )

**अथान्यदेवोपमानमन्यदुपमेयम्, क इहोपमार्थः—गौरिवाश्व इति ॥**

( प्रदीपः ) **गौरिवाश्व इति** । अत्यन्तभेदविवक्षायामिदमुच्यते । यदा त्वश्वस्य जाड्यादिधर्मप्रतिपादनायेदमुच्यते तदा भवत्येवोपमानोपमेयभावः ॥

( उद्द्योतः ) अत्यन्तेति । अस्याशय उक्त एव ॥ यदा त्विति । इदमपि कैयटोक्तपूर्वपक्षव्याख्यायां चिन्त्यं, श्यामत्ववज्जाड्यस्याप्येकत्वेनानेकत्वेन वा तदाप्युपमानोपमेयभावासंभवादिति[4] ॥

( समाधानभाष्यम् )

**एवं तर्हि यत्र किंचित्सामान्यं कश्चिच्च विशेषः तत्रोपमानोपमेये भवतः ॥**

( प्रदीपः ) **किंचित्सामान्यमिति** । श्यामत्वस्याधारभेदाद्भेदोप्याश्रीयते गुणजातेरेकत्वादभेदोपीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**एवं तर्हि यत्र किंचिदिति** । शब्दोपात्तप्रत्येकधर्मेण शस्त्रीत्वदेवदत्तत्वादिना भेदः, श्यामत्वादिसाधारणधर्मेण[5] चाभेद इत्यर्थः ॥ ननु गुणानामाश्रयभेदाद्भेदेन कथं तेषां सामान्यत्वमित्यत आह—**श्यामत्वस्याधारेति** ॥ **भेदोप्याश्रीयते इति** । भेदो यद्यप्याश्रीयत इत्यर्थः ॥ तथापीति शेषः । गुणजातेरिति । गुणत्वव्याप्यजातेरित्यर्थः । एवं च श्यामगुणस्य भेदेपि श्यामत्वेनैक्यात्सामान्यत्वं साधारणधर्मतेति ध्वनितम् । अत्र सिद्धान्तपक्षे तु घन इव श्यामो देवदत्त इत्यादेरिव घटितप्रयोगस्य संभवेन गौरिव गौरित्यादावुपमानत्वाद्यप्रतीत्यानन्वय[6] इति बोध्यम् ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत्? ॥**

( प्रदीपः ) **किं वक्तव्यमिति** । यथोपवर्णितं वचनेन विना कथं प्रतिपत्तुं शक्यमिति भावः ॥

( समाधानभाष्यम् )

**नहि ॥ कथमनुच्यमानं गंस्यते? । मानं[7] हि नामानिर्ज्ञातज्ञानार्थमुपादीयते—अनिर्ज्ञातमर्थं ज्ञास्यामीति । तत्समीपे यन्नात्यन्ताय मिमीते, तदुपमानं, गौरिव गवय इति । गौर्निर्ज्ञातः गवयोऽनिर्ज्ञातः ॥**

( प्रदीपः ) इतरो निर्वचनेन यथोक्तं प्रतिपादयितुमाह—**नहीति** ॥ **मानं हीति** । यथा प्रस्थादि । तेन हि साकल्येन मेयं परिच्छिद्यते ॥ **तत्समीप इति** । मानस्य समीप इत्यर्थः । परिच्छेदवशाच्च सामीप्यं परिकल्प्यते न त्वत्र मुख्यं सामीप्यमस्ति ॥ **उपमानानीति** निपातनात्तत्पुरुषः । अव्ययीभावे ह्येतद्रूपं न स्यात् ॥

( उद्द्योतः ) भाष्ये—मानं हीति । अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं हि तत्त्वम् । यथा प्रस्थाद्यज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकम्, न तथोपमानम् । गौर्हि गवयं कतिभिश्चिद्धर्मैरेव तद्गतैर्ज्ञापयति न साकल्येनेत्याशयेनाह—**साकल्येनेति** ॥ एवं च तदत्यन्ताभेदेनैव परिच्छेद्येनान्वेति—प्रस्थो व्रीहिरित्यादौ परिच्छेद्ये तद्रूपारोपात् । भेदेनैव वा प्रस्थोस्य परिमाणमित्यादौ । तदुक्तं भाष्ये—'अत्यन्तायेति' इदमव्ययम् । आत्यन्तिकाभेदेनात्यन्तिकभेदेन वा तत्परिच्छिनत्ति[8] । इदं तु भेदाभेदाभ्यामिति विशेषः ॥ चन्द्रेण तुल्यमित्यादावप्यार्थोपमाप्रतीतावस्त्येव भेदाभेदप्रतीतिरिति बोध्यम् ॥ **परिच्छेदवशादिति** । तत्तारतम्यादिति भावः ॥ अव्ययीभावे बहुवचनासंगतेराह—**निपातनादिति** । हीनार्थकोपशब्देन कर्मधारयस्य सुलभत्वम् । भाष्ये समीपशब्देन हीनत्वमेवोपलक्ष्यते । उपोधिकेचेत्यादावुपस्य हीनार्थत्वदर्शनादित्यन्ये ॥

( आक्षेपभाष्यम् )

**कामं तर्ह्यनेनैव हेतुना[9] यस्य गवयो निर्ज्ञातः स्याद् गौरनिर्ज्ञातः, तेन कर्तव्यं[10] स्याद्—गवय इव गौरिति ॥**

---

१ किञ्चात इति प्रष्टेत्यर्थः । शङ्किता तु उपमानोपमेययोर्भेदाभेदसंदेहाश्रयः । (र.ना.) २ अबोधनादित्यर्थः । (र. ना.) ३ तेन च रूपेण भेदाभावेनोपमानोपमेयभावासंभवादिति भावः । (र. ना.) ४ कैयटोक्तव्याख्यायामनया रीत्या दोषोपपादनस्यौचित्यादित्यर्थः । (र. ना.) ५ काशीमुद्रितानुकारि B. A. S. मुद्रितपुस्तके 'धर्मेण वा भेद' इत्युपलभ्यमानपाठस्त्वापातरमणीयः । तस्य प्रामाणिकत्वे तु चार्थ एव वाशब्द इति वयम् । (र. ना.) ६ एतन्नामाऽलंकार इति भावः । ( र. ना. ) ७ यत्र किंचित्सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेये भवत इत्युक्तमर्थमुपमानपदनिर्वचनेन प्रदर्शयितुं सिद्धान्ती आह—मानं हीत्यादि । अयं भावः, उपमानपदे निपातनात्तत्पुरुषो नत्वव्ययीभाव उपमानानीति प्रयोगानुपपत्तेः । तथा च मानस्य समीपेऽवस्थितमर्थान्मानात्किंचिदूनमुपमानपदेनोच्यते । लोके च मानं प्रस्थादि इयत्तयाऽनिर्ज्ञातस्य व्रीह्यादेः साकल्येन ज्ञानार्थमुपादीयते । प्रस्थो व्रीहिरिति । अत्र हि प्रस्थरूपं मानं स्वगतैः कैश्चिद् धर्मैरेव व्रीहिं न परिच्छिनत्ति । किन्तु साकल्येन प्रस्थात्मना । गौरिव गवय इत्यादावुपमानं तु गवादि स्वगतैः सास्नेतरधर्मैरेव कैश्चिल्लाङ्गूलककुदादिभिर्गवयं परिच्छिनत्ति न तु साकल्येन गवात्मनेत्यनिर्ज्ञातज्ञापकत्वरूपस्य मानसाम्यस्य सत्त्वेऽपि साकल्येन तथात्वाभावादुपमानत्वं गवादेः । गौर्निर्ज्ञातः गवयोऽनिर्ज्ञात इत्यनेनानिर्ज्ञातज्ञापकत्वं प्रदर्शितम् । उपमानपदनिरुक्तिमाह—तत्समीपे इत्यादि, यद् गवादिकं नात्यन्तमभेदेन भेदेन वा मिमीते परिच्छेद्यं गवयादिकं परिच्छिनत्ति किन्तु भेदाभेदाभ्यां परिच्छिनत्ति । सर्वत्रोपमानोपमेयभावस्थले भेदाभेदभानस्वीकारात् । तत् मानस्य समीपे अर्थात् मानादूनम्, मानं हि मेयं भेदेनाभेदेन वा परिच्छिनत्ति प्रस्थो व्रीहिः, प्रस्थोऽस्य परिमाणमित्यादौ, न तु भेदाभेदाभ्याम् इति । यच्च मानस्य समीपेऽवस्थितं तदेवोपमानमित्यर्थः । ( र. ना. ) ८ भेदेनाभेदेन वा परिच्छेदे हि स्वविरोध्यसामानाधिकरण्यरूप उत्कर्षोऽस्ति न तथा भेदाभेदाभ्यां परिच्छेदे इति गवादेः प्रस्थादिरूपमानादपकृष्टत्वेनोपमानत्वमिति भावः । (र. ना.) ९ निर्ज्ञातस्योपमानत्वेन हेतुनेत्यर्थः । (र. ना.) १० गवयस्याप्युपमानत्वं कर्तव्यं स्यादित्यर्थः । (र.ना.)

(प्रदीपः) कामं तर्हीति । ततश्च व्यवस्था न प्राप्नोतीति भावः ॥

(इष्टापत्तिभाष्यम्)

**बाढं कर्तव्यम् ॥**

(प्रदीपः) बाढमिति । अपेक्षानिमित्तकः पितापुत्रादिव्यवहारवदुपमानोपमेयभाव इति न कश्चिद्दोष इत्यर्थः ॥

(उद्योतः) अपेक्षानिमित्तक इति । निरूपकापेक्षानिमित्तक इत्यर्थः ॥ पितापुत्रादीति । ज्ञानप्रदत्वाच्च पुत्राणामपि पितृत्वव्यवहारस्तद्विषयोयं दृष्टान्तः ॥ जातिसरत्वे जन्मान्तरविषयोवा॥

(उदाहरणनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**किं पुनरिहोदाहरणम् ? ॥**

(प्रदीपः) किं पुनरिति । अयं भावः—यदा शस्त्रीशब्दः शस्त्र्यामेव वर्तते श्यामाशब्दोपि तस्यामेव तदा समासेनोपमेयाया देवदत्ताया अभिधानं न प्राप्नोति । अथ श्यामाशब्दो देवदत्तायां वर्तते तदा वैयधिकरण्यात् समासाप्रसङ्गः । वचनसामर्थ्यात्समासे मृगीव चपला मृगचपलेति पुंवद्भावो न प्राप्नोति ॥

(उद्योतः) किं पुनरिति । अत्यन्तभेदाभेदयोरुपमानत्वाभावात्प्रश्नः । क्व पुनरिति प्रश्ने कैयटोक्तो भाव उचित इति केचित् ॥ न प्राप्नोतीति । उभयोरपि पदयोरेकार्थवृत्तित्वादिति भावः ॥ वैयधिकरण्यादिति । सादृश्यसंबन्धेन शस्त्र्याः श्यामावाच्यदेवदत्तायामन्वयेन सामर्थ्येपि वैयधिकरण्यमित्यर्थः । अत्र हि समानाधिकरणेनेति वर्तते । इदमुपलक्षणं, सामान्यवचनत्वाभावाच्चेत्यपि बोध्यम् । समानविभक्तिकत्वमुपमानोपमेययोर्न स्यादित्यपि बोध्यम् ॥ पुंवद्भाव इति । सामानाधिकरण्यनिमित्तककर्मधारयत्वनिमित्तक इत्यर्थः ॥

(समाधानभाष्यम्)

**शस्त्रीश्यामा ॥**

(प्रदीपः) शस्त्रीश्यामेति । साधारणधर्मविशिष्टोपमेयार्थवृत्तिः शब्दः सामान्यवचनशब्देन वचनग्रहणाद् गृह्यते, यथा गुणवचनशब्दो गुणोपसर्जनद्रव्यवाची ॥

(उद्योतः) साधारणधर्मविशिष्टेति । अनेन सामान्यवचनत्वं समर्थितमुपमेयदेवदत्ताभिधानं च । तस्यामेवोभयं वर्तेत इति वक्ष्यमाणरीत्या च सामानाधिकरण्यम् ॥

(आक्षेपभाष्यम्)

**क्व पुनरयं श्यामाशब्दो वर्तते ? ॥**

(प्रदीपः) क्व पुनरिति । उभयथा दोषदर्शनात् प्रश्नः॥

(उद्योतः) इदं तात्पर्यमजानानः पृच्छति—भाष्ये—क्व पुनरिति ॥

(एकदेशिसमाधानभाष्यम्)

**शस्त्र्यामित्याह ॥**

(उद्योतः) एकदेशिन उत्तरम्—शस्त्र्यामिति । समुदायेन तदभिधानोपपत्तेः ॥

(आक्षेपभाष्यम्)

**केन तर्हीदानीं देवदत्ताऽभिधीयते ॥**

(प्रदीपः) केनेति । पूर्वपदोत्तरपदयोरुपमानवृत्तित्वे तद्व्यतिरिक्तशब्दान्तराभावात् प्रश्नः ॥

(उद्योतः) केनेति प्रश्नानुपपत्तिमाशङ्क्याह—पूर्वपदेति । अवयवातिरिक्तसमुदाये मानाभाव इत्यर्थः ॥

(समाधानभाष्यम्)

**समासेन ॥**

(प्रदीपः) समासेनेति । स्वाभाविकत्वादर्थाभिधानस्यान्यपदार्थग्रहणमन्तरेणाप्यश्वकर्णादिवज्जातिविशेषस्य शस्त्रीश्यामादिकः समास उपमेयस्य वाचक इत्यर्थः ॥

(उद्योतः) नन्वन्यपदार्थग्रहणाभावात्कथं समासस्योपमेयवृत्तितेत्यत आह स्वाभाविकत्वादिति । वस्तुतोतिरिक्तत्वाभावेपि बुद्धिकल्पितः कश्चित्सोस्त्येवेति भावः ॥ अश्वकर्णादिवज्जातिविशेषस्येति । अश्वकर्णादिर्यथा जातिविशेषस्येत्यर्थः ॥ अश्वकर्णादिर्जातिविशेषस्येवेति क्वचित्पाठः ॥

(आक्षेपभाष्यम्)

**यद्येवं शस्त्रीश्यामो देवदत्त इति न सिद्ध्यति ॥**

(प्रदीपः) यद्येवमिति । गुणवचनस्याश्रयलिङ्गानुविधायित्वात् स्त्रीलिङ्गेन श्यामाशब्देन समासे कृते रूपस्याप्रसिद्धिः ॥

(उद्योतः) स्त्रीलिङ्गेनेति । एतेन पुल्लिङ्गश्यामशब्देन समासे रूपसिद्धिरिति नाशङ्क्यमिति भावः ॥

(समाधानभाष्यम्)

**"उपसर्जनस्य" इति ह्रस्वत्वं भविष्यति ॥**

(प्रदीपः) उपसर्जनस्येति । अप्राधान्यादुपसर्जनत्वं मन्यते । समासवाच्यत्वादुपमेयं हि प्रधानम् ॥

(आक्षेपभाष्यम्)

**यदि तर्ह्युपसर्जनान्यप्येवंजातीयकानि भवन्ति, तित्तिरिकल्माषी कुम्भकपाललोहिनी—अनुपसर्जनलक्षण ईकारो न प्राप्नोति ॥**

(प्रदीपः) यदि तर्हीति । ह्रस्वविधौ कृत्रिममेवोपसर्जनं गृह्यते न तु लौकिकमपि, कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति न्यायाल्लौकिकग्रहणे दोषप्रसङ्गाच्च । तित्तिरिकल्माषी कुम्भकपाललोहिनीत्यत्रोपमानस्य पुन्नपुंसकलिङ्गत्वात्समासात् प्राक् स्त्रीप्रत्ययो नास्ति । समासे कृतेऽनुपसर्जनाधिकाराद् ङीष्ङीपोः प्रतिषेधः प्राप्नोति । सत्यपि वा ङीपि सतिशिष्टत्वादुपमानस्वरं बाधित्वा ङीष्स्वरः प्राप्नोति ॥

---

१ अयं सुदूरानुधावनश्रमो व्यर्थः । एकस्मिन्नेव स्वपुत्रनिरूपितपितृत्वस्य स्वपितृनिरूपितपुत्रत्वस्य च संभवात् । (र. ना.) २ विभिन्नार्थ बोधकत्वादित्यर्थः । (र. ना.) ३ तथा प्रश्ने हि शस्त्रीश्यामाशब्दे एतच्छब्दाप्रवृत्त्युपपादनं कैयटस्य संगच्छते नान्यथा । तथाहि—शस्त्रीश्यामाशब्दे एतदप्रवृत्त्या क्वेदं मवर्तते इति प्रश्नसंगतिः स्यादिति । वस्तुतस्तु किं पुनरिहेति प्रश्नेऽपि कैयटोक्तो भावः संगच्छत एव । तथाहि—शस्त्रीश्यामाशब्दस्योदाहरणत्वासंभवात्किं पुनरिहोदाहरणमिति प्रश्नाशयः । क्व पुनरयं श्यामाशब्दो वर्तते, केन तर्हीदानीं देवदत्ताऽभिधीयते इति वक्ष्यमाणभाष्यादपि कैयटोक्तो भाव एव साधुः प्रतीयते । (र. ना.) ४ सामानाधिकरण्ये हि समानविभक्तित्वं नीलो घट इत्यादौ दृष्टमिति भावः । (र. ना.) ५ किं पुनरिहोदाहरणमिति भाष्यव्याख्यावसरे उपपादितरीत्येत्यादिः । (र. ना.) ६ उपमेयं तत्पदार्थः । (र. ना.)

**(उद्द्योतः) कृत्रिममेवेति ।** लौकिकसमानाधिकरणमिति बोध्यम् । **सामान्यवचनैरित्यप्रथमानिर्दिष्टत्वात्** श्यामाशब्दो न तथेति भावः ॥ **नतु लौकिकमपीति ।** केवललौकिकमित्यर्थः ॥ **दोषप्रसङ्गादिति ।** आचारक्यजन्तप्रकृतिककुमारीशब्दादौ ह्रस्वप्रसङ्गादित्यर्थः ॥ **पुंनपुंसकेति ।** तित्तिरिः पुमान्, कुम्भकपालं क्लीबम् ॥ **स्त्रीप्रत्ययो नास्तीति ।** तत्समानाधिकरणकल्माषलोहितयोरप्यस्त्रीत्वादिति भावः ॥ **ङीब्ङीषोः ।** अन्यतो ङीष् वर्णादनुदात्तादिति विहितयोः ॥ **सत्यपि वेति ।** वर्णादनुदात्तादित्यादौ अनुपसर्जनत्वस्य तदन्तविशेषणत्वात्समासोत्तरमिति भावः। अत एव श्येण्या च शलल्येत्यादिसिद्धिः ॥ **उपमानस्वरः ।** पूर्वपदप्रकृतिस्वरः[1] । ङीप्स्वरोऽन्तोदात्तः[2] । एवं च तित्तिरिकल्माषीत्यत्रैव दोष इति भावः ॥ भाष्यस्य तु नात्र[3] स्वरसः ॥ श्येण्येत्यादि त्वार्षम् ॥

(समाधानभाष्यम्)

**एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो वर्तते, देवदत्तायां[4] श्यामाशब्दः ॥**

**(प्रदीपः) एवं तर्हीति ।** ततः पूर्वोक्तदोषाभावः । शस्त्रीश्यामो देवदत्त इति श्यामशब्दस्य देवदत्तवृत्तित्वात्, तित्तिरिकल्माषीति स्त्रीप्रत्ययान्तेनोपमेयवृत्तिना समासविधानात्[5] ॥

(आक्षेपभाष्यम्)

**एवमपि गुणो न निर्दिष्टो भवति । बहवः शस्त्र्यां गुणाः—तीक्ष्णा सूक्ष्मा पृथुरिति ॥**

**(प्रदीपः) एवमपीति ।** श्यामाशब्दस्य देवदत्ताभिधाने चरितार्थत्वाच्छस्त्रीगतो गुणो न निर्दिष्टः स्यादित्यनियतगुणनिमित्तसादृश्यप्रतीतिप्रसङ्ग इत्यर्थः ॥

**(उद्द्योतः)** ननु श्यामाशब्दस्य श्यामत्वगुणेनैव देवदत्ताद्यभिधायकत्वात्कथं गुणानिर्देश इत्यत आह—**शस्त्रीगतो गुण इति । सादृश्यमतिरिक्तः पदार्थ** इति मतेनेदं, एवं च श्यामाशब्दस्य सामान्यवचनत्वाभाव इत्यपि बोध्यम् ॥ **अनियतगुणनिमित्तेति ।** संसर्गविधया प्रतीयमानसादृश्येत्यर्थः ॥

(समाधानभाष्यम्)

**अनिर्दिश्यमानस्यापि गुणस्य भवति लोके संप्रत्ययः । तद्यथा—'चन्द्रमुखी देवदत्ता' इति बहवश्चन्द्रे गुणाः, या चासौ प्रियदर्शनता सा गम्यते ॥**

**(प्रदीपः) चन्द्रमुखीति ।** अयं भावः—यत्रानिर्दिष्टोपि गुणो वृद्धव्यवहारवशादुपमानिमित्तत्वेन प्रतीयते तत्रोपमेये श्रुतः[6] संनिधानादुपमानं कथं न स्प्रक्ष्यति ॥

**(उद्द्योतः) उपमानिमित्तत्वेनेति** पाठः ॥ **उपमाननिमित्तत्वेनेति** पाठे उपमानत्वप्रतीतिनिमित्तत्वेनेत्यर्थः ॥ **कथं न स्प्रक्ष्यतीति ।** उपस्थितत्वेन प्रत्यासत्त्या[7] चेत्यर्थः । एवं[8] च भाष्याद्विधः[9] क्वातिगम्भीर इत्यत्र मयूरव्यंसकादिसमास एव । उक्तरीत्या सामान्यप्रयोगसत्त्वेनोपमितसमासाप्राप्तेः ॥ चन्द्रमुखीत्यत्र बहुव्रीहौ स्वाङ्गाच्चोपसर्जनादिति ङीष् ॥

(आक्षेपभाष्यम्)

**एवमपि 'समानाधिकरणेन' इति वर्तते । व्यधिकरणत्वात्समासो न प्राप्नोति ॥**

(प्रत्याक्षेपेण समाधानभाष्यम्)

**किं हि वचनान्न भवति? ॥**

**(प्रदीपः) किं हि वचनादिति ।** दुर्बलं प्रकरणं श्रुत्या[10] बाध्यत इत्यर्थः ॥

(समाधानबाधकभाष्यम्)

**यद्यपि तावद्वचनात्समासः स्यात् । इह खलु मृगीव चपला मृगचपला समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति ॥**

**(प्रदीपः) पुंवद्भाव इति । पुंवत्कर्मधारयजातीयदेशीयेष्वित्यनेन** ॥ नन्वस्त्रीपूर्वपदस्य विवक्षितत्वात् मृगक्षीरादिवन्मृगचपलेति भविष्यति । यद्यप्यन्यत् स्त्रियाश्चापल्यमन्यत् पुंसस्तथापि पुंवद्भावेन स्त्रीप्रत्यये निवृत्ते नास्ति स्त्रीलक्षणविशेषावगतिः । प्रकरणादिवशात्तु स्त्रीत्वप्रतिपत्तौ जातिमात्रोपादानेपि तत्प्रतीतिर्भविष्यति । सा च बहिरङ्गत्वात् स्त्रीप्रत्ययोत्पत्तिनिमित्तं न भवति ॥ एवं तर्हि प्रतिपत्तिगौरवप्रसङ्गादेतदत्र भाष्यकारेण नाश्रितम्, गत्यन्तरसंभवाच्च ॥

**(उद्द्योतः)** भाष्ये—**समानाधिकरणलक्षण** इति । पूर्वपदार्थस्य सादृश्यसंबन्धेनोत्तरपदार्थेऽन्वयेन व्यधिकरणत्वादिति भावः॥ **पुंवत्कर्मधारयेति ।** एतेन चपलशब्दस्य प्रियादित्वान्मृगीशब्दस्य जातिशब्दत्वाच्च कथमत्र पुंवत्त्वमित्यपास्तम्[11] ॥ **अस्त्रीपूर्वपदस्येति ।** जातिमात्रविवक्षायां मृगशब्देन समास इति भावः ॥ **बहिरङ्गत्वादिति ।** प्रकरणादिसापेक्षप्रतीतिकत्वेन तत्त्वम् । मृगीव चपलेति विग्रहे त्वव्यविकन्यायाद्वाक्यमेवेति[12] भावः ॥

(सिद्धान्तिसमाधानभाष्यम्)

**एवं तर्हि तस्यामेवोभयं वर्तते । एतच्चात्र युक्तं यत्तस्यामेवोभयं[13] वर्तत इति । इतरथा हि बह्वपेक्ष्यं स्यात् ॥**

**(प्रदीपः)** तद्दर्शयति—**एवं तर्हीति ।** शस्त्रीसादृश्याद्देवदत्ता शस्त्रीशब्देनोच्यते, सादृश्यनिमित्तादभेदोपचाराद्, यथा गौर्वाहीक इति । पूर्वावस्थाश्रयेण च शस्त्र्या उपमानवाचित्वमवसेयम् ॥

**(उद्द्योतः)** ननु शस्त्रीशब्दस्य कथं देवदत्तायां वृत्तिरत आह—**सादृश्यादिति** ॥ तद्व्याचष्टे—**सादृश्यनिमित्तादिति ।**

---

१ तत्पुरुषे तुल्यार्थसप्तम्युपमानेति विहितः । (र. ना.) २ आद्युदात्तश्चेति विहितस्वरस्यात्रान्तोदात्तत्वे पर्यवसानमिति भावः । (र. ना.) ३ अनुपसर्जनत्वस्य तदन्तविशेषणत्वे न भाष्यस्य स्वरस इत्यर्थः । (र. ना.) ४ 'श्यामाशब्दस्तु देवदत्तायाम्' । ५ समासे सादृश्यबोधकपदाभावादिति भावः । (र. ना.) ६ 'बोद्धु' । ७ उपमेये श्रुतस्यापि संनिधानादुपमाने संबन्धस्वीकारे चेत्यर्थः । (र. ना.) ८ सर्वं हि वचनसामर्थ्यात्सिद्ध्यतीत्यर्थः काका प्रतीयते । (र. ना.) ९ उपमानानीति विहितसमासस्य श्रौतत्वेन प्रकरणप्राप्तं समानाधिकरणेनेति वाध्यते । श्रुतिलिङ्गवाक्येत्यादिन्यायादिति भावः । (र.ना.) १० स्वीकर्तव्यायामिति शेषः । (र.ना.) ११ समाधत्ते एवं तर्हीत्यादिना । (र.ना.) १२ अपूरणी प्रियादिष्विति, जातेश्चेत्याभ्यां निषेधादिति भावः । (र. ना.) १३ ताभ्यां प्रतिषिद्धस्य पुंवद्भावस्य कर्मधारयादौ पुंवत्कर्मधारयेत्यनेन प्रतिप्रसवादिति भावः । (र.ना.) १४ अन्यथा समासे मृगीचपलेति स्यादिति भावः । (र. ना.) १५ शस्त्रीशब्दः श्यामाशब्दश्चैतदुभयं देवदत्तायामेव वर्तते इत्यर्थः । एवं पूर्वत्राऽपि । (र. ना.)

तत्प्रयोजकसाधारणधर्मरूपान्निमित्तादित्यर्थः । परिच्छेदकशस्त्रीश्यामत्वभिन्ना परिच्छेद्या श्यामा देवदत्तेति बोधः । एतच्च मञ्जूषायां विस्तरेण प्रपञ्चितम् ॥ **पूर्वावस्थेति** । यद्यपि पुंवत्त्वानुरोधाद्वाक्येपि अभेदान्वय आवश्यको, वृत्तौ वृत्तेः प्राक् च यत्र सामानाधिकरण्यं तत्रैव पुंवत्त्वप्रवृत्तेस्तथापि यदा केवलस्य प्रयोगस्तदा तद्वचनत्वमित्यभिमानः ॥ परे तु उपमानानीत्यस्य तत्त्वेन बोधकानीत्यर्थः । इवशब्दसमभिव्याहाराच्च वाक्ये तत्त्वेन बोधकता, वृत्तौ तु समासशक्तिवलादित्युपमानवाचित्वाभावशङ्कैव निर्दला, इवशब्दश्च स्वसमभिव्याहृते उपमानत्वद्योतकः । शस्त्रीपदस्य तत्सदृशपरत्वमिवोद्योतयतीति तु न युक्तं, द्योत्यार्थे समभिव्याहृतपदार्थविशेषणताया एव स्वभावसिद्धत्वात् । अत एव निपातवादीनां द्योतकतापक्षस्य प्रकृत्यर्थविशेषणतेति शब्देनोल्लेखो भाष्य इत्याहुः ॥

(समाधानभाष्यशेषभाष्यम्)

**यदि तावदेवं विग्रहः करिष्यते-शस्त्रीव श्यामा देवदत्तेति । शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात् ॥**

**( प्रदीपः ) यदि तावदिति ।** यदा श्यामाशब्दो देवदत्तायां वर्तते शस्त्रीशब्दः शस्त्र्यामेव तदा शस्त्रीगतं श्यामत्वमनेकगुणसंभवे गुणान्तरव्यवच्छेदायोपमानिमित्तं प्रतिपादयितुं श्यामेत्यपेक्षणीयम् ॥

**( उद्योतः ) उपमानिमित्तमिति ।** उपमा सादृश्यं तन्निमित्तं शस्त्रीगतं देवदत्तागतं वा श्यामत्वं प्रतिपादयितुं तत्तद्गतत्वेन बोधयितुमित्यर्थः । उभयत्र श्यामत्वप्रकारकबोधस्तत्र न स्यादिति भावः । इदं च दशमे लिङ्गभेदादिरूपोपमादूषणप्रस्तावे काव्यप्रकाशतट्टीकादौ स्पष्टम् । उपमानतावच्छेदकारोपेणाभेदान्वयादेवोपमानोपमेययोः समानविभक्तित्वनियमः ॥ [ अपेक्ष्यं स्यादितिभाष्यस्य तत्त्वेन बोधार्थमित्येवार्थः ]

(समाधानभाष्यशेषभाष्यम्)

**अथाप्येवं विग्रहः करिष्यते—यथा शस्त्री श्यामा तद्वदियं देवदत्तेति । एवमपि देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात् ॥**

**( प्रदीपः ) अथापीति ।** यदा शस्त्र्यामेव शस्त्रीशब्दो वर्तते श्यामाशब्दोपि तस्यामेव, तदा देवदत्तागतश्यामत्वप्रतिपादनाय श्यामेत्यपेक्षणीयम् । न च शब्दस्यावृत्तिरस्ति येनोभयगतं श्यामत्वं प्रतिपादयेत् ॥

(आक्षेपभाष्यम्)

**एवमपि गुणो न निर्दिष्टो भवति । बहवश्च शस्त्र्यां गुणाः तीक्ष्णा सूक्ष्मा पृथुरिति ॥**

**( प्रदीपः )** अत्रापि दोषमाह—**एवमपीति ।** यदा शस्त्रीसादृश्याद्देवदत्तायां शस्त्रीत्वमारोप्यते तदा कं गुणमाश्रित्य सादृश्यमाश्रीयतामित्यर्थः ॥

**( उद्योतः ) तस्यामेवेति** सिद्धान्तपक्षेपि शङ्कते—**एवमपीतिभाष्ये ।** शस्त्र्यां श्यामगुणानिर्देशादिति भावः । तदाह—**कं गुणमिति ।** शस्त्र्यां तीक्ष्णत्वादिबहुगुणसत्त्वादिति भावः ॥

(समाधानभाष्यम्)

**अनिर्दिश्यमानस्यापि गुणस्य भवति लोके संप्रत्ययः । तद्यथा—चन्द्रमुखी देवदत्तेति बहवश्चन्द्रे गुणाः । या चासौ प्रियदर्शनता सा गम्यते ॥**

**( प्रदीपः )** उत्तरं तु पूर्वमेव व्याख्यातम् । यद्यपि पूर्वयोरपि पक्षयोरेष परिहारोस्ति तथापि ह्रस्वस्त्रीप्रत्ययस्वरपुंवद्भावासिद्ध्या पूर्वं पक्षद्वयं परिहृत्यायं पक्ष आश्रितः ॥

**( उद्योतः )** उत्तरयति—**अनिर्दिश्यमानस्यापीति ।** यत्रानिर्देशेपि बहुगुणवति वस्तुनि तात्पर्यवशाद्यः कश्चिदेव गुणः प्रतीयते तत्रोपमेये श्रुतस्त्रत्वादिना कथमुपमानं न संमन्स्यत इति भावः । तद् ध्वनयन्वक्ष्यति—**श्यामाशब्दः शस्त्रीशब्देनाभिसंबध्यमानो विशेषवचन** इत्यादि ॥ **एष परिहार इति ।** इतरथा हि बह्वपेक्ष्यं स्यादित्युक्तदोषस्येत्यर्थः ॥ **पुंवद्भावासिद्ध्येति ।** उभयत्र श्यामत्वप्रकारकबोधासिद्ध्येत्यपि बोध्यम् ॥

(१३२० वार्तिकम् ॥ १ ॥)

**॥ * ॥ उपमानसमासे गुणवचनस्य विशेषभाक्त्वात्सामान्यवचनाप्रसिद्धिः ॥ * ॥**

(व्याख्याभाष्यम्)

**उपमानसमासे गुणवचनस्य विशेषभाक्त्वात् सामान्यवचनस्याप्रसिद्धिः स्यात्—शस्त्रीश्यामेति । श्यामाशब्दोयं शस्त्रीशब्देनाभिसंबध्यमानो विशेषवचनः संपद्यते । तत्र सामान्यवचनैरिति समासो न प्राप्नोति ॥**

**( प्रदीपः ) उपमानसमास इति ।** शस्त्रीश्यामा देवदत्तेत्यत्र शस्त्रीशब्दसन्निधौ श्यामाशब्दः प्रयुज्यमानः शस्त्रीगतं श्यामत्वगुणं प्रतिपादयति, न च शस्त्रीस्थो गुण आश्रयान्तरे वर्तत इति सामान्यवचनत्वाभाव इत्यर्थः ॥

**( उद्योतः )** पदार्थद्वयगतश्यामत्वोक्तावपि सामान्यवचनत्वहानिरिति शङ्कते—भाष्ये—**उपमानसमास इति** ॥ न च **शस्त्रीस्थ** इत्युपलक्षणं उपमानोपमेयस्य इत्यर्थः । भाष्ये **शस्त्रीशब्देने**त्यप्युपलक्षणमुपमेयेन चेत्यस्यापि ॥

(१३२१ वार्तिकम् ॥ २ ॥)

**॥ * ॥ न वा श्यामत्वस्योभयत्र भावात्तद्वाचकत्वाच्च शब्दस्य सामान्यवचनत्वस्य प्रसिद्धिः ॥ * ॥**

(व्याख्याभाष्यम्)

**न वा एष दोषः ॥ किं कारणम् ? ॥ श्यामत्वस्यो-**

१ इवोपमेयपदरहितस्य शस्त्रीशब्दस्य श्यामाशब्दस्य च यदा शस्त्र्यामेव प्रयोगस्तदा वस्तुगत्या देवदत्तोपमानीभूतशस्त्रीबोधकत्वं शस्त्रीशब्दस्येत्यभिमान इत्यर्थः । अभिमानोक्तिबीजन्तु तदोपमानत्वेनोपमानबोधकत्वाभावाच्छस्त्रीशब्दस्य उपमानानीत्यनेन परिग्रहो न स्यादिति । एतदेव परेत्विल्यादिना वक्ष्यति । ( र. ना. ) २ श्यामत्वमिति प्रतिपादयितुमित्यनेनान्वेति । ( र. ना. )

३ तीक्ष्णत्वसूक्ष्मत्वादिगुणव्यवच्छेदायेत्यर्थः । ( र. ना. ) ४ तथाच समानविभक्तिकत्वनियमोपपत्त्यर्थमपि 'तस्यामेवोभयं वर्तते' इति स्वीकार्यमिति भावः । ( र. ना. ) ५ अयं पाठो यद्यपि वाराणसी B. A. S. मुद्रितपुस्तकयोरपि वक्ष्यमाणस्य "उपमानसमासे" इति वार्तिकस्यावतरणिकातः पूर्वमेवोपलभ्यते, तथापि तत्र लेखकप्रमादजत्वस्यैव संभवेन योग्यस्थाने स्थापितः ।

भयत्र भावात् । उभयत्रैवात्र श्यामत्वमस्ति शस्त्र्यां देवदत्तायां च । तद्वाचकत्वाच्च शब्दस्य । तद्वाचकश्चात्र श्यामाशब्दः प्रयुज्यते ॥ किंवाचकः ? । उभयवाचकः । श्यामत्वस्योभयत्र भावात् तद्वाचकत्वाच्च शब्दस्य सामान्यवचनत्वं प्रसिद्धम् । सामान्यवचने प्रसिद्धे सामान्यवचनैरिति समासो भविष्यति ॥ नावश्यं स एव सामान्यवचनः यो बहूनां सामान्यमाह, द्वयोरपि यः सामान्यमाह सोपि सामान्यवचन एव ॥ अथ वा सामान्यवचनैरित्युच्यते । सर्वश्च शब्दोन्येन शब्देनाभिसंबध्यमानो विशेषवचनः संपद्यते । त एवं विज्ञास्यामः—प्रागभिसंबन्धाद्यः सामान्यवचन इति ॥ उपमानानि ॥ ५४ ॥

**( प्रदीपः ) नवेति ।** शस्त्रीशब्दोपादानसामर्थ्यात् श्यामगुणसन्निधानाच्च यादृशं शस्त्रीश्यामत्वमन्यविलक्षणं तादृशं देवदत्ताया इति संप्रत्ययाद् उभयसाधारणं श्यामत्वं भवति सामान्यमिति न कश्चिद्दोषः । तत्र सादृश्यं सामान्यमुच्यते गुणो वा द्विवृत्तिर्भिन्नोप्यभिन्नत्वेन विवक्षितः सामान्यम् ॥ **सर्वश्चेति ।** शब्दान्तरसंबन्धे सर्वः शब्दो विशेषवाचित्वात्सामान्यवचनो न भवतीति सामान्यवचनग्रहणोपादानसामर्थ्याच्छब्दान्तराभिसंबन्धात्समासरूपात् प्राग्यः शब्दः सामान्यवचनः स गृह्यते, केवलश्च श्यामाशब्दः श्यामगुणविशिष्टं स्त्रीत्वयुक्तं द्रव्यमात्रमाहेति सांप्रतिकाभावे भूतपूर्वगत्याश्रयणात्सिद्धमिष्टम् ॥ ५४ ॥

**( उद्योतः ) शस्त्रीशब्दोपादानेति ।** उपमानशब्दोपादानेति क्वचित्पाठः । अयमेव युक्तः । अयं भावः—शस्त्र्यादीनामुपमानत्वेनोपादानात् उपमेयसापेक्षत्वेन श्यामाशब्द उपमेयायां वर्तते, तस्य च तन्त्रेणोपमानेप्यन्वयः । एवं चोभयवृत्तिगुणवाचकत्वेन तस्य सामान्यवचनत्वमिति भावः ॥ नन्वेवमपि तयोर्गुणयोराश्रयभेदाद्भेदेन सामान्यस्योभयवृत्त्येकधर्मस्य न वाचकमेतदत आह—**यादृशमिति ।** सादृश्यमूलकाभेदाध्यवसायेन समान्यवचनतेति भावः ॥ **सादृश्यमिति ।** सादृश्यमूलकाभेदमापन्नं श्यामत्वमित्यर्थः ॥ **गुणो वेति ।** क्रियादेरप्युपलक्षणमेतत् ॥ **अभिन्नत्वेन विवक्षित इति ।** श्लेषमूलकाभेदाध्यवसानादित्यर्थः ॥ **अभेदेनेति** क्वचित्पाठः ॥ भाष्येऽप्युभयवाचक इत्यनेन श्लेषमूलकमभेदाध्यवसानमुभयत्रान्वयश्च दर्शितः । अन्यथा वाचकताया वस्तुतोऽनेकश्यामगुणनिरूपितायाः सत्त्वेन न चावश्यमित्यादिग्रन्थोऽसङ्गत एव स्यात् ॥ अथ[1] बहुगतसामान्यवचनस्यैव ग्रहणेपि न क्षतिरित्याह—**अथ वेति ।** अत एवार्थ[2]पक्षयोः श्यामापदस्य सामान्यवचनत्वनिर्वाहः ॥ **सामान्यवचनग्रहणेति ।** सामान्यवचनपदेत्यर्थः ॥ **समासरूपादिति ।** इदमुपलक्षणं वाक्यस्यापीति दिक् ॥ ५४ ॥

———

( २५८ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । ३ आ. ५ सू. )

## ४०४ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ २ । १ । ५५ ॥

( सामान्याप्रयोगप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**सामान्याप्रयोग इति किमर्थम् ? ॥**

( समाधानभाष्यम् )

**इह मा भूत्—पुरुषोयं व्याघ्र इव शूरः, पुरुषोयं व्याघ्र इव बलवान् ॥**

**( प्रदीपः ) उपमितम् ॥ ५५ ॥ पुरुषोयं व्याघ्र इव शूर इति ।** उपमानप्रतिपादनपरमेतत् । वैयधिकरण्यादेवात्र समासस्याप्रसङ्गः । यदा तु व्याघ्रशब्दः शौर्यादेः पुरुषार्थ एव वर्तते तदा सामानाधिकरण्ये सति समासेन भाव्यम् । तत्र यदा प्रकरणादिवशान्नियतसाधारणगुणप्रतिपत्तिस्तदा सामान्याप्रयोगे सति समासः । यदा तु गुणान्तरव्यवच्छेदाय विशिष्टसाधारणगुणवचनशब्दप्रयोगः पुरुषो व्याघ्र इव शूर इति तदा समासाभावाय सामान्याप्रयोगग्रहणम् ॥

**( उद्योतः ) उपमितम् ॥ ५५ ॥ उपमानप्रतिपादनेति ।** उपमानत्वप्रतिपादनेत्यर्थः ॥ **एतत् ।** इवघटितं वाक्यम् ॥ **वैयधिकरण्यादेवेति ।** व्याघ्रस्येवार्थसादृश्ये[3] संबन्धेनान्वय इत्यभिमानः ॥ **यदा त्विति ।** वाक्येपीति भावः । इवशब्दस्तु तद्गतोपमानत्वद्योतक इति बोध्यम् । इदमेव युक्तं, पूर्वसूत्रोक्तभाष्यस्वरसात् समानविभक्तित्वनियमाच्च ॥ **साधारणगुणवचनेति ।** भाष्याब्धिः कातिगम्भीर इत्यादौ तु मयूरव्यंसकादित्वात्समासः ॥

( प्रत्याख्यानभाष्यम् )

**सामान्याप्रयोग इति शक्यमवक्तुम् ॥**

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—पुरुषोयं व्याघ्र इव शूरः, पुरुषोयं व्याघ्र इव बलवान् ? ॥**

( समाधानभाष्यम् )

**असामर्थ्यात् ॥ कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति ॥ एवं तर्हि सिद्धे सति यत् "सामान्याप्रयोगे" इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? । राजपुरुषोभिरूपः राजपुरुषो दर्शनीयः । अत्र वृत्तिः सिद्धा भवति ॥ उपमितम् ॥ ५५ ॥**

**( प्रदीपः ) भवति वै प्रधानस्येति ।** न्यायसिद्ध एवार्थे लिङ्गदर्शनमिदम् । प्राधान्यादेवानेकोपकारकोपकार्यत्वाविरोधात्समासस्य सिद्धत्वात् ॥ ५५ ॥

---

१ अथवेत्यर्थः । ( र. ना. ) २ सादृश्यमूलकाभेदाध्यवसायश्लेषमूलकाभेदाध्यवसायपक्षयोरित्यर्थः । ( र. ना. ) ३ इवार्थसादृश्यसंबन्धेनेति समस्तपाठः साधुः । पुरुषे इति शेषः । अभिमानोक्तिबीजन्तु 'इदमेव युक्तमित्यादिना स्वयमेव वक्ष्यति । ( र. ना. )

( उद्द्योतः ) भाष्ये—भवति वै प्रधानस्यापीति । न च पूर्वसूत्रस्थभाष्यरीत्या व्याघ्रेणापि शूरपदार्थान्वयाद्विशेषणमप्यत्र सापेक्षं यथा व्याघ्रः शूर एवं पुरुष इति प्रतीतेः । अत एवोपमानोपमेययोर्लिङ्गभेदादेर्दोषत्वम्, अन्यतरलिङ्गस्य साधारणधर्मस्योभाभ्यां भिन्नलिङ्गाभ्यामन्वयायोग्यत्वं हि तद्बीजमिति वाच्यम् । उपमानत्वेन बोधकस्य तस्य साधारणधर्मांशे नित्यसापेक्षत्वेनादोषात् । साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वं हि तत्त्वम् । तच्च तत्त्वेन ज्ञातस्यैव ॥ यद्यपि साधारणधर्मवत्त्वेन परिच्छेद्यत्वमेवोपमेयत्वमित्युपमेयमपि नित्यसापेक्षम् ॥ इदमपि तत्रैव सूत्रे भाष्ये ध्वनितम् ॥ तथापि ज्ञापकपरं भाष्यमेकदेश्युक्तिः ॥ प्रधानस्य सापेक्षस्य वृत्तिस्तु कैयटोक्तन्यायादेव ॥ असामर्थ्यादित्यस्योभयोरपीतरसापेक्षत्वेनासामर्थ्यादित्यर्थः । शस्त्रीश्यामेत्यादौ पूर्वोत्तरपदयोः परस्परापेक्षत्वं नासामर्थ्यप्रयोजकमिति न दोषः ॥ यद्यपि लिङ्गवचनभेदेप्यभेदान्वयो वेदाः प्रमाणमित्यादौ दृष्टस्तथापि लिङ्गभेदादीनां दूषकताबीजं सहृदयोद्वेग एवेति स्पष्टमलंकारतत्त्वविदाम् ॥ अनेकोपकारकोपकार्यत्वं, अनेकविशेषणविशेष्यत्वम् ॥ ५५ ॥

( २५९ तत्पुरुषसंज्ञासूत्रम् ॥ २ । १ । ३ आ. ६ सू. )

## ४०५ विशेषणं विशेष्येण बहुलम् ॥ २ । १ । ५६ ॥

( विशेषणस्योपसर्जनत्वाधिकरणम् )

( १३२२ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ विशेषणविशेष्ययोरुभयविशेषणत्वादुभयविशेष्यत्वादुपसर्जनाप्रसिद्धिः ॥ * ॥

( व्याख्याभाष्यम् )

**विशेषणविशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनत्वस्याप्रसिद्धिः । कृष्णतिला इति कृष्णशब्दोयं तिलशब्देनाभिसंबध्यमानो विशेषणवचनः संपद्यते, तथा तिलशब्दः कृष्णशब्देनाभिसंबध्यमानो विशेषणवचनः संपद्यते, तदुभयं विशेषणं भवत्युभयं च विशेष्यम् । विशेषणविशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनत्वस्याप्रसिद्धिः ॥**

( प्रदीपः ) विशेषणम् ॥ ५६ ॥ विशेषणविशेष्ययोरिति । उभयापेक्षेयं षष्ठी ॥ नित्यसापेक्षत्वाच्चोभयशब्दस्य शब्दान्तरेण समासो भवति । विशेषणविशेष्याभिमतयोर्द्वयोर्द्वैरूप्यसद्भावात् समाससिद्धावप्यनियतः पूर्वनिपातः प्राप्नोतीति दोषः ॥ कृष्णशब्द इति । कृष्णशब्द उच्चरितो भ्रमरकोकिलादिद्रव्यमात्रं प्रतिपादयति । तिलशब्देन त्वभिसंबध्यमानस्तिलेष्वेव नियम्यते इति कृष्णशब्दो विशेष्यस्तिलशब्दो विशेषणम् । एवं तिलशब्दस्यापि विशेष्यत्वं कृष्णशब्दस्य च विशेषणत्वमवसेयम् ॥

( उद्द्योतः ) विशेषणं वि० ॥५६॥ भाष्ये—उभयविशेषणत्वादिति । उभयोर्विशेषणत्वादित्यर्थः ॥ कयोरुभयोः, ? विशेषणविशेष्ययोः, अत्रोभयमुद्दिश्य विशेषणत्वस्य विधेयताप्रतीतेः समासे नोद्देश्यविधेयभावः ॥ ननु विशेषणविशेष्ययोरिति षष्ठी नोपसर्जनाप्रसिद्धिरित्यपेक्षया, विशेषणे उपसर्जनत्वप्रसिद्धिसत्त्वात्, नाप्युभयापेक्षया सविशेषणतया समासानापत्तेरत आह—उभयापेक्षेयमित्यादि ॥ ननु विशेषणविशेष्ययोरुभयं चेद्विशेषणं विशेष्यं च तदोभयोरप्युपसर्जनत्वादुपसर्जनाप्रसिद्धिरिति दूषणासङ्गतिरत आह—अनियत इति । व्यावर्त्यव्यावर्तकभाव एव विशेषणविशेष्यभावः, स च परस्परमुभयोरित्यव्यवस्थेति शङ्कार्थ इति भावः ॥ उपसर्जनाप्रसिद्धिरित्यस्योपसर्जननियमासिद्धिरित्यर्थो भाष्ये ॥ द्रव्यमात्रम् । कृष्णगुणं सर्वं द्रव्यम् ॥ तिलशब्दो विशेषणमिति । परिच्छेदकबोधक इत्यर्थः । परिच्छेद्यपरिच्छेदकभाव एव च विशेष्यविशेषणभाव इत्यभिमानः ॥

( १३२३ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ नवान्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्चापरस्योपसर्जनप्रसिद्धिः ॥ * ॥

( व्याख्याभाष्यम् )

**नवा एष दोषः ॥ किं कारणम्? । अन्यतरस्य प्रधानभावात् । अन्यतरदत्र प्रधानम् ॥ तद्विशेषकत्वाच्चापरस्य । तद्विशेषकं चापरम् । अन्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्चापरस्योपसर्जनसंज्ञा भविष्यति, यदाऽस्य तिलाः प्राधान्येन विवक्षिता भवन्ति कृष्णो विशेषकत्वेन, तदा तिलाः प्रधानं कृष्णो विशेषणम् ॥**

( प्रदीपः ) नवेति । अन्यतरस्य द्रव्यस्यैवेत्यर्थः ॥ अपरस्येति । गुणस्यैवेत्यर्थः ॥ यदाऽस्य तिला इति । ते हि द्रव्यरूपत्वात् क्रियासिद्धये साक्षादुपयुज्यमानाः प्राधान्येन विवक्ष्यन्ते । कृष्णस्तु गुणत्वात् द्रव्यव्यवधानेन क्रियायामुपयोगाद्विशेषणं तिलानां संपद्यते ॥

( उद्द्योतः ) अन्यतरापरशब्दयोः सर्वप्रतिपादकत्वादनियमस्तदवस्थ इत्यत आह—द्रव्यस्यैवेत्यर्थ इत्यादि । द्रव्यस्यैवानयनादिक्रियासंभवेन तस्यैव क्रियान्वयौचित्येन तस्यैव विषयताविशेषरूपं विशेष्यत्वमिति भावः ॥ एतदेव ध्वनयितुं प्रधानपदं भाष्ये उपात्तम् । तदेव चात्र विशेष्यविशेषणभावशब्देन गृह्यते न तु परिच्छेद्यपरिच्छेदकभाव इति तत्त्वम् ॥ एतदेव ध्वनयन्नाह—ते हीति । यदातदाशब्दौ भाष्ये यतस्तत इत्यर्थकाविति भावः ॥ प्राधान्यनेत्यस्य तेनैवेत्यर्थः ॥

१ षष्ठ्यर्थे बहुव्रीहिः साधारणधर्मविशेषणम् । उभाभ्याम्, उपमानोपमेयाभ्यामित्यर्थः । (र.ना.) २ सापेक्षमसमर्थवदित्यस्य नित्यसापेक्षातिरिक्तविषयकत्वादिति भावः (र.ना.) ३ उपमानत्वमित्यर्थः । (र.ना.) ४ तादृशपरिच्छेदकत्वञ्च साधारणधर्मवत्त्वेन ज्ञातस्यैवेत्यर्थः । (र. ना.) ५ शूरपदार्थसापेक्षत्वेनेत्यर्थः । (र. ना.) ६ प्रसङ्गादाह-यद्यपीत्यादि । (र. ना.) ७ 'भयोश्च वि' । ८ विशेषणत्वविशेष्यत्वरूपरूपद्वयस्य विशेष्ये विशेषणेऽपि सत्त्वादित्यर्थः । (र. ना.)

९ समासस्य विशिष्टार्थोपस्थापकत्वादिति भावः । (र. ना.) १० अतस्तद्बोधार्थं विशेषणविशेष्ययोरिति पृथगुपात्तमिति भावः । (र.ना.) ११ बहुव्रीहिः । (र.ना.) १२ व्यावर्त्यव्यावर्तकभाव इत्यर्थः । इत्यभिमान इति । भाष्ये पूर्वपक्षिण इति शेषः । अभिमानोक्तिबीजन्तु विषयताविशेषरूपे एव विशेष्यत्वविशेषणत्वे इति । एतच्चाग्रे सिद्धान्तयिष्यते इति । (र.ना.) १३ 'विशेषणत्वेन' । १४ प्राधान्यापरपर्यायमित्यपि बोध्यम् । (र. ना.)

( आक्षेपभाष्यम् )

**कामं तर्ह्यनेनैव हेतुना यस्य कृष्णाः प्राधान्येन विवक्षिता भवन्ति तिला विशेषणत्वेन, तेन कर्तव्यं तिलकृष्णा इति ॥**

( प्रदीपः ) इतरो यथोक्तं न्यायमबुद्ध्वा "विवक्षामात्रनिबन्धनत्वमनेन विशेषणविशेष्यभावस्य प्रतिपादितं, विवक्षायाश्च स्वातन्त्र्यादनियमात् प्रयोगानियम इति मन्यमानः पृच्छति—**कामं तर्हीति** ॥

( उद्द्योतः ) **विवक्षामात्रेति** । यदातदाशब्दौ विवक्षिता इतिशब्दश्च भाष्यस्थोऽर्थबोधे विपरीतप्रतिपत्तौ च बीजम् ॥ **विशेषणविशेष्यभावस्येति** । परिच्छेदकपरिच्छेद्यभावस्येत्यर्थः । प्रतिपादितमित्यस्य 'इति च बुद्ध्वा' इति शेषः ॥ **स्वातन्त्र्यादिति** । प्रयोक्तुरिति शेषः ॥

( समाधानभाष्यम् )

**न कर्तव्यम् । नह्ययं द्वन्द्वः—तिलाश्च कृष्णाश्चेति । न खल्वपि षष्ठीसमासः—तिलानां कृष्णा इति । किं तर्हि ? । द्वाविमौ प्रधानशब्दौ एकस्मिन्नर्थे युगपदवरुध्येते । न च द्वयोः प्रधानशब्दयोरेकस्मिन्नर्थे युगपदवरुध्यमानयोः किंचिदपि प्रयोजनमस्ति, तत्र प्रयोगादेतद्गन्तव्यम्—नूनमत्रान्यतरत्प्रधानं तद्विशेषकं चापरमिति । तत्र त्वेतावान् संदेहः—किं प्रधानं किं विशेषणमिति । स चापि क्व संदेहः यत्रोभौ गुणशब्दौ । तद्यथा—खञ्जकुब्जः कुब्जखञ्ज इति । यत्र ह्यन्यतरद् द्रव्यमन्यतरो गुणः, तत्र यद् द्रव्यं तत्प्रधानम् । तद्यथा—'शुक्लमालभेत' 'कृष्णमालभेत' न पिष्टपिण्डीमालभ्य कृती भवति । अवश्यं तद्गुणं द्रव्यमाकाङ्क्षति ॥**

( प्रदीपः ) **नह्ययमिति** । नहि गुणद्रव्यवाचिनोर्द्वन्द्व उपपद्यते । गुणवचनस्य द्रव्यापेक्षत्वादसामर्थ्याद्द्रव्येण सहविवक्षाया असंभवात् । यदि तु द्वन्द्वः स्यात्स्यादेव तिलकृष्णा इति प्रयोगः ॥ **न खल्वपीति** । गुणेन सह षष्ठीसमासनिषेधादिति भावः ॥ **प्रधानशब्दाविति** । प्रथमान्तावित्यर्थः । अनेन षष्ठीसमासविपरीतत्वं कथितम् ॥ **एकस्मिन्नर्थ** इत्यनेन तु द्वन्द्वविपरीतत्वं कथितम् । द्वन्द्वे हि सर्वपदार्थानां प्राधान्यान्नास्ति सर्वपदानामेकस्मिन्नर्थेऽवस्थानम् । एतच्चावयवार्थापेक्षयोक्तम् । समुदायार्थापेक्षायां तु समुदायलक्षण एकस्मिन्नर्थे सर्वेषां पदार्थानां वृत्तिरस्त्येव ॥ **प्रधानशब्दयोरिति** । परस्परविशेषणत्वेनानुपकारकयोः स्वतन्त्रयोरित्यर्थः ॥ **यत्रोभाविति** । द्वयोरपि गुणत्वाद् द्रव्यव्यवधानेन क्रियासाधनत्वाविशेषादिति भावः ॥ **यत्र ह्यन्यतरद् द्रव्यमिति** । तत्र नास्ति संदेह इति वाक्यशेषः ॥ **यद् द्रव्यमिति** । साक्षात् क्रियासाधनत्वादिति भावः ॥ ननु तिलशब्दो जातिवाची न द्रव्यवाची । तत्र जातिविशिष्टद्रव्यवाचित्वाद्यदि द्रव्यवाचीत्युच्यते तदा कृष्णशब्दोपि गुणविशिष्टद्रव्यवाचित्वाद् द्रव्यवचन आपद्यत इति नानयोः कश्चिद्विशेषः ॥ नैष दोषः । उत्पत्तिप्रभृत्याविनाशाज्जातिर्द्रव्यं न जहाति । न च शब्देन द्रव्याद्व्यतिरेको जातेः प्रत्याय्यते । नहि भवति 'शाबलेयस्य गौः' इति । किं तर्हि ? 'गौः शाबलेयः' इति । तस्माज्जात्यात्मकमेव द्रव्यं प्रतीयत इति जातिशब्दो द्रव्यवचनत्वेनावस्थाप्यते । गुणाः पुनरुपायिनश्चापायिनश्च, पटस्य शुक्ल इति व्यतिरिक्ता अपि द्रव्यात् स्वशब्देन गुणाः प्रत्याय्यन्त इति गुणात्मकत्वं द्रव्यस्य नास्तीति न गुणशब्दो द्रव्यवचनत्वेनावस्थापनमर्हति । एतच्चायाश्रयेण वैदिकव्यवहारं निदर्शनायोपन्यस्यति—**तद्यथेति । श्वेतं छागमालभेतेति** चोदनायां श्वेताभावे कृष्णच्छाग आलभ्यते छागाभावे तु शुक्लस्य द्रव्यान्तरस्यालम्भो नास्ति ॥

( उद्द्योतः ) **द्रव्येण सहविवक्षाया इति** । साक्षात् द्रव्यवत्क्रियायामनन्वयादिति भावः ॥ **यदि त्विति** । ननु सोस्तीति न तथाप्रयोग इति भावः ॥ भाष्ये विपरीतविशेषणविशेष्यभावविवक्षैव नेति नानेन समासे तथाप्रयोगः समासान्तरेणापि नेत्युक्तम् ॥ भाष्ये—**तिलानां कृष्णा इति** । कृष्णा अवयवा इत्यर्थः ॥ **निषेधादिति** । एवं चैतदुत्तरं तिलकृष्णा इति भाष्ये क्वचिद् दृश्यमानोऽपाठ इति बोध्यम् । एवं च न द्वन्द्वषष्ठीसमासार्थावितः प्रतीयेते नापि तत्र साधुत्वं किं त्वभेदः प्रतीयते तत्रापि न साधुत्वमिति सर्वथा तद्रूपाभाव एवेति भाष्यार्थः ॥ पूर्वध्वनितं विपरीतविशेषणविशेष्यभावासंभवं स्फुटयति—**किं तर्हीत्यादिना** ॥ द्रव्यस्यैव प्राधान्याङ्गीकारात्प्रधानशब्दावित्यसंगतमित्याशङ्कयाह—**प्रथमान्ताविति** । तत्र वाक्यार्थे यन्मुख्यविशेष्यं तदभिन्नार्थकत्वाद् द्वितीयप्रथमान्तमपि प्रधानत्वेनोक्तमित्यर्थः । इदं प्रथमान्तेन विग्रह इति पक्षे । परिनिष्ठितविभक्त्या समास इति पक्षे समानविभक्त्यन्तावित्यर्थः । तद् ध्वनयन्नाह—**अनेनेति** ॥ **एतच्चावयवार्थेति** । विग्रहवाक्याभिप्रायेणेत्यर्थः । समासे तु द्वन्द्वेपि एकार्थीभावसत्त्वादुभयोरेकार्थवृत्तित्वमस्त्येवेत्याह—**समुदायार्थापेक्षायामिति** ॥ भाष्ये—**युगपदुपरुध्येते** । प्रयुज्येते ॥ **परस्परेति** । प्रथमान्तयोरिति शेषः ॥ भाष्ये—**यत्रोभौ गुणशब्दाविति** । क्रियाया अपि उपलक्षणमेतत् । अत एव खञ्जकुब्जावित्यत्र खञ्जेत्यस्य क्रियात्वेपि न क्षतिरित्याहुः ॥ **कुब्जवामन** इति केवलगुणोदाहरणं, तत्प्रधानं विशेष्यतात्स्यविषयतावदित्यर्थः ॥ **न च शब्देनेति** । जातिप्रवृत्तिनिमित्तकेनेत्यर्थः ॥ शब्देन जातेर्द्रव्यव्यतिरेकाप्रतीतौ हेतुरुत्पत्तिप्रभृत्याविनाशमत्यागः, तथा गुणानां व्यतिरेकप्रतीतौ हेतुरुपायित्वापायित्वम् । उपायापायावुत्पत्तिविनाशौ द्रव्ये सत्येव ॥ भाष्ये—**अवश्यं तद्गुणं द्रव्यमाकाङ्क्षतीति** । संनिहितपदोपात्तं छागादीति शेषः । तद्गुणकं द्रव्यविशेषमवश्यमपेक्षते तदभावे गुणमात्रेण शास्त्रार्थसिद्धिं न मन्यते इति द्रव्यं प्रधानमित्यर्थः ॥ भाष्यस्थवाक्यमपि छागपदघटितमेवेत्याशयेनाह—**श्वेतच्छागमिति**। [9]एवं चामुकदीक्षितः देवदत्तसोमयाजीत्यादयो लोके प्रयुज्यमाना अप्यसाधव इति बोध्यम्। [11]एवं च कृष्णोपक्रमेपि वाक्ये

१ 'एवं' । २ 'ताः स्युः' । ३ द्रव्यस्यैव विशेष्यत्वम् गुणस्यैव विशेषणत्वमिति नियमस्याज्ञाने इत्यर्थः । ( र. ना. ) ४ विशेष्यविशेषणभावस्य विवक्षामात्रनिबन्धनत्वप्रतिपत्तावित्यर्थः । बीजमिति । यदा तदा विवक्षिता इति पदत्रयस्य समुदितस्य बीजत्वमित्यर्थः । ( र. ना. ) ५ काशी Bengal Asiatic Society मुद्रितपुस्तकयोस्तु 'बुद्ध्या' इति शोधितं दृश्यते । ६ बहुव्रीहिः । ( र. ना. ) ७ पदानामिति पाठः शोभनो भाति । ( र. ना. ) ८ 'द्रव्यव्यतिरिक्ता जातिः' ॥ 'द्रव्यव्यतिरेको जातेः' । ९ शवलायाश्चित्रवर्णाया गोरपत्यमिति विग्रहः । ( र. ना. ) १० द्रव्यशब्दस्यैव विशेष्यत्वाङ्गीकारेण तिलकृष्णा इत्यादीनामसाधुत्वे चेत्यर्थः । ( र. ना. ) ११ पूर्वोक्तरीत्या विशेष्यविशेषणभावातिरिक्तपरिच्छेद्यपरिच्छेदकभावाङ्गीकारे चेत्यर्थः । ( र. ना. )

विशेष्यभूता एव तिलाः कृष्णगुणमाश्रयान्तरेभ्यो निवर्तयन्तीति न तिलानां परिच्छेदकत्वहानिः ॥ एतेन विशेषणताख्यविषयतावदेव परिच्छेदकं भेदकं चेत्यपास्तम् ॥ राजपुरुष इत्यादौ च विशेष्यस्यापि पुरुषस्य राज्ञि भेदकत्वदर्शनादिति दिक् ॥

**( आक्षेपभाष्यम् )**

**कथं तर्हीमौ द्वौ प्रधानशब्दावेकस्मिन्नर्थे युगपदवरुध्येते—वृक्षः शिंशपेति ? ॥**

**( प्रदीपः ) कथं तर्हीति ।** द्वयोरपि जातिशब्दत्वाद् द्रव्यवाचित्वात् प्रधानत्वान्नास्त्यन्यतरस्य विशेषणत्वमिति प्रश्नः॥

**( उद्द्योतः )** शिंशपावृक्षयोरपि सामान्यविशेषवाचित्वेन विशेष्यविशेषणभावमाशङ्क्याह—**द्वयोरिति ॥ नास्त्यन्यतरस्येति ।** वृक्षस्येत्यर्थः ॥

**( समाधानभाष्यम् )**

**नैतयोरावश्यकः समावेशः । नह्यवृक्षः शिंशपास्ति ॥ विशेषणम् ॥ ५६ ॥**

**( प्रदीपः ) नैतयोरिति ।** आवश्यकमस्मिन्नस्तीत्यर्शआदित्वादच्प्रत्ययः ॥ अयं भावः—यदा प्रथमत एव विशेष उपक्रम्यते शिंशपेति तदा वृक्षविशेषस्यैव प्रक्रान्तत्वाद्विशेषस्य च सामान्याव्यभिचाराद् वृक्षशब्दस्य नैव प्रयोगेण भाव्यम् । यदा तु प्रथमं सामान्यमुपक्रम्यते वृक्ष इति तदा तद्विशेषणाय शिंशपाशब्द उपादीयमानो विशेषणमेव भवतीति शिंशपावृक्ष इत्येव भाव्यम् ॥ अत्र केचिदाहुः—शिंशपाया अपि फलव्यवच्छेदायोपादीयमानो वृक्षः किमिति विशेषणं न भवति, ततश्च भवितव्यं वृक्षशिंशपेत्यपीति ॥ तदयुक्तम् । वृक्षत्वस्य व्यापकत्वान्महाविषयत्वाद् दूरात्प्रथमतस्तस्यैवोपलम्भाद्विशेष्यत्वमेव । शिंशपात्वं तु स्वल्पविषयत्वात् पश्चाद् ग्रहणाच्च शुक्लादिगुणकल्पत्वाद्विशेषणमेवेति नास्ति प्रयोगस्यानियमः । तथा च वृक्षविशेषस्य खदिरादेः प्रतिनिधिर्भवति न तु वृक्षत्वाभावे फलपुष्पादेरुपादानं क्रियत इति न्यायविद आहुः ॥ **नह्यवृक्ष इति ।** ननु फलमस्त्येव ॥ नैतदस्ति । वृक्षप्रतीतिव्यवधानेन फलप्रतीतेरुपादाद्बहिरङ्गत्वाद्, वृक्षावसायस्य प्रागुत्पादादन्तरङ्गत्वात् ॥ **विशेषणं विशेष्येणेति** द्वयोरुपादानं विस्पष्टार्थम् । संबन्धिशब्दत्वादेवान्यतरेणेतरस्याक्षेपात् ॥ बहुलग्रहणाच्च तक्षकः सर्पो लोहितस्तक्षक इत्यादौ समासाभावः ॥ ५६ ॥

**( उद्द्योतः )** भाष्ये आवश्यक इत्यस्य नियत इत्यर्थः ॥ कादाचित्कस्तु अस्त्येवेति भावः ॥ तदेवोपपादयति—**यदा प्रथमत एवेति ॥ यदा तु प्रथममिति ।** अनेन च न केवलं गुणद्रव्यसमभिव्याहारे द्रव्यस्य प्राधान्यमित्येव नियमः । किं तु व्याप्यव्यापकजातिसमभिव्याहारे व्यापकस्य विशेष्यत्वमित्यपीति बोध्यते । वृक्षप्राधान्ये हेतुद्वयं प्रथमत उपलम्भादिति महाविषयत्वादिति च, महाविषयत्वमेवोपपादयति—**व्यापकत्वादिति ॥ विशेष्यत्वमेवेति ।** विषयताविशेषरूपमित्यर्थः । फलव्यवच्छेदाय वृक्षशब्द इत्यपि नेत्याह—**तथा चेति ॥** वृक्षविशेषस्य खदिरादेः प्रतिनिधिर्वृक्षो भवति, नतु तद्वृक्षाभावे तदीयफलाद्युपादानमित्यन्वयः । वृक्षविशेषःखदिरादेरिति पाङ्क्तः पाठः । **वृक्षाभावे फलेत्यादिश्च ।** एवं च फलं न वृक्षसमतया तदर्थं इति तात्पर्यम् ॥ तदाह—भाष्ये—**नह्यवृक्ष इति ।** तथा च शिंशपोपक्रमे वृक्षपदप्रयोगो नेति भावः । अशिंशपा तु वृक्षोऽस्त्येवेति वृक्षोपक्रमे भवत्येव शिंशपाप्रयोग इति बोध्यम् ॥ **वृक्षप्रतीतिव्यवधानेनेति ।** एतेन लुब्योगाप्रख्यानादितिसूत्रस्वरसेन शिंशपादिशब्दानामपि फले मुख्यतया शिंशपात्वं वृक्षत्वव्यभिचारीति **नह्यवृक्ष** इति भाष्यमसंगतमित्यपास्तम् । लुपः प्रत्याख्यानेपि वृक्षसंबन्धित्वेनैव तद्बोधात् । आदौ हि शिंशपाशब्दाद् वृक्षस्यैव प्रतीतिः । पश्चात्तत्संबन्धित्वेन फलस्येत्याशयात् ॥ नन्वन्तरङ्गत्वेपि फलार्थकत्ववारणाय वृक्षपदप्रयोगो भविष्यति, तत्र च द्रव्यवाचित्वेन विशेष्यत्वानियमात्प्रयोगानियमो भविष्यत्येवेति चेन्न । **नह्यवृक्षः शिंशपा** प्रसिद्धोस्तीति भाष्यार्थात् । एवं च फलरूपार्थस्याप्रसिद्धत्वादिना प्रकरणादिकं तदुपस्थित्यनुदयेन तद्व्यावर्तकविशेषणोपादानाभाव इति तात्पर्यात् । एवं च सामान्यविशेषवाचकपदसमभिव्याहारे सामान्यवाचकस्यैव विशेष्यत्वम् । यत्र तूभयोरपि परस्परापेक्षया सामान्यत्वं विशेषत्वं च तत्रानियम एव यथा ब्राह्मणदेवदत्तो देवदत्तब्राह्मण इति ॥ ननु विशेषणविशेष्ययोः ससंबन्धिकत्वादन्यतरोपादानेनैव सिद्धे उभयोपादानं द्वयोरपि परस्परव्यभिचारित्व एव यथा स्यादित्येतदर्थम् । अत एव तक्षकः सर्प इत्यादौ न, तक्षकत्वस्य सर्पत्वव्यभिचाराभावात् । ध्वनितं चेदं वृत्तौ ॥ तत्कथं शिंशपावृक्षे समास इत्यत आह—**द्वयोरुपादानमिति ।** भाष्यप्रामाण्यात्स्पष्टार्थमेव तदित्यर्थः । तक्षको नागवर्धक्योरिति कोशात् तक्षकत्वस्यापि सर्पत्वव्यभिचाराच्च ॥ **बहुलग्रहणाच्च तक्षकः सर्प इति** । अत्र समासाभावे प्रमाणं विचार्यं भाष्यारूढं बहुश्रुतैः ॥ ५६ ॥

---

**( २६० तत्पुरुषसमाससंज्ञासूत्रम् ॥ २।१।३ आ. ७ सू. )**

## ४०६ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ २ । १ । ५७ ॥

**( एतदादिसूत्रप्रयोजनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**अथ किमर्थमुत्तरत्रैवमाद्यनुक्रमणं क्रियते, न "विशेषणं विशेष्येण बहुलम्" इत्येव सिद्धम् ॥**

**( प्रदीपः ) पूर्वा ॥ ५७ ॥ अथ किमर्थमिति ।** एतत्सूत्राद्युत्तरसूत्रानुक्रमणमित्यर्थः ॥ **पूर्वकालेत्ययं तु योगः** पूर्वकालादीनां पूर्वनिपातनियमार्थः ॥ **दिक्संख्ये इति**

१ किन्तु विशेष्यत्वपरिच्छेदकत्वयोः समावेश इत्यर्थः । ( र. ना. ) २ पुरुषस्यापि स्वासंसृष्टराजतः स्वसंसृष्टराजस्य व्यावर्तकत्वदर्शनादित्यर्थः । ( र. ना. ) ३ किन्तु तत्र वृक्षस्य व्यापकजात्याश्रयत्वाद् विशेष्यत्वमेवेति भावः । वक्ष्यते चैतदग्रे । ( र.ना. ) ४ अवश्यं भाव आवश्यकम्, भावे मनोज्ञादित्वाद् वुञ् । ( र. ना. ) ५ पङ्क्तेः परम्परया आगतः पाङ्क्त इत्यर्थः । परम्पराप्राप्त इति यावत् । ( र. ना. ) ६ शिंशपाशब्दात्पूर्वमित्यर्थः । ( र. ना. ) ७ वृक्षप्रतीते-रित्यादिः । ( र. ना. )

संज्ञायां नियमार्थः ॥ कुत्सितानीति विशेष्यस्य पूर्वनिपातार्थः । एवमन्यत्रापि प्रयोजनमूह्यम् । यत्र तु प्रयोजनाभावः पूर्वापरप्रथमेत्यादौ, तस्यायमाक्षेपः, पूर्वेणैव समासस्य सिद्धत्वात् ॥

( उद्द्योतः ) पूर्वापर ॥५७॥ भाष्ये—उत्तरत्र । विशेषणं विशेष्येणेत्युत्तरम् ॥ एवमादि पूर्वापरेत्यादि ॥ तदाह—एतत्सूत्राद्युत्तरेत्यादि ॥ उत्तरत्रेत्यस्य फलमाह—पूर्वकालेत्यर्थं त्विति ॥ ऊह्यमिति । दिक्संख्ये इति नियमात् तद्धितार्थेत्यावश्यकम् । इवार्थघटितेऽर्थे समासस्य शक्तये उपमानानीति । सामान्यवचनैरेवेति नियमार्थमिदमित्यन्ये ॥ उपमितमिति विशेष्यस्य पूर्वनिपातार्थमिति बोध्यम् ॥ यत्र तु प्रयोजनाभाव इति । वीरैकादिन्यावृत्तये बहुलग्रहणानुवृत्तेरत्राप्यावश्यकत्वेन तेनैव गुणादिसमभिव्याहारे पूर्वनिपातनियमसिद्धिरिति भावः ॥ भाष्ये एवमादीत्यादिशब्दः प्रकारे इति बोध्यम् ॥

( १३२४ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ बहुलवचनस्याकृत्स्नत्वादुत्तरत्रानुक्रमणसामर्थ्यम् ॥ * ॥**

( व्याख्याभाष्यम् )

**अकृत्स्नं बहुलवचनमित्युत्तरत्रानुक्रमणं क्रियते॥**

( प्रदीपः ) बहुलवचनस्याकृत्स्नत्वादिति । अकृत्स्नप्रतिपत्तृविषयत्वादित्यर्थः । नहि मन्दबुद्धयो बहुलग्रहणमात्रेण समासासमासविषयविवेकमवगन्तुं क्षमा इत्यर्थः ॥

( उद्द्योतः ) उत्तरत्रानुक्रमणसामर्थ्यमिति । उत्तरत्रैवमाद्यनुक्रमणकरणसामर्थ्यमित्यर्थः । सूत्रकृता दर्शितमिति शेषः ।

( आक्षेपभाष्यम् )

**यद्यकृत्स्नं, यदनेन कृतमकृतं तत्॥**

( प्रदीपः ) इतरो यथोक्तमकृत्स्नशब्दार्थमप्रतिपद्य बहुलवचनस्याव्यापकत्वमकृत्स्नत्वं मत्वा चोदयति—यद्यकृत्स्नमिति । ततश्च निष्प्रयोजनं बहुलवचनमिति भावः ॥

( उद्द्योतः ) अव्यापकत्वमिति । कृत्स्नपदं कृत्स्नविषयपरमिति भावः ॥ भाष्ये—यदनेन कृतमिति । प्रवृत्त्यप्रवृत्त्यादिकं तत्सर्वं विषयाव्यापकत्वान्निष्प्रयोजनमित्यर्थः ॥

( समाधानभाष्यम् )

**एवं तर्हि न ब्रूमोऽकृत्स्नमिति, कृत्स्नं च कारकं च साधकं च निर्वर्तकं च, यच्चानेन कृतं सुकृतं तत् ॥**

( प्रदीपः ) कृत्स्नंचेति । पर्यायोपादानं लौकिक्या वाचोयुक्त्या सामर्थ्यविघातप्रतिपादनार्थं यथा स्वामी प्रभुरीश्वरो भगवानिति ॥ चतुर्भिः शब्दैश्चत्वारो बहुलशब्दार्था इति क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिरित्यादयः संगृहीता इत्येक आहुः॥ तेन कृष्णसर्प इत्यादौ नित्यः समासः । रामो जामदग्न्य इत्यादावसमासः । नीलमुत्पलं नीलोत्पलमित्यादौ विकल्पः । सुसूक्ष्मजटकेशादाववयवसमासाभावः ॥ अन्ये त्वाहुः—कृत्स्नमिति सर्वेष्टस्य संग्राहकत्वाद्व्यापकमित्यर्थः ॥ केन रूपेण व्यापकत्वमित्याह—कारकमिति । कुर्वदपि न विपर्ययेण करोतीत्याह—साधकमिति । न च कस्यचिद्वर्जनेन प्रवर्तकमित्याह—निर्वर्तकमिति ॥ अथ वा साधकं पारम्पर्येण स्यात्। वर्णोपदेश इव प्रत्याहारद्वारेण लक्ष्यसंस्कारस्येत्याह—निर्वर्तकमिति । साक्षात्कार्यं निष्पादयतीत्यर्थः ॥

( उद्द्योतः ) सामर्थ्यविघातेति । बहुलग्रहणघटितवचनस्य प्रशंसार्थमित्यर्थः । तत्प्रयोजनं शङ्कितृसंतोषः । तेन तदाग्रहशान्तौ व्यर्थकालक्षेपाभावात्, तत्र दृष्टान्तमाह—यथेति ॥ व्याख्यान्तरमाह—चतुर्भिरिति चत्वारः, क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवेत्येवंरूपाः ॥ अत्र पक्षे कृत्स्नादिशब्दैः शब्दमर्यादयैतदर्थालाभादरुचेराह—अन्ये त्विति ॥ कारकमितीति । प्रवृत्त्यादिकारकत्वेन व्यापकमित्यर्थः ॥ साधकमितीति । यथायोग्यकारकमित्यर्थः ॥ निर्वर्तकं सर्वविषयेत्यागेन साक्षात्प्रयोगसाधकमित्यर्थः ॥

( आक्षेपभाष्यम् )

**किमर्थं तर्ह्येवमाद्यनुक्रमणं क्रियते ? ॥**

( समाधानभाष्यम् )

**उदाहरणभूयस्त्वात् । एते खल्वपि विधयः सुपरिगृहीता भवन्ति येषु लक्षणं प्रपञ्चश्च । केवलं लक्षणं केवलः प्रपञ्चो वा, न तथा कारकं भवति ॥ अवश्यं खल्वप्यस्माभिरिदं वक्तव्यम्—बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषामिति । सर्ववेदपारिषदं हीदं शास्त्रम् । तत्र नैकः पन्थाः शक्य आस्थातुम् ॥ पूर्वापर ॥ ५७ ॥**

( प्रदीपः ) उदाहरणभूयस्त्वादिति । विभाषागुणेऽस्त्रियामिति पञ्चमी । अस्यैव लक्षणस्य भूयांस्युदाहरणानि प्रदर्शयितुमित्यर्थः ॥ केवलमिति । केवलेन लक्षणेन मन्दबुद्धिर्विषयविभागं नावधारयति । केवलेन प्रपञ्चेन च सामान्यलक्षणरहितेन प्रतिपदपाठवच्छास्त्रस्य गौरवप्रसङ्गः ॥ व्यवस्थितविभाषैव कस्मान्नाश्रीयते किं बहुलग्रहणेनेत्याह—अवश्यमिति । वैदिकव्यवहारानुसरणाय सर्वैः शब्दैरिह व्यवहार इत्यर्थः ॥ सर्ववेदपारिषदमिति । परिषद इदं पारिषदं साधारणमित्यर्थः । पञ्चाध्वर्युपरिषदश्चेत्यत्र ॥ अन्येत्वाहुः—पारिषदः परिषत्परिचारक उच्यते । स च परिषत्साधारण इति पारिषदत्वेन साधारणत्वं लक्ष्यते । सर्ववेदाङ्गत्वादस्य सर्ववेदसाधारणं लक्षणं बहुलादिग्रहणोपेतं क्रियते । आनुषङ्गिको लौकिकशब्दसंस्कार इति वेदग्रहणं कृतम् ॥ ५७ ॥

१ एवमाद्यारम्भरूपाया क्रिया तद्विषयकं निजं सामर्थ्यमित्यर्थः । ( र.ना. )
२ 'तद्भवति' । ३ बहुलग्रहणस्य यत्प्रवृत्त्याद्यर्थबोधानुकूलसामर्थ्यन्तस्याविघातप्रतिपादनार्थमित्यर्थः । पर्यायोपादानेन राज्ञोऽपि सामर्थ्याविघातः प्रतीयते । ( र. ना. ) ४ प्रशंसया सामर्थ्याविघातप्रतिपादनार्थमित्यर्थः । ( र. ना. )

५ उपसर्गवलादेतादृशविवक्षितार्थलाभ इति भावः । ( र. ना. ) ६ ज्ञापकमित्यर्थः । कृभ्वस्तयः क्रियासामान्यवचनाः इति करोतेर्ज्ञानार्थत्वम् । यथा लक्षणमपञ्चोभयरूपमिति शेषः । ( र. ना. )

( उद्योतः ) विभाषा गुणेति । प्रयोजनस्यापि प्रयोजकत्वेन हेतुत्वादिति भावः ॥ भाष्ये—ते खल्वपीति । यद्विधिविषये लक्षणं सामान्यशास्त्रं प्रपञ्चस्तस्यैव विशेषशास्त्रेण उदाहरणप्रदर्शनं ते विषयो मन्दामन्दबुद्धिभिः सर्वैरपि सम्यक् ज्ञातुं शक्यत्वात्सुपरिगृहीताभवन्तीत्यर्थः । एवं च प्रपञ्चार्थमिदं शास्त्रमिति भावः ॥ केवलेनेति । उदाहरणप्रपञ्चपरविशेषसूत्ररहितेन बहुलपदघटितसामान्यसूत्रेणेत्यर्थः ॥ प्रपञ्चेनेति । सामान्यलक्षणरहितप्रपञ्चपरविशेषसूत्रेणेत्यर्थः ॥ भाष्ये—अवश्यं खल्वपीति । अवश्यं विकल्पार्थकशब्दप्रयोगे कर्तव्ये पर्यायेषु लाघवगौरवविचाराभावात् । वेदे नानाशब्दैर्व्यवहारदर्शनाच्च वेदाङ्गत्वमस्यैवेति ध्वनयितुं वेदव्यवहृतैर्नानाशब्दैर्व्यवहार इत्यर्थः ॥ युक्त्यन्तरमप्याह—सर्ववेदपारिषदं हीति । हिश्चार्थे ॥ तत्र नैकः पन्था इति । क्वचिदन्यदेवेत्यर्थस्य बहुलग्रहणसिद्धस्यान्यैर्विभाषादिशब्दैः प्रतिपादयितुमशक्यत्वादित्यर्थः । तदुदाहरणानि च वेदेषु बहूनीति ध्वनयितुमेव लोकवेदसाधारणेपि सर्ववेदपारिषदत्वोक्तिरिति परे ॥ ५७ ॥

( २६१ तत्पुरुषसमाससंज्ञासूत्रम् ॥ ।२।१।३ आ. ८ सू. )

## ४०७ श्रेण्यादयः कृतादिभिः ॥ २ । १ । ५८ ॥

( इष्टानुपपत्तिनिराकरणाधिकरणम् )

( गणपाठशोधकभाष्यम् )

**श्रेण्यादयः पठ्यन्ते, कृतादिराकृतिगणः ॥**

( प्रदीपः ) श्रेण्यादयः ॥ ५८ ॥ श्रेण्यादय इति । अत एवात्रादिशब्दो व्यवस्थावाची, कृतादिरित्यत्रादिशब्दः प्रकारवाची, प्रयोगदर्शनाच्चोदाहरणस्थानीयाः कतिपये वृत्तिकारैः प्रदर्शिता ॥

( उद्योतः ) श्रेण्यादयः ॥ ५८ ॥ यद्यपि वृत्त्यादौ श्रेण्यादयः कृतादयश्च पठ्यन्ते तथापि कृतादिराकृतिगण एवेति बोधयितुं भाष्ये श्रेण्यादय इति ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( १३२५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ श्रेण्यादिषु च्व्यर्थवचनम् ॥ * ॥

**( भाष्यम् ) श्रेण्यादिषु च्व्यर्थग्रहणं कर्तव्यम् । अश्रेणयः श्रेणयः कृताः श्रेणीकृताः । यदा हि श्रेणय एव किञ्चित् क्रियन्ते तदा मा भूदिति ॥**

( प्रदीपः ) एकशिल्पपण्याश्रयणेन जीविनां संघः श्रेणिः । तत्र यदा पृथक् संस्थितानां श्रेणीकरणं तदा समासो यथा स्याद्, यदा तु श्रेणीस्थानामेव दण्डनादिरूपकरणं तदा मा भूदित्येवमर्थमाह—श्रेण्यादिष्वित्यादि ॥

( उद्योतः ) एकशिल्पेति । एकशिल्पाश्रयेण एकपण्याश्रयेण वेत्यर्थः ॥ तत्र यदेति । एकशिल्पाद्यजीविसंघस्य तद्वरकरणमित्यर्थः। दण्डनादिरूपकरणम् । तद्योग्यरूपकरणमवैरोधादीति यावत् । तदुक्तं भाष्ये—किंचित् क्रियन्ते इति । किंचिदर्थविशिष्टाः क्रियन्त इत्यर्थः ॥

( अनुयोगभाष्यम् )

**अन्यत्रायं च्व्यर्थग्रहणेषु च्व्यन्तस्य प्रतिषेधं शास्ति । तदिह न तथा । किं कारणम् ? ॥**

( प्रदीपः ) अन्यत्रेति । साक्षात्प्रभृतीनि चेत्यत्र च्व्यर्थवचनमित्युक्त्वा च्व्यन्ते प्रतिषेध उक्तः, इह तु शब्दान्न कृत इति प्रश्नः ॥

( समाधानभाष्यम् )

**अन्यत्र पूर्वं च्व्यन्तकार्यं, परं च्व्यर्थकार्यम् । इह पुनः पूर्वं च्व्यर्थकार्यं, परं च्व्यन्तकार्यम् ॥ श्रेण्यादयः ॥ ५८ ॥**

( प्रदीपः ) अन्यत्र पूर्वमिति । साक्षात्कृत्येत्यत्र च्व्यन्तत्वे सति नित्यविकल्पितगतिसंज्ञाप्रसङ्गेन परत्वाद् विकल्पः स्यादिति तत्र च्व्यन्तप्रतिषेधः क्रियते । तेन पूर्वा नित्या गतिसंज्ञा भवति । इह तु श्रेणीकृता इति परत्वान्नित्यो गतिसमासः सिध्यतीति नार्थ इह च्व्यन्तप्रतिषेधेनेत्यर्थः ॥ ५८ ॥

( उद्योतः ) परत्वान्नित्य इति । ऊर्यादिच्वीतिच्व्यन्तस्य गतित्वादिति भावः ॥ ५८ ॥

( २६२ तत्पुरुषसमाससंज्ञासूत्रम् ॥ २।१।३ आ. ९ सू. )

## ४०८ क्तेन नञ्विशिष्टेनानञ् ॥ २ । १ । ५९ ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( १३२६ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नञ्विशिष्टे समानप्रकृतिग्रहणम् ॥ * ॥

( व्याख्याभाष्यम् )

**नञ्विशिष्टे समानप्रकृतिग्रहणं कर्तव्यम् । इह मा भूत्—सिद्धं चाभुक्तं चेति ॥**

( प्रदीपः ) क्तेन ॥ ५९ ॥ विशिष्टशब्दो यदावधारणरहिताधिक्यवाच्युपात्तस्तदातिव्याप्तिपरिहारायाह—नञ्विशिष्ट इति । समानत्वमर्थरूपाभ्यां बोद्धव्यम् ॥

१ 'व्यवहृते' इति तूचितम् । २ नित्यशब्दोपि बहुलपर्याय इति प्रथमवार्तिकभाष्ये ध्वनितमेवेति न कश्चिद्दोषः । नित्यशब्दस्य बहुलपर्यायत्वमप्रसिद्धमिति वयम् । ( र. ना. ) । ३ एकस्मिन् स्थाने निरोधादिकमित्यर्थः । ( र. ना. ) ४ ननु नञ्विशिष्टपदे नञैवाधिकेन विशिष्टो नत्वन्येनेति सावधारणविग्रहस्वीकारात् सिद्धश्चाभुक्तश्चेत्यत्र प्रकृतसूत्रेण समासाप्राप्तिः, प्रकृतिरूपस्य नञतिरिक्तस्याप्यधिकस्य सत्त्वादिति वार्तिकं व्यर्थमत आह विशिष्टशब्द इत्यादिना । ( र. ना. )

(उद्योतः) क्तेन नञ् ॥ ५९ ॥ अवधारणेति । नञैव विशिष्टेन नान्येनेत्येवमित्यर्थः ॥ आधिक्यवाचीति । नञधिकेनेत्यर्थः ॥ अर्थरूपाभ्यामिति । एतिगच्छतिजहातिजिहीत्योर्व्यावृत्तये[1] उभयोपादानम् ॥

(१३२७ आक्षेपवार्तिकम् ॥ २ ॥)

## ॥ * ॥ अनञिति च ॥ * ॥

(व्याख्याभाष्यम्)

**अनञिति च प्रतिषेधो वक्तव्यः । इह मा भूत्—कर्तव्यमकृतमिति ॥**

(प्रदीपः) गौरवमप्यस्मिन् पक्ष इत्याह—**अनञिति चेति** । न विद्यते नञ् यस्मिन् पूर्वपदे तदनञ् तच्च प्रत्यासत्त्या क्तान्तमेवेह गृह्यते । तदयमर्थः—आधिक्यमात्रवचने विशिष्टशब्द उपादीयमाने कर्तव्यमकृतमित्यत्रापि समासप्रसङ्गः । समानप्रकृतित्वं चास्तीति वार्तिकेनापि समासो न निवारितः । ततश्चानञ्ग्रहणं क्तान्तपूर्वपदनिर्देशार्थं कर्तव्यमिति ॥

(उद्योतः) भाष्ये—प्रतिषेधो वक्तव्य इति । प्रतिषेधघटितबहुव्रीहिरूपं क्तान्तविशेषणमित्यर्थः । क्तान्तलाभार्थं सत् कर्तव्यम् । अन्यपदार्थश्च उपस्थितक्तान्त एवेति तल्लाभ इति भावः ॥ तदयमर्थ इति । अनञितिप्रतिषेधो वक्तव्य इति भाष्यस्यायमर्थ इत्यर्थः ॥ ततश्चानञिति । अवधारणसहिताधिक्यपरत्वे तु तन्त्रे[2] कर्तव्यं भवतीति भावः ॥

(१३२८ आक्षेपवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ नुडिडधिकेन च ॥ * ॥

(व्याख्याभाष्यम्)

**नुडिडधिकेन च समासो वक्तव्यः । इहापि यथा स्यात्—अशितानशितेन जीवति । क्लिष्टाक्लिशितेनेति ॥**

(प्रदीपः) अवधारणसहिताधिक्यवचनेप्यव्याप्तिरिति तत्परिहारायाह—**नुडिडधिकेन चेति** । यद्यपि नुडिटौ तद्भक्तौ तथापि श्रुतिभेदहेतुत्वाद् अवधारणेन च श्रुतिभिन्नस्य निराकरणात्तदधिकस्याप्राप्तिरिति भावः । नुडिड्ग्रहणमागममात्रोपलक्षणार्थमिति छिंताच्छितमित्यत्र[3] तुगधिकस्यापि समासो भवतीति केचिदाहुः ॥ अर्थभेदमकुर्वतो विकारस्याप्युपलक्षणमिति छाताच्छितमित्यत्र **शाच्छोरन्यतरस्यामि**तीत्वे कृते तदधिकेनापि समासो भवति । त्राताञाणमित्यादौ तु नत्वस्यासिद्धत्वाद्भेदकत्वाभावः ॥

(उद्योतः) अर्थभेदमिति । तत्कारी[4] विकारः क्केति चिन्त्यम्[5] ॥

(अवधारणार्थत्वे प्रथमवार्तिकद्वयप्रत्याख्यानतृतीयवार्तिकावश्यकताभाष्यम्)

**किमुच्यते समानप्रकृतिग्रहणं कर्तव्यमिति, यदा नञ्विशिष्टेनेत्युच्यते । न चात्र नञ्कृत एव विशेषः । किं तर्हि ? । प्रकृतिकृतोपि[6] । अयं विशिष्टशब्दोस्त्येवावधारणे वर्तते । तद्यथा—'देवदत्तयज्ञदत्तावाढ्यावभिरूपौ दर्शनीयौ पक्षवन्तौ, देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः' । स्वाध्यायेनैवेति गम्यते । अन्ये गुणाः समा भवन्ति ॥ अस्त्याधिक्ये वर्तते । तद्यथा—'देवदत्तयज्ञदत्तावाढ्यावभिरूपौ दर्शनीयौ पक्षवन्तौ देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः' स्वाध्यायेनाधिकः । अन्ये गुणा अविवक्षिता भवन्ति ॥ तद्यदा तावदवधारणे विशिष्टशब्दस्तदा नैवार्थः समानप्रकृतिग्रहणेन, नेह भविष्यति—सिद्धं चाभुक्तं चेति । नाप्यनञिति प्रतिषेधेनैं, नेह भविष्यति—कर्तव्यमकृतमिति ॥ नुडिडधिकेनापि तु तदा समासो न प्राप्नोति ॥**

(प्रदीपः) तद्यथेति । यदा समसंप्रधारणा प्रतिपाद्यते[8] तदावधारणे विशिष्टशब्दः । स्वरूपवर्णनमात्रे स्वाध्यायादिगुणद्वारेण क्रियमाणे आधिक्यमात्रे विशिष्टशब्दः ॥ तद्यदेति । इह क्तेन सनञेति सिद्धे विशिष्टग्रहणात् सावधारणाधिक्यगतिः स्याद्, गुरुलाघवानादरे त्वाधिक्यमात्रवृत्तिर्विशिष्टशब्दो गृह्येत इति द्वैतोपपत्तिः[9] ॥

(उद्योतः) समसम्प्रधारणेति । समयोर्मध्येन्यतरस्य संप्रधारणा[10] गुणाधिक्यं प्रतिपिपादयिषितमित्यर्थः ॥ अवधारणे तद्गर्भे आधिक्ये इत्यर्थः ॥ भाष्ये—नाप्यनञितीति । नञैव विशिष्टेन क्तान्तेन सुबन्तं समस्यत इत्युक्ते क्तान्तप्रकृतिकमेव तल्लभ्यत इति भावः ॥ समासो न प्राप्नोतीति । तस्मात्तत्कर्तव्यमिति भावः ॥

(आधिक्यार्थत्वेन प्रथमवार्तिकद्वयावश्यकता तृतीयवार्तिकानावश्यकताभाष्यम्)

**यदाधिक्ये विशिष्टशब्दस्तदा समानप्रकृतिग्रहणं कर्तव्यमिह माभूत्—सिद्धं चाभुक्तं चेति । अनञिति च प्रतिषेधो वक्तव्यः । इह मा भूत्—कर्तव्यमकृतमिति ॥ नुडिडधिकेनापि समासः सिद्धो भवति । तत्राधिक्ये विशिष्टशब्दं मत्वा समानप्रकृतिग्रहणं चोद्यते ॥**

**"अवधारणं नञा चेद् नुडिड्विशिष्टेन न प्रकल्पेत ॥**

---

१ एतिगच्छतिभ्यां सहितयोर्जहातिजिहीत्योरित्यर्थः । अयं भावः । इतागतमिति हानाहानमिति समासवारणायोभयोपादानमिति । (र. ना.) २ कर्तव्यमकृतमित्यत्र पूर्वपदापेक्षयोत्तरपदस्य नञतिरिक्तेन क्तप्रत्ययेनापि अधिकेन विशिष्टत्वादिति भावः । (र. ना.) ३ 'छिन्नाच्छिन्न' । ४ 'तत्कारो' इति पाठस्तु काशी Bangal Asiatic Society मुद्रितपुस्तकयोरुपलभ्यते । ५ चिन्त्यमिति । 'मूढस्तन्द्रिते जडे' 'मुग्धो मूढे रम्ये' इति हैमानेकार्थकोशे विकारभेदनार्थभेदस्य स्पष्टमुक्तत्वमेव चिन्ताबीजम् । ६ 'असमानप्रकृतिकृतोपि' । ७ अर्थ इति शेषः । (र. ना.) ८ 'प्रतिपाद्या तदा' । ९ किमयं सावधारणाधिक्यवृत्तिर्विशिष्टशब्द उताधिक्यमात्रवृत्तिरित्येवंरूपस्य संशयस्योपपत्तिरित्यर्थः । (र. ना.) १० विचारज्ञाप्यमित्यादिः । संप्रधारणापदस्य विचारार्थकस्य तज्ज्ञाप्यगुणाधिक्ये लक्षणेति भावः । (र. ना.)

अथ चेदधिकविवक्षा, कार्यं तुल्यप्रकृतिकेन ॥ १ ॥" इति ॥

( प्रदीपः ) अवधारणं नञा चेदिति । पूर्वोक्त एवार्थ आर्यया संगृहीतः, अनञिस्येतत्सूत्रे कृतमेवेति आर्यायां कर्तव्यत्वेन नोक्तम् ॥

( न्यूनता पूर्त्यधिकरणम् )

( १३२९ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ कृतापकृतादीनां चोपसंख्यानम् ॥ * ॥

( व्याख्याभाष्यम् )

कृतापकृतादीनां चोपसंख्यानं कर्तव्यम् । कृतापकृतम् । भुक्तविभुक्तम् । पीतविपीतम् ॥

( १३३० न्यासान्तरेणाक्षेपबाधकवार्तिकम् ॥ ५ ॥ )

## ॥*॥ सिद्धं तु क्तेन विसमाप्तावनञ् ॥*॥

( व्याख्याभाष्यम् )

सिद्धमेतत् ? । कथम् । क्तान्तेन क्रियाविसमाप्तावनञ् क्तान्तं समस्यत इति वक्तव्यम् ॥

( प्रदीपः ) इदानीमप्यव्याप्त्यतिव्याप्तिपरिहाराय न्यासान्तरमप्याह—सिद्धं त्विति । विसमाप्तिरसमाप्तिः । कृताकृतमित्यत्रैकदेशे करणाकरणाभ्यां करणस्यासमाप्तिर्गम्यते इति समासः । कृतापकृतमित्यत्राप्यसमाप्तिर्गम्यते, यत् कृतं तदेवापकृतं विरूपं कृतमित्यर्थावगमात् । एवं भुक्तविभुक्तमिति यद्भुक्तं तद्विभुक्तं विरूपं भुक्तमभुक्तमिति वार्थो विशब्दस्य प्रतिषेधार्थत्वात् । भुक्ते विभुक्तं चैकदेशद्वारकं भोजनकार्याकरणाद्वा वाद्धव्यम् । सिद्धमभुक्तं कर्तव्यमकृतमित्यत्र प्रतिषेधमात्रावगमाद्विसमाप्त्यभावात् समासाभावः ॥

( उद्द्योतः ) इदानीमव्याप्त्यतिव्याप्तीति । अव्याप्तिः कृतापकृतादौ, अतिव्याप्तिः—सिद्धमभुक्तं कर्तव्यमकृतमित्यादौ प्रागुक्ता । कैयटे द्वावप्यपिशब्दौ प्रक्षिप्तौ फलाभावात् ॥ विरूपं कृतमिति । असमाप्त्यैव विरूपत्वं, मध्ये तत्क्रियात्यागाच्च तस्या विरूपत्वमिति भावः ॥ अभुक्तमिति वार्थ इति । एवमपकृतमित्यस्याकृतमिति वार्थं इत्यपि बोध्यम् ॥ सिद्धमभुक्तमिति । अत्रारब्धस्यासमाप्तिने गम्यत इति न दोष इति भावः ॥

( १३३१ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ गतप्रत्यागतादीनां चोपसंख्यानम् ॥ * ॥

( भाष्यम् ) गतप्रत्यागतादीनां चोपसंख्यानं कर्तव्यम् ॥ गतप्रत्यागतम् । पातानुपातम् । पुटापुटिका । क्रयाक्रयिका । फलाफलिका । मानोन्मानिका ॥ क्तेन नञ् ॥ ५९ ॥

( प्रदीपः ) यत्सर्वथा वक्तव्यं तदाह—गतप्रत्यागतादीनां चेति । क्रयिकेत्यादावल्प इति कप्रत्ययस्तदन्तश्च स्वभावात् क्वचित् स्त्रियां वर्तते । क्रयाक्रयिकेत्यन्येषामपीति दीर्घः ॥ ५९ ॥

( उद्द्योतः ) यत्सर्वथेति । अयं भावः—सूत्रस्थनञ्विशिष्टपदं लक्षणया विसमाप्तिवचनेनेत्यर्थपरं व्याख्येयमिति सूत्रेणैव सिध्यतीति नुडिडधिकेनेत्यपि न कर्तव्यम्, तदाधिक्येपि विसमाप्तिवचनत्वाक्षतेरिति ॥ भाष्ये—गतप्रत्यागतमिति । गतं गमनं तदात्मकमेव प्रत्यागमनं तथोच्यते । यस्तु ग्रामान्तरं प्रति निर्गत्य तमप्राप्य मध्यत एव निवृत्तस्तदीयगमनप्रत्यागमने एकत्वेन तथा व्यवह्रियेते । यातमनुयातं तदानीमेव पुनर्गमनाद्यातानुयातम् ॥ ५९ ॥

( २६३ तत्पुरुषसमाससंज्ञासूत्रम् ॥ २।१।३ आ० १० सू. )

## ४१५ युवा खलतिपलितवलिनजरतीभिः ॥ २ । १ । ६६ ॥

( लिङ्गविशिष्टपरिभाषासाधनाधिकरणम् )

( आक्षेपभाष्यम् )

अयुक्तोयं निर्देशः । 'समानाधिकरणेन' इति वर्तते । कः प्रसङ्गो यद्व्यधिकरणानां समासः स्यात् ? ॥

( समाधानभाष्यम् )

एवं तर्हि ज्ञापयत्याचार्यः—यथाजातीयकमुत्तरपदं तथाजातीयकेन पूर्वपदेन समासो भवति—इति । किमेतस्य ज्ञापने प्रयोजनम् ? । "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति" इत्येषा परिभाषा न कर्तव्या भवति ॥ युवा ख० ॥ ६६ ॥

( प्रदीपः ) युवा ॥ ६६ ॥ अयुक्त इति । पुल्लिङ्गस्य स्त्रीलिङ्गेन सामानाधिकरण्यं नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञाप्यते । तेन युवतिजरतीति स्त्रीलिङ्गयोः समासः ॥ नन्वेतयोरपि विरुद्धवयोवाचित्वान्नास्ति सामानाधिकरण्यम् ॥ नैष दोषः । जरत्यां युवतिधर्मोपलम्भात् । युवतेर्वा जरतीधर्मसद्भावात् तद्रूपारोपात् ॥ युवतिशब्दस्यैव पूर्वनिपातार्थमिदम्, अनियमो हि गुणशब्दत्वात् स्यात् ॥ 'जरद्भिः' इत्यपि पाठे शिष्या आचार्येण बोधिता इति युवजरन्नित्यपि भवति ॥ ६६ ॥

( उद्द्योतः ) युवाखलति ॥ ६६ ॥ भाष्ये—यथाजातीयकमिति । स्त्रीलिङ्गशब्दरूपमित्यर्थः ॥ किमेतस्येति । लिङ्गविशिष्टपरिभाषयैव सिद्धमिति प्रश्नः ॥ सा एतज्ज्ञापकसिद्धैवेत्युत्तरम् ॥ यद्यपि मुखं चन्द्र इत्यादौ भिन्नलिङ्गयोरपि सामानाधिकरण्यं दृश्यते, तथापि न सर्वत्र किं तु संप्रतिपन्नस्थले एव । तदेप्येकस्य नियतलिङ्गत्व एवेति भाष्याभिप्रायः ॥ तद्रूपारोपादिति । नन्वेवं

---

१ आर्यया पूर्वार्धेनावधारणपक्षे दोषः, उत्तरार्धेन च आधिक्यमात्रार्थे वार्तिकोपपत्तिः प्रदर्शिता । ( र.ना. ) २ 'वाच्यं' । ३ ननु अनञिति चेति द्वितीयवार्तिकमपि कर्तव्यत्वेनाधिक्यपक्षे कुतो नोक्तमत आह । (र.ना.) ४ विशब्दस्य निषेधार्थकत्वेन समाप्तेरभाव इति विग्रहे अर्थाभावेऽव्ययीभावं परत्वाद् बाधित्वा कुगतीति समासः । विगता समाप्तिरिति विग्रहे तु फलतोऽसमाप्तिर्लभ्यते । (र.ना.)

५ भावप्रधानो निर्देशः । विभुक्तत्वमित्यर्थः । ( र. ना. ) ६ भोजनकार्यत्वकरणादित्यर्थः । ( र. ना. ) ७ क्रियाया इत्यर्थः । ( र. ना. ) ८ 'यातानुयातम्' । ९ पुटमेव पुटिकेत्यादिर्विग्रहः । सर्वत्र पूर्वपदस्य दीर्घश्च । (र. ना.) १० 'तर्हेतज्' ।

पुंस्त्वस्याप्यारोपोस्तु किं ज्ञापकेन असंगतं च तदिति चेन्न। उभयारोपे गौरवात् लक्ष्यानुरोधेन भाष्यप्रामाण्येन क्लृप्तपरिभाषाश्रापनस्यैवौचित्याच्चेत्यलम्॥ जरद्भिरित्यपीति। अत्र मानं चिन्त्यम्॥ युवजरतीति। बहुलग्रहणेनापि सुसाधम्॥ ६६॥

(२६४ तत्पुरुषसंज्ञासूत्रम्॥ २।१।३ आ० ११ सू.)

## ४१७ वर्णो वर्णेन॥ २।१।६८॥

(वर्णोवर्णेन इत्यस्य समानाधिकरणाधिकारीयत्वाधिकरणम्)

(आक्षेपभाष्यम्)

**इदं विचार्यते—वर्णेन तृतीयासमासो वा स्यात्—कृष्णेन सारङ्गः कृष्णसारङ्ग इति। समानाधिकरणो वा कृष्णः सारङ्गः कृष्णसारङ्ग इति॥**

(प्रदीपः) **वर्णो॥ ६८॥ इदमिति।** बुद्ध्या परामृष्टं वस्तु प्रत्यक्षवाचिना सर्वनाम्ना परामृश्यते। न तावदस्मिन् प्रदेशे सूत्रस्य प्रत्याख्यानम्। पश्चात्तु भविष्यति—इह कृष्णसारङ्ग इति सारङ्गशब्दः शबलपर्यायः, स च गुणोपसर्जनद्रव्यवाचित्वाद् गुणवचनो भवति। सारङ्गत्वस्य च कृष्णकृतत्वमस्ति, तस्मिन्नसति तस्याभावादिति शङ्कुलाखण्डवत्समासः सिद्धः। अथ कृष्णावयवत्वात् सारङ्गवृत्तिः कृष्णशब्दः तदा समानाधिकरणपदः समासः। स च गौणेपि सामानाधिकरण्ये बहुलवचनाद्विशेषणं **विशेष्येणेति** सिद्ध इति॥ **कृष्णेनेति।** हेतुतृतीया॥

(उद्द्योतः) **वर्णोव॥ ६८॥ बुद्ध्या परामृष्टमिति।** वक्ष्यमाणमसन्निहितमपि विचारविषयमित्यर्थः। बुद्धिविषयत्वेनैव च प्रत्यक्षता। नन्विदंशब्देन सूत्रमेव गृह्यतां तत्राह—**न तावदिति।** सूत्रकर्तव्यत्वाकर्तव्यत्वविचारो नात्रेति न तस्येदमा परामर्श इति भावः॥ **अस्मिन्प्रदेश** इति पाठः। कस्मिन् प्रकरणे सूत्रं कार्यमित्येवात्रत्यविचारतात्पर्यमित्याशयः॥ पश्चाद्भाविप्रत्याख्यानप्रकारं मन्दबुद्धिव्युत्पत्तये सौकर्याय च दर्शयति—**इह कृष्णसारङ्ग इतीति॥ विशेषणं विशेष्येणेति सिद्ध** इति प्रत्याख्यानं तु पश्चाद्भविष्यतीत्यन्वयः॥ षष्ठीसमासस्त्वीदृशे विषये न संभवत्येव। भाष्यप्रामाण्येनानभिधानाच्च॥ **गौणेपीति।** बहुलग्रहणात् गौणमुख्यन्यायोत्र न प्रवर्तत इति भावः॥ विशिष्टरूपोपादानाभावात्, लाक्षणिकतामात्रेण गौणत्वाभावाच्च चिन्त्यमिदम्॥ भाष्ये—**वर्णेन तृतीयासमासो वा स्यादिति। वर्णो वर्णेनेति** सूत्रं तृतीया तत्कृतेत्यनन्तरं कार्यम्, उतात्रैवेति विचार्यत इत्यर्थः॥ ननु तृतीयासमासस्य तत्कृतत्वेनैव सिद्धेस्तत्प्रकरणे इदं व्यर्थमत आह—**हेतुतृतीयेति।** हेतुतृतीयान्ते हि तस्य न प्राप्तिरिति भावः॥

(विशेषप्रश्नभाष्यम्)

**कश्चात्र विशेषः?॥**

(प्रदीपः) **कश्चात्रेति।** क्व लाघवमिति प्रश्नः॥

(१३३२ तृतीयासमासे दूषणवार्तिकम्॥ १॥)

### ॥ * ॥ वर्णेन तृतीयासमास एतप्रतिषेधे वर्णग्रहणम्॥ * ॥

(भाष्यम्) **वर्णेन तृतीयासमासे एतप्रतिषेधे वर्णग्रहणं कर्तव्यम्। तृतीयापूर्वपदं प्रकृतिस्वरं भवति। "अनेते वर्णः" इति वक्तव्यम्॥ [इहं मा भूत्—हिमेन एतः हिमैतः॥]**

(प्रदीपः) **एतप्रतिषेध इति।** स्वरे विधीयमान इत्यर्थः॥ **अनेते वर्ण इति।** कृष्णसारङ्ग इत्यादौ **तत्पुरुषे तुल्यार्थतृतीयेति** पूर्वपदप्रकृतिस्वरे सिद्धे **अनेते वर्ण** इति सूत्रं कर्तव्यम्। वर्णवाचि पूर्वपदमेत उत्तरपदे प्रकृतिस्वरं न भवतीत्यर्थः॥ तेन कृष्णैत इति समासान्तोदात्तत्वमेव भवति। कृष्णेनेति सहयोगे इत्थंभूतलक्षणे वा तृतीया, अनेन समासः॥ वर्णग्रहणाच्च हिमेन एतो हिमैत इत्यादौ पूर्वपदप्रकृतिस्वर एव भवति। हिमेनेति हेतौ तृतीया, **तत्कृतार्थे**ति समासः। कृत्स्वरस्तु नास्ति, उणादीनामव्युत्पन्नत्वाद् अकारकत्वाद्वा हिमस्य॥

(उद्द्योतः) **प्रकृतिस्वरे सिद्धइति।** अतिप्रसङ्गनिवारणार्थमिति शेषः **अनेते वर्ण इति सूत्रं** कर्तव्यमित्यन्वयी॥ **तेन कृष्णैत इति।** एतः शबलः। 'शबलैताश्च कर्बुरे' इतिकोशात्॥ इत इत्तरं **कृष्णेनेति सहयोगे इत्थंभूतलक्षणे वा तृतीया अनेनैव समास** इति ग्रन्थः कैयटे दृश्यते सोऽग्रन्थः। एतशब्दस्य कृष्णघटितवर्णसमुदायवदर्थकत्वेन, साहित्यस्य ज्ञापकत्वस्य चात्यन्तभेदनियतत्वेन, सहयोगे तृतीयाया इत्थंभूततृतीयायाश्चाप्राप्तेः। कृष्णसारङ्गोक्तरीत्या सिद्धे उपयोगाभावाच्चेत्यन्ये केचित्॥ **पूर्वपदप्रकृतिस्वरो भवतीति।** पूर्वपदस्य हिमशब्दस्य वर्णवाचित्वाभावान्निषेधाप्राप्तेरित्यर्थः। **अनेते वर्ण** इति प्रथमान्तम्॥ नन्वत्र **वर्णो वर्णेनेति** न प्राप्नोति हिमस्य वर्णत्वाभावादत आह—**हेतौ तृतीयेति।** जनकत्वसाम्याद्धेतुपदं कर्तृपलक्षणं कृतद्वारकं च सामर्थ्यमिति भावः। तदाह—**तत्कृतार्थेति। समास इति॥ अकारकत्वाद्वेति।** कृतद्वारकसामर्थ्ये एव समासत्वेनैतपदार्थे प्रत्यकारकत्वादित्यर्थः॥

(आक्षेपभाष्यम्)

**अथ द्वितीयेन वर्णग्रहणेनैतद्विशेषणेनार्थः?॥**

(उद्द्योतः) भाष्ये—**द्वितीयेनेति।** सप्तम्यन्तेनेत्यर्थः। **नैते वर्णे वर्ण** इतिसूत्रं पाठ्यमिति भावः। **अनेत** इत्यस्यासमर्थसमासत्वेन वा न क्षतिरिति॥

---

१ सादृश्यप्रयुक्तलक्षणावत एव गौणत्वमिष्टमिति भावः। (र. ना.) २ एतप्रतिषेधफलकं वर्णग्रहणं कर्तव्यमित्यर्थः। एतशब्दसंबन्धी प्रतिषेध एतप्रतिषेधः। एतशब्दे उत्तरपदे परतः पूर्वपदस्य वर्णवाचिनः प्राप्ततृतीयान्तपूर्वपदप्रकृतिस्वरप्रतिषेधफलकमिति यावत्। चर्मणि द्वीपिनं हन्तीतिवत् सप्तमी। (र. ना.) ३ तदन्तमित्यर्थः। (र. ना.) ४ अयं कोष्ठकान्तर्गतः पाठो न सार्वत्रिकः। ५ अनेते इति निषेध इति शेषः। (र. ना.) ६ तृतीया, तदाऽनेनैव समासः। ७ 'स्वरो भवति'। ८ 'तृतीया तत्कृतार्थ'। ९ कृष्णेन कृत एत इति रीत्यर्थः। (र. ना.)

( समाधानभाष्यम् )

**बाढमर्थः । यद्यवर्णं एतशब्दोऽस्ति ॥**

( प्रदीपः ) **यद्यवर्ण इति ।** वर्णग्रहणस्य व्यवच्छेद्यत्वेन प्रयोजको नास्तीति भावः ॥

( उद्द्योतः ) भाष्ये—यद्यन्तर्भावेन सूचितं तदभावमाह—प्रयोजकोनास्तीति । तृतीया कर्मणीत्यादिप्रवृत्तेरिति भावः ॥

( समाधानबाधकभाष्यम् )

**ननु चायमस्ति—आ इतः एतः, कृष्णेतो लोहितेत इति ॥**

( प्रदीपः ) इतरः पराभिप्रायमबुद्ध्वा सत्तां प्रतिपादयितुमाह—**ननु चेति । कृष्णेत इति । ओमाङोश्चेति** पररूपम् ॥

( प्रत्याख्यानभाष्यम् )

**नार्थ एवमर्थेन वर्णग्रहणेन । यदि तावदयं कर्मणि क्तः, "तृतीया कर्मणि" इत्यनेन स्वरेण भवितव्यम् । अथापि कर्तरि, परत्वात्कृत्स्वरेण भवितव्यम् ॥**

( प्रदीपः ) **तृतीयाकर्मणीति ।** अनेत इति प्रतिषेध आनन्तर्यान्मध्येपवादा इति वा तत्पुरुषे तुल्यार्थेत्यस्यैव बाधक इत्यभिप्रायः ॥ **परत्वादिति ।** कृष्णेन अश्वादिना करणेन आगतः कृष्णेत इत्यत्र—अनेत इति प्रतिषेधः पूर्वपदप्रकृतिस्वरस्य किं बाधकोऽस्तु अथ वा कृत्स्वर इति विचारे परत्वात् कृत्स्वर एव बाधक इति नार्थ एतविशेषणार्थेन वर्णग्रहणेनेत्यर्थः । कृत्स्वरमपि बाधित्वा थाथादिस्वरेणात्र भाव्यं विशेषाभावात्तु भाष्यकारेणैतन्नोक्तम् ॥ अथ वा परत्वादुत्कृष्टत्वात् कक्षान्तरप्राप्तत्वात् कृत्स्वरः थाथादिस्वर इत्यर्थः ॥

( उद्द्योतः ) नन्वनेत इति तृतीया कर्मणीत्यस्यापि निषेधः स्यादत आह—आनन्तर्यादित्यादि ॥ अनेत इत्यस्य पूर्वपदप्रकृतिस्वरनिषेधत्वात्कृत्स्वरस्य च पूर्वपदप्रकृतिस्वरापवादत्वात् परत्वादित्यसंगतं तत्राह—अनेत इति प्रतिषेध इति । पूर्वपदप्रकृतिस्वरस्य बाधकः किम्प्रतिषेधोथ कृत्स्वर इत्यन्वयः ॥ विशेषाभावात्त्विति । एतशब्दस्यान्तोदात्तत्वादिति भावः ॥ निषेधाश्च बलीयांस इति न्यायमभिप्रेत्याह—अथ वेति ॥ कक्ष्यान्तरप्राप्तत्वादिति ॥ पूर्वपदप्रकृतिस्वरापवादकृत्स्वरापवादत्वादित्यर्थः ॥

( समानाधिकरणपक्षाभ्युपगमभाष्यम् )

**अथ समानाधिकरणः ॥**

( १३३३ समानाधिकरणपक्षे दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ समानाधिकरणे द्विर्वर्णग्रहणम् ॥ * ॥

( व्याख्याभाष्यम् )

**समानाधिकरणे द्विर्वर्णग्रहणं कर्तव्यम् । वर्णो वर्णेष्वनेत इति वक्तव्यम् । एकं वर्णग्रहणं कर्तव्यम् । इह मा भूत्—परमशुक्लः परमकृष्णः । द्वितीयं वर्णग्रहणं कर्तव्यम् । इह मा भूत्—कृष्णतिला इति ॥**

( उद्द्योतः ) भाष्ये—द्विर्वर्णग्रहणमिति । अनेत इति प्रतिषेध इत्यनुपज्यते ॥

( दूषणबाधकभाष्यम् )

**एकं वर्णग्रहणमनर्थकम् ॥**

( उद्द्योतः ) आचार्यदेशीयः प्रकृतसूत्रसत्ताश्रयणेन प्रतिपदोक्तपरिभाषया सिद्धिमाश्रित्यैकवर्णग्रहणाकरणेन पक्षयोः साम्यं दर्शयति—भाष्ये—एकं वर्णग्रहणमिति ॥

( आक्षेपभाष्यम् )

**अवर्णस्य वर्णे वर्णस्य चावर्णे अन्यतरत्र कस्मान्न भवति ? ॥**

( उद्द्योतः ) अन्यतरत्र कस्मादिति । अवर्णस्य वर्णे, वर्णस्य वा अवर्णे कस्मान्न भवतीत्यर्थः । क्वचित्तु तथैव पाठः ॥

( समाधानभाष्यम् )

**'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इति ॥**

( प्रदीपः ) **लक्षणप्रतिपदोक्तयोरिति । वर्णो वर्णेनेति** यः समास स एव स्वरविधौ द्वितीयवर्णग्रहणमन्तरेणापि ग्रहीष्यते, तेनातिप्रसङ्गो न भविष्यतीत्यर्थः ॥

( तृतीयासमासवादिभाष्यम् )

**एवं सति तान्येतानि त्रीणि वर्णग्रहणानि भवन्ति—समासविधौ द्वे, स्वरविधौ चैकम् ॥**

( समानाधिकरणसमासवादिभाष्यम् )

**यस्यापि तृतीयासमासस्तस्यापि तान्येव त्रीणि वर्णग्रहणानि भवन्ति । समासविधौ द्वे, स्वरविधौ चैकम् ॥**

( तृतीयासमासवादिभाष्यम् )

**सामान्येन मम तृतीयासमासो भविष्यति "तृतीया तत्कृतार्थेन गुणवचनेन" इति ॥**

( उद्द्योतः ) अथ तृतीयासमासवादी[1] स्वमते लाघवमाह—सामान्येन ममेति ॥

( समानाधिकरणसमासवादिभाष्यम् )

**अवश्यं वर्णेन प्रतिपदं समासो वक्तव्यः । यत्र तेन न सिध्यति तदर्थम् ॥ क्व च तेन न सिध्यति ? । शुकबभ्रुर्हरितबभ्रुरिति ॥ तथा सति तान्येतानि त्रीणि वर्णग्रहणानि भवन्ति—समासविधौ द्वे, स्वरविधौ चैकम् ॥**

( प्रदीपः ) **शुकबभ्रुरिति ।** शुको हरितः शुक्लो वा बभ्रुः कपिलः । ततः तत्कृतत्वाभावात् शुकेन बभ्रुरिति तृतीया सहयोग इत्थंभूतलक्षणे वा कर्तव्या ॥

---

१ तृतीयासमासवादिनाऽपि तृतीयासमास इत्यर्थः । ( र. ना. )

(उद्द्योतः) इतर आह—अवश्यं वर्णेति यद्यपि हेतु तृतीयान्तेन समासार्थं कृष्णसारङ्ग इत्याद्यर्थमावश्यकम्[1], तथापि स्पष्टत्वाय यत्र कृतद्वारकसामर्थ्यस्यासंभवस्तदर्थमित्याह[2]—शुक्लबभ्रुरिति ॥ सहयोगे तृतीयेत्येत्र न्याय्यम्[3] ॥

(तृतीयासमासवादिभाष्यम्)

**अथेदानीं समानाधिकरणः सामान्येन सिद्धः स्यात्?[4] ॥**

(उद्द्योतः) स एव पुनः पृच्छति—अथेदानीमिति ॥

(समानाधिकरणसमासवादिभाष्यम्)

**बाढं सिद्धः ॥ कथम्? । "विशेषणं विशेष्येण बहुलम्" इति । एवमपि द्वे[5] वर्णग्रहणे कर्तव्ये स्वरविधावेव, प्रतिपदोक्तस्याभावात् । तस्मात्समानाधिकरण इत्येष पक्षो ज्यायान् ॥**

(प्रदीपः) तस्मादिति । एतत्सूत्रानारम्भाल्लाघवादित्यर्थः ॥

(उद्द्योतः) सिद्धान्त्याह—बाढमिति ॥ एवमपीति । एवं चेत्यर्थः ॥ इदं सूत्रमत्र पक्षे उदाहरणमात्रपरमिति बोध्यम् ॥

(प्रधानोपसर्जनानां विप्रतिषेधाधिकरणम्)

(१३३४ वार्तिकम् ॥ ३ ॥)

**॥ * ॥ समानाधिकरणाधिकारे प्रधानोपसर्जनानां परं परं विप्रतिषेधेन ॥*॥**

**(भाष्यम्) समानाधिकरणाधिकारे प्रधानोपसर्जनानां परं परं भवति विप्रतिषेधेन । प्रधानानां प्रधानम्, उपसर्जनानामुपसर्जनम् । प्रधानानां तावत्प्रधानम्—"वृन्दारकनागकुञ्जरैः पूज्यमानम्" इत्यस्यावकाशः—गोवृन्दारकः अश्ववृन्दारकः । "पोटायुवतीनामवकाशः"—इभ्ययुवतिः, आढ्ययुवतिः । इहोभयं प्राप्नोति—नागयुवतिः वृन्दारकयुवतिः । प्रधानानां परं प्रधानं भवति विप्रतिषेधेन ॥ उपसर्जनानां परमुपसर्जनम् । "सन्महत्परमोत्तमोत्कृष्टा" इत्यस्यावकाशः—सद्वः सदश्वः । "कृत्यतुल्याख्या अजात्या" इत्यस्यावकाशः—तुल्यश्वेतः तुल्यमहान् । इहोभयं प्राप्नोति—तुल्यसन् तुल्यमहान् । उपसर्जनानां परमुपसर्जनं भवति विप्रतिषेधेन ॥**

(प्रदीपः) प्रधानोपसर्जनानामिति । प्रधानग्रहणेन समासशास्त्रे तृतीयान्तानि लक्ष्यन्ते, उपसर्जनशब्देन समासशास्त्रे प्रथमानिर्दिष्टमुच्यते ॥

(उद्द्योतः) क्वचिद्विशेषणविशेष्यभावे कामचारात्प्रधानोपसर्जनत्वेऽव्यवस्थिते तत्राह—प्रधानग्रहणेनेति । तदयमर्थः—पूर्वपरसूत्रोपात्तप्रधानयोः सह समाससंज्ञाप्रसङ्गे परसूत्रोपात्तं प्रधानं[प्रधान][6] भवति पूर्वसूत्रोपात्तं प्रधानमुपसर्जनम् । तादृशोपसर्जनयोः समासप्रसङ्गे परशास्त्रोपात्तमुपसर्जनमुपसर्जनम्, पूर्वसूत्रोपात्तमुपसर्जनं प्रधानमिति ॥ भाष्ये इभ्ययुवतिराढ्ययुवतिरिति पाठः स चिन्त्यः । तयोरजातित्वात् । इभयुवतिरश्वयुवतिरिति पाठस्तु उचित इति केचित् ॥ भाष्यप्रमामाण्यात्तयोरपि जातिवाचित्वम् । अत एव जातेरस्त्रीतिसूत्रेऽयोपधादित्यस्य इभ्या क्षत्रियेति प्रत्युदाहरणं भाष्ये दत्तम् । हस्तिपकजातिश्चेभ्यपदेनोच्यते ॥ अश्वेति पाठः । अर्थ्यो ब्राह्मण इत्यन्ये ॥ वृन्दारकयुवतिरिति । वृन्दारकशब्दो देवजातिवाचीत्याहुः ॥ भाष्ये—कृत्यतुल्येत्यस्यावकाशप्रदर्शनावसरे तुल्यमहानित्यपपाठः । तुल्यश्वेतः तुल्यकृष्ण इत्येव पाङ्क्तः पाठः ॥

(न कर्मधारयान्मत्वर्थीय इति व्युत्पत्तिसाधकाधिकरणम्)

(१३३५ बहुव्रीहेः कर्मधारयप्रकृतिकमत्वर्थीयापवादत्वसाधकप्रथमखण्डवार्तिकम् ॥ ४ ॥)

**॥ * ॥ समानाधिकरणसमासाद् बहुव्रीहिः ॥ * ॥**

**(भाष्यम्) समानाधिकरणसमासाद्बहुव्रीहिर्भवति विप्रतिषेधेन ॥ समानाधिकरणसमासस्यावकाशः—वीरः पुरुषो वीरपुरुषः । बहुव्रीहेरवकाशः—कण्ठेकालः । इहोभयं प्राप्नोति—वीरपुरुषको ग्रामः । बहुव्रीहिर्भवति विप्रतिषेधेन ॥**

(प्रदीपः) समानाधिकरणसमासादिति । *समानाधिकरणसमासाद् बहुव्रीहिः कदाचित् कर्मधारयः सर्वधनाद्यर्थं* इति वार्तिककारेणेष्टिरूपेण पठितम् ॥ भाष्यकारस्तु न्याय्यव्युत्पादनाय विप्रतिषेधमुपन्यस्य दूषयित्वा इष्टिरूपतां स्थापयिष्यति प्रत्यासत्तेः सामर्थ्यस्य बलवत्त्वाश्रयेण[7] ॥ कण्ठेकाल इति । व्यधिकरणानां बहुव्रीहिः सप्तम्यन्तस्य पूर्वनिपातविधानेन ज्ञाप्यते ॥ वीरपुरुषक इति । बहुव्रीहिसंज्ञायां सत्यां पूर्वपदप्रकृतिस्वरः पाक्षिकश्च कप्समासान्तो भवति । बहुव्रीहिसंज्ञायां शेषग्रहणे प्रत्याख्याते विप्रतिषेधश्चिन्त्यते ॥

(उद्द्योतः) न्यायव्युत्पादनायेति । प्रत्यासत्त्यादिन्यायेनेत्यर्थः ॥ विप्रतिषेधप्रकरणादिष्टिरूपत्वं[8] कथं लभ्यमित्यत आह—प्रत्यासत्तेरिति ॥ ज्ञाप्यते इति । शेषत्वाभावादिति भावः ॥ शेषग्रहणे प्रत्याख्याते इति । तथासत्येव कण्ठेकाल इति तदवकाशो युज्यते इति भावः । नहि ज्ञापकसिद्धे सावकाशत्वं गृहीत्वा सूत्रेण विप्रतिषेधो युक्तो विचारयितुमित्यभिमानः ॥ अयं ग्रन्थः प्रौढ्या, नहि त्रिकतः शेषे एकसंज्ञाधिकारे च तत्प्रत्याख्यानमस्ति । व्यधिकरणसमासस्याल्पविषयतासूचनार्थं तस्यावश्यकत्वाच्चेति[9] केचित् ॥

---

१ तत्कृतत्वाभावात्सामान्यशास्त्रेणाप्राप्ते रिति भावः । (र. ना.) २ 'मिदमित्याह' । ३ नहि जटाभिस्तापसत्वमिव शुक्लत्वेन बभ्रुत्वं ज्ञाप्यते इति भावः । (र. ना.) ४ समानाधिकरणसमासवादिपक्षे सामान्यशास्त्रेण समानाधिकरणसमाससिद्धावपीत्यर्थः । (र. ना.) ५ तृतीयासमासवादिना तु पूर्वोक्तरीत्या समासविधौ द्वे स्वरविधौ चैकमिति त्रीणि कर्तव्यानीति गौरवमिति भावः । (र. ना.)

६ अयं कष्ठकान्तर्गतः पाठो लेखकप्रमादाद्भ्रष्टो भवेदिति मत्वा कोष्ठकमध्ये वर्धितो मयेति क्षन्तव्यम् । ७ अन्तरङ्गत्वरूपप्रत्यासत्तिमादाय प्राप्तकर्मधारयापेक्षया बहुव्रीहिपक्षे वृत्तिलाघवरूपसामर्थ्यस्य बलवत्त्वाश्रयेणेत्यर्थः । (र. ना.) ८ विप्रतिषेधप्रस्तावादित्यर्थः । (र. ना.) ९ शेषग्रहणस्येत्यर्थः । अन्यथा सर्वत्रैव व्यधिकरणसमासः स्यादिति भावः । (र. ना.)

( १३३६ कर्मधारयप्रकृतिकमत्वर्थीयसाधकवार्तिकद्वितीयखण्डम् ॥ ५ ॥ )

## ॥ * ॥ कदाचित्कर्मधारयः सर्वधनाद्यर्थः ॥ * ॥

( भाष्यम् ) **कदाचित्कर्मधारयो भवति बहुव्रीहेः ॥ किं प्रयोजनम्? । सर्वधनाद्यर्थः । सर्वधनी । सर्वबीजी । सर्वकेशी नटः । गौरखरवदरण्यम् । कृष्णसर्पवान्वल्मीकः । लोहितशालिमान् ग्रामः ॥ किं प्रयोजनम्? । कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानं यथा स्यात् ॥ किं च कारणं न स्यात्? । बहुव्रीहिणोक्तत्वान्मत्वर्थस्य ॥**

( प्रदीपः ) **कदाचिदिति** । विषयविशेषनिर्देशाय क्वचिदिति वक्तव्ये कदाचिदित्यनेन विषयविशेषावच्छिन्नः कालविशेषो निर्दिश्यत इति नास्ति वस्तुभेदः ॥ **सर्वधनीति** । सर्वाणि धनान्यस्येत्यर्थविवक्षायां कर्मधारये कृते मत्वर्थीय इति तदर्थं पूर्वविप्रतिषेध आश्रयणीय इत्युक्तं भवति ॥ किं **प्रयोजनमिति** । **सर्वधनाद्यर्थमिति** मत्वर्थीयरहितस्य सर्वधनशब्दस्योपादानात्तस्य च केवलस्यान्यपदार्थविवक्षायां प्रयोगादर्शनाच्च स्वपदार्थे बहुव्रीहेरप्रसङ्गात् कर्मधारयस्यानुक्तसिद्धत्वात् प्रश्नः ॥ **कर्मधारयप्रकृतिभिरिति** । मत्वर्थीयप्रकृतिः सर्वधनशब्दो वार्तिकोऽनुक्तः न तु स्वतन्त्र इत्यर्थः ॥ **बहुव्रीहिणेति** । सर्वाणि धनान्यस्येति विवक्षायां यदि बहुव्रीहिः क्रियते तदा तेनैव मत्वर्थस्योक्तत्वान्मत्वर्थीयो न स्यात्, कर्मधारये तु सति तेन मत्वर्थस्यानुक्तत्वात् प्रत्ययः सिद्ध्यतीत्यर्थः ॥

( उद्योतः ) कदाचिदित्यनेन समासद्वयस्यैकविषयत्वमाशङ्क्याह—**विषयविशेषेति** ॥ नास्ति वस्तुभेद इति । क्वचिदित्यतो नार्थभेद इत्यर्थः ॥ भाष्ये—**सर्वधनाद्यर्थ इति** । सर्वधनादिप्रकृतिकमत्वर्थीयार्थमित्यर्थः ॥ प्रयोजनस्योक्तत्वात् किम्प्रयोजनमिति प्रश्नानुपपत्तिमाशङ्क्याह—**सर्वधनेति** ॥ प्रयोगादर्शनाच्चेति च रहितः पाठः ॥ वाक्यालंकारे वा चः ॥ **कर्मधारयस्यानुक्तसिद्धत्वादिति** । कदाचित्कर्मधारय इति पूर्वविप्रतिषेधानुक्तावपि सिद्धत्वादित्यर्थः ॥ **मत्वर्थीयप्रकृतिरिति** । षष्ठीतत्पुरुषः ॥ भाष्ये—**मत्वर्थीयैरभिधानमिति** । तैः प्रत्ययैस्तदर्थाभिधानं यथा स्यादित्यर्थः ॥

( मत्वर्थीयोत्पत्तिबाधकाक्षेपभाष्यम् )

**यद्युक्तत्वं हेतुः, कर्मधारयेणाप्युक्तत्वान्न प्राप्नोति ॥ न खल्वपि संज्ञाश्रयो मत्वर्थीयः । किं तर्हि? । अर्थाश्रयः ॥ स यथैव बहुव्रीहिणोक्तत्वान्न भवति, एवं कर्मधारयेणोक्तत्वान्न भविष्यति ॥**

( प्रदीपः ) **यद्युक्तत्वमिति** । सर्वाणि धनान्यस्येत्यर्थविवक्षायां पूर्वविप्रतिषेधेन यदि कर्मधारयः क्रियते तदा तेनापि मत्वर्थ उच्यत एव । नहि बहुव्रीहिकर्मधारयसंज्ञाभेदमात्रेण स्वरव्यवस्थावत्तदर्थस्याभिधानानभिधानव्यवस्था युज्यते, तस्याः स्वाभाविकत्वात् ॥

( उद्योतः ) तस्याःस्वाभाविकत्वादिति । बहुव्रीहिविषये पूर्वविप्रतिषेधेन कर्मधारयविधानात्तदर्थस्तेनोक्त एवेति भावः ॥

( मत्वर्थीयोत्पत्तिसाधकसमाधानभाष्यम् )

**एवं तर्हि इदं स्यात्—सर्वाणि धनानि=सर्वधनानि, सर्वधनान्यस्य सन्ति=सर्वधनीति ॥**

( प्रदीपः ) **एवं तर्हीति** । अनपेक्षितान्यपदार्थे स्वपदार्थे कर्मधारयं कृत्वा मत्वर्थीयोर्थान्तरे विधास्यत इत्यर्थः ॥

( उद्योतः ) मत्वर्थीयोर्थान्तर इति । अन्यपदार्थरूपे मत्वर्थे इत्यर्थः ॥

( वार्तिकीयकदाचित्पदासंगत्याक्षेपभाष्यम् )

**नैवं शक्यम् । नित्यमेवं सति कर्मधारयः स्यात् । तत्र यदुक्तम्—"कदाचित्कर्मधारयः" इति, एतदयुक्तम् ॥**

( प्रदीपः ) **नित्यमेवं सतीति** । यथा पूर्वं विषयभेदविवक्षया कदाचिदित्युक्तं तथात्र सकलविषयव्याप्त्यपेक्षया सर्वत्रेति वक्तव्ये नित्यमित्युक्तम् । एतदुक्तं भवति—अनेन न्यायेन सर्वत्र मत्वर्थीयप्रकृतिभिः कर्मधारयः स्यादिति कदाचिद्ग्रहणं विषयविशेषनिर्देशार्थं न वक्तव्यं भवति ॥

( उद्योतः ) न वक्तव्यमिति । वक्तुमनर्हमित्यर्थः । क्वचित्तु न कर्तव्यमितिपाठः । तत्राप्ययमेवार्थः, तदर्थस्य विषयविशेषनिष्ठत्वस्याभावादिति भावः ॥

( वार्तिकाशयान्तरभाष्यम् )

**एवं तर्हि भवति वै किंचिदाचार्याः कार्यवद्बुद्धिं कृत्वा पठन्ति—"कार्याः शब्दाः" इति, तद्वदिदं पठितम्— * समानाधिकरणसमासाद्बहुव्रीहिः कर्तव्यः कदाचित्कर्मधारयः सर्वधनाद्यर्थः * इति ॥**

( प्रदीपः ) इदानीमन्यथा मत्वर्थीयोत्पत्तिमाह—**एवं तर्हीति** ॥ **भवतीति** । एवंजातीयकं वस्त्वित्यर्थः ॥ किं तदित्याह—**आचार्या इति** । अथ वा पठिक्रिया भवतिक्रियायाः कर्त्री भवति । कार्याः शब्दा इति दर्शने लक्षणादेव शब्दानामर्थव्यवस्था,ततोन्यपदार्थे बहुव्रीहिशासनात्तस्यैव तत्प्रत्यायनम्, न तु कर्मधारयस्य । तत्र सर्वाणि धनान्यस्येत्यर्थविवक्षायां पूर्वविप्रतिषेधेन कर्मधारयः क्रियमाणोऽन्यपदार्थं नाभिधत्त इति तदभिधानायायं मत्वर्थीय उत्पाद्यत इत्यर्थः ॥

( उद्योतः ) अन्यथा, प्रकारान्तरेण ॥ मत्वर्थीयोत्पत्तिं, तन्नियमम् ॥ वस्त्वित्यर्थ इति । भवति वै किंचिदिति भाष्यस्य एवंजातीयकं किञ्चिद्वचनं भवति खल्वित्यर्थः । किंजातीयमित्याशङ्कायां कार्याः शब्दा इति यज्जातीयं, तज्जातीयमित्युत्तरम् ॥

---

१ बहुव्रीहिणा कर्मधारयोत्तरजातैरित्यर्थः । ( र. ना. ) २ क्वचित्कदाचिदित्यनयोर्वाच्यार्थभेदो नास्तीत्यर्थः । उभयत्रैकस्यैव विषयविशेषस्य भानादिति भावः । ( र. ना. ) ३ बाध्यबाधकयोः समानविषयकत्वनियमादिति भावः । ( र. ना. )

कार्याः शब्दा इति वचनमेव केनाभिप्रायेण पठितमित्यत आह—**आचार्याः कार्यवद्बुद्धिं कृत्वा पठन्तीति** । घटादिरूपकार्यवच्छब्दा अपि कार्या इति बुद्ध्या पठन्तीत्यर्थः ॥ पठ्यमानवचनाकारमाह—**कार्याः शब्दा इति** ॥ अथवा **पठिक्रियेति** । आचार्यकर्तृकर्किञ्चित्कर्मककार्यत्वबुद्धिकरणोत्तरकालिकपठनक्रियाकर्तृकं भवनमित्यर्थः ॥ दृष्टान्तमुपपाद्य प्रकृतोपयुक्तमाह—**तद्वदिति** । कार्याः शब्दा इति वत्कार्यवद्बुद्ध्येदं पठितमित्यर्थः ॥ तदाशयमाह—**कार्याः शब्दा इति दर्शने इति** ॥ तत्प्रत्यायनम् । तत्प्रत्यायनसामर्थ्यम् ॥

**( विप्रतिषेधासंभवेन बहुव्रीहिनिराकरणरूपमाक्षेपभाष्यम् )**

**यदुच्यते—समानाधिकरणसमासाद्बहुव्रीहिर्भवति विप्रतिषेधेन—इति ॥ नैष युक्तो विप्रतिषेधः ॥ अन्तरङ्गः कर्मधारयः ॥ काऽन्तरङ्गता ? । स्वपदार्थे कर्मधारयः । अन्यपदार्थे बहुव्रीहिः ॥**

**( प्रदीपः )** विप्रतिषेधापनयनायाह—**नैष युक्त इति** ॥ **स्वपदार्थ इति** । मध्यमध्यमवीराश्चेति स्वपदार्थमात्राश्रयेण विधानादन्यपदार्थानाश्रयणादिति भावः ॥

**( बहुव्रीहिसाधकसमाधानभाष्यम् )**

**अस्तु । विभाषा कर्मधारयः, यदा न कर्मधारयस्तदा बहुव्रीहिर्भविष्यति ॥**

**( प्रदीपः )** इतरो विषयविशेषे बहुव्रीहिं साधयति—**अस्त्विति** । यथोक्तेन प्रकारेणान्तरङ्गत्वं कर्मधारयस्य भवत्वित्यर्थः ॥ **विभाषेति** । नात्र महाविभाषा विवक्षिता, तया हि पक्षे व्यपेक्षैव प्रतिपाद्यते, नत्वेकार्थीभावे संज्ञाया भावाभावौ क्रियेते । तस्माद्—**विभाषा कर्मधारय** इत्यस्यायमर्थः—विकल्पितः कर्मधारयो, विषयविभागेनावस्थानात्, स्वपदार्थे ह्यसौ वर्तते नान्यपदार्थे ॥ एतदुक्तं भवति—अनपेक्षितान्यपदार्थस्वपदार्थमात्रविवक्षायां भवतु कर्मधारयः, पूर्वमेव त्वन्यपदार्थविवक्षायां वीरपुरुष इत्यादौ बहुव्रीहिः सिध्यति ॥

**( उद्योतः )** नन्वेवं वीरः पुरुष इत्यादौ अन्तरङ्गत्वात् कर्मधारय एव स्यात् नतु बहिरङ्गो वीरपुरुषक इति बहुव्रीहिरित्यत आह—भाष्ये—**अस्तु, विभाषेति** ॥ तदाशयमाह—**नात्रेत्यादिना** ॥ **बहुव्रीहिः सिध्यतीति** । अपवादत्वादिति भावः ॥

**( आक्षेपभाष्यम् )**

**एवमपि यत्र कदाचित्कर्मधारयो भवति । कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानं प्राप्नोति । सर्वेश्चायमेवमर्थो यत्नः—कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानं मा भूद्—इति ॥**

**( प्रदीपः ) एवमपीति** । पूर्वमनपेक्षितेऽन्यपदार्थे यदि कर्मधारयः क्रियते तदा पश्चादन्यपदार्थविवक्षायां वीरपुरुषवान् ग्राम इत्याद्यपि स्यादित्यर्थः ॥

**( समाधानभाष्यम् )**

**एवं तर्हि नेदं तस्य योगस्योदाहरणं "विप्रतिषेधे परम्" इति ॥ किं तर्हि ? । इष्टिरियं पठिता—'समानाधिकरणसमासाद्बहुव्रीहिरिष्टः । कदाचित्कर्मधारयः सर्वधनाद्यर्थः' इति ।**

**( प्रदीपः ) इष्टिरियमिति** । वीरपुरुषादौ प्रथममेवान्यपदार्थविवक्षा कार्या, सर्वधनीत्यादौ तु पश्चादिति विवक्षानियम इष्टसिद्धये प्रतिपाद्यत इत्यर्थः ॥

**( उद्योतः )** भाष्ये—**इष्टिरियमित्यनेन** यदुक्तं तद्दर्शयति—**प्रथममेवेति** । वीरपुरुषादौ यद्यन्यपदार्थविवक्षा तर्हि प्रथममेव, न तु कर्मधारयोत्तरमित्यर्थः । इदमेवार्थतः पठ्यते **न कर्मधारयान्मत्वर्थीय** इति ॥

**( उक्तवार्तिकानावश्यकतासाधकैकदेशिभाष्यम् )**

**यदीष्टिः पठिता, नार्थोऽनेन । इह हि सर्वे मनुष्या अल्पेनाल्पेन महतो महतोऽर्थानाकाङ्क्षन्ति । एकेन माषेण शतसहस्रम् । एकेन कुद्दालपदेन खारीसहस्रम् । तत्र कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानमस्तु बहुव्रीहिणेति । बहुव्रीहिणा भविष्यति लघुत्वात् ॥**

**( प्रदीपः ) नार्थोऽनेनेति** । न्यायसिद्धत्वादिति भावः । यदि कर्मधारयान्मत्वर्थीयः क्रियते, तदा स्वपदार्थप्राधान्यमाश्रित्य कर्मधारयः कर्तव्यः, तेषामेव पदार्थानामन्यत्र गुणीभावमाश्रित्य मत्वर्थीय उत्पाद्यत इति प्रतिपत्तिगौरवप्रसङ्गः । यदा पूर्वमेवान्यपदार्थविवक्षा तदा वर्तिपदार्थानां तत्र गुणभाव एवाश्रीयत इति प्रतिपत्तिलाघवं भवति ॥ अन्ये तु शब्दलाघवं मन्यन्ते, बहुव्रीहिरन्यानपेक्षोऽन्यपदार्थं प्रतिपादयति । कर्मधारयस्तु, मत्वर्थीयसहित इति शब्दगौरवप्रसङ्गः । एतच्च शब्दगौरवं तथाप्रयोगदर्शनादत्रैव विषय आश्रीयत इति वृक्षवनस्पत्यादिषु न प्रसञ्जनीयम् ॥

**( उद्योतः )** भाष्ये—**अल्पेनेति** । द्रव्येणेत्यर्थः । **अल्पेन यत्नेनेति** क्वचित्पाठः ॥ **माषेण** । तत्परिमितस्वर्णेन ॥ **शतसहस्रमिति** । वस्त्राणि गा वेत्यर्थः ॥ **कुद्दालपदेनेति** । पर्वतीयाः कुद्दालैरेव भूकर्षणं कृत्वा सस्यं संपादयन्तीति तद्व्यवहारानुसारेणेदम् ॥ **प्रतिपत्तिगौरवेति** । एकस्य विरुद्धयोः प्राधान्यगुणत्वयोराश्रयणमेव प्रतिपत्तिगौरवमित्याहुः ॥ **अन्येतु शब्दलाघवमिति** । इदमेव भाष्यस्वरससिद्धं मतम् , एकस्यैवार्थस्य प्रतिपादनाय वृत्तिद्वयापेक्षायां गरीयान् शब्दो बोधको बहुव्रीहौ त्वल्प इति भावः ॥ **न प्रसञ्जनीयमिति** । अत इष्टिरित्येव सम्यक् ॥ एवं च **'यदीष्टिः पठ्यते नार्थोऽनेन'** इत्यादिः **'इत्येव तदा भवति'** इत्यन्तग्रन्थ आचार्यदेशीयस्येति भावः ॥ किंच वक्ष्यमाणयुक्तिभिः सर्वधनीत्यादिप्रयोगसाधनेऽप्युपसुब्धवत इति प्रत्ययस्थात्कादितिसूत्रस्थभाष्यप्रयोगासङ्गतिः, मम तु **सर्वधनाद्यर्थ** इत्यादिशब्दस्य प्रकारार्थत्वान्न दोषः ॥ कर्मधारयपदं च नञ्समासस्याप्युपलक्षणम् ॥ ध्वनितं चेदं र ऋत इति सूत्रभाष्ये ॥

१ बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यग्रे पाठः । ( र. ना. ) २ कुद्दालरूपेणोपायेनेत्यर्थः । पद्यते प्राप्यते कार्यमनेनेति योगात् । यद्वा पदमत्र वस्तु । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः । (र.ना.) ३ चेति शेषः । (र.ना.) ४ कर्मधारयोत्तरमत्वर्थीयप्रसङ्गे बहुव्रीहेरेव प्रयोगदर्शनादित्यर्थः । ( र. ना. )

५ नन्वेवं वृक्ष इति प्रयोक्तव्ये वनस्पतिरिति न प्रयुज्येत शब्दगौरवादित्यत आह—वृक्षवनस्पत्यादिषु न प्रसञ्जनीयमिति । ( र. ना. ) ६ समासतद्धितात्कैलादिः । ( र. ना. )

( आक्षेपैकदेशिभाष्यम् )

कथं सर्वधनी सर्वबीजी सर्वकेशी नट इति ? ॥

( समाधानैकदेशिभाष्यम् )

*इनिप्रकरणे सर्वादेः* इति वक्ष्यामि। तच्चावश्यं वक्तव्यं ठनो बाधनार्थम् ॥

( प्रदीपः ) सर्वादेरिति। ततश्चात्र वचनाल्लाघवं नाश्रीयत इति कर्मधारये कृति इनिः कर्तव्य इत्यर्थः ॥ ठनो बाधनार्थमिति। योपीष्टिमारभते तेनापि कर्मधारयाद्वन्वाधनायेनिरेवेति वक्तव्यमित्यर्थः ॥

( उद्द्योतः ) ततश्चात्र वचनादिति। सर्वादेरिति वचनसामर्थ्यात् ॥

( आक्षेपैकदेशिभाष्यम् )

कथम्—गौरखरवदरण्यम्, गौरमृगवदरण्यम् कृष्णसर्पवान् वल्मीकः, लोहितशालिमान् ग्रामः ? ॥

( समाधानैकदेशिभाष्यम् )

अस्त्यत्र विशेषः। जात्यात्राभिसंबन्धः क्रियते, कृष्णसर्पो नाम सर्पजातिः, साऽस्मिन् वल्मीकेऽस्ति ॥ यदा ह्यन्तरेण जातिं तद्वत्ताभिसंबन्धः क्रियते, कृष्णसर्पो वल्मीक इत्येव तदा भवति ॥

( प्रदीपः ) जात्यात्रेति। जातिश्चाकृते कर्मधारये न प्रतीयते ॥ यदा हीति। विशिष्टगुणेन द्रव्येण तद्वत्तायां विवक्षितायामित्यर्थः ॥

( उद्द्योतः ) भाष्ये—कृष्णसर्पो नाम जातिरिति। जातिव्यक्त्योरभेदाश्रयेणैतदुक्तम् ॥

( पूर्वपदार्थातिशयविवक्षायामप्यातिशायिकप्रत्ययाद् बहुव्रीहेर्बलवत्त्वाधिकरणम् )

(१३३७ पूर्वपदातिशयआतिशायिकव्यवस्थावार्तिकम् ॥४१)

॥ * ॥ पूर्वपदातिशये आतिशायिकाद् बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः ॥ * ॥

( भाष्यम् ) पूर्वपदातिशयविवक्षायामातिशायिकाद् बहुव्रीहिर्भवति विप्रतिषेधेन ॥ किं प्रयोजनम् ? । सूक्ष्मवस्त्रतराद्यर्थः ॥ आतिशायिकस्यावकाशः—पटुतरः पटुतमः। बहुव्रीहेरवकाशः—चित्रगुः शबलगुः। इहोभयं प्राप्नोति—सूक्ष्मवस्त्रतरः। तीक्ष्णशृङ्गतरः। बहुव्रीहिर्भवति विप्रतिषेधेन ॥

( प्रदीपः ) पूर्वपदातिशय इति। अतिशयेन सूक्ष्माणि वस्त्राण्यस्येत्यर्थविवक्षायामुभयप्रसङ्गे पूर्वं बहुव्रीहिरिष्यते ततो बहुव्रीहेः प्रत्ययः ॥ भाष्यकारस्तु विप्रतिषेधं प्रत्याख्याय पूर्ववदुपन्यस्य सामर्थ्याश्रयेण दूषयित्वेष्टिं स्थापयिष्यति ॥

( उद्द्योतः ) भाष्ये—पूर्वपदातिशय इति। तदर्थातिशये इत्यर्थः ॥

( विप्रतिषेधबाधकभाष्यम् )

नैष युक्तो विप्रतिषेधः। "विप्रतिषेधे परम्" इत्युच्यते। पूर्वश्च बहुव्रीहिः, पर आतिशायिकः ॥

( वार्तिकाशयविवरणभाष्यम् )

इष्टवाची परशब्दः—विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥

( अनुपपत्तिभाष्यम् )

एवमप्ययुक्तः। अन्तरङ्ग आतिशायिकः ॥ कान्तरङ्गता ? । ङ्याप्प्रातिपदिकादातिशायिकः ॥ सुबन्तानां बहुव्रीहिः ॥

( प्रदीपः ) ङ्याप्प्रातिपदिकादिति ॥ ननु प्रकर्षे आतिशायिकः, प्रकर्षश्च समासार्थस्य भवति। ततश्च पदादेवोत्पत्तव्यम् ॥ एवं तद्यधिकारमात्रमाश्रित्यैवमुक्तम्। अत एवोच्यते—समर्थादिति ॥

( उद्द्योतः ) समासार्थस्य लिङ्गसंख्याद्याकाङ्क्षारहितस्य ॥ समर्थादिति। समर्थः पदविधिरित्युक्तेरिति भावः ॥

( अनुपपत्तिबाधकभाष्यम् )

आतिशायिकोपि नान्तरङ्गः ॥ कथम् ? । समर्थात्तद्धित उत्पद्यते। सामर्थ्यं च सुबन्तेन ॥

( प्रदीपः ) सुबन्तेनेति। हेतौ तृतीया। सुबन्तेन पदेन प्रकर्षानुभवविषयं सामर्थ्यमर्थस्य नान्यथेत्यर्थः ॥

( उद्द्योतः ) सुबन्तेन पदेनेति। तेन हेतुना लिङ्गसंख्यादिभिः परिसमाप्तस्यार्थस्य प्रकर्षादिसंबन्धसामर्थ्यमिति भावः ॥ नान्यथेति। केवलप्रातिपदिकोपस्थाप्येनेत्यर्थः ॥

( अनुपपत्तिसाधकभाष्यम् )

एवमप्यन्तरङ्गः ॥ कथम् ? । स्वपदार्थे आतिशायिकः। अन्यपदार्थे बहुव्रीहिः ॥

( अनुपपत्तिबाधकभाष्यम् )

एवमपि नान्तरङ्गः ॥ कथम् ? स्पर्द्धायामातिशायिको भवति। न चान्तरेण प्रतियोगिनं स्पर्द्धा भवति ॥

( अनुपपत्तिप्राप्त्यभावभाष्यम् )

नैव वात्रातिशायिकः प्राप्नोति ॥ किं कारणम् ? । असामर्थ्यात् ॥ कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति। यावता वस्त्राणि तद्वन्तमपेक्षन्ते। तद्वन्तं चापेक्ष्य वस्त्राणां वस्त्रैर्युगपत्स्पर्द्धा भवति ॥

( प्रदीपः ) आतिशायिकस्य प्रतियोगिवस्त्वन्तरापेक्षया पदार्थापेक्ष इति भावः। ( र. ना. ) ६ इदं हेतुतृतीयान्तं साम्यमित्यनेनान्वेति। ( र. ना. )

१ 'सत्तायां'। २ बुद्धिसन्निधानेनेत्यर्थः। बुद्ध्यारूढत्वादिति यावत्। ( र. ना. ) ३ कर्मधारयः। स्वार्थलिङ्गसंख्याकारकैः परिपूर्णस्य द्रव्यस्येत्यर्थः। ( र. ना. ) ४ 'पदात्तेनो'। ५ वस्त्रान्तररूपं निरूपकमित्यर्थः। ततश्चातिशायिकोऽप्यत्र-

बहुव्रीहिणा साम्यं प्रतिपाद्य सर्वथानुत्पत्तिं प्रतिपादयितुमाह—नैवेति । तद्वन्तमिति । वस्त्रस्वामिनमित्यर्थः । अस्यातिशयेन सूक्ष्माणि वस्त्राणीति तद्वतोपेक्षणात् ॥

( उद्द्योतः ) प्रतियोगिवस्त्रन्तरापेक्षयेति । हेतौ तृतीयेयम् ॥ तद्वतोपेक्षणादिति । वस्त्राणि सौक्ष्म्यविषयस्पर्द्धायां तद्वन्तमपेक्षन्त इति भाष्याक्षरार्थः । बहुव्रीह्यातिशायिकयोर्युगपत्प्राप्तिविषये तद्वन्तमपेक्ष्य वस्त्राणां सौक्ष्म्यगुणविषया स्पर्धेति । अस्यापि सूक्ष्माणि वस्त्राण्यस्यापि सूक्ष्माणि अस्यासादतिशयेन सूक्ष्माणीति विवक्षायां किलातिशायिकबहुव्रीह्योरेकत्र प्रसक्तिर्वाच्या । तत्र वस्त्रद्वारा सूक्ष्मशब्दस्य तद्वत्[1]सापेक्षत्वादातिशायिकाप्रसक्तिरित्ययुक्तो विप्रतिषेध इति भावः । एवं च परम्परया सौक्ष्म्यगुणविषयप्रकर्षस्य विशे[2]षणस्यैव सापेक्षत्वमित्युक्तं भवति ॥

( आक्षेपभाष्यम् )

**[3]ननु चायमातिशायिक एव[4]मात्मकः सत्यां व्यपेक्षायां विधीयते ॥**

( प्रदीपः ) सत्यामिति । ततश्च यथा प्रतियोग्यपेक्षायां प्रत्ययो भवत्येवं तद्वदपेक्षायामपि कस्मान्न भवतीति भावः ॥

( उद्द्योतः ) वचनप्रामाण्यादातिशायिकस्तत्र भविष्यत्येवेति मन्यमानः शङ्कते—भाष्ये—ननु चेति ॥

( समाधानभाष्यम् )

**सत्यमेवमात्मकः । यां च नान्तरेण व्यपेक्षामातिशायिकस्य प्रवृत्तिस्तस्यां सत्यां भवित[5]व्यम् ॥ कां च नान्तरेण व्यपेक्षामातिशायिकस्य प्रवृत्तिः ? । या हि प्रति[6]योगिनं प्रति व्यपेक्षा ॥ या हि तद्वन्तं प्रति, न तस्यां भवितव्यम् ॥**

( उद्द्योतः ) या हि तद्वन्तमिति । न सा नियतेति भावः । एकस्वामिकयोरपि स्पर्द्धादर्शनादिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**बहुव्रीहिरपि तर्हि न प्राप्नोति ॥ किं कारणम् ? । असामर्थ्यादेव ॥ कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति । यावता वस्त्राणि वस्त्रान्तराण्यपेक्षन्ते तद्वता चाभिसंबन्धः ॥**

( प्रदीपः ) वस्त्राणीति । अतिशयानानि वस्त्राण्यतिशय्यमानानि वस्त्राण्यपेक्षन्त इत्यर्थः ॥

( उद्द्योतः ) अतिशयानानीति । अन्याभिभवकर्तॄणि प्रकर्षयुक्तानीत्यर्थः ॥ अतिशय्यमानानि । अभिभूयमानानीत्यर्थः । अतिशेतिरभिभवे ॥ भाष्ये—तद्वता च संबन्ध इत्यनेन हि प्रकृते विशेषणस्य सापेक्षत्वरूपं तरपोऽप्राप्तिबीजं स्मारितम् ॥

( समाधानभाष्यम् )

**एवं तर्हि नेदं तस्य योगस्योदाहरणं 'विप्रतिषेधे परम्' इति ॥ किं तर्हि ? । इष्टिरियं पठिता *पूर्वपदातिशये आतिशायिकाद् बहुव्रीहिरिष्टः सूक्ष्मवस्त्रतराद्यर्थः * इति ।**

( प्रदीपः ) एवं सापेक्षत्वाद्[7]द्वयोरपि निराकृतयोरर्थान्तरत्वमाह—एवन्तर्हीति ॥

( उद्द्योतः ) अर्थान्तरत्वं, इष्टिरूपत्वम् । क्वचित्त्वर्थत्वमिति पाठस्तत्राप्ययमेवार्थः ॥ भाष्ये—किं तर्हीति । एवं च तत्सामर्थ्यात्सापेक्षत्वेपि बहुव्रीहितद्धिताविति भावः ॥

( वार्तिकानावश्यकताभाष्यम् )

**यदीष्टिरियं पठिता, नार्थोऽनेन ॥**

( प्रदीपः ) नार्थोऽनेनेति । इष्ट्या विनाप्यस्यार्थस्य सिद्धत्वादिति भावः ॥

( आक्षेपभाष्यम् )

**कथं यैषा युक्तिरुक्ता—वस्त्रान्तराणां च वस्त्रान्तरैर्युगपत्स्पर्द्धा तद्वता चाभिसंबन्धः इति ।**

( प्रदीपः ) यैषा युक्तिरुक्तेति । सा[9] नाश्रीयत इत्यर्थः ॥

( उद्द्योतः ) कथमिति । वस्त्रान्तराणां वस्त्रान्तरैर्युगपत्स्पर्धा तद्वता चाभिसम्बन्ध इति यैषा बहुव्रीहितद्धितयोरप्राप्त्युपपादिका युक्तिरुक्ता तया युक्त्या द्वयोरप्यप्राप्तेः कथमानर्थक्यमिति प्रश्नः ॥

( समाधानभाष्यम् )

**यदा ह्य[10]न्तरेण वस्त्राणां वस्त्रान्तरैर्युगपत्स्पर्द्धा तद्वताभिसंबन्धः क्रियते । निष्प्रतिद्वन्द्वस्तदा बहुव्रीहिः । बहुव्रीहेरातिशायिकाः ॥**

( प्रदीपः ) कथं तर्ह्याश्रीयत इत्याह—यदा हीति । अन्यपदार्थमात्रविवक्षायां बहुव्रीहौ कृते पश्चादातिशायिकः क्रियते । अतिशयमात्रविवक्षायां तु प्रत्यये कृते पश्चाद् बहुव्रीहिस्ततश्च सूक्ष्मतरवस्त्र इत्यपि सिध्यति । इष्टौ तु सत्यामेतन्न सिध्येत् ॥

( उद्द्योतः ) समाधत्ते, यदाहीती[11]त्यन्ये । यदा ह्यन्तरेण वस्त्राणां वस्त्रैर्युगपत्स्पर्धामिति पाठः । तद्वताभिसम्बन्ध इति च ॥ इष्टौ तु सत्यामिति । तस्मादिष्टिर्दुष्टेति भाष्याभिप्राय इति भावः ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—सूक्ष्मतरवस्त्र इति ? ॥**

( उद्द्योतः ) तर्हीदानीमिति । तदे[12]दानीमित्यर्थः ॥ इष्ट्यारम्भे इति यावत् । इदं न भवति । इदं न सिध्यति ॥

( समाधानभाष्यम् )

**भवति, यदान्तरेण तद्वन्तं वस्त्राणां वस्त्रान्तरैर्युगपत्स्पर्द्धा भवति । निष्प्रतिद्वन्द्वस्तदातिशायिकः ॥**

( उद्द्योतः ) भवति । सिध्यति ॥ कुतस्तत्राह—यदेति । इति भाष्याक्षरार्थः ॥

---

१ 'तद्वस्त्रापेक्ष' इति वाराणसी B. A. S. मुद्रितपाठस्त्वापातमनोहर एव ॥ यद्वा तद्वस्त्रेत्यत्र षष्ठ्यर्थे बहुव्रीहिमाश्रित्य कथञ्चित्समाधेय इति वयम् । ( र. ना. ) २ तेनात्र विशेष्यस्य वस्त्रस्यैव तद्वत्सापेक्षत्वेन कथमसामर्थ्यम्, भवति हि विशेष्यस्य सापेक्षत्वेऽपि समासः, राजपुरुषः शोभन इतीति न शङ्क्यम् । ( र. ना. ) ३ इदं संबोधने । ( र. ना. ) ४ प्रतियोग्यपेक्षोत्पत्तिकस्वरूप इत्यर्थः । (र.ना.) ५ नित्यसापेक्षस्थले नासामर्थ्यमिति भावः । (र.ना.)

६ वस्त्रान्तररूपमित्यादिः । (र. ना.) ७ बहुव्रीहितद्धितयोरित्यर्थः । (र. ना.) ८ 'विनाप्यर्थस्य' । ९ सा कथं नाश्रीयते इत्यर्थः । तथा च कैयटस्यापि प्रश्न एव तात्पर्यम् । (र. ना.) १० इदं स्पर्धामित्यनेनान्वेति । (र. ना.) ११ वस्तुतस्तु पूर्वोक्तरीत्या कैयटस्याप्येतद्ग्रन्थस्य समाधानपरत्वे एवाभिप्रायसत्वेन अन्ये इत्यनेन न कोऽपि नवीनोऽर्थ उद्भावित इति ध्येयम् । ( र. ना. ) १२ तर्हि इत्यस्य व्याख्यानमिदानीमितीति बोध्यम् । ( र. ना. )

( समाधानबाधकाक्षेपभाष्यम् )

**कथं पुनरन्यस्य प्रकर्षेणान्यस्य प्रकर्षः स्यात् ? ॥**

( प्रदीपः ) यदुक्तं बहुव्रीहौ कृते पश्चादातिशायिकः क्रियत इति, तत्राह—कथं पुनरिति । अतिशयेन सूक्ष्मवस्त्र इति बहुव्रीहेः प्रत्यये क्रियमाणे वस्त्रगतसौक्ष्म्यप्रकर्षे कथमन्यपदार्थप्रकर्षः स्यादित्यर्थः ॥

( उद्द्योतः ) कथमन्यपदार्थस्य प्रकर्ष इति । यतः प्रत्ययस्तदर्थप्रकर्षस्तत्प्रत्ययनिमित्तम् । एवं च सौक्ष्म्यप्रकर्षे प्रत्यये क्रियमाणेप्यन्यपदार्थप्रकर्षाभावात्कथं तत्प्रतिपादकसमुदायाद् प्रत्ययः । प्रकर्षद्वयप्रतिपादने तु नैकस्य सामर्थ्यम् । न च सौक्ष्म्यप्रकर्ष एवान्यपदार्थप्रकर्षः, अन्यदीयस्यान्यदीयत्वायोगादिति भावः ॥

( समाधानसाधकभाष्यम् )

**नैवान्यस्य प्रकर्षेणान्यप्रकर्षेण भवितव्यम् । यथैवायं द्रव्येषु यतते—वस्त्राणि मे स्युरिति । एवं गुणेष्वपि यतते—सूक्ष्मतराणि[1] मे स्युरिति ॥**

( प्रदीपः ) अत्रोत्तरम्—नैवान्यस्येति । सर्वत्रैव यतः प्रत्ययो विधीयते तदर्थस्य स्वतः प्रकर्षाभावादन्यगत एव प्रकर्ष आश्रीयते । यथोक्तम्—

**द्रव्यस्या[2]व्यपदेश्यस्य य उपादीयते गुणः ।**
**भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥**

इति ॥ एक एवासौ प्रकर्ष इत्यर्थः । यद्यप्यत्राश्रयान्तरवर्तिगुणप्रकर्षस्तथापि यत्र यथाभूतः संभवति तत्र तथाभूत आश्रीयते ॥

( उद्द्योतः ) एक एवासाविति । गुणप्रकर्ष एव द्रव्यप्रकर्ष इत्यर्थः । स क्वचित्प्रवृत्तिनिमित्तगुणप्रकर्षः, यथा—शुक्लतर इत्यादौ । क्वचित्तत्सहचरितगुणप्रकर्षो यथा–गोतर इत्यादौ । क्वचित्तद्विशेषणघटकगुणप्रकर्षो यथा—प्रकृते ॥ नैवान्यस्येति भाष्येणापि पृथग् द्रव्यप्रकर्षाभाव एव प्रतिपाद्यते इति बोध्यम् ॥ भाष्ये—वस्त्राणि मे स्युरिति । वस्त्रस्य द्रव्यत्वात्तत्र प्रकर्षाभावेन तरप् न कृतः ॥ सूक्ष्मतराणीति । सूक्ष्मत्वस्य गुणत्वात्तत्र प्रकर्षसंभवेन बहुव्रीहेरुत्पन्नेनाप्यातिशायिकेन परम्परासम्बद्धस्य तस्यैव प्रकर्ष उच्यत इति भावः ॥ तथापि यत्रेति । साक्षात्स्वगतगुणप्रकर्षः स्वसम्बन्धिपदार्थगतगुणप्रकर्षो वा उभयमपि द्रव्यप्रकर्षरूपं भवत्येवेति भावः ॥

( समाधानबाधकभाष्यम् )

**नात्रातिशायिकः प्राप्नोति । किं कारणम् ? । गुणवचनादित्युच्यते । न च समासो गुणवचनः ॥**

( प्रदीपः ) **गुणवचनादिति** । नात्राजादी गुणवचनादेवेति बोद्धव्यं, तरपोत्र प्रकृतत्वात् ॥ तस्माद् गुणस्यैव प्रकर्षः संभवति न द्रव्यस्येत्याश्रित्यैतदुक्तम् ॥

( उद्द्योतः ) भाष्ये—गुणवचनादिति । गुणोपसर्जनगुणिबोधकात्प्रवृत्तिनिमित्तगुणप्रकर्षे तत्सहचरितगुणप्रकर्षे वा प्रत्यय उच्यत इत्यर्थः । गुणग्रहणं धर्ममात्रपरम् ॥

( समाधानसाधकभाष्यम् )

**समासोपि गुणवचनः । कथम् ? । अजहत्स्वार्था वृत्तिरिति ॥**

( प्रदीपः ) **अजहत्स्वार्थेति** । तत्र सूक्ष्मार्थस्य विद्यमानत्वात् प्रकर्षसंभवः ॥

( उद्द्योतः ) **समासोपि गुणवचन इति** । सूक्ष्मत्वविशिष्टवस्त्रविशिष्टपुरुषवचनत्वादिति भावः ॥ अन्यपदार्थे रूढतया गुणवचनत्वं नेत्याशयेन पृच्छति—कथमिति ॥ उत्तरयति—अजहत्स्वार्थेति । एवं चावयवार्थोपस्कृतान्यपदार्थस्य समुदायेनोपस्थापनाद् गुणवचनत्वम् । प्रवृत्तिनिमित्तसहचरितगुणप्रकर्षवत् प्रवृत्तिनिमित्तविशेषणविशेषणगुणप्रकर्षोपि तदुत्पत्तिनिमित्तम् । स च गोतर इत्यादाववाच्यगतोपि यदि निमित्तं किं वक्तव्यं विशेषणविशेषणतया वाच्यस्येति भावः ॥

( आक्षेपभाष्यम् )

**अथ जहत्स्वार्थायां तु दोष एव ? ॥**

( उद्द्योतः ) **अथेति** । तत्र हि उपसर्जनपदानामर्थाभावेपि प्रधानपदेन समुदायेन वस्तुतस्तादृशगुणोपलक्षितव्यक्तेरेव बोधो न तु गुणानां वाच्यत्वमिति भावः ॥

( समाधानभाष्यम् )

**जहत्स्वार्थायां च न दोषः । भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा—'शुक्लवाससमानय' 'लोहितोष्णीषाः प्रचरन्ती'ति तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति ॥**

( उद्द्योतः ) **जहत्स्वार्थायां च न दोष इति** । अवयवानामर्थाभावेपि तद्गुणविशिष्टाया व्यक्तेरानयनादि यथाऽवाच्यत्वेपि, तथा तद्गतप्रकर्षे प्रत्ययः, गोतर इत्यादाववाच्यवाहदोहादिप्रकर्ष[3] इवेति भावः ॥

( उत्तरपदातिशय आतिशायिकव्यवस्थाधिकरणम् )

( १३३८ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ उत्तरपदातिशये आतिशायिको बहुव्रीहेः बह्वाढ्यतराद्यर्थः ॥ * ॥

( भाष्यम् ) **उत्तरपदातिशये आतिशायिको बहुव्रीहेर्भवति विप्रतिषेधेन ॥ किं प्रयोजनम् ? । बह्वाढ्यतराद्यर्थः । बह्वाढ्यतरः । बहुसुकुमारतरः ॥ कः पुनरत्र विशेषः—बहुव्रीहेर्वातिशायिकः स्याद्, आतिशायिकान्तेन वा बहुव्रीहिः ? ॥ स्वरकृपोर्विशेषः । यद्यत्रातिशायिकाद्बहुव्रीहिः स्यात्—बह्वाढ्यतर एवं स्वरः प्रसज्येत, बह्वाढ्यतर इति चेष्यते । बह्वाढ्यकतर इति च प्राप्नोति, बह्वाढ्यतरक इति चेष्यते ॥**

---

१ 'सुसूक्ष्माणि' । २ स्वरूपतोऽव्यपदेश्यस्याव्यवहार्यस्य द्रव्यस्य व्यपदेशाय यो भेदको गुण उपादीयते तस्य गुणस्य प्रकर्षः, तत्प्रकर्षप्रयुक्तो द्रव्यप्रकर्ष इति यावत् । द्रव्यवाचकपदोत्तरतरपाऽभिधीयते इत्यर्थः । ( र. ना. )

३ अत्राश्ववाहदोहादिगतोऽपीत्यर्थः । ( र. ना. )

(प्रदीपः) बह्वाढ्यतर इति। यद्यत्र बहुव्रीहिं कृत्वा आतिशायिकः क्रियते तदा बहोर्नञ्वदुत्तरपदभूम्नीत्यन्तोदात्तत्वमाढ्यशब्दाकारस्य स्याद्, रेफाकारस्य चेष्यते। अयमर्थो न्यायसिद्धो, यदि समासात् प्रकर्षप्रत्यय उत्पद्यते तदा किं बहुत्वगुणाश्रयः प्रकर्ष उत आढ्यत्वाश्रयः प्रत्ययोत्पत्तिनिमित्तमिति संदेहः स्यात्। तस्मात् पूर्वं प्रकर्षस्य विवक्षा पश्चादन्यपदार्थस्य ॥

(उद्द्योतः) सन्देहः स्यादिति। प्रकरणादिना निश्चयसम्भवादिदं चिन्त्यम् ॥

(१३३९ उत्तरपदलोपविधायकवार्तिकम् ॥ ६ ॥)

## ॥ * ॥ समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च ॥ * ॥

(भाष्यम्) समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानं कर्तव्यम्। उत्तरपदलोपश्च वक्तव्यः। शाकभोजी पार्थिवः शाकपार्थिवः। कुतपवासाः सौश्रुतः कुतपसौश्रुतः[1]। अजापण्यस्तौल्वलिरजातौल्वलिः। यष्टिप्रधानो मौद्गल्यः यष्टिमौद्गल्यः ॥ वर्णो वर्णेन ॥ ६८ ॥

(प्रदीपः) शाकभोजीति। शाकभोजित्वात्तत्साहचर्यात्तद्व्यपदेशार्थं उत्तरपदलोपेनेत्याहुः ॥ ६८ ॥

(उद्द्योतः) नार्थ उत्तरपदलोपेनेत्याहुरिति। अत्रारुचिबीजं तु शाकभोजिपार्थिव इत्यादिप्रयोगव्यावृत्तये वार्तिकमावश्यकमिति ॥ ६८ ॥

(२६५ तत्पुरुषसंज्ञासूत्रम् ॥ २। १। ३ आ. १२)

## ४१९ चतुष्पादो गर्भिण्या ॥ २।१।७० ॥

(१३४० वार्तिकम् ॥ १ ॥)

### ॥ * ॥ चतुष्पाज्जातिः ॥ * ॥

(व्याख्याभाष्यम्)

चतुष्पाज्जातिरिति वक्तव्यम्। इह मा भूत्—कालाक्षी गर्भिणी। स्वस्तिमती गर्भिणी ॥ चतुष्पादो गर्भिण्या ॥ ७० ॥

(प्रदीपः) चतुष्पादो ॥ ७० ॥ चतुष्पाज्जातिरिति। केचिज्जातिग्रहणमनुवर्त्यमित्याहुः ॥ अन्ये त्वाहुः—शब्दान्तरसंनिधिनिरपेक्षा ये चतुष्पाज्जातिवचनास्त एवान्तरङ्गत्वाद् गृह्यन्ते न तु कालाक्ष्यादयो यौगिकाः शब्दान्तरसंनिधानाच्चतुष्पाज्जातिविषयाः ॥ ७० ॥

(उद्द्योतः) चतुष्पादो ॥ ७० ॥ भाष्ये—वक्तव्यमित्यस्य व्याख्येयमित्यर्थः। व्याख्यानप्रकारं दर्शयति—केचिदित्यादिना। शब्दान्तरेति। चतुष्पाद्वचनाश्चतुष्पाद्विषया इत्येव पाठः ॥ जातिरित्यस्य विच्छिन्नत्वादन्तरङ्गबहिरङ्गभावस्य च सर्वैर्दुर्ज्ञेयत्वाद्वचनमेवावश्यकमिति तत्त्वम् ॥ ७० ॥

(२६६ तत्पुरुषसंज्ञासूत्रम् ॥ २। १। ३ आ. १३)

## ४२० मयूरव्यंसकादयश्च ॥ २।१।७१ ॥

(आक्षेपभाष्यम्)

किमर्थश्चकारः? ॥

(समाधानभाष्यम्)

एवकारार्थः। मयूरव्यंसकादय एव। क्व मा भूत्? । परमो मयूरव्यंसक इति ॥ मयूरव्यंसकादयश्च ॥ ७१ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

पादश्च समाप्तः ॥

(प्रदीपः) मयूर ॥ ७१ ॥ मयूर इव व्यंसको धूर्तः छात्र इव व्यंसकः काम्बोज इव मुण्ड इत्युपमानसमासापवादोऽयं समासः प्रतिपदविहितोपमानसमासविषयपूर्वपदप्रकृतिस्वरबाधनार्थ इत्याहुः ॥ ७१ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयाध्यायस्य प्रथमपादे तृतीयमाह्निकम् ॥ पादश्च समाप्तः ॥

(उद्द्योतः) मयूर ॥ ७१ ॥ मयूरइव व्यंसक इति। केचित्तु विशेषणसमासे गुणवचनत्वाद्व्यंसकस्य पूर्वनिपाते प्राप्ते इदमित्याहुः। तन्न। उपमानानीति सूत्रस्थभाष्यकैयटरीत्या तैस्तैर्येन नाप्राप्तिन्यायेन विशेषणसमासबाधकत्वात्[2] ॥ ७१ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकं, पादश्च समाप्तः ॥ १ ॥

---

१ आढ्यत्वाश्रयप्रकर्षमानार्थमिति शेषः। (र. ना.) २ कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले। कुशेदिनस्याष्टमांशे ना सूर्ये इति मेदिनी। कुतपं छागजकम्बलोवासो वस्त्रं यस्येति बहुव्रीहिः। (र. ना.) ३ उपमानसमासस्येत्यर्थः। (र. ना.)

| | अस्मिन्पादे सूत्रसंख्या— समर्थस्तत्पुरुषे ध्वाङ्क्षेण वृन्दारकैकादश ॥ | | | | | |
|---|---|---|---|---|---|---|
| | पूर्वयोगः | प्रथमाह्निके | द्वितीयाह्निके | तृतीयाह्निके | योगः | आदितः |
| व्याख्यातसूत्राणि | २२० | १ | ३२ | १३ | ४६ | २६६ |
| अव्याख्यातसूत्राणि | १२९ | ० | १५ | १० | २५ | १५४ |
| समुदितसूत्राणि | ३४९ | १ | ४७ | २३ | ७१ | ४२० |

## वार्तिकसंख्या ।

| पूर्वयोगः | १ माह्निके | २ याह्निके | ३ याह्निके | योगः | सर्वयोगः |
|---|---|---|---|---|---|
| ११८९ | ३३ | ५२ | ६६ | १५१ | १३४० |

श्रीदधिमती(श्री) जयति ॥

# अथ द्वितीयाध्यायस्य द्वितीयपादे प्रथममाह्निकम् ।

( तत्पुरुषप्रकरण एकदेशिसमासप्रकरणम् )

( २६७ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ. १ )

## ४२२ अर्द्धं नपुंसकम् ॥ २ । २ । २ ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति–ग्रामार्द्धो नगरार्द्ध इति ? ॥**

( प्रदीपः ) **अर्द्धम्** ॥ २ ॥ नपुंसकस्याव्यवस्थितत्वात् कृते च समासे पूर्वपदार्थस्य लिङ्गविशेषानवधारणात् कृतमपि नपुंसकग्रहणमकृतसममिति मत्वा पृच्छति—**इहेति** ॥

( उद्द्योतः ) **अर्धम्** ॥ २ ॥ सूत्रे नपुंसकमित्युक्तेरिह कस्मादितिप्रश्नोनुपपन्न इत्याशङ्क्याह—**नपुंसकस्येति** ॥ सूत्रे नपुंसकग्रहणं किमर्धशब्दस्यार्थविशेषप्रतिपत्तये, उत समासगतरूपविशेषप्रतिपत्तये, नाद्य इत्याह—**अव्यवस्थितत्वादिति** । नपुंसकत्वस्यापूपार्धमित्यादावन्यार्थेपि दर्शनादिति भावः ॥ नान्त्य इत्याह—**कृते चेति** । तस्य नपुंसकत्वलक्षणविशेषानवसायेन तत्कृतरूपविशेषाभावादिति भावः ॥

( समाधानभाष्यम् )

**अर्धशब्दस्येदं नपुंसकलिङ्गस्य ग्रहणम् । पुंलिङ्गश्चात्रार्धशब्दः ॥**

( आक्षेपभाष्यम् )

**क्व पुनरयं नपुंसकलिङ्गः, क्व पुंलिङ्गः ? ॥**

( प्रदीपः ) **क्व पुनरिति** । नपुंसकत्वावधारणहेतावर्थे प्रश्नः ॥

( उद्द्योतः ) अधिकरणस्याकाशस्य निर्ज्ञातत्वात्प्रश्नानुपपत्तेराह—**नपुंसकत्वेति** । कस्मिन्नर्थे पुंस्त्ववाचक इति भाष्याक्षरार्थः ॥

( समाधानभाष्यम् )

**समप्रविभागे नपुंसकलिङ्गः, अवयववाची पुंलिङ्गः ॥**

( प्रदीपः ) **अवयववाची पुंलिङ्ग इति** । नियमेन नपुंसकलिङ्गो न भवतीत्येवंपरमेतद् । अवयववाची त्वभिधेयवशात् सर्वलिङ्गस्तथा च प्रयोगो दृश्यते, अपूपार्द्धं मया भक्षितं दन्तार्द्धमास्यात् पतितमिति । तदत्र नपुंसकग्रहणाद् यस्मिन्नर्थविशेषे नियमेन नपुंसकत्वं तदर्थवृत्तिरेवार्द्धशब्द आश्रीयते, तत्रैवार्थे नपुंसकत्वस्याव्यभिचारात् । अर्द्धमिति निर्देशादेव नपुंसकत्वे लब्धे नपुंसकग्रहणं ज्ञापकं निर्देशेषु लिङ्गाविवक्षायाः ॥

( उद्द्योतः ) पुंलिङ्ग एवेति भ्रमं वारयति—**नियमेनेति** ॥ **नपुंसकग्रहणं ज्ञापकमिति** । निर्देशेन नपुंसकत्वमात्रे लब्धेपि नित्यनपुंसकत्वलाभाय तस्यावश्यकत्वम् । अन्यथा अपूपार्धं दन्तार्धमित्यादावसमांशवाचिन्यपि एकदेशिसमासः स्यादिति चिन्त्यमेतत् ॥ परे तु **समप्रविभागे नपुंसकलिङ्ग** इत्यस्य नपुंसकलिङ्गोपीत्यर्थः । अत एवैओङेच इगिति सूत्रयोर्भाष्ये एचो ह्रस्वविधानेऽर्धैकाराधौंकारौ प्राप्नुत इति शङ्कायां **नैव लोके नापि वेदेऽर्धएकारोऽर्ध ओकारो** वास्तीत्युत्तरपरभाष्ये समविभागविषयेपि पुंलिङ्गः प्रयुक्तः । अवयववाची तु पुंलिङ्ग एव ॥ **अपूपार्धमिति** समप्रविभाग एव । अन्यत्रापूपार्ध इत्येव ॥ **परवल्लिङ्गमिति** सूत्रे भाष्येप्येतत्स्पष्टमित्युत्तरसूत्रे स्फुटीकरिष्यते ॥ अन्यतरस्यांग्रहणापकर्षेण योगविभागेन वा एकदेशिसमासविषये षष्ठीसमासः सूत्रकृतोपीष्ट एव । एवं चारम्भप्रत्याख्यानयोः समफलता । नपुंसकग्रहणं तु सूत्रेषु निर्देशे लिङ्गाविवक्षायां ज्ञापकमित्याहुः ॥

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—अर्धं पिप्पलीनामिति ? ॥**

( उद्द्योतः ) भाष्ये—अर्धंपिप्पलीनामिति । दशानां पिप्पलीनामर्धमित्यर्थः । न च समासे एकत्वसंख्याया औत्सर्गिकत्वात्कथमत्र समासापादनं, एकत्वस्यापि तत्राभानाच्छुद्धपिप्पलीत्वेनानेकपिप्पलीबोधसम्भव इति शङ्काशयः ॥

( प्रत्याक्षेपभाष्यम् )

**न वा भवति—अर्द्धपिप्पल्य इति ? ॥**

( उद्द्योतः ) इतरोऽर्धपदार्थस्य तत्र पञ्चपिप्पलीरूपत्वेन समासे बहुवचनं मत्वा पृच्छति—**न वा भवतीति** ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**भवति, यदा खण्डसमुच्चयः—अर्द्धपिप्पली चार्द्धपिप्पली चार्धपिप्पली चार्द्धपिप्पल्य इति । यदा त्वेतद्वाक्यं भवति—अर्द्धं पिप्पलीनामिति, तदा न भवितव्यम् ॥ तदा कस्मान्न भवति ॥**

( प्रदीपः ) **यदा त्वेतदिति** । अर्थश्चात्र भिद्यत एव । समासे च कृते अर्द्धपिप्पलीत्येव स्यात् पूर्वपदार्थस्य प्राधान्यात्तस्य चैकत्वात् ॥

( उद्द्योतः ) अर्थान्तरे भवति न त्वेतदर्थे इत्याह परः—**भवति यदेत्यादिना** ॥ **अर्थश्चात्रेति** । दशानां पिप्पलीनामर्धं पञ्चेत्यत्रार्थः, पिप्पलीनां प्रत्येकमर्धानि बहूनीति तत्रार्थः । भाष्ये—**तदा न भवितव्यमि**त्यस्य 'अनेन रूपेण न भवितव्यम्' इत्यर्थमभिप्रेत्याह—**अर्धपिप्पलीत्येव स्यादिति** । यद्यप्यर्धपदार्था बहवः तथाप्यर्धशब्देनैकत्वावरुद्धसमुदायस्यैव भानादिति भावः ॥ तदा कस्मान्नेति । समासः कुतो नेत्यर्थः ।

---

[1] समप्रविभागरूपार्थप्रतिपत्तये इत्यर्थः । ( र. ना. ) [2] अवयवमात्रेऽपीत्यर्थः । ( र. ना. ) [3] प्रकृतसूत्रे इत्यादिः । ( र. ना. ) [4] द्वितीयतृतीयेति सूत्रेऽन्यतरस्यामितीत्यादिः । विभक्तश्चान्यतरस्यामिति अर्धं नपुंसकमित्यस्य द्वितीयतृतीयेत्यस्य चोपकारकमित्यर्थः । ( र. ना. ) [5] प्रत्याख्यानं तु परवल्लिङ्गमिति सूत्रे भाष्ये । एकदेशिसमासो नारप्स्यते, कथमर्धपिप्पलीति । समानाधिकरणो भविष्यति । अर्धं चासौ पिप्पली चेति । इष्यते षष्ठीसमासोऽपि, अपूपार्धं मया भक्षितमितीति । ( र. ना. ) [6] काकेति शेषः । अर्थान्तरत्रार्धपिप्पल्य इति समासो भवत्येवेति तत्र तवसमासाभावमभिप्रेत्य पूर्वोक्तशङ्काऽनुपपन्नैवेति भावः । ( र. ना.) [7] पञ्चपिप्पल्य इत्यर्थः । ( र. ना. )

( समाधानभाष्यम् )

एकाधिकरण इति वर्तते ॥

( आक्षेपभाष्यम् )

न तर्हीदानीमिदं भवति—अर्द्धराशिरिति? ॥

( प्रदीपः ) अर्द्धराशिरिति । राशेरवयवव्यतिरेकेणासत्त्वादवयवानां च बहुत्वादेकत्वाभावं मन्यते ॥

( समाधानभाष्यम् )

भवति । एकमेवेदमधिकरणं योसौ राशिर्नाम ॥

अर्धं नपुंसकम् ॥ २ ॥

( प्रदीपः ) एकमेवेति । शब्दादेकस्यैवार्थस्य तिरोहितभेदस्यावगमात् ॥ २ ॥

( उद्द्योतः ) तिरोहितभेदस्येति । तिरोहितावयवभेदस्येत्यर्थः । समूहः समूहिभ्यो भिन्नोपीति भावः ॥ २ ॥

---

( २६८ एकदेशितत्पुरुषसंज्ञासूत्रम् ॥ २।२।१ आ. २ ॥ )

## ४२३ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ २ । २ । ३ ॥

( अन्यतरस्यांग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अन्यतरस्यांग्रहणं किमर्थम्? ॥

( प्रदीपः ) द्वितीय ॥ ३ ॥ अन्यतरस्यांग्रहणस्य पक्षे षष्ठीसमासप्राप्तये कृतस्य ज्ञापकत्वं नान्तरीयकतया प्रतिपादयितुं पूर्वपक्षोपन्यासः ॥ यद्यपि पारे इत्यत्रायमर्थो ज्ञापितस्तथापीह स्मरणाय पुनर्ज्ञाप्यते ॥

( उद्द्योतः ) द्वितीयतृ ॥ ३ ॥ नान्तरीयकतयेति । तत्सिद्ध्यनुगुणतया ज्ञापकत्वमस्येति भावः ॥ स्मरणाय पुनर्ज्ञाप्यते इति । वारद्वयज्ञापितं दृढसंस्कारजननद्वारा शीघ्रं स्मरणायेत्यर्थः । विनिगमनाविरहादिदमपि ज्ञापकमिति भावः ॥

( आक्षेपबाधकभाष्यम् )

अन्यतरस्यां समासो यथा स्यात्—समासेन मुक्ते वाक्यमपि यथा स्याद्—द्वितीयं भिक्षाया इति ॥

( आक्षेपसाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा तया वाक्यमपि भविष्यति ॥

( आक्षेपबाधकप्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम् । एकदेशिसमासेन मुक्ते षष्ठीसमासो यथा स्याद्—भिक्षाद्वितीयमिति ॥

( आक्षेपसाधकभाष्यम् )

एतदपि नास्ति प्रयोजनम् । अयमपि विभाषा, षष्ठीसमासोपि । तावुभौ वचनाद्भविष्यतः ॥

( समाधानभाष्यम् )

अत उत्तरं पठति—

( १३४१ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ द्वितीयादीनां विभाषाप्रकरणे विभाषावचनं ज्ञापकमवयवविधाने सामान्यविधानाभावस्य ॥ * ॥

( व्याख्याभाष्यम् )

द्वितीयादीनां विभाषाप्रकरणे विभाषावचनं क्रियते । ज्ञापनार्थम् । किं ज्ञाप्यते? । एतज्ज्ञापयत्याचार्यः—अवयवविधौ सामान्यविधिर्न भवतीति । किमेतस्य ज्ञापने प्रयोजनम्? । भिनत्ति छिनत्तीति श्नमि कृते शन्न भवतीति ॥

( प्रदीपः ) अवयवविधान इति । सामान्याश्रयसमूहापेक्षया प्रतिनियतो विशेष एकदेशो भवतीति विशेषविषयं विधानमवयवविधानशब्देनोक्तम् ॥ किमेतस्येति । न्यायादेव विशेषविधिः सामान्यविधेर्बाधक इति मत्वा पृच्छति—भिनत्तीति । विरोधादेकफलत्वाच्च बाध्यबाधकभावः । इह तु भिन्नदेशत्वाद्विरोधाभावो विकरणानां चानर्थक्यादेकफलत्वाभावः । वार्तिककारस्य मतेनेदमुक्तम् । स हि विरोधाभावे बाध्यबाधकभावं नेच्छति । तथा चाह—श्नम्बहुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेधः इति ॥ भाष्यकारस्तु विनापि विरोधेन सामान्यविशेषविध्योर्बाध्यबाधकभावमभ्युपगच्छति । अर्थाभिधाने साहायकप्रतिपत्तौ एकफलताप्यनयोरस्ति ॥

( उद्द्योतः ) सामान्येवयवाभावादाह—सामान्याश्रयसमूहेति । षष्ठीत्यादिना सामान्यशास्त्रेण विहितेत्यर्थः ॥ प्रतिनियत इति । अर्धमित्यादिशास्त्रेण विहितः ॥ भाष्ये अवयवविधाविति । तद्विषये नोत्सर्गप्रवृत्तिरित्यर्थः ॥ न्यायादिति । येननाप्राप्तिन्यायादित्यर्थः ॥ विरोधादित्यादि । तदुभयसत्त्वे हि बाध्यबाधकभावः । प्रकृते चोभयोरप्यभावात्तदभाव इति वार्तिकमतेनेदं प्रयोजनमुक्तमित्यन्वयः ॥ भाष्यकारस्त्विति । सत्यपि सम्भवे बाधनं भवतीति तदुक्तेरिति भावः ॥ नन्वीदृशं दधिदानं तक्रदानस्य निवर्तकं दृष्टं तत्र ह्येकफलतास्ति न च सा प्रकृते इत्यत आह—अर्थाभिधाने इति ॥ प्रतिपत्तिः प्राप्तिः । वस्तुतो भाष्यनये विरोधाभाव इवैकफलत्वाभावेपि बाध इति निरूपितमाकडारसूत्रे भाष्ये ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । शबादेशाः श्यन्नादयः करिष्यन्ते ॥

(उद्द्योतः) शबादेशाः श्यन्नादय इति । तत्र श्नम् आदेशत्वाच्छपं निवर्तयति मित्त्वादन्त्यादचः परो रमागमवदिति भावः ॥

---

१ अंशांशिरूपयोः समूहसमूहिनोस्तादात्म्यरूपौ भेदाभेदाविति भावः । स्वीकृत चैतद् गुण्यादिकं गुणादिना भिन्नाभिन्नं समानाधिकृतत्वादित्यादि मयोगेण मीमांसकादिभिरिति भावः । ( र. ना. ) २ षष्ठीसमाससिद्ध्यनुगुणतयेत्यर्थः । (र. ना.) ३ विशेषविधावित्यर्थः । तथा च द्वितीयादिसमासविषये षष्ठीसमासो न स्यादिति अन्यतरस्यांग्रहणं चरितार्थमिति भावः । ( र. ना. ) ४ भाष्य-धर्माश्रयइत्यर्थः । (र. ना.) ५ वक्तव्य इति शेषः । (र. ना.) ६ तिबादिकर्तृकार्थाभिधाने सहायत्वमाप्ताविल्यर्थः । ( र. ना. ) ७ ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति तक्रकौण्डिन्यन्यायाकारस्तथा च 'नन्वीदृशं तक्रदानं दधिदानस्य निवर्तकं दृष्टम्' इति पाठः साधुः । ईदृशमित्यस्य सत्यपि संभवे बाधितमित्यर्थः । ( र. ना. )

( आक्षेपभाष्यम् )

**तर्हि शपो ग्रहणं कर्तव्यम् ॥**

( आक्षेपबाधकभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते । क प्रकृतम् ? । "कर्तरि शब्" इति ॥**

( आक्षेपसाधकभाष्यम् )

**तद्वै प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः ॥**

( आक्षेपबाधकभाष्यम् )

**रुधादिभ्य इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति "तस्मादित्युत्तरस्य" इति ॥**

( आक्षेपसाधकभाष्यम् )

**प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥**

( आक्षेपबाधकभाष्यम् )

**नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृत एवानुवर्तते ॥**

( ज्ञापनान्तरपरतयासमाधानभाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यः 'यत्रोत्सर्गापवादं विभाषा तत्रापवादेन मुक्ते उत्सर्गो न भवति' इति ॥**

( उद्योतः ) भाष्ये—यत्रोत्सर्गापवादमिति । यत्रोत्सर्गापवादं महाविभाषाविकल्पितं तत्रेति पाठान्तरम् ॥

( आक्षेपभाष्यम् )

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

( प्रयोजनभाष्यम् )

**"दिक्पूर्वपदान् ङीप्" प्राङ्मुखी । प्राङ्मुखा । प्रत्यङ्मुखी । प्रत्यङ्मुखा । ङीपा मुक्ते ङीष् न भवति ॥**

( प्रदीपः ) **प्राङ्मुखीति । अस्वाङ्गपूर्वपदाद्वेत्यतो ङीष्ङीब्विधौ वेत्यनुवृत्तिः ॥**

( उद्योतः ) अस्वाङ्गपूर्वपदाद्वेत्यतो ङीष्ङीब्विधौ वेत्यनुवृत्तिरिति पाठः ॥ उत्सर्गापवादयोरुभयोरपि वैकल्पिकत्वं दर्शयितुं ङीष्ङीब्विधावित्युक्तम् ॥

( प्रयोजनबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । वक्ष्यत्येतद्—*दिक्पूर्वपदान्ङीषोनुदात्तत्वम् । ङीब्विधाने ह्यन्यत्रापि ङीब्विषयाद् ङीप्प्रसङ्गः* इति ॥**

( प्रदीपः ) **नैतदस्तीति ।** वार्तिककारस्य मतमाश्रित्य प्रयोजनप्रत्याख्यानम् । यद्यपूर्वो ङीब्विधीयेत तदा प्राग्गुल्फा प्रत्यग्जघनेत्यादावपि स्याद् । ङीष एव त्वनुदात्तत्वविधाने ङीषोत्र प्रतिषिद्धत्वाद्दोषाभावः । तदेवं नित्ये स्वरमात्रविधाने नास्ति सामान्यविशेषविहितत्वम् ॥

( उद्योतः ) वार्तिककारस्येति । यदि त्वसंयोगोपधादित्याद्यनुवर्त्यापूर्वो ङीब्विधीयते तदा प्रयोजनं भवत्येवेत्येवमुक्तम् ॥ इत्यादावपि स्यादिति । असंयोगोपधादित्याद्यनुवृत्तौ प्रतिपत्तिगौरवमिति वार्तिकाशय इति भावः ॥ **ङीष एव त्वनुदात्तत्वविधाने इति ।** ङीबादेशद्वारेत्यर्थः ॥ **नित्ये स्वरमात्रविधाने** इत्यस्यापि स्वरमात्रफलके ङीबादेशविधाने इत्यर्थः । नित्यत्वं वाग्रहणाननुवृत्तेः । तदनुवृत्तौ हि पक्षे ङीष्श्रवणं स्यादेवेति भावः ॥

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—'अर्द्धपिप्पली, अर्द्धकोशातकी' एकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति ॥ उन्मत्तगङ्गं लोहितगङ्गम्, अव्ययीभावेन मुक्ते बहुव्रीहिर्न भवति ॥ दाक्षिः प्लाक्षिः, इञा मुक्तेऽण् न भवति ॥**

( उद्योतः ) भाष्ये—**इदं तर्हि प्रयोजनमर्धपिप्पलीत्यादि ।** परवल्लिङ्गमितिसूत्रस्थभाष्येणेदं विरुध्यते । तत्र हि **एकदेशिसमासो नारप्स्यते । कथमर्धपिप्पलीति ? । समानाधिकरणो भविष्यति । अर्धं चासौ पिप्पली चेति ।** [ नैचैकदेशिसमासारम्भे षष्ठीसमासस्य तेन बाधो भवति अन्यथा षष्ठीसमासोपि प्राप्नोति ] **इष्यते षष्ठीसमासोपि अपूपार्धं मया भक्षितं लब्धं मया ग्रामार्धमिति । एवं पिप्पल्यर्धमित्यपि भवितव्यमित्युक्तम् ॥** तस्माद्यथाश्रुतसूत्रमते एकदेश्युक्तिरियम् ॥ **उन्मत्तगङ्गम् अव्ययीभावेनेति ।** यद्यपि वाक्येन संज्ञानवगमात् सोव्ययीभावो नित्यसमाससदृशः तद्वत्समासान्यूनार्थकवाक्याभावात् तथापि वापदं तत्र संबध्यत एव । अत एव वाक्यं भवत्येव । अत एव संज्ञायामिति समासविषयेपि वाप्यामश्वो वाप्यश्व इति वाक्यं भाष्याद्युक्तं संगच्छत इति भावः ॥

( आक्षेपभाष्यम् )

**यद्येतज्ज्ञाप्यते, उपगोरपत्यमौपगवः तद्धितेन मुक्ते उपग्वपत्यमिति न सिध्यति ॥**

( समाधानभाष्यम् )

**अस्त्यत्र विशेषः—द्वे ह्यत्र विभाषे "दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम्" "समर्थानां प्रथमाद्वा" इति च । तत्रैकया वृत्तिर्विभाषा । अपरया वृत्तिविषये विभाषापवादः ॥**

( प्रदीपः ) **वृत्तिविषय इति ।** एकार्थीभावविषय इत्यर्थः ॥

( आक्षेपभाष्यम् )

**क्रियमाणेपि वै अन्यतरस्यांग्रहणे षष्ठीसमासो न प्राप्नोति । किं कारणम् ? । पूरणेनेति प्रतिषेधात् ॥**

( समाधानभाष्यम् )

**नैतत्पूरणान्तम् । अना एतत्पर्यवपन्नम् ॥**

---

१ समाहारद्वन्द्वः । ( र. ना. ) २ "न सिध्यति, परत्वात्षष्ठीसमासः प्राप्नोति । अथ पुनरयमेकदेशिसमास आरभ्यमाणः षष्ठीसमासं बाधते" इति भाष्यफलितपाठोयम् । ३ तस्य नित्यसमाससदृशत्वे हेत्वन्तरमाह तद्वत्समासेत्यादिना—तद्वदित्यस्य तथेत्यर्थः । (र.ना.) ४ यत्किञ्चिदंशेन समानार्थत्वमादायेति भावः । अत एवाक्षिक इत्यस्याक्षैर्दीव्यतीति विग्रहः क्रियते इति बोध्यम् । ( र. ना. ) ५ द्वितीयतृतीयेति सूत्रे इत्यादिः । (र. ना.) ६ भिक्षा द्वितीयमित्याकारक इत्यादिः । ( र. ना. )

( प्रदीपः ) नैतदिति । पूरणगुणेत्यत्र पूरणाधिकारविहितप्रत्ययान्तग्रहणादिति भावः ॥ अनैतदिति । पूरणाद्भागे तीयादन्निति स्वार्थिकेनाना व्यवहितमित्यर्थः ॥

( उद्द्योतः ) पूरणाधिकारेति । पूरणशब्दस्य स्वरितत्वादिलभिमानः ॥ पर्यवस[प]न्नशब्दं व्याचष्टे—अना व्यवहितमिति । स्वरभेदप्राप्तमिति यावत् ॥

( समाधानबाधकभाष्यम् )

**एतदपि पूरणान्तमेव । कथम् ? । पूरणं नामार्थः तमाह तीयशब्दः, अतः पूरणम् । योसौ पूरणान्तात्स्वार्थे भागे अन् सोपि पूरणमेव ॥**

( प्रदीपः ) एतदपीति । पूरणगुणसुहितार्थेत्यत्रार्थशब्दस्य प्रत्येकं संबन्धात् पूरणार्थग्रहणं न तु तदधिकारविहितप्रत्ययग्रहणमित्यर्थः ॥ ३ ॥

( उद्द्योतः ) ननु तदधिकारेति । एवं च सूत्रे विनिगमनाविरहाद्भाष्यप्रामाण्याच्चाप्रत्ययान्तानां केवलानां च द्वितीयादीनां ग्रहणम् । भिक्षासंवन्धिद्वित्वसंख्यापूरणमित्यर्थः ॥

( समाधानान्तरभाष्यम् )

**एवं तर्ह्यन्यतरस्यांग्रहणसामर्थ्यात्षष्ठीसमासो भविष्यति ॥ द्वितीयतृतीय- ॥ ३ ॥**

( उद्द्योतः ) भाष्ये—एवंतर्हीति । अन्यतरस्यामित्येतत्सामर्थ्यात्पूरणेति प्रतिषेधो नेति भावः ॥ ३ ॥

( इत्येकदेशिसमासप्रकरणम् )

( २६९ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ. ३ )

## ४२४ प्राप्तापन्ने च द्वितीयया ॥ २।२।४ ॥

( चकारस्याकारविधानार्थत्वाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थश्चकारः ? ॥**

( समाधानभाष्यम् )

**अनुकर्षणार्थः ॥ किमनुकृष्यते ? । अन्यतरस्यामित्येतदनुकृष्यते ॥ किं प्रयोजनम् ? । अन्यतरस्यां समासो यथा स्यात् । समासेन मुक्ते वाक्यमपि यथा स्यात्—जीविकां प्राप्त इति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा तया वाक्यमपि भविष्यति ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम् । द्वितीयासमासोपि यथा स्याद्—जीविकाप्राप्त इति ॥**

( समाधानान्तरबाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । अयमप्युच्यते, द्वितीयासमासोपि । तदुभयं वचनाद्भविष्यति ॥**

( उद्द्योतः ) प्राप्ता ॥ ४ ॥ अयमप्युच्यत इत्यादि । उभयोरपि प्राप्तापन्नग्रहणेन विशेषविहितत्वादित्यर्थः ॥

( समाधानान्तरभाष्यम् )

**एवं तर्हि नायमनुकर्षणार्थश्चकारः ॥ किं तर्हि ? । अत्वमनेन विधीयते—प्राप्तापन्ने द्वितीयान्तेन समस्येते, अत्वं च भवति प्राप्तापन्नयोरिति । प्राप्ता जीविकां प्राप्तजीविका । आपन्ना जीविकामापन्नजीविका ॥ प्राप्तापन्ने ॥ ४ ॥**

( प्रदीपः ) प्राप्ता ॥ ४ ॥ अत्वं च भवतीति । चकारेण समुच्चयार्थेनाकारप्रश्लेषोनुमीयते । सौत्रत्वाच्च निर्देशस्य प्रकृतिभावः प्रगृह्याश्रयो न भवति । यद्वा समाहारद्वन्द्वे कृते विषयसप्तम्यकारादेशापेक्षा क्रियते, सुपिति चानुवर्तनात् प्राप्तापन्नयोरेव सन्निधानात् उपसर्जनसंज्ञा भवति । सूत्रारम्भसामर्थ्याद्वा ॥ प्राप्ता जीविकामिति । लिङ्गविशिष्टपरिभाषया प्राप्ताशब्दस्य समासः ॥ ४ ॥

( उद्द्योतः ) द्वितीययेत्यत्र प्रश्लेषे उद्देश्यासंनिधानं चकारेण व्यवधानं चेति भावेनाह—सौत्रत्वाच्चेति । सूत्रारम्भेति । द्वितीयाश्रितेत्येव सिद्धे एतत्सामर्थ्यादिति भावः ॥ लिङ्गविशिष्टेति । एकादेशस्य पूर्वान्तत्वादित्यपि वोध्यम् ॥ ४ ॥

( २७० तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ. ४ )

## ४२५ कालाः परिमाणिना ॥ २।२।५ ॥

( उत्तरपदार्थप्रधानताधिकरणम् )

( आक्षेपभाष्यम् )

**किंप्रधानोयं समासः ? ॥**

( प्रदीपः ) कालाः ॥ ५ ॥ इह वृत्तिवाक्ययोः समानार्थत्वं न्याय्यं, मासो जातस्येति वाक्ये जातस्य विशेषणत्वादप्राधान्यम्, समासे तु मासजातो दृश्यतामित्यादौ जातस्यैव कार्यसंबन्धावगमात् प्राधान्यमन्योत्तरपदार्थप्रधानवैधर्म्यं च लक्ष्यत इति मत्वा पृच्छति—किंप्रधान इति ॥

( उद्द्योतः ) कालाः ॥ ५ ॥ तत्पुरुषे प्राय उत्तरपदार्थप्राधान्यात्प्रश्नानुपपत्तिमाशङ्क्याह—इहेति ॥ प्राधान्यमिति । एवं च समानार्थत्वभङ्ग इति भावः ॥ ननु चित्रगुरित्यादिवत्समासे उत्तरपदार्थप्राधान्यं एकार्थीभावकृतं स्यात्तत्राह—अन्योत्तरेति । तद्वैधर्म्य च भाष्योक्तम् । किं च वाक्यविपरीतविशेषणविशेष्यभावो नैकार्थीभावसाध्यः, अत एव तस्य एकार्थीभावकृतविशेषेषु भाष्ये गणनाभावः ॥ किंप्रधानोयं समास इति । समासपदं विग्रहपरमपि ॥

---

१ स्वरितेनाधिकं कार्यं भवतीति स्वरितेनाधिकार इत्यस्यार्थस्वीकारेण पूरणशब्दस्य स्वरितत्वेन पूरणाधिकारविहितप्रत्ययान्तस्यैव ग्रहणमित्यभिमानः पूर्वपक्षिणः । अभिमानोक्तिवीजन्तु 'एवञ्च सूत्रे विनिगमनाविरहाद् भाष्यप्रामाण्याच्चेत्यादिनोद्द्योते वक्ष्यते । ( र. ना. ) २ न भवतीति । वहुलपर्यायनित्यपदस्य तत्रोपादानान्न काप्यनुपपत्तिः । तत्र नित्यशब्दस्य वहुलार्थकत्वं भाष्याद्यदृष्टत्वान्नादर्तव्यमिति वयम् । ( र. ना. ) ३ चकाराव्यवहितस्यैव समुच्चिताभावबोधकपदयुक्तमिति भावः । ( र. ना. ) ४ अन्ये ये उत्तरपदार्थप्रधानाः षष्ठीसमासादयस्तद्वैधर्म्यमित्यर्थः । ( र. ना. ) ५ चित्रगुरित्यादावन्यपदार्थप्राधान्यवदित्यर्थः । तत्र यथाऽन्यपदार्थप्राधान्यमेकार्थीभावकृतं तथात्रोत्तरपदार्थप्राधान्यमिति भावः । ( र. ना. ) ६ यद्युत्तरपदार्थप्रधान इत्यादिनाऽग्रे भाष्ये वक्ष्यते इत्यर्थः । नागेशापेक्षया भाष्योक्तेरतीतत्वादेवमुक्तिः । ( र. ना. )

( समाधानभाष्यम् )

**उत्तरपदार्थप्रधानः ॥**

( उद्द्योतः ) उत्तरपदार्थप्रधानइत्युत्तरमप्युभयसाधारणम्[1]। न च विग्रहेपि जातस्य प्राधान्ये जातस्य मास इति षष्ठ्यनुपपत्तिः विशेषणादेव षष्ठीविधानादिति वाच्यं, वृत्तिविग्रहयोः समानार्थत्वानुरोधेन तस्य वाक्यस्य वृत्त्यर्थबोधकत्वविवक्षायां[2] विशेष्यविशेषणभाववैपरीत्येपि पूर्वजातसंस्कारानिवृत्तेः । अन्यथा[3] समासे जातप्राधान्येन विशेषणविभक्तिषष्ठ्यापादनस्य भाष्येऽसङ्गत्यापत्तेः[4]। मम तु न दोषः, विग्रहेपि तस्यैव प्राधान्येन तत्स्थितिवत्समासादपि तदापादनात् । तदुत्तरषष्ठ्यैव तत्र मासविशेषणकसम्बन्धप्रतीतिवत्समासे विशिष्टोत्तरषष्ठ्या तत्सम्भव इत्याशयात् ॥ सम्बन्धस्याशेषत्वान्न[5] षष्ठीत्युत्तरम् ॥

( आक्षेपभाष्यम् )

**यद्युत्तरपदार्थप्रधानः सधर्मणानेनान्यैरुत्तरपदार्थप्रधानैर्भवितव्यम् । अन्येषु चोत्तरपदार्थप्रधानेषु यैवासावन्तर्वर्तिनी विभक्तिस्तस्याः समासेपि श्रवणं भवति । तद्यथा—राज्ञः पुरुषो राजपुरुष इति । इह पुनर्वाक्ये षष्ठी, समासे प्रथमा । केनैतदेवं भवति ? ॥**

( उद्द्योतः ) भाष्ये—यैवासावन्तर्वर्तिनीति । उत्तरपद इति शेषः ॥

( समाधानभाष्यम् )

**योसौ मासजातयोरभिसंबन्धः समासे स निवर्तते । अभिहितः सोर्थोन्तर्भूतः प्रातिपदिकार्थः संपन्नः । तत्र प्रातिपदिकार्थे प्रथमेति प्रथमा भविष्यति ॥**

( प्रदीपः ) **योसाविति** षष्ठीनिवृत्तौ न्यायकथनं, संबन्धस्य चान्तर्भावादनुद्भव एव निवृत्तिः ॥ **अभिहित इति ।** प्रथमोत्पत्तिनिमित्तकथनम् । अनुद्भूतोपि संवन्धो गुणभावेन समासाभिधेयत्वादभिहित इत्युच्यते । तत्राभिहितोपि कश्चिदन्तर्भवति यथा राज्ञः पुरुष इत्यत्र वाक्ये षष्ठ्या संवन्धोभिधीयते न तु क्वचिदन्तर्भावमुपयाति । राजसखादौ बहुव्रीह्यर्थेस्यान्तर्भावोऽस्ति न त्वभिधानमित्युभयोपादानम् । इह परिमाणं जातस्य प्रतिपादयितुं वाक्ये परिमाणिन एव षष्ठी कर्तव्या मासो जातस्येति । मासस्य जात इति त्वभिधीयमाने विवक्षितोर्थो न प्रतीयते । तत्र यथा चित्रा गावोस्येति वाक्ये यद्यपि गवां प्राधान्यं तथापि चित्रगुरिति वृत्तावप्राधान्यमेव तथेहापि वृत्तिवाक्ययोः परिमाणिनः प्राधान्याप्राधान्ये शब्दशक्तिस्वाभाव्याद्भवतः ॥

( उद्द्योतः ) **योसाविति** । परिच्छेद्यपरिच्छेदकत्वरूपः ॥ **समासे इति ।** षष्ठीप्रयोजको न भवतीत्यर्थः । तदाह—**अभिहित इति ।** षष्ठ्यप्रवृत्तौ निमित्तमिदम्, समासेनाभिहितो यतः अतएवान्तर्भूतः, प्रथमोत्पत्तिनिमित्तमाह—**प्रातिपदिकार्थ इति ।** हि यतोभिहितः, अत एव प्रातिपदिकार्थः संपन्न इत्यर्थः । अन्यथा पचतीत्यादौ कर्ताभिधीयमानो गुणभूतत्वादन्तर्भूतोपीति तत्रापि[6] प्रथमा स्यादत इदमुक्तम् । अनभिहितसम्बन्ध एव षष्ठीति तात्पर्यम् ॥ **अन्तर्भावादिति** । सम्बन्धिविषयकोपस्थितिविषयत्वादित्यर्थः ॥ **अनुद्भव एवेति ।** पृथगुपस्थित्यविषयसम्बन्धित्वमनुद्भवः[7] ॥ **प्रथमोत्पत्तिनिमित्तमिति** । षष्ठीप्रतिवन्धद्वारेत्यर्थः ॥ ननु पक्त्यादौ तत्त्वेनाभिधीयमानं कर्मादिकमभिहितमित्युच्यते, नैष तथा, सम्बन्धत्वेनाभानादत आह—**गुणभावेनेति** । सम्बन्धाभिधानमेव[8] भवतीत्यर्थः । सम्बन्धिविषयकोपस्थितिविषयत्वमेव गुणभाव इत्याहुः ॥ **नतु क्वचिदन्तर्भावमिति** । न सम्बन्धिविषयकोपस्थितौ विषयो भवतीत्यर्थः । उभयोः पृथगुपस्थितयोरेव सम्बन्धसम्भवादिति भावः ॥ **विवक्षितोर्थ इति ।** कियान्कालोस्य जातस्येति प्रश्ने जातस्य मास इत्युत्तरेणैवाकाङ्क्षाशान्तिर्न तु मासस्य जात इति उत्तरेणेति स एव विवक्षितोर्थः । स च न ततः प्रतीयत इति भावः ॥ **मासजात इति** समासस्य त्वार्थमुत्तरत्वं[9] बोध्यम् ॥ नन्वेवं विग्रहे षष्ठीसमासेनैव सिद्धौ सूत्रं व्यर्थम्, उत्तरं तु तवैव ममाप्यार्थमेवेति चेत् । न, एतद्भाष्यप्रामाण्येन परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यबोधकादेव षष्ठीतिस्वीकारात्, अवयवावयविनोः समभिव्याहारे यथावयविवाचकादेव । तत्रार्थे[10] जातमास इत्यनिष्टनिवृत्त्यर्थं सूत्रम् ॥ **शब्दशक्तिस्वाभाव्यादिति** । यद्यपि एतद्भाष्यात्तद्धहतीति सूत्रभाष्याच्च वृत्त्यर्थोपदर्शके विग्रहवाक्येपि तत्समानैव विषयतेति लभ्यते तथाप्यत्र वाक्यपदमर्थबोधाय प्रयुक्तस्वतन्त्रवाक्यपरमिति[11] बोध्यम् । भाष्येप्येवमेव ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—मासजातस्येति ? ॥**

( समाधानभाष्यम् )

**भवति बाह्यमर्थमभिसमीक्ष्य षष्ठी ॥**

( प्रदीपः ) **भवति बाह्यमिति ।** परिमाणपरिमाणिसंबन्ध एव समासेन्तर्भूतः, न तु बाह्यसंवन्धापेक्षो मासजातस्य वस्त्रमित्यादिरपि संबन्ध इत्यर्थः ॥

( अनुपपत्तिपरिहाराधिकरणम् )

( १३४२ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देशः ॥ * ॥

( व्याख्याभाष्यम् )

**कालस्य येन समासः सोऽपरिमाणी । तस्यापरिमाणित्वाद् अनिर्देशः—अगमको निर्देशः अनिर्देशः । नहि जातस्य मासः परिमाणम् । कस्य तर्हि ? । त्रिंशद्रात्रस्य । तद्यथा 'द्रोणो बदराणां**

---

[1] समासविग्रहोभयसाधारणमित्यर्थः । ( र. ना. ) [2] वृत्त्यर्थबोधकत्वविवक्षाकालिकं यद्विशेषणविशेष्यभाववैपरीत्यं तस्मिन् सत्यपीत्यर्थः । ( र. ना. ) [3] वृत्तिविग्रहयोः समानार्थत्वानङ्गीकारे इत्यर्थः । ( र. ना. ) [4] अयमसंगत्यापत्तौ हेतुः । ( र. ना. ) [5] समासे संवन्धस्य प्रातिपदिकार्थान्तर्भावेण शेषत्वाभावान्न षष्ठीत्युत्तरं भाष्ये वक्ष्यते इत्यर्थः । ( र. ना. ) [6] देवदत्तः पचतीत्यत्र देवदत्तपदात्कर्तृवाचिका प्रथमा स्यादित्यर्थः । ( र. ना. ) [7] पृथगुपस्थितेः संवन्धाविषयकोपस्थितेरविषयः संवन्धीयस्य तत्त्वं संवन्धेऽनुद्भव इत्यर्थः । (र.ना.) [8] संवन्धिनिगुणभावेन विशेषणतया संवन्धाभिधानं भवत्येवेत्यर्थ इति भावः । (र. ना.) [9] समाधानत्वमित्यर्थः । (र. ना.) [10] मासो जातस्येत्यर्थे । (र.ना.) [11] न तु विग्रहवाक्यपरमिति भावः । ( र. ना. )

**देवदत्तस्य' इति न देवदत्तस्य द्रोणः परिमाणम् । कस्य तर्हि ? । बदराणाम् ॥**

( प्रदीपः ) **नहि जातस्येति** । तस्य हि दिष्ट्यादिः[1] परिमाणं, न तु मासः । नापि तत्सत्ताया मासः परिमाणम्, सत्ताया नित्यत्वात् । नापि जन्मक्रियायाः, तस्या एकक्षणभावित्वान्मासेन संबन्धासंभवात् ॥ **त्रिंशद्रात्रस्येति** । ननु त्रिंशद्रात्र एव मासो नापर इति भेदाभावादयुक्तमेतत् । नैष दोषः ॥ कालो जातस्य मासेन परिच्छिद्यते । तथा हि—'कियान् कालोऽस्य जातस्य' इति प्रश्ने 'मास' इत्यादि प्रतिवचनम् । स च परिच्छिद्यमानस्त्रिंशद्रात्रात्मक एव संपद्यत इत्यभिप्रायेणैतदुक्तम् ॥ एतदेव दृष्टान्तेन दर्शयति—**तद्यथेति** ॥

( उद्द्योतः ) **सत्ताया नित्यत्वादिति** । नित्यत्वमत्र परिच्छेदककालाधिककालस्थायित्वं बोध्यम् ॥ **इत्यभिप्रायेणेति** । जातसम्बन्धी कालो मास इत्यभिप्रायः ॥ भाष्ये—**बदराणामिति** । देवदत्तसम्बन्धिबदराणामित्यर्थः ॥

( १३४३ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु कालपरिमाणं यस्य स कालस्तेन ॥ * ॥

( व्याख्याभाष्यम् )

**सिद्धमेतत् । कथम् ? । कालपरिमाणं यस्य स कालस्तेन समस्यत इति वक्तव्यम् ॥**

( प्रदीपः ) **सिद्धं त्विति** । कालशब्देन कालसामान्यमुच्यते यस्य जातादेः संबन्धिनः कालसामान्यस्य परिमाणं मासादिस्तेन स कालो मासादिः समस्यते । अथ वा कालशब्देन मासादिः कालविशेष उच्यते, स कालः परिमाणं यस्य कालसामान्यस्य तदस्य संबन्धि तेन स कालो मासादिः समस्यत इत्यर्थः ॥

( उद्द्योतः ) **कालशब्देनेति** ॥ कालपरिमाणमिति षष्ठीतत्पुरुषः ॥ अत्र व्याख्याने वार्तिकस्थकालपदार्थयोः स्वरसत ऐक्यं प्रतीयमानं भज्येतेत्यत आह—**अथवेति** । अत्र पक्षे कालपरिमाणमिति बहुव्रीहिः ॥ **तद्यस्येति** । तत्कालसामान्य ॥

( आक्षेपभाष्यम् )

**सिध्यति । सूत्रं तर्हि भिद्यते ? ॥**

( समाधानभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देशः* इति ॥**

( प्रत्याक्षेपभाष्यम् )

**कं पुनर्भवान्कालं मत्वाह—*कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देशः* इति ? ॥**

( प्रदीपः ) **कं पुनरिति** । यदि नित्य एको विभुः कालस्तदा तस्य भेदाभावात् परिच्छेदकत्वासंभवः । अथोपाधिभेदात्तस्य भेदस्तदा तद्भेदभिन्नस्य जातं प्रत्यपि परिच्छेदकत्वमस्त्येव ॥

( उद्द्योतः ) जातमपि, प्रतीतिजननक्रियापरिच्छेदद्वारेत्यर्थः ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमित्याहुः । तस्यैव कयाचित्क्रियया युक्तस्याहरिति च भवति रात्रिरिति च ॥ कया क्रियया ? । आदित्यगत्या । तयैवासकृदावृत्तया मास इति । भवति । संवत्सर इति च भवति ॥**

( प्रदीपः ) **येन मूर्तीनामिति** । तरुतृणलताप्रभृतीनां कदाचिदुपचयः, अन्यदा त्वपचयः । स प्रत्ययान्तराविशेषेपि यत्कृतः स काल इत्यर्थः ॥ यद्येवं तस्यैकत्वात् कथमहरादिविभाग इत्याह—**तस्यैवेति** । परोपाधिक एव सर्वस्य भेदः । तथा चोक्तं हरिणा कालसमुद्देशे—

> तस्यात्मा बहुधा भिन्नो भेदैर्धर्मैरन्तराश्रयैः ।
> न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ॥१॥
> नैको न चाप्यनेकोस्ति न शुक्लो नापि चासितः ।
> द्रव्यात्मा स तु संसर्गादेवंरूपः प्रकाशते ॥ २ ॥
> संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः ।
> संभिन्नैस्तैर्व्यवस्थानां कालो भेदाय कल्पते ॥३॥

इति ॥ **कया क्रिययेति** । क्रियाया एकत्वात्तस्या अपि भेदकत्वं नास्तीति प्रश्नः ॥ **आदित्यगत्येति** । आदित्यादिसाधनभेदाद्भिन्नैव क्रिया । आख्यातेन तु सा निवृत्तभेदोच्यते शब्दशक्तिस्वाभाव्यान्न तु तस्या भेदो नास्ति ॥

( उद्द्योतः ) **तरुतृणेति** । पदार्थानामनन्यथासिद्धवृद्ध्यपक्षयानुमेयः काल इति भाष्याशय इति भावः ॥ **प्रत्ययान्तरम्** । कारणान्तरम् ॥ **तस्यैकत्वादिति** । अखण्डकालाभिप्रायमिदम् ॥ वस्तुतस्तु एकत्वे तस्य कार्यवैचित्र्यनियामकत्वानुपपत्तिरपि भाष्योक्तलक्षणानुपपत्त्या क्षणधारारूपः काल इति युक्तम् । क्षणानां चाशुविनाशित्वात् कथमहरादिविभाग इति चावतरणं युक्तं कैयटेपि ॥ नित्यः प्रवाहनित्यतया, एकः समूहरूपेण, विभुः क्षणस्य विभु-

---

१ दिष्टिरायामविशेषः । दिष्टिर्मुत्परिमाणयोरिति मेदिनी । आदिना शमविस्तस्त्यादिः । ( र. ना. ) २ ब्रह्मरूपसत्तापरिग्रहे तु न काप्यनुपपत्तिरिति ज्ञेयम् । ( र. ना. ) ३ आदित्यगत्येति । अत्रादित्यपदम् "आदित्योऽपि गौरुच्यते" इति निरुक्तवचनेन गोशब्दस्यादित्यवाचकतायां विवादाभावेन "आयं गौः" इति मन्त्रे गोशब्दवाच्यस्यादित्यस्य "द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्" इति मन्त्रप्रकाशितपितृत्वमातृत्ववत्यौ द्यावापृथिव्यौ परितः क्रमणस्यैवोक्तत्वेन 'आकृष्णेन रजसा' इत्यादिष्वपि बहुमन्त्रेषु स्पष्टत्वेन सूर्यस्य गतिमत्त्वं न विरुध्यते ॥" इति सूचनायेति बोध्यम् ॥ किं च "सूर्यः सर्तेः सुवतेर्वा" इति निरुक्तेन सूचितं सूर्यपदप्रकृतिभूतसृधातुनिपातितसूर्यपदघटितमन्त्रेण "चित्रं देवानाम्—" इत्यनेन, सुधातुनिष्पन्नसवितृपदघटितमन्त्रेण "आकृष्णेन रजसा—" इत्यनेनापि सूर्यस्यैव गन्तृत्वमुक्तम् ॥ इतोऽप्यधिकं निरुक्तटिप्पण्यां मपञ्चितम् । ४ कारणान्तराभेदेऽपि इत्यर्थः । ( र. ना. ) ५ येन मूर्तीनामित्यादिनेत्यादिः । (र. ना.)

त्वात्, तस्य समूहस्यैकत्वात् इत्यर्थ इत्यन्ये ॥ इत्याहेति ॥ इति हेतोराहेत्यर्थः ॥ भाष्ये—तस्यैवेति । बुद्धिविषयक्षणसमूहस्येत्यर्थः ॥ क्रिययेति । क्रियासमूहेनेत्यर्थः ॥ नन्वौपाधिकत्वेऽपरमार्थता स्यादत आह—परोपाधिक एवेति । व्यवहारमात्रस्यौपाधिकत्वाद्याद्यबद्धार्थं प्रामाण्यमङ्गीकार्यमिति भावः ॥ तत्रार्थे वृद्धसम्मतिमाह—तथाचेति ॥ तस्य । क्षणसमूहरूपकालस्य ॥ आत्मा, स्वरूपं, धर्म्यन्तराश्रयैः धर्मी सूर्यस्तद्वृत्ति अन्तरं धर्मान्तरं धर्मविशेषः क्रियारूपः स आश्रयो येषां तैः क्रियाश्रितैः । भेदैः विशेषैः । बहुधा अहरादिभेदेन ॥ न केवलं कालस्यैव भेद औपाधिकः किं तु सर्वस्यापीत्याह—नहीति । भेदाभेदौ एकत्वानेकत्वे, शुक्लत्वकृष्णत्वे इत्यादिसर्वमपि न कस्यचित्स्वाभाविकमित्यर्थः ॥ तदुक्तं नहि गौः स्वरूपेण गौः नाप्यगौः गोत्वाभिसम्बन्धात्तु गौरिति ॥ किं त्वौपाधिकमेवेत्याह—द्रव्यात्मेति । द्रव्यपदार्थस्तत्तत्संसर्गादेकत्वानेकत्वादिनानाव्यवहारविषय इत्यर्थः । एवं च ब्रह्मैव कल्पिततत्तत्पदार्थसंसर्गात् भेदाभेदैकत्वानेकत्वशुक्लत्वकृष्णत्वादिना भासते इति भावः ॥ वस्तुतस्तु सर्वधर्मविनिर्मुक्तमिति बोध्यम् ॥ प्रकृते आह—संसर्गिणां त्विति । आदित्यक्रियादीनां ये भेदा विशेषास्त एव तस्य कालस्य विशेषा अहरादिविशेषव्यवहारहेतव इत्यर्थः । तैर्भिन्नरूपः कालो व्यवस्थानां अहरादिव्यवहाराणां भेदाय विशेषाय कल्पत इत्यर्थः ॥ क्रियाया एकत्वादिति । गच्छतीत्यादितस्तथाप्रतीतेरिति भावः ॥ आख्यातेन त्विति । स्वतो निवृत्तभेदैवेत्यर्थः ॥ अन्ये तु दिनपर्यन्तस्थायिक्रियानुपलम्भात् प्रश्नः—कयेति । आदित्यगत्येति उत्तरम् । तत्क्रियासमूहस्य तावत्कालं धारारूपेणानुस्यूतत्वादित्यर्थं इत्याहुः ॥

(प्रत्याक्षेपसमाधानेन समाधानभाष्यम्)

**यद्येवम्, भवति—जातस्य मासः परिमाणम् ॥**

(प्रदीपः) **यद्येवमिति ।** जातस्य जननक्रियावधिर्मासेन परिच्छिद्यते । न च मासव्यतिरिक्तः कश्चित् त्रिंशद्रात्रोऽस्ति यस्य मासः परिमाणं स्यात् । न च कालसामान्यं परिच्छेद्यम्, काल एव हि संसर्गिभेदावाप्तमासादिभेदव्यवहारः क्रियायाः परिमाणं न वस्त्वन्तरस्य ॥

(उद्द्योतः) ननु क्रियापरिच्छेदकत्वमेव कालस्य, न तु द्रव्यपरिच्छेदकत्वम्, द्रव्यस्य हि वितस्त्याद्येव परिच्छेदकमत आह—जातस्य जननक्रियावधिरिति । मासो जातस्येत्यस्य जननक्रियाया ऊर्ध्वमस्य मासो जात इत्यर्थ इत्यभिप्रायः । एवं च जननक्रियापरिच्छेदद्वारा जातपरिच्छेदकत्वमिति तात्पर्यम् ॥ मासस्य परिच्छेद्यान्तरमुक्तं निराकरोति—न च मासेति । त्रिंशद्रात्र इति बहुव्रीहिः । पद्मनाभवत्पृषोदरादित्वेनाकारान्तता, समूहोन्यपदार्थः । समाहारद्विगौ संख्यापूर्वं रात्रं क्लीबमिति नपुंसकतापत्तेः ॥ न च कालसामान्यमिति । तस्य नित्यत्वाद्विभुत्वाच्चेति भावः । क्षणपक्षे तद्वाराऽविच्छेदेन तस्यानन्तत्वादपरिच्छेद्यत्वमिति भावः ॥ युक्त्यन्तरमप्याह—न वस्त्वन्तरस्येति । एवं च क्रियाद्वारैव कालपरिच्छेदकत्वं वाच्यमिति तदद्वारा जातपरिच्छेदकत्वमेवेति भावः ॥

(१३४४ आक्षेपवार्तिकम् ॥ ३ ॥)

## ॥*॥ एकवचनद्विगोश्चोपसंख्यानम् ॥*॥

(व्याख्याभाष्यम्)

**एकवचनान्तानामिति वक्तव्यम् । इह मा भूत् मासौ जातस्य मासा जातस्येति ॥ द्विगोश्चेति वक्तव्यम् । इहापि यथा स्यात्—द्विमासजातस्त्रिमासजातः ॥**

(समाधानभाष्यम्)

**उक्तं वा ॥ किमुक्तम् ? । एकवचने तावदुक्तम्—अनभिधानादिति ॥ द्विगोः किमुक्तम् ? ॥ *उत्तरपदेन परिमाणिना द्विगोः समासवचनम्* इति ॥ कालाः परि ॥ ५ ॥**

(प्रदीपः) **अनभिधानादिति ।** समासे द्वित्वादेरनवगमात् । एकत्वं त्वत्र प्रातिपदिकार्थस्य तथाभूतत्वात् प्रतीयते वस्त्वन्तरानपेक्षत्वाच्च । द्वित्वादिका तु संख्या वस्त्वन्तरापेक्षत्वाद् बहिरङ्गा ॥ तदुक्तं हरिणा—

**शौर्पिके मासजाते च परिमाणं स्वभावतः ।**
**उपाधिभूतमाश्रित्य संख्या भेदेन वर्तते"** इति ॥

**उत्तरपदेनेति ।** तद्धितार्थेत्यत्रेदमुक्तं तदेव शिष्यानुग्रहाय स्मारितम् ॥ ५ ॥

(उद्द्योतः) ननु संख्याविशेषैकत्वावगतिरपि नेत्यत आह—एकत्वं त्विति ॥ तथाभूतत्वात् । नियतपरिच्छेदकपरिमाणवाचित्वात् । अन्यथा 'जातस्यास्य कियान्काल' इतिप्रश्नेऽस्योत्तरत्वं न स्यादित्यर्थः ॥ नन्वेवं सति तात्पर्ये द्वित्वाद्यवगतिरपि स्यादत आह—बहिरङ्गेति । द्वित्वादिप्रतीतेरनुभवविरुद्धत्वाच्चेत्यपि बोध्यम् ॥ शौर्पिक इति । परिमाणमक्तपरिमाणत्वं उपाधिमाश्रित्य संख्या, एकत्वरूपा, भेदेन, तद्रूपेण, भासते इत्यर्थः ॥ अक्तपरिमाणवाचकशब्दस्थले तथैव व्युत्पत्तिरिति तात्पर्यम् । वस्तुतः समासे एकत्वमपि नैव भासते । किं तु मासत्वेनैकमासस्यैव भानं न त्वनेकस्यानभिधानादिति भाष्याशयः ॥ एवं शौर्पिकतावकीनादावपीत्थं बोध्यम् ॥ इदमनभिधानं समर्थसूत्रे उक्तम् एकार्थीभावकृतविशेषनिरूपणावसरे ॥ तुल्यन्यायादक्षशलाकेतिसूत्रस्थम् "एकवचनान्तयोः" इत्यपि प्रत्याख्यातं बोध्यम् ॥ ५ ॥

(२७१ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ. ५)

## ४२६ नञ् ॥ २ । २ । ६ ॥

(नञ्समासस्याप्युत्तरपदार्थप्रधानतासाधनाधिकरणम्)

(आक्षेपभाष्यम्)

**किंप्रधानोयं समासः ? ॥**

१ काशी Bengal Asiatic Society मुद्रितपुस्तकशोधकेन तु 'नेकत्वादिना व्यवहार' इति पाठोऽशोधितः ।

२ जननक्रियारूपोऽवधिरिति कर्मधारयः । (र.ना.) ३ वस्तुगतैकत्वसंख्याविशिष्टत्वादित्यर्थः । (र.ना.)

( प्रदीपः ) नञ् ॥ ६ ॥ इहाब्राह्मणादिना क्षत्रियादेरभिधानं लोके दृश्यते तत्र प्रक्रियागतगुणदोषनिरूपणाय प्रश्नः—**किंप्रधान इति** ॥

( उद्द्योतः ) नञ् ॥ ६ ॥ शब्दार्थावगतेर्वृद्धव्यवहाराधीनत्वेपि न्यायव्युत्पादनाय विचार इत्याह—**इहेति** ॥ **प्रक्रियागतेति** । लिङ्गसंख्यादिसिद्धितदभावरूपगुणदोषेत्यर्थः ॥

( समाधानभाष्यम् )

**उत्तरपदार्थप्रधानः ॥**

( प्रदीपः ) त्रयश्चात्र पक्षा अन्यपदपूर्वपदोत्तरपदार्थप्राधान्यलक्षणाः संभवन्ति । यदा जातौ ब्राह्मणशब्दो वर्तते अविद्यमानं ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिस्तदान्यपदार्थः प्रधानम् । यदा त्वसत्सामान्यवृत्तिर्नञ् ब्राह्मणादिभिर्विशेष्यते ब्राह्मणत्वेनासन् अन्यथा तु सन्नर्थः क्षत्रियादिरब्राह्मणशब्देनोच्यते तदा पूर्वपदार्थः प्रधानम् । यदा तु दुरुपदेशान्मिथ्याज्ञानाद्वा ब्राह्मणशब्दः क्षत्रिये प्रयुज्यते ब्राह्मणपदार्थनिवृत्तिश्च स्वाभाविकी नञा द्योत्यते तदोत्तरपदार्थप्रधानः । यद्यपि इहार्थो न निर्दिष्टस्तथाप्यभिधानशक्तिस्वाभाव्याल्लभ्यते । द्वन्द्ववत्तु स्वतन्त्रपदार्थद्वयानवगमादुभयपदार्थप्राधान्यं नाशङ्कितम् । एवं पक्षत्रयसंभवेल्पप्रतिविधेयपक्षमाश्रयितुमाह—**उत्तरपदार्थप्रधान इति** ॥

( उद्द्योतः ) **असत्सामान्यम्** अभावो भेदः । तस्यासत्त्वं निरूपयितुमशक्यत्वात् । तथाहि—भिन्नाभ्यां हि धर्मिप्रतियोगिभ्यां स निरूप्यः । तत्रायमेव स चेत् आत्माश्रयः अन्यश्चेदन्योन्याश्रयः । तृतीयादेरन्यस्य स्वीकारे चक्रकमनवस्था चेति । तन्त्रान्तरे स्फुटं सामान्यत्वं च केवलान्वयित्वात् ॥ **तद्वृत्तिः** । तद्द्वृत्तिः । एवं च ब्राह्मणभिन्न इत्यर्थः फलितः ॥ **दुरुपदेशो**ऽमुष्मिन्नवकाशे ब्राह्मणमित्यादिः ॥ **मिथ्याज्ञानम्** । प्रकारान्तरेण भ्रमः । ब्राह्मणपदार्थो ब्राह्मण्यम्, तस्य स्वाभाविकी निवृत्तिर्मुख्यब्राह्मण्याभावो द्योत्यते इति वक्रोक्त्या आरोपिततद्वत्ताद्योतको नञ् इत्युक्तं भवति ॥ **यद्यपीहेति** । इह सूत्रेऽन्नार्थे तत्पुरुषसंज्ञेति न निर्दिष्टमित्यर्थः ॥

( आक्षेपभाष्यम् )

**यद्युत्तरपदार्थप्रधानः, अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति ॥**

( प्रदीपः ) **ब्राह्मणमात्रस्येति** । इहानियतगुणस्य गुणविशेषप्रतिपादनाय विशेषणं प्रवर्तते न तदुपघाताय । यदि च नञा ब्राह्मणार्थः प्रतिषिध्यते तदा सर्वात्मना तदर्थस्याभावात् कथं प्राधान्यं स्यात् । तस्मात् तद्गतविशेषावचनाच्चानर्थक एवेति ब्राह्मणाब्राह्मणशब्दयोः पर्यायता प्रसज्येत । अन्वाख्यानाद्धि साधुत्वमेवंभूतस्यार्थवदनर्थकावयवस्य समासस्य स्यात् ॥

( उद्द्योतः ) यदि च नञेति । यदि नञा ब्राह्मणार्थः प्रतिषिध्यते स्वार्थप्रतिषेधरूपाभावविशिष्टो बोध्यते तदाऽभावप्रतियोगी ब्राह्मण इत्यर्थे सर्वात्मना ब्राह्मणेतरव्यावृत्तस्य नञर्थस्याभावात् किंनिरूपितं परिच्छेद्यत्वरूपप्राधान्यं स्यात् । अभावप्रतियोगित्वादेः केवलान्वयित्वात् । तदेवाह—**तद्गतविशेषावचनाच्चानर्थक एवे**त्यादि ॥ नन्वनर्थकत्वे साधुत्वं न स्यादत आह—**अन्वाख्यानाद्धीति** ॥

( समाधानभाष्यम् )

**अन्यपदार्थप्रधानस्तर्हि भविष्यति ॥**

( आक्षेपभाष्यम् )

**यदि अन्यपदार्थप्रधानः 'अवर्षा हेमन्तः' इति हेमन्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि प्राप्नोति ॥**

( प्रदीपः ) **अवर्षा इति** । न चात्र परवल्लिङ्गतास्ति । यस्माऽयासभेदेन द्वन्द्वैकदेशिसमासयोरेव सोक्ता । वचनदोषस्तु यथान्यासेप्यपरिहार्य्य एव । किंच नञ्समासस्यान्यपदार्थप्रधानत्व आश्रीयमाणेऽपवादत्वादनेन बहुव्रीहेर्बाधनादब्राह्मणको देश इत्यादि न सिध्यति । असः असर्वस्मायिति चोत्तरपदार्थस्योपसर्जनत्वात्त्यदादिसर्वनामकार्याप्रसङ्गः **सर्वादीनि सर्वनामानी**त्यत्र संज्ञोपसर्जनस्य प्रतिषेधाभिधानात् ॥

( उद्द्योतः ) **द्वन्द्वैकदेशिसमासयोरिति** । उपमितसमासः समानलिङ्गयोरेवेति भावः । **अब्राह्मणको देश इत्यादि न सिध्यतीति** । नहि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वेवायं समासो, न तद्वन्निष्ठेष्वित्यत्र नियामकमस्तीति भावः ॥ **नञोस्त्यर्थानामिति** तत्सूत्रस्थवार्तिकाद्विषयविभागो लभ्यते । **एतत्तदोरिति** सूत्रेऽनञ्समासग्रहणाच्छिङ्गान्नञिति सूत्रविहितसमासे उपसर्जनत्वप्रयुक्तकार्याभाव इति भाष्याशय इत्यन्ये ॥

( समाधानभाष्यम् )

**पूर्वपदार्थप्रधानस्तर्हि भविष्यति ॥**

( आक्षेपभाष्यम् )

**यदि पूर्वपदार्थप्रधानः, अव्ययसंज्ञा प्राप्नोति । अव्ययं ह्यस्य पूर्वपदमिति ॥**

( प्रदीपः ) **अव्ययसंज्ञेति** । अलिङ्गमसंख्यमव्ययमित्यर्थाश्रयेणाव्ययसंज्ञाविधानादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । पाठेनाव्ययसंज्ञा क्रियते । न च नञ्समासस्तत्र पठ्यते ॥**

( प्रदीपः ) पक्षान्तराश्रयेणापि परिहारा भवन्तीति पाठमाश्रित्याह—**नैष दोष इति** ॥

१ 'ण शब्दादिना' । २ 'दार्थप्रधानः' । ३ 'दार्थप्रधानः' ।
४ अल्पप्रयत्न निरसनीय पक्षमित्यर्थः । सूचीकटाहन्यायेनेति भावः । (र. ना.)
५ भेदरूपोऽभावोऽसत्सामान्यमिति योजना । (र. ना.)
६ अत्रैव सूत्रेऽग्रे वक्ष्यमाणः । ७ 'स्मायादि' ।

(आक्षेपसाधकभाष्यम्)

**यद्यपि नञ्समासो न[१] तत्र पठ्यते, नञ् तु पठ्यते॥ पाठेनाप्यव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भवन्ति। यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसंख्याभ्यां योगोस्ति॥**

(प्रदीपः) **पाठेनापीति**। पाठाभावात्समासस्य मा भूदव्ययसंज्ञा, लिङ्गसंख्यायोगस्तु नञर्थप्रधानत्वान्न प्राप्नोतीत्यर्थः॥

(उद्द्योतः) ननु नञः पाठेपि तदन्तत्वाभावादव्ययत्वाप्राप्तिस्तत्राह[२]—भाष्ये—**पाठेनापीति**। एवं च नञः पाठेनाव्ययतया तदर्थस्य लिङ्गसंख्यानन्वयित्वेन समासेपि तदर्थस्य प्राधान्ये स न स्यादिति भावः॥

(समाधानभाष्यम्)

**नेदं वाचनिकमलिङ्गता असंख्यता वा॥ किं तर्हि?। स्वाभाविकमेतत्। तद्यथा—समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते। अपरे न। न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद्वानर्थक इति सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं कर्तुम्—यन्नञः प्राक् समासाल्लिङ्गसंख्याभ्यां योगो नास्ति, समासे च भवति। स्वाभाविकमेतत्॥**

(प्रदीपः) **नेदं वाचनिकमिति**। वचनं प्रयोजनमस्येति[३] वाचनिकम्। एतदुक्तं भवति—शब्दशक्तिस्वाभाव्याद् सत्त्वरूपमर्थं वाक्ये नञाह, समासे तु सत्त्वरूपम्॥ **केचिदर्थैरिति**। धर्माधर्मवशात्॥

(उद्द्योतः) भाष्ये—**नेदंवाचनिकं**। नेदं वचनप्रयोज्यमित्यर्थः॥ कैयटेपि प्रयोजनमिति करणे ल्युट्॥

(समाधानान्तरभाष्यम्)

**अथ वा आश्रयतो लिङ्गवचनानि भविष्यन्ति। गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। तद्यथा—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति। एवमिहापि यदसौ द्रव्यं श्रितो भवति समासस्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि भविष्यति॥**

(प्रदीपः) **अथ वेति**। ब्राह्मणाभावस्य गुणत्वात् तद्युक्तद्रव्याभिधायित्वाच्च समासस्य क्षत्रियाद्याश्रयगते लिङ्गसंख्ये भविष्यत इत्यर्थः॥ पूर्वत्र स्वाभाविकदर्शने साक्षादेव लिङ्गसंख्यायोगः। इह त्वाश्रयद्वारक इति विशेषः॥ **समास इति**। समासार्थ इत्यर्थः। अत्रापि पक्षे दोषः—यदि तावत् स्वाभाविकदर्शनाश्रीयते तदानेनापवादत्वादव्ययीभावस्य बाधनप्रसङ्गादमक्षिकमित्यादि न सिध्यति। तस्य तु निर्मक्षिकमित्यादिरवकाशः। असर्वस्वायस इत्यादौ च पूर्ववत् स्वायाद्यसिद्धिः स्यात्॥

(उद्द्योतः) **ब्राह्मणाभावस्येति**। ब्राह्मणभेदस्येत्यर्थः॥ **गुणत्वादिति**। आश्रितत्वमत्र गुणत्वम्॥ **तद्युक्तेति**। तद्युक्तद्रव्येऽभेदेनान्वयित्वादित्यर्थस्तद्वक्ष्यति—**यदसौ द्रव्यं श्रित इति** भाष्ये॥ अयं भावः—भेद एव नञर्थः, तस्य चाश्रयेण गुणस्येव तादात्म्यं सम्बन्धः। अब्राह्मणः क्षत्रियः, ब्राह्मणभेदः क्षत्रिये इत्युभयविधव्यवहारदर्शनात्। **गुणवचनानां** गुणोपसर्जनद्रव्यवाचिनाम् **आश्रयत** आश्रयविशेषतो लिङ्गवचनानीत्यर्थः। जात्याश्रयबोधकानां तु नियतलिङ्गतैवेति भावः॥ **इह त्वाश्रयेति**। साक्षाल्लिङ्गसंख्यानाश्रयत्वमेवास्त्वमिति भावः॥ भाष्ये—**यदसौ द्रव्यं श्रित इति**। यद्द्रव्यान्वयीत्यर्थः। उत्तरपदार्थप्राधान्यपरिग्रहस्तुल्यविकल्पाभिप्रायेण न भवतीत्याह—**अत्रापीति॥ अव्ययीभावस्येति**॥ परे तु नञा स नेष्ट एव। असंहितमित्यत्रारोपितं[६] संधानम् परः संनिकर्षः तदभावादद्रुतायां वृत्तौ संहितासंज्ञाप्रयुक्तं कार्यं न प्राप्नोतीत्यर्थ इति न दोषः। अत्यन्ताभावार्थकनञः क्रियागुणमात्रान्वयित्वेनामक्षिकमित्यादावसंहितमित्यादावुत्तरपदार्थाभावाप्रतीत्याऽव्ययीभावाप्राप्तेश्च। अनञ्समासग्रहणात् स्वायादिसिद्धिरप्युक्तेति तुल्यविकल्पाभिप्रायेणैव भाष्यम्॥ अवर्षा हेमन्त इत्यपि प्रतियोगिरूपाश्रयगतलिङ्गादिग्रहणात्सिद्धम्। अभावेन प्रतियोगिनोपि स्वज्ञानायाश्रयणेन तस्याप्याश्रयत्वात् स्वघटितसमासघटक[७]त्वेनोपस्थितत्वाच्चास्यैवाश्रयस्य ग्रहणम्, अन्यथा तद्दोषदूषितपक्षोर्ध्वमाश्रितेपि तद्दोषानुवृत्तौ भाष्यस्य निर्दलतापत्तिः॥ **अथ वा पुनरस्तूत्तरपदार्थप्रधान** इति समकक्षतया पक्षान्तरकथनस्यासंगतिश्चेति वदन्ति॥ अनेकमित्यादौ वचनदोषं तु भाष्यकृदेवाग्रे वक्ष्यति॥

(प्रागुक्तपक्षाश्रयणभाष्यम्)

**अथ वा पुनरस्तु—उत्तरपदार्थप्रधानः॥**

(प्रदीपः) आश्रयद्वारकलिङ्गसंख्याभ्युपगमेप्यवर्षा हेमन्तोनर्थः स्त्रीत्यादौ हेमन्ताद्याश्रयगतलिङ्गसंख्याप्रसङ्ग इत्यालोच्याह—**अथ वेति**। **एतत्तदोः सुलोप** इत्यत्रानञ्समासग्रहणं लिङ्गमुत्तरपदार्थप्रधानत्वस्य। अन्यथैतत्तदोरर्थद्वारेण संबन्धिनः सुशब्दस्य लोपो विधीयमानोऽनेषो ददात्यसो ददातीत्यत्र कथं प्राप्नुयात्॥

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति—इति॥**

(उद्द्योतः) भाष्ये—**ब्राह्मणमात्रस्येति**। अभावो नञर्थः स विशेषणं चेत् अभावप्रतियोगी भेदप्रतियोगी वा ब्राह्मण इति बोधस्तथासति यत्किञ्चिन्निष्ठाभावप्रतियोगिनस्ताद्दशभेदप्रतियोगिनो वा

१ 'न पठ्यते'। २ 'रित्याह'। ३ प्रयोजकमित्यर्थः। (र. ना.) ४ पूर्वपदार्थप्रधानपक्षे इत्यर्थः। (र. ना.) ५ किन्तु दोषादिति भावः। (र. ना.)

६ नञर्थमाह—आरोपितमिति। संधानमित्यस्य व्याख्या परः संनिकर्ष इति। (र. ना.) ७ घटकेनेति पाठो भाति। (र. ना.)

ब्राह्मणस्यैवानयनं प्राप्नोतीत्यर्थः । मात्रशब्देन न शौचाचारादिहीनब्राह्मणस्य नापि क्षत्रियादेरित्यर्थबोधनम् ॥

( समाधानभाष्यम् )

**नैष दोषः । इदं तावदयं प्रष्टव्यः—अथेह राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं कस्मान्न भवति ? ॥ अस्त्यत्र विशेषः—राजा विशेषकः प्रयुज्यते, तेन एवंविशिष्टस्यानयनं भवति ॥ इहापि तर्हि नञ्विशेषकः प्रयुज्यते, तेन नञ्विशिष्टस्यानयनं भविष्यति ॥**

( प्रदीपः ) **नञ्विशिष्टस्येति** । आरोपितब्राह्मण्यस्य क्षत्रियादेरित्यर्थः ॥

( उद्द्योतः ) **राजाविशेषक इति** । यद्यपि पुरुषमात्रस्यैवानयनं दृश्यते न राजविशिष्टस्य तथापि राजसंबन्धिन एवानयनं न यत्किञ्चित्संबन्धिन इति राजा पुरुषस्य विशेषक इति भावः ॥ **नञ्विशिष्टस्येति** । नञ्द्योत्यारोपितब्राह्मण्यविशिष्टस्येत्यर्थः ॥

( आक्षेपभाष्यम् )

**कः पुनरसौ ? ॥**

( प्रदीपः ) **कः पुनरसाविति** । भावाभावयोर्विरोधाद् नञ्विशिष्टो ब्राह्मणार्थो नोपपद्यत इति भावः ॥

( उद्द्योतः ) **कः पुनरिति** । अभावस्यैव नञर्थत्वेन प्रसिद्धत्वात्प्रमितोत्तरपदार्थव्यतिरिक्तः कोसौ नञ्विशिष्ट उत्तरपदार्थ इत्याशयः ॥ ननु नञर्थस्य विशेषणत्वे किं भेदप्रतियोगी ब्राह्मण इत्यर्थः, उत भेदानुयोगी ब्राह्मण इति । भेदे प्रतियोगी चोपस्थितब्राह्मण एवेति ॥ नाद्यः ॥ ब्राह्मणमात्रस्यानयनापत्तेः । नान्त्य इत्याह—**भावाभावयोरिति** । ब्राह्मणत्वब्राह्मणप्रतियोगिकभेदयोरित्यर्थः ॥

( समाधानभाष्यम् )

**निवृत्तपदार्थकः ॥**

( प्रदीपः ) **निवृत्तपदार्थक इति** । निवृत्तः पदार्थो मुख्यं ब्राह्मण्यं यस्मिन् स क्षत्रियादिरर्थः । सादृश्यादिनाध्यारोपितब्राह्मण्यो नञ्द्योतिततदवस्थ इत्यर्थः ॥

( उद्द्योतः ) कप्प्रत्ययप्रयोगसूचितबहुव्रीहिसूचितमर्थमाह—**निवृत्त इति** ॥ सर्वथा निवृत्तपदार्थत्वे विशेषणमेव न युज्येतेत्यत आह—**सादृश्यादिनेति** । आदिना साहचर्यादि, निवृत्तमुख्यब्राह्मण्यादिरारोपिततद्वान् इति भाष्याक्षरार्थः । तदाह—**नञ्द्योतिततदवस्थ इति** ॥ एवञ्चारोपितस्वप्रवृत्तिनिमित्तवानुत्तरपदार्थ इत्यत्र तात्पर्यग्राहको नञिति तात्पर्यम् । उत्तरपदार्थस्य प्राधान्यमप्येतदेवेति बोध्यम् ॥

( नञो वाचकत्वद्योतकत्वान्यतरनिर्णयाधिकरणम् )

( विकल्परूपमाक्षेपभाष्यम् )

**यदा पुनरस्यार्थो निवर्तते । किं स्वाभाविकी निवृत्तिः, आहोस्विद्वाचनिकी ? ॥**

( प्रदीपः ) इदानीं नञो वाचकत्वद्योतकत्वपरीक्षणायाह—**यदा पुनरिति** । किं स्वयं निवृत्तस्य ब्राह्मणपदार्थस्य नञा निवृत्तिर्द्योत्यते । अथ स्थितस्यैव नञा निवृत्तिः क्रियते मन्त्रेणेव विषादिसामर्थ्यस्येति प्रश्नः ॥

( उद्द्योतः ) **यदा पुनरिति** । याऽस्योत्तरपदस्य मुख्यार्थप्रत्ययत्यागपूर्वकमारोपितप्रवृत्तिनिमित्तकार्थबोधकता सा स्वभावसिद्धा उत नञ्वचनेन शक्त्यारोपितत्वस्य वाचकः सन्मुख्यपदार्थप्रत्ययं निवर्तयतीति प्रश्नस्तद् ध्वनयन्नाह—**इदानीमिति** ॥ **किं स्वयमिति** । निवृत्तस्य मुख्यब्राह्मणपदार्थस्य ब्राह्मणत्वस्य निवृत्तिस्तत्पूर्वकमारोपिततद्बोधकत्वं द्योत्यते । अथ स्थितस्यैव मुख्यब्राह्मण्यस्य बोधनिवृत्तिस्तत्पूर्वकं तद्वत्त्वारोपितत्वं नञा शक्त्योच्यत इत्यर्थः ॥ ननु नञ आरोपितत्वे शक्तावपि ब्राह्मणादिपदैर्बोध्यस्य मुख्यब्राह्मण्यादेः कथमबोधोऽत आह—**मन्त्रेणेवेति** । नञ्सामर्थ्यादेव तन्निवृत्तिरित्यर्थः ॥

( विशेषजिज्ञासाभाष्यम् )

**किं चातः ? ॥**

( स्वाभाविकपक्षे दूषणभाष्यम् )

**यदि स्वाभाविकी, किं नञ् प्रयुज्यमानः करोति? ॥**

( प्रदीपः ) **किं नञिति** । ब्राह्मणशब्द एवाराच्छब्द इव दूरमदूरं च विद्यमानब्राह्मण्यमविद्यमानब्राह्मण्यं च क्षत्रियादिकं वक्ष्यतीति नास्ति नञो व्यापार इत्यर्थः ॥

( उद्द्योतः ) **नास्ति नञ् इति** । प्रकरणादिकं च तात्पर्यग्राहकं भविष्यतीति भावः ॥

( वाचनिकपक्षे दूषणभाष्यम् )

**अथ वाचनिकी । तद्वक्तव्यम्—नञ् प्रयुज्यमानः पदार्थं निवर्तयति—इति ॥**

( प्रदीपः ) **अथेति** । नञः पदार्थनिवृत्तौ सामर्थ्यस्याप्रसिद्धत्वादपूर्वमेतद्वक्तव्यमिति सोपालम्भं समुपहसति—**नञ्प्रयुज्यमान इति** । ननु स्वाभाविकनिवृत्तिदर्शने कथं पदार्थं नञ् निवर्तयेद् वाचनिकनिवृत्तिदर्शने ह्येतद्युज्यते वक्तुम् । एवं तर्हि पदार्थप्रत्यय एवोपचारात् पदार्थशब्देनोच्यते यथा 'सिंहमध्यापयेदि'ति सिंहशब्देन माणवक इत्यदोषः । अयमत्रार्थः—केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशात् मुख्य एव ब्राह्मणार्थे प्रत्ययमादधाति, नञ्प्रयोगे तु निवृत्तपदार्थकता ब्राह्मणशब्दस्य प्रतीयते । यथा प्रतिष्ठत इत्यत्र यद्यपि तिष्ठतिरेव गतिवचनस्तथापि तस्मिन् केवले प्रयुज्यमाने प्रस्थानं न गम्यत इति द्योतकत्वेन प्रशब्दोपेक्ष्यते तथेह नञ् ॥ पदार्थशब्देन पदार्थप्रत्यय उपचारादुच्यते ॥

---

१ तदेवं प्रश्नोत्तरं स्वयमेवाह—अस्त्यत्रेति ॥ २ तदुक्तमेवोत्तरं प्रकृते योजयति—इहापीति ॥ ३ उपलक्षक इत्यर्थः । ( र. ना. ) ४ 'पद्यते' । ५ मात्रशब्देन न शौचाचारादिहीनब्राह्मणस्येत्याद्यर्थबोधनम् । ( र. ना. ) ६ नञा द्योतिता ब्राह्मण्याध्यारोपावस्था यस्येत्यर्थः । ( र. ना. ) ७ काशी Bengal Asiatic Society मुद्रितपुस्तकशोधकाभ्यां तु 'कप्रत्यय' इति पाठो रक्षितः । ८ ब्राह्मण्यरूपमिति शेषः । ( र. ना. ) ९ उत्तरपदस्यार्थ इत्यर्थः । ( र. ना. ) १० तथा चोक्तम्—"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" ( २।१।६८ ) न्यायदर्शनसूत्रभाष्ये—'मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगे अर्थस्य तथाभाव एतत्प्रामाण्यम्' वात्स्यायनमहर्षिणा । ११ वचनेनेत्यस्य निवर्तयतीत्यत्र हेतुतयाऽन्वयः नञ्पदं वाचकान्वयि निवर्तयतीत्यस्य कर्तृ । (र. ना.) १२ सोपालम्भमित्यर्थः । (र. ना.) १३ स्वाभाविकनिवृत्तिदर्शनेऽपि 'नञ् प्रयुज्यमानः पदार्थं निवर्तयति' इति वक्ष्यते । ततश्च समानानुपूर्वीकस्योभयत्र पठितवाक्यस्य दर्शनद्वयेऽपि समानार्थकतां व्याख्यातुं शङ्कते—ननु स्वाभाविकेत्यादिना । ( र. ना. )

(उद्द्योतः) पदार्थनिवृत्ताविति । पदार्थप्रत्ययनिवृत्तावित्यर्थः । स्वशक्त्यारोपितत्वाबोधेपि ब्राह्मणादिपदानां स्वशक्त्यार्थबोधकत्वनिवृत्तिर्वचनं[1] विना न शक्या, किं च वचनेनापि तत्कर्तुमशक्यमित्युपहासः ॥ भाष्ये—पदार्थान्निवर्तयतीत्यस्य पदार्थप्रत्ययानित्यर्थः ॥ अमुमेवार्थं शङ्कापूर्वकं दर्शयति—नन्वित्यादिना ॥ ननु शब्दस्य पदार्थनिवृत्तिकरत्ववत्तत्प्रत्ययनिवृत्तिकरत्वमप्यनुपपन्नम्, किं चैवमुत्तरपदार्थप्रत्यय एव न स्यादित्यत आह—अयमन्त्रार्थ इति ॥ निवृत्तपदार्थकतेति । निवृत्तमुख्यप्रवृत्तिनिमित्तप्रत्यायकत्वस्यारोपितप्रवृत्तिनिमित्तकप्रत्यायकतेत्यर्थः ॥ पुनर्दार्ढ्यायोक्तमेव स्मारयति—पदार्थशब्देनेति ॥

(प्रथमपक्षाभ्युपगमभाष्यम्)

**एवं तर्हि—स्वाभाविकी निवृत्तिः ॥**

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—किं नञ् प्रयुज्यमानः करोतीति ॥**

(समाधानभाष्यम्)

**नञ् प्रयुज्यमानः पदार्थं निवर्तयति । कथम्? । कीलप्रतिकीलवत् । तद्यथा—कील आहन्यमानः प्रतिकीलं निर्हन्ति[2] ॥**

(प्रदीपः) कथं पुनः स्वहेतोरुत्पद्यमानः पदार्थप्रत्ययो नञा निवर्त्यत इत्याह—कीलप्रतिकीलवदिति । यथा महता कीलेन प्रतिकील उत्खन्यते । तथा क्षत्रिये सादृश्यादिनिमित्तोत्पन्नस्य ब्राह्मणप्रत्ययस्य नञ्प्रयोगे निवृत्तिरित्यर्थः ॥

(उद्द्योतः) ब्राह्मणप्रत्ययस्य । मुख्यब्राह्मणप्रत्ययस्येत्यर्थः । अनेन द्योतकानां प्रसिद्धार्थशक्त्यनुद्बोधपूर्वकमर्थान्तरशक्त्युद्बोधकत्वं स्वभाव इति बोधितम् । तच्छक्त्यनुद्बोधेनैव तत्पदार्थप्रत्ययनिवृत्तिरिति बोध्यम् ॥

(आक्षेपभाष्यम्)

**यद्येतन्नञो माहात्म्यं स्याद्—न जातु चिद्राजानो हस्त्यश्वं बिभृयुः, नेत्येव राजानो ब्रूयुः ॥**

(प्रदीपः) इतरो यथोक्तमभिप्रायमप्रतिपद्य पदार्थ एव नञा निवर्त्यत इति ज्ञात्वा पर्यनुयुङ्क्ते—यद्येतदिति । प्रतिपक्षनिवारणाय नञमेव प्रयुञ्जीरन् न तु तदर्थं हस्त्यश्वादि बिभ्रीरन्नित्यर्थः ॥

(उद्द्योतः) अभिप्रायमप्रतिपद्येति । केचित्तु यदि नञः[3] शब्दस्य बोधकतासामर्थ्यनिवृत्तिद्योतकत्वं स्यात्तदा तदर्थगतयोद्धृत्वादिसामर्थ्यनिवृत्तिद्योतकत्वमपि स्यादिति भाष्याशयमाहुः[4] ॥

(सिद्धान्तपक्षाभ्युपगमभाष्यम्)

**एवं तर्हि स्वाभाविकी निवृत्तिः ॥**

(प्रदीपः) इदानीमभिप्रायं स्पष्टयितुमाह—एवं तर्हीति ॥

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—किं नञ् प्रयुज्यमानः करोतीति ॥**

(समाधानभाष्यम्)

**नञ्निमित्ता तूपलब्धिः । तद्यथा—समन्धकारे द्रव्याणां समवस्थितानां प्रदीपनिमित्तं दर्शनम् । नच तेषां प्रदीपो निर्वर्तको भवति ॥**

(प्रदीपः) नञ्निमित्तेति । क्षत्रियादौ सादृश्यनिमित्ताध्यारोपितं ब्राह्मण्यं न तु तात्त्विकमिति नञ्प्रयोगेण द्योत्यत इत्यर्थः ॥

(उद्द्योतः) ब्राह्मण्यनिवृत्तेर्नञाऽनभिधानात्[5] नञ्निमित्तेत्यनुपपन्नमित्यत आह—क्षत्रियादाविति । तादृशब्राह्मण्यप्रवृत्तिनिमित्तकोऽस्माद् बोध इति भावः ॥ अयमाशयः—तत्तदर्थकाः शब्दा[6] भिन्नाश्च । नञ्समभिव्याहारे तु तदर्थकोयमिति ज्ञायते, इदमेव नञो द्योतकत्वम् ॥ नञ्निमित्ता तूपलब्धिरिति भाष्यस्य तत्समभिव्याहारे मुख्यब्राह्मणार्थको नायम्, किं तु आरोपिततदर्थकोयमित्युपलब्धिर्निर्णय इत्यर्थः ॥ तदर्थगतयोद्धृत्वादिसामर्थ्यनिवृत्तिद्योतकता तु नास्य स्वभावादेवेति तात्पर्यम् । आरोपितत्वस्य नञ्वाच्यत्वे तु मुख्यब्राह्मणत्ववति गृहीतशक्तिकब्राह्मणपदार्थे तदन्वयो दुरुपपाद इति तदर्थप्रत्ययत्यागो वाच्यः । स चाशक्यः, शब्दार्थसंबन्धस्य नित्यताहानिश्चेति दिक् ॥

(आक्षेपभाष्यम्)

**यदि पुनरयं निवृत्तपदार्थकः ब्राह्मणशब्दः किमर्थं प्रयुज्यते? ॥**

(प्रदीपः) यदि पुनरिति । अर्थप्रत्यायनाय शब्दः प्रयुज्यते । स चेन्निवृत्तः, किमर्थमसौ प्रयुज्यते ॥

(उद्द्योतः) अमुमेवार्थं पुनः प्रश्नप्रतिवचनाभ्यां स्पष्टीकरोति—यदि पुनरित्यादिना ॥ स चेन्निवृत्त इति । ब्राह्मणपदशक्यं यन्मुख्यं ब्राह्मण्यं तस्य निवृत्तौ स्वशक्यस्य बोध्यस्याभावात् तत्प्रयोगो व्यर्थः । अशक्यबोधने तु नञ्मात्रेणापि तदर्थबोधसंभव इति भावः ॥

(समाधानभाष्यम्)

**एवं यथा विज्ञायेत—अस्य पदार्थो निवर्तते इति । नेत्युक्ते संदेहः स्यात्—कस्य पदार्थो निवर्तत इति । तत्रासंदेहार्थो ब्राह्मणशब्दः प्रयुज्यते । एवं चैतत् ॥**

(प्रदीपः) एवं यथेति । प्रतिषेधविषयप्रदर्शनाय बुद्ध्या[11] ब्राह्मणार्थं निरूप्य तस्य क्षत्रियादौ मुख्यसत्ताविरहप्रतिपादनाय नञ्सहितो ब्राह्मणशब्दः प्रयुज्यत इत्यर्थः ॥

---

१ स्वशक्यार्थबोधकत्वनिवृत्तिरिति पाठो भाति । (र. ना.) २ स्वकर्तृकनिर्घातेनोद्धरतीत्यर्थः । अत्र निरुपसर्गपूर्वो हन्तिर्निर्घातकरणके उद्धरणे वर्तते । (र.ना.) ३ नञ इति द्योतकत्वान्वयि । शब्दस्येति सामर्थ्यान्वयि । (र. ना.) ४ आहुरित्यरुचिबीजं तु अनया रीत्या नञस्तदर्थगतयोद्धृत्वादिसामर्थ्यनिवृत्तिद्योतकत्वेऽपि तादृशनिवृत्त्यकारकत्वेन राज्ञां हस्त्यश्वधारणोपयोगसंभवेन प्रकृतभाष्यासंगत्यापत्तिरिति । (र. ना.) ५ किन्तु अध्यारोपितब्राह्मण्यस्य द्योतनादिति भावः । (र. ना.) ६ शब्दास्तत्तदर्थका भिन्नाश्चेति संबन्धः । (र.ना.) ७ अत्र यद् वक्तव्यं तत्पूर्वमेवोक्तम् । (र.ना.) ८ अर्थप्रत्यय इत्यर्थः । (र.ना.) ९ एतत्कैयटदर्शनेन 'यदि पुनर्निवृत्तपदार्थको ब्राह्मणशब्दः किमर्थमयं प्रयुज्यते' इति भाष्ययोजना प्रतीयते । निवृत्तः पदार्थः पदार्थप्रत्ययो यस्येति तदर्थः । अयमित्यनेन च ब्राह्मणशब्दस्य परामर्शः । प्रकृतभाष्यस्यान्यथाऽपि योजना संभवति । तथाहि-यदि पुनरयं नञ्शब्दो निवृत्तपदार्थकः, निवृत्तः पदार्थो यस्मादिति व्युत्पत्त्याऽऽरोपितत्वबोधनमुखेन मुख्यब्राह्मण्यप्रत्ययनिवृत्तिहेतुभूत इत्यर्थः । शेषं पूर्ववत् । वस्तुतस्तु पूर्वयोजनैव ज्यायसी । इदंशब्देन श्रौतसन्निहितब्राह्मणशब्दपरामर्शापेक्षया प्राकरणिकनञ्शब्दपरामर्शस्यानुचितत्वात् । किञ्च निवृत्तपदार्थकइत्यस्य ब्राह्मणशब्दविशेषणत्वे तत्प्रयोगवैयर्थ्ये हेतुविधया साक्षात्तस्योपयोगो नेतरस्मिन् पक्षे इति रम्योयं पन्थाः। (र.ना.) १० तत्प्रत्ययस्येत्यर्थः । एवमग्रेऽपि 'स्वशक्यस्य बोध्यस्येत्यत्र तत्प्रत्ययस्येत्यर्थो बोध्यः । (र. ना.) ११ ब्राह्मणार्थं ब्राह्मण्यं क्षत्रियादौ बुद्ध्याऽऽरोप्येत्यर्थः । (र. ना.)

(उद्योतः) प्रतिषेधविषयेति । नञो द्योतकतया समभिव्याहृतपदशक्त्युद्बोधकत्वं वाच्यं, तच्च पदान्तरप्रयोगं विना न संभवतीति तत्पदोपादानमिति तात्पर्यार्थः। अस्य पदस्य मुख्योर्थः प्रवृत्तिनिमित्तरूपो निवृत्तः गौणश्चोपजात इति विज्ञायेतेति तु भाष्याक्षरार्थः ॥ भाष्ये—नेत्युक्ते संदेहः स्यादिति । समभिव्याहृतपदस्य बोधकस्याभावात् निवृत्तिरूपार्थस्य प्रतियोग्याकाङ्क्षाया अनिवृत्तेरबोधकत्वेन च तदप्रयोग एव स्यात् । नन्वस्तु वाचकत्वमेवेति चेत्, एवमपि संदेहः स्यादिति भावः । तदाकारं दर्शयति—कस्य पदार्थ इति । कस्य पदस्य पदार्थ इत्यर्थः । अभिधेयपरः पदार्थशब्द इति तात्पर्यम् ॥ संदेहपदेन निर्णयाभावो विवक्षित इति तत्त्वम् ॥ एवं चैतदिति । एवमेवैतदित्यर्थः । लक्षणाप्यसन्नये इयमेव, यत आरोपितप्रवृत्तिनिमित्तकस्य बोधः । तत्र नञ्समभिव्याहारे निवृत्तमुख्यब्राह्मण्यको ब्राह्मणशब्दार्थं इति बुद्धे आरोपितत्तत्कार्थकत्वं फलतीति बोध्यम् ॥

(समाधानभाष्यम्)

अथ वा सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति ॥

तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् ॥
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥ १ ॥

तथा गौरः शुच्याचारः पिङ्गल कपिलकेश इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति ॥ समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । तद्यथा—पूर्वे पञ्चालाः । तैलं भुक्तम् । घृतं भुक्तम् । शुक्लो नीलः कपिलः कृष्ण इति । एवमयं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते जातिहीने गुणहीने च । गुणहीने तावत्—'अब्राह्मणोयम् यस्तिष्ठन् मूत्रयति' 'अब्राह्मणोयं, यस्तिष्ठन्भक्षयति' ॥ जातिहीने संदेहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । संदेहात्तावद्गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाध्यवस्यति ब्राह्मणोऽयमिति । तत उपलभते नायं ब्राह्मणः=अब्राह्मणोऽयमिति । तत्र संदेहाद् ब्राह्मणशब्दो वर्तते । जातिकृता चार्थस्य निवृत्तिः ॥ दुरुपदेशाच्च । दुरुपदिष्टमस्य भवति, अमुष्मिन्नवकाशे ब्राह्मणस्तमानयेति । स तत्र गत्वा यं पश्यति तमध्यवस्यति ब्राह्मणोयमिति । ततश्च पश्चादुपलभते नायं ब्राह्मणः=अब्राह्मणोयमिति [निर्ज्ञातं तस्य भवति] । तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । जातिकृता चार्थस्य निवृत्तिः ॥ आतश्च संदेहाद् दुरुपदेशाद्वा । न ह्ययं कालं माषराशिवर्णमापणे आसीनं दृष्ट्वाध्यवस्यति ब्राह्मणोयमिति निर्ज्ञातं तस्य भवति ॥

(प्रदीपः) सर्वे इति । तत्र यस्यैव गुणस्य स्वाभाविकी निवृत्तिस्तस्यैवासौ नञा द्योत्यते । अवशिष्टानां तु गुणानामर्थात्सद्भावो गम्यते । गुणशब्देन चात्र धर्ममात्रं पराश्रयमुच्यते ॥ स्मृतिशास्त्राश्रयेण निदर्शनाय ब्राह्मणस्य गुणानाह—तप इति । तपश्चान्द्रायणादिकर्म । श्रुतं वेदवेदाङ्गादीनामध्ययनम् । योनिर्ब्राह्मणाद् ब्राह्मण्यां जन्म ॥ ब्राह्मणकारकमिति । शेषषष्ठीसमासः, ब्राह्मणव्यपदेशस्यैतत्कारकं निमित्तमित्यर्थः ॥ गुणसमुदायाभावेपि तदेकदेशे प्रयोगदर्शनादाह—तपःश्रुताभ्यामिति । अधुना लोकप्रसिद्धान् बाहुल्येन तथा दृष्टान् गुणानाह—गौर इति । पूर्वे पञ्चाला इति । अवयवे समुदायरूपारोपाच्छब्दवृत्तिर्विज्ञेया न तु शब्दः स्वार्थं परित्यज्यार्थान्तरं वक्तुं समर्थः शब्दार्थसंबन्धस्यानित्यताप्रसङ्गात् ॥ तैलमिति । यदा संस्कारादियुक्तं विशिष्टमात्रापरिमितं समुदायमाह तैलशब्दस्तदा समुदायवचनोऽन्यदा तु जातिशब्द एवायम् ॥ शुक्ल इति । स्वयमशुक्लोऽप्यवयवः शुक्लावयवान्तरासादितशौक्ल्यसमुदायरूपारोपेण शुक्लशब्दाभिधेयस्तदेदमुदाहरणम् । स्वयं त्ववयवस्य शौक्ल्ये मुख्य एव शुक्लशब्दः ॥ यस्तिष्ठन्निति । तपःश्रुतयोरभावान्निन्दयात्राऽब्राह्मणशब्दप्रयोगस्तत्र जातिमात्रे अवयवे समुदायरूपारोपाद्ब्राह्मणशब्दप्रयोगो नञा तु स्वाभाविकी तपःश्रुतनिवृत्तिर्द्योत्यते । न च भिन्नविषयत्वं पूर्वपदोत्तरपदयोराशङ्कनीयम् । द्वयोरपि समुदायविषयत्वात्तदेकदेशनिवृत्तिसद्भावप्रतिपादनद्वारेण ॥ जातिहीने इति । तत्र शुक्ला

---

१ वस्तुतस्तु आरोपिततत्कार्थकत्वे बुद्धे निवृत्तमुख्यब्राह्मण्यको ब्राह्मणशब्दार्थ इति फलतीति वाच्यम् । आरोपितत्वस्य नञा द्योत्यत्वात् । (र. ना.)

२ जन्ममात्रयुक्तब्राह्मणव्यपदेशवानेव स न तु तपःश्रुताभ्यामपीति भावः । (र.ना.)

३ केचिल्लौकिका एतानपि गुणान् ब्राह्मण्ये ब्राह्मणशब्दार्थगुणसमुदायेऽभ्यन्तरानन्तर्गतान् कुर्वन्ति वर्णयन्तीति योजना । (र. ना.) ४ नञ् समभिव्याहाराभावे इत्यादिः । (र. ना.) ५ नञ्समभिव्याहारे इत्यादिः । (र. ना.)

६ जातिकृतेति । अनेन जातिं ब्राह्मणाद्ब्राह्मण्यां जन्म विना नैव ब्राह्मण्यम् । तपःश्रुते तु ब्राह्मणाग्र्यत्वसंपादके 'त्रीणि यस्यावदातानि' इति वक्ष्यमाणस्मृतेः । ७ क्षत्रियादितो जन्ममात्रयुक्ता ब्राह्मण्यस्य निवृत्तिरित्यर्थः । कैयटे तु जात्यभावे लक्षणोक्ता । (र. ना.) ८ तथाच बौधायनगृह्यसूत्रे प्रथमप्रश्ने सप्तमेऽध्याये—

ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते ॥ १ ॥
उपनीतमात्रो व्रतानुचारी वेदानां किंचिदधीत्य ब्राह्मणः ॥ २ ॥
एकां शाखामधीत्य श्रोत्रियः ॥ ३ ॥
अङ्गाध्याय्यनूचानः ॥ ४ ॥
कल्पाध्यायी ऋषिकल्पः ॥ ५ ॥
सूत्रप्रवचनाध्यायी भ्रूणः ॥ ६ ॥
चतुर्वेदादृषिः ॥ ७ ॥
अत ऊर्ध्वं देवः ॥ ८ ॥

इति सूत्राणि समुपलभ्यन्ते ॥ एवंच भाष्यलिखितस्मृतौ "जातब्राह्मण" इति पाठो भवेत् ॥ तथा सति जातसंज्ञको ब्राह्मण इत्यर्थो भवेत् ॥ यद्वा जातमात्रो ब्राह्मण इत्युत्तरपदलोपी समासो भवेत् । तथाचोक्तं दक्षेण—

"जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः ।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शितः ॥
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये ऋतानृते ।
अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते ॥
उपनीते तु दोषोस्ति क्रियमाणैर्विगर्हितैः ।
अप्राप्तव्यवहारोऽसौ बालः षोडशवार्षिकः ॥" इति ॥

वस्तुतस्तु यदि जातब्राह्मण इत्यस्य जातिब्राह्मण इत्यनेन समानार्थकता स्यात्तदा भवत्पाठकल्पनारोचेत । न चैतदस्ति, जातिब्राह्मण इति पाठे वृद्धोऽपि यदि तपःश्रुताभ्यां हीनस्तदा जन्मनैव ब्राह्मण इत्यर्थस्यापि संग्रहात् । अतएव स्मृतौ 'यो हीन' इति सामान्येनोपात्तं, नत्वनष्टवर्ष इत्युक्तम् । भवत्पाठकल्पनायां तु सामान्येन प्रवृत्तस्य वाक्यस्य विशेषपरतया संकोचः क्रियते । किंच कैयटोऽपि 'गुणसमुदायाभावेऽपीत्यादिनाऽविशेषपरतया व्याचक्षाणो 'जातिब्राह्मण' इति पाठमेवाभिमैति । उद्द्योतेऽपि जातिपदवदित्युक्तम् । (र. ना.) ९ ब्राह्मणवृत्तित्वेन दृष्टानित्यर्थः । (र. ना.)

ब्राह्मणशब्दस्य प्रवृत्तिरध्ययनादिगुणसद्भावप्रतिपादनाय ॥ **संदेहादिति** । संदेहनिमित्तं गुणः संदेहशब्देनोक्तः गुणैकदेशदर्शनाच्च गुणसमुदायस्य संनिधिमवसाय यदा प्रमाणान्तरेण जात्यभावं प्रतिपद्यते तदा तद्द्योतनाय नञं प्रयुङ्क्तेऽब्राह्मणोऽयमिति ॥ **जातिकृतेति** । जात्यभावकृतेत्यर्थः । यथा वर्षकृतं दुर्भिक्षमिति ॥ **अर्थस्येति** । समुदायस्येत्यर्थः ॥ अयमत्रार्थः—एकदेशविगमात्समुदायो निवृत्त उच्यते, एकदेशान्तरसद्भावाच्च तस्य सद्भावोऽभिधीयते । यथैकदेशकरणाकरणाभ्यां कृताकृतः संघात उच्यते ॥ **माषराशिवर्णमिति** । कालविशेषप्रतिपादनपरमेतत् ॥ **आपणआसीनमिति** । आचाराभावकथनम् ॥ **निर्ज्ञातमिति** । भ्रान्तिबीजाभावाद् यथास्थितं वस्तुतत्त्वं तस्य ज्ञातमिति ब्राह्मण्यारोपाभावाद् ब्राह्मणशब्दस्य तत्राप्रयोगादब्राह्मणशब्दस्यापि प्रयोगाभाव इत्यर्थः ॥

**( उद्योतः )** इदानीं प्रकारान्तरेणापि नञो द्योतकत्वं व्युत्पादयति—भाष्ये—**अथ वा सर्वे एते इति** ॥ **अवशिष्टानामिति** । तथाच तद्गुणप्रतिपादनाय ब्राह्मणशब्दप्रयोगः, निवृत्तगुणानां निवृत्तिप्रतिपादनाय च नञ्प्रयोग इत्यर्थः । अयमेव **एवमयं समुदायेइत्यादि**भाष्यार्थः ॥ एवं च गुणसमुदायवति शक्तस्य ब्राह्मणशब्दस्यार्थे कतिपयगुणाभावप्रतिपादको नञिति भावः ॥ तपःश्रुतादिसंग्रहायाह—**गुणशब्देनेति** ॥ याजनादिसंग्रहायाह—**निदर्शनायेति** ॥ **कर्तरि चेति** समासनिषेधमाशङ्क्याह—**शेषषष्ठीसमास इति** ॥ एषां ब्राह्मणोत्पादकत्वाभावादाह—**व्यपदेशस्येति** । **गुणसमुदायाभाव इति** । तत्र गौणः प्रयोग इत्यत्र जातिपदवन्नञपि कञ्चित्तात्पर्यग्राहक इति भावः ॥ **बाहुल्येनेति** । तथा चैते गुणा व्यभिचारिण इति भावः ॥ **पिङ्गलकपिलकेश** इति भाष्ये एकं पदं, पिङ्गलाः कपिलाः केशा यस्येत्यर्थः । यद्वा **पिङ्गल** इति वर्णः **गौर** इत्यस्य तु—

**'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते ।**
**सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः ॥**

इत्यर्थः ॥ **ब्राह्मण्ये** ब्राह्मणशब्दार्थगुणसमुदाये ॥ **कुर्वन्ति** केचिल्लौकिका इत्यर्थः ॥ **पूर्वे पञ्चाला** इत्यादि ग्रन्थः पस्पशायां व्याख्यातः ॥ भाष्ये—**जातिहीने** इत्यादि सामान्येनैकवचनम् । तेनावयवेष्विति प्रागुक्तेन सामानाधिकरण्यमुपपन्नम् ॥ **न च भिन्नविषयत्वमिति** । नञा यत्किंचिद्विषयनिवृत्तेर्ब्राह्मणपदेन यत्किञ्चिद्गुणसत्त्वस्य प्रतिपादनेन पूर्वोत्तरपदयोरसामर्थ्यात्समासो न स्यादिति भावः ॥ **द्वयोरपीति** । एकदेशनिवृत्त्यादिद्वारा समुदायस्यैव निवृत्त्यादिप्रतिपादनादस्त्येव सामर्थ्यमिति भावः ॥ नञ्समभिव्याहारे श्रुतादिगुणनिवृत्तिद्योतनद्वारा जन्मनिमित्तो ब्राह्मणशब्द इति फलतीत्येकविषयत्वमित्यत्र तात्पर्यम् ॥ जात्यारोपस्य निमित्तं फले आह—**तत्र स्तुत्येति** ॥ भाष्ये—**दृष्ट्वाध्यवस्यतीति** । अध्यवसायाकारो **ब्राह्मणोयमिति** ॥ **तत उपलभते नायं ब्राह्मण** इति प्रत्यक्षमुक्तम् । तस्य चारोपमूलकता दर्शिता ब्राह्मणत्वाध्यवसायोत्तरत्वोक्त्या ॥ **अब्राह्मणोयमितीति** । अस्य **तत** इत्यादिः ॥ **प्रयुङ्क्ते** इति शेषः ॥ अर्थैकदेशस्येति वक्तव्येऽर्थस्येत्युक्तमत आह—**अयमत्रार्थ इति** ॥ **एकदेशविगमादिति** । एवं चोभयप्रतिपादनायोभयप्रयोग इति भावः ॥ भाष्ये—**दुरुपदेशादिति** । असम्यगुपदेशादिति तदर्थः । एतद्भाष्ये अब्राह्मणोऽयमित्युत्तरं निर्ज्ञातं तस्य भवतीत्यपाठोऽनुपयोगात् ॥

**( फलान्तरसंग्रहभाष्यम् )**

**इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये सति संगृहीतं भवति ॥ किम् ? ॥ अनेकमिति ॥ किमत्र संगृहीतम् ? । एकवचनम् ॥**

**( प्रदीपः )** तदेवं दोषपरिहारादुत्तरपदार्थप्रधानत्वं स्थापितम् । इदानीं तत्रैवोपचयमाह—**इदं खल्वपीति** । अनेकमित्युत्तरपदार्थप्रधानत्वे सति प्रधानगतसंख्याश्रयमेकवचनं सिध्यति नान्यथेत्यर्थः ॥

**( उद्योतः )** **नान्यथेति** । पूर्वपदार्थप्राधान्ये भिन्ने एकत्वानवगतेरेकवचनं न सिध्यतीत्यर्थः । एवमन्यपदार्थप्राधान्येपि तदसिद्धिः ॥

**( आक्षेपभाष्यम् )**

**कथं पुनरेकस्य प्रतिषेधे [द्वि]बहूनां संप्रत्ययः स्यात् ? ॥**

**( प्रदीपः )** **कथं पुनरिति** । अनेकशब्दो यदि बहूनां वाचकस्तदा बहुवचनं प्राप्नोति । अथैकत्वप्रतिषेधमात्रमस्यार्थस्तदाऽनेको जन आगत इति बहूनां संप्रत्ययो न प्राप्नोति ॥

**( उद्योतः )** **एकप्रतिषेधमात्रमिति** । एको न भोजनीय एको जनो नागत इत्येवंरूप इत्यर्थः ॥ **बहूनां संप्रत्यय इति** । एको नागत इत्येव प्रतीतेरिति भावः । [3]औपकात् प्रसज्यप्रतिषेधेपि नञ्समासो जायत इत्यभिप्रायः ॥ एकत्वप्रतिषेधमात्रमिति पाठोऽपपाठः ॥

**( समाधानभाष्यम् )**

**प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति । तद्यथा—आसय शायय भोजय अनेकमिति ॥**

**( प्रदीपः )** **प्रसज्यायमिति** । विधायेत्यर्थः । निराश्रययोश्च तयोरसंभवादनियतसंख्यद्रव्याक्षेपे सत्येक[4]प्रतिषेधाद्बहूनां प्रतीतिरित्यर्थः । एतच्च प्रसज्यप्रतिषेध उच्यते । पर्युदासे तु द्व्यादिसंख्यायुक्त एवानेकशब्दस्यार्थः । यस्माद् द्व्यादिष्वेकत्वमारोप्य प्रतिषेध्यते यथा क्षत्रियादौ ब्राह्मणत्वम् । ततो यथा अब्राह्मणः क्षत्रियादिरुच्यते तथा अनेकशब्देन संख्यान्तरयुक्तः ॥

**( उद्योतः )** भाष्ये—**क्रियागुणाविति** । गुणोदाहरणं अनेकमिन्रूपं रस इत्यादि ॥ एकं न भोजयेदित्येकनिषेधाय प्रसञ्जनस्य चारितार्थ्यात् कथं बहुत्वावगतिस्तत्राह—**निराश्रययोरिति** । गुणक्रिययोरित्यर्थः ॥ **एतच्च प्रसज्येति** । एवं च तदाश्रयेणैकदेशिनः शङ्कायां तमभ्युपेत्यैव प्रसज्यप्रतिषेधपदार्थं निर्णेतुमुत्तरमुक्तमिति भावः ॥ **तथानेकशब्देनेति** । आरोपितैकत्ववानित्यर्थः ।

१ अध्ययनादिगुणसद्भावो निमित्तं स्तुतिः फलमिति भावः । ( र. ना. ) २ फलाधिक्यमित्यर्थः । ( र. ना. ) ३ असूर्यललाटयोरित्यादिरूपादित्यादिः । ( र. ना. ) ४ एकस्मिन् क्रियागुणयोः प्रतिषेधादित्यर्थः । प्रसज्यप्रतिषेधपक्षप्रस्तावादिति । ( र. ना. )

एवं च पर्युदासपक्षे बहूनां प्रतीतिः सुलभैवेति भावः । तत्र द्वित्वादिनिर्णयस्तु तात्पर्यवशादिति बोध्यम् । आरोपितैकत्ववस्त्वेनैव बोधाच्चैकवचनसिद्धिः । एवं चानेके इति बहुवचनमसाध्वेवेति बोध्यमिति मञ्जूषायां विस्तरः ॥

( आक्षेपभाष्यम् )

**यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्र क्रियागुणौ प्रसज्येते । यत्र तु खलु पुनर्न प्रसज्येते तत्र कथम्—अनेकं तिष्ठतीति ? ॥**

( प्रदीपः ) यत्र तु खल्विति । यत्र तु पूर्वमेव प्रतिषेधः पश्चात् क्रियागुणविधानं तत्र कथं बहूनां संप्रत्यय इति प्रश्नः ॥

( उद्द्योतः ) यत्र तु पूर्वमेवेति । तत्र पूर्वं क्रियोपस्थित्यभावादनियतसंख्यद्रव्याक्षेपाभावेनैको न तिष्ठतीत्येव बोधपर्यवसानादिति भावः ॥

( समाधानभाष्यम् )

**भवति चैवंजातीयकानामप्येकस्य प्रतिषेधेन बहूनां संप्रत्ययः । तद्यथा—न न एकं प्रियम्' 'न न एकं सुखमिति ॥**

(प्रदीपः) भवतीति । अयमर्थः—आख्यातस्य पश्चात्प्रयोगोऽस्तु पूर्वं वा । धात्वर्थेन तावत्कारकस्याक्षेपोऽवश्यंभावीति तत्रैकप्रतिषेधसामर्थ्यादेव द्वित्वादियोगिसाधनाक्षेपः ॥ न न इति । आबाधे चेति द्विर्वचनम् । शत्रोः प्रियेण सुखेन च प्रयोक्तुराबाधा । न इति वा षष्ठी । अत्रैकप्रतिषेधसामर्थ्यादेव संख्यान्तरयुक्तवस्तुप्रतीतिः । अन्यथा न प्रियमित्येव वाच्यं स्यात् । तस्माद्यत्र वाक्येऽपि सामर्थ्यात्संख्यान्तरगतिर्भवति तत्र समासे वाक्यविलक्षणधर्मप्रादुर्भावहेतौ किं न भविष्यतीत्युक्तं भवति ॥

( उद्द्योतः ) न न एकमित्यत्र द्वयोर्नञोः प्रकृतार्थगमकत्वात् प्रियस्यैकत्वमेव प्रतीयेत न बहुत्वमत आह—आबाधे इति ॥ षष्ठीति । आबाधाया अप्रतीतेस्तत्प्रतीतेरनुपयोगाच्चेति भावः । नोऽस्माकमेकं प्रियं न किं त्वनेकमिति तदर्थः । एवमेको न तिष्ठतीत्यादावेकस्थितिनिषेधेऽपि अनेकस्थितिबोधो द्रष्टव्यः ॥

( भावप्रत्यये स्वरदोषपरिहाराधिकरणम् )

( आक्षेपभाष्यम् )

**इहाब्राह्मणत्वमब्राह्मणता परत्वात् त्वतलौ प्राप्नुतः ॥ तत्र को दोषः ? । स्वरे हि दोषः स्यात् । अब्राह्मणत्वमित्येवं स्वरः प्रसज्येत । अब्राह्मणत्वमिति चेष्यते ॥**

( समाधानभाष्यम् )

**नञ्समासे भाववचने उक्तम् । किमुक्तम् ? । *त्वतलभ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् * इति ॥ नञ् ॥ ६ ॥**

( प्रदीपः ) अब्राह्मणत्वमिति । न ब्राह्मणस्य भाव इति युगपद्भावप्रतिषेधसंबन्धविवक्षायां प्रत्ययसमासप्रसङ्गे यदि परत्वात् प्रत्ययः स्यात्, पुनःप्रसङ्गविज्ञानाच्च पश्चान्नञ्समासः क्रियते, तदा तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरेणाद्युदात्तं पदं स्यात्, प्रत्ययस्वरश्चेष्यत इति नञ्समासे तु कृते त्वतलौ कार्यौ । तत्र भावप्रत्ययस्तावत्प्रकृत्यर्थस्य सापेक्षत्वादसामर्थ्यान्न भवति नञ्समासस्तु प्रधानस्य सापेक्षत्वाद्भवतीत्याहुः ॥ ६ ॥

( उद्द्योतः ) भाष्ये—त्वतलभ्यामिति । पूर्वपदार्थप्राधान्याश्रयेण वार्तिकारम्भः, उत्तरपदार्थप्राधान्ये तु असामर्थ्यात् पूर्वं भावप्रत्ययानुत्पत्तिरेवेति तत्सूत्रे भाष्ये स्पष्टम् तदाह—तत्र भावेति ॥ ६ ॥

( २७२ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ० ६ )

## ४२७ ईषदकृता ॥ २ । २ । ७ ॥

( इष्टानुपपत्तिनिराकरणाधिकरणम् )

( १३४५ समासविधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ईषद् गुणवचनेन ॥ * ॥

**ईषद् गुणवचनेनेति वक्तव्यम् । अकृतेति ह्युच्यमाने इह च प्रसज्येत—ईषद्गार्ग्यः, इह च न स्यात्—ईषत्कडार इति ॥ ईषद् ॥ ७ ॥**

( प्रदीपः ) ईषत् ॥ ७ ॥ ईषद्गार्ग्य इति । यथैकार्थसमवेतक्रियागुणापेक्षया जातेः प्रकर्षादियोगः गार्ग्यतरो गार्ग्यकल्पो गार्ग्यपाश इति तथेषदर्थेनापि योगः ॥ ईषत्कडार इति । गडेः कड चेत्यारन्प्रत्ययान्तत्वात् कृदन्तः कडारशब्दः ॥ क्रियाकारकसंबन्धस्यासंप्रत्ययादकृदन्त इति केचिदाहुः । तदयुक्तम् । कृच्छब्देन हि कृत्संज्ञकः प्रत्यय उच्यते ॥ अथाप्युणादीनामव्युत्पत्तिपक्षाश्रयणादत्र समासः स्यात्, तथापीषद्भुक्त ईषदुन्नत इत्यत्र न स्यात् ॥ ७ ॥

( उद्द्योतः ) ईषद् ॥ ७ ॥ ननु जातावीषदर्थान्वयासंभवादेवासमासः सिद्धोऽत आह—यथैकेति । गोत्रं चेति गार्ग्यत्वस्य जातित्वम् ॥ गडेरिति । कडमदे इति स्वादौ पठितादारन्यपि सिध्यति ॥ यद्यपीति । उणादयो बहुलमिति शास्त्रारम्भात्सर्वमौणादिकमव्युत्पन्नमिति नियम इति भावः ॥ ७ ॥

( २७३ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ. ७ )

## ४२८ षष्ठी ॥ २ । २ । ८ ॥

( इष्टानुपपत्तिनिराकरणाधिकरणम् )

( १३४६ समासप्रतिप्रसववार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कृद्योगा च ॥ * ॥

**कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् । इध्मप्रव्रश्चनः । पलाशशातनः ॥**

१ इदं बहूनामित्यनेनाभेदान्वयि । न तु एकपदार्थापेक्षया निर्धारणे षष्ठी । अनुपयोगात्, बहुषु एवंजातीयकत्वस्य स्थितिक्रियाकर्तृत्वरूपस्याप्रतिपत्तेश्चेति बोध्यम् । ( र. ना. ) २ एकप्रतिषेधेत्यादिः । ( र. ना. ) ३ ब्राह्मणशब्दार्थस्येत्यादिः । ( र. ना. ) ४ प्रकृत्यर्थस्य प्रधानीभूतपूर्वपदार्थसापेक्षत्वेऽपि सामर्थ्यहानात् परत्वात्त्वतलोः प्रसक्तेरिति भावः । ( र. ना. ) ५ तादृशापेक्षाहेतुकः प्रकर्षादियोग इत्यर्थः । ( र. ना. ) ६ न तु तत्र क्रियाकारकसंबन्धसंप्रत्ययोऽप्यपेक्षित इति भावः । ( र. ना. )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

**( प्रदीपः ) षष्ठी ॥ ८ ॥ किमर्थमिति ।** सूत्रेणैवात्र समासः सिद्ध इति प्रश्नः ॥

( समाधानभाष्यम् )

*** प्रतिपदविधाना च षष्ठी न समस्यते * इति वक्ष्यति । तस्यायं पुरस्तादपकर्षः ॥**

**( प्रदीपः ) अपकर्ष इति ।** अपवाद इत्यर्थः ॥

**( उद्योतः ) षष्ठी ॥ ८ ॥** भाष्ये—वक्ष्यतीति । न निर्धारणे इत्यत्रेति शेषः ॥ उत्कर्षप्रतिद्वन्द्व्यर्थकापकर्षशब्दस्यानन्वयादाह—अपवाद इतीति । अपकृष्यतेऽनेनोत्सर्ग इत्यपकर्षोऽपवाद इत्यर्थः ॥

( आक्षेपभाष्यम् )

**का पुनः षष्ठी प्रतिपदविधाना, का च कृद्योगा ? ॥**

**( प्रदीपः ) का पुनरिति ।** प्रतिपदविधानायामपि समासप्रतिषेधविषये कृद्योगोऽस्ति कृद्योगायामपि प्रतिपदविधानमिति विषयविभागाज्ञानात् पृच्छति ॥

**( उद्योतः ) प्रतिषेधविषये ।** सर्पिषो ज्ञानमित्यादौ ॥

( समाधानभाष्यम् )

**सर्वा षष्ठी प्रतिपदविधाना शेषलक्षणां वर्जयित्वा । "कर्तृकर्मणोः कृति" इति तु या षष्ठी सा कृद्योगा ॥**

**( प्रदीपः ) सर्वा षष्ठीति ।** साक्षाद्धातुकारकविशेषोपादानेन विधानात् प्रतिपदविधानेत्यर्थः । कृच्छब्दोपादानेन तु या विहिता सैव कृद्योगोच्यते । तत्र शेषविवक्षायां **षष्ठी शेष** इत्यनेनैव सिद्धायां षष्ठ्यां **ज्ञोऽविदर्थस्य करण** इत्यादिप्रकरणं समासनिवृत्त्यर्थमेवारब्धम् । षष्ठी भवत्येव श्रूयते एव, न तु तस्याः समासो भवतीत्यर्थः । समासे हि सति तस्या अभावः स्यात् । तस्मात्**प्रतिपदविधाने**ति न वक्तव्यम् । तस्मिन्ननुच्यमाने **कृद्योगे**ति न वक्तव्यम् । अशेषविषये विधानार्थत्वात्, **कर्तृकर्मणोः कृती**त्यस्य समासनिवृत्तौ सामर्थ्याभावात् सूत्रेणैव समासस्य सिद्धत्वात् ॥

**( उद्योतः ) कारकविशेषेति । कर्तृकर्मणो**रित्येवमित्यर्थः । **इत्यादिप्रकरणमिति ।** तत्र शेष इत्यनुवृत्तेरिति भावः ॥ **शेषलक्षणा**मित्यस्य शेषमात्रलक्षणामित्यर्थं इति तात्पर्यम् ॥ **समासनिवृत्त्यर्थमेवेति ।** तत्तद्धातुयोगे उपात्तकारकातिरिक्तकारकाणां शेषत्वविवक्षाभावज्ञापनेपि चारितार्थ्यसंभवादिदं चिन्त्यम् । किञ्च लुगभाव एव कल्प्येत । यदि त्वेतद्वार्तिकबलात्समासाभावकल्पनं तदा तदावश्यकमेव । सूत्राण्यपि तत्रानुवादायावश्यकानीति **न वक्तव्यं प्रतिपदविधानेतीति** चिन्त्यम् ॥ किञ्च तस्य वचनस्य सत्त्वे **दिवस्तदर्थस्य कृत्वोर्थप्रयोग** इत्यादिविषयेऽक्षाणां देवितेत्यादौ तृनन्ते **नलोके**ति निषेधेन **कर्तृकर्मणो**रिति षष्ठ्यभावे तेन षष्ठ्यां

१ बाध्यते इत्यर्थः । ( र. ना. ) २ षष्ठीति सूत्रस्येति शेषः । ( र. ना. ) ३ भाष्ये इत्यादिः । अशेषविषये इत्यस्य शेषविषयत्वाभावे इत्यर्थः । (र. ना.) ४ विभाषोपसर्गे इति विकल्पारम्भसामर्थ्याद्दिवस्तदर्थस्येत्यत्र शेषग्रहणस्य निवृत्त्याऽप्राप्तषष्ठीविधायकत्वेन नियमार्थत्वाभावाद् अक्षाणां देवितेत्यत्र तृन्नन्ते त्वद्रीत्या समासः स्यादिति भावः । ( र. ना. ) ५ पूरणगुणेत्यस्य प्रतिप्रसवोऽपि इत्यर्थः । ( र. ना. ) ६ 'गुणा' । ७ 'परामृश्यन्ते' । ८ तस्मिन् गुणमात्राभिधायके शब्दस्वरूप एव स्वाभिधारूपव्यापारवत्तया स्थिताः ये गुणा रूपादय-

समासनिषेधसिद्धिः । त्वद्रीत्या तु शेषग्रहणस्य तत्र निवृत्त्या समासः स्यादित्यपि चिन्त्यम् ॥

( १३४७ समासप्रतिप्रसववार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्स्थैश्च गुणैः ॥ * ॥**

**( भाष्यम् ) तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् । ब्राह्मणवर्णः । चन्दनगन्धः । पटह्शब्दः । नदीघोषः ॥**

**( प्रदीपः )** प्रतिप्रसवप्रसङ्गेनान्यदपि कथ्यते—**तत्स्थैरिति ।** तच्छब्देन सन्निधानाद् गुण एव परामृश्यते । तेनायमर्थः—स्वात्मनि ये गुणाः अवस्थितास्तैः सह समासः ॥ न च स्वात्मन्यवस्थानं गुणानां संभवति, भेदनिबन्धनत्वान्मुख्यस्याधाराधेयभावस्य । सर्वस्य च गुणस्य द्रव्याश्रयत्वात् ॥ तस्मादभिधानव्यापारापेक्षया तत्स्थत्वमुच्यते । इह केचिद् गुणाः शब्देन द्रव्यान्निष्कृष्टा एव प्रत्याय्यन्ते, न तु द्रव्यस्योपरञ्जकत्वेन । यथा चन्दनस्य गन्ध इति सर्वदा वैयधिकरण्यमेव गुणगुणिनोः, न कदाचिच्चन्दनं गन्ध इति सामानाधिकरण्यं भवति । शुक्लादयस्तु गुणाः कदाचिन्निष्कृष्टरूपाः शब्दैरुच्यन्ते पटस्य शुक्ल इति । कदाचिद् द्रव्येणैकत्वमापन्नाः शुक्लः पट इति । तस्माद् द्विविधगुणसद्भावात्तत्स्थैरिति विशेषणं रूपादिगुणपरिग्रहार्थमुपात्तमिति ब्राह्मणवर्णादय उदाहरणम् ॥ अथ बलाकायाः शौक्ल्यमिति समासः कस्मान्न भवति । तत्स्थं हि शौक्ल्यम् । सर्वदा वैयधिकरण्येन संबन्धात् । नैष दोषः । शौक्ल्यशब्देन शुक्लो गुणोभिधीयते शुक्लशब्दस्य द्रव्ये वर्तमानस्य तस्मिन्नेव प्रवृत्तिनिमित्ते भावप्रत्ययविधानात् । न चासौ तत्स्थः । अभेदाध्यवसायेन द्रव्यं प्रत्यनुरञ्जकत्वदर्शनाच्छुक्लः पट इति । अर्थस्य च तत्स्थत्वमाश्रीयत इति शब्दभेदेऽप्यर्थस्याभेदान्नास्ति शुक्लस्य गुणस्य तत्स्थत्वम् । रूपवान् पट इत्यादौ तु नास्ति गुणगुणिनोरभेदाध्यवसायः । भेदाश्रयेणैव मत्वर्थीयप्रयोगादिति रूपस्य तत्स्थत्वमव्यावृत्तमिति पटरूपमिति समासो भवत्येव ॥

**( उद्योतः )** तच्छब्देन द्रव्यपरामर्शे काकस्य कार्ष्ण्यमित्यादावतिप्रसङ्गमाशङ्क्याह—**तच्छब्देनेति ॥ स्वात्मनीति ।** स्वात्मन्येवाभेदेनावस्थिता न तु द्रव्ये इत्यर्थः ॥ नन्वभेदस्याधाराधेयभावनियामकत्वाभावात्तत्स्थैरित्यनुपपन्नमिति शङ्कते—**न चेति ॥** यद्यपि व्यपदेशिवद्भावेन तत्स्थैरिति वक्तुं शक्यम् । तथापि स न मुख्य इत्याह—**मुख्यस्येति ॥** उत्तरयति—**तस्मादभिधानेति ।** गुणमात्रशक्तशब्दमात्रप्रतिपाद्यगुणवाचकैः शब्दैरित्यर्थः । अत एवार्थस्य तत्स्थत्वमित्यग्रे वक्ष्यति ॥ तदेवोपपादयति—**इह केचिदिति । द्रव्यान्निष्कृष्टाः** भेदेनैव द्रव्यान्वयिनः । तदा हि गुणगतजातिः प्रवृत्तिनिमित्तम् ॥ **उपरञ्जकत्वं,** स्वाभेदेन द्रव्यप्रत्यायकत्वम् ॥ **द्रव्येणैकत्वमिति ।** जातिविशिष्टगुणप्रवृत्तिनिमित्तं, अत

स्तद्वाचकशब्दैः षष्ठीसमस्यते इत्यर्थः । एतदेवाभिप्रेत्य गुणमात्रशक्तशब्दमात्रप्रतिपाद्यगुणवाचकैरित्युक्तमुद्द्योते । रूपत्वादिना रूपादयो गुणा गुणमात्रबोधकशब्दप्रतिपाद्या एवेति पटरूपमित्यादौ समासो भवत्येव । शौक्ल्यादयस्तु गुणाः शुक्लत्वादिरूपगुणत्वव्याप्यजातिविशेषपुरस्कारेण शौक्ल्यादिशब्दैरभिधीयमानाः स्वाश्रयद्रव्याभिधायकशुक्लादिशब्दैरप्यभिधीयन्ते इति बलाकायाः शौक्ल्यमित्यत्र समासो न भवति । ( र. ना. ) ९ जातिविशिष्टो यो गुणस्तद्रूपं प्रवृत्तिनिमित्तमापन्ना इत्यर्थः । ( र. ना. )

एव ततो भावप्रत्ययेन गुणबोधः ॥ अर्थस्य तत्स्थत्वमिति । एवं च गुणिपरस्ववाचकशब्दाभाववत्त्वं तात्स्थ्यमिति फलितम् ॥

( १३४८ समासनिषेधवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ न तु तद्विशेषणैः ॥ * ॥

**( भाष्यम् ) न तु तद्विशेषणैरिति वक्तव्यम् । इह मा भूत्—घृतस्य तीव्रो गन्धः । चन्दनस्य मृदुरिति ॥**

**( प्रदीपः ) न तु तद्विशेषणैरिति ।** तच्छब्देन गुणाः परामृश्यन्ते । तेषां गुणानां यानि विशेषणानि तद्वचनैः सह समासो न भवतीत्यर्थः ॥ **घृतस्य तीव्र इति ।** तीव्रो गन्धस्य विशेषणम् । **चन्दनस्य मृदुरिति** स्पर्शस्य मृदुत्वं विशेषणम् ॥ ननु घृतस्य गन्धेन संबन्धो ननु तद्गतेन तीव्रेण विशेषणेनेति सामर्थ्याभावात्समासस्य प्राप्तिरेव नास्ति तत्किं प्रतिषेधेन एवं तर्हि यदा प्रकरणादिवशात्तीव्रशब्द एव विशिष्टगन्धवृत्तिस्तदा तदर्थोपजनित एव व्यतिरेके घृतस्येति षष्ठी तदा षष्ठीति समासप्रसङ्गः । यश्च गन्धविशेषवचनस्तीव्रशब्दस्तस्य द्रव्यवाचिना सामानाधिकरण्याभावाद्गन्धशब्दस्यैव तत्स्थगुणाभिधायित्वात् समासप्रसङ्गे प्रतिषेध उच्यते ॥ ननु च तीव्रं घृतं मृदु चन्दनमिति सामानाधिकरण्यदर्शनात्तत्स्थत्वाभावात् समासाप्रसङ्गात्तत्प्रतिषेधोऽनर्थकः ॥ एवं तर्हि सौत्रस्य प्रतिषेधस्य विषयकथनमिदम्—**न तु तद्विशेषणैरिति ।** तत्स्थत्वाभावात्तैः समासः प्रतिषिध्यत एवेत्यर्थः ॥

**( उद्द्योतः ) एवं तर्हीति ।** तद्विशेषणैरित्यस्य तद्विशेषप्रतिपादकैरित्यर्थ इति भावः ॥ तीव्रादिशब्दैः समासप्रसङ्गमुपपादयति—यश्च गन्धेति ॥ **एवं तर्हीति ।** तद्विशेषणैरित्यस्य तद्विशेषप्रतिपादकैरित्यर्थात्तीव्रादयः शुक्लादयश्च निषेधसूत्रस्य विषया इत्यनेन सूच्यते इति भावः ॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

**( उद्द्योतः )** भाष्ये—किमर्थमिदमिति । इदं[१]मा व्यवहितमपि तत्स्थैरिति परामृश्यते, तदाहं—गुणेनेति ॥

( समाधानभाष्यम् )

**गुणेन नेति प्रतिषेधं वक्ष्यति तस्यायं पुरस्तादपकर्षः ॥**

( आक्षेपभाष्यम् )

**किं पुनः कारणं गुणेन नेत्युच्यते, न पुनर्गुणवचनेन नेत्युच्येत ? ॥**

**( प्रदीपः ) न पुनरिति ।** तत्र गुणोपसर्जनद्रव्यवाचिना समासो निषिध्यते इति केवलगुणवाचिना रूपादिशब्देन समासो भविष्यतीत्यर्थः ॥

**( उद्द्योतः ) केवलगुणेति ।** घृतस्य तीव्र इत्याद्यपि केवलगुणवाच्येवेति भावः ॥

( समाधानभाष्यम् )

**नैवं शक्यम् । इह हि न स्यात्—काकस्य कार्ष्ण्यं बलाकायाः शौक्ल्यमिति । एतदेव खल्वपि तस्मिन्योगे उदाहरणम् ॥ यद्धीदं ब्राह्मणस्य शुक्लाः वृषलस्य कृष्णा इति । असामर्थ्यादत्र न भविष्यति ॥ कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति ॥ द्रव्यमत्रापेक्ष्यते दन्ताः ॥ तस्माद् 'गुणेन न' इति वक्तव्यम् । गुणेन नेत्युच्यमाने '*तत्स्थैश्च गुणैः*' इति वक्तव्यम् । तत्स्थैश्च गुणैरित्युच्यमाने '*न तु तद्विशेषणैः*' इति वक्तव्यम् ॥ षष्ठी ॥ ८ ॥**

**( प्रदीपः ) एतदेवेति ।** केवलगुणवाच्येवेत्यर्थः ॥ **द्रव्यमत्रेति ।** ततश्च दन्तापेक्षया ब्राह्मणस्येति षष्ठीति शुक्लार्थेन संबन्धाभावात्समासस्य प्रसङ्गाभावाद् नार्थः प्रतिषेधेन ॥ ८ ॥

**( उद्द्योतः )** भाष्ये—**एतदेवेति ।** काकस्य कार्ष्ण्यमित्यादेव ॥ **यद्धीदमिति** यत्त्विदमित्यर्थः ॥ **सापेक्षमसमर्थमिति ।** इतरसापेक्षत्वेन शुक्ला इत्यनेनानन्वयादसामर्थ्यमित्याशयः ॥ तद् ध्वनयन्नाह—**शुक्लार्थेन संबन्धाभावादिति ॥ न तु तद्विशेषणैरिति** वक्तव्यमितिभाष्ये प्रतिषेधविषयप्रदर्शनार्थमित्यादिः ॥ ८ ॥

( २७४ तत्पुरुषसमासनिषेधसूत्रम् ॥ २।२।१ आ. ८ सू. )

## ४३० न निर्धारणे ॥ २।२।१० ॥

( अनिष्टपरिहाराधिकरणम् )

( १३४९ समासनिषेधवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ प्रतिपदविधाना च ॥ * ॥

**( भाष्यम् ) प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् । इह मा भूत्—सर्पिषो ज्ञानम्, मधुनो ज्ञानम् ॥ न निर्धारणे ॥ १० ॥**

( २७५ तत्पुरुषसमासनिषेधसूत्रम् ॥ २।२।१ आ. ९ सू. )

## ४३१ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥२।२।११॥

( गुणशब्दार्थनिरूपणाधिकरणम् )

**( प्रदीपः ) पूरण ॥ ११ ॥** अर्थशब्दस्य प्रत्येकं संबन्धाद् गुणेति स्वरूपग्रहणं न भवति, नाप्यदेवाम् ॥ किं तर्हि ? । **सत्त्वे निविशतेऽपैतीत्येतल्लक्षणलक्षितो गुणो गृह्यते । संसर्गिभेदकमित्यादिलक्षणयुक्तस्तु न गृह्यते ।** सामान्यादेरपि ग्रहणप्रसङ्गात् ॥ नापि शुक्लादेरेव ग्रहणम्, कण्टकस्य तैक्ष्ण्यमित्यस्योदाहृतत्वात् । गोविंशतिरित्यादौ संख्यया समासो न निषिध्यते, **शतसहस्रान्ताच्च निष्कात् *कोशशतयोजनशतयोरुपसंख्यानम्* खारीशतमपि ददातीति**

१ गुणितत्परो यः स्ववाचकशब्दस्तस्य वाच्यत्वसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वमर्थस्य तत्स्थत्वमित्यर्थः । ( र. ना. ) २ तीव्रशब्दार्थनिरूपित एव संबन्ध इत्यर्थः । ( र. ना. ) ३ परामृश्यते इत्यत्रैतदन्वेति । ( र. ना. ) ४ आहेति कालसामान्ये अव्ययम् । तस्माद् वक्ष्यतीत्यर्थः । वस्तुतस्तु गुणेनेत्यारभ्य अपकर्षशब्दान्तस्य वाक्यस्यात्रोच्चार्यमाणत्वात्तस्यैव चात्र कर्मत्वाद् वर्तमाने लटि न काऽपि क्षतिरिति वयम् । (र.ना.) ५ अपवाद इत्यर्थः । (र.ना.) ६ ततश्च तत्राऽपि रूपादिवत्समासे प्राप्ते न तु तद्विशेषणैरिति वक्तव्यमिति भावः । (र.ना.) ७ सर्पिषा मधुना वा उपायेन प्रवर्तनमित्यर्थः । ( र. ना. ) ८ 'गुणे स्वरूप' ।

मुनित्रयवचनाज्ज्ञापकात् । उत्तरपदार्थप्राधान्यमित्यादेश्च मुनिप्रयोगादस्य प्रतिषेधस्यानित्यत्वायन्नगौरवादिशब्दसिद्धिः ॥

**( उद्द्योतः )** पूरणगुण ॥ ११ ॥ सत्त्वे निविशत इत्यादि । वस्तुत इदं चिन्त्यम् । तस्याकडारसूत्रोक्तगुणवचनपदार्थसमत्वात्, तत्र वाचकः सर्वलिङ्गानामित्युक्तत्वात्काकस्य कार्ष्ण्यमित्यादेरनुदाहरणत्वप्रसङ्गात् ॥ तस्मादत्र व्याख्यानात् केवलगुणवाची सन् यो गुणिबोधकः तत्प्रकृतिकभावप्रत्ययान्तप्रतिपाद्यानां गुणपदेन ग्रहणम् अर्थपदान्वयाच्च तद्बोधकशब्दमात्रग्रहणम् । एवं च प्राधान्यगौरवादौ प्रसक्तिरेव न ॥

**( गुणोदाहरणाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**गुणे किमुदाहरणम् ? ॥**

**( प्रदीपः )** गुणे किमिति । वक्ष्यमाणोऽभिप्रायः ॥

**( समाधानभाष्यम् )**

**ब्राह्मणस्य शुक्लाः, वृषलस्य कृष्णा इति ॥**

**( समाधानबाधकभाष्यम् )**

**नैतदस्ति प्रयोजनम् । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति, द्रव्यमत्रापेक्ष्यते दन्ताः ॥**

**( प्रयोजनान्तरभाष्यम् )**

**इदं तर्हि—काकस्य कार्ष्ण्यम्, कण्टकस्य तैक्ष्ण्यम्, बलाकायाः शौक्ल्यमिति ॥**

**( पूर्वोक्ताभ्युपगमभाष्यम् )**

**इदं चाप्युदाहरणम्—ब्राह्मणस्य शुक्लाः, वृषलस्य कृष्णा इति ॥**

**( बाधकस्मारणभाष्यम् )**

**ननु चोक्तम्—असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति, द्रव्यमत्रापेक्ष्यते दन्ता—इति ॥**

**( बाधकपरिहारभाष्यम् )**

**नैष दोषः । भवति वै कस्यचिदर्थात्प्रकरणाद्वाऽपेक्ष्यं निर्ज्ञातं तदा वृत्तिः प्राप्नोति ॥**

**( प्रदीपः )** भवतीति । यदा प्रकरणादिवशाद्दन्ताद्यर्थ एवावसितवृत्तिः शुक्लादिशब्दस्तदा तदर्थोपजनित एव ब्राह्मणादौ व्यतिरेक इति सामर्थ्यसद्भावात्समासप्रसङ्ग इत्यर्थः ॥ ननु गुणस्य गुण्यपेक्षत्वाद् गुणिन एव समासनिषेधेन भाव्यम्, न च ब्राह्मणः शुक्लगुणाधारः ॥ नैष दोषः । गुणशब्देन केवलगुणवाचिनो गुणोपसर्जनद्रव्यवाचिनश्च व्याप्तिन्यायाश्रयेण गृह्यन्त इति गुणिनो गुणाधारसंबन्धिनश्चोपपन्नः समासप्रतिषेधः ॥

**( उद्द्योतः )** अवसितवृत्तिरिति । सामान्यशब्दस्यापि प्रकरणाद्विशेषमात्रोपस्थापकत्वमित्यर्थः । अनेनैतत्सूचयति वाक्यैकदेशन्यायेन शुक्ला इत्यस्य दन्ताः शुक्ला इत्यर्थः । षष्ठीत्यस्य च षष्ठ्यन्तं समर्थप्रकृतिकसुबन्तेन समस्यते इत्यर्थः । तादृशं च न शुक्ला इति पदमित्यसामर्थ्यं तदवस्थमेव ॥ एतदभिप्रायेणैव पूर्वसूत्रे एतदेवोदाहरणमित्युक्तम् । अत्रत्यं भाष्यं त्वेकदेश्युक्तिः, अनेनैं समासशङ्कावारणायाबुधानां यत्नः क्रियत इति कर्मणि चेति सूत्रे वदता कैयटेन ध्वनितमेतत् ॥ अन्यथा ब्राह्मणस्य ग्रामं गत इत्यर्थे ग्राममित्यस्य प्रकरणादिना ज्ञाने गत इत्यस्यैव वाक्यैकदेशन्यायेन तावदर्थत्वे सामर्थ्यात्समासापत्तिरिति स्पष्टं कर्मणि चेति सूत्रे भाष्ये ॥

**( सदुदाहरणनिरूपणाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**सति किमुदाहरणम् ? ॥**

**( उदाहरणभाष्यम् )**

**ब्राह्मणस्य पक्ष्यन्, ब्राह्मणस्य पक्ष्यमाणः ॥**

**( उदाहरणनिराकरणभाष्यम् )**

**नैतदस्ति । प्रतिषिध्यतेऽत्र षष्ठी 'लप्रयोगे ने'ति । या च श्रूयते । एषा बाह्यमर्थमपेक्ष्य भवति तत्रासामर्थ्यान्न भविष्यति । कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति । द्रव्यमत्रापेक्ष्यते ओदनः ॥**

**( प्रदीपः )** प्रतिषिध्यतेऽत्रेति । आवर्जनवाचिपच्याश्रयेण ब्राह्मणं पचेः कर्म मन्यते । यथास्य लोकपक्तिः, लोकावर्जनमित्यर्थः । ततश्च ब्राह्मणस्येति षष्ठी पाकापेक्षया कर्मणि न भवतीत्यर्थः ॥

**( उद्द्योतः )** ननु ब्राह्मणस्य पक्ष्यन्नित्यत्र ब्राह्मणस्यौदनं पक्ष्यन्नित्यर्थावगमात् ब्राह्मणस्य पाकापेक्षया कर्मत्वकर्तृत्वाभावात् कर्तृत्वस्योक्तत्वाच्च षष्ठ्या अप्राप्तौ प्रतिषेधोक्तिरसङ्गतेत्यत आह— आवर्जनवाचीति । आवर्जनमङ्गीकारस्तद्योगो वा इत्याहुः कर्मणि न भवतीति । शेषषष्ठ्यन्तस्य नामार्थान्वये संभवति क्रियान्वयो नेति भावः । एतेन कर्मणः शेषत्वविवक्षायां षष्ठी सुलभेत्यपास्तम् ॥ नलोकेत्येतन्निषेधविषयेऽनभिधानाच्छेषत्वविवक्षैव न भाष्यप्रामाण्यादित्यन्ये ॥

**( उदाहरणान्तरभाष्यम् )**

**इदं तर्हि—चोरस्य द्विषन्, वृषलस्य द्विषन् ॥**

**( प्रदीपः )** चोरस्य द्विषन्निति । तौ सदित्यत्र तौग्रहणस्योपाध्यसंसर्गार्थत्वाद् द्विषोऽमित्रइत्येतत्सूत्रविहितोऽपि शता सत्संज्ञः ॥

---

१ वोतो गुणवचनादित्यत्रोक्तस्य सत्त्वे निविशते इत्यादेरित्यर्थः । (र. ना.) २ गुणवचनशब्देनैवोभयत्रापि व्यवहारादिति भावः । ( र. ना. ) ३ गुण इति शेषः । तत्रासर्वलिङ्गाया जातित्वात्तदतिरिक्तस्य गुणस्य सर्वलिङ्गवाचकशब्दवाच्यत्वमुचितमिति भावः । ( र. ना. ) ४ केवलगुणवाची सन् यो गुणिबोधकस्तस्य भावप्रत्ययान्तस्य केवलस्य च सर्वस्य ग्रहणमित्यर्थः । तेन काकस्य कार्ष्ण्यम्, ब्राह्मणस्य शुक्ला इत्युभयमप्युदाहरणमिति भावः । ( र. ना. ) ५ निषेधेत्यादिः । ( र. ना. ) ६ शब्दोपात्तो यो गुणस्तदाधारवाचकस्यैवेत्यर्थः । तथा च काकस्य कार्ष्ण्यमित्यत्रैव निषेधः स्यान्न तु ब्राह्मणस्य शुक्ला इत्यत्र । ब्राह्मणस्य शुक्लगुणानाधारत्वाद्दन्तानामेव तदाधारत्वादिति भावः । ( र. ना. ) ७ ब्राह्मणे शुक्लगुणाधारत्वाभावेऽपि तदाधारदन्तसंबन्धित्वेन निषेधोपपत्तिरिति भावः । ( र. ना. ) ८ वाक्यैकदेशन्यायेनेत्यर्थकमनेनेति समासशङ्कान्वयि । अबुधानामित्यपि तथा । (र.ना.) ९ 'बाह्यार्थमपे' । १० कर्तृत्वाङ्गीकारेवेत्यादिः । (र.ना.) ११ वशीकार इत्यपि बोध्यम् । ( र. ना. ) १२ एतदित्यादिः । ( र. ना. ) १३ लटः शतृशानचाविति शास्त्रविहितत्वरूपधर्मस्य सत्संज्ञोद्देश्यतावच्छेदककोटौ यः संबन्धाभावस्तदर्थत्वादित्यर्थः । ( र. ना. )

( उद्योतः ) ननु द्विषोऽमित्र इति विहितस्य न सत्संज्ञकत्वं, लट इति सूत्रविहितयोरेव तत्संज्ञाविधानादित्याशङ्कयाह—तौस-दिति ॥

( आक्षेपभाष्यम् )

**ननु चात्रापि प्रतिषिध्यते ॥**

( प्रदीपः ) **ननु चात्रापीति ।** तृन्निति प्रत्याहारेण शतुरपि ग्रहणात् ॥

( उद्योतः ) अस्य शतुर्लादेशत्वाभावादाह—तृन्निति ॥

( समाधानभाष्यम् )

**वक्ष्यत्येतद् *द्विषः शतुर्वावचनम्* इति ॥**

( उद्योतः ) अस्योदाहरणत्वं स्थापयति—भाष्ये—वक्ष्य-त्येतदिति ॥

( अव्ययोदाहरणनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**अव्यये किमुदाहरणम् ? ॥**

( प्रयोजनभाष्यम् )

**ब्राह्मणस्योच्चैः, वृषलस्य नीचैरिति ॥**

( प्रयोजननिराकरणभाष्यम् )

**नैतदस्ति । असामर्थ्यादत्र न भविष्यति ॥ कथ-मसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति । द्रव्य-मत्रापेक्ष्यते आसनम् ॥**

( प्रयोजनभाष्यम् )

**इदं तर्हि—ब्राह्मणस्य कृत्वा, वृषलस्य कृत्वेति ॥**

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति । प्रतिषिध्यते तत्र षष्ठी 'अव्यय-प्रयोगे न' इति । या च श्रूयते एषा बाह्यार्थमपेक्ष्य भवति, तत्रासामर्थ्यान्न भवति ॥ कथमसामर्थ्यम् ?। सापेक्षमसमर्थं भवतीति । द्रव्यमत्रापेक्ष्यते कटः ॥**

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि—पुरा सूर्यस्योदेतोराधेयः । पुरा वत्सानामपाकर्तोः ॥**

( प्रदीपः ) **सूर्यस्योदेतोरिति ।** सूर्योदयात् पूर्वमि-त्यर्थः । वृक्षस्योपरीत्यादीन्यप्युदाहरणानि ॥

(उद्योतः) इत्यादीन्येति । साहचर्यात् कृदव्ययमेव गृह्यते । अन्याव्ययैः सति सामर्थ्ये समास इष्ट एवेति भाष्याशयमाहुः ॥

( आक्षेपभाष्यम् )

**ननु चात्रापि प्रतिषिध्यते—'अव्ययम्' इति कृत्वा ॥**

( समाधानभाष्यम् )

**वक्ष्यत्येतत्—*अव्ययप्रतिषेधे तोसुन्कसुनोर-प्रतिषेधः* इति ॥**

( समानाधिकरणोदाहरणाधिकरणम् )

( आक्षेपभाष्यम् )

**समानाधिकरणे किमुदाहरणम् ? ।**

( समाधानभाष्यम् )

**राज्ञः पाटलिपुत्रकस्य । शुकस्य माराविकस्य । पाणिनेः सूत्रकारस्य ॥**

( प्रदीपः ) **राज्ञः पाटलिपुत्रकस्येति ।** विशेषणस-मासोऽत्र भवत्येव ततो विशेषणस्यैव पूर्वनिपातः सिद्धो भवति । षष्ठीसमासे तु पूर्वनिपातस्यानियमः स्यादिति स प्रतिषिध्यते । विशेषणसमासे च वचनसामर्थ्यात्**समानाधिकरणमसम-र्थवदिति** नाश्रीयते ॥

( उद्योतः ) **पूर्वनिपातानियमः स्यादिति ।** उपसर्जनत्व-स्यान्वर्थतामाश्रित्य षष्ठीसमासेपि तन्नियमसंभवादुपसर्जनसंज्ञासूत्रे स्वयमपि तथैवोक्तेश्च चिन्त्यमेतत् ॥ तस्माद्विशेषणसमासोप्यत्र बाहु-लकान्नेत्येव तत्त्वमिति कश्चित्, तन्न । अर्धपिप्पलीत्याद्यनुरोधेन तस्या अन्वर्थत्वाश्रयणमशक्यमित्याशयात् ॥ **विशेषणसमासे वच-नसामर्थ्यादिति ।** पूर्वापरप्रथमचरमेति सूत्रे समानेत्यादिव-चनसामर्थ्यादित्यर्थः । एवं च षष्ठीसमासे तदप्रवृत्तौ मानाभावः । न चैवं बहुव्रीहिरुच्छिद्येत । शेषग्रहणसामर्थ्येन तत्राप्यस्याप्रवृत्तेः । न च सुन्दरपाचक इत्यादौ तस्य[5] सावकाशता । एवं तर्हि स-मानेत्यादिसामान्यापेक्षं यत्र समानाधिकरणानां विशेषविहितः स-मासः तत्रैतदप्रवृत्तिः ॥ समानादेश्च[6] कृदन्तेन न समासोऽनभिधा-नादित्याशयः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । असामर्थ्यादत्र न भविष्यति ॥ कथम-सामर्थ्यम् ?। समानाधिकरणमसमर्थवद्भवतीति ॥**

( उद्योतः ) केचित्तु प्रथमानिर्दिष्टमिति सूत्रभाष्योक्तरीत्या षष्ठीतिसूत्रे येन सुबन्तेन समासस्तदर्थनिरूपितसंबन्धार्थकषष्ठ्येव गृह्यते । तादृशमेव च सामर्थ्यं षष्ठीसमासप्रवृत्तौ निमित्तम् । न चेदं सामर्थ्यं प्रकृतेस्ति, इत्याशयेनाह—**असामर्थ्यादत्र न भवि-ष्यतीति** । एवं च प्रत्याख्यातं समानाधिकरणग्रहणम्[7] ॥ अग्रिमभाष्यं त्वेतदाशयानभिज्ञपूर्वपक्षिसिद्धान्तिनोरेकदेशिनोरुक्ति-परमित्याहुः ॥ ११ ॥

( उदाहरणान्तरभाष्यम् )

**इदं तर्हि—सर्पिषः पीयमानस्य, यजुषः क्रिय-माणस्य ॥**

---

१ वृक्षोपरीत्यादिरूपः । ( र. ना. ) २ कृदव्ययान्येवोदाहरतो भाष्यकृत आशयमित्यर्थः । ( र.ना. ) ३ षष्ठीत्यादिः । अव्ययमिति कृत्वेति । न लोका-व्ययमिति सूत्रेणेत्यर्थः । ( र. ना. ) ४ माराविकस्येति । मा रावीत्याहेति माराविकः । *तदाहेति माशब्दादिभ्य उपसंख्यानम्* इति ठक् ॥ शब्द-नक्रियायाः प्रतिषेधको माराविकः । संज्ञैषा शुकविशेषस्य ॥ क्वचित्तु मारा-विदस्येति पाठः । तत्र माराविशब्दं ददातीति माराविदः । स एवार्थः ॥ इति पदमञ्जरी । ५ शेषग्रहणस्य सावकाशतेत्यर्थः । अयं भावः । समानाधिकरणम-समर्थवदित्यत्र अधात्वभिहितमित्युक्त्या सुन्दरपाचक इत्यत्र पाचकपदार्थरूपस्य समानाधिकरणस्य धातुसहचरितप्रत्ययाभिहितत्वाद् असामर्थ्यं नास्तीति तत्र शेषग्रहणस्य चरितार्थतेति । ( र. ना. ) ६ ननु समानादिग्रहणमपि कृदन्तेन समानादिशब्दस्य समासं बोधयित्वोपक्षीणम् । तत्र समानाधिकरणस्य धातुसह-चरितप्रत्ययाभिहितत्वादित्यत आह समानादेरिति । ( र. ना. ) ७ पूरण-गुणेति सूत्रस्थमिति भावः । ( र. ना. )

( उदाहरणबाधकभाष्यम् )

ननु चात्राप्यसामर्थ्यादेव भविष्यति ॥ कथमसामर्थ्यम्? । समानाधिकरणमसमर्थवद्भवतीति ॥

( उदाहरणसाधकभाष्यम् )

अधात्वभिहितमित्येवं तत् ॥ पूरणगुण ॥ ११ ॥

( प्रदीपः ) अधात्वभिहितमिति । एवं च कटस्य क्रियमाणस्येत्याद्यप्युदाहरणम् ॥ ११ ॥

( २७६ तत्पुरुषनिषेधसूत्रम् ॥ २ । २ । १ आ. १० सू. )

## ४३४ कर्मणि च ॥ २ । २ । १४ ॥

( चकारस्येत्यर्थकतानिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

कथमिदं विज्ञायते—कर्मणि या षष्ठी सा न समस्यत इति । आहोस्वित्—कर्मणि यः क्तः—इति ॥ कुतः संदेहः? । उभयं प्रकृतम् । तत्रान्यतरच्छक्यं विशेषयितुम् ॥

( प्रदीपः ) कर्मणि ॥ १४ ॥ क्तषष्ठ्योः प्रकृतत्वादन्यतरविशेषणे दोषदर्शनात् पृच्छति—कथमिति ॥

( उद्द्योतः ) कर्मणि च ॥ १४ ॥ दोषदर्शनादिति । पक्षद्वयेपि दोषदर्शनादित्यर्थः ॥

( विशेषजिज्ञासाभावभाष्यम् )

कश्चात्र विशेषः? ॥

( १३५० प्रथमपक्षे दूषणवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कर्मणीति षष्ठीनिर्देशश्चेदकर्तरि कृता समासवचनम् ॥ * ॥

( व्याख्याभाष्यम् )

कर्मणीतिषष्ठीनिर्देशश्चेदकर्तरि कृता समासो वक्तव्यः । इध्मप्रव्रश्चनः पलाशशातनः ॥

( प्रदीपः ) अकर्तरि कृतेति । यः कर्तरि विधीयते यथा कुम्भकार इति तत्र परत्वादुपपदसमासेन भाव्यम्, क्वचित्तु 'तृजकाभ्यां कर्तरि च'ेति प्रतिषेधेनेत्यभिप्रायेणाकर्तरीत्युक्तम् ॥ इध्मप्रव्रश्चन इति । करणे ल्युट् कर्मणि षष्ठी ॥

( उद्द्योतः ) क्वचित्तु तृजकाभ्यामिति । तृजकाभ्यामित्यस्य कर्त्रर्थतृजकाभ्यामित्यर्थे इदम् ॥ कर्तरि चेत्यस्यैवायमर्थ इति वृत्तिमते आह—कर्तरिचेति । अन्यैस्त्वनुपपदकृदन्तैः शेषषष्ठ्या समासो भवत्येव गङ्गाधरभूधरादौ। स्वरेपि न विशेषः । उभयथाप्यन्तोदात्तत्वात्[1] । न च गस्थकनि गाथकशब्देन साम्नां गायक इत्यर्थे समासानापत्तिः । शेषषष्ठ्या समासेपि स्वरे विशेषादिति[2] वाच्यम् । अकर्तरीत्यस्य तृजकाभ्यां कर्तरीति सूत्र[3]निर्दिष्टभिन्नेनेत्यर्थात् । कर्मणीत्यस्य षष्ठीविशेषणत्वे क्तेनेत्यस्यात्रानुवृत्तिरेवेति बोध्यम् ॥

( १३५१ सूत्रवैयर्थ्यापत्तिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तृजकाभ्यां चानर्थकः प्रतिषेधः ॥ * ॥

( भाष्यम् ) तृजकाभ्यां चानर्थकः कर्तरि प्रतिषेधो भवति । अपां स्रष्टा । पुरां भेत्ता । यवानां लावकः । कर्मणीत्येव सिद्धम् ॥

( प्रदीपः ) तृजकाभ्यां चेति । कर्तरि यौ तृजकौ तत्र सामर्थ्यात्[4] कर्मण्येव षष्ठीत्यनेनैव प्रतिषेधः सिद्धः ॥

( उद्द्योतः ) भाष्ये—तृजकाभ्यां चेति । अस्यैव कर्त्रर्थतृजकाभ्यामित्यर्थ इति भावः ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि—कर्मणि यः क्त इति ॥ किमुदाहरणम्? । ब्राह्मणस्य भुक्तं[5] वृषलस्य पीतमिति[6] ॥

( १३५२ दूषणवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ क्तनिर्देशेऽसमर्थत्वादप्रतिषेधः ॥ * ॥

( व्याख्याभाष्यम् )

क्तनिर्देशेऽसमर्थत्वाद् अप्रतिषेधः अनर्थकः प्रतिषेधः अप्रतिषेधः ॥ समासः कस्मान्न भवति? । असामर्थ्यात् ॥ कथमसामर्थ्यम्? । सापेक्षमसमर्थं[7] भवतीति । द्रव्यमत्रापेक्ष्यते[8] ओदनः ॥

( प्रदीपः ) द्रव्यमत्रेति । ब्राह्मणस्येति षष्ठी भुक्तापेक्षया न भवति, न लोकाव्ययनिष्ठेति प्रतिषेधात् । ततश्च ब्राह्मणस्य य ओदनादिः सोऽन्येन भुक्त इत्यर्थः प्रतीयत इति ब्राह्मणस्य भुक्तेन संबन्धाभावः ॥

( १३५३ वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ प्रतिषेध्यमिति चेत्कर्तर्यपि प्रतिषेधः ॥ * ॥

( व्याख्याभाष्यम् )

अथैवं सति प्रतिषेधः कर्तव्य इति मन्यसे, कर्तर्यपि प्रतिषेधो वक्तव्यः स्यात्—ब्राह्मणस्य गतः ब्राह्मणस्य ज्ञात इति ॥

( प्रदीपः ) प्रतिषेध्यमिति चेदिति । यदा पारम्पर्येण संबन्धसंभवाद् 'भवति वै कस्य चिद्' इति न्यायाद्वा समासशङ्कानिवारणायाबुधानां यत्नः क्रियते तदातिप्रसङ्गो यत्नस्येत्यर्थः ॥

( उद्द्योतः ) पारम्पर्येणेति । भुजेरोदनेनौदनस्य ब्राह्मणेनेतीत्यर्थः ॥ भवति वै इति । ब्राह्मणस्य शुक्ला इत्यत्रोक्तो न्यायः[9] ॥ समासशङ्कानिवारणायेति । अनेन तन्न्यायाश्रयणेपि पूरणेतिसूत्रोक्तमद्रीत्या वस्तुतः सामर्थ्यं नास्त्येवेति सूचयति । तदाह—

---

१ कर्मषष्ठीपक्षे गतिकारकोपपादादिति कृदुत्तरपदप्रकृतिस्वरे चितोऽन्तोदात्तत्वात्, शेषषष्ठीपक्षे समासान्तोदात्तत्वादित्यर्थः । ( र. ना. ) २ कर्मषष्ठीसमासपक्षे कृदुत्तरपदप्रकृतिस्वरे उत्तरपदस्य निदन्तत्वेनाद्युदात्तत्वात् शेषषष्ठीसमासपक्षे समासान्तोदात्तत्वादिति भावः । ( र. ना. ) ३ तथा च गाथक इत्यस्य तत्सूत्रनिर्दिष्टभिन्नत्वात् प्रकृतवार्तिकबलात् साम्नां गाथक इत्यत्र समासः स्यादेवेति भावः । ( र. ना. ) ४ कर्मणोऽनभिधानसामर्थ्यादित्यर्थः । कर्मण्येवेति । न तु कर्तरीत्यर्थः । ( र. ना. ) ५ 'भुक्तः' । ६ 'पीत इति' । ७ अन्यसापेक्षमन्यत्रासमर्थं भवतीति प्रकृतोपयोग्यर्थः । ( र. ना. ) ८ 'दृश्यते' । ९ वाक्ये प्रयोक्तव्ये वाक्यैकदेशः प्रयुज्यते इति न्याय इत्यर्थः । ( र. ना. )

अबुधानामिति ॥ अतिप्रसङ्ग इति । अन्यत्राप्येवं न्यायैः समासापादनसंभवात् तत्रापि प्रतिषेधो वक्तव्य इत्यर्थः ॥ भाष्ये—ब्राह्मणस्य गत इत्यादेः ब्राह्मणस्य ग्रामं गत इत्यादिक्रमेणार्थः ॥

( १३५४ वार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ पूजायां च प्रतिषेधानर्थक्यम् ॥ * ॥

( भाष्यम् ) पूजायां च प्रतिषेधोऽनर्थकः—राज्ञां पूजितः राज्ञामर्चित इति । कर्मणीत्येव सिद्धम् ॥

( १३५५ सिद्धान्तवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ तस्मादुभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधः ॥ * ॥

( भाष्यम् ) तस्माद् "उभयप्राप्तौ कर्मणि" इत्येवं या षष्ठी तस्याः प्रतिषेधो वक्तव्यः ॥

( आक्षेपभाष्यम् )

स तर्हि वक्तव्यः ? ॥

( समाधानभाष्यम् )

न वक्तव्यः । इत्यर्थेऽयं चः पठितः—"कर्मणि च" कर्मणीत्येवं या षष्ठी ॥ कर्मणि च ॥ १४ ॥

( प्रदीपः ) इत्यर्थ इति । अनेकार्थत्वान्निपातानाम् । तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः । ततश्चाश्चर्यो[1] गवां दोहोऽगोपालकेनेत्याद्युदाहरणम् ॥ १४ ॥

(उद्योतः) इत्याद्युदाहरणमिति । ब्राह्मणस्य सुक्तो ब्राह्मणस्य गत इति पूर्वोक्ते तु असामर्थ्यादेव समासो न भवतीति हृदयम् ॥ १४ ॥

( २७७ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ. ११ सू. )

## ४३७ नित्यं क्रीडाजीविकयोः ॥२।२।१७॥

( नित्यग्रहणसंबन्धविचाराधिकरणम् )

( आक्षेपभाष्यम् )

किमिह नित्यग्रहणेनाभिसंबध्यते विधिः, आहोस्वित्—प्रतिषेधः ? ॥

( प्रदीपः ) नित्यं क्री ॥ १७ ॥ प्रतिषेधे सिद्धेऽस्यारम्भाद्विधिरप्यत्र संभाव्यते अनन्तरत्वाच्च प्रतिषेधोपीति प्रश्नः—किमिहेति ॥

( उद्योतः ) नित्यं क्रीडा ॥ १७ ॥ प्रतिषेधे[3] सिद्धइति । जीविका[4]विषये तृजकाभ्यामित्यनेन कर्तरि चेत्यनेन वेति भावः ॥

( समाधानभाष्यम् )

विधिरित्याह ॥ कुत एतत् ? । विधिर्हि विभाषा, नित्यः प्रतिषेधः ॥ नित्यम् ॥ १७ ॥

( प्रदीपः ) विधिर्हीति ॥ महाविभाषाधिकारात्[5] ॥ नित्य इति । विधिविकल्पेनैव पाक्षिकस्य प्रतिषेधस्य सिद्धत्वात् प्रतिषेधारम्भसामर्थ्यादेव नित्यः प्रतिषेधः सिद्ध इति किं नित्यग्रहणेनेत्यर्थः ॥ १७ ॥

( उद्योतः ) नित्यः प्रतिषेध इति । प्रतिषेधवाक्यैस्तद्विषये व्यपेक्षाया एव बोधनादिति भावः । विधित्वे तु जीविकायां कर्तरि चेति निषेधे प्राप्तेऽस्यारम्भात्तद्विषये नित्यमित्येतत्सार्थकम्, क्रीडायां तु विकल्पे प्राप्तेऽस्यारम्भात्सामर्थ्यादेव नित्यत्वं सिद्धमिति बोध्यम् ॥ १७ ॥

( २७८ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ. १२ सू. )

## ४३८ कुगतिप्रादयः ॥ २ । २ । १८ ॥

( अनिष्टपरिहाराधिकरणम् )

( १३५६ समासनिषेधवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ प्रादिप्रसङ्गे कर्मप्रवचनीयप्रतिषेधः ॥ * ॥

( भाष्यम् ) प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । वृक्षं प्रति विद्योतते विद्युत् । साधुर्देवदत्तो मातरं प्रति ॥

( प्रदीपः ) कुगति ॥ १८ ॥ प्रादिग्रहणस्येहागत्यर्थत्वात्कर्मप्रवचनीयानां प्रतिषेध उच्यते । प्रत्यादिविषय एवायं निषेधः तथा च खल्वोः समासो भवत्येव ॥ वृक्षं प्रतीति । वृक्षविद्युद्द्योतनयोः प्राप्तिक्रियाजनितस्य[6] लक्ष्यलक्षणसंबन्धस्यावच्छेदकः प्रतिरिति सामर्थ्यसद्भावात्समासप्रसङ्गः । संबन्धाभावे तु द्वितीयामपि न स्यात् ॥

( उद्योतः ) कुगति ॥ १८ ॥ ननु गतिग्रहणेन प्रादीनां विशेषणात्कर्मप्रवचनीयेषु प्राप्त्यभावादनर्थकः प्रतिषेधोत आह—प्रादिग्रहणस्येति ॥ प्रत्यादिविषय एवेति । व्याख्यानादिति भावः ॥ सामर्थ्यसद्भावादिति । वृक्षगतलक्षणत्वद्योतकत्वादिति भावः ॥ द्वितीयापि न स्यादिति । कर्मवचनीययुक्तइतियुक्तग्रहणादिति भावः ॥

( १३५७ समासप्रतिषेधवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ व्यवेतप्रतिषेधश्च ॥ * ॥

( भाष्यम् ) व्यवेतानां प्रतिषेधो वक्तव्यः । आमन्द्रैरिन्द्र हरिभिर्याहि ॥

( प्रदीपः ) व्यवेतानामिति । व्यवहितानां पदान्तरेण प्रादीनां समासो न भवतीत्यर्थः ॥ आमन्द्रैरिति । याहीत्यस्यां क्रियायां द्वयोरुपनिपाताद्वारको[7] दध्योदर्नादाविव परस्परसंबन्धोऽस्तीति समासप्रसङ्गः । तथा चैकस्वर्यं स्यादिति तत्प्रतिषेध उच्यते ॥

( उद्योतः ) व्यवहितानामिति । स्वान्वययोग्यार्थवाचकप

---

१ आश्चर्यमत्र विधेयं तच्च तदा संभवति यदा दुर्दोहा गावोऽशिक्षितश्च दोग्धा, तथाचाश्चर्यान्वयानुपपत्त्या तथाविधतात्पर्यानुपपत्त्या वा गोपदस्य दुर्दोहगवीषु लक्षणा । यद्वाऽगवामिति छेदोऽगोपालकेनेतिवत् । अप्रशस्तगवामिति तदर्थः । अप्राशस्त्यं नञर्थः । ( र. ना. ) २ दन्तलेखक इत्यादाविति शेषः । (र. ना.) ३ प्रतिषेधविषये इत्यर्थः । ( र. ना. ) ४ जीविकाविषये इत्यर्थः । ( र. ना. ) ५ अन्यथा महाविभाषाऽधिकाराद् विकल्प एव स्यादिति भावः । ( र. ना. )

६ प्राप्तिक्रियाद्वारकस्येत्यर्थः । वृक्षकर्मकप्राप्तिविद्युद्विद्योतनयोर्लक्ष्यलक्षणभावः संबन्ध इति यावत् । स्वरूपतो वृक्षस्य तल्लक्षणत्वे तु सदैव तत्त्वप्रसङ्ग इति भावः । अवच्छेदक इत्यस्य द्योतक इत्यर्थः । ( र. ना. ) ७ आङुपसर्गमन्द्रपदयोः संबन्धादित्यर्थः । तद्द्वारकः, तादृशक्रियाद्वारकः । ( र. ना. ) ८ उपसेकक्रियाद्वारक इति शेषः । ( र. ना. )

दापेक्षया पदान्तरेण व्यवहितानामित्यर्थः ॥ समास इति । अव्यवहितपदैरित्यर्थः ॥ सामर्थ्याभावमाशङ्क्याह—याहीति । ऐकस्वर्यमिति । अव्ययपूर्वपदप्रकृतिस्वरे सति मन्द्रस्य पृथगुदात्तत्वं न स्यादित्यर्थः ॥ यद्यपि वेदे आपाद्यं रूपं नास्ति तथापि एवंजातीयके लौकिकप्रयोगे दोष इत्यर्थः ॥ वेदेपि तस्यासाधुत्वशङ्कानिवृत्तिः फलमित्यन्ये ॥

( १३५८ उक्तवार्तिकप्रत्याख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सिद्धं तु काङ्स्वतिदुर्गतिवचनात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ॥ कथम् ?। 'काङ्स्वतिदुर्गतयः समस्यन्ते' इति वक्तव्यम् । कु—कुब्राह्मणः कुवृषलः । कु ॥ आङ्—आकडारः, आपिङ्गलः । आङ् ॥ सु—सुब्राह्मणः, सुवृषलः । सु ॥ अति—अतिब्राह्मणः, अतिवृषलः । अति ॥ दुर्—दुर्ब्राह्मणः, दुर्वृषलः । दुर् ॥ गति प्रकारकः, प्रणायकः, प्रसेवकः, ऊरीकृत्य, उररीकृत्य । गति ॥**

( प्रदीपः ) एवं पाणिनीये लक्षणेऽतिव्याप्तिमुद्भाव्य कात्यायन आत्मीयं लक्षणं करोति—सिद्धं त्विति । तेन प्रत्यादीनां न भवति । आ मन्द्रैरित्यत्र त्वाङ्ग्रहणेन प्राप्नोतीति सामर्थ्यमेव नास्तीति वक्तव्यम् ॥

( उद्द्योतः ) सामर्थ्यमेव नास्तीति । एकक्रियान्वयित्वरूपसामर्थ्यग्रहणे कृतः सर्वो मृत्तिकयेत्यादौ समासापत्तिरिति भावः । दध्योदनादौ तु क्रियान्तर्भावेण सामर्थ्यम् । एवं च वचनद्वयमपि प्रत्याख्यातमिति बोध्यम् ॥

( १३५९ समासवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ प्रादयः क्तार्थे ॥ * ॥

( व्याख्याभाष्यम् )

**प्रादयः क्तार्थे समस्यन्त इति वक्तव्यम् । प्रगत आचार्यः प्राचार्यः, प्रान्तेवासी, प्रपितामहः ॥**

( प्रदीपः ) प्रादयः क्तार्थे इति । अर्गत्यर्थमिदम् । वृत्तिविषये क्तार्थवृत्तयः प्रादयः ॥

( उद्द्योतः ) वृत्तौ गतशब्दाप्रयोगे हेतुमाह—वृत्तिविषय इति । पदैकदेशन्यायेनेति भावः । प्रगतः शिष्यं प्राप्तः, गुरुं प्राप्तः, पितामहस्य पितृत्वं प्राप्त इति चार्थः ॥

( संवादभाष्यम् )

**एतदेव च सौनागैर्विस्तरतरकेण पठितम्—**

( प्रदीपः ) एतदेवेति । कात्यायनाभिप्रायमेव प्रदर्शयितुं सौनागैरतिविस्तरेण पठितमित्यर्थः ॥

( १३६० सौनागवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्वती पूजायाम् ॥ * ॥

( व्याख्याभाष्यम् )

**स्वती पूजायामिति वक्तव्यम् । सुराजा, अतिराजा ॥**

( प्रदीपः ) सुराजेति । न पूजनादिति समासान्तप्रतिषेधः । उपाधीनां प्रयोगविषयोपलक्षणार्थत्वादन्यत्रापि समासो भवति । तेनातिक्रमणेप्यतिः समस्यते अतिसिक्तमेव भवतेति । सुकर इत्यादौ तूपपदसमासोस्त्येव ॥

( उद्द्योतः ) पूजायामित्युपलक्षणमित्याह—उपाधीनामिति ॥ अतिसिक्तमेवेति । तथाप्रयोगदर्शनादिति भावः ॥ कर्मप्रवचनीयत्वादत्र षत्वाभावः ॥

( १३६१ सौनागवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ दुर्निन्दायाम् ॥ * ॥

( व्याख्याभाष्यम् )

**दुर्निन्दायामिति वक्तव्यम् । दुष्कुलम्, दुर्गवः ॥**

( प्रदीपः ) दुर्निन्दायामिति । प्रादिग्रहणेन यः समासस्तस्यायं विशेषनिर्देश इत्यर्थान्तरेपि गतित्वात्समासो भवति —दुष्कृतमिति ॥

( उद्द्योतः ) अर्थान्तरेपीत्यस्य समासो भवतीत्यनेनान्वयः । तत्र हेतुर्गतित्वादिति ॥ दुष्कृतमिति । दुः कृच्छ्रार्थे । अनभिधानात्तु भूते खल् न भवति ॥

( १३६२ सौनागवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ आङीषदर्थे ॥ * ॥

( व्याख्याभाष्यम् )

**आङीषदर्थे इति वक्तव्यम् । आकडारः, आपिङ्गलः ॥**

( प्रदीपः ) आङीषदर्थे इति । क्रियायोगे तु गतित्वात्समासः—आबद्धमिति ॥ आ मन्द्रैरित्यत्र तु सत्यपि सामर्थ्ये मन्द्रं प्रत्यगतित्वात्तद्वतेषदर्थाभावाच्च समासाभावः ॥

( उद्द्योतः ) सत्यपीति । अपिना वस्तुतः सामर्थ्यमेव नास्तीति ध्वनितम् ॥ अगतित्वादिति । मन्द्रस्य क्रियात्वाभावादिति भावः ॥

( १३६३ सौनागवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ कुः पापार्थे ॥ * ॥

( व्याख्याभाष्यम् )

**कुः पापार्थे इति वक्तव्यम् ॥ कुब्राह्मणः, कुवृषलः ॥**

(प्रदीपः) कुः पापार्थे इति । प्रशस्तेपि द्वेषान्निन्दा भव-

---

१ मन्द्रे पृथगुदात्तत्वस्येत्यर्थः । ( र. ना. ) २ अस्य व्याकरणस्यैवान्यव्याकरणस्येवाव्याप्तत्वशङ्कानिवृत्तय इति तत्त्वम् । कथमस्य तत्त्वस्योपपत्तिरिति दाधिमथा एव जानन्ति । ( र. ना. ) ३ 'ऊरीकृतम्' । ४ वृक्षं प्रति विद्योतते इत्यत्र वृक्षस्यापि प्राप्तिक्रियाद्वारैव लक्ष्यलक्षणभावसंबन्धस्योक्तत्वादिति भावः । (र. ना.) ५ यत्र प्रादीनां गतिसंज्ञा नास्ति तदर्थमित्यर्थः । गतिसंज्ञायां तु सूत्रेणैव सिद्धिरिति भावः । ( र. ना. ) ६ सुराजादिशब्दप्रयोगे सति प्रतीयमानधर्माणां पूजादिरूपाणां प्रकृतवार्तिकेषु निर्देशस्य प्रयोगविषयोदाहरणमात्रफलकत्वादित्यर्थः । ( र. ना. ) ७ कर्मप्रवचनीयेति । *कर्मप्रवचनीयप्रतिषेधः* इति तु मत्यादिविषय एव । स्वत्योस्तु समासो भवत्येव ॥ इति प्रागेव प्रदीपे स्पष्टमुक्तम् ।

ति, पापं तु वस्तुस्थित्या गर्हितमिति निन्दापापयोर्भेदः ॥ पूर्ववदुपलक्षणार्थत्वादीषदर्थेऽपि समासो भवति—कालवणमिति[1] ॥ अन्ये त्वाहुः—पृथिवीवाचिकुशब्दनिवृत्तये कुः पापार्थइत्युच्यते ॥ ईषदर्थे तूत्तरपदे कादेशविधानात्समासो भवत्येव ॥

(उद्द्योतः) ईषदर्थेपीति । अत एवोत्तरपदाधिकारे ईषदर्थं इति कोः कादेशविधानं चरितार्थम् । पृथ्वीवाचकस्य व्यावृत्तये त्वेतद्वचनम् । साहचर्यं तु न सर्वत्र व्यवस्थापकमिति[2] भावः ॥

( १३६४ सौनागवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ प्रादयो गताद्यर्थे प्रथमया ॥ * ॥

( व्याख्याभाष्यम् )

**प्रादयो गताद्यर्थे प्रथमया समस्यन्त इति वक्तव्यम् । प्रगत आचार्यः=प्राचार्यः प्रान्तेवासी प्रपितामहः ॥**

( १३६५ सौनागवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ * ॥

( व्याख्याभाष्यम् )

**अत्यादयः क्रान्ताद्यर्थे द्वितीयया समस्यन्त इति वक्तव्यम् । अतिक्रान्तः खट्वाम्=अतिखट्वः अतिमालः ॥**

( १३६६ सौनागवार्तिकम् ॥ ७ ॥ )

## ॥*॥ अवादयः क्रुष्टाद्यर्थे तृतीयया ॥*॥

( व्याख्याभाष्यम् )

**अवादयः क्रुष्टाद्यर्थे तृतीयया समस्यन्त इति वक्तव्यम् । अवक्रुष्टः कोकिलया=अवकोकिलः ॥**

( १३६७ सौनागवार्तिकम् ॥ ८ ॥ )

## ॥*॥ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥*॥

( व्याख्याभाष्यम् )

**पर्यादयो ग्लानाद्यर्थे चतुर्थ्या समस्यन्त इति वक्तव्यम् । परिग्लानोऽध्ययनाय पर्यध्ययनः ॥**

( १३६८ सौनागवार्तिकम् ॥ ९ ॥ )

## ॥*॥ निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥*॥

( व्याख्याभाष्यम् )

**निरादयः क्रान्ताद्यर्थे पञ्चम्या समस्यन्त इति वक्तव्यम् । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः निर्वाराणसिः ॥**

( १३६९ वार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अव्ययं प्रवृद्धादिभिः ॥ * ॥

( व्याख्याभाष्यम् )

**अव्ययं प्रवृद्धादिभिः समस्यत इति वक्तव्यम् । पुनःप्रवृद्धं[4] बहिर्भवति, पुनर्गवः, पुनःसुखम् ॥**

(प्रदीपः) अव्ययं प्रवृद्धादिभिरिति । आदिशब्दः प्रकारे । तेन यस्याव्ययस्य समासो दृश्यते तस्यानेन समासः कार्यः ॥ सहसुपेत्यत्रोक्तमपि पुनरिह स्मरणायोक्तम् । अथ वा वार्तिकगृहीतोर्थो योगविभागेन तत्र साधित इति पौनरुक्त्याभावः ॥

(उद्द्योतः) 'सह' 'सुपे'ति योगविभागेन सिद्धे इदं व्यर्थमित्यत आह—सहसुपेत्यत्रेति ॥ एतेन नित्यार्थमिदमित्यपास्तं, तद्वाक्यप्रामाण्येनेह वार्तिकेषु नित्यपदासंबन्धादिति भावः ॥ वस्तुतस्तत्पुरुषसंज्ञार्थमत्र वचनानां पाठः । अत एव पुनर्गव इत्यत्र टच् । तत्र करणादतत्त्वमपि । लक्ष्यानुरोधेन व्यवस्थेत्याहुः[5] ॥

( १३७० वार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ॥ * ॥

( व्याख्याभाष्यम् )

**इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । वाससीइव कन्येइव ॥**

( १३७१ वार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ अव्ययमव्ययेन ॥ * ॥

( व्याख्याभाष्यम् )

**अव्ययमव्ययेन समस्यत इति वक्तव्यम् । प्रप्रयज्ञपतिम्[6] ॥**

( १३७२ वार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ उदात्तगतिमता च तिङा ॥ * ॥

(भाष्यम्) **उदात्तवता तिङा गतिमता च तिङाऽव्ययं समस्यत इति वक्तव्यम् । अनुव्यचलत्, अनुव्याकरोति, यत्परियन्ति ॥ कुगति ॥ १८ ॥**

(प्रदीपः) अनुव्यचलदिति । अत्र पूर्वं परत्वात्तिङ्ङतिङ इति निघातः, तत उदात्तत्वाभावाद् गतिमतेति पृथगुक्तम् । तत्र त्रयाणां पदानां समासे कृते समासान्तोदात्तत्वं भवति । तत्पुरुषे तुल्यार्थेत्यनेन[7] तु पूर्वपदप्रकृतिस्वरत्वं न भवति । गतिर्गतावित्यनेनानोरनुदात्तत्वात् । तत्र[8] चोदात्तस्वरितग्रहणानुवर्तनात् । विशब्दस्य[9] तु पूर्वपदत्वाभावात् ॥ यत्परियन्तीति । उदात्तवत उदाहरणम् । निपातैर्यद्यदीति निघातप्रतिषेधाद्यन्तीत्यस्य प्रत्ययस्वरेणाद्युदात्तत्वात् परिशब्दस्य यन्तीत्यनेन समासः ॥ १८ ॥

(उद्द्योतः) अत्र पूर्वमिति । अनुना समासात्पूर्वमित्यर्थः ॥ त्रयाणां पदानामिति । गतिविशिष्टतिङन्तेनाव्ययस्य समासविधानादित्यर्थः ॥ उदात्तवतेत्यनेन तु न विना समासः, निघातेन तस्योदात्तवत्त्वाभावादिति भावः ॥ तत्पुरुषे तुल्यार्थेति । समपाद इत्यादौ पूर्वपदप्रकृतिस्वरेण पूर्वपदानुदात्तत्ववारणाय[10] उदात्तस्वरितग्रहणानुवृत्त्या[11] तद्योगिपूर्वपदस्यैव बहुव्रीहौ प्रकृत्येत्यत्र

---

१ ईषल्लवणमित्यर्थः । (र. ना.) २ कृत्वोऽर्थग्रहणेन सहचरितपरिभाषाया अनित्यत्वज्ञापनादिति भावः । (र. ना.) ३ इदं कात्यायनवार्तिकं, सौनागवार्तिकेष्वर्थनिर्देशात्—। (र. ना.) ४ क्वाचित्कं वाक्यमेतत् । (र. ना.) ५ योगविभागेन समासविधानपक्षेऽपि प्रकृतवचनसंपादिततत्पुरुषसंज्ञाबलाट्टच् अत एव पूर्वत्रापि पुनाराजः, पुनर्गव इत्युदाहृतम् । अतष्टज् व्यवस्थित एव । अव्यवस्थितेषु स्वरादिषु लक्ष्यानुरोधेन व्यवस्था कार्येत्यर्थः । (र. ना.)

६ समासादव्ययपूर्वपदप्रकृतिस्वरसिद्धिः । शेषस्य निघातः । (र. ना.) ७ तत्पुरुषे तुल्यार्थेति सूत्रे इत्यर्थः । (र. ना.) ८ उपसर्गाश्चाभिवर्जमित्यनेनोदात्तयोगित्वेऽपीति शेषः । (र. ना.) ९ विशब्देनेत्यर्थः । (र. ना.) १० स्वस्वसमसिमेत्यनुच्चानीति फिट्सूत्रेण समशब्दस्यानुदात्तत्वादिति भावः । (र. ना.) ११ अनुवर्तमानस्य चोदात्तस्वरितयोगिपरत्वेनेति शेषः । (र.ना.)

ग्रहणादिति भावः ॥ पूर्वपदत्वाभावादिति । विनाऽचलदित्यस्य न समासः, किं तु विविशिष्टनाचलदित्यनेनानोरित्याशयः। अन्यथा वेरुदात्तत्वे उदात्तयणः परत्वादकारस्य स्वरितत्वं स्यादिति भावः ॥१८॥

( २७९ तत्पुरुषसंज्ञासूत्रम् ॥ २ । २ । १ आ० १३ )

## ४३९ उपपदमतिङ् ॥ २।२।१९ ॥

( गतिकारकोपपदानामितिरिभाषाधिकरणम् )

( आक्षेपभाष्यम् )

**अतिङिति किमर्थम् ? ॥**

(प्रदीपः) उपपदम ॥१९॥ अतिङिति किमर्थमिति। यदि तिङन्तस्य समासो निषिध्यते तदा सुप्सुपेत्यधिकारात्तिङन्तस्य प्राप्त्यभावादनर्थकः प्रतिषेधः। अथ तिङ्शब्देन तिङर्थो लक्ष्यते तिङन्तार्थवाचिनः शब्दस्य समासनिषेधार्थं तथापि तदर्थशब्दस्तिङन्त एव भवतीत्यनर्थक एवप्रतिषेध इति प्रश्नः ॥

( उद्योतः ) उपपदम ॥ १९ ॥ यदि तिङन्तस्येति । उपपदस्येत्यर्थः ॥ तिङन्त एवेति । कृदभिहितस्य द्रव्यवद्भावादिति भावः ॥ न च मा भवान्भूदित्येतद्व्यावृत्तयेऽतिङन्तः समासः इत्यर्थकं तत्, माङीत्यस्य सतीत्यर्थात् तत्रोपपदत्वमेव नेत्यदोषात्। प्रथमार्थे सौत्री सप्तमी हि उपपदसंज्ञालिङ्गम्। अतएव पशाविल्यादौ नोपपदत्वम् । तुमुन्ण्वुलावित्यत्र तु क्रियार्थोपपदस्येति कार्यार्थमुपपदत्वमावश्यकमिति भाष्याशयः ॥

( समाधानभाष्यम् )

**कारको व्रजति, हारको व्रजति ॥**

( प्रत्याख्यानभाष्यम् )

**अतिङिति शक्यमवक्तुम् ॥**

( आक्षेपभाष्यम् )

**कस्मान्न भवति-कारको व्रजति, हारको व्रजति ? ॥**

( समाधानभाष्यम् )

**सुप्सुपेति वर्तते ॥**

( समाधानवार्तिकावतरणभाष्यम् )

**अत उत्तरं पठति—**

(प्र०)अत इति। यस्मात् तिङन्तस्यानर्थकः प्रतिषेध इत्यर्थः॥

( १३७३ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ उपपदमतिङिति तदर्थप्रतिषेधः ॥ * ॥

( व्याख्याभाष्यम् )

**उपपदमतिङिति तदर्थस्यायं प्रतिषेधः ॥ कस्य ?। तिङर्थस्य ॥ कः पुनस्तिङर्थः ? । क्रिया ॥**

(प्रदीपः) तच्छब्देनार्थशब्दसन्निधाने तिङर्थ उच्यते। स तिङन्तस्यार्थोऽर्थो यस्य स तदर्थः॥ कस्येति। सामान्याभिधानाद् विशेषावधारणाय प्रश्नः ॥ कः पुनरिति । कालसाधनसंख्यापुरुषक्रियोपग्रहरूपस्तिङर्थः । तदर्थश्च तिङन्त एव संभवति नान्यत्रेति प्रश्नः ॥ क्रियेति । अनेकार्थसंभवेपि साध्यत्वात् क्रिया प्रधानम्। प्रधानं चार्थस्तिङ्ग्रहणेन वचनसामर्थ्याल्लक्ष्यते॥

( उद्योतः ) अर्थशब्दसन्निधाने इति । तिङन्तशब्दरूपार्थकस्योपपदस्याभावादिति भावः ॥ तिङर्थ उच्यतइति । कस्य ? तिङर्थस्येति भाष्येपि तिङ्पदेन तदर्थो ग्राह्य इति भावः ॥ कस्येति प्रश्नोपि तदर्थशब्दार्थप्रश्नद्वारा तच्छब्दार्थप्रश्न एवेति बोध्यम् ॥ पुरुषः प्रत्यक्त्वादिः, उपग्रहः कर्त्रभिप्रायत्वादिः यद्यपि कर्त्रभिप्रायत्वं न तिङर्थस्तथापि यथाकथंचित् द्योत्यं भवत्येवेति बोध्यम् ॥ तिङर्थ इत्यस्य तिङन्तार्थ इत्यर्थः ॥ अनेकार्थेति । कालसाधनादिरूपेत्यर्थः ॥ साध्यत्वादिति । साधनसाध्यत्वेन शाब्दप्राधान्यादित्यर्थः ॥

( १३७४ न्यासान्तरवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ क्रियाप्रतिषेधो वा ॥ * ॥

( व्याख्याभाष्यम् )

**अथ वा व्यक्तमेवेदं पठितव्यम्–उपपदमक्रियेति॥**

( प्रदीपः ) क्रियाप्रतिषेधो वेति । यदि तिङ्ग्रहणेन वचनसामर्थ्यात् क्रिया लक्षणीया तदा प्रतिपत्तिलाघवाय साक्षात् क्रियाप्रतिषेधः कर्तव्य इत्यर्थः ॥

( उद्योतः ) तिङ्ग्रहणमपनीय क्रियापदग्रहणे लाघवं दर्शयति—यदीति ॥

( आक्षेपभाष्यम् )

**अथ अक्रियेति किं प्रत्युदाह्रियते ? ॥**

( प्रदीपः ) अत्रापि पक्षे सुबन्तस्य क्रियावाचित्वाभावान्निर्विषय एव प्रतिषेध इत्याह—अथेति ॥

( प्रत्युदाहरणभाष्यम् )

**कारको गतः, कारको यातः ॥**

( प्रदीपः ) कारको गत इति । गतशब्दः क्रियावाच्युपपदं तत्र तुमुन्ण्वुलाविति ण्वुल् । कर्तुं गत इत्यर्थः ॥ अत्रातिङ्ग्रहणात् समासाभावोऽन्यथा गतकारक इति स्यात् । अत्र च प्रकृतिवाच्यक्रियाश्रयो ण्वुल् । तदाश्रयं गतशब्दस्य क्रियावाचित्वमिति समासप्रतिषेधः ॥

(उद्योतः) अतिङ्ग्रहणादिति। अक्रियाग्रहणेऽपि बोध्यम्॥ नन्वत्र गतशब्दस्य सत्त्वप्रधानतया कथं क्रियावाचित्वमित्याशङ्क्याह—अत्रचेति । द्रव्यवाचित्वे प्रत्ययानुपपत्तिः क्रियावाचित्वे तु उपपदसमासो दुर्वार इति तद्व्यावृत्त्यर्थमक्रियाग्रहणमिति भावः ॥

१ तस्यैव तत्पुरुषे तुल्यार्थेति सूत्रेऽप्यनुवर्तनादिति बोध्यम् । ( र. ना. ) २ विशब्देनेत्यर्थः । ( र. ना. ). ३ विशब्देनाचलदित्यस्य समासाङ्गीकारे इत्यर्थः । वस्तुतस्तु तथा समासे सत्यपि न काऽपि क्षतिः–व्यचलदित्यस्यानुना गतिमतेत्यनेन पुनः समासे समासान्तोदात्तत्वात् । तथाचैकप्रवृत्त्यैव लक्ष्यसिद्धिसंभवे शास्त्रस्य प्रवृत्तिद्वयस्वीकारे मानाभावेन गौरवेण च युगपत्पदत्रयस्य समासे वेः पूर्वपदत्वाभाव इत्येव कैयटाशयः । ( र. ना. ) ४ मा भूदित्येतयोः समासव्यावृत्तये इत्यर्थः । अयं भावः । अतिङ्ग्रहणाभावे उपपदं सुबन्तं समर्थेन समस्यते इत्यर्थः स्यात् । सुपा इत्यस्य निवृत्तत्वात् तन्निवृत्तिश्च माङाद्युपपदस्य तिङन्तेन समासस्य संग्रहार्थमिति संभाव्येतेति तद्वारणार्थमतिङिति वक्तव्यमिति । ( र. ना. ) ५ कर्मण्यण् इत्यादेर्धातोरण् प्रत्ययो भवति कर्म चोपपदसंज्ञमित्याद्यर्थ इति भावः । ( र. ना. ) ६ चतुर्थ्यर्थमित्यर्थः । ( र. ना. )

७ कालादिक्रियान्तानामुपग्रहः संबन्धो यत्र तथाविधरूपो विशिष्टस्तिङन्तार्थ इत्यर्थः । उपगृह्यते परस्परं संसृज्यते येनेत्युपग्रहः संबन्धः । बाहुलकात्करणेऽप् । नागेशेन तु उपग्रहः परस्मैपदात्मनेपदे इति प्राचीनसंज्ञामभिप्रेत्य तद्द्योत्यार्थः कर्त्रभिप्रायत्वादिरुपग्रहपदेन गृहीतः । ( र. ना. ) ८ साध्यत्वेन विधेयत्वादित्यर्थः । ( र. ना. ) ९ तदर्थप्रतिषेध इति वार्तिकबलादित्यर्थः । सूत्रेऽतिङिति शब्दोपादानबलादित्यर्थो वा । ( र. ना. ) १० उत्तमपुरुषार्थः प्रत्यक्त्वमस्मच्छब्दार्थः । आदिना संबोध्यत्वदेवदत्तत्वादिः । ( र. ना. ) ११ गत इत्यत्र क्तप्रत्ययप्रकृतिगम्धातुवाच्यगमनक्रियाश्रय इत्यर्थः । तदाश्रयमिति । तादृशक्रियाश्रयमित्यर्थः । ( र. ना. ) १२ ण्वुल्प्रत्ययानुपपत्तिरित्यर्थः । ( र. ना. ) १३ क्रियावाचित्वमादाय ण्वुल्प्रत्ययोपपादानेत्वित्यर्थः । ( र. ना. )

( बाधकभाष्यम् )

**नैतत्क्रियावाचि ॥ किं तर्हि? । द्रव्यवाचि ॥**

**( प्रदीपः ) नैतदिति ।** सुबन्तविशेषणमतिङ्ग्रहणम् । न चात्र सुबन्तं क्रियावाचि । प्रकृत्यर्थस्य ह्यत्र गुणीभावः । प्रत्ययार्थस्य कर्तुः प्राधान्यम्, तस्य च द्रव्यरूपेण कृता[1]भिधानम् । प्रधानेन च व्यपदेशो भवतीति द्रव्यवाचीत्युक्तम् । अत एव गतशब्दस्य समासो न प्राप्नोति, तस्यानुपपदत्वाद् । धातोश्च क्रियावाचित्वात् तदाश्रया [2]प्रत्ययोत्पत्तिरविरुद्धा । धात्वर्थस्य [3]प्रत्ययार्थेन संसृष्टत्वात् पदान्तरेणैकार्थीभावासंभवात् समासस्य त्वप्रसङ्गः, धातोः सुबन्तत्वाभावाच्च ॥

**( उद्द्योतः )** इदानीमेव क्रियावाचित्वोपपादनादाह—**सुबन्तेति** । उपपदविशेषणमित्यर्थः ॥ **नैतत् क्रियावाचीति** भाष्यस्य नैतत्प्राधान्येन क्रियावाचीत्यर्थः ॥ नन्वेवमत्र समासो दुर्वारोत आह—**अत एवेति** ॥ प्रत्ययोत्पत्तिनिमित्तमुपपदत्वं च न गतशब्दस्य किं तु धातोरेवेत्याह—**धातोश्चेति** । अन्वर्थाभावेपि सामर्थ्यादुपपदत्वमित्यभिमानः ॥ ननु प्रत्ययोत्पत्तिवत्समासोपि स्यादत आह—**धात्वर्थस्येति** । एवं च तन्मा[5]त्रस्यान्येनैकार्थीभावासम्भव इति भावः ॥ वस्तुतस्तु **नैतत् क्रियावाचीत्य**नेनात्र **तुमुन्ण्वुलाविति** ण्वुलेव नेति बोध्यते । **क्रियार्थायामिति** स्त्रीलिङ्गनिर्देशेन क्रियार्थायाः क्रियाया एव लाभे पुनः क्रियाग्रहणेन प्राधान्येन साध्यमात्रावस्थक्रियाप्रतिपादकस्यैव ग्रहणात् । किं च क्रियाशब्देन क्रियावाचकशब्दग्रहणे क्रिया प्रधानभूता साध्यावस्थैवात्र गृह्यते इति **गतिकारकोपपदा**दिति सूत्रेपि भाष्ये स्फुटम् ॥ अर्थग्रहणे तु गुणीभूताया अपि ग्रहणमिति पाकादियोगे कारकविभक्तिकृत्वसुजादीनां साधुत्वं भवत्येवेत्याशयः ॥ अन्यथा सिद्धा[6]न्ते कारको गत इत्यत्र समासो दुर्वारः स्यात् ॥ किं च[7] क्रियावाचित्वाभावादत्राप्रत्युदाहरणत्वम् । तुमुन्नन्तं तु भवतीत्यस्यान्याय्यत्वात् ॥ कैयटोक्तरीतिस्त्वनुपसर्जनाद् '**येनविधिः**' **समर्थः पदे**त्यादिसूत्रभाष्यविरुद्धा । तत्र हि निष्कृष्यैकार्थीभावं विनापि समासतद्धितादिप्रवृत्तेरङ्गीकारात् । न चैवमपि कारको व्रजतितरामित्यत्र समासाभावार्थं प्रतिषेध आवश्यकः, अनभिधानेन तत्र तादृशप्रयोगाभावादिति भाष्याशयः ॥

( प्रत्युदाहरणान्तरभाष्यम् )

**इदं तर्हि—कारकस्य गतिः कारकस्य व्रज्येति ॥**

**( प्रदीपः ) कारकस्य गतिरिति ।** गमनं गतिरिति भावे प्रत्ययविधानात् क्रियावाचित्वमस्तीति भावः ॥

( बाधकभाष्यम् )

**एतदपि द्रव्यवाचि । कथम्? । कृदभिहितो भावो द्रव्यवद्भवतीति ॥**

**( प्रदीपः ) एतदपीति ।** धातुरत्र साध्यभूतां क्रियां प्रत्याययति । प्रत्ययस्तु तस्या एव क्रियाया उपसंहतक्रमरूपां सत्त्वरूपतामाह । प्रत्ययार्थश्च प्रधानमिति यत्सुबन्तं न तत्क्रियावाचि, यत्क्रियावाचि न तत्सुबन्तमित्यर्थः ॥ **द्रव्यवदिति ।** यथा घटादेर्द्रव्यस्य लिङ्गसंख्यासाधनसंबन्धः तथा कृदभिहितस्यापि भावस्येत्यर्थः ॥

**( उद्द्योतः ) उपसंहतक्रमरूपां,** उपसंहतक्रमत्वसमानाधिकरणवैजात्यविशेष[10]रूपाम् ॥ **प्रधानमितीति** । प्रत्य[11]यार्थवैजात्येन लिङ्गाद्यनन्वयरूपप्रकृत्यर्थवैजात्यकार्याभिभवात्तस्य प्राधान्यमिति भावः॥ एवं चात्रापि न ण्वुलितितात्पर्यं भाष्यस्येति बोध्यम् ॥

( सिद्धान्तसमाधानभाष्यम् )

**एवं तर्हि सिद्धे सति यद् 'अतिङ्' इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः—अन[12]योर्योगयोर्निवृत्तं सुप्सुपेति ॥ किमेतस्य ज्ञापने प्रयोजनम्? । 'गतिकारकोपपदानां कृद्भिः सह समासो भ[13]वति' इत्येषा परिभाषा न कर्तव्या भवति ॥**

**( प्रदीपः ) अनयोरिति ॥** नन्वत्रैव सूत्रे अतिङ्ग्रहणात् सुपो निवृत्तिर्ज्ञाप्यतां पूर्वत्र कथं ज्ञाप्यते । एवं तर्हि योगविभागः क्रियते—तेन '**अतिङ्**' इति सूत्रद्वयशेषो ज्ञायत इत्यदोषः । अतिङ्ग्रहणेन च समासो योगद्वयविहितो विशेष्यते—अतिङन्तः समासो भवतीति । तेन **सुपे**त्यस्यैव निवृत्तिर्ज्ञाप्यते । सुब्ग्रहणं तु पूर्वस्य पदस्य पदकार्यार्थमनुवर्तत एव । भाष्येपि समुदायस्य निवृत्तिर्विवक्षिता, न तु केव[14]लस्य सुबित्यस्य ॥ **गतिकारकोपपदानामिति ।** एतत्सूत्रद्वये सुपेत्यस्य निवृत्त्या गतिनामुपपदानां च उत्तरपदात् सुबुत्पत्तेः प्राक्समाससिद्धिः । कारकाणां तु **कर्तृकरणे कृता बहुलमिति** समासः क्रियते । तत्र कृद्ग्रहणात् प्राक्सुबुत्पत्तेः समासः । तिङन्तेन तृतीयान्तस्य सुपेत्यस्यानुवर्तनात् समासाप्रसङ्गात् कृदन्तेनैव समासे सिद्धे कृद्ग्रहणं कृदन्तावस्थायामेवानुत्पन्ने सुपि समासार्थम् । अस्याश्च परिभाषायाः **पुंयोगादाख्यायामि**त्यत्र प्रयोजनानि वक्ष्यन्ते । यदि तर्ह्युत्तरपदात्सुब्नोत्पद्यते तदा दधिसेचावित्यादौ पदादित्वाभावात्षत्वप्रतिषेधो न प्राप्नोति । पदत्वाभावादुत्तरपदव्यपदेशश्च न, ततश्च तन्निबन्धनस्वरो न सिध्यति ॥ नैष दोषः । निरुपपदात्सेचयतेः क्विपि कृते षष्ठीसमासः क्रियत इति षत्वनिषेधो भविष्यति । यद्वा सुपेत्यस्य निवृत्तौ सत्यां यथेष्टं कार्यसिद्धये क्वचिदुत्पन्ने सुपि समासः क्वचित्प्राक्सुबुत्पत्तेः । एवं कारकसमासोपि बहुलग्रहणात् क्वचित्सु[15]बुत्पत्तेर्भवतीति **सा हि तस्य धनक्रीते**ति प्रयोग उपपन्नः । उत्तरपदशब्दे समासावयवविशेष[16]स्य रूढिरिति तत्राप्यदोषः ॥

**(उद्द्योतः)** भाष्ये—**एवंतर्हि सिद्धे इति ।** तादृशप्रयोगाभावादतिप्रसङ्गनिरासे सिद्ध इत्यर्थः ॥ **एवं तर्हि योगविभाग इति ।** अत्र 'अतिङिति, पूर्वसूत्रे 'गतिः' इति चेत्यर्थः ॥ **अतिङ्ग्रहणेन**

---

१ कृत्प्रत्ययेनेत्यर्थः । ( र. ना. ) २ कारक इत्यत्र ण्वुल्प्रत्ययोत्पत्तिरित्यर्थः । (र.ना.) ३ क्तप्रत्ययार्थेनेत्यर्थः । (र.ना.) ४ ण्वुल्प्रत्ययोत्पत्तिनिमित्तभूतक्रियाबोधकत्वसामर्थ्यादित्यर्थः । अभिमानोक्तिबीजन्तु 'वस्तुतस्तु' इत्यादिना वक्ष्यते । ( र. ना. ) ५ क्रियामात्रस्येत्यर्थः । ( र. ना. ) ६ सिद्धान्तेऽसुबन्तेनापि समर्थेन समासस्वीकारादिति भावः । ( र. ना. ) ७ ननु सिद्धान्तेऽपि उपपदं सुबन्तं समर्थेन समस्यते इत्यर्थस्वीकाराद् धातोरुपपदत्वेऽपि न समासप्रसङ्ग इत्यत आह—किञ्चेति । ( र. ना. ) ८ प्रत्युदाहरणं भवतीत्यर्थः । अन्याय्यत्वं तु ण्वुलन्ततुमुन्नन्तयोः क्रियावाचित्वावाचित्वयोरविशेषात् । ( र. ना. ) ९ अत्र साध्यावस्थक्रियायाः प्राधान्येनाभिधायकत्वात्सुबन्तत्वाच्च समासप्राप्तिः । अतिङित्यस्य कथञ्चिदपि तिङन्ताघटित इत्यर्थस्वीकाराद् वारणमिति भावः । ( र. ना. ) १० उपसंहृतक्रमत्वमविद्यमानक्रमत्वं तत्समानाधिकरणं यल्लिङ्गसंख्याद्यन्वयरूपं वैजात्यं तद्रूपामित्यर्थः । ( र. ना. ) ११ लिङ्गसंख्याद्यन्वयरूपवैजात्यार्थकस्य तृतीयान्तस्य कार्याभिभवादित्यत्रान्वयः । तादृशप्रकृत्यर्थवैजात्यस्य कार्यं ण्वुलादिस्तस्याभिभवादनुत्पत्तेरित्यर्थः । (र. ना.) १२ कुगतीति, उपपदमितिसूत्रयोरित्यर्थः । ( र. ना. ) १३ 'भवति प्राक् सुबुत्पत्तेः' इति पाठो वाराणसीमुद्रितः । १४ समुदायानुवृत्त्यभावेऽपि केवलमनुवर्तत एवेति भावः । ( र. ना. ) १५ 'सुबन्तेनभ' । १६ ननु पदत्वसमानाधिकरणं समासावयवविशेषत्वमुत्तरपदत्वमिति भावः । ( र.ना. )

चेति । अतिङिल्यस्य प्रथमान्ततया समास एव विशेष्यते । अतिङिति बहुव्रीहिः । प्रपचतितरामित्यादौ नित्यसमास इष्ट एव । तिङ्ङिचोदात्तवतीत्यनेन गतेर्निघातेन्तोदात्तत्वमेव । तत्र एतत्सिध्यर्थमेव तिङ्ग्रहणं प्रत्याख्यातं भाष्ये, गतिकारकेति स्वरस्य तु नात्र प्रवृत्तिः, कृद्ग्रहणात् । कृद्ग्रहणप्रत्याख्यानं तु न भाष्यारूढमिति तत्रैव वक्ष्यामः॥ एतेन तत्र नित्यसमासवारणायातिङिति तद्घटितप्रतिषेधायावश्यकमिति कथं तत्र तन्निवृत्तिज्ञापकम्। प्रपचतितरामित्यादौ च गतिकारकोपपदादिति तिङ्ङिचोदात्तवतीति सूत्रभाष्यप्रामाण्येनोदात्तवतेत्यादिवार्तिकोक्तो वैकल्पिकसमास एवेष्यते इति परास्तम् ॥ सुब्ग्रहणं त्विति । उपपदमित्यन्वर्थसंज्ञया सुबन्तस्यैव पदत्वेनोपपदत्वात् गतेः सुबन्तत्वाच्च राजयुध्वेत्यादौ पूर्वपदे नलोपादिपदकार्यसिद्धेः, तिङन्ताघटित इति समासविशेषणेन कारको व्रजतीत्यादिव्यावृत्तिसिद्धेः प्रथमान्तसुबनुवृत्तेरपि फलाभावेन चिन्त्यमेतत् ॥ कृदन्तावस्थायामेवेति । काष्ठैः पचतितरामित्यादिवारणाय कृद्ग्रहणस्यावश्यकत्वेन चिन्त्यमिदमिति कश्चित् । तन्न, बहुलग्रहणेन शानजन्तादिभिरिव तेनापि समासस्य वारयितुं शक्यत्वात् ॥ परिभाषायाः प्रयोजनवत्त्वे ह्यतिङ्ग्रहणं प्रयोजनवत्स्यादत आह—अस्याश्चेति ॥ तन्निबन्धनः स्वर इति । गतिकारकोपपदात् कृदिति विहित इत्यर्थः ॥ स्वरासिद्धरुचेराह—यद्वेति॥ सुपेत्यस्य निवृत्ताविति । सुपैवेति नियमाभावाद्यथेष्टं समाससिद्धिरितिभावः । लक्ष्यानुसारेण च व्यवस्थेति बोध्यम् ॥ तत्र सुबुत्पत्तेः प्रागित्युपलक्षणं, लिङ्गबोधकप्रत्ययोत्पत्तेः प्रागपीति बोध्यम् ॥ सुबुत्पत्तेरिति । सुबुत्पत्तेरनन्तरमित्यर्थः ॥ धनक्रीतेति । सुप्युत्पत्तेः पूर्वं समासे क्रीतात्करणेतिङीष् स्यात् । सुबन्तेन तु समासेन्तरङ्गत्वाट्टाप् सिध्यतीति भावः ॥ यत्र सुबुत्पत्तेः पूर्वं समासस्तत्र स्वराप्राप्तेराह—उत्तरपदशब्द इति ॥

(आक्षेपभाष्यम्)

**यद्येतज्ज्ञाप्यते केनेदानीं समासो भविष्यति ? ॥**

(प्रदीपः) **यद्येतदिति** । शब्देनोत्तरपदस्यानुपादानात् प्रश्नः ॥

(समाधानभाष्यम्)

**समर्थेन ॥**

(प्रदीपः) **समर्थेनेति** । सुबित्यस्यानुवृत्तौ सत्यां समासस्य पदविधित्वात्समर्थपरिभाषोपस्थानात् ॥

(उद्द्योतः) **सुबित्यस्येति** । तदननुवृत्तावपि प्रागुक्तरीत्या पदविधित्वं बोध्यम् ॥

(आक्षेपभाष्यम्)

**यद्येवं धातूपसर्गयोरपि समासः प्राप्नोति, पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति ॥**

(प्रदीपः) **यद्येवमिति** । ततश्चैकस्वर्यादिप्रसङ्गः शाकलप्रतिषेधप्रसङ्गश्च ॥ **पूर्वं धातुरुपसर्गेणेति** । ततस्तयोः सामर्थ्यमस्ति । उपसर्गार्थविशिष्टायाः क्रियायाः साधनयोगात् ॥

(उद्द्योतः) सुपेत्यस्यानुवृत्तावतिप्रसङ्गमाह—भाष्ये—यद्येवमिति । कुगतीत्यनेनेति भावः । अतिङित्यनेन तिङन्तस्यैव प्रतिषेध इति तात्पर्यम् ॥ **ऐकस्वर्यादीति** । आदिनैकपद्यम् । किं च तयोः समासे प्रातिपदिकतया परत्वात्सुबुत्पत्तिरेव स्यान्न तिङित्यपि बोध्यम् ॥ **पूर्वं धातुरुपसर्गेणेति** । तत्संज्ञकशब्देनेत्यर्थः ॥

(समाधानभाष्यम्)

**नैतदिति । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण । साधनं हि क्रियां निर्वर्तयति । तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम् ॥**

(प्रदीपः) **पूर्वं धातुः साधनेनेति** । ततश्च पूर्वं साधनाभिधायिप्रत्ययोत्पत्तिः, पश्चात्साधनसंसृष्ट एव धातुरुपसर्गेण युज्यते न केवल इति धातूपसर्गयोः समासाभावः, तत्र कृदन्तेन समासो भवत्येव तिङन्तेन त्वतिङिति निषेधान्न भवति । यत्र तु तिङन्तेन समास इष्यते स विषयो दर्शितः—**उदात्तवतेति** ॥ **अभिनिर्वृत्तस्येति** । अनिष्पन्नस्य विशेषाकाङ्क्षाया अभावात्, अनुभूयते सुखमुपास्यते गुरुरित्यादौ धातुरेव सकर्मिकां क्रियां वक्ति, उपसर्गस्तु द्योतक इति नास्ति कश्चिदस्मिन् पक्षे दोषः ॥

(उद्द्योतः) पूर्वं साधनेन योगेपि उपसर्गस्य क्रियाविशेषकत्वाविशेषात्सामर्थ्यस्य दुर्वारत्वमित्यत आह—**ततश्च पूर्वमिति** । साधनसंसृष्ट एवोपसर्गेण युज्यत इति केवलेन सामर्थ्याभाव इति भावः ॥ न च निष्कृष्यैकार्थीभावो न समासादिप्रयोजक इत्युक्तम्, एवं च विशिष्टैकार्थीभावेऽवयवानामपि तत्सत्त्वात्स दुर्वार इति वाच्यम् । तिङन्तैकार्थीभावाभावात्, अतिङिति निषेधात्, तदवयवेन तु प्रत्ययार्थासंसृष्टेन नैकार्थीभावः, साधनसंसृष्टार्थस्यैवोपसर्गेण योगादित्यदोषात् ॥ भाष्ये—**साधनं हि क्रियां निर्वर्तयतीति** । क्रियां तत्प्रतीतिं, साध्यत्वेन प्रतीतेः तत्संबन्धाधीनत्वात्, साध्यत्वेन प्रतीतार्थकयोगे च तेषामुपसर्गत्वादिति भावः ॥ **अभिनिर्वृत्तस्य** । अभिनिर्वृत्तज्ञानविषयस्येत्यर्थः ॥ **अनिष्पन्नस्येति** । अज्ञातस्येत्यर्थः ॥ नन्वेवमुपसर्गसम्बन्धात् प्राक्केवलभ्वासादेः सकर्मकत्वाभावेन कर्मणि लादयो न स्युरत आह—**अनुभूयते सुखमिति** ॥ **धातुरेवेति** । केवलधातुरेवेत्यर्थः ॥ **उपसर्गस्तु द्योतक इति** । स च श्रोतृबोधाय पश्चादेव सम्बध्यते इति भावः ॥ एतेनोपसर्गाणां द्योतकत्वेपि तद्द्योत्यार्थस्य साधनसम्बन्धात् पूर्वमेव धातुना बोधनावश्यकत्वेन धातूपसर्गयोः सामर्थ्यसत्त्वेन समासो दुर्वार इत्यपास्तम् ॥ एतच्च सुडादित्यत्र विस्तरेणोपपादयिष्यते ॥ **विपराभ्यां जेरित्यादौ** व्यादिद्योत्यार्थप्रतिपादकस्येत्यर्थः, विपराभ्यां परत्वयोग्यस्येत्यर्थो वा ॥

(उपपदसमासबलीयस्त्वाधिकरणम्)

(१३७५ विप्रतिषेधवार्तिकम् ॥ ३ ॥)

**॥ * ॥ षष्ठीसमासादुपपदसमासो विप्रतिषेधेन ॥ * ॥**

(भाष्यम्) **षष्ठीसमासादुपपदसमासो भवति**

---

१ 'अत्र समासाभावेऽपि' इति शेषः । (र. ना.) २ अस्य वक्ष्यमाणस्य च सिद्धिपदार्थस्य हेतुविधया फलाभावेऽन्वयः । (र. ना.) ३ पत्वनिषेधसिद्धावपीति शेषः । (र. ना.) ४ केनेति सहार्थे तृतीया । (र. ना.) ५ सुपेत्यस्य निवृत्त्येत्यादिः । (र. ना.) ६ उपपदसंज्ञाया अन्वर्थताश्रयणरूपरीत्येत्यर्थः । (र. ना.) ७ अभिनिर्वृत्तस्येत्यादिमूलोक्तार्थेऽयं हेतुः । (र. ना.) ८ केवलस्य साध्यत्वेनाज्ञातत्वादिति भावः । (र. ना.) ९ तत्पदार्थः साधनम् । (र. ना.) १० अभिनिर्वृत्तं यज्ज्ञानं तद्विषयस्येत्यर्थः । (र. ना.) ११ साध्यत्वेनाज्ञातस्येत्यर्थः । (र. ना.)

**विप्रतिषेधेन । षष्ठीसमासस्यावकाशः—राज्ञः पुरुषो राजपुरुषः । उपपदसमासस्यावकाशः—स्तम्बेरमः कर्णेजपः । इहोभयं प्राप्नोति—कुम्भकारो नगरकारः । उपपदसमासो भवति विप्रतिषेधेन ॥**

(प्रदीपः) **षष्ठीसमासादिति** । नित्यत्वानित्यत्वाभ्यामनयोर्विरोधसद्भावः ॥ **कुम्भकार इति** । पञ्चके प्रातिपदिकार्थे प्रातिपदिकेनैव कर्मण उक्तत्वात् तत्रैवोपपदेऽणा भाव्यम् । अपवादविषयत्वाद् द्वितीयानुत्पादात्, कृते चाणि **कर्तृकर्मणोरिति** षष्ठी भवतीत्यस्त्युभयप्रसङ्गः ॥

(उद्योतः) **विरोधसद्भाव इति** । इत्यभिमान इति शेषः ॥ अभिमानत्वं वा[1]स्यानुपदमेव स्फुटीकरिष्यते ॥ ननु कर्मण्युपपदेऽण् कर्मत्वं च विभक्त्या गम्यं तत्राणुत्पत्तेः पूर्वं कृदन्तत्वाभावात्षष्ठ्या अप्राप्तौ द्वितीययैव भाव्यमिति जातेपि अणि तन्निवृत्तौ मानाभाव इति कुतः षष्ठीसमासप्राप्तिरत आह—**पञ्चके इति** । प्रातिपदिकस्य पदत्वाभावादुपपदत्वं कथममिति चिन्त्यमेतत् ॥ **सुबन्तमेवोपपदमिति तत्रोपपदमिति**सूत्रे भगवान्वक्ष्यति स्वयं च । किं च पञ्चकपक्षेपि सकलकारकशक्तिमानर्थः संमुग्धा[2]कारेणैव प्रातिपदिकेनोच्यते न तु विशेष्ये[3] इतिकर्मोपपदत्वप्रयुक्ताणोऽप्राप्तिः । [4]अन्यथा करणाद्युपपदेपि कर्मोपपदप्रसङ्गः, तस्माद्वस्तुतः कृत्प्रकृत्यर्थकर्मत्वसत्त्वेन कृदनुत्पत्तावपि [5]भावितत्वं गृहीत्वा षष्ठीप्रवृत्तिरित्येव भाष्याशय उचितः ॥

( १३७६ विप्रतिषेधप्रत्याख्यानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा षष्ठीसमासाभावादुपपदसमासः ॥ * ॥**

(भाष्यम्) **न वार्थो विप्रतिषेधेन । किं कारणम्? । षष्ठीसमासस्याभावादुपपदसमासो भविष्यति 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति समासवचनात् ॥**

(प्रदीपः) **गतिकारकेति** । यतश्चोत्तरपदे विभक्त्युत्पत्त्यनपेक्षणादन्तरङ्ग[6]त्वादुपपदसमासो भवतीत्यर्थः ॥

(उद्योतः) **अन्तरङ्गत्वादिति** । षष्ठीति सूत्रे सुपेति तृतीयान्तस्य संबन्धादिति भावः । अत एव मातुः स्मरतीत्यादौ न षष्ठीसमासः । [7]अत एव च षष्ठ्यन्तस्यानेकसुबन्तेन न समास इति बोध्यम् ॥

( उक्तवार्तिकद्वयवैयर्थ्यभाष्यम् )

**अथ वा विभाषा षष्ठीसमासः । यदा न षष्ठीसमासस्तदोपपदसमासो भविष्यति ॥**

(प्रदीपः) **अथ वेति** । षष्ठीसमासेपि दोषाभाव इत्यर्थः ॥

(उद्योतः) एतद्वार्तिकद्वयमपि प्रत्याचष्टे—**अथ वेति** भाष्ये । **विप्रतिषेधे पर**मित्यस्य तु न प्रवृत्तिः, युगपदुभयविहिततत्पुरुषसमाससंज्ञयोः प्रवृत्तिसंभवेनासंभवरूपविप्रतिषेधाभावात् ॥ उपपदसमासो भविष्यतीत्यस्योपपदमिति सूत्रविहितसमाससंज्ञा तत्पुरुषसंज्ञा च स्थास्यतीत्यर्थः । अन्या[8]दृशविरोधस्य तत्प्रवृत्तिनिमित्तत्वे न मानमिति तात्पर्यम् । न च नित्यत्वानित्यत्वज्ञानयोर्विरोधः, [9]बोधे बाधज्ञानस्याप्रतिबन्धकत्वात् । एवं च षष्ठीसमासोपि नित्य[10] एवैतद्विषये फलितः, तद्बोधिताभावांशस्यैतद्विरोधेनैतद्विषये त्यागात् नित्यं क्रीडेत्यादिविषये तस्य क्लृप्तबाधत्वाद् ॥ **गतिकारकोपपदा**दित्यत्र प्रकृतपरिभाषायां च लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते इति षष्ठीसमासोपि सुबुत्पत्तेः पूर्वमेव । स्वरश्च तत्रापि समासे इत्यन्तरङ्गत्वमेव नास्तीति भावः । परिभाषायां सामान्यतः कारकपदोपादानेन कारकविभक्त्यन्तसमासमात्रस्य सुबुत्पत्तेः प्राक् कृद्भिर्लाभात् इति बोध्यम् ॥

( वैयर्थ्यबाधकभाष्यम् )

**अनेनैव यथा स्यात् । तेन मा भूदिति ॥ कश्चात्र विशेषः—तेन वा स्यादनेन वा? । अयमस्ति विशेषः—उपपदसमासो नित्यसमासः, षष्ठीसमासः पुनर्विभाषा ॥**

(प्रदीपः) क्वचित् कार्ये दोषदर्शनादाह—**अनेनेति** । [ **सिन्नित्यसमासयोरि**त्यत्र नित्यसमासग्रहणेनास्य ग्रहणं यथा स्याद् ] **अन्तोदात्तादुत्तरपदादि**त्यत्रानित्यसमासग्रहणेनास्य ग्रहणं मा भूदिति भावः ॥

(उद्योतः) कैयटे **सिन्नित्यसमासयोरि**त्यादिर्यथास्यादित्यन्तोऽग्रन्थः, बहुषु पुस्तकेष्वनुपलम्भात्तत्र नित्यग्रहणप्रत्याख्यानाच्च ॥ **उत्तरपदेति** । एवं चा[11]ग्निचितेत्यादौ विभक्त्युदात्तत्वमपि स्यादिति भावः ॥ १८ ॥

( नित्यसमासलक्षणाधिकरणम् )

( वैयर्थ्यसाधकाक्षेपभाष्यम् )

**ननु च नित्यं यः समासः स नित्यसमासः यस्य विग्रहो नास्ति ॥**

(प्रदीपः) **यस्य विग्रहो नास्तीति** । अस्यापि विग्रहाभावः । षष्ठीसमासेन मुक्ते पक्षे उपपदसमाससद्भावात् ॥

( वैयर्थ्यबाधकभाष्यम् )

**नेत्याह । नित्याधिकारे यः समासः स नित्यसमासः ॥**

(प्रदीपः) **नित्याधिकार इति** । नित्यशब्दस्य स्वरितत्वप्रतिज्ञानात् तदधिकारसंप्रत्ययः ॥

( वैयर्थ्यसाधकभाष्यम् )

**नैवं शक्यम् । अव्ययीभावस्य ह्यनित्यसमासता प्रसज्येत । तस्मान्नित्यः समासो नित्यसमासः यस्य विग्रहो नास्ति ॥ उपपद ॥ १९ ॥**

(प्रदीपः) **नैवं शक्यमिति** । नित्यशब्दस्य स्वरितत्वं दोषवत्त्वान्न प्रतिज्ञायते इत्यर्थः । तदेवं प्रयोजनाभावाद्विप्रतिषेधो न पठितव्यः ॥ १९ ॥

---

१ चार्थो वाशब्दः । (र.ना.) २ कारकत्वरूपसामान्याकारेणैवेत्यर्थः । (र.ना.) ३ कर्मत्वादिनेत्यर्थः । (र. ना.) ४ संमुग्धाकारेण कारकप्रतिपादकमपि प्रातिपदिकमादाय कर्मोपपदत्वस्वीकारे इत्यर्थः । (र.ना.) ५ भाविकृत्प्रकृत्यर्थकर्मत्वं गृहीत्वेत्यर्थः । (र. ना.) ६ अत्र पूर्वप्राप्तिकत्वरूपमन्तरङ्गत्वं बोध्यम् । (र. ना.) ७ सुपेत्यनुवृत्ते एकत्वस्य विवक्षितत्वादेवेत्यर्थः (र. ना.) ८ असंभवातिरिक्तस्य नित्यत्वानित्यत्वप्रयुक्तविरोधस्य विप्रतिषेधशास्त्रप्रवृत्तिनिमित्तत्वे इत्यर्थः । (र. ना.) ९ शाब्दबोधे इत्यर्थः । चन्द्रो मुखमित्यादौ बाधज्ञाने सत्यपि शाब्दबोधदर्शनादिति भावः । (र. ना.) १० स एवेति शेषः । (र.ना.) ११ अग्निचितवानित्यर्थेऽग्नौ चेरिति भूते क्विप् । अनित्यसमासग्रहणेनोपपदसमासस्यापि ग्रहणेऽत्र 'उत्तरपदादन्तोदात्तादिति विभक्त्युदात्तत्वं स्यादिति भावः । (र. ना.)

( २८० तत्पुरुषसंज्ञानियमसूत्रम् ॥ २ । २ । १ आ. १४ )

**४४० अमैवाऽव्ययेन ॥ २ । २ । २० ॥**

( अनिष्टपरिहाराधिकरणम् )

( आक्षेपभाष्यम् )

**एवकारः किमर्थः ? ॥**

( समाधानभाष्यम् )

**नियमार्थः ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ॥**

( समाधानसाधकभाष्यम् )

**इष्टतोवधारणार्थस्तर्हि भविष्यति । यथैवं विज्ञायेत—अमैवाव्ययेनेति ॥ मैवं विज्ञायि—अमाव्ययेनैवेति ॥**

( आक्षेपभाष्यम् )

**अस्ति चेदानीं कश्चिदनव्ययममुशब्दो यदर्थो विधिः स्यात् ॥**

( प्रदीपः ) अमैवा ॥ २० ॥ यदर्थ इति । यन्निवृत्त्यर्थोयं नियमः स्यादित्यर्थः ॥

( समाधानभाष्यम् )

**अस्तीत्याह—खशयं ब्राह्मणकुलमिति ॥**

( प्रदीपः ) खशयमिति । अधिकरणे शेतेरित्यच् । अतोमिति सोरम्भावः । अनेनानव्ययेनामा समासो मा भूद् इत्येवमर्थोयं नियमः स्यात् ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । अन्तरङ्गत्वादत्र समासो भविष्यति ॥**

( प्रदीपः ) अन्तरङ्गत्वादिति । अनुत्पन्न एव सावुपपदसमासेन भाव्यं पश्चात् सुपेति समासविधानकाले अनव्ययस्यामोऽसंभवान्नियमान्तरे वचनस्य चरितार्थत्वाद्विपरीतनियमो न भविष्यतीत्यर्थः ॥

( उद्योतः ) अमैवा ॥ २० ॥ नन्वेवं वचनवैयर्थ्यमतस्तत्सामर्थ्यात्सुबुत्पत्त्यनन्तरमपि समासो ज्ञाप्यते इत्यत आह—नियमान्तरे इति । वक्ष्यमाणे इत्यर्थः ॥

( समाधानसाधकभाष्यम् )

**इदं तर्हि प्रयोजनम् । अमैव यत्तुल्यविधानमुपपदं तत्र यथा स्याद्, अमा चान्येन च यत्तुल्यविधानं तत्र माभूदिति । अग्रे भोजम् । अग्रे भुक्त्वा ॥**

( प्रदीपः ) अमैवेति । एवकारसामर्थ्यादमेत्यस्यावृत्तिराश्रीयते । ततो येन वाक्येनामेव केवलो विधीयते, न प्रत्ययान्तरसहितः, तेन वाक्येन यद्विधीयते उपपदं तत्र सप्तमीनिर्देशात्, तदमा समस्यते नान्यदित्यर्थः ॥ अग्रे भोजमिति । विभाषाग्रेप्रथमपूर्वेष्विति द्वयोः क्त्वाणमुलोर्विधानादत्र समासो न भवति ॥

( उद्योतः ) अमेत्यस्यावृत्तिरिति । चिन्त्यमेतत् । आवृत्तौ मानाभावात्, अमैव तुल्यविधानं यदुपपदं तदमाव्ययेन समस्यते इत्यर्थे अग्रे भुक्त्वा इत्यत्र समासापत्तिरव्ययग्रहणवैयर्थ्यापत्तिश्च । किं च कालो भोक्तुमित्यत्र समासापत्तिः । तस्मादमैव तुल्यविधानं यदुपपदं तदव्ययेनेति नियमेन सर्वेष्टसिद्धिः । अत एव भाष्येऽग्रे भुक्त्वेत्यप्युदाहृतम् *अग्रादिष्वप्राप्तेति वार्तिकप्रत्याख्यानं च संगच्छते इत्याहुः ॥

( नियमफलभाष्यम् )

**अग्रादिष्वप्राप्तविधेः समासप्रतिषेधं चोदयिष्यति । स न वक्तव्यो भवति ॥ अमैवा० ॥ २० ॥**

( प्रदीपः ) अग्रादिष्विति । यतोऽप्राप्तविभाषा ततः प्रत्ययोत्पत्तावग्रादीनां निमित्तत्वान्निमित्तस्योपपदत्वात् समासप्रसङ्गः । प्राप्तविभाषायां त्वग्रादीनां प्रत्ययोत्पत्तावनिमित्तत्वात्तन्निवृत्तावेव हेतुत्वात् तस्यानुपपदत्वमित्यर्थः ॥ २० ॥

( उद्योतः ) अप्राप्तविधेरिति विशेषणव्यावर्त्यमुपपादयति—प्राप्तविभाषायां त्विति । आभीक्ष्ण्य इत्यनुवृत्त्या हि सा, तस्मिंश्च सत्येव प्रत्यय इत्याद्युक्तेः प्रत्ययोत्पत्तिसंनियोगेनैवोपपदसंज्ञास्वीकारादिति भावः ॥ २० ॥

( इति तत्पुरुषप्रकरणम् )

( अथ बहुव्रीहिप्रकरणम् )

( २८१ बहुव्रीहिसंज्ञासूत्रम् ॥ २ । २ । १ आ. १५ सू. )

**४४३ शेषो बहुव्रीहिः ॥ २।२।२३ ॥**

( शेषपदार्थनिर्वचनाधिकरणम् )

( आक्षेपभाष्यम् )

**शेष इत्युच्यते, कः शेषो नाम ? ॥**

( प्रदीपः ) शेषो ॥ २३ ॥ पदस्यार्थस्य च सर्वस्योपयुक्तत्वाच्छेषमसंभाव्य पृच्छति—शेष इति ॥

( उद्योतः ) शेषो ॥ २३ ॥ उपयुक्तादन्यः शेषः ॥

( एकदेशिसमाधानभाष्यम् )

**येषां पदानामनुक्तः समासः स शेषः ॥**

( १३७७ समाधानबाधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ शेषवचनं पदतश्चेन्नाभावात् ॥ * ॥**

**( भाष्यम् ) शेषवचनं पदतश्चेत् । तन्न । किं कारणम् ? । अभावात् । नहि सन्ति तानि पदानि येषां पदानामनुक्तः समासः ॥**

( प्रदीपः ) पदतश्चेदिति । पदेन पदत इत्याद्यादित्वात्

---

१ अव्ययेनैवामन्तेन समासो नत्वनव्ययेनेति भावः । ( र. ना. ) २ पश्चात्सुपा भाव्यमित्यन्वयः । ( र. ना. ) ३ अमाऽव्ययेनैवेत्येतदर्थकस्य अमैवाव्ययेनेत्यस्य वचनस्य वैयर्थ्यमित्यर्थः । ( र. ना. ) ४ अम्ग्रहणसंबद्धैवकारसामर्थ्यादित्यर्थः । अन्यथा कथमेकस्यैवामेत्यस्य तुल्यविधाने समासे च संबन्धः स्यादिति भावः । आवृत्तिलभ्यार्थमाह—तत इत्यादिना । (र. ना.) ५ अमन्तातिरिक्ताव्ययेन सहोपपदसमासस्यैतन्नियमानाक्रान्तत्वेनाव्यावर्त्यत्वादिति भावः । (र.ना.) ६ अनव्ययस्यामन्तस्यैतन्नियमयोग्यस्याभावादिति भावः । ( र. ना. ) ७ 'विभाषाऽग्रे–' इति सूत्रे वक्ष्यमाणमित्यर्थः । ८ अप्राप्तविधेरिति भावप्रधानो निर्देशः । विभाषाऽग्रे प्रथमपूर्वेष्वित्यस्याप्राप्तविभाषाविधित्वादग्रादीनामुपपदत्वेनाग्रादिषूपपदेषु समासप्रतिषेधं चोदयिष्यतीत्यर्थः । ( र. ना. ) ९ अग्रादीतरोपपदेषु तत् प्रत्ययनिवृत्तावेवेत्यर्थः । ( र. ना. )

तसिः ॥ नहीति । सर्वेषां सामान्यविशेषरूपेणोपयुक्तत्वा- दित्यर्थः ॥

( उद्द्योतः ) सामान्यम्—सह सुपेत्यादिः । विशेषः— द्वितीयाश्रितेत्यादिः ॥

( एकदेशिसमाधानान्तरभाष्यम् )

**अर्थतस्तर्हि शेषग्रहणम्—येष्वर्थेषु अनुक्तः स- मासः स शेषः ॥**

( १३७८ समाधानान्तरबाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अर्थतश्चेदविशिष्टम् ॥ * ॥**

**(भाष्यम्) अर्थतश्चेदविशिष्टमेतद्भवति । कुतः ?। पदतः । नहि सन्त्यर्थाः येष्वर्थेष्वनुक्तः समासः ॥**

( प्रदीपः ) **नहि सन्त्यर्था इति ।** पूर्वोत्तरान्यपदार्थेषु तत्पुरुषाव्ययीभावविधानात् ॥

( उद्द्योतः ) **पूर्वोत्तरेति ।** यद्यप्यन्यपदार्थवत् पूर्वोत्तरपदा- र्थयोस्तद्विधानं नास्मच्छास्त्रे तथाप्यव्ययीभावादिमहासंज्ञाबलेन पू- र्वाचार्यपरिगृहीतार्थस्य निमित्तत्वमस्त्येवेत्यभिप्रायः ॥

( सिद्धान्तिसमाधानभाष्यम् )

**त्रिकतस्तर्हि शेषग्रहणम् । यस्य त्रिकस्यानुक्तः समासः स शेषः । कस्य चानुक्तः ? । प्रथमायाः ॥ शेषो ब० ॥ २३ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण- महाभाष्ये द्वितीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥**

( प्रदीपः ) **प्रथमाया इति ।** द्वितीयादीनां प्रतिपदं समासविधानात् प्रथमायाः शेषत्वम् । ततश्च प्रथमान्तानां पदानां बहुव्रीहिरित्यर्थात् समानाधिकरणानां भवति । कण्ठे काल इत्यादौ **सप्तमीविशेषणे** इति पूर्वनिपातविधानात् ज्ञापकाद्भवति ॥ २३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयस्याध्या- यस्य द्वितीये पादे प्रथममाह्निकम् ॥

( उद्द्योतः ) **विशेषणं विशेष्येणेत्यादौ** प्रथमाया अप्युपयु- क्तत्वमित्यत आह—**द्वितीयादीनामिति ।** गतार्थे प्रथमयेत्यादि- तु व्याख्यानभूतम्, न स्वतन्त्रविधायकमिति भावः ॥ यद्वा शेष इत्यस्य प्रथमान्तत्वात्प्रथमान्तगृहीतत्रिकस्य प्रतिपदमुच्चरितस्यैव ग्रहणमिति सर्वेष्टसिद्धिः ॥ २३ ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य द्वितीयपादे प्रथममाह्निकम् ॥

---

# द्वितीयाध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् ॥

( २८२ बहुव्रीहिसंज्ञासूत्रम् ॥ २ । २ । २ आ. १ सू. )

## ४४४ अनेकमन्यपदार्थे ॥ २।२।२४ ॥

( पदकृत्याधिकरणम् )

( आक्षेपभाष्यम् )

**पदग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) **अनेक ॥ २४ ॥** अनेकग्रहणस्य वार्तिक- कारः प्रयोजनं वक्ष्यतीति भाष्यकारः पदग्रहणस्यान्यग्रहणस्य च प्रयोजनमाचष्टे ॥ बहुवक्तव्यत्वाच्च पश्चादन्यग्रहणस्य वि- चारः ॥ **पदग्रहणमिति ।** अन्यार्थे इत्युच्यमाने स्वपदार्थव्य- तिरिक्ते अर्थान्तर आश्रीयमाणे अन्यपदार्थो लभ्यते । वर्तिप- दानां च क्रियालक्षणे वाक्यार्थे वृत्त्यसंभवात्तन्निवृत्त्यर्थमपि पदग्रहणं नोपयुज्यत इति प्रश्नः ॥

( उद्द्योतः ) **अनेकम ॥ २४ ॥** भाष्ये क्रमोल्लङ्घनेऽभिप्राय- माह—**अनेकेति ॥ अन्यपदार्थो लभ्यते इति ।** अन्यार्थे इत्यस्य भिन्नेऽर्थे इत्यर्थः ॥ भेदप्रतियोगी चोपस्थितः स्वपदार्थ एव । पर्युदासविधया च स पदार्थ एवेति भावः ॥ वाक्यन्यावर्तकं युक्त्य- न्तरमाह—**वर्तीति ॥** तेषां सुबन्तत्वादित्यभिमानः ॥

( समाधानभाष्यम् )

**इह "अनेकमन्यार्थे" इतीयत्युच्यमाने वाक्यार्थेऽपि बहुव्रीहिः स्यात्—यथा मे माता तथा पिता सुस्नातं भो इति । पदग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **यथा मे मातेति ।** कश्चित् केनचित् पृष्टः 'कीदृशः कुलशीलादिना तव पितेति' स आह—यथा मे मातेति । एतानि पदानि तथा मे पितेत्यन्यस्य वाक्यस्यार्थं गमयन्तीति समासप्रसङ्गः । अथ वा स्नाहीति कश्चित् केनचि- दुक्तः तं प्रत्याह—यथा मे मातेत्यादि, यथा शुद्धकुला मे माता तथा पितापीत्यभिजनशुद्धिरपि स्नानं किं बाह्येन स्नानेनेत्यर्थः । ततः सुस्नातं भो इत्येतद्वाक्यार्थे वर्तमानानां यथाप्रभृतीनां पदानां समासाभावार्थं पदग्रहणम् । अश्रुतवाक्यार्थे च पदानां वृत्तिर्दृश्यते, यथा नद्यां सिप्णाशुः कश्चिदुच्यते—नद्यां ग्राहाः सन्तीति । तस्माच्च मा स्नासीरिति वाक्यार्थः प्रतीयते ॥

( उद्द्योतः ) **एतानि पदानीति ।** समानाधिकरणानामित्य- नपेक्ष्येदम् । वस्तुतोऽर्थपरमेतत्, यथा मदीया मातेत्यत्र समासप्र- सङ्ग इति बोध्यम् ॥ **सुस्नातं भो इतिपाठे आह—अथवेति ।** अत्र सर्वत्रान्यार्थो व्यङ्ग्य इति बोध्यम् । **अभिजनशुद्धिरपीत्य- पिरेवार्थे ।** भाष्ये वाक्यशब्देन पदसमूहमात्रम् ॥

---

१ पदतोऽवैशिष्ट्यमेव दर्शयति—नहीत्यादिना । ( र. ना. ) २ कुगती- त्यस्येत्यादिः । ( र. ना. ) ३ प्रथमान्तेन द्वितीयातृतीयादिपदेन गृहीतस्य द्वितीयातृतीयादित्रिकस्येत्यर्थः । (र. ना.) ४ ननु विशेषणमित्यादिप्रथमान्त- पदगृहीतस्य प्रथमात्रिकस्यापि शेषावधित्वेन ग्रहणं स्यादित्यत आह—प्रतिपद- मित्यादि । प्रथमान्तं विभक्तित्रिकबोधकपदमुच्चार्य बोधितस्यैवेत्यर्थः । न च विशेषणमित्यादौ प्रथमात्रिकं तथेति भावः । (र. ना.) ५ शेषावधित्वेन ग्रहण- मित्यर्थः । ( र. ना. ) ६ पर्युदासार्थकनञस्तद्भिन्नतत्सदृशबोधकतयेत्यर्थः । स पदार्थ एव, भेदानुयोगी पदार्थ एव न तु वाक्यार्थ इत्यर्थः । ( र. ना. ) ७ पूर्वपक्षिण इति शेषः । अभिमानोक्तिबीजन्तु सुबन्तस्यापि वाक्यैकदेश- न्यायेन वाक्यार्थे वृत्तिः संभवतीति । (र. ना.) ८ यथा मे माता इत्यत्र समास- प्रसञ्जनमित्यर्थः । ( र. ना. ) ९ समासापादनस्थलस्य यथा मदीया मातेति वाक्यस्यार्थपरं यथा मे मातेति भाष्योक्तवाक्यमित्यर्थः । ( र.ना. ) १० न तु तिङन्तघटित एव पदसमूह इति भावः । ( र. ना. )

(आक्षेपभाष्यम्)

**अथान्यग्रहणं किमर्थम्?॥**

(प्रदीपः) अथान्यग्रहणमिति। अन्तरङ्गत्वात् स्वपदार्थे समासे सिद्धे पदार्थग्रहणसामर्थ्यादन्यपदार्थो लभ्यत इति प्रश्नः॥

(समाधानभाष्यम्)

**"अनेकं पदार्थे" इतीयत्युच्यमाने स्वपदार्थेऽपि बहुव्रीहिः स्यात्—राजपुरुषः तक्षपुरुष इति॥**

(प्रदीपः) स्वपदार्थेपीति। अपिशब्दादन्यपदार्थेपीत्यर्थः। पदार्थग्रहणं व्याप्तिसमाश्रयणार्थं स्यादिति स्वपदार्थान्यपदार्थयोः समासः स्यात्॥

(उद्योतः) व्याप्तिसमाश्रयणेति। पदार्थग्रहणसामर्थ्याद् व्याप्तिन्यायस्यैवानुसरणम्, नान्तरङ्गन्यायस्येत्यर्थः। राजानं पुरुषमित्यर्थे सावकाशस्तत्पुरुषः, बहुव्रीहिरपि बहुपदे सावकाश इति प्रथमान्तपदद्वयेन विग्रहे परत्वात्स्वपदार्थेऽपि बहुव्रीहिः प्राप्नोतीति तद्व्यावृत्त्यर्थमन्यग्रहणम्, त्रिकतश्चात्र शेष इति भावः॥

(एकदेशिसमाधानबाधकभाष्यम्)

**नैतदस्ति प्रयोजनम्। तत्पुरुषः स्वपदार्थे बाधको भविष्यति॥**

(प्रदीपः) तत्पुरुष इति। बहुव्रीहेस्त्वन्यपदार्थोऽवकाशः॥

(उद्योतः) भाष्ये एकदेश्याह—नैतदस्तीत्यादि। तत्पुरुषः, समानाधिकरणतत्पुरुषः राजपुरुष इत्यादिरपि कर्मधारय एव॥

(एकदेशिन आक्षेपभाष्यम्)

**भवेदेकसंज्ञाधिकारे सिद्धम्। परंकार्यत्वे तु न सिध्यति। आरम्भसामर्थ्यात्तत्पुरुषः, परंकार्यत्वाच्च बहुव्रीहिः प्राप्नोति॥**

(प्रदीपः) परंकार्यत्वाच्चेति। ततश्च संज्ञयोः समावेशात् स्वरसमासान्तप्रसङ्गः॥

(उद्योतः) इतर एकदेश्याह—भवेदित्यादि॥ स्वरसमासान्तेति॥ पर्यायेणेत्यर्थः। यद्वा कस्यचित्स्वरः कस्यचित्समासान्त इत्यर्थः॥

(एकदेशिसमाधानभाष्यम्)

**परंकार्यत्वे च न दोषः। शेष इति वर्तते। अशेषत्वान्न भविष्यति॥**

(उद्योतः) भाष्ये—अशेषत्वान्न भविष्यतीति। पदतोर्थतो वा शेष इत्यभिमानः॥

(शेषग्रहणप्रत्याख्यानभाष्यम्)

**शेषवचन उक्तम्। किमुक्तम्? *तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु बहुव्रीहिप्रतिषेध* इति॥**

(प्रदीपः) शेषवचन इति। शेषग्रहणप्रत्याख्यानं स्मारयति—संख्येति। द्वीरावतीको वीरपुरुषकोऽब्राह्मणको देश इति समासविधावुपयोगादशेषत्वाद् बहुव्रीहिर्न प्राप्नोति। तस्माच्छेषग्रहणं न कर्तव्यम्। ततः स्वपदार्थे बहुव्रीहिनिवृत्त्यर्थमन्यग्रहणं कर्तव्यमिति स्थितम्॥

(उद्योतः) एतदर्थकं शेषग्रहणं प्रत्याख्यातमित्याह—प्रत्याख्यानमिति। आकडारसूत्रोक्तमित्यर्थः। पदतोर्थतश्च शेषे द्वीरावतीके दोषः, पदत एव शेषे वीरपुरुषकादौ दोषः॥ समासविधाविति। संख्यावंश्येन, नदीभिश्च, अन्यपदार्थे च संज्ञायाम्, मध्यमध्यमवीराश्च, नञिति त्रेति भावः। पदतोर्थतश्च शेषार्थकस्य तस्य प्रत्याख्याने परंकार्यमिति पाठेऽन्यग्रहणमावश्यकमित्याह—तत इति॥

(आक्षेपभाष्यम्)

**अथैकसंज्ञाधिकारे नार्थोऽन्यग्रहणेन?॥**

(समाधानभाष्यम्)

**एकसंज्ञाधिकारे च कर्तव्यम्। अक्रियमाणे ह्यन्यग्रहणे यथैव तत्पुरुषः स्वपदार्थे बहुव्रीहिं बाधते एवमन्यपदार्थेऽपि बाधेत॥**

(प्रदीपः) अक्रियमाण इति। नीलोत्पलं सर इत्यत्रापि विशेषानुपादानादन्यपदार्थेऽपि स्वपदार्थ इव तत्पुरुषो बहुव्रीहिं बाधेत, कण्ठेकाल इत्यादिश्च व्यधिकरणपदो बहुव्रीहेरवकाशः स्यात्। अन्यग्रहणे तु सति स्वपदार्थे सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधत इति न कश्चिद्दोषः॥

(उद्योतः) नीलोत्पलं सर इति। इदमुपलक्षणं, बहुपदकबहुव्रीहिः स्वपदार्थेपि स्यादित्यपि बोध्यम्। परिनिष्ठितविभक्त्या समासमजानतो भाष्ये—अक्रियमाणे इत्याद्युक्तिरिति बोध्यम्॥ कण्ठेकाल इत्यादिश्चेति। बहुपदके बहुव्रीहिविधानं सावकाशमिति वक्तुं युक्तम्॥

(आक्षेपभाष्यम्)

**अथानेकग्रहणं किमर्थम्?॥**

(प्रदीपः) अथेति। एकनिवृत्त्यर्थं तावदनेकग्रहणं नोपपद्यते। पदविधित्वात् सामर्थ्ये सति बहुव्रीहिसंज्ञाविधानादनेकाधिष्ठानत्वाच्च सामर्थ्यस्य। नापि बहूनां समासार्थमनेकग्रहणं, तद्धितार्थेत्यनेन उत्तरपदे परतः समाससंज्ञाविधानाज्ज्ञापकाद्बहूनां बहुव्रीहेः सिद्धत्वादिति प्रश्नः॥

(आक्षेपबाधकभाष्यम्)

**"अन्यपदार्थे" इतीयत्युच्यमाने एकस्यापि पदस्य बहुव्रीहिः स्यात्—सर्पिषोपि स्यात्, गोमूत्रस्यापि स्यात्॥**

(प्रदीपः) सर्पिषोऽपि स्यादिति। अपिशब्दो बिन्द्वर्थे वर्तते इति तस्यापि बहुव्रीहिसंज्ञाप्रसङ्गः। ततश्च कप्समासान्तप्रसङ्गः। पदान्तरेण स्यादित्यनेन चास्य सामर्थ्यमस्तीति समर्थपरिभाषापि न व्यावृत्तिं करोतीत्येवं [3]केचिद्व्याचक्षते॥ अन्ये त्वाहु—अपिः पदार्थेत्यत्राप्यर्थता विन्द्वादेर्निराकृता। तस्मात्स्यादिति पदं बिन्द्वर्थे वर्तत इति तस्य बहुव्रीहि-

[1] पूर्वभाष्योदाहृत इति शेषः। (र.ना.) [2] अन्यथा नीलेनोत्पलेन इत्यादिविग्रहे तत्पुरुषो बहुव्रीह्यविषये सावकाशः स्यादिति भावः। (र. ना.)

[3] व्यपेक्षारूपसामर्थ्यानुसारिण इत्यर्थः। (र. ना.) [4] कर्तृबोधकतयेत्यादिः। (र. ना.)

संज्ञाप्रसङ्गः ॥ अतिङ्ग्रहणेन च पूर्वमेव सुप्सुपेत्यस्य विच्छिन्नत्वादेकस्यापि तिङन्तस्य प्राप्तिः स्यात् ॥

( उद्द्योतः ) ततश्चेति । न चैकसंज्ञाधिकारात् बहुव्रीहिसंज्ञया कर्मप्रवचनीयत्वबाधे षत्वं स्यात् । किं च कर्मप्रवचनीयत्वस्य निरवकाशत्वेन तया बाधाद्बहुव्रीहिसंज्ञैव न भविष्यतीति वाच्यम् । उपसर्गसंज्ञाया अपि तद्रीत्या बाधात् । परकार्यत्वपक्षे समावेशसंभवाचेत्यभिमानः[1] ॥ केचिदिति । अत्रारुचिस्तु स्यादित्यनेन व्यपेक्षासत्त्वेप्येकार्थीभावाभावः ॥ स्यादिति पदमिति । प्रकृतिप्रत्ययार्थयोरत्रैकार्थीभावः स्यादित्यभिमानैः[2] । अत्र व्याख्याने एकसंज्ञाधिकारेप्युक्तदोषो न, संज्ञयोर्भिन्नाश्रयत्वात् ॥ विच्छिन्नत्वादिति । अतिङ्ग्रहणं तु नानुवर्तते, व्याख्यानादिति भावः ॥

( आक्षेपसाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । सुप्सुपेति वर्तते ॥**

( प्रदीपः ) नैतदिति । योगद्वय एवातिङ्ग्रहणेन सुप्सुपेत्यस्यासंबन्धो ज्ञापितोऽन्यत्र सुप्सुपेत्यनुवर्तत एवेत्यर्थः ॥

(उद्द्योतः)योगद्वये एवेति । तत्रैवातिङ्पदसंबन्धादिति भावः॥

( आक्षेपबाधकभाष्यम् )

**इदं तर्हि प्रयोजनम् । बहूनामपि यथा स्यात्—सुसूक्ष्मजटकेशेन सुनताजिनवाससा ॥**

( प्रदीपः ) बहूनामपीति । अन्यथा सुप्सुपेति गुणे संख्याया विवक्षितत्वाद् द्वयोरेव स्यात् ॥

( उद्द्योतः ) गुणे संख्याया इति । सुबन्तत्वस्य प्रत्येकसमाप्तत्वादिति तु वक्तुं युक्तम्[5] ॥

( आक्षेपबाधकशेषभाष्यम् )

**उत्तरार्थं चानेकग्रहणं कर्तव्यम्—"चार्थे द्वन्द्वः" अनेकमिति । इहापि यथा स्यात्—प्लक्षन्यग्रोधधवखदिरपलाशा इति ॥**

( आक्षेपसाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति 'बहूनामपि समासो भवति' । यदयम्—उत्तरपदे द्विगुं शास्ति ॥**

(प्रदीपः) उत्तरपद इति । द्विगुग्रहणं तद्धितार्थेत्यनेन विहितस्य समासस्योपलक्षणम् । तेन दिशः समानाधिकरणेनोत्तरपदे समासावयवविशेषे परतः समासविधानं बहूनां समासस्य ज्ञापकमित्यर्थः । द्विगुस्तु ब्रह्मजातादौ सावकाशत्वान्न ज्ञापकः ॥

( उद्द्योतः ) समासविधानं चेति पाठे चस्त्वर्थे ॥ ब्रह्मजातादाविति । कालाः परिमाणिनेति सूत्रस्थेनोत्तरपदेन परिमाणिना द्विगोः सिद्ध्य इति वार्तिकेन सिद्धे बहूनां तत्पुरुषे इत्यर्थः । तदपि वचनमेतज्ज्ञापकसिद्धमेव नापूर्वमित्याशयेन भाष्ये द्विगुग्रहणम् ॥

( प्रत्याक्षेपभाष्यम् )

**तत्पुरुषोपि तर्हि बहूनां प्राप्नोति ॥**

(प्रदीपः) तत्पुरुषोपीति । ज्ञापकफलस्य विषयविभागाभावादनिष्टप्रसङ्गो, महत्कष्टं श्रित इत्यत्रापि तत्पुरुषप्रसङ्गात् ॥

( उद्द्योतः ) तत्पुरुषोपीत्यस्य कालाः परिमाणिनेत्यतद्विन्नोपि तत्पुरुष इत्यर्थं इत्यन्ये ॥ ज्ञापकफलस्येति । संख्याऽविवक्षारूपस्येत्यर्थः । यद्वा यथाकथंचित्सुबन्तत्वादिग्रहणरूपस्येत्यर्थः ॥

( प्रत्याक्षेपबाधकभाष्यम् )

**नैष दोषः । ग्रहणेन तत्पुरुष उच्यते, तेन बहूनां न भविष्यति ॥**

( प्रदीपः ) ग्रहणेनेति । विशिष्टपूर्वोत्तरपदनिर्देशेनेत्यर्थः । तत्र द्वितीयान्तस्य श्रितादिभिः समासविधानात्प्रत्ययग्रहणपरिभाषोपस्थानात् समुदायस्याद्वितीयान्तत्वादत्र तत्पुरुषाभावः ॥ यद्येवमिहापि सुप्सुपेत्यनुवर्तनात्कथं बहूनां बहुव्रीहिः । अथ ज्ञापकेन संख्याविवक्षा बाध्यते तदा द्वितीयादिष्वपि संख्याया अविवक्षा स्यात् ॥ नैष दोषः, तत्पुरुषविधौ सुप्सुपेति संख्या प्रतीयते द्वितीयेत्यपि । द्वन्द्वबहुव्रीह्योस्तु सुप्सुपेत्यत्रैव संख्याप्रतीतिः । तत्र ज्ञापकेनैव संख्याप्रतीतिर्बाध्यते । तावता चरितार्थत्वाद् द्वितीयादिषु संख्याया अबाधः ॥

( उद्द्योतः ) सर्वस्यापि समासस्य ग्रहणेन विधानादाह—विशिष्टेति । संख्याविवक्षेति । मुख्यसुबन्तत्वपर्यास्यधिकरणग्रहणविवक्षेत्यपि बोध्यम्[6] ॥ संख्याया अविवक्षेति । यथा कथंचिद् द्वितीयान्तग्रहणविवक्षेत्यपि बोध्यम् ॥ अबाध इति । अन्यत्र मुख्यद्वितीयाद्यन्तग्रहणम्, सुप्सुपेत्यत्र तु ज्ञापकेन यथाकथंचित्सुबन्तग्रहणमिति तत्त्वम्[7] । अत्र तँदपि द्वन्द्वबहुव्रीहिविधायके एनेष्टानुरोधात् परिमाण्युत्तरपदकसमासविधौ चेति बोध्यम् । ग्रहणेन तत्पुरुष इत्यत्र तत्पुरुषपदमव्ययीभावस्याप्युपलक्षणम् ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( १३७९ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनेकवचनमुपसर्जनार्थम् ॥ * ॥**

( व्याख्याभाष्यम् )

**अनेकग्रहणं क्रियते उपसर्जनार्थम् । "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्युपसर्जनसंज्ञा यथा स्यात्—चित्रगुः शबलगुरिति ॥**

( प्रदीपः ) चित्रगुरिति । सत्यनेकग्रहणे[8] सुबित्येवानुवर्तते न तु सुपेति । तन्निवृत्त्यर्थत्वात्तस्य । ततश्चोत्तरपदमपि तेनै[9] प्रत्याय्यत इति समासशास्त्रे गोशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वाद्ध्रस्वसिद्धिः ॥

( उद्द्योतः ) तन्निवृत्त्यर्थत्वादिति । इदं चिन्त्यम् । तदनुवृत्तावपि द्वयोः समासाभावार्थं तदित्यस्यापि वक्तुं शक्यत्वात् तन्नि-

---

१ अभिमानोक्तिस्त्वेकसंज्ञाधिकारस्यैव सिद्धान्तत्वादिति । ( र. ना. )
२ अभिमानोक्तिबीजन्तु तिङ्तत्प्रकृत्यर्थयोरेकार्थीभावे मानाभाव इति । (र. ना.)
३ अनवकाशत्वाभावादिति शेषः । ( र. ना. ) ४ समासाङ्गभूते इत्यर्थः । यथा पशुना यजेतेत्यत्र यागाङ्गभूते पशाविति भावः । ( र. ना. ) ५ इदमयुक्तम् । सुबन्तत्वस्य प्रत्येकपरिसमाप्तत्वेऽपि संख्याया अविवक्षायां सुबन्तस्य सुबन्ताभ्यां सुबन्तयोर्वा सुबन्तेन सह समासस्य सुवचत्वादिति । ( र. ना. ) ६ सुप्सुपेत्यत्रेत्यादिः । ( र. ना. ) ७ सुप्सुपेत्यत्र संख्याया अविवक्षणं यथाकथञ्चित्सुबन्तग्रहणं वा तत्पदार्थः । ( र. ना. ) ८ अनेकग्रहणस्येत्यर्थः । ( र. ना. ) ९ अनेकग्रहणेनेत्यर्थः । ( र. ना. )

वृत्तिं विना सर्वेषामुपसर्जनत्वासंभवो द्वयोः समासालाभश्चेति व्याख्यानात्तन्निवृत्तिरिति तत्त्वम् ॥

( १३८० समाधानबाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वैकविभक्तित्वात् ॥ * ॥**

( व्याख्याभाष्यम् )

**न वा एतदपि[1] प्रयोजनमस्ति । किं कारणम् ? । एकविभक्तित्वात् "एकविभक्ति चापूर्वनिपाते" इत्युपसर्जनसंज्ञा भविष्यति । चित्रगुः शबलगुरिति । चित्रा यस्य गावश्चित्रगुस्तिष्ठति । चित्रा यस्य गावश्चित्रगुं पश्येति । चित्रा यस्य गावश्चित्रगुणा कृतम् । चित्रा यस्य गावश्चित्रगवे देहि । चित्रा यस्य गावश्चित्रगोरानय । चित्रा यस्य गावश्चित्रगोः स्वम् । चित्रा यस्य गावश्चित्रगौ निधेहि । चित्रा यस्य गावो हे चित्रगो इति ॥**

(प्रदीपः) न वेति । अन्यपदार्थस्य प्राधान्याद्दर्शनायनेकक्रियायोगादनेकविभक्तित्वेऽपि वर्तिपदानामेकविभक्तित्वादित्यर्थः ॥

( उद्योतः ) वर्तिपदानामेकविभक्तित्वादिति । समासापेक्षयेति शेषः ॥

( आक्षेपभाष्यम् )

**यदि तर्हि कुतश्चिदेव किंचित्पदमध्याहृत्य एकविभक्तियोगः क्रियते, एतदप्येकविभक्तियुक्तम्, इहापि प्राप्नोति—राजकुमारी तक्षकुमारी । राज्ञो या कुमारी राजकुमारी तिष्ठति । राज्ञो या कुमारी राजकुमारीं पश्य । राज्ञो या कुमारी राजकुमार्या कृतम् । राज्ञो या कुमारी राजकुमार्यै देहि । राज्ञो या कुमारी राजकुमार्या आनय । राज्ञो या कुमारी राजकुमार्याः स्वम् । राज्ञो या कुमारी राजकुमार्यां निधेहि । राज्ञो या कुमारी राजकुमारि[3] इति ॥**

( प्रदीपः ) यदि तर्हीति । अयं भावः—चित्रा गावोऽस्येत्यस्मिन्विग्रहवाक्ये न कस्यचिदनेकविभक्तित्वं यदपेक्षया वर्तिपदानामेकविभक्तित्वं स्यात् । अथ यथाकथंचिद् अन्यस्यानेकविभक्तित्वमाश्रित्य वर्तिपदस्यैकविभक्तित्वं व्यवस्थाप्यते । तदातिप्रसङ्गो राज्ञो या कुमारी तां पश्य, तया कृतं, तस्यै[4] देहीत्याश्रयेण कुमारीशब्दस्यैकविभक्तित्वादुपसर्जनह्रस्वत्वं स्यात् ॥

( उद्योतः ) यदपेक्षयेति । विग्रहे यदेकविभक्तिकमित्युक्तौ प्रत्यासत्त्या विग्रहीयपदान्तरापेक्षया यत्तादृशमिति लभ्यते । नहि चित्रा गाव इत्येतत्तथेति भावः ॥ अथेति । यथाकथंचित्पर्यायेण, अन्यस्य समासस्य, समासपदाद्यत्किञ्चिदेकविभक्तिकमित्यर्थ इति भावः । भाष्ये कुतश्चिदेव समासार्थविग्रहे इत्युक्तिरूपहेतोः, किंचित्पदं समासरूपमध्याहृत्येत्यस्य ज्ञानविषयीकृत्येत्यर्थः । तदपेक्ष इति च शेषः ॥ अनेनोक्तेऽर्थे प्रत्यासत्तिमूलकत्वं दर्शितम् । अतएव सभार्य इत्यादावुपसर्जनत्वेन ह्रस्वसिद्धिः । अन्यथा विग्रहीयसहपदे विभक्तेरेवाभावेन तदपेक्षया नियतविभक्तित्वाभावात्तदप्राप्तिः । मम तु अनियतविभक्तिकसमासार्थत्वं सूपपादं, लुका विभक्त्यनुत्पत्तेरेवान्वाख्यानाच्च । राज्ञो या कुमारीति प्रथमान्तेनैव समास इति दूषणम् ॥

( समाधानभाष्यम् )

**एकविभक्तियुक्तमेव यन्नित्यम् । न चैतन्नित्यमेकविभक्तियुक्तमेव, राज्ञः कुमारीं पश्य राजकुमारीं पश्येत्यपि भवति ॥ किं वक्तव्यमेतत् ? । नहि ॥ कथमनुच्यमानं गंस्यते ? । एकग्रहणसामर्थ्यात् । यदि हि यदेकविभक्तियुक्तं चानेकविभक्तियुक्तं च तत्र स्याद्, एकग्रहणमनर्थकं स्यात् । "विभक्तियुक्तमपूर्वनिपाते" इत्येव ब्रूयात् ॥**

( प्रदीपः ) एकविभक्तियुक्तमेवेति । अयं भावः—नायं नियमः प्रथमान्तस्यैव कुमारीशब्दस्य षष्ठीसमासेन भाव्यम् । किं तर्हि ? द्वितीयाद्यन्तस्यापि । ततश्च समासे विधीयमाने एकविभक्तित्वाभावात् कुमारीशब्दस्योपसर्जनत्वाभावः ॥ एकग्रहणसामर्थ्यादिति । एकैकस्मिन्प्रयोगे सर्वस्यैव एकविभक्तित्वादेकविभक्तिग्रहणं पर्यायेणानेकविभक्तेर्निरासार्थमित्यर्थः ॥ विभक्तियुक्तमिति । एतदपि किमर्थमुच्यत इति चेत्संज्ञिनिर्देशार्थम् । अन्यथा अपूर्वनिपात इत्येतावदुच्यमाने संज्ञ्यनिर्दिष्टः स्यात् ॥

( उद्योतः ) किं तर्हीति । वाक्यसंस्कारे परिनिष्ठितविभक्त्यापि समास इति समाधानम् ॥ ततश्चेति । तस्य चेत्यर्थः ॥ पर्यायेणेति । प्रयोगभेदेनापि यत्रैकविभक्तित्वमेव तत्र यथा स्यादित्यर्थमिति भावः । तदेवं प्रत्यासत्त्यनाश्रयणेन समासापेक्षया विग्रहे यन्नियतविभक्तिकमित्यर्थमाश्रित्यानेकग्रहणं भगवता प्रत्याख्यातम् । शीघ्रपकक्लेशं परिहर्तुमनेकग्रहणं सूत्रकृता कृतमिति दिक् ॥

( अनुप्रयोगानुपपत्तिपरिहाराधिकरणम् )

( १३८१ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात् ॥ * ॥**

( भाष्यम् ) **पदार्थाभिधानेऽनुप्रयोगस्यानुपपत्तिः—चित्रगुर्देवदत्त इति ॥ किं कारणम् ? । अभिहितत्वात् । चित्रगुशब्देनाभिहितः[12] सोर्थ इति कृत्वानुप्रयोगो न प्राप्नोति ॥**

( प्रदीपः ) पदार्थाभिधान इति । देवदत्तपदस्य यावानर्थस्तावान् बहुव्रीहिणा वक्तव्योऽन्यपदार्थे तस्य विधानात् ततो गतार्थत्वादनुप्रयोगो न प्राप्नोतीत्यर्थः । यथा चार्थे

---

१ 'एतत्' । २ समासस्येत्यादिः । (र. ना.) ३ 'हे राजकुमारि' । ४ 'तस्यै च' । ५ अयं भावः । समासार्थविग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञमित्यर्थस्वीकारेण समासार्थविग्रहवाक्यघटकं यदेकविभक्तिकमिति लभ्यते । तत्र कस्मादेकविभक्तिकमिति जिज्ञासायां कुतश्चिदेवेति प्रतीयते, न तु समासार्थविग्रहवाक्यघटकपदान्तरादिति, अनुपादानात् । तथा च समासरूपं पदमवधीकृत्यैकविभक्तिकत्वपरिग्रहेण राजकुमारीत्यत्र कुमारीत्यस्योपसर्जनत्वेन ह्रस्वत्वापत्तिरिति । ( र. ना. ) ६ समासादेकविभक्तिकमित्यर्थेऽपि अपिना 'समासार्थविग्रहवाक्यघटकपदान्तरादित्यर्थेऽपि । ( र. ना. ) ७ समासापेक्षैकविभक्तिकत्वस्य परिग्रहादेवेत्यर्थः । (र.ना.) ८ तत्त्वमेकविभक्तिकत्वमित्यर्थः । (र.ना.) ९ ननु सहशब्देऽपि लुकः पूर्वं विभक्तिरस्त्येवेति तामादाय भार्याशब्दस्यैकविभक्तित्वं सूपपादमत आह—लुकेत्यादि । ( र. ना. ) १० ननु परिनिष्ठितविभक्त्येति भावः । ( र. ना. ) ११ एकग्रहणसामर्थ्यरूपेत्यादिः । ( र. ना. ) १२ चित्रगुणाऽभिहितः ।

द्वन्द्वविधानाद् द्वन्द्वे चशब्दस्य प्रयोगो न भवति । एवमिहापि देवदत्तादिपदानां न स्यात् ॥

( १३८२ आक्षेपबाधकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वानभिहितत्वात्, सामान्याभिधाने हि विशेषानभिधानम् ॥ * ॥**

( व्याख्याभाष्यम् )

**न वा एष दोषः । किं कारणम् ? । अनभिहितत्वात् । चित्रगुशब्देनानभिहितः सोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ कथमनभिहितः, यदिदानीमेवोक्तम् *पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वाद्* इति ? । सामान्याभिधाने हि विशेषानभिधानम् । सामान्ये ह्यभिधीयमाने विशेषोऽनभिहितो भवति । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । चित्रगुः कः ? । देवदत्त इति ॥**

( प्रदीपः ) **सामान्याभिधाने हीति** । चित्रगुशब्देन तद्वन्मात्रमुच्यते न तु विशेषः ॥

( आक्षेपभाष्यम् )

**अथेत्सिद्धं यदा सामान्ये वृत्तिः । यदा तु खलु विशेषे वृत्तिः, तदा न सिध्यति—चित्रा गावो देवदत्तस्येति चित्रगुर्देवदत्त इति ॥**

( प्रदीपः ) **यदा सामान्य इति** । चित्रा गावोऽस्येत्येवं विग्रहे कृतेऽन्यपदार्थसामान्यस्य बहुव्रीहिणाभिधानाद्विशेषस्यानुप्रयोगो भवतु, यदा विशिष्टेऽन्यपदार्थे बहुव्रीहिः क्रियते तदानुप्रयोगासिद्धिः ॥

( समाधानभाष्यम् )

**तदापि सिद्धम् । कथम् ? । नेदमुभयं युगपत्संभवति । वाक्यं समासश्च । यदा वाक्यम्, न तदा समासः । यदा समासः, न तदा वाक्यम् । यदा समासः, सामान्येन तदा वृत्तिः । तत्रावश्यं विशेषार्थिना विशेषोनुप्रयोक्तव्यः—चित्रगुः कः ?, देवदत्त इति ॥**

( प्रदीपः ) **नेदमुभयमिति** । लौकिके प्रयोगे वृत्तिवाक्ययोर्युगपत् प्रयोगाभावात्, एकेनैवार्थस्य प्रत्यायितत्वादितरप्रयोगायोगात् ॥ **यदा समास इति** । शब्दशक्तिस्वाभाव्यादन्यपदार्थसामान्यमेवाभिधातुं समर्थः समासो, न विशेषमिति प्रक्रियायामपि सामान्येन विग्रहः कार्य इत्यर्थः ॥

( उद्योतः ) वाक्यमुपमृद्य समासप्रवृत्तेस्तस्यापि बुद्ध्यारूढत्वमस्तीत्यत आह—**लौकिके प्रयोगे इति** । लोके सर्वेषां चित्रगुपदशक्यत्वेन तस्य सामान्यशब्दत्वमिति सामान्येनैव विग्रहः कार्य इति विशेषवाक्यं न बुद्धिस्थमिति यदा समासः, सामान्येन तदा वृत्तिरिति भाष्यार्थ इति भावः ॥

( आक्षेपभाष्यम् )

**सामान्यस्यैव तर्ह्यनुप्रयोगो न प्राप्नोति—चित्रगुः कः ? । चित्रगु तत्, चित्रगु किंचित्, चित्रगु सर्वमिति ॥**

( प्रदीपः ) **सामान्यस्यैव तर्हीति** । सामान्यस्य समासेनैवाभिधानात् ॥

( समाधानभाष्यम् )

**सामान्यमपि यथा विशेषस्तद्वत् । तत्र चित्रग्वित्युक्ते संदेहः स्यात्—सर्वं वाऽविश्वं वेति । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः—चित्रगु तदिति ॥**

( प्रदीपः ) **सामान्यमपीति** । यथा विशेषो विशेषान्तरस्य निवर्तकस्तद्वत्सामान्यमपि विशेषाणां निवर्तकं सद्विशेष एवेत्यर्थः ॥ **चित्रग्विति** लिङ्गसर्वनाम्ना नपुंसकेन निर्देशः सामान्यवृत्तितामेव प्रकाशयितुं कृतः ॥ **सर्वं वाविश्वं वे**त्यत्राकारप्रश्लेषः कृतः । अन्यथा पर्यायप्रयोगः स्यात् ॥ **तत्रावश्यमिति** । चित्रगु सर्वमित्युक्ते न ह्येकमेवेति विशेषावगतिर्भवतीत्यर्थः ॥

( उद्योतः ) **सद्विशेष एवेति** । इतरभेदकत्वमेव विशेषत्वमिति भावः ॥ अविश्वमित्यस्यासर्वमित्यर्थः ॥

( समाधानान्तरभाष्यम् )

**अथवा विभक्त्यर्थोऽभिधीयते । एतच्चात्र युक्तं यद्विभक्त्यर्थोऽभिधीयते, तत्र हि सर्वेपश्चात्पदं वर्तते अस्येति ॥**

( प्रदीपः ) **अथ वेति** । कृत्स्नपदार्थाभिधानेऽनुप्रयोगासिद्धिश्चोदिता परिहृता च । यदा तु विभक्त्यर्थः संबन्धादिरभिधीयते समासेन, तदा तद्वाचिनी विभक्तिर्मानुप्रयोजि द्रव्यं त्वनभिहितमिति तद्वाची शब्दोऽवश्यानुप्रयोक्तव्यः । कथं पुनरन्यपदार्थ इत्युच्यमाने विभक्त्यर्थ एव गृह्यत इत्याह—**तत्र हीति** । पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयत इति विभक्त्यर्थस्यैव प्राधान्यादन्यपदार्थग्रहणेन ग्रहणमित्यर्थः ॥ **सर्वेपश्चादिति** । भाष्यकारवचनप्रामाण्यादव्ययेनापि षष्ठीसमासः ॥

( उद्योतः ) चित्रा गावो देवदत्तस्येति विग्रहेपि न देवदत्तः समासशक्यः । किं तर्हि ? विभक्त्यर्थ एवेति भाष्ये पक्षान्तरमाह—**अथवा विभक्त्यर्थ इति** । तद्व्याचष्टे—**कृत्स्नेति** ॥ **गृह्यत इति** । स्वतन्त्रः सन् समासशक्य इत्यर्थः ॥ **प्रकृत्यर्थोपसर्जनः प्रत्ययार्थ इति** । स च संबन्धरूपः । सांसर्गिकविषयतानिरूपिता च तत्सत्त्वे प्रकारतेति भावः ॥ **अव्ययेनापीति** । अन्यथा पूरणगुणेति निषेधः स्यादित्यर्थः ॥ अव्ययशब्देन कृदव्ययमेव गृह्यत इति युक्त्यन्तरमप्युक्तं तत्रैव मयेति दिक् ॥

---

१ चित्रगवीसंबन्धिमात्रमित्यर्थः । ( र. ना.) २ विशेषवाक्यस्यापीत्यर्थः । तथा च वाक्यसमासयोर्यौगपद्यमुपपन्नमिति भावः । (र. ना.) ३ सर्वस्य समस्यमानपदस्य पश्चादस्येतिपदं वर्तते इति योजना । इदं च विभक्त्यर्थस्य प्राधान्यख्यापनार्थमुक्तम्, विधेयं हि प्रधानं पश्चान्निर्दिश्यते इति रीतिः । ( र. ना. ) ४ असेत्यादिपदेनेत्यर्थः । (र. ना.) ५ समस्यमानपदार्थनिष्ठेति शेषः । (र.ना.) ६ 'रक्षितेन' इति कौमुदी' ।

( १३८३ आक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ विभक्त्यर्थाभिधाने द्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः ॥ * ॥

( व्याख्याभाष्यम् )

विभक्त्यर्थाभिधानेऽद्रव्यस्य लिङ्गसंख्याभ्यामुपचारोनुपपन्नः । बहुयवं बहुयवा । बहुयवः बहुयवौ बहुयवा इति ॥

अपर आह—विभक्त्यर्थाभिधाने द्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः । विभक्त्यर्थाभिधाने द्रव्यस्य ये लिङ्गसंख्ये ताभ्यां विभक्त्यर्थस्योपचारोनुपपन्नः । बहुयवं बहुयवा । बहुयवः बहुयवौ बहुयवा इति ॥ कथं ह्यन्यस्य लिङ्गसंख्याभ्यामन्यस्योपचारः स्यात् ?॥

( प्रदीपः ) अद्रव्यस्येति । असत्त्वभूतस्य विभक्त्यर्थस्य लिङ्गसंख्याभ्यां व्यवहारो नोपपद्यत इत्यर्थः ॥ अपर इति । अकारप्रश्लेषोत्र व्याख्याने नास्ति ॥

( उद्योतः ) लिङ्गसंख्याभ्यामिति । इदमुपलक्षणं, चित्रगुर्देवदत्त इति सामानाधिकरण्येन व्यवहारो न स्यादित्यपि बोध्यम् ॥

( १३८४ समाधानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ सिद्धं तु यथा गुणवचनेषु ॥ * ॥

( व्याख्याभाष्यम् )

सिद्धमेतत् ॥ कथम् ? । यथा गुणवचनेषु ॥ कथं गुणवचनेषु ? ॥ गुणवचनेषूक्तम्—गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति । तद्यथा—शुक्लं वस्त्रं शुक्ला शाटी शुक्लः कम्बलः । शुक्लौ कम्बलौ । शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति । एवमिहापि यदसौ द्रव्यं श्रितो भवति विभक्त्यर्थः तस्य यल्लिङ्गं वचनं तत्समासस्यापि भविष्यति ॥

( प्रदीपः ) आश्रयत इति । यदा पदावधिकमन्वाख्यानं तदा शुक्लो गुणोस्येति मतुब्लुका सामान्यमात्रे पदं संस्क्रियत इत्येकत्वनपुंसकत्वाश्रयेण पदप्रयोगे प्राप्ते विशेषणानां चाजातेरिति सूत्रेण गुणवचनानामाश्रयतो लिङ्गवचनानि प्रतिपादितानि । वाक्यसंस्कारे तु न्यायसिद्धानि, आश्रयविशेषाश्रयेणैव पदसंस्कारात् । तत्र यद्यपि चित्रगुशब्देन संबन्धोभिधीयते, तथाप्यभेदोपचारात् संबन्ध्यभिधीयते, तत्र द्विष्ठत्वेपि संबन्धस्य प्रधानत्वात् स्वामिन एवाश्रयत्वं व्यवस्थाप्यत इति तद्गते लिङ्गसंख्ये भवतः, न तु गवाश्रये ॥

(उद्योतः) न्यायसिद्धानीति । अत्र चेदमेव भाष्यं मानम् । अन्यथा गुणवचनेष्वस्य वाचनिकतया समासस्याकडारसूत्रोक्तरीत्या गुणवचनत्वाभावेन वचनाप्रवृत्तावसंगतिः । गुणवचनत्वे तु यथातथाशब्दासंगतिः स्पष्टैव ॥ अभेदोपचारादिति । आश्रयाभेदमापन्नविभक्त्यर्थ एव चित्रग्वादिपदैरुच्यत इति भावः ॥ संबन्ध्यभिधीयत इति । विशेष्यतया आश्रीयते, चित्रगुर्देवदत्त इत्यादाविलर्थः ॥ ननु गवामपि संबन्धित्वात्तद्गतलिङ्गसंख्ये किं न स्यातां तत्राह—तत्र द्विष्ठत्वेपीति । गवादिरूपस्वनिरूपितसंबन्धस्यैव बोधनेन स्वामिन एवाश्रयत्वात्तद्गतलिङ्गसंख्ये एव भवत इत्यर्थः । एवं च बहुव्रीहेः सामान्यशब्दत्वमेवेति विशेषज्ञानायानुप्रयोग आवश्यक इति भावः॥

( आक्षेपभाष्यम् )

यदि तर्हि विभक्त्यर्थोभिधीयते, कृत्स्नः पदार्थः कथमभिहितो भवति सद्रव्यः सलिङ्गः ससंख्यश्च ॥

( प्रदीपः ) यदि तर्हीति । यथा शुक्लशब्देन कदाचिद्गुण उच्यते, कदाचिद्गुणी, तथा चित्रगुशब्देन केवलस्यापि संबन्धस्याभिधानं प्राप्नोति, संबन्धिन एव तु सर्वदेष्यते, तत्र सिध्यतीत्यर्थः ॥ कृत्स्न इत्युक्तं तदेव कार्त्स्न्यं प्रतिपाद्यते—सद्रव्य इति । द्रव्यशब्देन सत्त्वरूपोर्थ उच्यते ॥

( उद्योतः ) ननु बहुव्रीहेः संबन्धिपरत्वस्योक्तत्वेन यदि तर्हीति भाष्यानुत्थानमित्याशङ्क्याह—यथेति । एवं च कथमभिहित इति भाष्यस्य सर्वदेत्यादिर्बोध्यः ॥ द्रव्यशब्देनेति । तदेव दर्शितं भाष्ये सलिङ्ग इत्यादिना ॥

( समाधानभाष्यम् )

अर्थग्रहणसामर्थ्यात् । इह "अनेकमन्यपदे" इतीयता सिद्धम् । कथं पुनः पदे नाम वृत्तिः स्यात् । पदं नाम शब्दः, शब्दो ह्यर्थः? । शब्दे ह्यसंभवादर्थे कार्यं विज्ञास्यते । सोयमेवं सिद्धे सति यदर्थग्रहणं करोति तस्यैतत्प्रयोजनं, कृत्स्नः पदार्थो यथाभिधीयते सद्रव्यः सलिङ्गः ससंख्यश्चेति ॥

( प्रदीपः ) अर्थग्रहणसामर्थ्यादिति । यदि विभक्त्यर्थस्यैव प्रधानस्य ग्रहणमभिमतं स्यात्, तदार्थग्रहणं न कुर्याद्, अन्तरेणाप्यर्थग्रहणमर्थस्यैव लाभादित्यर्थः ॥

( उद्योतः ) अर्थस्यैव लाभादिति । स चार्थः प्राधान्याद्विभक्त्यर्थ एव ग्रहीष्यत इति भावः । अर्थग्रहणसामर्थ्याच्च संबन्धादिर्विभक्त्यर्थ आश्रयाभिन्न एव बुध्यत इति तत्त्वम् । एवं च पट्वादिशब्दवन्नियमेन गुणिपर एवायं न कदाचिदपि गुणपर इति भावः ॥

( आक्षेपभाष्यम् )

यदि तर्हि कृत्स्नः पदार्थोभिधीयते—लैङ्गाः सांख्याश्च विधयो न सिध्यन्ति ॥

( प्रदीपः ) यदि तर्हीति । यथा बहुव्रीहिणा विभक्त्यर्थस्याभिधानात् षष्ठ्यादयो न भवन्ति, एवं लिङ्गसंख्ययोरप्यभिधानात् तयोर्वाचकाः प्रत्यया न प्राप्नुवन्ति ॥

( उद्योतः ) यदितर्हीत्यादि भाष्यमेकदेशिनो, घटादिशब्देष्विव तदुपपत्तेः, पञ्चकस्य सर्वत्र प्रातिपदिकार्थत्वात् ॥ न प्राप्नुवन्तीति । उक्तार्थानामप्रयोगादिति भावः ॥

१ यदित्यभेदेन द्रव्यान्वयि । ( र. ना. ) २ आश्रयतो लिङ्गवचनसत्त्वस्येत्यर्थः । ( र. ना. ) ३ समासस्येत्यादिः । ( र. ना. ) ४ सादृश्यस्य भेदघटितत्वादिति भावः । ( र. ना. ) ५ स्वं धनम् । ( र. ना. ) ६ विभक्त्यर्थमात्रस्य समासार्थत्वे चेत्यर्थः । ( र. ना. ) ७ लिङ्गसंख्याऽन्वयित्वं सत्त्वम् । ( र. ना.) ८ समासरूपा वृत्तिः । ( र. ना. ) ९ एष समासः । ( र. ना. ) १० गुणिगुणशब्दौ संबन्धिसंबन्धपरावेवेति बोध्यम् । ( र. ना. )

( समाधानभाष्यम् )

**उक्तं वा ॥ किमुक्तम् ? । लैङ्गेषु तावदुक्तम् *सिद्धं तु स्त्रियाः[1] प्रातिपदिकविशेषणात्स्वार्थे टाबादय*इति॥ सांख्येष्वप्युक्तम् ॥ किमुक्तम् ? । कर्मादीनामनुक्ता एकत्वादय इति कृत्वा सांख्या भविष्यन्ति ॥**

( प्रदीपः ) **सिद्धं त्विति** । स्त्रियां यत् प्रातिपदिकं वर्तते तस्मात् टाबादयो भवन्तीत्यर्थः । ततश्च समासेनाभिहितेपि स्त्रीत्वे द्योतकाष्टाबादयो भवन्तीति दोषाभावः ॥ **कर्मादीनामिति** । चित्रगुरिति समासेन प्रातिपदिकार्थमात्रस्य कर्मादिशक्तिरहितस्यैकत्वादय उक्ताः ततः कर्मादिगतैकत्वप्रतिपादनाय वचनानि भवन्ति चित्रगुं पश्य चित्रगुणा कृतमिति ॥

( उद्योतः ) **कर्मादिगतैकत्वेति** । इत्यादिनिरूपितकर्मादिशक्तिविशिष्टप्रातिपदिकार्थगतैकत्व इत्यर्थः ॥

( आक्षेपभाष्यम् )

**प्रथमा तर्हि न प्राप्नोति ? ॥**

( प्रदीपः ) **प्रथमेति** । समासेन संख्याया अभिधानात् ॥

( उद्योतः ) **समासेनेति** । प्रथमा हि प्रातिपदिकार्थगतसंख्यामात्राभिधायिनीति तत्सूत्रानुवृत्तमनभिहित इति तस्यै[2]एव विशेषणमिति भावः ॥

( समाधानभाष्यम् )

**समया[3]द्भविष्यति ॥**

( प्रदीपः ) **समयादिति** । परश्चेति नियमार्थमारब्धं— न केवला प्रकृतिः प्रयोक्तव्या, न च केवलः प्रत्यय इति ॥

( आक्षेपभाष्यम् )

**यदि सामयिकी, न[4] नियोगतः, अन्याः कस्मान्न भवन्ति ? ॥**

( प्रदीपः ) **न नियोगत इति** । नियमेन । प्रतिनियतैव यदि न भवति विभक्तिः ततः समयपरिपालनाय द्वितीयादयोपि प्राप्नुवन्ति नियमकारणाभावादित्यर्थः ॥

( उद्योतः ) **नियोगत** इत्यस्यार्थो **नियमेनेति** । नियमाभावमुपपादयति—**प्रतिनियतैवेति** । समयो हि सामान्यतो विभक्तिं बोधयति न प्रतिनियतां कांचिदिति भावः ॥ **यदीति** । यत इत्यर्थः । यतः प्रतिनियतैव समयान्न भवति तद्[5]घटितसमयाभावादित्यर्थः ॥ **द्वितीयादयोपीति** । अर्थाभावेपि नि[6]यमपरिपालनाय विभक्तिश्चेत्प्रथमैवेति नियमाभावादिति भावः ॥

( समाधानभाष्यम् )

**कर्मादीनामभावात् ॥**

( प्रदीपः ) **कर्मादीनामभावादिति** । कर्मण्येव द्वितीयेत्येवं कर्मादिषु द्वितीयादीनां नियतत्वात्तदभावे तासामभावः ॥

( आक्षेपभाष्यम् )

**षष्ठी तर्हि प्राप्नोति ? ॥**

( प्रदीपः ) **षष्ठी तर्हीति** । कर्मादीनामभावः शेषः स चात्रास्तीति भावः ॥

( समाधानभाष्यम् )

**शेषलक्षणा षष्ठी, अशेषत्वान्न भविष्यति ॥**

( प्रदीपः ) **अशेषत्वादिति** । प्रातिपदिकार्थमात्रस्य प्रथमाविधावुपयोगान्नास्ति शेषत्वमित्यर्थः ॥

( उद्योतः ) **प्रातिपदिकेति** । कर्मादिप्रातिपदिकार्थव्यतिरिक्तो हि शेष इत्यर्थः ॥

( आक्षेपभाष्यम् )

**एवमपि व्यतिकरः प्राप्नोति—एकस्मिन्नपि द्विवचनबहुवचने प्राप्नुतः, द्वयोरप्येकवचनबहुवचने, बहुष्वप्येकवचनद्विवचने ? ॥**

( प्रदीपः ) **एवमपीति** । समयात् प्रथमायामिष्यमाणायां वचनस्य व्यतिकरप्रसङ्गः ॥

( उद्योतः ) **व्यतिकरो** व्यत्या[7]सः ॥

( समाधानभाष्यम् )

**अर्थ[8]तो व्यवस्था भविष्यति ॥**

( प्रदीपः ) **अर्थत इति** । यथान्यत्रैकत्वादिष्वेकवचनादीनि दृष्टानि तथैवात्रापि भवन्ति । एवं हि समयश्च परिपालितो भवत्यर्थश्चानुसृतः ॥

( उद्योतः ) अर्थाभावेपि समयाद्भविष्यतीत्युक्त्वाऽर्थतो व्यवस्थेत्युक्तिरसंगतेत्यत आह—**यथान्यत्रेति** । विरुद्धविभक्त्यपेक्षयानुवादकविभक्तेर्न्याय्यत्वमिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथ वा संख्या नामेयं परप्रधाना । संख्येयमनया विशेष्यम् । यदि चात्र प्रथमा न स्यात्, संख्येयमविशेषितं स्यात् ॥**

(प्रदीपः) **अथ वेति** । असंकरं प्रथमाविधानं प्रकारान्तरेण प्रतिपादयति ॥ यदा चित्रगुरित्येकत्वविशिष्टः प्रातिपदिकार्थः प्रतिपिपादयिषितः तदा विभक्त्या विनासौ न शक्यते प्रत्याययितुमिति प्रथमैकवचनं विधेयम् । एवं द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधिः ॥ **परप्रधानेति** । संख्येयप्रधानेत्यर्थः ॥

( उद्योतः ) भाष्ये—**अथवा संख्या नामेयमिति** । इयं, यद्वैशिष्ट्येन प्रातिपदिकार्थः प्रतिपिपादयिषितः सा, परप्रधाना, इतरपरिच्छेदिकैव । तदेवाह—**संख्येयमनया विशेष्यमिति** । **संख्येयं** द्रव्यं प्रातिपदिकार्थो **अनया** संख्यया **विशेष्यं** परिच्छेद्यतया बोधनीयम् । एवं च यावत्संख्यं संख्येयं तावत्सं-

---

१ स्त्रीत्वस्येत्यर्थः । (र.ना.) २ प्रातिपदिकार्थगतसंख्याया एवेत्यर्थः । (र.ना.) ३ परश्चेति नियमलब्ध 'न केवले'त्यादि सिद्धान्तादित्यर्थः । ( र. ना. ) ४ तर्हीत्यादिः । अन्या इत्यस्यापि तथाचेत्यादिः । नागेशोक्तं यदीत्यस्य यत इत्यर्थकत्वं चिन्त्यम् । पक्षान्तरे चेद् यदि च इत्यमरे 'यदि गर्हाविकल्पयो'रिति मेदिनीकोशे च विकल्पार्थकताया एव दृष्टत्वात् । ( र. ना. ) ५ नियमघटितसमयाभावादित्यर्थः । ( र. ना. ) ६ समयपरिपालनायेत्यर्थः । ( र. ना. ) ७ वस्तुतस्तु एकस्मिन्नर्थे एकत्र सर्वेषां वचनानां पर्यायेण संबन्धरूपः संकर इत्यर्थः । तथा च मेदिनी—'अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोरि'ति । 'तीर्थे तोयव्यतिकरभवे' इति—रघुवंशे 'व्यतिकरमेत्य समुन्मिषन्त्यवस्था' इति काव्यप्रकाशीये च व्यतिकरपदस्य मिश्रीभावार्थकताया एव दृष्टत्वात् । किंच व्यत्यासार्थकत्वे एकवचनस्य स्थाने द्विवचनं प्राप्नोति द्विवचनस्य च स्थाने एकवचनमित्यादिरूपवैपरीत्यप्रतीत्या 'एकस्मिन्नपि द्विवचनबहुवचने प्राप्नुतः' इति ग्रन्थासङ्गतिः । अत एवानुपदमेव प्रदीपे 'असंकरं प्रथमाविधानं प्रकारान्तरेण प्रतिपादयती'ति वक्ष्यते । उद्द्योतेऽपि 'असंकरेणेत्यर्थ' इति वक्ष्यमाणं संगच्छते । ( र. ना. ) ८ प्रातिपदिकार्थस्य संख्यासामान्यविशिष्टत्वादिति शेषः । ( र. ना. )

ख्याप्रतिपादिका विभक्तिरुचिता । विभक्तिमन्तरा तस्या अप्रतिपत्तेरिति भावः ॥ यदि चात्र प्रथमा न स्यादिति । असंकरेणेत्यर्थः । तदाह—यदा चित्रगुरिति । द्वावित्यादौ यथानुवादकं वचनं नियमेन तथात्रापीति भावः ॥

( समाधानान्तरभाष्यम् )

**अथ वा वक्ष्यत्येतद् वचनग्रहणस्य प्रयोजनम्—उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यात् ॥**

( उद्द्योतः ) भाष्ये—अथवा वक्ष्यतीति । एवं चोक्तेषु तेष्वसंकरेणैव सेति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि षष्ठी प्राप्नोति ॥ किं कारणम् ? । व्यभिचरत्येव ह्ययं समासो लिङ्गसंख्ये, षष्ठ्यर्थं पुनर्न व्यभिचरति ? ॥**

(प्रदीपः) एवमपीति । षष्ठ्यर्थस्यात्र भावात् ॥ व्यभिचरतीति । लिङ्गान्तरसंख्यान्तरयोगेऽन्यलिङ्गसंख्यापरित्यागात् ॥

( उद्द्योतः ) षष्ठ्यर्थस्येति । अयं भावः—प्रथमायाः समभिव्याहृतप्रातिपदिकस्य चित्रगोरूपस्य प्रवृत्तिनिमित्ततदाश्रयरूपस्यार्थबोधनसामर्थ्येऽप्यतथाभूतसंबन्धबोधे सामर्थ्यं नेति तद्बोधाय सम्बन्धस्योक्तत्वेऽप्यनुवादिका षष्ठ्येव स्यान्न प्रथमा प्रातिपदिकार्थमात्राभावादिति ॥ लिङ्गान्तरेति । एवं च षष्ठ्यर्थस्य चित्रगुरित्येवंरूपे बहुव्रीहावव्यभिचरितत्वेन नियमेन षष्ठ्येव प्राप्नोतीत्यर्थ इति भावः ॥

( समाधानभाष्यम् )

**अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्नः । तत्र प्रातिपदिकार्थे प्रथमेति प्रथमा भविष्यति ॥**

( प्रदीपः ) अभिहित इति । संबन्धस्य प्रातिपदिकार्थरूपत्वात् षष्ठ्यर्थता नास्तीत्यर्थः ॥

( उद्द्योतः ) प्रातिपदिकार्थरूपत्वादिति ॥ तत्र चाभिहितत्वं हेतुः । एवं च प्रातिपदिकार्थत्वात्तद्बोधिका प्रथमेति भावः । एतद् ध्वनयितुमेवाभिहितः सोऽर्थ इत्युक्तम् । तेन च षष्ठ्यप्राप्तिबीजमप्युक्तम्, अनभिहिते शेष एव षष्ठीविधानात् । अत एव घटशब्दान्न षष्ठी । अन्यथा तत्रापि घटत्वसंबन्धस्य नियमेन भानात्षष्ठी स्यात् ॥ अन्तर्भूत इत्यस्य प्रवृत्तिनिमित्तत्वं तदाश्रयत्वं वा प्रतिपन्न इत्यर्थः ॥ ननु षष्ठ्या एवापत्तिः कथं, प्राप्तोदक इत्यादौ द्वितीयादीनामप्यापत्तेरिति चेन्न । तेषु प्राप्तोदककर्मेत्येव बोधस्तत्र विशेष्ये तन्निरूपकत्वबाधेन विशेषणमादाय पर्यवसानमिति द्वितीयादिप्रयोजककर्मत्वादेरबोधेन तदप्राप्तेः । षष्ठ्यर्थस्य तु षष्ठीप्रयोजकरूपेणैव भानमित्याशयात् ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—चित्रगोर्देवदत्तस्येति ॥**

( प्रदीपः ) सर्व एवात्र संबन्धोऽन्तर्भूतत्वात् प्रातिपदिकार्थतां गत इति मत्वा पृच्छति—न तर्हीति ॥

( समाधानभाष्यम् )

**भवति बाह्यमर्थमपेक्ष्य षष्ठी ॥**

( प्रदीपः ) भवति बाह्यमिति । गोभिरन्यपदार्थस्य यः संबन्धः स एव समासेऽन्तर्भूतो न तु सर्वः ॥

( परिगणनाधिकरणम् )

**( भाष्यम् ) परिगणनं कर्तव्यम् ॥**

( १३८५ परिगणनवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ बहुव्रीहिः समानाधिकरणानाम् ॥ * ॥

( व्याख्याभाष्यम् )

**समानाधिकरणानां बहुव्रीहिर्वक्तव्यः ॥ किं प्रयोजनम् ? । व्यधिकरणानां मा भूदिति । पञ्चभिर्भुक्तमस्येति ॥**

(प्रदीपः) बहुव्रीहिरिति । भाष्यकारेण त्रिकतः शेषो गृह्यत इत्ययमर्थः साधितः । वार्तिककारेण तु वचनेन प्रतिपाद्यते ॥

( उद्द्योतः ) वचनेनेति । समानाधिकरणानाम् * *अप्रथमार्थे इति वचनाभ्यां त्रिकतः शेषपक्षीयोऽर्थः प्रतिपाद्यत इत्यर्थः । शेषग्रहणं तु पदतोऽर्थतो वा शेषबोधकं स्यात् । तत्र फलाभावो दोषश्चेति वार्तिकतात्पर्यम् ॥

( १३८६ परिगणनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ अव्ययानां च ॥ * ॥

( व्याख्याभाष्यम् )

**अव्ययानां च बहुव्रीहिर्वक्तव्यः । उच्चैर्मुखमस्येति उच्चैर्मुखः नीचैर्मुखः ॥**

( प्रदीपः ) उच्चैर्मुख इति । उच्चैःशब्दस्याधिकरणप्रधानत्वाद्वैयधिकरण्यमिति वचनम् ॥

( १३८७ परिगणनवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ सप्तम्युपमानपूर्व[पद]स्योत्तरपदलोपश्च ॥ * ॥

( व्याख्याभाष्यम् )

**सप्तमीपूर्वस्योपमानपूर्वस्य च बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च लोपो वक्तव्यः ॥ कण्ठेस्थः कालोऽस्य कण्ठेकालः । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । खरमुखः ॥**

( प्रदीपः ) कण्ठेस्थ इति । सुपि स्थ इति कः । अमूर्धमस्तकादित्यलुक् । समासेऽत्र सिद्धे वचनमुत्तरपदलोपार्थम् ॥ उष्ट्रमुखमिवेति । अवयवधर्मेण समुदायस्य व्यपदेशाद् उष्ट्रस्योपमानतेति उपमानपूर्वं उष्ट्रमुखशब्दः, उपमानोपमेयवृत्तित्वात् पदयोर्वैयधिकरण्यमत्रेति वचनमुत्तरपदलोपार्थं च ॥

( उद्द्योतः ) अमूर्धेति । स्थे च भाषायामिति तु अनन्तरस्येति न्यायेन तत्पुरुषे कृतीत्यस्यैव बाधकमिति भावः ॥ उत्तर-

---

१ अभिहित इति कथनेनेत्यर्थः । (र. ना.) २ क्रियाजनकत्वविभक्तिवाच्यतावच्छेदकोद्भूतव्यक्तिमत्त्वैतद्द्वयसमानाधिकरणकर्मत्वादेरित्यर्थः । (र. ना.) ३ प्रवृत्तिनिमित्ततदाश्रयातिरिक्तत्वरूपप्रयोजकत्वेन रूपेणेत्यर्थः । (र. ना.)

४ मुखाद्यवयवसमुदायरूपस्योष्ट्रस्य स्वावयवमुखगतसाधारणधर्मेण तद्वत्तया व्यपदेशाद् उपमानतेति योजना । (र. ना.) ५ उष्ट्रमुखमुखपदयोरित्यर्थः । (र. ना.)

पदलोपार्थमिति । कण्ठेस्थ[1]कालनिवृत्त्यर्थमित्यर्थः ॥ मुखस्यैवोपमानत्वेनोष्ट्रमुखशब्दस्योपमानपूर्वत्वं कथमत आह—अवयवधर्मेणेति । मुखगतोपमानत्वेनोष्ट्रस्यापि व्यवहारादिति भावः ॥ वैयधिकरण्यमिति । वाक्ये समासे च सादृश्यसंबन्धेनान्वयः ॥ इवशब्दस्तथासंबन्धेनान्वयस्यैव द्योतक इत्यभिमानः । उपमानानीति सूत्रभाष्योक्तरीत्या सामानाधिकरण्यमस्त्येवेत्यत आह—उत्तरपदेति ॥

( १३८८ परिगणनवार्तिकम् ॥ १० ॥ )

## ॥ ❋ ॥ [2]समुदायविकारषष्ठ्याश्च ॥ ❋ ॥

( व्याख्याभाष्यम् )

**समुदायविकारषष्ठ्याश्च बहुव्रीहिर्वक्तव्यः । उत्तरपदस्य च लोपो वक्तव्यः । केशसमाहारश्चूडा अस्य केशचूडः । सुवर्णविकारोलंकारो यस्य सुवर्णालंकारः ॥**

( प्रदीपः ) समुदायविकारषष्ठ्या इति । समुदायावयवसंबन्धे प्रकृतिविकारसंबन्धे च या षष्ठी तदन्तायत् परं तदन्तस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः ॥

( उद्योतः ) समुदायविकारवाचकपदस्य षष्ठ्यन्तस्योत्तरपदेन समास इत्यर्थभ्रमं वारयति—समुदायावयवसंबन्ध इति ॥

( १३८९ परिगणनवार्तिकम् ॥ ११ ॥ )

## ॥ ❋ ॥ प्रादिभ्यो धातुजस्य वा ॥ ❋ ॥

( व्याख्याभाष्यम् )

**प्रादिभ्यो धातुजस्य बहुव्रीहिर्वक्तव्यः । उत्तरपदस्य च वा लोपो वक्तव्यः । प्रपतितपर्णः प्रपर्णः । प्रपतितपलाशः प्रपलाशः ॥**

( १३९० परिगणनवार्तिकम् ॥ १२ ॥ )

## ॥ ❋ ॥ नञोस्त्यर्थानां च ॥ ❋ ॥

( व्याख्याभाष्यम् )

**नञोस्त्यर्थानां बहुव्रीहिर्वक्तव्यः । उत्तरपदस्य च वा लोपो वक्तव्यः । अविद्यमानः पुत्रोस्य अविद्यमानपुत्रः अपुत्रः । अविद्यमानभार्यः अभार्यः ॥**

( आक्षेपभाष्यम् )

**तत्तर्हीदं बहु वक्तव्यम् ? ॥**

( १३९१ परिगणननिराकरणवार्तिकम् ॥ १३ ॥ )

## ॥ ❋ ॥ न वाऽनभिधानादसमानाधिकरणेषु समाससंज्ञाभावः ॥ ❋ ॥

( व्याख्याभाष्यम् )

**नवा वक्तव्यम् ॥ असमानाधिकरणानां बहुव्रीहिः कस्मान्न भवति—पञ्चभिर्भुक्तमस्येति ? ॥ अनभिधानात् । तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेपि परिगणने यत्राभिधानं न भवति तत्र न बहुव्रीहिः । यथा पञ्च भुक्तवन्तोस्येति ॥**

( उद्योतः ) भाष्ये—यथा पञ्च भुक्तवन्तोस्येति । अनेन त्रिकतः शेष इत्यर्थेपि शेषग्रहणं प्रत्याख्यातं तुल्यन्यायादिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**अथैतस्मिन्सत्यनभिधाने यदि वृत्तिपरिगणनं क्रियेत तर्हि वर्तिपरिगणनमपि कर्तव्यम् ॥**

( प्रदीपः ) अथैतस्मिन्निति । अनभिधानमभ्युपगम्यापि यदि मन्दबुद्धिव्युत्पादनाय परिगणनं क्रियते तदार्थपरिगणनमपि कर्तव्यम् । वर्तनं वर्तः समासः, स विद्यते यस्मिन्नर्थे स वर्ती ॥

( उद्योतः ) इदानीमनभिधाने सत्यपि समानाधिकरणानामित्यादिवचनारम्भेऽन्यस्यापि कर्तव्यत्वमापादयति—भाष्ये—अथैतस्मिन्नित्यादिना । वृत्तिपरिगणनं वृत्त्याश्रयाणां परिगणनम् ॥

( प्रत्याक्षेपभाष्यम् )

**तत्कथं कर्तव्यम् ? ॥**

( १३९२ समाधानवार्तिकम् ॥ १४ ॥ )

## ॥ ❋ ॥ अर्थनियमे मत्वर्थग्रहणम् ॥ ❋ ॥

( व्याख्याभाष्यम् )

**अर्थनियमे मत्वर्थग्रहणं कर्तव्यम् । मत्वर्थे यः, स बहुव्रीहिरिति वक्तव्यम् । इह मा भूत्—कष्टं श्रितमनेनेति ॥**

(प्रदीपः)मत्वर्थग्रहणमिति। षष्ठ्यर्थः सप्तम्यर्थश्च मत्वर्थः॥

( उद्योतः ) कष्टं श्रितमनेनेति । गत्यर्थेति वा आदिकर्मणीति वा भावे क्तः । यदि कर्तरि कर्मणि वा क्तः स्यात् तदोत्तरवचनाभ्यामत्र समासः स्यादेव ऊढरथादाविवेति बोध्यम्, मत्वर्थे वर्तमानमनेकमित्युक्ते सामानाधिकरण्यमपि लब्धमेवेति बोध्यम् ॥

( १३९३ वार्तिकम् ॥ १५ ॥ )

## ॥ ❋ ॥ तथाचोत्तरस्य वचनार्थः ॥ ❋ ॥

**( भाष्यम् ) एवं च कृत्वोत्तरस्य योगस्य वचनार्थं उपपन्नो भवति ॥**

( वार्तिकस्योत्तरपदव्याख्याभाष्यम् )

**केचित्तावदाहुः—'यद्वृत्तिसूत्रे' इति "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति ॥**

( प्रदीपः ) संख्ययेति । संख्येयस्य वार्थस्य चान्यपदार्थत्वात् सिद्धे समासे उत्तरसूत्रमनर्थकं स्यात् । यदा त्वनेन मत्वर्थे समासस्तदा सार्थकमित्यर्थः ॥

---

१ कण्ठेस्थकालशब्दप्रयोगनिवृत्त्यर्थमित्यर्थः । ( र. ना. ) २ समुदायनिरूपितसंबन्धार्थिकाविकारनिरूपितसंबन्धार्थिका च या षष्ठी तदन्तात्परं यत् तदन्तस्य सुबन्तस्य सुबन्तान्तरेण सह बहुव्रीहिर्वक्तव्य इत्यर्थः । केशसमाहारश्चूडाऽस्येति विग्रहे समुदायषष्ठ्यन्तपरान्तस्य केशसमाहार इत्यस्य चूडाशब्देन समासः । एवं विकारषष्ठ्यन्तपरान्तस्य सुवर्णविकार इत्यस्यालंकारशब्देन समास इति बोध्यम् । (र. ना.) ३ समर्थेन सुबन्तेनेत्यादिः । (र.ना.) ४ अत्रापि 'समर्थेन सुबन्तेने'त्यादिः । ( र. ना. ) ५ मेलनं, समसनमिति यावत् । दृश्यते हि श्रुतौ त्रयाणां पृथिव्यप्तेजसां मेलने त्रिवृत् शब्दप्रयोगः । तासां देवतानामेकैकां त्रिवृतं त्रिवृतं करवाणीति । तथा च वृत् धातोर्मेलनार्थत्वे न विप्रतिपत्तव्यम् । ( र. ना. ) ६ पदानामित्यर्थः । ( र. ना. ) ७ कर्मवचनेनाप्रथमायाः, कर्तृवचनेनापि, इति वचनाभ्यामित्यर्थः । ( र. ना. ) ८ वचनप्रयोजनमित्यर्थः । (र. ना.) ९ संख्ययाऽव्ययेत्यादिरूपे वृत्तिविधायके समासविधायके सूत्रे यत्समासार्थं पठ्यते तस्य वचनार्थं एवं कृत्वा उपपन्नो भवतीत्यर्थः । ( र. ना. )

(उद्योतः) तथाचोत्तरस्येति वाक्यं केनचित्संख्ययेति सन्नाभिप्रायतया व्याख्यातं तन्निबध्नाति—भाष्ये—केचिदिति। अत्र प्रथमान्तसंख्यापदं समानाधिकरणानामित्युक्तावपि व्यर्थं स्यात्। द्वौ वा त्रयो वेत्यादावेकत्रैव समुदाये द्वित्वत्रित्वविकल्पप्रतीतेर्यथाकथंचित्सत्त्वात्। एवं द्विदशा इत्यत्राप्यूह्यम्। अत्र पक्षे उत्तरस्य योगस्य यद्वचनं करणं तस्यार्थः फलमुपपन्नमित्यक्षरार्थः॥

(सिद्धान्तिमतान्तरभाष्यम्)

**अपर आहुः—'यद्वार्तिके' इति॥**

(१३९४ व्याख्येयवार्तिकम्॥ १६॥)

## ॥ * ॥ कर्मवचनेनाप्रथमायाः ॥ * ॥

(व्याख्याभाष्यम्)

**कर्मवचनेनाप्रथमाया बहुव्रीहिर्वक्तव्यः। ऊढो रथो येन ऊढरथोऽनड्वान्। उपहृतः पशू रुद्राय उपहृतपशू रुद्रः। उद्धृत ओदनः स्थाल्याः उद्धृतौदना स्थाली॥**

(प्रदीपः) व्याख्यानान्तरमाह—**अपर इति॥ कर्मवचनेनाप्रथमाया इति।** प्रथमार्थं वर्जयित्वा सर्वत्रान्यपदार्थे कर्मवाचिना समासो भवतीत्यर्थः। इदञ्च वार्तिकमेवमुपपद्यते, यदि मत्वर्थे बहुव्रीहिर्भवति। अन्यथैतदवक्तव्यं स्यात्। आद्यमेव तु युक्तं व्याख्यानम्। नहिं वार्तिककारः स्ववचनमेव ज्ञापकत्वेनोपन्यस्यति॥ **ऊढरथ इति।** रथशब्दः कर्मवचनः, ऊढशब्देन सामानाधिकरण्यात्॥

(उद्योतः) अस्य कवभावार्थमावश्यकत्वमभिप्रेत्य स्वयमाह—**यद्वार्तिके इति।** तदेव दर्शयति—**कर्मवचनेनेति।** कर्मवचनेनेत्यस्यायमर्थः—प्रथमाभिन्नविभक्तेरर्थे कर्मबोधकेन शब्देन प्रत्यासत्त्या कर्मवाचकस्य समास इति, तेन व्यधिकरणे न दोषः। अन्यथा, मत्वर्थे इत्यस्याभावे॥ **अवक्तव्यमिति।** सूत्रेणैव सिद्धेरिति भावः। **आद्यमेव** त्वित्यादिरुपन्यस्यतीत्यन्तः कैयटग्रन्थस्तु चिन्त्यः। अस्यान्यवार्तिककारीयत्वात्, लुप्ताख्यातेषु च वचनप्रामाण्यादिति समर्थसूत्रस्थवार्तिकस्य वार्तिकवचनप्रामाण्यादिति भाष्ये व्याख्यानाच्च। एवं च सर्वथा 'पञ्चभिर्भुक्तवन्तोऽस्ये'त्यत्र समासवारणायानभिधानस्यावश्यकतया पञ्चभिर्भुक्तमस्य वृष्टे देवे गतस्तत्र गतं पश्येत्यादावप्यनभिधानमाश्रित्य वार्तिकानां शेषग्रहणस्य च प्रत्याख्यानमेव युक्तमिति भाष्याशयः। **अव्ययानां** चेत्यपि न कार्यम्, उच्चैरादीनां वृत्तिविषये शक्तिमत्प्रधानत्वाङ्गीकारेण सूत्रेण सिद्धेः। अन्यान्यप्यनिष्टांशेऽनभिधानमाश्रित्य प्रत्याख्येयानीति दिक्॥

(आक्षेपभाष्यम्)

**यदि कर्मवचनेनेत्युच्यते, अथ कर्तृवचनेन कथम्—प्राप्तमुदकं ग्रामं प्राप्तोदको ग्रामः। आगता अतिथयो ग्राममागतातिथिर्ग्रामः?॥**

(१३९५ वार्तिकम्॥ १७॥)

## ॥ * ॥ कर्तृवचनेनापि ॥ * ॥

(व्याख्याभाष्यम्)

**कर्तृवचनेनापीति वक्तव्यम्॥**

(आक्षेपभाष्यम्)

**अप्रथमाया इति किमर्थम्?॥**

(समाधानभाष्यम्)

**वृष्टे देवे गतः॥**

(आक्षेपभाष्यम्)

**अथ 'अप्रथमायाः' इत्युच्यमाने इह कस्मान्न भवति—वृष्टे देवे गतं पश्येति॥**

(समाधानभाष्यम्)

**बहिरङ्गा अत्राप्रथमा॥**

(प्रदीपः) **बहिरङ्गेति।** वर्तिपदार्थनिमित्तान्तरङ्गा, वाह्यपदार्थापेक्षा तु बहिरङ्गेति न गृह्यते, असिद्धत्वादित्यर्थः॥

(१३९६ समासाक्षेपवार्तिकम्॥ १८॥)

(इष्टानुपपत्तिपरिहाराधिकरणम्)

## ॥ * ॥ सुबधिकारेऽस्तिक्षीरादिवचनम् ॥ * ॥

(व्याख्याभाष्यम्)

**सुबधिकारेऽस्तिक्षीरेत्युपसंख्यानं कर्तव्यम्। अस्तिक्षीरा ब्राह्मणी॥**

(उद्योतः) अस्तीति तिङन्तमेवेति मत्वा भाष्ये **सुबधिकार इति॥**

(आक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम्?॥**

(१३९७ समाधानवार्तिकम्॥ १९॥)

## ॥ * ॥ नवाऽव्ययत्वात् ॥ * ॥

(भाष्यम्) **नवा कर्तव्यम्। किं कारणम्?। अव्ययत्वात्। अव्ययमेषोऽस्तिशब्दः। नैषोऽस्तेर्लट्। कथमव्ययत्वम्?। उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा। निपातोऽव्ययमित्यव्ययसंज्ञा॥**

(प्रदीपः) **उपसर्गविभक्तीति।** स्वरादिष्वस्तिशब्दपाठमनपेक्ष्यैतदुक्तम्॥

(उद्योतः) **अनपेक्ष्येति।** सोऽप्रामाणिक इति तत्त्वम्। एवं च तस्यातिङन्तत्वात् प्रातिपदिकत्वेन सुबन्तत्वमिति सूत्रेणैव सिद्धमिति भावः॥

(किंब्रह्मचारिशब्दार्थाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ किंसब्रह्मचारीति कोयं समासः?॥**

१ यद्वार्तिके पठ्यते 'कर्मवचनेनाप्रथमाया इति कर्तृवचनेनापीति च, तस्य वचनार्थं एवं कृत्वोपपन्नो भवतीति योजना। वार्तिके इति निर्धारणे सप्तमी। जात्यभिप्रायेणैकवचनम्। मिद्चोऽन्त्यादितिवत्। (र. ना.) २ अर्थे इति शेषः। (र. ना.) ३ अत्राप्यर्थे इति शेषः। (र. ना.) ४ अस्य, संख्ययाऽव्ययासन्नेत्यादि सूत्रस्य, कवभावार्थमित्यस्य डच् संपादनद्वारेत्यादिः। (र. ना.)

५ पञ्च भुक्तवन्तोऽस्येति पाठः शोभनो भाति। पूर्वत्र दृष्टश्च। (र. ना.) ६ व्यधिकरणेऽपीति शेषः। (र. ना.) ७ समासघटकपदार्थनिमित्ता समाससंज्ञाऽन्तरङ्गेत्यर्थः। (र. ना.) ८ समासबहिर्भूतपश्येत्यादिक्रियापदार्थापेक्षेत्यर्थः। (र. ना.)

( समाधानभाष्यम् )

**बहुव्रीहिरित्याह ॥**

( आक्षेपभाष्यम् )

**कोऽस्य विग्रहः ? ॥**

( समाधानभाष्यम् )

**के सब्रह्मचारिणोऽस्येति ॥**

( आक्षेपभाष्यम् )

**यद्येवं कठ इति प्रतिवचनं नोपपद्यते । न ह्यन्यत्पृष्टेनान्यदाख्येयम् ॥**

( प्रदीपः ) **प्रतिवचनमिति** । वर्तिपदार्था बहुत्वसंख्यायुक्ताः पृष्टास्ततश्चैकलसंख्यायुक्तेनान्यपदार्थविशेषणेन प्रतिवचनं नोपपद्यत इत्यर्थः ॥

( उद्द्योतः ) **अन्यपदार्थविशेषणेनेति** । अन्यपदार्थो विशेष्यते विशेषेऽवस्थाप्यतेऽनेन तादृशेन कठ इति शब्देनोत्तरं नोपपद्यते इत्यर्थः ॥

( समाधानभाष्यम् )

**एवं तर्ह्येवं विग्रहः करिष्यते—केषां सब्रह्मचारी किंसब्रह्मचारीति ॥**

( प्रदीपः ) इष्टसमासस्थापनाय दिगन्तराणि निराकर्तुमुपन्यस्यति—**एवं तर्हीति** ॥

( उद्द्योतः ) **दिगन्तराणि** । प्रकारान्तराणि ॥

( समाधानबाधकभाष्यम् )

**प्रतिवचनं चैवं नोपपद्यते । स्वरे च दोषो भवति—किंसब्रह्मचारीत्येवं स्वरः प्रसज्येत, किंसब्रह्मचारीति चेष्यते ॥**

( प्रदीपः ) **प्रतिवचनमिति** । कठानामिति प्रतिवचनेन भाव्यं न तु कठ इत्यनेनेत्यर्थः ॥ **स्वर इति** । अन्तोदात्तः स्याद्, आद्युदात्तश्चेष्यत इत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**एवं तर्ह्येवं विग्रहः करिष्यते—कः सब्रह्मचारी किंसब्रह्मचारीति ॥**

( प्रदीपः ) **कः सब्रह्मचारीति** । सुप्सुपेति समासं मन्यते । विशेषणविशेष्यभावाभावात्तु विशेषणसमासो नास्ति ॥

( उद्द्योतः ) **विशेषणविशेष्यभावाभावादिति** । परिच्छेद्यपरिच्छेदकभावो विशेष्यविशेषणभाव इत्यभिमानः ॥ वस्तुतो विषयताविशेषत्वरूपमेव तत्र तन्निविष्टमिति तेनापि समास इति चिन्त्यम् ॥

( समाधानान्तरबाधकभाष्यम् )

**भवेत्प्रतिवचनमुपपन्नम् । स्वरे तु दोषो भवति ॥**

( समाधानभाष्यम् )

**एवं तर्ह्येवं विग्रहः करिष्यते—कः सब्रह्मचारी तव किंसब्रह्मचारी त्वमिति ॥**

( प्रदीपः ) **कः सब्रह्मचारी तवेति** । एकस्मिन्पृष्टे एकवचनेन प्रतिवचनमुपपद्यते ॥

( आद्यपक्षाङ्गीकारभाष्यम् )

**अथ वा पुनरस्त्वयमेव विग्रहः—के सब्रह्मचारिणोऽस्येति ॥**

( प्रदीपः ) अत्रापि पक्षे कठ इति प्रतिवचनं व्यधिकरणं प्राप्नोति । अहं कठ इति सामानाधिकरण्यं दृश्यत इति विशेषाभावं मत्वाह—**अथवेति** ॥

( उद्द्योतः ) **व्यधिकरणं प्राप्नोतीति** । प्रश्नविषयेणेति शेषः ॥ तत्र हेतुमाह—**अहं कठ इति** । यतोऽहमित्यनेन सामानाधिकरण्यमतस्तेन व्यधिकरणमित्यर्थः ॥ **विशेषाभावमिति** । प्रतिवचनानुपपत्तिपरिहाररूपस्य विशेषस्याभावमित्यर्थः ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—कठ इति प्रतिवचनं नोपपद्यत इति ॥**

( समाधानभाष्यम् )

**नैष दोषः । अग्नौकरवाणिन्यायेन भविष्यति । तद्यथा—कश्चित्कंचिदाह—अग्नौकरवाणीति । स आह—कुर्विति । कर्तर्यनुज्ञाते कर्माप्यनुज्ञातं भवति ॥ अपर आह—अग्नौ करिष्य इति । क्रियतामिति कर्मण्यनुज्ञाते कर्ताप्यनुज्ञातो भवति । यथैव खल्वपि—के सब्रह्मचारिणोऽस्येति ? । 'कठाः' इत्युक्ते संबन्धादेतद्गम्यते—'नूनमयमपि कठः' इति । एवं 'कठ' इत्युक्ते संबन्धादेतद्गन्तव्यं 'नूनं तेऽपि कठाः' इति । न खल्वपि ते समासेन शक्याः प्रतिनिर्देष्टुम् । उपसर्जनं हि ते भवन्ति ॥**

( प्रदीपः ) **अग्नौकरवाणिन्यायेनेति** । अग्नौ करवाणीति यद्वाक्यं तदनुकरणमेतत् ॥ **कर्मापीति** । सकर्मकत्वात् करोतिक्रियायाः ॥ **एवं कठ इति** । नहि तेषां कठत्वेन विना तस्य कठत्वोपपत्तिः । तथा हि—समाने ब्रह्मणि व्रतचारी सब्रह्मचारी कथ्यते । ततश्च तस्यैकचरणाध्ययनापेक्षं सब्रह्मचारित्वम् ॥ **न खल्वपीति** । वर्तिपदार्थानामुपसर्जनत्वात्तदुपलक्षितस्यान्यपदार्थस्य प्राधान्यात् किंसब्रह्मचारिशब्देन समासेन तेषामभिधानाभावात् कठा इति बहुवचनान्तं प्रतिवचनं न कदाचिद्भवतीत्यर्थः । यदा तु के सब्रह्मचारिणोऽस्येति वाक्येन प्रश्नः क्रियते, न तु समासेन, तदा कठा इत्येव प्रतिवचनम् ॥

( उद्द्योतः ) **अनुकरणमिति** । एवं च तद्विषयो न्याय इति मध्यमपदलोपी समासः ॥ यत्त्वनुकरणस्य गतित्वात्समास इति । तन्न कृभ्वस्तियोग एव तत्प्रवृत्तेः[5] ॥ भाष्ये—**अग्नौ करवाणीत्यं**स्याग्नौ हविः करवाणीत्यर्थः ॥ **कर्तर्यनुज्ञात इति** । कुरु इत्यत्र कर्तरि लोट् । एवं च तात्पर्यतः प्रधानस्य कर्तुरेवानुज्ञा भवति इति भावः ॥ **कर्मापीति** । कर्मकारकमित्यर्थः । तदाह—**सकर्मकत्वा-**

१ बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरेणेत्यर्थः । ( र. ना. )
२ बहुव्रीहिसमासे इत्यादिः । (र.ना.) ३ कः सब्रह्मचारी तवेति पक्षे इत्यर्थः । ( र. ना. ) ४ वेदे इत्यर्थः । ( र. ना. ) ५ अनुकरणस्य गतिसंज्ञाप्रवृत्तेरित्यर्थः । ( र. ना. )

दिति । दृष्टान्तान्तरमप्याह—भाष्ये—यथैव खल्वपीति ॥ दार्ष्टान्तिकमाह—एवमिति ॥ नहि तेषामिति । कठ इत्यस्य कठशाखाध्येतेत्यर्थादिति भावः ॥ चरणं शाखा । तथा च तस्य प्रश्नस्यार्थमिदमुत्तरमिति बोध्यम् ॥ नन्वसमासेन प्रश्न इव समासेन प्रश्नेऽपि बहुवचनान्तमुत्तरं कुतो नेत्यत आह—भाष्ये—न खल्वपीति । सब्रह्मचारिणः समासेन प्रतिनिर्देष्टुं प्राधान्येन बोधयितुमशक्या अतः समासेन प्रश्ने कठा इत्युत्तरमित्यर्थः । प्रश्नवाक्ये यत्प्रधानं तद्विषयं यथाकथञ्चिज्जिज्ञासानिवर्तकमुत्तरमिति तात्पर्यम् ॥ तदाह—वर्तिपदेति ॥

(अर्धतृतीयादिशब्दार्थाधिकरणम्)

(आक्षेपभाष्यम्)

**अथार्धतृतीया इति कोऽयं समासः ? ॥**

(समाधानभाष्यम्)

**बहुव्रीहिरित्याह ॥**

(आक्षेपभाष्यम्)

**कोऽस्य विग्रहः ? ॥**

(समाधानभाष्यम्)

**अर्धं तृतीयमेषामिति ॥**

(आक्षेपभाष्यम्)

**कः समासार्थः । समासार्थो नोपपद्यते । अन्यपदार्थो हि नाम स भवति, येषां पदानां समासस्ततोऽन्यस्य पदस्यार्थोऽन्यपदार्थः ? ॥**

(प्रदीपः) कः समासार्थ इति । वर्तिपदार्थव्यतिरिक्तेनान्यपदार्थेन भाव्यम् । इह च बहुत्वान्यथानुपपत्त्या क्रियायां च वर्तिपदार्थस्याप्यन्तर्भावादन्यपदार्थो नोपपद्यते ॥

(उद्योतः) कः समासार्थ इति वाक्यं न कोपीत्यर्थाभिप्रायेण भगवान्विवृणोति—समासार्थो नोपपद्यत इति ॥ वर्तिपदार्थस्याप्यन्तर्भावादिति । बहुत्वान्यथानुपपत्त्या क्रियायां वर्तिपदार्थस्याप्यन्वयादित्यर्थः । अन्यपदार्थशब्दस्यान्यपदस्यैव योऽर्थः न तु स्वपदस्यापीत्यर्थ इति भावः ॥

(समाधानभाष्यम्)

**एवं तर्ह्येवं विग्रहः करिष्यते—अर्धं तृतीयमनयोरिति ॥**

(आक्षेपभाष्यम्)

**एवमपि कः षष्ठ्यर्थः । षष्ठ्यर्थो नोपपद्यते । किं हि तयोरर्धं भवति ? ॥**

(प्रदीपः) किं हि तयोरिति । तृतीयस्य हि तदर्धमिति द्वाभ्यां तस्यावयवावयविभावलक्षणः संबन्धो नास्ति, स्वस्वामिसंबन्धे चात्रानभिधानाद् बहुव्रीहिर्न भवति । समासस्यानुपपत्तिचोदनाद् मूलाभावाद् द्विवचनप्रसङ्गो न चोदितः ॥

(उद्योतः) अत्र अर्धतृतीया इत्यत्र ॥ द्विवचनं स्यादिति कुतो नोक्तमत आह—समासस्येति ॥

(प्रथमोक्तविग्रहाभ्युपगमभाष्यम्)

**अस्तु तर्ह्ययमेव विग्रहः—अर्धं तृतीयमेषामिति ॥**

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—'समासार्थो नोपपद्यते' इति ॥**

(समाधानभाष्यम्)

**नैष दोषः । अवयवेन विग्रहः । समुदायः समासार्थः ॥**

(प्रदीपः) अवयवेनेति । अर्धस्य द्वयोश्च यः समुदायः स समासार्थः । समुदायावयवानां च कदाचिद्भेदविवक्षा कदाचिदभेदविवक्षा । यथा—ब्राह्मणानां संघः । संघीभवन्ति ब्राह्मणा इति ॥

(उद्योतः) अवयवेन विग्रह इति । अवयवार्थेन वाक्यमित्यर्थः । वर्तिपदार्थोऽवयव इति यावत् ॥ नन्वर्धस्य द्वयोश्चेत्यनुपपन्नं, समुदायस्यावयवानतिरिक्ततया अर्धं द्वयं च समुदाय इत्येवोचितम्, अवयवेन विग्रहः समुदायः समासार्थ इति चायुक्तमत आह—समुदायावयवानां चेति । समुदायश्चान्यपदस्यैवार्थो न तु समस्यमानपदस्य । स चावयवेभ्यो भिन्नोऽन्यपदार्थः, अवयवगतबाहुल्यस्य च तत्रारोपाद्बहुवचनमिति भावः ॥

(आक्षेपभाष्यम्)

**यद्यवयवेन विग्रहः समुदायः समासार्थः, 'असिद्वितीयोऽनुससार पाण्डवम्' 'संकर्षणद्वितीयस्य बलं कृष्णस्य वर्धताम्' इति द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति ॥**

(प्रदीपः) असिद्वितीय इति । द्वयोः पूरणो द्वितीयः । स च द्व्यात्मकस्य समुदायस्यावयवो भवतीति तदवयवस्य समुदायस्य समासेनाभिधानाद् द्विवचनप्रसङ्गः ॥

(उद्योतः) द्विवचनप्रसङ्ग इति । उद्भूतावयवभेदस्य समुदायस्य समासार्थत्वात् । तत्र बहुवचनमिवात्रापि द्विवचनं स्यादिति भावः ॥

(पश्चात्प्रोक्तविग्रहाभ्युपगमभाष्यम्)

**अस्तु तर्ह्ययमेव विग्रहः—अर्धं तृतीयमनयोरिति ॥**

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—षष्ठ्यर्थो नोपपद्यत इति ॥**

(समाधानभाष्यम्)

**नैष दोषः । इदं तावदयं प्रष्टव्यः—अथेह 'देवदत्तस्य भ्राता' इति कः षष्ठ्यर्थ इति ? । तत्रैतत्स्यात्—एकस्मात्प्रादुर्भाव इति । एतच्च वार्तम् । तद्यथा—सार्थिकानामेकप्रतिश्रये उषितानां प्रातरुत्थाय प्रतिष्ठमानानां न कश्चित्परस्परमभिसंबन्धो भवति ।**

---

१ अर्धं हि तयोः किं भवतीति योजना । (र. ना.) २ बहुव्रीहिः । (र.ना.) ३ अथेति प्रश्ने । (र. ना.) ४ मत्वर्थे ठन् । भवार्थेऽध्यात्मादित्वाट्ठञ् वा ।

एकप्रतिश्रये, एकस्मिन्निवासे इत्यर्थः । (र. ना.)

एवंजातीयकं भ्रातृत्वं नाम ॥ अत्र चेद्युक्तः षष्ठ्यर्थो दृश्यते, इहापि युक्तो दृश्यताम् ॥

( प्रदीपः ) अथेति । नह्यत्र स्वस्वामिभावादिः संवन्धोऽस्तीति भावः ॥ एतच्च वार्तमिति । असारवाची वार्तशब्दः । मातापितृभ्यामेव पुत्रयोर्जन्यजनकभावः संवन्धो न तु परस्परेण कश्चिदित्यर्थः ॥ अत्र चेदिति । परस्परोपकाराभावेपि यदि समानोदरशायित्वमात्रेण काल्पनिकः संवन्धस्तदार्धस्य द्वाभ्यामेकप्रदेशावस्थानादिनिमित्तः संवन्धो युक्त इत्यर्थः ॥

( उद्द्योतः ) स्वस्वामीति । साक्षात्संवन्धोपलक्षणम् । कचिद्वार्तशब्दस्य युक्तपर्यायत्वदर्शनादाह—असारेति । अनेकार्थोऽयमिति भावः ॥ अवस्थानादिनिमित्त इति । सर्वत्र संवन्धस्य क्रियाकारकभावपूर्वकत्वमिति उभयत्रापि काल्पनिकोऽवयवावयविभावो व्यवहारनियामक इति भावः । यद्वा सम्बन्धत्वेन सम्बन्धोऽसन्नपि विकल्पात्मकज्ञानविषयः पुरुषस्य चैतन्यमितिवत्षष्ठीप्रयोगनिमित्तमिति भावः ॥

( आक्षेपभाष्यम् )

इह तर्हि अर्धतृतीया आनीयन्तामित्युक्ते अर्धस्यानयनं न प्राप्नोति ॥

( प्रदीपः ) इह तर्हीति । अर्धं तृतीयमनयोरिति द्वयोरेव समासार्थत्वादानयनं स्याद् नार्धस्येत्यर्थः ॥

( उद्द्योतः ) नार्धस्येति । एवं च द्विवचनप्रसङ्गोपि नोदित इति वोध्यम् ॥

( प्रथमप्रोक्तविग्रहाभ्युपगमभाष्यम् )

अस्तु तर्ह्ययमेव विग्रहः—अर्धं तृतीयमेषामिति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—
'असिद्वितीयोऽनुससार पाण्डवम्'
'संकर्षणद्वितीयस्य बलं कृष्णस्य वर्द्धताम्'
इति द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोतीति ॥

( समाधानभाष्यम् )

नैष दोषः । अयं तीयान्तः शब्दोऽस्त्येव पूरणे वर्तते । अस्ति सहायवाची । तद्यः सहायवाची तस्येदं ग्रहणम्—'असिद्वितीयः' असिसहाय इति गम्यते ॥

( प्रदीपः ) अस्ति सहायवाचीति । अव्युत्पन्न एवेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—अस्तिसहायेति । एवं चैकस्यैवान्यपदार्थत्वं न तु व्यवयवसमुदायस्येति भावः ॥

( आक्षेपभाष्यम् )

एवमपि—अर्धतृतीया इत्येकस्मिन्नेकवचनं प्राप्नोति । एकार्था हि समुदाया भवन्ति । यथा—शतं यूथं वनमिति ॥

( पश्चात्प्रोक्तविग्रहाभ्युपगमभाष्यम् )

अस्तु तर्ह्ययमेव विग्रहः—अर्धं तृतीयमनयोरिति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—अर्धतृतीया आनीयन्तामित्युक्ते अर्धस्यानयनं न प्राप्नोतीति ॥

( समाधानभाष्यम् )

नैष दोषः । भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा—शुक्लवाससमानय लोहितोष्णीषा ऋत्विजः प्रचरन्तीति तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति ॥

( प्रदीपः ) भवति बहुव्रीहाविति । उपलक्षणार्थसहितयोर्द्वयोरानयनं भविष्यतीत्यर्थः । संयोगसमवायलक्षणे संबन्धे यदा बहुव्रीहिस्तदा तद्गुणसंविज्ञानं भवति, शुक्लवासा लम्बकर्ण इति । स्वस्वामिभावादिके तु संबन्धे बहुव्रीहौ तद्गुणसंविज्ञानाभावो यथा चित्रगुरिति संक्षेपेण विषयभागः ॥

( उद्द्योतः ) संयोगसमवायेति । एवं च प्रकृते तद्गुणसंविज्ञानस्य वक्तुमशक्यत्वाल्लोहितोष्णीषमानय इत्यादौ उपलक्षणार्थसाहित्यप्रयुक्तवचनादर्शनेन द्विवचनप्रसङ्गाच्च दुष्टोयं पक्ष इति भावः ॥

( प्रथमप्रोक्तविग्रहाभ्युपगमभाष्यम् )

अथ वा पुनरस्त्वयमेव विग्रहः—अर्धं तृतीयमेषामिति ॥

( प्रदीपः ) द्विवचनप्रसङ्गाद् दुष्टोयं पक्ष इति मत्वाह—अथ वेति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—एकवचनं प्राप्नोतीति ॥

( समाधानभाष्यम् )

नैष दोषः । संख्या नामेयं परप्रधाना । संख्येयमनया विशेष्यम् । यदि चात्रैकवचनं स्यात् संख्येयमविशेषितं स्यात् ॥

( प्रदीपः ) संख्या नामेयमिति । अयमर्थः—अर्धं तृतीयमेषामिति बहुत्वसंख्याविशिष्टोऽन्यपदार्थो वाक्य उपात्त इति तथाभूतस्यैव समासो वाचक इति अवश्यप्रत्याय्यं बहुत्वम् । यथा च वृक्षा इति बहुत्वसंख्यायुक्तः समुदायः प्रतीयते धवखदिरपलाशा इति च, तथार्धतृतीया इत्यपीत्यर्थः ॥

( उद्द्योतः ) अयमर्थ इति । प्राग्व्याख्यात एतद्भाष्याक्षरार्थः । एवं च विग्रह उद्भूतावयवभेदस्य समुदायस्य अन्यपदार्थत्वात्तादृश एव समासशक्य इति तत्प्रत्यायनाय बहुवचनमेवेति तात्पर्यम् ॥

१ क्रियाकारकभावाभावादित्यादिः । (र.ना.) २ चोदित इत्यर्थः । (र.ना.) ३ अयं तीयान्तः शब्दः पूरणे वर्ततेऽस्त्येवेति योजना । पूर्ववाक्यार्थस्यास्तिक्रियाकर्तृत्वम् । (र. ना.) ४ उपलक्षणपदमत्र व्यावर्तकपरम् । तेनान्यपदार्थे विशेषणीभूतो योऽर्धोऽभिन्नतृतीयरूपोऽर्थस्तत्सहितयोर्द्वयोरित्यर्थो लभ्यते । अन्यथाऽर्धतृतीयपदार्थस्यानयनक्रियारूपविधेयान्वयो न स्यादिति बोध्यम् । (र. ना.) ५ द्वयोरर्धतृतीयेन सह संयोगसमवाययोर्वक्तुमशक्यत्वेनेत्यादिः । (र. ना.) ६ अत्राप्युपलक्षणपदं पूर्ववद् व्याख्येयम् । (र. ना.) ७ किन्तु अन्यपदार्थप्रयुक्तवचनदर्शनमेवात्रेति भावः । (र. ना.) ८ अर्धं तृतीयमनयोरिति विग्रहे अर्धतृतीया आनीयन्तामित्यत्रेत्यादिः । (र. ना.)

(आक्षेपभाष्यम्)

**इह तर्ह्यर्धतृतीया द्रोणा इत्ययं द्रोणशब्दः समुदाये प्रवृत्तः अवयवे नोपपद्यते॥**

(प्रदीपः) इह तर्हीति। अर्धस्य द्वयोश्च द्रोणयोर्यः समुदायः स समासार्थस्तत्रार्धस्य द्रोणत्वाभावाद् द्रोणा इति नोपपद्यत इत्यर्थः॥

(समाधानभाष्यम्)

**नैष दोषः। समुदायेषु हि प्रवृत्ताः शब्दाः अवयवेष्वपि वर्तन्ते। तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तं, घृतं भुक्तं, शुक्लो नीलः कपिल इति। एवमयं समुदाये द्रोणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते॥**

(प्रदीपः) नैष दोष इति। अर्धेपि द्रोणत्वोपचाराद् द्रोणशब्दस्य प्रवृत्तिरित्यर्थः॥

(आक्षेपभाष्यम्)

**कामं तर्ह्यनेनैव हेतुना यदा द्वौ द्रोणौ अर्धाढकं च तदा कर्तव्यमर्धतृतीया द्रोणा इति॥**

(उद्द्योतः) भाष्ये—कर्तव्यमर्धतृतीया इति। प्रयोक्तव्यमित्यर्थः॥

(समाधानभाष्यम्)

**न कर्तव्यम्। समुदायेषु वृत्ताः शब्दाः केष्ववयवेषु वर्तन्ते?, योवयवस्तं समुदायं न व्यभिचरति। कं च समुदायं न भिचरति? । अर्धद्रोणो द्रोणम्। अर्धाढकं पुनर्व्यभिचरति॥ अनेक॥२४॥**

(प्रदीपः) न कर्तव्यमिति। स्वावयव एव समुदायरूपोपचारो नान्यदीये अवयव इत्यर्थः॥ **अर्धद्रोणो द्रोणमिति।** द्रोणेन विनाऽस्याभावादित्यर्थः॥ **अर्धाढकमिति।** चतुराढको द्रोणः। ततश्च विनापि द्रोणेनैकाढकसद्भावेप्यर्धस्य भावः॥२४॥

(उद्द्योतः) भाष्ये—**योऽवयवस्तं समुदायं न व्यभिचरतीति।** यदवयवबुद्धिस्तद्बुद्धिं न व्यभिचरतीत्यर्थः। अन्यथा द्रोणाभाववद्वृत्तित्वरूपो व्यभिचारोर्धद्रोणेप्यस्त्येवेति तदसंगतिः स्पष्टैव॥ **अर्धाढकं पुनर्व्यभिचरतीत्यस्य** द्रोणमिति शेषः। **अर्धाढकं** कर्तृ॥ **द्रोणेन विनेति।** द्रोणबुद्ध्या विनेत्यर्थः॥ **द्रोणेन।** द्रोणबुद्ध्या॥ **एकाढकसद्भावे** तद्बुद्धिसद्भावे॥२४॥

(२८३ बहुव्रीहिसंज्ञासूत्रम्॥ २।२।२ आ. २)

## २८३ संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये॥ २।२।२५॥

(द्वित्रादिशब्दार्थाधिकरणम्)

(आक्षेपभाष्यम्)

**द्वित्राः त्रिचतुरा इति कोयं समासः?॥**

(प्रदीपः) **संख्यया॥२५॥ द्वित्रा इति।** बहुव्रीहिनिमित्तस्य डचो दर्शनादात्त्वाभावाच्च निश्चिते बहुव्रीहित्वे विग्रहनिश्चयाय प्रश्नः—**कोयं समास इति॥**

(उद्द्योतः) संख्यया—॥२५॥ आत्वाभावाच्चेति। अष्टन इत्यात्त्वस्य बहुव्रीहौ निषेधात्सोपि बहुव्रीहित्वनिश्चायक इति भावः॥ कोयमिति भाष्यस्य किंविग्रहकोयमित्यर्थ इति तात्पर्यम्॥

(समाधानभाष्यम्)

**बहुव्रीहिरित्याह॥**

(आक्षेपभाष्यम्)

**कोस्य विग्रहः?॥**

(प्रदीपः) स्वाभिप्रायं प्रकाशयितुमाह—**कोस्येति।** यदि तावद् द्वौ त्रय एषामुन्मुग्धानामिति तदा मत्वर्थत्वात् पूर्वेण बहुव्रीहिः सिद्धः, समासान्तस्तु डज् न सिध्यति, असंख्येयवृत्तित्वाद् बहुव्रीहेः। अथ द्वौ वा त्रयो वेति तदा पक्षे द्विवचनप्रसङ्गः॥

(समाधानभाष्यम्)

**द्वौ वा त्रयो वेति॥**

(आक्षेपभाष्यम्)

**भवेद्यदा बहूनामानयनं तदा बहुवचनमुपपन्नम्। यदा तु खलु द्वावानीयेते तदा न सिध्यति॥**

(प्रदीपः) **भवेद्यदेति।** विकल्पो वार्थः इति द्वित्रशब्दः कदाचिद् द्वयोर्वाचकः कदाचित् त्रयाणाम्॥

(उद्द्योतः) **कदाचिद् द्वयोर्वाचक इति।** बोधविषयत्वस्यैव विकल्पं वाशब्दो द्योतयतीत्यभिमानः॥ बहूनामानयनमित्यस्य बहूनामानयनान्वय इत्यर्थ इति तात्पर्यम्॥ भाष्ये—**यदा द्वावानीयेते इति।** द्वावेवानयनान्वयित्वेन बुध्येते इति भावः॥

(समाधानभाष्यम्)

**तदापि सिद्धम्॥ कथम्?। केचित्तावदाहुः—अनिर्ज्ञातेर्थे बहुवचनं प्रयोक्तव्यमिति। तद्यथा—कति भवतः पुत्राः, कति भवतो भार्या इति॥**

**अपर आह—द्वौ वेत्युक्ते त्रयो वेति गम्यते। त्रयो वेत्युक्ते द्वौ वेति गम्यते। सैषा पञ्चाधिष्ठाना वाक् तत्र युक्तं बहुवचनम्॥**

(प्रदीपः) **अनिर्ज्ञातेर्थे इति।** केचिद्वचनमेतदित्याहुः॥ अन्ये तु न्यायसिद्धं मन्यन्ते। अयमर्थः संशयोत्रै वार्थो न विकल्पः। स चानियतसंख्याविमर्शोति विमर्शविषयबहुत्वसद्भावाद् बहुवचनम्। अर्थशब्देनात्र संख्यैवोच्यते, संख्यायामविज्ञातायामित्यर्थः॥ **कति भवत इति।** अन्तर्भावितपूर्वसंख्या बहुत्वसंख्या पृच्छ्यत इति बहुवचनम्॥ **द्वौवेति।** विरुद्धानेकविषयत्वाद्विमर्शस्य पर्यायस्थितैद्वित्वत्रित्वाधारवस्तुसंकलनया पञ्चाधिष्ठानत्वमुच्यते॥

१ चतुराढकीरूपे इत्यादिः। (र. ना.) २ व्यभिचरतीत्यस्य कर्तृपदलाभाय क इति शेषः। (र. ना.) ३ 'ऽन्यपदार्थत्वा'। ४ 'खल्वपि'। ५ पूर्वपक्षिण इति शेषः। (र. ना.) ६ सैषा वाक्, द्वित्रशब्दः। पञ्चाधिष्ठाना, पञ्चार्थक इत्यर्थः। (र. ना.) ७ द्वौ वा त्रयोवेति विग्रहवाक्ये तदर्थके समासे चेत्यर्थः। (र.ना.) ८ विमर्शो विषयता। अनियतसंख्याविषयक इत्यर्थः। (र.ना.) ९ विमर्शोऽत्र संशयः। (र. ना.) १० स्थितिरत्र ज्ञप्तिरूपा। (र. ना.)

( उद्योतः ) अनिर्ज्ञाते इति । परस्परं प्रतिक्षेपकद्वित्वत्रित्ववन्त इति बोधेऽनिर्णीतसंख्यात्वाद्बहुवचनं भवतीति भावः । तदाह—केचिदिति । परस्परप्रतिक्षेपकत्वं हि वार्थः । कदाचिद् द्वयोर्बोधः कदाचित्त्रयाणामिति अनिर्णीतसंख्यार्थकत्वाद्वचनेन बहुवचनं साध्यमिति तदाशयः ॥ अन्ये त्विति । संशयोऽत्रेति । अनिर्ज्ञात इत्यस्य निश्चयेनाविज्ञाते इत्यर्थं इति भावः ॥ तथा च संशयविषये इति फलितम् ॥ अर्थशब्देनात्रेति । प्रकरणादिति भावः । अन्तर्भावितेति । संख्यान्तो बहुव्रीहिः । अत एवैको द्वावित्यप्युत्तरम् । अन्यथा बहुविषयप्रश्ने तदुत्तरासंगतिरिति भावः ॥ विरुद्धानेकेति । विकल्पार्थ एव वाशब्दः । क्रियाविषयत्वस्यैव च विकल्पो ननु बोधविषयत्वस्यापि स इति भावः ॥ विमर्शः परस्परप्रतिक्षेपः । विकल्पे इयत्तानिर्धारणम्, संशये त्वनिर्धारणमिति भेदः । यद्वा संशय एव वार्थः ॥ अनेकविषयत्वात् । अनेकविषयैरूपत्वात् ॥ विमर्शस्य संशयस्येत्यर्थः । संशयत्वं च विषयनिष्ठमित्यन्यत्र निरूपितम् ॥ पञ्चाधिष्ठानत्वमुच्यते इति । वाच इति शेषः । द्वित्रशब्दजन्यो बोधो नियमेन पञ्चविषय इति भावः ॥

( द्विदशादिशब्दार्थाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ द्विदशाः त्रिदशा इति कोयं समासः ? ॥**

(उद्योतः) भाष्ये—द्विदशा इति । अत्रापि डजोत्वाभावाभ्यां बहुव्रीहित्वस्य निश्चयः । द्वौ दश एषामुन्मुग्धानामिति विग्रहे डजनुपपत्तिः, संख्येये समासावर्तनात् । तस्माद्विग्रहविषय एवात्रापि प्रश्नः ॥

( समाधानभाष्यम् )

**बहुव्रीहिरित्याह ॥**

( आक्षेपभाष्यम् )

**कोऽस्य विग्रहः ? ॥**

( समाधानभाष्यम् )

**द्विर्दश द्विदशा इति ।**

( प्रदीपः ) द्विर्दशेति । अयं भावः—द्वौ दशेति विग्रहो विरोधान्न क्रियते । तथा हि—द्वित्वं दशसंख्याया एकत्वान्नोपपद्यते नापि संख्येयानां दशानाम् । तस्माद् द्विशब्देन दशत्वावृत्तिगता द्वित्वसंख्या प्रतिपाद्यत इति सुजन्तेन वाक्यं क्रियते ॥

( उद्योतः ) तत्र स्वपदविग्रहपरित्यागेनास्वपदविग्रहः कसादित्यत आह—अयं भाव इति ॥ नापि संख्येयानामिति । तेषां बहुत्वात् ॥ दशत्वावृत्तीति । यद्यपि क्रियाभ्यावृत्तिगणने कृत्वसुच् एवं च दशत्वावृत्तीत्यसंगतम्, तथाप्यावृत्तिक्रियाजन्मगणनमेवात्रेति बोध्यम् ॥ दशत्वावृत्तीत्यस्य दशत्वावृत्तिजन्मगतेत्यर्थः ॥

( १३९८ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ संख्यासमासे सुजन्तत्वात्संख्याऽप्रसिद्धिः ॥ * ॥**

( भाष्यम् ) **संख्यासमासे सुजन्तत्वात्संख्येयाप्रसिद्धिः । नहि सुजन्ता संख्यास्ति ॥**

( प्रदीपः ) अत्र दूषणमाह—संख्यासमास इति । सुजन्तस्य शब्दान्तरत्वात् संख्यावाचित्वं नास्तीत्यर्थः ॥

( उद्योतः ) यद्यपि सुजन्तोप्यावृत्तिगतसंख्याबोधकः, तथापि संख्यायाः संख्येयस्य वा प्राधान्येन बोधकः संख्याशब्द उच्यते । नायं तथा, द्वित्वसंख्यावृत्तिकदशत्ववन्त इति प्रतीतेरित्याह—सुजन्तत्वेति ॥ शब्दान्तरत्वात् । संख्यासंख्येयातिरिक्तबोधकत्वात् ॥

( समाधानभाष्यम् )

**एवं तर्ह्येवं विग्रहः करिष्यते—द्वौ दशतौ द्विदशा इति ॥**

( प्रदीपः ) द्वौ दशताविति । द्वौ दशतौ वर्गावित्यर्थः ॥

( उद्योतः ) वर्गाविति । पञ्चद्दशतौ वर्गे चेति निपातनात्, वर्गगतद्वित्वप्रतिपादकतया द्विशब्दः संख्यावाचीत्यर्थः ॥

( आक्षेपभाष्यम् )

**एवमपि अत्कारान्तत्वात्संख्येयेत्यप्रसिद्धिः । न ह्यत्कारान्ता संख्यास्ति ॥**

( प्रथमप्रोक्तविग्रहाभ्युपगमभाष्यम् )

**अस्तु तर्ह्ययमेव विग्रहः—द्विर्दश द्विदशा इति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*संख्यासमासे सुजन्तत्वात्संख्येयेत्यप्रसिद्धिरिति ॥**

( १३९९ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ नवाऽसुजन्तत्वात् ॥ * ॥**

( भाष्यम् ) **न वा एष दोषः । किं कारणम् ? । असुजन्तत्वात् । सुजन्तत्वादित्युच्यते । न चात्र सुजन्तं पश्यामः ॥**

( प्रदीपः ) न वेति । नहि वाक्योपमर्देनेन समासः क्रियते, लौकिके प्रयोगे द्वयोरपि नित्यत्वात् । अन्वाख्यानमात्रं तु शास्त्रेण क्रियते । तत्र वृत्तिविषये सुचमन्तरेणाभ्यावृत्तिसंख्याभिधायी द्विशब्द इति संख्यावाचित्वात्समासो भवत्येव ॥ न चात्रेति । वृत्तावित्यर्थः ॥

( उद्योतः ) अभ्यावृत्तिसंख्याभिधायीति । आवृत्तिजन्मगतसंख्याभिधायीत्यर्थः ॥ आवृत्तिश्च समासशक्त्येति द्विशब्दस्तद्गतसंख्यायामेव वर्तत इति भावः । भाष्ये—सुजन्तत्वादित्युच्यते इति । त्वया सुजन्तत्वात्संख्येयेत्यप्रसिद्धिरित्युच्यते । न च वृत्तौ सुजन्तमस्ति, तस्मात्केवलेनैव समासः स चासुजन्त इति संख्येति प्रसिद्धिरित्यर्थः ॥

( आक्षेपभाष्यम् )

**किं पुनः कारणं वाक्ये सुज् दृश्यते, समासे न दृश्यते ? ॥**

---

१ इदं चिन्त्यम् । संशयस्यानेकविषयसंबन्धित्वेऽपि तद्रूपत्वासंभवात् । अत एव घटविषयकः संशय इति प्रयुज्यते न तु घटरूपः संशय इति । एतेन 'संशयत्वञ्च विषयनिष्ठमिति वक्ष्यमाणग्रन्थोऽपि निरस्तो वेदितव्यः । ( र. ना. ) २ डचात्वाभावश्चेति इतरेतरयोगद्वन्द्वः । ( र. ना. ) ३ द्वित्वसंख्याकाऽऽवृत्ति- यैस्य तथाभूतं यद्दशत्वं तद्वन्त इत्यर्थः । ( र. ना. ) ४ अत्कारोऽत् शब्दः, क्रियते इतिकारः । बाहुलकात्कर्मणि घञ् । स्वाहाकार इत्यादिवत् । न तु वर्णात्कार इतिकारप्रत्ययः । अत्शब्दस्य वर्णसमुदायत्वेन वर्णत्वाभावात् । (र.ना.) ५ 'संख्येत्यम्' । ६ समासस्य साधुत्वेत्यादिः । ( र. ना. )

( १४०० समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सुजभावोभिहितार्थत्वात् समासे ॥ * ॥

**( भाष्यम् ) समासे सुजभावः ॥ किं कारणम् ? ॥ अभिहितार्थत्वात् । अभिहितः सुजर्थः समासेनेति कृत्वा समासे सुज् न भविष्यति ॥**

( प्रदीपः ) अभिहित इति । शब्दशक्तिस्वाभाव्यात्समासः सुजर्थं प्रत्याययतीत्यर्थः ॥

( उद्द्योतः ) सुजर्थमिति । यदुत्पत्तिगणने द्विशब्दस्तासुत्पत्तिविशिष्टां क्रियामित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**किं च भोः 'सुजर्थे' इति समास उच्यते ? ॥**

( प्रदीपः ) इतरः कार्यशब्ददर्शनमाश्रित्याह—**किञ्च भो** इति । यथा चार्थे द्वन्द्वस्य विधानाद् द्वन्द्वे चशब्दो न प्रयुज्यते तथा यद्ययं समासः सुजर्थे विधीयेत तदा सुचोऽप्रयोगः स्याद् नान्यथेति प्रश्नः ॥

( समाधानभाष्यम् )

**न खलु सुजर्थ इत्युच्यते, गम्यते तु सुजर्थः । कथम् ? । यावता संख्येयो यः संख्यया संख्यायते । स च क्रियाभ्यावृत्त्यर्थः । स चोक्तः समासेनेति कृत्वा समासे सुज् न भविष्यति ॥**

( प्रदीपः ) न खल्विति । नहि शब्दैरर्थाभिधानं वाचनिकं, किन्तु स्वाभाविकम् ॥ **स चेति** । क्रियाभ्यावृत्तिलक्षणोऽर्थः संख्येयो, न तु दशसंख्या, नापि तत्संख्यायुक्ताः । एतच्च पूर्वमुक्तम् । वाक्ये तु सुचमन्तरेण क्रियाभ्यावृत्तेरनवगमात् सुच्प्रयोगः । ततश्चास्वपदविग्रहः क्रियते द्विर्दश[1] द्विदशा इति । अनेनैव न्यायेन द्वौ दशताविल्यपि विग्रहः कार्यः । न्यायसाम्यात्तु प्रतीयमानत्वाद् भाष्यकारेण पुनर्न दर्शितः । तदुक्तम्—

**शब्दान्तरत्वाद्[2] वाक्येषु विशेषा यद्यपि श्रुताः ।**
**वृत्तिशब्दोन्य एवायमर्थान्तरनिबन्धनः ॥**

इति ॥

( उद्द्योतः ) **नहि शब्दैरिति** । तत्रतत्रार्थविशेषोपादानमबुधबोधनायान्वाख्याननिमित्तत्वेनाश्रीयते नतु शक्त्याधानाय । न ह्येतावता सर्वत्र तदुपादानमावश्यकमिति भावः ॥ भाष्ये समासेन तत्प्रतीतौ बीजमाह—**यावता संख्येयो यः संख्ययेति** । संख्येयत्वयोग्यो यः संख्यया संख्यायते गण्यते । संख्येयश्च पूर्वपदार्थसंख्यायाः प्रकृते नोत्तरपदार्थः, स च संख्यारूपः संख्येयरूपो वा उभयथापि न द्व्यादिसंख्येयः, आद्यस्यैकत्वाद् द्वितीयस्य दशत्ववत्त्वात् । अतः सामर्थ्यात् क्रियाजन्मरूपः सोऽर्थो[3] वाच्य इति सामर्थ्यादेव स समासेनोक्त इति भावः । तद् ध्वनयन् व्याचष्टे—**क्रियाभ्यावृत्तीति** । भाष्ये **स च क्रियाभ्यावृत्त्यर्थ** इति कर्मधारयः । संख्येयश्च क्रियाजन्मरूपोर्थः ॥ **स चोक्त इति** । क्रिया तज्जन्मरूपोर्थश्च समासेनोक्त इत्यर्थः । अनेन पञ्चकृत्वः पचतीत्यादौ क्रियोत्पत्तिः सुजाद्यर्थ इति बोधितं अत्रोक्त[4]त्वादिति वदतास्यैकार्थीभावकृतत्वं नेति सूचयति । अपृथगुपस्थितिर्हि सः, न तत्कृतत्वमस्य[5] । एवमन्यपदार्थादयोपि न तत्कृता इति बोध्यम् ॥ नन्वनया युक्त्या वाक्येपि सुच्प्रयोगो न स्यादत आह—**वाक्ये त्विति** । शब्दशक्तिस्वाभाव्यादिति भावः ॥ **अनेनैवेति** । वृत्तौ दशंशब्दो दशदर्थकः, सामर्थ्यात् । उद्भूतावयवभेदो वर्ग एव समासार्थ इति नित्यबहुवचनान्तत्वमिति भावः ॥

( प्रत्याख्यानाधिकरणम् )

( १४०१ प्रत्याख्यानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अशिष्यः संख्योत्तरपदः संख्येयवा[6]भिधायित्वात् ॥ * ॥

**( भाष्यम् ) अशिष्यः संख्योत्तरपदो बहुव्रीहिः ॥ किं कारणम् ? संख्येयवा[7]भिधायित्वात् । संख्येयं वार्थश्चाभिधीयते, तत्रान्यपदार्थ इत्येव सिद्धम् ॥**

( प्रदीपः ) **संख्येयमिति** । अधिका विंशतिर्यासां ता अधिकविंशा गाव इति संख्यानवृत्तित्वाद्विंशतिशब्दस्य संख्येयमन्यपदार्थ उपपद्यत इति भावः ॥

( उद्द्योतः ) **अधिका विंशतिर्यासामिति** । किञ्चिदधिका विंशतिः संख्या यासामित्यर्थः ॥ भाष्ये—**वार्थश्चेति** । सुजर्थस्तु न विशे[8]ष्य इति स नोक्तः ॥ **संख्यानेति** । द्वौ दशतौ विंशतिरिति द्वौ दशतौ परिमाणमस्य विंशतिरित्युभयथा तद्व्युत्पत्ते[9]रिति भावः ॥ **संख्येयवाभिधायित्वादिति** । द्विदशा इत्यादावपि द्विरावृत्तदशत्वसंख्यावन्त इत्यर्थात्संख्येयमेवान्यपदार्थ इति भावः ॥

( प्रत्याख्याननिराकरणभाष्यम् )

**भवेत्सिद्धमधिकविंशाः अधिकात्रिंशा इति, यत्रैतद्विचार्यते विंशत्यादयो दशदर्थे वा स्युः परिमाणिनि[10] वेति । इदं तु न सिध्यति—अधिकदशा इति, यत्र नियोगतः संख्या संख्येये एव वर्तते ॥**

( प्रदीपः ) **दशदर्थे इति** । संख्याने संख्येये[11] वेत्यर्थः । **अधिकदशा इति** । दशशब्देन संख्येयस्याभिधानादन्यपदार्थाभावः । तस्माद्दशाद्यर्थं सूत्रं कर्तव्यमेव ॥

( उद्द्योतः ) **द्विश्रा** इत्यत्रापि द्वित्र्यन्यतरा इति बोधाद्वार्थस्य प्राधान्यम् ॥ अधिकविंशा इत्यादौ **सर्वनामसंख्ययोरि**ति विंशतिशब्दस्य पूर्वनिपातः स्यादिति न शङ्क्यं, तत्प्रकरणस्यानित्यत्वात् ॥ तत्र द्वित्रा इत्यत्र वार्थोऽन्यपदार्थः । अधिकविंशा इत्यादौ च संख्येयमिति सर्वत्रान्यपदार्थ इत्येवं सिद्धम् । डजपि संख्येये वर्तमानबहुव्रीहेरित्यर्थेन सिद्धः । अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयेन पूर्वपक्षे विंशत्यादीनां संख्यासंख्येयोभयपरतया सिद्धावपि दशादीनां संख्येयमात्रपरतया अधिकदशा इत्यादि पूर्वेण न सिध्यतीत्याह—

---

१ अलौकिकविग्रहस्तु द्वि औ दशन् जस् इतीति भावः । ( र. ना. )
२ वाक्यानां समासापेक्षया शब्दान्तरत्वाद् वाक्येषु यद्यपि वृत्त्यर्थापेक्षया विशेष्यविशेषणभाववैपरीत्यादिना विलक्षणा अर्थाः श्रुतास्तथापि अयं वृत्तिशब्दोऽर्थान्तरनिबन्धनोऽर्थान्तरं निबन्धनमालम्बनमभिधेयं यस्य स तथाभूतोऽन्य एवेति योजना । अयं भावः । वृत्तिविग्रहयोर्यत्किञ्चिदर्थसाम्येऽपि न सर्वात्मनाऽर्थसाम्यं विवक्षितं संभवि वेति । ( र. ना. ) ३ द्व्यादिसंख्येय इत्यर्थः । (र.ना.)
४ अत्र वार्तिकेऽभिहितार्थत्वादिति वदताऽस्य क्रियोत्पत्तिरूपस्य सुजर्थस्य स्वभावादेकार्थीभावविषयत्वेऽपि एकार्थीभावकृतत्वं नेति सूचयतीत्यर्थः । (र.ना.)
५ किन्तु तद्विषयत्वमिति भावः । ( र. ना. ) ६ 'विधीयते' । ७ 'वार्था' ।
८ किन्तूत्तरपदार्थे विशेषणमिति भावः । ( र. ना. ) ९ तथाचाद्यव्युत्पत्तौ संख्यानवृत्तित्वं द्वितीयव्युत्पत्तौ तु संख्येयवृत्तित्वमिति भावः । ( र. ना. )
१० भाष्ये परिमाणिनीत्युक्त्या लभ्यमिदम् । (र.ना.) ११ सतीति शेषः । (र.ना.)

भाष्ये—भवेत्सिद्धमित्यादि ॥ यद्यपि बहुषु बहुवचनमिति सूत्रे एकद्विबहुशब्दानां संख्यासंख्येयोभयपरता भाष्ये उक्ता, तथापि सौत्रप्रयोगविषयमेव तदिति बोध्यम् ॥

( उपदशादिशब्दार्थाधिकरणम् )

( आक्षेपभाष्यम् )

**अथोपदशा इति कोयं समासः ? ॥**

( प्रदीपः ) इदानीमव्ययं निरूप्यते बहुव्रीह्यव्ययीभावयोर्विषयविभागप्रदर्शनार्थम् ॥

( समाधानभाष्यम् )

**बहुव्रीहिरित्याह ॥**

( आक्षेपभाष्यम् )

**कोऽस्य विग्रहः ? ॥**

( समाधानभाष्यम् )

**दशानां समीपे उपदशा इति ॥**

( प्रदीपः ) **उपदशा इति ॥ दशानां समीप इति ।** सप्तम्या समीपिप्राधान्ये बहुव्रीहिः, समीपप्राधान्ये त्वव्ययीभाव इति प्रदर्शितं भवति ॥

( उद्योतः ) **सप्तम्येति** । तथा च सन्तीति क्रियाक्षेपाद् ये समीपे सन्ति ते लभ्यन्ते । अन्यथा प्रथमान्तमेव पठेदित्यर्थः । एवं च पूर्वपदार्थप्रधानोयमिति पूर्वेण न सिद्धिरिति भावः ॥

( आक्षेपभाष्यम् )

**कस्य पुनः सामीप्यमर्थः ? ॥**

( प्रदीपः ) **सामीप्यमिति ।** धर्मेण धर्मी लक्ष्यते, कस्य सामीप्यवानर्थं इत्यर्थः । उपशब्दो हि समीपमात्रवाच्युपकुम्भादिषु दृष्ट इति तस्य समीपिवाचित्वं नास्ति, नापि दशशब्दस्य । समासस्येति चेत्तदाऽस्त्येवान्यपदार्थवृत्तित्वमिति प्रश्नः ॥

( उद्योतः ) समासस्य समीपिप्रधानताया उक्तत्वेन कस्य सामीप्यमर्थ इति अयुक्तमित्यत आह—**धर्मेणेति** । समीपिशब्दाद् ब्राह्मणादित्वात्ष्यञित्याशयः ॥

( समाधानभाष्यम् )

**उपस्य ॥**

( प्रदीपः ) **उपस्येति** । आराच्छब्दवदनेकार्थत्वादुपशब्दस्य समीपवानर्थः ॥

( उद्योतः ) **आराच्छब्दवदिति ।** अनेकार्थत्वमात्रे दृष्टान्तः ॥ अत्र निपातस्याप्युपस्य वाचकत्वं द्रष्टव्यम् । अतएव तदर्थस्य विशेष्यतया भानम् ॥

( आक्षेपभाष्यम् )

**यद्येवं, नान्यपदार्थो भवति ॥**

( प्रदीपः ) स एवाह—**यद्येवमिति** । यदोपशब्दस्यैवासावर्थ इत्यर्थः ॥ एवमव्ययासन्नादूराधिकग्रहणं स्थापितम् ।

( प्रत्याख्यानभाष्यम् )

**तत्र च प्रथमानिर्दिष्टं संख्याग्रहणं शक्यमकर्तुम् ॥**

( प्रदीपः ) संख्याग्रहणं तु न कर्तव्यम्, द्वित्रा इत्यादौ वार्थस्यान्यपदार्थत्वादित्याह—**तत्रेति** ॥

( उद्योतः ) **वार्थस्येति** । संख्येयस्योपलक्षणमेतत् ॥

( १४०२ संख्याग्रहणस्थापनवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ मत्वर्थे वा पूर्वस्य विधानात् ॥ * ॥**

( भाष्यम् ) **अथवा मत्वर्थे पूर्वो योगः । अमत्वर्थार्थोयमारम्भः ॥**

( प्रदीपः ) इदानीमेतदपि स्थापयन्नाह—**अथवेति** ॥

( उद्योतः ) अधिकदशा इत्याद्यर्थं तदिति भाष्यकृतोक्तम् ॥ इदानीं वार्तिककार आह—**मत्वर्थे इति** ॥ एवं च पदानामसामानाधिकरण्याद् द्वित्रा द्विदशा इत्याद्यसिद्धिरिति भावः । द्वित्रान्पश्येत्यादौ परिनिष्ठितविभक्त्या समासे शेषग्रहणबोधितप्रथमान्तत्वाभाव इत्यपि बोध्यम् ॥

( १४०३ प्रत्याख्याननिराकरणवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ कबभावार्थं वा ॥ * ॥**

( भाष्यम् ) **अथ वा कब् मा भूदिति ॥ संख्याऽव्य ॥ २५ ॥**

( प्रदीपः ) ननु मत्वर्थग्रहणं तत्र न करिष्यते द्वित्रा इति सिद्धय इत्याह—**कबभावार्थं वेति** । शेषाद्विभाषेत्यत्र शेषाधिकारविहितो बहुव्रीहिर्गृह्यते, **अनेकमन्यपदार्थे** इत्यत्रैव च शेषग्रहणमनुवर्तते, नोत्तरेषु योगेषु ॥ ५ ॥

( उद्योतः ) **कबभावार्थं वेति** । अनन्तरबहुव्रीह्यधिकारापेक्षायुक्तसमासान्तत्वरूपशेषत्वस्यैव भाष्ये वक्ष्यमाणत्वादिति भावः । अनेन समासे तु शेषाधिकारस्थसमासाभावान्नेति तात्पर्यम् ॥ **शेषाधिकारेति** । न च समानाधिकरणानामित्यादिवार्तिकप्रत्याख्यानरीत्या शेषग्रहणमपि प्रत्याख्यातमेव । स्पष्टं चाकडारसूत्रादावुक्तं तत्कथमेतदर्थलाभ इति वाच्यम् । अनभिधानस्य दुर्ज्ञेयतया तदर्थमेतदर्थं च शेषग्रहणमावश्यकमित्याशयात् । प्रत्याख्यानं च प्रौढ्या । अनभिधानमगतिकगतिरिति तत्सूत्रे उक्तत्वात् ॥ २५ ॥

---

( २८४ बहुव्रीहिसंज्ञासूत्रम् ॥ २ । २ । २ आ. ३ )

## ४४६ दिङ्नामान्यन्तराले ॥ २।२।२६ ॥

( २८५ बहुव्रीहिसंज्ञासूत्रम् ॥ २ । २ । २ आ. ४ )

## ४४७ तेन सहेति तुल्ययोगे ॥ २।२।२७ ॥

( प्रत्याख्यानाधिकरणम् )

( १४०४ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ दिक्समाससहयोगयोश्चान्तरालप्रधानाभिधानात् ॥ * ॥**

( भाष्यम् ) **दिक्समाससहयोगयोश्चाशिष्यो बहुव्रीहिः ॥ किं कारणम् ? । अन्तरालप्रधानाभि-**

---

१ अस्य प्रदर्शितमित्यत्रान्वयः । ( र. ना. )  २ अनेकमन्यपदार्थे इति शब्देनेत्यर्थः । ( र. ना. )  ३ बोध्यार्थस्य तु विशेषणतयैव भाननियम इति भावः । ( र. ना. )  ४ पदानां सामानाधिकरण्य एवानेकमन्यपदार्थे इति बहुव्रीहिरिति द्वित्रा इत्यादीनां न तेन सिद्धिरिति भावः । ( र. ना. )

**धानात् । दिक्समासे सहयोगे चान्तरालं प्रधानं चाभिधीयते, तत्रान्यपदार्थ इत्येव सिद्धम् ॥**

(प्रदीपः) दिङ्नामानि ॥ २६ ॥ तुल्यन्यायत्वाद्योगद्वयस्य सहविचारः ॥ **दिक्समाससहयोगयोरिति ।** अशिष्य इति पूर्ववार्तिकोक्तमपेक्ष्यते ॥ दक्षिणस्याश्च पूर्वस्याश्च दिशो यदन्तरालं दिक्सा दक्षिणपूर्वेत्युच्यते, तत्रान्तरालस्यान्यपदार्थत्वात् पूर्वेणैव सिद्धः समासः । सपुत्र इत्यस्यापि समासस्य पिता प्रधानमन्यपदार्थोऽभिधेय इति नार्थः सूत्रद्वयेनेत्यर्थः ॥

(उद्द्योतः) दिङ्नामा ॥ २६ ॥ तत्र तेनेदमिति मध्यपतितसूत्रमतिक्रम्य योगद्वयस्य सह विचारे कारणमाह—तुल्यन्यायत्वादिति[2] ॥ भाष्ये—सहयोगयोरिति । सहेन योगोऽस्येति विग्रहेण सपुत्र इति समास उच्यते ॥ तत्रान्यपदार्थ इत्येवेति । सहशब्दस्य साहित्यमेवार्थस्तद्वान्पित्रादिस्तु समासार्थ इति भावः ॥ समानाधिकरणानामित्यस्य शेष इत्यस्य चापरामर्शेनेदम् । अत एव वक्ष्यति—* मत्वर्थे वा पूर्वस्य * इति ॥

(आक्षेपभाष्यम्)

**यद्येवं, दक्षिणपूर्वा दिक्, समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति ॥**

(समाधानभाष्यम्)

**अद्य पुनरियं सैव दक्षिणा सैव पूर्वेति कृत्वा समानाधिकरणलक्षणः पुंवद्भावः सिद्धो भवति ॥**

(प्रदीपः) अद्य पुनरिति । सूत्रारम्भविशिष्टे काले इत्यर्थः । तत्रारब्धेऽयमर्थो व्याख्यायते—अन्तराले यानि दिङ्नामानि वर्तन्ते तानि समस्यन्ते । दक्षिणादीनां च सामीप्यादन्तरालवृत्तित्वम् । ततश्च दक्षिणा चासौ पूर्वेति समानाधिकरण्यात् पुंवद्भावः सिध्यति । सूत्रे त्वनारब्धेऽन्यपदार्थसंपादनाय दक्षिणपूर्वाशब्दयोः स्वार्थ एव वृत्तिरुपगन्तव्या, ततो वैयधिकरण्यम् ॥ ननु सामानाधिकरण्येऽपि विशेषणसमासः सिध्यतीति नारब्धव्यमिदम् । नैतदस्ति । पूर्वपदप्रकृतिस्वरार्थं **विभाषा दिक्समासे** इति विकल्पितसर्वनामसंज्ञार्थं च बहुव्रीहिसंज्ञैवेष्टव्या ॥

(उद्द्योतः) नारब्धव्यमिति । कर्मधारयेणैव पुंवत्त्वमपि सिध्यतीति भावः ॥ बहुव्रीहिसंज्ञेवेति । द्वन्द्ववारणार्थं बहुव्रीहावित्यावश्यकं तत्र । एतदभावे प्रतिपदोक्तस्याभावात् । प्रतिपदोक्तत्वार्थमेव वा इदं कार्यमित्याशयः ॥

(समाधानबाधकभाष्यम्)

**न सिध्यति । भाषितपुंस्कस्य पुंवद्भावः । न चैतौ भाषितपुंस्कौ ॥**

(प्रदीपः) न सिध्यतीति । नहि सामानाधिकरण्यमात्रप्रतिबद्धः पुंवद्भावः, किं तु भाषितपुंस्कत्वनिबन्धनोपि । समानायां चाकृतौ यद्भाषितपुंस्कं तस्य पुंवद्भावः । भाषितपुंस्कशब्दस्य[3] ह्यर्थः प्रवृत्तिनिमित्तलक्षणोन्यपदार्थोऽभिधेयो, न शब्दः ॥

(उद्द्योतः) प्रवृत्तिनिमित्तलक्षण इति । भाषितः पुमान्यस्मिन्नर्थे इति व्युत्पत्तेरिति भावः ॥ नशब्द इति । तत्र[4] ह्यन्यपदार्थे यत्किञ्चिदर्थमादाय स्यादेव भाषितपुंस्कत्वमिति भावः ॥

(समाधानसाधकभाष्यम्)

**ननु च भोः दक्षिणशब्दः पूर्वशब्दश्च पुंसि भाष्येते ॥**

(समाधानबाधकभाष्यम्)

**समानायामाकृतौ यद्भाषितपुंस्कम् । आकृत्यन्तरे चैतौ भाषितपुंस्कौ । दक्षिणा पूर्वेति दिक्शब्दौ । दक्षिणः पूर्व इति व्यवस्थाशब्दौ ॥**

(प्रदीपः) दिक्शब्दाविति । विना प्रवृत्तिनिमित्तेन दिग्विशेषे रूढ्या प्रवृत्तावित्यर्थः ॥

(उद्द्योतः) विना प्रवृत्तिनिमित्तेनेति । शब्दातिरिक्तप्रवृत्तिनिमित्तेनेत्यर्थः । यद्वा [5]व्यक्तिमात्रबोधस्ततो रूढ्येति । दक्षिणादिशब्द एव तत्र प्रवृत्तिनिमित्तं, तदभाव एव वा, न तु व्यवस्थाविषयं प्रवृत्तिनिमित्तमित्यर्थः ॥ व्यवस्थाशब्दाविति भाष्यस्यापि व्यवस्थाविषयप्रवृत्तिनिमित्तकावित्यर्थः । नहि स्वाभिधेयापेक्षावधिनियमरूपव्यवस्था कस्यापि प्रवृत्तिनिमित्तं भवति ॥

(समाधानसाधकभाष्यम्)

**यदि पुनर्दिक्शब्दा अपि व्यवस्थाशब्दाः स्युः ।**

(प्रदीपः) यदि पुनरिति । ततश्च व्यवस्थाऽऽकृतौ समानायां भाषितपुंस्कत्वस्योपपत्तिः ॥

(उद्द्योतः) दिक्शब्दानां सर्वनामत्वमवश्यमेवेष्टव्यमिति तात्पर्यकस्य यदि पुनर्दिक्शब्दा अपि व्यवस्थाशब्दाः स्युरिति । भाष्यस्य स्यात्तर्हि भाषितपुंस्कत्वमिति शेषः । दिग्वाचकपूर्वादीनां पृथ्वीमध्यभागावधिकोदयाचलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि प्रवृत्तिरिति भावः ॥ व्यवस्थाकृताविति । व्यवस्थाविषयप्रवृत्तिनिमित्ते समाने इत्यर्थः ॥

(आक्षेपभाष्यम्)

**कथं यानि दिगुपदिष्टानि कार्याणि ? ॥**

(प्रदीपः) कथं यानीति । यदि प्रवृत्तिनिमित्ताश्रयेण दिशि वर्तन्ते न तु रूढ्या तदा दिक्शब्दत्वानुपपत्तिः ॥

(उद्द्योतः) ननु रूढ्येति । शब्दातिरिक्तप्रवृत्तिनिमित्तनिरपेक्षरूढ्येत्यर्थः । प्रवृत्तिनिमित्तविशेषानपेक्षदिग्रूढशब्दत्वं हि तत्त्वमिति भावः ॥

(समाधानभाष्यम्)

**यदा दिशो व्यवस्थां वक्ष्यन्ति ॥**

---

[1] भाष्यकृद्दर्शितेन 'दिङ्नामान्यन्तराले' 'तेन सहेति तुल्ययोगे' 'तत्र तेनेदमिति सरूपे' इति सूत्रक्रमेणैव सकलेष्टसिद्धौ 'तत्र तेनेदमिति सरूपे' इत्यस्य मध्यपाठे दृढतरप्रमाणानुपलम्भात् काशिकासंमतपाठतो बहुत्र व्युत्क्रमस्य स्वयमप्युक्तत्वादत्र तत्क्रमस्वीकारो मुधैव ॥ अत एव 'दिक्समासतृतीयासप्तम्यन्तसहयोगेषु चान्तरालक्रियाप्रधानाभिधानाद्' इत्येकमेव वार्तिकं न कृतम् । विशेषाभिधानस्यान्यत्रैवान्यथापि कर्तुं शक्यत्वात् । अतएव स्वयमपि पठितशब्दमपहाय पतितशब्दः प्रयुक्तः इति केचित् । [2] तुल्यन्यायत्वादिति । आचार्यस्य स्वतन्त्रत्वादित्येव तत्त्वम् । प्रत्याख्यानस्थापनरूपन्यायस्तु त्रिषु चतुर्षु च तुल्य एवेति बोध्यम् । [3] इदमभिधेयान्वयि । भाषितपुंस्कस्य पुंवद्भाव इति भाष्ये भाषितपुंस्कशब्दो भाषितपुंस्कार्थवाचकपर इति भावः । (र. ना.) [4] शब्दात्मके इत्यर्थः । (र. ना.) [5] मीमांसकमते आकाशादिशब्दवदिति भावः । (र. ना.)

**( प्रदीपः ) यदा दिश इति ।** विषयवशात्प्रवृत्तिनिमित्ताश्रयायामपि प्रवृत्तौ दिक्शब्दत्वं पूर्वादीनां संभवतीत्यर्थः ॥

**( उद्द्योतः ) विषयवशादिति ।** दिगादिरूपविषयवशादित्यर्थः । अस्य दिक्शब्दत्वमित्यनेनान्वयः ॥ भाष्ये—**यदा दिश इति ।** यदा दिग्वृत्तिव्यवस्थाविषयप्रवृत्तिनिमित्तं वक्ष्यन्तीत्यर्थः ॥ आकाशवदेकस्यैव दिक्पदार्थस्यौपाधिको भेदः । उपाधिश्च पृथिवीमध्यं तत्प्रान्तस्थाश्चत्वारः पर्वताः एवं च तत्राप्युदयाचलसंनिहितत्वादिकमेव प्रवृत्तिनिमित्तम् । अवधिस्तु पैरं पृथ्वीमध्यमेव । एवं च पुंवत्त्वं सिद्धम् । दिक्शब्दत्वं च विशेष्यतया दिग्बोधकशब्दत्वमेवेत्यभिमानः ॥

( आक्षेपभाष्यम् )

**यदि हि यो यो दिशि वर्तते स दिक्शब्दः, रमणीयादिष्वतिप्रसङ्गो भवति-रमणीया दिक् शोभना दिगिति ॥ अथ मतमेतत्—दिशि दृष्टो दिग्दृष्टः, दिग्दृष्टः शब्दो दिक्शब्दः, यो दिशं न व्यभिचरतीति न रमणीयादिष्वतिप्रसङ्गो भवति, पुंवद्भावस्तु न प्राप्नोति ॥**

**( प्रदीपः ) दिशि दृष्ट इति ।** रूढिरूपेण तत्र प्रवृत्त इत्यर्थः । अत एवैन्द्र्यादयो यौगिकत्वान्न दिक्शब्दाः ॥

**( उद्द्योतः ) दिशि दृष्ट इति ।** दिशि रूढ्या दृष्ट इत्यर्थः । **यो दिशमिति ।** दिगतिरिक्तमर्थं प्रवृत्तिनिमित्ततयापि यो नाश्रयत इत्यर्थः । एवं च तत्र शब्दस्यैव प्रवृत्तिनिमित्तत्वेन व्यक्तिमात्रशक्ततया वा समानायामाकृतौ भाषितपुंस्कत्वाभाव इति भावः ॥ सर्वनामसंज्ञा तु भवत्येव पृथिवीमध्यात्तत्तत्पर्यन्तदेशरूपोपाधिविशिष्टदिश एव पूर्वादिशब्दवाच्यत्वेन व्यवस्थाविषयत्वाक्षतेरिति दिक् ॥

( समाधानभाष्यम् )

**एवं तर्हि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः दक्षिणोत्तरपूर्वाणामित्येवमर्थम्' ॥**

**( प्रदीपः ) दक्षिणोत्तरपूर्वाणामिति ।** अत्र हि वैयधिकरण्यात्पुंवद्भावो न प्राप्नोतीत्यवश्यं वाच्यं **सर्वनाम्न** इति । तेनैव दक्षिणपूर्वेत्यादावपि भविष्यतीति नार्थोऽनेन सूत्रेणेत्यर्थः ॥ २६ ॥ २७ ॥

( प्रत्याख्यानाभ्युपगमभाष्यम् )

**एवं च कृत्वास्तु—*दिक्समाससहयोगयोरन्तरालप्रधानाभिधानात् *इत्येव ॥**

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्—दक्षिणपूर्वा दिक्, समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोतीति ॥**

( समाधानभाष्यम् )

**नैष दोषः सर्वनाम्नो वृत्तिमात्रे पुंवद्भावेन परिहृतः ॥**

( १४०५ प्रत्याख्यानबाधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ मत्वर्थे वा पूर्वस्य विधानात् ॥ * ॥**

**( भाष्यम् ) अथ वा मत्वर्थे पूर्वो योगः । अमत्वर्थोर्थोऽयमारम्भः ॥**

( १४०६ प्रत्याख्यानबाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ कब्भावार्थो वा ॥ * ॥**

**( भाष्यम् ) अथ वा कप् मा भूदिति ॥ दिङ्नामानि ॥ २६ ॥ तेन सहेति ॥ २७ ॥**

**( उद्द्योतः )** भाष्ये—**कब्भावार्थो वेति ।** शेषाधिकारस्थबहुव्रीहावेव तद्विधेरिति भावः ॥ २६ ॥ २७ ॥

---

( २८६ बहुव्रीहिसंज्ञासूत्रम् ॥ २ । २ । २ आ. ५ सू. )

## ४४८ तत्र तेनेदमिति सरूपे ॥२।२।२८॥

( प्रत्याख्याननिराकरणाधिकरणम् )

( १४०७ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तृतीयासप्तम्यन्तेषु च क्रियाभिधानादशिष्यो बहुव्रीहिः ॥ * ॥**

**( भाष्यम् ) तृतीयासप्तम्यन्तेषु चाशिष्यो बहुव्रीहिः किं कारणम्? । क्रियाभिधानात् । क्रियाभिधीयते । तत्र "अन्यपदार्थे" इत्येव सिद्धम् ॥**

**( प्रदीपः ) तत्र तेनेदम् ॥ २८ ॥ क्रियाभिधानादिति ।** इतिकरणाद्विवक्षार्थात्केशाकेशि दण्डादण्डीति समासो युद्धक्रियायामेव भवति, सा चान्यपदार्थ इति पूर्वेण सिद्धः समास इत्यर्थः ॥

**( उद्द्योतः ) तत्रतेनेदम् ॥ २८ ॥ युद्धक्रियायामेवेति ।** इदं च स्वोक्तोदाहरणविशेषाभिप्रायम् । अत एव कर्णाकर्णि प्रथितमयश इत्यादिप्रयोगाः संगच्छन्ते । अत एव भाष्ये क्रियाभि-

---

१ प्रवृत्तिनिमित्तहेतुकायामित्यर्थः । ( र. ना. ) २ प्रकृष्टमित्यर्थः । प्रकर्षश्च ध्रुवत्वरूपः । ( र. ना. ) ३ अभिमानोक्तिबीजन्तु रूढ्यादिग्बोधकत्वमेव तत्त्वमिति । ( र. ना. ) ४ 'नामत्वं तु' । ५ अत्र सूत्रे "दिक्समाससहयोगयोश्चान्तरालप्रधानाभिधानात्" इत्येकमेव वार्तिकम् । चकारेण 'अशिष्यः' "मत्वर्थे वा पूर्वस्य विधानात्" "कब्भावार्थे वा" इत्येतत्सर्वमेवापेक्षणीयमाकृष्यते ॥ उत्तरसूत्रेपि "तृतीयासप्तम्यन्ते च क्रियाभिधानात्" इत्येव वार्तिकपाठः चकारेणापेक्षणीयमाकृष्यते इति वदन्ति । ६ काशिकायां तदनुसारिसूत्रपाठपुस्तके च "तत्र तेनेदमिति सरूपे" इति सूत्रं "दिङ्नामान्यन्तराले" "तेन सहेति तुल्ययोगे" इत्यनयोर्मध्य उपलभ्यते । तत्र भाष्यव्याख्याक्रमत्यागे विशेषकारणस्यासंभवात् प्रामाणिकतरत्वाच्च भाष्यव्याख्याक्रम एवादरणीयः । भाष्यव्याख्याक्रमस्य वार्तिकक्रमानुसारित्वे 'वार्तिककृता पाणिनिपाठोऽङ्गीकृतः उत काशिकाकृता' इत्यत्रापि वार्तिककारस्यैव काशिकाकृदपेक्षया प्रामाणिकतरत्वेन काशिकाक्रमो न प्राचीनः प्रामाणिकः' इति सारग्राहिणां दाधिमथानां निवेदनम् । ७ केशाकेशीत्यादिप्रयोगे या लौकिकी विवक्षा तद्द्योतकादित्यर्थः । ( र. ना. ) ८ युद्धं क्रिया चेत्यर्थः । ( र. ना. )

धानादित्येवोक्तम् ॥ सिद्धः समास इति । पूर्वसूत्रेण । क्वचित्तु पूर्वेणेति पाठोपि ॥

( १४०८ प्रत्याख्याननिराकरणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ न वैकशेषप्रतिषेधार्थम् [ पूर्वदीर्घार्थं च ] ॥ * ॥

**( भाष्यम् ) नवाऽशिष्यः । किं कारणम्? । एकशेषप्रतिषेधार्थमिदं वक्तव्यम् ॥**

**पूर्वदीर्घार्थं च । पूर्वदीर्घार्थं चेदं वक्तव्यम् । केशाकेशि ॥**

**( प्रदीपः ) न वेति** । केशेषु केशेषु च गृहीत्वेदं युद्धं दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धमिति ग्रहणे प्रहरणे च सहविवक्षितत्वात् सरूपत्वादेकविभक्तित्वाच्चैकशेषः प्राप्तो वचनसामर्थ्यात्समूहान्यथानुपपत्त्या समूहविषययाऽनया बहुव्रीहिसंज्ञयाऽनवकाशया बाध्यते । पूर्वयोगेण तु परत्वादेकशेषो न शक्यते बाधितुम् । अन्यपदार्थापेक्षत्वात्तस्य बहिरङ्गत्वात् ॥ **पूर्वदीर्घार्थं चेति । तत्र तेन आ इदमित्याकारप्रश्लेषेण** पूर्वपदस्य दीर्घो विधीयते । **उत्तरपदस्य तु यस्येति** । लोपेन भाव्यमिति प्रयोजनाभावादात्वाभावः ॥

**( उद्योतः ) सरूपत्वादिति** । विरूपाणां त्वनभिधानात्समासो नेति भावः ॥ **समूहान्यथानुपपत्त्येति** । सुप्सुपेत्यधिकारात्तस्याः पदसमूहवृत्तित्वादिति भावः ॥ **अन्यपदार्थापेक्षत्वादिति** । सुबुत्पत्त्यपेक्षत्वादित्यपि बोध्यम् ॥ **पूर्वदीर्घार्थं चेति** भाष्ये । इतिशब्दादिदमपि लभ्यमित्येके ॥

( प्रत्याख्यानसाधकभाष्यम् )

**स्यादेतत्प्रयोजनं यदि नियोगतोनेनैव दीर्घत्वं स्यात् । अथेदानीम् "अन्येषामपि दृश्यते" इति दीर्घत्वं न प्रयोजनं भवति ॥**

**( प्रदीपः ) अथेदानीमिति** । एवं च मुष्टीमुष्टीत्यादि भवति । आकारप्रश्लेषे तु मुष्टामुष्टीति स्यात् ॥

( १४०९ वार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ मत्वर्थे वा पूर्वस्य विधानात् ॥ * ॥

( व्याख्याभाष्यम् )

**अथ वा मत्वर्थे पूर्वो योगः । अमत्वर्थार्थोयमारम्भः ॥**

( १४१० वार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ कबभावार्थं वा ॥ * ॥

( व्याख्याभाष्यम् )

**अथ वा कब् मा भूदिति ॥ तत्र तेनेदम् ॥ २८ ॥**

**( प्रदीपः ) कबभावार्थं वेति । इच् कर्मव्यतिहार** इति कबभावपक्षे सावकाशः । पक्षान्तरे तु परत्वाद्बाधित्वा कप् प्राप्नोति । शेषग्रहणेन च शेषाधिकारो गृह्यते नञ्पुयुक्तादन्यः ॥ २८ ॥

**( उद्योतः ) पक्षान्तरे त्विति** । प्रत्याख्यानपक्षे त्वित्यर्थः ॥ **नञ्पुयुक्तादिति** । इत्यभिमान इति शेषः ॥ उपयुक्तादन्यः शेष इत्यर्थस्य शेषादिति सूत्रे भाष्यकृतैव स्थापयिष्यमाणत्वात् । आवृत्त्या शेषाधिकारस्यादित्यप्यर्थं इति पूर्वसूत्रस्यकबभावार्थं वेति वार्त्तिकाज् ज्ञायते । तस्मात्कबभावार्थं वेति अत्रैकदेशयुक्तिः । वैयधिकरण्यात्पूर्वेण न सिध्यतीति अस्य सूत्रस्यावश्यकत्वेऽनेनापि कर्तृभावः सिध्यतीत्याशयेन ॥ २८ ॥

( इति बहुव्रीहिप्रकरणम् )

( अथ द्वन्द्वसमासः )

( २८७ अथ द्वन्द्वसंज्ञासूत्रम् ॥ २ । २ । २ आ. ६ सू. )

## ४४९ चार्थे द्वन्द्वः ॥ २ । २ । २९ ॥

( आक्षेपभाष्यम् )

**चार्थ इत्युच्यते । चश्चाव्ययम् । तेन समासस्याप्यव्ययसंज्ञा प्राप्नोति ॥**

**( प्रदीपः ) चार्थे ॥ २९ ॥ चार्थ इत्युच्यत इति** । यदि तु समाहारेतरेतरयोगयोरित्युच्यते तदा न दोषः स्यात् ॥

**( उद्योतः ) चार्थे द्वन्द्वः ॥ २९ ॥** भाष्ये—**चार्थ इत्युच्यते इति** । उभयत्रापि साहित्यं समूहो विशेष्यः । स च समाहारेऽनुद्भूतावयवभेदोऽन्यत्र तु विपरीत इत्याशयेनेदम् । यद्यपि चार्थोऽसत्त्वभूतो विशेषणं च तथापि चार्थ इत्यस्य तत्सदृश इत्यर्थ इति बोध्यम् ॥

( समाधानभाष्यम् )

**नैष दोषः । पाठेनाव्ययसंज्ञा क्रियते । न च [ द्वन्द्वः ] समासस्तत्र पठ्यते ॥**

( आक्षेपभाष्यम् )

**पाठेनाप्यव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भविष्यन्ति । यश्चेहार्थोभिधीयते न तस्य लिङ्गसंख्याभ्यां योगोस्ति ॥**

**( उद्योतः )** पूर्वपक्ष्याह—**पाठेनापीति** । अपिना पाठेन तस्याः कर्तुमशक्यत्वं सूचितम् । स्वरादिचादोराकृतिगणत्वात् । अभिधेयवद् विशेष्यवल्लिङ्गादिकं वक्तव्यं, विशेष्यस्य चार्थस्य लिङ्गादिराहित्यात्तद्कुमशक्यमिति भावः ॥ नेदं भाष्यं समाहारविषयं, तत्र नपुंसकत्वैकवचनयोर्नियतत्वात् । तस्मादितरेतरयोगविषयम् । तच्च तत्र चार्थस्य विशेष्यत्वे संगच्छते नान्यथेति बोध्यम् ॥

( समाधानभाष्यम् )

**नेदं वाचनिकम्—अलिङ्गता असंख्यता च किं तर्हि? स्वाभाविकमेतत् । तद्यथा—समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थै-**

---

१ न तु युद्धक्रियाऽभिधानादित्युक्तमिति भावः । ( र. ना. ) २ पदसमूहान्यथाऽनुपपत्त्येत्यर्थः । ( र. ना. ) ३ केशाकेशीत्यादिलौकिकप्रयोगपरामर्शकादित्यादिः । न तु तदर्थमाकारप्रश्लेषः कार्य इति भावः । आकारप्रश्लेषे हि मुष्टीमुष्टि इति पूर्वपदस्य दीर्घो न स्यादित्यपि बोध्यम् । ( र. ना. ) ४ अथ 'अन्येषामपि दृश्यते' इति दीर्घत्वम् इदानीं न प्रयोजनं भवतीति संबन्धः । ( र. ना. ) ५ वस्तुतस्तु फलभेदे प्रत्याख्यानासंभवादाकारप्रश्लेषे न मानम् । ६ लौकिकप्रयोगपरामर्शकेतिशब्दबलादित्यादिः । ( र. ना. )

वद्भिः शक्यं भवितुम्, कश्चिद्वानर्थक इति सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम्—यत्प्राक् समासाच्चार्थस्य लिङ्गसंख्याभ्यां योगो नास्ति, समासे च भवति । स्वाभाविकमेतत् ॥

( प्रदीपः ) प्राक्समासादिति । वाक्ये चशब्देन द्योत्यस्यार्थस्य लिङ्गसंख्ये न स्तः, समासस्य तु वाचकत्वात् तदर्थस्य लिङ्गसंख्याभ्यां योग इत्यर्थः ॥

( समाधानान्तरभाष्यम् )

अथ वा आश्रयतो लिङ्गवचनानि भविष्यन्ति, यथा गुणवचनेषु । गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा—शुक्लं वस्त्रं शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति, यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति । एवमिहापि यदसौ द्रव्यं श्रितो भवति समासस्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि भवष्यति ॥

( प्रदीपः ) श्रितो भवति समास इति । समासशब्देन समासार्थश्चार्थ उच्यते, तस्य समुच्चितद्रव्याश्रये लिङ्गसंख्ये भविष्यत इत्यर्थः ॥

( उद्योतः ) समुच्चितद्रव्याश्रये इति । समाहारे तु लिङ्गं वाचनिकम् । वचनमपि द्वन्द्वश्चेत्यादौ एकवचनशब्देन योगतः[1] समाहारस्य निर्देशाज्ज्ञापकसिद्धमिति इतरेतरयोगविषये एव पूर्वपक्षसिद्धान्ताविति[2] भावः । एवं चेतरेतरयोगे समाहारो द्रव्येणाभेदमापन्न एवोच्यते इत्याहुः ॥

( आक्षेपभाष्यम् )

अथेह कस्मान्न भवति—याज्ञिकश्चायं वैयाकरणश्च, कठश्चायं बह्वृचश्च, औक्थिकश्चायं मीमांसकश्चेति ॥

( प्रदीपः ) याज्ञिकश्चायमिति । एकस्मिन् धर्मिण्यनेकधर्मसमुच्चयाच्चार्थसद्भावाद् द्वन्द्वसंज्ञाप्रसङ्गः । ततश्चाभ्यर्हितत्वाद्वैयाकरणशब्दस्यैव पूर्वनिपातः स्यात् । तत्पुरुषे तु काणखञ्जवदनियमः । परंकार्यत्वे चायं दोषः । एकसंज्ञाधिकारे तु विशेषविहितत्वात्तत्पुरुषसंज्ञैव भवतीति दोषाभावः ॥

( उद्योतः ) चार्थसद्भावादिति । अत एव तद्विग्रहे चस्य प्रयोगः । याज्ञिकत्वसमानाधिकरणवैयाकरणत्ववान्याज्ञिक इति बोध इति भावः । स च वाक्ये चशब्दबलात्समासे समासबलादिति बोध्यम् ॥ वैयाकरणशब्दस्यैवेति । अभ्यर्हितत्वाक्षमायां तु अल्पाच्तरत्वाद्याज्ञिकशब्दस्यैव स स्यादिति बोध्यम् ॥ विशेषेति । चार्थे इति व्यधिकरणधर्मबोधके सावकाशम् ॥

( समाधानभाष्यम् )

शेष इति वर्तते । अशेषत्वान्न भविष्यति ॥

( प्रदीपः ) अशेषत्वादिति । विशेषणमित्यत्रोपयुक्तत्वादित्यर्थः ॥

( उद्योतः ) भाष्ये—अशेषत्वादिति । समासघटकपदबोध्यप्रधानार्थस्यैव चार्थसंबन्धित्वे द्वन्द्वः । प्रधानाप्रधानयोरिति न्यायादित्याशयोत्र गूढः ॥

( आक्षेपभाष्यम् )

यदि शेष इति वर्तते,

'उपास्नातं स्थूलसिक्तं तूर्ष्णीगङ्गं महाह्रदम् ॥
द्रोणं चेदशको गन्तुं मा त्वा ताप्तां कृताकृते ॥'

इत्येतन्न सिध्यति ॥

( प्रदीपः ) उपास्नातादयः पञ्च तीर्थविशेषास्तांश्चेत्त्वं गन्तुं शक्तवांस्ततः कृताकृते सुकृतदुष्कृते त्वां मा ताप्तां न तापयत इत्यर्थः । तीर्थस्नानप्रशंसेयम् । कृतं क्षीणं सत्तापयत्यकृतं त्वनिष्टफलहेतुत्वेन । कृताकृते इत्येतदत्रोदाहरणम् । अत्र केन नञ्विशिष्टेनानञिति समासविधानादशेषत्वाद्द्वन्द्वाप्रसङ्गः । कर्मसामान्यं च कृताकृतयोरेकमधिकरणं मत्वा प्रश्नः ॥

( उद्योतः ) सुकृतदुष्कृते इति । कृताकृतशब्दयोस्तयो रूढिरिति भावः ॥ नन्वत्र वैयधिकरण्यात्कथं केननञित्यस्य प्राप्तिरत आह—कर्मसामान्यं चेति । कर्मसामान्यस्य विशेषाश्रयत्वादिति भावः ॥

( समाधानभाष्यम् )

नैष दोषः । अन्यद्धि कृतम्, अन्यदकृतम् ॥

(प्रदीपः) अन्यद्धि कृतमिति । ततश्च वैयधिकरण्यात् तत्पुरुषाभावाच्छेषत्वमेव । न ह्यत्रैकं कर्माभिधेयत्वेन विवक्षितं किं तर्हि ? भिन्ने कर्मणी समुच्चिते ॥

( उद्योतः ) भिन्ने । धर्माधर्मलक्षणे ॥ समुच्चिते । माताप्तामिति क्रियायां समुच्चिते ॥ केचित्तु कृताकृते इत्यस्य पापपुण्ये क्रमेण कृताकृते इत्यर्थमाहुः[3] ॥

( युगपदधिकरणवचनताधिकरणम् )

( १४११ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ चार्थे द्वन्द्ववचनेऽसमासेपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः ॥ * ॥

( व्याख्याभाष्यम् )

चार्थे द्वन्द्ववचनेऽसमासेपि चार्थसंप्रत्ययादनिष्टं प्राप्नोति—

'अहरहर्नयमानो गामश्वं पुरुषं पशुम् ॥
वैवस्वतो न तृप्यति सुराया इव दुर्मदी ॥'

इति ॥ 'इन्द्रस्त्वष्टा वरुणो वायुरादित्य' इति ॥

( प्रदीपः ) चार्थे द्वन्द्ववचन इति । चार्थानुवादेन द्वन्द्वस्य विधानात् तस्य चानिष्टेऽपि विषये सद्भावादतिप्रसङ्ग इत्यर्थः ॥ दुर्मदीति । दुःखेन यो माद्यति स यथा सुरया न तृप्यति एवं यमो गवादीन्नयमान इत्यर्थः ॥ तत्र नयनक्रियायां गवादीनां समुच्चयाच्चार्थसद्भावादस्ति द्वन्द्वप्राप्तिः ॥

---

[1] एकवचनमपि ज्ञापकसिद्धमिति योजना । एकवचनशब्देनेति । द्विगुरेकवचनमित्यतोऽनुवृत्तेनेत्यादिः । योगत इति । एकं वक्तीति व्युत्पत्तेरित्यर्थः । ( र. ना. ) [2] घटपटावित्यादाविति भावः । ( र. ना. ) [3] कुम्भवत्तयः क्रियासामान्यवचना इत्याश्रित्य कृताकृते इत्यस्य विहिताविहिते इत्यर्थकत्वेन सुकृतदुष्कृतलाभ इति वयम् । ( र. ना. )

इन्द्र इति । इन्द्रादीनां लोकपालत्वाद् गम्यमानपालनक्रियायां समुच्चयोस्ति ॥

( उद्योतः ) अतिप्रसङ्ग इति । द्वन्द्वसंज्ञातिप्रसङ्ग इत्यर्थः ॥ गामश्वं पुरुषं पशुमिति वाक्येपि परस्परसाहित्यरूपे इतरेतरयोगे पदानां वृत्तेर्द्वन्द्वसंज्ञा स्यादिति भावः ॥ दुःखेनेति । क्लेशेनेत्यर्थः । अल्पपानेन मदानुत्पत्तिर्यस्येति फलितम् ॥ सुराया इति । शेषषष्ठी । सुरयेत्यर्थः ॥ इन्द्रादीनामिति । भाष्ये 'लोकानां पालका' इत्यध्याहार्यमिति भावः ॥

( १४१२ युगपदधिकरणवचनतयासमाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु युगपदधिकरणवचने द्वन्द्ववचनात् ॥ * ॥

( व्याख्याभाष्यम् )

**सिद्धमेतत् ॥ कथम् ? । युगपदधिकरणवचने द्वन्द्वो भवतीति वक्तव्यम् ॥**

( प्रदीपः ) सिद्धं त्विति । न्यासान्तरेणातिप्रसङ्गपरिहारः । युगपदेकैकेन शब्देनाधिकरणमभिधेयं द्वन्द्ववाच्यं समुदायरूपं यदोच्यते तदा द्वन्द्वः । गामश्वमित्यादौ तु परस्परनिरपेक्षाः स्वतन्त्रा गवादयो भिन्नैरेव शब्दैः पृथक् प्रत्याय्यन्त इति युगपद्वाचित्वाभावाद् द्वन्द्वाभावः ॥

( १४१३ युगपदधिकरणतायां दूषणवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ तत्र पुंवद्भावप्रतिषेधः ॥ * ॥

**( भाष्यम् ) तत्रैतस्मिन् लक्षणे पुंवद्भावस्य प्रतिषेधो वक्तव्यः । पट्वीमृद्व्यौ । समानाधिकरणलक्षणः पुंवद्भावः प्राप्नोति ॥**

( प्रदीपः ) पट्वीमृद्व्याविति । एकैकेन शब्देनार्थद्वयस्याभिधानात्सामानाधिकरण्यमस्ति ॥

( १४१४ दूषणान्तरवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ विप्रतिषिद्धेषु चानुपपत्तिः ॥ * ॥

**( भाष्यम् ) विप्रतिषिद्धेषु युगपदधिकरणवचनताया अनुपपत्तिः । शीतोष्णे सुखदुःखे जननमरणे । किं कारणम् ? । सुखप्रतिघातेन हि दुःखम्, दुःखप्रतिघातेन च सुखम् ॥**

( प्रदीपः ) विप्रतिषिद्धेषु चेति । ये अर्था अविरुद्धास्तेषां भवत्येकैकेन शब्देनाभिधानम् । विरुद्धानां तु सहानवस्थानाद् युगपदनुभवाभावात्सहविवक्षाभावाद्युगपद्वाचिता नोपपद्यत इत्यर्थः ॥ आरात्पुरादीनां विरुद्धार्थाभिधानं दृष्ट्वा पृच्छति— किं कारणमिति ॥ सुखप्रतिघातेनेति । आरादादयस्तु युगपद्विरुद्धार्थाभिधायिनो नैवाभ्युपगम्यन्ते ॥

( उद्योतः ) धवखदिरयोरिवात्रापि सहविवक्षा स्यादत आह— येर्था इति ॥ युगपदनुभवाभावादिति । परस्य स्वज्ञानसदृशज्ञानसमर्पणाय शब्दप्रयोग इति भावः ॥ विप्रतिषिद्धत्वादेव युगपदभिधानानुपपत्तौ प्रश्नानुपपत्तिरत आह—आरादिति । तच्च दूरसमीपयोर्वर्तते ॥ पुरेतु । चिरातीतभविष्यदासन्नयोर्वर्तते । सुखप्रतिघातेन इत्यादिना सुखप्रतिबन्धिकायास्तन्नाशिकायाश्च सामग्र्या दुःखजनकत्वं दुःखप्रतिबन्धिकायास्तन्नाशिकायाश्च सुखजनकत्वं सूचितम् । एवं दुःखसुखजनकसामग्र्योर्नियमेन सुखदुःखप्रतिबन्धकत्वादि च सूचितम् । एतेन भारोत्तीर्णे गौणः सुखव्यवहार इत्यपास्तम् ॥ ७ ॥

( प्रथमदूषणबाधकभाष्यम् )

**यत्तावदुच्यते * तत्र पुंवद्भावप्रतिषेधः * इति । इदं तावदयं प्रष्टव्यः—अथेह पुंवद्भावः कस्मान्न भवति—दर्शनीयाया माता दर्शनीयामातेति ? । अथ मतमेतत्—प्राक् समासाद्यत्र सामानाधिकरण्यं तत्र पुंवद्भावो भवतीति । इहापि न दोषो भवति ॥**

( प्रदीपः ) दर्शनीयामातेति । वृत्तावेकार्थीभावेन मात्रर्थवृत्तित्वाद्दर्शनीयाशब्दस्य सामानाधिकरण्यमत्रास्ति ॥ अथ मतमिति । वृत्तौ सामानाधिकरण्यव्यभिचाराभावाद्यदि वाक्यविषयं सामानाधिकरण्यमाश्रीयते, तदा पट्वीमृद्व्यावित्यत्रापि न दोषः । लौकिकं च यद्वाक्यं प्रयोगार्हं तत्र सामानाधिकरण्यमाश्रीयते, न त्वलौकिके प्रक्रियावाक्ये पट्व्यौ च मृद्व्यौ चेति ॥

( उद्योतः ) षष्ठीसमासे कथं सामानाधिकरण्यमत आह— वृत्ताविति ॥ अयं भावः—सामानाधिकरण्यं नाम विशेष्यतयैकद्रव्योपस्थापकत्वम् । तच्चात्रापि पृथक् पूर्वपदेन स्वार्थानुपस्थितेरिति ॥ न दोष इति । अनयैव रीत्या विरूपाणामपीत्येकशेषोपि वारणीयः । द्वन्द्वारम्भसामर्थ्येन वाक्यीयस्य समानार्थत्वस्यैवाश्रयणादिति बोध्यम् ॥ ननु अत्र पक्षे पट्व्यौ चेत्येव वाक्यं समासार्थमिति तत्रापि सामानाधिकरण्यमस्त्येवेत्यत आह—लौकिकं चेति । स्वातन्त्र्येणार्थबोधाय प्रयुक्तमित्यर्थः । इदं त्वलौकिकं वृत्तिसमानार्थकमेवेति भावः ॥

( द्वितीयदूषणबाधकभाष्यम् )

**यदप्युच्यते *विप्रतिषिद्धेषु चानुपपत्तिः* इति । सर्वे एव शब्दाः विप्रतिषिद्धाः । इहापि प्लक्षन्यग्रोधाविति प्लक्षशब्दः प्रयुज्यमानः प्लक्षार्थं संप्रत्याययति, न्यग्रोधार्थं निवर्तयति । न्यग्रोधशब्दः प्रयुज्यमानो न्यग्रोधार्थं संप्रत्याययति, प्लक्षार्थं निवर्तयति । अथात्र चेद्युक्ता युगपदधिकरणवचनता दृश्यते, इहापि युक्ता दृश्यताम् ॥**

( प्रदीपः ) विप्रतिषिद्धा इति । विप्रतिषिद्धार्था इत्यर्थः । परस्परपरिहारेण सर्वेषामर्थानां शब्दैरभिधानात् ॥ न्यग्रोधार्थमिति । एकस्मिन्नर्थे अवगते अर्थादर्थान्तरस्य निवृत्तिः ॥ इहापीति । विरुद्धानामप्यर्थानामेकशब्दाभिधेय-

---

१ 'गम्यमानक्रियायां । २—३ 'करणे द्व' । ४ एकैकेन समासघटकेन शब्देन युगपदधिकरणं यदोच्यते तदा द्वन्द्व इति योजना । अधिकरणमित्यस्य व्याख्यानमभिधेयमिति । तस्यैव विवरणं द्वन्द्ववाच्यं समुदायरूपमिति । (र. ना.)
५ पञ्चम्यन्तार्थत्रये पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुत्वं बोध्यम् । ( र. ना. )

६ यन्मनसा मनुते तद्वाचा वदतीति स्वीकारादिति भावः । ( र. ना. )
७ उत्तीर्णपदे नपुंसके भावे क्तः । भारस्योत्तरणदशायामित्यर्थः । ( र. ना. )
८ 'भावान्मात्रर्थे' । ९ 'अत्र' ।

ताया अविरोधात् । तथा हि यदा जन्ममरणयोर्विरुद्धयोरप्येकसंज्ञा सहसंप्रत्ययाय क्रियते, तदा तच्छब्दवाच्यत्वं तयोर्भवत्येव ॥

( उद्द्योतः ) शब्दानां स्वरूपतो विप्रतिषिद्धत्वाभावादाह—विप्रतिषिद्धार्था इति ॥ तदप्युपपादयति—परस्परेति ॥ भाष्ये—निवर्तयतीति । बुद्धित इति शेषः ॥ ननु निवृत्तौ तात्पर्यं चेदपोहवादः । अपोहश्च तदितरभेदस्तद्वान्वा । न चेत्, निवृत्तिर्दुर्लभेत्यत आह—एकस्मिन्निति ॥ विरुद्धानामिति । नहि सहानुभवासंभवः शब्दात्सहबोधे प्रतिबन्धक इति भावः ॥ एका संज्ञेति । एको वाचकः शब्द इत्यर्थः ॥

( युगपदधिकरणवचनतानुपपत्त्यवतारणभाष्यम् )

एवमपि—

(१४१५ युगपदधिकरणवचनताया असंभववार्तिकम् ॥५॥)

## ॥ * ॥ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानम् ॥ * ॥

( भाष्यम् ) शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानं प्राप्नोति ॥ अतः किम् ? । युगपदधिकरणवचनताया अनुपपत्तिः । प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति । यथैव हि शब्दानां पौर्वापर्यं तद्वदर्थानामपि भवितव्यम् ॥

( प्रदीपः ) इदानीं युगपद्वाचिताया असंभवं प्रतिपादयति—एवमपीति । अभिधानक्रमाद् अभिधेयक्रमोऽवतिष्ठते यथा गुणवृद्धी वृद्धिगुणाविति । ततश्च शब्दक्रमात् क्रमवदर्थावगमान्न संभवत्येकैकेनानेकस्याभिधानमित्यर्थः ॥

(उद्द्योतः) ननु वाचकक्रमो[3] न वाच्यप्रतीतियौगपद्यविरोधीत्यत आह—अभिधानक्रमेति ॥ अभिधेयक्रमः । अभिधेयज्ञानक्रमः ॥ क्रमवदर्थावगमादिति । क्रमवतोऽर्थावगमस्य सत्त्वादित्यर्थः ॥

( १४१६ पौर्वापर्याभिधाने दूषणवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमिति चेद्द्विवचनबहुवचनानुपपत्तिः ॥ * ॥

( भाष्यम् ) शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमिति चेद्, द्विवचनबहुवचनयोरनुपपत्तिः—प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति । प्लक्षशब्दः सार्थको निवृत्तो न्यग्रोधशब्द उपस्थितः । एक एकार्थः, तस्यैकार्थत्वादेकवचनं प्राप्नोति ॥

( प्रदीपः ) न्यग्रोधशब्द इति । न्यग्रोधार्थप्रतिपत्तिकाले यदि प्लक्षार्थस्यानवगतिः स्यात्तदा न्यग्रोधशब्दादेकार्थत्वादेकवचनं स्यात् । तस्माद् द्विवचनबहुवचनान्यथानुपपत्त्या प्लक्षन्यग्रोधावित्यादावेकैकोऽनेकार्थाभिधायीत्यभ्युपगन्तव्यम् ॥

( उद्द्योतः ) भाष्ये—प्लक्षशब्दः सार्थको निवृत्त इति । अर्थेन सह निवृत्त इत्यर्थः । स्वार्थे कः ॥ ननु तस्य निवृत्तावपि एकेन शब्देन समासरूपप्रातिपदिकेन द्वौ बोधिताविति द्विवचनं भविष्यतीति चेन्न । समासस्य समूहे शक्तावपि प्लक्षादीनामवयवत एव बोधेन एकप्रातिपदिकजन्यबोधविषयत्वाभाव इत्यभिमानात्[4] ॥ तस्मादिति । विनिगमनाविरहादुभयोरप्यनेकार्थत्वमित्याशयः ॥

( १४१७ युगपदधिकरणवचनतासाधकवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ विग्रहे च युगपद्वचनं ज्ञापकं युगपद्वचनस्य[5] ॥ * ॥

( भाष्यम् ) विग्रहे खल्वपि युगपद्वचनता दृश्यते—'द्यावा ह क्षामा' 'द्यावा चिदस्मै पृथिवी संनमेते' इति ॥ किमेतत् ? । युगपदधिकरणवचनताया उपोद्बलकम् ॥ विग्रहे किल[6] नाम युगपदधिकरणवचनता स्यात्, किं[7] पुनः समासे ॥

( प्रदीपः ) एवं युक्त्या युगपद्वाचितां प्रसाध्यागमेन[8] प्रसाधयति—विग्रहे चेति । द्यावेति । द्योशब्दो द्यावापृथिव्योर्वर्तत इति ततः परस्य प्रथमाद्विवचनस्य सुपां सुलुगित्याकारो, गोतो णिदिति गोशब्दस्यौकारान्तत्वोपलक्षणार्थत्वाद् णित्वाद्वृद्धिरावादेशश्च । एवं पृथिवीशब्दो दिवःपृथिव्यौ वक्तीति प्रथमाद्विवचने वा छन्दसीति पूर्वसवर्णदीर्घः ॥ सन्नमेते इति द्विवचनान्तेन सामानाधिकरण्यात् पृथिवी इतीति पदकारैर्द्विवचनाश्रयप्रगृह्यसंज्ञानिबन्धनस्य प्रकृतिभावस्य विधानाच्च द्व्यर्थत्वं पृथिवीशब्दस्यावसीयते ॥ किमेतदिति यथोक्तमप्रतिपद्य पृच्छति ॥ उपोद्बलकमिति । उत्कृष्टबलकमुद्बलकं प्रत्यक्षं तत्समीपमनुमानमुपोद्बलकम् । आगमस्येहानुमानत्वेनोपन्यासात् ॥ विग्रहे किलेति । साहचर्यादिनिमित्ताश्रयेण वाक्येपि शब्दानामनेकार्थाभिधायित्वं यदा दृश्यते तदा समासे शक्त्यन्तराणां वाक्येऽदृष्टानामपि दर्शनादसंभावना न कार्येत्यर्थः ॥

( उद्द्योतः ) आगमेन । अनाशङ्कनीयप्रमादवेदवाक्येन । एतेन द्यावेत्यादावपि द्विवचनानुपपत्तेस्तुल्यत्वात्पूर्वस्माद् को विशेष इत्यपास्तम् ॥ भाष्ये—द्यावाहेति । द्यावा ह क्षामा प्रथमे ऋतेनेति मन्त्रस्थमिदं । हशब्दोऽसमासद्योतकः । इतरेतरापेक्षयोभयत्रापि द्विवचनम् । प्रथमे हशब्देन द्वितीये चिदस्मैशब्देन व्यवधानात्समासाभावः ॥ प्रधाने द्यावापृथिव्यावित्याद्यमन्त्रार्थे ॥ यथोक्तं, सूचितं कैमुतिकन्यायम् ॥ उत्कृष्टेति । एवं च युगपदधिकरणवचनतायाः सत्त्वस्येदमनुमानमनुमापकमित्यर्थः ॥ साहचर्यादीति । द्यावाहक्षामेतिवाक्ये परस्परसाहचर्याद्, द्यावाचिदस्मै पृथिवीत्यत्र साहचर्येण द्विवचनानुपपत्त्या च तथा कल्पनाश्रीयते चेत्किं समासे वक्तव्यमित्यर्थः ॥

---

१ द्वन्द्वसमासरूपेति शेषः । नागेशोक्तमेतद्व्याख्यानं चिन्त्यम् । मदुक्तार्थपरमेव वेति बोध्यम् । ( र. ना. ) २ इदं चिन्त्यम् । भावमात्रक्षणभङ्गवादिमते इतरभेदस्याभावरूपस्यापोहस्य अक्षणिकस्य गवादिशब्दार्थत्वात् । इतरभेदवतो गवादिशब्दार्थत्वे तस्य क्षणिकत्वेन आनन्त्यव्यभिचारौ दोषौ व्यक्तिपक्षोक्तौ तदवस्थावेवेति । तद्वानपोहो वा शब्दार्थ इति काव्यप्रकाशे तु तद्वानिति विशिष्टशक्तिवादिनो नैयायिकस्य पक्षः, अपोह इति सौगतस्येति विवेकः । व्याख्यातश्च तथैव तत्र प्रदीपे । (र.ना.) ३ 'वाचः क्रमो' । ४ अभिमानोक्तिबीजं तु समासस्योद्भूतावयवभेदसमूहप्रतिपादकत्वेन समासरूपैकप्रातिपदिकाद् द्विवचनाद्युपपत्तिः संभवतीति । ( र. ना. ) ५ समासे इत्यादिः । ( र. ना. ) ६ किलेति यद्यर्थे । ( र. ना. ) ७ तदेत्यादिः । ( र. ना. ) ८ आगमरूपेणानुमानेनेत्यर्थः । ( र. ना. )

( १४१८ द्विवचनबहुवचनानुपपत्त्युद्धारद्वारा युगपदधिकरणवचनत्वासंभवसमर्थनवार्तिकम् ॥ ८ ॥ )

॥ * ॥ समुदायात्सिद्धम् ॥ * ॥

( भाष्यम् ) समुदायात्सिद्धमेतत् ॥ किमेतत्समुदायात्सिद्धमिति ? । द्विवचनबहुवचनताऽप्रसिद्धिरिति चोदितम्, तस्यायं परिहारः ॥

( प्रदीपः ) युगपद्वाचित्वाभावे द्विवचनबहुवचनासिद्धिदोषं परिहर्तुमाह—समुदायादिति । द्वन्द्वेन समुदायरूपोर्थोभिधीयत इति द्विवचनबहुवचनसिद्धिः ॥

( उद्योतः ) द्वन्द्वेनेति । द्वन्द्वरूपसमुदायेनोद्भूतावयवभेदः समूहरूपोर्थः प्लक्षादिशब्दक्रमोच्चारणेन यद्यपि क्रमेण बुध्यते, तथापि द्वन्द्वरूपैकप्रातिपदिकजन्यबोधविषयताया द्वयोः सत्त्वेन द्विवचनाद्युपपत्तौ युगपद्वचने मानाभाव इति भावः ॥

( १४१९ दूषणसाधकवार्तिकम् ॥ ९ ॥ )

॥ * ॥ समुदायात्सिद्धमिति चेन्नैकार्थत्वात्समुदायस्य ॥ * ॥

( भाष्यम् ) समुदायात्सिद्धमिति चेत् । तन्न । किं कारणम् ? । एकार्थत्वात्समुदायस्य । एकार्था हि समुदाया भवन्ति । तद्यथा—शतं यूथं वनमिति ॥

( १४२० दूषणबाधकवार्तिकम् ॥ १० ॥ )

॥ * ॥ नैकार्थ्यम् ॥ * ॥

( भाष्यम् ) नायमेकार्थः । किं तर्हि ? । द्व्यर्थो बह्वर्थश्च । प्लक्षोपि द्व्यर्थः । न्यग्रोधोपि द्व्यर्थः ॥

( प्रदीपः ) नैकार्थ्यमिति । उद्भूतावयवभेदः समुदायोभिधेयो न तु तिरोहितावयवभेद इत्यर्थः ॥

( युगपदधिकरणवचनताखण्डनवादिवक्तृकं दूषणवार्तिकाकाङ्क्षापूरणभाष्यम् )

यदि तर्हि प्लक्षोपि द्व्यर्थो न्यग्रोधोपि द्व्यर्थः,—

( १४२१ दूषणवार्तिकम् ॥ ११ ॥ )

॥ * ॥ तयोरनेकार्थत्वाद्बहुवचनप्रसङ्गः ॥ * ॥

(भाष्यम्) तयोरनेकार्थत्वाद् 'बहुषु बहुवचनम्' इति बहुवचनं प्राप्नोति ॥

( प्रदीपः ) बहुवचनप्रसङ्ग इति । एकैकेन युगपदनेकस्यार्थस्याभिधानात् ॥

( उद्योतः ) एवं खण्डनवादी स्वमते द्विवचनादिकमुपपाद्य युगपदधिकरणवचनतावादं दूषयितुं तन्मतमनुवदति—प्लक्षोपि द्व्यर्थो न्यग्रोधोपि द्व्यर्थ इति । इति तव मतमिति शेषः ॥ यदि तर्हीति । यद्येवं स्वीकुरुषे इत्यर्थः ॥ यत्तु लघुविवरणे प्लक्षः प्लक्षशब्दघटितो द्वन्द्वरूपः समुदाय इत्यर्थः । द्व्यर्थः द्व्यवयवसमुदायार्थः । एवं न्यग्रोधोपीत्यपि व्याख्येयमिति ॥ तन्न । न्यग्रोधोपीत्यंशस्य वैयर्थ्यापत्तेः । यदि तर्हीत्यादेरनुत्थानापत्तेश्च । न च प्रागुक्ताशयमविदुषो युगपद्वचनतावादिनोयं पूर्वपक्ष इति वाच्यम् । तत्समाधानकाले पूर्वोक्तस्वाशयप्रकटनेनैव समाधानस्योचितत्वेन याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोपीत्यादि तत्समाधानपरग्रन्थासंगतेः । तद्ग्रन्थस्वारस्येन युगपदधिकरणवचनतावादिन एवैतत्पूर्वपक्षे सिद्धान्तित्वप्रतीतेः ॥

( १४२२ समाधानवार्तिकम् ॥ १२ ॥ )

॥ * ॥ तयोरनेकार्थत्वाद्बहुवचनप्रसङ्ग इति चेन्न बहुत्वाभावात् ॥ * ॥

( भाष्यम् ) तयोरनेकार्थत्वाद्बहुवचनप्रसङ्ग इति चेत् ॥ तन्न । किं कारणम् ? । बहुत्वाभावात् । नात्र बहुत्वमस्ति ॥

( आक्षेपभाष्यम् )

किमुच्यते—बहुत्वाभावादिति, यदा इदानीमेवोक्तम्—प्लक्षोपि द्व्यर्थो न्यग्रोधोपि द्व्यर्थ इति ? ।

( समाधानभाष्यम् )

याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोपि ।

( प्रदीपः ) याभ्यामेवेति । नात्र चत्वारोऽर्थाः ? किं तर्हि द्वावेवार्थावित्यर्थः ॥

( युगपदधिकरणवचनतानुपपत्तिवार्तिकाकाङ्क्षापूरकभाष्यम् )

यद्येवम्—

( १४२३ अनुपपत्तिवार्तिकम् ॥ १३ ॥ )

॥ * ॥ अन्यवाचकेनान्यस्य वचनानुपपत्तिः ॥ * ॥

( भाष्यम् ) अन्यवाचकेन शब्देनान्यस्य वचनं नोपपद्यते ॥

( प्रदीपः ) अन्यवाचकेनेति । लौकिकात् प्रयोगात् शब्दानामर्थावधारणं तत्र यथा पटशब्दः घटार्थं न प्रत्याययति तथा प्लक्षन्यग्रोधशब्दौ परस्परार्थस्य प्रत्यायकौ न युक्तावित्यर्थः ॥

( उद्योतः ) ननु प्लक्षन्यग्रोधयोरुभयार्थत्वमिति वदतोऽन्यवाचकत्वमसिद्धमत आह—लौकिकादिति ॥

( १४२४ अनुपपत्तिबाधकवार्तिकम् ॥ १४ ॥ )

॥ * ॥ अन्यवाचकेनान्यस्य वचनानुपपत्तिरिति चेत् प्लक्षस्य न्यग्रोधत्वाद् न्यग्रोधस्य प्लक्षत्वात् स्वशब्देनाभिधानम् ॥ * ॥

( भाष्यम् ) अन्यवाचकेनान्यस्य वचनानुपपत्ति·

१ 'चनाप्रसि'। २ द्वन्द्वरूपसमुदायस्योद्भूतावयवभेदसमुदायबोधकत्वेन द्व्यर्थकत्वात्तद्घटकः प्लक्षशब्दोऽपि द्व्यर्थको न्यग्रोधशब्दोऽपि च द्व्यर्थकः समुदायस्यावयवानतिरेकादिति भावः । ( र. ना. ) ३ यदि युगपदधिकरणवचनतावादिमतानुसारेण प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थ इति स्वीक्रियते तर्हि तयोरनेकार्थत्वाद् बहुवचनप्रसङ्ग इति योजना । ( र. ना. ) ४ युगपदधिकरणवचनताखण्डनवादीत्यर्थः । ( र. ना. ) ५ अभिधानानुपपत्तिरित्यर्थः । ( र. ना. )

रिति चेद् एवमुच्यते—तन्न । किं कारणम् ?.। प्लक्षस्य न्यग्रोधत्वाद् न्यग्रोधस्य च प्लक्षत्वाच्च स्वशब्देनाभिधानं भविष्यति । प्लक्षोपि न्यग्रोधः न्यग्रोधोपि प्लक्षः ॥

( प्रदीपः ) प्लक्षस्येति । प्लक्षशब्दस्य न्यग्रोधार्थत्वाच्च न्यग्रोधशब्दस्य प्लक्षार्थाभिधायित्वात् स्वार्थस्यैवाभिधानेन नास्त्यर्थान्तराभिधायित्वम् । लोकप्रसिद्ध्या त्वर्थान्तराभिधायित्वमुच्यते । वृत्तिविषये त्वेकैकस्य द्वावर्थाविति स्वार्थावेव तौ भवतः ॥ प्लक्षोपि न्यग्रोध इति । न्यग्रोधशब्दवाच्य इत्यर्थः । एवं न्यग्रोधोऽपि प्लक्षशब्दवाच्य इत्यर्थः ॥

( उद्द्योतः ) नन्वन्यस्यान्यरूपत्वाभावेन प्लक्षस्य न्यग्रोधत्वादित्यनुपपन्नमत आह—प्लक्षशब्दस्येति ॥

( आक्षेपभाष्यम् )

कथं पुनः प्लक्षोपि न्यग्रोधः न्यग्रोधोपि प्लक्षः स्यात्, यावता 'कारणाद् द्रव्ये शब्दनिवेशः ?' ॥

( प्रदीपः ) कारणादिति । शब्दार्थावसायहेतुर्लोकव्यवहारोत्र कारणशब्देन विवक्षितः ॥ न च लोकव्यवहारे प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं प्रतीतम् ॥

( उद्द्योतः ) भाष्ये प्लक्षशब्दस्य न्यग्रोधार्थत्वं कथमितिप्रश्नोपपादकं—यावतेति । यत इत्यर्थः । तद्व्याचष्टे—शब्दार्थावसायेति । शब्दार्थसंबन्धग्रहणेत्यर्थः ॥

( १४२५ एकदेशिसमाधानवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ कारणाद् द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात्सिद्धम् ॥ * ॥**

( भाष्यम् ) कारणाद् द्रव्ये शब्दनिवेश इति चेद् एवमुच्यते—तन्न । तुल्यकारणत्वात् सिद्धम् । तुल्यं हि कारणम् । यदि तावत्प्रक्षरतीति व्युत्पत्त्या प्लक्षः स्याद्, न्यग्रोधेप्येतद्भवति । तथा यदि न्यग्रोहतीति न्यग्रोधः, प्लक्षेप्येतद्भवति ॥

( प्रदीपः ) इतरः शब्दप्रवृत्तिनिमित्तं शब्दप्रयोगस्य कारणमिति मत्वाह—कारणादिति । प्रक्षरणं विस्तारेणावस्थानम् । न्यग्रोहणमधःशाखावस्थापनम् ॥

( १४२६ आक्षेपाशयप्रकाशकवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ दर्शनं वै हेतुः ॥ * ॥**

( भाष्यम् ) न च न्यग्रोधे प्लक्षशब्दो दृश्यते ॥

( प्रदीपः ) इतरः स्वाभिप्रायं प्रकाशयति—दर्शनमिति । लोकव्यवहार इत्यर्थः ॥

( १४२७ सिद्धान्तिसमाधानवार्तिकम् ॥ १७ ॥ )

**॥ * ॥ दर्शनं हेतुरिति चेत्तुल्यम् ॥ * ॥**

( भाष्यम् ) दर्शनं हेतुरिति चेत्तुल्यमेतद्भवति । प्लक्षेपि न्यग्रोधशब्दो दृश्यते न्यग्रोधेपि प्लक्षशब्दः । तुल्यं हि कारणम् ॥

( प्रदीपः ) प्लक्षेपीति । लोकव्यवहारे प्लक्षन्यग्रोधौ दृश्येतामित्युभयोः क्रियान्वयाद् द्विवचनदर्शनाच्च ॥ तुल्यं हीति । तुल्यो लोकव्यवहार इत्यर्थः ॥

( उद्द्योतः ) प्लक्षेपि न्यग्रोधशब्दो दृश्यत इत्युक्तं तत्र दर्शनमुपपादयति—लोकव्यवहारे प्लक्षेति । पूर्वोक्तेन शब्दप्रयोगक्रमेणार्थज्ञानक्रमादुभयोः क्रियान्वयो द्विवचनं च न स्यादित्यमिमानैः भाष्ये—तुल्यं हि कारणमिति । दर्शनरूपं कारणमपि तुल्यमित्यर्थस्तदाह—तुल्यो लोकेति ।

( आक्षेपभाष्यम् )

न वै लोके एष संप्रत्ययो भवति । न हि प्लक्ष आनीयतामित्युक्ते न्यग्रोध आनीयते ॥

( उद्द्योतः ) पुनर्भाष्ये शङ्कते—न वै लोक इति ॥

( १४२८ समाधानवार्तिकम् ॥ १८ ॥ )

**॥ * ॥ तद्विषयं च ॥ * ॥**

( भाष्यम् ) तद्विषयं चैतद् द्रष्टव्यं प्लक्षस्य न्यग्रोधत्वम् ॥ किंविषयम् ? । द्वन्द्वविषयम् ॥

( प्रदीपः ) तद्विषयं चेति । द्वन्द्वावयवानामेवानेकार्थाभिधायित्वं न केवलानामित्यर्थः ॥

( आक्षेपभाष्यम् )

युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः ? ॥

( प्रदीपः ) युक्तं पुनरिति । किं युक्तमेतदित्यर्थः ॥

( उद्द्योतः ) किं युक्तमेतदिति । युक्तं पुनरित्यत्र काका प्रश्नो व्यङ्ग्य इति भावः ॥

( समाधानभाष्यम् )

बाढं युक्तम् ॥

( प्रदीपः ) बाढमिति । भिन्नरूपत्वाद्भिन्नशक्तित्वाच्च ॥

( उद्द्योतः ) भिन्नरूपत्वादिति । प्लक्षौ दृश्यतामित्यादौ सविभक्तिकम्, समासे निर्विभक्तिकमित्यर्थः ॥ भिन्नशक्तित्वादिति । तत्र भिन्नोपस्थितिजनिका शक्तिः, समासे एकोपस्थितिजनिका सेत्यर्थः॥

( १४२९ समाधानसाधकवार्तिकम् ॥ १९ ॥ )

**॥ * ॥ अन्यत्रापि तद्विषयदर्शनात् ॥ * ॥**

( भाष्यम् ) अन्यत्रापि हि नियतविषयाः शब्दा दृश्यन्ते । तद्यथा—समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति । समाने च काले वर्णे गौः कृष्ण इति भवति, अश्वो हेम इति । समाने च शुक्ले वर्णे गौः श्वेत इति भवति, अश्वः कर्क इति ॥

( प्रदीपः ) अश्वः शोण इति । यथाश्वादन्यत्र शोणादयो न वर्तन्ते तथा विना द्वन्द्वात् प्लक्षादयो न्यग्रोधाद्यर्था न भवन्तीत्यर्थः ॥

( आक्षेपभाष्यम् )

यदि तर्हि प्लक्षोपि न्यग्रोधः न्यग्रोधोपि प्लक्षः—

१ 'भवति'। २ 'धानम्,।' ३ अभिमानोक्तिबीजन्तु उद्भूतावयवभेदकसमुदायस्येतरेतरयोगद्वन्द्ववोध्यत्वेन सर्वोपपत्तिरिति । ( र. ना. )

( १४३० आक्षेपवार्तिकम् ॥ २० ॥ )

**॥ * ॥ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः ॥ * ॥**

( भाष्यम् ) एकेनोक्तत्वात्तस्यार्थस्यापरस्य प्रयोगो नोपपद्यते—प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ॥

( प्रदीपः ) यदि तर्हीति । ननु तद्विषयं चेत्युक्ते कोऽस्य दोषस्यावसरः । एवं मन्यते—परस्परसन्निधानेन यदा द्वयोरपि सामर्थ्यमाहितं तदान्यतरविगमेपि सामर्थ्यहानाभावो यथा वह्निसंपादितपाकजरूपादिसद्भावो निवृत्तेऽपि वह्नौ ॥

( उद्योतः ) भाष्ये—प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोग इति । प्लक्षशब्देन न्यग्रोधरूपार्थस्योक्तत्वान्न्यग्रोधशब्दप्रयोगो नोपपद्यत इत्यर्थः ॥

( १४३१ वार्तिकम् ॥ २१ ॥ )

**॥ * ॥ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ॥ * ॥**

( भाष्यम् ) एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेत् । तन्न । किं कारणम् ? । अनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः । अनुक्तः प्लक्षेण न्यग्रोधार्थ इति कृत्वा न्यग्रोधशब्दः प्रयुज्यते ॥ कथमनुक्तः, यावता इदानीमेवोक्तं प्लक्षोपि न्यग्रोधः न्यग्रोधोऽपि प्लक्ष इति ? । सहभूतावेतावन्योन्यस्यार्थमाहतुः । न पृथग्भूतौ ॥

( प्रदीपः ) अनुक्त इति । न्यग्रोधशब्दप्रयोगमन्तरेणेत्यर्थः । उक्तं ह्येतत्—द्वन्द्वावयवानामेवानेकार्थाभिधायित्वं न केवलानां यथा वह्निसंनिधावेव ताम्रं द्रवरूपं भवति न तु तद्विनिवृत्तौ ॥ सहभूताविति । भारोद्यन्तृवत्परस्परशक्त्याविर्भावात् ॥

( उद्योतः ) युगपदभिधानमनुक्तिश्च विरुद्धेत्यत आह—न्यग्रोधशब्देति ॥ भारोद्यन्त्रिति । इतरसन्निधाने एव शक्त्याविर्भावो न केवलस्यापीति भावः ॥

( आक्षेपभाष्यम् )

किं पुनः कारणं सहभूतावेतावन्योन्यस्यार्थमाहतुर्न पृथग्भूतौ ? ॥

( १४३२ समाधानवार्तिकम् ॥ २२ ॥ )

**॥*॥ अभिधानं पुनः स्वाभाविकम् ॥*॥**

( भाष्यम् ) स्वाभाविकमभिधानम् ॥

( समाधानान्तरभाष्यम् )

अथ वेह कौ चित्प्राथमकल्पिकौ प्लक्षन्यग्रोधौ, कौ चित्क्रियया वा गुणेन वा, प्लक्ष इवायं प्लक्षः—न्यग्रोध इवायं न्यग्रोध इति । तत्र प्लक्षावित्युक्ते संदेहः स्यात्—किमिमौ प्लक्षावेव आहोस्वित्प्लक्षन्यग्रोधाविति । तत्रासंदेहार्थं न्यग्रोधशब्दः प्रयुज्यते ॥

( प्रदीपः ) प्राथमकल्पिकाविति । लोकव्यवहारे पदोच्चारणमात्रात्तदर्थावसायान्मुख्यावित्यर्थः ॥ कौचिदिति । तत्सहचरितगुणक्रियादर्शनात्तद्रूपारोपणाद् गौणावित्यर्थः । यथोक्तम्—यदि प्रक्षरतीत्यादि ॥ संदेहः स्यादिति । उपक्रमे संदेहो गौणस्याप्यर्थस्य संभवमात्रेण । न तु मुख्यार्थसंभवे गौणस्य परामर्श एवास्ति तत्कुतः संदेहः ॥

( उद्योतः ) किमिमौ प्लक्षावेवेति भाष्यस्य मुख्यौ प्लक्षावित्यर्थः ॥ तत्कुत इति । तस्माद् न्यग्रोधप्रतीतिरेव न स्यादतो न्यग्रोधशब्दप्रयोग आवश्यक इति बोध्यम् । गौणस्याप्यस्य प्लक्षन्यग्रोधावित्यादौ लोकव्यवहारे परस्य प्रसिद्धत्वान्मुख्यसमकक्षतया भाष्ये सन्देह उक्त इत्यन्ये[२] ॥

( पूर्वपक्षिण आक्षेपोपसंहारभाष्यम् )

सेयं युगपदधिकरणवचनता नाम दुःखा च दुरुपपादा च । यच्चाप्यस्या निबन्धनमुक्तम्—द्यावा ह क्षामेति, तदपि च्छान्दसम् । तत्र सुपां सुपो भवन्तीत्येव सिद्धम् । सूत्रं च भिद्यते ॥

( प्रदीपः ) भाष्यकारः सूत्रन्यासं स्थापयितुमाह—सेयमिति ॥ दुःखेति । प्रतीतावनुपारोहात् ॥ दुरुपपादेति । प्रमाणाभावात् । वृद्धव्यवहाराद्धि शब्दार्थावसायः । न च तत्र प्लक्षशब्दस्य प्लक्षन्यग्रोधाभिधायित्वं दृश्यते । न च गौणार्थत्वं प्लक्षशब्दस्य । न्यग्रोधशब्देनैव न्यग्रोधस्य प्रतिपादितत्वात् । न च प्लक्षन्यग्रोधावित्युक्तेऽर्थद्वयप्रतीतेरावृत्तिः यथा प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाविति । समासस्य चानेकार्थाभिधायित्वात्ततः परयोर्द्विवचनबहुवचनयोरुपपत्तिरिति द्विवचनबहुवचनान्यथानुपपत्त्यापि नास्ति युगपद्वाच्यताप्रतिपत्तिः ॥ लिङ्गदर्शनमपि निराकुर्वन्नाह—यच्चापीति । एकवचनस्य स्थाने द्विवचनमित्यर्थः ॥

( उद्योतः ) प्रतीताविति । समुदायेन द्वयोरुपस्थितिरित्येवानुभवो न तु प्रत्येकं द्व्यर्थतानुभव इत्यर्थः ॥ समासस्य चानेकार्थेति । अनेकार्थबोधकत्वादित्यर्थः । उद्भूतावयवभेदसमुदायाभिधानशक्तिरुभयोः पर्याप्ता, क्रमप्रयोगवद्भिरपि पदैः क्रमेणैकैव बुद्धिः समूहालम्बनज्ञानवदिति भावः ॥ द्विवचनमित्यर्थ इति । अत एव पृथिवीत्यस्य प्रगृह्यत्वोपपत्तिरिति भावः । द्वितीयबोधस्तु एकत्र क्षामापदेन, अपरत्र द्यावापदेन । अत एव सन्नमेते इति द्विवचनोपपत्तिः । देवदत्तश्च यज्ञदत्तश्च तिष्ठत इति वत् ॥

( सिद्धान्तिसमाधानभाष्यम् )

यथान्यासमेवास्तु ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—*चार्थे द्वन्द्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः* इति ॥

[१] अयं भावः । द्वन्द्वविषय एव युगपदेकैकेनानेकार्थाभिधानमित्युक्तं तथा चैकस्य प्रयोगे नास्ति द्वन्द्वविषयतेति कथं प्रकृतदोषावसर इति । ( र. ना. )

[२] अनयाऽपि रीत्योपक्रम एव सन्देह इति न कैयटोक्तादिरोधः कश्चिदुक्त इति ध्येयम् । ( र. ना. )

( समाधानभाष्यम् )

नैष दोषः। इह "चे द्वन्द्वः" इतीयता सिद्धम् ॥

कथं पुनश्चे नाम वृत्तिः स्यात्। शब्दो ह्येषः ? ॥

शब्दे कार्यासंभवादर्थे कार्यं विज्ञास्यते। सोयमेवं सिद्धे सति यदर्थग्रहणं करोति तस्यैतत्प्रयोजनम्—एवं यथा विज्ञायेत—चेन कृतोर्थश्चार्थ[1] इति ॥

कः पुनश्चेन कृतोर्थः? ॥ समुच्चयः अन्वाचय इतरेतरयोगः समाहार इति ॥ समुच्चये—प्लक्षश्चेत्युक्ते गम्यते एतद्—न्यग्रोधश्चेति, तथा न्यग्रोधश्चेत्युक्ते गम्यते एतत्—प्लक्षश्चेति ॥ अन्वाचये—प्लक्षश्चेत्युक्ते गम्यते एतत्—'सापेक्षोयं प्रयुज्यते' इति ॥ इतरेतरयोगे—प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यते एतत्—'प्लक्षोपि न्यग्रोधसहायो[2] न्यग्रोधोपि प्लक्षसहायः' इति ॥ प्लक्षश्च न्यग्रोधश्चेत्युक्ते समाहारेऽपि क्रियते—प्लक्षन्यग्रोधमिति ॥ तत्रायमप्यर्थः—द्वन्द्वैकवद्भावो न पठितव्यो भवति। समाहारैकत्वादेव सिद्धम् ॥

( प्रदीपः ) चेन कृतोर्थ[3] इति। अर्थशब्दस्य सन्निधानादुत्तर[4]पदलोपी समास आश्रीयत इत्यर्थः ॥ ननु चेनार्थस्य कृतत्वमुत्पादनं वा स्यात् प्रकाशनं वा। तत्रोत्पादनं तावन्नोपपद्यते। नहि शब्दैरर्था उत्पाद्यन्ते। यथोक्तम्—'नहि शब्दकृतेन नामार्थेन भवितव्यम्' इति। अथ प्रकाशनम्, तदा स एवातिप्रसङ्ग[5] इति मत्वा पृच्छति—कः पुनरिति ॥ समुच्चय इति। यदा परस्परनिरपेक्षाः पदार्थाः क्रियायां समुच्चीयन्ते तदा समुच्चयश्चार्थो यथा गामश्वं पुरुषमित्यादौ। वाक्ये परस्परानपेक्षा गवादयो नयनक्रियया संबध्यन्ते। तत्र चेन कृतोर्थ इत्यवधारणमर्थग्रहणसामर्थ्यादाश्रीयते-चेनैव यः प्रकाशितोर्थस्तत्र द्वन्द्वः। गामश्वमित्यत्र तु विनाऽपि चेन समुच्चयावगमान्नासौ चेनैव प्रकाशित इत्युच्यते। सामर्थ्यं ह्येकक्रियाद्वारकं दध्योदनादिवत्स्यादिति नात्रासामर्थ्यात्समासपरिहारो वाच्यः ॥ प्लक्षश्चेत्युक्त इति। न्यग्रोधो दृश्यतामित्युपक्रम्य यदा प्लक्षश्चेत्युच्यते तदा न्यग्रोधश्चेति गम्यते। यदा त्वेकस्य प्राधान्यं तदा[6] इतरस्य तदनुरोधेन[7] क्रियासंबन्धाद्भिन्नकक्ष्यतया नास्ति परस्परेण सामर्थ्यमिति अन्वाचये समासाभावः। प्रधानाभिधायि पदं चार्थे[8] न वर्ततेऽपि त्वप्रधानमेवेति अनेकस्य पदस्य चार्थवृत्तित्वाभावाद् द्वन्द्वाभावः ॥ इतरेतरयोगः परस्परापेक्षाणामनेकेषामेकस्मिन्नर्थे समन्वये सति भवतीति परस्परसहितता चशब्देनैव द्योत्यते इति तत्र समासो भवति ॥ समाहारेपीति। तत्रापि परस्परसहिततावगमात् ॥ द्वन्द्वैकवद्भाव इति। युगपदधिकरणवचनतायां द्वन्द्वे तु वक्तव्यः स्याद्, एकैकस्यानेकार्थत्वात्। न च विषयविभागार्थोसौ वक्तव्यः, प्रयोगदर्शनाद्विषयविभागस्य सिद्धत्वात् ॥

( उद्द्योतः ) परस्परनिरपेक्षा इति। न्यग्रोधश्छिद्यतां प्लक्षश्चेत्युक्ते न्यग्रोधस्य च्छेदनान्वये प्लक्षापेक्षाया अभावमात्रेण परस्परनिरपेक्षत्वमित्यर्थः ॥ नन्वेतावतोक्तेऽहरहर्नयमान इत्यादौ कथं समासप्रसङ्गो वारितोऽत आह—तत्र चेनेति ॥ चेनाप्यचेनापीति। च विनापीत्यर्थः। क्वचित्तु विनापि चेनेत्येव पाठः ॥ ननु समुच्चयेऽसामर्थ्यात्कथं समासप्राप्तिरत आह—सामर्थ्यं हीति। इदं तु चिन्त्यम्। कुतः सर्वा मृत्तिकयेत्यादौ समासापत्तेः[9]। किं च क्रियाद्वारके सामर्थ्ये दध्योदनादाविव सामर्थ्यस्य द्वारभूतक्रियायाः पृथक् प्रयोगानापत्तिः। किं चैवं सति सूत्रस्थचार्थपदविग्रहमुक्त्वा पुनस्तदर्थप्रश्ने समुच्चयोल्लेखासङ्गतिः, एवगर्भार्थेन सौत्रेण तदप्रतीतेः। किं च गामश्वं पुरुषं पशुमित्यत्र सर्वत्र नैरपेक्ष्ये समुच्चयोपि कथं, समुच्चये एकत्र सापेक्षत्वात् ॥ भाष्ये—प्लक्षश्चेत्युक्ते इति। न्यग्रोधो दृश्यतामित्युपक्रमोक्तौ तु न प्लक्षश्चेति गम्यत[10] इति भावः ॥ न्यग्रोधश्चेत्युक्ते इति। प्लक्षो दृश्यतामित्युपक्रम्य न्यग्रोधश्चेत्युक्त इत्यर्थः ॥ सापेक्षोयमिति। प्रधानीभूतक्रियेत्यर्थः। तदाह—यदा त्विति ॥ इतरस्येत्यस्य तदेत्यादिः ॥ भिन्नकक्षतया भिन्नक्रियान्वयितया ॥ [ अन्वाचये[11] सलोपश्चेत्युक्ते इति पाठः[12] ॥ ] तत्रैव सामर्थ्याभावे युक्त्यन्तरमाह—अनेकस्य पदस्येति। इदं समुच्चयेपि बोध्यम्। एवं च समुच्चयेप्यनेकस्य चार्थवृत्तित्वा[13]भावात्समासपरिहार इति प्रागुक्तमसङ्गतमेवेति बोध्यम् ॥ परस्परापेक्षाणामिति। एतेन व्यपेक्षासामर्थ्यवादे द्वन्द्वेऽनुपपत्तिरित्यपास्तम्। परस्परान्वयित्ववदितरान्वये परस्परापेक्षत्वस्यापि व्यपेक्षात्वात् सा च प्रकृतेस्त्येवेति भावः। एतद्विपर्ययश्च समुच्चयादौ दर्शित एव ॥ परस्परापेक्षाणामित्यनेन समुच्चयाद्वैलक्षण्यमुक्तम्। अत एव भाष्ये—प्लक्षश्चेत्युक्ते गम्यत एतन्न्यग्रोधश्चेति समुच्चयस्याकारः प्रदर्शितः। तेन ह्येकः परसाहित्यमपेक्षते न पर इतरसाहित्यमित्युक्तम् ॥ अपि चानेन[14] समुच्चये साहित्यं विशेषणमित्युक्तम्। न्यग्रोधसहितः प्लक्ष इति हि तदर्थः। अतोपि तत्र न समासः। चार्थप्राधान्ये एवैतत्समासप्रवृत्तेः। इतरेतरयोगस्य प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यत एतत्, प्लक्षोपि न्यग्रोधसहायो न्यग्रोधोपि प्लक्षसहाय इति आकारः प्रदर्शितः। अनेनोद्भूतावयवभेदसाहित्यस्य[15] विशेष्यतेति दर्शितम्। एवं च समुच्चयान्वाचययोश्चकारो द्योतकः। अन्त्ययोस्तु वाचकः, तत्र तदर्थस्य

---

1 'कृतेऽर्थे चार्थे' इति। 2 अत्र बहुव्रीहिरेवमग्रेऽपि। ( र. ना. ) 3 'कृतेऽर्थे'। 4 'नात्तदुत्तर–'। 5 असमासेऽपि चार्थसंप्रत्ययादनिष्टप्रसङ्ग इत्यर्थः। ( र. ना. ) 6 नागेशोपलब्धप्राचीनपुस्तकेषु 'तदा' इति नासीत्। अत एव नागेशेन तत्पूरितम्। पश्चात्पण्डितैः प्रदीप एव वर्धितं भवेत्। 7 तदविरोधेनेत्यर्थः। ( र. ना. ) 8 अन्वाचयरूपे इत्यादिः। ( र. ना. ) 9 शङ्कुलाखण्ड इतिवत् मृत्तिकासर्व इति स्यादिति भावः। ( र. ना. ) 10 किन्तु प्लक्षो दृश्यतां न्यग्रोधश्चेत्युक्ते प्लक्षश्चेति गम्यते तथा तद्वैपरीत्येन न्यग्रोधो दृश्यतां प्लक्षश्चेत्युक्ते न्यग्रोधश्चेति गम्यते इति भावः। ( र. ना. )

11 तथा चोक्तम्—'कर्तुः क्यङ् सलोपश्च' इत्यत्र भाष्ये—'प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टः सलोपः।' इति। 12 अयं कोष्ठकान्तर्गतः पाठो यद्यपि काशी Bengal Asiatic Society मुद्रितपुस्तकेपि 'सापेक्षोयमिति' इत्यतः प्राक् समुपलभ्यते तथापि तत्र पाठस्य लेखकप्रमादजत्वाद्योग्यस्थाने मया कृत इति बोध्यम्। 13 तत्र चकारसमभिव्याहृतस्यैकस्यैव चार्थवृत्तित्वमिति भावः। ( र. ना. ) 14 अनेनेति वचनक्रियान्वयि। ( र. ना. ) 15 उद्भूतावयवभेदं यत्साहित्यं समुदायस्तस्येत्यर्थः। ( र. ना. )

विशेष्यत्वादिति बोध्यम्। तस्मात् गामश्वमित्यादौ न समुच्चयः। विनिगमनाविरहेण सर्वेषां परस्परसाहित्यावगतेः, अहरहःशब्देन तथैव प्रतीतेः। चार्थसाहित्यावगतिसद्भावेन समासप्राप्तिशङ्का। उत्तरं तु चशब्देन साहित्यं वाक्ये तत्र प्राधान्येन भासते, वृत्तौ चाभावे च समासेन, तत्र समासशास्त्रवृत्तिः। चकृतार्थे वर्तमानानेकसुबन्तसत्त्वात्॥ गामश्वमित्यादौ तु अहरहःशब्देन साहित्यं गम्यते, न तु चेनेति भाष्यार्थः। समुच्चयेपि शाब्दबोधे एकत्रैव साहित्यं बुध्यते एकोत्तरं चप्रयोगाद् इत्यनेकसुबन्तस्य प्रधानभूतचार्थे वृत्त्यभावात्समासाभाव इत्ययमर्थश्च भगवता समुच्चयान्वाचयस्वरूपनिरूपणेनैव दर्शितः॥ अत एव सन्नियोगशिष्टपरिभाषापि न्यायसिद्धेति भाष्यतात्पर्यम्॥ इन्द्रस्त्वष्टा वरुण इत्यादावपि परस्परसाहित्येनैव लोकपालकत्वं बुध्यत इति बोध्यम्॥ तत्रापीति। परं त्वनुद्भूतावयवभेदमिति भावः॥ भाष्ये—समाहारेपीति पृथग्वाक्यम्। अत्र प्लक्षोपि न्यग्रोधसहाय इत्याद्यनुक्रम्यते। अनुद्भूतावयवभेदसाहित्यावगतिरिति विशेषः[1]। अनुद्भूतावयवभेदमेव साहित्यं समाहारशब्देनोच्यते। तदाह—क्रियत इति। द्वन्द्व इति शेषः॥ सूत्रारम्भे प्रयोजनान्तरमाह—तत्रायमपीति। द्वन्द्वैकवद्भाव इति ग्रन्थेन पक्षान्तरे गौरवं प्रदर्श्यत इत्याह—युगपदिति॥ नचविषयेति। नियमार्थमित्यर्थः॥ वस्तुतो द्वन्द्वैकवदित्यस्य सर्वो द्वन्द्वो विभाषयैकवदिति वचनं न कार्यमित्येवार्थ इति न दोषः॥

(एकादशादिशब्दार्थनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**एकादश द्वादशेति कोयं समासः?॥**

(१४३३ समाधानवार्तिकम्॥ २३॥)

## ॥*॥ एकादीनां दशादिभिर्द्वन्द्वः॥*॥

**(भाष्यम्) एकादीनां सह दशादिभिर्द्वन्द्वः समासः॥**

**(प्रदीपः) दशादिभिरिति।** आदिशब्देन विंशत्यादयो गृह्यन्ते। विंशत्याद्यर्थ एव चायं विचारः। दशशब्देन तु द्वन्द्वे न कश्चिद्दोषः॥

**(उद्योतः) न कश्चिद्दोष इति।** एकादशादीनां नित्यबहुवचनान्तत्वादिति भावः॥

(१४३४ आक्षेपवार्तिकम्॥ २४॥)

## ॥*॥ एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनप्रसङ्गः॥*॥

**(भाष्यम्) एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनं प्राप्नोति। एकविंशतिः। द्वाविंशतिः॥**

**(प्रदीपः) वचनमिति।** द्विवचनं बहुवचनं चेत्यर्थः॥

**(उद्योतः)** न केवला प्रकृतिरिति समयाद्वचनमिष्यत एवात आह—**द्विवचनमिति।** उभयोः संख्यापरत्वे द्विवचनं संख्येयपरत्वे बहुवचनं प्राप्नोति, इष्यते त्वेकवचनमिति भावः॥

(१४३५ समाधानवार्तिकम्॥ २५॥)

## ॥*॥ सिद्धं त्वधिकान्ता संख्या संख्यया समानाधिकरणाधिकारेऽधिकलोपश्च॥*॥

**(भाष्यम्) सिद्धमेतत्॥ कथम्?। समानाधिकरणाधिकारे वक्तव्यम्—'अधिकान्ता संख्या संख्यया सह समस्यतेऽधिकशब्दस्य च लोपो भवति' इति। एकाधिका विंशतिः एकविंशतिः, द्व्यधिका विंशतिः द्वाविंशतिः॥**

**(प्रदीपः) सिद्धं त्विति।** शाकपार्थिवादित्वात्॥

(दूषणभाष्यम्)

**यदि समानाधिकरणः, स्वरो न सिध्यति॥ यद्धि तत्—'संख्या पूर्वपदं प्रकृतिस्वरं भवति' इति, 'द्वन्द्वे' इत्येवं तत्॥**

(प्रत्याक्षेपभाष्यम्)

**किं पुनः कारणं द्वन्द्व इत्येवं तत्?॥**

(समाधानभाष्यम्)

**इह मा भूत्—शतसहस्रमिति॥**

**(प्रदीपः) शतसहस्रमिति।** षष्ठीसमासः॥

**(उद्योतः) षष्ठीसमास इति।** सहस्राणां शतमिति विग्रहः। संख्याया अल्पीयस्या इति शतस्य पूर्वनिपातः। तदस्मिन्नधिकमिति सूत्रे भाष्ये ध्वनितमेतत्॥

(द्वन्द्वाभ्युपगमभाष्यम्)

**अस्तु तर्हि द्वन्द्वः॥**

**(उद्योतः)** भाष्ये—अस्तु तर्हि द्वन्द्व इत्यस्य सोपीत्यर्थः, पूर्वसिद्धन्त्विति वार्तिकोक्तेः तदभावकल्पने मानाभावात्॥

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—*एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनप्रसङ्गः* इति॥**

(समाधानभाष्यम्)

**नैष दोषः। सर्वो हि द्वन्द्वो विभाषैकवद्भवति॥**

**(प्रदीपः) सर्वो हीति। तिष्यपुनर्वस्वोरित्यत्र** बहुवचनग्रहणेनैतज्ज्ञापितम्॥

**(उद्योतः) तिष्यपुनर्वस्वोरिति।** एकविंशत्यादावितरेतरयोगस्तु न, अनभिधानादिति बोध्यम्। द्वन्द्वतत्पुरुषाभ्यां स्वरभेदस्त्विष्यत एवेति केचित्॥ परे तु तत्पुरुषत्वे स्वरो न सिध्यती-

---

१ द्वन्द्वसमासे समस्यमानपदार्थसाहित्यस्य विशेष्यत्वेन मानसीकारादेवेत्यर्थः। (र. ना.) २ साहित्यमिति शेषः। (र. ना.) ३ इतरेतरयोगादिति शेषः। (र. ना.) ४ 'पतिमेकादशं कृधि' इत्यत्र त्वेकादशशब्दो न संख्यावाची नापि संख्येयवाची, 'पतिम्' इत्यनेन सामानाधिकरण्यात्। किंतु पूरणार्थकडट्प्रत्ययान्त एकवचनान्त एव। दशभिः पुत्रैः एकेन पत्या चैकादशवीरयुक्तत्वं प्रार्थ्यते इति निरवद्यम्। ५ 'विभाषयैक'।

त्याशङ्क्यास्तु तर्हि द्वन्द्व इति भाष्योक्तः स्वरभेदो नेष्टः । उपक्रमे कोयं समासः ? द्वन्द्व इति सिद्धान्त्युक्तेरत्र द्वन्द्व एवेत्येवार्थः । सिद्धं त्विति तु सिद्धान्त्येकदेश्युक्तिरित्याहुः ॥ २९ ॥

( आक्षेपभाष्यम् )

**यदा तर्ह्येकवचनं तदा नपुंसकलिङ्गं प्राप्नोति ॥**

( समाधानभाष्यम् )

**लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ॥ चार्थे ॥२९**

( प्रदीपः ) **लिङ्गमशिष्यमिति** । सनपुंसकमिति न कर्तव्यमित्यर्थः ॥ २९ ॥

( इति समासप्रकरणम् )

---

( अथ पूर्वनिपातप्रकरणम् )

( २८८ पूर्वनिपातनियमसूत्रम् ॥ २ । २ । २ आ. ७ सू. )

## ४५० उपसर्जनं पूर्वम् ॥ २।२।३० ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( १४३६ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ ❋ ॥ उपसर्जनस्य पूर्ववचनं परप्रयोगनिवृत्त्यर्थम् ॥ ❋ ॥

( भाष्यम् ) **उपसर्जनस्य पूर्ववचनं क्रियते । परप्रयोगो मा भूदिति ॥**

( प्रदीपः ) **उपसर्जनम् ॥ ३० ॥ परप्रयोगनिवृत्त्यर्थमिति** । वाक्यवत्समासे पदानामनियते प्रयोगे प्राप्ते नियमार्थमेतदित्यर्थः ॥

( १४३७ समाधानबाधकवार्तिकम् ॥ २ ॥ )

### ॥ ❋ ॥ न वानिष्टादर्शनात् ॥ ❋ ॥

( भाष्यम् ) **न वा एतत्प्रयोजनमस्ति । किं कारणम् ? । अनिष्टादर्शनात् । न हि किंचिदनिष्टं दृश्यते । न हि कश्चिद्राजपुरुष इति प्रयोक्तव्ये पुरुषराज इति प्रयुङ्क्ते । यदि चानिष्टं प्रसज्येत ततो यत्नार्हं स्यात् ॥**

( प्रदीपः ) **न वेति** । नित्येषु शब्देषु प्रयोगसंकरे स्थिते ग्राम्यादिप्रयोगनिवारणायेदं शास्त्रम् । इह तु विपर्ययप्रयोगो नैव दृश्यत इति किं तन्निवृत्त्यर्थेन यत्नेनेत्यर्थः ॥

( उद्द्योतः ) **उपसर्जनं पू० ॥ ३० ॥ विपर्ययप्रयोग इति** । पदयोर्विपर्ययेण प्रयोग इत्यर्थः ॥

( आक्षेपभाष्यम् )

**अथ यत्र द्वे षष्ठ्यन्ते भवतः कस्मात्तत्र प्रधानस्य पूर्वनिपातो न भवति । राज्ञः पुरुषस्य राजपुरुषस्येति ? ॥**

( प्रदीपः ) इदानीमारब्धे सूत्रे दोषमुद्भावयति—**अथ यत्रेति ॥ राज्ञः पुरुषस्येति** । द्वयोरपि षष्ठीति समासशास्त्रे प्रथमानिर्दिष्टत्वादुपसर्जनत्वात् पूर्वनिपातानियमप्रसङ्गः ॥

( उद्द्योतः ) सूत्रप्रत्याख्याने उत्तरग्रन्थानुत्थानमाशङ्क्याह—इदानीमिति ॥

( १४३८ समाधानवार्तिकम् ॥ ३ ॥ )

### ॥ ❋ ॥ षष्ठ्यन्तयोः समासेऽर्थाभेदात् प्रधानस्यापूर्वनिपातः ॥ ❋ ॥

( भाष्यम् ) **षष्ठ्यन्तयोः समासे अर्थाभेदात्प्रधानस्य पूर्वनिपातो न भविष्यति ॥ एवं न चेदमकृतं भवति, 'उपसर्जनं पूर्वम्' इति । अर्थश्चाभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति ॥ उपसर्जनम् ॥ ३० ॥**

( प्रदीपः ) **अर्थाभेदादिति** । उपसर्जनसंज्ञान्वर्थत्वादप्रधानस्यैव भवति पुरुषश्चात्र राजापेक्षया प्रधानमेवेति पुरुषार्थो न भिद्यते, राजापेक्षया न व्यतिरिच्यत इत्यर्थः ॥ **न चेदमिति** । अबुधभ्रान्तिनिराकरणायाश्रितमेवेत्यर्थः ॥३०॥

( उद्द्योतः) **न भिद्यते इति** । वाक्यापेक्षयाऽप्रधानत्वरूपभेदवान्न भवतीत्यर्थः । तदाह—**राजापेक्षया न व्यतिरिच्यते इति** । व्यतिरेकोत्र भेदमूलकसंबन्धः । एवं च राजनिरूपितभेदनिबन्धनसंबन्धवान्न भवतीत्यर्थः । विशेषणनिष्ठ एव संबन्ध इति भावः ॥ परे तु षष्ठी सुबन्तेन समस्यत इत्युक्ते प्रत्यासत्त्या येन सुबन्तेन समासस्तन्निरूपितसंबन्धार्थकषष्ठ्येव गृह्यते इति तदेव षष्ठ्यन्तं प्रथमानिर्दिष्टं, न प्रधानमिति । एवं चार्था**रपूरणगुणे**ति सूत्रस्थसमानाधिकरणेनेत्यपि प्रत्याख्यातप्रायमेव । समानाधिकरणेन षष्ठीसमासाप्राप्तेः । षष्ठीतिसूत्रे प्रत्यासत्त्याश्रयणात् ॥ **अर्थाभेदादिति**—भाष्यस्यायमर्थः—अर्थस्य पुरुषस्य राज्ञा भेदाभावाद् राजनिरूपितभेदनिबन्धनसंबन्धे[1]त्वाभावात् । किं तु धनादिनिरूपितसंबन्धत्वा[2]दिति, संबन्धस्य विशेषणनिष्ठत्वादित्याहुः ॥ ये तु—अर्थाभेदादिति अप्रधानपदोपसर्जनपदयोरितिशेष इत्याहुः ॥ तत्र । प्रथमानिर्दिष्टमिति सूत्रस्थभाष्यविरोधात् । बाह्य[3]संबन्धिनिरूपिताप्राधान्यस्यात्रापि सत्त्वाच्च । पूर्वकार्या[4]सिध्या तयोः पर्यायताया अशक्यस्वीकाराच्च ॥ ३० ॥

---

( २८९ पूर्वनिपातनियमसूत्रम् ॥ २ । २ । २ आ. ८ सू. )

## ४५४ अल्पाच्तरम् ॥ २ । २ । ३४ ॥

( तदबर्थविचाराधिकरणम् )

( आक्षेपभाष्यम् )

**किमयं तन्त्रं तरनिर्देशः, आहोस्विदतन्त्रम् ? ॥**

---

१ 'संबन्धवत्त्वा' । २ प्रधानस्य पूर्वनिपातो न भविष्यतीत्यत्रायं हेतुः । ( र. ना. ) ३ धनादिनिरूपिताप्राधान्यस्येत्यर्थः । ( र. ना. ) ४ अप्रधानमेव यद्युपसर्जनं स्यात्तदा कायस्याप्रधानत्वेन पूर्वनिपातः स्यादिति भावः । ( र. ना. )

(प्रदीपः) अल्पाच्तरम् ॥ ३४ ॥ **किमयमिति** । किं तरबर्थः प्रकर्ष आश्रीयते । अथ स्वार्थे । अत एव निपातनात्तरः कृत इति प्रश्नः ॥

(उद्द्योतः) अल्पाच् ॥ ३४ ॥ तरपः श्रवणाद्विचारानुपपत्तिमाशङ्क्याह—किमिति ॥

(प्रत्याक्षेपभाष्यम्)

**किं चातः? ॥**

(प्रथमपक्षे दूषणभाष्यम्)

**यदि तन्त्रम्, द्वयोर्नियमः बहुष्वनियमः ॥ तत्र को दोषः? । शङ्खदुन्दुभिवीणानामिति न सिध्यति । दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोति ॥**

(प्रदीपः) **द्वयोरिति** । प्लक्षन्यग्रोधाविल्यादावेव स्याद् न्यग्रोधशब्दस्याल्पाच्त्वात् तदपेक्षया प्लक्षशब्दस्याल्पाच्तरत्वात् । बहुषु तु सन्निहितेषु द्विवचनोपपदत्वाभावात्तरपोनुत्पत्तिरिति तत्रानियमप्रसङ्गः । ततश्च शङ्खदुन्दुभिवीणानामित्यत्र दुन्दुभिशब्दस्यापि कदाचित्पूर्वनिपातः स्यात् ॥

(उद्द्योतः) तत्रे तरनिर्देशे प्लक्षन्यग्रोधावित्यादिसिद्ध्यर्थं यत्किंचिदपेक्षयाल्पाच्त्वम् । अतिशयस्तूपात्तापेक्षया, अतन्त्रेत्वल्पत्वमेवोपात्तापेक्षयेति बोध्यम । अत एव शङ्खदुन्दुभिवीणानामित्यस्य सिद्धिस्तत्पक्षे ॥ तत्रान्त्यो युक्तः । द्वयोरित्यस्याविवक्षावदतिशयस्याप्यविवक्षौचित्यादित्याहुः ॥ भाष्ये—**दुन्दुभिशब्दस्यापीति** । न चैतत्प्रवृत्त्यभावेपि द्वन्द्वे घील्यस्य प्रवृत्त्या दुन्दुभिशब्दस्यैव पूर्वनिपातः प्राप्नोतीत्यपिरसंगत इति वाच्यम् । पूर्वयोः पूर्वं द्वन्द्वे ततो वीणाशब्देन द्वन्द्वे तस्य पूर्वनिपाताप्राप्त्या तदुक्तेः ॥ तद्ध्वनयन्नाह—कदाचिदिति ॥

(द्वितीयपक्षे दूषणभाष्यम्)

**अथातन्त्रम्, 'मृदङ्गशङ्खतूणवाः पृथङ् नदन्ति संसदि' 'प्रासादे धनपतिरामकेशवानाम्' इत्येतन्न सिध्यति ॥**

(प्रदीपः) अतन्त्रे तरपि दुन्दुभिशब्दापेक्षयाल्पाच्त्वसद्भावाच्छङ्खवीणाशब्दयोरन्यतरस्य पूर्वनिपातो भवति न दुन्दुभिशब्दस्येति दोषाभावः । **मृदङ्गशङ्खतूणवा इति** । शङ्खशब्दस्याल्पाच्त्वात्पूर्वनिपातः प्राप्नोति । तन्त्रे तु तरपि पूर्वोक्तेन न्यायेन बहुष्वनियमादेतद्रूपं सिध्यति ॥

(उद्द्योतः) अथातन्त्रमितिभाष्याशयमाह—**अतन्त्रे इति** । **अल्पाच्त्वेति** । परत्वादस्यैव प्रवृत्तेरिति भावः ॥ **मृदङ्गशङ्खतूणवाइति** पक्षद्वयेपि भाष्योक्तरीत्यैव साध्यम् । अतन्त्रपक्षे त्वारोपितातिशये तरप्पारायणेऽदृष्टार्थः ॥ **स्वरितादिति** सूत्रेऽनुदात्तानामिति बहुवचननिर्देशवत् ॥ तत्रे तरनिर्देशे बहुषु नियमाय भाष्ये उक्तमल्पाजिति वक्ष्यामीति । यतः कुतश्चित्सर्वस्याप्यल्पाच्त्वात्सामर्थ्यादतिशयप्रतीतिः । एवं च द्वयोरित्यंशाभावात् शङ्खदुन्दुभील्यादिसिद्धिः । एवं च द्वयोरित्यंशत्यागपूर्वकमतिशयो विवक्षित इति तात्पर्यम् ॥ मृदङ्गेत्यादौ त्रयाणां समासे तु शङ्खस्यैव पूर्वनिपात इति बोध्यमिति परे ॥

(प्रथमपक्षाङ्गीकारभाष्यम्)

**यथेच्छसि तथाऽस्तु । अस्तु तावत्तन्त्रम् ॥**

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—'द्वयोर्नियमो बहुष्वनियमः' इति । तत्र शङ्खदुन्दुभिवीणानामिति न सिध्यति । दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोति—इति ॥**

(समाधानभाष्यम्)

**नैष दोषः । यदेतद् "अल्पाच्तरम्" इति, तद् "अल्पाज्" इति वक्ष्यामीति ॥**

(प्रदीपः) **यदेतदिति** । तन्त्रे दोषप्रसङ्गात् प्रयोजनाभावाच्च तरनिर्देशो न कर्तव्य इत्यर्थः ॥

(द्वितीयपक्षाभ्युपगमभाष्यम्)

**अथ वा पुनरस्त्वतन्त्रम् ॥**

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—'मृदङ्गशङ्खतूणवाः पृथङ् नदन्ति संसदि' 'प्रासादे धनपतिरामकेशवानाम्' इत्येतन्न सिध्यति—इति ॥**

(१४३९ समाधानवार्तिकम् ॥ १ ॥)

**॥ * ॥ अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन समासः ॥ * ॥**

(भाष्यम्) **अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन सह समासः करिष्यते । शङ्खश्च तूणवश्च शङ्खतूणवौ । शङ्खतूणवौ च मृदङ्गश्च मृदङ्गशङ्खतूणवाः । रामश्च केशवश्च रामकेशवौ । रामकेशवौ च धनपतिश्च धनपतिरामकेशवाः धनपतिरामकेशवानामिति ॥**

(प्रदीपः) अतन्त्रे तु तस्मिंस्तस्य स्वार्थिकत्वज्ञापनमेव तरनिर्देशस्य प्रयोजनम् ॥ **शङ्खतूणवाविति** । नियतद्रव्यविवक्षायां जातिपरत्वाभावादेकवद्भावाभावः । तूर्याङ्गाणामित्यपि न भवति । शङ्खस्यातूर्याङ्गत्वादित्येके ॥ तूर्यशिल्पोपजीविन एव तूर्याङ्गत्वेन गृह्यन्ते । तेषां हि मुख्यं तूर्याङ्गत्वमित्यपरे ॥

(उद्द्योतः) **नियतद्रव्येति** । जातिप्राधान्ये हि तदाश्रयसर्वव्यक्तीनां विनिगमनाविरहेण नान्तरीयकत्वाद्बोध इति भावः ॥

(बहूनां प्राप्तौ नियमाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ यत्र बहूनां पूर्वनिपातप्रसङ्गः किं तत्रैकस्य नियमो भवति । आहोस्विदविशेषेण ॥**

(प्रदीपः) **अथ यत्रेति** । यदि जातिपदार्थपक्ष आश्रीयते तदा लक्षणाऽऽवृत्त्यभावादेकस्यैव नियमे सति शेषा-

---

१ दुन्दुभिशब्दस्य पूर्वनिपाताप्राप्त्येत्यर्थः । तथाचैवं समासद्वयस्वीकारे वीणाशङ्खदुन्दुभय इति भवतीति भावः । पदत्रयद्वन्द्वे तु शङ्खवीणाशब्दयोरन्यतरस्य पूर्वनिपातो भवतीति उद्द्योते वक्ष्यते । तथा च शङ्खदुन्दुभिवीणानां वीणादुन्दुभिशङ्खानां वीणाशङ्खदुन्दुभीनामिति प्रयोगत्रयं भवति—वीणादुन्दुभिशब्दयोर्द्वन्द्वं कृत्वा पुनः शङ्खशब्देन द्वन्द्वे तु शङ्खवीणादुन्दुभीनामित्यपि भवतीति ध्येयम् । (र. ना.) २ द्वन्द्वे घील्यपेक्षयेति शेषः । (र. ना.) ३ सूत्रावृत्त्यभावादित्यर्थः । (र. ना.)

णामनियमेन भाव्यम् । अथ व्यक्तिपक्षस्तदा पुनःपुनर्लक्षण-प्रवर्तनात् सर्वेषां नियमेन भाव्यमिति मत्वा पृच्छति ॥

( उद्द्योतः ) तदा लक्षणेति । एतदुदाहरणा[1]वच्छिन्नघित्व-जात्यवच्छिन्ने क्वचित्प्रवृत्त्या चरितार्थत्वाद्, एकस्य युगपदवध्यवधि-मद्भावासंभवाच्च, अन्त्यस्या[2]वधित्वेप्येकस्य व्यवधानाच्च पुनस्तत्रैवा[3]-प्रवृत्तेरिति भावः ॥ व्यक्तिपक्ष इति । एतदुदाहरणा[4]वच्छिन्नतत्तद्-घित्वव्यक्तिविषयकलक्षणभेदेन तेषामचारितार्थ्यात्पुनःपुनः प्रवृत्तिर-स्त्येवेति भावः ॥ वस्तुतो वाचनिकमेवेदं, जातिपक्षेप्यावृत्तिं विनैव तज्जात्याश्रयसर्वविषयकत्वसंभवात् ॥

( १४४० समाधानवार्तिकम् ॥ २ ॥ )

## ॥ ॐ ॥ अनेक[5]प्राप्तावेकस्य नियमोऽनि-यमः शेषेषु ॥ ॐ ॥

( भाष्यम् ) अनेकस्य प्राप्तावेकस्य नियमो भवति, शेषेष्वनियमः । पटुमृदुशुक्लाः । पटुशुक्लमृदव इति ॥

( प्रदीपः ) उत्तरं तु लक्ष्यदर्शनवशाज्जातिपक्षाश्रयेण ॥

( न्यूनतापूर्णधिकरणम् )

( १४४१ पूर्वनिपातवार्तिकम् ॥ ३ ॥ )

## ॥ ॐ ॥ ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम् ॥ ॐ ॥

( भाष्यम् ) ऋतुनक्षत्राणामानुपूर्व्ये[6]ण समाना-क्षराणां पूर्वनिपातो वक्तव्यः । शिशिरवसन्तावुद-गयनस्थौ । कृत्तिकारोहिण्यः ॥

( प्रदीपः ) उदगयनस्थाविति । उत्तरायणस्थौ । लौकिकप्रयोगदर्शनपरमिदम् ॥

(उद्द्योतः) उदगयनस्थाविलस्यानुपयोगादाह—लौकिकेति॥

( १४४२ पूर्वनिपातवार्तिकम् ॥ ४ ॥ )

## ॥ ॐ ॥ अभ्यर्हितम् ॥ ॐ ॥

( भाष्यम् ) अभ्यर्हितं च पूर्वं निपततीति वक्त-व्यम् । मातापितरौ । श्रद्धामेधे ॥

( प्रदीपः ) मातापितराविति । गर्भधारणादिना पित्र-पेक्षया माताभ्यर्हिता ॥ श्रद्धामेधे इति । सत्यां श्रद्धाया-मर्थक्रियाकारिणी मेधेति श्रद्धाया अभ्यर्हितत्वम् ॥

( १४४३ पूर्वनिपातवार्तिकम् ॥ ५ ॥ )

## ॥ ॐ ॥ लघ्वक्षरम् ॥ ॐ ॥

( भाष्यम् ) लघ्वक्षरं पूर्वं निपततीति वक्तव्यम् । कुशकाशम् । शरचापम् ॥

( आचार्यान्तरमतप्रदर्शकभाष्यम् )

अपर आह—

सर्वत एवाभ्यर्हितं पूर्वं निपततीति वक्तव्यम् । लघ्वक्षरादपीति ॥ दीक्षातपसी श्रद्धातपसी ॥

( प्रदीपः ) लघ्वक्षरादपीति । पूर्वविप्रतिषेधेन ॥ दीक्षातपसी इति । दीक्षार्थं तपश्चरणमिति दीक्षाया अभ्य-र्हितत्वं, स्वरूपेण वा ॥

( १४४४ पूर्वनिपातवार्तिकम् ॥ ६ ॥ )

## ॥ ॐ ॥ वर्णानामानुपूर्व्येण ॥ ॐ ॥

( भाष्यम् ) वर्णानामानुपूर्व्येण पूर्वनिपाता भव-न्तीति वक्तव्यम् । ब्राह्मणक्षत्रियविट्शूद्राः ॥

( प्रदीपः ) वर्णानामिति । वेददर्शनाश्रयणोत्पत्ति-क्रमेण वर्णानामानुपूर्व्यम् ॥

( उद्द्योतः ) वेददर्शनेति । ब्राह्मणोस्य मुखमासीदित्या-दिवेददर्शनम् ॥

( १४४५ पूर्वनिपातवार्तिकम् ॥ ७ ॥ )

## ॥ ॐ ॥ भ्रातुश्च ज्यायसः ॥ ॐ ॥

( भाष्यम् ) भ्रातुश्च ज्यायसः पूर्वनिपातो भव-न्तीति वक्तव्यम् । युधिष्ठिरार्जुनौ ॥

( १४४६ पूर्वनिपातवार्तिकम् ॥ ८ ॥ )

## ॥ ॐ ॥ संख्याया अल्पीयसः ॥ ॐ ॥

( भाष्यम् ) संख्याया अल्पीयसः पूर्वनिपातो भवतीति वक्तव्यम् । एकादश द्वादश ॥

( प्रदीपः ) अल्पीयस इति । अर्थस्य वाचिकाया इति शेषः । एतच्च द्वन्द्वाद्वन्द्वविषयमित्याहुः ॥ द्व्येकयोरिति तु सौत्रो निर्देशः ॥ ३४ ॥

( उद्द्योतः ) अल्पीयस्या इत्युचितमत आह—अर्थस्येति ॥ एतच्चेति । अत एव तत्पुरुषेप्येकादशेत्येव, बहुव्रीहौ द्वित्रा इत्या-दिसिद्धिश्चेत्याहुः ॥ ३४ ॥

( १४४७ पूर्वनिपातवार्तिकम् ॥ १ ॥ )

## ॥ ॐ ॥ धर्मादिषूभयम् ॥ ॐ ॥

( भाष्यम् ) धर्मादिषूभयं पूर्वं निपततीति वक्त-व्यम् । धर्मार्थौ अर्थधर्मौ । कामार्थौ अर्थकामौ । गुणवृद्धी वृद्धिगुणौ । आद्यन्तौ अन्तादी ॥ अल्पा-च्तरम् ॥ ३४ ॥

---

१ एतदुदाहरणावच्छिन्ना, द्वन्द्वे घीत्येतच्छास्त्रोदाहरणविशिष्टा, वैशिष्ट्यञ्चाधे-यतासंबन्धेन । तथाभूता या घित्वजातिस्तदवच्छिन्ने क्वचिच्छब्दे इत्यर्थः । (र.ना.) २ अन्यस्यावधित्वेऽपीति पाठः शोभनो भाति । ( र. ना. ) ३ तस्मिन्नेवैतदु-दाहरणावच्छिन्नघित्वजात्यवच्छिन्नेऽप्रवृत्तेरित्यर्थः । (र. ना.) ४ एतदुदाहरणा-वच्छिन्नायास्तत्तद्घित्वव्यक्तयस्तद्विषयकलक्षणभेदेनेत्यर्थः । तेषाम्, लक्षणाना-मित्यर्थः । (र.ना.) ५ इदं वार्तिकं द्वन्द्वे घि, अल्पाच्तरमिति सूत्रद्वयविषयम् । अविशेषात् । अतएव पटुमृदुशुक्ला इति द्वन्द्वे घि इत्येतत्सूत्रविषयोदाहरणमिति बोध्यम् । एतद्वार्तिकस्वीकाराच्च जपहोमादिषु पुनः पुनः प्रयोगे हरिहरगुरुभ्य इति, हरिगुरुहरेभ्य इति चोभयथा प्रयोगस्य साधुत्वं सिद्धम् । ( र. ना. ) ६ इदं पूर्वनिपातान्वयि । ऋतूनामानुपूर्व्यं जन्मकृतं नक्षत्राणामुदयकृतञ्चेति भेदः । ( र. ना. ) ७ अतएव मनुः । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति । (र. ना.) ८ लघ्वेवाक्षरं यस्मिन्पदे इति सावधारणो विग्रहः । (र. ना.) ९ यागार्थमित्यर्थः । दीक्षमौण्ड्येज्योपनयननियमव्रतादेशेष्विति पच्चार्थको धातुः । (र.ना.) १० वैदिकसिद्धान्तानुसारेणोत्पत्तिक्रममाश्रित्येत्यर्थः । (र.ना.) ११ वैदिकसिद्धान्त इत्यर्थः । ( र. ना. )

द्वि० ६०

( २९० पूर्वनिपातनियमसूत्रम् ॥ २ । २ । २ आ. ९ सू. )

## ४५५ सप्तमीविशेषणे बहुव्रीहौ ॥ २।२।३५ ॥

(न्यूनतापूरणाधिकरणम्)

( १४४८ पूर्वनिपातवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम् ॥ * ॥

(भाष्यम्) बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानं कर्तव्यम् ॥ विश्वदेवः । विश्वयशाः । द्विपुत्रः । द्विभार्यः ॥

(प्रदीपः) सप्तमी ॥ ३५ ॥ विश्वदेव इति । यदा विश्वस्य विशेष्यत्वं तदेदमुदाहरणम् । विशेषणत्वे तु सूत्रेणैव सिद्धः पूर्वनिपातः ॥ द्विपुत्र इति । दिक्प्रदर्शनमेतद् ॥ अत्र हि विशेषणत्वादेव सिद्धः संख्यायाः पूर्वनिपातः । तस्माद्द्विशुक्ल इत्याद्युदाहरणम् ॥

(उद्योतः) सप्तमी ॥ ३५ ॥ यदा विश्वस्येति । देव इत्युपक्रमे तस्य तत्त्वसंभवः । विश्वं देवो यस्येति विग्रहः । न संज्ञायामिति कश्चिन्निषेधः ॥ द्विशुक्लइति । द्वौ शुक्लगुणौ यस्येत्यर्थः । अत्र हि द्वयोर्गुणवाचित्वादनियमो विशेषणत्वस्य ॥ पुत्रभार्याशब्दावपि गुणवचनाविति भाष्याशयः । जन्यपुंस्त्वधर्मभोग्यस्त्रीत्वयोर्गुणत्वादित्यन्ये ॥ ३५ ॥

( आक्षेपभाष्यम् )

अथ यत्र संख्यासर्वनाम्नोरेव बहुव्रीहिः कस्य तत्र पूर्वनिपातेन भवितव्यम् ? ॥

( समाधानभाष्यम् )

परत्वात्संख्यायाः—द्व्यन्याय त्र्यन्याय ॥

( प्रदीपः ) परत्वात् संख्याया इति । शब्दपरविप्रतिषेधात् । एवमर्थमेव च संख्यासर्वनाम्नोरिति न कृतम् ॥३५॥

( १४४९ पूर्वनिपातवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ वा प्रियस्य ॥ * ॥

( भाष्यम् ) वा प्रियस्य पूर्वनिपातो भवतीति वक्तव्यम् । प्रियगुडः गुडप्रियः ॥

( १४५० पूर्वनिपातबाधकवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम् ॥ * ॥

( भाष्यम् ) सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परा सप्तमी भवतीति वक्तव्यम् । गडुकण्ठः गडुशिराः ॥ सप्तमीवि० ॥ ३५ ॥

---

1 द्वियन्दशुक्लशब्दयोरित्यर्थः । ( र. ना. )

( २९१ पूर्वनिपातनियमसूत्रम् ॥ २ । २ । २ आ. १० )

## ४५६ निष्ठा ॥ २ । २ । ३६ ॥

( पूर्वनिपातबाधकाधिकरणम् )

( १४५१ परनिपातवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् ॥ * ॥

( भाष्यम् ) निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परा निष्ठा भवतीति वक्तव्यम् । शार्ङ्गजग्धी । पलाण्डुभक्षिती । मासजाता । संवत्सरजाता । सुखजाता । दुःखजाता ॥

( १४५२ प्रत्याख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ न वोत्तरपदस्यान्तोदात्तवचनं ज्ञापकं परभावस्य ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् । किं कारणम् ? । उत्तरपदस्यान्तोदात्तवचनं ज्ञापकं परभावस्य । यदयं जातिकालसुखादिभ्यः परस्या निष्ठाया उत्तरपदस्यान्तोदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यः—परात्र निष्ठा भवतीति ॥

( उद्योतः ) निष्ठा ॥ ३६ ॥ यदयमिति । भाष्ये । बहुव्रीहौ आच्छादनभिन्नजात्यादिभ्यः परमुत्तरपदं क्तान्तमन्तोदात्तं कृतादीन्वर्जयित्वेति सूत्रार्थः ॥ ३६ ॥

( १४५३ आक्षेपवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ प्रतिषेधे तु पूर्वनिपातप्रसङ्गस्तस्माद्राजदन्तादिषु पाठः ॥ * ॥

( भाष्यम् ) प्रतिषेधे तु पूर्वनिपातः प्राप्नोति 'अकृतमितप्रतिपन्नाः' इति, तस्माद्राजदन्तादिषु पाठः कर्तव्यः ॥

( प्रदीपः ) निष्ठा ॥३६॥ प्रतिषेधे त्विति । अकृतमितप्रतिपन्ना इति कृतादीनामन्तोदात्तत्वप्रतिषेधादन्तोदात्तविधानाज्ज्ञापितः परनिपातोपि न स्यादित्यर्थः ॥

( १४५४ पाठकर्तव्यताप्रत्याख्यानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ नवा, प्रतिषेधवचनं ज्ञापकं परभावस्य ॥ * ॥

( भाष्यम् ) न वा कर्तव्यः । अत्रापि प्रतिषेधवचनं ज्ञापकम्—परा निष्ठा भवतीति ॥

( प्रदीपः ) नवेति । उत्तरपदान्तोदात्तत्वे प्रसक्ते प्रतिषेधः क्रियते । यदि च परनिपातस्ततस्तत्प्रसङ्गो नान्यथा ॥ ३६ ॥

( १४५५ परनिपातवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ प्रहरणार्थेभ्यश्च ॥ * ॥

( भाष्यम् ) प्रहरणार्थेभ्यश्च परे निष्ठा सप्तम्यौ

भवत इति वक्तव्यम् । अस्युद्यतः मुसलोद्यतः असिपाणिः दण्डपाणिः ॥

( विप्रतिषेधाधिकरणम् )

(१४५६ द्वन्द्वेघिसूत्रादजाद्यदन्तसूत्रबलवत्त्ववार्तिकम् ॥६॥)

॥*॥ द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन ॥*॥

(भाष्यम्) "द्वन्द्वे घि"इत्यस्मात् "अजाद्यदन्तम्" इत्येतद्भवति विप्रतिषेधेन । 'द्वन्द्वे घि' इत्यस्यावकाशः—पटुगुप्तौ । 'अजाद्यदन्तम्' इत्यस्यावकाशः—उष्ट्रखरौ । इहोभयं प्राप्नोति—इन्द्राग्नी । 'अजाद्यदन्तम्' इत्येतद् भवति विप्रतिषेधेन ॥

( १४५७ द्वन्द्वेघिसूत्राजाद्यदन्तसूत्राभ्यामल्पाच्तरसूत्रबलीयस्त्ववार्तिकम् ॥ ७ ॥ )

॥ * ॥ उभाभ्यामल्पाच्तरम् ॥ * ॥

(भाष्यम्) उभाभ्याम् "अल्पाच्तरम्" इत्येतद्भवति विप्रतिषेधेन । 'द्वन्द्वे घि' इत्यस्यावकाशः—पटुगुप्तौ । 'अल्पाच्तरम्' इत्यस्यावकाशः—वाग्दृषदौ । इहोभयं प्राप्नोति—वागग्नी । 'अल्पाच्तरम्' इत्येतद्भवति विप्रतिषेधेन ॥

'अजाद्यदन्तम्' इत्यस्यावकाशः—उष्ट्रखरौ । 'अल्पाच्तरम्' इत्यस्यावकाशः—वाग्दृषदौ । इहोभयं प्राप्नोति—वागिन्द्रौ । 'अल्पाच्तरम्' इत्येतद्भवति विप्रतिषेधेन ॥ निष्ठा ॥ ३६ ॥

( २९२ पूर्वनिपातसूत्रम् ॥ २ । २ । २ आ० ११ सू. )

## ४५८ कडाराः कर्मधारये ॥ २।२।३८ ॥

( बहुवचनस्याद्यर्थकत्वबोधनाधिकरणम् )

( १४५८ वार्तिकम् ॥ ८ ॥ )

॥ * ॥ कडारादयः ॥ * ॥

( भाष्यम् ) कडारादय इति वक्तव्यम् । इहापि यथा स्यात्—गडुलशाण्डिल्यः शाण्डिल्यगडुलः । खण्डवात्स्यः वात्स्यखण्डः ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । बहुवचननिर्देशात् कडारादय इति विज्ञास्यते ॥ कडाराः ॥ ३८ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते द्वितीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

( प्रदीपः ) कडाराः ॥ ३८ ॥ बहुवचननिर्देशादिति । कडारशब्दस्यैकत्वादेकवचने कर्तव्ये साहचर्यादारोपितकडाररूपगडुलादिशब्दगतबहुत्वापेक्षो बहुवचननिर्देशो यथा छत्रिणो यान्तीति ॥ ३८ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

द्वितीयपादः समाप्तः ॥

( उद्द्योतः ) कडाराः ॥ ३८ ॥ कडारशब्दस्येति । बहुवचनसामर्थ्यादजहल्लक्षणा छत्रिण इतिवदाश्रयणीयेत्यर्थः ॥ ३८ ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

पादश्च समाप्तः ॥

१ गडुलादिशब्दानां कडारशब्देत्यादिः । ( र. ना. ) २ आरोपितं कडाररूपं येषु एवम्भूता ये गडुलादिशब्दास्तद्गतबहुत्वापेक्ष इत्यर्थः । ( र. ना. )

| | अस्मिन्पादे सूत्रसंख्या— पूर्वापराधरोत्तरं तृतीयाप्रभृतीन्यष्टादश ॥ | | | | |
|---|---|---|---|---|---|
| | पूर्वयोगः | प्रथमाह्निके | द्वितीयाह्निके | योगः | आदितः |
| व्याख्यातसूत्राणि | २६६ | १५ | ११ | २६ | २९२ |
| अव्याख्यातसूत्राणि | १५४ | ८ | ४ | १२ | १६६ |
| समुदितसूत्राणि | ४२० | २३ | १५ | ३८ | ४५८ |

वार्तिकसंख्या ।

| पूर्वयोगः | प्रथमाह्निके | द्वितीयाह्निके | योगः | सर्वयोगः |
|---|---|---|---|---|
| १३४० | ३८ | ८७ | १२५ | १४६५ |

## द्वितीयाध्यायस्य तृतीयपादे प्रथममाह्निकम् ॥

(अथ विभक्त्यर्थप्रकरणम्)

(२९३ अधिकारसूत्रम् ॥ २ । ३ । १ आ. १)

## ४५९ अनभिहिते ॥ २ । ३ । १ ॥

(अनभिहितशब्दार्थनिरूपणाधिकरणम्)

(आक्षेपभाष्यम्)

**अनभिहित इत्युच्यते । किमिदमनभिहितं नाम?॥**

(प्रदीपः) **अनभिहिते** ॥१॥ प्रत्याख्यानवादी स्ववाचानभिहितशब्दार्थमारम्भवादिनं संजल्पयितुं पृच्छति—**किमिदमिति** । अभिपूर्वस्तावद्दधातिर्बन्धनोच्चारणप्रतिपादनेषु वर्तते । **अश्वाभिधानीमादत्त** इत्यत्र बन्धनवृत्तिः । **अभिहितः श्लोक** इत्युच्चारणवृत्तिः । **अभिहितोऽर्थ** इति प्रतिपादनवृत्तिः । हिनोतेरपि गतिवृद्ध्यर्थस्याभिहितमिति भवति । तत्र वक्ष्यमाणानां कर्मादीनामर्थानां बन्धनाद्यर्थचतुष्टयासंभवात् प्रतिपादनवचन एवाभिहितशब्द आश्रयणीयस्ततः प्रयोजनाभावादनर्थकं सूत्रमिति भावः ॥

(उद्योतः) **अनभिहिते** ॥१॥ **स्ववाचेति** ॥ प्रयोजककर्त्रेत्यर्थः । करणभूतयेत्यर्थो वा । **स्वशब्देनारम्भवादी** ॥ स्वरूपार्थयोः प्रसिद्धत्वेपि तस्यानेकार्थत्वात्सिद्धान्त्यभिमतमर्थं तन्मुखेन वाचयित्वा सूत्रं प्रत्याख्यातुं प्रश्न इति भावः ॥ **अर्थचतुष्टयासंभवादिति** । तद्विषयत्वासंभवादित्यर्थः ॥

(समाधानभाष्यम्)

**'उक्तम्, निर्दिष्टम्, अभिहितम्' इत्यनर्थान्तरम् ॥ यावद् ब्रूयाद्—'अनुक्ते, अनिर्दिष्टे' इति, तावद् 'अनभिहिते' इति ॥**

(प्रदीपः) पूर्वोक्तिनामिप्रायेणाह—**उक्तमिति** । प्रतिपादितमित्यर्थः ॥ यथा **उक्तार्थानामप्रयोग** इति ॥ **यावद्ब्रूयादिति** यावत्तावच्छब्दौ निपातावभिन्नार्थत्वं प्रतिपादयतः ॥

(सूत्रप्रयोजनाधिकरणम्)

(१४५९ प्रत्याख्यानवार्तिकम् ॥ १ ॥)

**॥ * ॥ अनभिहितवचनमनर्थकमन्यत्रापि विहितस्याभावादभिहिते ॥ * ॥**

(भाष्यम्) **अनभिहितवचनमनर्थकम् ॥ किं कारणम्? । अन्यत्रापि विहितस्याभावादभिहिते । अन्यत्राप्यभिहिते विहितं न भवति ॥ क्वान्यत्र? । चित्रगुः, शबलगुः, बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति । गर्गाः वत्साः, विदाः, उर्वाः, यञञ्भ्यामुक्तत्वादपत्यार्थस्य न्याय्योत्पत्तिर्न भवति । सप्तपर्णोऽष्टापद इति समासेनोक्तत्वाद्वीप्सायां द्विर्वचनं न भवतीति ॥**

(प्रदीपः) **अनभिहितवचनमिति** । अर्थप्रत्यायनाय लोके शब्दः प्रयुज्यते स चार्थो यदा शब्दान्तरेण प्रतिपादितो भवति तदा प्रयोजनाभावाच्छब्दान्तरस्य प्रयोगेण न भाव्यम् । अक्षिनिकोचादिभिरप्यवगतेऽर्थे शब्दो न प्रयुज्यते, किं पुनः शब्दान्तरप्रतिपादितेऽर्थे ॥ **यञञ्भ्यामिति** । यञन्तेनाञन्तेन चेत्यर्थः । यञञोर्लुप्तत्वादर्थाभिधानं न संभवति ॥ **न्याय्योत्पत्तिरिति** । उत्सर्गः पूर्वाचार्यप्रसिद्ध्या **न्याय्य** उच्यते । बहुवचनोदाहरणम्—गार्ग्यो गार्ग्याविलत्र यञैव परदेशस्यावरुद्धत्वादण उत्पत्त्यभावात् । बहुवचने तु यञोर्लुप्तत्वाद्विरोधकाभावादुक्तार्थाश्रयेणैवाणोऽनुत्पत्तिः प्रतिपाद्या ॥ **सप्तपर्ण इति** । वीप्सायां विषये द्विर्वचनमुच्यते । अस्ति चेह वीप्सा सप्त सप्त पर्णान्यस्येति । समासेन तु शब्दशक्तिस्वाभाव्याद्वीप्साया गमितत्वाद् द्विर्वचनाभावः ॥

(उद्योतः) भाष्ये—**विहितस्याभावादभिहिते इति** लौकिके प्रयोगे लाघवानादरेण भवत्येव तथा प्रयोगो विहितस्य तु नेत्याशयेन ॥ तदुक्तम्—**न संभवतीति** । ताभ्यामिति शेषः ॥ कस्यापि तद्धितस्यान्यायेनोत्पत्त्यसंभवाद् व्यर्थं विशेषणमत आह—**उत्सर्ग इति** ॥ **विरोधकाभावादिति** । परदेशरोधकाभावादित्यर्थः ॥ **अणिति** । इदमुपलक्षणमिञ इति बोध्यम् ॥ सप्तपर्णशब्दे समासे द्वित्वाभावात्कथं वीप्सावगतिस्तत्राह—**समासेन त्विति** ।

(प्रथमदृष्टान्तनिरसनभाष्यम्)

**यत्तावदुच्यते—चित्रगुः शबलगुरिति बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवतीति ॥ अस्तिसामानाधिकरण्ये मतुब्विधीयते । न चात्रास्तिना सामानाधिकरण्यम् ॥**

(प्रदीपः) आरम्भवादी दृष्टान्तेष्वन्यथा साध्यसिद्धिं प्रतिपादयितुमाह—**यत्तावदिति** ॥ **न चात्रास्तिनेति** । वर्तिपदयोरन्यपदार्थे उपसंक्रान्तत्वादस्त्यर्थस्य तत्रैवान्तर्भूतत्वात् स्वार्थस्य संसृष्टत्वादस्तिसामानाधिकरण्याभावः ॥ यदा त्वन्यपदार्थेन तद्वत्ता प्रतिपिपादयिषिता तदा चित्रगुमानिति भवत्येव ॥

(उद्योतः) ननु सर्वथोक्तार्थानामप्रयोग इति न्याये सति सूत्रारम्भानुपपादनात्किं यत्तावदिति ग्रन्थेनात आह—**आरम्भवादीति** । तथा च तन्न्याये फलाभावेन तन्न्यायसत्त्वे न मानमित्यभिमानः ॥ भाष्ये—**नचात्रास्तिनेति** । वर्तिपदार्थानामन्यपदार्थेन संसृष्टत्वात्पृथक्त्वाभावेन बहिर्भूतास्तिसामानाधिकरण्यायोजना । (र. ना.)

१ कर्मादीनामर्थानां बन्धनाद्यर्थचतुष्टयासंभवरूपेणेत्यर्थः । (र. ना.)

२ अपत्यार्थस्य यञञ्भ्यामुक्तत्वान्न्याय्यस्येण उत्सर्गस्य उत्पत्तिर्न भवतीति

३ वीप्सायाः समासेनोक्तत्वादिति योजना । (र. ना.)

भाव इति भावः ॥ यत्तु कैयटेनास्त्यर्थस्य तत्रैवान्यपदार्थे एवान्तर्भूतत्वादित्युक्तम्, तदनुपयुक्तम्, बहुव्रीहावस्त्यर्थानन्तर्भावस्य मतुप्सूत्रे भाष्ये उक्तत्वात्। तत्र हि—तद्धितार्थद्वित्वपेक्षया पञ्चगुरित्यादौ बहुव्रीहेरन्तरङ्गत्वमुक्तम्—'विशिष्टस्य षष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थोऽवश्यापेक्ष्यो द्विगुना। षष्ठ्यर्थमात्रापेक्षस्तु बहुव्रीहिः' इति कैयटः॥ स्वार्थस्य संसृष्टत्वादिति। अन्यपदार्थेनेति शेषः। स्वार्थो वर्तिपदार्थः। अत्रोपसंक्रान्तत्वं हेतुः। तच्च नियमेन विशेषणत्वम् ॥

**( द्वितीयदृष्टान्तनिरसनभाष्यम् )**

**यदप्युच्यते—गर्गा वत्सा बिदा उर्वा इति यञञ्ञ्यामुक्तत्वादपत्यार्थस्य न्याय्योत्पत्तिर्न भवतीति॥ "समर्थानां प्रथमाद्वा" इति वर्तते। न चैतत्समर्थानां प्रथमम्। किं तर्हि?। द्वितीयमर्थमुपसंक्रान्तम् ॥**

( प्रदीपः ) न चैतदिति। समर्थानां प्रथमादित्यधिकारादपत्यवद्वाचिनः षष्ठ्यन्तात् प्रत्ययेन भाव्यं न त्वपत्यवाचिनः। यञञोस्तु लुकि कृते प्रकृतिरेवापत्यार्थाभिधायिनीति अण् न भवतीत्यर्थः ॥

( उद्योतः ) भाष्ये द्वितीयमर्थमुपसंक्रान्तमित्यस्य तस्यापत्यमितिसूत्रस्थद्वितीयपदवाच्यमर्थमित्यर्थं इत्याशयेनाह—समर्थानामिति ॥

**( तृतीयदृष्टान्तनिरसनभाष्यम् )**

**यदप्युच्यते—सप्तपर्णोऽष्टापद इति समासेनोक्तत्वाद् वीप्साया द्विर्वचनं न भवतीति ॥ यदत्र वीप्सायुक्तं नादः प्रयुज्यते॥ किं पुनस्तत्?। पर्वणि पर्वणि सप्त पर्णान्यस्य। पङ्क्तौ पङ्क्तावष्टौ पदानीति॥**

( प्रदीपः ) यदत्रेति। वीप्स्यमानार्थाभिधायिनः पदस्य द्विर्वचनं विधीयते। पर्वार्थस्य वीप्सायोगः, न चात्र पर्वशब्दस्य प्रयोगः ॥

( उद्योतः ) नचात्रेति। सप्तपर्णशब्दस्तु तादृशे वृक्षविशेषे रूढ इति भावः॥ भाष्ये—पङ्क्तौ पङ्क्ताविति। अष्टापदं शारिफलमित्यमरः ॥

**( दृष्टान्तान्तरभाष्यम् )**

**श्नम्बहुजकस्तु तर्हि। श्नम्—भिनत्ति छिनत्ति। श्नमोक्तत्वात्कर्तृत्वस्य कर्तरि शब् न भवति॥ बहुच्—बहुकृतं बहुभिन्नमिति बहुचोक्तत्वादीषदसमाप्तेः कल्पबादयो न भवन्ति॥ अकच्—उच्चकैः नीचकैरिति अकचोक्तत्वात्कुत्सादीनां कादयो न भवन्ति॥**

**श्नमोक्तत्वादिति।** भावकर्मकर्तारो विकरणार्था इति पूर्वाचार्यदर्शनमाश्रित्यैवमुक्तम् ॥

( उद्योतः ) पूर्वाचार्येति। स्वमते तु विकरणा द्योतका इत्यभिमानः[4]। वस्तुतो बहुजकचोरपि द्योतकत्वाद् द्योतकविषयेप्ययं न्यायः। द्योतकविषयेपि एकेन द्योतिते उक्तार्थानामिति न्यायेनापरद्योतकाभाव इति बोध्यम् ॥

**( दृष्टान्तबाधकभाष्यम् )**

**ननु च श्नम्बहुजकचोपवादास्ते अपवादत्वाद्बाधका भविष्यन्ति॥**

( प्रदीपः ) अत्राप्यन्यथासिद्धिमाह—नन्विति। तत्रश्नोक्तत्वस्य दृष्टान्ताभावादहेतुत्वम् ॥

**( १४६० दृष्टान्तसाधकवार्तिकम् ॥ २ ॥ )**

**॥ * ॥ श्नम्बहुजकस्तु नानादेशत्वाद् उत्सर्गाप्रतिषेधः ॥ * ॥**

**( व्याख्याभाष्यम् )**

**समानदेशैरपवादैरुत्सर्गाणां बाधनं भवति। नानादेशत्वान्न प्राप्नोति॥**

( प्रदीपः ) नानादेशत्वादिति। विरोधो बाधकारणम्, न विशेषविधानमेव। वार्तिककारस्य चेदं दर्शनम्॥ भाष्यकारस्तु विरोधाभावेपि विशेषविधानमात्रेणैव बाधकत्वमन्यत्रावोचत्। तक्रदानं च दधिदानस्य विरोधाभावेपि लोके बाधकं दृश्यते। तदेवं श्नमादिदृष्टान्तावष्टम्भेन हेतुत्वमुक्तत्वस्य व्यवस्थापितम् ॥

( उद्योतः ) भाष्यकारस्त्विति। येननाप्राप्ते यो विधिरारभ्यते स तस्यापवाद इति लक्षणानुसारेण तक्रकौण्डिन्यन्यायमूलकेन सत्यपि सम्भवे बाधनमिति तद्भावः। तन्मतेऽप्ययं न्याय आवश्यकः। यथोक्तम्—समासेनाभिहितः सुजर्थ इति द्विदशा इत्यादौ सुजेति ॥

**( सूत्रप्रयोजनकथनाधिकरणम् )**

**( आरम्भवादिभाष्यम् )**

**किं पुनरिहाकर्तव्योनभिहिताधिकारः क्रियते। आहोस्विदन्यत्र कर्तव्यो न क्रियते?॥**

( प्रदीपः ) इदानीमारम्भवादी पक्षान्तरमाश्रयिष्यामीति पृच्छति—किं पुनरिति॥ आहोस्विदन्यत्रेति। अपूपौ द्वावित्यभिहितेपि प्रत्ययेन द्वित्वे द्विशब्दस्य प्रयोगदर्शनात् श्नमादिभिरभिहिते शबादिनिवृत्त्यर्थः कर्तव्यः सन्न क्रियत इत्यर्थः ॥

( उद्योतः ) इदानीमिति। दृष्टान्तानामन्यथासिद्धिपरिहारे जात इत्यर्थः ॥

**( प्रत्याख्यानवादिभाष्यम् )**

**इहाकर्तव्यः क्रियते। एष एव हि न्याय्यः—यदभिहिते विहितं न स्यात्॥**

---

१ अत्र समर्थानामित्यस्य प्रथममित्यनेन सामानाधिकरण्यात् समर्थमित्येवं विपरिणामः। यथा प्रथमादित्यनेन सामानाधिकरण्यात् समर्थादित्येवं विपरिणामः क्रियते। तथा चैतत्समर्थं, गर्गा इत्यादिरूपं समर्थं प्रथमं, प्रथमपदबोध्यार्थबोधकं न चेत्यर्थः। किन्तु द्वितीयपदबोध्यापत्यार्थबोधकमित्यर्थः।

( र. ना. ) २ 'पदान्यस्य'। ३ पङ्क्त्यर्थस्येत्यपि बोध्यम्। ( र. ना. ) ४ अभिमानोक्तिबीजमेव प्रकटयति—वस्तुत इत्यादिना। ( र. ना. ) ५ इदं संबोधने। ( र. ना. ) ६ 'बहुकचो'। ७ 'त्वस्य स्थापितम्'। ८ भाष्यकारमतेऽपि उक्तार्थानामप्रयोग इति न्याय आवश्यक इत्यर्थः। ( र. ना. )

(प्रदीपः) प्रत्याख्यानवाद्याह—**इहाकर्तव्य इति**। अपूपौ द्वावित्यादौ तु गतार्थस्यापि द्विशब्दस्य लोके प्रयोगो दृश्यते । अन्यस्य तु गतार्थस्य प्रयोगाभावः प्रयोजनाभावादेव सिद्धः ॥

(उद्द्योतः) **अन्यस्य त्विति** । शास्त्रविहितस्येत्यर्थः । लौकिके प्रयोगे लाघवानादरादिति भावः । एवमेव व्यतिलुनीत इत्यत्रापि समावेशः । तत्र हि पूर्वमात्मनेपदं ततः स्पष्टं तत्प्रतीतये व्यतिप्रयोगोपि । अपूपावित्यत्र द्विवचनं तु विरुद्धविभक्त्यपेक्षयानुवादकविभक्तेर्न्यायसिद्धत्वात्कृतम् ॥ भाष्ये विहितं न स्यादिति । न भवितुमर्हतीत्यर्थः । अर्हे कृत्यतृचश्चेति चादर्हे लिङ् ॥

(१४६१ आरम्भवादिसमाधानवार्तिकम् ॥ ३ ॥)

## ॥ ॐ ॥ अनभिहितस्तु विभक्त्यर्थस्तस्मादनभिहितवचनम् [[1]अभिहिते हि प्रथमाभावः] ॥ ॐ ॥

(भाष्यम्) **अनभिहितस्तु विभक्त्यर्थः ॥ कः पुनर्विभक्त्यर्थः ? । एकत्वादयो विभक्त्यर्थाः ॥ तेष्वनभिहितेषु[[1]सत्सु]कर्मादयोभिहिता विभक्तीनामुत्पत्तौ निमित्तत्वाय मा[2] भूवन्निति ॥ तस्मादनभिहितवचनम् ॥ तस्मादनभिहिताधिकारः क्रियते ॥ अवश्यं चैतदेवं विज्ञेयम्—एकत्वादयो विभक्त्यर्था इति ॥ अभिहिते हि प्रथमभावः । यो हि मन्यते—कर्मादयो विभक्त्यर्थाः, तेष्वभिहितेषु सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्न भविष्यतीति । प्रथमा तस्य न प्राप्नोति ॥ क ? । वृक्षः प्लक्षः ॥ किं कारणम् ? । प्रातिपदिकेनोक्तः प्रातिपदिकार्थ इति ॥**

(प्रदीपः) इदानीमेकत्वादीनां विभक्त्यर्थत्वमाश्रित्य सूत्रं समर्थयितुमाह—**अनभिहितस्त्विति । कर्मणि द्वितीये**त्यादेर्बहुषु **बहुवचन**मित्यादिनैकवाक्यता । तत्र यदैकत्वादीनि विशेषणानि कर्मादीनि विशेष्याणि एकस्य यत्कर्म तत्र द्वितीयैकवचनमिति, तदा कर्म द्वितीयार्थः संपद्यते । तच्च यदा कृदादिभिरभिहितं भवति, तदा गतार्थत्वाद् द्वितीयायाः प्राप्तिरेव नास्तीति नार्थोनभिहिताधिकारेण ॥ यदा तु कर्मादीनां विशेषणत्वमेकत्वादीनां विशेष्यत्वं कर्मणो यदेकत्वादि तत्र द्वितीयेति, तदैकत्वादयो विभक्त्यर्थाः संपद्यन्ते । ते चाभिहितेष्वपि कृतादिभिः कर्मादिष्वनभिहिता इति तदभिधानाय द्वितीयादीनां प्रसङ्गे तन्निवारणाय कर्तव्योनभिहिताधिकारः ॥ **कर्मणि द्वितीये**त्यादौ कर्मादीनां श्रुतत्वात्तेषामेव विभक्त्यर्थत्वेन भाव्यमिति मत्वा पृच्छति—**कः पुनरिति । एकत्वादय इति । कर्मणि द्वितीये**त्यादिसप्तमीनिर्देश एकत्वाद्यपेक्षः—कर्मणि यदेकत्वादि तत्र द्वितीयेति, न त्वभिधेयप्रतिपादनाय ॥ **निमित्तत्वायेति** । कर्माद्याश्रितानामेकत्वादीनामपि विभक्त्यर्थत्वे पारम्पर्येण कर्मादीनां निमित्तभावोस्त्येवेत्यभिप्रायेणैतदुक्तम् ॥ **अभिहित इति** । यदा वक्ष्यमाणानां कर्मादीनां विभक्त्यर्थत्वं तदा प्रातिपदिकार्थेनापि प्रथमार्थेन भाव्यं, तस्य च प्रातिपदिकेनैवोक्तत्वाद् वृक्ष इत्यादौ प्रथमा न प्राप्नोति । एकत्वादीनां तु विभक्त्यर्थत्वे तदभिधानाय प्रथमा प्रवर्तत एवेति दोषाभावः ॥

(उद्द्योतः) **एकत्वादीनामिति** । संख्यावाक्य[3]विभक्तिविधानयोरेकवाक्यत्वपक्षे एकत्वादीनां विशेष्यत्वमवलम्ब्येत्यर्थः ॥ आदिना द्वित्वादि । तदाह—**कर्मणीति** ॥ **एकस्य यदिति** । एकत्वस्याश्रयो यत्कर्मेत्यर्थः । द्व्येकयोरिति षष्ठीति भावः ॥ परे त्विदं चिन्त्यं, बहुष्वित्यत्र सप्तमीदर्शनेन द्व्येकयोरित्यस्यापि सप्तमीत्वौचित्यात् । तस्मात्प्रातिपदिकार्थस्यैकत्वे सति तद्गतकर्मत्वशक्तौ द्वितीयैकवचनमित्यर्थ उचितः । अयं च "चतुष्कं संख्यान्तं प्रातिपदिकार्थ"इति पक्षे त्रिकपक्षे तु कर्मणि द्वितीया भवतीत्येवार्थोस्य सूत्रस्य, ततः कर्मण एकत्वे तदेक[4]वचनमित्यर्थः संख्याबोधकस्य । इदमेवाभिप्रेत्याग्रे एतन्मते कर्मण एकत्वे इत्यादिक्रमेणार्थं दर्शयिष्यति भगवानित्याहुः ॥ **नार्थ इति** । प्रधानार्थस्योक्तत्वेन विशेषणीभूतार्थानुक्तावपि ते[5]न न्यायेनातिप्रसङ्गविरहात्, तन्मा[6]त्रबोधनस्य प्रथमया सिद्धत्वाच्चेति भावः ॥ **तदभिधानायेति** । उक्तार्थानामिति न्यायस्तु प्रधानार्थविषय इति भावः ॥ **तेषामेवेति** । तथा च संख्याया विभक्त्यर्थत्वमसम्भावितमिति भावः ॥ **सप्तमीनिर्देश इति** ॥ ननु द्वितीयायाः सूत्रे श्रुतत्वात्तदपेक्षयैव सप्तमी उचिता न त्वेकत्वापेक्षया, किं च संख्यायाः प्रायेण विशेषणत्वस्यैव दृष्टत्वाद् 'एकत्वविशिष्टे कर्मणि' इत्येवार्थ उचित इति चेत् ॥ न, कारकस्य प्रातिपदिकार्थत्वेन तत्र विधानां[7]नुपयोगाच्छुद्धनियमार्थत्वापेक्षया एकत्व[8]विशेषणतया विधित्वद्वारा आर्थनियमस्यापि सिद्धिरिति विधित्वाय तथैवान्वय उचितं[9] इत्याशयात् । तत्र पक्षे यथा प्रातिपदिकेनोक्ते द्वितीयादयो भवन्ति तथा तिङाद्यभिहितेपि स्युरित्येतदर्थं स आवश्यकः ॥ **एकत्वादय** इत्यस्य ते एवेत्यर्थः । एवं च संख्यारहितं चतुष्कं प्रातिपदिकार्थ इति पक्षे सूत्रमावश्यकमित्युक्तं भवति ॥ तदितरपक्षेषु च न कर्तव्यमिति ॥ पञ्चकपक्षेपि सूत्रमावश्यकमिति **बहुष्विति**सूत्रे भाष्यकैयटयोः स्पष्टम् ॥ पञ्चकपक्षे सुपां द्योतकत्वाद्वाचकयोर्द्योतकयोश्च समुच्चयस्य दृष्टत्वादन्याभिहितेपि स्यादतः स आवश्यकः ॥ वस्तुतस्तु **एकत्वादयो विभक्त्यर्था** इत्यस्य सूत्रे प्राधान्येन विभक्तिद्योत्यत्वेन बोधिता इत्यर्थः । एवं **कर्मादयो विभक्त्यर्था** इत्यस्यापि । यद्यपि द्योतकविषये क्वचिद् **द्विर्बद्धं सुबद्ध**मितिन्यायेन समावेशो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामित्येवाश्रीयते । परंतु अयं न्यायः सूत्रोक्तप्रधानविषय इति भावः । **उक्तार्थाना**मिति न्यायस्य द्योतकविषयेपि सञ्चारो दृश्यतेऽ**धिपरी**इति सूत्रे भाष्ये । अपुपौ द्वावित्यादौ व्यभिचारश्च तत्रैवोक्तः ॥ ननु प्राधान्यादेकत्वादीनामेव

१ कोष्ठकान्तर्गत[तो वार्तिकांश]पाठो बहुत्र नोपलभ्यते । २ न स्युरित्यर्थः । (र. ना.) ३ संख्या वाक्यं द्व्येकयोरित्यादि, विभक्तिविधायकं कर्मणि द्वितीयेत्यादि तयोरित्यर्थः । (र. ना.) ४ द्वितीयैकवचनमित्यर्थः । (र. ना.) ५ उक्तार्थानामप्रयोग इति न्यायेनेत्यर्थः । (र. ना.) ६ विशेषणीभूतसंख्यारूपार्थमात्रबोधनस्येत्यर्थः । (र. ना.) ७ उक्तार्थानामप्रयोग इति न्यायेनेत्यादिः । इदं पञ्चम्यन्तं शुद्धनियमार्थत्वे हेतुः । (र. ना.) ८ कर्मण एकत्वे विशेषणतयाऽस्य शास्त्रस्य विधित्वद्वारा कर्मांशे आर्थं नियमस्यापि सिद्धिरित्यर्थः । (र. ना.) ९ विधिनियमसंभवे विधिरेव ज्यायानिति परिभाषयेत्यर्थः । (र.ना.)

निमित्तत्वं न कर्मादीनामत आह—**कर्माद्याश्रितानामिति** ॥ **माभूवन्निति**ति । वाक्यसमाप्तावितिशब्दः । भाष्ये—**तेष्वभिहितेषु सामर्थ्यादिति** । सामर्थ्यमत्रोक्तार्थानामप्रयोगरूपम् । स्वपक्षे नायं दोष इत्याह—**एकत्वादीनां त्विति** ॥

( प्रत्याख्यानवादिभाष्यम् )

**न क्वचित्प्रातिपदिकेनानुक्तः प्रातिपदिकार्थः । उच्यते च प्रथमा । सा वचनाद्भविष्यति ॥ तत्रैव तु खल्वेष दोषः—यस्य ते एकत्वादयो विभक्त्यर्थाः । 'अभिहिते प्रथमाऽभाव' इति प्रथमा ते न प्राप्नोति । क्व? । पचत्योदनं देवदत्त इति ॥ किं कारणम्? । तिङोक्ता एकत्वादय इति । अनभिहिताधिकारं च त्वं करोषि, परिगणनं च ॥**

( प्रदीपः ) प्रत्याख्यानवाद्याह—**न क्वचिदिति** । वचनसामर्थ्यात् प्रातिपदिकेनोक्तेपि तदर्थे प्रथमा भविष्यति । द्वितीयादयस्त्वनभिहिते कर्मादौ सावकाशत्वादभिहिते न भविष्यन्ति ॥ **तिङोक्ता इति** । अनभिहितैकत्वाद्यभिधानाय तव विभक्तिविधानम् । पचतीति च कर्तुरेकत्वं तिङाभिहितमिति प्रथमा न स्यादित्यर्थः ॥ **परिगणनं चेति** । तिङ्कृत्तद्धितसमासैरित्येतत् । अत्र च तिङास्यैकत्वस्याभिधानमिति प्रथमाया अप्रसङ्गः ॥

( उद्द्योतः ) द्वितीयादिषु वैषम्यं दर्शयति—**द्वितीयादयस्त्विति** ॥ **अनभिहितैकत्वाद्यभिधानायेति** । प्रातिपदिकार्थसूत्रे उपस्थितानभिहित इत्यस्य प्रातिपदिकार्थविशेषणत्वासम्भवेनैकत्वादिविशेषणत्वमिति भावः ॥ **कर्तुरेकत्वमिति** । येपि क्रियायामेव तिङ्वाच्यकारकगतसंख्यामारोप्य तत्रैव तिङर्थसंख्यान्वय इति वदन्ति, तेषामपि आरोपमूलतया सोक्तिप्रायैवेति बोध्यम् । अन्यथा तिङर्थाश्रयगताया उक्तत्वेपि चैत्रत्वविशिष्टरूपनामार्थगताया अनुक्तत्वेन तदसंगतिरेव स्यात् । न च क्रियायाः स्वत एकत्वेन तदारोपानपेक्षत्वेन कर्तृगतैकत्वस्य कथमुक्तत्वम् । तस्यापि साधने द्वित्वाद्यभावबुद्धिनिमित्तक तदनारोपे सत्त्वात् । अन्यथा पचत इत्यादौ द्विवचनाद्यनापत्तिः । ममैं तु आरोपितयाप्युत्तरया संख्यया पूर्वसंख्याया बाधान्न दोषः, आवृत्तिगतसंख्यारोपेण सहस्रदक्षिणत्वादिवत् । एवं च द्वित्वाद्यभावबुद्धौ द्रव्यस्य निःसंख्यत्वाभावेन साधने एकत्वमवगतमेवेति भाष्याशयात् ॥ ननु तिङ्सुपोर्युगपत्प्रवृत्तेर्वक्तुं शक्यत्वेन **तिङोक्ता** इत्यसंगतमत आह—भाष्ये—**परिगणनं चेति** । तथा च तिङ्कृदित्यादिपरिगणनबोधितापवादविषयपर्यालोचनया तिङुत्पत्तिपर्यन्तं सुप् प्रतीक्षत इत्यर्थः ॥

( आरम्भवादिभाष्यम् )

**न क्वचित्तिङा एकत्वादीनामनभिधानम् । उच्यते च प्रथमा । सा वचनाद्भविष्यति ॥**

( प्रदीपः ) आरम्भवाद्याह—**न क्वचिदिति** । सर्वत्र च पदमपेक्षितक्रियापदमेव प्रयुज्यते ॥ **उच्यते चेति** । प्रादिपदिकार्थसूत्रेणेत्यर्थः ॥

( उद्द्योतः ) **अस्तिर्भवन्तीपर** इत्यस्य न्यायसिद्धत्वमाह—**सर्वत्रेति** ॥ **द्व्येकयो**रिति सूत्रस्यान्यत्र सावकाशत्वात्सामर्थ्यासिद्धिमाशङ्क्याह—**प्रातिपदिकार्थसूत्रेणेति** ॥

( प्रत्याख्यानवाद्याक्षेपभाष्यम् )

**ननु चेहानभिधानम्—वृक्षः प्लक्षः इति ॥**

( आरम्भवादिसमाधानभाष्यम् )

**अत्राप्यभिधानमस्ति ॥ कथम्? । वक्ष्यत्येतद्—"अस्तिर्भवन्तीपरःप्रथमपुरुषोऽप्रयुज्यमानोप्यस्ति" इति । वृक्षः प्लक्षः 'अस्ति' इति गम्यते ॥ तत्रैव तु खल्वेष दोषः—[ यस्य ते कर्मादयो विभक्त्यर्थाः ] अभिहिते प्रथमाँभाव इति प्रथमा ते प्राप्नोति । क्व? । कटं करोति भीष्ममुदारं शोभनं दर्शनीयमिति । कटशब्दादुत्पद्यमानया द्वितीययाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति ॥ का तर्हि प्राप्नोति? । प्रथमा ॥ तद्यथा—'कृतः कटो भीष्म उदारः शोभनो दर्शनीयः' इति करोतेरुत्पद्यमानेन केनाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न भवति । का तर्हि? । प्रथमा भवति ॥**

( प्रदीपः ) **भवन्तीपर इति** । लट्पर इत्यर्थः । ततश्च वृक्ष इत्यत्रापि तिङैकत्वस्याभिधानादनवकाशत्वात्तिङाऽभिहितेऽप्येकत्वादौ प्रथमा भवति ॥ एवमारम्भवादी स्वपक्षे दोषं परिहृत्य परपक्षे तमुद्भावयति—**तत्रैवेति** । **भीष्ममिति** । भीष्मादिविशेषणविशिष्टस्य कटस्य करोतिक्रिययेप्सिततमत्वात्कर्मत्वम्, तच्च कटशब्दादुत्पन्नया द्वितीययाभिहितमिति भीष्मादिभ्यो द्वितीयाया अप्रसङ्गात् प्रथमा प्राप्नोति । आरम्भवादिनस्तु परिगणनात् कटशब्दादुत्पन्नया द्वितीययाभिहितेऽपि कर्मणि भीष्मादिभ्यो द्वितीया सिध्यतीति न दोषः ॥

( उद्द्योतः ) **अभिहिते प्रथमाभाव इति** भाष्यस्याभिहिते प्रथमाया भावस्य प्रवृत्तेस्त्वयाङ्गीकारादित्यर्थः ॥ भीष्मादीनामपि कर्मत्वात्कथं प्रथमाप्राप्तिरत आह—**विशेषणविशिष्टस्य कटस्येति** । प्रधानगतकर्मत्वोक्तौ विशिष्टगतमपि तदुक्तमेव विशिष्टस्य तदपेक्षयातिरिक्तत्वाभावादिति शङ्कितुरभिमानः ॥ आरम्भे दोषाभावमाह—**आरम्भवादिनस्त्विति** ॥

( प्रत्याख्यानवादिभाष्यम् )

**नैष दोषः । न हि ममानभिहिताधिकारोस्ति । नापि परिगणनम् । सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्भविष्यति । अस्ति च सामर्थ्यम् । किम्? । कर्मविशेषो वक्तव्यः ॥**

---

१ तिङर्थकर्तृगतसंख्योक्तमायैवेत्यर्थः । (र. ना.) २ वस्तुगत्याऽभिधानेऽपि शब्दतोऽनभिधानस्याश्रयणे इत्यर्थः । ( र. ना. ) ३ देवदत्तचैत्रादिगतसंख्याऽभिधानस्य प्रकृतभाष्योक्तस्यासंगतिरित्यर्थः । ( र. ना. ) ४ क्रियायाः स्वत एकत्वस्यापि साधने क्रियायां द्वित्वाद्यभावबुद्ध्या तन्निमित्तके क्रियायां कर्तृगतद्वित्वाद्यनारोपे कर्तृगतद्वित्वाद्यभिधानस्य देवदत्तयज्ञदत्तौ पचत इत्यादौ सत्त्वादित्यर्थः । ( र.ना. ) ५ क्रियायां तिङर्थगतसंख्यारोपवादिनो ममेत्यर्थः । पूर्वसंख्याया इति । क्रियागतस्वाभाविकैकत्वसंख्याया इत्यर्थः । (र.ना.) ६ क्रियायां द्वित्वाद्यभावबुद्धौ कर्तृगतद्वित्वादेस्तत्रारोपस्वीकारे समानन्यायादेकत्वस्यापि कर्तृगतस्यैव तत्रारोप इति क्रियाया निःसंख्यत्वेऽपि द्रव्यस्य निःसंख्यत्वाभावेनेत्यर्थः । ( र. ना. ) ७ प्रथमायाः प्रवृत्तिरित्यर्थः । ( र. ना. )

**अथ वा कटोपि कर्म, भीष्मादयोपि । तत्र 'कर्मणि' इत्येव सिद्धम् ॥**

**अथवा कट एव कर्म, तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीया भविष्यति ॥**

**अस्ति खल्वपि विशेषः—कटं करोति भीष्ममुदारं दर्शनीयं शोभनमिति च 'कृतः कटः भीष्म उदारः शोभनो दर्शनीय इति च करोतेरुत्पद्यमानः क्तः अनवयवेन सर्वं कर्माभिधत्ते, कटशब्दात्पुनरुत्पद्यमानया द्वितीयया यत् कटस्थं कर्म तत् शक्यमभिधातुं न कर्मविशेषः ॥**

**तवैव तु खल्वेष दोषः [ यस्य ते एकत्वादयो विभक्त्यर्थाः ] 'अभिहिते प्रथमाऽभावः' इति प्रथमा ते न प्राप्नोति । क ? । एको द्वौ बहव इति । किं कारणम् ? । प्रातिपदिकेनोक्ता एकत्वादय इति ॥**

(प्रदीपः) **कर्मविशेष इति ।** भीष्मादियुक्तकटसंबन्धि कर्मत्वं प्रतिपाद्यम् । तत्र च यथा कटशब्देन भीष्मत्वादीनामनभिधानात्तदभिधानाय भीष्मादिशब्दप्रयोगः तथा द्वितीयापि तेभ्यो भविष्यति । नह्यन्यथा तद्विशिष्टत्वं कटस्य प्रत्याययितुं शक्यते ॥

**अथ वेति ।** यद्यत्करोतिक्रियया प्राप्तुमिष्टतमं तत् सर्वं कर्म-द्रव्यं गुणश्च । न ह्यसौ कटमात्रेण संतुष्यति । तत्र करोतिक्रियायां पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः, पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभावः ॥

यद्यपि गुणद्रव्ययोः करोतिना संबन्धस्तथापि तमप्श्रुत्या प्रकर्षस्याश्रितत्वाद् द्रव्यस्यैव क्रियान्तर उपयोक्ष्यमाणत्वादीप्सिततमत्वात्तस्यैव कर्मसंज्ञा, न गुणस्येति मत्वाह—**अथ वेति । तत्सामानाधिकरण्यादिति ।** भीष्मादीनां स्वयमकर्मत्वेपि विशेष्यसंबन्धिन्यैव विभक्त्या भाव्यम् । तदेकयोगक्षेमत्वात् । केवलानां च प्रातिपदिकानां **परश्चेति** नियमादप्रयोगार्हत्वात् । ततो यथेश्वरसुहृदः स्वयं निर्धना अपि तदीयेन धनेन तत्फलभाजः एवं गुणा अपि ॥

क्तप्रत्ययेन द्वितीयाया वैधर्म्यं दर्शयति—**अस्ति खल्वपीति ॥ अनवयवेनेति ।** साकल्येन ॥ **सर्वमिति ।** भीष्मादिगुणगतमपीत्यर्थः ॥ **कटस्थमिति ।** प्रातिपदिकार्थगताया एव कर्मशक्तेर्वाचिका द्वितीयेत्यर्थः ॥ **न कर्मविशेष इति ।** भीष्मादिगुणगतं कर्मत्वमभिधातुं न शक्यमित्यर्थः ॥

एवं युक्त्या प्रत्याख्यानवादी स्वपक्षे दोषं परिहृत्य परपक्षे दूषणमाह—**तवैवेति ॥ एष दोष इति ।** वक्ष्यमाणः ॥ **प्रातिपदिकेनोक्ता इति ।** अनभिहितैकत्वाद्यभिधानाय तव विभक्तिविधानं तानि चैकादिभिरेवोक्तानीति प्रथमाया अप्राप्तिः ॥

(उद्योतः) भाष्ये—**सामर्थ्यादिति ।** भीष्मादिपदानामपि द्वितीयोत्पादकसामर्थ्यसत्त्वादित्यर्थः । विशिष्टस्य कर्मत्वे विशेषणस्यापि द्वितीयोत्पादककर्मत्वशक्तिरूपसामर्थ्यवत्त्वम् । अन्यथा विशिष्टं कर्मेत्युक्तिव्याघातः । तच्च न कटपदोत्तरद्वितीययाभिहितमिति भावः ॥ तदाह—**तत्र च यथेत्यादिना ।** विशिष्टगतैककर्मत्वप्रतिपादनेच्छायामयं प्रयोगः, तत्प्रतिपादनं च नोभयत्र द्वितीयां विनेति भावः ॥ अत्र पक्षे भीष्मपदात् कर्मत्वाद्यनालिङ्गितशुद्धगुणस्यैवोपस्थितिरितरस्य तद्वैशिष्ट्यप्रतीतौ पश्चाद्विशिष्टस्यैककर्मत्वशक्तिमत्त्वोपस्थितिः । तथोपस्थितौ च भीष्माद्युत्तरद्वितीयापि सहकारिणीति तात्पर्यम् । तदाह—**नत्वन्यथेति । तद्विशिष्टत्वं** कटस्येत्यनन्तरं विशिष्टस्य कर्मत्वं चेति शेषः । यथा कटं करोतीत्यत्र विशिष्टकर्मत्वं न प्रतीयते । एवं भीष्मः कटं करोतीत्यत्रापि विभिन्नविभक्तित्वाद्विशिष्टाप्रतीत्या तन्न प्रतीयत इति भावः ॥

**पश्चादिति ।** तथा च न विशिष्टस्य कर्मत्वं किं तु क्रियायां कर्मत्वेनान्वितयोर्मनसा विशेषणविशेष्यभावबोध इति भाव इत्येके ॥ परे तु साक्षात्फलाश्रयादेरपि द्रव्यद्वारा फलाश्रयादेरपि कर्मत्वादिकम् । एवं च भीष्मस्यापि पृथक्कर्मशक्तिविशिष्टस्यैव बोधनं भीष्मपदात् । द्रव्येणाभेदान्वयात्तु तस्याः शक्तेर्वाक्यार्थबोधे विशिष्याग्रहः, भीष्मकटयोर्बोधश्च विशेषणविशेष्यभावेनैव । कारकाणां भावनान्वय इत्यस्य च साक्षात् स्वशक्तिनियामकाश्रयद्वारा वेत्यर्थात्तद्विरोधः ॥ तदेव ध्वनयन् कैयट आह—**क्रियायां पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभाव इति । पश्चादि**त्यस्य द्वितीयोत्पत्त्यनन्तरमित्यर्थः । अक्षरस्वारस्यात् ॥ **पृथक् सर्वेषां कर्मत्वे** इत्यस्य च साक्षात्परम्परया वेति शेषः ॥ **द्रव्यगुणयोः करोतिना संबन्ध** इत्यत्रापि स एव शेषः पूरणीयः । संबन्धश्च तदर्थफलाश्रयत्वरूपः ॥ एतेनात्र पक्षे प्रथमं सर्वेषां भावनान्वयः, पश्चात्पार्ष्णिकः परस्परं मनसा विशेषणविशेष्यभावबोध इति परास्तम् ॥ ज्ञानद्वयकल्पनागौरवाच्चाननुभवाच्च । **एकवाक्यतयेति** कैयटेन शाब्दस्यैव विशेष्यविशेषणभावस्य स्वीकाराच्चेत्याहुः ॥

**क्रियान्तरे ।** तद्विशेषे आसनशयनादिरूपे ॥ **ईप्सिततमत्वादिति ।** साक्षात् क्रियान्वय्येव हीप्सिततमम् । एवं करणसंज्ञापि साधनतमत्वाद् द्रव्यस्यैवेति बोध्यम् ॥ परं त्विदं चिन्त्यम्, अश्वेन पथा दीपिकया व्रजतीत्यादौ सर्वेषां करणत्वानापत्त्या कारकान्तरापेक्षयैव प्रकर्षो, न तु स्वकक्षायामपीति स्वयमेवोक्तत्वात् । गां पयो दोग्धीत्याकडारसूत्रभाष्यासंगतेश्चेति दिक् ॥ **अथवेति । सामानाधिकरण्यं** नाम अनेकस्य पदस्य विशेष्यतयैकार्थबोधकत्वं, यदि भिन्नशक्तित्वं स्यात्तदा शक्तिभेदेनार्थस्यापि भेदादेकार्थत्वं भज्येत, तस्माद् 'विशेष्यसमानशक्तिकत्वं तदभिन्नविशेषणानाम्' इति नियमात्तत्सयोग्यः । ५ पश्चादित्यादिः । (र. ना.) ६ 'रिव' इति तूचितम् । ७ तत्र गोपदार्थस्य साक्षात्क्रियान्वयित्वेऽपि ईप्सिततमत्वाभावादिति भावः । (र. ना.)

१ विशेषणान्यपीत्यर्थः । (र. ना.) २ सहार्थयोगे तृतीया । (र. ना.) ३ 'मत्त्वोपस्थितौ च' इत्ययमेव पाठो वाराणसी B. A. S. मुद्रितपुस्तकयोः शोधकैः शोधितः । ४ 'नह्यन्यथेति' इति पाठः प्रदीपानुसारेण

मानविभक्तिकत्वमेव ॥ फलाश्रयत्वादिवत्तत्समानाधिकरणत्वमपि विभक्त्युत्पत्तौ नियामकमिति तदुपपादयति—ततो यथेति। यथा मैत्रीभङ्गिया सधनो निर्धनस्य स्वधनेन स्वसमानवासोऽलङ्कारादीन् करोति एवं सामानाधिकरण्यभङ्गिया स्वशक्तिं तत्रारोप्य स्वसमानविभक्तिकत्वं संपादयतीति भावः ॥

नन्वेवमेव कुतः कट इत्यादावपि भीष्मादिभ्यो द्वितीया स्यादत आह—भाष्ये—अस्ति खल्वपीति ॥ भीष्मादिगुणगतम् इत्यस्य तद्गुणविशिष्टगतमित्यर्थः ॥ गुणगतं कर्मत्वमिति ॥ भाष्ये कर्मशब्दः शक्तिपर इति भावः। अयं भावः—क्तस्य धातोरुत्पत्त्यार्थं[1] प्रकृतिगतधर्माभावादन्यगते तत्राभिधातव्ये यद्यत्प्रकृतिवाच्यक्रियानिरूपितकर्मत्वशक्तिमत् तत्सर्वंगता सैवाभिधीयत इति युक्तम्। द्वितीयायाः प्रातिपदिकादुत्पत्त्या स्वप्रकृतिभूतप्रातिपदिकार्थकर्मत्वलाभात्तदेव बोध्यम्, नान्यदिति ॥

भीष्मं कटमित्यादौ आरम्भवादे पूर्वोक्तप्रथमाप्राप्तिरूपदोषाभावादेष इत्यनुपपन्नमत आह—वक्ष्यमाण इति। तिङभिहिते वचनसामर्थ्याद्दोषपरिहारेपि प्रकृत्यमिहिते दोषः। तयाऽनभिहितैकत्वादिके वृक्ष इत्यादौ तस्याश्चारिताार्थ्यादित्याह—अनभिहितैकत्वादीति। एकं पश्येत्यादौ द्वितीया तु कर्मणोऽनभिहितत्वादेकत्वे उक्तेपि भविष्यतीति मत्वा प्रथमाभावापत्तिरेव कृता ॥

(आरम्भवादिभाष्यम्)

**कर्मादिष्वपि वै विभक्त्यर्थेषु अवश्यमेकत्वादयो निमित्तत्वेनोपादेयाः—कर्मण एकत्वे, कर्मणो द्वित्वे, कर्मणो बहुत्वे, इति। न चैकत्वादीनामेकत्वादयः सन्ति। अथ सन्ति, ममापि सन्ति। तेष्वनभिहितेषु प्रथमा भविष्यति ॥**

**अथ वा उभयवचना ह्येते द्रव्यं चाहुर्गुणं च। यत्स्थोसौ गुणः तस्यानुक्ता एकत्वादय इति कृत्वा प्रथमा भविष्यति ॥**

**अथ वा संख्या नामेयं परप्रधाना संख्येयमनया विशेष्यम्। यदि चात्र प्रथमा न स्यात्। संख्येयमविशेषितं स्यात् ॥**

**अथ वा वक्ष्यति तत्र वचनग्रहणस्य प्रयोजनम्—उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यादिति ॥**

**अथ वा समयाद्भविष्यति ॥**

(प्रदीपः) आरम्भवादी परस्य तुल्यदोषतामाह—**कर्मादिष्वपीति**। यस्यापि कर्मादयो विभक्त्यर्थास्तेनाप्येकवाक्यता बहुषु बहुवचनमित्यादेः कर्मणि द्वितीयेत्यादीनाञ्चाभ्युपगन्तव्या। गुणप्रधानभाव एव तु तस्य विपरीतः। तत्र प्रातिपदिकार्थंगतैकत्वादिविशिष्टे कर्मणि द्वितीयेत्येवमादिर्वाक्यार्थस्तस्य संपद्यते ॥ **कर्मण एकत्वे इति**। नन्वेकत्वादीनां विशेषणत्वमभिधानीयं कर्मादीनाञ्च विशेष्यत्वं तत्र कस्मात् कर्मणो विशेषणत्वं प्रतिपाद्यते। नैष दोषः—प्रातिपदिकार्थस्यैकत्वे सति तद्विशिष्टस्य कर्मणो वाचिका द्वितीयेत्ययमत्रार्थो विवक्षितः। ततश्च प्रातिपदिकार्थव्यतिरेकेणान्येषामेकत्वादीनां विशेषणीभूतानामभावादेक इत्यादौ भवतोपि प्रथमा न स्यादित्यर्थः ॥ **अथ सन्तीति**। व्यतिरिक्तानीत्यर्थः। तदुक्तं हरिणा—

**निमित्तमेक इत्यत्र विभक्त्या नाभिधीयते।**
**तद्गतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते ॥**

इति। यथा शतमित्यत्र प्रवृत्तिनिमित्तं शतसंख्याऽन्या अन्या च विभक्तिवाच्या प्रातिपदिकार्थगतैकत्वसंख्या। तथैक इत्यत्रापि प्रवृत्तिनिमित्तविभक्तिवाच्ये द्वे एकत्वे ॥

एवं शब्दशक्त्याश्रयेणैकत्वादिभेदेनैव समाधायाभेदपक्षेपि समाधातुमाह—**अथ वेति**। गुणोपसर्जनं द्रव्यं प्रातिपदिकेनाभिधीयते। द्रव्योपसर्जनस्तु गुणो विभक्त्यर्थः। यथा शौक्ल्यमिति गुणोपसर्जनद्रव्याभिधायिनः शुक्लशब्दाद् द्रव्योपसर्जने तस्मिन्नेव गुणे भावप्रत्ययः ॥ **यत्स्थोऽसाविति**। यस्मिन्नेव द्रव्ये स्थित एकत्वादिगुणस्तस्य द्रव्यस्यानुक्ता एकत्वादयः प्राधान्येनेति भावः ॥

**संख्येयमविशेषितमिति**। केवलस्य प्रातिपदिकस्य प्रयोगाभावात् प्रथमाया अभावे एकादिशब्दानुच्चारणात् ॥

एवं युक्त्या प्रथमोत्पत्तिं प्रतिपाद्य वचनेन प्रतिपादयितुमाह—**अथ वेति ॥ समयादिति**। परश्चेत्यस्मात् प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या न केवलेत्येवंरूपादित्यर्थः ॥

(उद्द्योतः) ननु कर्मादीनां विभक्त्यर्थत्वे एकत्वादीनां निमित्तत्वं कथमतस्तदुपपादयति—**यस्यापीति ॥ प्रातिपदिकार्थगतैकत्वादिविशिष्टे कर्मणीति**। सामानाधिकरण्यसम्बन्धेनैकत्वविशिष्टकर्मशक्ताविात्यर्थः ॥ **वाचिकेति**। बोधिकेत्यर्थः। द्योतकत्वपक्षस्यैवोच्छिन्नत्वादेकत्वादीनां विशेषणतयैव भानात्। एवं चैकत्वविशिष्टे प्रातिपदिकार्थे प्रथमेत्यर्थे तदपेक्ष्यातिरिक्तं यत्रैकत्वं वृक्ष इत्यादौ तत्रैव स्यात् न त्वेक इत्यादौ, इत्याह—**ततश्चेति**। उक्तार्थानामित्यस्य प्रधानार्थविषयत्वादेकत्वे उक्तेपि प्रधानकर्माभिधानाय द्वितीयादीनामेतन्मतेपि सिद्धिरिति तदनापत्तिर्नोकारि[2] ॥ एतद् भाष्यं हरिणाप्येवमेव व्याख्यातमित्याह—**तदुक्तमिति। निमित्तम्**। प्रवृत्तिनिमित्तम् ॥ **द्वे एकत्वे इति**। द्वयोरपि तयोर्ब्राह्मणौ द्वावित्यादावविवेकरूपेणैव भानान्न बोधावृत्त्यनुभवविरोधौ ॥

---

[1] प्रकृत्यर्थगतधर्माभावादिति पाठः साधुर्भाति। (र. ना.)
[2] कर्मत्वशक्तित्वपदार्थः। (र. ना.)

[3] पूर्वोक्तो यः प्रथमाप्राप्तिरूपो दोषस्तदभावादिति विग्रहः। दोषपरिहारश्च वचनसामर्थ्यादित्युक्तं वक्ष्यते च। (र. ना.)

इयं च कल्पना शब्दशक्त्याश्रयेत्याह—**एवं शब्देति** । अत्रापि पक्षे प्रातिपदिकेनैकत्वविशिष्टद्रव्याभिधानाद्दोष[1]स्तदवस्थोत आह—**गुणोपसर्जनमिति** ॥ **द्रव्योपसर्जन इति** । गुणगुणिनोरभेदाच्चैकः पट इति सामानाधिकरण्यम् ॥

ननु प्रातिपदिकस्यैकत्वादिविशिष्टे शक्त्या तेनैव[2] द्रव्यं विशेषयितुं शक्यं किं तत्र विभक्त्येत्यत आह—**केवलस्येति** । अयं भावः—वृद्धव्यवहाराच्छक्तिग्रहः । वृद्धव्यवहारश्च विभक्त्यन्तेनैवेति विभक्तिसमभिव्याहृते गृहीतायाः शक्तेस्तदभावेऽनुद्बोधात् पदार्थानुपस्थित्या संख्येयमविशेषितम् । एवं च पदार्थोपस्थित्यन्यथानुपपत्त्याऽभिहितेपि विभक्त्युत्पत्तिरिति ॥ लोकव्यवहारे प्रयुज्यमानानामेव साधूनां साधुत्वान्वाख्यायकमिदं शास्त्रमिति वृद्धव्यवहारे एव किं मूलमिति न शङ्क्यम् ॥

( आक्षेपभाष्यम् )

**यदि सामयिकी, न नियोगतः । अन्याः कस्मान्न भवन्ति ? ॥**

**( उद्द्योतः )** भाष्ये—**न नियोगत इति** । न नियमत इत्यर्थः ॥

( समाधानभाष्यम् )

**कर्मादीनामभावात् ॥**

**( प्रदीपः ) कर्मादीनामिति** । कर्मण्येव द्वितीयेत्येवं द्वितीयादीनां नियतत्वात् ॥

( आक्षेपभाष्यम् )

**षष्ठी तर्हि प्राप्नोति ? ॥**

**( प्रदीपः ) षष्ठी तर्हीति** । कर्माद्यभावः शेष इति भावः ॥

**( उद्द्योतः )** प्रातिपदिकार्थस्याशेषत्वात्कथं तत्र षष्ठीत्यत आह—**कर्मादीति** । तावन्मात्रमेव शेष इत्यभिमानः ॥

( समाधानभाष्यम् )

**शेषलक्षणा षष्ठी । अशेषत्वान्न भविष्यति ॥**

**( प्रदीपः ) अशेषत्वादिति** । प्रातिपदिकार्थस्य प्रथमाविधावुपयोगात्तस्य चाव्यतिरिक्तस्येह स[3]द्भावात् ॥

**( उद्द्योतः ) अव्यतिरिक्तस्येति** । अतिरिक्तेन विशिष्टो व्यतिरिक्तस्त[4]द्भिन्नस्येत्यक्षरार्थः । एवं च कारकप्रातिपदिकार्थव्यतिरिक्तः शेष इति नात्र षष्ठी, तदतिरिक्तस्य कस्याप्यप्रतीतेरिति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि व्यतिकरः प्राप्नोति—एकस्मिन्नपि द्विवचनबहुवचने प्राप्नुतः, द्वयोरप्येकवचनबहुवचने प्राप्नुतः, बहुष्वप्येकवचनद्विवचने प्राप्नुतः ॥**

( समाधानभाष्यम् )

**अर्थतो व्यवस्था भविष्यति ॥**

**( प्रदीपः ) अर्थतो व्यवस्थेति** । सामर्थ्यादित्यर्थः । एक इत्यत्रैकमेवैकत्वं तच्च प्रातिपदिकेनाभिहितमित्यप्राप्ता प्रथमा समयवशेन प्राप्यते । तत्र यथा समयश्च पालितो भवत्येकत्वानुगुणं चान्यत्र तदभिधाने दृष्टसामर्थ्यं वचनं भवति तथा कर्तव्यमित्यर्थः । तदेवं संख्या विभक्त्यर्थं इति दर्शनाश्रयेण सूत्रं स्थापितम् ॥

**( उद्द्योतः )** अर्थाभावेपि समयपरिपालनाय विभक्तौ कथमर्थतो व्यवस्थेत्यत आह—**सामर्थ्यादिति** ॥ तदेवोपपादयति—**एक इत्यत्रेति** । विरुद्धविभक्त्यपेक्षयानुवादकविभक्तिर्न्याय्येति भावः ॥ पक्षद्वयेपि दोषाभावप्रतिपादनात्संख्या सुबर्थ इति दर्शने सूत्रं कार्यम्, दर्शनान्तरे नेति स्थितम् ॥ तत्रारम्भपक्षे परिगणनादिप्रवृत्तिं बोधयितुमाह—**तदेवमिति** ॥ **सङ्ख्या विभक्त्यर्थं इति** । सूत्रे [5]प्राधान्यात्तस्या विभक्तिबोध्यता कारकं तु तद्विशेषणत्वेन [6]तथेति दर्शनमित्यर्थः ॥

( परिगणनाधिकरणम् )

**( भाष्यम् ) परिगणनं कर्तव्यम् ॥**

**( १४६२ परिगणनवार्तिकम् ॥ ४ ॥ )**

**॥ * ॥ तिङ्कृत्तद्धितसमासैः परिसंख्यानम् [[7]उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिवचनम्] ॥ * ॥**

**( भाष्यम् ) तिङ्कृत्तद्धितसमासैः परिसंख्यानं कर्तव्यम् । तिङ्—क्रियते कटः । तिङ् ॥ कृत्—कृतः कटः । कृत् ॥ तद्धितः—औपगवः कापटवः । तद्धितः ॥ समास—चित्रगुः शबलगुः । समास ॥ उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिवचनम् । उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिर्वक्तव्या । क ? । कटं करोति भीष्ममुदारं शोभनं दर्शनीयमिति । कटशब्दादुत्पद्यमानया द्वितीययाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति ॥**

**( प्रदीपः ) औपगव इति** । अपत्यापत्यवत्संबन्धस्य [8]तद्धितेनोक्तत्वात् षष्ठी न भवति ॥ **चित्रगुरिति** ॥ समासेन स्वस्वामिसंबन्धस्याभिधानात् षष्ठ्यभावः ॥ **उत्सर्ग इति** । **अनभिहित** इति सामान्येनोच्यमान इत्यर्थः । यत्र बहूनि प्रातिपदिकानि समानाधिकरणानि विवक्षितानि तत्रैकयोगक्षेम-

---

१ वृक्ष इत्यादौ संख्याया अनभिधानाभावात्स्वाद्यनापत्तिरूपो दोष इत्यर्थः । ( र. ना. )

२ प्रातिपदिकेनैव द्रव्यमनेकादिव्यावृत्ततया बोधयितुं शक्यमित्यर्थः । ( र. ना. )

३ 'सद्भावः' ।

४ तद्भिन्नस्येति पाठः साधुः । ( र. ना. )

५ कर्मादिगते एकत्वे इत्यादिरीत्याऽर्थकरणेनेति शेषः । ( र. ना. )

६ विभक्तिवाच्यमित्यर्थः । ( र. ना. )

७ अयं कोष्टकान्तर्गतः पाठो न क्वाप्युपलभ्यते ।

८ 'तद्धितोक्तत्वात्' इति तूद्द्योतसंमतः पाठः ।

त्वादेकत उत्पन्नया द्वितीयया सर्वप्रातिपदिकार्थगतं कर्मत्वमभिहितमित्यन्येभ्यो द्वितीया न स्यात् ॥

**( उद्द्योतः )** भाष्ये—**तिङ्क्रियते कट इति** । न चात्र सङ्ख्याकारकयोरुभयोरप्युक्तेः **सङ्ख्या विभक्त्यर्थ** इति पक्षेपि नेदमनभिहिताधिकारप्रयोजनमिति तिङ्ग्रहणं व्यर्थमिति वाच्यम् । संख्यायाः क्रियायामेवान्वयेन कारकगतसङ्ख्यायाः शब्देनानभिधानादित्याशयः ॥ एवं च पचत्योदनं देवदत्त इत्यादौ तिङोक्त एकत्वादय इति प्रथमा न प्राप्नोतीति पूर्वोक्तभाष्यमेकदेश्युक्तिरिति यथाकथंचिद्व्याख्येयमिति सूचितम् ॥ तिङ्कृतोरिव तद्धितसमासयोः कस्मिंश्चिद्विभक्त्यर्थेऽविधानादाह—**अपत्यापत्यवदिति** ॥ **तद्धितोक्तत्वादिति** । तद्धितान्तोक्तत्वादित्यर्थः ॥ नन्वेतयोः संबन्धस्य प्रातिपदिकार्थत्वेनाशेषत्वान्न षष्ठीप्राप्तिः । कारकप्रातिपदिकार्थव्यतिरिक्तो हि तत्र शेषः ॥ न च कर्मादिव्यतिरिक्त एव शेष इत्याशयेनैते उदाहरणे । यद्वा–संबन्धो न प्रातिपदिकार्थः, प्रवृत्तिनिमित्ततदाश्रयभिन्नत्वादिति वाच्यम् । घटपदाद् घटघटत्वयोः संबन्धस्य भानेन तत्र षष्ठ्या दुर्वारतापत्तेः । तत्र हि नैतदन्यतमेनाभिधानमिति चेत् ॥ सत्यम्, वाक्येऽस्य संबन्धस्य षष्ठ्यर्थत्वं दृष्ट्वाऽत्राप्यप्रातिपदिकार्थत्वमित्यभिमानात् । किं च **का तर्हि स्यात्? शेषलक्षणा षष्ठी अशेषत्वान्न, समयाच्च द्वितीयैवे**त्यग्रिमग्रन्थेन कटं भीष्ममित्यादौ अभिहितत्वादप्राप्तद्वितीयासाधनार्थं परिगणनमित्येतत्खण्डनपरेण परिगणनप्रत्याख्यानवदेतयोरुदाहरणत्वाभावस्यापि कथनेन तद्धितसमासोदाहरणमधिकमित्यर्थस्यापि कथनात् । **अनेकमन्यपदार्थ इति** सूत्रे भाष्येप्यनयोरनुदाहरणत्वं सूचितम् । न च शतेन क्रीतः शत्यः प्राप्तमुदकं यं प्राप्तोदक इत्यादि तद्धितसमासोदाहरणमिति वाच्यम् । प्राप्तोदक इत्यादौ प्राप्तोदककर्मेत्यादिप्रकारेणैव बोधः । तत्र विशेष्ये तन्निरूपकत्वबाधेन विशेषणमादाय तात्पर्यावसानमिति द्वितीयादिप्रयोजककर्मत्वादेः शब्दादबोधेन द्वितीयाद्यप्राप्तेः । एवं च विशेषणत्वव्यत्यासोपि न । उपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य च न बाधः । चित्रगुरित्यादौ चित्राणां गवामयमित्यादौ यथा तस्य षष्ठीप्रयोजकता तथात्रापि स्यात्तेनैव रूपेण भानादिति बोध्यम् । एवं यथा क्रीतशब्दे धातुना क्रियोपस्थाप्यते, न तेन रूपेण शत्यशब्देनेति न तदर्थे इतरकारकान्वयः । इदं च **कर्तृकर्मणो**रित्यत्र भाष्ये ध्वनितम् । अतो न तदर्थकर्मणो विभक्तिप्राप्तियोग्यता । एवं च **सांप्रतमि**त्यादिनिपातैरपि न तेन रूपेण क्रियायाः कारकस्य चोक्तिरिति न तदन्वयिनि विभक्तिप्रसक्तिः । अतो निपातेनाभिहितत्वाद्विभक्त्यनुत्पत्तिरित्यपि चिन्त्यमेव । **नारद इत्यबोधि स** इत्यत्रापि नारद इतीत्यनेन श्रीकृष्णीयज्ञानाकारानुवादात्तत्र न द्वितीयादिप्रसक्तिरित्यलम् ॥ परिगणनफलमाह—**भाष्ये—उत्सर्गे हीति** । तद्व्याचष्टे—**सामान्येनेति** ॥ **एकयोगक्षेमत्वादिति** । एकार्थबोधकत्वस्यैव सामानाधिकरण्यपदार्थत्वादिति भावः ॥

**( आक्षेपभाष्यम् )**

**का तर्हि स्यात्?** ॥

**( प्रदीपः )** परिगणनमन्तरेणाप्येतं दोषं परिहर्तुं पृच्छति—**का तर्हीति** ॥

**( समाधानभाष्यम् )**

**षष्ठी** ॥

**( प्रत्याख्यानवादिभाष्यम् )**

**शेषलक्षणा षष्ठी अशेषत्वान्न भविष्यति । अन्या अपि न प्राप्नुवन्ति ॥ किं कारणम्? । कर्मादीनामभावात् ॥ समयश्च कृतः—'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति । न चान्या उत्पद्यमाना एतमभिसंबन्धमुत्सहते वक्तुमिति कृत्वा द्वितीया भविष्यति ॥**

**अथवा कटोपि कर्म भीष्मादयोपि, तत्र 'कर्मणि' इत्येव सिद्धम् ॥**

**अथ वा कट एव कर्म तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीया भविष्यति । तस्मान्नार्थः परिगणनेन ॥**

**( उद्द्योतः )** भाष्ये—**कर्मादीनामभावादिति** । अनभिहितकर्मादीनामभावादित्यर्थः ॥ **अन्येति** । प्रथमेत्यर्थः ॥ **एतमभिसंबन्धं** सामानाधिकरण्यरूपम् । इतरसंबन्धानवच्छिन्नविशेष्यविशेषणभावः सामानाधिकरण्यम् ॥ **द्वितीया भविष्यतीति** । अस्याशय उक्तः ॥ **तस्मान्नार्थ इति** । भीष्मादिभ्यो द्वितीयादेः प्रकारान्तरेण वारणाद्यावर्त्यान्तरस्याभावाच्चेति भावः ॥ यत्तु एतद्बलेन निपातेनाप्यभिधानमिति वदन्ति । तदयुक्तम् । उक्तरीत्या निष्फलं च, विभक्त्यर्थे यदव्ययं तेन समासविधायकोसंगतिश्चेति दिक् ॥

## ( गुणप्रधानक्रिययोः प्रधानानभिहितग्रहणाधिकरणम् )

## ( १४६३ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ द्वयोः क्रिययोः कारकेन्यतरेणाभिहिते विभक्त्यभावप्रसङ्गः ॥ * ॥

**( भाष्यम् ) द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्तिर्न प्राप्नोति । क्व? । प्रासादे आस्ते शयने आस्त इति ॥ किं कारणम्? । सदिप्रत्ययेनाभिहितमधिकरणमिति कृत्वा सप्तमी न प्राप्नोति ॥**

---

१ तिङ्विभक्त्यैवोक्तेरित्यर्थः । ( र. ना. ) २ तिङ्वाच्यसंख्याया इत्यर्थः । ( र. ना. ) ३ तिङ्वाच्यसंख्यायाः क्रियान्वयस्वीकारे चेत्यर्थः । ( र. ना. ) ४ अप्रातिपदिकार्थत्वेनेत्यादिः । ( र. ना. ) ५ द्वितीयादिप्रयोजकं यत्क्रियान्वयितावच्छेदकमुद्भूतकर्मत्वशक्तिमत्त्वादिकं तस्य प्राप्तोदकशब्दादबोधेनेत्यर्थः । ( र. ना. ) ६ विशेषणमादाय तात्पर्यपर्यवसाने चेत्यर्थः । (र.ना.) ७ कारकान्वययोग्यतावच्छेदकसाध्यत्वेनेत्यर्थः । (र. ना.) ८ 'एवमसांप्रत' । ९ कर्मादीनामिति ॥ अत्रातद्गुणसंविज्ञानत्वाद्बहुव्रीहेः करणादीनामित्यर्थः । द्वितीया भविष्यतीत्युक्तेः ॥ १० अप्रसङ्गरूपदोषस्येति शेषः । (र.ना.) ११ 'वारणवद्' इत्येवं वाराणसी Bengal Asiatic Society मुद्रितपुस्तकशोधितः पाठः । १२ परिगणनप्रत्याख्यानबलेनेत्यर्थः । ( र. ना. ) १३ नारद इत्यबोधीत्यादौ अन्यथैव द्वितीयादिवारणसंभवादिति भावः । ( र. ना. ) १४ अव्ययेनाप्यभिधानाङ्गीकारे हरि ङि अधीत्यलौकिकविग्रहवाक्यासंभवादिति भावः । ( र. ना. )

(प्रदीपः) **अनभिहित।** इति पर्युदासे प्रसज्यप्रतिषेधे च दोषदर्शनात्तन्निराकरणाय दोषोद्भावनं कर्तुमाह—**द्वयोरिति।** प्रासाद आस्त इत्यत्र सदिक्रियाया आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यम्। तच्चान्यतरेण सदिप्रत्ययेन घञाऽभिहितमित्यभिहिते नेति सप्तमी न प्राप्नोति। अभिहितादन्यत्रेत्यत्रापि पक्षेऽभिहितत्वादधिकरणस्याभिहितादन्यत्वं नास्तीति न प्राप्नोति। द्रव्यं च कारकं मन्यते, तद्व्यतिरेकेण शक्तिसद्भावे प्रमाणाभावात्। न तावत् प्रत्यक्षं द्रव्यव्यतिरिक्तस्वरूपपरिच्छेदि समुपजायते। द्रव्यस्वरूपातिरेकेण शक्तिरूपानुपलम्भात्। प्रत्यक्षाप्रवृत्तौ च तत्पूर्वकस्यानुमानस्यापि शक्तिसद्भावावेदने नास्ति प्रवृत्तिः। कार्यं च द्रव्यस्वरूपायत्तमेवेति कार्यव्यतिरेकादपि नास्ति शक्तिसद्भावावगमः॥

(उद्योतः) **तन्निराकरणायेति।** ननु परिगणनप्रत्याख्यानमूलकोयं दोषः। घञः कृत्त्वेन परिगणनेपि दोषतादवस्थ्यादिति भावः॥ **नास्तीति।** अभिहितत्वावच्छिन्नप्रतियोगिताको भेदो नास्तीत्यर्थः॥ ननु क्रियाभेदे शक्तेर्भिन्नत्वात्सदिनिरूपितस्याभिहितत्वेपि आसिनिरूपितस्याभिहितत्वासिद्धिरित्यत आह—**द्रव्यं चेति॥ तद्व्यतिरेकेणेति।** गुणसमूहो द्रव्यमिति भावः॥ **न तावत्प्रत्यक्षमिति।** शक्तेरतीन्द्रियत्वादित्यर्थः॥ **स्वरूपेति।** शक्तिस्वरूपेत्यर्थः॥ अत एव संबन्धस्य दुर्ग्रहत्वात् तत्पूर्वकमनुमानमपि नेत्याह—**तत्पूर्वकस्येति॥** ननु यथा दाहके सत्यपि दाहादिकार्यस्य कादाचित्कत्वानुपपत्त्या शक्तिरवगम्यते तद्वदिहाप्यस्तु अत आह—**कार्यं चेति॥ द्रव्यस्वरूपेति।** ननु तद्व्यतिरिक्तशक्त्यायत्तमित्यर्थः॥

(१४६४ बाधकवार्तिकम्॥ ६॥)

॥*॥ न वान्यतरेणानभिधानात्
[अनभिहिते हि विधानम्॥*॥]

**(भाष्यम्) न वा एष दोषः। किं कारणम्?। अन्यतरेणानभिधानात्। अन्यतरेणात्रानभिधानम्। सदिप्रत्ययेनाभिधानम्। आसिप्रत्ययेनानभिधानम्। यतोऽनभिधानं तदाश्रया सप्तमी भविष्यति॥**

**कुतो नु खल्वेतत्सत्यभिधाने चानभिधाने चानभिहिताश्रया सप्तमी भविष्यति, न पुनरभिहिताश्रयः प्रतिषेध इति?।**

**अनभिहिते हि विधानम्*। अनभिहिते हि सप्तमी विधीयते। नाभिहिते प्रतिषेधः॥**

(प्रदीपः) पर्युदासं शक्तिसाधनपक्षं चाश्रित्याह—**नवेति॥** प्रसज्यप्रतिषेधवाद्याह—**कुतो नु खल्विति॥** पर्युदासमाश्रित्याह—**अनभिहिते हीति॥**

(उद्योतः) **शक्तिसाधनपक्षं चेति।** एकस्यैव परस्परविरुद्धकर्तृकर्मादिव्यपदेशः शक्तिं गमयति। एवं चैकनिरूपितशक्तेरभिधाने तच्छक्त्यन्तरस्यानुक्तत्वमेवेत्येतदाशयः॥ **पर्युदासपक्षे** कुत इति प्रश्नानुपपत्तिरत आह—**प्रसज्येति।** द्रव्यं कारकमित्यपि बोध्यम्॥

(आक्षेपसाधकभाष्यम्)

**यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्या चान्या च क्रिया। यत्र तु खलु सैव क्रिया तत्र कथम्—आसने आस्ते शयने शेत इति?॥**

(प्रदीपः) पर्युदासेपि दूषणमाह—**यद्यपि तावदिति।** आसन आस्त इत्यत्रैकैवासनक्रिया तस्याश्चाधिकरणं ल्युटाभिहितमिति सप्तम्या अप्राप्तिरित्यर्थः॥

(उद्योतः) **एकैवासनक्रियेति।** तथा च तन्निरूपिता शक्तिरप्येकैवेति भावः॥

(आक्षेपबाधकभाष्यम्)

**अत्राप्यन्यत्वमस्ति। कुतः?। साधनभेदात्कालभेदाच्च। एकस्यात्रासेरासिः साधनम्, सर्वकालश्च प्रत्ययः। अपरस्य बाह्यं साधनम्, वर्तमानकालश्च प्रत्ययः॥**

(प्रदीपः) **अत्राप्यन्यत्वमिति।** भिन्नपदप्रत्याय्ये भिन्ने आसनक्रिये इत्यर्थः। एकपदोपात्ते क्रियासाधनसंबन्धे अनेन विभक्त्यो निवार्यन्ते न तु वाक्योपात्ते॥ **आसिः साधनमिति।** आसनमित्यत्र यासिक्रिया तस्या आसिक्रिया साधनम्॥ कथमेतदिति चेत्। उच्यते—आस्यतेस्मिन्नित्यासनमुच्यते। यदि चासनक्रियाऽऽस्ते संनिधीयते ततस्तदपेक्षं तदासनमुच्यते। एवं सामर्थ्यादासेरासिः कर्ता भवति॥ नन्वेवं सत्यासनमित्यत्र या आसिक्रिया सा अन्यस्या आसिक्रियायाः साधनं भवति। न त्वस्या अन्या। एवं तर्ह्यर्थान्तरेस्य ग्रन्थस्य तात्पर्यम्। तदयमत्र परमार्थः—आसनशयनकरणापादानसंप्रदानादिशब्दैरासनादिक्रियायोग्यं वस्तुमात्रमनुद्भूतशक्तिकमभिधीयते। तत्र शक्त्युद्भवप्रतिपादनाय विभक्तिरवश्योत्पाद्या। ततश्चासिः **साधनमिति** साधनान्तरनिरासः क्रियते। शब्दव्युत्पत्तये केवलमत्रासिक्रियोपादीयत इत्यर्थः॥ **सर्वकालश्च प्रत्यय इति।** कालविशेषानुपादानेन ल्युटो विधानात्॥ **बाह्यमिति।** देवदत्तादिकमित्यर्थः॥

(उद्योतः) प्रत्यभिज्ञयैकत्वावगतेः कथमन्यत्वमत आह—भि-

१ कारकप्रयुक्तं विभक्त्यादिरूपं कार्यमेवेत्यर्थः। (र. ना.)
२ 'ननु' इति भवेत्।
३ 'द्रव्ये च भवतः कः संप्रत्ययः' इति प्रश्ने 'गुणसमुदायो द्रव्यम्' इत्युत्तरस्य क्रियामिति सूत्रे भाष्ये दानादिति भावः।
४ कोष्ठकान्तर्गतोऽयं वार्तिकांशो न सर्वत्रोपलभ्यते।
५ कर्तृकारकमित्यर्थः। (र. ना.)
६ एकपदाभिहिते इत्यर्थः। (र. ना.)
७ आस्ते इत्यत्रत्यासेरासनघटकआसिरित्यर्थः। (र. ना.)
८ अत्रापि कर्तृकारकमित्येवार्थः। (र. ना.)
९ केवलस्य ल्युटोऽप्रयोगादासनशब्दसिद्ध्यै इत्यर्थः। (र. ना.)

न्नपदेति । प्रत्यभिज्ञा तु साजात्यनिबन्धनेति भावः ॥ नन्वेवमनभिहित इति सूत्रं व्यर्थमत आह—**एकपदेति** । अत एव गोघ्नाय हन्ति कृतं कटमानय भीमाद्बिभेतीत्यादौ चतुर्थ्यादय इति भावः । तथा च [1]पदभेदकृतभेदमर्थे आरोप्य तन्निरूपितशक्तिभेदोपीत्यभिप्रायः ॥ एकस्येत्यस्यार्थमाह—**आसनमित्यत्रेति** ॥ आसनत्वसिद्ध्यनुपपत्तिलक्षणसामर्थ्येनासिसाध[2]नत्वमाह—**आस्यत इति** । आस्ते इति स्वोक्तस्य व्याख्यानम्—**संनिधीयत इति** । असिन्निति प्रत्ययार्थत्वेन निर्दिष्टवस्तुन आसिक्रियासन्निधानमन्तरेणासनत्वायोगादा[3]सिक्रियासाधनत्वं कृत्प्रकृत्यर्थस्यासेः स्वाधिकरणद्रव्यद्वारेष्टव्यम् । तदाह—**एवंसामर्थ्यादिति** ॥ **कर्ता भवतीत्यस्य** [4]कारकं साधनं भवति स्वप्रकृतिकल्युडन्तार्थद्वारेत्यर्थः ॥ **एकस्यात्रासेरिति**—भाष्ये आसिः शेतेरप्युपलक्षणम् ॥ नन्वेवं ल्युट्प्रकृतिभूतासिक्रियायास्तिङन्तोपात्ता आसिक्रिया साधनमिति भाष्योक्तं न सि[5]द्धमित्याशङ्कते—**नन्विति** ॥ केचित्तु आसनक्रिया आस्तेऽस्मिन्नित्यासनमिति व्युत्पत्तिः । प्रकृतिभूत आस्तीरस्त्यर्थः । [6]तदर्थस्यापि लोके प्रयोगदर्शनात् । एवं शेतिरपि तिष्ठत्यर्थो जलाशय इत्यादौ । उभयत्राप्यासिग्रहणमुपलक्षणम् । एवं च भाष्यं समञ्जसमेवेत्याहुः ॥ **वस्तुमात्रमिति** । नास्यादिक्रियाधिकरणत्वेन तद्बोधः । किं त्वासनत्वेनेत्यर्थः ॥ तदेवाह—**अनुद्भूतशक्तिकमिति** ॥ **शब्दव्युत्पत्तये इति** । अनुलोमादिवद्रूढा एवेत्यर्थः । अत एव पक्व इत्यादौ केनेति कर्त्राकाङ्क्षावदासनमित्युक्ते न तदाकाङ्क्षा । अत एव **आसिः साधनम्** इत्यस्य साधनान्तरनिरासे तात्पर्यमुक्तम् ॥

## ( साधननिर्णयाधिकरणम् )

### ( आक्षेपभाष्यम् )

**किं पुनर्द्रव्यं साधनम् । आहोस्विद् गुणः ? । किं चातः ? ।**

**यदि द्रव्यं साधनम्, नैतदन्यद्भवत्यभिहितात् । अथ हि गुणः साधनम्, भवत्येतदन्यदभिहितात् ।**

**अन्यो हि सदिगुणः । अन्यश्चासिगुणः ॥ किं पुनः साधनं न्याय्यम् ? ॥**

( प्रदीपः ) **किं पुनरिति** । यदि द्रव्यं साधनं तदा तदेकमेव तच्चाभिहितमिति पूर्वोक्तपरिहारो न संगच्छते । अथ शक्तिः साधनं तदा तस्या भेदादभिहितत्वानभिहितत्वसंभवाद्भवति समाधानमिति मन्वानस्य प्रश्नः । आश्रित[7]त्वाच्छक्तिरेवात्र गुणशब्देन विवक्षिता ॥ स एव पृच्छति—**किं पुनरिति ?** ॥

(उद्द्योतः) प्रयोजनं वदन् विचारस्य प्रकृते संगतिमाह—**यदि द्रव्यमिति** । अत्र द्रव्यमित्यस्य शक्त्यनाविष्टं द्रव्यमित्यर्थः ॥

### ( समाधानभाष्यम् )

**गुण इत्याह ॥ कथं ज्ञायते ? । एवं हि कश्चित्कंचित्पृच्छति—क्व देवदत्त इति । स तस्मायाचष्टे—'असौ वृक्षे' इति । कतरस्मिन् ? । यस्तिष्ठतीति । स वृक्षोधिकरणं भूत्वान्येन शब्देनाभिसंबन्ध्यमानः कर्ता संपद्यते ॥ द्रव्ये पुनः साधने सति यत्कर्म कर्मैव स्यात्, यत् करणं करणमेव, यदधिकरणमधिकरणमेव ॥**

( प्रदीपः ) **गुण इत्याहेति** । अयं भावः—यदि द्रव्यं साधनं स्यात्, तदा तस्यैकरूपत्वात्तन्निबन्धनाबाधितप्रत्यभिज्ञाविषयत्वान्नानार्थक्रियाकरणनिबन्धनो व्यपदेशभेदो न स्याद्, दृश्यते चासाविति नानाशक्तिसद्भावावगमः सिद्धः ॥

( उद्द्योतः ) ननु वृक्षशब्दोपात्तस्याधिकरणत्वेपि यच्छब्दोपात्तस्य कर्तृत्वं भविष्यति शब्दभेदेन भेदाद् अत आह—**अर्थे भाव इति** । शब्दभेदमात्रेणार्थभेदासिद्धिरिति भावः ॥ वृक्षे देवदत्तस्तिष्ठति वृक्षं पश्येत्यादौ दोषाच्च ॥ **द्रव्यमिति** । शक्तिरहितं शुद्धद्रव्यमित्यर्थः ॥ **तन्निबन्धनेति** । एकरूपत्वनिबन्धनेत्यर्थः ॥ **नानार्थक्रियेति** । अर्थक्रियानिरूपितभिन्नकारणत्वनिबन्धन इत्यर्थः ॥ **नानाशक्तीति** । एवं च प्रसज्यप्रतिषेधेपि न दोष इति ध्वनितम् । अत्र हि पक्षे अभिहितायां शक्तौ नेत्यर्थः । तत्र या शक्तिरभिहितां तस्यां मा भूत्प्रत्ययः । या त्वनभिहिता तद्बोधनाय स्यादेव प्रत्यय इति बोध्यम् ॥

## ( प्रत्याख्यानाधिकरणम् )

### ( १४६५ प्रत्याख्यानप्रतिज्ञाहेतुवार्तिकम् ॥ ७ ॥ )

### ॥ * ॥ अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात् ॥ * ॥

( भाष्यम् ) **अनभिहितवचनमनर्थकम् ॥ किं कारणम् ? । प्रथमाविधानस्यानवकाशत्वात् । अनवकाशा प्रथमा सा वचनाद्भविष्यति ॥**

( प्रदीपः ) सूत्रं प्रत्याख्यातुमाह—**अनभिहितवचनमिति** । क्रियते कटः, कृतः कट इत्यादिषु द्वितीयादिनिवारणायानभिहिताधिकारः क्रियते । यदि चात्र द्वितीयादयः स्युस्ततः प्रथमा निरवकाशैव स्यात् । तस्मादनवकाशत्वात् प्रथमैव द्वितीयादीनां बाधिका भविष्यतीति नार्थोनभिहिताधिकारेणेत्यर्थः ॥

( उद्द्योतः ) **सूत्रं प्रत्याख्यातुमिति** । एकत्वादयो विभक्त्यर्था इति पक्षेपीत्यर्थः ॥ भाष्ये—**अनवकाशत्वादिति** ॥ नन्वेवं कृतः कट इत्यादावेव, न कटं करोतीत्यादावित्यत्र किं

---

[1] 'पदभेदमर्थे' इति तु पाठो वाराणसी B. A. S. मुद्रितपुस्तके स्वीकृतः ।

[2] अत्र तत्पुरुषः । ( र. ना. )

[3] आस्ते इत्यत्रोपात्तासिक्रियासाधनकत्वमित्यर्थः । ( र. ना. )

[4] एतादृशव्याख्याने बीजं चिन्त्यम् । यथाश्रुतार्थकरणेनापि निर्वाहात् । ( र. ना. )

[5] एतद्वैपरीत्यस्यैव सिद्धत्वादिति भावः । ( र. ना. )

[6] बहुव्रीहिः । ( र. ना. )

[7] आश्रितत्वरूपं गुणसाधर्म्यमादायेत्यर्थः । ( र. ना. )

विनिगमकमिति चेत् । न, मात्रग्रहणेनानभिहितविभक्त्यर्थाधिक्ये प्रथमाया अप्रवृत्तेः । कृत इत्यादौ तद्घटकप्रत्ययेनाभिधानेनाधिक्याभाव इति भावः ॥

( प्रत्याख्यानहेतुबाधकभाष्यम् )

**सावकाशा प्रथमा ॥ कोवकाशः? ॥ अकारकम्—वृक्षः प्लक्ष इति ॥**

( प्रदीपः ) **वृक्ष इति** । क्रियापदं न श्रूयत इति विभक्त्यन्तराप्राप्तिं मन्यते ॥

( १४६६ प्रत्याख्यानहेतुसाधकवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ अवकाशोऽकारकमिति चेन्नास्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोप्यस्ति ॥ * ॥**

**( भाष्यम् ) अवकाशोऽकारकमिति चेत् । तन्न । किं कारणम्? । अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोप्यस्तीति गम्यते । 'वृक्षः' 'प्लक्षः' अस्तीति गम्यते ॥**

( प्रदीपः ) **अस्तिर्भवन्तीपर इति** । ज्ञातं वस्तु परं प्रतिपादयितुं शब्दः प्रयुज्यते, ज्ञानं च सत इति यत्र क्रियापदान्तरस्याप्रयोगस्तत्रोत्सर्गतः सत्ताप्रतीतिरित्यस्तीतिक्रियापदानुषङ्गात् कर्तरि तृतीयाप्रसङ्गादनवकाशा प्रथमेत्यर्थः ॥

(उद्योतः) **अस्तिर्भवन्तीपर इति** । प्रथमाया अपि कर्मणि द्वितीयेत्यादिसाहचर्येण क्रियायोग एव प्रवृत्तेरिति भावः ॥ **ज्ञानं च सत इति** । बुद्धिसत इत्यर्थः ॥

( १४६७ प्रत्याख्यानहेत्वन्तरवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ विप्रतिषेधाद्वा प्रथमाभावः ॥ * ॥**

**( भाष्यम् ) अथ वा द्वितीयादयः क्रियन्ताम्, प्रथमा वेति । प्रथमा भविष्यति विप्रतिषेधेन । द्वितीयादीनामवकाशः—कटं करोति भीष्ममुदारं शोभनं दर्शनीयमिति । प्रथमाया अवकाशः—अकारकं वृक्षः प्लक्ष इति । इहोभयं प्राप्नोति—कृतः कटो भीष्मः उदारः शोभनो दर्शनीय इति । प्रथमा भविष्यति विप्रतिषेधेन ॥**

( प्रदीपः ) **विप्रतिषेधाद्वेति** । सावकाशत्वमभ्युपगम्येदमुच्यते ॥

( उद्योतः ) अनवकाशकत्वमुक्त्वा विप्रतिषेधोपन्यासोऽसंगत इत्यत आह—**सावकाशत्वमभ्युपगम्येति** । नीलमिदं न तु रक्तमित्यादौ रक्तत्वादिनिवृत्तिपरे वाक्ये सत्ताया अनावश्यकत्वादस्तिर्भवन्तीपर इत्यस्याभावात् । साहचर्यं च सर्वत्र न व्यवस्थापकमित्यभिमानः ॥ वैतण्डिकोक्तिरियमिति तात्पर्यम् ॥ अनेन वस्तुतो निरवकाशत्वमेवेति सूचितम् । उक्तरीत्या तत्रापि सत्ताक्षेपात् ॥ अत एव तिङ्समानाधिकरणे प्रथमेति न्यासः संगच्छत इति बोध्यम् । स्पष्टं चेदं प्रातिपदिकार्थसूत्रे भाष्ये ॥

( हेत्वन्तरबाधकभाष्यम् )

**न सिध्यति । परत्वात् षष्ठी प्राप्नोति ॥**

( प्रदीपः ) **षष्ठीति** । क्रियाकारकसंबन्धसद्भावात् ॥

( हेत्वन्तरभाष्यम् )

**शेषलक्षणा षष्ठी अशेषत्वान्न भविष्यति ॥**

( प्रदीपः ) **अशेषत्वादिति** । प्रातिपदिकार्थस्य व्यतिरेकाभावात् ॥

( उद्योतः ) **अशेषत्वादिति** । अभिहितः सोर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इत्यनेकमिति सूत्रोक्तरीत्या प्रातिपदिकार्थत्वेन प्रातिपदिकार्थकारकान्यतिरिक्तत्वरूपशेषत्वाभावादिति भावः ॥

( १४६८ प्रत्याख्याननिराकरणवार्तिकम् ॥ १० ॥ )

**॥ * ॥ कृत्प्रयोगे तु परं विधानं षष्ठ्यास्तत्प्रतिषेधार्थम् ॥ * ॥**

**( भाष्यम् ) कृत्प्रयोगे तु परत्वात्षष्ठी प्राप्नोति । तत्प्रतिषेधार्थमनभिहिताधिकारः कर्तव्यः । कर्तव्यः कट इति ॥**

**स कथं कर्तव्यः? ।**

**यद्येकत्वादयो विभक्त्यर्थाः ॥ अथ हि कर्मादयो विभक्त्यर्थाः नार्थोनभिहिताधिकारेण ॥ अनभिहि १**

( प्रदीपः ) **कर्तव्यः कट इति** । प्रथमां परत्वाद् बाधित्वा कर्तृकर्मणोः कृतीति षष्ठी प्राप्नोति इति तद्बाधनार्थोनभिहिताधिकारः ॥ १ ॥

( उद्योतः ) **षष्ठी प्राप्नोतीति** । न च कृत्यानामिति विभक्तेन षष्ठीनिषेधात्कथं तत्प्राप्तिः । न च नात्रोभयप्राप्तिः, तदधिकाराभावेनोभयप्राप्तेरपि सत्त्वादिति वाच्यम् । एकसूत्रपक्षे दोषात् । योगविभागस्तु भाष्यकृता वक्ष्यते, न वार्तिककारेण ॥ **यद्येकत्वादय इति** । प्राधान्येन विभक्तिद्योत्या संख्यैव, कारकं तद्विशेषणत्वेन, तदेदं सूत्रं कार्यमित्यर्थः । एवमग्रेपि व्याख्येयम् । उक्तार्थानामिति न्यायः शास्त्रोपात्तप्रधानार्थविषय एव, कारकस्य प्राधान्येन तत्त्वे तु व्यर्थम् ॥ ननु तदापि द्योतकसमावेशस्य दृष्टत्वात् कृतः कट इत्यादौ क्रियते कट इत्यादौ च तद्वारणाय स आवश्यक इति चेन्न । आद्ये विशेष्यत्वेन भानेन तस्य द्योत्यत्वा संभवात् । अन्त्ये क्रियां प्रति तस्य विशेषणत्वेपि कटपदार्थे तत्त्वाभावेन तदुत्तरद्वितीयाद्योत्यताया असंभवाच्चेति दिक् ॥ १ ॥

१ अनभिहितविभक्त्यर्थाधिक्याभाव इत्यर्थः । ( र. ना. )
२ 'मेति' 'मा चेति' ॥ ३ 'द्वितीयाया अव' ॥
४ इदं द्योत्यत्वाभावादित्यत्र हेतुः । ( र. ना. )
५ अनभिहिताधिकाराभावेनेत्यर्थः । ( र. ना. )
६ विभक्तिद्योत्यत्वे इत्यर्थः । ( र. ना. )
७ द्योत्यस्य नियमेन विशेषणत्वादित्यर्थः । ( र. ना. )

( २९४ द्वितीयानियमसूत्रम् ॥ २ । ३ । १ आ. २ )

## ४६० कर्मणि द्वितीया ॥ २।३।२ ॥

( शेषपूरणाधिकरणम् )

( १४६९ द्वितीयाविधायकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ समयानिकषाहायोगेषूपसंख्यानम् ॥ * ॥**

( भाष्यम् ) समयानिकषाहायोगेषूपसंख्यानं कर्तव्यम् । समया—समया ग्रामम् । समया ॥ निकषा—निकषा—ग्रामम् । निकषा ॥ हायोगे—हा देवदत्तम्, हा यज्ञदत्तम् ॥

( प्रदीपः ) कर्मणि ॥२॥ समया ग्राममिति । सामीप्यसंबन्धे षष्ठ्यां प्राप्तायां द्वितीयाविधिः । एवं निकषायोगे । हाशब्दः शोकादिवृत्तिरिति तद्योगे षष्ठ्येव प्राप्नोति ॥ [ हा तातेत्यादौ त्वन्तरङ्गत्वात् संबोधनविभक्तिरेव भवति ॥ ]

( उद्योतः ) कर्मणि ॥ २ ॥ सामीप्यसंबन्धे इति । समयाशब्दशक्यस्यापि सामीप्यस्य तत्प्रधानार्थनिरूपितं संबन्धत्वमपि । यथा राज्ञः स्वमित्यत्र स्वत्वस्येति भावः । सामीप्यानन्तर्यादीनां न षष्ठ्यर्थत्वमिति तु समभिव्याहृतपदार्थभिन्नसामीप्यादिपरम् ॥ [संबोधनेति । संबोधनविभक्तेः पदान्तरानपेक्षत्वादित्यर्थः ॥]

( भाष्यम् ) अपर आह—

( १४७० द्वितीयाविधायकवार्तिकान्तरम् ॥ २ ॥ )

**॥ * ॥ द्वितीयाविधानेऽभितःपरितःसमयानिकषाध्यधिधिग्योगेषूपसंख्यानम् ॥ * ॥**

( भाष्यम् ) द्वितीयाविधानेऽभितःपरितःसमयानिकषाऽध्यधिधिग्योगेषूपसंख्यानं कर्तव्यम् । अभितो ग्रामम् । अभितः ॥ परितो ग्रामम् । परितः ॥ समया ग्रामम् । समया ॥ निकषा ग्रामम् । निकषा ॥ अध्यधि ग्रामम् । अध्यधि ॥ धिग्जाल्मम् । धिग् वृषलम् । धिग् ॥

( प्रदीपः ) अभितो ग्राममिति । पर्यभिभ्यां चेति तसिलन्तावभितः परितः शब्दावुभयतः सर्वतइत्यनयोरर्थयोर्वर्तेते । तद्योगे षष्ठ्येव प्राप्नोति । आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातोभितःशब्दोस्ति सोपीह गृह्यते तद्योगेऽपि षष्ठी प्राप्नोति ॥ अध्यधि ग्राममिति । उपर्यध्यधसः सामीप्य इति द्विर्वचनम् । अधिशब्दोत्रोपर्यर्थे वर्तते इति षष्ठी प्राप्नोति ॥ धिग् जाल्ममिति । धिक्शब्दस्य निन्दार्थत्वात्तद्योगे षष्ठ्याः प्राप्तिः ॥

( उद्योतः ) उपर्यर्थेवर्तते इति । उपरिसामीप्ये वर्तते इत्यर्थः ॥

( भाष्यम् ) अपर आह—

( १४७१ द्वितीयाविधायकवार्तिकान्तरम् ॥ ३ ॥ )

**उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।**
**द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यते ।**

उभसर्वइत्येताभ्यां तसन्ताभ्यां योगे द्वितीया वक्तव्या । उभयतो ग्रामम् । सर्वतो ग्रामम् ॥ धिग्योगे—धिग् जाल्मम् धिग् वृषभम् ॥ उपर्यादिषु त्रिष्वाम्रेडितान्तेषु द्वितीया वक्तव्या । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोधो ग्रामम् ॥ ततोन्यत्रापि दृश्यते । न देवदत्तं प्रति भाति किंचित् । बुभुक्षितं न प्रति भाति किंचित् ॥ कर्मणि द्वि ॥२॥

( प्रदीपः ) उभसर्वतसोरिति । उभसर्वयोस्तसाविति षष्ठीसमासः । उभयशब्दावयवस्योभशब्दस्यानुकरणमुभशब्द इत्युभयशब्दो गृह्यते, द्विवचनटाब्विषयत्वादुभशब्दस्य तसन्तस्याभावात् ॥ दृश्यत इति । दृशिग्रहणं प्रयोगानुसरणार्थम् ॥ न देवदत्तं प्रतीति । षष्ठ्यत्र प्राप्नोति । प्रतिशब्दश्चात्र क्रियाविशेषक उपसर्गो न तु कर्मप्रवचनीय इत्युदाहृतम् । केनचित् किंचित्स्मृतमिति दर्शनायानेकस्मृत्युपन्यासः ॥ २ ॥

( उद्योतः ) उभसर्वइत्येताभ्यामिति भाष्यस्य एतत्प्रकृतिकाभ्यामित्यर्थः ॥ उभशब्दात्तसोनुत्पत्त्यास्यायुक्तत्वं परिहरन्नुक्तस्यार्थस्य वार्तिकाद्यथा लाभस्तथा दर्शयति—उभसर्वयोरिति । ननु वृत्तिविषये पूर्वमेवायचः प्रवृत्तेरुभप्रकृतिकत्वं न तस इत्यत आह—उभयेति । उभेति तदघटितोभयशब्दलाक्षणिकमिति भावः ॥ ननु कर्मप्रेति । अन्यथा कर्मप्रवचनीययुक्ते इत्येव सिद्धं स्यादित्यर्थः ॥ २ ॥

( २९५ द्वितीयातृतीयासूत्रम् ॥ २ । ३ । १ आ० ३ )

## ४६१ तृतीया च होश्छन्दसि ॥ २।३।३ ॥

( उद्योतः ) तृतीया च ॥ ३ ॥ अस्योदाहरणेऽग्निहोत्रशब्दो हविःपरस्तत्र द्वितीया तत्समानाधिकरणयवागूशब्दादनेन तृतीयापि । विरुद्धविभक्त्यर्थानवरुद्धत्वाच्च सामानाधिकरण्यमिति सूत्रमवम्, भाष्यमतं च ॥ एवंतर्हि तृतीयापि सिद्धेत्यादेर्भाष्यस्योक्तिप्रत्युक्तिक्रमेण पूर्वपक्ष्युक्तित्वात् ॥

( प्रयोजनाधिकरणम् )

( प्रत्याख्यानाय पूर्वपक्षिण आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ? ।

१ अयं प्रदीपग्रन्थः कोष्ठकान्तर्गतः यद्यपि सर्वेषु पुस्तकेषु द्वितीयवार्तिकव्याख्यान्ते समुपलभ्यते तथापि योग्यस्थानेऽस्माभिः स्थापितः ।
२ समीपनिरूपितमित्यर्थः । ( र. ना. )
३ अयं कोष्ठकान्तर्गतः उद्योतग्रन्थो यद्यपि सर्वेषु पुस्तकेषु द्वितीयवार्तिकव्याख्यान्त एव समुपलभ्यते तथापि योग्यस्थानेऽस्माभिः स्थापितः ।
४ सप्तम्यन्तमिदम् । साहचर्यञ्च तदर्थवाचकत्वमात्रेण । अव्युत्पन्नत्वमत्र पक्षे विशेषः । ( र. ना. )
५ अनेकवार्तिकोपन्यास इत्यर्थः । ( र. ना. )

(प्रदीपः) **तृतीया च ॥ ३ ॥ किमर्थमिति ।** अन्तरेणाप्येतत्सूत्रं द्वितीयातृतीये सिद्धे इति प्रश्नः ॥

**( सिद्धान्तिनः सूत्रप्रयोजनभाष्यम् )**

**तृतीया यथा स्यात् ॥**

(प्रदीपः) **तृतीयेति ।** देवतोद्देशेनाग्नौ हविःप्रक्षेपो जुहोत्यर्थस्तत्र यवाग्वा द्वितीया प्राप्तेति तृतीया विधीयते ॥

(उद्योतः) ननु जुहोतेः प्रीणात्यर्थत्वेऽग्निहोत्रशब्दस्याग्नेय[1]र्थत्वे करणत्वात् तृतीयासिद्धिमाशङ्क्याह—**देवतेति** ॥ अग्निहोत्रशब्दो हविःपरः । तद्विशेषणं यवागूरिति भावः ॥ यद्यपि अग्नौ हविरिति त्विन्त्यं पदे जुहोति अग्नौ जुहोतीत्यादिश्रुतिविरोधात्[2] । तस्माद्वैधे आधारे प्रक्षेप इत्येव युक्तम्, तथापि प्रकृताभिप्रायमेतत् । तत्र यवाग्वाः कर्मत्वाद् द्वितीया प्राप्तेत्यर्थः ॥

**( पूर्वपक्षिण आक्षेपभाष्यम् )**

**अथ द्वितीया सिद्धा ? ॥**

(प्रदीपः) **अथ द्वितीयेति ।** किमप्राप्ता द्वितीया चकारेण विधीयते अथ तृतीयया मा बाधीति पक्षे चकारेणाभ्यनुज्ञायत इति प्रश्नः ॥

(उद्योतः) चकारेण द्वितीयाविधानात् प्रश्नानुपपत्तिमाशङ्क्याह—**किमप्राप्तेति** ॥

**( सिद्धान्तिनः समाधानभाष्यम् )**

**सिद्धा ॥ कथम् ? । 'कर्मणि' इत्येव ॥**

**( पूर्वपक्षिणः सूत्रवैयर्थ्यभाष्यम् )**

**तृतीयापि सिद्धा ॥ कथम् ? । *सुपां सुपो भवन्ति* इत्येव ॥**

**( सिद्धान्तिनः सूत्रसार्थक्यभाष्यम् )**

**असत्येतस्मिन्—* सुपां सुपो भवन्ति * इति, तृतीयार्थोऽयमारम्भः । यवाग्वाग्निहोत्रं जुहोति ॥**

(प्रदीपः) **असत्येतस्मिन्निति ।** न हि पाणिनेः सूत्रकरणकाले कात्यायनवचनस्य भावः ॥

(उद्योतः) प्रयोजनान्तरसिद्धये तस्यावश्यकत्वाद् असत्येतस्मिन्नित्ययुक्तमत आह—**नहीति** । एवं च बुद्धावसति तस्मिन्नुपायान्तरपरमिति भावः ॥

**( एकदेशिनः पूर्वपक्षिणो वा प्रत्याख्यानभाष्यम् )**

**एवं तर्हि तृतीयापि सिद्धा ॥ कथम् ? । "कर्तृकरणयोः" इत्येव ॥ अयमग्निहोत्रशब्दोऽस्त्येव ज्योतिषि वर्तते । तद्यथा—अग्निहोत्रं प्रज्वलितमिति ॥ अस्ति हविषि वर्तते । तद्यथा—अग्निहोत्रं जुहोतीति ॥ जुहोतिश्चास्त्येव प्रक्षेपणे वर्तते । अस्ति प्रीणात्यर्थे वर्तते ॥ तद्यदा तावद्यवागूशब्दात्तृतीया, तदाग्निहोत्रशब्दो ज्योतिषि वर्तते, जुहोतिश्च प्रीणात्यर्थे । तद्यथा—'यवाग्वाग्निहोत्रं जुहोति' अग्निं प्रीणाति ॥ यदा यवागूशब्दाद् द्वितीया तदाग्निहोत्रशब्दो हविषि वर्तते जुहोतिश्च प्रक्षेपणे । तद्यथा—'यवागूमग्निहोत्रं जुहोति' यवागूं हविरग्नौ प्रक्षिपति ॥ तृतीया च ॥ ३ ॥**

(प्रदीपः) **अग्निहोत्रमिति ।** अग्निर्ज्वलित इत्यर्थः ॥ **अग्निं प्रीणातीति ।** अग्निषु हूयमानेष्विति प्रीणात्यर्थे जुहोतेः प्रयोगदर्शनात् ॥ ३ ॥

(उद्योतः) **एवं तर्हि तृतीयापी**त्यादि भाष्यं पूर्वपक्ष्युक्तिः । अर्थभेदात्सा न युक्तेति स्फुटत्वाद् भाष्ये नोक्तम् ॥ **अग्निष्विति** बहुवचनेन सामानाधिकरण्यावगतेरर्थान्तरासम्भवात्प्रीणात्यर्थत्वमित्यर्थः ॥ यत्तु मीमांसका अग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्र[3]ख्यन्यायात् स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासाविति दर्शनाच्च । एवं च करणभूते होमे समानाधिकरणस्याग्निहोत्रस्य करणत्वात् तृतीयायां प्राप्तायां पक्षे द्वितीयार्थमिदम् । यवाग्वा अपि करणत्वादेव तृतीया सिद्धेति ॥ तन्न सूत्रानुगुणम्, नापि भाष्यानुगुणं, कर्मणीत्यनुवृत्तेः । पाणिनीयस्मृतेर्वचनरूपत्वेन जैमिनीयाया न्यायरूपत्वेन तद्बाधकताया अस्या[4]भ्युचितत्वाच्च । एवं च यवाग्वाग्निहोत्रं जुहोतीत्यादिवाक्ये नामधेयत्वाभावः । अत एव यवागूमग्निहोत्रं जुहोतीत्यादिसिद्धिरिति दिक् ॥ ३ ॥

---

**( २९६ द्वितीयासूत्रम् ॥ २ । ३ । १ आ. ४ )**

## ४६२ अन्तरान्तरेण युक्ते ॥ २।३।४ ॥

**( अन्तरेणेतिशब्दार्थनिर्णयाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**इह कस्मान्न भवति—किं ते बाभ्रवशालङ्कायनानामन्तरेण गतेनेति ? ॥**

(प्रदीपः) **अन्तरा ॥ ४ ॥ अन्तरेण गतेनेति ।** अन्तरशब्दोऽत्र विशेषवाची । विशेषेण ज्ञातेन किं ते प्रयोजनमिति वाक्यार्थः ॥

(उद्योतः) **अन्तरान्त ॥ ४ ॥** अन्तरेणेतितृतीयान्ताभिप्रायेण प्रश्न इत्याह—**अन्तरेति** । गतशब्दो ज्ञातार्थक इति भावः ॥

**( समाधानभाष्यम् )**

**'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति ॥**

**अथ वा यद्यपि तावदयमन्तरेणशब्दो दृष्टापचारो निपातश्चानिपातश्च । अयं तु खल्वन्तराशब्दोऽदृष्टापचारः निपात एव । तस्यास्य**

---

[1] मौतिकाग्नौ हूयते यस्मै देवरूपायाग्नये इति व्युत्पत्त्येति भावः । (र. ना.)

[2] अग्नौ हविःप्रक्षेपस्य जुहोत्यर्थत्वे श्रुतावग्नामित्यनन्वितं स्यादिति भावः । (र. ना.)

[3] 'तत्प्रख्यं चान्यशास्त्रम्' (१।४।४) इति हि जैमिनीयं सूत्रमिति भावः ।

[4] 'अस्या उचित' ।

**कोन्यः सहायो द्वितीयो भवितुमर्हति—अन्यदतो निपातात् । तद्यथा—अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते, नाश्वो न गर्दभः ॥**

( प्रदीपः ) **लक्षणप्रतिपदोक्तयोरिति** । तृतीयान्तो लाक्षणिकः, विभक्तिप्रतिरूपकस्तु निपातः प्रतिपदोक्तः ॥ **दृष्टापचार इति** । दृष्टव्यभिचारः । अनिपातस्यापि भावात् ॥ **अन्तराशब्द इति** । नन्वन्तराशब्दोऽप्यनिपात आबन्तोऽस्ति, अन्तरायां पुरि वसतीति, तत्कथमसावदृष्टापचारः ॥ एवं तर्हि टाबन्तस्य लाक्षणिकत्वात् स्त्रीत्वापेक्षटाबाश्रयत्वाद्बहिरङ्गत्वाच्चाग्रहणं मन्यते ॥ अथ वा परस्परसाहचर्यान्निपातयोर्ग्रहणमिति वाच्यम् ॥

( उद्द्योतः ) **बहिरङ्गत्वादिति** । अर्थकृतबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणाच्चिन्त्यमिदम् ॥ लाक्षणिकत्वेन परिहारे तेनैवान्तरेणेत्यस्य व्यावृत्तौ भाष्यानुपपत्तिस्तदवस्था पूर्वसादविशेषश्चेत्यत आह—**अथवेति** । साहचर्यमत्र सादृश्यम् ॥ **कोन्यः सहाय** इति भाष्ये **प्रयोगे** इति शेषः । यथा कार्ये सदृशस्यैव सहायत्वं तथा प्रयोगेपीति भावः ॥ **परस्परेति** । अन्तरासाहचर्यादन्तरेणेत्यतृतीयान्तं तत्साहचर्यात्तदटाबन्तमेवेति निपातयोरेव ग्रहणसिद्धिरिति भावः ॥ न च परस्परसाहचर्यादनव्यययोरेव ग्रहणं कुतो नेति वाच्यम् । व्याख्यानात् ॥ यत्तु—अव्यययोः स्वरादौ चादौ वा पाठेन परस्परसाहचर्यसंभवेप्यनव्यययोः पाठाभावात्साहचर्यस्य वक्तुमशक्यत्वादिति । तन्न, उक्तभाष्येण सादृश्यस्य सहप्रयोगे नियामकताया उक्तत्वात् ॥ वस्तुतस्तु युक्तग्रहणात् संबन्धिनि नित्यसाकाङ्क्षयोरेवैतयोर्ग्रहणम् । न च टाबन्तान्तराशब्दस्तथा, अनावृतदेशत्वेन परिधानीयत्वेनैव च तेन बोधादिति भाष्याशयः ॥ **अस्य गोर्द्वितीयेनेति** । द्वितीयशब्दोत्र सहायवाची ॥

( १४७२ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अन्तरान्तरेणयुक्तानामप्रधानवचनम् ॥ * ॥

( भाष्यम् ) **अन्तरान्तरेणयुक्तानामप्रधानग्रहणं कर्तव्यम् । अप्रधाने द्वितीया भवतीति वक्तव्यम् । अन्तरा त्वां मां च कमण्डलुरिति कमण्डलोर्द्वितीया मा भूदिति ॥**

( प्रदीपः ) **अप्रधान इति** । युष्मदस्मदर्थस्य विशेषणत्वादप्राधान्यं कमण्डलोस्तु विशेष्यत्वात्प्रधानता ॥

( आक्षेपभाष्यम् )

**कः पुनरेताभ्यां कमण्डलोर्योगः ? ॥**

( प्रदीपः ) **कः पुनरिति** । अन्तरान्तरेणशब्दाभ्यामाधेयप्रधानमध्यवचनाभ्यां युष्मदस्मदर्थस्यैवावधेर्योगो न तु कमण्डलोरिति मत्वा प्रश्नः ॥

( उद्द्योतः ) मध्ये इत्यर्थकेनान्तरेणेत्यादिना कमण्डलोरपि योगात् प्रश्नानुपपत्तिरत आह—**अन्तरेति** । अन्तरेत्यादेर्मध्यवर्तीत्यर्थः ॥ **ननु कमण्डलोरिति** । अभेदस्य सत्त्वेपि तस्य षष्ठीप्रयोजकत्वाभावेन तदपवादविभक्तिप्रयोजकत्वमपि नेति भावः ॥

( समाधानभाष्यम् )

**यत्त्वां च मां चान्तरा तत्कमण्डलोः स्थानम् ।**

( प्रदीपः ) **यत्तदिति** । मध्य इत्येतस्मिन्नर्थे तयोर्वर्तनादवधेरपि ताभ्यां योगोऽस्ति आधारार्थत्वादाधेयस्य कमण्डलोः ॥ **अन्तरा तदिति** । अत्र भाष्यकारेण मध्यमात्रवचनोन्तराशब्दः प्रयुक्तो न त्वाधाररूपमध्यवाची । अन्यथा तत्स्थानमिति सामानाधिकरण्यं न स्यात् । कमण्डलुयोगप्रतिपादनाय चैवं प्रयोगः । लौकिके तु प्रयोगे मध्यइत्युद्भूताधारशक्तिके मध्येन्तराशब्दो वर्तते ॥

( उद्द्योतः ) **आधारार्थत्वादिति** । आधारस्य तत्र्त्वादित्यर्थः । तस्य तत्परतन्त्रत्वे समानन्यायेनाधेयपरतन्त्र आधार इति कमण्डलोरपि तद्योग इति भावः ॥ **नत्वाधाररूपेति** । आधारशक्तिप्रधानेत्यर्थः ॥ **तत्स्थानमिति** । अन्यथा तत्र स्थानमिति वक्तव्यं स्यादिति भावः ॥ **कमण्डलुयोगेति** । अत्यन्ताभेदप्रतिपादनद्वारेत्यर्थः ॥ **उद्भूताधारेति** । तस्य चाधेये आधाराधेयभावेनैवान्वये साधुत्वं न तु केनचिदभेदान्वये इति भावः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् ।**

**कमण्डलोर्द्वितीया कस्मान्न भवति ? ।**

**'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति प्रथमा भविष्यति ॥ अन्तरान्तरे ॥ ४ ॥**

( प्रदीपः ) **उपपदविभक्तेरिति** । अस्तीति क्रियानुषङ्गात्कमण्डलोः कर्तृत्वम् । तच्च तिङाभिहितमिति प्रथमा कारकविभक्तिः । सा चान्तरङ्गा, क्रियाकारकयोः संबन्धस्यान्तरङ्गत्वाद् । उपपदार्थेन तु क्रियाद्वारकः संबन्ध इति तन्निमित्ता बहिरङ्गा विभक्तिः ॥ ४ ॥

( उद्द्योतः ) **उपपदविभक्तेरिति** न्यायमूलकम्, न वाचनिकमित्याह—**सा चेति** ॥ **क्रियाद्वारक इति** । सर्वत्र संबन्धस्य किञ्चित्क्रियाकारकभावमूलत्वाद् यथा स्वत्वं क्रयादिनिबन्धनमिति भावः ॥ युक्तिरत्र शिथिला, सर्वत्र प्रथमाया एवापत्तेः, युष्मदाद्यर्थेपि सत्ताकर्तृत्वस्याव्यभिचारात् । न चैवं सूत्राणां वैयर्थ्यं, न्यायानुगतेर्थे किं कुर्मः । तस्माद्वचनमेवेदम् । अत एव नमस्यति देवानित्यत्रानेन न्यायेन द्वितीयां वक्ष्यति भाष्यकृत् । तत्र हि क्रियाकारकभावेनैवान्वयादित्यन्ये ॥ न च विशेषणे संबन्धस्योद्भूततया प्रतीतेस्तत्रैवं षष्ठ्यपवादत्वेन सम्बन्धार्थिकैव द्वितीयेति वाच्यम् । प्रथमापवादत्वस्यापि सम्भव इत्याशयात् । **उपपदविभक्तेरिति** वच-

१ इदं पञ्चम्यन्तं बहिरङ्गत्वे हेतुः । लाक्षणिकत्वहेतुसमुच्चयार्थश्चकारः । (र. ना.) २ मध्यपदार्थनिरूपितविशेषणत्वादित्यर्थः । ( र. ना. ) ३ अपीतीहाऽपि संबध्यते । (र. ना.) ४ आधेयप्रयोजकत्वादित्यर्थः । तस्य तत्परतन्त्रत्वे इति । आधेयस्याधारपरतन्त्रत्वे इत्यर्थः । ( र. ना. ) ५ विशेषणबोधकपदे एवेत्यर्थः । न तु विशेष्यबोधकपदे इत्येवकारार्थः । ( र. ना. ) ६ विशेष्यबोधकपदोत्तरजायमानेत्यादिः । ( र. ना. )

नात्तु षष्ठ्यपवादत्वमेव न प्रथमापवादत्वमित्युत्तराशयः । प्रथमाया अपि कारकविभक्तित्वं क्रियाजनकेर्थे तस्या अपि विधानादिति बोध्यम् । तदुक्तम्—कमण्डलोः कर्तृत्वं तिङाभिहितमिति ॥ ४ ॥

—→०←—

( कालवाचकाध्ववाचकाभ्यां विभक्तिनियमप्रकरणम् )

( २९७ द्वितीयासूत्रम् ॥ २ । ३ । १ आ. ५ )

## ४६३ कालाध्वनोरत्यन्तसंयोगे ॥२।३।५॥

( कालाध्वनोरुक्ततया प्रथमासाधनाधिकरणम् )

( १४७३ वार्तिकम् ॥ १ ॥ )

### ॥*॥ अत्यन्तसंयोगे कर्मवल्लाद्यर्थम् ॥*॥

**( भाष्यम् ) अत्यन्तसंयोगे कालाध्वानौ कर्मवद्भवत इति वक्तव्यम् । किं प्रयोजनम् ? । लाद्यर्थम् । लादिभिरभिधानं यथा स्यात्—[ लादिभिरभिहिते द्वितीया मा भूत् ] आस्यते मासः, शय्यते क्रोशः ॥**

**अथ वत्करणं किमर्थम् ? । स्वाश्रयमपि यथा स्यात्—आस्यते मासम्, शय्यते क्रोशम्, अकर्मकाणां भावे लो भवतीति भावे लो यथा स्यात् ॥**

( प्रदीपः ) **कालाध्वनोः** ॥ ५ ॥ पाणिनीये सूत्रन्यासे सति मासमास्यते देवदत्तेनेति भाव[1] एव लादयः स्युर्न तु कर्मणि । ततश्चास्यते मासः, आसितो मासः, आसितव्यो मासः स्वासो मास इति प्रयोगानुपपत्तिरिति वार्तिकारम्भः—**अत्यन्तसंयोग इति** । अनत्यन्तसंयोगे तु अधिकरणसप्तम्येव भवति—अमा[2]वास्यायां यजत इति ॥ **लाद्यर्थमिति** । आदिशब्देन निष्ठादीनां ग्रहणम् । तथा चोदाहृतम् । कर्मातिदेशेनैव च मासमास्ते देवदत्त इति द्वितीयायाः सिद्धत्वान्नार्थः सूत्रेणेति भावः ॥ **स्वाश्रयमपीति** । यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति ब्राह्मणकार्याणि क्षत्रिये क्रियन्ते न तु स्वाश्रयाणि निवर्त्यन्ते, तद्वदत्रापि कर्मकार्याणि अतिदिश्यन्ते न स्वाश्रयाणि निवर्त्यन्ते ॥ यद्येवमन्तरेणापि वतिं स्वाश्रयाणि कार्याणि भविष्यन्ति ॥ नैतदस्ति । स्वाश्रयकार्यनिवृत्तये तद्रूपासङ्ग आशङ्क्येत ॥

( उद्योतः ) **कालाध्वनोः** ॥ ५ ॥ **लाद्यर्थमित्युत्तरं लादिभिरभिधानं यथा स्यादिति** भाष्ये पाठमभिप्रेत्याह—**ननु कर्मणीति** । **अकर्मकधातुभिर्योग** इति तु न विधायकमिति प्रागेव निरूपितम् ॥ **लाद्यर्थमित्युत्तरं** भाष्ये पाठान्तरं **लादिभिरभिहिते द्वितीया मा भूदिति** ॥ तत्त्वयुक्तम्, प्रका[3]रान्तरेण लप्राप्तेरभावात् ॥ नन्विदं वार्तिकं सकर्मकाकर्मकविषयम्, अकर्मकविषयं वा । नाद्यः । मासं पठति वेदं देवदत्त इत्यादौ मासादिकर्मण्यपि लाद्यापत्तौ मासः पठ्यते वेदं देवदत्तेनेत्यादिप्रयोगापत्तेः । नान्त्यः । सङ्कोचे मानाभावात् । सकर्मकार्थं कालाध्वनोरित्यस्यावश्यकत्वेन न तर्हीदानीमिदं सूत्रं कर्तव्यमिति भाष्यविरोधापत्तेश्चेति चेत् ॥ उच्यते—सर्वविषयं वार्तिकम्, सूत्रं च न कार्यमित्येव तात्पर्यम् । न च मासः पठ्यते वेदं देवदत्तेनेत्यस्याप्यापत्तिः । उभयसन्निधौ अन्तरङ्गे मुख्ये च द्रव्यकर्मण्येव लप्रवृत्तिरिति न दोषः । द्रव्यकर्मणोन्तरङ्गत्वं च धात्व[5]न्तरार्थानङ्गस्वार्थकर्मत्वेन ॥ वार्तिकप्रामाण्येन गौणे कर्मणि दुह्यादेरित्यादिवद् भाष्यप्रामाण्येनात्राप्येवंविधकल्पनाश्रयणाच्च । एवं च **प्राकृतमेवेति** पक्षेपि न दोषः । अत्र पक्षे आस्यते मास इति कर्मणि ले **यत्राक्रियये**ति वक्ष्यमाणरीत्याऽवश्यकेनाप्यनेन द्वितीया तु न, अत्यन्तसंयोगस्य व्याप्तिरूपस्य धातुनोक्तत्वात्[6] ॥ **यद्येवमिति** । अकर्मणि कर्मशब्दप्रयोगेण वत्यर्थावगतौ अतिदेशस्वाभाव्यादेव स्वाश्रयसिद्धेरिति भावः ॥ **तद्रूपासङ्ग इति** । कर्मशब्दरूपस्यासङ्गः संबन्धः संज्ञात्वमित्यर्थः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ।**

( समाधानभाष्यम् )

**न वक्तव्यम् । प्राकृ[7]तमेवैतत् कर्म । यथा कटं करोति शकटं करोतीति ॥**

( प्रदीपः ) **प्राकृतमेवेति** । सकर्मकव्यापनादिधात्वर्थाङ्गे आसनादावास्यादीनां वर्तनात् स्वाभाविकमेतत् कर्मेत्यर्थः । ततश्च मासमास्त इत्यस्य मासमासनेन व्याप्नोतीत्यर्थः । नियतत्वाच्च प्रयोगस्य कट आस्त इत्यादौ आसनमात्रेऽनङ्गी[8]कृतक्रियान्तरे आसिर्वर्तत इति अतिप्रसङ्गो नोद्भावनीयः ॥

( उद्योतः ) **धात्वर्थाङ्ग इति** । आसनपूर्वके व्यापने धातोर्वृत्तिरित्यर्थः ॥ नन्वनया रीत्या कटमास्ते इत्यपि स्यादत आह—नियतत्वाच्चेति ॥

( एकदेशिभाष्यम् )

**एवं मन्यते—यत्र कश्चित्क्रियाकृतो विशेष उपजायते, तन्न्यायं कर्मेति । न चेहं कश्चित्क्रियाकृतो विशेष उपजायते ॥**

(प्रदीपः) किमर्थं वार्तिककारेणातिदेश आरब्ध इत्याह—**एवं मन्यत इति** ॥ **यत्र कश्चिदिति** । यथा काण्डानि लुनातीत्यादौ ॥

( उद्योतः ) भाष्ये एकदेशी वार्तिकाशयमाह—**एवं मन्यते** इत्यादिना ॥

( सिद्धान्तिभाष्यम् )

**नैवं शक्यम् । इह हि दोषः स्यात्—आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीति । तस्मात्प्राकृतमेवैतत्कर्म । यथा—कटं करोति, शकटं करोतीति ॥**

( प्रदीपः ) **आदित्यमिति** । न हि दर्शनक्रिययादित्ये

---

१ कालाध्वनोर्द्वितीयाविधानेऽपि कर्मसंज्ञाया अभावादिति भावः । (र. ना.) २ नहि अमावास्यामभिव्याप्य याग इति भावः । ( र. ना. ) ३ वार्तिकोक्तप्रकारभिन्नप्रकारेणेत्यर्थः । ( र. ना. ) ४ कालातिरिक्तकर्मण इत्यर्थः । (र.ना.) ५ धात्वन्तरार्थस्यानङ्गभूतो यः स्वार्थः तत्कर्मत्वेनेत्यर्थः । अयं भावः । वेदस्य पाठकर्मत्वेनान्तरङ्गत्वम्, मासस्य च पाठकरणकव्यापनकर्मत्वेन बहिरङ्गत्वमिति । मासं पठति वेदं देवदत्त इत्यत्र पठतिः पाठकरणकव्यापने वर्तते इति । (र. ना.) ६ उक्तार्थानामप्रयोग इति न्यायेन तदभिधानार्थं द्वितीयाया अप्रवृत्तेरिति भावः । ( र. ना. ) ७ प्रकृतमेव प्राकृतम् । स्वार्थे प्रज्ञादित्वादण् । कर्तुरीप्सिततममिति विहितकर्मसंज्ञकमित्यर्थः । ( र. ना. ) ८ नाङ्गीकृतं प्रधानीकृतं क्रियान्तरं यत्रेति बहुव्रीहिः । अङ्गिन् शब्दादिनान्ताच्विः । ( र. ना. ) ९ नहि आसितानासितमासयोः कश्चन विशेष उपलभ्यत इति भावः । (र.ना.)

प्रत्यक्षानुमानसमधिगम्यः कश्चिद्विशेष उत्पाद्यते । केवलं दर्शनक्रिययाप्सुमिष्टतमत्वादादित्यः कर्म तद्वन्मासमास्त इति मासोपीत्यर्थः ॥

(उद्द्योतः) तद्दूषयति—नैवं शक्यमिति ॥

(आक्षेपभाष्यम्)

**यदि तर्हि प्राकृतमेवैतत्कर्म, 'अकर्मकाणां भावे लो भवतीति भावे लो न प्राप्नोति—आस्यते मासं देवदत्तेनेति ? ॥**

(उद्द्योतः) पुनर्वार्तिकारम्भ आवश्यक एवमपीत्याशङ्कते—यदि तर्हीत्यादिना ॥

(तृतीयाक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम् ? ॥**

(उद्द्योतः) तर्हि तद्वक्तव्यं कर्मवदिति यदुक्तं तदित्यर्थः ॥

(समाधानभाष्यम्)

**न वक्तव्यम् । अकर्मकाणामित्युच्यते । न च केचित्कालभावादिभिरकर्मकाः । त एवं विज्ञास्यामः—'क्वचिद्ये अकर्मका' इति ॥**

**अथ वा 'येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणाम्' न चैतेन कर्मणा कश्चिदप्यकर्मकः ॥**

**अथ वा 'यत्कर्म भवति, न च भवति, तेनाकर्मकाणाम्' न चैतत्कर्म क्वचिदपि न भवति ॥**

(प्रदीपः) न च केचिदिति । यद्यपि क्रियामात्रप्रतिपादने कालादीनामभावात्तदभावनिबन्धनमपि संभवत्यकर्मकत्वं तथापि धातूनामन्यपदार्थत्वेनाश्रयणात् तेषां प्रयोगान्तरे तदर्थानामेव कालादिसंबन्धदर्शनात्तैरकर्मकत्वासंभवात्सामर्थ्याद्विशेषाङ्गीकरणमिति द्रव्यकर्मणाऽकर्मकत्वं विज्ञायत इत्यर्थः ॥ क्वचिदिति । द्रव्य इत्यर्थः ॥ अथ वेति । अन्तरङ्गत्वाद् द्रव्यकर्मणो बहिरङ्गस्य कालादेस्तिरोभावात्तदपेक्षः सकर्मकाकर्मकव्यपदेशो न प्रवर्तत इत्यर्थः ॥ यत्र त्वन्तरङ्गस्यासन्निधिस्तत्र कालादिनिमित्तः सकर्मकव्यपदेशो भवत्येवेत्यास्यते मास इति कर्मणि लकारो भवति ॥ अथवा यत्कर्मेति ॥ संभवव्यभिचाराभ्यां विशेषणविशेष्यभावात् ॥

(उद्द्योतः) उत्तरयति सिद्धान्ती—न वक्तव्यमिति ॥ अकर्मकाणामित्युच्यते इति । गत्यादिसूत्रे इति शेषः । तत्र योग[1]विभागेन सजातीयापेक्षनियमेन सिद्धे तत्सूत्रेऽकर्मकग्रहणात्कालादिभिन्नकर्मरहितार्थबोधकानामेव शास्त्रेऽकर्मकग्रहणेन ग्रहणमिति बोध्यत इति भावः । अकर्मकग्रहणं सामर्थ्यादत्यन्ताविद्यमानकर्मकग्रहणार्थमेव स्यादत आह—न चेति । एवं च तदर्थासम्भव इति भावः ॥ तस्मात्तत्सामर्थ्यान्निषेधप्रतियोगिसमर्पककर्मशब्देन मासादीनामग्रहणं तदाह—तएवमित्यादि ॥ क्वचिदिति । कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिरहितेऽर्थे इत्यर्थः । इदं गतिसूत्रे निरूपितम् ॥

[1] कर्तुरीप्सिततममित्येव गत्याद्यर्थकानामणौ कर्तुर्णौ कर्मत्वे सिद्धे गत्यादिसूत्रारम्भसामर्थ्यात्सकर्मकाणाश्चेदणौ कर्तुर्णौ कर्मत्वं तर्हि गत्याद्यर्थकानामेवेति सजातीयापेक्षनियमस्वीकारेण अकर्मकाणां नियमानाक्रान्तत्वेन पूर्वसूत्रेणैव कर्मत्वे सिद्धे गत्यादिसूत्रेऽकर्मकग्रहणसामर्थ्यात्कालादिभिन्नकर्मरहितार्थबोधकानामेव शास्त्रेऽकर्मकग्रहणेन ग्रहणमिति सामान्यतो बोध्यते, इति भावः । (र.ना.)

यद्यपीति । अकर्मकाणामित्यस्य कर्मानन्वय्यर्थप्रतिपादकानामित्यर्थं इत्यभिप्रायः ॥ तथापि धातूनामिति । धातूनामन्यपदार्थत्वात् क्वचित्कर्म[2]स्पर्शेऽप्यकर्मकत्व[3]हानेः सामर्थ्यान्न विद्यते द्रव्यकर्म येषामिति विग्रह इति भावः । अर्थानामन्यपदार्थत्वेपि भाष्योपपत्तिरुक्तैवेति चिन्त्यम् ॥ तदर्थानामेवेति । अधिकार्थे वृत्तावपि तदर्थस्यात्यागादिदमुक्तम् ॥ द्रव्ये इति । विषयसप्तमीयम् । सामर्थ्याद् द्रव्यरूपकर्मरहिता इत्यर्थं इति भावः ॥ शिष्टं भाष्यं कैयटश्च गत्यादिसूत्रे व्याख्यातौ । एतद्भाष्यस्य वास्तवार्थोपि तत्रैवोक्तः ॥ ननु तुल्यन्[4]यायेन कालकर्मणा सकर्मकव्यवहारस्याप्यभावे तत्र कर्मणि लो न स्यादत आह—यत्र त्विति । तत्संनिधौ तु न तेन व्यवहार इति मासः पठ्यते वेदमिति न प्रयोगः ॥

(सूत्रस्थापनाधिकरणम्)

(आक्षेपभाष्यम्)

**न तर्हीदानीमिदं सूत्रं वक्तव्यम् ? ॥**

(प्रदीपः) वार्तिकं दूषयित्वा सूत्रं स्थापयितुं पृच्छति—न तर्हीति ॥

(उद्द्योतः) तद्वनैव कल्पनया सर्वत्र द्वितीयादिसिद्धौ सूत्रं न कार्यमिति पृच्छति—भाष्ये—न तर्हीति ॥

(समाधानभाष्यम्)

**वक्तव्यं च ॥ किं प्रयोजनम् ? । यत्राक्रिययात्यन्तसंयोगः तदर्थम्—क्रोशं कुटिला नदी, क्रोशं रमणीया वनराजिः ॥ कालाध्वनोः ॥ ५ ॥**

(प्रदीपः) क्रोशं कुटिलेति । गुणेनात्रात्यन्तसंयोगो न तु क्रिययेति कर्मत्वाभावः ॥ ५ ॥

(उद्द्योतः) उत्तरयति—यत्राक्रिययेति । न च मासमास्त इत्यादौ प्राकृतकर्मणः शेषत्वविवक्षायां षष्ठीबाधनार्थं तत्राप्यावश्यकत्वेनाक्रिययेति असंगतम् । क्रियाकारकभावेन यत्रान्वयाभावस्तदर्थमित्य[5]र्थात् ॥ ५ ॥

---

(२९८ द्वितीयाबाधकतृतीयासूत्रम् ॥ २।३।१ आ० ६)

## ४६४ अपवर्गे तृतीया ॥ २ । ३ । ६ ॥

(अनिष्टापत्तिवारणाधिकरणम्)

(१४७४ नियमवार्तिकम् ॥ १ ॥)

**[॥ * ॥ क्रियापवर्गे ॥ * ॥]**

(भाष्यम्) **क्रियाऽपवर्ग इति वक्तव्यम् । साधनापवर्गे मा भूद्—मासमधीतोऽनुवाको न चानेन गृहीत इति ॥ अपवर्गे ॥ ६ ॥**

(प्रदीपः) अपवर्गे ॥ ६ ॥ अपवर्गो निष्ठा । स कदाचित् फलावाप्तौ सत्यां प्रयोजनाभावात् क्रियाया भवति, कदाचिदशक्त्यादिना साधनानामुपरमाद्भवतीति वार्तिकारम्भः क्रियापवर्ग इति ॥ यद्यपि साधनापवर्गे क्रियापवर्गोऽस्ति

[2] अकर्मकधात्वसंभवे सतीति शेषः । (र. ना.) [3] अकर्मकग्रहणसामर्थ्यादित्यर्थः । (र. ना.) [4] यथाकालकर्मसत्त्वेऽपि अकर्मकत्वव्यवहारस्तथेत्यादिः । (र. ना.) [5] पूर्वोक्तस्थले शेषत्वविवक्षायां षष्ठीबाधस्यापि संगृहीतत्वादिति शेषः । (र. ना.)

तथापि विशेषणोपादानसामर्थ्याद्विशेष आश्रीयते क्रियाया एव योपवर्गो, न तु साधनानामशक्त्यादिनिमित्तस्तत्रेत्यर्थः ॥ ६ ॥

( उद्द्योतः ) अपवर्गे ॥ ६ ॥ निष्ठा समाप्तिः ॥ साधनापवर्गे इति । साधनोपरमकृतक्रियात्यागेपीत्यर्थः ॥ क्रियाया एवेति । स्वत एवेत्यर्थः । स च फलप्राप्तावेव भवतीत्यर्थः । साधने आलस्यादिरहिते सत्यपि प्रयोजनलाभेन क्रियायाः समाप्तिः स क्रियापवर्गः । प्रयोजनालाभेन क्रियाया आवृत्त्यावश्यकत्वेपि आलस्यादिना क्रियातो निवृत्तिः साधनापवर्ग इति भेद इति भावः ॥ ६ ॥

( २९९ सप्तमीपञ्चमीसूत्रम् ॥ २ । ३ । १ आ. ७ )

## ४६५ सप्तमीपञ्चम्यौ कारकमध्ये ॥ २ । ३ । ७ ॥

( न्यूनतापूर्त्यधिकरणम् )

( १४७५ विवक्षितपूर्तिवार्तिकम् ॥ १ ॥ )

### [ ॥ * ॥ क्रियामध्ये ॥ * ॥ ]

( भाष्यम् ) क्रियामध्य इति वक्तव्यम् । इहापि यथा स्यात्—अद्य देवदत्तो भुक्त्वा द्र्यहाद्भोक्ता, द्र्यहे भोक्ता ॥ कारकमध्य इतीयत्युच्यमाने इहैव स्यात्—इहस्थोयमिष्वासः क्रोशाल्लक्ष्यं विध्यति, क्रोशे लक्ष्यं विध्यति । यं च विध्यति यतश्च विध्यति तयोस्तन्मध्यं भवति ॥

( प्रदीपः ) सप्तमी ॥ ७ ॥ अद्य देवदत्त इति । द्रव्यं कारकं तच्चात्रैकमेवेति भेदनिबन्धनो मध्यव्यपदेशो नास्तीति भावः ॥ यं चेति । लक्ष्यम् ॥ यतश्चेति । प्रदेशात् ॥ ततश्च लक्ष्यप्रदेशयोः कर्मापादानयोर्भेदान्मध्यव्यपदेशसद्भावः ॥

( उद्द्योतः ) सप्तमीपञ्चम्यौ ॥ ७ ॥ प्रदेशादिति । स चेह इहेति सप्तम्या निर्दिष्ट इति यद्यपि तस्य स्थितिक्रियायामधिकरणत्वम्, तथापि वेधक्रियायामपादानत्वमित्यभिप्रेत्य भाष्ये यत इति पञ्चमीति बोध्यम् । क्रोशाल्लक्ष्यमित्यस्येतः क्रोशादूर्ध्वं विद्यमानं लक्ष्यमित्यर्थः । तद्ध्वनयन्नाह—कर्मापादानयोरिति ॥

( तृतीयाक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । नान्तरेण साधनं क्रियायाः प्रवृत्तिर्भवति । क्रियामध्यं चेत्कारकमध्यमपि भवति । तत्र 'कारकमध्ये' इत्येव सिद्धम् ॥ सप्तमीपञ्चम्यौ ॥ ७ ॥

( प्रदीपः ) शक्तिः कारकमिति पक्षाश्रयेण वार्तिकं प्रत्याचष्टे—नान्तरेण साधनमिति । शक्तिमित्यर्थः । कालभेदभिन्नभुजिक्रियानुमितशक्तिभेदाश्रयो मध्यव्यपदेशोऽस्त्येवेत्यर्थः ॥ ७ ॥

( उद्द्योतः ) भाष्ये साधनशब्देन तद्गता शक्तिरुच्यते इत्याह—शक्तिरिति ॥ शक्तेरतीन्द्रियत्वादाह—क्रियानुमितशक्तीति ॥ ७ ॥

( कर्मप्रवचनीययोगे विभक्तिनियमप्रकरणम् )

( ३०० द्वितीयासूत्रम् ॥ २ । ३ । १ आ. ८ )

## ४६६ कर्मप्रवचनीययुक्ते द्वितीया ॥ २ । ३ । ८ ॥

( अर्थनियमाधिकरणम् )

( १४७६ अर्थनियमवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कर्मप्रवचनीययुक्ते प्रत्यादिभिश्च लक्षणादिषूपसंख्यानं सप्तमीपञ्चम्योः प्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) कर्मप्रवचनीययुक्ते प्रत्यादिभिश्च लक्षणादिषूपसंख्यानं कर्तव्यम् । वृक्षं प्रति विद्योतते विद्युत्, वृक्षं परि विद्योतते विद्युत्, वृक्षमनु विद्योतते विद्युत् । साधुर्देवदत्तो मातरं प्रति । साधुर्देवदत्तो मातरं परि । साधुर्देवदत्तो मातरमनु ॥ किं प्रयोजनम् ? । सप्तमीपञ्चम्योः प्रतिषेधार्थम् । सप्तमीपञ्चम्यौ मा भूतामिति । "साधुनिपुणाभ्यामर्चायां सप्तमी" इति सप्तमी, "पञ्चम्यपाङ्परिभिः" इति पञ्चमी । तत्रायमप्यर्थः—अप्रतेरिति न वक्तव्यं भवति ॥

( प्रदीपः ) कर्मप्रवचनीय ॥ ८ ॥ यदि सामान्येन कर्मप्रवचनीययुक्ते द्वितीयेति लक्षणं क्रियते, तदा 'वृक्षं परिविद्योतते' इत्यत्र विशेषविहितत्वात् पञ्चम्यपाङ्परिभिरिति पञ्चमी प्राप्नोति । साधुर्देवदत्तो मातरं प्रतीत्यत्र च साधुनिपुणाभ्यामिति परत्वात्सप्तमी प्राप्नोति तत्राप्रतेरिति वक्तव्यं भवतीति मत्वाह—प्रत्यादिभिश्च लक्षणादिष्विति । ततश्च पुनर्द्वितीयाविधानात् पूर्वोक्तदोषानवतारः ॥

( उद्द्योतः ) कर्मप्र ॥ ८ ॥ पुनर्द्वितीयेति । वार्तिकेनेति शेषः ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

१ योगे इति शेषः । (र. ना.)

( समाधानभाष्यम् )

न वक्तव्यम् ॥ उक्तं वा * । किमुक्तम् ? । एकत्र तावदुक्तम्—अप्रतेरिति ॥ इतरत्रापि—यद्यपि तावदयं परिदृष्टापचारो वर्जने चावर्जने च । अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव । तस्य कोऽन्यो द्वितीयः सहायो भवितुमर्हति—अन्यदतो- वर्जनार्थात् । तद्यथा—अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः ॥ कर्मप्रवचनी- ययु ॥ ८ ॥

( प्रदीपः ) शिष्टं स्पष्टम् ॥ ८ ॥

( उद्द्योतः ) भाष्ये—तावदुक्तमप्रतेरिति । तत्रत्यः प्रति- र्लक्षणेत्थमिति सूत्रस्थप्रतिपर्यनूनामुपलक्षणमित्यर्थः ॥ भाष्ये— वर्जनार्थ एवेति । तत्रैवार्थे तस्य कर्मप्रवचनीयत्वादिति भावः ॥८॥

( ३०१ कर्मप्रवचनीये सप्तमीसूत्रम् ॥ २।३।१ आ. ९ )

## ४६७ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ २ । ३ । ९ ॥

( ईश्वरवचनशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

कथमिदं विज्ञायते—यस्य चैश्वर्यमीश्वरता ईश्व- रभावस्तस्मात्कर्मप्रवचनीययुक्तादिति । आहोस्विद् यस्य स्वस्येश्वरस्तस्मात्कर्मप्रवचनीययुक्तादिति ? ।

( प्रदीपः ) यस्माद् ॥ ९ ॥ इहाधि ब्रह्मदत्ते पञ्चाला अधि पञ्चालेषु ब्रह्मदत्त इति स्वस्वामिवाचिनोः पर्यायेण सप्तमीष्यते अन्यतरस्यैव तु प्राप्नोतीति विचारः क्रियते— कथमिति । तत्र यदान्तरेणापि भावप्रत्ययमीश्वरशब्देनैश्वर्य- मुच्यते । अथ वेश्वर उच्यते अनेनेतीश्वरवचनमैश्वर्यमुच्यते तदा स्वामिनः सप्तमीत्ययमर्थो भवति । यदा यस्येत्यनेन स्वं निर्दिश्यते यस्य संबन्धीश्वर उच्यते तत्र सप्तमीत्युक्तं भवति ॥

( उद्द्योतः ) यस्मादधिकम् ॥ ९ ॥ अन्यतरस्यैवेति । अधिरीश्वरे इति ईश्वरसंबन्धेऽधेः कर्मप्रवचनीयत्वविधानेन संब- न्धस्य च स्वस्वामिनिष्ठत्वेनोभयोः कर्मप्रवचनीययुक्तत्वेपि यस्य चेश्वरवचनमित्यस्यावृत्तौ मानाभावेनान्यतरस्यैव प्राप्नोतीति भावः ॥ तात्पर्यग्राहकाभावाद् भावप्रधानत्वेऽपरितुष्यन्नाह—अथवेति । प्रवृत्तिनिमित्तेनैश्वर्येण हि ईश्वर उच्यते इति ईश्वरवचनशब्देनैश्वर्य- मुच्यत इत्यर्थः । यद्गतमैश्वर्यं तद्वाचकात्सप्तमी ॥ तत्रेति ॥ तदेतिपाठ उचितः ॥

( भाष्यम् ) कश्चात्र विशेषः ? ॥

( १४७७ प्रथमपक्षदूषणवार्तिकम् ॥ १ ॥ )

॥ * ॥ यस्य चेश्वरवचनमिति कर्तृनिर्दे- शश्चेदवचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चे- दन्तरेण वचनं सिद्धम् । अधि ब्रह्मदत्ते पञ्चालाः । आधृतास्ते तस्मिन् भवन्ति । सत्यमेवमेतत्—नित्यं परिग्रहीतव्यं परिग्रहीत्रधीनं भवति ॥

( प्रदीपः ) कर्तृनिर्देशश्चेदिति । ईशितात्र कर्तृत्वेना- भिमतस्तेन स्वामिनः सप्तमीत्युक्तं भवति ॥ अवचनादिति । एतत्सूत्रारम्भेण विनापीत्यर्थः ॥ आधृता इति । स्वामि- न्याधारे पञ्चालाः स्थिता इत्यर्थः । ततश्चाधिकरणलक्षणा सप्तमी सिद्धेत्यर्थः । सप्तमी शौण्डैरिति विकल्पेन समास- विधानाद् अधि ब्रह्मदत्त इति ब्रह्मदत्ताधीना इति च भवति । विभक्त्यर्थवृत्तित्वे त्वधेरधिब्रह्मदत्तमिति च भवति ॥ सत्य- मिति । अधिकरणं संमन्यते ॥

( उद्द्योतः ) एतत्सूत्रेति । तदेकदेश—यस्य चेश्वरवचन- मित्येतदित्यर्थः ॥ ब्रह्मदत्ताधीना इति । अषडक्षेत्यादिनाध्युत्तर- पदत्वात्खः । अत एव परिग्रहीत्रधीनमिति वक्ष्यमाणभाष्यप्रयो- गोपपत्तिः ॥ नन्वेवमधिनाव्ययीभावो न स्यादत आह—विभ- क्त्यर्थेति ॥ संमन्यत इति । तृतीय उक्तोर्थं उपपत्तियुक्त इत्यनु- मोदत इत्यर्थः । अनुमोदनाकारमाह—भाष्ये—नित्यमित्यादि । परिग्रहीत्रधीनम् परिग्रहीत्राधारकमित्यर्थः ॥

( १४७८ द्वितीयदूषणवार्तिकम् ॥ २ ॥ )

॥ * ॥ प्रथमानुपपत्तिस्तु ॥ * ॥

( भाष्यम् ) प्रथमा नोपपद्यते ॥ कुतः ? । पञ्चा- लेभ्यः ॥

( प्रदीपः ) प्रथमानुपपत्तिस्त्विति । सप्तमीविधान- मनर्थकं प्रथमा च स्वान्न प्राप्नोतीति दोषद्वयोपन्यासः ॥

( उद्द्योतः ) प्रथमा चेति । भाष्ये तुशब्दश्चार्थे इति भावः ॥ सूत्रारम्भे तस्य वैयर्थ्यं प्रथमानुपपत्तिश्चेति दोषद्वयमिति तृतीयो वदतीति तात्पर्यम् ॥ एतत्सूत्रसत्त्वे हि अधिरीश्वरे इति कर्मप्रवच- नीयसंज्ञाविधायकं कार्यम् । तथा चाधेः कर्मप्रवचनीयत्वात्तद्यो- गस्योक्तरीत्या स्ववाचकेपि सत्त्वाद् द्वितीया प्राप्नोतीति दोषः । एतत्सूत्राभावे तु ऐश्वर्यविषयेऽधेः क्रियायोगाभावेन गत्यादिसंज्ञा- बाधरूपफलाभावाद् कर्मप्रवचनीयसंज्ञाया अप्यभावेन कर्मप्रवच- नीययोगाभावाद् द्वितीयाऽप्राप्तौ प्रथमा सिध्यतीति भावः ॥

( आक्षेपभाष्यम् )

का तर्हि स्यात् ? ॥

( उद्द्योतः ) भाष्ये का तर्हि स्यात्षष्ठीसप्तम्यावित्यादिरे- कदेश्युक्तिः ॥

( समाधानभाष्यम् )

षष्ठीसप्तम्यौ "स्वामीश्वराधिपतिदायाद" इति ॥

( बाधकभाष्यम् )

न तत्राधिशब्दः पठ्यते ॥

( साधकभाष्यम् )

यद्यपि न पठ्यते । अधिरीश्वरवाची ॥

१ तदस्य इत्यर्थः । ( र. ना. )

(प्रदीपः) अधिरीश्वरवाचीति । स्वामीश्वरेत्यर्थ- ग्रहणात्पर्यायाणामपि ग्रहणं मन्यते ॥

(बाधकभाष्यम्)

न तत्र पर्यायवचनानां ग्रहणं भवति ॥ कथं ज्ञायते ? । यदयं कस्यचित्पर्यायवचनस्य ग्रहणं करोति—'अधिपतिदायाद' इति ।

(उद्योतः) अधिपतिदायाद इति । यस्य यो दायादः स तद्दानादिस्वामित्वात्स्वामीति लोके व्यवह्रियत इति ईश्वरपर्यायावि- माविति भावः ॥

(समाधानान्तरभाष्यम्)

षष्ठी तर्हि प्राप्नोति ।

(प्रदीपः) षष्ठी तर्हीति । स्वस्वामिसंबन्धसद्भावात् ।

(बाधकभाष्यम्)

शेषलक्षणा षष्ठी; अशेषत्वान्न भविष्यति ॥

(प्रदीपः) अशेषत्वादिति । प्रातिपदिकार्थमात्रनिष्ठ- त्वाद्व्यतिरेकाभावात् ॥

(उद्योतः) व्यतिरेकाभावादिति । भेदसंबन्धेनेतरान्वयि- त्वाभावादित्यर्थः ॥

(समाधानान्तरभाष्यम्)

द्वितीया तर्हि प्राप्नोति "कर्मप्रवचनीययुक्ते द्वितीया" इति ॥

(प्रदीपः) द्वितीया तर्हीति । अधिरीश्वर इत्यधेः कर्मप्रवचनीयत्वात् ॥

(उद्योतः) ननु ईश्वरत्वद्योतकस्येश्वरापेक्षया कर्मप्रवचनी- यस्याधेः कथं पञ्चालसंबन्धद्योतकत्वं येन ततो द्वितीया स्यादत आह—अधिरीश्वर इत्यधेरिति । ऐश्वर्यविषयार्थद्योतकस्याधेरिति तदर्थ इति भावः । एवं च परस्परप्रतियोगिकसंबन्धस्य परस्पर- निष्ठस्य तेन द्योतनादस्त्येव तत्प्राप्तिरिति भावः ॥

(बाधकभाष्यम्)

सप्तम्योक्तत्वात्तस्यार्थस्य द्वितीया न भविष्यति ॥

(प्रदीपः) सप्तम्येति । ब्रह्मदत्तशब्दादनेन द्वितीया- पवादेन विधीयमानया सप्तम्योभयगतस्य संबन्धस्याभिधाना- त्पञ्चालशब्दाद् द्वितीया न भवतीत्यर्थः ॥

(उद्योतः) उभयगतस्य संबन्धस्येति । विशेषणादुत्पन्नया षष्ठ्यैवेति[1] भावः ॥

(साधकभाष्यम्)

भवेद्योऽधेर्ब्रह्मदत्तस्य चाभिसंबन्धः स सप्त- म्योक्तः स्यात् । यस्तु खल्वधेः पञ्चालानां चाभि- संबन्धस्तत्र द्वितीया प्राप्नोति ॥

(प्रदीपः) भवेदिति ॥ अधिरीश्वर इत्यत्रेश्वरेणेशित- व्यस्याप्याक्षेपादीशितव्यस्याप्यधिना योगोऽस्तीति भावः ॥

(उद्योतः) भाष्ये—अधेर्ब्रह्मदत्तस्य चेति । अधिद्योत्यो[2] ब्रह्मदत्तनिष्ठः संबन्ध इत्यर्थः ॥ एवमग्रेऽपि । चस्तूभयत्रापि वाक्या- लंकारे ॥ ईशितव्यस्येति । ऐश्वर्यविषयार्थेः[3] कर्मप्रवचनीयत्वमिति तदर्थः । षष्ठी तु विशेषणादुत्पन्नाप्युभयगतं संबन्धं सामर्थ्याद्बोध- यति ॥ परत्र तद्बोधकविभक्त्यविधानाद् । अत्र तु परत्रापि तद्बोधक- विभक्तिप्राप्त्या विशेष्यनिष्ठसंबन्धबोधकत्वं न विशेषणविभक्तेरिति तात्पर्यम् । द्वितीया प्रथमापवादिकापीत्यभिमानः ॥

(१४७९ शेषपूर्तिवार्तिकम् ॥ ३ ॥)

॥ * ॥ स्ववचनात्तु सिद्धम् ॥ * ॥

(भाष्यम्) अस्तु—यस्य स्वस्येश्वरस्तस्मात्कर्म- प्रवचनीययुक्तादिति ॥

(प्रदीपः) इदानीं द्वितीयं वाक्यं दर्शयितुमाह— स्ववचनादिति । यस्येश्वरवचनमित्यनेन स्वस्य सप्तमीप्रकृ- तित्वेन वचनात् प्रतिपादनात् ॥

(उद्योतः) सूत्रे स्वपदानुपादाने कथं स्ववचनात्प्राप्तिरित आह—यस्येति ॥

(स्वेऽपि सप्तमीविधानानर्थक्याक्षेपभाष्यम्)

एवमप्यन्तरेण वचनं सिद्धम् । अधि ब्रह्मदत्तः पञ्चालेषु—आधृतः स तेषु भवति । सत्यमे- वमेतत्—नित्यं परिग्रहीता परिग्रहीतव्याधीनो भवति ॥

(द्वितीयदूषणभाष्यम्)

प्रथमानुपपत्तिस्तु ॥

प्रथमा तु नोपपद्यते ॥ कुतः ? । ब्रह्मदत्तात् ॥

(प्रत्याक्षेपभाष्यम्)

का तर्हि स्यात् ? ।

(समाधानभाष्यम्)

षष्ठीसप्तम्यौ—'स्वामीश्वराधिपतिदायाद-' इति ॥

(समाधानबाधकभाष्यम्)

न तत्राधिशब्दः पठ्यते ॥

(समाधानसाधकभाष्यम्)

यद्यपि न पठ्यते । अधिरीश्वरवाची ॥

(समाधानबाधकभाष्यम्)

न तत्र पर्यायवचनानां ग्रहणं भवति ॥ कथं ज्ञायते ? । यदयं कस्यचित्पर्यायवचनस्य ग्रहणं करोति—'अधिपतिदायाद—' इति ॥

(समाधानसाधकभाष्यम्)

षष्ठी तर्हि प्राप्नोति ॥

(समाधानबाधकभाष्यम्)

शेषलक्षणा षष्ठी, अशेषत्वान्न भविष्यति ॥

---

1 षष्ठ्येवेति इति पाठः साधुः । (र. ना.)

2 'अधेर्द्योत्यो' । 3 ऐश्वर्यविषय इत्यत्र बहुव्रीहिः । (र. ना.)

(समाधानसाधकभाष्यम्)

**द्वितीया तर्हि प्राप्नोति 'कर्मप्रवचनीययुक्ते द्वितीया' इति ॥**

(समाधानबाधकभाष्यम्)

**सप्तम्योक्तत्वात्तस्याभिसंबन्धस्य द्वितीया न भविष्यति ॥**

(प्रत्याक्षेपसमाधानसाधकभाष्यम्)

**भवेद्योधेः पञ्चालानां चाभिसंबन्धः स सप्तम्योक्तः स्यात् । यस्तु खल्वधेर्ब्रह्मदत्तस्य चाभिसंबन्धः तत्र द्वितीया प्राप्नोति ॥**

(उद्योतः) तत्र द्वितीया प्राप्नोतीत्यन्तं भाष्यं पूर्ववदेव व्याख्येयम् ॥

(व्याख्यानान्तरभाष्यम्)

**एवं तर्हि—**

**स्ववचनात्तु सिद्धम्*इति ।**

**अधिः स्वं प्रति कर्मप्रवचनीयसंज्ञो भवतीति वक्तव्यम् ॥**

(प्रदीपः) **स्ववचनात्तु सिद्धम्**इत्येतदन्यथा व्याख्यातुमाह—**एवं तर्हीति** । **अधिरीश्वर** इत्यत्रेश्वरग्रहणमपनीय **'अधिः स्वे'** इति वक्तव्यम् । तत्र स्वमेव प्रत्यधिः कर्मप्रवचनीयसंज्ञः, तस्मादेवानेन सप्तमी विधीयते । तेन स्वामिनं प्रत्यधेः कर्मप्रवचनीयत्वाभावात्ततो द्वितीयाया अभावः । तेनाधि पञ्चालेषु ब्रह्मदत्त इति सिद्धम् । अधि ब्रह्मदत्ते पञ्चाला इत्येतदधिकरणसप्तम्या सिद्धम् ॥

(उद्योतः) अत्र पक्षे द्वितीयावारणायाह—भाष्ये—**एवं तर्हीति** । स्ववचनादिति वार्तिकमेवैतद्दोषवारकमपीति व्याचष्ट इत्याह—**अन्यथा व्याख्यातुमिति** ॥

(आक्षेपभाष्यम्)

**एवमपि यदा ब्रह्मदत्तेऽधिकरणे सप्तमी तदा पञ्चालेभ्यो द्वितीया प्राप्नोति [कथम्?[1]] "कर्मप्रवचनीययुक्ते द्वितीया" इति ॥**

(समाधानभाष्यम्)

**"उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति प्रथमा भविष्यति ॥ यस्मादधिकम् ॥ ९ ॥**

(प्रदीपः) अत्र दोषमुद्भाव्य परिहरति—**एवमपीत्यादिना भविष्यतीत्यन्तेन** । तिष्ठन्ति सन्ति वेति स्थानादिक्रियापेक्षया पञ्चालानां कर्तृत्वात्कारकविभक्तिः प्रथमेति भावः । कर्मप्रवचनीयसंज्ञा त्वधि पञ्चालेषु ब्रह्मदत्त इत्यत्र चरितार्था । यथाधिकरणत्वं द्वयोरपि स्वस्वामिनोर्दर्शितं तथा-**धिरीश्वर** इति **यस्य चेश्वरवचन**मिति च न कर्तव्यम् । ऐश्वर्यविषयस्य चाधेः क्रियायोगाभावाद् गत्युपसर्गसंज्ञाबाधनार्थोऽपि संज्ञाविधिर्नोपयुज्यते ॥ ९ ॥

(उद्योतः) भाष्ये—**एवमपीति** । अधेः स्वं प्रति कर्मप्रवचनीयत्वादिति भावः ॥ ननु संज्ञाविधानसामर्थ्याद् द्वितीया प्रथमां बाधेतेत्यत आह—**कर्मप्रवचनीयसंज्ञा त्विति** । तद्योगेऽपवादविधेस्तस्याः संज्ञाया द्वितीयाविधावनुपस्थानमित्यर्थः । **उपपदविभक्तेरिति** न्यायेनैव **षष्ठीशेष** इतिसूत्रे वक्ष्यमाणया पुरुषादिप्रधानपदात्षष्ठीवारकयुक्त्याप्यत्र द्वितीया वारयितुं शक्येति बोध्यम् ॥ **यथाधिकरणत्वमिति** । केचित्तु अधिकरणसप्तम्यां संज्ञासूत्राभावेन द्वितीयायाः प्राप्त्यभावेन सूत्रप्रत्याख्याने तात्पर्यं सति स्वं प्रति कर्मप्रवचनीयत्वं नोपन्यस्येत ॥ तस्मात्स्वस्वामिभावविवक्षायामाधारत्वाविवक्षायां सप्तम्यर्थं **यस्य चेश्वरवचनमधिरीश्वर** इति च सूत्रद्वयं कार्यम् । विनिगमनाविरहेण च सूत्रद्वयस्योभयत्रार्थे तात्पर्यमित्येव भाष्यतात्पर्यं लभ्यते न तु प्रत्याख्याने । **अधिरीश्वरे** इत्येतदीश्वरत्वे द्योत्ये ईश्वरे द्योत्य इति वा व्याख्येयम् । अन्त्ये स्वं प्रति कर्मप्रवचनीयत्वं लभ्यते । किंचाधिकरणसप्तम्यां पञ्चालेषु द्वितीयावारकयुक्त्यैव पञ्चालेषु सप्तम्यां ब्रह्मदत्तादपि वारयितुं शक्यत्वेन **स्ववचनात्तु सिद्ध**मित्यस्यायुक्तत्वे एव भाष्यतात्पर्यमित्याहुः ॥ ९ ॥

(३०२ द्वितीयाचतुर्थीसूत्रम् ॥ २ । ३ । १ आ. १०)

## ४७० गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ २।३।१२ ॥

(अनुपपत्तिवारणाधिकरणम्)

(१४८० पर्यायग्राहकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ अध्वन्यर्थग्रहणम् ॥ * ॥

(भाष्यम्) **अध्वन्यर्थग्रहणं कर्तव्यम् । इह मा भूत्—पन्थानं गच्छति, वीवधं गच्छतीति ॥**

(प्रदीपः) **गत्यर्थ ॥ १२ ॥ स्वंरूपमिति** वचनात् स्वरूपस्यैव ग्रहणं प्राप्तमित्याह—**अध्वन्यर्थग्रहणमिति** । तेनाध्वपर्यायेभ्योऽपि चतुर्थीप्रतिषेधो भविष्यति । **द्वितीया तु कर्मणि द्वितीयेति** भवति ॥

(उद्योतः) **गत्यर्थ ॥ १२ ॥** तदध्वादिभ्यो द्वितीयापि न स्यादत आह—**द्वितीयेति** । भाष्ये—**वीवधमिति** । 'पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ'इत्यमरः । 'पर्याहाराध्वभारेषु समौ विवधवीवधौ' इति नानार्थकोशः ॥

(१४८१ नियमवार्तिकम् ॥ २ ॥)

### ॥ * ॥ आस्थितप्रतिषेधश्च ॥ * ॥

(भाष्यम्) **आस्थितप्रतिषेधश्चायं वक्तव्यः । यो ह्युत्पथेन पन्थानं गच्छति, 'पथे गच्छति'इत्येव तत्र भवितव्यम् ॥**

(प्रदीपः) **आस्थितप्रतिषेध इति** । आस्थित आ-

[1] अयं पाठः कुत्रचिन्नोपलभ्यते । [2] अर्थद्वयमेव दर्शयति—अधिरीश्वरे इत्यादिना । (र. ना.) [3] अनेन सूत्रेणेति शेषः । (र. ना.)

क्रान्तः सन् यदा पन्था गम्यते तदाऽनध्वनीति प्रतिषेधः । यदा तूत्पथेन पन्था आक्रमितुमिष्यते तदा भवत्येव चतुर्थी ॥

(उद्योतः) भाष्ये—पथे गच्छतीत्येव तत्र भवितव्यमिति । एवकारो भिन्नक्रमः । इति तत्र भवितव्यमेवेत्यर्थः ॥

(सूत्रप्रयोजनाधिकरणम्)

(पूर्वपक्षिण आक्षेपभाष्यम्)

**किमर्थं पुनरिदमुच्यते ? ।**

(प्रदीपः) किमर्थमिति । अन्तरेणाप्येतत् सूत्रं द्वितीयाचतुर्थ्योः सिद्धत्वादिति प्रश्नः ॥

(समाधानभाष्यम्)

**चतुर्थी यथा स्यात् ॥**

(आक्षेपभाष्यम्)

**अथ द्वितीया सिद्धा ? ॥**

(समाधानभाष्यम्)

**सिद्धा 'कर्मणि' इत्येव ॥**

(पूर्वपक्ष्याक्षेपसाधकभाष्यम्)

**चतुर्थ्यपि सिद्धा ॥ कथम् ? । 'संप्रदाने' इत्येव ॥**

(आक्षेपबाधकभाष्यम्)

**न सिध्यति । "कर्मणायमभिप्रैति स संप्रदानम्" इत्युच्यते । क्रियया चासौ ग्राममभिप्रैति ॥ कया क्रियया ? । गमिक्रियया ॥**

(पूर्वपक्ष्याक्षेपसाधकभाष्यम्)

**क्रियाग्रहणमपि तत्र चोद्यते ॥**

(प्रदीपः) क्रियाग्रहणमपीति । यद्यपि तत्र क्रियाग्रहणं प्रत्याख्यातं तथापि तत्रैव न्यायस्योक्तत्वाद्वचनमाश्रित्यास्य सूत्रस्य प्रत्याख्यानं कृतम् ॥ अथवा तत्रत्यन्यायस्मरणार्थमिदमुक्तम् ॥ तत्र यदा गमनस्य संदर्शनादीनाञ्च भेदो विवक्ष्यते तदा संदर्शनादिभिः क्रियाभिराप्यमानत्वात् कर्मणा गमनेनाभिप्रेयमाणस्य संप्रदानत्वाच्चतुर्थी भवति । यदा त्वभेदविवक्षा तदा गमनस्य कर्मत्वाभावाद् ग्रामः कर्मैव भवतीति द्वितीया भवति । भेदाभेदविवक्षा च लौकिकप्रयोगानुसारेण नियतविषयेत्यारम्भप्रत्याख्यानयोर्नास्ति फलभेदः । अत एवापवादविषयेपि द्वितीयाविधानार्थं 'चतुर्थी वा' इति वक्तव्ये द्वितीयाग्रहणं प्रत्याख्यानेन भिन्नफलत्वादव्याख्यानीयम् ॥

(उद्योतः) प्रत्याख्यातमिति । तथा चैतन्मात्रफलसाधकतद्वचनारम्भेणैतद्वचनप्रत्याख्यानं न चमत्कारकारीति भावः ॥ न्यायस्येति । तत्फलस्यान्यथा साधनेन तद्वचनप्रत्याख्यानान्नापूर्वं तत्कर्तव्यं भवतीति भावः ॥ तदेव ध्वनयन्व्याख्यान्तरमाह—अथवेति । न्यायमेव दर्शयति—तत्र यदेति ॥ भेद इति । संयोगानुकूलव्यापाराद् यदा भेदो विवक्ष्यत इत्यर्थः । एतच्च कर्तरि कर्मेति सूत्रे संप्रदानसंज्ञासूत्रे च निरूपितं तत एवावधार्यम् । संयोगश्च कर्तृनिष्ठ एव फलत्वेन विवक्ष्यते इत्यपि बोध्यम् । अन्यथा परत्वात्कर्मत्वमेव स्यादित्याहुः ॥ यदा त्वभेदेति । ग्रामनिष्ठसंयोगानुकूलत्वेनैव यदा विवक्षेत्यर्थः ॥ अत एवेति । चतुर्थी वेति वक्तव्ये द्वितीयाग्रहणमपवादकर्तृकर्मणोरितिषष्ठीविषये कृद्योगेपि द्वितीयार्थमिति न व्याख्यानीयं प्रत्याख्यानेन भिन्नफलत्वादित्यन्वयः ॥ अप्रत्याख्यानीयमिति पाठान्तरे तु चतुर्थी वेति वक्तव्ये द्वितीयाग्रहणमपवादविषयेपि द्वितीयाविधानार्थमिति न भवति । तस्य तथात्वे हि प्रत्याख्यानेन सह भिन्नफलत्वादिदं सूत्रमप्रत्याख्यानीयं स्यादिति योजना । एवं च भाष्यमते ग्रामस्य गन्तेत्यादौ षष्ठ्येवेति भावः ॥

(सूत्रारम्भे दोषवारणाधिकरणम्)

(१४८२ पूर्वपक्षवार्तिकम् ॥ ३ ॥)

**॥ * ॥ चेष्टायामनध्वनि स्त्रियं गच्छत्यजां नयतीत्यतिप्रसङ्गः ॥ * ॥**

(भाष्यम्) **चेष्टायामनध्वनीति 'स्त्रियं गच्छति' 'अजां नयति' इत्यतिप्रसङ्गो भवति ॥**

(प्रदीपः) इदानीं सूत्रस्यातिव्याप्त्युद्भावनायाह—चेष्टायामिति ॥

(१४८३ समाधानवार्तिकम् ॥ ४ ॥)

**॥ * ॥ सिद्धं त्वसंप्राप्तवचनात् ॥ * ॥**

(भाष्यम्) **सिद्धमेतत् ॥ कथम् ? । 'असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत' इति वक्तव्यम् ॥**

(प्रदीपः) सिद्धं त्विति । असंप्राप्तं यद्वस्तु गमनेन संप्रेप्स्यते तस्मिन् कर्मणीत्यर्थः । स्त्री तु संप्राप्तेति चतुर्थ्यभावः । अजां नयतीत्यत्राप्यजायाः संप्रापणाच्चतुर्थ्यभावः ॥ अथवा नयतिर्गत्यर्थ एव न भवति । प्रतीयते ह्यत्र गतिः, नह्यसौ नयतेरर्थः । तस्य प्रापणवाचित्वादित्याहुः ॥

(उद्योतः) अथवा नयतिरिति । एतन्नगतीत्यत्र निरूपितम् ॥ १२ ॥

(१४८४ लाघवप्रदर्शकवार्तिकम् ॥ ५ ॥)

**॥ * ॥ अध्वनश्चानपवादः ॥ * ॥**

(भाष्यम्) **एवं च कृत्वा अनध्वनीत्येतदपि न वक्तव्यं भवति । संप्राप्तं ह्येतत्कर्माध्वानं गच्छतीति ॥ गत्यर्थ० ॥ १२ ॥**

(प्रदीपः) अध्वनश्चेति । यदा त्वसंप्राप्तोध्वा भवति तदा भाव्यमेव चतुर्थ्या अध्वने गच्छतीति प्रागेवोक्तम् ॥१२॥

१ संदर्शनादिकर्मणेत्यर्थः । (र. ना.)  २ सहार्थे तृतीया । (र. ना.)

( ३०३ चतुर्थीसूत्रम् ॥ २ । ३ । १ आ. ११ )

## ४७१ चतुर्थी संप्रदाने ॥ २।३।१३ ॥

( न्यूनतापूर्त्यधिकरणम् )

( १४८५ न्यूनतापूरकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ चतुर्थीविधाने तादर्थ्ये उपसंख्यानम् ॥ * ॥

**( भाष्यम् ) चतुर्थीविधाने तादर्थ्ये उपसंख्यानं कर्तव्यम् । यूपाय दारु, कुण्डलाय हिरण्यमिति ॥**

( प्रदीपः ) **चतुर्थी ॥१३॥ तादर्थ्य इति** । तच्छब्देन कार्यं निर्दिश्यते । तस्मा इदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनं कारणमभिधीयते । तदर्थस्य भावस्तादर्थ्यमिति कार्यकारणसंबन्ध उच्यते, **समासकृत्तद्धितेषु भावप्रत्ययेन संबन्धाभिधानमिति** वचनात् । तत्र द्विष्ठत्वेऽपि संबन्धस्य यथा षष्ठी विशेषणादेव भवति न विशेष्याद् राज्ञः पुरुष इति, तथा चतुर्थी—**यूपाय दार्विति । हेताविति** तृतीयाऽपि दारुशब्दान्न भवति । हेतुहेतुमद्भावस्य चतुर्थ्यैव गमितत्वात्प्रातिपदिकार्थव्यतिरेके च हेतुतृतीयाया विधानादिह च प्रातिपदिकार्थव्यतिरेकाभावात् ।

तस्मायित्युपकार्यं हि कार्यं प्रत्यवमृश्यते ।
तदर्थशब्दात्संबन्धे भावप्रत्यय इष्यते ॥
गम्यमानविभक्तित्वाच्चतुर्थी कार्यवाचिनि ।
गुणे कृतास्पदा तस्मात्कारणं नावगाहते ॥

( उद्योतः ) **चतुर्थी ॥ १३ ॥** तादर्थ्यशब्दार्थमाह—**तच्छब्देति ॥ कार्यप्रयोजनमिति** बहुव्रीहिः । कार्यप्रयोजकमित्यर्थः । ब्राह्मणाय दधीत्यादौ दध्नो ब्राह्मणकारणत्वाभावादुक्तम्—**विशिष्टकार्येति** । भोजनविशिष्टो ब्राह्मणस्तत्रापि कार्यमिति भावः ॥ सोऽर्थो यस्येति बहुव्रीहिस्तु नोक्तः । तत्पुरुषस्यान्तरङ्गत्वात् । **यथा षष्ठीति** । विशेषणनिष्ठतयैव सम्बन्धस्योद्भूततया प्रतीतेरिति भावः ॥ विभक्त्याभिधानेपि तिङादिभिरनभिधानाद्धेतौ तृतीया स्यादेवेत्यत आह—**प्रातिपदिकार्थव्यतिरेके चेति** । षष्ठीविषये हेतुतृतीयाविधानादिति भावः ॥ **प्रातिपदिकार्थेति** । हेतुत्वेनेतरान्वये च तृतीया भवति-एतदर्थस्य च क्वचिदर्थे तेनान्वयाभावादिति भावः ॥ उक्तमर्थं श्लोकाभ्यां संगृह्णाति—**तस्मायीति । उपकार्यं हीति** । विद्यमानमेव यत्किंचिदुपकारविशिष्टं कार्यमित्यर्थः । तेन घटाय दण्ड इत्यादि नेत्याहुः । मोक्षाय हरिं भजतीत्यादौ **क्रियया** यमिति संप्रदाने चतुर्थी बोध्या ॥ **गम्यमानविभक्तित्वादिति** । चतुर्थीतदर्थेति सूत्रेण ज्ञाप्यमानविभक्तित्वादित्यर्थः । तद्धि ज्ञापकं कार्यवाचकाच्चतुर्थ्यां सत्यामेव सङ्गच्छते इति भावः ॥

( आक्षेपभाष्यम् )

**किमिदं तादर्थ्यमिति ? ॥**

( प्रदीपः ) **किमिदमिति** । तस्मा इदमिति सत्यां चतुर्थ्यां समासः । सति समासे तदनुवादेन चतुर्थीविधानमितीतरेतराश्रयत्वं मत्वा प्रश्नः ॥

( उद्योतः ) तदनुवादेनेति । तदर्थानुवादेनेत्यर्थः ॥

( समाधानभाष्यम् )

**तदर्थस्य भावः तादर्थ्यम् ॥**

( आक्षेपभाष्यम् )

**तदर्थं पुनः किम् ? ॥**

( समाधानभाष्यम् )

**सर्वनाम्नोयं चतुर्थ्यन्तस्यार्थशब्देन सह समासः ॥**

( आक्षेपभाष्यम् )

**कथं चात्र चतुर्थी ? ॥**

( समाधानभाष्यम् )

**अनेनैव ॥**

( आक्षेपसाधकभाष्यम् )

**यद्येवम्, इतरेतराश्रयं भवति ॥ केतरेतराश्रयता ? निर्देशोत्तरकालं चतुर्थ्या भवितव्यम् । चतुर्थ्या च निर्देशः । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

( तृतीयाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ॥**

( उद्योतः ) नित्यशब्दत्वेनान्यत्रोक्तेनात्रापीतरेतराश्रयपरिहारः सुकरस्तथापि कार्यवादेपि परिहर्तुमाह—**तत्तर्हीति** । चतुर्थीविधायकमन्यद् वचनमित्यर्थः ॥

( समाधानभाष्यम् )

**न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—'भवति ह्यर्थशब्देन योगे चतुर्थी' इति, यदयं "चतुर्थी तदर्थार्थ—"इति चतुर्थ्यन्तस्यार्थशब्देन सह समासं शास्ति ॥**

**न खल्वप्यवश्यं चतुर्थ्यन्तस्यैवार्थशब्देन समासो भवति ॥ किं तर्हि ? । षष्ठ्यन्तस्यापि भवति । तद्यथा—गुरोरिदं गुर्वर्थमिति ॥**

( प्रदीपः ) **षष्ठ्यन्तस्यापीति** । संबन्धसामान्यविवक्षायां षष्ठ्यस्त्येव ॥

( उद्योतः ) वस्तुत इतरेतराश्रयत्वमेव नेत्याह—**न खल्वपीति** । यदि चतुर्थीसमासं विनान्यः समासो न स्यात् स्यादेवेतरेतराश्रयः । अस्ति चात्र षष्ठीसमास इत्याशयः ॥ नन्वत्र षष्ठी

---

१ इदं बहुव्रीहिसमासेनकारणविशेषणम् । ( र. ना. ) २ प्रातिपदिकार्थव्यतिरिक्ते हेतुहेतुमद्भावसंबन्धे इत्यर्थः । हेतुतृतीयायाः षष्ठ्यपवादत्वेन षष्ठीविषय एव विधानादिति तत्त्वम् । ( र. ना. ) ३ 'तस्मा इत्युप' ॥ ४ उपकार्यमुपक्रियमाणं हि कार्यं तस्मा इत्यनेन प्रत्यवमृश्यते परामृश्यते । तदर्थशब्दात् ष्यञ्रूपो भावप्रत्ययः संबन्धे कार्यकारणभावरूपे इष्यते । गुणे, कारणविशेषणे इत्यर्थः । ( र. ना. ) ५ 'तदर्थ' इत्ययं पाठो वाराणसी B. A. S. मुद्रितपुस्तके दृश्यते । ६ तदर्थपदे इति शेषः । (र. ना.) ७ तत्पुरुषस्यान्तरङ्गत्वञ्च स्वपदार्थप्राधान्यरूपम् । बहुव्रीहेरन्यपदार्थप्राधान्यात् । इति बोध्यम् । ( र. ना. ) ८ आहुरित्यस्वरसबीजन्तु उपकार्यस्य कार्यस्य विद्यमानत्वे एव चतुर्थ्यङ्गीकारे यूपाय दारु कुण्डलाय हिरण्यमिति प्रकृतभाष्योदाहरणासंगतिः । घटाय दण्ड इति तु न भवति । प्रकृतभाष्योदाहरणबलेन प्रकृतिविकृतिभावे एव तादर्थ्यचतुर्थ्यङ्गीकारात् । ( र. ना. )

कथमित्यत आह—संबन्धसामान्येति। तादर्थ्येन बोधे चतुर्थी सम्बन्धत्वेन बोधे षष्ठीति भावः॥ षष्ठीसमासोऽप्येतद्विषये शब्दशक्तिस्वभावान्नित्यसमास इत्याशयेनाह—भाष्ये—गुरोरिदमिति॥

( आक्षेपभाष्यम् )

**यदि तादर्थ्ये उपसंख्यानं क्रियते नार्थः संप्रदानग्रहणेन। यो ह्युपाध्यायाय गौर्दीयते उपाध्यायार्थः स भवति। तत्र तादर्थ्य इत्येव सिद्धम्॥**

( समाधानभाष्यम् )

**अवश्यं संप्रदानग्रहणं कर्तव्यम्। याऽन्येन लक्षणेन संप्रदानसंज्ञा तदर्थम्—छात्राय रुचितं छात्राय स्वदितमिति॥**

( उद्द्योतः ) भाष्ये—यान्येनेति। रुच्यर्थानामित्यादिना॥ कर्मणायमभिप्रैतीति। संज्ञाविधानं तु दाशगोघ्नौ संप्रदान इत्यर्थम्, तत्संप्रदानकं दानमिति बोधार्थं च दानकर्मणो गवादेः संप्रदानार्थत्वेपि दानक्रियायास्तदर्थत्वाभावे चतुर्थ्यन्तार्थस्य दानक्रियान्वयानापत्तिरिति तदन्वयार्थं चेति दिक्॥

( आक्षेपभाष्यम् )

**तत्तर्ह्युपसंख्यानं कर्तव्यम्?॥**

( समाधानभाष्यम् )

**न कर्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति—'भवति तादर्थ्ये चतुर्थी' इति। यदयं "चतुर्थी तदर्थार्थ—" इति चतुर्थ्यन्तस्य तदर्थेन सह समासं शास्ति॥**

( उद्द्योतः ) भाष्ये—यदयमिति। यद्यपि समासः प्रकृतिविकृतिभाव एव तथापि तज्ज्ञाप्या चतुर्थी सर्वत्रेति भावः॥

( १४८६ चतुर्थीविधानवार्तिकम्॥ २॥ )

**॥ * ॥ क्लृपिसंपद्यमाने॥ * ॥**

**( भाष्यम् ) क्लृपिसंपद्यमाने चतुर्थी वक्तव्या। मूत्राय कल्पते यवागूः। उच्चाराय यवान्नमिति।**

( प्रदीपः ) क्लृपीति। संपत्तिरभूतप्रादुर्भाव उत्पत्तिरिह गृह्यत इति विकाराच्चतुर्थी। विकारस्य च प्रकृतिरूपारोपात्सामानाधिकरण्यं, यच्च रूपमुपजायते ततश्चतुर्थीति प्रकृतेर्न भवति। यदा तु प्रकृतेरपादानविवक्षा तदा विकाराच्चतुर्थी न भवतीति केचिदाहुः। अन्ये तु विरोधाभावात्तत्रापि चतुर्थीमिच्छन्ति॥ १३॥

( उद्द्योतः ) क्लृपि॥ सम्पत्तिशब्देन अभूतप्रादुर्भावरूपा उत्पत्तिरुच्यत इत्याह—सम्पत्तिरिति॥ नन्वेवं प्रकृतिविकृत्योर्भेदसत्त्वेनाभेदान्वयोऽनुभवसिद्धो भज्येतेत्यत आह—विकारस्य चेति। तथा च प्रकृतिवाचकसमानाधिकरणत्वात्प्राप्तप्रथमाविभक्तेरपवादोयमिति भावः। विरुद्धार्थकविभक्तिराहित्याच्च सामानाधिकरण्येनान्वय इति बोध्यम्॥ ननु सामानाधिकरण्ये प्रकृतेरपि चतुर्थी स्यादत आह—यच्च रूपमिति। अपादानविवक्षेति। अपादानपदेन शक्तिः। कल्पेरुत्पत्त्यर्थत्वे इदम्॥ अत्र विदन्ति—कल्पत इत्यादेः परिणमत इत्यर्थः। परिणामश्च रूपान्तरप्राप्तिः। तदेकदेशे रूपान्तरे मूत्रादेर्विकारस्याभेदेनान्वयेन ततो द्वितीयायां प्राप्तायां तद्बाधेन चरितार्था चतुर्थी अभेदविवक्षायां परत्वात् प्रथमया बाध्यते। यवागूर्मूत्रं कल्पत इत्येव हि तदा। ध्वनितं चेदं हरदत्तेन॥ कल्पेरुत्पत्त्यर्थत्वे जनिकर्तुरिति प्रकृतेः पञ्चम्यामपि विकृतिवाचकात्परत्वादुपपदविभक्तेरिति न्यायाच्च प्रथमैवेति दिक्॥ अन्येस्त्वित्रेर्थमेवारुचिः। प्रकृत्यादिभ्य इति तृतीयावत् प्रथमापवादोप्येवेत्यपरे॥ यद्यपि दारुयूपयोरिव यवागूमूत्रयोः प्रकृतिविकारभावोस्ति तथापि यवाग्वा मूत्रार्थत्वाभावान्न तादर्थ्यचतुर्थ्यास्य गतार्थता। एवमुत्पातेन ज्ञापिते इति वचनस्य सार्थक्यमूह्यम्॥

( १४८७ चतुर्थीविधानवार्तिकम्॥ ३॥ )

**॥ * ॥ उत्पातेन ज्ञाप्यमाने॥ * ॥**

**( भाष्यम् ) उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या। वाताय कपिला विद्युदातपायातिलोहिनी। [कृष्णा सर्वविनाशाय दुर्भिक्षाय सिता भवेत्॥] मांसौदनाय व्याहरति मृगः॥**

( १४८८ चतुर्थीविधानवार्तिकम्॥ ४॥ )

**॥ * ॥ हितयोगे च॥ * ॥**

**( भाष्यम् ) हितयोगे चतुर्थी वक्तव्या। हितमरोचकिने हितमामयाविने॥ चतुर्थी सं०॥ १३॥**

( उद्द्योतः ) हितयोगे चेति। इदं तस्मै हितमिति निर्देशाज् ज्ञापकात्सिद्धमित्याहुः। अरोचके रोगाख्यायामिति ण्वुल् लोकतो नपुंसकत्वं ततो मत्वर्थ इनिः। सर्वत्रामयस्योपसंख्यानमित्यामयशब्दादिनिः। अन्यत्रापीति दीर्घः॥ १३॥

---

( ३०४ उपपदचतुर्थीसूत्रम्॥ २। ३। १ आ. १२ )

## ४७४ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च॥ २। ३। १६॥

( अनिष्टवारणाधिकरणम् )

( १४८९ विकल्पवारणवार्तिकम्॥ १॥ )

**॥ * ॥ स्वस्तियोगे चतुर्थी कुशलार्थैराशिषि वाविधानात्॥ * ॥**

**( भाष्यम् ) स्वस्तियोगे चतुर्थी कुशलार्थैराशिषि वाविधानाद् भवति विप्रतिषेधेन। स्वस्तियोगे**

---

१ वयन्तु पश्यामः। सर्वत्र चतुर्थ्यङ्गीकारे घटाय दण्ड इत्यपि स्यात्तस्मात् समासस्तज्ज्ञाप्या चतुर्थी चेत्येतदुभयमपि प्रकृतिविकृतिभाव एवेति। ( र.ना. ) २ संपदादित्वाद् भावे क्विप् तदन्तात् सप्तमी। क्लृप्यर्थकधातुप्रयोगे यः संपद्यते तत्र चतुर्थी। विकारवाचकाच्चतुर्थीत्यर्थः। ( र. ना. ) ३ अन्नैर्विरहितो मण्डः पेया सिक्थसमन्विता। यवागूर्बहुसिक्था स्याद् विलेपी विरलद्रवा। इति चक्रदत्ते। सिक्थ ओदनः। (र.ना.) ४ स्तोकं पचतीत्यादिवदिति भावः। (र.ना.)

५ यवाग्वा सहाभेदविवक्षायामित्यर्थः। यदि तु भेदविवक्षायामिति पाठस्तदा मूत्रादेः कर्तृत्वेन क्लृप्तावन्वयविवक्षायामित्यर्थः। (र.ना.) ६ प्रथमाया न्याय्यत्वरूपेत्यर्थः। ( र. ना. ) ७ उपलभ्यतेऽयं पाठः कुत्रचिदेव वाराणसीमुद्रितपुस्तके। क्वचित्तु 'पीता वर्षाय विज्ञेया' इत्युपलभ्यते। ८ मृगव्याहाररूपोत्पातेन मांसौदनलाभो ज्ञाप्यते—इति भावः। ( र. ना. )

चतुर्थ्या अवकाशः—स्वस्ति जाल्माय स्वस्ति वृषलाय । कुशलार्थैराशिषि वाविधानस्यावकाशः अन्ये कुशलार्थाः—कुशलं देवदत्तस्य कुशलं देवदत्ताय । इहोभयं प्राप्नोति—स्वस्ति गोभ्यः स्वस्ति ब्राह्मणेभ्य इति । चतुर्थी भवति विप्रतिषेधेन ॥

( प्रदीपः ) नमःस्वस्ति ॥ १६ ॥ स्वस्तियोग इति । पूर्वविप्रतिषेधार्थं वचनम् ॥ स्वस्ति जाल्मायेति । तत्त्वकथनमिदं, जाल्मत्वादाशीरभावः ॥

( उद्द्योतः ) नमःस्वस्ति ॥ १६ ॥ पूर्ववीति । पुनर्विधानार्थेन चेनेदं सिद्धमिति कश्चित् ॥

( १४९० नियमवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अलमिति पर्याप्त्यर्थग्रहणम् ॥ * ॥

( भाष्यम् ) अलमिति पर्याप्त्यर्थग्रहणं कर्तव्यम् । इह माभूत्—अलं कुरुते कन्यामिति ॥

अपर आह—अलमिति पर्याप्त्यर्थग्रहणं कर्तव्यम् । इहापि यथा स्यात्—अलं मल्लो मल्लाय, प्रभुर्मल्लो मल्लाय, प्रभवति मल्लो मल्लायेति । नमःस्वस्ति० ॥ १६ ॥

( प्रदीपः ) अलमिति । भूषणप्रतिषेधवाचिनोऽलंशब्दस्य[1] निरासार्थं वचनम् । तेनालंकुरुते कन्याम्, अलं रोदनेनेति चतुर्थी न भवति ॥

नन्वत्रोपपदविभक्तेः कारकविभक्तिर्बलीयसीति चतुर्थी न भविष्यतीत्याह—अपर आहेति । सूत्रेऽलंशब्दमपनीय पर्याप्त्यर्थग्रहणं कर्तव्यम् । तेन तत्पर्यायाणामपि ग्रहणं सिध्यति । अन्यथा स्वरूपस्यैव ग्रहणं स्यात् । अथवाऽलमित्यर्थग्रहणं व्याख्येयमित्यर्थः ॥

( उद्द्योतः ) अलं रोदनेनेति । रोदनं मा कुर्वित्यर्थः । एवं चात्र तृतीया कथं, तस्माद्रोदनेन साध्यं नास्ति अतस्तन्मा कुर्वित्यर्थः ॥ भाष्ये पर्याप्त्यर्थग्रहणमिति वार्तिकस्य द्वेधा व्याख्यानेन प्रभ्वादियोगे षष्ठ्यपीति ध्वनितम् ॥ १६ ॥

---

( ३०५ कारकचतुर्थीसूत्रम् ॥ २ । ३ । १ आ. १३ )

## ४७५ मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ २ । ३ । १७ ॥

( इष्टोपपादनाधिकरणम् )

( आक्षेपभाष्यम् )

अप्राणिष्वित्युच्यते तत्रेदं न सिध्यति—'न त्वा श्वानं मन्ये, न त्वा शुने मन्ये' इति ॥

( समाधानभाष्यम् )

एवं तर्हि योगविभागः करिष्यते—"मन्यकर्मण्यनादरे विभाषा" । ततः "अप्राणिषु" अप्राणिषु च विभाषेति ।

( प्रदीपः ) मन्यक० ॥ १७ ॥ एवं तर्हीति । योगविभागेन प्राणिविषया विभाषा क्रियते—न त्वा शुने मन्ये, न त्वां श्वानं मन्य इति । अप्राणिष्वित्यनेन त्वप्राणिविषया—न त्वा तृणाय मन्ये, न त्वा तृणं मन्य इति ॥

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—न त्वा काकं मन्ये, न त्वा शुकं मन्य इति ॥

( प्रदीपः ) इहापीति । आद्येन योगेनेति भावः ॥

( उद्द्योतः ) मन्यक० ॥ १७ ॥ भाष्ये—इहापीति । यद्यपि प्राण्यप्राणिषु उभयत्राप्याद्येनैव सिद्धे उत्तरयोगेनाद्यस्यानित्यताज्ञापनात् क्वचिदेव प्रवृत्तिरिति न त्वां काकमित्यादौ नातिप्रसङ्गस्तथापि योगविभागं विनापि सर्वसमाधानं वक्तुमयमुपक्रमः ॥

( समाधानभाष्यम् )

यदेतद् 'अप्राणिषु' इति, एतद् 'अनावादिषु' इति वक्ष्यामि । इमे च नावादयो भविष्यन्ति । न त्वा नावं मन्ये यावत्तीर्णं न नाव्यम् । न त्वान्नं मन्ये यावद् भुक्तं न श्राद्धमिति । अत्र येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ति ॥

( प्रदीपः ) तदेवं योगविभागेपि दोषदर्शनाद् न्यासान्तराश्रयणेनेष्टं साधयितुमाह—यदेतदिति ॥

( उद्द्योतः ) अत्र भाष्ये येषु प्राणिषु नेष्यते इत्यत्र बहुवचनेन शुककाकातिरिक्तप्राणिन्यपि निषेधो ध्वनितस्तदभिप्रेत्यैव वृत्तौ शृगाल उदाहृतः ॥ भाष्ये—न त्वां नावं मन्ये यावत्तीर्णं न नाव्यमिति । यावद् यतो नाव्यं नावा स्वल्पनौकया तार्यमपि त्वया महत्यापि न तीर्णमतस्त्वां नावमुडुपमपि न मन्ये इत्यर्थः । नौशब्देनोडुपं स्वल्पनौकोच्यते । त्वांशब्दार्थस्तु महती नौः । एवं ह्यनादरो भवतीत्याहुः ॥ एवं नत्वान्नं मन्ये यावद्भुक्तं न श्राद्धमित्यस्य यतः श्राद्धं श्राद्धीयैर्विप्रैर्न भुक्तमतस्त्वामपूपरूपमन्नमोदनमपि न मन्ये इत्यर्थः ॥

( १४९१ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ मन्यकर्मणि प्रकृष्य कुत्सितग्रहणम् ॥ * ॥

( व्याख्याभाष्यम् )

मन्यकर्मणि प्रकृष्य कुत्सितग्रहणं कर्तव्यम् । इह मा भूत्—त्वां तृणं मन्य इति ॥ मन्यकर्म ॥ १७ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( प्रदीपः ) प्रकृष्य कुत्सितग्रहणमिति । यद्वाचिनश्चतुर्थी विधीयते ततः प्रकर्षेण यदि कुत्सा प्रतिपाद्यते तदा

---

[1] भूषणप्रतिषेधयोर्वाचकस्येत्यर्थः । ( र. ना. )

चतुर्थी भवति न तु साम्यविवक्षायाम् । तेन प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानं संपद्यते ॥ क्वचित् **प्रतिकृष्येति** पाठस्तत्राप्ययमर्थः । तृणादेरपि निकृष्टत्वं यदा प्रतिपिपादयिषितं भवति तदा चतुर्थी न तु साम्यविवक्षायाम् ॥ **प्रतिकृष्येति** । निकृष्येत्यर्थः । **मन्यकर्मण्यनादर उपमाने विभाषाऽप्राणिष्वित्यापिशलिरधीते स्म ॥ १७ ॥**

इत्युपाध्याय**जैयट**पुत्र**कैयट**कृते भाष्यप्रदीपे द्वितीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

**( उद्द्योतः )** प्रकृष्य कुत्सितेति । परापरयोगे चेति [1]त्वा । अतिशयविशिष्टकुत्सितत्वे प्रतिपाद्ये इत्यर्थः । तदाह— **यद्वाञ्चिन इति ।** त्वां तृणमिव मन्य इत्यादावप्यनादरस्य सत्त्वाद् वार्तिकारम्भ इति भावः । आपिशलि[2]वाक्येनोपमानवाचकात्ततोपि तिरस्कारे चतुर्थीत्युच्यते ॥ १७ ॥

इति **शिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते** भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

# द्वितीयाध्यायस्य तृतीयपादे द्वितीयमाह्निकम् ॥

( तृतीयाप्रकरणम् )

( ३०६ कारकतृतीयासूत्रम् ॥ २ । ३ । २ आ० १ )

## ४७६ कर्तृकरणयोस्तृतीया ॥२।३।१८॥

( न्यूनतापूरणाधिकरणम् )

( १४९२ तृतीयाविधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम् ॥ * ॥**

**( भाष्यम् ) तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानं कर्तव्यम् । प्रकृत्याभिरूपः । प्रकृत्या दर्शनीयः । प्रायेण याज्ञिकाः । प्रायेण वैयाकरणाः । माठरोस्मि गोत्रेण । गार्ग्योस्मि गोत्रेण । समेन धावति । विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति । त्रिद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । साहस्रेणाश्वान् क्रीणाति ॥**

**( प्रदीपः ) कर्तृकरणयोः ॥ १८ ॥ प्रकृत्याभिरूप इति** । क्रियापदाश्रवणात् कर्तृकरणयोरभावात् षष्ठ्यत्र प्राप्नोति ॥ **प्रायेणेति** । प्रायशब्दो बह्वर्थवाची । बहवो याज्ञिका इत्यर्थः । तत्र प्रथमा प्राप्नोति ॥ **गोत्रेणेति** । [3]प्रथमा षष्ठी वात्र प्राप्नोति ॥ **समेनेति** । द्वितीया प्राप्नोति ॥ **द्विद्रोणेनेति** । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वात् स्त्रीत्वाभावः । अत्रापि द्वितीया प्राप्नोति ॥ **पञ्चकेनेति** । पञ्च परिमाणमस्य पञ्चकः संघः । तत्र द्वितीया प्राप्ता । पशूनित्यनेनैतत् समानाधिकरणम् । संघसंघिनोरभेदस्य विवक्षणात् ॥ **साहस्रेणेति** । सहस्रपरिमाणः संघः साहस्रः । **शतमानविंशतिकेत्यण्** । पूर्ववदत्र द्वितीयाप्राप्तिः ॥

**( उद्द्योतः )** कर्तृकरणयोः ॥ १८ ॥ **क्रियापदेति** । क्रियानध्याहारे विभक्त्यन्तरबाधनाय वार्तिकमिति भावः । अभिरूपादिकं तु गुणो न क्रियेति तात्पर्यम् ॥ **षष्ठ्यत्रेति** । प्रकृतिसम्बन्धी अभिरूप इति बोधादिति भावः ॥ **प्रथमाषष्ठी वेति** । गोत्राभिन्नगर्गापत्यमिति बोधे आद्या, सामान्यविशेषभावसम्बन्धेन गोत्रसम्बन्धिगार्ग्यत्ववानिति बोधेऽन्त्येति भावः ॥ गोत्रशब्देनागस्त्या[4]ष्टमसप्तर्ष्यपत्यम् ॥ **अत्रापीति** । परिच्छेद्यपरिच्छेदकयोरभेदोपचारेण द्विद्रोणाभिन्नमित्यर्थात् ॥ **पञ्चके** 'संख्याया अतिशदन्ताया इति कन् ॥

( आक्षेपभाष्यम् )

**तर्त्तर्हि वक्तव्यम् ? ॥**

( वार्तिकप्रत्याख्यानभाष्यम् )

**न वक्तव्यम् । "कर्तृकरणयोस्तृतीया" इत्येव सिद्धम् ॥ इह तावत्—प्रकृत्याभिरूपः, प्रकृत्या दर्शनीय इति । प्रकृतिकृतं तस्याभिरूप्यम् ॥ प्रायेण याज्ञिकाः प्रायेण वैयाकरणा इति । एष तत्र प्रायः येन तेऽधीयते ॥ माठरोस्मि गोत्रेण गार्ग्योस्मि गोत्रेणेति । एतेनाहं संज्ञाये ॥ समेन धावति विषमेण धावतीति । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—समेन पथेति ॥ द्विद्रोणेन धान्यं क्रीणातीति । अत्रापि तादर्थ्यात्ताच्छब्द्यम् । द्विद्रोणार्थं द्विद्रोणम् द्विद्रोणेन हिरण्येन धान्यं क्रीणातीति ॥ पञ्चकेन पशून् क्रीणातीति । अत्रापि तादर्थ्यात्ताच्छब्द्यम्, पञ्चपश्वर्थः पञ्चकः । पञ्चकेन पशून् क्रीणातीति । साहस्रेणाश्वान् क्रीणातीति । सहस्रपरिमाणं साहस्रं साहस्रेण हिरण्येनाश्वान् क्रीणातीति ॥ कर्तृकरण० ॥ १८ ॥**

**( प्रदीपः ) प्रकृतिकृतमिति** । गम्यमानापि क्रिया करणादिव्यपदेशनिमित्तं भवति । यथा प्रविश पिण्डीमित्यत्र । इह च करणान्तरव्युदासाय प्रकृतेरेव करणत्वं विवक्षितम् । स्वभावेनायं कृतोभिरूपो न तु वस्त्रालंकरणादिनेत्यर्थः ॥ **एष तत्र प्राय इति** । बाहुल्यमित्यर्थः । तच्चाध्ययनस्य करणत्वेन विवक्षितम् ॥ **इदमत्रेति** । प्रतीयमानत्वाद् । द्विद्रोणपञ्चकसाहस्रशब्दास्तत्क्रयार्थे मूल्ये उपचाराद्वर्तन्त इति करणत्वात् तृतीयासिद्धिः ॥ १८ ॥

**( उद्द्योतः ) एष तत्र प्राय इति** । तत्रोदाहरणे एष प्रायपदार्थो येन हेतुना तेधीयत इत्यर्थः ॥ **तच्चाध्ययनस्येति** । अधीयत इति क्रियाध्याहार इति भावः । बहुभिरध्ययने ग्रहणधारणयोः सौकर्यं भवतीति बाहुल्यं तत्त्वे[5]न विवक्षितमिति बोध्यम् ॥ **एतेनाहं संज्ञाये इति** । अहं "माठरः" इति गोत्रेण परैः

१ प्रकर्षे कल्पितः परयोगो विवक्षितः । ( र. ना. ) २ इदं तृतीयान्तमुच्यते–इत्यनेनान्वेति । ( र. ना. ) ३ अपत्यं पौत्रेति पारिभाषिकपरिग्रहे प्रथमा । प्रवराऽध्यायप्रसिद्धमूलपुरुषपदार्थकत्वे षष्ठी । गोत्रस्य गर्गस्यापत्यमित्यर्थः । ( र. ना. ) ४ अगस्त्योऽष्टमो येषां तेषां सप्तर्षीणामपत्यमित्यर्थः । गोत्रशब्दस्यैतदर्थकत्वे मानं चिन्त्यम् । ( र. ना. ) ५ अध्ययनकरणत्वेन– इत्यर्थः । ( र. ना. )

संज्ञायें इत्यर्थः ॥ अप्रयोगे हेतुमाह—प्रतीयेति । अत्र केचित्—एवं रीत्या करणत्वादिव्युत्पादने हेताविति सूत्रस्येत्थंभूतलक्षण इत्यस्य च वैयर्थ्यापत्तिः । यदि तत्र द्रव्याद्यन्वयविवक्षायां सार्थक्यं तर्ह्यत्रापीति प्रत्याख्यानमत्रासिद्धान्त्येकदेश्युक्तिरेव । सम्बन्धसामान्यविवक्षायां षष्ठीबाधनार्थमावश्यकत्वाच्चेत्याहुः । अनभिधानेन भगवता प्रत्याख्यातमित्यन्ये ॥ १८ ॥



( ३०७ उपपदतृतीयासूत्रम् ॥ २ । ३ । २ आ. २ )

## ४७७ सहयुक्तेऽप्रधाने ॥ २।३।१९ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

( प्रदीपः ) सहयुक्ते ॥ १९ ॥ किमुदाहरणमिति । सूत्रान्तरेण तृतीयासिद्धिं मत्वा पृच्छति ॥

( समाधानभाष्यम् )

**तिलैः सह माषान्वपतीति ॥**

( प्रदीपः ) तिलैः सहेति । अत्र माषा उप्यमानत्वात् प्रधानं कर्म । तिलास्तु तथायुक्ततया वृक्षमूलानीवोपसर्पणेऽप्रधानकर्माणीति द्वितीयायां प्राप्तायां तृतीयाविधिः ॥

( उद्द्योतः ) सहयुक्ते ॥ १९ ॥ ननु माषाणामिव तिलानामपि वापक्रियये प्सितत्वादप्राधान्यमसिद्धमत आह—तथायुक्ततयेति । वस्तुतः सहार्थविशेषणत्वमप्राधान्यमिति न दोषः ॥

( समाधानबाधकभाष्यम् )

**तिलैर्मिश्रीकृत्य माषा उप्यन्ते । तत्र "करणे" इत्येव सिद्धम् ॥**

( प्रदीपः ) तिलैर्मिश्रीकृत्येति । अन्तरङ्गत्वात् पूर्वं मिश्रणक्रियायां तिलाः करणत्वं प्रतिपद्यन्ते पश्चाद्वपनक्रियायां कर्मत्वमिति सिद्धा तृतीयेत्यर्थः ॥

( उद्द्योतः ) ननु वापापेक्षया कर्मत्वेन मिश्रीकरणस्य च तदर्थत्वेनाप्राधान्याद्न्यायविरुद्धा तृतीयेत्याशङ्क्याह—अन्तरङ्गत्वादिति ॥ अन्तरङ्गत्वोपपादनमेव पूर्वमित्यादि । पूर्वं मिश्रणक्रियासम्बन्धे तदर्थत्वमपि न स्यादिति भावः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पुत्रेण सहागतो देवदत्त इति । अप्रधाने कर्तरि तृतीया यथा स्यात् ॥**

( प्रदीपः ) पुत्रेण सहागत इति । पितुरेवात्रागमनक्रियायां शाब्दं कर्तृत्वं न तु पुत्रस्येत्यप्राप्ता तृतीया विधीयते ॥

( उद्द्योतः ) ननु पुत्रस्येतीति । तस्य सहार्थबलादनुमीयमानं कर्तृत्वमिति तृतीयाया अप्राप्तिरिति भावः ॥

( समाधानबाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । प्रधाने कर्तरि लादयो भवन्तीति प्रधानकर्ता केनाभिधीयते । यश्चाप्रधानं सिद्धा तत्र 'कर्तरि' इत्येव तृतीया ॥**

( प्रदीपः ) लादय इति । आदिशब्देन कादीनां ग्रहणम् । तत्रैकेन शब्देन भिन्नकक्षत्वाद् गुणप्रधानयोः कर्त्रोरभिधानासंभवात् प्रधाने कार्यसंप्रत्ययात् प्रधानस्यैवाभिधानं न्याय्यमित्यप्रधानस्य प्रतीयमानगमिक्रियापेक्षकर्तृत्वाश्रयेण तृतीया सिद्धेत्यर्थः ॥

( उद्द्योतः ) एकेन शब्देन । केन ॥ गुणप्रधानयोरिति । प्रतीयमानोपात्तक्रियापेक्षत्वेन तादृशयोः कर्त्रोरित्यर्थः ॥ भाष्येऽप्रधाने इत्यस्य प्रतीयमानक्रियाकर्तरीत्यर्थः । प्रधानकर्तरीत्यस्योच्चारितशब्दबोध्यक्रियाकर्तरीत्यर्थः ॥ तदेवाह—प्रतीयमानगमीति । साहित्यानुपपत्त्यर्थः । प्रविश पिण्डीमित्यादौ प्रतीयमानक्रियापेक्षविभक्तेर्दृष्टत्वादिति भावः ॥ लादयस्तु न तथा, धातोर्विधानादिति स्पष्टमेवेति ध्येयम् ॥ एकान्वयित्वादिसमानाधिकरणसाहित्यं हि पुत्रस्याध्याहृतागमनसम्बन्धज्ञान एव बोद्धुं शक्यं न त्वन्यथेति तात्पर्यम् ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पुत्रेण सहागमनं देवदत्तस्येति ॥**

( प्रदीपः ) पुत्रेण सहागमनमिति । ल्युटा कर्तुरनभिहितत्वाद् उभयत्र तृतीयाप्रसङ्गे नियमार्थमिदम्—अप्रधान एव तृतीया भवति न तु प्रधान इति ॥

( उद्द्योतः ) षष्ठ्यत्र बाधिकेत्युत्तरदर्शनादेवदत्ते तृतीयार्थं सूत्रमिति भाति तदनिष्टमित्यत आह—ल्युटेति ॥

( समाधानबाधकभाष्यम् )

**षष्ठ्यत्र बाधिका भविष्यति ॥**

( प्रदीपः ) षष्ठ्यत्रेति । कर्तृकर्मणोः कृतीत्यनेन । सा च प्रधानयोरेव कर्तृकर्मणोः प्राधान्यादेव स्मर्यत इत्यप्रधाने कर्तरि न भविष्यति । यदा तु कृद्ग्रहणमप्रधानकर्तृप्रतिपत्त्यर्थं भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति तदा षष्ठीबाधनाय तृतीयाविधानमत्रापि भवत्येव ॥

( उद्द्योतः ) भाष्ये—षष्ठ्यत्रेति । एवं चोभयोस्तृतीयाप्रसक्त्यभावेन नियमार्थत्वानुपपत्तिरिति भावः ॥ ननु षष्ठीबाधनार्थमेव तर्हीदमावश्यकमत आह—सा च प्रधानेति । प्रधाने चारितार्थ्यसम्भवादिति भावः ॥ भवत्येवेति ॥ अत्र वदन्ति—तृतीयाषष्ठ्योः को विशेषो यत् तृतीयाऽप्रधानेपि, षष्ठी नेति । एवं च पुत्रेण सहागमनमित्यादौ षष्ठीबाधनेन तृतीयार्थं सूत्रमावश्यकमिति ॥ अन्ये तु—कृद्योगे षष्ठी कृद्योगश्च तत्प्रकृत्यर्थान्वयमात्रेण । एवं च शाब्दकृत्प्रकृत्यर्थान्वयिनोः कर्तृकर्मणोरेव षष्ठी, न प्रतीयमानतत्संबद्धयोरिति भाष्योपपत्तिमाहुः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पुत्रेण सह स्थूलः । पुत्रेण सह पिङ्गल इति ।**

---

१ एतादृशप्रयोगाणां शतशो दर्शनादनभिधानाभिधानं चिन्त्यम् । (र.ना.)

२ ग्रामं गच्छन् वृक्षमूलान्युपसर्पति—इत्यत्रेति शेषः । ग्रामं गच्छन् तृणं स्पृशतीत्यत्रेवेति भावः । ( र. ना. )

१ साहित्यानुपपत्त्येत्यर्थ इति पाठो भाति । ( र. ना. )

(प्रदीपः) पुत्रेण सह स्थूल इति । गुणसंबन्धप्रतिपादनपरत्वादत्र क्रियाया अभावात् पुत्रस्य कर्तृत्वाभावः ॥

(उद्द्योतः) क्रियाया अभावादिति । अस्तिक्रियासत्त्वेपि साहित्यबलात्स्थौल्यमेव पुत्रे प्रतीयते न तु तत्क्रियाकर्तृत्वमिति भावः ॥

(पूर्वोक्तोदाहरणाभ्युपगमभाष्यम्)

**इदं चाप्युदाहरणम्—तिलैः सह माषान्वपतीति ॥**

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्—तिलैर्मिश्रीकृत्य माषा उप्यन्ते तत्र करण इत्येव सिद्धम्-इति ॥**

(समाधानभाष्यम्)

**भवेत्सिद्धं यदा तिलैर्मिश्रीकृत्योप्येरन् । यदा तु खलु कस्य चिन्माषबीजावाप उपस्थितः तदर्थं च क्षेत्रमुपार्जितम्, तत्रान्यदपि किंचिदुप्यते—यदि भविष्यति भविष्यतीति तदा न सिध्यति ॥**

(प्रदीपः) यदि भविष्यतीति । अनेन मिश्रीकरणाभावात् तिलानां करणत्वाभावमाह । एकक्षेत्रे च वापात् सहयोगः कालभेदेप्यविरुद्धः ॥

(१४९३ सूत्रप्रत्याख्यानवार्तिकम् ॥ १ ॥)

**॥ * ॥ सहयुक्तेऽप्रधानवचनमनर्थकमुपपदविभक्तेः कारकविभक्तिबलीयस्त्वादन्यत्रापि ॥ * ॥**

**(भाष्यम्) सह युक्तेऽप्रधानवचनमनर्थकम् ॥ किं कारणम् ? । उपपदविभक्तेः कारकविभक्तिबलीयस्त्वात् । अन्यत्रापि "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति प्रथमा भवति । एवमत्रापि 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति प्रथमा भविष्यति ॥ क्वान्यत्र ? । गाः स्वामी व्रजतीति ॥ सह युक्ते ॥ १९ ॥**

(प्रदीपः) सहयुक्त इति । अप्रधानवचनं प्रधाननिवृत्त्यर्थं क्रियते प्रधानस्य चान्तरङ्गत्वात् कारकविभक्तिर्भविष्यति इति नार्थस्तन्निवृत्त्यर्थेनाप्रधानवचनेनेत्यर्थः ॥ शिष्येण सहोपाध्यायस्य गौरित्यत्रापि गवा संबन्धोन्तरङ्ग इति उपाध्यायात् षष्ठ्येव भविष्यति न तृतीया ॥ गाः स्वामी व्रजतीति । अत्रापि व्रजिक्रियायां गवां कर्मत्वात्तन्निबन्धना द्वितीया स्वामीश्वरेति प्राप्ते उपपदविभक्ती षष्ठीसप्तम्यौ बाधित्वा प्रवर्तते ॥

(उद्द्योतः) कारकविभक्तिरिति । तिष्ठत्यादिक्रियानुपङ्गात्स्थूल इत्यादेरपि कर्तृत्वमस्तीति भावः । सहयोगश्च विशेष्यतया विशेषणतया वेति तात्पर्यम् ॥ अन्तरङ्गत्वादिति । तदपवादत्ववारणायेदं वचनमेवेति चिन्त्यम् ॥ गवा सम्बन्धोन्तरङ्ग इति । एकान्वयित्वादिसमानाधिकरणाखण्डोपाधिरूपसाहित्यस्य सहशब्दार्थतया पूर्वमन्वयिज्ञानावश्यकत्वादिति भावः ॥ बाधित्वेति । स्वामित्वमपि गोनिरूपितमेवेति स्वामिशब्दयोगोपि गवामिति भावः ॥ १९ ॥

(३०८ तृतीयानियमसूत्रम् ॥ २ । ३ । २ आ. ३)

## ४७८ येनाङ्गविकारः ॥ २ । ३ । २० ॥

(अङ्गशब्दस्यावयविपरत्वनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**इह कस्मान्न भवति—अक्षि काणमस्येति ? ॥**

(प्रदीपः) येनाङ्गविकारः ॥ २० ॥ अङ्गशब्दोऽवयववाचित्वेन प्रसिद्धस्ततो येन गुणेनाङ्गस्य विकारो लक्ष्यते ततस्तृतीयेति सूत्रार्थमवगम्याह—इह कस्मादिति । इहैव कस्मान्नेत्यर्थः ॥ अक्षि काणमिति । कण निमीलने—इत्यस्य चौरादिकस्याचि घञि वा रूपम् । काणगुणयोगादभेदोपचाराद् गुणवचनेभ्यो लुगिति मतुपो लुग्विधानाद्वाऽक्षि काणशब्देनोच्यते । तत्र काणशब्दात् तृतीया प्राप्नोति । काणेन हि गुणेनाक्ष्णो विकारो लक्ष्यते । अक्ष्णा काण इत्यत्र त्वक्षिशब्दान्न प्राप्नोति ॥

(उद्द्योतः) येनाङ्ग ॥ २० ॥ अङ्गशब्दस्यार्शआद्यजन्तत्वे शङ्कानुपपत्तेराह—अङ्गशब्द इति । अप्रसिद्धत्वात्स न गृह्यत इति भावः ॥ अचि घञि चेति । उभावपि भाव इति भावः । एरजित्यच् ॥ नन्वेवं काणशब्देऽक्षिसामानाधिकरण्यमनुपपन्नमत आह—काणगुणेति ॥ लुग्विधानाद्वेति । इदं चिन्त्यम् । गुणगुण्युभयाभिधानसमर्थे एव तत्प्रवृत्तेः । नह्यक्ष्णः काणमिति कदाचिद्भवति । कर्मघञन्तः काणत्वगुणविशिष्टाक्षिवाचीति परे । न प्राप्नोतीति । शब्दतोऽङ्गविकाराप्रतीतेरिति भावः ॥

(१४९४ समाधानवार्तिकम् ॥ १ ॥)

**॥ * ॥ अङ्गाद्विकृतात्तद्विकारश्चेदङ्गिनो वचनम् ॥ * ॥**

**(भाष्यम्) अङ्गाद्विकृतात्तृतीया वक्तव्या तेनैव चेद्विकारेणाङ्गी द्योत्यत इति वक्तव्यम् ॥**

(प्रदीपः) अङ्गाद्विकृतादिति । अङ्गवाचिनोक्षिपदादेस्तृतीया भवति न काणादेर्गुणवचनादित्यर्थः ॥ एतावत्युच्यमानेऽक्षि काणमस्येत्यत्राप्यक्षिशब्दात्प्राप्नोतीत्याह—तद्विकारश्चेदिति । यदि देवदत्तादिरवयवी विकृतेनाङ्गेन विकारवान् प्रकाश्यत इत्यर्थः ॥

(आक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम् ? ॥**

१ उपपदविभक्तेः कारकविभक्त्यपवादत्ववारणायेत्यर्थः । (र. ना.)

२ द्योतनमित्यर्थः । (र. ना.)

( समाधानभाष्यम् )

**न वक्तव्यम् । अङ्गशब्दोयं समुदायशब्दः । येनेति च करणे एषा तृतीया । येनावयवेन समुदायोङ्गी द्योत्यते तस्मिन् भवितव्यम् । न चैतेनावयवेन समुदायो द्योत्यते ॥ येनाङ्ग ॥ २० ॥**

( प्रदीपः ) **अङ्गशब्द इति** । अङ्गान्यस्य सन्तीत्यर्शआदित्वादच्प्रत्ययान्तोत्राङ्गशब्दो निर्दिष्टः । येनेत्यनेन विकृतमङ्गं निर्दिश्यते । न ह्यविकृतेनाङ्गेनाङ्गिनो विकारो द्योतयितुं शक्यते ॥ **न चैतेनेति** । अक्षि काणमसेत्यत्र काणशब्देनाक्षिसमानाधिकरणेनावयवी नोच्यते, किं तर्ह्यवयव एवेत्यर्थः । अवयवश्चात्रावयविना विशेष्यत इति तस्यैव प्राधान्याद्विकारप्रतिपत्तिः ॥ २० ॥

( उद्योतः ) **अच्प्रत्ययान्त इति** । अप्रसिद्धस्यापि व्याख्यानाद् ग्रहणमिति भावः ॥ **विकृतमङ्गमिति** । सामर्थ्यादिति भावः ॥ तदेवोपपादयति—**नहीति** ॥ **समुदायोङ्गी द्योत्यते** इति भाष्ये विकृत इत्यर्थः ॥ **तस्यैव** । अवयवस्यैव ॥ **विकारप्रतिपत्तिरिति** । शाब्दीति भावः । आर्थी तत्प्रतीतिस्तु न तृतीयानिमित्तमिति ध्येयम् ॥ २० ॥

---

( ३०९ तृतीयानियमसूत्रम् ॥ २ । ३ । २ आ. ४ )

## ४७९ इत्थंभूतलक्षणे ॥ २ । ३ । २१ ॥

( समासान्तर्गताच्तृतीयावारणाधिकरणम् )

( १४९५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥*॥ इत्थंभूतलक्षणे तत्स्थे प्रतिषेधः ॥*॥

**(भाष्यम्)इत्थंभूतलक्षणे तत्स्थे प्रतिषेधो वक्तव्यः । अपि भवान्कमण्डलुपाणिं छात्रमद्राक्षीदिति ॥**

( प्रदीपः ) **इत्थंभूत** ॥ २१ ॥ यदा लक्षणवाची शब्दो लक्ष्यवाचिसमासावयवस्तदा तृतीया मा भूदिति वचनम्—**इत्थंभूतलक्षणे तत्स्थ इति** । लक्ष्यवाचिशब्दस्थ इत्यर्थः । **कमण्डलुपाणिमिति** । बहुव्रीहौ कृते कमण्डलुशब्दात् तृतीया प्राप्नोति । न च प्रत्ययलक्षणेनाप्रत्यय इति प्रातिपदिकसंज्ञानिषेधो, **नङिसंबुद्ध्योरिति** नलोपप्रतिषेधाज् ज्ञापकात् । न च तृतीयाया लुक् प्राप्नोति । समासप्रातिपदिकानवयवत्वात्तस्याः कृते समास उत्पादनात् ॥

( उद्योतः ) **इत्थंभूत** ॥ २१ ॥ भाष्ये—**इत्थंभूतलक्षणे इति** । इत्थंभूतस्य लक्षणबोधके शब्दे तत्स्थे लक्ष्यवाचिपदघटितपदस्थे सति लक्षणवाचकात्तृतीयाप्रतिषेधो वक्तव्य इत्यर्थः ॥ तदाह—**यदा लक्षणवाचीति** । लक्ष्यवाचिनः शब्दस्य लक्षणवाचिना समासं विना लक्षणवाचिनस्तत्स्थत्वं न सम्भवतीत्यत आह—**लक्ष्यवाचिसमासेति** । लक्ष्यवाचिघटकसमासेत्यर्थः ॥ कमण्डलुपाणिशब्दो बहुव्रीहिणा लक्ष्यच्छात्रवाची । तत्र पाणिशब्दस्य लक्षणत्वायोगात्पारिशेष्यादाह—**कमण्डलुशब्दादिति** । इत्थंभूतश्छात्रत्वं प्राप्तश्छात्रस्तस्य लक्षणं कमण्डलुरिति भावः । बहुव्रीहौ समुदायस्य संबन्धित्वेन संबन्धी बोध्यः, तत्र चेतरपदार्थान्वय इति व्यपेक्षावादे शङ्क्यम्, तत्र हि तृतीयायामपि कमण्डलोर्ज्ञाप्यत्वेनान्वयः सुवचः ॥ पाण्यधिकरणककमण्डलुज्ञाप्यश्छात्र इत्यर्थः स्यादिति भावः ॥ **ज्ञापकादिति** । एतेन नलोपविषयमेव तज्ज्ञापकमित्यपास्तम् । **तत्स्थे इत्थंभूतलक्षण इति** वार्तिकस्वारस्येनावयवात्तृतीयापत्तेः प्रतीयमानत्वात् । एतेन समुदायात्तृतीयापत्तौ तात्पर्यमिति मन्दोक्तमपास्तम् ॥ **प्रातिपदिकानवयवत्वादिति** । तन्मध्यपतितन्यायादकज्वत्तद्ग्रहणेन ग्रहणेपि कुम्भादिवच्छास्त्रेणावयवत्वाबोधनादवयवत्वे मानाभावादिति भावः । पूर्वं लक्षणत्वाविवक्षया प्रथमान्तत्वेन समासे जाते पश्चाल्लक्षणत्वविवक्षायामत्र तृतीयापादनं कृतपूर्वीकटमिति वदिति बोध्यम् ॥ केचित्तु कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः । कमण्डलुपाणित्वस्यैव लक्षणत्वात्सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवतीति **अनुर्लक्षण** इति सूत्रे भाष्यात् । **तदेवेत्यस्य** कमण्डलुपाणित्वमेवेत्यर्थः । अन्यथा स एवेति वदेत् । कमण्डलुयुक्तपाणिज्ञाप्यस्तदवयवीति बोधः स्यात् । कमण्डलुयुक्तार्थकमण्डलुपदेन समानाधिकरणो बहुव्रीहिः । अन्यथा तन्मध्यपतितन्यायेन तद्ग्रहणेऽपि तदवयवत्वं नेत्यस्यापातरमणीयत्वेन लुग् दुर्वार एव । अत एवेच **एकाचोमिति** सूत्रे भाष्ये—नरंमन्य इत्यादौ समासप्रातिपदिकसंज्ञोत्तरं जातस्याप्यमः **सुपोधात्विति** लुगम्विधिसामर्थ्यान्नेत्युक्तमित्याहुः ॥

( १४९६ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ न वेत्थंभूतस्य लक्षणेनापृथग्भावात् ॥ * ॥

**(भाष्यम्) न वा वक्तव्यम्? । किं कारणम् । इत्थंभूतस्य लक्षणेनापृथग्भावात् । यत्रेत्थंभूतस्य पृथग्भूतं लक्षणं तत्र भवितव्यम् । न चात्रेत्थंभूतस्य पृथग्भूतं लक्षणम् ॥**

( प्रदीपः ) **लक्षणेनेति । पृथग्विनेति** तृतीया ॥

( उद्योतः ) भाष्ये—**अपृथग्भावादिति** । एकार्थीभावे इतरविशेषणस्यैव कमण्डलोरुपस्थित्या तस्य लक्षणत्वेन छात्रेऽन्वयासंभव इति भावः ॥ तदेतद्ध्वनयति कैयटः—**नास्ति लक्षणस्य प्राधान्यमिति** । विशेषणत्वानाक्रान्तोपस्थितिरित्यर्थः ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत्? ॥**

(उद्योतः) प्रागुक्ताशयानभिज्ञः शङ्कते—**किं वक्तव्यमिति** ॥

( समाधानभाष्यम् )

**नहि ॥ कथमनुच्यमानं गंस्यते? । तथा ह्ययं**

---

१ कविस्यादि 'समासान्ताः' इति सूत्रेऽन्तपदोपादानेन कपोऽवयवत्वम् । 'मिदचोन्त्यात्' इति सूत्रेण मितामवयवत्वं बोध्यते । २ लक्षणत्वात् तृतीयान्तस्य कमण्डलुपदस्य प्रथमान्तपाणिपदेन व्यधिकरणबहुव्रीहिस्वीकारे इत्यर्थः । ( र. ना. ) ३ एकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणतयाऽन्वयासंभव इति भावः । ( र. ना. )

प्राधान्येन लक्षणं प्रतिनिर्दिशति—इत्थंभूतस्य लक्षणमित्थंभूतलक्षणं तस्मिन्नित्थंभूतलक्षण इति॥ इत्थंभूत०॥ २१॥

(प्रदीपः) तथा ह्ययमिति। षष्ठीतत्पुरुषस्योत्तरपदार्थप्रधानत्वात्। इत्थंभूतस्य यल्लक्षणं प्रधानमप्राप्तोपसर्जनभावं तत्र तृतीया यथा कमण्डलुना छात्रमद्राक्षीदिति। बहुव्रीहौ तु स्वार्थोपसर्जनान्यपदार्थाभिधायित्वाद्वर्तिपदानां नास्ति लक्षणस्य प्राधान्यम्॥ २१॥

(उद्योतः) अत्रार्थे सूत्रारूढामभ्युच्चययुक्तिमप्याहैकदेशी भाष्ये—प्राधान्येनेति॥ २१॥

(३१० तृतीयासूत्रम्॥ २।३।२ आ. ५)

## ४८० संज्ञोऽन्यतरस्यां कर्मणि॥२।३।२२॥

(विप्रतिषेधाधिकरणम्)

(१४९७ वार्तिकम्॥ १॥)

### ॥ * ॥ संज्ञः कृत्प्रयोगे षष्ठी विप्रतिषेधेन॥ * ॥

(भाष्यम्) "संज्ञोऽन्यतरस्यां कर्मणि" इत्येतस्मात्कृद्योगे षष्ठी भवति विप्रतिषेधेन। "संज्ञोऽन्यतरस्याम्" इत्यस्यावकाशः—मातरं संजानीते मात्रा संजानीते। कृत्प्रयोगे षष्ठ्या अवकाशः—इध्मप्रव्रश्चनः पलाशशातनः। इहोभयं प्राप्नोति—मातुः संज्ञाता पितुः संज्ञाता इति। षष्ठी भवति विप्रतिषेधेन॥

(प्रदीपः) संज्ञोऽन्यतरस्याम्॥ २२॥ मात्रा संजानीत इति। संप्रतिभ्यामनाध्यान इत्यात्मनेपदम्॥

(१४९८ वार्तिकम्॥ २॥)

### ॥*॥ उपपदविभक्तेश्चोपपदविभक्तिः॥*॥

(भाष्यम्) उपपदविभक्तेश्चोपपदविभक्तिर्भवति विप्रतिषेधेन। 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इत्यस्यावकाशः—अन्यो देवदत्तात्। 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' इत्यस्यावकाशः—गोषु स्वामी गवां स्वामी। इहोभयं प्राप्नोति—अन्यो गोषु स्वामी अन्यो गवां स्वामी। 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' इत्येतद्भवति विप्रतिषेधेन॥

(प्रदीपः) अन्यो गवां स्वामीति। एकस्मिन्वाक्ये सहप्रयोगादस्त्यन्ययोगो गवामिति मन्यते॥

(बाधकभाष्यम्)

नैष युक्तो विप्रतिषेधः। नह्यत्र गावोऽन्ययुक्ताः॥ कस्तर्हि?। स्वामी॥

(प्रदीपः) नह्यत्र गाव इति। युक्तग्रहणाद्यदपेक्षमन्यत्वं तद्वाचिनः पञ्चमी। नचात्र गवापेक्षमन्यत्वं स्वामिनः प्रतिपाद्यं, व्यभिचाराभावात्, किं तर्हि? पूर्वस्वाम्यपेक्षम्॥ कस्तर्हि स्वामीति। भूतपूर्वो यः स्वामी सोन्ययुक्त इत्यर्थः॥

(उद्योतः) संज्ञोन्यत॥ २२॥ अन्यपदार्थेन योगे स्वामिनः पञ्चमी स्यादत आह—भूतपूर्वेति॥ अन्ययुक्त इति। अन्यत्वप्रतियोगीत्यर्थः। पूर्वस्वाम्यपेक्षयेदानीमन्यो गवां स्वामीत्युदाहरणार्थः॥

(वार्तिकोदाहरणान्तरभाष्यम्)

एवं तर्हि "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इत्यस्यावकाशः—तुल्यो देवदत्तस्य। तुल्यो देवदत्तेन। "स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च" इत्यस्यावकाशः—स एव। इहोभयं प्राप्नोति—तुल्यो गोभिः स्वामी तुल्यो गवां स्वामी। "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इत्येतद्भवति विप्रतिषेधेन॥ संज्ञोन्य॥ २२॥

(प्रदीपः) तुल्यो गोभिः स्वामीति। गवां यः स्वामी स गोभिर्जाड्यादिना धर्मेण सदृश इत्यर्थविवक्षायामस्ति गवा पदद्वयार्थयोगः॥ २२॥

(उद्योतः) उभयप्राप्तये गवा तुल्येन च स्वामिनः संबन्धमुपपादयति—गवां य इति॥ २२॥

(३११ उपपदतृतीयासूत्रम्॥ २।३।२ आ. ६)

## ४८१ हेतौ॥ २।३।२३॥

(१४९९ वार्तिकम्॥ १॥)

### ॥ * ॥ निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्॥ * ॥

(भाष्यम्) निमित्तकारणहेतुषु सर्वाः प्रायेण दृश्यन्त इति वक्तव्यम्। किं निमित्तं वसति। केन निमित्तेन वसति। कस्मै निमित्ताय वसति। कस्मान्निमित्ताद्वसति। कस्य निमित्तस्य वसति। कस्मिन्निमित्ते वसति। किं कारणं वसति। केन कारणेन वसति। कस्मै कारणाय वसति कस्मात्कारणाद्वसति। कस्य कारणस्य वसति। कस्मिन्कारणे वसति। को हेतुर्वसति। कं हेतुं वसति। केन हेतुना वसति। कस्मै हेतवे वसति। कस्माद्धेतोर्वसति। कस्य हेतोर्वसति। कस्मिन्हेतौ वसति॥ हेतौ॥ २३॥

(प्रदीपः) हेतौ॥ २३॥ योग्यतामात्रयुक्तोऽनाश्रितव्यापारोर्थो द्रव्यगुणक्रियाविषयो हेतुः॥ निमित्तेति। असर्वनाम्नोपि विधानार्थमत्र सूत्रं इदं पठितं न तु सर्वनाम्नस्तृतीया चेत्यत्र। तत्र प्रायग्रहणादसर्वनाम्नः प्रथमाद्दि-

तीये न भवतोऽन्यास्तु यथादर्शनं भवन्ति । पर्यायोपादानं केचित्पर्यायान्तरनिवृत्त्यर्थमिच्छन्ति । अन्ये तूपलक्षणार्थमिच्छन्तः प्रयोजनादिप्रयोगेप्येतद्विभक्तिविधानं मन्यन्ते ॥

( उद्योतः ) हेतौ ॥ २३ ॥ व्यापारानाविष्टत्वे द्रव्यगुणक्रियाविषयत्वे च हेतुर्योग्यतामात्रयुक्त इति । व्यापाराविष्टं क्रियामात्रविषयं च करणं, व्यापारावेशे च क्रियाविषयत्वमेव फलोपधानमेवेति ततो भेद इति भावः ॥ न त्विति । वृत्तिकारवदिति भावः । अन्येत्विति मतेऽनुग्राहकाभावोऽरुचिबीजम् ॥ २३ ॥

( ३१२ कारकपञ्चमीसूत्रम् ॥ २ । ३ । २ आ. ७ )

## ४८६ अपादाने पञ्चमी ॥ २ । ३ । २८ ॥

( न्यूनतावारणाधिकरणम् )

( १५०० वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) **पञ्चमीविधाने ल्यब्लोपे कर्मणि पञ्चम्या उपसंख्यानं कर्तव्यम् । प्रासादमारुह्य प्रेक्षते—प्रासादात्प्रेक्षते ॥**

( प्रदीपः ) अपादाने ॥ २७ ॥ ल्यब्लोप इति । यत्र ल्यबन्तस्याप्रयोगेऽप्यर्थो गम्यते तत्र द्वितीयायां प्राप्तायां पञ्चमी विधीयते ॥

( उद्योतः ) अपादाने ॥ २७ ॥ ननु ल्यब्लोपविधायकस्यात्र शास्त्रेऽदर्शनाल्ल्यब्लोप इत्यसंगतमत आह—यत्रेति । वाक्यैकदेशन्यायेनेति भावः ॥ ल्यब्ग्रहणं क्त्व उपलक्षणम् । आसनात्प्रेक्षत इत्यस्यासने स्थित्वेत्यर्थः ॥ तत्रेति । ल्यबन्ताभावेपि गम्यमानक्रियापेक्षकर्मत्वादिति भावः ॥

( १५०१ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अधिकरणे च ॥ * ॥

( भाष्यम् ) **अधिकरणे चोपसंख्यानं कर्तव्यम् । आसनात्प्रेक्षते । शयनात्प्रेक्षते ॥**

( प्रदीपः ) अधिकरणे चेति ल्यब्लोप इत्यपेक्षते । सप्तम्यपवादोऽत्र पञ्चमी ॥

( १५०२ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ प्रश्नाख्यानयोश्च ॥ * ॥

( भाष्यम् ) **प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या । कुतो भवान् ? । पाटलिपुत्रात् ॥**

( प्रदीपः ) प्रश्नाख्यानयोश्चेति । विशिष्टे प्रश्नाख्याने गृह्येते—यत्र लोके पञ्चमी प्रयुज्यते । तेन कस्यायमश्वो देवदत्तस्यायमश्व इत्यादौ पञ्चमी न भवति ॥ कुतो भवानीति । क्रियाया अभावादनपादानत्वं मन्यते ॥

( उद्योतः ) गम्यमानक्रियापेक्षयाऽपादानत्वं भविष्यतीत्यत आह—क्रियाया इति ॥

( १५०३ वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ यतश्चाध्वकालनिर्माणम् ॥ * ॥

( भाष्यम् ) **यतश्चाध्वकालनिर्माणं ततः पञ्चमी वक्तव्या । गवीधुमतः सांकाश्यं चत्वारि योजनानि ॥ कार्तिक्या आग्रहायणी मासे ॥**

( प्रदीपः ) यतश्चेति । यदाश्रित्याध्वकालौ परिच्छिद्येते तत्र पञ्चमीत्यर्थः ॥ गवीधुमत इति । गवीधुमन्नाम नगरम् ॥

( उद्योतः ) यदाश्रित्येति । यदवधित्वेनाश्रित्येत्यर्थः ॥ तत्रेति । तत्र वर्तमानाच्छब्दादित्यर्थः ॥

( १५०४ वार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ तद्युक्तात्काले सप्तमी ॥ * ॥

( भाष्यम् ) **तद्युक्तात्काले सप्तमी वक्तव्या । कार्तिक्या आग्रहायणी मासे ॥**

( प्रदीपः ) तद्युक्तात्काल इति । काले विषये । तेन पञ्चम्यन्तार्थेन यो युक्तो मासादिस्तद्वाचिनः सप्तमीत्यर्थः । अथ वा पञ्चमीयुक्तार्थात्परे काल इत्यर्थः ॥

( उद्योतः ) तद्युक्तात्कालादित्युचितमत आह—कालविषये इति ॥ युक्तो मासादिरिति । मासकार्तिक्योश्चावध्यवधिमद्भावः संबन्धः । आग्रहायण्यास्तु न तद्युक्तत्वमिति भावः ॥ अथवा पञ्चमीति । तच्छब्देन पञ्चमी परामृश्यते, तद्युक्तश्च तत्प्रकृत्यर्थस्तस्मात्परे परावयवके कालेऽभिधेये कालवाचिनः सप्तमीत्यर्थः । आग्रहायण्याश्चार्थे परत्वं न शाब्दं तत्तु मासस्यैवेति भावः ॥

( १५०५ वार्तिकम् ॥ ६ ॥ )

### ॥ * ॥ अध्वनः प्रथमा च ॥ * ॥

( भाष्यम् ) **अध्वनः प्रथमा च सप्तमी च वक्तव्या । गवीधुमतः सांकाश्यं चत्वारि योजनानि । गवीधुमतः सांकाश्यं चतुर्षु योजनेषु ॥**

( प्रदीपः ) अध्वन इति । तद्युक्तादित्यपेक्षते ॥

( आक्षेपभाष्यम् )

**तत्तर्हीदं बहु वक्तव्यम् ? ॥**

( प्रथमद्वितीयवार्तिकप्रत्याख्यानभाष्यम् )

( भाष्यम् ) **न वक्तव्यम् । "अपादाने" इत्येव सिद्धम् । इह तावत्प्रासादात्प्रेक्षते शयनात्प्रेक्षते इति, अपक्रामति तत्तस्माद्दर्शनम् ॥ यद्यपक्रामति किं नात्यन्तायापक्रामति ? । संततत्वात् ॥ अथ वान्यान्यप्रादुर्भावात् । अन्या चान्या च प्रादुर्भवति ॥**

( प्रदीपः ) अपक्रामति तत्तस्मादिति । दर्शनं चक्षुरिन्द्रियं तेजोरूपं प्राप्यविषयग्राहित्वात्प्रासाददेशादपक्रम्य

१ पञ्चम्यन्तार्थयुक्तः सप्तमीप्रकृत्यर्थ इत्यर्थः । ( र. ना. )

विषयं गच्छतीत्यर्थः ॥ क्षणिकपक्षावष्टम्भेन भेदमाश्रित्याह—अथ वान्यान्यप्रादुर्भावादिति । अन्यस्यान्यस्य तेजोरूपस्येन्द्रियस्योत्पादादित्यर्थः । भाष्यकारवचनप्रामाण्यादन्यान्यशब्दस्य साधुत्वं द्रष्टव्यम् ॥

( उद्योतः ) दर्शनं चक्षुरिति । करणे ल्युडिति भावः । तेजोरूपमिति । अपक्रमणसामर्थ्यमनेन दर्शितम् । विषयग्राहिणो नयनरश्मयः सूर्यरश्मिवत् प्रासाददेशस्थपुरुषनयनादपक्रम्य यावद्विषयदेशं गच्छन्तीत्यर्थः । एवं प्रासादात् प्रेक्षते चक्षुः, प्रासादादपक्रम्य विषयं जानीते इत्यर्थः । प्रासादस्थपुरुषान्निर्गमनं प्रासादादिति व्यवह्रियते इति बोध्यम् । प्रासादमारुह्य भुङ्क्ते इत्याद्यर्थे प्रासादाद् भुङ्क्ते इत्यादीनामनभिधानमिति बोध्यम् । प्रासादस्थपात्रान्निर्गतमन्नं भुङ्क्ते इति भाष्यरीत्यार्थ इत्यन्ये ॥ ग्राह्यविषयग्राहित्वादिति । परावरयोगे चेति क्त्वा । बौद्धो यथाकथंचिद्विभागो बोध्यः ॥ भाष्ये—अन्याचान्याचेति । दर्शनक्रियेत्यर्थः ॥ अपक्रामति तस्माद्दर्शनमिति दर्शनपदेन वृत्तिरेवाभिमता । कैयटोक्तव्याख्याने तु चक्षुर्व्यक्तिरिति विशेष्यं बोध्यम् ॥ वृत्तिपरत्वेन व्याख्याने चिरं ज्ञानानुभवानापत्तिरिति पूर्वपक्षः । तावत्कालं स्थिरत्वेनाचर्मुत्तरं द्वितीयं तु स्पष्टमेवेति ध्येयम् ॥ सत्यपि द्वित्वे विभक्त्यन्तस्यैव द्वित्वापत्तेः कर्मव्यतिहाराभावेन समासवद्भावाप्राप्तेरेकशेषेण बाधाच्च द्वन्द्वाप्राप्तौ कथमन्यान्येतीत्यत आह—भाष्यकारेति । तत्प्रामाण्यात्कर्मव्यतिहाराभावेऽपि बहुलग्रहणात् क्वचित्समासवद्भाव इत्यर्थः ॥ कृतवीप्साद्विर्वचनस्यान्यस्येत्यस्य प्रादुर्भावशब्देन षष्ठीसमास इति परे ॥

( तृतीयवार्तिकप्रत्याख्यानभाष्यम् )

**प्रश्नाख्यानयोश्च पञ्चमी वक्तव्येति । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—कुतो भवानागच्छतीति, पाटलिपुत्रादागच्छामीति ॥**

( प्रदीपः ) इदमत्रेति । प्रतीयमानत्वादर्थस्य शब्दाप्रयोगः ॥

( चतुर्थवार्तिकप्रत्याख्यानभाष्यम् )

**यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्येति । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—गवीधुमतो निःसृत्य सांकाश्यं चत्वारि योजनानि । कार्तिक्या आग्रहायणी मासे इति । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—कार्तिक्याः प्रभृत्याग्रहायणी मास इति ॥**

( प्रदीपः ) कार्तिक्याः प्रभृतीति । तत आरभ्येत्यर्थः । भाष्यकारवचनात्प्रभृतियोगे पञ्चमी ॥

( उद्योतः ) प्रभृतिपदप्रयोगेऽपि तदर्थयोगेऽपि वा कथं पञ्चमीत्यत आह—भाष्यकारवचनादिति । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते इत्येवंरूपात्प्रभृतियोगे पञ्चमीति वचनमनुमीयते इति भावः ॥ न प्रयुज्यते इत्युक्त्या प्रभृत्यर्थयोगे पञ्चमीति सूचितम् ॥ तदप्यवधिमादायैवेत्येवंरूपप्रभृत्यर्थयोगे एव प्रवर्तते । प्रभृतिशब्दस्य आरभ्येत्यस्य च तमादायेत्यर्थः ॥

१ माप्येत्यादिः । ( र. ना. ) २ भाष्ये इति शेषः । ( र. ना. )

( पञ्चमवार्तिकप्रत्याख्यानभाष्यम् )

**तद्युक्तात्काले सप्तमी वक्तव्येति । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—कार्तिक्याः प्रभृति आग्रहायणी गते मास इति ॥**

( प्रदीपः ) गते मास इति । ततश्च यस्य च भावेनेति सिद्धा सप्तमी ॥

( उद्योतः ) अधिकरणत्वाभावात्कथं सप्तमीत्यत आह—ततश्चेति । कार्तिकीमादाय मासे गते आग्रहायणी भवतीति वाक्यार्थ इति भावः ॥

( षष्ठवार्तिकप्रत्याख्यानभाष्यम् )

**अध्वनः प्रथमा च सप्तमी चेति । इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—गवीधुमतो निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति, ततः सांकाश्यम् । चतुर्षु योजनेषु गतेषु ततः सांकाश्यमिति ॥ अपादाने ॥ २८ ॥**

( प्रदीपः ) चत्वारीति । तत्र प्रातिपदिकार्थस्याव्यतिरेकात्सिद्धा प्रथमा ॥ २८ ॥

( उद्योतः ) तत्र प्रातीति । एतदर्थमेव ततः सांकाश्यमिति वाक्यभेद इति भावः ॥ २८ ॥



( ३१३ उपपदपञ्चमीसूत्रम् ॥ २ । ३ । २ आ. ८ )

## ४८७ अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥ २ । ३ । २९ ॥

( आक्षेपभाष्यम् )

**अञ्चूत्तरपदग्रहणं किमर्थम् । न दिक्शब्दैर्योग इत्येव सिद्धम् ? ॥**

( समाधानभाष्यम् )

**"षष्ठ्यतसर्थप्रत्ययेन" इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः[३] ॥ अन्यारा ॥२९॥**

( प्रदीपः ) अन्यारात् ॥ २९ ॥ तस्यायमिति । अथ सध्र्यङ् देवदत्तेनेत्यदिक्शब्दार्थमञ्चूत्तरपदग्रहणं कस्मान्न विज्ञायते । उच्यते—दिक्शब्दसाहचर्यादञ्चूत्तरपदस्यापि दिक्शब्दस्यैव ग्रहणं नान्यस्य ॥ २९ ॥



( ३१४ उपपदविभक्तिसूत्रम् ॥ २ । ३ । २ आ. ९ )

## ४८८ षष्ठ्यतसर्थप्रत्ययेन ॥ २।३।३० ॥

( पदकृत्याधिकरणम् )

( आक्षेपभाष्यम् )

**अर्थग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) षष्ठ्यत ॥ ३० ॥ अर्थग्रहणमिति । अ-

३ अपकर्षोऽपवादः । ( र. ना. )

तसूशब्दः प्रत्ययत्वं न व्यभिचरतीति प्रत्ययग्रहणादतसूशब्दस्तदर्थोपलक्षणं विज्ञास्यत इति प्रश्नः॥

(उद्द्योतः) षष्ठ्यतस॥ ३०॥ तदर्थोपलक्षणमिति। मध्यमपदलोपिसमासादिति भावः॥

(समाधानभाष्यम्)

**'षष्ठ्यतस्प्रत्ययेन' इत्युच्यमाने इहैव स्यात्—दक्षिणतो ग्रामस्य उत्तरतो ग्रामस्येति, इह न स्यात्—उपरि ग्रामस्य उपरिष्टाद् ग्रामस्येति। अर्थग्रहणे पुनः क्रियमाणे अतस्प्रत्ययेन च सिद्धं भवति—यश्चान्यस्तेन समानार्थः॥**

(प्रदीपः) षष्ठ्यतस्प्रत्ययेनेति। अतसूशब्दस्यार्थस्याश्रयितुमशक्यत्वात्। तस्यतेर्नञ्पूर्वस्य क्विप्यतसितिरूपसंभवाच्च॥

(उद्द्योतः) अतसूशब्दस्यार्थस्येति व्यधिकरणषष्ठ्यौ। आश्रयणाशक्यत्वे हेतुं दर्शयन् अतसूशब्दे प्रत्ययत्वव्यभिचारं दर्शयति—तस्यतेरिति॥ न च प्रत्ययाप्रत्यययोरिति परिभाषयाङ्गस्येति सूत्रभाष्यपठितया, प्रतिपदोक्तपरिभाषया च प्रत्ययस्यैव लाभे सिद्धे प्रत्ययग्रहणेन सामर्थ्यात्तदर्थलाभ इति वाच्यम्। तदनित्यत्वज्ञापनेनापि चारितार्थ्यात्। संभवाच्चेति। चो हेतौ॥ भाष्ये—अन्यस्तेन समानार्थ इत्यस्य तेनापि योगे सिद्धमिति शेषः॥

(आक्षेपभाष्यम्)

**अथ प्रत्ययग्रहणं किमर्थम्?॥**

(उद्द्योतः) अथ प्रत्ययेति। परिभाषयैव सिद्धे इत्यर्थः॥

(समाधानभाष्यम्)

**इह मा भूत्—प्राग्ग्रामात्, प्रत्यग्ग्रामात्॥**

(प्रदीपः) प्राग्ग्रामादिति। प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति लुप्तेऽस्तातौ षष्ठ्यभावः॥

(उद्द्योतः) लुप्तेपि प्रत्ययलक्षणेन प्रत्ययान्तत्वमस्त्येवेत्यत आह—प्रत्ययग्रहणमिति। अञ्चेर्लुगिति लुक्॥ ३०॥

(उपसंहारभाष्यम्)

**अञ्चूत्तरपदस्याप्येतत्प्रयोजनमुक्तम्। तत्रान्यतरच्छक्यमवक्तुम्॥ षष्ठ्यतस॥ ३०॥**

(प्रदीपः) तत्रान्यतरदिति। एकप्रयोजनत्वात्॥ ३०॥

(३१५ उपपदतृतीयापञ्चमीसूत्रम्॥ २।३। २ आ. १०)

## ४९० पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्॥ २। ३। ३२॥

(पञ्चमीसाधनाधिकरणम्)

(१५०६ वार्तिकप्रथमखण्डम्॥ १॥)

### ॥ * ॥ पृथगादिषु पञ्चमीविधानम्॥ * ॥

**(भाष्यम्) पृथगादिषु पञ्चमी विधेया—पृथग् देवदत्तात्॥**

(प्रदीपः) पृथग्विना॥ ३२॥ अन्यतरस्यांग्रहणेन पक्षे यथाप्राप्ताभ्यनुज्ञानं क्रियते। न चात्र पञ्चमी प्राप्तेति मत्वाह—पृथगादिष्विति। पक्ष इति वाक्यशेषः॥

(आक्षेपभाष्यम्)

**किमर्थं न प्रकृतं पञ्चमीग्रहणमनुवर्तते?। क्व प्रकृतम्?। "अपादाने पञ्चमी" इति॥**

(प्रदीपः) न प्रकृतमिति। नशब्दः काक्वा प्रयुक्तः। प्रकृतमेवेत्यर्थः॥

(उद्द्योतः) पृथग्विना॥ ३२॥ नञः प्रतिषेधार्थत्वेऽसंगतिरत आह—काक्वेति॥

(१५०७ वार्तिकद्वितीयखण्डम्॥ २॥)

### ॥ * ॥ अनधिकारात्॥ * ॥

**अनधिकारः सः॥**

(प्रदीपः) अनधिकार इति। अन्यारादिति योगात्परेषु योगेषु नाधिक्रियत इत्यर्थः॥

(उद्द्योतः) अनधिकारत्वेऽन्यारादित्यस्यासंगतिरत आह—योगात्परेष्विति॥

(१५०८ वार्तिकतृतीयखण्डम्॥ ३॥)

### ॥ * ॥ अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधः॥ * ॥

**(भाष्यम्) अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः स्यात्। दक्षिणेन ग्रामम्, दक्षिणतो ग्रामस्येति॥**

(उद्द्योतः) भाष्ये—द्वितीयाषष्ठीविषये इति। एनपा षष्ठ्यतसर्थेत्यत्र चेत्यर्थः॥ सौत्रक्रमत्यागे न्यायसिद्धपूर्वनिपातत्यागे च[२] बीजं चिन्त्यम्। केचित्तु—'एनपा द्वितीया' 'षष्ठ्यतसर्थे'नेत्येवाष्टाध्यायीपाठः। एवं च पृथग्विनेत्यनेन द्वितीयाविधानमपीति, एनपेति योगविभागात्षष्ठ्यपीति च वृत्त्युक्तं चिन्त्यमित्याहुः॥

(वार्तिकप्रत्याख्यानभाष्यम्)

**एवं तर्हि—अन्यतरस्यांग्रहणसामर्थ्यात्पञ्चमी भविष्यति॥**

(प्रदीपः) एवं तर्हीति। अन्यतरस्यांग्रहणं पक्षे विभक्त्यन्तरप्रापणार्थं सव्यवहितामपि पञ्चमीं प्रापयिष्यतीत्यर्थः॥

(उद्द्योतः) अन्यतरस्यांग्रहणमिति। अव्ययानामनेकार्थत्वात्समुच्चयबोधनद्वारेत्यर्थः॥

---

१ शास्त्रतो यद् यथा प्राप्तं तस्याभ्यनुज्ञानमनुमतिरित्यर्थः। (र. ना.)

२ बीजमिति। 'द्वितीयाचतुर्थ्यौ' 'सप्तमीपञ्चम्यौ' 'तृतीयासप्तम्योः' इत्यत्रैव स्वौजसमौट् सूत्रस्थकमाङ्गीकारानङ्गीकारयोः स्वतन्त्रेच्छानामाचार्याणामिच्छैव विनिगमिका। किंच 'द्व्येकयोः' 'लक्षणहेत्वोः' 'भजाद्यतः' इत्यादाविव पूर्वनिपातप्रकरणस्यापि न विनिगमकत्वमिति बोध्यम्। ३ पाठ इति। तथा पाठेपि संबन्धानुवर्तनमदर्शकस्याग्रिमभाष्यस्य विरोधानैव कल्पनीय इति दाधिमथानां सिद्धान्तः।

( सामर्थ्यनिराकरणभाष्यम् )

**अस्त्यन्यदन्यतरस्यांग्रहणस्य प्रयोजनम् ॥ किम्? ॥ यस्यां नाप्राप्तायां तृतीयारभ्यते सा यथा स्यात् ॥ कस्यां च नाप्राप्तायाम्? । अन्ततः षष्ठ्याम् ॥**

( प्रदीपः ) अस्त्यन्यदिति । यथाप्राप्ताभ्यनुज्ञानं हि विकल्पेन कार्यं न तु यस्य कस्यचिदिति भावः ॥ अन्तत इति । अवसानत इत्यर्थः । यत्र ह्यन्या विभक्तिर्न विहिता सा शेषत्वात् षष्ठ्या विषयः ॥ [यथाप्राप्ताभ्यनुज्ञानं विकल्पेन विधीयते । प्राप्त्यभावे भवेत् षष्ठी । सा हि शेषनिबन्धना ॥]

( उद्योतः ) आशयानभिज्ञः शङ्कते—भाष्ये—अस्त्यन्यदिति ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्? ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम्? । "अपादाने पञ्चमी" इति ॥**

( आक्षेपसारणभाष्यम् )

**ननु—चोक्तम् अनधिकारः सः * अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधः * इति ॥**

( समाधानभाष्यम् )

**एवं तर्हि संबन्धमनुवर्तिष्यते—"अपादाने पञ्चमी" । अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" पञ्चमी । "षष्ठ्यतसर्थप्रत्ययेन" अन्यारादिभिर्योगे पञ्चमी । "एनपाद्वितीया" अन्यारादिभिर्योगे पञ्चमी । "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" पञ्चमीग्रहणमनुवर्तते, 'अन्यारादिभिर्योगे' इति निवृत्तम् ॥**

( प्रदीपः ) संबन्धमिति । अन्यादिग्रहणसंबद्धमित्यर्थः ॥

( समाधानान्तरभाष्यम् )

**अथ वा मण्डूकप्लुतयोधिकाराः । तद्यथा—मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥**

**( भाष्यम् ) अथ वा—**

( १५०९ वार्तिकम् ॥ ४ ॥ )

*** अन्यवचनाच्चकाराकरणात्प्रकृतस्यापवादो विज्ञायते यथोत्सर्गेण प्रसक्तस्य * ॥**

**( भाष्यम् ) अन्यस्या विभक्तेर्वचनाच्चकारस्यानुकर्षणार्थस्याकरणात्प्रकृतायाः पञ्चम्या द्वितीयाषष्ठ्यौ बाधिके भविष्यतः । यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ॥**

( प्रदीपः ) यथोत्सर्गेणेति । पञ्चमी किमुत्तरार्थोंतेद्वार्थापीति संदिग्धा षष्ठीद्वितीयाभ्यामसंदिग्धाभ्यां बाध्यत इत्यर्थः ॥ ३२ ॥

( उद्योतः ) यद्यपि संबन्धानुवृत्तौ मण्डूकानुवृत्तौ वाऽनुवृत्तिसामर्थ्यादेव पञ्चम्यामपि सिद्धायाम् अन्यतरस्यांग्रहणं चिन्त्यप्रयोजनम्, षष्ठी तु नेष्यते भाष्यकृता । तथापि तद्विना तयोर्दुर्ज्ञेयत्वात्तद्बोधनायैव तद्ग्रहणमिति बोध्यं, तदकृत्वयन्नेवाथवान्येत्यादिपक्षद्वयमाह ॥ बाध्यते इति । इह तु तृतीयया न बाध्यते, चस्थानीयान्यतरस्यांग्रहणादिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथ वा वक्ष्यत्येतत्—"अनुवर्तन्ते च नाम विधयः । न चानुवर्तनादेव भवन्ति । किं तर्हि? यत्नाद्भवन्ति" इति ॥ पृथग्विना ॥ ३२ ॥**

( उद्योतः ) भाष्ये यत्नादिति । अत्र चान्यतरस्यांग्रहणं यत्नोऽस्तीति भावः ॥ ३२ ॥

( ३१६ उपपदसूत्रम् ॥ २ । ३ । २ आ. ११ )

## ४९३ दूरान्तिकार्थेभ्यो द्वितीया च ॥ २ । ३ । ३५ ॥

( १५१० आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ दूरान्तिकार्थेभ्यः पञ्चमीविधाने तद्युक्तात्पञ्चमीप्रतिषेधः ॥ * ॥**

**( भाष्यम् ) दूरान्तिकार्थेभ्यः पञ्चमीविधाने तद्युक्तात्पञ्चम्याः प्रतिषेधो वक्तव्यः । दूराद्ग्रामस्य ॥**

( प्रदीपः ) दूरान्ति ॥ ३५ ॥ तद्युक्तादिति । दूरान्तिकार्थैर्युक्तं यदपेक्षया दूरान्तिकत्वं तद्वाचिन इत्यर्थः ॥ दूराद्ग्रामस्येति । पूर्वसूत्रेण षष्ठ्येव ग्रामाद्भवति ॥

( उद्योतः ) दूरान्तिकार्थेभ्यो ॥ ३५ ॥ भाष्ये पञ्चमीविधाने तद्युक्तादिति । पञ्चम्यन्तदूरान्तिकार्थैर्युक्तादित्यर्थः । सामान्यतो दूरान्तिकार्थयुक्तात्प्रतिषेधे पूर्वसूत्रस्थान्यतरस्यांग्रहणस्य वैयर्थ्यापत्तिः, अत एवात्र वार्तिके पञ्चमीविधान इति सार्थकं, दूरान्तिकार्थैरिति पूर्वसूत्रेण षष्ठीपञ्चम्योः प्राप्तिः ॥ पूर्वसूत्रेण । दूरान्तिकार्थैः षष्ठीत्यनेन ॥ षष्ठ्येवेति । नतु पञ्चमी, अनेन निषेधादितिभावः ॥

( १५११ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

**॥*॥ न वा तत्रापि दर्शनादप्रतिषेधः ॥*॥**

**( भाष्यम् ) अनर्थकः प्रतिषेधोऽप्रतिषेधः । न वा, तत्रापि दर्शनात्पञ्चम्याः प्रतिषेधोनर्थकः । तत्रापि हि पञ्चमी दृश्यते—**

**दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ॥**
**दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपितादु गुरोः ॥**
**दूरान्ति ॥ ३५ ॥**

१ 'अन्यारादिभिरिति ।' 'अन्यारादि' इत्येकदेशस्यानुकरणं भाष्यकृता स्वीकृतम् ॥ एतदजानानैस्तु कैश्चिद् 'अन्यादिभिः' इति शोधितम् ।

( प्रदीपः ) दूरादावसथादिति । आवसथस्य दूर इत्यर्थः । पूर्वसूत्रेणावसथादेः पञ्चम्यपि भवति ॥ ३५ ॥

( उद्द्योतः ) दूरादावसथादित्यनयोः सामानाधिकरण्यभ्रमं निराकरोति—आवसथस्येति । दूरात् ग्रामस्येत्यादौ त्वनभिधानात्पञ्चमी नेति भावः ॥ ३५ ॥

( ३१७ कारकसप्तमीसूत्रम् ॥ २ । ३ । २ आ. १२ )

## ४९४ सप्तम्यधिकरणे च ॥ २।३।३६ ॥

( न्यूनतापूरणाधिकरणम् )

( १५१२ सप्तमीविधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानं कर्तव्यम् । अधीती व्याकरणे । परिगणिती याज्ञिक्ये । आम्नाती छन्दसि ॥

सप्तम्यधि ॥ ३६ ॥ क्तस्येन्विषयस्येति । इन्नन्तस्येत्यर्थः ॥ अधीतीति । अधीतमनेनेतीष्टादिभ्य इतीनिः । अत्र व्याकरणस्य कर्मत्वाद् द्वितीया प्राप्नोति यथा कृतपूर्वी कटमिति । ततस्तदपवादः सप्तमी विधीयते ॥ अधिकरणविवक्षया सिद्धेति चेत् । कर्मविवक्षया द्वितीयापि स्यादिति तन्निवृत्त्यर्थं कर्तव्यमेव वचनम् । मासमधीती व्याकरण इति कालकर्मणो बहिरङ्गत्वादिहाग्रहणात्सप्तम्यभावः ॥

( उद्द्योतः ) सप्तम्य ॥ ३६ ॥ इन्विषयस्येत्यस्य इनो विषयस्येति समासः । प्रकृतित्वेन च स इनो विषयस्तदाह—इन्नन्तस्येति । क्तान्तप्रकृतिकेन्नन्तस्येत्यर्थः ॥ अत्र व्याकरणस्येति । पूर्वमविवक्षितकर्मतया भावे क्ते पश्चात्कर्मसंबन्धेन कर्मणोऽनभिहितत्वाद् द्वितीया प्राप्तेत्याशयः । कर्मणि क्तप्रत्ययान्तात्तु वा[3](ऽ) इनिरव्यविकन्यायात् ॥ एतेन कर्मणि क्तप्रत्यये व्याकरणशब्दात् प्रथमैवेति निरस्तम् ॥ अधिकरणत्वविवक्षायामिति । अस्तीत्यध्याहारेण कर्तृद्वारा व्यापाराश्रयत्वविवक्षायामित्यर्थः ॥ बहिरङ्गत्वादिति । तच्चोपपादितं कालाध्वनोरित्यत्र ॥

( १५१३ सप्तमीविधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ साध्वसाधुप्रयोगे च ॥ * ॥

( भाष्यम् ) साध्वसाधुप्रयोगे च सप्तमी वक्तव्या । साधुर्देवदत्तो मातरि । असाधुः पितरि ॥

( प्रदीपः ) साध्वसाधुप्रयोगे चेति । साधुनिपुणाभ्यां [इति] सप्तम्यां सिद्धायामनर्चार्थमत्र साधुग्रहणम् । तेन तत्त्वकथनेपि साधुयोगे सप्तमी भवति । अर्चाग्रहणं तु तत्र निपुणविशेषणार्थमेव । साधुर्भृत्यो राज्ञ इति तु भृत्यापेक्षा षष्ठी, न तु साध्वपेक्षेति वाक्यार्थज्ञा आहुः ॥

( उद्द्योतः ) उभयत्रानेनैव सप्तम्यां सिद्धायामर्चाग्रहणं तत्र व्यर्थमत आह—अर्चाग्रहणं त्विति । तत्र साधुग्रहणं तु साधुप्रयोगेऽप्यर्चायां प्रत्यादियोगे निषेधार्थम् । न चानेन दुर्वारा । तत्सामर्थ्येनास्याप्यप्रवृत्तेरिति केचित् ॥

( १५१४ सप्तमीविधायकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ कारकार्हाणां च कारकत्वे ॥ * ॥

( भाष्यम् ) कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या । ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ब्राह्मणेषु तरत्सु वृषला आसते ॥

( प्रदीपः ) कारकार्हाणां चेति । कारकशब्दो भावप्रधानः । तेन कारकत्वमर्हन्तीत्यर्थः ॥ ऋद्धेष्विति । ऋद्धा भोजनक्रियामर्हन्तीति कारकार्हाः । लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनम् । तद्विवक्षायामुत्तरसूत्रेण सिद्धत्वात् ॥

( उद्द्योतः ) क्रियाया एव कारकार्हत्वादसङ्गतिमाशङ्क्याह—कारकशब्द इति । शक्तिपरः स इति परे ॥ उत्तरसूत्रेण 'यस्य च भावेने'त्यनेन ॥

( १५१५ सप्तमीविधायकवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ अकारकार्हाणां चाकारकत्वे ॥ * ॥

( भाष्यम् ) अकारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या । मूर्खेष्वासीनेषु ऋद्धा भुञ्जते । वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति ॥

( प्रदीपः ) मूर्खेष्विति । मूर्खा भोजनानर्हत्वादकारकार्हाः ॥

( उद्द्योतः ) भाष्ये ऋद्धाइत्यस्य विद्यादिगुणसमृद्धा इत्यर्थः ॥

( १५१६ सप्तमीविधायकवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ तद्विपर्यासे च ॥ * ॥

( भाष्यम् ) तद्विपर्यासे च सप्तमी वक्तव्या । ऋद्धेष्वासीनेषु मूर्खा भुञ्जते । ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति ॥

( प्रदीपः ) तद्विपर्यास इति । यदा कारकार्हाणां नास्ति कारकत्वमकारकार्हाणां चास्ति कारकत्वं तदेत्यर्थः ॥

( १५१७ सप्तमीविधायकवार्तिकम् ॥ ६ ॥ )

### ॥ * ॥ निमित्तात्कर्मसंयोगे ॥ * ॥

(भाष्यम्) निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या ॥

---

१ 'असावधीति' । २ याज्ञिक्य इति । 'छन्दोगौक्थिकयाज्ञिकबह्वृचनटाद् ञ्यः' इति याज्ञिकानां 'धर्म आम्नायो वा' इत्यर्थे ञ्यः प्रत्ययः । ३ न इनिरव्यविकन्यायादिति पाठो भाति । अयं भावः । अवेर्विकार इति विग्रहे यथा अविकशब्दादेवाण् प्रत्ययो न तु अविशब्दादिति आविकमित्येव भवति न तु आवमिति तथा प्रकृते कर्मणोऽविवक्षया भावक्तान्तादेवेनिप्रत्यये पश्चात् कर्मणः संबन्धो न तु कर्मक्तान्तादिनिरिति । ( र. ना. ) ४ 'असाधुर्मातुले कृष्णः' ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ॥
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥
सप्तम्यधि ॥ ३६ ॥

( प्रदीपः ) निमित्तादिति । क्रियाफलमिह निमित्तत्वेन विवक्षितम् । यत् क्रियायाः प्रयोजकं यदर्थः क्रियारम्भस्ततो हेताविति तृतीयायां प्राप्तायां सप्तमी विधीयते । तस्य निमित्तस्य यदि कर्मणा संयोगः संबन्धः । ततो वेतनेन धान्यं लुनातीति सप्तमी न भवति । वेतनस्य धान्येन संयोगाभावात् ॥ ३६ ॥

( उद्द्योतः ) क्रियाफलमिति । व्याख्यानादिति भावः ॥ संयोग इत्यस्य व्याख्यानं संबन्ध इति समवायस्यापि संग्रहाय ॥ ३६ ॥

( ३१८ उपपदसप्तमीसूत्रम् ॥ २ । ३ । २ आ. १३ )

## ४९५ यस्य च भावेन भावलक्षणम् ॥ २ । ३ । ३७ ॥

( भूयोदर्शनाभावेसप्तमीसाधनाधिकरणम् )

( १५१८ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ भावलक्षणे सप्तमीविधाने अभावलक्षणे उपसंख्यानम् ॥ * ॥

( भाष्यम् ) भावलक्षणे सप्तमीविधाने अभावलक्षण उपसंख्यानं कर्तव्यम् । अग्निषु हूयमानेषु गतः, हुतेष्वागतः । गोषु दुह्यमानासु गतः, दुग्धास्वागतः ॥ किं पुनः कारणं न सिध्यति ? । लक्षणं नाम तद्भवति येन पुनः पुनर्लक्ष्यते । सकृच्चासौ कथंचिदग्निषु हूयमानेषु प्रस्थितः, हुतेष्वागतः । गोषु दुह्यमानासु प्रस्थितः, दुग्धास्वागतः ॥

( प्रदीपः ) यस्य च ॥ ३७ ॥ अभावलक्षण इति । भूयो दर्शनाश्रयो हि लक्ष्यलक्षणभावो यथाग्निधूमयोः । इह त्वग्निषु हूयमानेषु प्रस्थित इत्यग्निहवनं प्रस्थानेन सह यदा पुनः पुनर्न दृष्टं तदा न तत्तस्य लक्षणमिति वचनारम्भः ॥

( उद्द्योतः ) यस्य च ॥ ३७ ॥ भूय इति । अनुमापकत्वं लक्षणत्वम् । तत्प्रकारको बोध इति पूर्वपक्ष इति भावः ॥ यथाग्नीति । तथा च—'उदयति सवितरि तमो नष्टम्' धूमे सति वह्निर्भवतीत्यादावेव स्यात् इति भावः ॥

( १५१९ न्यासान्तरेण समाधानवार्तिकम् ॥ ९ ॥ )

### ॥ * ॥ सिद्धं तु भावप्रवृत्तौ यस्य भावारम्भवचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । यस्य भावेप्रवृत्तौ द्वितीयो भाव आरभ्यते तत्र सप्तमी वक्तव्या ॥

( उद्द्योतः ) भाष्ये द्वितीयो भाव आरभ्यते । इत्यस्योच्यत इत्यर्थः ॥

( आक्षेपभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ॥

( समाधानभाष्यम् )

यथान्यासमेवास्तु ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—*भावलक्षणे सप्तमीविधानेऽभावलक्षण उपसंख्यानम् * इति ॥

( समाधानभाष्यम् )

नैष दोषः । न खल्ववश्यं तदेव लक्षणं भवति येन पुनःपुनर्लक्ष्यते । सकृदपि यन्निमित्तत्वाय कल्पते तदपि लक्षणं भवति । तद्यथा—अपि भवान्कमण्डलुपाणिं छात्रमद्राक्षीदिति । सकृदसौ कमण्डलुपाणिर्दृष्टश्छात्रस्तस्य तदेव लक्षणं भवति ॥ यस्य च ॥ ३७ ॥

( प्रदीपः ) सकृदपीति । लक्षणशब्दः क्रियानिमित्तकः—लक्ष्यते अनेनेति लक्षणम् । यच्च निर्ज्ञातकालं हवनादिकमनिर्ज्ञातकालस्य सकृदपि कालपरिच्छेदनिमित्तं भवति तत्तस्य लक्षणमित्यर्थः ॥ ३७ ॥

(उद्द्योतः) लक्षणशब्दइति । नायं शब्दोऽनुमापकत्वेनाभिमतलिङ्गपर्यायः । किन्तु वृक्षं प्रति विद्योतत इत्यादाविवानिर्ज्ञातज्ञापनवृत्तिरिति भावः ॥ भाष्ये—सकृदपि यन्निमित्तत्वायेति । तत्कालादिपरिच्छेदनिमित्तत्वायेत्यर्थः ॥ तदेव कमण्डलुपाणित्वमेव ॥ अनिर्ज्ञातकालस्येति । अनेन 'मानान्तरेण यस्य स्वरूपं ज्ञातं तस्य कालविशेषज्ञापनार्थं शब्दप्रयोगे एकैस्य प्रवृत्तिं सूचयति ॥ राहूपरागे स्नायादित्यादौ कालवाचकादधिकरणे एवं ॥ ३७ ॥

( ३१९ उपपदपञ्चमीसूत्रम् ॥ २ । ३ । २ आ. १४ )

## ५०० पञ्चमी विभक्ते ॥ २ । ३ । ४२ ॥

( विभक्तशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

इह कस्मान्न भवति—कृष्णा गवां संपन्नक्षीरतमेति ? ॥

( प्रदीपः ) पञ्चमी ॥ ४२ ॥ कृष्णा गवामिति । गोमण्डलात् कृष्णा गौः पृथक् क्रियत इत्यस्ति विभक्तत्वम् ॥

( उद्द्योतः ) पञ्चमी विभक्ते ॥ ४२ ॥ विभागो भेदः । गोभ्यो गोरेव कथं विभक्तत्वमत आह—गोमण्डलादिति । पृथक् क्रियते भेदेन बोध्यते ॥

( समाधानभाष्यम् )

विभक्त इत्युच्यते । न चैतद्विभक्तम् ॥

१ भावलक्षणत्वाभावे इत्यर्थः । ( र. ना. ) २ 'भावस्य' । ३ एतस्येति पाठो भाति । ग्रामस्येत्यर्थः । ( र. ना. ) ४ न तु लक्ष्यलक्षणभावे इत्यर्थः ।
निर्ज्ञातकालक्रियात्वाभावादिति हेतुः । ( र. ना. )

( प्रदीपः ) न चैतदिति । कृष्णाया गोत्वेन गोष्वन्तर्भावात् ॥

( समाधानबाधकभाष्यम् )

विभक्तमेतत् । गोभ्यः कृष्णा विभज्यते ॥

( समाधानाशयभाष्यम् )

विभक्तमेव यन्नित्यं तत्र भवितव्यम् । न चैतन्नित्यं विभक्तम् ॥

( आक्षेपभाष्यम् )

किं वक्तव्यमेतत् ? ॥

( समाधानभाष्यम् )

नहि ॥ कथमनुच्यमानं गंस्यते ? । विभक्तग्रहणसामर्थ्यात् । यदि यद्विभक्तं चाविभक्तं च तत्र स्याद्, विभक्तग्रहणमनर्थकं स्यात् । पञ्चमी ॥ ४२ ॥

( प्रदीपः ) विभक्तग्रहणमिति ॥ सर्वत्रैव निर्द्धारणे विभागसद्भावात् पूर्वत्रैव पञ्चमीग्रहणं कुर्यात् । तस्माद्विभक्तग्रहणसामर्थ्याद् अवधारणमाश्रीयत इत्यर्थः ॥ ४२ ॥

( उद्द्योतः ) अवधारणमाश्रीयत इति । माथुराः पाटलिपुत्रकेभ्य इत्यादौ माथुराणां पाटलिपुत्रकेषु प्राणित्वेनान्तर्भावेपि शब्दोपात्ताकारापेक्षयानन्तर्भावाद्विभाग एवेति भावः ॥ ४२ ॥

( ३२० उपपदसप्तमीसूत्रम् ॥ २ । ३ । २ आ. १५ )

## ५०१ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ २ । ३ । ४३ ॥

( न्यूनतापूर्त्यधिकरणम् )

( १५२० वार्तिकम् ॥ १ ॥ )

### [ ॥ * ॥ अप्रत्यादिभिः ॥ * ॥ ]

( भाष्यम् ) अप्रत्यादिभिरिति वक्तव्यम् । इहापि यथा स्यात्-[ साधुर्देवदत्तो मातरं प्रति । ] मातरं परि । मातरमनु । साधु ॥ ४३ ॥

( प्रदीपः ) साधुनि ॥ ४३ ॥ अप्रत्यादिभिरिति । प्रतिपर्यनवः प्रत्यादयः ॥ ४३ ॥

( उद्द्योतः ) साधुनि ॥ ४३ ॥ प्रतिपरीति । कर्मप्रवचनीयसंज्ञासूत्रस्थाः प्रत्यादय इति भावः ॥ ४३ ॥



( ३२१ उपपदतृतीयासप्तमीसूत्रम् ॥ २ । ३ । २ आ. १६ )

## ५०२ प्रसितोत्सुकाभ्यां तृतीया च ॥ २ । ३ । ४४ ॥

( प्रसितशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

प्रसित इत्युच्यते । कः प्रसितो नाम ? ॥

( प्रदीपः ) प्रसितो ॥ ४४ ॥ कः प्रसित इति । किं प्रकृष्टः शुक्लः प्रसितः, उत स्यतेस्सिनोतेर्वा कारकमिति प्रश्नः ॥

( उद्द्योतः ) प्रसितोत्सु ॥ ४४ ॥ स्यतेरिति । षतिस्यनीति क्तेऽस्य सितमिति । कारकं कर्मकारकम् ॥

( समाधानभाष्यम् )

यस्तत्र नित्यं प्रतिबद्धः ॥ कुत एतत् ? । सिनोतिरयं बध्नात्यर्थे वर्तते—बद्ध इवासौ तत्र भवति ॥ प्रसितो ॥ ४४ ॥

( प्रदीपः ) यस्तत्रेति । उत्सुकशब्दसाहचर्यात् तदर्थसदृशोर्थो गृह्यते ॥ बद्ध इवेति । मुख्यस्य व्यतिषङ्गरूपस्य बन्धनस्याभावात् सादृश्याद् गौणार्थपरिग्रहः ॥ ४४ ॥

( उद्द्योतः ) व्यतिषङ्गो रज्ज्वादिभिः सम्बन्धनम् ॥ गौणार्थस्तत्परत्वरूपः । अत एव पूर्वमुत्सुकसाहचर्यादित्युक्तम् ॥ 'तत्परे प्रसितासक्तौ' इत्यमरः ॥ ४४ ॥

( ३२२ कारकसप्तमीसूत्रम् ॥ २ । ३ । २ आ. १७ सू. )

## ५०३ नक्षत्रे च लुपि ॥ २ । ३ । ४५ ॥

( अनिष्टापत्तिवारणाधिकरणम् )

( आक्षेपभाष्यम् )

इह कस्मान्न भवति—अद्य पुष्यः अद्य मघा ? ॥

( प्रदीपः ) नक्षत्रे च ॥ ४५ ॥ अद्य पुष्य इति । पुष्येण युक्तः काल इत्यणो लुबविशेष इति लुप् ॥ ननु परत्वादत्र प्रथमा भविष्यति । नैतदस्ति । सर्वविभक्त्यपवादोयं विज्ञायेत[२] । अन्तरङ्गत्वाद्वा प्रातिपदिकार्थमात्र एवेदं विधानं स्यात् ॥ ४५ ॥

( उद्द्योतः ) नक्षत्रे च ॥ ४५ ॥ एतत्सूत्रप्राप्तये प्रक्रियामाह—पुष्येण युक्त इति ॥ सर्वेति । ततश्च पुष्यं प्रतीक्षते पुष्याय स्पृहयति पुष्यस्य समीप इत्यादि प्रयोगा न सिध्येरन्निति भाव इति सर्वं निर्मलम् ॥ ४५ ॥

---

१ अयं कोष्ठकान्तर्गतः पाठः क्वचिदुपलभ्यमानो लेखकप्रमादज एव 'इहापि' इत्यपिना तत्पाठस्यात्रानावश्यकत्वध्वननात् । वस्तुतस्तु अजामित्वाद् भाष्यकृता मत्यादिरुदाहृत इति वयम् । ( र. ना. ) २ 'विज्ञायते' ।

( समाधानभाष्यम् )

**अधिकरण इति वर्तते ॥ नक्षत्रे ॥ ४५ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीयपादे द्वितीयमाह्निकम् ॥**

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

# द्वितीयाध्यायस्य तृतीयपादे तृतीयमाह्निकम् ॥

( ३२३ प्रथमासूत्रम् ॥ २ । ३ । ३ आ. १ )

## ५०४ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ २ । ३ । ४६ ॥

( प्रातिपदिकपदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**प्रातिपदिकग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) **प्रातिपदिकार्थे ॥ ४६ ॥ प्रातिपदिकग्रहणमिति ।** ङ्याप्प्रातिपदिकाद्विहितानां स्वादीनां प्रकरणमिदं नियमार्थमित्यन्तरेणापि प्रातिपदिकग्रहणं प्रातिपदिकार्थ एव प्रथमा भविष्यतीति प्रश्नः ॥

( उद्द्योतः ) प्रातिपदिकार्थे ॥ ४६ ॥ तद्ग्रहणमन्तरा तदर्थे प्रथमानियमालाभात् प्रश्नानुपपत्तिरत आह—**ङ्याविति । अन्तरेणापीति ।** अर्थे इत्युक्त्वापि कस्यार्थे इत्याकाङ्क्षायां संयतैः स्वादिविधिस्तदर्थे इति लाभादिति भावः । तत्सत्त्वेपि लिङ्गविशिष्टपरिभाषया ङ्यन्ताद्यर्थे तल्लाभः ॥

( समाधानभाष्यम् )

**उच्चैः नीचैरित्यत्रापि यथा स्यात् ॥**

( प्रदीपः ) **उच्चैरिति ।** असति प्रातिपदिकग्रहणे अव्ययात् प्रथमा न स्यात् । **बहुषु बहुवचन**मित्यादिनास्यैकवाक्यतायां संख्यायुक्त एव प्रातिपदिकार्थे स्यात् । प्रातिपदिकग्रहणात्तु यत्नात् संख्यारहितेप्यव्ययार्थे प्रथमा सिध्यति ॥

अथ वा लिङ्गग्रहणात् सर्वत्र प्रथमा सिध्यतीति प्रश्नः । अत एव **प्रातिपदिकार्थग्रहणं किमर्थमिति** क्वचित् पाठः । अलिङ्गेप्यव्ययार्थे यथा स्यादित्युत्तरम् ॥ प्रातिपदिकार्थश्चेह भाष्यकारेण न विचारितः । अन्वयव्यतिरेकाभ्यां यस्य यो जात्यादिरर्थः प्रतीतस्तस्य सर्वस्येहाभिमतत्वाद्विचारे प्रयोजनाभावात् ॥

( उद्द्योतः ) नन्वव्ययानामप्यर्थवत्त्वात्तेनैव सिद्धमत आह—**असतीति । यत्नादिति ॥** प्रातिपदिकग्रहणसामर्थ्यादस्य संख्यावाक्यैरेकवाक्यतायामपि प्रकृतार्थापेक्षनियमाश्रवणादर्थनियमाश्रयणाद्वाऽसंख्यादव्ययाद्वचनसिद्धिरिति भावः ॥

**अथवेति ।** लिङ्गे वर्तमानात्प्रातिपदिकादिति सूत्रार्थः । सर्वत्र लिङ्गं प्रकृत्यर्थ इति भावः । इदं चिन्त्यं, प्रातिपदिकार्थग्रहणाभावे लिङ्गमात्रे इत्यर्थापत्तौ स्त्री पुमानित्यादावेव स्यात् । न वृक्ष इत्यादौ, जात्यादेरप्यधिकस्य भानात् । तस्मादाद्यव्याख्यैव ज्यायसी ॥ **जात्यादिरिति । आदिनाश्रयः ॥** जातिपदं च प्रवृत्तिनिमित्तोपलक्षणम् ॥

( आक्षेपभाष्यम् )

**किं पुनरत्र प्रथमया प्रार्थ्यते ? ॥**

( प्रदीपः ) **किं पुनरिति । अव्ययादाप्सुप इति** लुग्विधानात् प्रथमायाः श्रवणाभावादिति भावः ॥

( समाधानभाष्यम् )

**पदत्वम् ॥**

( प्रदीपः ) **पदत्वमिति । प्रत्ययलोपे प्रत्ययलक्षणमिति** प्रथमोत्पत्तिनिबन्धनं पदत्वं प्रार्थ्यते । तन्निबन्धनं रुत्वादिकमित्यर्थः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । षष्ठ्यात्र पदत्वं भविष्यति ॥**

( प्रदीपः ) **षष्ठ्यात्रेति ।** यस्मिन्नर्थे द्वितीयादयो न विहिताः स शेष इति मन्यते ॥ नन्वसंख्यत्वादव्ययार्थस्य कथं षष्ठी स्यात् । नैष दोषः । एकत्वाद्यर्थनियमे षष्ठ्याः संख्यायामनियमात् । प्रत्ययनियमेपि वा तुल्यजातीयापेक्षत्वान्नियमस्यैकत्वादिभिः परस्परस्य व्यावर्तनात् ॥

( उद्द्योतः ) **यस्मिन्नर्थे इति ।** प्रातिपदिकार्थे प्रथमाविधानाभावात्तद्व्यतिरिक्तः शेष इति न लभ्यत इति भावः । **नन्वसंख्येति ॥** षष्ठीविधायकस्यापि द्व्येकयोरित्यादिभिरेकवाक्यत्वादिति भावः॥ वस्तुतो द्वितीयादीनां विषयाभावः शेषः। प्रातिपदिकार्थरूपः प्रथमाया विषयः सर्वत्रेति न तदपेक्षः शेष इत्याशयेनैकदेश्याह—**षष्ठ्यात्रेति ।** एवं चाद्यव्याख्यानं विनास्य भाष्यस्यासङ्गतिः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—ग्राम उच्चैस्तव स्वम्, ग्राम उच्चैस्ते स्वम् "सपूर्वायाः प्रथमाया विभाषा" इत्येष विधिर्यथा स्यात् ॥**

( उद्द्योतः ) पर एकदेश्याह—**इदं तर्हीति ।** इदं सर्वमेकदेशियुक्तिरित्यग्रे स्फुटं भविष्यति ॥ **उच्चैर्नीचैरि**त्यप्येकदेशियुक्तिः **अव्ययादाप्सुप** इति ज्ञापकात्सिद्धेरिति बोध्यम् ॥

( लिङ्गग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ लिङ्गग्रहणं किमर्थम् ? ॥**

---

१ सत्यां यत इति पाठो भाति । ( र. ना. ) २ प्रकृतार्थापेक्षप्रत्ययनियमाकारश्च 'कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा न कर्मादौ' इत्येवं रूपः । अर्थनियमाकारस्तु 'कर्मादिरहिते तद्योग्य प्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवे'त्येवंविधः । ( र. ना. ) ३ कर्मादिभिन्नार्थगतैकत्वादौ प्रातिपदिकात् षष्ठ्येकवचनादिकमेवेति नियमाकारः । ( र. ना. ) ४ कारकप्रातिपदिकार्थ भिन्नसंख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेव षष्ठ्येकवचनादि नद्विल्वादाविति प्रकृतार्थापेक्षप्रत्ययनियमाकारः । ( र. ना. ) ५ प्रातिपदिकग्रहणं किमर्थमिति भाष्यस्य कैयटोक्ताद्यव्याख्यानं विनेत्यर्थः । ( र. ना. )

(प्रदीपः) अथ लिङ्गग्रहणमिति। सत्त्वभूतार्थाभिधायीनि यानि प्रातिपदिकानि तेषां लिङ्गमप्यर्थं इति प्रश्नः॥

(उद्योतः) ननु प्रातिपदिकत्वेऽप्यव्ययानां लिङ्गाबोधकत्वेन व्यभिचारान्न तत्प्रातिपदिकार्थ इत्यत आह—सत्त्वभूतेति। प्रातिपदिकार्थ इत्यस्य हि तत्तत्प्रातिपदिकार्थ इत्यर्थो न तु प्रातिपदिकत्वावच्छिन्नार्थ इति, असंभवादिति भावः॥

(समाधानभाष्यम्)

**स्त्री पुमान् नपुंसकमित्यत्रापि यथा स्यात्॥**

(प्रदीपः) मात्रग्रहणात्संबोधने चेति सूत्रारम्भाच्चाधिकविशेषसद्भावे प्रथमा न स्यादिति मत्वाह—स्त्रीपुमानिति। द्रव्यमत्र स्त्रीत्वाद्यधिकमभिधीयते॥

(उद्योतः) अधिकविशेषेति। द्रव्यजातिभ्यामधिकेत्यर्थः॥ स्त्रीत्वाद्यधिकमिति। स्त्रीत्वादिकमधिकं यत्रेत्यर्थः॥

(समाधानबाधकभाष्यम्)

**नैतदस्ति प्रयोजनम्। एष एव चात्रास्ति प्रातिपदिकार्थः॥**

(प्रदीपः) एष एवेति। यमर्थं प्रातिपदिकं न व्यभिचरति स प्रातिपदिकार्थः। स्त्रीत्वादिना च विना रुग्यादिशब्दानां प्रयोगाभावः॥

(उद्योतः) यमर्थमिति। अन्वयव्यतिरेकाभ्यां यस्य प्रातिपदिकस्य योऽर्थोऽवधारितः प्रवृत्तिनिमित्ततदाश्रयरूपस्तदधिकव्यावृत्त्यर्थं मात्रग्रहणमिति भावः॥ द्रव्यमात्रापेक्षयाधिकव्यावृत्तौ घट इत्यादावपि न स्यादिति तात्पर्यम्॥

(समाधानान्तरभाष्यम्)

**इदं तर्हि—कुमारी वृक्षः कुण्डमिति॥**

(प्रदीपः) कुमारीति। विनापि स्त्रीत्वेन कुमारो देवदत्त इति कुमारशब्दस्य प्रयोगदर्शनात् स्त्रीत्वं न प्रातिपदिकार्थः॥ वृक्षः कुण्डमिति। पुंनपुंसकोपलक्षणमेतत्। तटस्तटमित्येतत्तूदाहरणम्॥ वृक्षकुण्डशब्दयोस्तु पुंनपुंसकत्वेन विना प्रयोगाभावात् लिङ्गस्य प्रातिपदिकार्थता॥ कुण्डशब्दस्तु जीवति भर्तरि परेण जाते वर्तमानः पुल्लिङ्ग इति नपुंसकत्वेन विनापि तस्य प्रयोगात् कुण्डीति च स्त्रियामपि वर्तनात् कुण्डमित्येतदुदाहरणमित्यपरे॥ जातिरेवात्र प्रातिपदिकार्थो न तु लिङ्गमित्यन्ये ब्रुवते॥

(उद्योतः) न प्रातिपदिकार्थ इति। कुमारत्वस्यैव नियमेन मानात्तदर्थता न तु लिङ्गस्येति भावः। अत्र स्त्रीत्वं न प्रवृत्तिनिमित्तमिति भाव इति तत्त्वम्॥ तटस्तटमिति। अस्य त्रिलिङ्गत्वेन प्रातिपदिकात्कस्यापि लिङ्गस्य नियमेनानुपस्थित्या तस्य प्रातिपदिकार्थत्वाभाव इति भावः॥ जातिरेवात्रेति। अत्र प्रकृतसूत्रे॥ जातिग्रहणं प्रवृत्तिनिमित्तपरम्। प्रातिपदिकार्थः प्रातिपदिकार्थशब्देन विवक्षितः। जातिपदमाश्रयस्याप्युपलक्षणम्। एवं च भाष्योक्तान्युदाहरणानीति तद्भावः॥ अन्तरङ्गत्वाच्च तयोरेव प्रातिपदिकार्थशब्देन ग्रहणम्। लिङ्गादीनां तु प्रायेण द्योतकसापेक्षप्रतीतिकतया बहिरङ्गत्वमिति तदाशयः॥ एतदेवाभिप्रेत्य प्रातिपदिकार्थः सत्तेति वृत्तावुक्तम्॥ उक्तव्याख्याद्वयं चिन्त्यमेव। अनेकलिङ्गत्वेऽपि स्वमोर्नपुंसकादिति शास्त्रबलेन लिङ्गे प्रातिपदिकवाच्यत्वस्यैव सर्वसम्मतत्वेन तटादिशब्देऽपि प्रातिपदिकार्थग्रहणेन सिद्धिः। अत एव द्वितीयाद्यन्ते लिङ्गबोधः। नहि समाने प्रातिपदिकवाच्यत्वे वृक्षादिशब्दवाच्यं प्रातिपदिकार्थशब्देन गृह्यते, न तटादिवाच्यमित्यत्र जातिरेवा त्रेत्युक्तातिरिक्तं निमित्तमस्ति॥ एवं चालिङ्गाव्ययानि लिङ्गप्रवृत्तिनिमित्तकाः शब्दाः प्रातिपदिकार्थ इत्यस्योदाहरणानि। अन्ये तु लिङ्गाद्याधिक्यस्येति बोध्यम्॥ येऽपि गौर्वाहीक इत्यादौ गोसदृशे लक्षणां वदन्ति, तेषां मते तदेव प्रवृत्तिनिमित्तम्। तदुत्तरत्वप्रत्ययेनाभिधीयमानत्वस्यैव प्रवृत्तिनिमित्तत्वस्य विवक्षितत्वात्। अस्माकं तु शक्यतावच्छेदकारोपेणैव तत्तद्बोधकपदे एव लक्षणेति वादिनां शङ्कैव न॥

(परिमाणपदप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ परिमाणग्रहणं किमर्थम्?॥**

(प्रदीपः) अथेति। द्रोणादयः परिमाण एव वर्तन्त इति प्रातिपदिकार्थग्रहणेनैव प्रथमा सिद्धेति प्रश्नः॥

(उद्योतः) भाष्ये—अथ परिमाणेति। द्रोणादयो यदि परिमाणवचनास्तदा प्रातिपदिकार्थत्वात्सिद्धिरिति प्रश्नाशयः॥

(समाधानभाष्यम्)

**द्रोणः खारी आढकमित्यत्रापि यथा स्यात्॥**

(प्रदीपः) द्रोण इति। यदा मानमेयसंबन्धाद् व्रीह्यादौ द्रोणादयो वर्तन्ते तदा व्यभिचारान्नास्ति मेयस्य प्रातिपदिकार्थत्वम्॥

(उद्योतः) उत्तरं तु लक्षणया परिमेयवृत्तिता यदा तदर्थमितीत्याह—यदा मानमेयेति॥ व्यभिचारादिति। मेयस्यापि द्रोणत्वारोपेण द्रोणादिपदेभ्यो बोधे तद्बोधेऽपि परिमाणस्य भानात्स नियतः। परिमाणे वृत्तौ मेयार्थत्वाभावेन व्यभिचारी स इति भावः॥ प्रातिपदिकेन नियतोपस्थितिविषयो हि प्रातिपदिकार्थः॥ परिमाणशब्दे च कर्मणि ल्युट् परिमेये इत्यर्थ इति तात्पर्यार्थः॥ एवं हि सिंहो माणवक इत्यादौ सा न स्यात्। सिंहसदृशार्थस्य व्यभिचारेणाप्रातिपदिकार्थत्वात्। तस्मात् द्रोणः खारी आढकमित्यत्रापि यथा स्यादिति भाष्यस्य विभक्त्यर्थस्य परिमाणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीह्यादौ मेयेऽन्वयो यथा स्यादित्यर्थः॥ प्रातिपदिकार्थे प्रथमायां तु नामार्थयोरभेदान्वयव्युत्पत्तिविरोधेन तथान्वयो न स्यात्। कैयटादिमतेऽपि 'इत्यत्र मेयवृत्तित्वेऽपि यथा स्यादिति'' लक्षणया भाष्यव्याख्याया आवश्यकत्वाच्च। सूत्रभाष्यकृतोः सिंहो माणवक इत्यादेरज्ञानकल्पना चाधिका॥ यदा यो नियतोपस्थितिकः स तदा प्रातिपदिकार्थ इति स्वीकृत्य तदकरणस्यैव न्याय्यत्वं च। मद्व्याख्यायां शाब्दबोधवैलक्षण्याय सूत्रे तद्ग्रहणम्...

१ लिङ्गं तत्पदार्थः। (र. ना.) २ कुमारीवृक्षः कुण्डमित्येतानीत्यर्थः। (र. ना.) ३ व्रीह्यादिपदसमभिव्याहाराभावे द्रोणादिपदस्य मेयवाचित्वव्यभिचारादित्यर्थः। (र. ना.) ४ परिमाणरूपोऽर्थः। (र.ना.) ५ मेयरूपोऽर्थः। (र. ना.) ६ कैयटादिमते इत्यादिः। परिमाणग्रहणाकरणस्यैवेत्यर्थः। (र. ना.)

हणम् । न च परिमाणं प्रातिपदिकार्थ इति तत एव तल्लाभात्तत्र प्रथमाविधानं व्यर्थं, द्रोणत्वादिना तस्य तदर्थत्वेपि परिमाणत्वेन तदर्थत्वाभावात् । न च तव मते द्रोणो व्रीहिमानयेत्यपि स्यात् । प्रातिपदिकार्थसाहचर्याद्भाम्नोः सम्बन्धे समानविभक्तिकनामान्तरार्थेऽन्वये एव परिमाणे प्रथमायाः साधुत्वबोधनात् । अत एवाभिहिते प्रथमेत्यादिलक्षणैः समफलता । [1]मन्मते हि सिंहो माणवक इति वत् द्रोणो व्रीहिरित्यपि लक्षणया साधु, शाब्दबोधकृतवैलक्षण्यानादरेणापि तत्र तत्र वार्तिकप्रवृत्तेर्दर्शनादिति नव्याः ॥

प्रवृत्तिनिमित्तं मुख्यं तदाश्रयश्चेति द्वावेव प्रातिपदिकार्थशब्देनात्र विवक्षितावत्यन्तरङ्गत्वात् । अतः परिमाणग्रहणं लक्ष्यार्थोपलक्षणमिति कैयटाशयमन्ये ॥

अपरे तु **प्रातिपदिकग्रहणं किमर्थ**मित्यस्य ज्ञापकात् सिद्धिरित्याशयः ॥ तदजानान एकदेश्याह—**उच्चैरित्यादि** । एकदेश्युक्तित्वादेव **तिङ्समानाधिकरणे प्रथमे**ति वार्तिकेन तद्भाष्येणैतत्सूत्रस्थेनाव्ययादाबिति सूत्रस्थेन ज्ञापकाद**व्ययेभ्यः सर्वा विभक्तय** इत्यादि भाष्येण च न विरोधः । तस्मात्प्रातिपदिकग्रहणस्य फलान्तरं न कल्प्यमित्येव भाष्यतात्पर्यम् । एवं प्रत्याख्यातप्रायं प्रातिपदिकग्रहणम् ॥ ज्ञापकात्सर्वविभक्त्युत्पत्तौ प्रथमाया अपि सत्त्वेन च तत्प्रयुक्तकार्यसिद्धिः । **तिङ्समानाधिकरणे प्रथमै**वेति च नियमान्न वार्तिकमतेऽपि दोषः ॥ **अथ लिङ्गे**त्यादे**र्वृक्षः कुण्ड**मितीत्यन्तस्य **इत्यन्ये ब्रुवत** इति मतेन कैयटोक्त एवार्थः । एतद्रीत्यैव च द्रोणादिशब्दे न सिध्यति । ते हि द्रोणत्वादिप्रवृत्तिनिमित्तका अपि द्रव्यनिष्ठलिङ्गमिव परिमाणत्वमपि बोधयन्तीत्यधिकार्था अतः परिमाणग्रहणम् । न च तेषां तन्निष्ठपरिमाणत्वबोधकत्वे प्रमाणाभावः । सूत्रभाष्यप्रमाण्येनानुभवादिना च तदङ्गीकारात् । तच्चोन्मानादीनामप्युपलक्षणम् । तद्ध्वनयन्नुदाहरति—**द्रोणः खारी आढकमिति** । अत्र कैयटव्याख्याने नव्यव्याख्याने च भाष्ये ऽन्वयिव्रीह्यादिपदानुपादानेन न्यूनता । नव्यव्याख्याने द्रोणो व्रीहिमानयेति प्रयोगापत्तिश्च । आनु[2]मानिकसाधुत्वबोधकवचनकल्पने गौरवं च । प्रातिपदिकार्थलिङ्गसाहचर्येण परिमाणस्यापि प्रातिपदिकार्थत्वौचि[3]त्यं च । अतएव द्वन्द्वो[4]पपत्तिः । कैयटव्याख्याने यदा यो नियतोपस्थितिक इत्याश्रित्य तदकरणापत्तिश्च । जातिस्तदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणेन मेयपरत्वेपि सिद्धिश्च । किं च—**यत्रैतानि समुदितानि भवन्ति तत्रैव स्या**दित्यनुपदवक्ष्यमाणभाष्यविरो[5]धः । तस्य हि **यत्र** स्वादिविध्युद्देश्ये **एतानि** समुदितानि वाच्यत्वेन **भवन्ति तत्रैव स्या**दित्यर्थोऽक्षरस्वारस्येन लभ्यते । पदस्यैव लक्षणेति सिद्धान्ते द्रोणो व्रीहिरित्यस्य कैयटरीत्यानुदाहरणत्वा[6]च्च । न च द्रोणादिशब्दानामियत्ताविशेषावच्छिन्नपलादिपरिमितव्रीह्यादिपरिच्छेदकद्रोणत्ववदादिबोधजनकत्वात्परिच्छेदकत्वस्यापि प्रातिपदिकत एव लाभात्तत्र प्रथमाविधानवैयर्थ्यमिति वाच्यम् । लाघवेन तत्समानाधिकरणद्रोणत्वादेरखण्डोपाधिरूपस्य जातिरूपस्यैव वा प्रवृत्तिनिमित्तत्वात् ॥ तत्तु भासमानमपि लिङ्गवद्विशेष्यान्वय्येव । द्रोणः परिमाणमिति तु द्रोणादिशब्दानामनेकार्थत्वान्निर्णयाय, द्वौ ब्राह्मणावितिवद्देति वदन्ति ॥

## ( वचनपदप्रयोजनाधिकरणम् )

### ( आक्षेपभाष्यम् )

**अथ वचनग्रहणं किमर्थम् ? ॥**

**( प्रदीपः ) अथ वचनग्रहणमिति** । अर्थे कार्यासंभवात् प्रातिपदिकार्थादिवचनात् प्रथमा भविष्यतीति प्रश्नः ॥

**( उद्योतः )** ननु शब्दे कार्यसिद्ध्यर्थं वचनग्रहणमत आह—**अर्थे इति** ॥ **प्रातिपदिकार्थादिवचनादिति** । सूत्रे तु प्रकृतेरधिकरणत्वविवक्षायां सप्तमीति भावः ॥

### ( समाधानभाष्यम् )

**इह समुदाये वाक्यपरिसमाप्तिर्दृश्यते—गर्गाः शतं दण्ड्यन्तामिति । अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यत्रैतानि सर्वाणि समुदितानि भवन्ति तत्रैव स्यात्—द्रोणः खारी आढकमिति । इह न स्यात्—कुमारी वृक्षः कण्डमिति ॥**

**( प्रदीपः ) इहेति** । प्रथमा विधीयमानत्वात् प्रधानम् । न च गुणभेदे प्रधानस्य भेदो भवतीति यत्रैतत् त्रयं समुदितं तत्रैव प्रथमा स्यात् । वचनग्रहणे तु प्रत्येकं संबध्यमाने वाक्यत्रयं संपद्यत इति न दोषो भवति ॥

**( उद्योतः )** गर्गाः शतमित्यत्र शतस्य प्राधान्यात्तदावृत्तेरनुचितत्वेनास्तु समुदाये वाक्यपरिसमाप्तिः प्रकृते कथमत आह—**प्रथमेति** ॥

### ( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । प्रत्येकमपि वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा—गुणवृद्धिसंज्ञे प्रत्येकं भवतः ॥**

**( प्रदीपः ) प्रत्येकमिति** । प्रथमा सिद्धैव, केवलं नियमाय तदनुवादेन प्रातिपदिकार्थादिभिस्तस्याः संबन्धो विधीयते, स च संबन्धिभेदाद्भिन्नः ॥

अथ वा न्यायद्वयसंभवे लक्ष्यदर्शनवशात् **प्रत्येकं वाक्यपरिसमाप्ति**रिति पक्ष इहाश्रयिष्यते इति भावः ॥

**( उद्योतः ) प्रथमा सिद्धैवेति** । तथा चाविधीयमानत्वात्प्राधान्यासिद्ध्या पूर्वन्यायानवतार इति भावः ॥ **नियमायेति** । कर्मण्येव द्वितीयेत्यादिनियमेऽनियतकर्मादिषु प्राप्तप्रथमावारणाय प्रातिपदिकार्थमात्रेणातत्संबन्धनमित्यर्थः ॥

ननु प्राधान्याप्राधान्ये निर्णेतुमशक्ये, विधीयमानस्योद्देश्यार्थतयोद्देश्येऽपि प्राधान्यस्य वक्तुं शक्यत्वात् । अत एव यागोद्देशेन विधीयमाना अपि व्रीह्यादयो गुणत्वेन व्यवह्रियन्तेऽत आह—**अथवेति** ॥

---

[1] 'तन्मते' । [2] नव्यव्याख्यावसरोक्तानुमानिकेत्यर्थः । ( र. ना. ) [3] ननु विभक्त्यर्थत्वस्यौचित्यमित्यर्थः । ( र. ना. ) [4] सहस्थानामेव सहविवक्षास्वीकारादिति भावः । ( र. ना. ) [5] कैयटमते परिमाणस्य प्रातिपदिकार्थत्वाभावादिति भावः । ( र. ना. ) [6] कैयटमते परिमाणस्य विभक्त्यर्थत्वादिति भावः । ( र. ना. )

( समाधानान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यात्—एको द्वौ बहवः ॥**

( प्रदीपः ) उक्तेष्वपीति । अनभिहिताधिकाराद् बहुषु बहुवचनमित्यादिनास्य प्रकरणस्यैकवाक्यत्वात् परिगणनस्य च प्रत्याख्यातत्वादेकादिभिः शब्दैरेकत्वादीनामभिहितत्वादनभिहिताधिकारस्य प्रत्याख्यान उक्तार्थत्वाद्वा प्रथमा न स्यात् । वचनग्रहणात् तु भवति ॥ वचनग्रहणस्य पूर्वाचार्यप्रसिद्ध्याश्रयेण संख्यावाचित्वात्तेनाभिहिते वचने प्रथमा भवतीत्यर्थः संपद्यते ॥

( उद्द्योतः ) नन्वनभिहिताधिकारेऽपि संख्याविषेस्तन्मध्यपतितत्वाभावोऽत आह—बहुष्विति । इहाधिकृतेनानभिहित इत्यनेन प्रातिपदिकार्थादेः सर्वस्य प्रातिपदिकेनाभिहिततया संख्यैव विशेष्यत इति भावः ॥ ननु परिगणनात्र दोष इत्यत आह—परिगणनस्य चेति ॥ वचनग्रहणादिति । एवं चात्र सूत्रेऽनभिहित इत्यस्यासंबन्ध एवेति भावः ॥

( मात्रग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ मात्रग्रहणं किमर्थम् ? ॥**

( समाधानभाष्यम् )

**एतन्मात्र एव प्रथमा यथा स्यात् । कर्मादिविशिष्टे मा भूत्—कटं करोति ॥**

( प्रदीपः ) कर्मादिविशिष्ट इति । कर्मण्येव द्वितीयेति प्रत्ययनियमे कर्मादीनामनियमात्तेषु प्रथमा स्यात् । मात्रग्रहणात्त्ववधारणार्थाच्च भवति । तेन प्रातिपदिकार्थमात्र एव प्रथमा भवति न त्वधिककर्मादिसद्भावे ॥

( उद्द्योतः ) मात्रग्रहणादिति । मात्रग्रहणं कुर्वतः सूत्रकृतः प्रत्ययनियम एवाभिप्रेतः । न च प्रत्ययनियमेपि प्रातिपदिकार्थं एवेति नियमेन कर्मादिषु तद्वारणसंभवात्तद्वैयर्थ्यमिति वाच्यम् । यथा कर्मण्येव द्वितीयेति नियमेन कर्मत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिर्न तु तत्समानाधिकरणार्थान्तरस्य । अत एव गां दोग्धि पय इत्यादावपादानत्वादिशक्तिबोधेऽपि द्वितीया भवति । एवं च 'कर्मणि सत्येव द्वितीया न तु तदसत्त्वे' इत्येवं नियमाकारः । तथा 'प्रातिपदिकार्थसत्त्वे एव प्रथमा, न तु तदसत्त्वे' इति नियमेन निरर्थकस्यैव व्यावृत्तिर्न तु प्रातिपदिकार्थसत्त्वे एव कर्मत्वादेरिति मात्रग्रहणस्यावश्यकत्वात् । न चैवं संख्याधिक्येऽपि प्रथमा न स्यात् । द्व्येकयोरित्यादिभिरस्यैकवाक्यतया तदाधिक्ये प्रवृत्तेः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । कर्मादिषु द्वितीयाद्या विभक्तयः । ताः कर्मादिविशिष्टे बाधिका भविष्यन्ति ॥**

( प्रदीपः ) द्वितीयाद्या इति । कर्मणि द्वितीयैवेत्यर्थनियम आश्रयिष्यत इति भावः ॥

( उद्द्योतः ) अर्थनियम इति । अत्र पक्षे तु तुल्यन्यायात्संबोधने चेति सूत्रं लिङ्गादिग्रहणमनभिहित इति सूत्रे समर्थाद्वेति पक्षेण वचनग्रहणं च प्रत्याख्यातुमेवेति दिक् ॥

( समाधानबाधकान्तरभाष्यम् )

**अथ वाचार्यप्रवृत्तिर्ज्ञापयति—न कर्मादिविशिष्टे प्रथमा भवतीति । यदयं संबोधने प्रथमां शास्ति ॥**

( प्रदीपः ) अथवेति । प्रत्ययनियमपक्षेपि दोषाभाव इत्यर्थः ॥ यदयमिति । यदि प्रातिपदिकार्थसद्भावमात्राश्रयेणाधिकार्थसद्भावेपि प्रथमा स्यात्तदा संबोधनाधिक्ये प्रथमायाः सिद्धत्वात् पुनर्विधानमनर्थकं स्यात् ॥

( समाधानसाधकज्ञापकनिरसनभाष्यम् )

**नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? । "सामन्त्रितम्" इति वक्ष्यामीति ॥**

( समाधानबाधकज्ञापकान्तरभाष्यम् )

**यत्तर्हि योगविभागं करोति ॥ इतरथा हि "संबोधने आमन्त्रितम्" इत्येव ब्रूयात् ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि—उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यात्—एको द्वौ बहव इति ॥**

( प्रदीपः ) उक्तेष्वपीति । मात्रशब्दः सामान्यवचन आश्रीयते । यथा ब्राह्मणमात्रं पूजयतीति । एवं प्रातिपदिकार्थमात्रेऽभिहितेपि एकत्वादौ प्रथमा भवति ॥ अन्ये त्वाहुः । मीयते अनयेति मात्रा संख्योच्यते । समाहारद्वन्द्वे नपुंसकत्वाच्च ह्रस्वत्वं कृतम् । तेनाभिहितायामपि संख्यायां प्रथमा भवति ॥

( अन्यतरप्रत्याख्यानभाष्यम् )

**वचनग्रहणस्याप्येतत्प्रयोजनमुक्तम् । अन्यतरच्छक्यमवक्तुम् ॥**

( सामानाधिकरण्ये प्रथमासाधनाधिकरणम् )

( १५२१ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमालक्षणे पदसामानाधिकरण्ये उपसंख्यानमधिकत्वात् ॥ * ॥**

( भाष्यम् ) **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमालक्षणे पदसामानाधिकरण्ये उपसंख्यानं कर्तव्यम् । वीरः पुरुष इति ॥ किं पुनः कारणं न सिध्यति ? । अधिकत्वात् ।**

१ तिङ्कृत्तद्धितसमासैरेवाभिधानमित्येवंरूपस्येत्यर्थः । ( र. ना. ) २ अत्र 'शक्तिबोधेऽपि द्वितीया भवति' इति पाठः 'शक्तिबोधेऽपि द्वितीयातो भवति' इति वा पाठो भवेत् । ३ मात्रग्रहणेनाधिककर्मादिसद्भावे प्रथमानिरास इत्यर्थ एवमित्यस्य । ( र. ना. )

व्यतिरिक्तः प्रातिपदिकार्थ इति कृत्वा प्रथमा न प्राप्नोति ॥

कथं व्यतिरिक्तः? । पुरुषे वीरत्वम् ॥

( प्रदीपः ) प्रातिपदिकार्थेति । अवधारणार्थान्मात्रग्रहणात् संबोधने चेति ज्ञापकाद्वाऽऽधिकार्थप्रतीतौ प्रथमया न भाव्यम् । अस्ति च वीरः पुरुष इत्यादौ सामानाधिकरण्याद्विशेषणविशेष्यभावस्याधिकस्य प्रतीतिः । न च समासविधानं प्रथमोत्पत्तिलिङ्गम्, द्वितीयाद्यन्तानामपि वीरं पुरुषमानयेत्यादौ समाससद्भावात् ॥

( उद्द्योतः ) सामाधानाधिकरण्यादिति । तयोः पदयोरेकार्थवृत्तित्वात्तत्प्रवृत्तिनिमित्तयोरेकवृत्तित्वाच्चेत्यर्थः ॥ विशेषणविशेष्यभावस्य विशेषणत्वविशेष्यत्वरूपस्य ॥ भाष्ये—व्यतिरिक्तः प्रातिपदिकार्थ इति । अतिरिक्तार्थेन विशिष्ट इत्यर्थः । [१]मयूरव्यंसकादित्वात्समासः ॥ भाष्ये—वीरत्वमिति । वीरशब्दादर्शआद्यजन्तात्त्वः । वीरवत्त्वं वीरसंबन्धस्तन्निरूपितविशेष्यतेति यावत् । यतो वीरत्वं वीरनिरूपितविशेष्यत्वं पुरुषेऽधिकं भासतेऽतः पुरुषार्थोऽधिकार्थविशिष्ट इत्यर्थः ॥ एवं वीरे पुरुषनिरूपितं विशेषणत्वमधिकमिति बोध्यम् । तथा वीरत्वं पुरुषे इत्युक्त्वा स्ववृत्तिवीरत्वपुरुषत्वयोः साहित्यरूपो वीरपुरुषयोर्विशेषणत्वविशेष्यत्वनियामकः संबन्ध उक्तः सोपि वाक्यार्थ एव ॥ तदेवाभिप्रेत्य कर्मधारयविषये द्वन्द्वापादनं चार्थे द्वन्द्व इति सूत्रे भाष्ये कृतम् । एवं च वीरत्वपुरुषत्वसमूहवान् वीरपुरुष इति बोधः ॥

( १५२२ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ न वा वाक्यार्थत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् ॥ किं कारणम्? । वाक्यार्थत्वात् । यदत्राधिक्यं वाक्यार्थः सः ॥

( प्रदीपः ) न वेति । वीरप्रातिपदिकादनपेक्षितैः[२]शब्दान्तरार्थसंसर्गोपहितविशेषणभावात् स्वार्थमात्रनिष्ठात् प्रथमा विधीयते । एवं पुरुषशब्दादपि । पश्चात्त्वाकाङ्क्षादिवशाद्विशेषणविशेष्यभावावगतिरुपजायमाना बहिरङ्गत्वादन्तरङ्गं संस्कारं पूर्वप्रवृत्तं बाधितुं नोत्सहते ॥

( उद्द्योतः ) अनपेक्षितशब्दान्तरेति । अनपेक्षितशब्दान्तरार्थसंसर्गेणोपहितः प्रापितो विशेषणभावः स्वार्थे येन तस्मादित्यर्थः । पुरुषसंसर्गेण हि वीरार्थस्य तन्निरूपितविशेषणतेति भावः ॥ एवमिति । पुरुषशब्दार्थस्य तदर्थसंसर्गेण तन्निरूपितविशेष्यतेत्यर्थः । मात्रपदेनान्तरङ्गार्थकृतमेवाधिक्यं व्यावर्त्यते न तु बहिरङ्गकृतमिति भावः ॥ भाष्ये—आधिक्यमिति । स्वार्थे ष्यञ् ॥ वाक्यार्थः वाक्यशक्यः ॥ विषयतानामपि शक्यत्वं मञ्जूषायामुपपादितम् ॥

( समाधानाय न्यासान्तरम् )

अथ वा "अभिहिते प्रथमा" इत्येतल्लक्षणं करिष्यते ॥

( प्रदीपः ) अभिहित इति । तिङ्कृत्तद्धितसमासैरभिहिते कर्त्रादौ प्रथमेत्यर्थः । ततश्च वीरः पुरुष इत्यत्रार्थाधिक्येऽप्यभिहितत्वमात्राश्रया प्रथमा भविष्यति ॥

( उद्द्योतः ) ननु विभक्त्यन्तरान्वितेऽपि सुन्दरं कटमित्यादौ प्रथमा स्यादत आह—तिङ्कृदिति । अभिहिते इत्यत्र [३]चार्थनियमं एवाश्रीयत इति उच्चैरित्यादौ न दोषः ॥

( १५२३ न्यासान्तरदूषणवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अभिहितलक्षणायामनभिहिते प्रथमाविधिः ॥ * ॥

( भाष्यम् ) अभिहितलक्षणायामनभिहिते प्रथमा विधेया । वृक्षः प्लक्ष इति ॥

( दूषणपरिहारभाष्यम् )

उक्तं वा * । किमुक्तम्? । अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते । वृक्षः प्लक्षः 'अस्ति' इति गम्यत इति ॥

( १५२४ दूषणान्तरवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अभिहितानभिहिते प्रथमाभावः ॥ * ॥

( भाष्यम् ) अभिहितानभिहिते प्रथमा प्राप्नोति । क्व? । प्रासादे आस्ते शयन आस्त इति । सदिप्रत्ययेनाभिहितमधिकरणमिति कृत्वा प्रथमा प्राप्नोति ॥

( प्रदीपः ) अतिव्याप्तिमुद्भावयितुमाह—अभिहितानभिहित इति । प्रासाद आस्त इति । [६]सदिक्रियासिक्रियाद्वयसाधनाधिकरणशक्तिद्वयसद्भावादेकस्याः शक्तेरभिहितत्वात्तदाश्रया प्रथमा प्राप्नोतीत्यर्थः ॥

( उद्द्योतः ) प्रथमा प्राप्नोतीति । परत्वादितिभावः । न च शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यत इति न्यायेनायं दोषो वारयितुं शक्य इति वाच्यम् । क्रिययोरत्र गुणप्रधानभावाभावादित्याहुः ॥

( दूषणपरिहाराय न्यासान्तरम् )

एवं तर्हि "तिङ्समानाधिकरणे प्रथमा" इत्येतल्लक्षणं करिष्यते ॥

( प्रदीपः ) एवं तर्हीति । यथा देवदत्तः पचतीति । प्रासादे आस्त इत्यादौ तु वैयधिकरण्यात्प्रथमाया अभावः ॥

( उद्द्योतः ) भाष्ये—तिङ्समानाधिकरण इति । न चोच्चैरित्यादौ प्रथमानापत्तिः, तिङ्समानाधिकरणे प्रथमैवेत्यर्थनियममात्राश्रयणेनादोषात् ॥

( १५२५ न्यासान्तरदूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ तिङ्समानाधिकरण इति चेत्तिङोऽप्रयोगे प्रथमाविधिः ॥ * ॥

( भाष्यम् ) तिङ्समानाधिकरण इति चेत्तिङोऽप्रयोगे प्रथमा विधेया । वृक्षः प्लक्षः ॥

---

१ यत इति शेष आदौ । (र. ना.) २ व्यतिरिक्तपदे इति शेषः । (र. ना.) ३ अनपेक्षितत्वं संसर्गविशेषणम् । (र. ना.) ४ अभिहिते प्रथमैवेत्याकारकः । (र. ना.) ५ प्रथमायां विधीयमानायामिति शेषः । अभिहितमित्यर्थः ... निमित्तं यस्यां तस्यामित्यर्थः । (र. ना.) ६ लट्पर इत्यर्थः । (र. ना.) ७ निरुक्तक्रियाद्वयस्य साधनीभूतं यदधिकरणशक्तिद्वयं तत्सद्भावादित्यर्थः । (र. ना.)

(प्रदीपः) तिङोऽप्रयोग इति । न हि तिङन्तपदप्रयोगमन्तरेण तत्सामानाधिकरण्यसद्भावः ॥

(दूषणपरिहारभाष्यम्)

**उक्तं पूर्वेण * । किमुक्तम्? । अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते । वृक्षः प्लक्षः 'अस्ति' इति गम्यत इति ॥**

(प्रदीपः) उक्तं पूर्वेणेति । आक्षिप्तक्रियापदापेक्षं सामानाधिकरण्यमस्ति ॥

(उद्द्योतः) उक्तं पूर्वेणेति । पूर्वग्रन्थेनेत्यर्थः[१] । पूर्वेणाचार्येणेति कश्चित् ॥ अनेनानभिहितसूत्रोक्तं विप्रतिषेधाद्धेति वार्तिकं प्रौढ्येति सूचितम् ॥

(१५२६ तिङ्साधनाधिकरण आक्षेपवार्तिकम् ॥ ६ ॥)

**॥ * ॥ शतृशानचोश्च निमित्तभावात्तिङोऽभावस्तयोरपवादत्वात् ॥ * ॥**

**(भाष्यम्) शतृशानचोश्च निमित्तभावात्तिङोऽभावः । क्व? । पचत्योदनं देवदत्त इति ॥ किं कारणम्? । तयोरपवादत्वात् । शतृशानचौ तिङपवादौ । तावत्र बाधकौ । न चापवादविषये उत्सर्गोऽभिनिविशते । 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' । 'प्रकल्प्य चापवादविषयमुत्सर्गोऽभिनिविशते' । न तावदत्र कदाचित्तिङादेशो भवति । अपवादौ तावच्छतृशानचौ प्रतीक्षते ॥**

(प्रदीपः) शतृशानचोश्चेति । देवदत्त पच् ल् इति स्थिते यावत्तिङ उत्पत्तिर्नास्ति तावत्तिङ्सामानाधिकरण्याभावात् 'प्रथमैव' इति नियमाभावाद्देवदत्तशब्दादविशेषविहिताः सर्वे स्वादयः स्थिता इति लटः स्थाने द्वितीयाद्यन्तपदसामानाधिकरण्ये विधीयमानौ शतृशानचौ प्राप्नुतो न तु तिङः । तेषां[२] तु लडादिरवकाशस्तद्विषय एव च प्रथमाया अपि । 'कर्मणि द्वितीयैव' इत्यर्थनियमे द्वितीयादीनामत्र सद्भाव इति मन्यते । निमित्तमत्र शतृशानचोरप्रथमासामानाधिकरण्यम् ॥ **पूर्वं ह्यपवादा इति** । इह दर्शनद्वयम् । सर्वविशेषस्वीकारेण वोत्सर्गस्य प्रवृत्तिः, कतिपयविशेषावगाहनेन वा । तत्र पूर्वस्मिन् दर्शने—उत्सर्गस्य विषयविभागाय पूर्वमपवादः प्रवर्तते, पश्चात्तद्विमुक्ते विषय उत्सर्गः । द्वितीये तु दर्शने—अपवादविषयं प्रकल्प्योत्सर्गः प्रवर्तते ॥

(उद्द्योतः) तिङ्समानाधिकरणे प्रथमाया अप्रथमासमानाधिकरणे शतृशानचोर्विधानस्य च वाक्यसंस्कारे एव प्रवृत्तिरित्याह—**देवदत्तेति** ॥ ननु एकवाक्यतया विधानमिति पक्षे तिङ्सामानाधिकरण्याभावात् प्रथमाया इव कर्माद्यभावाद् द्वितीयादीनामप्यभावेन द्वितीयादिसामानाधिकरण्ये विधीयमानशत्रादेरप्राप्तौ तिङ्क्षु जातेषु प्रथमा भविष्यतीत्यत आह—**यावत्तिङ इति** । भिन्नवाक्यतयाऽविशेषेणोत्पन्नानामर्थनियम इति भावः ॥ **सर्वे स्वादयः स्थिता इति** । विनिगमनाविरहेण सर्वेऽपि समूहालम्बनबुद्धिविषयतया स्थिता इत्यर्थः ॥ **द्वितीयाद्यन्तेति** । **अप्रथमेति** पर्युदासेन प्रथमाभिन्नविभक्त्यन्तसमानाधिकरणे इत्यर्थेन शत्रादेर्विधानमिति भावः ॥ नन्वेवमपि कर्मण्येव द्वितीयेत्यादिनियमात्कथं द्वितीयादीनां स्थितिरत आह—**कर्मणीति** । वार्तिककारस्यार्थनियम एव सम्मत इति भावः ॥ नन्वपवादेनोत्सर्गस्य बाधाविशेषात्पक्षद्वयोपन्यासः किमर्थोऽत आह—**इहेति** । उत्सर्गशास्त्रप्रवृत्तिबाधप्रकारविषयमिति भावः । **द्वयमिति** । लक्ष्यैकचक्षुष्कदर्शनं लक्ष्यैकचक्षुष्कदर्शनं चेत्यर्थः ॥ तदेवाह—**सर्वविषयस्वीकारेणेति** । सत्येवं मन्यते शास्त्रेण सर्वत्र प्राप्तस्य विषयविशेषेऽपवादेन निवृत्तिरिति ॥ **कतिपयेति** । लक्ष्यैकचक्षुष्को हि लक्ष्यदर्शनात्प्रागेवोत्सर्गस्यापवादविषयातिरिक्तं विषयं निर्णयति ॥ **विषयविभागायेति** । किंविषये निश्चिता प्रवृत्तिः किंविषये बाधकबाध्येति विषयविभागायेत्यर्थः ॥ **पूर्वं ह्यपवादा इति** । अपवादशास्त्राणीत्यर्थः । **अभिनिविशन्त** इत्यस्य बुद्धिविषया भवन्तीत्यर्थः । ततस्तद्विषयत्वाभावेन निर्णीते विषये उत्सर्गो बुद्धिविषयः । सन् लक्ष्यं संस्करोतीति भावः । द्वितीये त्वपवादशास्त्रविषयं स्वयमेव त्यक्त्वोत्सर्गशास्त्रेण तद्विषयभिन्नं लक्ष्यं संस्करोति । शास्त्रप्रक्रियाज्ञानपूर्वकप्रयोगे एव धर्मं इत्यत्रादेव ज्ञायते इति बोध्यम् ॥ भाष्ये—**प्रतीक्षत इति** । अपवादविषयत्वं ज्ञात्वा तत्र तिङ्बुद्धिर्निवर्त्तत इत्यर्थः ॥

(समाधानभाष्यम्)

**पाक्षिक एष दोषः । कतरस्मिन्पक्षे, शतृशानचोर्द्वैतं भवति—अप्रथमा वा विधिनाश्रीयते प्रथमा वा प्रतिषेधेनेति? ॥ विभक्तिनियमे चापि द्वैतं भवति—विभक्तिनियमो वा स्यादर्थनियमो वेति ॥ तद्यदा तावदर्थनियमः अप्रथमा च विधिनाश्रीयते,[६] तदा एष दोषो भवति ॥ यदा हि विभक्तिनियमः, तदा यद्येवमप्रथमा विधिनाश्रीयते, अथापि प्रथमा प्रतिषेधेन, तदा न दोषो भवति ॥ प्रातिपदिकार्थ० ॥ ४६ ॥**

(प्रदीपः) एवं पर्युदासार्थनियमपक्षाश्रयेण चोदितं प्रसज्यप्रतिषेधाश्रयेण त्वर्थनियमे[७] पक्षद्वयेऽपि प्रत्ययनियमपक्षाश्रयेण परिहर्तुमाह—**पाक्षिक इति** ॥ **अप्रथमा वा विधिनेति** । अप्रथमेति पर्युदासेन द्वितीयादीनां यदा ग्रहणमित्यर्थः ॥ **प्रथमा वेति** । प्रसज्यप्रतिषेध आश्रीयेतेत्यर्थः ॥ **तद्यदेति** । कर्मणि द्वितीयैवेत्यस्मिन्नियमे द्वितीयादीनामनियमात्प्रातिपदिकार्थमात्रेऽपि भावात्तदाश्रयौ शतृशानचौ प्राप्नुत इति दोषः । प्रसज्यप्रतिषेधे तु प्रथमाया अपि तत्र भावात्तदाश्रयप्रतिषेधः प्रवर्तेत इत्यर्थनियमपक्षेऽपि न दोषः । शतृशानचोरभावात्तिङ्क्षु सत्सु तत्सामानाधिकरण्यात्प्रथमैवेति नियमेन द्वितीयादीनां व्यावर्तनात् ॥ **यदा-**

१ सर्वत्रैव प्रथमाविषये तिङ्प्रयुक्ताभिधानाश्रयणेनेत्यर्थः । (र. ना.) २ निमित्तसत्त्वादित्यर्थः । (र. ना.) ३ 'एतेषाम्' । ४ लक्ष्यदर्शनादिति हेतुपञ्चमी । प्रागेवेत्यस्यापवादशास्त्रपर्यालोचनात् प्रागेवेत्यर्थः । (र. ना.)

५ अपवादशास्त्रविषयभिन्नमित्यर्थः । (र. ना.) ६ 'येत्' । ७ अर्थनियमे इति पूर्वान्वयि । (र. ना.)

**हीति** । कर्मण्येव द्वितीयेत्येवं द्वितीयादीनां कर्मादिषु नियतत्वात्तदभावे तासामत्राभावादनियतायाश्च प्रथमायाः संनिधानात्पर्युदासे प्रसज्यप्रतिषेधे वा नास्ति शतृशानचोरत्र प्रसङ्ग इत्यर्थः ॥ ४६ ॥

**( उद्योतः ) पाक्षिक इति** । पक्षे भव इत्यर्थेऽध्यात्मादित्वाट्ठञ् ॥ **कतरस्मिन्पक्षे** इति भाष्ये स दोष इति शेषः ॥ **विभक्तिनियमे चापीति** । अर्थनियमोऽपि सामान्यरूपेण विभक्तिविषयो नियमो भवत्येव, नियमस्यानेकाश्रितत्वादिति भावः । विभक्तेरर्थान्तरसम्बन्धनिवर्त्तको **विभक्तिनियमः** । अर्थस्य विभक्त्यन्तरसम्बन्धनिवर्त्तकोऽ**र्थनियम** इति भेदः ॥ तत्र पक्षचतुष्टयम्—पर्युदासार्थनियमौ पर्युदासविभक्तिनियमौ, प्रसज्यप्रतिषेधार्थनियमौ, प्रसज्यप्रतिषेधविभक्तिनियमौ चेति । तत्राद्ये एव दोषोद्भावनमिति भावः । **पक्षद्वयेऽपि** पर्युदासप्रसज्यप्रतिषेधरूपपक्षद्वयेपि ॥ **प्रसज्यप्रतिषेधे त्विति** । यदि प्रथमासमानाधिकरणभिन्ने इति पर्युदास आश्रीयते तदाऽपि न दोषः । अन्यसामानाधिकरण्ये प्रथमासामानाधिकरण्यस्यापि सत्त्वेन तत्त्वावच्छिन्नप्रतियोगिताकभेदाभावादित्यपि बोध्यम् । नन्वर्थनियमे शतृशानचोरभावेऽपि सर्वत्र विभक्तिश्रवणापत्तिरत आह—**शतृशानचोरिति** ॥ **अनियतायाश्चेति** ॥ यदा हि **विभक्ती**त्यस्य भाष्यस्य यथास्थितसूत्रन्यासे इत्यर्थः । प्रत्ययनियमस्यैव सूत्रसम्मतत्वात्, तत्र च प्रथमाया विशेषपुरस्कारेणानियतायाः प्रातिपदिकार्थमात्रप्रतिबद्धायाः संनिधानमस्त्येवेति भावः ॥ ननु वार्तिकन्यासेऽयं ग्रन्थः । तन्न्यासे एतन्नियमस्वीकारे प्रथमावाक्येप्येवमेव नियमापत्तौ देवदत्त पच ऌ इत्यवस्थायां विभक्तिसामान्याभावेन पर्युदासपक्षे प्रथमाभिन्नविभक्त्यन्तत्वाभावेन शत्रादेरप्राप्तावपि प्रसज्यप्रतिषेधे प्रथमान्तसामानाधिकरण्याभावेन निषेधाप्रवृत्तौ तौ स्यातामिति चेन्न । वार्तिकमते शत्रादिविधौ प्रसज्यप्रतिषेध एव प्रथमाविधावर्थनियम एवेति न दोषः । सूत्रमते तूभयथापि न क्षतिरिति तात्पर्यात् ॥ ४६ ॥

( अथ षष्ठीप्रकरणम् )

( ३२४ शेषषष्ठीसूत्रम् ॥ २ । ३ । ३ आ. २ सू. )

## ५०८ षष्ठी शेषे ॥ २ । ३ । ५० ॥

( शेषशब्दार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**शेष इत्युच्यते । कः शेषः ? ॥**

**( प्रदीपः ) षष्ठी शेषे ॥ ५० ॥ कः शेष इति** । किमप्रधानं शेषः, उतोपयुक्तादन्यः । पूर्वस्मिन्पक्षे सर्वेषां कारकाणां क्रियार्थत्वाच्छेषत्वमिति तत्रापि षष्ठीप्रसङ्गः । सर्वत्र कर्मादीनां सद्भावादुत्तरोपि शेषार्थो न प्रकल्पत इति प्रश्नः ॥

**( उद्योतः ) षष्ठी शेषे ॥ ५० ॥ किमप्रधानमिति** । शिष्लृ विशेषण इत्यतो घञि शिष असर्वोपयोग इत्यतो वा घञि निष्पन्न इत्यर्थः ॥ **तत्रापि षष्ठीप्रसङ्ग इति** । न चैतस्य कर्मत्वाद्यविवक्षायां चारितार्थ्येन क्रियाकारकभावेनान्वये तत्तद्विधिभिर्बाधात्क षष्ठ्यापत्तिः । अभिहितविषयेऽपि प्रथमया बाधादिति वाच्यम् । ज्ञोऽविदर्थस्य करणे इत्यादिषु शेष इत्यनुवृत्तेस्तद्विषये क्रियाकारकभावेनान्वयेपि परत्वात्षष्ठीप्रसङ्ग इति तदर्थान्न दोषः ॥

( समाधानभाष्यम् )

**कर्मादिभ्यो येऽन्येऽर्थाः स शेषः ॥**

**( प्रदीपः ) कर्मादिभ्य इति** । कर्माद्यनन्तरं शेषशब्द उच्चार्यमाणस्तेभ्योन्यमर्थं प्रतिपादयति ॥ **येऽन्येऽर्था इति** । स्वस्वामिभावादयः संबन्धा इत्यर्थः । तदुक्तम्—

> **संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।**
> **श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ॥**

इति ॥ तत्राश्रुतायां क्रियायां राज्ञः पुरुष इत्यादौ क्रियाकारकसंबन्धपूर्वकोऽन्य एव स्वस्वामिभावादिकः संबन्धः प्रतीयते । मातुः स्मरतीत्यादौ तु श्रूयमाणे क्रियाशब्दे सदपि कर्मत्वमविवक्षित्वाविशेषणभाव एव स्मरणं प्रति मातुः प्रतिपाद्यते—मातृसंबन्धि स्मरणमिति ॥

**( उद्योतः )** शेषशब्दोऽन्यवाची तस्य प्रतियोग्याकाङ्क्षायामुपस्थितकर्मादय एव प्रकरणाद् गृह्यन्त इत्याह—**कर्माद्यनन्तरमीति** ॥ ननु कर्मादिव्यतिरिक्तार्थासंभव इत्यत आह—**स्वस्वामीति** ॥ **क्रियाकारकेति** । स्वत्वहेतुदानादिक्रियाकारकत्वपूर्वक इत्यर्थः । यत एवंविधोऽतः कारकेभ्योऽन्य इत्यर्थः ॥ **विशेषणभाव एव स्मरणं प्रति मातुरिति** । क्रियाकर्मत्वमूलकविशेष्यविशेषणभाव इत्यर्थः । एतेन "क्रियाकारकभाव एव संबन्धत्वेन विवक्षित इत्यन्याय्यं" षष्ठ्यर्थेन सांसर्गिक्येव विषयता । वक्ष्यति च भाष्यकारः—राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्य इति ॥

( आक्षेपभाष्यम् )

**यद्येवं शेषो न प्रकल्पते । न हि कर्मादिभ्यो न्येर्थाः सन्ति ॥ इह तावद्—'राज्ञः पुरुषः' इति राजा कर्ता, पुरुषः संप्रदानम् । 'वृक्षस्य शाखा' इति वृक्षः शाखाया अधिकरणम् । तथा यदेतत्स्वं नाम चतुर्भिरेतत्प्रकारैर्भवति—क्रयणाद्, अपहरणाद्, याच्ञायाः, विनिमयादिति । अत्र च सर्वत्र कर्मादयः सन्ति ॥**

**( प्रदीपः ) अविदिताभिप्रायः पर आह—यद्येवमिति** । क्रियामन्तरेण संबन्धाभावात्सर्वत्र तस्या अवश्यंभावात्तन्निमित्तस्य च कर्मादेरिति भावः ॥ **राजा कर्तेति** । राजा पुरुषाय ददातीत्यर्थसंप्रत्ययात् ॥ **वृक्ष इति** । लोकप्रसिद्ध्यैतदुक्तम् । वैशेषिकप्रक्रियया त्ववयवोऽवयविनोधिकरणम् ॥ **विनिमयादिति** । परिवर्तनादित्यर्थः ॥

**( उद्योतः ) संबन्धाभावादिति** । दानादिना स्वीकरणातिरिक्तसंबन्धाभावादित्यर्थः[2] । सर्वत्र तस्यास्तन्निमित्तस्य च कर्मादे-

---

१ प्रकृत्यादित्वादभेदे तृतीया । ( र. ना. )

२ संबन्धहेत्वभावादित्यर्थः । ( र. ना. )

स्वत्वसंभावादित्यन्वयः ॥ ननु राज्ञः पुरुष इत्यत्र राजा पुरुषस्य किंचिद्ददातीति राजा कर्ता, पुरुषः संप्रदानं भवतु नाम, राज्ञो वस्त्रम्, विप्रस्य गौः, विप्रस्य तिलाः, इत्यादौ तु तदसंभवाच्छेषत्वं भविष्यतीत्यत आह—भाष्ये—एतत्स्वं नामेति । तत्र याच्ञाशब्देन तत्पूर्वकः प्रतिग्रहो लक्ष्यते ॥ अपहरणादिति । यथा युद्धे क्षत्रियादीनाम् ॥ क्रयविनिमययोर्भेदमाह—परिवर्त्तनादिति ॥

( समाधानभाष्यम् )

**एवं तर्हि कर्मादीनामविवक्षा शेषः ॥**

( प्रदीपः ) एवं तर्हीति । क्रियाकारकसंबन्धोपि सर्वत्र वस्तुस्थित्यास्ति तन्निमित्तश्च स्वस्वामिभावादिरपि । तत्र स्वस्वामिभावादिविवक्षायां सन्नपि क्रियाकारकसंबन्धो न विवक्ष्यते ॥

( उद्द्योतः ) न विवक्ष्यत इति । न हि यद्यद्वस्तुस्थित्यास्ति तत्तदभिधातव्यं यदेव विवक्षितं तदेव कार्यकृदिति भावः । वृक्षस्य शाखेत्यादावप्याधाराधेयभावमूलकोऽवयवावयविभाव इति बोध्यम् ॥

( आक्षेपभाष्यम् )

**कथं पुनः सतो नामाविवक्षा स्यात् ? ॥**

( समाधानभाष्यम् )

**सतोप्यविवक्षा भवति । तद्यथा—अलोमिका एडका, अनुदरा कन्येति ॥ असतश्च विवक्षा भवति । तद्यथा—समुद्रः कुण्डिका । विन्ध्यो वर्धितकमिति ॥**

( प्रदीपः ) अलोमिकेति । लोमकार्याकरणात्सतामपि लोम्नामविवक्षा । अनुदरेति । सदप्युदरं महत्त्वाभावप्रतिपादनाय न विवक्ष्यते ॥ असतश्चेति । दृष्टान्तरूपेणेदमुपात्तम्, असतो यथा विवक्षा तथा सतोप्यविवक्षेत्यर्थः । समुद्रः कुण्डिकेति । कुण्डिकायां बहुपानीयसंभवप्रतिपादनाय समुद्रत्वमारोप्यते ॥ विन्ध्यो वर्धितकमिति । वर्धितकशब्देन मूले स्थूलमग्रे सूक्ष्मं विशिष्टसंस्थानयुक्तं भक्तमुच्यते । तस्य महत्त्वप्रतिपादनाय विन्ध्यत्वमसदारोप्यते ॥

( उद्द्योतः ) असतो विवक्षायाः प्रकृते न संगतिरत आह—दृष्टान्तेति ॥

( शेषग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनः शेषग्रहणम् ? ॥**

( प्रदीपः ) अर्थनियमपक्षे शेषग्रहणस्य प्रत्याख्यानाय विचारः क्रियते—किमर्थमिति ॥

( १५२७ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ प्रत्ययावधारणाच्छेषवचनम् ॥ * ॥

**( भाष्यम् ) प्रत्ययावधारणाच्छेषग्रहणं कर्तव्यम् । प्रत्यया नियताः, अर्था अनियताः । तत्र षष्ठी प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं षष्ठीनियमार्थम्—शेष एव षष्ठी भवति, नान्यत्रेति ॥**

( उद्द्योतः ) भाष्ये—तत्र षष्ठी प्राप्नोतीति । पर्यायेणेति भावः । परश्चेति नियमेन यौगपद्यासंभवात् ॥

( १५२८ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अर्थावधारणाद्वा ॥ * ॥

**( भाष्यम् ) अथवा अर्था नियताः, प्रत्यया अनियताः, ते शेषेऽपि प्राप्नुवन्ति । तत्र शेषग्रहणं कर्तव्यं शेषनियमार्थम्—शेषे षष्ठ्येव भवति नान्येति ॥**

( शेषग्रहणप्रत्याख्यानभाष्यम् )

**अर्थनियमे शेषग्रहणं शक्यमकर्तुम् । कथम् ? । अर्था नियताः, प्रत्यया अनियताः । ततो वक्ष्यामि—षष्ठी भवतीति । तन्नियमार्थं भविष्यति—यत्र षष्ठी चान्या च प्राप्नोति तत्र षष्ठ्येव भवतीति ॥**

( प्रदीपः ) तन्नियमार्थमिति । यथा समे देशे यजेतेति समविषमयोः पर्यायेण प्रसङ्गे विषमस्थाने समविधिर्विषमनिवारणफलत्वान्नियमः संपद्यते । तथा षष्ठीविधिर्द्वितीयादिनिवारणफलः ॥

( उद्द्योतः ) ननु स्वादिवाक्येन षष्ठ्यामपि पर्यायेण प्राप्तायां पुनः षष्ठीविधानमप्राप्तांशे विध्यर्थं न तु नियमार्थमित्यत आह—समे इति । एवं च मीमांसकमतसिद्धोऽयं नियम इति भावः । व्याकरणे तु परिसंख्यापि नियमपदेनोच्यते । अर्थनियमेऽपि उक्तार्थं शेषग्रहणमावश्यकमिति बोध्यम् ॥ शक्यमकर्तुमित्यस्यात्राकर्तुं शक्यमित्यर्थः ॥

( १५२९ आक्षेपवार्तिकप्रथमखण्डम् ॥ ३ ॥ )

## ॥ * ॥ षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधः ॥ * ॥

**( भाष्यम् ) षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधो वक्तव्यः । राज्ञः पुरुष इत्यत्र राजा विशेषणम्, पुरुषो विशेष्यः । तत्र प्रातिपदिकार्थो व्यतिरिक्त इति कृत्वा प्रथमा न प्राप्नोति । तत्र षष्ठी स्यात् तस्याः प्रतिषेधो वक्तव्यः ॥**

( प्रदीपः ) षष्ठीशेष इति चेदिति । अस्मिन् सूत्रन्यासे दोषः, संबन्धस्य द्विष्ठत्वात् प्रधानादपि षष्ठीप्रसङ्गः । व्याकरणान्तरे तु गुणे षष्ठीतिवचनान्नास्ति दोषः ॥

( उद्द्योतः ) ननु शेषग्रहणाभावेऽपि दोषसत्त्वेन न्यासान्तरस्य चादर्शनेन 'इति चेद्' इत्यनुपपन्नमत आह—व्याकरणान्तरे त्विति । भाष्ये—व्यतिरिक्त इत्यस्य प्रातिपदिकार्थातिरिक्तया राजनिरूपितविशेष्यतया सहित इत्यर्थः । यत्तु षष्ठ्यर्थसंबन्धस्यांशेनोभयनिष्ठतया प्रतीतेस्तेन प्रातिपदिकार्थातिरिक्तेन सहित इत्यर्थ इति ॥ तन्न । पुरुषे स्वामिकृतं स्वत्वमपि षष्ठ्याभिहितमिति

---

१ पुरुषायेति पाठस्तूचितो भाति । ( र. ना. ) २ अवधारणं नियमः । ( र. ना. )

३ शेषत्वेन विवक्षायामेव कर्मकरणादौ षष्ठी यथा स्यादित्यर्थमिति भावः । ( र. ना. )

पुरुषशब्दात् षष्ठी नेत्यग्रिमभाष्येण तस्य षष्ठ्यर्थत्वोक्त्या वाक्यार्थत्वकथनानुपपत्तेः॥ भाष्ये—षष्ठी स्यादिति। कारकप्रातिपदिकार्थव्यतिरिक्तत्वात् षष्ठ्येव स्यादित्यर्थः॥

( १५३० आक्षेपवार्तिकद्वितीयखण्डम्॥ ४॥ )

॥ * ॥ तत्र प्रथमाविधिः॥ * ॥

**( भाष्यम् ) तत्र षष्ठीं प्रतिषिध्य प्रथमा विधेया। राज्ञः पुरुषः॥**

( प्रदीपः ) प्रतिषिद्धायामपि षष्ठ्यां प्रातिपदिकार्थमात्रे विधीयमानायाः प्रथमायाः संबन्धस्याधिकस्य भावादप्रसङ्ग इति मत्वाह—तत्र प्रथमेति॥

( उद्द्योतः ) संबन्धस्य विशेष्यविशेषणभावस्य॥

( आक्षेपपरिहारभाष्यम् )

**उक्तं पूर्वेण *। किमुक्तम्?। '*न वा वाक्यार्थत्वाद्' इति। यदत्राधिक्यं वाक्यार्थः सः॥**

( प्रदीपः ) यदत्रेति। राज्ञ इत्येतत्पदसंनिधाने पुरुषस्य संबन्धित्वं प्रतीयते नान्यथा। पुरुषप्रातिपदिकं तु स्वार्थमात्रे वर्तत इति प्रथमा सिध्यतीत्यर्थः॥

( उद्द्योतः ) भाष्ये—यदत्राधिक्यमिति। उक्तरूपम्। पदान्तरसंनिधाने प्रतीयमानत्वाच्च वाक्यार्थत्वम्॥ संबन्धित्वम् उक्त-संबन्धकृतं राजनिरूपितं विशेष्यत्वम्॥

( आक्षेपभाष्यम् )

**कुतो नु खल्वेतत्—'पुरुषे यदाधिक्यं स वाक्यार्थ इति, न पुना राजनि यदाधिक्यं स वाक्यार्थः स्यात्'॥**

( प्रदीपः ) कुतो न्विति। पुरुषपदसंनिधान एव राज्ञः संबन्धित्वावगमो नान्यथेति ततोपि प्रथमाप्रसङ्गः॥

( उद्द्योतः ) राज्ञः संबन्धित्वावगमः संबन्धकृतो विशेषणत्वावगमः। एवञ्च विशेषणत्वस्य वाक्यार्थत्वे तन्नियामकसंबन्धोऽपि वाक्यार्थ एवास्त्विति ततोऽपि प्रथमाप्रसङ्गः इत्यर्थः॥

( समाधानभाष्यम् )

**अन्तरेणापि पुरुषशब्दस्य प्रयोगं राजनि सोर्थो गम्यते, न पुनरन्तरेण राजशब्दस्य प्रयोगं पुरुषे सोर्थो गम्यते॥ अस्ति कारणं येनैतदेवं भवति॥ किं कारणम्?। राजशब्दाद्धि भवान् षष्ठीमुच्चारयति। अङ्ग हि भवान् पुरुषशब्दादप्युच्चारयतु गंस्यते सोर्थः॥**

( प्रदीपः ) अन्तरेणेति। राज्ञ इति केवलेपि पद उच्चार्यमाणे संबन्धित्वमनियतप्रतियोगि राज्ञो गम्यते। यस्माद्राजा परोपकारित्वेन विवक्षितो न स्वनिष्ठत्वेन॥

( उद्द्योतः ) संबन्धित्वम्। विशेषणत्वम्॥ अनियतप्रतियोगीति। अनियतविशेष्यनिरूपितमित्यर्थः। तदाह—राजा परोपकारित्वेनेति। विशेषणत्वेनेत्यर्थः॥ न स्वनिष्ठत्वेन न स्वार्थनिरूपितविशेष्यतया॥ भाष्ये—पुरुषे सोऽर्थ इति। किंचिदन्यपदार्थनिरूपितं विशेष्यत्वम्॥

( आक्षेपभाष्यम् )

**ननु च नैतेनैवं भवितव्यम्। न हि शब्दकृतेन नामार्थेन भवितव्यम्। अर्थकृतेन नाम शब्देन भवितव्यम्॥**

( प्रदीपः ) ननु च नैतेनेति। नहि शब्दस्य भावाभावाभ्यामर्थस्य भावाभावौ क्रियेते। किं तर्ह्यर्थस्य प्रतिपिपादयिषया विषयीकरणाकरणाभ्यां शब्दस्योच्चारणानुच्चारणलक्षणौ भावाभावावित्यर्थः। तत्र परोपकारित्वेन राज्ञो विवक्षितत्वात् षष्ठी भवति, पुरुषस्य तूपकार्यतया स्वनिष्ठत्वेन विवक्षितत्वात् प्रथमा। तदुक्तं हरिणा—

द्विष्ठोप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानश्च प्रधानेप्युपयुज्यते॥ इति॥

( उद्द्योतः ) शब्दार्थयोर्नित्यत्वात् शब्दकृतमर्थकृतमित्यनुपपन्नमत आह—किं तर्ह्यर्थस्येति। अर्थस्य शब्दोच्चारणप्रयोजकत्वाच्छब्देऽर्थकृतत्वमिवार्थे शब्दकृतत्वं नेति भावः॥ प्रतिपिपादयिषयेत्यस्य विषयीकरणाकरणाभ्यामित्यनेनान्वयः। तदाह—तत्रेति॥ परोपकारित्वेन विशेषणत्वेन॥ षष्ठी भवतीति। तस्य विशेषणतानियामकसंबन्धबोधिका तद्गतविशेषणताबोधिका च षष्ठी भवतीत्यर्थः॥ पुरुषस्य तूपकार्यतयेति॥ अविवक्षितत्वेनेति शेषः। राजादिपदासन्निधानेन तस्योपकार्यतयान्यनिरूपितविशेष्यतयाऽविवक्षितत्वेन स्वनिष्ठतया स्वार्थमात्रनिष्ठविशेष्यतया विवक्षितत्वादन्तरङ्गत्वात्प्रथमेत्यर्थः॥

द्विष्ठ इति। असौ संबन्धः॥ परार्थत्वात् परं विशेषणत्वमर्थः प्रयोजनं यस्य तत्त्वाद्विशेषणतानियामकत्वादित्यर्थः। भेदे सति विशेषणतया विवक्षितस्य संबन्धं विना विशेषणत्वासंभवेन तदाकाङ्क्षितत्वात्तत्र संबन्धो व्यतिरिच्यते उद्भूततया प्रतीयत इति तत्र षष्ठीत्यर्थः। विशेष्यस्य तु स्वनिष्ठत्वादेव न विशेष्यतानियामकसंबन्धाकाङ्क्षेति भावः॥ तत्र विशेषणशब्देन षष्ठ्यादिना प्रतीयमानः॥ प्रधानेऽप्युपयुज्यते। तस्य द्विष्ठत्वस्वभावत्वाद्राजादिनिरूपितविशेष्यतायाः राजादिपदसंनिधाने प्रतीयमानाया उपकारको भवतीत्यर्थः॥

( समाधानभाष्यम् )

**तदेतदेवं दृश्यताम्—अर्थरूपमेवैतदेवंजातीयकं येनान्तरेणापि पुरुषशब्दस्य प्रयोगं राजनि सोर्थो गम्यते॥ किं पुनस्तत्?। स्वामित्वम्॥ किंकृतं पुनस्तत्?। स्वकृतम्॥ तद्यथा—प्रातिपदिकार्थानां क्रियाकृता विशेषा उपजायन्ते तत्कृताश्चाख्याः प्रादुर्भवन्ति—कर्म करणमपादानं संप्रदानमधिक-**

१ प्रथमाया इत्यस्याप्रसङ्ग इत्यनेन संबन्धः। ( र. ना. )
२ एतस्य वाक्यस्य व्याख्यानमेवाग्रे। ( र. ना. )
३ पूर्वमिति शेषः। ( र. ना. )
४ 'तत्र विशेषणे शब्देन' इत्येवं पाठसत्त्वे तु नैव कल्पनाधिक्यम्।

रणम्—इति । ताश्च पुनर्विभक्तीनामुत्पत्तौ कदाचिन्निमित्तत्वेनोपादीयन्ते कदाचिन्न ॥

( प्रदीपः ) स्वामित्वमिति । स्वस्वामिसंबन्ध इत्यर्थः । समासकृत्तद्धितेषु संबन्धाभिधानमिति वचनात् ॥ स्वकृतमिति । ततश्चानियतं स्वमपेक्ष्य प्रथममेव संबन्धाश्रया षष्ठी उत्पाद्यते । पुरुषशब्दसन्निधौ तु स्वविशेषप्रतिपत्तिरित्यर्थः॥ तद्यथेति । प्रातिपदिकार्थानामित्यर्थः । क्वचित् तु प्रातिपदिकार्थानामित्येव पाठः ॥ क्रियाकृता इति । क्रिया[1]फलापेक्षया शक्तय आश्रीयन्त इत्यर्थः ॥ तत्कृताश्चेति । शक्तिनिमित्ताः संज्ञा इत्यर्थः ॥ कदाचिदिति । यदा क्रियां प्रति व्यापारावेशविवक्षा भवति दात्रेण लुनातीति ॥ कदाचिन्नेति । यदा योग्यतामात्रविवक्षा भवति दात्रं लवने करणमिति ॥

( उद्द्योतः ) [[2]राजनि सोर्थ इति । विशेषणत्वं संबन्धश्चेत्यर्थः ।] किं पुनस्तदिति भाष्ये—सोऽर्थ इत्यत्र तच्छब्दार्थः कः किं विशेषणत्वमेवातोन्योपीति प्रश्नः ॥ उत्तरम्—स्वामित्वमिति । स्वामित्वं तत्कृतं विशेषणत्वं चेत्यर्थः ॥ स्वस्वामिसंबन्ध इति । तन्मूलकं विशेषणत्वं चेत्यपि बोध्यम् । स्वस्वामिनोः संबन्धः स्वत्वस्वामित्वोभयरूपः सचैकदेशेन स्वनिष्ठः स्वामिनिष्ठश्चेति बोध्यम् ॥ समासेति । स्वशब्दादैश्वर्ये आमिनच्चि स्वामिन्शब्द इति भावः ॥ भाष्ये—किं कृतमिति । स्वत्ववद्वाचकपदानुपादानादिति भावः ॥ उत्तरयति—स्वकृतमिति । सा[3]मान्यतः स्वमात्रनिरूपितमित्यर्थः ॥ नन्वेवं पुरुषशब्दोपादानं व्यर्थमत आह—पुरुषेति । ननु स्वामित्वप्रतिपिपादयिषायां राजा स्वामीति प्रयुज्यतां किमिति षष्ठीप्रयोगः? प्रयोगाप्रयोगयोर्विषयविभागश्च कः । सामान्यनिरूपितं स्वामित्वं च कथम्? इत्याशङ्क्य दृष्टान्तेनोपपादयति—भाष्ये—तद्यथेति ॥ क्रियाकृताः क्रियासामान्यनिरूपिताः ॥ उपजायन्ते विवक्ष्यन्ते । तदेवाह—आश्रीयन्त इति ॥ यदेत्यादि । उभयत्रापि भवतीत्यस्य तदेति शेषः ॥

( आक्षेपभाष्यम् )

**कदा विभक्तीनामुत्पत्तौ निमित्त[4]त्वेनोपादीयन्ते ?।**

( समाधानभाष्यम् )

**यदा व्यभिचरन्ति प्रातिपदिकार्थम् । यदा हि न व्यभिचरन्ति, आख्याभूता एव तदा भवन्ति—कर्म करणमपादानं संप्रदानमधिकरणमिति ॥**

( प्रदीपः ) व्यभिचरन्तीति । यदा प्रातिपदिकार्थस्य क्रियावेशविवक्षायां शक्तिलक्षणार्थातिरेको भवति तदा प्रातिपदिकार्थतां शक्तयो न प्रतिपद्यन्त इत्यर्थः ॥ यदा हीति । अपरोपकारित्वेन स्वनिष्ठतया यदा प्रातिपदिकार्थो विवक्षित इत्यर्थः । तदेवं दात्रेणेति यथा क्रियापेक्षया भवति तथा राज्ञ इति स्वापेक्षया । यथा च स्वनिष्ठत्वाश्रयेण दात्रं करणमिति भवति तथा राजा स्वामीत्युक्तं भवति ॥ आख्याभूता इति ॥ ताः शक्तयः संज्ञामेव प्राप्ताः न तु विभक्त्युत्पत्तिं प्रयोजयन्तीत्यर्थः । तदुक्तम्—

**स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते ।**
**विभक्त्यादिभिरेवासावुपकारः प्रतीयते ॥ इति ॥**

( उद्द्योतः ) शक्तिलक्षणार्थातिरेक इति । अयं भावः सर्वे पदार्थाः सर्वशक्तिमन्तः । शक्तिभिश्च धर्मिणां भेदाभेदौ । तत्र भेदविवक्षायां विभक्तयः । अभेदविवक्षायां तु करणादिशब्दैरभिधानम् । भेदविवक्षा च क्रियासामान्ये क्रियाविशेषे वा विशेषणत्वेनान्वयविवक्षायामेव भवतीति ॥ इयमेव च क्रियां प्रति व्यापारावेशविवक्षा, यै[5]स्यां विशेषणत्वाविवक्षया प्रातिपदिकार्थता वि[6]भक्तिसमभिव्याहारं विनापि तदर्थता ॥ अपरोपकारित्वेनेति । इतराविशेषणत्वेनेत्यर्थः ॥ स्वनिष्ठतया स्वार्थनिरूपितविशेष्यतया ॥ दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयति—तदेवमिति । एवं च स्वप्र[7]कृत्यर्थस्य विशेषणभावेऽपि विभक्त्यर्थ इति बोध्यम् ॥ संज्ञामेवेति । संज्ञा व्यवहारः करणत्वादिव्यवहारस्तमेवेत्यर्थः ॥ विभक्त्यभावेन शास्त्रीयसंज्ञाया अनुपयोगात् ॥ स धर्मः शक्तिरूपः ॥ नाभिधीयते सामान्यतो विशेषतो वा पृथक् नाभिधीयते । फलाश्रयत्वादिनैव ततो बोधादिति भावः ॥ उपकारः । स्वप्रकृत्यर्थस्येतरविशेषणतानियामकः । कर्मादिपदेन संबन्धपदेन चोक्तस्य न शक्तिरूपता, नापि संबन्धरूपता । अत्र कर्मादिशब्दैर्नाभिधीयते इत्युक्त्या कृदन्ते सर्वत्र तदनभिधानमिति लभ्यते ॥ नहि कृतकर्मशब्दयोः कश्चिद्विशेष उभयत्रापि कर्मणि प्रत्ययात् । विभक्त्यादिभिरित्यत्रादिशब्द आश्रयवाचीति बोध्यम् ॥

( आक्षेपभाष्यम् )

**यथैव तर्हि राजनि स्वकृतं स्वामित्वं तत्र षष्ठी भवति । एवं पुरुषेऽपि स्वामिकृतं स्वत्वं तत्र षष्ठी प्राप्नोति ॥**

( प्रदीपः ) पुरुषेपीति । संबन्धस्य द्विष्ठत्वाद् द्वाभ्यां षष्ठी प्राप्नोतीत्यर्थः । शक्तिस्तु प्रातिपदिकार्थस्यैव न क्रियास्थेति विशेषः ॥

(उद्द्योतः) उक्तमाशयमजानानो यस्मादधिकमिति सूत्रोक्तरीत्या अधि ब्रह्मदत्ते पञ्चाला इत्यत्रापि पञ्चालशब्दाद् द्वितीयेव प्रकृते पुरुषपदात् षष्ठी[प्राप्नोतीति]शङ्कते—भाष्ये—यथैव तर्हीति ॥ ननु षष्ठ्या उभयत्रापत्तिवद्द्वितीयादीनामप्युभयत्रापत्तिः कुतो न कृतेत्यत आह—शक्तिस्त्विति । संबन्धस्य तु स्वत्वस्वामित्वोभयरूपतयोभयवृत्तित्वमिति भावः ॥ यद्यप्येवं क्रियाकारकभावसंबन्धो द्विष्ठ एव, तथापि कर्मणीत्यादिशास्त्रबलादिह स्वामित्वस्येव तत्र शक्तेरपि तदर्थत्वा[8]न्न दोषः । क्रियावाचकस्याप्रातिपदिकत्वादपि न तदापत्तिरिति बोध्यम् ॥

( समाधानभाष्यम् )

**राजशब्दादुत्पद्यमानया षष्ठ्याभिहितः सोर्थ इति कृत्वा पुरुषशब्दात्षष्ठी न भविष्यति ॥**

---

१ क्रियातत्फलापेक्षया कर्तृकर्मादिशक्तय आश्रीयन्ते इत्यर्थः । ( र. ना. ) २ अयं कोष्ठकान्तर्गतः पाठो यद्यपि सर्वेषु पुस्तकेषु "तदाह–तत्रेति" इत्यतः प्रागेवोपलभ्यते । परंतु तत्र प्रकरणसंदर्भशुद्ध्यभावेन लेखकप्रमादजप्रक्षेपं मत्वा योग्यस्थानेऽस्माभिः स्थापित इति क्षन्तव्यं यथोपलब्धपाठमुद्रणाभिनिवेशशालिभिः पण्डितवरैः । ३ स्वत्वेन रूपेण पुरुषशब्देन स्वस्यानभिधानेऽपीति शेषः । ( र. ना. ) ४ निमित्तत्वेन नोपादीयन्ते इति पाठो यद्यपि क्वचिदुपलभ्यते तथाप्यत्रत्यकैयटानुरोधेन नञ्रहित एव पाठ उपलभ्यमानः साधुः । ( र. ना. ) ५ तस्यामिति पाठः समुपलभ्यमान एव साधुः । तस्यामित्यस्य क्रियायामित्यर्थः । ( र. ना. ) ६ प्रातिपदिकार्थता पदार्थमेव स्फुटयति विभक्तीत्यादिना द्वितीयादिविभक्तीत्यर्थः । ( र. ना. ) ७ विभक्तिप्रकृत्यर्थस्य विभक्त्यर्थनिरूपितविशेषणत्वे विभक्त्यर्थस्य संसर्गतायां तेन संसर्गेण क्रियानिरूपितविशेषणत्वेऽपि वेत्यर्थः । ८ न तु कर्तृत्वकर्मत्वादिशक्तिरूपेणेत्यर्थः । तत इत्यस्य स्वशब्देभ्य इत्यर्थः । (र. ना.) ९ आश्रयशब्देन विभक्तिप्रकृतिः । विभक्त्यन्तप्रकृतिभिरिति फलितार्थः । ( र. ना. ) १० विभक्त्यर्थत्वादित्यर्थः । एवञ्च शक्तेरक्रियास्थत्वान्न दोष इति भावः । ( र. ना. )

**( प्रदीपः ) राजशब्दादिति** गुणप्रधानभावेनार्थद्वयमवस्थितमित्युक्तमेतत् । तत्र संबन्धो गुणे पदं न्यस्य द्विष्ठत्वात् प्रधानमपि संस्पृशति । गुणश्च प्रधानोपकाराय प्रवृत्तो रूपान्तरमाश्रयति, प्रधानं तु स्वनिष्ठमेव न तु रूपान्तरं भजते ॥

**( उद्योतः ) षष्ठ्याभिहित इति** भाष्ये अयं भावः—कटं भीष्ममित्यादौ प्रकारान्तरेण द्वितीयासाधनात्परिगणनमनावश्यकम् । राजपदोत्तरषष्ठ्या स्वामित्वस्योक्तावपि पुरुषे स्वत्वं विना पुरुषनिरूपितस्वामित्वाप्रत्ययेन तत्र[1] तत्त्वमप्यर्थायातमिति ॥ नन्वर्थलब्धेऽपि स्वामित्वे राज्ञः स्वमित्यादौ षष्ठी दृश्यते । किं च वार्तिकमते इदं परिगणनेन विरुद्धमित्यतः पूर्वमुक्तमभिप्रायं स्मारयति—**गुणप्रधानभावेनेति** । **रूपान्तरं** विशेषणतानियामकसंबन्धवत्त्वम् । पदान्तरासमभिव्याहारेऽपीति भावः ॥ **प्रधानं त्विति** । पदान्तरासमभिव्याहारे इति शेषः ॥ **रूपान्तरम्** । अन्यनिरूपितविशेष्यतानियामकसंबन्धम् । तस्या एवाप्रतीत्येति भावः ॥ अनया रीत्या पञ्चालशब्दाद्द्वितीयावारणमपि[2] कर्तुं शक्यम् ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—पुरुषस्य राजेति ?** ॥

**( प्रदीपः )** पुरुषस्येति षष्ठ्या नैव भाव्यमिति भ्रान्त्या चोदयति—**न तर्हीति** ॥

( समाधानभाष्यम् )

**भवति । राजशब्दात्तु तदा प्रथमा** ॥

**( प्रदीपः ) भवतीति** । यदा पुरुषस्य गुणभावो राज्ञस्तु विशेष्यत्वं तदा पुरुषस्य राजेति भवत्येवेत्यर्थः ॥

**( उद्योतः ) तदा पुरुषस्य राजेति** । पुरुषसंबन्धी राजेति तदा बोध इति भावः ॥ ५० ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—राज्ञः पुरुषस्येति ?** ॥

( समाधानभाष्यम् )

**भवति बाह्यमर्थमभिसमीक्ष्य ॥ षष्ठी शेषे** ॥५०॥

**( प्रदीपः ) भवति बाह्यमिति** । एकस्यापि वस्तुनो भिन्नविषयो गुणप्रधानभावो न विरुध्यते ॥ ५० ॥

( ३२५ प्रतिपदषष्ठीसूत्रम् ॥ २ । ३ । ३ आ. ३ सू. )

## ५१० अधीगर्थदयेशां कर्मणि ॥ २।३।५२ ॥

( भावे प्रत्ययसाधनाधिकरणम् )

( १५३० आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कर्मादिष्वकर्मकवद्वचनम् ॥ * ॥

**कर्मादिष्वकर्मकवद्भावो वक्तव्यः ॥ किं प्रयोजनम् ? । अकर्मकाणां भावे लो भवतीति भावे लो यथा स्यात्—मातुः स्मर्यते, पितुः स्मर्यते इति ॥ अथ वत्करणं किमर्थम् ? । स्वाश्रयमपि यथा स्यात्—माता स्मर्यते, पिता स्मर्यत इति ॥**

**( प्रदीपः ) अधीगर्थ ॥ ५२ ॥ मातुः स्मरतीति** मातृस्मरणयोरवस्थानादिक्रियानिमित्तः संबन्ध इति केचिदाहुः । अन्ये तु स्मरणस्य क्रियारूपत्वात् क्रियान्तरमन्तरेणैव द्रव्येण संबन्धोपपत्तिमाहुः । यथा द्वयोः काष्ठयोर्जतुकृतः संश्लेषो जतुनस्तु काष्ठेन स्वत एव न जत्वन्तरकृतः ॥ **कर्मादिष्विति** । आदिशब्दोऽत्राश्रयवाची । यथा—

विष्णुरादिः पृथासूनोर्भीष्मादिश्च सुयोधनः ॥
ते जयन्ति रणे शत्रून् येषां विष्णुः समाश्रयः ॥

इति । तेन कर्माश्रयाः द्वितीयाविधिनिमित्तभावेनोपात्ताः सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्ते ॥ **अकर्मकाणामिति** । तेन मातुः स्मर्यत इति भावे लकृत्यक्तखलर्था भवन्ति, कर्मणि तु लादिषु विधीयमानेषु तैरभिहितत्वात्कर्मणः षष्ठ्या न भाव्यमिति प्रथमैव भवति माता स्मर्यत इति ॥ **वत्करणं किमर्थमिति** । विनापि वतिनातिदेशः सिध्यति परार्थे शब्दप्रयोगात् ॥ **स्वाश्रयमपीति** । नाप्राप्ते स्वाश्रये आरभ्यमाणोतिदेशस्तद् बाधेत ॥

**( उद्योतः ) अधीगर्थ ॥ ५२ ॥** एषां कर्मणि शेषत्वेन विवक्षिते षष्ठीति सिद्धान्ते सूत्रार्थः । कर्मादीनामविवक्षा च शेष इति बोध्यम् । ननु मातुः कर्मत्वाविवक्षायां किंनिमित्तेन संबन्धेन मात्रादेः स्मरणेऽन्वय इत्यत आह—**मातुरिति** ॥ **अवस्थाने** विषयत्वभवने माता कर्त्री स्मरणमधिकरणं तन्निमित्तकं विषयत्वं संबन्ध इत्यर्थः ॥ **अन्येत्विति** । स्वकर्मत्वकृतो विषयविषयिभाव एव संबन्ध इति भावः ॥ कर्मव्यतिरिक्तस्याभावादादिशब्दवैफल्यमत आह—**आजिशब्द इति** । **द्वितीयाविधिनिमित्तभावेनेति** । द्वितीयापवादषष्ठीविधिनिमित्तभावेनेत्यर्थः । दिव्विषये **विभाषोपसर्गे द्वितीया ब्राह्मणे** इति सूत्रद्वयारम्भसामर्थ्येनात्र[3] प्रकरणे शेषग्रहणानुवृत्तिर्नेति वार्तिकारम्भः । यदा भावे लस्तदैवानभिहितत्वात् षष्ठी । यदा कर्मणि तदाऽभिहितत्वात्प्रथमैव तदाह—**कर्मणि त्विति** ॥ **विनापीति** । अब्रह्मदत्ते ब्रह्मदत्तशब्दप्रयोग इवेत्यर्थः ॥ वत्यभावेऽसिद्धिमुपपादयति—**नाप्राप्ते इति** ॥ वस्तुतस्तु अयं क्षत्रियो ब्राह्मण इत्यादौ लोके वतिं विनाप्यतिदेशविषये स्वाश्रयानिवृत्तिदर्शनादिदं चिन्त्यम् । किं तु वत्यभावेऽकर्मकसंज्ञेयं स्यात् । तथा च स्वाश्रयं न स्यादिति भाष्यतात्पर्यम् ॥

( १५३१ विपक्षबाधकं वार्तिकप्रथमखण्डम् ॥ २ )

### ॥ * ॥ कर्माभिधाने हि लिङ्गवचनानुपपत्तिः ॥ * ॥

**( भाष्यम् ) कर्माभिधाने हि लिङ्गवचनयोरनुपपत्तिः स्यात् । मातुः स्मृतम् । मात्रोः स्मृतम् । मातॄणां स्मृतमिति । मातुर्यल्लिङ्गं वचनं तत्स्मृतशब्दस्यापि प्राप्नोति ॥**

---

१ पुरुषेस्वत्वमित्यर्थः । तथा च स्वत्वस्यार्थलब्धत्वान्न तत्र षष्ठीति भावः । ( र. ना. ) २ पञ्चालानां प्रधानत्वात्तत्र प्रकृते षष्ठीवद् द्वितीयाया अप्राप्तेर्ब्रह्मदत्ते चाप्रधाने सप्तम्या विशेषविहितया तस्या बाधादिति भावः । ( र. ना. )

३ अन्यथा कर्मत्वविवक्षायां द्वितीया शेषत्वविवक्षायां षष्ठी—इति वृथैव सूत्रद्वयारम्भः स्यादिति भावः । ( र. ना. )

(प्रदीपः) **कर्माभिधाने हीति ।** यथकर्मकवद्भावो न विधीयते तदा लादिभिः कर्मैवाभिधातव्यं न भावः । ततस्तत्सामानाधिकरण्यात् क्तान्तादीनां तदीयलिङ्गसंख्याप्रसङ्गो यथा माता स्मृतेति । भावे तूत्पत्तौ क्तादीनां नपुंसकत्वमेकवचनं च भवति ॥

(उद्द्योतः) भाष्येऽकर्मवद्भावस्य फलान्तरमाह—**कर्माभिधाने हीति ।** हिश्चार्थे ॥

(१५३२ विपक्षबाधकं वार्तिकद्वितीयखण्डम् ॥ ३)

**॥ * ॥ षष्ठीप्रसङ्गश्च ॥ * ॥**

(भाष्यम्) **षष्ठी च प्राप्नोति ॥ कुतः ? ॥ स्मृतशब्दान्मातुः सामानाधिकरण्यात्षष्ठी प्राप्नोति ॥**

(प्रदीपः) **षष्ठीप्रसङ्गश्चेति ।** यदा स्मृतशब्दे कर्मणि क्तो विधीयते तदा मातृशब्दसामानाधिकरण्याद् वाह्यवस्त्वपेक्षया यथा मातृशब्दात् षष्ठी भवति तथा स्मृतशब्दादपि स्यादित्येके व्याचक्षते ॥ अन्ये त्वाहुः—अनभिहिताधिकारानपेक्षणेन यथा मातृशब्दात् कर्मणि षष्ठी भवत्येवं स्मृतशब्दादपि स्यादिति ॥

(उद्द्योतः) **इत्येके इति ।** तत्रेष्टापत्तिरित्यत्रारुचिः ॥

(व्याख्यान्तरभाष्यम्)

**अपर आह—**

**॥ * ॥ षष्ठीप्रसङ्गश्च ॥ * ॥**

**षष्ठी च प्रसङ्क्त्व्या । कुतः ? । मातृशब्दात् । स्मृतशब्देनाभिहितं कर्मेति कृत्वा षष्ठी न प्राप्नोति ॥**

(प्रदीपः) ननु विद्यमानोऽप्यनभिहिताधिकारः कथं नापेक्ष्यत इत्याशङ्क्याह—**अपर आहेति ॥ प्रसङ्क्त्व्येति ॥** प्रापणीयेत्यर्थः ॥

(तृतीयाक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम् ? ॥**

(समाधानभाष्यम्)

**न वक्तव्यम् । अविवक्षिते कर्मणि षष्ठी भवतीति ॥ किं वक्तव्यमेतत् ? । नहि ॥ कथमनुच्यमानं गंस्यते ? । शेष इति वर्तते ॥ शेषश्च कः ? । कर्मादीनामविवक्षा शेषः । यदा च कर्म विवक्षितं भवति तदा षष्ठी न भवति । तद्यथा—स्मरास्यहं मातरम्, स्मरास्यहं पितरमिति ॥ अधीगर्थ ॥५२॥**

(प्रदीपः) **शेष इतीति ।** प्रकरणं चेदं समासप्रतिषेधार्थमिति समासप्रकरणे व्याख्यातम् । तेन मातुः स्मृतमिति षष्ठीसमासो न भवति । उक्तं च हरिणा—

**साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।**
**प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥**

इति ॥ ५२ ॥

(उद्द्योतः) भाष्ये—**अविवक्षिते कर्मणीति ।** एवं चाविवक्षितकर्मकत्वेनाकर्मकत्वाद्भावे लादयः सिद्धा इति भावः ॥ नन्वेवं शेषषष्ठ्यैव सिद्धे प्रकरणमिदं व्यर्थमत आह—**प्रकरणं चेति ।** मण्डूकानुवृत्तेरयुक्तत्वात् पूर्वसूत्रेऽपि शेष इत्यस्य संवन्धो बोध्यः ॥ **साधनैरिति ।** करणकर्मकारकैर्व्यपदिष्टे विगतोपदेशे विगतव्यवहारे शेषत्वेन विवक्षित इति यावत् ॥ **श्रूयमाणक्रिये इति** स्वरूपकथनम् । नच शेषत्वाविवक्षायां कृद्योगषष्ठ्या समासस्य दुर्वारत्वेनेदं व्यर्थम्, आदिकर्मणि कर्तरि क्तप्रत्ययान्तस्मृतादिभिः समासवारणार्थत्वात् ॥ न हि तत्र कृद्योगलक्षणा षष्ठी, **न लोकेति** निषेधादिति बोध्यम् ॥ ५२ ॥

---

(३२६ प्रतिपदषष्ठीसूत्रम् ॥ २ । ३ । ३ आ. ४ सू.)

## ५१२ रुजार्थानां भाववचनानामज्वरेः ॥ २।३।५४ ॥

(१५३३ शेषपूरकवार्तिकम् ॥ २ ॥)

**॥ * ॥ अज्वरिसंताप्योः ॥ * ॥**

(भाष्यम्) **अज्वरिसंताप्योरिति वक्तव्यम् । इहापि यथा स्यात्—चोरं सन्तापयति, वृषलं सन्तापयति ॥**

(आक्षेपभाष्यम्)

**अथ किमर्थं 'भाववचनानाम्' इत्युच्यते । यावता रुजार्था भाववचना एव भवन्ति ? ॥**

(प्रदीपः) **रुजार्थानाम् ॥ ५४ ॥ यावतेति ।** धातूनां भाववाचित्वाव्यभिचारात् ॥

(समाधानभाष्यम्)

**भावकर्तृकाद्यथा स्यात् । इह मा भूद्—नदी कूलानि रुजतीति ॥ रुजार्थानाम् ॥ ५४ ॥**

(प्रदीपः) **भावकर्तृकादिति ।** ल्यब्लोपे कर्मणि पञ्चमी । भावकर्तृकमाश्रित्येत्यर्थः । अथ वा भावकर्तृकधात्वर्थकर्मचोरादिकं भावकर्तृकशब्देनोक्तम् ॥ कथं पुनर्भाववचनानामित्यस्य भावकर्तृकाणामित्यर्थो भवति ? । उच्यते—भावशब्देन घञादिवाच्यसिद्धरूपोऽर्थोऽभिधीयते, न तु साध्यरूपस्तस्य कर्तृत्वासंभवात् । वचनशब्देऽपि प्रत्ययार्थः कर्ता विवक्षितः, कर्तरि ल्युटो विधानात् । प्रकृत्यर्थस्तु वचनक्रिया न विवक्ष्यते । तेन भावो वचनः कर्ता येषां ते भाववचनाः भावकर्तृका इत्यर्थः संपद्यते ॥ अन्ये त्वाहुः—भावे वचनं येषां ते भाववचनाः, सति भावे कर्तरि येषां वचनमुच्चारणम् । भावकर्तृकधात्वर्थप्रतिपादनाय येषामभिधानमित्यर्थः ॥ **नदीकूलानीति ।** रुजाशब्दो व्याधौ रूढ इत्यत्र प्रसङ्ग एव नास्ति । तस्माद् **रुजार्थाना**मिति धातुमात्रनिर्देशाश्रयमिदं प्रत्युदाहरणम् । रुजाशब्दनिर्देशे तु श्लेष्मा पुरुषं रुजतीति प्रत्युदाहार्यमित्याहुः ॥ ५४ ॥

---

[१] रोगोऽत्र कर्ता । (र. ना.)

( उद्द्योतः ) रुजार्थानाम् ॥ ५४ ॥ कर्मणि षष्ठीविधानेन ॥ भावकर्तृकादित्यनुपपन्नमत आह—ल्यब्लोप इति ॥ तत्प्रत्याख्यानपक्षेऽप्याह—अथवेति ॥ कर्तृत्वासंभवादिति । असत्त्वभूतस्य भवत्यर्थातिरिक्ते कर्तृत्वासंभवादिति भावः ॥ कर्तरीति । बहुलवचनादित्यर्थः । अन्ये त्विति । बाहुलकाद्व्यधिकरणबहुव्रीह्याश्रयणं वरमित्यभिमानः ॥ रुजाशब्द इति । अन्यथा रुजार्थानामिति निर्देशोनुपपन्न इति भावः ॥ धातुमात्रेति । धात्वर्थमात्रेत्यर्थः । अकार उच्चारणार्थ इति निर्देशोपपत्तिरिति भावः । तिङन्तं प्रत्युदाहरणं वार्तिकमते, शेषग्रहणानुवृत्तेस्तन्मतेऽभावात् ॥ ५४ ॥

( ३२७ द्वितीयासूत्रम् ॥ २।३।३ आ. ५ )

## ५१८ द्वितीया ब्राह्मणे ॥ २।३।६० ॥

( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

( प्रदीपः ) द्वितीया ॥ ६० ॥ किमुदाहरणमिति । पूर्वसूत्रे व्यवस्थितविभाषाविज्ञानात्सोपसर्गस्य दीव्यतेः कर्मणि छन्दसि द्वितीयैव भविष्यति गां प्रदीव्यन्तीत्यादाविति प्रश्नः ॥

( समाधानभाष्यम् )

**गां निघ्नन्ति । गां प्रदीव्यन्ति । गां सभासद्भ्य उपहरन्ति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति । पूर्वेणाप्येतत्सिद्धम् ॥**

( उद्द्योतः ) द्वितीया ब्राह्मणे ॥ ६० ॥ भाष्ये—पूर्वेणापीति । विभाषोपसर्गे इत्यनेनेत्यर्थः ॥

( समाधानभाष्यम् )

**इदं तर्हि—ग्रामस्य तदहः सभायां दीव्येयुः ॥ द्वितीया ॥ ६० ॥**

( प्रदीपः ) ग्रामस्येति । अत्र दिवस्तदर्थस्येति नित्यं षष्ठी प्राप्नोति ॥ अत्र च शेष इति नानुवर्तत इति एतत्सूत्रारम्भात् पूर्वसूत्रारम्भाच्च ज्ञायते ॥ ६० ॥

( उद्द्योतः ) दिव इति सूत्रे शेषग्रहणानुवृत्त्या शेषषष्ठी तत्त्वाविवक्षायां द्वितीयेतीदमपि सिद्धमत आह—अत्र च शेष इति । दिवस्तदर्थस्येति सूत्रे इत्यर्थः । अत्र शेष इत्यस्य संबन्धे विभाषोपसर्ग इति सूत्रं समासविकल्पफलकं वाच्यम् । तथा च नोपसर्ग इति पूर्वसूत्रनिषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणं व्यर्थं स्यात् । विभाषोपसर्गे इत्यत्र शेष इत्यस्यासंबन्धे तु वेदेऽपि तेनैव कर्मणि द्वितीयायाः सोपसर्गे सिद्धत्वेन आपाद्यरूपाभावेन निरुपसर्गेऽपि कर्मत्वविवक्षायां दिव इत्यस्याप्रवृत्त्या कर्मणि द्वितीयेत्येव सिद्धतया द्वितीया ब्राह्मणे इत्यस्य वैयर्थ्यापत्तिः । कृति दिवदं न प्रवर्तत इति पुनर्विधानं समासाभावायेत्यपि न वाच्यमिति भावः ॥ परे तु दिव इति सूत्रे शेष इत्यस्य निवृत्तिर्व्याख्यानादेव । नोपसर्ग इत्यत्र विभाषोपसर्ग इत्यतः पदलाघवाभावात्तिङन्ते रूपद्वयार्थं विभाषाग्रहणस्यावश्यकत्वाच्च । कृति प्रतिपदविधानेति निषेधात् षष्ठीसमासाभाव एव । अत एव तैर्द्वाभ्यकृता न प्रत्याख्यातमित्याहुः ॥ परे तु दिव इति सूत्रे शेष इति संबध्यत एव । कर्मादिष्वकर्मकवद्वचनमिति वार्तिकरीत्या शतस्य दीव्यत इति भावे इष्टः प्रयोगः सिध्यति । अत एव सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्ते इति कैयटः । शेष इत्यनुवृत्त्या वार्तिकप्रत्याख्याने तु एतत्सूत्रद्वयप्रत्याख्याने एव भाष्यतात्पर्यम् ॥ अत्र चेति कैयटस्यापि अत्र प्रकरणे इत्यर्थः । एवं चात्रत्यं भाष्यं वार्तिकरीत्या ॥ एवं च ज्ञोऽविदर्थस्य कृत्वोर्थेति सूत्रे च न शेषपदसंबन्धो, मानाभावात् । अत्र च मण्डूकानुवृत्तिः । अत एव यदा कर्म विवक्षितमित्येवोक्तम् । अन्यथा कर्मादि विवक्षितमिति वदेदित्याहुः ॥ ६० ॥

( ३२८ षष्ठीसूत्रम् ॥ २ । ३।३ आ. ६ सू. )

## ५१९ प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ २।३।६१ ॥

( १५३४ शेषपूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ हविषोऽप्रस्थितस्य ॥ * ॥**

( भाष्यम् ) **हविषः अप्रस्थितस्येति वक्तव्यम् । इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य ॥ प्रेष्य ॥ ६१ ॥**

( प्रदीपः ) प्रेष्यब्रुवोः ॥ ६१ ॥ हविषोऽप्रस्थितस्येति । यदा प्रस्थितत्वेन हविर्विशेष्यते तदा षष्ठी न भवतीत्यर्थः ॥ ६१ ॥

( उद्द्योतः ) प्रेष्यब्रुवोः ॥ ६१ ॥ हविषः प्रस्थानासंभवादाह—यदेति ॥ ६१ ॥

( ३२९ षष्ठीसूत्रम् ॥ २ । ३ । ३ आ. ७ सू. )

## ५२० चतुर्थ्यर्थे बहुलं छन्दसि ॥२।३।६२ ॥

( १५३५ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ षष्ठ्यर्थे चतुर्थी ॥ * ॥**

( भाष्यम् ) **षष्ठ्यर्थे चतुर्थी वक्तव्या । या खर्वेण पिबति तस्यै खर्वो जायते यां मलवद्वाससं संभवन्ति यस्ततो जायते सोभिशस्तो, यामरण्ये तस्यै स्तेनो,**

---

१ इदं चिन्त्यम् । शेषत्वविवक्षाऽविवक्षाभ्यां तिङन्ते रूपद्वयस्य साधितत्वात् । ( र. ना. ) २ विभाषाग्रहणमित्यर्थः । ( र. ना. ) ३ सततानुवृत्तिस्वीकारे इत्यर्थः । ( र. ना. ) ४ 'हविषः प्रस्थितस्य नेति वक्तव्यम्' । ५ इत उत्तरम् 'तिस्रो रात्रीरिति । तस्या इति प्राप्ते' इति क्वचित् पाठ उपलभ्यते ।

यां पराचीं तस्यै ह्रीतमुख्यपगल्भो, या स्नाति तस्या अप्सु मारुको, याभ्यङ्क्ते तस्यै दुश्चर्मा, या प्रलिखते तस्यै खलतिरपमारी, याङ्क्ते तस्यै काणो, या दतो धावते तस्यै श्यावदन्, या नखानि निकृन्तते तस्यै कुनखी, या कृणत्ति तस्यै क्लीवो, या रज्जुं सृजति तस्या उद्बन्धुको, या पर्णेन पिबति तस्या उन्मादुको जायते, अहल्यायै जार, मनाय्यै तन्तुः ॥

( प्रदीपः ) चतुर्थ्यर्थे ॥ ६२ ॥ या खर्वेणेति । रजस्वलायाः खर्वपानादिनिषेधार्थोयमर्थवादः ॥

( उद्द्योतः ) चतुर्थ्यर्थे ॥ ६२ ॥ खर्वेण । अग्निदग्धशरावेण । अञ्जलिरपक्वशरावो वा विहित इति बोध्यम् । खर्वो वामनः ॥ रजस्वलाप्रस्तावे तैत्तिरीयश्रुतौ न सहासीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्तेथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदित्युपक्रम्य "यां मलवद्वाससं"मित्यादि ॥ मलवद्वाससं रजस्वलाम् संभवन्ति गर्भाधानार्थमुपगच्छन्ति । ततो जातोऽभिशस्तः मिथ्यारोपितपातकः ॥ अरण्ये इति । संभवन्तीत्यनुवर्तते । स्तेनश्चौरः । पराचीं लज्जादिना पराग्वलितवदनामन्यच्चित्तां वा । तस्या ह्रीतमुखी लज्जावनतवदना तस्यैव व्याख्या अपगल्भः अप्रगल्भ इत्यर्थः ॥ मारुको मरणशीलः ॥ अभ्यङ्क्ते तैलादिनेति शेषः ॥ दुश्चर्मा कुष्ठी ॥ प्रलिखते चित्रादि लिखति । खलतिरकेशशिराः ॥ अपमारी अपमृत्युयुक्तः । अञ्जनं नेत्रयोः कज्जलदानम् ॥ श्यावदन् मलिनदन्तः ॥ या कृणत्ति औषध्यादीन् छिनत्ति । उद्बन्धुकः गले रज्जुं बद्ध्वा मरणशीलः ॥ उन्मादुकः उन्मत्तशीलः । एतदग्रे श्रुतौ या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेत् । अञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय तस्मात्तिस्रो रात्रीर्व्रतं चरेत् । अहल्यायै जार मनाय्यै तन्तुरिति अहल्याया जारेत्यर्थेऽहल्यायै जारेत्यादि ॥६२॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् ॥

( १५३६ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥

( भाष्यम् ) "चतुर्थी" । ततः "अर्थे बहुलं छन्दसि" ॥ चतुर्थ्यं ॥ ६२ ॥

( प्रदीपः ) चतुर्थीति । षष्ठीप्रकरणात् षष्ठ्यर्थे चतुर्थी भवतीत्येको वाक्यार्थः । चतुर्थ्यर्थे षष्ठीति द्वितीयः ॥ ६२ ॥

१ इदं वक्ष्यमाणश्च वाक्यं पूर्वश्रुतिवाक्यासंबद्धमुदाहरणान्तरमिति द्रष्टव्यम् ।

( ३३० कारकषष्ठीसूत्रम् ॥ २ । ३ । ३ आ. ८ )

## ५२३ कर्तृकर्मणोः कृति ॥ २।३।६५ ॥

( कृद्ग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

कृद्ग्रहणं किमर्थम् ? ॥

( समाधानभाष्यम् )

इह मा भूत्—पचत्योदनं देवदत्त इति ॥

( १५३७ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणानर्थक्यं लप्रतिषेधात् ॥ * ॥

( भाष्यम् ) कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणमनर्थकम् । किं कारणम् ? । लप्रतिषेधात् । प्रतिषिध्यतेऽत्र षष्ठी 'लप्रयोगे न' इति ॥

( आक्षेपपरिहारभाष्यम् )

तस्य कर्मकर्त्रर्थं तर्हि कृद्ग्रहणं कर्तव्यम् । कृतो ये कर्तृकर्मणी तत्र यथा स्यादन्यस्य ये कर्तृकर्मणी तत्र मा भूदिति ॥

( प्रदीपः ) कर्तृकर्मणोः ॥ ६५ ॥ तस्य कर्मकर्त्रर्थमिति कर्तृकर्मविशेषणार्थं कृद्ग्रहणमित्यर्थः ॥

( परिहारबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । धातोर्हि द्वये प्रत्यया विधीयन्ते तिङश्च कृतश्च । तत्र कृत्प्रयोग इष्यते तिङ्प्रयोगे प्रतिषिध्यते ॥

( प्रदीपः ) नैतदस्तीति ॥ यथोक्तप्रयोजनं कृद्ग्रहणमिह तावन्नोपयुज्यत इति दर्शयति ॥ पश्चादुत्तरत्रानुपयोगं दर्शयिष्यति इह कर्तृकर्मसंनिधानात् क्रिया संनिधीयते क्रियाया हि कारकं भवति । सा च वाचकं धातुं प्रत्ययसहितमाक्षिपतीति मत्वाह—धातोर्हीति ॥

( उद्द्योतः ) कर्तृकर्मणोः ॥ ६५ ॥ यथोक्तेति । तस्य कर्मकर्त्रर्थमित्यस्यात्रार्थान्तरं वक्तुं पूर्वोक्तार्थकत्वं निरस्यतीति भावः ॥ ननु कर्तृकर्मत्वे क्रियापेक्षे न धात्वपेक्षे, इति धातोरित्युक्तमत आह—इहेति ॥ वाचकं धातुमिति । न च स्ववाचकाक्षेपेऽपि धात्वाक्षेपे मानाभावः, खनतीत्याद्यर्थे जायमानानां तद्धितानामपि क्रियोपसर्जनद्रव्यवाचकत्वेन क्रियावाचकत्वात् । तदर्थाश्रयादिष्वपि कर्तृत्वादिप्रयुक्तकार्यदर्शनाच्च । अयमेव तस्य कर्मकर्त्रर्थमिति वक्तुराशय इति वाच्यम् । एतद्भाष्यप्रामाण्येन कारकान्वययोग्यक्रिया धातुवाच्यैव न तु तद्धितादिवाच्येति निर्णयेनादोषात् । एवंच देवदत्तेन शल्योऽश्व आश्विको भूमिमित्यादयोऽप्रयोगा एव । अत एव हिरुगादियोगे न द्वितीयादयः । न चाधिका खारी द्रोणेनेत्यनापत्तिः । तत्र प्रकृत्यादित्वाद्धेतौ वा तृतीयायाः सत्त्वेनादोषादिति पञ्चमे निरूपयिष्यामः ॥

तन्तुरपत्यपरम्परा । ( र. ना. )

(परिहारसाधकभाष्यम्)

न ब्रूमः—इहार्थं तस्य कर्मकर्त्रर्थं कृद्ग्रहणं कर्तव्यमिति। किं तर्हि? । उत्तरार्थम्—'अव्ययप्रयोगे न' इति षष्ठ्याः प्रतिषेधं वक्ष्यति, स कृतोऽव्ययस्य ये कर्तृकर्मणी तत्र यथा स्यात्। अकृतोऽव्ययस्य ये कर्तृकर्मणी तत्र मा भूद्—उच्चैः कटानां स्रष्टेति॥

(प्रदीपः) तदेवं व्यावर्त्यासंभवादिहार्थं कृद्ग्रहणं कर्तृकर्मविशेषणार्थं नोपयुज्यत इति दर्शितम्। इदानीमुत्तरार्थत्वमाशङ्क्य निराकरोति—न ब्रूम इति। न लोकाव्ययेत्यत्राव्ययं कृद्ग्रहणेन विशेष्यते कृदव्ययस्य ये कर्तृकर्मणी तत्र षष्ठीप्रतिषेधो यथा स्यात् कटं कृत्वेत्यादौ। अकृतस्त्वव्ययस्य कर्तृकर्मणोः षष्ठीनिषेधो मा भूदुच्चैः कटानां स्रष्टेति॥

(उद्द्योतः) भाष्ये—अकृतोऽव्ययस्य ये इति। अकृतोऽव्ययस्य प्रयोगे यत्किंचित्क्रियानिरूपिते ये कर्तृकर्मणी इत्यर्थः। सूत्रस्यापि "अव्ययप्रयोगे नेत्येवार्थः"॥

(१५३८ आक्षेपसाधकवार्तिकम्॥२॥)

॥ * ॥ तस्य कर्मकर्त्रर्थमिति चेत्प्रतिषेधेऽपि तदन्तकर्मकर्तृत्वात्सिद्धम्॥

(भाष्यम्) कृत एते कर्तृकर्मणी नाव्ययस्य। अधिकरणमत्राव्ययम्॥

(प्रदीपः) प्रतिषेध इति। न लोकाव्ययेति सूत्रे अव्ययग्रहणेन कर्तृकर्मणी विशेष्येते—अव्ययस्य ये कर्तृकर्मणी तयोः षष्ठी न भवतीति। न च कृदन्ताव्ययादन्यस्याव्ययस्य कर्तृकर्मणी संभवत इति सामर्थ्यलभ्यं तत्रापि कृद्ग्रहणमित्यर्थः॥ कृत इति। स्रष्टेत्यस्य॥ नाव्ययस्येति। नोच्चैःशब्दस्येत्यर्थः। तस्याऽक्रियावाचकत्वात्। तदेवाह—अधिकरणमिति। उच्चैःस्थाने स्थितानां कटानां स्रष्टेत्यर्थः॥

(उद्द्योतः) तदन्तकर्मकर्तृत्वादिति। कृदन्तकर्तृत्वकर्मत्वमेवैतयोर्न त्वव्ययकर्तृत्वकर्मत्वमेतयोरित्यर्थः। तदुपपादयति—न लोकेति॥

(समाधानान्तरभाष्यम्)

इदं तर्हि प्रयोजनम्—उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधं वक्ष्यति, स कृतो ये कर्तृकर्मणी तत्र यथा स्यात्। कृतोऽर्ये कर्तृकर्मणी तत्र मा भूदिति। आश्चर्यमिदं वृत्तमोदनस्य च नाम पाको ब्राह्मणानां च प्रादुर्भाव इति॥

(प्रदीपः) कृतो ये इति। एकस्यैव कृतो न तु भिन्नयोः कृतोरित्यर्थः। कृद्ग्रहणे क्रियमाणे शब्दप्रतिपादितत्वादन्यपदार्थस्योभयप्राप्ताविति बहुव्रीहिर्लभ्यत। अन्यथान्तरङ्गत्वात्तत्पुरुषः स्यात्॥

(उद्द्योतः) अन्यथेति। सन्देहे तत्पुरुषस्यैव न्याय्यत्वम्। कृत्पदोपादाने तु अन्यपदार्थस्य स्पष्टत्वाद्बहुव्रीहिरेवेति भावः॥ भाष्ये—प्रतिषेधशब्दो नियमशास्त्राणां निषेधे पर्यवसानमभिप्रेत्येत्याहुः॥

(आक्षेपभाष्यम्)

अथ क्रियमाणेऽपि कृद्ग्रहणे कस्मादेवात्र न भवति?॥

(प्रदीपः) अथेति। कृतोरेकत्वस्याविवक्षायां जातिविवक्षायां वा तत्पुरुषं च मत्वा चोदयति॥

(उद्द्योतः) एकत्वस्याविवक्षायामिति। उद्देश्यनिमित्तगतत्वादिति भावः॥

(समाधानभाष्यम्)

'उभयप्राप्तौ' इति नैवं विज्ञायते—उभयोः प्राप्तिरुभयप्राप्तिः उभयप्राप्ताविति॥ कथं तर्हि?। उभयोः प्राप्तिर्यस्मिन्कृति सोयमुभयप्राप्तिः कृद् उभयप्राप्ताविति॥

(प्रदीपः) कृत्यन्यपदार्थे बहुव्रीहिराश्रीयत इति परिहारः। तेनाश्चर्यो गवां दोहोऽगोपालकेनेत्यादावेव नियमः प्रवर्तते॥

(सिद्धान्तसमाधानभाष्यम्)

अथ वा कृतो ये कर्तृकर्मणी तत्र यथा स्यात्। तद्धितस्य ये कर्तृकर्मणी तत्र मा भूदिति। कृतपूर्वी कटं भुक्तपूर्वी ओदनमिति॥

(प्रदीपः) यद्येवमुत्तरत्रैव कृद्ग्रहणं कर्तव्यम्, अथ वा व्याख्यानाद् बहुव्रीहिराश्रयिष्यते इत्याशङ्क्याह—अथ वेति। कृतपूर्वीति। कृतं पूर्वमनेनेति सुप्सुपेति समासः। पूर्वादिनिःसपूर्वाच्चेतीनिप्रत्ययः। कर्तात्र तद्धितेनोक्त इति ततः षष्ठीप्रसङ्गाभावः। कटात्तु कर्मणः षष्ठी मा भूदित्येवमर्थं कृद्ग्रहणम्॥

(उद्द्योतः) भाष्ये—कृतो ये इति॥ कृदन्तशक्तिग्रहसहकारेणोपस्थितायाः क्रियाया ये इत्यर्थः॥ तद्धितस्येति। तद्धितान्तशक्तिग्रहसहकारेणैवोपस्थितक्रियाया ये इत्यर्थः॥

(आक्षेपभाष्यम्)

ननु च वाक्येनैवानेन न भवितव्यम्॥

तत्र द्वितीयया तावन्न भवितव्यम्। किं कारणम्?। क्तेनाभिहितं कर्मेति कृत्वा॥

इनिप्रत्ययेन चापि नोत्पत्तव्यम्। किं कारणम्?। असामर्थ्यात्॥ कथमसामर्थ्यम्?। सापेक्षमसमर्थं भवतीति॥

(प्रदीपः) ननु चेति। कृतपूर्वी कटमित्यनेनेत्यर्थः॥ द्वितीययेति। तस्याश्चाप्राप्तौ तदपवादः षष्ठ्यपि न प्राप्नोति इहाप्यनभिहिताधिकारात्॥ सापेक्षमिति। कृतः पूर्वं

१ 'मा भूदिति'। २ 'कृदन्त'। ३ तत्पुरुषस्यान्तरङ्गत्वमुत्तरपदार्थप्रधानत्वप्रयुक्तम्। बहुव्रीहेर्बहिरङ्गत्वन्त्वन्यपदार्थप्रधानत्वप्रयुक्तम्। (र. ना.)

४ उद्देश्यरूपं यन्निमित्तं तद्गतत्वादित्यर्थः। उद्देश्यगता हि संख्याऽविवक्षिता भवतीति ग्रहं संमार्ष्टीत्यादौ दृष्टमिति भावः। (र. ना.)

कटोऽनेनेति विवक्षायां कटापेक्षत्वात् तद्धितेन न भाव्यमित्यर्थः ॥

(उद्द्योतः) एतद्वाक्यभवनाभावे हेतुमाह—**तत्र द्वितीयेति** ॥ **कटापेक्षत्वादिति**। कृत इत्यस्य विशेष्यतया कटसापेक्षत्वादित्यर्थः। अन्यथा क्रियायाः कारकांशे नित्यसापेक्षतयाऽसंगतिः स्पष्टैवेति बोध्यम् ॥ नित्यसापेक्षस्थलेऽपि क्वचिदेव समासो न सर्वत्रेत्याशयमन्ये ॥

(आक्षेपपरिहारभाष्यम्)

**यत्तावदुच्यते—'द्वितीयया तावन्न भवितव्यम्। किं कारणम्?। केनाभिहितं कर्मेति कृत्वेति'॥ योसौ कृतकटयोरभिसंबन्धः स उत्पन्ने प्रत्यये निर्वर्तते। अस्ति च करोतेः कटेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति ॥**

**यदप्युच्यते—'इनिप्रत्ययेन चापि नोत्पत्तव्यम्। किं कारणम्?। असामर्थ्यात्। कथमसामर्थ्यम्?। सापेक्षमसमर्थं भवतीति' ॥ नेदमुभयं युगपद्भवति वाक्यं च प्रत्ययश्च। यदा वाक्यम्, न तदा प्रत्ययः। यदा प्रत्ययः, सामान्येन तदा वृत्तिः। तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः—कृतपूर्वी किम्?। कटम्। भुक्तपूर्वी किम्?। ओदनमिति ॥**

(प्रदीपः) **योसाविति**। कृतः कटोऽनेनेति वाक्ये कृतकटयोः सामानाधिकरण्यम्। अस्मिंश्चार्थविशेषे न भाव्यं वृत्त्या। तस्याः सामान्यविषयत्वात् ॥ तस्मात्कर्मसामान्ये भावे वा क्त उत्पद्यते। तत्र कृतं पूर्वमनेनेत्यस्मिन्नर्थे कृतपूर्वीशब्दो वर्तते तेन पूर्वं कृतवानित्यर्थः संपद्यते। तत्र करोतिवाच्यक्रियापेक्षमस्ति कटस्य कर्मत्वम्। तथाह हरिः—

> विशेषकर्मसंबन्धे निर्भुक्तेऽपि कृतादिभिः।
> विशेषनिरपेक्षोन्यः कृतशब्दः प्रवर्तते ॥
> अकर्मकत्वात् सत्येवं क्तान्ते भावाभिधायिनि।
> ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् ॥
> अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः।
> क्रिया संबध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति ॥

(उद्द्योतः) भाष्ये—**योऽसौ कृतकटयोरिति**। यः कृतकटयोः सामानाधिकरण्यरूपसम्बन्धो वाक्ये दृष्टः **स उत्पन्ने प्रत्यय** इनौ **निवर्तते** निवृत्त इति बुद्धिविषयो भवति, भावविषयकृतशब्देन वृत्तिसत्त्वात्तत्रान्यार्थदर्शनात्तद्धितार्थैनैकार्थीभूतस्य कृतस्य कटेन सम्बन्धाभावादिति भावः ॥ ननु विशेषातिरिक्तसामान्यसद्भावे मानाभावात्कृधात्वर्थफलाश्रयः ॥ **केनाभिहित** इति ज्ञानकाले तदर्थफलेऽन्वितस्य कटस्यानभिहिततया वक्तुमशक्यत्वाच्च कर्मसामान्ये इत्यसंगतमत आह—**भावे वेति**। अविवक्षितकर्मतया अकर्मकत्वम्। फलांशे प्रागाश्रयविशेषान्वयाविवक्षैवात्र कर्माविवक्षेत्याहुः ॥ **कृतं पूर्वमनेनेति**। अर्थप्रदर्शनमात्रमेतत् नत्वयं प्रयोगः साधुः। प्रत्ययोत्पत्त्यनन्तरं भाष्ये सामानाधिकरण्यनिवृत्त्युक्तेर्वाक्ये कृतकटयोः सामानाधिकरण्येन प्रयोगस्यैव साधुत्वात् ॥ **कर्मत्वमिति**। अस्त्यनभिहितं कटस्य कर्मत्वमित्यर्थः ॥ **विशेषकर्मेति**। कृतः कटोऽनेनेत्यस्यामवस्थायां कृतशब्देन विशेषकर्मकटादिसम्बन्धे निर्भुक्तेऽपि अनुभूतेऽपि तस्यामवस्थायामसामर्थ्येन वृत्तिविरहात्। **विशेषनिरपेक्षो** भाववचनोऽन्य एव **कृतशब्दः प्रवर्तते** वृत्तिं लभत इत्यर्थः ॥ तदेवोपपादयन्नविवक्षितकर्मतया भावे क्त इत्याह—**अकर्मकत्वादिति**। एवं विशेषनिरपेक्षत्वे विशेषरहितसामान्यस्याभावादित्यर्थः। अत्र **क्तान्तं भावाभिधायि तदिति** क्वचित्पाठः सुयुक्ततरः ॥ सप्तम्यन्तपाठे भावाभिधायिनि सति समासे तद्धितोत्पत्तिरिति शेषः ॥ एवं सति तद्धितोत्पत्तौ यथाऽसामर्थ्यं न भवति तथा दर्शयति—**ततः क्रियावतेति**। **कर्मणां** कटादीनां क्रियावत्कर्त्रर्थकेनिना तदन्तोपस्थाप्यक्रियया योगो भवतीत्यर्थः ॥ तत्रोपपत्तिमाह—**अविग्रहेति**। विशिष्य प्राधान्येन ग्रहो ग्रहणं तद्रहिताऽप्राधान्येन गृह्यमाणापीत्यर्थः। गुणभूतक्रिययापि कारकाणां सम्बन्धदर्शनादिति भावः ॥ तदुक्तं भाष्ये—**अस्ति च करोतेः कटेन सामर्थ्यमिति** ॥ **सामान्येन तदावृत्तिरिति**। अविवक्षितकर्मतया धात्वर्थमात्रवृत्तिना भावक्तान्तेनेत्यर्थः ॥ **विशेषार्थिनेति**। कर्मविशेषजिज्ञासानिवर्तकयत्नवतेत्यर्थः ॥ एषा च विवक्षा प्रयोगानुसारात्कचिदेव। तेन घटं क्रियते घटं कृतमित्यादि नापादनीयम् ॥ कृद्ग्रहणे कृते तु न दोषः। कर्मणः कृदन्तमात्रोपस्थाप्यक्रियान्वयाभावात्। सैं चास्योक्तरीत्या न क्वापि पृथक् प्रयोग इति तन्मात्रस्य शक्तिग्रहाभावात्। अत एव तण्डुलानां पाचकपुत्रः पाचकतर इत्यादौ न दोषः। निषेधसूत्रेऽपि लादिसाहचर्यान्निष्ठांशेपि तथार्थं इति न निषेधप्रवृत्तिः। कटं कृतं पाचकपुत्र इत्यादौ च निषेधप्रवृत्तिः। अत एव भाष्ये—**करोतेः कटेन** सामर्थ्यमित्युक्तं न तु कृतशब्दस्य कटेनेत्युक्तम्। एवं च सकर्मकधातावीदृशविवक्षाया भावे क्तप्रत्यय ईदृशसमासविषय एव नान्यत्रेति भाष्यस्वरसाल्लभ्यते ॥ श्रान्तं देशमित्यादौ तु गत्यर्थाकर्मकेति भावे क्तो बोध्यः ॥

(समाधानान्तरभाष्यम्)

**अथ वा इदं प्रयोजनम्—कर्तृभूतपूर्वमात्रादपि षष्ठी यथा स्यात्—भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति ॥ कर्तृक० ॥ ६५ ॥**

(प्रदीपः) **कर्तृभूतपूर्वमात्रादिति**। करोतीति कृदिति कर्ताभिधीयते तत्र कर्तरि पुनः षष्ठीविधानाद् गुणभूतेऽपि भवति। एवं तु तद्धितनिवृत्तिर्न कृता स्यात् ॥ **भेदिकेति**। भिदेर्ण्यन्तात्पर्यायादिषु ण्वुच्। अत्र प्रयोजकः कर्ता ण्यर्थस्य प्राधान्यात् प्रधानम्। प्रयोज्यकर्ता तु प्रकृत्यर्थस्याप्राधान्यादप्रधानम्। तत्र प्रधानाप्रधानसंनिधौ प्रधानादेव षष्ठी स्याद् नाप्रधानात्, कृद्ग्रहणात् तु भवति ॥ अथ कर्तृभूतपूर्वा-

१ 'निर्वर्तते'। २ 'अकर्मकत्वसत्त्वे वा' 'अकर्मकत्वे'। ३ सामानाधिकरण्याभावादित्यर्थः। (र.ना.) ४ तादृशान्वयाभावश्चेत्यर्थः। (र. ना.) ५ षष्ठ्यप्रवृत्तिरूपो दोषो नेत्यर्थः। (र. ना.) ६ ननु कृतपूर्वी कटमित्यत्र न लोकेति षष्ठीनिषेधेनैव निर्वाहे पुनरपि कृतीति व्यर्थमेवेत्याशङ्क्याह–निषेधसूत्रेऽपीत्यादि। (र. ना.) ७ इति न निषेधप्रवृत्तिः कटं कृतपूर्वीत्यादौ, तण्डुलानां पाचकपुत्र इत्यादौ च षष्ठीप्रवृत्तिरिति पाठो युक्तो भाति कटं कृतमित्यस्य पूर्वमेवानभिधानाभिधानात्। तण्डुलानां पाचकपुत्र इत्यत्र च न लोकेत्यस्याप्राप्त्यभावात्। (र. ना.)

दिति कथमुच्यते । नहि प्रयोजकसन्निधौ प्रयोज्यस्य कर्तृत्वमपैति । गत्यादिसूत्रनियमात् कर्मत्वाभावात् कर्तृत्वस्यैवावस्थानात्? । एवं तर्हि प्राधान्यस्यात्र भूतपूर्वत्वं विवक्षितम् । प्रधानचरात् कर्तुरित्यर्थः । एतच्चविशेषापेक्षायां प्रयोजनमुक्तम् । यदा तृतीयावत् कर्तृमात्रे षष्ठीत्याश्रीयते तदा भिन्नशब्दवाच्ययोः प्रधानाप्रधानयोः कर्त्रोरेकशब्दवाच्यताया अभावाद्विरोधाभावात् षष्ठी सिध्यतीति नेदं कृद्ग्रहणस्य प्रयोजनम् । तद्धितनिवृत्तिस्तु प्रयोजनमेव ॥ ६५ ॥

( उद्द्योतः ) एतच्च विशेषापेक्षायामिति । अत्रैव प्रधानन्यायो न तृतीयादिविधाविति विशेषापेक्षायामित्यर्थः ॥ विरोधाभावे हेतुरेकशब्दवाच्यत्वाभावः । तदुपपादकं भिन्नशब्दवाच्ययोरित्यादीति बोध्यम् ॥ ६५ ॥

( ३३१ नियमसूत्रम् ॥ २ । ३ । ३ आ. ९ )

## ५२४ उभयप्राप्तौ कर्मणि ॥२।३।६६॥

( नियमप्रतिषेधाधिकरणम् )

( १५३९ प्रतिप्रसववार्तिकम् ॥ १ ॥ )

### ॥ * ॥ उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः ॥ * ॥

( भाष्यम् ) उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगे प्रतिषेधो न भवतीति वक्तव्यम् । भेदिका देवदत्तस्य काष्ठानाम्; चिकीर्षा विष्णुमित्रस्य कटस्य ॥

(प्रदीपः) उभय ॥ ६६ ॥ षष्ठ्याः प्रतिषेध इति । नियमेनानेन कर्तुः षष्ठी प्रतिषिध्यत इत्यभिप्रेत्यैतदुक्तम् ॥ भेदिकेति । पर्यायादौ ण्वुच् ॥

( उद्द्योतः ) उभयप्राप्तौ ॥ ६६ ॥ नियमेनानेनेति । नियमशास्त्राणां निषेधे तात्पर्यादन्यथानुवादवैयर्थ्यापत्तिरिति भावः ॥

( भाष्यम् ) अपर आह—

( १५४० वार्तिकन्यासान्तरम् ॥ २ ॥ )

### ॥ * ॥ अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम् ॥ * ॥

( १५४१ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ शेषे विभाषा ॥ * ॥

( भाष्यम् ) शोभना खलु पाणिनेः सूत्रस्य कृतिः, शोभना खलु पाणिनिना सूत्रस्य कृतिः । शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः, शोभना खलु दाक्षायणेन संग्रहस्य कृतिः ॥ उभय० ॥ ६६ ॥

( प्रदीपः ) शेषे विभाषेति । अकाकारव्यतिरिक्तस्त्रीप्रत्यय एव नान्यस्मिन्निति केचिदाहुः ॥ अपरे तु प्रत्ययमात्रेऽकाकारवर्जिते विकल्पमिच्छन्ति । शब्दानामनुशासनमाचार्यस्याचार्येणेति वा ॥ ६६ ॥

( उद्द्योतः ) स्त्रीप्रत्यय एवेति । भाष्ये अकाकारयोर्भेदिका चिकीर्षेति, कृतिरिति च स्त्रीप्रत्यये एवोदाहरणदानादिति तदाशयः ॥ अपरे त्विति । नोदाहरणमादरणीयमिति तद्भावः ॥६६॥

( ३३२ कारकषष्ठीसूत्रम् ॥ २ । ३ । ३ आ० १० )

## ५२५ क्तस्य च वर्तमाने ॥ २।३।६७ ॥

( विशेषविवक्षाधिकरणम् )

( १५४२ शेषपूरकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम् ॥ * ॥

( भाष्यम् ) क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानं कर्तव्यम् । छात्रस्य हसितम्, नटस्य भुक्तम्, मयूरस्य नृत्तम्, कोकिलस्य व्याहृतमिति ॥

( प्रदीपः ) क्तस्य च ॥ ६७ ॥ छात्रस्य हसितमिति । हासो हसितमिति नपुंसके भावे क्तः । तत्र च्छात्रस्य कर्तृत्वात् तृतीयाप्रसङ्गे षष्ठीविधानार्थं वचनम् ॥

( उद्द्योतः ) क्तस्य च ॥ ६७ ॥ नपुंसके भाव इति । इदं वार्तिकं लक्षणप्रतिपदोक्तपरिभाषया कालोदासीननपुंसके भावे क्त इतिसूत्रविहितक्तयोग एव । तेन भूते भावे क्तेन योगे तृतीयैवेति वार्तिकमतम् । यद्यपि शेषत्वविवक्षयापि सिद्धं तथाऽपि कर्तृत्वप्रकारके बोधे षष्ठ्यर्थमिदमिति वार्तिकाशयः । भाष्यकारस्तु तादृश एवार्थे साधुत्वमङ्गीकृत्य प्रत्याचख्यौ ॥

( तृतीयाक्षेपभाष्यम् )

[ ²तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् ॥ ]

( १५४३ अन्यथासिद्धिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ शेषविज्ञानात्सिद्धम् ॥ * ॥

( भाष्यम् ) शेषलक्षणात्र षष्ठी भविष्यति ॥ शेष इत्युच्यते । ³कः शेषः? । कर्मादीनामविवक्षा शेषः ॥ कथं पुनः सतो नामाविवक्षा स्यात्, यदा छात्रो हसति, नटो भुङ्क्ते, मयूरो नृत्यति, कोकिलो व्याहरति? ॥ सतोऽप्यविवक्षा भवति । तद्यथा—'अलोमिका एडका' 'अनुदरा कन्येति' । असतश्च विवक्षा—'समुद्रः कुण्डिका' 'विन्ध्यो वर्धितकमिति ॥'

---

१ कर्तृविशेषापेक्षायामित्यर्थः । प्रधानकर्त्रपेक्षायामिति यावत् । ( र. ना. )

२ अयं कोष्ठकान्तर्गतो भाष्यपाठ एकस्मिन् प्राचीनतरपुस्तक एवोपलभ्यते । ३ 'शेषश्च कः' ।

(प्रदीपः) शेषश्च क इति। कर्तृत्वसद्भावान्नास्ति शेषत्वमिति प्रश्नः॥ कर्मादीनामिति। सदपि च्छात्रस्य कर्तृत्वमविवक्षायाऽपाक्रियते। संबन्धित्वमात्रं ह्यत्र विवक्षितम्। छात्रस्य संबन्धि हसितमित्यर्थः॥

(आक्षेपभाष्यम्)

यद्येवम्, उत्तरत्र चातुःशब्द्यं प्राप्नोति—इदमहेः सृप्तम्, इहाहिना सृप्तम्, इहाहिः सृप्तः, इहाहेः सृप्तम् ग्रामस्य पार्श्वे ग्रामस्य मध्ये इति॥

(प्रदीपः) उत्तरत्रेति। अधिकरणवाचिनश्चेत्यत्र॥ इदमिति। अत्राधिकरणे क्तः॥ तेनाभिहितमधिकरणमिति इदंशब्दात्प्रथमा कृता, अहिशब्दात्त्वधिकरणवाचिनश्चेति षष्ठी॥ इहाहिना सृप्तमिति। अत्र भावे क्तः॥ इहाहिः सृप्त इति। अत्र कर्तरि क्तः॥ इहाहेः सृप्तमिति। भाव एव क्तः। तत्र शेषविवक्षायां षष्ठी स्यादिति चोद्यम्॥

(उद्द्योतः) भाष्ये—यद्येवमिति। एवं शेषत्वविवक्षया षष्ठ्यङ्गीकारे॥ अधिकरणवाचिनश्चेत्यत्रेति। एतत्सूत्रोदाहरणविषयीभूतगत्यर्थे इत्यर्थः। तत्र हि क्तोऽधिकरणे च ध्रौव्यगति इति विशेषविधानान्नपुंसके भावे क्त इत्यस्याप्रवृत्तिरेवेति वार्तिकमते वार्तिकेन षष्ठी न प्राप्नोति। शेषत्वविवक्षायाश्च भावविषयेऽभाव एवेति वार्तिकमते त्रैशब्द्यम्। प्रत्याख्यातृमते च शेषे षष्ठी स्यादिति चातुःशब्द्यमित्यर्थः। तदाह—तत्र शेषेति। कर्माविवक्षयाऽकर्मकत्वे इमानि चत्वारि रूपाणि, सकर्मकत्वे तु अहिना सृप्तो ग्राम इति पञ्चममपि बोध्यमिति केचित्॥

(इष्टापत्तिभाष्यम्)

इष्यत एव चातुःशब्द्यम्॥ क्तस्य च॥ ६७॥

(प्रदीपः) इष्यत एवेति। परिहारः। ग्रामस्य पार्श्वे इति सप्तमीप्रयोगेण नायमधिकरणे क्तः कृतः, किं तर्हि भाव इति दर्शयति॥ ६७॥

(उद्द्योतः) सप्तमीप्रयोगेणेति। इहेति सप्तमीप्रयोगेणैवेदं दर्शितम्। इहपदार्थस्यैव चेदं विवरणं भाष्ये इति बोध्यम्॥ किं तर्हि भाव इति। इदमिहाहिः सृप्त इत्युदाहरणे कर्तरीत्यस्योपलक्षणम्॥ ६७॥

(३३३ कारकषष्ठीनिषेधसूत्रम् ॥२।३। ३ आ. ११)

## ५२७ न लोकाव्ययनिष्ठाखलर्थतृनाम्॥ २।३।६९॥

(इष्टोपपादकाधिकरणम्)

(१५४४ विशेषवार्तिकप्रथमखण्डम्॥ १॥)

॥ * ॥ लादेशे सल्लिङ्ग्रहणं किकिनोः प्रतिषेधार्थम्॥ * ॥

(भाष्यम्) लादेशे सल्लिङ्ग्रहणं कर्तव्यम्। सल्लिटोः प्रयोगे नेति वक्तव्यम्॥ किं प्रयोजनम्?। किकिनोः प्रतिषेधार्थम्। किकिनोरपि प्रयोगे प्रतिषेधो यथा स्यात्—पपिः सोमम्, ददिर्गाः॥

किं पुनः कारणं न सिध्यति?॥

(१५४५ साधकवार्तिकद्वितीयखण्डम्॥ २॥)

॥ * ॥ तयोरलादेशत्वात्॥ * ॥

(भाष्यम्) न हि तौ लादेशौ॥

(प्रदीपः) न लोका०॥ ६९॥ लादेश इति। लग्रहणमपनीय सल्लिङ्ग्रहणं कर्तव्यम्। तत्र सद्ग्रहणेन शतृशानचौ गृह्येते। लिङ्ग्रहणेन च कानच्क्वसू लिट्संज्ञाविधानात् किकिनौ च। लग्रहणे तु किकिनोरलादेशत्वाद्ग्रहणाप्रसङ्गः॥

(उद्द्योतः) न लोकाव्यय॥ ६९॥ अपनीयेति। सल्लिङ्ग्रहणे तस्य फलाभावादित्यर्थः। लग्रहणेनैव सत्कानच्क्वसूनां सिद्धत्वात्किं सल्लिङ्ग्रहणेनेत्यत आह—किकिनौ चेति। लेत्यस्य लादेशयोग इत्येवार्थः। लयोग इति तु न शङ्क्यम्। आदेशे लत्वस्यालिविधित्वेन स्थानिवत्त्वायोगात्॥

(आक्षेपभाष्यम्)

अथ तौ लादेशौ स्याताम्। स्यात्प्रतिषेधः?॥

(प्रदीपः) अथताविति। लिट्कार्यातिदेशाल्लादेशतुल्यावित्यर्थो विवक्षितः॥

(उद्द्योतः) लिट्कार्यातिदेशादिति। द्वित्वविधानेनैव सिद्धौ तद्वदतिदेशाल्लिडादेशतुल्यावित्यर्थ इति भावः॥

(समाधानभाष्यम्)

बाढं स्यात्॥

(प्रदीपः) परस्तु यथोक्तमभिप्रायमप्रतिपद्य लादेशत्वमेवानयोर्विप्रतिपन्नमिति मत्वाह—बाढं स्यादिति॥

(लादेशत्वसाधकभाष्यम्)

लादेशौ तर्हि भविष्यतः॥ कथम्?। "आदृगमहनजनः किकिनौ लिट् च" इति लिड्वदिति वक्ष्यामि॥

(प्रदीपः) वक्ष्यामीति। व्याख्यास्यामीत्यर्थः॥

(उद्द्योतः) व्याख्यास्यामीति। संज्ञां न व्याख्यास्यामि किं त्वतिदेशं व्याख्यास्यामीत्यर्थः॥

(आक्षेपभाष्यम्)

स तर्हि वतिनिर्देशः कर्तव्यः। नह्यन्तरेण वतिमतिदेशो गम्यते॥

(प्रदीपः) परस्त्वपूर्वो वतिनिर्देशः कर्तव्यत्वेनानेन चोदित इति मत्वाह—स तर्हीति। विशेषातिदेशे च सामान्यातिदेशः प्रवर्तत एव। विशेषस्य सामान्याव्यभिचारात्। तेन लमात्रनिबन्धनः षष्ठीप्रतिषेधः किकिनोः प्रवर्तते तदत्र लिट्संज्ञा किकिनोर्विधीयत इति मत्वा वार्तिकारम्भः॥

१ त्वं विवक्षया'।

( उद्द्योतः ) ननु लिङ्वदतिदेशेऽपि कथं लमात्राश्रयषष्ठीनिषेधोऽत आह—विशेषेति । संज्ञाप्रकरणाभावादिति मत्वेत्युक्तम् ॥

( समाधानभाष्यम् )

अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा—'एष ब्रह्मदत्तः, अब्रह्मदत्तं ब्रह्मदत्त इत्याह, ते मन्यामहे—ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यलिटं लिडित्याह लिङ्वदिति ज्ञास्यते ॥

( प्रदीपः ) कार्यातिदेशाश्रयेण तत्प्रत्याख्यानम् ॥

( १५४६ शेषपूरकवार्तिकम् ॥ ३ ॥ )

[॥ * ॥ उकारप्रयोगे न ॥ * ॥]

( भाष्यम् ) उकारप्रयोगे नेति वक्तव्यम् । कटं चिकीर्षुः, ओदनं बुभुक्षुः ॥

( प्रदीपः ) उकारप्रयोग इति । उकारान्तप्रत्ययप्रयोगे इत्यर्थः । उप्रत्ययोपि चान्तवद्भावाद् गृह्यते ॥

( उद्द्योतः ) भाष्ये—उकारेति । कारप्रयोगेण वर्णग्रहणमिति ध्वनितम् । तत्फलमाह—उकारान्तेति । शब्दरूपं विशेष्यमादाय तदन्तविधिः । स च प्रत्यय एव साहचर्यादिति भावः ॥ तेन कन्यामलङ्करिष्णुरित्यादि सिद्धम् । प्रत्यया[2]प्रत्यययोरिति तु वर्णग्रहणे न प्रवर्तत इति बोध्यम् ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । उकारोप्यत्र निर्दिश्यते ॥ कथम् ? । प्रश्लिष्टनिर्देशोयम्—उ उक ऊक, लऊक लोकेति ॥

( प्रदीपः ) उकारोपीति । उश्चोकश्चेति द्वयोर्द्वन्द्वः पूर्वं क्रियते ततोन्येषाम् । अन्यथा लवुकेति स्यात् ॥

( १५४७ प्रतिप्रसववार्तिकम् ॥ ४ ॥ )

॥ * ॥ उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः ॥ * ॥

( भाष्यम् ) उकप्रतिषेधे कमेर्भाषायां प्रतिषेधो न भवतीति वक्तव्यम् । दास्याः कामुकः, वृषल्याः कामुकः ॥

( १५४८ प्रतिप्रसववार्तिकम् ॥ ५ ॥ )

॥ * ॥ अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ॥ * ॥

( भाष्यम् ) अव्ययप्रतिषेधे तोसुन्कसुनोः प्रतिषेधो न भवतीति वक्तव्यम् । पुरा सूर्यस्योदेतोराधेयः । पुरा वत्सानामपाकर्तोः । पुरा क्रूरस्य विसृपो विरप्शिन् ॥

( १५४९ शेषपूरकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ शानंश्चानश्शतृणामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) शानश्चानश्शतृणामुपसंख्यानं कर्तव्यम् । सोमं पवमानः । नटमाघ्नानः । अधीयन् पारायणम् । लप्रयोगे नेति निषेधो न प्राप्नोति ॥

( प्रदीपः ) लप्रयोगे नेति । एतेषां च अलादेशत्वात् ॥ ६९ ॥

( उद्द्योतः ) एतेषां चेति । पूङ्यजोः शानन्नित्यादीनामित्यर्थः ॥

( वार्तिकवैयर्थ्यभाष्यम् )

मा भूदेवम् । तृन्नित्येवं भविष्यति ॥ कथम् ? । तृन्निति नेदं प्रत्ययग्रहणम् ॥ किं तर्हि ? । प्रत्याहारग्रहणम् ॥ क्व संनिविष्टानां प्रत्याहारः ? । "लटः शतृ-" इत्यतः प्रभृत्यातृनो नकारात् ॥

( आक्षेपभाष्यम् )

यदि प्रत्याहारग्रहणम्, 'चोरस्य द्विषन्' अत्रापि प्राप्नोति ॥

( १५५० समाधानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ द्विषः शतुर्वावचनम् ॥ * ॥

( भाष्यम् ) द्विषःशतुर्वेति वक्तव्यम् ॥ तच्चावश्यं वक्तव्यम् । प्रत्ययग्रहणं सति प्रतिषेधार्थम् । प्रत्याहारग्रहणे सति तदेव विध्यर्थं भविष्यति ॥ न लोकाव्य ॥ ६९ ॥

( उद्द्योतः ) भाष्ये—प्रतिषेधार्थमिति । षष्ठ्याः सिद्धत्वेन प्रतिषेधमात्रफलकं वार्तिकमिति भावः ॥ तदेव विध्यर्थमिति ॥ नित्यं प्रतिषेधे प्राप्ते पक्षे षष्ठीविध्यर्थमित्यर्थः ॥ ६९ ॥

( ३३४ कारकषष्ठीनिषेधसूत्रम् ॥ २ । ३ । ३ आ. १२ )

## ५२८ अकेनोर्भविष्यदाधमर्ण्ययोः ॥ २।३।७० ॥

( अर्थप्रत्यययोरन्वयदर्शकाधिकरणम् )

( १५५१ वार्तिकम् ॥ १ ॥ )

॥ * ॥ अकस्य भविष्यति ॥ * ॥

( भाष्यम् ) अकस्य भविष्यतीति वक्तव्यम् । यवान् लावको व्रजति । ओदनं भोजको व्रजति ॥

( प्रदीपः ) अकेनोः ॥ ७० ॥ यथासंख्यापवादार्थं वचनम्—अकस्येति । स्वरितत्वाप्रतिज्ञानाद[3]थासंख्याभावव्याख्यानं चेदमित्याहुः । अकस्य त्वाधमर्ण्ये नास्ति विधानमिति भविष्यदधिकारविहितस्यैव तस्य ग्रहणम् ॥

---

१ अन्तवद् भावेनोकारान्तत्वादित्यर्थः । ( र. ना. ) २ ननु साहचर्यादुकारान्तस्य प्रत्ययस्यैव ग्रहणमिति कथमुच्यते, प्रत्ययाप्रत्यययोरिति परिभाषया तत्सिद्धेरत आह—प्रत्ययाप्रत्यययोरिति । ( र.ना. ) ३ प्राप्त एव यथासंख्याऽभावो व्याख्यायते इति भावः । ( र. ना. )

( उद्द्योतः ) अकेनो ॥ ७० ॥ स्वरितत्वेति । यथासंख्यसूत्रे स्वरितेनेत्यनुवृत्तेरिति भावः । भविष्यदधिकारेति । इदं च तुमुन्ण्वुलावित्यत्र भाष्ये स्पष्टम् ॥ भविष्यदर्थकस्यापि ग्रहणमिति पक्षान्तरमपि तत्र स्पष्टम् ॥ ७० ॥

( १५५२ वार्तिकम् ॥ २ ॥ )

**॥ * ॥ इन आधमर्ण्ये च ॥ * ॥**

( भाष्यम् ) तत इन आधमर्ण्ये भविष्यति चेति वक्तव्यम् । शतं दायी सहस्रं दायी ग्रामं गमी ॥ अके ॥ ७० ॥

( प्रदीपः ) शतंदायीति । आवश्यकाधमर्ण्ययोर्णिनिरिति णिनिः ॥ ग्रामंगमीति । भविष्यति गम्यादय इति वचनाद्भविष्यति गमेरिनिः । गत्यर्थकर्मणीत्यत्र चतुर्थी वेत्येव पक्षे द्वितीयायां सिद्धायां द्वितीयाग्रहणमपवादविषयेपि विधानार्थं ग्रामं गन्तेति यत् कैश्चिदुक्तं तद्भाष्यकारस्य नाभिमतमिति ग्रामंगमीत्युदाहरणोपपत्तिः ॥ ७० ॥

---

( ३३५ षष्ठीविकल्पनसूत्रम् ॥ २ । ३ । ३ आ. १३ )

## ५२९ कृत्यानां कर्तरि वा ॥ २।३।७१ ॥

( योगविभागाधिकरणम् )

( आक्षेपभाष्यम् )

कर्तृग्रहणं किमर्थम् ? ॥

( समाधानभाष्यम् )

कर्मणि मा भूदिति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । भावकर्मणोः कृत्या विधीयन्ते । तत्र कृत्यैरभिहितत्वात्कर्मणि षष्ठी न भविष्यति ॥

( उद्द्योतः ) कृत्यानाम् ॥ ७१ ॥ भाष्ये—भावकर्मणोरिति । तत्र भावेऽकर्मकाद्विधानेन कर्मणोऽभाव एव, कर्मणि तु सकर्मकाद्विधानेऽपि तस्याभिधानमेवेति भावः । नच कर्तव्यपूर्वी कटमित्यादौ अविवक्षितकर्मतया भावे तव्ये पश्चात्कर्मसन्निधाने भावेपि संभव इति वाच्यम् । भाष्यप्रामाण्येन कृत्यविषये तथा विवक्षाया अभावादित्याहुः ॥

( समाधानभाष्यम् )

अत उत्तरं पठति—

( १५५३ वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ भव्यादीनां कर्मणोनभिधानात्कृत्यानां कर्तृग्रहणम् ॥ * ॥**

( भाष्यम् ) भव्यादीनां कर्म कृत्यैरनभिहितं 'गेयो माणवकः साम्नाम्' भव्यादीनां कर्मणोनभिधानात्कृत्यानां कर्तृग्रहणं क्रियते ॥

( उद्द्योतः ) भव्यादीनामिति । तत्र हि कर्तरि कृत्यः । गेयो माणवकः साम्नामित्यत्र कर्मणि विकल्पाभावायेत्यर्थः ॥

( आक्षेपभाष्यम् )

किमुच्यते—भव्यादीनां कर्म कृत्यैरनभिहितमिति, नेहाप्यनभिहितं भवति—आक्रष्टव्या ग्रामं शाखेति ॥

( प्रदीपः ) कृत्यानाम् ॥ ७१ ॥ नेहापीति । काकानञ्प्रयोगादिहाप्यनभिधानमित्यर्थः ॥ आक्रष्टव्येति । कृषेर्द्विकर्मकत्वात् प्रधानकर्मणः कृत्येनाभिधानं न त्वप्रधानकर्मण इति तन्निवृत्त्यर्थमपि कर्तृग्रहणं कस्मान्न भवतीति भावः ॥

( उद्द्योतः ) तन्निवृत्त्यर्थमपीति । कृत्यानां प्रयोगे कर्तर्येव षष्ठी न कर्मणि सा च वेति कस्मान्न व्याख्यायत इत्यर्थः । यद्यप्येवं व्याख्याने गेयो माणवकः साम्नामिति न सिध्यति, तथापि उभयप्राप्ताविल्यनुवर्त्यं तत्र दोषाभाव इति भावः ॥

( समाधानभाष्यम् )

एवं तर्हि योगविभागः करिष्यते—"कृत्यानाम्" कृत्यानां प्रयोगे षष्ठी न भवतीति । किमुदाहरणम् ? । ग्राममाक्रष्टव्या शाखा ॥ ततः "कर्तरि वा" इति ॥

( प्रदीपः ) एवं तर्हीति । कृत्यानामित्येतावत् सूत्रं क्रियते । तत्र चोभयप्राप्ताविति नेति च वर्तते । तेन कर्तृकर्मणोर्द्वयोरप्युभयप्राप्तौ कृत्ये षष्ठी प्रतिषिध्यते ॥

( उद्द्योतः ) अत्र पक्षे विधिसम्भवे नियमानुपपत्तिमनुभयप्राप्तिविषये भवतः कटः कर्तव्यो भवता कटः कर्तव्य इत्यादावसिद्धिं च मनसि निधाय भाष्ये उक्तम् एवं तर्हीति ॥ कर्तृकर्मणोर्द्वयोरपीति । विकल्पस्त्वनुभयप्राप्तिविषयः आक्रष्टव्या ग्रामं शाखा देवदत्तेनेत्यस्यैवेष्टेरित्याशयः ॥ वृत्तिस्वरसोप्येवमेव । भाष्ये ग्राममाक्रष्टव्येत्यस्य देवदत्तेनेति शेषः ॥ उभयप्राप्तावित्यस्य संबन्धाऽज्ञानेन वा तत्रेदमुदाहृतम् ॥ देवदत्तस्य देवदत्तेन वा कर्तव्यमिति कर्तरि चेत्यस्योदाहरणम् ॥

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—गेयो माणवकः साम्नामिति ॥

( उद्द्योतः ) इहापि तर्हि प्राप्नोतीति । निषेध इति शेषः ॥

( समाधानभाष्यम् )

उभयप्राप्ताविति वर्तते ॥

( समाधानबाधकभाष्यम् )

ननु चोभयप्राप्तिरेवैषा । गेयो माणवकः साम्नामिति च गेयानि माणवकेन सामानीति च भवति ॥

( प्रदीपः ) उभयप्राप्तिरेवैषेति । पर्यायेणेति मन्यते ॥

(उद्योतः) ननु चोभयप्राप्तिरिति ॥ उभयप्राप्ताविति तत्पुरुष इति भावः । बहुव्रीहिरित्युत्तरम् ॥ पर्यायेणेति । कर्तरि भव्यादीनां विकल्पेन विधानादित्यर्थः ॥

(समाधानसाधकभाष्यम्)

**उभयप्राप्तिर्नाम सा भवति, यत्रोभयस्य युगपत्प्रसङ्गः । अत्र च यदा कर्मणि न तदा कर्तरि । यदा कर्तरि न तदा कर्मणीति ॥ कृत्यानाम् ॥ ७१ ॥**

**इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥ पादश्च समाप्तः ॥**

(प्रदीपः) उभयप्राप्तिर्नामेति । बहुव्रीहिसमासाश्रयणाद्यत्र कृत्ये युगपदुभयोः प्राप्तिस्तत्रैव षष्ठी निषिध्यत इत्यर्थः ॥ ७१ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयाध्यायस्य तृतीये पादे तृतीयमाह्निकम् । समाप्तश्चायं तृतीयः पादः ॥

(उद्योतः) बहुव्रीहीति । कदाचित्कर्मणि कृत्यसत्त्वेन कृत्यप्रत्ययभेदादेकत्र कृत्ये युगपदुभयप्राप्तिर्नास्तीति भावः ॥ अनेन भाष्येण यत्रोभयोः प्रयोगस्तत्रैवोभयप्राप्तिरिति सूचितम् ॥ ७१ ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकं, पादश्च समाप्तः ॥

---

| | | अस्मिन्पादे सूत्रसंख्या— | | | | योग |
|---|---|---|---|---|---|---|
| | प्राक्तनयोगः | प्रथमाह्निके | द्वितीयाह्निके | तृतीयाह्निके | योगः | आदितः |
| व्याख्यातसूत्राणि | २९२ | १३ | १७ | १३ | ४३ | ३३५ |
| अव्याख्यातसूत्राणि | १६६ | ४ | ११ | १५ | ३० | १९६ |
| समुदितसूत्राणि | ४५८ | १७ | २८ | २८ | ७३ | ५३१ |
| वार्तिकानि | १४५८ | ३३ | २२ | ४० | ९५ | १५५३ |

# द्वितीयाध्यायस्य चतुर्थपादे

## प्रथममाह्निकम् ॥

( एकवद्भावप्रकरणम् )

( ३३६ अतिदेशसूत्रम् ॥ २ । ४ । १ आ. १ सू. )

## ५३२ द्विगुरेकवचनम् ॥ २ । ४ । १ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( १५५४ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानम् ॥ * ॥**

( भाष्यम् ) प्रत्यधिकरणं वचनोत्पत्तिर्भवति ॥ किमिदं प्रत्यधिकरणमिति ? । अधिकरणमधिकरणं प्रति प्रत्यधिकरणम् ॥ संख्यासामानाधिकरण्याच्च । संख्यया बह्वर्थया चास्य सामानाधिकरण्यम् । प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च "बहुषु बहुवचनम्" इति बहुवचनं प्राप्नोति । इष्यते चैकवचनं स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति द्विगोरेकवचनविधानम् । एवमर्थमिदमुच्यते ॥

( प्रदीपः ) द्विगेरुकवचनम् ॥१॥ किमर्थमिति । इह समाहारद्विगोरेव ग्रहणमिष्यते । समाहरणं समाहारः । स चैक एवेति सिद्धमेकवचनमिति प्रश्नः ॥ प्रत्यधिकरणमिति । समाह्रियत इति समाहार इति यदा कर्मणि घञ् तदानेकस्यार्थस्य समाह्रियमाणस्य वाचको द्विगुरिति एकत्वाभावादप्राप्तमेकवचनं विधीयत इत्यर्थः । अधिकरणशब्देन द्रव्यमुच्यते । यत्संख्यद्रव्याभिधानं तत्संख्याश्रयं[1] वचनमुत्पद्यत इत्यर्थः । पञ्चपूलीशब्देनात्र पञ्च पूलाः समाह्रियमाणा उच्यन्ते । ततो बहुवचनप्रसङ्ग एकवचनविधानम् ॥ संख्यासामानाधिकरण्याच्चेति । एतेन कर्मसाधनत्वं समाहारशब्दस्य दर्शयति । भावसाधने हि वैयधिकरण्यं पञ्चानां पूलानां समाहार इति । संख्याशब्देन संख्यावाची शब्द उच्यते ॥ संख्यया बह्वर्थयेति । एकत्वनिरासपरमेतत् । तेन द्व्यर्थापि गृह्यते संख्या द्विग्रामीति ॥

( उद्द्योतः ) द्विगुरे ॥ १ ॥ तद्धितार्थेत्यत्र विहितस्य सर्वस्य द्विगुत्वात्समाहारद्विगोरेव ग्रहणे मानाभावः तन्मात्रग्रहणेऽपि समाहारशब्दस्य कर्मसाधनत्वे बहुवचनप्राप्तेर्वक्ष्यमाणमद्रीत्या भावसाधनत्वेऽपि तत्प्राप्तेः प्रश्नानुपपत्तिरत आह—इहेति । कर्मसाधनस्य ग्रहणं तु तत्रैव भाष्ये निराकृतम् ॥ द्रव्यमिति । गुणादीनामाधारत्वादित्यर्थः ॥ एकद्रव्यवाचकत्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वादाह—संख्याशब्देनेति ॥ उच्यते इति । श्रुत एव द्विगुपदेन सामानाधिकरण्यं, पारिभाषिकग्रहणे हि द्विगोरिति पञ्चमी स्यादिति भावः ॥ वचनमिति च सामान्ये नपुंसकं बोध्यम् ॥

( काकुभाष्यम् )

**अस्ति प्रयोजनमेतत् । किं तर्हीति ॥**

( अनुप्रयोगेऽप्येकवचनसाधनाधिकरणम् )

( १५५५ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्रानुप्रयोगस्यैकवचनाभावोऽद्विगुत्वात् ॥ * ॥**

( भाष्यम् ) तत्रानुप्रयोगस्यैकवचनं न प्राप्नोति 'पञ्चपूलीयम्' इति ॥ किं कारणम्? । अद्विगुत्वात् । "द्विगुरेकवचनम्" इत्युच्यते । न चात्रानुप्रयोगो द्विगुसंज्ञः ॥

( प्रदीपः ) तत्रानुप्रयोगस्येति । द्विगुः समास एकवचनं प्रत्ययं प्रतिपद्यते इति पारिभाषिकैकवचनाश्रयेण दोषोपन्यासः ॥

( १५५६ समाधानाय न्यासान्तरवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सिद्धं तु द्विग्वर्थस्यैकवद्वचनात् ॥ * ॥**

( भाष्यम् ) सिद्धमेतत् ॥ कथम्? । द्विग्वर्थ एकवद्भवतीति वक्तव्यम् ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ॥**

( समाधानभाष्यम् )

न वक्तव्यम् । नेदं पारिभाषिकस्य वचनस्य ग्रहणम् । किं तर्हि ? । अन्वर्थग्रहणम्—उच्यते वचनम्, एकस्यार्थस्य वचनमेकवचनमिति ॥

( प्रदीपः ) उच्यते वचनमिति । कृत्यल्युटो बहुलमिति कर्मणि ल्युट् ॥ एकस्यार्थस्येति । वाच्यवाचकसंबन्धे षष्ठी । एकस्यार्थस्य वाचको द्विगुः समास उच्चार्यत इत्यर्थः ॥ तत्र सामर्थ्यादयमतिदेश उपपद्यते । यो ह्यनेकस्यार्थस्य वाचकः स कथमेकस्य वाचकस्तस्मादेकत्वाश्रयकार्यप्राप्तये द्विग्वर्थस्यैकवद्भावो विधीयते । ततश्च तस्मिन्नर्थे प्रयुज्यमानस्याद्विगोरप्येकवचनं सिध्यति ॥

( उद्द्योतः ) द्विग्वर्थस्येति । एवं चानुप्रयोगेऽपि सिद्धिरिति भावः ॥

---

१ तत्संख्यानिमित्तकमित्यर्थः । ( र. ना. ) २ समाहारशब्दस्य कर्मसाधनत्वया द्विगोः संख्यावाचिशब्दसामानाधिकरण्येन बहुवचनप्रसङ्गे एकवद्भावातिदेश इति स्वीकारादेवेत्यर्थः । सामानाधिकरण्यमित्यस्य एकवचनपदस्येति शेषः । पारिभाषिकग्रहणे, पारिभाषिकैकवचनपदार्थग्रहणे इत्यर्थः । ( र. ना. )

( एकशेषबहुवचनसाधनाधिकरणम् )

( १५५७ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ एकशेषप्रतिषेधश्च ॥ * ॥

**( भाष्यम् ) एकशेषे च प्रतिषेधो वक्तव्यः । पञ्चपूली च पञ्चपूली च पञ्चपूली च पञ्चपूल्यः ॥**

( प्रदीपः ) **एकशेषप्रतिषेधश्चेति** । एकशेषविषय एकवद्भाव उपचारादेकशेषशब्देनोक्तः ॥ **पञ्चपूल्य इति** । अत्रैकशेषे कृतेपि द्विगुत्वात्तदर्थस्यैकवद्भावः प्राप्तः प्रतिषिध्यते ॥

(उद्द्योतः) षष्ठीसमासेऽर्थानुपपत्तिमाशङ्क्याह—**एकशेषविषय इति** ॥ एकशेषे चेति तु भाष्ये विषयसप्तमी ॥ भाष्यस्वारस्यात्तु विषयसप्तम्यन्तेन सुपसुपेति समास इति लभ्यते ॥

( १५५८ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ न वान्यस्यानेकत्वात् ॥ * ॥

**( भाष्यम् ) न वा वक्तव्यः । किं कारणम् ? । अन्यस्यानेकत्वात् । नैतद्द्विगोरनेकत्वम् ॥ कस्य तर्हि ? । द्विग्वर्थसमुदायस्य ॥**

( प्रदीपः ) **नवेति** । प्रथमस्य द्विग्वर्थस्यानेकसंख्यायुक्तस्यानेनैकवद्भावः कृतः । तत एकशेषे कृते द्विग्वर्थसमुदायस्याद्विग्वर्थत्वाद् बहिरङ्गत्वाच्च प्राथमकल्पिकेन्तरङ्गे द्विग्वर्थे चरितार्थत्वाच्चैकवद्भावो न प्रवर्तत इत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**नैतत् द्विगोरिति** ॥ द्विग्वर्थस्येत्यर्थः ॥ **समुदायस्येति** । उद्भूतावयवभेदस्येत्यर्थः । यद्यपि शिष्यमाणं लुप्यमानार्थाभिधायीति अयमपि द्विग्वर्थ एव तथापि न दोष इत्याह—**बहिरङ्गत्वाच्चेति** ॥ बहुवचनसमभिव्याहारेणैवास्य प्रतीत्या जातसंस्कारानिवृत्तिरित्याशयमन्ये ॥

( तद्धितार्थद्विगौ एकवद्भावपरिहाराधिकरणम् )

( १५५९ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ समाहारग्रहणं च तद्धितार्थप्रतिषेधार्थम् ॥ * ॥

**( भाष्यम् ) समाहारग्रहणं च कर्तव्यम् । किं प्रयोजनम् ? । तद्धितार्थप्रतिषेधार्थम् । तद्धितार्थे यो द्विगुस्तस्य मा भूत्[1]—पञ्चकपालौ पञ्चकपाला इति ॥**

( प्रदीपः ) **पञ्चकपालाविति** । संस्कृतार्थे विहितस्याणो द्विगोर्लुगनपत्य इति लुक् ॥

( समाधानाय प्रत्याक्षेपभाष्यम् )

**किं पुनरयं पञ्चकपालशब्दः प्रत्येकं परिसमाप्यते, आहोस्वित्समुदाये वर्तते ? ॥**

( प्रदीपः ) **किं पुनरिति** । यदि तावदेकस्मिन् संस्कृते प्रत्ययमुत्पाद्य लुकि कृते एकशेषः क्रियते तदा पञ्चपूल्य इत्यनेन पञ्चकपाला इति समानम् ॥

( उद्द्योतः ) पञ्चकपालशब्दस्य प्रत्येकं समुदाये वा परिसमाप्तौ तद्धितार्थे द्विगुत्वानपायात्किं विचारेणेत्यत आह—**यदि तावदिति** ॥ **समानमिति** । अयमेव पुरस्तादेव चोदितं परिहृतं चेति भाष्यस्यार्थः ॥

( संदेहबीजभाष्यम् )

**किं चातः ? ॥**

( प्रथमपक्षाङ्गीकारेविशेषप्रदर्शनभाष्यम् )

**यदितावत्प्रत्येकं परिसमाप्यते, पुरस्तादेव चोदितं परिहृतं च ॥**

( द्वितीयपक्षाङ्गीकारभाष्यम् )

**अथ समुदाये वर्तते ॥**

( १५६० द्वितीयपक्षे विशेषप्रदर्शनवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ न[2] वा समाहारैकत्वात् ॥ * ॥

**( भाष्यम् ) न वैतत् समाहारैकत्वादपि सिध्यति ॥**

( प्रदीपः ) अथ प्रथममेव पञ्चसु कपालेषु संस्कृता इति बहुत्वसंख्यायुक्ता अर्था विवक्ष्यन्ते तदा तेषां समाह्रियमाणत्वात् समाहाररूपतास्तीति क्रियमाणेपि समाहारग्रहणे निवृत्तिर्न सिध्यतीत्यर्थः ॥

( उद्द्योतः ) **समाह्रियमाणत्वादिति** । समुदायरूपत्वादित्यर्थः ॥ समुदायसमाहारौ च पर्यायाविति भावः । **निवृत्तिर्न सिध्यतीति** । समाहारानुवादेनैकत्वविधानादप्येतन्न सिध्यतीति भाष्याक्षरार्थः ॥

( प्रथमपक्षाङ्गीकारभाष्यम् )

**एवं तर्हि प्रत्येकं परिसमाप्यते ॥ पुरस्तादेव चोदितं परिहृतं च ॥**

( प्रदीपः ) **एवं तर्हीति** । नहि द्वयोर्बहूनां वा पुरोडाशानां पञ्चसु कपालेषु संस्कारः क्रियते । अपि तु प्रत्येकमिति भावः ॥

( उद्द्योतः ) प्रत्येकमेव समाप्तिरित्यत्र विनिगमकमाह—**नहीति** । एवं च न वा समाहारैकत्वादिति निष्फलम् । किं च समासे संख्याविशेषानवगतेः समुदायमादाय बहुवचनोपपत्तिरपि नेति भाष्याशयः ॥

( व्याख्यान्तरभाष्यम् )

**अपर आह—**

***न वा समाहारैकत्वात्* ॥**

**न वा योगारम्भेणैवार्थः । किं कारणम् ? । समाहारैकत्वादेकवचनं भविष्यति ॥ द्विगुरेक ॥ १ ॥**

[1] 'माभूदिति' ।

[2] बहुषु पुस्तकेषु तु 'न वा समाहारैकत्वादपि सिध्यति' इत्येवमेव पाठ उपलभ्यते ।

( प्रदीपः ) अपर आहेति । न वा समाहारैकत्वादि-त्येतद्वार्तिकं सूत्रप्रत्याख्यानार्थमित्येतद्व्याचष्टे ॥ अयं भावः— तिरोहितावयवभेदः समूहरूपः समाहारो द्विग्वर्थस्तस्यैकत्वाद्व-नयूथादिवत्सिद्धमेकवचनमिति नार्थः सूत्रेण । तस्मिंश्चासति समाहारग्रहणं न कर्तव्यम् । क्रियमाणे तु सूत्रे समाहारग्रहणं तद्धितार्थद्विगुव्यावृत्त्यर्थं कर्तव्यमेव । तेन समाहारेण व्यपदिष्टस्य द्विगोर्ग्रहणं भवति । यस्तु तद्धितार्थे न तस्य भवति । तेन पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटा इत्यादौ द्विग्वर्थस्यैकवद्भा-वाभावः । यदा बहूनां पटानां पञ्चगुत्वं न तु प्रत्येकं तदैक-शेषस्यायमविषयः । एतदेव मन्यमानेन भाष्यकारेण पूर्वव्या-ख्यानेऽसमाश्वसता प्रत्याख्यानत्वेन वार्तिकं व्याख्यातम् । उत्तरपदे तु यो द्विगुस्तदर्थस्यार्थान्तरे गुणभावादख्यातत्र्यात्स-त्यपि प्रातिपदिकत्वे ततः प्रत्ययानुत्पादादेकवद्भावातिदेशः प्रयोजनाभावाच्च प्रवर्तते ॥ १ ॥

( उद्योतः ) तिरोहितेति । लक्ष्यानुरोधादिति भावः । अत्र पक्षे द्रव्यानयनं तु नान्तरीयकत्वात्, द्रव्याकृत्योरभेदन्यायेन वा ॥ अवश्यं च भावसाधन एव समाहारशब्दस्तत्राश्रयणीयः । अन्यथा पञ्चखट्वीत्यादावनुपसर्जनत्वाद् ह्रस्वो न स्यात् । एवं च न्यायसिद्धार्थानुवादकमेवेदं सूत्रमिति बोध्यम् ॥ समुदाये शब्दस-माप्तौ पञ्चगवः पटा इत्यादौ तद्धितार्थेऽपि समाहारसंभवात्कथं तेनापि तद्व्यावृत्तिरत आह—समाहारेण व्यपदिष्टस्येति ॥ प्रतिपदोक्तपरिभाषया तद्धितार्थद्विगोश्च तत्त्वाभावादिति भावः ॥ पञ्चपूल्य इत्यनेन नेदं तुल्यमित्याह—यदा बहूनामिति ॥ अस-माश्वसतेति । वस्तुतः समासेन्तर्वर्तिविभक्त्यर्थसंख्यानवगमेन सर्वत्र समासादेकशेषेणैव बहुवचनादीति भाष्याशयः ॥ अतएवैवं तर्हीत्यादि परिहृतं चेत्यन्तं भाष्यं संगच्छते ॥ अन्यथा तदसं-गतिरित्यन्ये ॥ उत्तरपदद्विगुस्तु न समाहारग्रहणस्य व्यावर्त्य इत्याह—उत्तरपदत्वे त्विति ॥ सत्यपि प्रातिपदिकत्वे इति । तत्त्वे सत्यपि स्वगतसंख्याद्यभावात्र ततः प्रत्यय इति भावः ॥ पञ्च-गवप्रिय इत्यादौ प्रत्ययान्तत्वाभावाच्च न प्रातिपदिकत्वमित्यपिना सूचितम् ॥ १ ॥

———

( ३३७ एकवद्भावसूत्रम् ॥ २ । ४ । १ आ. २ )

## ५३३ द्वन्द्वश्च प्राणितूर्यसेनाङ्गा-नाम् ॥ २ । ४ । २ ॥

( अनिष्टापत्तिवारणाधिकरणम् )

( १५६१ शेषपूर्तिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्राणितूर्यसेनाङ्गानां तत्पूर्व-पदोत्तरपदग्रहणम् ॥ * ॥

( भाष्यम् ) प्राणितूर्यसेनाङ्गानां तत्पूर्वपदोत्तरप-दग्रहणं कर्तव्यम् । प्राण्यङ्गानां प्राण्यङ्गैरिति वक्त-व्यम् । तूर्याङ्गानां तूर्याङ्गैरिति वक्तव्यम् । सेना-ङ्गानां सेनाङ्गैरिति वक्तव्यम् ॥ किं प्रयोजनम् ? । व्यतिकरो मा भूदिति ॥

( प्रदीपः ) द्वन्द्वश्च ॥ २ ॥ तत्पूर्वपदोत्तरपदग्रहण-मिति । यदङ्गवाचि पूर्वपदं तदङ्गवाच्येव यद्युत्तरपदं भवति तथा सत्येकवद्भावो नान्यथेत्यर्थः ॥ व्यतिकरो मा भूदिति पाणिमार्दङ्गिकाश्वारोहा इत्यादावेकवद्भावो मा भूदित्यर्थः ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् ॥

( १५६२ समाधानहेतुवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥

( भाष्यम् ) योगविभागः करिष्यते—"प्राण्यङ्गा-नाम्" । ततः—"तूर्याङ्गानाम्" । ततः "सेनाङ्गा-नाम्" इति ॥

( आक्षेपभाष्यम् )

स तर्हि योगविभागः कर्तव्यः ? ॥

( समाधानभाष्यम् )

न कर्तव्यः । प्रत्येकमङ्गशब्दः परिसमाप्यते ॥ द्वन्द्वश्च ॥ २ ॥

( प्रदीपः ) प्रत्येकमिति । बहुवचनान्तोऽङ्गशब्दः प्रत्येक-मभिसंबध्यत इति भावः ॥ पूर्वपक्षेपि प्रत्येकमेवाङ्गशब्दस्य संबन्धः । स त्वन्यथा—प्राण्यङ्गतूर्याङ्गसेनाङ्गवाचिनां द्वन्द्वं एक-वदिति । नहि प्राणितूर्यसेनानामेकमङ्गं संभवतीति सामर्थ्यादेव प्रत्येकपरिसमाप्तिरङ्गशब्दस्य सिद्धा ॥ तस्मादन्यथा प्रत्येकं परि-समाप्तिर्बहुवचनान्तस्य सतः प्रतिपाद्यते । तेनास्माद् ग्रहणक-वाक्याल्लक्ष्यसंस्कारकं वाक्यत्रयमुपप्लवत इति संकरो न भवति ॥ २ ॥

( उद्योतः ) द्वन्द्वश्च ॥ २ ॥ पूर्वपक्षेपि प्रत्येकमङ्गशब्दसं-बन्धे युक्तिमाह—नहीति ॥ एवं च पूर्वपक्षात्सिद्धान्ते को विशेष इत्यत आह—तस्मादन्यथेति । 'अङ्गानाम्' इत्येवंरूपबहुवचना-न्तस्य सतः प्रत्येकं समाप्तिरित्यर्थः ॥ पूर्वपक्षे प्राण्यङ्गस्य तूर्याङ्गसे-त्यादिवचनव्यक्त्या व्यतिकरः शङ्कितः । सिद्धान्ते तु प्राण्यङ्गाना-मित्यादिबहुवचनान्तलक्ष्यसंस्कारकवाक्यत्रयलाभात् प्राण्यङ्गानां प्राण्यङ्गैरेव समास एकवद्भाव इति विशेष इति भावः ॥ केवलप्राति-पदिकस्य पदान्तरेणान्वयायोगाद्विभक्त्यन्तस्यैवान्वयो वाच्यः । तथा च श्रूयमाणविभक्तिं त्यक्त्वा विभक्त्यन्तरकल्पने गौरवाद्बहुवचनान्तस्यै-वाङ्गशब्दस्यान्वय इति तात्पर्यम् ॥ वाक्यत्रयमिति । बहुवचना-

१ प्रत्ययान्तत्वाच्चेति पाठो भाति । ( र. ना. )

२ यत्र सर्वेषामङ्गानां समागमस्तत्र माभूदित्यर्थः । ( र. ना. )

३ संग्राहकवाक्यादित्यर्थः । ( र. ना. )

४ प्राण्यङ्गानां द्वन्द्व इत्यादि रूपमित्यर्थः । ( र. ना. )

न्ताङ्गशब्दघटितमित्यर्थः ॥ अत्र तूर्याङ्गशब्देन वादका एव गृह्यन्ते, मृदङ्गशङ्खतूणवा इत्यल्पाच्तरमिति सूत्रे भाष्यप्रयोगात् । तत्साहचर्याच्च सेनाङ्गशब्देन रथाद्यारूढानामेव ग्रहणम् । संग्रामं हस्त्यश्वरथपदातिभिरिति येन विधिरिति सूत्रस्थभाष्यस्वरसाच्च ॥ फलसेनेत्यत्र तु सेनाशब्देन हस्तिरथादय एवेत्याहुः ॥ २ ॥

( ३३८ एकवद्भावसूत्रम् ॥ २ । ४ । १ आ. ३ )

## ५३४ अनुवादे चरणानाम् ॥ २।४।३ ॥

( प्रदीपः ) अनुवादे ॥ ३ ॥ यदा प्रतिपत्ता प्रमाणान्तरावगतमप्यर्थं कार्यान्तरार्थं प्रयोक्त्रा प्रतिपाद्यते तदानुवादो भवति ॥ ३ ॥

( उद्द्योतः ) अनुवादे ॥ ३ ॥ प्रतिपत्ता श्रोता ॥

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—नन्दन्तु कठकालापाः, वर्धन्तां कठकौथुमाः ? ॥**

( १५६३ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ स्थेणोः ॥ * ॥**

( व्याख्याभाष्यम् )

**स्थेणोरिति वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**एवमपि तिष्ठन्तु कठकालापा इत्यत्रापि प्राप्नोति ॥**

( १५६४ समाधानवार्तिकम् ॥ २ ॥ )

**[ ॥ * ॥ अद्यतन्यां च ॥ * ॥ ]**

( भाष्यम् ) **अद्यतन्यां चेति वक्तव्यम् । उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् । उदगात्कौमोदपैप्पलादम् ॥ अनुवादे ॥ ३ ॥**

( उद्द्योतः ) अद्यतन्यामित्यद्यतंनीति लुङः संज्ञा ॥ ३ ॥

( ३३९ एकवद्भावसूत्रम् ॥ २ । ४ । १ आ. ४ )

## ५३८ विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥ २ । ४ । ७ ॥

( अनिष्टवारणाधिकरणम् )

( १५६५ प्रतिप्रसववार्तिकम् ॥ १ ॥ )

**॥ * ॥ ग्रामप्रतिषेधे नगरप्रतिषेधः ॥ * ॥**

( भाष्यम् ) **अग्रामा इत्यत्रानगराणामिति । वक्तव्यम् । इह मा भूत्—मथुरापाटलिपुत्रमिति ॥**

( प्रदीपः ) विशिष्ट ॥ ७ ॥ जनपदविशेषो ग्रामः । ग्रामे नाध्येयम्, अभक्ष्यो ग्राम्यकुक्कुट इत्यादौ ग्रामग्रहणे नगरस्यापि ग्रहणदर्शनाद्वचनम्—अग्रामा इत्यत्रेति ॥

( उद्द्योतः ) विशिष्टलि ॥ ७ ॥ जनपदविशेष इति । जनवासस्थानविशेष इत्यर्थः । ग्रामप्रतिषेध इति ॥ ग्रामग्रहणेन नगराणां ग्रहणं नेत्यर्थः ॥

( १५६६ वार्तिकम् ॥ २ ॥ )

**[ ॥ * ॥ उभयतश्च ॥ * ॥ ]**

( भाष्यम् ) **उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः । शौर्यं च केतवता च शौर्यकेतवते । जाम्बवं च शालूकिनी च जाम्बवशालूकिन्यौ ॥ विशिष्ट ॥ ७ ॥**

( प्रदीपः ) उभयत इति । ग्रामनगरोभयावयवे द्वन्द्वे ग्रामसंबन्ध्येव प्रतिषेधो वक्तव्यः । शौर्यं नगरम् । केतवता ग्रामः । जाम्बवं नगरम् । शालूकिनी ग्रामः ॥ ७ ॥

( उद्द्योतः ) भाष्ये—उभयतश्चेति । यो ग्रामाणां प्रतिषेधः उभयतः ग्रामसर्वावयवकस्य ग्रामान्यतरावयवकस्य वेत्यर्थः ॥ नगरसर्वावयवके चानगराणामिति प्रतिषेध इति भावः ॥ तदाह—ग्रामनगरेत्यादि ॥ ७ ॥

( ३४० एकवद्भावसूत्रम् ॥ २ । ४ । १ आ० ५ )

## ५३९ क्षुद्रजन्तवः ॥ २ । ४ । ८ ॥

( क्षुद्रजन्तुस्वरूपनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**क्षुद्रजन्तव इत्युच्यते । के क्षुद्रजन्तवः? ॥**

( प्रदीपः ) क्षुद्रजन्तवः ॥ ८ ॥ स्मृतीनां विरुद्धानां दर्शनात्प्रश्नः—के क्षुद्रजन्तव इति ॥

( समाधानभाष्यम् )

**क्षोत्तव्या जन्तवः क्षुद्रजन्तवः ॥**

( प्रदीपः ) क्षोत्तव्या इति । अर्हार्थे कृत्यः । ये क्षुद्यमाना अपि न म्रियन्ते जलौकःप्रभृतयः । ये तु म्रियन्ते ते पापनिमित्तत्वादक्षोदनार्हाः ॥

( उद्द्योतः ) क्षुद्रज ॥ ८ ॥ अर्हार्थे इति । अनेन क्षुद्रशब्दे रगपि अर्हार्थः तेन जन्तुशब्दस्य कर्मधारय इति ध्वनितम् ॥

( आक्षेपभाष्यम् )

**यद्येवं यूकालिक्षं कीटपिपीलिकं दंशमशकमिति न सिध्यति ॥**

( समाधानभाष्यम् )

**एवं तर्ह्यनस्थिकाः क्षुद्रजन्तवः ॥**

( लक्षणान्तरभाष्यम् )

**अथ वा येषां स्वं शोणितं नास्ति ते क्षुद्रजन्तवः ॥**

१ ग्रामप्रतिषेधस्येति शेषः । ( र. ना. )

( उद्द्योतः ) स्वं शोणितं नास्तीति । यथा जलौकःप्रभृतीनाम् ॥ ८ ॥

( लक्षणान्तरभाष्यम् )

अथ वा येषामासहस्रादञ्जलिर्न पूर्यते ते क्षुद्रजन्तवः ॥

( लक्षणान्तरभाष्यम् )

अथ वा येषां गोचर्ममात्रं राशिं हत्वा न पतति ते क्षुद्रजन्तवः ॥

( सिद्धान्तलक्षणम् )

अथ वा नकुलपर्यन्ताः क्षुद्रजन्तवः ॥ क्षुद्रजन्त ॥ ८ ॥

( प्रदीपः ) नकुलपर्यन्ता इति । एतदेव दर्शनमत्र व्यापित्वाद् गृह्यते । अत एवैतत्पश्चादुपन्यस्तम् ॥ ८ ॥



( ३४१ एकवद्भावसूत्रम् ॥ २ । ४ । १ आ. ६ )

## ५४० येषां च विरोधः शाश्वतिकः ॥ २ । ४ । ९ ॥

( आक्षेपभाष्यम् )

किमर्थश्चकारः ? ॥

( समाधानभाष्यम् )

एवकारार्थश्चकारः—येषां विरोधः शाश्वतिकस्तेषां द्वन्द्व एकवचनमेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ॥ किं चान्यत्प्राप्नोति ? । [[1]"विभाषा वृक्षमृग–" इति । तत्र] *पशुशकुनिद्वन्द्वे विरोधिनां पूर्वविप्रतिषिद्धम्* इत्युक्तम्, तन्न[2] वक्तव्यं भवति ॥ येषां च ॥ ९ ॥

( प्रदीपः ) येषां च ॥ ९ ॥ यदन्यदिति । चकारेण यत्नेन परो विकल्पो बाध्यते । तेनाश्वमहिषं काकोलूकमिति नित्य एकवद्भावो भवति ॥ ९ ॥

( उद्द्योतः ) येषां च ॥ ९ ॥ यत्नेनेति । पुनर्विधानार्थेनेत्यर्थः ॥ ९ ॥

( ३४२ एकवद्भावसूत्रम् ॥ २ । ४ । १ आ. ७ )

## ५४१ शूद्राणामनिरवसितानाम् ॥ २ । ४ । १० ॥

( अनिरवसितशब्दार्थाधिकरणम् )

( आक्षेपभाष्यम् )

'अनिरवसितानाम्' इत्युच्यते । कुतोऽनिरवसितानाम् ? ॥

( प्रदीपः ) शूद्राणाम् ॥ १० ॥ निरवसिता बहिष्कृता उच्यन्ते । तत्रावधिप्रश्नः—कुत इति ॥

( समाधानभाष्यम् )

आर्यावर्तादनिरवसितानाम्[3] ॥

( आक्षेपभाष्यम् )

कः पुनरार्यावर्तः ? ॥

( समाधानभाष्यम् )

प्रागादर्शात्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् ॥

( प्रदीपः ) प्रागादर्शादिति । आदर्शादयः पर्वतविशेषाः ॥ दक्षिणेनेति एनबन्तः । एनपा द्वितीया । प्रागादिभ्यः प्रथमान्तेभ्यो देशवृत्तिभ्यः प्रत्ययो विहितः । एतत्पर्वतचतुष्टयमध्य आर्यावर्तो देश इत्यर्थः ॥

( उद्द्योतः ) शूद्राणाम् ॥ १० ॥ प्रत्यय इति । दिक्शब्देभ्य इत्यादिनाऽस्तातिः, तस्य च लुगिति भावः ॥

( आक्षेपभाष्यम् )

यद्येवं किष्किन्धगन्धिकं शकयवनं शौर्यक्रौञ्चमिति न सिध्यति ॥

( प्रदीपः ) यद्येवमिति । एतेषामार्यावर्ताद् बाह्यत्वादिति भावः ॥

( समाधानभाष्यम् )

एवं तर्ह्यार्यनिवासादनिरवसितानाम् ॥ कः पुनरार्यनिवासः ? । ग्रामो घोषो नगरं संवाह इति ॥

( प्रदीपः ) ग्राम इति । एतेष्वार्या निवसन्तीति भावः । तत्र ग्रामः प्रसिद्धः । घोषो गोमहिष्यादिनिवासः । संवाहो वणिक्प्रधानः ॥

( आक्षेपभाष्यम् )

एवमपि य एते महान्तः संस्त्यायास्तेष्वभ्यन्तराश्चण्डाला मृतपाश्च वसन्ति तत्र चण्डालमृतपा इति न सिध्यति ॥

( प्रदीपः ) संस्त्याया इति । निवासविशेषा इत्यर्थः । मृतपा डोम्बा इत्याहुः ॥

( उद्द्योतः ) डोम्बा इति । श्मशाननिकटे ये वसन्ति मृतवस्त्रचितिकाष्ठादिसंग्राहकाश्चण्डालसदृशास्ते डोम्बा इत्युच्यन्ते ॥

( समाधानभाष्यम् )

एवं तर्हि यज्ञात्कर्मणोऽनिरवसितानाम् ॥

( प्रदीपः ) यज्ञादिति शूद्राणां पञ्चयज्ञानुष्ठानेऽधिकारोस्तीति भावः ॥

( उद्द्योतः ) तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति श्रुतेः शूद्राणां यज्ञकर्मणोऽबहिष्कृतत्वं विरुद्धमित्यत आह—शूद्राणामिति । पूर्वोक्तश्रुतिस्त्वग्निहोत्रादिविषयेति भावः ॥

१ अयं कोष्ठकान्तर्गतः पाठः क्वचिदेवोपलभ्यते, न सर्वत्र ।
२ 'स पूर्वविप्रतिषेधो न वक्तव्यो' इति पाठो बहुत्र समुपलभ्यते ।
३ 'आर्यावर्तात्' इत्यवधिप्रदर्शनमेव बहुत्र समुपलभ्यते ॥

(आक्षेपभाष्यम्)

**एवमपि तक्षायस्कारं रजकतन्तुवायमिति न सिध्यति॥**

(प्रदीपः) **तक्षायस्कारमिति।** तक्षादीनां यज्ञेऽधिकाराभावादिति भावः॥

(उद्द्योतः) तक्षादीनामिति[1]। तेषां प्रतिलोमत्वादिति भावः॥ शूद्रशब्दोऽत्र सूत्रे त्रैवर्णिकेतरपर इति बोध्यम्॥

(सिद्धान्तसमाधानभाष्यम्)

**एवं तर्हि पात्रादनिरवसितानाम्। यैर्भुक्ते पात्रं संस्कारेण शुध्यति तेऽनिरवसिताः। यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिता इति॥ शूद्राणाम्॥ १०॥**

(प्रदीपः) **संस्कारेणेति।** यः संस्कारः स्मृतिकारैर्द्रव्यशुद्धौ पठितस्तेनैव न तदधिकेनेत्यर्थः॥ १०॥

(उद्द्योतः) स्मृतिकारैरिति। 'भस्मना शुध्यते कांसम्' इत्यादि॥ १०॥

(३४३ एकवद्भावसूत्रम्॥ २।४।१ आ. ८)

## ५४२ गवाश्वप्रभृतीनि च॥ २।४।११॥

(गणपठितरूपविवक्षाधिकरणम्)

(१५६७ वार्तिकम्॥ १॥)

### ॥ * ॥ गवाश्वप्रभृतिषु यथोचारितं द्वन्द्ववृत्तम्॥ * ॥

(भाष्यम्) **गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं द्रष्टव्यम्। गवाश्वम्। गवाविकम्। गवैडकम्॥ गवाश्व॥ ११॥**

(प्रदीपः) गवाश्वप्र॥ ११॥ **यथोच्चारितमिति।** गणे यादृशाः कृतावङः पठिता द्वन्द्वास्तादृशानामेवेदं कार्यमेकवद्भावलक्षणं भवतीत्यर्थः। यदा त्ववङ् नास्ति विकल्पितत्वात्तदा पशुद्वन्द्वे विभाषा भवति गोश्वं गोश्वा इति। एतेन गणपाठरूपं विवक्षितमित्युक्तं भवति॥ ११॥

(उद्द्योतः) गवाश्वप्र॥ ११॥ भाष्ये—**यथोच्चारितं द्वन्द्ववृत्तमिति।** द्वन्द्वप्रयुक्तमिदं कार्यं[2] गणे यथोच्चारितशब्दविषयमित्यर्थः। तत्फलितमाह—**गणे इति।** यथोच्चारितमित्यस्य फलमाह— **यदा त्विति॥ ११॥**

(३४४ एकवद्भावसूत्रम्॥ २।४।१ आ. ९)

## ५४३ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्॥ २।४।१२॥

(नियमाधिकरणम्)

(१५६८ नियमवार्तिकम्॥ १॥)

### ॥ * ॥ बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्॥ * ॥

(भाष्यम्) **फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां द्वन्द्वः विभाषा एकवद्भवति बहुप्रकृतिरिति वक्तव्यम्॥ फल—बदरामलकम्। बदरामलकानि॥ सेना—हस्त्यश्वम्। हस्त्यश्वाः॥ वनस्पति—प्लक्षन्यग्रोधम्। प्लक्षन्यग्रोधाः॥ मृग—रुरुपृषतम्। रुरुपृषताः॥ शकुनि—हंसचक्रवाकम्। हंसचक्रवाकाः॥ क्षुद्रजन्तु—यूकालिक्षम्। यूकालिक्षाः॥ धान्य—व्रीहियवम्। व्रीहियवाः। माषतिलम्। माषतिलाः॥ तृण—कुशकाशम्। कुशकाशाः। शरशीर्षम्[3]। शरशीर्षाः॥ किं प्रयोजनम्? बहुप्रकृतिरेव यस्तत्र यथा स्यात्॥ क मा भूत्? बदरामलके तिष्ठतः॥**

(प्रदीपः) विभाषा वृक्ष॥ १२॥ **बहुप्रकृतिरिति।** बहवो बहुत्वसंख्यायुक्ता वर्तिपदार्थाः प्रकृतयः कारणानि यस्य स बहुप्रकृतिः॥ **बदरामलकमिति।** जातिरप्राणिनामित्येकवद्भावः। क्वचित्तु बदरामलकानीत्यपि पठ्यते। तत्रैवं व्याचक्षते—नित्य एकवद्भावे प्राप्ते विकल्पोनेन वचनेन क्रियते॥ अन्ये तु बदरामलकानीत्येवं प्राप्ते जातिलक्षणो नित्य एकवद्भावो बहुप्रकृतेर्भवतीति प्रदर्श्यत इत्याहुः॥ **हस्त्यश्वमिति।** सेनाङ्गत्वेऽपि परत्वात्पशुलक्षणो विकल्पो भवति॥

(उद्द्योतः) विभाषा वृक्ष॥ १२॥ द्वन्द्वप्रकृतिर्वर्तिपदानि तेषां बहुत्वे त्रिप्रभृतिष्वेव स्यादत आह— **बहव इति। पदार्थाः**स्तादृशपदार्थप्रतिपादकाः शब्दाः, तदर्थानां बहुत्वगमकश्चैकवद्भाव एव। यद्वा बदरत्वेनैवानेकेषां भानमेकवद्भावबलादिति नैकार्थीभावविरोधः[4], एतत्सूत्रानुपात्तं फलं द्वन्द्वस्येहोपादानं बहुप्रकृतित्वनियमायेत्याह—**जातिरिति।** न च—जातिप्राधान्य एव जातिरित्यस्य प्राप्तिः। तत्र च न बहुवचनम्, तस्या एकत्वात्। अत एव क्षीरो-

१ तक्षादीनामिति। प्रतिलोमजातस्तक्षा त्वनुलोमजातरथकाराद्भिन्न एव। तेन न रथकाराधिकरण पू० मी० ६।१।१२ विरोधः। २ द्वन्द्वसंबन्धि वृत्तं कार्यं द्वन्द्वप्रयुक्तं कार्यमिति यावत्। (र. ना.) ३ 'शीर्ष' इति 'सीर्यं' इति वा कचिदुपलभ्यते। कचित्तु 'शोर्यं' इति तथापि शीर्ष—शीर्य—शोर्य—सीर्यं इति चतुर्णामपि शब्दानां तृणविशेषसामान्यनामस्वनुपलम्भात् 'शष्प' इति 'सस्य' इति वा भवेत्। ४ नैकार्थीभावविरोध इति पाठो भाति। अन्यथा बहुत्वसंख्याभाने 'एकार्थीभावेऽभेदैकत्वसंख्या भासते' इति मतादविरोधः स्यादिति भावः। (र. ना.)

दके संपृक्ते इत्यन्तादिवचेति सूत्रस्थभाष्यप्रयोगः संगच्छते, जात्याख्यायामितिसूत्रं च भगवता प्रत्याख्यातम्—इति वाच्यम् । जातिप्राधान्ये एव जातौ व्यक्तिद्वारकपरम्परया संख्यान्वये तत्सम्भवात् ॥ तदेवं जातिप्राधान्ये व्यक्तिद्वारकपरम्परया संख्यान्वये बदरामलकमित्येव । पाठान्तरे आद्यव्याख्यायां बदरामलकानीत्यपि ॥ व्यक्तिप्राधान्ये तु बदरामलकानीत्यपि । जातौ साक्षात्संख्यान्वये बदरामलके इत्येव । व्यक्तिप्राधान्ये व्यक्तेरेकत्वविवक्षायां बदरामलके बदरामलकमित्युभयमिति लभ्यते इति बोध्यम् । व्याचक्षत इति । अन्यत्र [1]तस्येह पाठसामर्थ्याद्विकल्पो बहुप्रकृतित्वं चानेन विधीयत इति तदाशयः ॥ अत एव वार्तिकव्याख्यानभाष्ये विभाषेत्युक्तम् ॥ अन्येत्विति । वार्त्तिकव्याख्यानभाष्ये विकल्पो न वाचनिकः किं तु विभाषावृक्षेति सूत्राप्राप्तिविषयानुवादकः ॥ तस्मादेषां य एकवद्भवति यश्च विभाषा एकवद्भवति स सर्वोऽपि बहुप्रकृतिरेवेति वाच्यमिति वार्तिकव्याख्यानभाष्यार्थः ॥ एवमेव यूकालिक्षा इत्यपि भाष्यं व्याख्येयम् ॥ अतएवाग्रे बहुप्रकृतिरेव यः तत्र यथा स्यादित्येव प्रयोजनमुक्तम्, न तु फलक्षुद्रजन्त्वंशे विकल्पोऽपि प्रयोजनत्वेनोक्त इति तदाशयः ॥ अत्राद्यव्याख्यैव युक्ता । भाष्यकारेण फलक्षुद्रजन्त्वोर्विभाषाप्रकरणे पाठः कर्त्तव्य इत्युच्यते । अतो न वार्त्तिकप्रयोजनकथनभाष्यविरोधः । यथोत्तरं मुनीनां प्रामाण्याच्चैवमेव युक्तमित्याहुः ॥ सेनाङ्गत्वेऽपीति । इदं चिन्त्यं, तत्र सेनाङ्गशब्देन हस्त्यारोहादीनामेव ग्रहणात् । अत्र तु सेनाशब्देन हस्त्यश्वादीनां ग्रहणं [2]भाष्यप्रामाण्यात् । अत एव [3]संग्रामं हस्त्यश्वरथपदातिभिरिति भाष्यप्रयोगः सङ्गच्छते । बहुप्रकृतित्वाभावान्नैकवदिति तु न युक्तं, बहुभिरेव तैः संग्रामस्य निष्पाद्यत्वात् ॥ वनस्पतिशब्देन वार्त्तिके वृक्षग्रहणम् ॥

( आक्षेपभाष्यम् )

**किं पुनरनेन या प्राप्तिः सा नियम्यते, आहोस्विद्—अविशेषेण ? ॥**

( प्रदीपः ) **किं पुनरिति** । अस्मिन्प्रदेशे पठितत्वात्किमेतत्सूत्रविहित एव एकवद्भावो नियतविषयो व्यवस्थाप्यते अथ प्रकरणविहित इति प्रश्नः ॥ येषां सूत्रान्तरेणानेन च प्राप्तिर्वनस्पत्यादीनां तद्विषय एव संशयो न ह्यन्यतरप्राप्तिविषयः ॥

( उद्द्योतः ) एतत्सूत्रानुपात्तानामपि पाठात् प्रकरणविषयत्वनिश्चयेन संदेहानुपपत्तिरत आह—**येषामिति** । एतत्सूत्रोपात्तविषय एव सन्देह इति भावः ॥

( भाष्यम् ) **किञ्चातः ? ॥**

( प्रथमपक्षदूषणभाष्यम् )

**यद्यनेन या प्राप्तिः सा नियम्यते, प्लक्षन्यग्रोधौ "जातिरप्राणिनाम्" इति नित्यो द्वन्द्वैकवद्भावः प्राप्नोति ॥**

**अथाविशेषेण, न दोषो भवति ॥**

( उद्द्योतः ) भाष्ये—**नित्यो द्वन्द्वैकवद्भावः प्राप्नोतीति** । अस्य नियमेन वारणेऽपि नित्यं प्राप्नोतीत्यर्थः ॥

**अविशेषेणेति** । एकवचनद्वन्द्वविषयं यद्यच्छास्त्रं प्राप्नोति तद्बहुप्रकृतेरेवेत्यर्थं इति भावः ॥ एतेन बदरामलके इत्यत्र जातिरित्यस्याप्रवृत्तावपि चार्थे इति विभाषा स्यादित्यपास्तम् ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**यथा न दोषस्तथास्तु ॥**

( प्रदीपः ) **यथा न दोष इति** । व्यापित्वात्प्रकरणापेक्षोयं विषयनियम इत्यर्थः ॥

( १५६९ पूर्वविप्रतिषेधवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ पशुशकुनिद्वन्द्वे विरोधिनां पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) **पशुशकुनिद्वन्द्वे विरोधिनां "येषां च विरोधः शाश्वतिकः" इत्येतद्भवति पूर्वविप्रतिषेधेन । पशुशकुनिद्वन्द्वस्यावकाशः—महाजोरभ्रम् । महाजोरभ्राः । हंसचक्रवाकम् । हंसचक्रवाकाः ॥ "येषां च विरोधः शाश्वतिकः" इत्यस्यावकाशः—[5]श्रमणब्राह्मणम् ॥ इहोभयं प्राप्नोति—काकोलूकं श्वशृगालमिति । "येषां च विरोधः शाश्वतिकः" इत्येतद्भवति पूर्वविप्रतिषेधेन ॥**

( आक्षेपभाष्यम् )

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ॥**

( समाधानभाष्यम् )

**न वक्तव्यः । उक्तं चकारकरणस्य प्रयोजनम्—येषां च विरोधः शाश्वतिकस्तेषां द्वन्द्व एकवचनमेव यथा स्याद् यदन्यत्प्राप्नोति तन्मा भूदिति ॥**

( १५७० पूर्वप्रतिषेधवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकम् ॥ * ॥

( भाष्यम् ) **अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकं भवति पूर्वविप्रतिषेधेन ॥ अश्ववडवयोः पूर्वलिङ्गत्वस्यावकाशः—विभाषा पशुद्वन्द्वनपुंसकम्, यदा न पशुद्वन्द्वनपुंसकं सोवकाशः—अश्ववडवौ ॥ पशुद्वन्द्वनपुंसकस्यावकाशः—अन्ये पशुद्वन्द्वाः—महाजोरभ्रं महाजोरभ्राः ॥ पशुद्वन्द्वनपुं-**

---

१ अन्यत्र पठितस्येति पाठो भाति । ( र. ना. ) २ 'विनापि प्रत्ययम्' इत्युत्तरपदभूताश्वारोहपदलोपेन हस्त्यश्वादिपदानामपि सेनाङ्गपरत्वमव्याहतमेव । इदं चिन्त्यम्, सत्याभामेत्यादौ संज्ञायामेव 'विनापि प्रत्ययम्' इत्यस्य प्रवृत्तेर्लक्ष्यानुरोधेनेष्टत्वादिति वयम् । ( र. ना. ) ३ 'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।' इति लक्षणलक्षितपत्तिसंज्ञकसेनायामिभरथयोरेकत्वस्यैव नियतत्वादकिंचित्करमिदमिति ध्येयम् । ४ 'लुलायः सैरिभो महः' इति हैमः । ५ बौद्धपरिव्राजकः श्रमणः । ( र. ना. )

**सकप्रसङ्ग उभयं प्राप्नोति—'अश्ववडवम्' पशुद्वन्द्वनपुंसकं भवति पूर्वविप्रतिषेधेन ॥**

( प्रदीपः ) **अश्ववडवयोरिति** । पशुत्वाद्विभाषैकवद्भावः । तत्रैकवद्भावपक्षे नपुंसकत्वमपि प्राप्नोति **पूर्ववदश्ववडवा**वित्यतिदेशात् पुंस्त्वमपि । तत्र परत्वात् पुंस्त्वे प्राप्ते पूर्वविप्रतिषेध उच्यते ॥

( उद्द्योतः ) पशुत्वेनैव सिद्धेऽश्ववडवग्रहणं न कार्यमित्याशयेन वार्त्तिकमित्याह—पशुत्वादिति ॥

( आक्षेपभाष्यम् )

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ॥**

( समाधानभाष्यम् )

**न वक्तव्यः ॥**

( १५७१ समाधानहेतुवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ प्रतिपदविधानात्सिद्धम् ॥ * ॥

( भाष्यम् ) **प्रतिपदमत्र नपुंसकं विधीयते— "अश्ववडवपूर्वापर—" इति ॥**

( प्रदीपः ) **प्रतिपदविधानादिति** । नात्र पशुग्रहणेनैकवद्भावो विधीयते किं तर्ह्यश्ववडवग्रहणेन, तत्र प्रतिपदविधानात्स **नपुंसक**मित्येतद्भवति, तच्छब्देन ह्येकवद्भावभाजं परामृश्य नपुंसकत्वं विधीयते । तेन यथैकवद्भावोऽत्र प्रतिपदं विधीयते तथा नपुंसकत्वमिति भावः ॥

( उद्द्योतः ) नात्रेति । पूर्वविप्रतिषेधादश्ववडवग्रहणमेव न्याय्यमित्याशयः ॥ नपुंसकत्वस्य प्रतिपदविधित्वं समर्थयते—तच्छब्देनेति ॥

( १५७२ प्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ एकवचनमनर्थकं समाहारैकत्वात् ॥ * ॥

(भाष्यम्) **एकवद्भावोऽनर्थकः ॥ किं कारणम् ? । समाहारैकत्वात् । एकोऽयमर्थः समाहारो नाम तस्यैकत्वादेकवचनं भविष्यति ॥**

( प्रदीपः ) **समाहारैकत्वादिति** । तिरोहितावयवभेदो हि समाहारः स च वनयूथादिवदेक इत्यर्थः ॥

( प्रत्याख्यानबाधकभाष्यम् )

**इदं तर्हि प्रयोजनम्—एवं विज्ञास्यामि—इह नित्यो विधिः, इह विभाषेति ॥**

( प्रदीपः ) **इह नित्य इति** । **द्वन्द्वश्चे**त्यारभ्यास्माद्योगात्प्राग् नित्यो विधिः, अनेन तु योगद्वयेन विभाषेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—ज्ञास्यामीत्यन्तर्भावितण्यर्थः, ज्ञापयिष्यामीत्यर्थः ॥ **इह नित्य इति** । विनिगमनाविरहात्प्राण्यङ्गादीनामेव समाहारस्तेषां समाहार एवेत्येवं द्विविधोऽपि नियम इति भावः । अन्यथा एतत्प्रयोजनखण्डनपरभाष्येणैषामेव समाहार इति नियमस्यैव लाभात् एतद्विषय इतरेतरयोगाव्यावृत्त्या द्वन्द्वश्चेत्यारभ्यैतत्पर्यन्तं नित्यो विधिरित्यादि कैयटासङ्गतिः स्यात् ॥ भाष्यमपि विशिष्टप्रयोजनखण्डनपरम् ॥

( प्रत्याख्यानसाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति । यदयं "तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्" इत्याह ॥**

( प्रदीपः ) **यदयमिति** । यद्येतत्प्रकरणोपात्तानामेवैकवद्भावः स्यात्तदा तिष्यपुनर्वसुशब्दयोरत्रापठितत्वादेकवद्भावस्याभावात्तन्निवृत्तये बहुवचनग्रहणमनर्थकं स्यादित्यर्थः ॥

( उद्द्योतः ) भाष्ये—यदयमिति । एवं चैकवद्भावप्रकरणं व्यर्थमिति भावः । सर्वशब्दोऽसंकुचद्वृत्तिरित्यभिमानः[2] ॥

( प्रत्याख्यानबाधकभाष्यम् )

**इदं तर्हि प्रयोजनम्—"स नपुंसकम्" इति वक्ष्यामीति ॥**

( प्रत्याख्यानसाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ॥**

( उद्द्योतः ) **लिङ्गमशिष्यमिति** । शास्त्रोक्तलिङ्गानुशासनस्य व्यभिचारदर्शनादिति भावः ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं वक्तव्यम् ? ।**

( समाधानभाष्यम् )

**वक्तव्यं च । किं प्रयोजनम् ? । पूर्वत्र नित्यार्थम्, उत्तरत्र व्यभिचारार्थं "विभाषा वृक्षमृग" इति ॥**

**विभाषा वृ० ॥ १२ ॥**

( प्रदीपः ) **पूर्वत्रेति** । प्राण्यङ्गादीनां समाहार एवेत्येवमर्थमित्यर्थः ॥ **उत्तरत्रेति** । क्वचिज्जातिरप्राणिनामिति प्राप्ते विभाषा । मृगादीनां तु व्यतिकरनिरासार्थम् ॥ १२ ॥

( उद्द्योतः ) एवं चान्यतरनियमस्य ज्ञापकान्निरासेऽन्यतर एव स्थित इत्याशयेनाह—**प्राण्यङ्गादीनामिति** । **सर्वो द्वन्द्व** इत्यत्र सर्वशब्द एतत्प्रकरणस्थसूत्रानुपात्तविषय इति भावः ॥ भाष्ये—**उत्तरत्र व्यभिचारार्थमिति** । नित्यैकवद्भावस्य व्यभिचारार्थमित्यर्थः । स च क्वचिदेकवद्भावाभावेन क्वचिन्नित्यत्वाभावेन ॥ एवं च मृगादीनां व्यतिकरे इतरेतरयोग एव, उत्तरसूत्रविषये अधिकरणवाचिनामितरेतरयोग एवेति ध्वनितम् ॥ तदुपपत्तिस्तु यो विभाषा एकवचनो द्वन्द्वः स मृगाणां मृगैरेव द्वन्द्वे ऽन्यत्र नेति वचनव्यक्त्या ॥ अन्यत्र विशेष्यभूतैकवचनं द्वन्द्वस्यैव[3] । निषेधे इतरेतरयोग एवेति फलितत्वात् । एवं **विप्रतिषिद्धं चे**त्यत्रापि य एकवचनो विभाषा द्वन्द्वः स यदि विरुद्धार्थानां चेदद्रव्यवाचिनामेवेति वचनव्यक्त्या द्रव्यवाचिनामितरेतरयोग एव फलति ॥ १२ ॥

---

१ एतन्नियमेन विभाषाविधिः सिद्ध्यति, इतरेतरयोगाव्यावृत्तेरिति बोध्यम् । वक्ष्यमाणेन तु नित्यो विधिरिति । ( र. ना. ) २ अभिमानोक्तिबीजं तु सर्वशब्दस्य एतत्प्रकरणस्थसूत्रानुपात्तद्वन्द्वमात्रपरत्वे एकवद्भावप्रकरणं न व्यर्थमिति । ( र. ना. ) ३ समाहारद्वन्द्वस्यैवेत्यर्थः । ( र. ना. )

( ३४५ एकवद्भावसूत्रम् ॥ २ । ४ । १ आ. १० )

## ५४७ विभाषा समीपे ॥ २ । ४ । १६ ॥

( प्रत्याख्यानाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

( प्रदीपः ) विभाषा स ॥ १६ ॥ अनुप्रयोगे दोषदर्शनात्प्रश्नः—किमुदाहरणमिति ॥

( उद्योतः ) विभाषा स ॥ १६ ॥ समाहारविषय उपदशं पाणिपादमित्येव, इतरेतरे तु उपदशाः पाणिपादाः इत्येवेष्यते विपरीतमपि प्राप्नोतीत्याशयेन प्रश्न इत्याह—अनुप्रयोगे इति ॥

( समाधानभाष्यम् )

**उपदशं पाणिपादम्, उपदशाः पाणिपादाः ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम्, अयं द्वन्द्वैकवद्भाव आरभ्यते तत्र कः प्रसङ्गो यदनुप्रयोगस्य स्यात् ॥**

( उद्योतः ) भाष्ये—नैवदस्तीति । सूत्रेण द्वन्द्वस्यैकवद्भावविधानेपि अनुप्रयोगानियमस्तदवस्थ एवेति नेदं सूत्रप्रयोजनमित्यर्थः । प्रश्ने उदाहरणशब्दोऽपि प्रयोजनपर एवेति भावः ॥

( प्रत्याख्यानोपसंहारभाष्यम् )

**एवं तर्ह्यव्ययस्य संख्ययाऽव्ययीभावोप्यारभ्यते बहुव्रीहिरपि । तद्यदा तावदेकवचनं तदाव्ययीभावोनुप्रयुज्यते एकार्थस्यैकार्थ इति । यदा बहुवचनं तदा बहुव्रीहिरनुप्रयुज्यते बह्वर्थस्य बह्वर्थ इति ॥ विभाषा ॥ १६ ॥**

( प्रदीपः ) कः प्रसङ्गः इति । नन्वर्थस्यैकवद्भावादनुप्रयोगस्यापि सेत्स्यति । नैतदस्ति । यदि तावदव्ययीभाव एवानुप्रयुज्यते तदा तस्याव्ययत्वादसंख्यत्वाद्बहुवचनं न स्यात् । सत्यपि वा तस्मिन्नभावे कृते उपदशा इति न स्यात् । अथ बहुव्रीहिरेवानुप्रयुज्यते तदोपदशस्य पाणिपादस्येति षष्ठी स्यात् । उपदशमिति चेष्यते । एतदेव मनसिकृत्याह—एवं तर्हीति । अव्ययीभावोऽव्ययं विभक्तीति विहितः । बहुव्रीहिस्तु संख्ययाव्ययेति ॥ तद्यदेति । अव्ययीभावस्याव्ययत्वादसंख्यत्वादेकवचनस्य तूत्सर्गत्वादिति भावः ॥ एकार्थ इति । अभेदैकत्वाश्रयादित्याहुः ॥ यदेति । बहुव्रीहेः समीपिप्रधानत्वाद्बह्वर्थत्वमिति भावः ॥ १६ ॥

( उद्योतः ) नन्वर्थस्येति । एवञ्च समाहारद्वन्द्वपक्षेऽव्ययीभावस्य बहुव्रीहेर्वाऽनुप्रयोगेऽपि द्वन्द्वार्थस्यैकत्वादुपदशमित्येव भविष्यतीति भावः ॥ अव्ययत्वादिति । अव्ययत्वेनासंख्यत्वादित्यर्थः ॥ सत्यपि वेति । नाव्ययीभावात्तृतीयासप्तम्योरित्याद्यारम्भादसंख्यत्वमव्ययीभावातिरिक्ताव्ययविषयमिति भावः ॥ अथेति । अर्थस्यैकत्वान्नित्यबहुवचनान्तस्याप्युपदशशब्दस्यैकवचनान्तत्वसम्पत्तावपि पाणिपादस्येति षष्ठ्यन्तसमभिव्याहारे उपदशस्येति अभ्यमनापत्त्या षष्ठी श्रूयेतेति भावः ॥ वस्तुतो नियमे मानाभावेनोभयत्राप्युभयानुप्रयोगः स्यात् ॥ तथा चेतरेतरयोगे उपदशं पाणिपादा इत्यपि स्यादिति भाष्यार्थः ॥ एकवचनस्य स्विति । तावतैव नाव्ययीभावादित्याद्युपपत्तं न संख्यासम्बन्धज्ञापकमिति भावः ॥ पञ्चमीतृतीयासप्तमीग्रहणं तु स्पष्टार्थमेव । पूर्वाचार्यानुरोधाद्वा । तदनुरोधफलं च तेषां प्रमादबोधनं क्वचित्, स्वकृतेः प्रामाण्यबोधनं क्वचित् इति बोध्यम् ॥ नन्वव्ययार्थे संख्याया अभावादेकार्थ इत्यनुपपन्नमत आह—अभेदैकत्वेति । तथाच भेदसहचरितद्वित्वाद्यभावरूपमेकार्थ्यं समीपप्रधानाव्ययीभावस्येत्यर्थः । एतेन समासे विशेष्यांशेऽपि अन्तर्वर्तिसंख्याया अभानं सूचितम् ॥ बहुवचनादि त्वेकशेषेणेति बोध्यम् ॥ १६ ॥

( इत्येकवद्भावप्रकरणम् )

( अथ लिङ्गानुशासनप्रकरणम् )

( ३४६ नपुंसकत्वसूत्रम् ॥ २ । ४ । १ आ. ११ )

## ५५० तत्पुरुषोऽनञ्कर्मधारयः ॥ २ । ४ । १९ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( प्रदीपः ) तत्पुरुषो ॥ १९ ॥ उत्तरेषु केषु चिद्योगेष्वन्यथासिद्धिं दृष्ट्वा पृच्छति—किमर्थमिति ॥

( एकदेशिसमाधानभाष्यम् )

**"संज्ञायां कन्थोशीनरेषु" इति वक्ष्यति । तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति ॥**

( प्रदीपः ) शिष्यबुद्धिपरीक्षार्थमन्यथासिद्धमपि तावत्प्रयोजनमाह । पश्चात्त्वनन्यथासिद्धं दर्शयिष्यति ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । नहि संज्ञायां कन्थान्त उशीनरेष्वतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ॥**

( प्रदीपः ) नहीति । अनादिरत्र संज्ञा गृह्यते न त्विदानींतननीति भावः ॥

( उद्योतः ) तत्पुरुषोऽनञ् ॥ १९ ॥ इदानीन्तनसंज्ञाया-मतत्पुरुषादेरपि सम्भवादाह—अनादिरिति । अत्रेति । शास्त्रे, शास्त्रस्यानादित्वादिति भावः ॥

( समाधानभाष्यम् )

**उत्तरार्धं तर्हि—"उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति वक्ष्यति, तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । नहि तदाद्याचिख्यासा-**

१ पञ्चम्याद्येकवचनं विहायेति शेषः । ( र. ना. )

थामुपक्षोपक्रमान्तोऽतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ॥

( प्रदीपः ) नहीति । षष्ठीतत्पुरुषाद्विना तदादित्वासंप्रत्ययः ॥

( समाधानभाष्यम् )

उत्तरार्थमेव तर्हि—"छाया बाहुल्ये" इति वक्ष्यति, तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । नहि च्छायान्तो बाहुल्येऽतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ॥

( प्रदीपः ) नहिच्छायान्त इति । पूर्वपदार्थधर्मो बाहुल्यम्, न च षष्ठीतत्पुरुषाद्विना बाहुल्यं गम्यते ॥

( समाधानभाष्यम् )

उत्तरार्थमेव तर्हि "सभा राजाऽमनुष्यपूर्वा" "अशालाच" इति वक्ष्यति । तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति ॥

( समाधानबाधकभाष्यम् )

एतदपि नास्ति प्रयोजनम् । नहि सभान्तोऽशालायामतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ॥

( प्रदीपः ) नहि सभान्त इति । अशालेति वचनात् संघातवचनः सभाशब्दो ग्राह्यो न च समूहिभिर्विना समूहोपपत्तिरिति षष्ठीतत्पुरुषस्यैव ग्रहणमिति भावः ॥

( उद्योतः ) न च समूहिभिरिति । तदंशे नित्यसाकाङ्क्षत्वादिति भावः ॥ १९ ॥

( समाधानभाष्यम् )

इदं तर्हि "विभाषा सेनासुरा-" इति वक्ष्यति तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति ॥

( प्रदीपः ) इदं तर्हीति । अत्र तु प्रदेशे मन्दबुद्ध्यनुग्रहायाधिकारः कृतः ॥ १९ ॥

( आक्षेपभाष्यम् )

तत्पुरुष इति किमर्थम् ? ॥

( समाधानभाष्यम् )

दृढसेनो राजा ॥

( आक्षेपभाष्यम् )

अनञिति किमर्थम् ? ॥

( समाधानभाष्यम् )

असेना ॥

( आक्षेपभाष्यम् )

अकर्मधारय इति किमर्थम् ? ॥

( समाधानभाष्यम् )

परमसेना । उत्तमसेना ॥ तत्पुरु० ॥ १९ ॥

(३४७ द्वन्द्वतत्पुरुषलिङ्गानुशासनसूत्रम् ॥ २।४।१ आ. १२)

## ५५७ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २ । ४ । २६ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ? ॥

( प्रदीपः ) परवत् ॥ २६ ॥ द्वन्द्वापेक्षया किमिदं विध्यर्थम्, आहोस्विन्नियमार्थम् । तथा—किं षष्ठी निर्देशेन समासार्थस्य लिङ्गातिदेशः, अथ सप्तम्याश्रयेण पूर्वपदस्येति संशयानः पृच्छति—किमर्थमिति ॥

( उद्योतः ) परवल्लिङ्गं ॥ २६ ॥ तत्पुरुषे विधित्वेन चारितार्थ्यसम्भवादाह—द्वन्द्वेति ॥ विध्यर्थमिति । 'अवयवार्थातिरिक्तः समुदायो लिङ्गवान्' इति पक्षे इदम् ॥ नियमार्थमिति । 'उद्भूतावयवभेदः समूहः समासार्थः । स चावयवार्थलिङ्गेनैव लिङ्गवान्' इति पक्षे इदम् । इदं पक्षद्वयं षष्ठ्यन्तत्वपक्षे । सप्तम्यन्तत्वे तु विध्यर्थत्वमेवेति बोध्यम् ॥ इदं द्वन्द्वांशे न समाहारविषयं, तस्य विशिष्य नपुंसकत्वविधानात् । किन्तु इतरेतरयोगविषयम् ॥

( समाधानभाष्यम् )

द्वन्द्वोयमुभयपदार्थप्रधानः । तत्र कदाचित्पूर्वस्य यल्लिङ्गं तत्समासस्यापि स्यात्, कदाचिदुत्तरपदस्य, इष्यते च परस्य यल्लिङ्गं तत्समासस्य यथा स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्येवमर्थमिदमुच्यते ॥

( प्रदीपः ) द्वन्द्वोयमिति । षष्ठीनिर्देशो नियमश्चेति भावः । तत्रावयवार्थव्यतिरिक्तः समुदायार्थो नास्तीत्युभयपदार्थप्रधान इत्यनेन दर्शितं भवति । तत्र यदापेक्षितपरस्परौ विरुद्धलिङ्गावयवार्थावेव समुदायार्थस्तदा पर्यायेण लिङ्गद्वयप्रसङ्गे नियमार्थमिदं संपद्यते ॥ यद्येवं परस्यैव संबन्धि लिङ्गं क्रियते इति सादृश्याभावाद्वतिनिर्देशो नोपपद्यते । नैष दोषः । केवलाकेवलावस्थाभेदाश्रयेण भेदमाश्रित्य वतिनिर्देशः कृतः ॥

( उद्योतः ) षष्ठीति । द्वन्द्वतत्पुरुषयोरित्यत्रायं सन्देहः । तत्र षष्ठीपक्षे उद्भूतावयवभेदसमुदायस्य समासार्थत्वात् अवयवभेदकृतवचनवत्तन्निमित्तानेकलिङ्गप्राप्तौ नियमार्थमितीत्याह—नियमश्चेतीति ॥ समुदायार्थो नास्तीति । उद्भूतावयवभेदस्य तस्य द्वन्द्वार्थतया नावयवार्थादत्यन्तातिरिक्तः स इत्यर्थः ॥ अपेक्षितपरस्परावित्यनेन समूहरूपता समासार्थस्योक्ता, विरुद्धलिङ्गावयवार्थावित्यनेनोद्भूतावयवभेदता तस्य सूचिता । स चावयवसंख्यावत् अवयवलिङ्गग्राहीतिमते नियमार्थत्वमुक्तम् ॥ पर्यायेणेति । विरुद्धलिङ्गा-

१ द्वन्द्वस्यासमस्तपरस्येव लिङ्गमित्यर्थः । ( र. ना. )

वयवद्वन्द्वस्थले इत्यर्थः ॥ यद्येवमिति । परस्यैव लिङ्गं न पूर्वस्येत्यर्थाद्वतिर्नोपपद्यत इति भावः ॥ केवलाकेवलेति । समस्तासमस्तेत्यर्थः ॥

( समाधानशेषभाष्यम् )

**तत्पुरुषश्चापि कः प्रयोजयति? । यः पूर्वपदार्थप्रधान एकदेशिसमासः—अर्धपिप्पलीति ॥ यो ह्युत्तरपदार्थप्रधानः, दैवकृतं तस्य परवल्लिङ्गम् ॥**

( प्रदीपः ) तत्पुरुषापेक्षया विध्यर्थत्वं दर्शयति—**तत्पुरुषश्चापीति** ॥ **दैवकृतमिति** । अयत्नसिद्धमित्यर्थः ॥

( उद्द्योतः ) भाष्ये—दैवकृतमिति । उपमितसमासः समानलिङ्गपदयोरेवेति तत्रापि न दोष इति भावः ॥

( अनिष्टापत्तिवारणाधिकरणम् )

( १५७३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः ॥ * ॥

( भाष्यम् ) **परवल्लिङ्गं द्वन्द्वतत्पुरुषोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः ॥ प्राप्तो जीविकां प्राप्तजीविकः । आपन्नो जीविकामापन्नजीविकः ॥ अलंपूर्वे—अलं जीविकायै अलंजीविकः ॥ गतिसमास—निष्कौशाम्बिः निर्वाराणसिः ॥**

( १५७४ प्रतिषेधवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ पूर्वपदस्य च ॥ * ॥

( भाष्यम् ) **पूर्वपदस्य च प्रतिषेधो वक्तव्यः । मयूरीकुक्कुटौ ॥**

( प्रदीपः ) **पूर्वपदस्य चेति** । सप्तमीनिर्देशाश्रयेण दोषोद्भावनम् । तत्र ह्ययमर्थो भवति—द्वन्द्वे तत्पुरुषे च यत्परं तद्वल्लिङ्गं भवति । तत्र कार्यिणोऽनुपादानात्परशब्दस्य संबन्धिशब्दत्वात्तदाक्षिप्तं पूर्वपदमेव कार्यभाक् प्राप्नोति । तत्र **मयूरीकुक्कुटाविति** पूर्वपदस्य पुंस्त्वातिदेशे स्त्रीप्रत्ययनिवृत्तिप्रसङ्गः । **कुक्कुटमयूर्यौ** इत्यत्र स्त्रीप्रत्ययप्रसङ्गः । तथार्धपिप्पलीत्यादावपीति प्रतिषेध उच्यते । पूर्वपदप्रतिषेधे च कृते सामर्थ्याद् द्वन्द्वतत्पुरुषयोरेव कार्यित्वं संपद्यते ॥

( उद्द्योतः ) सप्तमीति । अवयवषष्ठ्यर्थमिप्रायेणेत्यन्ये ॥ स्त्रीप्रत्ययनिवृत्तीति । अतिदेशविरुद्धत्वात् स्वाश्रयस्यापि निवृत्तिरित्यर्थः ॥ अतिदिश्यमानधर्मप्रयुक्तकार्यविशेषमप्याह—कुक्कुटेति ॥ नन्वेवं सूत्रवैयर्थ्यमत आह—पूर्वपदप्रतिषेधे चेति ॥

( आशयान्तरेण प्रतिषेधवैयर्थ्यभाष्यम् )

**यदि पुनर्यथाजातीयकं परस्य लिङ्गं तथाजातीयकं समासादन्यदतिदिश्यते ॥**

( प्रदीपः ) **यदि पुनरिति** । षष्ठीनिर्देशो व्यतिरिक्तसमुदायदर्शनं चाश्रीयते । व्यतिरिक्तसमुदायपक्षे हि मुख्यसादृश्योपपत्तिरिति भावः ॥ **समासादन्यदिति** । समासार्थलिङ्गमुपचारात् समासशब्देनोच्यते । तेनोत्तरपदार्थलिङ्गसदृशं समासार्थस्य स्वलिङ्गबाधनाय लिङ्गान्तरमतिदिश्यते इत्युक्तं भवति ॥

( उद्द्योतः ) व्यतिरिक्तसमुदायेति । तथा च परपदार्थलिङ्गसदृशं लिङ्गं समुदायरूपार्थस्येत्यर्थाद्वत्युपपत्तिरिति भावः ॥ समासात्स्वत एव लिङ्गस्यान्यत्वाद्यर्थं विशेषणं, समासस्यातिदिश्यत इति च वक्तुं युक्तमत आह—**समासार्थेति** ॥ **स्वलिङ्गबाधनायेति** स्वलिङ्गं च नपुंसकमित्यभिमानः । यदि तु वनं सेना संघ इतिवत्तस्यानेकलिङ्गत्वं तदत्रापि पक्षे नियमार्थत्वमेवेति बोध्यम् ॥

( १५७५ आशयान्तरदूषणवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनम् ॥ * ॥

( भाष्यम् ) **समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टापो लुग्वक्तव्यः । अश्ववडवौ ॥**

( प्रदीपः ) **अश्ववडवाविति** । परवल्लिङ्गे प्राप्ते पूर्ववदश्ववडवाविति पूर्वपदार्थलिङ्गसदृशं पुंलिङ्गं समासार्थस्य विधीयते न तूत्तरपदार्थस्येति स्त्रीत्वस्यानिवर्तनाट्टापः श्रवणे प्राप्ते लुग्वक्तव्यः ॥

( १५७६ दूषणबाधकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ निपातनात्सिद्धम् ॥ * ॥

( भाष्यम् ) **निपातनात्सिद्धमेतत् ॥ किं निपातनम्? । "अश्ववडवपूर्वापरेति ॥**

( प्रदीपः ) **निपातनादिति** । टाब्निवृत्त्या रूपमेतदित्यर्थः । पूर्ववदश्ववडवाविति निपातनमाश्रयितुं न युज्यते वचनान्तरे पूर्वपदलिङ्गातिदेशाप्रसङ्गादश्ववडवानश्ववडवैरिति मत्वा पृच्छति—**किं निपातनमिति** ॥ **अश्ववडवपूर्वापरेति** । अश्ववडवापूर्वापरेति वक्तव्ये टापोऽनुच्चारणं निपातनमित्यश्ववडवयोर्द्वन्द्वे टाब्निवर्त्यते ॥

( उद्द्योतः ) वचनान्तरे इति । द्विवचनविषयत्वेन निपातनस्य तत्साहचर्याल्लिङ्गातिदेशोऽपि तत्रैव स्यादित्यभिमानः ॥

( १५७७ दूषणबाधकान्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ उपसर्जनह्रस्वत्वं वा ॥ * ॥

( भाष्यम् ) **अथ वा "उपसर्जनस्य" इति ह्रस्वत्वं भविष्यति ॥**

( प्रदीपः ) **उपसर्जनह्रस्वत्वमिति** । **अनेकमिति** प्रथमानिर्दिष्टत्वात्समुदायार्थेऽवयवार्थस्य गुणभावादुपसर्जनत्वमिति भावः ॥

१ अवयवार्थेत्यादिः । ( र. ना. )

(उद्योतः) समुदायार्थे इति । इतरेतरयोगेऽपि उद्भूतावयवभेदः समुदाय एव समासार्थ इति भावः ॥

(आक्षेपभाष्यम्)

**इहापि तर्हि प्राप्नोति—'कुक्कुटमयूर्यौ' इति ॥**

(प्रदीपः) इहापीति । ततश्च कुक्कुटमयूरी इति प्राप्नोति ॥

(उद्योतः) कुक्कुटमयूरी इति । अन्तरङ्गत्वात्पूर्वं ह्रस्वत्वे कृते दीर्घादितिनिषेधानवतारात्पूर्वसवर्णदीर्घापत्तिरिति भावः । द्वन्द्वे नेति निषेधे तु अश्ववडवेत्यत्रापि तदनापत्तिरिति तात्पर्यम् ॥

(इष्टापत्तिभाष्यम्)

**अस्तु ॥**

(१५७८ व्याख्यान्तरवार्तिकम् ॥ ६ ॥)

**॥*॥ परवल्लिङ्गमिति शब्दशब्दार्थौ ॥*॥**

(भाष्यम्) **परवल्लिङ्गमिति शब्दशब्दार्थावतिदिश्येते । तत्रौपदेशिकस्य ह्रस्वत्वम् । आतिदेशिकस्य श्रवणं भविष्यति ॥**

(प्रदीपः) शब्दशब्दार्थाविति । लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्चात्र तन्त्रेणैकशेषेण वोच्यत इत्यर्थः ॥ आतिदेशिकस्य श्रवणमिति । तस्यानुपसर्जनत्वात्तदन्तस्य चाप्रातिपदिकत्वाद् ह्रस्वाभावात् ॥

(उद्योतः) तस्यानुपसर्जनत्वादिति । समुदायात्तस्यातिदेशादित्यर्थः । अत एव तदन्तस्याप्रातिपदिकत्वमपि बोध्यम् । अयं हेतुर्लिङ्गविशिष्टलिङ्गिभावीसत्त्वाच्चिन्त्यः ॥

(आक्षेपान्तरभाष्यम्)

**इदं तर्हि—दत्ता च कारीषगन्ध्या च दत्ताकारीषगन्ध्ये । दत्ता च गार्ग्यायणी च दत्तागार्ग्यायण्यौ । द्वौ ष्यङौ द्वौ ष्फौ च प्राप्नुतः ॥**

(प्रदीपः) द्वौ ष्यङाविति । तत्र यस्येति चेत्याकारलोपे कृते द्वौ यकारौ श्रूयेयाताम् । हलो यमामिति विकल्पितो लोपः । यद्यपि यणो मय इति द्विर्वचनेनात्र भाव्यं तथापि पक्षे यकारत्रयश्रवणप्रसङ्गः ॥

(उद्योतः) यकारत्रयश्रवणेति । न च पुनर्द्वित्वप्रवृत्त्या तदपि इष्टमेव, लक्ष्ये लक्षणस्य सकृत्प्रवृत्त्या पुनर्द्वित्वाप्रवृत्तेरिति भावः ॥

(इष्टापत्तिभाष्यम्)

**स्ताम् । पुंवद्भावेनैकस्य निवृत्तिर्भविष्यति ॥**

(प्रदीपः) पुंवद्भावेनेति । भस्याढेतद्धित इत्यनेनेति भावः ॥

(उद्योतः) भस्याढइति । ष्यङ्ष्फयोस्तद्धितत्वादिति भावः ॥

(आक्षेपभाष्यम्)

**इदं तर्हि—दत्ता च युवतिश्च दत्तायुवती । द्वौ तिशब्दौ प्राप्नुतः ॥**

(प्रदीपः) द्वौ तिशब्दाविति । अत्र ह्यभत्वान्नास्ति पुंवद्भावः ॥

(उपसंहारभाष्यम्)

**तस्मान्नैतच्छक्यं वक्तुं 'शब्दशब्दार्थावतिदिश्येते' इति ॥**

(प्रदीपः) तस्मान्नैतदिति । उपसर्जनह्रस्वत्वं तु न भवत्यन्वर्थसंज्ञाविज्ञानादप्रधानस्योपसर्जनसंज्ञाविधानात्सकलपदार्थप्रधानत्वाच्च द्वन्द्वस्य । व्यतिरिक्तसमुदायरूपद्वन्द्वार्थाभ्युपगमेऽपि अवयवानां कार्यसंबन्धात् फलतः प्राधान्यमेव ॥

(उद्योतः) अन्वर्थेति । अप्रधानस्यैव प्रथमानिर्दिष्टस्योपसर्जनसंज्ञाविधानादित्यर्थः । अवयवानां कार्यसम्बन्धादिति । व्यक्त्याकृत्योरिव समाहारसमाहारिणोरभेदेनेति भावः ॥ अन्वर्थत्वानङ्गीकारे तु ह्रस्वविधायके *द्वन्द्वे नेतिवचनकरणान्न दोष इति भावः ॥

(आक्षेपप्रसारणभाष्यम्)

**ननु चोक्तं *समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनम्* इति ॥**

(समाधानभाष्यम्)

**परिहृतमेतत्—*निपातनात्सिद्धम्* इति ॥**

(समाधानान्तरभाष्यम्)

**अथ वा नैवं विज्ञायते—परस्यैव परवदिति । कथं तर्हि ? । परस्येव परवदिति । यथाजातीयकं परस्य लिङ्गं तथाजातीयकं समासस्यातिदिश्यते । अथ पूर्वपदस्य न प्रतिषिध्यते ॥**

(प्रदीपः) अथ वेति । नायं नियमः, किं तु विधिरित्यर्थः ॥ परस्यैवेति । एवशब्दप्रयोगेण नियमं निषेधाय दर्शयति । न त्वेवार्थे वतिर्विहितः । यथा च नियमपक्षे वतिरुपपद्यते तथा पूर्वमेव प्रतिपादितम् ॥ इह त्रीणि दर्शनानि—[1]अवयवावपेक्षितपरस्परौ द्वन्द्वार्थः, न तु व्यतिरिक्तः समुदायोऽस्ति । अत्र दर्शने नियमार्थमिदम् ॥ अवयवार्थव्यतिरिक्तो वा समुदायो द्वन्द्वार्थः स चावयवलिङ्गैनैव लिङ्गवानित्यत्रापि दर्शने पर्यायेण लिङ्गप्राप्तौ वचनं नियमार्थम् ॥ यदा तु समुदायो द्वन्द्वार्थः स चालिङ्ग इति दर्शनं तदा विध्यर्थमिदम् ॥ अथ पूर्वपदस्येति । अतः पूर्वपदस्येत्यर्थः । एतेन मयूरीकुक्कुटाविति परिहृतं षष्ठ्याश्रयेण दर्शनत्रयेऽपि ॥ मध्यमे तु दर्शने आश्रयभेदाल्लिङ्गभेदाश्रयेण परवदिति सादृश्याश्रयो वतिः ॥

(उद्योतः) ननु तद्व्यतिरिक्त इति । अत्यन्तं व्यतिरिक्त एवेत्यर्थः । अतएव अपेक्षितपरस्परावित्ति सङ्गच्छते । अनेन समूहरूपतावयवयोः सूच्यते । [3]अतएव पक्षत्रये बोधाविशेषः । अन्यथा

१ ह्रस्वाभावरूपो हेतुरातिदेशिकस्य श्रवणे चिन्त्यः, सामानाधिकरण्येन ह्रस्वाभावरूपलिङ्गविशिष्टस्य लिङ्गिनः साध्यस्य श्रवणकर्मत्वस्य यो भावो व्याप्तिरूपः पदार्थस्तस्यासत्त्वादित्यर्थः । ह्रस्वाभावरूपहेतुसत्त्वेऽपि कुक्कुटमयूर्यौ इत्यादौ यणिकृते आतिदेशिके दीर्घेकारे श्रूयमाणत्वस्याभावादिति तस्माददतिदेशसामर्थ्यादातिदेशिकस्य यणः पूर्वं श्रवणं भविष्यतीत्येव भाष्याशय इति भावः । (र.ना.)

२ 'अवयवावेवा' । ३ समुदायावयवयोर्भेदाभेदस्वीकारादेवेत्यर्थः । (र. ना.)

फलभेदः स्यात् ॥ एतेनायं कैयटः साहित्यमितरेतरयोगे विशेषणमित्येवं पर इति वदन्तः परास्ताः ॥ नियमार्थमिति । पर्यायेण लिङ्गद्वयप्राप्ताविति भावः ॥ अवयवार्थव्यतिरिक्तो वेति । व्यतिरिक्त एवेत्यर्थः ॥ स चावयवलिङ्गेनेति । अवयवसंख्यया संख्यावानित्यपि बोध्यम् ॥ स चालिङ्ग इति । उद्भूतावयवभेदत्वेऽपि तल्लिङ्गत्वे मानाभाव इति भावः ॥ नपुंसकलिङ्ग इति वक्तुमुचितम् ॥ अथवेत्यादि भाष्यं च यदि पुनर्यथाजातीयमित्यादिनोक्तार्थस्यैवानुवादपरमिति बोध्यम् । यदि पुनरित्यादिग्रन्थस्यापि विधिपरत्वात् । स्वलिङ्गबाधनायेति व्याचक्षाणेनोपाध्यायेन विधित्वमुक्तप्रायमेव ॥ अन्येतु यदि पुनरितिभाष्यस्य समासस्येतिपदकर्तव्यतापरता, द्वन्द्वतत्पुरुषयोरिति पदावृत्तिपरता वा, अथवेत्यादेश्च तत्प्रत्याख्यानपरतेति वदन्ति ॥ अतः पूर्वपदस्येति । अप्राप्तेरित्यर्थः ॥ आश्रयभेदादिति । समुदायरूपस्य केवलस्य चाश्रयस्य भेदादित्यर्थः ॥ [[1]एषु दर्शनत्रयेषु आद्य 'उभपदार्थप्रधानः' इति भाष्यसंमत एव, विधित्वपरभाष्यसंमतोऽन्योपि ॥] मध्येतु पक्षे भाष्यानुग्रहश्चिन्त्यः ॥

( आक्षेपभाष्यम् )

**प्राप्तादिषु कथम् ? ॥**

( १५७९ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ प्राप्तादिषु चैकदेशिग्रहणात्सिद्धम् ॥ * ॥

( भाष्यम् ) **'द्वन्द्वैकदेशिनोः' इति वक्ष्यामि ॥**

( आक्षेपभाष्यम् )

**तदेकदेशिग्रहणं कर्तव्यम् ? ।**

( समाधानभाष्यम् )

**न कर्तव्यम् । एकदेशिसमासो नारभ्यते ॥**

( प्रदीपः ) **एकदेशिसमासो नारभ्यत इति । पूर्वापराधरेति** योगत्रयं नारभ्यते । **परवल्लिङ्गं द्वन्द्वस्ये**त्येतावच्च क्रियते सूत्रमित्यर्थः ॥

(उद्द्योतः) एकदेशिसमासानारम्भेऽपीह तत्पुरुषग्रहणे प्राप्तादिषु दोषस्तदवस्थोऽत आह—द्वन्द्वस्येत्येतावदिति ॥

( आक्षेपभाष्यम् )

**कथमर्धपिप्पलीति ? ॥**

( समाधानभाष्यम् )

**समानाधिकरणो भविष्यति—अर्धं च सा पिप्पली च अर्धपिप्पलीति ॥**

( प्रदीपः ) **अर्धं च सा पिप्पली चेति ।** अवयवे समुदायोपचारात्सामानाधिकरण्यम् । तत्रोत्तरपदार्थस्य प्राधान्यात्तदीयमेव लिङ्गं तत्पुरुषस्यापि भवतीति नार्थस्तत्पुरुषग्रहणेनेत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**न सिध्यति । परत्वात्षष्ठीसमासः प्राप्नोति ॥**

**अद्य पुनरयमेकदेशिसमास आरभ्यमाणः षष्ठीसमासं बाधते ॥**

( प्रदीपः ) **परत्वादिति ।** अयमर्थः—

**'नर्ते प्रयोजनादिष्टं मुख्यशब्दार्थलुम्पनम्'**

इति भेदाश्रयणमेव परं मुख्यं प्रधानम् । ततश्च षष्ठीसमास एव प्राप्नोति भिन्नविषयत्वात्तु शास्त्रापेक्षं परत्वमत्र न विवक्षितम् ॥

( उद्द्योतः ) भेदविवक्षायां षष्ठीसमासस्य अभेदे समानाधिकरणसमासस्येति विषयभेदात्परत्वादित्यनुपपन्नमत आह—अयमर्थ इति । एवंच परत्वादित्यस्योत्कृष्टत्वादित्यर्थ इति भावः ॥

( षष्ठीसमासेष्टापत्तिभाष्यम् )

**इष्यते च षष्ठीसमासोपि । तद्यथा—अपूपार्धं मया भक्षितं ग्रामार्धं मया लब्धमिति । एवं पिप्पल्यर्धमित्यपि भवितव्यम् ॥**

( आक्षेपभाष्यम् )

**कथमर्धपिप्पलीति ? ॥**

( समाधानभाष्यम् )

**समानाधिकरणो भविष्यति ॥ परवल्लिङ्गम् ॥२६॥**

( प्रदीपः ) **समानाधिकरणो भविष्यतीति ।** एवमादिप्रयोगसिद्धिरेवोपचाराश्रयणस्य प्रयोजनम् । मुनिद्वयाच्च भाष्यकारः प्रमाणतरमधिकलक्ष्यदर्शित्वात् ॥ २६ ॥

( [3]उद्द्योतः ) **एवमादीति ।** भेदाश्रयणस्य मुख्यत्वेऽपीदृशप्रयोगसिद्ध्यर्थमेवोपचाराश्रयणमिति भावः ॥ **मुनिद्वयाचेति ।** एवं च सूत्रत्रयविषयेऽपि षष्ठीसमासस्य साधुत्वं कर्मधारयस्य चेति भावः ॥ **पिप्पल्यर्धमित्य**पीलपिना सूत्रत्रयोदाहरणसंग्रहो बोध्यः ॥ २६ ॥

---

( ३४८ पुंलिङ्गसूत्रम् ॥ २ । ४ । १ आ. १३ )

## ५६० रात्राह्नाहाः पुंसि ॥ २ । ४ । २९ ॥

( शेषपूरणाधिकरणम् )

( १५८० शेषवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अनुवाकादयः पुंसि ॥ * ॥

( भाष्यम् ) **अनुवाकादयः पुंसि भाष्यन्त इति वक्तव्यम् । अनुवाकः । शंयुवाकः ॥ रात्रा ॥ २९ ॥**

( प्रदीपः ) **रात्रा ॥ २९ ॥ अनुवाक इति ।** अनूच्यत इत्यनुवाकस्तत्र विशिष्टं वाक्यमभिधेयमिति नपुंसकत्वे प्राप्ते वचनम् ॥ २९ ॥

---

१ पक्षत्रयेऽपि बोधाविशेषोपपादनेनेत्यर्थः । (र. ना.) २ परवल्लिङ्गमित्यत्र समासस्येति कर्तव्यं द्वन्द्वतत्पुरुषयोरित्यस्यावृत्तिर्वा कर्तव्येति भावः । एकच परवदित्यत्रान्वेति अपरस्वलिङ्गमित्यत्रेति भावः । (र. ना.) ३ अयं कोष्ठकान्तर्गत उद्द्योतपाठोऽस्माभिरेकत्रैव पुस्तक उपलब्धः । ४ ततश्च प्राप्तजीविकादिषु प्राप्तिरेवनास्ति—एकदेशिसमासाभावादिति भावः । (र. ना.) ५ 'लङ्घनम्' ॥ 'लोपनम्' इति भवेत् नुमोऽप्राप्तेः । ६ वाक्यविशेष इत्यर्थः । (र. ना.)

( उद्योतः ) रात्राह्ना ॥ २९ ॥ अनुवाकादय इति । अनुवाको वाक्यमिति प्रयोगसिद्धये इदमित्याह—तत्र विशिष्टमिति ॥ २९ ॥

( ३४९ नपुंसकसूत्रम् ॥ २ । ४ । १ आ. १४ )

## ५६१ अपथं नपुंसकम् ॥ २ । ४ । ३० ॥

( शेषपूर्त्यधिकरणम् )

( १५८१ शेषवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पुण्यसुदिनाभ्यामह्नः ॥ * ॥

( भाष्यम् ) पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम् । पुण्याहम् । सुदिनाहम् ॥

( प्रदीपः ) अपथम् ॥ ३० ॥ पुण्याहमिति । रात्राह्नाहाः पुंसीति प्राप्ते वचनम् ॥ सुदिनाहमिति । सुदिनशब्दोत्र प्रशंसामात्रवाची । तेन दिनाहःशब्दयोर्युगपद्विरुद्धः प्रयोगः । दृश्यते च प्रशंसार्थस्य प्रयोगः—

"सुदिनासु सभासु कार्यमेतत् प्रविचिन्वीत विशेषतः स्वयं च" इति ॥

( उद्योतः ) अपथं नपुंसकम् ॥ ३० ॥ उत्तरपदार्थप्राधान्यात्परवल्लिङ्गत्वाच्च सूत्रेणैव सिद्धमत आह—रात्राह्नाहा इति ॥

( १५८२ शेषवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पथः संख्याव्ययादेः ॥ * ॥

( भाष्यम् ) पथः संख्याव्ययादेरिति वक्तव्यम् ॥ द्विपथं त्रिपथं चतुष्पथम् उत्पथं विपथम् ॥

( प्रदीपः ) चतुष्पथमिति । षष्ठीतत्पुरुषः[1] । समाहारद्विगौ तु द्विगुश्चेति सिद्धमेव नपुंसकत्वम् ॥ उत्पथमिति । कुगतिप्रादय इति तत्पुरुषः । अव्ययादित्वादपथशब्दस्य नपुंसकत्वे सिद्धे किं सूत्रेणेति चेत्, पूर्वकालत्वात् सूत्रस्य नायं दोषः ॥

( उद्योतः ) पथः संख्येति वार्त्तिके कृतसमासान्तपथिन्शब्दस्यैव ग्रहणं साहचर्यादिति बोध्यम् । तेनातिपन्था इत्यादौ न दोषः । सत्पथ इत्यादौ तु स्वतिभ्यामेवेति नियमात्समासान्तोऽस्त्येव । तदेव संख्याव्ययादेरित्यस्य व्यावर्त्यमित्याहुः ॥ पूर्वकालत्वादिति । सूत्रप्रत्याख्यानपरमेव वार्तिकमिति भावः ॥

( १५८३ शेषवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ द्विगुश्च ॥ * ॥

( भाष्यम् ) द्विगुश्च समासो नपुंसकलिङ्गो भवतीति वक्तव्यम् । पञ्चगवं दशगवम् ॥

( प्रदीपः ) द्विगुश्च समास इति । स नपुंसकमित्यस्यानन्तरं प्रकान्तो द्वन्द्व एव स इत्यनेन परामृश्यते इति द्विगोरप्राप्तं नपुंसकत्वमिति वचनम् । यथा सामन्त्रितमित्यत्र संबोधनप्रथमैव परामृश्यते । समाहारद्विगोश्चेह ग्रहणं न तु तद्धितार्थद्विगोः ॥ पञ्चगवमिति । यदा पञ्च गावः समाहृता इत्यत्रार्थे द्विगुस्तदोत्तरपदार्थस्य प्राधान्यात्तदीयं लिङ्गं प्राप्नोति । यदा तु समूहोऽभिधेयस्तदा तस्य वनं सेना संघइत्यादिवदनियतलिङ्गत्वं प्राप्तमिति वचनम् ॥

( उद्योतः ) द्विगोरप्राप्तमिति । वस्तुतो व्यवहितद्विगुग्रहणस्य तत्र सम्बन्धबोधकमिदम् ॥ सम्बोधनप्रथमैवेति । न प्रथमामात्रमित्यर्थः ॥ समाहारद्विगोश्चेति । समूहसमूहिनोरत्यन्तभेदाभावात्स्वपदार्थप्रधानत्वेनान्तरङ्गत्वाद्व्याख्यानाच्च तस्यैव ग्रहणमिति भावः ॥ यदा पञ्च गाव इति । अयं पक्षस्तु तत्रैव भाष्ये दूषितः[2] ॥ चार्थबोधकसमाहारपदेऽपि कर्मसाधनतापत्तौ बहूपद्रव इति चिन्त्यमेतत् ॥

( १५८४ शेषवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ अकारान्तोत्तरपदो द्विगुः स्त्रियाम् ॥ * ॥

( भाष्यम् ) अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति वक्तव्यम् । पञ्चपूली दशपूली ॥

( १५८५ शेषवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ वाबन्तः ॥ * ॥

( भाष्यम् ) वा आबन्तः स्त्रियां भाष्यत इति वक्तव्यम् । पञ्चखट्वी पञ्चखट्वम् । दशखट्वी दशखट्वम् ॥

( प्रदीपः ) पञ्चखट्वीति । टाप उपसर्जनह्रस्वत्वे कृते द्विगोरिति ङीप् । यदा तु समूहोभिधेयस्तदोपसर्जनह्रस्वत्वं सिध्यति न तु समाह्रियमाणेभिधेये इति तत्रैव सूत्रे उक्तम् । पञ्चखट्वमित्यत्र सत्युपसर्जनत्वे नपुंसकह्रस्वत्वं सिध्यति । उपसर्जनत्वे तु परत्वात्तदाश्रयं ह्रस्वत्वम् ॥

( उद्योतः ) कृते इति । अन्यथादन्तत्वाभावान्न स्यादिति भावः ॥ न तु समाह्रियमाण इति । एवं च कर्मसाधनव्युत्पत्तिरसङ्गतेति तामवष्टभ्य स्त्रियां पञ्चखट्वेत्यपि रूपमिति न वाच्यमिति बोध्यम्॥ परत्वादिति । यौगपद्यासंभवरूपविरोधाभावाच्चिन्त्यमिदम्॥

( १५८६ शेषवार्तिकम् ॥ ६ ॥ )

### ॥ * ॥ अनो नलोपश्च ॥ * ॥

( भाष्यम् ) अनो नलोपश्च, वा च स्त्रियां भाष्यत इति वक्तव्यम् । पञ्चतक्षी पञ्चतक्षम् ॥

( प्रदीपः ) अनो नलोपश्चेति । चशब्देन 'वा स्त्रियां भाष्यते' इति समुच्चीयते[3] । नलोपस्तु नित्यमेव क्रियते । उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधात्पदत्वाभावाल्लोपो न प्राप्नोतीति वचनम् ॥

( उद्योतः ) सन्नियोगशिष्टत्वे पञ्चतक्षमित्युदाहरणानुपपत्तिरत आह—चशब्देनेति ॥ नलोपः प्रातिपदिकेति नलोपसिद्धिमाशङ्क्याह—उत्तरेति ॥

१ चतुर्णां पन्था इति विग्रहः । (र. ना.) २ वार्तिकादित्यादिः । (र. ना.)

३ समुच्चयरूपेत्यादिः । ( र. ना. )

( १५८७ शेषवार्तिकम् ॥ ७ ॥ )

॥ * ॥ पात्रादिभ्यः प्रतिषेधः ॥ * ॥

( भाष्यम् ) पात्रादिभ्यः प्रतिषेधो वक्तव्यः । पञ्चपात्रं द्विपात्रम् ॥ ३० ॥

( प्रदीपः ) पात्रादिभ्य इति । तादर्थ्ये चतुर्थीयम् । आकृतिगणश्च पात्रादिः ॥ ३० ॥

(उद्योतः) तादर्थ्ये इति । पात्रान्तादिप्रयोगसिद्ध्यर्थमित्यर्थः । अत एव वृद्धिसूत्रे सूत्रशब्दस्य पात्रादित्वे कैयटसंमतेऽपि न त्रिसूत्रीत्यादिप्रयोगविरोध इति बोध्यम् ॥ ३० ॥

( ३५० पुंनपुंसकलिङ्गसूत्रम् ॥ २ । ४ । १ आ. १५ )

## ५६२ अर्धर्चाः पुंसि च ॥ २ । ४ । ३१ ॥

( बहुवचनस्याद्यर्थकत्वाधिकरणम् )

( १५८८ वार्तिकम् ॥ १ ॥ )

॥ * ॥ अर्धर्चादयः ॥ * ॥

( भाष्यम् ) अर्धर्चादय इति वक्तव्यम् । अर्धर्चः अर्धर्चम् । कार्षापणं कार्षापणः । गोमयं गोमयः । सरकं सरकः ॥

( प्रदीपः ) अर्धर्चाः ॥ ३१ ॥ कार्षापणादिसंग्रहायाह—अर्धर्चादय इति वक्तव्यमिति ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् ॥

( १५८९ समाधानसाधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ बहुवचननिर्देशात्सिद्धम् ॥ * ॥

( भाष्यम् ) बहुवचननिर्देशादाद्यर्थो गम्यते ॥ अर्धर्चाः ॥ ३१ ॥

( प्रदीपः ) बहुवचननिर्देशात्सिद्धमिति । साहचर्यादर्धर्चशब्देनान्येषामभिधानात् ॥ ३१ ॥

( इति लिङ्गानुशासनम् )

( इति विधिशेषप्रकरणम् )

( अथ विधिप्रकरणम् )

( ३५१ आदेशविधिसूत्रम् ॥ २ । ४ । १ आ. १६ )

## ५६३ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ २ । ४ । ३२ ॥

( अन्वादेशलक्षणाधिकरणम् )

( १५९० वार्तिकम् ॥ १ ॥ )

॥ * ॥ अन्वादेशे समानाधिकरणग्रहणम् [ देवदत्तं भोजयेमं चेत्यप्रसङ्गार्थम् ] ॥ * ॥

( भाष्यम् ) अन्वादेशे समानाधिकरणग्रहणं कर्तव्यम् ॥ किं प्रयोजनम् ? । देवदत्तं भोजय इमं चेत्यप्रसङ्गार्थम् । इह मा भूत्—देवदत्तं भोजय इमं च यज्ञदत्तं भोजयेति ॥

( प्रदीपः ) इदमो ॥ ३२ ॥ पश्चात्कथनमात्रमन्वादेशः प्रसिद्ध इति व्यधिकरणप्रसङ्गनिवारणायाह—अन्वादेशे इति ॥ इमं चेति । एनादेशः प्राप्तो निवार्यते ॥

( उद्योतः ) इदमोन्वा ॥ ३२ ॥ कथितानुकथनस्यान्वादेशत्वे वार्तिकानुत्थानादाह—पश्चादिति ॥ तृतीयादौ विहितादेशस्य द्वितीयादावप्रसक्तेराह—एनादेश इति । सूत्रत्रयस्याप्यन्वादेशविषयत्वादित्यर्थः ॥ एवं च समानाधिकरणग्रहणेन कथितानुकथनमेवान्वादेश इति बोध्यते ॥

( १५९१ अन्वादेशलक्षणवार्तिकम् ॥ २ ॥ )

॥ * ॥ अन्वादेशश्च कथितानुकथितमात्रम् ॥ * ॥

( भाष्यम् ) अन्वादेशश्च कथितानुकथितमात्रं द्रष्टव्यम् । तद् द्वेष्यं विजानीयाद्—इदमा कथितमिदमैव यदानुकथ्यत इति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे—अन्वादेशश्च कथितानुकथितमात्रमिति ॥

( प्रदीपः ) अन्वादेशश्चेति । प्रत्यासत्त्येदमैव कथितं यदानुकथ्यते तेनैव तदान्वादेशो भवतीति भ्रान्तिनिवारणाय वार्तिकम् । तत्र समानाधिकरणग्रहणाच्छब्दान्तरेणेदमा वा कथितं यदाऽनु कथ्यते तदान्वादेशो भवति ॥ द्वेष्यमिति । विपरीतत्वादनभिमतमेवेत्यर्थः ॥

( उद्योतः ) एवं चोत्तरवार्तिकं व्यर्थमत आह—प्रत्यासत्त्येति ॥ तदेवाह—भाष्ये—तद्द्वेष्यमिति । तथा च स्वतात्पर्यं वार्तिककृता वार्तिकान्तरेण व्याख्यातमिति भावः ॥ कथितमित्यस्याज्ञातं सत्कथितमित्यर्थः । तेनैतमातमित्यादौ नादेश इति बोध्यम् ॥

( आदेशशित्करणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अथ किमर्थमशादेशः क्रियते, न 'तृतीयादिषु' इत्येवोच्येत । तत्र टायामोसि च एनेन भवितव्यम् । अन्याः सर्वा हलादयो विभक्तयः । तत्र इद्रूपलोपे कृते केवलमिदमोनुदात्तत्वं वक्तव्यम् ॥

१ प्रयोगसिद्ध्यर्थमेव प्रतिषेध इति स्वीकारादेवेत्यर्थः । सूत्रशब्दस्य पात्रादित्वफलन्तु सति संभवे त्रिसूत्रीत्याद्यतिरिक्तविषयमिति भावः । ( र. ना. ) २ सरकोऽस्त्री सीधुपाने सीधुपात्रेक्षुसीधुनोः—अच्छिन्नाध्वगपङ्क्तौ चेति मेदिनी । ( र. ना. ) ३ जसः साहचर्यादित्यर्थः । ( र. ना. ) ४ अयं कोष्ठकान्तर्गतः पाठो न सर्वत्रोपलभ्यते । ५ इदमाकथितमिदमैव यदाऽनुकथ्यते इति द्वेष्यं यत्तदेव अन्वादेशत्वेन विजानीयादतोऽन्वादेशे समानाधिकरणग्रहणमिति योजना । ( र. ना. ) ६ 'द्वितीयायां टाया' इति पाठः काचित्कः प्रमादेन पतितः, 'तृतीयादिषु' इत्यस्यैव तच्छब्देन ग्राह्यत्वाद् द्वितीयाया अप्रकृतत्वात् । ७ 'दात्तत्वमेव वक्तव्यम्' ।

( समाधानभाष्यम् )

अत उत्तरं पठति—

( १५९२ प्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अशादेशवचनं साकच्कार्थम् ॥ * ॥**

( भाष्यम् ) अशादेशवचनं साकच्कार्थं क्रियते। साकच्कस्यायमादेशो यथा स्यात्—इमकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतमिति ॥

( प्रदीपः ) साकच्कार्थमिति । साकच्कस्येद्रूपलोपो नास्त्यक इत्यधिकारात् । नापि चेद्रूपलोपेनाभ्यामित्यादि सिध्यति ॥

( उद्योतः ) नापि चेति । अभ्युपेत्यवादेनेदम् । भाष्ये रात्रिरधीतेति । द्रव्यकर्मणोऽविवक्षितत्वात्कालकर्मणि क्तः । सम्बन्धस्याविवक्षणादत्यन्तसंयोगाविवक्षणाद्वा षष्ठ्यपवादः कालाध्वनोरिति द्वितीया न कृता ॥

( आक्षेपभाष्यम् )

अथ किमर्थं शित्करणम् ? ॥

( १५९३ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ शित्करणं सर्वादेशार्थम् ॥ * ॥**

( भाष्यम् ) शित्करणं क्रियते सर्वादेशार्थम्। शित्सर्वस्येति सर्वादेशो यथा स्यात्—इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतमिति। अक्रियमाणे हि शित्करणेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ॥

( १५९४ समाधानबाधकवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ न वान्त्यविकारवचनानर्थक्यात् ॥ * ॥**

( भाष्यम् ) न वा वक्तव्यम् ॥ किं कारणम् ?। अन्त्यस्य विकारवचनानर्थक्यात्। अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वान्तरेणापि शकारं सर्वादेशो भविष्यति ॥

( प्रदीपः ) अन्त्यस्येति । त्यदादित्वादकारस्येत्यर्थः ॥

( उद्योतः ) मकारस्यादेशे विकारवचनानर्थक्यानुपपत्तिरित्याह—त्यदादिरवादिति । परत्वात्त्यदाद्यत्वं मन्यते ॥

( १५९५ समाधानसाधकवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ अर्थवत्त्वादेशप्रतिषेधार्थम् [ तस्माच्छित्करणम् ] ॥ * ॥**

(भाष्यम्) अर्थवत्त्वकारस्याकारवचनम्॥ कोर्थः?[1]। आदेशप्रतिषेधार्थम् । येऽन्ये अकारस्यादेशाः प्राप्नुवन्ति तद्बाधनार्थम्। तद्यथा—"मो राजि समः क्वौ" इति मकारस्य मकारवचने प्रयोजनं नास्तीति कृत्वा अनुस्वारादयो बाध्यन्ते । तस्माच्छित्करणम् । तस्माच्छकारः कर्तव्यः ॥

( उद्योतः ) भाष्ये—येऽन्ये इति । दीर्घत्वादयः पररूपं चेत्यर्थः ॥ भाष्ये—अनुस्वारादय इति । प्रशाम्ह्यलयतीत्यादौ मो नो धातोरिति नत्वाभाव आदिशब्दार्थः ॥

( एकदेशिसमाधानबाधकभाष्यम् )

न कर्तव्यः । प्रश्लिष्टनिर्देशोयम्—'अ अ' "अनेकाल् शित्सर्वस्य" इति सर्वादेशो भविष्यति ॥

( प्रदीपः ) अ अ इति । समुदायाद्विभक्तिरर्थवत्त्वाद्भवति । ततोऽकारस्यापदान्तत्वाद्तो गुण इति पररूपं क्रियते। तत्रादेशप्रवृत्तिकाले समुदायः अ अ इति प्रवर्तते । तत्रानेकाल्त्वात्सर्वादेशे प्रवृत्ते पररूपं प्रवर्तते ॥

( उद्योतः ) अअ इति निर्देशे विपरीतं गौरवमत आह—समुदायादिति । तस्याः सुपां सुलुगिति लुक् ॥ वस्तुतः सौत्रत्वाद्विभक्त्यनुत्पत्तिरेव वक्तुमुचिता ॥ कृतैकादेशस्यादेशत्वे विवक्षितासिद्धिरत आह—तत्रेति। कृतैकादेशनिर्देशसामर्थ्यादिति भावः॥ अत्र न कर्तव्य इत्यादिरेकदेशयुक्तिः, व्याख्यानसापेक्षत्वात्प्रक्रियागौरवाच्च, शकारस्यैव लघुत्वात् ॥

( समाधानबाधकभाष्यम् )

अथ वा विचित्रास्तद्धितवृत्तयः। नान्वादेशेऽकज्उत्पद्यते ॥ इदमो ॥ ३२ ॥

( प्रदीपः ) अथ वेति । आदेशस्यैव प्रत्याख्यानं क्रियते अनुदात्तत्वमात्रमेव विधेयमित्यर्थः ॥ नान्वादेश इति। महाविभाषाधिकाराद्व्यवस्थितविभाषाविज्ञानात् । किंचाकचि कृतेनेन चाशादेशे कृतेऽज्ञातार्थगतिः प्रकरणाद्यधीना तद्वरमनुत्पत्तिरेवाकचोस्तु। एवं ह्यादेशो न विधातव्यो भवति॥३२॥

( उद्योतः ) व्यवस्थितेति । अयमेव भाष्ये—वैचित्र्यशब्दार्थ इति भावः। वस्तुतो अभिधानलक्षणाः कृत्तद्धितसमासा इत्यकर्तरि चेति सूत्रभाष्योक्तेरनभिधानादकजेत्येव भाष्यार्थः॥ किञ्चेति। निष्फलमप्यन्वादेशेऽकज्विधानमिति भावः॥ किंचेत्याद्यपि चिन्त्यम्—तदर्थे कुत्सितपदघटितस्याकच्घटितस्य वा साधुत्वेन तदुत्पत्तिपूर्वकमादेशस्यैवावश्यकत्वात् । अनभिधाने तु नास्ति दोषः कुत्सिताभ्यामाभ्यामित्यर्थस्य वाक्यैकदेशन्यायेन बोधादित्याहुः ॥ ३२ ॥

( ३५२ आदेशसूत्रम् ॥ २ । ४ । १ आ. १७ )

## ५६४ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ २ । ४ । ३३ ॥

( अनुदात्तत्वकथनप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं त्रतसोरनुदात्तत्वमुच्यते ? ॥

१ अर्थवत्त्व आदेशप्रतिषेधार्थमिति च्छेदः। ( र.ना. )

२ 'प्रशाम्ह्यति'। ३ आभ्यामित्यत इति शेषः। ( र. ना. )

( प्रदीपः ) एतदः ॥ ३३ ॥ अत्रात इत्यत्र त्रल्तसिलोः कृतयोः प्रकृतेर्लित्स्वरे कृते शेषनिघातेन प्रत्ययानुदात्तत्वे सत्यशनुदात्तः करिष्यते तत्रै[1]तदस्त्रतसोरित्येतावत् सूत्रं कर्तव्यमिति प्रश्नः—**किमर्थमिति** ॥

( उद्द्योतः ) एतदस्त्रत ॥३३॥ तद्विनापि सर्वानुदात्तत्वसिद्धिं दर्शयति—**अत्रेति** ॥ अनेन भाष्येऽग्रे—**'लित्स्वरे'** इत्यस्य 'प्रकृतेः प्रत्ययनिमित्तके' इत्यादिः, **'निघाते'** इत्यस्य 'प्रत्ययस्ये'त्यादिः **'एतदोऽनुदात्तत्वेन'** इत्यत्र 'एतदित्यस्याशः' इति शेष इति दर्शयति ॥ अन्यथैतद आदेशेनापहारात्तस्यानुदात्तत्वासंभव इति बोध्यम् ॥

( समाधानभाष्यम् )

**उदात्तौ मा भूतामिति ॥**

( प्रदीपः ) **उदात्ताविति** । प्रत्ययस्वरेण ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । लित्स्वरे निघाते एतदनुदात्तत्वेन सिद्धम् ॥**

( उद्द्योतः ) एतदोऽनुदात्तत्वेनेति क्वचित्पाठः । तदाऽशनुदात्तत्वेनेत्यर्थः ॥

( समाधानसाधकभाष्यम् )

**इदमिह संप्रधार्यम्—अनुदात्तत्वं क्रियताम्, लित्स्वर इति । किमत्र कर्तव्यम् ? । परत्वाल्लित्स्वरः ॥ नित्यमनुदात्तत्वम्—कृतेति लित्स्वरे प्राप्नोति, अकृतेपि । तत्र नित्यत्वादनुदात्तत्वे कृते लिति पूर्वं उदात्तभावी नास्तीति कृत्वा यथाप्राप्तः प्रत्ययस्वरः प्रसज्येत । तद्यथा—'गोष्पदप्रं वृष्टो देवः' ऊलोपे कृते पूर्वं उदात्तभावी नास्तीति कृत्वा यथाप्राप्तः प्रत्ययस्वरो भवति । तस्मात्त्रतसोरनुदात्तत्वं वक्तव्यम् ॥ एतदः ॥ ३३ ॥**

( प्रदीपः ) **नित्यमिति** । लित्स्वरस्त्वनुदात्तत्वे कृते न प्रवर्तते । अनुदात्तविधानसामर्थ्यात् । ऐं[3]तच्चोत्सर्गापवादभावमनपेक्ष्योक्तम् ॥ **लिति पूर्वं इति** । औपश्लेषिकाधिकरणविवक्षायां सप्तमी । **उपपदविभक्तेः कारकविभक्तिर्बलीयसी**ति दिग्योगलक्षणपञ्चम्यभावः ॥ **प्रत्ययस्वरः प्रसज्येतेति** । अपवादाप्रवृत्तावुत्सर्गस्यावश्यं प्रवर्तनात् ॥ **गोष्पदप्रमिति । वर्षप्रमाण ऊलोपश्चास्यान्यतरस्यामित्यूँ[4]लोपणमुलौ सह विधीयेते, ततो लित्स्वराभावात्** प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति ॥ ३३ ॥

( उद्द्योतः ) **येन नाप्राप्तिन्यायेनाशनुदात्तत्वस्य** लित्स्वरापवादत्वान्नित्यत्वोक्तिरसङ्गतेत्यत आह—**एतच्चेति** ॥ भाष्ये—**उदात्तभावी नास्तीति** । अनुदात्तविधानसामर्थ्यादिति भावः ॥ अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः कथं प्रत्ययस्वरोऽत आह—**अपवादाप्रवृत्ताविति** ॥ **णमुलूलोपाविति** । पूरेरिति शेषः ॥३३॥

( ३५३ आदेशसूत्रम् ॥ २ । ४ । १ आ. १८ )

## ५६५ द्वितीयाटौ[5]स्स्वेनः ॥ २ । ४ । ३४ ॥

( इदमोपि स्थानित्वाधिकरणम् )

( आक्षेपभाष्यम् )

**कस्यायमेनो विधीयते । एतदः प्राप्नोति । इदमोपि त्विष्यते । तदिदमो ग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) **द्वितीया** ॥ ३४ ॥ उभयोरादेशस्येष्टत्वादेतद एवानन्तर्यात्तत्प्रसङ्गात् पृच्छति—**कस्येति** ॥ **न कर्तव्यमित्युत्तरम्** ॥ **इदमोपीति** । इदंशब्दाच्च त्रलो हप्रत्ययेन बाधितस्यादेशैं[6]विधानमेव सत्तानुमानं स्यात् ॥

( उद्द्योतः ) **द्वितीयाटौ** ॥ ३४ ॥ ननु **इदमोऽपि त्विष्यत** इत्यनेन 'तदुपायः कः' इति प्रश्नस्य प्रतीयमानत्वात्तदुत्तरं वाच्यं न त्विदमो ग्रहणं कर्तव्यं ? **न कर्तव्यमिति** विप्रतिपत्तिरुचिता । अग्रे विधिनिषेधयोरभावादत आह—**न कर्तव्यमित्युत्तरमिति** । एवंच नेयं विप्रतिपत्तिः, अपि तु सामान्याकारेण प्रतीयमानं प्रश्नं **तदिदमो ग्रहणं कर्तव्यमिति** विशेषाकारेण कृत्वा तस्योत्तरमाहेत्यर्थः ॥ **इदंशब्दादिति** । एतेनेदमस्त्रलोऽभावादेतदित्यत्र तत्सम्बन्धाभाव इत्यपास्तम् ॥ **हप्रत्ययेन, इदमो ह** इति विहितेन । तथा तसिल्विषयेऽपि इदम इशं बाधित्वाऽयँमेव स्यात् ॥

( समाधानभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? । "इदमोऽन्वादेशेशनुदात्तस्तृतीयादौ" इति ॥**

( आक्षेपभाष्यम् )

**यदि तदनुवर्तते, "एतदस्त्रतसोस्त्रतसौ चानुदात्ताविदमश्च" इतीदमोपि प्राप्नोति ॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । संबन्धमनुवर्तिष्यते । "इदमोऽन्वादेशेशनुदात्तस्तृतीयादौ" । "एतदस्त्रतसोस्त्रतसौ**

---

१ एतस्यानुदात्तत्वेनेत्यर्थः । अशोऽनुदात्तत्वेनेति यावत् । ( र. ना. ) २ अशनुदात्तत्वमित्यर्थः । (र.ना.) ३ अनुदात्तत्वस्यनित्यत्वञ्चेत्यर्थः । (र.ना.) ४ 'मिति णमुलूलोपौ' इति नागेशसंमतः पाठः । ५ अत्र मूर्धन्यषकारद्वयवानेव, विसर्गमूर्धन्यषकारवानेव वा पाठ उचितः "नुम्विसर्जनीयशर्व्यवायेऽपि" इत्यनेन प्राप्तमूर्धन्यस्य वारयितुमशक्यत्वात्, न च सौत्रत्वादेव न मूर्धन्य इति वाच्यम्, भाष्यकृता अन्यत्रैवात्र 'अयुक्तोयं निर्देशः' इति शङ्कायाः 'सौत्रो निर्देशः' इति समाधानस्य चाकरणेन शास्त्रसिद्धप्रयोगसत्त्वस्यैवात्र सूचनात् ॥ केचित्तु—औजसादौ यदीयसकारस्य षत्वं दृश्यते यथा 'पिपठिषौ पिपठिषः' इति तद्व्यवधान एव षत्वम् यथा—"पिपठीष्षु पिपठीःषु" इति । 'ओसि च' इत्यत्र षत्वादर्शनान्नाय षत्वमिति समादधिरे ॥ तत् 'सुपिसौ सुपिसः सुपीष्षु सुपीःषु' इत्येतदननुकूलत्वाच्चिन्त्यमेवेति बोध्यम् ॥ परेतु 'यचि भम्' इत्यादाविव समाहारद्वन्द्वात्सप्तम्येकवचनाङ्गीकारेण 'द्वितीयाटौस्येनः' इत्येवं पाठसत्त्वे तु न काप्यनुपपत्तिः ॥ अत एव बहुषु पुस्तकेष्वेक एव सकार उपलभ्यते । आधुनिकानां वकारपाठस्तु चिरन्तनलेखकप्रमादजो गतानुगतिक एवेति वदन्ति । वैदिकानामपि पाठः प्रक्षिप्तवार्तिकगणसूत्रविशिष्टाष्टाध्यायीपाठप्रचारवान् सर्वांशाविकृतो नेति किं कुर्मः कान् पृच्छामः पाणिनीयपाठम् । वयं तु ब्रूमः द्वितीयाटौस्स्वेन इत्येव पाठः । सौत्रश्चायं निर्देशः । भाष्येऽत्र सौत्रत्वानुक्तिस्तु बहुष्वेतादृशस्थलेषु तथा समाधानस्योक्तत्वेन स्पष्टत्वेन चोक्तप्रायत्वात् इति । (र. ना.) ६ अनुदात्तत्रादेशविधानमेवेत्यर्थः । सत्तानुमानमित्यस्येदं शब्दात्त्रलोन्वादेशे सत्तानुमापकमित्यर्थः । तथा चेदं शब्दात्त्रलोऽनुमाने इदं शब्दस्य 'एतदस्त्रतसोरित्यत्र' संबन्धाभावे न किमपि मानमिति ध्येयम् । (र.ना.) ७ अशेवेत्यर्थः ।

चानुदात्तौ" इदमोन्वादेशेऽशनुदात्तस्तृतीयादावश् भवति। ततः "द्वितीयाटौस्स्वेनः"। इदमः एतदश्च। 'तृतीयादौ' इति निवृत्तम्॥

अथ वा मण्डूकगतयोऽधिकाराः। तद्यथा— मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः॥

(प्रदीपः) मण्डूकगतय इति। इह केवलस्यादेशस्योपादानादवश्याक्षेप्यः स्थानी। न तु पूर्वत्र, साक्षात् स्थानिनो निर्देशादिति भावः॥

(आक्षेपबाधकशेषभाष्यम्)

अथ वा एकयोगः करिष्यते—"इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावेतदस्त्रतसोस्त्रतसौ चानुदात्तौ"। ततः "द्वितीयाटौस्स्वेनः" इदम एतदश्च तृतीयादाविति निवृत्तम्॥

(प्रदीपः) अथवैकयोग इति। एकं ग्रहणकवाक्यमित्यर्थः॥

(उद्द्योतः) एकं ग्रहणकेति। इदमस्तृतीयादौ एतदस्त्रतसोश्चाशनुदात्तो भवतीत्येवंरूपमित्यर्थः॥

(आक्षेपबाधकशेषभाष्यम्)

अथवोभयं निवृत्तं तदपेक्षिष्यामहे॥

(प्रदीपः) तदपेक्षिष्यामह इति। लौकिकोधिकारोऽपेक्षालक्षण आश्रीयते न तु शास्त्रीयः। अपेक्षा च लक्ष्यवशात्समुदायविषयैवेति भावः॥

(१५९६ वार्तिकम्॥ १॥)

॥ * ॥ एनदिति नपुंसकैकवचने ॥ * ॥

(भाष्यम्) एनदिति नपुंसकैकवचने वक्तव्यम्। इदं कुण्डमानय प्रक्षालयैनत् परिवर्तयैनत्॥

(प्रदीपः) एनदिति। यद्येनादेशः क्रियते तदाऽतोमित्यम्भावे सत्येनमिति प्राप्नोति एनदिति चेष्यते इति वार्तिकारम्भः॥

(आक्षेपभाष्यम्)

यद्येनत्क्रियते एनो न वक्तव्यः॥

(प्रत्याक्षेपभाष्यम्)

का रूपसिद्धिः—अथो एनम्, अथो एने, अथो एनानीति?॥

(प्रत्याक्षेपसमाधानभाष्यम्)

त्यदाद्यत्वेन सिद्धम्॥

(उद्द्योतः) एनो न वक्तव्य इति भाष्ये॥ तथा च सूत्र एवैनद्वक्तव्यः, तकारोच्चारणसामर्थ्याच्च नपुंसके लुग्विषयेऽपि भविष्यति। तकारोच्चारणसामर्थ्यात्यदाद्यत्वबाधापेक्षया क्लृप्तबाधस्य नलुमतेति निषेधस्य बाध एवोचित इति भावः॥ नचैनदस्त्यदाद्यत्वापवादत्वात्तत्र कृते त्यदाद्यत्वं दुर्लभम्, द्वितीयेत्यादिसप्तम्या आर्धधातुक इति साहचर्येण विषयसप्तमीत्वेनापवादत्वस्यैवाभावात्॥ वस्तुतो यद्येनदित्यादिः पूर्वपक्षयुक्तिरिति विषयसप्तम्यां मानाभावेनैनादेशः कार्य एवेति बोध्यम्॥

(समाधानबाधकभाष्यम्)

यद्येवमेनश्रितगो न सिध्यति। एनच्छ्रितक इति प्राप्नोति॥

(प्रदीपः) एनच्छ्रितक इति प्राप्नोतीति। अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति त्यदाद्यत्वमकृत्वा लुक् क्रियते। लुकि च कृते प्रत्ययलक्षणनिषेधात्त्यदाद्यत्वाभाव इति भावः॥

(समाधानसाधकभाष्यम्)

यथालक्षणमप्रयुक्ते॥ द्वितीयाटौ॥ ३४॥

(प्रदीपः) यथालक्षणमिति। यस्य प्रयोगो नोपलभ्यते तल्लक्षणानुसारेण संस्कर्तव्यम्। तत्र यदा न लुमताङ्गस्येत्यत्राङ्गाधिकारो निर्दिश्यते तदा प्रत्ययलक्षणेनैनच्छ्रितक इति भाष्यम्। अथानङ्गाधिकारविहितमपि अङ्गकार्यं निषिध्यते तदादेशाभावादेतच्छ्रितक इति भाष्यमित्याहुः॥ ३४॥

(उद्द्योतः) इत्याहुरिति। अत्रारुचिबीजं तु नपुंसकलुकीवात्रापि लुकि सामर्थ्यादेनदादेशप्रवृत्तिरङ्गाधिकारानिर्देशेऽपि भविष्यतीति भाष्याशयः। बहिरङ्गत्वं तु न लुग्विषये दुर्बलतानियामकमिति दिक्। वस्तुतोऽप्रयुक्तत्वाल्लक्षणस्यायमविषय इति भाष्यार्थ इति बोध्यम्॥ ३४॥

(अन्वादेशप्रकरणं समाप्तम्)

(अथार्धधातुकाधिकारप्रकरणम्)

(३५४ अधिकारसूत्रम्॥ २।४।१ आ. १९)

## ५६६ आर्धधातुके॥ २।४।३५॥

(सप्तम्या वैषयिकत्वाधिकरणम्)

(१५९७ आक्षेपवार्तिकप्रथमखण्डम्॥ १॥)

॥ * ॥ जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन्विधानम्॥ * ॥

(भाष्यम्) जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन्नार्धधातुके जग्ध्यादिभिर्भवितव्यम्॥

(आक्षेपभाष्यम्)

किमतो यत्सति भवितव्यम्?॥

(१५९८ आक्षेपवार्तिकद्वितीयखण्डम्॥ २॥)

॥ * ॥ तत्रोत्सर्गलक्षणप्रतिषेधः॥ * ॥

(भाष्यम्) तत्रोत्सर्गलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। भव्यं प्रवेयम् आख्येयम्। ण्यत्यवस्थितेऽनिष्टे प्रत्यय आदेशः स्याद्। ण्यतः श्रवणं प्रसज्येत॥

---

१ इदमेतदोः समुदायविषयेत्यर्थः। (र. ना.)
२ पुंसीति शेषः। (र. ना.)
३ नपुंसके इति शेषः। तथा च द्वितीयादि परत्वेनैनदादेशो नपुंसकेऽपि सिद्ध्यतीति भावः। (र. ना.)

( प्रदीपः ) आर्ध ॥ ३५ ॥ जग्ध्यादिष्विति । व्यक्तौ पदार्थे परसप्तम्यां सत्यां परस्मिन् व्यवस्थिते आर्धधातुके आदेशेन भाव्यम् । तत्र विशिष्टार्धधातुकाश्रयेषु जग्ध्यादिषु यद्यपि दोषाभावस्तथापि भूवीत्यत्र्यादिषु दोषः ॥ तत्रेति । उत्सर्गशब्देन स्थानी विवक्षित, आदेशेनापवादेन बाध्यमानत्वात् ॥

( उद्द्योतः ) आर्धधा ॥ ३५ ॥ व्यक्ताविति । परसप्तम्या उक्तित्वेतया तत्पक्षस्यैवाश्रयणमुचितमिति भावः ॥ तथापि भूवीति । अत एव जग्ध्यादिष्वित्युक्त्वाऽपि भव्यमित्याद्येव भाष्ये उदाहृतम् । वचेरप्युपलक्षणमेतत् ॥ ण्यतो यदुत्सर्गत्वाभावादाह— उत्सर्गशब्देनेति ॥ भाष्ये—ण्यतः श्रवणमिति । ण्यत्कार्यस्य वृद्ध्यादेरित्यर्थः ॥

( १५९९ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सामान्याश्रयत्वाद्विशेषस्यानाश्रयः ॥ * ॥

( भाष्यम् ) सामान्ये ह्याश्रीयमाणे विशेषो नाश्रितो भवति तत्रार्धधातुकसामान्ये जग्ध्यादिषु यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ॥

( प्रदीपः ) सामान्याश्रयत्वादिति । आकृतिपदार्थाश्रयेणोत्तरम् ॥

( उद्द्योतः ) आकृतीति । एवं चार्धधातुकत्वजातिविषये आदेशा नतु प्रत्यये परे इति भ्वाद्यादेशेषु कृतेषु पश्चाद्यदेव भविष्यतीति भावः ॥

( १६०० आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधिप्रसङ्गः ॥ * ॥

( भाष्यम् ) सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेद् उवर्णाकारान्तेभ्यो ण्यत्प्राप्नोति । लव्यं पव्यमिति आर्धधातुकसामान्ये गुणे कृते यि प्रत्ययसामान्ये च वान्तादेशे "हलन्ताद्" इति ण्यत्प्राप्नोति । इह च दित्स्यं धित्स्यम् आर्धधातुकसामान्ये अकारलोपे कृते "हलन्ताद्" इति ण्यत्प्राप्नोति ॥

( प्रदीपः ) जातिपक्षस्य दोषवत्तां प्रतिपादयितुमाह— उवर्णाकारान्तेभ्य इति ॥

( उद्द्योतः ) जातिपक्षस्येति । सर्वेषां निमित्तवाचकशब्दानां जातिपरत्वं स्यादित्यभिप्रायेण दोषदानमिति भावः ॥ दित्स्यधित्स्ययोर्यति यतोऽनाव इत्याद्युदात्तत्वम्, ण्यति तित्स्वरितमिति स्वरितत्वमिति भेदः ॥

( १६०१ आक्षेपान्तरवार्तिकम् ॥ ५ )

## ॥ * ॥ पौर्वापर्याभावाच्च सामान्येनानुपपत्तिः ॥ * ॥

( भाष्यम् ) पौर्वापर्याभावाच्च सामान्येन जग्ध्यादीनामनुपपत्तिः । न हि सामान्येन पौर्वापर्यमस्ति ॥

( प्रदीपः ) इदानीमाकृतिपक्षाश्रयस्यासंभवमाह—पौर्वापर्याभावाच्चेति । सामान्यस्य व्यापकत्वान्नित्यत्वाच्च देशकालकृतं पौर्वापर्यं नास्ति । सप्तम्या चेह परत्वं प्रतिपादितम् । तस्माद्व्यक्तिपक्षः परत्वोपपत्तय आश्रयणीयः । तत्र च भव्याद्यसिद्धिः ॥

( उद्द्योतः ) व्यापकत्वादिति । सर्वदेशस्थाश्रयाश्रितत्वादिति भावः । तत्र व्यापकत्वाद्देशकृतं नित्यत्वात्कालकृतमिति विभागः ॥ सप्तम्या चेहेति । तस्मिन्निति शास्त्रबलादत्र शास्त्रे विषयसप्तम्यभावं मन्यते ॥

( १६०२ न्यासान्तरेणसमाधानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ सिद्धं तु सार्वधातुके प्रतिषेधात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम् ? । अविशेषेण जग्ध्यादीनुक्त्वा "सार्वधातुके न" इति प्रतिषेधं वक्ष्यामि ॥

( आक्षेपभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् *जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन्विधानम्* इति ॥

( समाधानस्मारणभाष्यम् )

परिहृतमेतत् *सामान्याश्रयत्वाद्विशेषस्यानाश्रय* इति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् *सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधिप्रसङ्ग* इति ॥

( समाधानभाष्यम् )

नैष दोषः । वक्ष्यति तत्राज्ग्रहणस्य प्रयोजनम्- 'अजन्तभूतपूर्वमात्रादपि यथा स्याद्' इति ॥

( प्रदीपः ) वक्ष्यति तत्रेति । हलन्ताद् ण्यतो विधानादज्ग्रहणमन्तरेणाप्यजन्तादेव यति सिद्धेऽज्ग्रहणं भूतपूर्वस्याप्यजन्तस्य परिग्रहार्थमित्यर्थः ॥

---

१ असजूचक्षिङामादेशेषु इति शेषः । ( र. ना. ) २ परसप्तमी औपश्लेषिकेऽधिकरणे विषयसप्तमी तु विषयिरूपेऽधिकरणे । विषयिणस्तत्त्वन्त्वारोपित्तमिति भावः । (र. ना.) ३ आर्धधातुकसामान्ये विषयभूते जग्ध्यादिषु कृतेष्वित्यर्थः । ( र. ना. ) ४ त्रिष्वपि पुस्तकेषु 'पि' इत्युपलभ्यते स शोधकशोधित एव भवेत् । ५ तत्र 'अचो यत्' इति सूत्रे भाष्ये।

( उद्योतः ) भूतपूर्वस्येति। अङ्गत्वस्य विधानप्रतिबद्धतया-ङ्गाधिकारे सामान्याश्रयत्वस्य वक्तुमशक्यतया ण्यल्लोपावियङ्यण्गुणेत्यादिपूर्वविप्रतिषेधवार्तिकभाष्येण अतोलोपादीनां स्थानिवत्त्वपरभाष्यविरोधेन[1] चास्य भाष्यस्य प्रौढिवादपरत्वमिति केचित्। वस्तुतो विषयसप्तम्यामपि परनिमित्तत्वं[2] वक्तुं शक्यमिति न दोषः। अङ्गसंज्ञासूत्रेऽपि यस्मात् यस्य प्रत्ययस्य विधानं तस्मिन्विवक्षित एवाङ्गत्वविधानेऽपि न दोष इति भाष्याशयः॥

( द्वितीयाक्षेपपरिहारबाधकभाष्यम् )

**यदप्युच्यते—*पौर्वापर्याभावाच्च सामान्येनानुपपत्तिः* इति॥ अर्थसिद्धिरेवैषा यत्सामान्येन पौर्वापर्यं नास्तीति। असति पौर्वापर्ये विषयसप्तमी विज्ञास्यते 'आर्धधातुके विषये' इति। तत्रार्धधातुके विषये जग्ध्यादिषु कृतेषु यो यतः प्राप्नोति स ततो भविष्यति॥**

**अथ वा आर्धधातुकास्विति वक्ष्यामि। कासु आर्धधातुकासु?। उक्तिषु युक्तिषु रूढिषु प्रतीतिषु श्रुतिषु संज्ञासु॥ आर्धधातुके॥ ३५॥**

( प्रदीपः ) **अर्थसिद्धिरिति**। एषैव प्रयोजनसंपत्तिरित्यर्थः॥ **विषये इति**। बुद्धिस्थ इत्यर्थः। अभिव्यङ्क्ष्यते तत्रार्धधातुकत्वमित्येवं बुद्ध्या निरूपित इति भावः॥ **अथ वेति**। व्यक्तिपक्षाश्रयणेपि न दोष इत्युक्तं भवति। नित्यानां भव्यादीनां शब्दानामनेन साधुत्वमात्रं प्रतिपाद्यते। तत्रार्धधातुकं विद्यते यासु ता भव्यादय आर्धधातुकावयवाः शब्दसंहतय आर्धधातुकशब्देनार्शआदित्वादच्प्रत्ययान्तेनोच्यन्ते॥ **उक्तिष्विति**। उच्यन्ते उच्चार्यन्त इत्युक्तयस्ता एव शब्दसंहतयः। अन्ये तु उच समवाय इत्यस्य क्तिन्युक्तिशब्दः संहतिपर्याय इत्याहुः। समवायो हि संहतिः॥ **युक्तिष्विति**। अर्थेन संबद्धास्वित्यर्थः॥ **रूढिष्विति**। परमार्थतो नित्यास्वित्यर्थः॥ **प्रतीतिष्विति**। अनेन नित्यत्वेपि व्यवहारानित्यत्वं प्रतिपाद्यते। तदेव दर्शयति—**श्रुतिष्विति**। एवं भूतानामेव व्यवहारे श्रूयमाणत्वादित्यर्थः॥ **संज्ञास्विति**। बालव्युत्पत्तये प्रकृत्यादिविभागेन संज्ञायमानास्वित्यर्थः। ततश्च **यस्य च भावेने**ति सप्तमी। आर्धधातुकासु संहतिषु व्युत्पाद्यमानासु अस्त्यादीनां भ्वादय आदेशा इत्युक्तं भवति॥ ३५॥

( उद्योतः ) भाष्ये—**असति पौर्वापर्ये इति**। न च व्यक्तिद्वारकं पौर्वापर्यम्। अतएव हलन्ताच्चेति सूत्रे व्यक्तिद्वारकं सामीप्यं कैयटेनोक्तम्। अतः कथमिदं भाष्यमिति वाच्यम्॥ तस्य कैयटस्य तत्रैव सूत्रेऽप्रयोजकत्वस्य[3] मया बोधितत्वात्। परम्परासम्बन्धस्यासम्बन्धतया अनेकमन्यपदार्थे इति सूत्रे भाष्ये उक्तेः॥ **आर्धधातुकावयवा इति**। अत एवैषां यङ्लुगन्ते प्रयोगा नेत्याहुः। लुकि आर्धधातुकावयवत्वाभावात्॥ **प्रतीतिष्विति**। प्रयुज्यमानास्वित्यर्थः। न केवलेति सङ्केतात् प्रकृतिप्रत्ययसमुदाय एव प्रयुज्यते। एवं च तस्य व्यावहारिकत्वादनित्यत्वं संपन्नमित्याह—**व्यवहारेति**॥ ३५॥

---

( ३५५ आदेशसूत्रम्॥ २। ४। १ आ. २० )

## ५६७ अदो जग्धिर्ल्यप्ति किति॥ २। ४। ३६॥

( अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधत इति परिभाषाधिकरणम् )

( आक्षेपभाष्यम् )

**ल्यब्ग्रहणं किमर्थम्। न 'ति किती'त्येव सिद्धम्॥**

( आक्षेपबाधकभाष्यम् )

**ल्यपि कृते न प्राप्नोति॥**

( आक्षेपसाधकभाष्यम् )

**इदमिह संप्रधार्यम्—ल्यप् क्रियताम्, आदेशः, किमत्र कर्तव्यम्?। परत्वाल्ल्यप्। अन्तरङ्ग, आदेशः॥**

( प्रदीपः ) **अदो जग्धि॥ ३६॥ अन्तरङ्ग आदेश इति**। तत्करादिप्रत्ययमात्रापेक्षत्वात्। ल्यबादेशस्तु पूर्वपदापेक्षसमासाश्रयत्वाद् बहिरङ्गः॥

( उद्योतः ) **अदोजग्धि॥ ३६॥ तकारादिप्रत्ययमात्रेति**। सूत्रे[4] विषयसप्तमीति युक्तं वक्तुम्॥

( समाधानभाष्यम् )

**एवं तर्हि सिद्धे सति यल्ल्यब्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—'अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब् बाधते' इति। किमेतस्य ज्ञापने प्रयोजनम्?। *ल्यबादेश उपदेशिवद्वचनमनादिष्टार्थं बहिरङ्गलक्षणत्वाद्* इति वक्ष्यति, तन्न वक्तव्यं भवति॥**

( प्रदीपः ) **अनादिष्टार्थमिति**। प्रधाय प्रस्थायेत्यादौ हित्वादिष्वकृतेष्वेव ल्यब् यथा स्यादित्यर्थः। कथं न प्राप्नोतीत्याह—**बहिरङ्गलक्षणत्वादिति**॥

(उद्योतः) भाष्ये—**उपदेशिवद्वचनमिति**॥ उपदेशी क्त्वा तद्वत् ल्यपो वचनं कार्यमित्यर्थः। भाविन्येव समासे क्त्वो ल्यबादेश इति भावः। **अनादिष्टार्थं** हित्वाद्यादेशाभावार्थमित्यर्थः॥ प्रधाये-

---

1 स्थानिवत्त्वेन तात्कालिकमेवाजन्तत्वं ततो भाष्याल्लभ्यते इति भावः। (र.ना.)
2 विषयत्वेऽपि परत्वमनपेतमेवेति भावः। (र. ना.) 3 अप्रयोजकेति॥ अत्रत्येन 'पौर्वापर्याभावाच सामान्येनानुपपत्तिः' इति वार्तिकेन 'इक उत्तरा या हल्जातिः' इति 'हलन्ताच्च' इति सूत्रस्थभाष्यस्यैकवाक्यता प्रौर्वापर्यस्य व्यक्तिद्वारकत्वमन्तरा न संभवतीति 'परेतु—हल्जातिरित्यस्य तज्जात्याश्रयहल्समुदाय इत्यर्थः। तस्य च साक्षादेव सामीप्यं ततः परत्वं चोपपद्यते' इति नागेशस्य लेखे तज्जात्याश्रयपदेन व्यक्तिभिन्नस्य ग्रहीतुमशक्यत्वेन कथमप्रयोजकता कैयटस्य दर्शितेति विचारयन्तु विचारशीला विद्वांसः॥ इति दाधिमथाः॥ 4 परनिमित्तकत्वमेव बहिरङ्गत्वमभिमेत्याह सूत्रे इत्यादि। (र. ना.)

त्यादि । हित्वेत्यादिष्वनादिष्टेषु अकृतेषु यथा स्यादित्येपो ऽनादिष्टार्थमित्यस्यार्थ इति भावः ॥ हित्वादिष्विति । आदिना हित्वदत्त्वेत्वदीर्घत्वानि गृह्यन्ते ॥

( संवादभाष्यम् )

जग्धिविधिर्ल्यपि यत्तदकस्मा-
त्सिद्धमदस्ति कितीति विधानात् ॥
हिप्रभृतींस्तु सदा बहिरङ्गो
ल्यब्भरतीति कृतं तदु विद्धि ॥ १ ॥

( प्रदीपः ) अयमेवार्थो व्याघ्रभूतिनाप्युक्त इत्याह— **जग्धिविधिरिति ॥ अकस्मादिति ।** निष्प्रयोजनमित्यर्थः ॥ **सिद्धमद इति ।** जग्धिविधानं सिद्धमित्यर्थः ॥ ज्ञापनार्थं ल्यपि जग्धिविधानमित्याह—**हिप्रभृतीनिति ॥ ल्यब्भरतीति ।** ल्यबादेशो ह्रस्वमपनयति बाधत इत्यर्थः ॥ **तदु इति ।** उशब्दो निपातोऽवधारणार्थः । तद्विद्ध्येवेत्यर्थः ॥ ३६ ॥

( उद्द्योतः ) वार्तिके य(त्त)दिति सामान्ये नपुंसकम् । जग्धिरिति यः स इत्यर्थः ॥ अकस्मात् । न कस्माच्चित्प्रयोजनादित्यर्थः । अनर्थक इति भावः । कुतस्तत्राह—**सिद्धमिति ।** अद इति । सामान्ये नपुंसकम् । यतोऽत इति च शेषः ॥

( संवादभाष्यम् )

एष एवार्थः—

"जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ॥

ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्" इति ॥ अदोजग्ध ॥ ३६ ॥

( उद्द्योतः ) **एष एवार्थ इति ।** अन्येन निबद्ध इति शेषः । मया निबध्यत इति वा ॥ ३६ ॥

---

( ३५६ आदेशसूत्रम् ॥ २ । ४ । १ आ. २१ )

## ५६८ लुङ्सनोर्घस्लृ ॥ २ । ४ । ३७ ॥

( १६०३ शेषवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ घस्लृभावेऽच्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) घस्लृभावेऽच्युपसंख्यानं कर्तव्यम् । प्रात्तीति प्रघसः ॥ लुङ्सनो ॥ ३७ ॥

---

( ३५७ आदेशसूत्रम् ॥ २ । ४ । १ आ. २२ )

## ५७३ हनो वध लिङि ॥ २ ।४। ४२ ॥

( ३५८ आदेशसूत्रम् ॥ २ । ४ । १ आ. २३ )

## ५७४ लुङि च ॥ २ । ४ । ४३ ॥

( आदेशेऽदन्तत्वनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किमयमदन्तः, आहोस्विद्व्यञ्जनान्तः ? ॥**

( प्रदीपः ) **हनो वध ॥ ४२ ॥ किमयमिति ।** किं कार्यार्थोऽकारोऽथोच्चारणार्थ इति प्रश्नः ॥

( भाष्यम् ) किं चातः ? ॥

( विशेषप्रदर्शकभाष्यम् )

यदि व्यञ्जनान्तः *वधौ व्यञ्जनान्त उक्तम्* । किमुक्तम् ? । *वध्यादेशे वृद्धितत्वप्रतिषेध इड्विधिश्च* इति । अथादन्तः । न दोषो भवति ॥

( प्रदीपः ) **वृद्धितत्त्वप्रतिषेध इति ।** अवधीदित्यत्रातो हलादेर्लघोरिति हलन्तलक्षणा वृद्धिः प्राप्नोति, वधक इति ण्वुलि वधादेशे औपसंख्यानिके कृते **अत उपधाया** इति वृद्धिः प्राप्नोति, सा **जनिवध्योश्चेति** प्रतिषिध्यते । स्थानिवद्भावात्तु तत्वं प्राप्तम् ॥ **इड्विधिश्चेति ।** अवधीदित्यादावेकाच्त्वादिट्प्रतिषेधः प्राप्नोतीतीड्विधेयः ॥ अदन्तत्वे त्वल्लोपस्य स्थानिवत्त्वाद्वृद्धितत्वादेरभावः । तत्वं **त्वलोन्त्यस्य** क्रियते । तत्राकारो लुप्तत्वात् स्थानी न भवति धकारोपि अल्लोपस्य स्थानिवत्त्वादन्त्यो न भवतीति तत्त्वाभावः । उपदेशेऽनेकाच्त्वाच प्रतिषेधाभावादिट्सिद्धिः ॥ ४२ ॥ ४३ ॥

( उद्द्योतः ) **हनोवध ॥ ४२ ॥ ४३ ॥ हलन्तलक्षणेति ।** हलन्तलक्षणायाः प्रतिप्रसवभूतेत्यर्थः ॥ **औपसंख्यानिके इति ।** बहुलं तणीत्यनेनेति भावः । **स्थानिवद्भावादिति । स्थानिवदादेश** इत्यनेन ॥ **अल्लोपस्येति । अचः परस्मिन्नि**त्यनेन । एवञ्च जनिवध्योश्चेति सूत्रे वधिग्रहणं न कार्यमिति भावः । स्वतन्त्रो वधधातुस्तु नास्त्येव[1] । अत एव व्यञ्जनान्तेऽवधीदित्यादौ **वृद्धिप्रतिषेधो वक्तव्य** इति संगच्छते । अन्यथा तस्य वृद्धेर्दुर्वारत्वेन तदसङ्गतिः ॥ **लुप्तत्वात्तत्स्थानी न भवतीति ।** अतिदेशेनाहार्यबुद्धिसत्त्वेऽपि षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वात् ॥ **उपदेश इति ।** वध्युपदेश इत्यर्थः । उपदेशत्वावच्छेदेनैकाच्त्वस्य विवक्षणादिति भावः ॥ ४२ ॥ ४३ ॥

---

१ नास्त्येवेति । इदं च रायमुकुटोक्तिखण्डनाग्रहग्रहाविष्टस्य स्वगुरुहरिदीक्षितपितृव्यभानुजीदीक्षितस्योक्त्यनुसारेणैव ॥ दाधिमथास्तु—पाणिनेस्तत्त्ववारणयत्नाकरणेन वधादेशेऽदन्ततायामेव संमतायां वृद्धप्राप्तौ वधेर्वृद्धिनिषेधस्य वैयर्थ्यापत्त्या स्वतन्त्रवधधातुरपि संमत एव । अत एव भाष्यकृता अन्यत्रैव 'तत्र वक्तव्यं भवति' इति प्रयोगेण वैयर्थ्ये इष्टापत्तिर्न बोधिता ॥ अत एव भट्टोजिदीक्षितेन 'जुचंकम्य–' इति सूत्रपठितजुधातोरिव 'जनिवध्योश्च' इति सूत्रपठितवधधातोरपि 'वध हिंसायाम्' इत्येवमर्थनिर्देशः कृतः । सूत्रे पाठेन गणपाठमन्तराऽनुपपन्नधातुसंज्ञामन्तरेणानुपपन्नप्रत्ययविधानेनैव गणपाठे लेखप्रमादात्पाठो नष्ट इत्यनुमीयते । 'वृद्धिप्रतिषेधः' इत्यतः प्राक् 'तदर्थमपि' इति शेषपूर्त्या नैव भाष्यविरोधः ॥ इति वदन्ति ।

( सिद्धान्तिभाष्यम् )

**यथा न दोषस्तथास्तु ॥ हनो ॥ ४२ ॥ ४३ ॥**

( ३५९ आदेशसूत्रम् ॥ २ । ४ । १ आ. २४ )

## ५७६ इणो गा लुङि ॥ २ । ४ । ४५ ॥

( १६०४ अतिदेशवार्तिकम् ॥ १ ॥ )

**॥ * ॥ इण्वदिकः ॥ * ॥**

( भाष्यम् ) इण्वदिक इति वक्तव्यम् । इहापि यथा स्यात्—अध्यगात् । अध्यगाताम् । अध्यगुः ॥ इणो गा ॥ ४५ ॥

( ३६० आदेशसूत्रम् ॥ २ । ४ । १ आ. २५ सू. )

## ५७७ णौ गमिरबोधने ॥ २।४।४६ ॥

( भाष्यम् ) इण्वदिक इत्येव । अधिगमयति । अधिगमयतः । अधिगमयन्ति ॥ णौ गमि ॥ ४६ ॥

( ३६१ आदेशसूत्रम् ॥ २ । ४ । १ आ. २६ )

## ५७८ सनि च ॥ २ । ४ । ४७ ॥

( भाष्यम् ) इण्वदिक इत्येव । अधिजिगमिषति । अधिजिगमिषतः । अधिजिगमिषन्ति ॥ सनि च ॥ ४७ ॥

( ३६२ आदेशसूत्रम् ॥ २ । ४ । १ आ. २७ )

## ५८० गाङ् लिटि ॥ २ । ४ । ४९ ॥

( ङित्करणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

ङित्करणं किमर्थम् ? ॥

( प्रदीपः ) गाङ् लिटि ॥ ४९ ॥ स्थानिवद्भावात्सिद्धमात्मनेपदं मत्वाह—ङित्करणमिति ।

( १६०५ सिद्धान्तिसमाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ गाङ्यनुबन्धकरणं विशेषणार्थम् ॥ * ॥**

( भाष्यम् ) गाङ्यनुबन्धकरणं क्रियते । विशेषणार्थम् ॥ क्व विशेषणार्थेनार्थः ? । "गाङ्कुटादिभ्योऽञ्णिन्ङिद्" इति । 'गाकुटादिभ्यः' इति ह्युच्यमाने इणादेशस्यापि प्रसज्येत ॥

( प्रदीपः ) इणादेशस्यापीति । ततश्चागासातां ग्रामौ देवदत्तेनेत्यादौ ङित्त्वादीत्वप्रसङ्गः ॥ गाङ्कुटादिभ्य इति तूच्यमानेस्यैव ग्रहणं भवति, न तु गाङ् गतावित्यस्य एतद्ङकारस्यात्मनेपदविधौ चरितार्थत्वादादेशेनानन्यार्थङकारेण तुल्यताऽभावात् ॥

( उद्द्योतः ) गाङ् लिटि ॥ ४९ ॥ ङित्वादीत्वेति । घुमास्थेत्यनेनेति भावः ॥ इणः परस्मैपदित्वेन लुङि गातिस्थेति सिचो लोपादातिदेशिकङित्त्वभाजोऽभावात्कर्मणि च्चिण्वदिडभावपक्षे उदाहृतम् ॥ न तु गाङ् गताविति । तस्यापि ग्रहणे तु सामान्यग्रहणार्थमिति वदेत् । नतु विशेषणार्थमितीति भावः ॥ तुल्यताभावादिति । वस्तुतो भाष्यप्रामाण्येन व्याख्यानादेवास्याग्रहणम् । अतएव घटायोन्मीलितमिति[1] न्यायविरोधो न ॥

( १६०६ एकदेशिसमाधानान्तरवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ज्ञापकं वा सानुबन्धकस्यादेशवचन इत्कार्याभावस्य ॥ * ॥**

( भाष्यम् ) अथ वैतज्ज्ञापयत्याचार्यः—सानुबन्धकस्यादेश इत्कार्यं न भवतीति ॥

( प्रदीपः ) ज्ञापकं चेति । सानुबन्धाद्यत्र षष्ठ्युच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेशः प्रवर्तते । कृतायां वेत्संज्ञायां[2] तन्निबन्धनानि कार्याणि न प्रवर्तन्त इति ज्ञापनार्थं ङकारोच्चारणमित्यर्थः ॥

( उद्द्योतः ) सानुबन्धादिति । गाङ्कुटादिभ्य इत्यत्र व्याख्यानादिङादेशस्यैव ग्रहणं भविष्यतीत्याशयेन ज्ञापकोपन्यासः ॥ कृतायाञ्चेति[3] । अनल्विधाविति प्रतिषेधस्तु स्थान्यलाश्रये कार्ये । अनुबन्धश्च लुप्तत्वात्स्थानिनि न संनिधीयत इत्यर्थः ॥

( भाष्यम् ) किमेतस्य ज्ञापने प्रयोजनम् ? ॥

( १६०७ प्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रयोजनं चक्षिङः ख्याञ् ॥ * ॥**

( भाष्यम् ) (चक्षिङः ख्याञ्प्रयोजनम्—चख्यौ ख्यास्यति) इति 'ङित' इत्यात्मनेपदं नित्यं न भवति ॥

( १६०८ प्रयोजनवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ लटः शतृशानचौ ॥ * ॥**

( भाष्यम् ) (लटः शतृशानचौ) प्रयोजनम् पचमानो यजमान इति 'टित' इत्येत्वं न भवति ॥

( प्रदीपः ) शतृशानचाविति । सूत्रे सहनिर्दिष्टत्वादत्रापि सहोपादानम् । शानजेव त्वात्मनेपदत्वात् प्रयोजनम् ॥

( १६०९ प्रयोजनवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ युवोरनाकौ ॥ * ॥**

( भाष्यम् ) युवोरनाकौ च प्रयोजनम् । नन्दनः कारकः नन्दना कारिकेति । उगिल्लक्षणौ ङीब्नुमौ न भवतः ॥

---

१ 'गाङ्लिटि' इति द्विलकारको निर्देशः इति द्विर्वचनेचीत्यत्र भाष्यम् ॥ तत्र यद्यपि 'हलो यमां यमि' इति लोपेनैकलकारकप्रयोगेपि भाष्योपदर्शितार्थसिद्धिः तथापि 'लुप्तनिर्दिष्टो लकारः' इत्यनुक्त्वा 'द्विलकारको निर्देशः' इत्युक्तेर्लकारद्वयश्रवण एव तात्पर्यम् । वयन्तु ब्रूमो लोपेन द्विलकारकोनिर्देश इत्यत्रैव किं न भाष्यतात्पर्यमिति । ( र. ना. ) २ अयं भावः—यथा घटायोन्मीलितं चक्षुः पटादिकमपि संनिहितं प्रकाशयत्येव तथा गाङ्कुटादिभ्य इत्यनेनादेश परिग्रहेऽपि गाङ्गताविल्यस्यापि परिग्रहः स्यादेवेति भावः । ( र. ना. ) ३ 'कृतायां चेत्संज्ञा—' इति पाठो नागेशेनादृतः । ४–५ अयं कोष्ठकान्तर्गतः पाठो न सर्वत्रोपलभ्यते ।

( प्रदीपः ) युवोरनाकाविति । भुज्युशंयूर्णायुप्रभृतिष्वादेशनिवारणायानुनासिकोकारानुबन्धौ युवू सूत्रे निर्दिष्टौ । तत्रादेशप्रवृत्तावेतस्माज्ज्ञापकादुगित्कार्याप्रवृत्तिरिति ङीम्नुमोरभावः ॥

( उद्योतः ) भाष्ये—नन्दनेति । 'ल्युः कर्तरि पुंसि' इत्यमरस्य प्रमादः ॥

( १६१० दूषणवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ मेश्चानुबन्धकस्याम्वचनम् ॥ * ॥**

**( भाष्यम् ) मेश्चानुबन्धकस्याम्वक्तव्यः । अचिनवम् । असुनवम् । अकरवम् ॥**

( प्रदीपः ) ज्ञापकस्यातिव्याप्तिं दृष्ट्वाह—**मेश्चेति** । तस्थस्थमिपामित्यत्र मिब्ग्रहणमपनीय मिग्रहणं कर्तव्यमित्यर्थः । तेन सानुबन्धः स्थानी न भवतीति पित्कार्यं प्रवर्तते ॥ **अचिनवमिति** । पित्त्वात् ङित्त्वाभावाद् गुणो भवति । मा हि स्म चिनवमिति चानुदात्तत्वम् ॥

( उद्योतः ) इति चानुदात्तत्वमिति । पित्त्वादित्यर्थः । अट्निषेधाय माङ्, लङर्थः स्मः, निघातप्रतिषेधाय हिः ॥

( वार्तिकपूर्तिभाष्यम् )

**अत्यल्पमिदमुच्यते—मेरिति । तिप्सिप्मिपामिति वक्तव्यम् । इहापि यथा स्यात्—वेद वेत्थ ॥**

( प्रदीपः ) वार्तिककारस्याव्याप्तिमुद्भावयन्नाह—**अत्यल्पमिति** । णलादिविधौ तु तिप्सिपोः सानुबन्धकयोरनुपादानान्नास्ति दोष इति चिन्त्य[2]मेतत् ॥

( उद्योतः ) चिन्त्यमेतदिति । वस्तुतस्तु परस्मैपदानां णलतुर्विदो लटो वेत्यादौ यथासंख्यनिर्वाहाय परस्मैपदानां क्रमेणोपस्थितये तिप्तसित्यादिसूत्रस्थक्रमेणोपस्थितौ सानुबन्धकयोरेवोपस्थितिरिति भाष्याशयः ॥

( ज्ञापितप्रत्याख्यानभाष्यम् )

**अस्य ज्ञापकस्य सन्ति दोषाः ॥**

**सन्ति प्रयोजनानि ॥**

**दोषाः समाः भूयांसो वा । तस्मान्नार्थो ज्ञापकेन ॥**

( प्रदीपः ) **भूयांसो वेति** । दोषबहुत्वारोपेण निन्दामाह ॥ **तस्मादिति** । विशेषणार्थं तु ङित्करणं स्थितम् ॥

( उद्योतः ) निन्दामाहेति । अन्यथा दोषाणामाधिक्याभावात्प्रकर्षप्रयोगोऽनुपपन्न इति भावः ॥

( आक्षेपभाष्यम् )

**कथं यानि प्रयोजनानि ? ॥**

( समाधानभाष्यम् )

**नैतानि सन्ति । इह तावत् "चक्षिङः ख्याञ्" इति । ञित्करणसामर्थ्याद्विभाषात्मनेपदं भवष्यति ॥**

( प्रदीपः ) विभाषात्मनेपदमिति । कर्त्रभिप्राये क्रियाफले आत्मनेपदं नान्यत्रेत्यर्थः ॥

( उद्योतः ) स्वरितञित इत्यत्र विकल्पवाचिनोऽनुपादानादाह—कर्त्रंसीति ॥

( द्वितीयप्रयोजननिराकरणम् )

**"लटः शतृशानचौ" इति । वक्ष्यत्येतत्—"प्रकृतानामात्मनेपदानां टेरेत्वं भवति" इति ॥**

( प्रदीपः ) प्रकृतानामिति । तिप्तस्झीत्यत्र यान्यात्मनेपदान्युपात्तानि तेषामित्यर्थः ॥

( तृतीयप्रयोजननिराकरणभाष्यम् )

**"युवोरनाकौ" इति । वक्ष्यत्येतत्—*सिद्धं तु युवोरनुनासिकत्वाद्* इति ॥ गाङ् ॥ ४९ ॥**

( प्रदीपः ) सिद्धं त्विति । अनुनासिक[3]यणोरेवादेशो नान्ययोरित्यर्थः । ततश्च स्थानिनोरेवोगित्त्वं नास्तीति कुतस्तदादेशयोरुगित्कार्यप्रसङ्गः ॥ ४९ ॥

( उद्योतः ) अनुनासिकयोरिति । युवोरिति विशेष्यम् । उगित्त्वं नास्तीति । उकारविशिष्टस्य स्थानित्वादिति भावः ॥४९॥

( ३६३ आदेशसूत्रम् ॥ २ । ४ । १ आ. २८ )

## ५८५ चक्षिङः ख्याञ् ॥ २ । ४ । ५४ ॥

( आदेशनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किमयं क्शादिः, आहोस्वित्ख्यादिः ॥**

( प्रदीपः ) चक्षिङः ॥ ५४ ॥ लक्ष्ये रूपद्वयदर्शनादेकतराश्रयणे इतरासिद्धिप्रसङ्गात् पृच्छति—**किमयमिति** ॥

( उद्योतः ) चक्षिङः ख्या ॥ ५४ ॥ रूपद्वयेति । चक्शौ चख्याविती त्यर्थः ॥ भाष्ये—ख्यादिरिति । खकारयकारादिरित्यर्थः । एवं क्शादिः ख्शादिरित्यपि ककारशकारादिः खकारशकारादिरित्यर्थकम् ॥

( १६११ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ चक्षिङः क्शाञ्ख्याञौ ॥ * ॥**

**( भाष्यम् ) चक्षिङः क्शाञ् ख्याञ् इति क्शादिः ख्यादिश्च ॥**

( १६१२ सिद्धान्तिसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ख्शादिर्वा ॥ * ॥**

**( भाष्यम् ) अथ वा ख्शादिर्भविष्यति ॥**

---

१ हि चेल्यनेनेति भावः । ( र. ना. ) २ चिन्त्यमिति । चिन्ताबीजं तु क्त्वो ल्यप् ङेरामादिविधौ सानुबन्धकादेशत्वादित्कार्याप्रवृत्तौ निर्भिद्य प्रमृज्य परिगृह्य प्रसृज्य खट्वायामित्यादौ गुणवृद्धिप्रतिषेधसंप्रसारणादियाडादीनामप्रसङ्गः । तस्मादुपलक्षणं तिप्सिपोर्ग्रहणमिति भाष्याशयः । अत एवोत्तरत्र भाष्ये—अस्य ज्ञापकस्य सन्ति दोषा इति बहुवचनमुपात्तम् । ३ अनुनासिकेति । अनुनासिको यण् ययोरित्यर्थः ॥ काशीस्थपण्डितैस्तु 'अनुनासिकयोः' इत्येवं शोधितम् ॥ वस्तुतस्तु अनुनासिकयोरिति पाठेऽपि अर्शआद्यचा वा मत्वर्थलक्षणया वाऽनुनासिकयणोरित्यर्थो लभ्यत एव । तथा सत्युकारस्यानुनासिकत्वभ्रान्तिप्रसक्तिस्तु न—युवोरिति स्थानषष्ठ्योकारविशिष्टे स्थानित्वस्य निर्धारितत्वात् । उकारस्यानुनासिकत्वे तद्विरोधात् । अत एवोद्योते उकारविशिष्टस्य स्थानित्वादित्युक्तम् । वार्तिककृताऽपि च—सिद्धं तु युवोरनुनासिकत्वादित्युक्तं न तु अनुनासिकयणत्वादिति । तथा चानुनासिकयोरिति पाठः समुपलभ्यते चोपपद्यते चेति ध्येयम् । ( र. ना. )

(आक्षेपभाष्यम्)

केनेदानीं कृशादिर्भवति? ॥

(समाधानभाष्यम्)

चर्त्वेन ॥

(आक्षेपभाष्यम्)

(अथ) ख्यादिः कथम् ॥

(१६१३ समाधानवार्तिकम् ॥ ३ ॥)

**॥*॥ असिद्धे शस्य यवचनं विभाषा ॥*॥**

(भाष्यम्) असिद्धे शस्य विभाषा यत्वं वक्तव्यम् ॥

(प्रदीपः) असिद्ध इति । पूर्वत्रासिद्धमित्यधिकारे णत्वविधानानन्तरं शस्य यत्वं विभाषा वक्तव्यम् । तत्र यत्वस्य पूर्वत्रासिद्धत्वात्तन्निमित्तं कार्यं न प्रवर्तते शकारनिमित्तं च प्रवर्तते । चर्त्वे तु कर्तव्ये यत्वं सिद्धमिति खस्य चर्त्वाभावादाख्यातेत्यादि सिध्यति ॥

(आक्षेपभाष्यम्)

किं प्रयोजनम्? ॥

(१६१४ प्रयोजनवार्तिकम् ॥ ४ ॥)

**॥*॥ प्रयोजनं सौप्रख्ये वुञ्विधिः ॥*॥**

(भाष्यम्) सौप्रख्य इति योपधलक्षणो वुञ्विधिर्न भवति ॥ सौप्रख्यीय इति "वृद्धाच्छ" इति छो भवति ॥

(प्रदीपः) सौप्रख्येवुञ्विधिरिति । अकारप्रश्लेषात्सौप्रख्यशब्दे वुञ्विधिर्न भवतीत्यर्थः । सुप्रचष्ट इति सुप्रख्यः । आतश्चोपसर्ग इति कः । यत्वस्यासिद्धत्वात् सुप्रख्यस्य भाव इति योपधलक्षणवुञभावात् ष्यञ् भवतीति ॥ तथा सुप्रख्येन निर्वृत्तो देशः सौप्रख्यस्तत्र भवः सौप्रख्यीय इति धन्वयोपधाद्वुञिति वुञभावे वृद्धाच्छो भवति ॥

(उद्द्योतः) अकारप्रश्लेषादिति । वस्तुतस्तु तं विनापि मशका धूमप्रयोजनमित्यादेरिव वुञ्विधिर्निवर्त्यत्वेन प्रयोजनमिति वार्तिकार्थः । अग्रिमवार्तिकाणामेवमेव व्याख्येयत्वात् ॥ अस्य वार्तिकस्य भाष्ये अनुक्तमप्यर्थं योग्यतया संभाव्याह—ष्यञ् भवतीति । योपधाद्गुरूपोत्तमाद्वुञिति प्राप्तवुञोऽभावे ब्राह्मणादित्वात्ष्यञिति भावः ॥

(१६१५ प्रयोजनवार्तिकम् ॥ ५ ॥)

**॥*॥ निष्ठानत्वमाख्याते ॥*॥**

(भाष्यम्) आख्यात इति निष्ठानत्वं न भवति ॥

(प्रदीपः) निष्ठानत्वमिति । न ध्याख्येति तु प्रतिषेधः ख्या प्रकथन इत्यस्यैव प्रतिपदोक्तत्वात् । अस्य तु शस्य यत्वेन लाक्षणिकत्वादिति मन्यते ॥

(उद्द्योतः) लाक्षणिकत्वादिति । अस्य तत्राग्रहणे आख्यानमित्यपि स्यादिति तद्व्यावृत्त्यर्थं ख्शादित्वमिति भावः ॥ वस्तुतः स्वतन्त्रख्याधातोरार्धधातुके प्रयोगाभाव एवेष्टव्यः । अन्यथा तमादाय सौप्रख्यादौ वुञादि दुर्वारमेव स्यादित्यस्य ख्शादित्ववैयर्थ्यापत्तेः । न च पाक्षिकष्यञादिसिद्धिरेव फलम्, सस्थानत्वं नमः ख्यात्रे इति भाष्यस्य सर्वथा असंगतेः । जिह्वामूलीयस्य वैकल्पिकत्वेन विसर्गसिद्धेर्जिह्वामूलीयस्य दुर्वारत्वाच्च । एवं च न ध्याख्येत्यत्र तद्ग्रहणे फलाभावात्तदपि न कर्तव्यमेवेति भाष्याशयः[1] ॥ ख्योधातुरपि ख्शादिरिति मिश्रोक्तं तु न युक्तं, भाष्यस्वारस्येनादेशशस्यैव यत्वमिति लाभात् ॥

(१६१६ प्रयोजनवार्तिकम् ॥ ६ ॥)

**॥*॥ रुविधिः पुंख्याने ॥*॥**

(भाष्यम्) पुंख्यानमिति रुविधिर्न भवति ॥

(प्रदीपः) पुंख्यानमिति । पुमःखय्यम्पर इति रुत्वं न भवति, यत्वस्यासिद्धत्वादम्परत्वाभावात् ॥

(१६१७ प्रयोजनवार्तिकम् ॥ ७ ॥)

**॥*॥ णत्वं पर्याख्याने ॥*॥**

(भाष्यम्) पर्याख्यानमिति णत्वं न भवति ॥

(प्रदीपः) णत्वमिति । ख्याप्रकथन इत्यस्मादपि परस्य लुब्योगाप्रख्यानादिति निपातनाण्णत्वाभावः ॥

(उद्द्योतः) निपातनादिति । सौत्रप्रयोगस्यादेशेनोपपत्तेश्चिन्त्यमेतत् ॥ णत्वेति । कृत्यच इति प्राप्तिः ॥

(१६१८ प्रयोजनवार्तिकम् ॥ ८ ॥)

**॥*॥ सस्थानत्वं नमः ख्यात्रे ॥*॥**

(भाष्यम्) नमः ख्यात्र इति सस्थानत्वं न भवति ॥

(प्रदीपः) सस्थानत्वमिति । जिह्वामूलीयस्येयं पूर्वाचार्यसंज्ञा । शर्परे विसर्जनीय इत्येवात्र भवति ॥

(उद्द्योतः) इयं जिह्वामूलीयत्वमित्येषा[3] ॥

(१६१९ आदेशप्रतिषेधवार्तिकम् ॥ ९ ॥)

**॥*॥ वर्जने प्रतिषेधः ॥*॥**

(भाष्यम्) वर्जने प्रतिषेधो वक्तव्यः । अवसंचक्ष्याः । परिसंचक्ष्याः ॥

---

१ भाष्यकृताऽन्यत्र 'तद्ग्रहणं न कर्तव्यं भवति' इति वत् प्रकृतप्रकरणे 'न ध्याख्या—' इति 'सूत्रे ख्याग्रहणं न कर्तव्यं भवति' इति नोक्तम्, अतो भाष्यकारो दृष्टप्रयोजनायापि ख्याग्रहणं सूत्रे कर्तव्यमेवेति मन्यते । तथा च तत्सामर्थ्यादार्धधातुके स्वतन्त्रख्याधातोः प्रयोगं को वारयेत् ॥ णत्वनिष्ठानत्वयोरेकफलत्वेपि वुञ्जिह्वामूलीययोर्नैकफलता प्रदीपसंमतेति स्वतन्त्रधातोरार्धधातुकमात्रे प्रयोगाङ्गीकार इति वुञजिह्वामूलीयविषये एव स्वतन्त्रधातोरनभिधानकल्पनेन सकलेष्टसिद्धौ आर्धधातुकमात्रे प्रयोगाभावकल्पने न मानमिति प्रदीपकर्तुराशयो भवेत् । २ स्वतन्त्रेत्यादिः । (र.ना.) ३ 'संस्थानत्वमित्येषा' इति पाठो भवेत् ।

( १६२० आदेशप्रतिषेधवार्तिकम् ॥ १० ॥ )

॥ * ॥ असनयोश्च ॥ * ॥

( भाष्यम् ) असनयोश्च प्रतिषेधो वक्तव्यः । नृचक्षा रक्षः । विचक्षण इति ॥

( प्रदीपः ) नृचक्षा रक्ष इति प्रयोगश्छान्दसः । भाषायां तु नृचक्षो रक्ष इति ॥ विचक्षण इति । अनुदात्तेतश्च हलादेरिति युच् ॥

( उद्द्योतः ) नृचक्षा इति प्रयोगे रक्षोविशेषणत्वे नपुंसकत्वेन दीर्घानुपपत्तिरत आह—छान्दस इति ॥

( १६२१ वार्तिकम् ॥ ११ ॥ )

॥ * ॥ बहुलं तणि ॥ * ॥

( भाष्यम् ) बहुलं तणीति वक्तव्यम् ॥ किमिदं तणीति ? । संज्ञाछन्दसोर्ग्रहणम् ॥

किं प्रयोजनम् ? ॥

( १६२२ प्रयोजनवार्तिकम् ॥ १२ ॥ )

॥ * ॥ अन्नवधकगात्रविचक्षणाजिराद्यर्थम् ॥ * ॥

( भाष्यम् ) अन्न—अन्नम् ॥ वधक—वधकम् ॥ गात्र—गात्रं पश्य ॥ विचक्षण—विचक्षणः ॥ अजिर अजिरे तिष्ठति । चक्षि ॥ ५४ ॥

( प्रदीपः ) बहुलमिति । सर्वप्रकरणापेक्षमेतदुच्यते । अन्नशब्दे जग्ध्यभावः ॥ वधकमिति । ण्वुलि वधादेशः ॥ गात्रमिति । इण औणादिके ष्ट्रनि गादेशः ॥ विचक्षणे ख्याञभावः ॥ अजिरे वीभावाभावः । अजिरशिशिरेति निपातनमनपेक्ष्यैतदुक्तम् ॥ ५४ ॥

( उद्द्योतः ) नन्वत्र विचक्षणशब्दादन्येषामुपयोगं न पश्याम इत्यत आह—सर्वप्रकरणेति ॥ अनपेक्ष्येति । तेषां सूत्राणामाधुनिकत्वादनपेक्षेति भावः ॥ ५४ ॥

---

( ३६४ आदेशसूत्रम् ॥ २ । ४ । १ आ. २९ )

## ५८७ अजेर्व्यघञपोः ॥ २ । ४ । ५६ ॥

( क्यपि प्रतिषेधाधिकरणम् )

( १६२३ वार्तिकम् ॥ १ ॥ )

॥ * ॥ घञपोः प्रतिषेधे क्यप उपसंख्यानम् ॥ * ॥

( भाष्यम् ) घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्तव्यम् । इहापि यथा स्यात्—समजनं समज्येति ॥

( उद्द्योतः ) अजेर्व्यं ॥ ५६ ॥ क्यप उपसंख्यानमिति भाष्ये—अधिकरणस्य शेषत्वविवक्षायां षष्ठी ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । अपीत्येव भविष्यति ॥ कथम् ? । अपीति नेदं प्रत्ययग्रहणम् ॥ किं तर्हि ? । प्रत्याहारग्रहणम् ॥ क सन्निविष्टानां प्रत्याहारः ? । अपो अकारात्प्रभृत्याक्यपः पकारात् ॥

( आक्षेपभाष्यम् )

यदि प्रत्याहारग्रहणम्, संवीतिर्न सिध्यति ॥

( समाधानभाष्यम् )

एवं तर्हि नार्थ उपसंख्यानेन, नापि घञपोः प्रतिषेधेन । इदमस्ति "चक्षिङः ख्याञ्" "वा लिटि" इति । ततो वक्ष्यामि "अजेर्वी" अजेर्वीभावो भवति वा । व्यवस्थितविभाषा "वा" इति । तेनेह च भविष्यति—प्रवेता, प्रवेतुम्, प्रवीतो रथः, संवीतिः । इह च न भविष्यति—समाजः समजः, उदाजः उदजः, समजनम् उदजनं समज्येति । तत्रायमप्यर्थः—इदमपि सिद्धं भवति प्राजितेति ॥

( प्रदीपः ) अजेर्वी ॥ ५६ ॥ इदमपीति । वलादावार्धधातुके विकल्पः सिध्यतीति भावः ॥

( उद्द्योतः ) वलादाविति । यद्यपि भाष्ये तृच्येव विकल्पो लभ्यते, तथापि पादस्य पदाज्यातीति निर्देशेनेह च न भविष्यति समाज इत्यपि भाष्यस्योपलक्षणताया आवश्यकत्वेनेदमपि तथैव वृत्त्यादिप्रामाण्यादिति भावः ॥

( आक्षेपभाष्यम् )

किंच भो इष्यत एतद्रूपम् ? ॥

( समाधानभाष्यम् )

बाढमिष्यते । एवं हि कश्चिद्वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति ॥

सूत आह—अहमायुष्मन्नस्य रथस्य प्राजितेति ॥

वैयाकरण आह—अपशब्द इति ॥

सूत आह—प्राप्तिज्ञो देवानांप्रियः, न त्विष्टिज्ञः इष्यत एतद्रूपमिति ॥

वैयाकरण आह—अहो नु खल्वनेन दुरुतेन बाध्यामह इति ॥

सूत आह—न खलु वेञः सूतः, सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम् ॥

( प्रदीपः ) सूत आहेति । प्रयोगदर्शनेन विकल्पं द्रढ-

---

१ पाणिनिकृतित्वेनेति भावः । पाणिनेस्तु न वार्तिककारदृष्ट्या प्रामाण्यं प्रत्याख्येयवचनत्वादिति ध्येयम् । ( र. ना. )

२ वीभावप्रतिषेध इति शेषः । ( र. ना. )

यति ॥ प्राप्तिज्ञ इति । सौत्रीमेव प्राप्तिं भवान् जानाति । न त्वाचार्याणामिष्टिमित्यर्थः ॥ देवानांप्रिय इति । देवशब्दो मूर्खवाची । मूर्खाणाञ्च प्रिया मूर्खा एव भवन्ति । अथ वा सुखासक्ततया शास्त्रेऽनभियोगोऽनेन प्रतिपाद्यते ॥ पराजितत्वादमर्षेणाह—अहो नु खल्विति । वेञ उत इति यद्रूपं सास्य संज्ञा । पूजायां च सुशब्द इति मत्वा कुत्साप्रतिपादनायाह—दुरुतेनेति ॥ सूत आहेति । षू प्रेरण इत्यस्माद् बहुलवचनात्कर्तरि गत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः । रथवाहस्य रथे प्रेरणात् सूत इति संज्ञा ॥

( उद्द्योतः ) वर्तमाने क्त इति । तेन रथं सूत इति न[२] भवति ॥

( आक्षेपभाष्यम् )

न तर्हीदानीमिदं वक्तव्यम् "वा यौ" इति ॥

( उद्द्योतः ) न तर्हीदानीं वायाविति वक्तव्यमिति । व्यवस्थितविभाषयैव यौ वीभावविकल्पस्य सिद्धत्वादिति भावः ॥

( समाधानभाष्यम् )

वक्तव्यं च ॥ किं प्रयोजनम् ? । नेयं विभाषा । किं तर्हि ? । आदेशो विधीयते—वा इत्ययमादेशो भवत्यजेर्यौ परतः । वायुरिति ॥ अजेर्व्यै ॥ ५६ ॥

( प्रदीपः ) वायुरिति । यजिमनीति बाहुलकाद्युचि रूपम् ॥ ५६ ॥

( उद्द्योतः ) वायुरिति । यदि वातेरुणि वायुः प्रकारान्तरेण सिध्यति, तर्हि घञपक्यप्ग्रहणवदिदमपि व्यर्थमिति कश्चित् ॥ ५६ ॥

( इत्यार्धधातुकाधिकारप्रकरणम् )

( अथ लुक्प्रकरणम् )

( ३६५ लुग्विधायकसूत्रम् ॥ २ । ४ । १ आ. ३० )

## ५८९ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ २ । ४ । ५८ ॥

( १६२४ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानम् ॥ * ॥

( भाष्यम् ) अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानं कर्तव्यम् । बौधिः पिता बौधिः पुत्रः । औदुम्बरिः पिता औदुम्बरिः पुत्रः ॥

( प्रदीपः ) ण्यक्षत्रिया ॥ ५८ ॥ तद्राजादिति । ते तद्राजा इति तद्राजसंज्ञकप्रत्ययान्तात्परस्येत्यर्थः ॥ बौधिरिति । बुधोदुम्बरशब्दाभ्यां साल्वावयवलक्षण इञ्, तदन्ताद्यूनि यञिञोश्चेति फक् तस्य लुक् ॥

( न्यासान्तरभाष्यम् )

अपर आह—

( १६२५ वार्तिकन्यासान्तरम् ॥ २ ॥ )

### ॥ * ॥ अणिञोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ॥ * ॥

( व्याख्याभाष्यम् )

अणियोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानं कर्तव्यमिति । जाबालिः पिता जाबालिः पुत्रः ॥

( प्रदीपः ) जाबालिरिति । जबालस्यापत्यम् । अत इञ् स च तद्राजो न भवतीति द्वितीयं वचनमारब्धम् । तेनेञन्तात् फको लुक् ॥

( न्यासान्तरभाष्यम् )

अपर आह—

( १६२६ अपरमतेन वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ॥ * ॥

( व्याख्याभाष्यम् )

अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानं कर्तव्यमिति । किंप्रयोजनम् ? । इदमपि सिद्धं भवति—भाण्डिजङ्घिः पिता भाण्डिजङ्घिः पुत्रः । कार्णखरकिः पिता कार्णखरकिः पुत्रः ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य चतुर्थपादे प्रथममाह्निकम् ॥

( प्रदीपः ) अब्राह्मणगोत्रमात्रादिति । तेन वैश्यगोत्रादपि सिध्यति । व्यापकत्वाच्चेदमेव वचनं प्रमाणम् । भण्डिजङ्घकर्णखरकौ वैश्यौ ॥ ५८ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयाध्यायस्य चतुर्थपादे प्रथममाह्निकम् ॥

( उद्द्योतः ) ण्यक्षत्रिया ॥ ५८ ॥ अत्रत्यवार्तिकानि अनन्यार्थानीत्याहुः[३] ॥ पैलादिदर्शनादिमानि सिद्धानीति वृत्तिः ॥ ५८ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

१ इन्द्रादिदेवानां प्रियत्वेनेत्यादिः । ( र. ना. )
२ नेति । 'क्तस्य च वर्तमाने' इति षष्ठी भवति—रथस्य सूत इतीति भावः ।
३ अत एव तथैवोदाहृतं भाष्यकृतेति बोध्यम् । ( र. ना. )

# द्वितीयाध्यायस्य चतुर्थपादे द्वितीयमाह्निकम् ॥

( ३६६ लुक्सूत्रम् ॥ २ । ४ । २ आ. १ सू. )

## ५९३ तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ २ । ४ । ६२ ॥

( प्रत्ययपक्षदूषणाधिकरणम् )

( १६२७ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधः ॥ * ॥

**( भाष्यम् )** तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधो वक्तव्यः । प्रिय आङ्ग एषां त इमे प्रियाङ्गाः । प्रियो वाङ्ग एषां त इमे प्रियवाङ्गा इति ॥

**( प्रदीपः )** तद्राज ॥ ६२ ॥ इह 'तेनैव'-ग्रहणाद्बहुशब्देन बहुवचनमुच्यत इति लक्ष्यते[१] । संज्ञानां चैकदेशपदप्रयोगो दृश्यते यथा भीमसेनो भीम इति । अर्थग्रहणे[२] तु तेनैवेति न वक्तव्यं, प्रियवाङ्गा इत्यत्र बहुत्वे तद्राजस्य वृत्त्यभावाल्लुकः प्रसङ्गाभावात् ॥ बहुवचनं[३] तु परमिति लुक्प्रसङ्गे तन्निवृत्तये तेनैव ग्रहणं कर्तव्यम् ॥ अस्त्रियामिति तु प्रतिषेधो बहुवचनग्रहणेऽनुपपन्नः । आङ्ग्यः स्त्रिय इत्यादौ स्त्रीप्रत्ययेन बहुवचनस्य व्यवधानाल्लुकः प्रसङ्गाभावात् । अर्थग्रहणे तु लुक्प्रसक्तोऽस्त्रियामिति निषिध्यते ॥ तदेवं पक्षद्वयस्यापि लिङ्गदर्शनात्तद्गुणदोषनिरूपणाय विचारः क्रियते तत्र पूर्वं प्रत्ययपक्षो विचार्यते ॥ तद्राजादीनामित्यादिशब्देन वक्ष्यमाणा लुग्भाजो गृह्यन्ते ॥ समासबहुत्व इति । समासार्थबहुत्वे इत्यर्थः ॥

**( उद्योतः )** तद्राजस्य ॥ ६२ ॥ ननु बहुत्ववदर्थप्रतिपादकतद्राजस्यानेन लुग्विधानात् प्रियाङ्गा इत्यादावस्य प्राप्तिरेव नेत्यत आह—इहेति ॥ बहुवचनशब्दस्य प्रत्ययविशेषे संकेतितया बहुशब्देन तत्प्रतीतिः कथमत आह—संज्ञानां चेति । *विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपः* इति वचनादिति भावः ॥ प्रत्ययग्रहणपक्षे तद्राजार्थेनैव कृतं यद्बहुत्वं तत्प्रतिपादके बहुवचने परत इत्यर्थः । तत्पदेन तद्राजपरामर्शिना तदर्थो लक्ष्यत इति बोध्यम् । अर्थग्रहणपक्षे बहुषु वर्तमानस्य तद्राजस्येत्यर्थः ॥ प्रत्ययग्रहणपक्षस्य तेनैवेति लिङ्गमुक्त्वा अर्थग्रहणपक्षस्य लिङ्गमाह—अस्त्रियामिति ॥ तत्र पूर्वमिति । निषेध्यत्वादिति भावः ॥ प्रियवाङ्गा इति समासस्यैकत्वादाह—समासार्थेति ॥

( प्रत्याक्षेपभाष्यम् )

किमुच्यते समासबहुत्वे प्रतिषेध इति । यदा 'तेनैव चेत्कृतं बहुत्वम्' इत्युच्यते । न चात्र तेनैव कृतं बहुत्वम् ? ॥

**( प्रदीपः )** नचात्रेति । अन्यपदार्थकृतत्वादत्र बहुत्वस्य ॥

**( उद्योतः )** तेनैव चेत्कृतं बहुत्वमिति भाष्ये तन्मात्रार्थगतबहुत्वार्थके वचने परत इत्यर्थः ॥ अन्येति । अन्यपदार्थश्च न तद्राजान्तमात्रार्थः । किन्तु समुदायार्थं इति भावः ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

भवति वै किंचिद्—आचार्याः क्रियमाणमपि चोदयन्ति—तद्वा कर्तव्यम्—तेनैव चेद्बहुत्वमिति । समासबहुत्वे वा प्रतिषेध इति ॥

**( प्रदीपः )** भवति वै किंचिदिति । एतावदेकं वाक्यम् । एवंविधं किं चिद्भवतीत्यर्थः ॥ किं तदित्याह—आचार्या इति । सूत्रे क्रियमाणमपि कुर्वन्तीत्यर्थः ॥ बहुवचनपक्षे सर्वथा वचनेनैव दोषो निराकार्य इति प्रतिपादनमस्योपन्यासस्य फलम् ॥

**( उद्योतः )** एकवाक्यत्वासंभवादाह—एतावदिति । प्रश्नरूपार्थानुपपत्तेश्चदेः क्रियामात्रे लक्षणेत्याशयेनाह—कुर्वन्तीत्यर्थ इति ॥ सर्वथा वचनेनैवेति । अत्र पक्षे तेनैवेत्यवश्यं कार्यमिति वार्तिकतात्पर्यमित्यर्थः ॥

( १६२८ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अबहुत्वे लुग्वचनम् ॥ * ॥

**( भाष्यम् )** अबहुत्वे च लुग्वक्तव्यः । अतिक्रान्तः अङ्गानत्यङ्ग इति । बहुवचने परतो यस्तद्राज इत्येवं च कृत्वा चोद्यते ॥

**( प्रदीपः )** प्रत्ययपक्षे दोषोद्भावनेनार्थग्रहणं स्थापयति—अबहुत्व इति । सामासार्थस्याबहुत्वाद् बहुवचनपरत्वाभावेऽपि लुग्वक्तव्यः प्रत्ययश्चेद्बहुत्व उत्पन्न इत्यर्थः ॥

**( उद्योतः )** अबहुत्वे इत्यस्य बहुवचनपरत्वाभावे इत्यर्थ इत्याह—समासेति ॥

( आक्षेपभाष्यम् )

अथ किमर्थं पुनरिदम्, न बहुवचन इत्येव सिद्धम् ? ॥

**( प्रदीपः )** न बहुवचन इत्येवेति । शसमेवाश्रित्यान्तरङ्गत्वात्पूर्वं तद्राजस्य लुक्करिष्यत इति भावः ॥

**( उद्योतः )** सोर्बहुवचनत्वाभावादसङ्गतिमाशङ्क्याह—शसमेवेति ।

( समाधानभाष्यम् )

न सिध्यति । बहुवचन इत्युच्यते । न चात्र बहुवचनं पश्यामः ॥

**( प्रदीपः )** न चात्रेति । अन्तरङ्गानपि विधीन्सुपो धातुप्रातिपदिकयोरित्ययं लुक् प्रत्ययोत्तरपदयोश्चेति ज्ञापकादस्यैवात्र संभवाद्बाधत इति भावः ॥

**( उद्योतः )** भाष्ये न चात्रेति । लुका लुप्तत्वादिति भावः ॥

---

१ ज्ञायते इत्यर्थः । ( र. ना.) २ बहुष्वित्यत्रेत्यादिः । ( र. ना. ) ३ बहुष्वित्यत्र प्रत्ययग्रहणपक्षेत्वित्यादिः । ( र. ना.) ४ तदेत्यादिः । ( र. ना.) ५ तद्राजसंज्ञक इत्यादिः । ( र. ना. ) ६ सुपो धात्विति लुक एव प्रत्ययोत्तरपदयोश्चेत्यत्र संभवादित्यर्थः । ( र. ना. )

अन्तरङ्गानपीति न्यायादिति तात्पर्यम् ॥ नन्वन्तरङ्गानिति न्याये-नास्यापि लुको ग्रहणेनेदमनुपपन्नमत आह—अस्यैवात्रेति । ज्ञापकस्य विशेषापेक्षत्वादिति भावः ॥ वस्तुतश्चिन्त्यमेतत् । एङ्-ह्रस्वात्संबुद्धेरित्यादिसूत्रस्थभाष्यविरोधादिति स्पष्टं शब्देन्दुशेखरे ॥ अनेनापि न्यायेन कार्यान्तरनिमित्तविनाशकलुक एतदपेक्षया प्राबल्यं बोध्यते तत एव ज्ञापकादिति नैयं लुक्सुब्लुगपेक्षया बलवानिति तु भाष्याशयः ॥

( समाधानबाधकभाष्यम् )

**प्रत्ययलक्षणेन ॥**

( समाधानसाधकभाष्यम् )

**'न लुमता तस्मिन्' इति प्रत्ययलक्षणस्य प्रति-षेधः ॥**

( समाधानबाधकभाष्यम् )

**"न लुमताङ्गस्य" इति वक्ष्यामि ॥**

( प्रदीपः ) **न लुमताङ्गस्येति वक्ष्यामीति** । यथा-स्थितमेव न्यासमेवं व्याख्यास्यामि । लुमता लुप्ते यः प्रत्ययस्त-स्मिन्यदङ्गं तस्य यत्कार्यमङ्गाधिकारविहितमन्यद्वा तन्न भवति । लुक् च प्रत्ययस्य कार्यम्, न समस्तस्याङ्गस्येति प्रत्ययलक्षणेन भविष्यति ॥

(उद्द्योतः) **यथास्थितमेवेति** । एवञ्चानङ्गाधिकारविहितकार्ये प्रतिषेधाय वार्तिककृता न्यासान्तरमारब्धम्, तस्यार्थस्य सूत्रेणैव लाभे वार्तिकं न कार्यम्, सूत्रस्य च न प्राप्तिरङ्गोद्देश्यककार्याभावा-दिति भावः ॥ **नसमस्तस्येति** । न संपूर्णस्येत्यर्थः ॥

( समाधानसाधकभाष्यम् )

**नैवं शक्यम् । इह हि दोषः स्यात्—पञ्चभिर्गा-र्गीभिः क्रीतः पटः पञ्चगार्ग्यो दशगार्ग्यः ॥**

( प्रदीपः ) **पञ्चभिरिति** । क्रीतार्थस्याहींयस्य ठको-ऽध्यर्द्धपूर्वेति लुक् । लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । तत्र प्रत्ययलक्षणेन भिसमाश्रित्यात्र पक्षे यञञोश्चेति लुक् प्राप्नोति । न हि यञ्लुगङ्गस्य कार्यमिति पञ्चगर्ग इति स्यात् । पञ्चगार्ग्य इति चेष्यत इत्यर्थः । **अस्त्रियामिति** चात्र प्रति-षेधो न भवत्यर्थान्तरे पुंसि संक्रान्तत्वाद्वर्तिपदार्थस्येत्याहुः ॥

( उद्द्योतः ) **इतिचेष्यत इति** । तस्मादङ्गस्य तदवयवस्य वा कार्ये निषेध इत्यर्थः ॥ **अस्त्रियामिति चात्रेति** । एतदर्थमेवा-स्त्रियामिति करणे तु गौरवमिति भावः । न च ङिलुकः स्थानिव-त्त्वाद्बहुवचनपरत्वाभावः । लुकि तन्निषेधात् ॥

( १६२९ दूषणवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ द्वन्द्वेऽबहुषु लुग्वचनम् ॥ * ॥

**( भाष्यम् ) द्वन्द्वे अबहुषु लुग्वक्तव्यः[३] । गर्गवत्स-वाजा इति । इह च लुग्वक्तव्यः—गर्गेभ्य आगतं गर्गरूप्यं गर्गमयमिति । इह चात्रय इति उदात्त-निवृत्तिस्वरः प्राप्नोति ॥**

( प्रदीपः ) **द्वन्द्वेऽबहुष्विति**त्यत्राकारप्रश्लेषः । गार्ग्यश्च वात्स्यश्च वाज्यश्चेति द्वन्द्वः । अत्रैकैकस्य बहुवचनपरत्वं नास्ति यच्च समासाद्बहुवचनमुत्पद्यते तदन्त्यादेव परं न सर्वेभ्यः । प्रत्ययनिर्देशपक्षे **तस्मिन्निति निर्दिष्ट** इति परिभाषोप-स्थानाद्व्यवहितस्य लुकोऽप्रसङ्गः ॥ **गर्गरूप्यमिति** । सुबन्तेन केवलं वाक्यं क्रियते ॥ प्रत्ययस्तु प्रातिपदिकाधिकारात्प्रातिपदि-कादेवोत्पद्यत इति बहुवचनपरत्वाभावाल्लुङ् प्राप्नोति ॥ **अत्रय इति** । अत्रेरपत्यानि **इतश्चानिञ** इति ढक्, **कित** इत्यन्तो-दात्तत्वम् । तत्र यदि जसि परतो लुक् क्रियते तदा **अनुदा-त्तस्य च यत्रोदात्तलोप** इति जस उदात्तत्वप्रसङ्गः ॥

( उद्द्योतः ) **गार्ग्यश्चेति** । युगपदधिकरणवचनताया दूषित-त्वादेकवचनान्तेन विग्रहः ॥ **अबहुष्विति** भाष्यस्य न विद्यते बहुवचनं परं येभ्यस्तेषु वर्तिपदेष्वित्यर्थः ॥ सुबन्तात्तद्धिते बहुवच-नपरत्वसत्त्वादाह—**प्रातिपदिकादेवेति** ॥ **न लुमतेति** निषेधा-त्प्रत्ययलक्षणाभावेन लुकि न सिध्येदित्येव भाष्याशय इत्यपि कश्चित् । तत्तु **सामर्थ्यं च सुबन्तेने**त्युत्तरभाष्यविरुद्धम् ॥ **जसि परत इति** । उदात्तलोपशब्देन चोदात्तघटितलोप उच्यते इति भावः ॥

( प्रत्ययार्थबहुत्वस्थापनाधिकरणम् )

( १६३० समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सिद्धं तु प्रत्ययार्थबहुत्वे लुग्वचनात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ॥ कथम्? । प्रत्ययार्थ-बहुत्वे लुग्वक्तव्यः ॥**

( प्रदीपः ) अर्थनिर्देशाश्रयेण परिहारमाह—**सिद्धं त्विति** । लुग्वचनात् लुग्व्याख्यानादित्यर्थः ॥

( उद्द्योतः ) अपूर्ववचनत्वशङ्कां वारयति—**व्याख्याना-दिति** ॥

( प्रत्ययार्थपक्षे गौरवभाष्यम् )

**यदि प्रत्ययार्थबहुत्वे लुगुच्यते, तेनापि, 'अस्त्रि-याम्' इति वक्तव्यम् । इह मा भूत्—आङ्गयः स्त्रियः वाङ्गयः स्त्रिय इति ॥ यस्य पुनर्बहुवचने परतो लुगुच्यते तस्य ईकारेण व्यवहितत्वान्न भविष्यति ॥**

( प्रत्ययपक्षेपि गौरवभाष्यम् )

**यस्यापि तु बहुवचने परतो लुगुच्यते, तेनापि 'अस्त्रियाम्' इति वक्तव्यम् । आम्बष्ठ्याः स्त्रियः सौवीर्याः स्त्रिय इत्येवमर्थम् ॥**

( प्रदीपः ) **आम्बष्ठ्या इति** । आम्बष्ठस्यापत्यानि बह्व्यः स्त्रिय इति वृद्धेत्कोसलाजादाञ्ञ्यङिति ञ्यङ् । यङ-श्चाबिति चाप् । एकादेशः । स चान्तवद्भावान्न व्यवधायक इति लुक्प्रसङ्गे प्रत्ययपक्षवादिनाप्यस्त्रियामिति प्रतिषेधो वक्तव्य इत्यर्थः ॥

१ तद्राजलुकोऽपि ग्रहणेनेत्यर्थः । तथा च शसमाश्रित्य पूर्वं तद्राजलुगेव स्यादिति भावः । ( र. ना. ) २ सुब्लुक एवैतल्लुङ्निमित्तविनाशकत्वेन प्राबल्य-मिति भावः । ( र. ना. ) ३ अर्थनिर्देशपक्षे तु न वक्तव्यः, तद्राजार्थस्य बहु-त्वादिति भावः । ( र. ना. )

(उद्योतः) अम्बष्ठस्येति । क्षत्रियनामेदम्, अतो वा नामधेयस्येति वृद्धत्वम् । आम्बष्ठस्येति पाठे तु सम्यगेव ॥

( बाधकभाष्यम् )

**अत्रापि चापा व्यवधानम् ॥**

( साधकभाष्यम् )

**एकादेशे कृते नास्ति व्यवधानम् ॥**

( बाधकभाष्यम् )

**एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ॥**

( प्रदीपः ) **एकादेश इति । अचः परस्मिन्निति** स्थानिवद्भावः ॥ तदेवमर्थनिर्देशपक्ष एवास्त्रियामिति वक्तव्यम् ॥

( उद्योतः ) **अचः परस्मिन्नितीति** । यद्यपि अन्तवद्भावेन चावन्तस्यायं विधिरिति न पूर्वविधित्वं तथापि पूर्वविधावित्यस्य पूर्वोद्देश्यकविधावित्यर्थोदस्त्येव । यद्यपि यशब्दोऽपि स्थान्येव स कथं ततः पूर्वस्तथापि यत्किञ्चित्स्थानिभूतपूर्वत्वमस्त्येव । स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यते इत्यत्र न मानं, स्थानिनि पृथग्भूते सत्यभवतो लुक एकादेशेऽप्यभावातिदेशो बोध्यः ॥ एतेन चावन्तस्य कथं चापा व्यवधानमित्यपास्तम् । **तदेवमिति** । अस्त्रियामित्येवार्थनिर्देशपक्षस्य ज्ञापकमिति भावः ॥

( १६३१ अर्थपक्षे दूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ द्वन्द्वेऽबहुषु लुग्वचनम् ॥ * ॥

( भाष्यम् ) **द्वन्द्वे अबहुषु लुग्वक्तव्यः । गर्गवत्सवाजा इति ॥**

( प्रदीपः ) **द्वन्द्व इति** । एकस्मिन्नेवार्थे प्रत्ययोत्पत्तौ सत्यां बहुत्वाभावात् । प्रत्ययपक्षे त्वन्त्यस्य तावत्सिध्यतीति मन्यते ॥

( उद्योतः ) नन्वयं दोषो बहुवचनग्रहणेऽपीति कथं परं प्रत्यस्योपन्यासोऽत आह—**अन्त्यस्य तावदिति** । एवंचार्थपक्षे त्रयाणामपि लुग्वाच्यः । प्रत्ययपक्षे त्वनन्त्ययोरेवेति भावः ॥

( १६३२ अर्थपक्षदूषणवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ॥ * ॥

( भाष्यम् ) **गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः । बिदानामपत्यं माणवको बैदः । बैदौ ॥**

( प्रदीपः ) अर्थपक्ष एव दोषमाह—**गोत्रस्येति** । अपत्यप्रत्ययो लोपभाग्यदा बहुष्वर्थेषूत्पन्नो युवापत्यविवक्षायामर्थान्तरे द्वित्वविशिष्ट एकत्वविशिष्टे वा संक्रामति तदा बहुषु तस्योत्पन्नत्वाल्लुक्प्राप्तावलुग्वक्तव्यः । प्रत्ययपक्षे तु बहुवचनपरत्वाभावाल्लुङ्न भवति ॥ **द्व्येकयोरिति** । द्व्येकशब्दौ द्वित्वैकत्ववृत्ती उपात्तौ । अन्यथा बहुवचनं स्यात् ॥ **बैद इति** । बिदस्यापत्यानि बहूनि इत्यञ्प्रत्ययः । तदन्ताद्यून्यत इञिति[1] तस्य ण्यक्षत्रियार्षञित इति लुक् ॥

( उद्योतः ) **बहुष्वर्थेषूत्पन्न इति** । यदा विशेष्यांशेऽपि न संख्यैभानं तदैकशेषेण बहुष्वर्थेषु स्थित इत्यर्थो बोध्यः ॥ **तस्य** गोत्रप्रत्ययस्य ॥ **बहुवचनपरत्वाभावादिति** । प्रत्ययलक्षणं तु न लुमतेति निषिद्धमिति भावः ॥ **ननु अस्त्रियामित्यस्य** यथाऽर्थान्तरानुपसंक्रान्तस्त्रीविषयता तथा बहुष्वित्यस्यार्थान्तरानुपसंक्रान्तबहुत्वविषयकत्वान्नात्र दोषः । द्व्येकयोस्तस्योपसंक्रान्तत्वादिति चेन्न । बहुष्विति बहुवचनेन सर्वस्यापि बहुत्वस्य ग्रहादित्याशयः । अतएवात्यङ्ग इत्यादिसिद्धिः । इदमेव ध्वनयितुं सूत्रकृताऽस्त्रियामिति विभिन्नविभक्तिनिर्देशः कृतः । प्रकृतसूत्रे वार्तिककरणादेतदुदाहरणाविषयीभूतं अङ्गानामपत्यं माणवक आङ्ग इत्यप्युदाहरणं बोध्यम् ॥ **गोत्रेऽलुगचीति** समाधानमपि साधारणमेव, एतत्सूत्रविहितस्यापि तेनालुग्विधानात् । यत्तु तत्र **लक्षणप्रतिपदोक्तपरि**भाषया यस्कादिभ्यो गोत्र इत्येतत्प्रकरणस्थस्यास्य नालुग् इति तन्न, अस्यापि तत्प्रकरणस्थत्वात् । इतएव तत्र बहुष्वित्यादीनामनुवृत्तेः श्रोतृवक्तृबुद्धिस्थताया एव प्रकरणत्वात् । अत एव **गोत्रेऽलुगचीति** सूत्रे भूम्नि प्राप्तस्य लुकोऽलुगिति भगवता वक्ष्यते ॥ उत्तरसूत्रोदाहरणं तु 'उत्तरसूत्रविषयेऽप्ययं विचारस्तुल्यः' इति बोधयितुम् । अत एवोपक्रमे तद्राजादीनामित्युक्तम् ॥

( आक्षेपभाष्यम् )

**किमर्थमिदम् । नाचीत्येवालुक् सिद्धः ॥ ?**

( प्रदीपः ) **नाचीत्येवेति । गोत्रेऽलुगचीत्यनेन ॥**

( समाधानभाष्यम् )

**अचीत्युच्यते । न चात्राजादिं पश्यामः ॥**

( उद्योतः ) **भाष्ये—नचात्राजादिमिति । यस्मिन्विधि**रिति परिभाषालब्धमेतत् ॥

( समाधानबाधकभाष्यम् )

**प्रत्ययलक्षणेन ॥**

( समाधानसाधकभाष्यम् )

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥**

( उद्योतः ) **वर्णाश्रये इति** । अजादिप्राग्दीव्यतीयविषये इत्यर्थेऽपि लुका विषयस्यापहाराद्दोष एवेति बोध्यम् । भाव्युच्चारणमेव हि विषयः ॥

( १६३३ वार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि ॥ * ॥

(भाष्यम्) **एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः । बैदस्यापत्यं बहवो माणवका बिदाः । बैदयोर्वा बिदाः । अञ् यो बहुषु यञ्यो बहुष्वित्युच्यमानो लुङ्न प्राप्नोति ॥**

---

१ अर्थग्रहणपक्षे बहुवचनान्तस्य संबन्धिनिप्रत्यये तद्राजलुक्प्रवृत्तौ स्त्रीक्रियमाणायां बहुष्वर्थेषु उत्पन्नस्य लोपिनो गोत्रप्रत्ययस्य द्व्येकयोरलुग् वक्तव्यः इति

योजना-। ( र. ना. ) २ वृत्ताविति शेषः । ( र. ना. ) ३ न तु अस्त्रीत्विपुक्तमिति भावः । ( र. ना. )

( उद्योतः ) अतिव्याप्तिमुक्त्वा तत्रैव पक्षेऽव्याप्तिमाह—भाष्ये—एकेति । बहुषु लोपी यस्तद्धितस्तदन्तप्रकृतिकैकवचनान्तस्य युववहुत्वविषयकप्रत्ययविषये प्रकृतित्वेन प्रवृत्तौ सत्यां तदवयवस्य तद्धितस्य लुग्वक्तव्य इत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**मा भूदेवम् । अजन्तं यद्वहुषु यजन्तं यद्वहुष्विखेवं भविष्यति ॥**

( प्रदीपः ) अजन्तमिति । प्रत्ययग्रहणपरिभाषया तदन्तत्वे स्थिते बहुष्विति विशेषणं तदन्तस्यैवेति मन्यते ॥

( आक्षेपसाधकभाष्यम् )

**नैवं शक्यम् । इह हि दोषः स्यात्—काश्यपप्रतिकृतयः काश्यपा इति ॥**

( प्रदीपः ) काश्यपा इति । कश्यपस्यापत्यं गोत्रमिति बिदादित्वादञ् ततः काश्यप इव तत्प्रतिकृतय इत्यत्रार्थे इवे प्रतिकृताविति कन्प्रत्ययस्तस्य जीविकार्थे चापण्य इति वा देवपथादिष्वर्चासु पूजनार्थासु चित्रकर्मध्वजेष्विति पाठाद्वा लुप् । एतदजन्तं बहुषु वर्तत इति लुक्प्रसङ्गः । अञ्प्रत्ययस्त्वेकस्मिन्नेवापत्य उत्पन्न इत्यन्यो बहुष्विति विज्ञायमाने नास्ति लुक्प्राप्तिस्तस्मात्तदन्तविधिर्नाभ्युपगन्तव्यः । प्रत्ययादर्शनस्यैव लुगादिसंज्ञाविधानात्प्रत्यया एव कार्यभाक्त्वाद् बहुष्वित्यनेन विशेष्यन्ते ॥

( उद्योतः ) इति पाठाद्वेति । अयं चाभियुक्तानां पाठः न त्वेतावता इदमार्षमिति बोध्यम् ॥ अजन्तं यद्वहुष्वित्यर्थे न्यायविरोधमप्याह—प्रत्ययादर्शनस्यैवेति ॥

( अर्थबहुत्वपक्षे दूषणपरिहारभाष्यम् )

**ततोयमाह—यस्य प्रत्यायार्थबहुत्वे लुक् । द्वन्द्वेऽबहुषु लुग्वचनमित्यस्य परिहारः—**

**( १६३४ वार्तिकम् ॥ ८ ॥ )**

**॥*॥ न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात् ॥*॥**

**( भाष्यम् ) न वा एष दोषः । किं कारणम् ? । सर्वेषां द्वन्द्वे बह्वर्थत्वात् । सर्वाणि द्वन्द्वे बह्वर्थानि ॥ कथम् ? । युगपदधिकरणविवक्षायां द्वन्द्वो भवति ॥**

( प्रदीपः ) इदानीं पक्षद्वयेऽपि क्रमेण परिहार उच्यते—ततोयमिति ॥ नवेति । एकैकं प्रत्ययान्तमनेकार्थाभिधायीति लुक्सिध्यतीत्यर्थः । यश्च तदन्तपक्षे दोषः काश्यप इति स उत्तरत्र परिहरिष्यते ॥

( उद्योतः ) ततोयमाहेति । प्रत्ययार्थबहुत्वे लुगिति यस्य मतं सोऽयं स्वपक्षादोषकथनोत्तरमाहेत्यन्वयः ॥ किमाह—द्वन्द्वेऽबहुषु लुग्वचनमित्यस्य परिहारोऽयमित्याहेत्यर्थः ॥ पदानां बह्वर्थत्वेऽपि प्रत्ययस्य बह्वर्थत्वाभावादाह—प्रत्ययान्तमिति ॥ स उत्तरत्रेति । ननु गोत्रग्रहणानुवृत्त्या तत्र दोषं परिहरिष्यति । एवमप्याङ्गस्य प्रतिकृतिर्य आङ्ग इत्यत्र तदन्तग्रहणपक्षे तद्राजस्येति लुक् प्राप्नोति । नह्यत्रापि गोत्र इति वर्तत इति चेन्न । अत्रापि सूत्रे गोत्र इत्यपकर्षणेनादोषात् । तद्राजस्यापत्यत्वादारोपितगोत्रत्वमस्त्येव ॥ यत्तु हरदत्तेनैतदर्थं तेनैवेत्यवश्यं कर्तव्यमर्थग्रहणपक्षेपीत्युक्तम्, तदेतेन परास्तं भाष्यविरुद्धं च ॥ वस्तुतः सर्वाणि द्वन्द्वे बह्वर्थानीति भाष्यस्यायमर्थः—आश्रयतया बहुत्ववदर्थप्रतिपादकानीति ॥ द्वन्द्वे हि अन्यसंख्यावोधकविभक्त्यभावेन समुदायोत्तरविभक्त्या ते तेऽर्था वस्तुतो बहुत्ववन्त एवोपस्थाप्यन्ते ॥ पर्याप्त्या बहुत्ववदर्थप्रतिपादकत्वनिवेशे न किंचिन्मानम् । युगपदधिकरणविवक्षायामित्यस्यापि युगपद्व्याणामेकत्रान्वयविवक्षायां द्वन्द्व इत्येवार्थः । युगपदधिकरणवचनतापक्षस्तु द्वन्द्वसूत्रे दूषित एवेति न तमादायास्य ग्रन्थस्य व्याख्योचिता ॥

( बहुवचनप्रत्ययपक्षे दूषणपरिहारभाष्यम् )

**ततोयमाह—यस्य बहुवचने परतो लुक्, यदि सर्वाणि द्वन्द्वे बह्वर्थानि । अहमपीदमचोद्यं चोद्ये—द्वन्द्वेऽबहुषु लुग्वचनमिति ॥ ममापि ह्यत्र सर्वत्र बहुवचनं परं भवति ॥**

( प्रदीपः ) अचोद्यं चोद्य इति । अचोदनार्हं वस्तु त्वया अहं चोद्य इत्यर्थः । चोदिः पृच्छत्यर्थत्वाद् दुहियाचीत्यत्रार्थग्रहणाद् द्विकर्मकः ॥

( उद्योतः ) अपरस्तु युगपदधिकरणवचनतापक्षोऽपि नावलम्बित[३] इति मत्वा स्वपक्षेऽपि दोषाभाव इत्याह—भाष्ये—ततोऽयमाह यस्य बहुवचने इति । अर्थवादिकृताव्याप्तिपरिहारानन्तरमित्यर्थः ॥ चोदिः पृच्छ्यर्थत्वादिति । व्यापारद्वयार्थत्वेन कर्तुरिवेव द्विकर्मकत्वं सिद्धमित्ययं प्रयासो वृथेति वस्तुतत्त्वम् ॥

( बाधकभाष्यम् )

**लुकि कृते न प्राप्नोति ॥**

( प्रदीपः ) लुकि कृत इति । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधत इति भावः ॥

( परिहारसाधकभाष्यम् )

**प्रत्ययलक्षणेन भविष्यति ॥**

( परिहारबाधकभाष्यम् )

**'न लुमता तस्मिन्' इति प्रत्ययलक्षणस्य प्रतिषेधः ॥**

( परिहारसाधकभाष्यम् )

**'न लुमताङ्गस्य' इति वक्ष्यामि ॥**

( उद्योतः ) न लुमताङ्गस्येति । तथा चाङ्गोद्देश्यककार्ये एव निषेध इति नात्र निषेधप्रवृत्तिरिति भावः ॥ न लुमता तस्मिन्निति वार्तिकन्यासेऽपि प्रत्ययाक्षिप्तप्रकृत्युद्देश्यककार्ये एव निषेधो न तु तदवयवोद्देश्यक इति तात्पर्यम् । विषयसप्तमीपक्षेऽपि प्रत्ययलक्षणप्रवृत्तौ बाधकाभाव इति न दोषः । एवं चाङ्गलं इत्यपि सिद्धम् ॥ अत्रेदं बोध्यम्—युगपदधिकरणवचनताया दूषितत्वात् प्रत्ययपक्षेऽयं दोषः स्थित एवेति ॥

१ प्रतिकृतय आङ्गा इति पाठः साधुर्नेति उपलभ्यते च क्वचिद् विवरणपुस्तके । (र. ना.) २ काश्यपा आङ्गा इत्येतदर्थमित्यर्थः । तदेतेन, गोत्रग्रहणानुवृत्त्या वारणेन, भाष्यविरुद्धश्च, गोत्रग्रहणानुवृत्त्या वारणपरेत्यादिः । (र.ना.) ३ नेनावलम्बित इति. वादिनाऽवलम्बित इति वा पाठः साधुः । (र.ना.)

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—नैवं शक्यम् । इह हि दोषः स्यात्—पञ्चभिर्गार्ग्यैः क्रीतः पटः पञ्चगार्ग्यो दशगार्ग्य इति ॥**

( समाधानभाष्यम् )

**इष्टमेवैतत्संगृहीतम्—पञ्चगर्गं दशगर्गं इत्येव भवितव्यम् ॥**

( प्रदीपः ) पञ्चगर्गं इति । प्रत्ययलक्षणेन बहुवचनपरत्वाश्रयो लुक् प्रवर्तेत इत्यर्थः ॥

( उद्योतः ) भाष्ये—पञ्चगर्गं इति ॥ अस्त्रियामिति निषेधस्त्वर्थान्तरानुपसंक्रान्तस्त्रीविषय इत्युक्तम् ॥

( दूषणसंगतिभाष्यम् )

**तथेदमपरमचोद्यं चोद्यं—गर्गरूप्यं गर्गमयम् । अत्रापि बहुवचन इत्येव सिद्धम् ॥ कथम् ? समर्थात्तद्धित उत्पद्यते । सामर्थ्यं च सुबन्तेन ॥**

( प्रदीपः ) समर्थादिति । समर्थानां प्रथमाद्वेत्यधिकारादिति भावः ॥ सामर्थ्यं च सुबन्तेनेति । सुबन्तेन द्वितीयस्य पदस्य संबन्धवत्त्वं पदस्यैव प्रयोगार्हत्वात् । प्रातिपदिकाधिकारस्तु वृद्धादिविशेषणार्थः ॥

(उद्योतः) सुबन्तेनेति । तस्य लुक्यप्युक्तन्यायेन प्रत्ययलक्षणसत्त्वाद्बहुवचनपरत्वेन लुक्सिद्ध्या न दोष इति भावः ॥

( परिहारभाष्यम् )

**ततोयमाह यस्य प्रत्ययार्थबहुत्वे लुक् । यदि समर्थात्तद्धित उत्पद्यते । अहमपीदमचोद्यं चोद्यं—*गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्* इति । कथम् ? । यस्यापि बहुवचने परतो लुक् तेनाप्यलुग्वक्तव्यः । तस्यापि ह्यत्र बहुवचनं परं भवति ॥**

( प्रदीपः ) अहमिति । यो ह्युभयोर्दोषो न तमेकश्चोद्यः ॥ तस्यापि ह्यत्रेति । प्रत्ययलक्षणेन ॥

( अलुग्वचनबाधकभाष्यम् )

**न वक्तव्यः । अचीत्येवालुक् सिद्धः ॥**

( प्रदीपः ) अचीत्येवेति । अयं च द्वयोरपि साधारणः परिहारः ॥

( अलुग्वचनसाधनभाष्यम् )

**अचीत्युच्यते । न चात्राजादिं पश्यामः ॥**

( अलुग्वचनबाधकभाष्यम् )

**प्रत्ययलक्षणेन ॥**

( प्रत्ययलक्षणनिषेधस्मारणभाष्यम् )

**ननु चोक्तं 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति ॥**

( समाधानभाष्यम् )

**यदि वा कानि चिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति ॥**

( प्रदीपः ) यदि वेति । यथैवेत्यर्थः । यथातृणेडिती-डागमः ॥ अयं भावः—यत्कार्यं वर्णरूपाश्रयं न प्रत्ययलाश्रयं न तत् प्रत्ययलक्षणेन भवति यथा गोहितमित्यादाववादयः । इमागमस्तु हलादिपित्सार्वधातुकाश्रयत्वाद् प्रत्ययाश्रय इति प्रवर्तते । एवं गोत्रेऽलुगचीत्यजादिप्रत्ययाश्रयत्वादलुक् प्रत्ययलक्षणेन प्रवर्तते ॥

( समाधानान्तरभाष्यम् )

**अथ वाविशेषेणालुकमुक्त्वा 'हलि न' इति वक्ष्यामि ॥**

( प्रदीपः ) हलि नेति । यथा गर्गरूप्यमिति ॥

( आक्षेपभाष्यम् )

**यद्येवमविशेषेणालुकमुक्त्वा 'हलि न' इत्युच्यते, बिदानामपत्यं बहवो माणवका बिदा अत्रापि प्राप्नोति ॥**

( समाधानभाष्यम् )

**अस्तु । पुनरस्य युवबहुत्वे वर्तमानस्य लुग् भविष्यति ॥**

( प्रदीपः ) पुनरस्येति । अपत्याधिकारादन्यत्र लौकिकस्यापत्यमात्रस्य गोत्रस्य ग्रहणमिति युवबहुत्वे यञञोश्चेति लुग् भविष्यतीत्यर्थः ॥

( आक्षेपभाष्यम् )

**पुनरलुक्कस्मान्न भवति ? ॥**

( प्रदीपः ) पुनरिति । लुक्छास्त्रवदलुक्छास्त्रस्यापि प्रवृत्तेरव्याघातादिति भावः ॥

( उद्योतः ) लुक्शास्त्रवदलुक्शास्त्रस्यापीति । तस्याप्यपत्याधिकारबहिर्भूतत्वेन लौकिकगोत्रस्यैव ग्रहणादिति भावः ॥ ननु लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तिः । किंच यूनि लुगित्युक्तरत्रोक्तेर्गोत्रेऽलुगिति सूत्रे युवातिरिक्तापत्यस्यैव गोत्रग्रहणेन ग्रहणात् युवबहुत्वाश्रयलुकः कथमलुक् । अपि च यत्र गोत्रे वर्तमानस्य लुक् प्राप्तस्तद्व्यतिरिक्तप्राग्दीव्यतीयेऽर्थे योऽजादिस्तत्रेत्यर्थस्य शब्दमर्यादया लाभात् । न चास्यामवस्थायां प्रत्युपसंक्रान्तात् कश्चिद्विवक्षितोऽस्तीति चेन्न । अर्थभेदेन लक्ष्यभेदात् । गोत्रे विहितस्य प्रत्ययस्येत्यर्थाश्रयणेनाप्यो युवातिरिक्तगोत्रे एव विहितत्वेन द्वितीयस्याप्यभावः । अत एव न तृतीयोपि ॥

( समाधानभाष्यम् )

**समर्थानां प्रथमस्य गोत्रप्रत्ययान्तस्यालुगुच्यते । न चैतत्समर्थानां प्रथमं गोत्रप्रत्ययान्तम् । किं तर्हि ? । द्वितीयमर्थमुपसंक्रान्तम् ॥ अवश्यं चैत-**

१ कश्चिद् विशेषो विवक्षितोऽस्तीति पाठः साधुर्भाति । मत्युपसंक्रान्तादित्य-स्यार्थान्तरोपसंक्रान्तादित्यर्थः । ( र. ना. )

**देवं विज्ञेयम् । अत्रिभरद्वाजिका वसिष्ठकश्यपिका भृग्वङ्गिरसिका कुत्सकुशिकिका इत्येवमर्थम् ॥**

( प्रदीपः ) **समर्थानामिति** । प्रतियोगं **समर्थानां प्रथमादि**त्यस्यानुवृत्तिस्तत्रायमर्थः—समर्थानां प्रथमस्य गोत्रप्रत्ययस्यालुग् भवतीति । प्राथमकल्पिके च प्रत्ययार्थे वर्तमानस्य तस्य प्राथम्यं यथा गार्ग्यायं इति । अत्र युवप्रत्ययस्य लुकि कृते युवलक्षणं द्वितीयमर्थमुपसंक्रान्तोयञन्तः शब्द इति प्राथम्याभावः ॥ **अत्रिभरद्वाजिकेति** । अत्रेरपत्यानीती- **तश्चानिञ** इति ढक् । भरद्वाजस्यापत्यानीति बिदायञ् । तत उभाभ्यां युववहुत्वेऽत इञ् । तस्य **ण्यक्षत्रियार्षेति** लुक् । ढकोत्रिभृग्विति । अणो यञञोश्चेति भावः । ततोत्रिभरद्वाजानां मैथुनिकेति **द्वन्द्वाद्वुन्नि**ति वुन् । तस्याकादेशः । यदि द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक् स्यात्तदा **गोत्रेऽलुगची**ति यथान्यासेपि अलुगयं प्रसज्येतेत्यर्थः । **वसिष्ठकश्यपिकेति** । वसिष्ठशब्दादृष्यण् । कश्यपादञ् । पूर्ववद्यून्यत इञ् । तस्य लुक् । ततोऽणञोर्लुक् वुन् ॥ **भृग्वङ्गिरसिकेति** । ऋष्यण् । यून्यत इञ् तस्य लुक् अणो लुक् वुन् ॥ **कुत्सकुशिकिकेति** । कुत्सादृष्यण् । कुशिकादञ् । अन्यत् पूर्ववत् ॥

( उद्द्योतः ) **समर्थानां प्रथमस्येति** । अत्र समर्थग्रहणानुवृत्तिप्रदर्शनस्योत्तरत्र तस्यानुवृत्तिसूचनमेव फलम् । प्रकृतोपयोगि तु प्रथमादित्येव । तस्य[1] वाऽनुवृत्तस्यार्थवशाद्विभक्तिविपरिणाम इति भावः ॥ **अवश्यं चैतदि**त्यस्यार्थमाह—**यथा न्यासेऽपीति** ॥ ततोऽणञोरिति । अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चेत्यनेनाणः, यञञोश्चेत्यञ इत्यर्थः ॥

( १६३५ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ गर्गभार्गविकाग्रहणं वा नियमार्थम् ॥ * ॥

( भाष्यम् ) **गर्गभार्गविकाग्रहणं वा क्रियते तन्नियमार्थं भविष्यति—एतस्यैव द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवति नान्यस्येति ॥**

( प्रदीपः ) **गर्गभार्गविकेति** । गर्गशब्दाद्यञ् । तस्य लुक् । भृगुशब्दादृष्यण् । तदन्ताद्यून्यत इञ् । तस्य लुक् गर्गभृगूणां मैथुनिकेति वुन् । अत्रात्रिभृग्विति लुक् प्राप्तो **गोपवनादि**पाठेन प्रतिषिध्यते । यदि च द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक् स्याद् गोपवनादिषु न पठ्यते, पठितस्तु यथोक्तार्थज्ञापनायेत्यर्थः ॥

( उद्द्योतः ) **ज्ञापनायेति** । प्रथमादित्येतत्संबन्धज्ञापनायेत्यर्थः ॥ भाष्ये—**नियमार्थमि**त्यस्य तत्संबन्धबोधनपूर्वकं[4] नियमार्थमित्यर्थः ॥ पूर्वं न्याख्यानात् तत्संबन्धः । इदानीं तु तत्रैवार्थे ज्ञापकमुक्तमिति भेदः ॥

( अर्थनिर्देशपक्षे दूषणपरिहारभाष्यम् )

**यदप्युच्यते—*एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्य* इति ॥ मा भूदेवम्—अञ्यो बहुषु यञ्यो बहुष्विति । अञन्तं यद्बहुषु यञन्तं यद् बहुष्वित्येवं भविष्यति ॥**

( प्रदीपः ) अर्थनिर्देशवादी परिहारमाह—**यदपीति** ॥

( उद्द्योतः ) भाष्ये—**अञन्तं यद् बहुष्विति** । बहुष्वित्यस्यान्यास्यतिव्याप्तिवारकतया सारवत्त्वलाभेन तदन्तविशेषणत्वमिति भावः ॥

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम्—नैवं शक्यम् । इह हि दोषः स्यात्—काश्यपप्रतिकृतयः काश्यपाः—इति ॥**

( परिहारभाष्यम् )

**नैष दोषः । लौकिकस्य तत्र गोत्रस्य ग्रहणम् । न चैतल्लौकिकं गोत्रम् ॥**

( प्रदीपः ) **लौकिकस्येति** । अपत्यस्येत्यर्थः । प्रतिकृतिबहुत्वेऽयमञन्तो वर्तते न त्वपत्यबहुत्व इत्यर्थः ॥ **न चैतदिति** । यद्यपि शास्त्रीयमपि न भवति तथापि स्थितपक्षाश्रयः परिहारो वक्तव्य इत्येवमुक्तम् ॥

( दोषसाम्यभाष्यम् )

**यस्य बहुवचने परतो लुक् । समासबहुत्वे तेन नेति प्रतिषेधो वक्तव्यः । तेनैव चेत्कृतं बहुत्वमिति वा वक्तव्यम् ॥ यस्य प्रत्ययार्थबहुत्वे लुक् तेनास्त्रियामिति वक्तव्यम् ॥**

( प्रदीपः ) इदानीं पक्षद्वये दोषपरिगणनमाह—**यस्येति** ॥

( समाधानभाष्यम् )

**यस्य बहुवचने परतो लुक् तस्यायमधिको दोषः । अत्रय इति उदात्तनिवृत्तिस्वरः प्राप्नोति । तस्मात्प्रत्ययार्थबहुत्वे लुगित्येष पक्षो ज्यायान् ॥**

( प्रदीपः ) **तस्मादिति** । अर्थपक्षे लुकोऽपरनिमित्तत्वादत्रय इत्युदात्तनिवृत्तिस्वराप्रसङ्गः । **अस्त्रियामि**त्येतत्तु कृतमेव ॥

( उद्द्योतः ) **तस्यायमधिको दोष इति** । युगपदधिकरणवचनताया दूषितत्वाद् द्वन्द्वेऽबहुषु लुग्वचनमिति दोषोऽस्त्येवेति तस्याप्युपलक्षणमिदम् । अर्थपरत्वे तु युगपदधिकरणतां विनाऽपि तद्दोषोद्धार उक्तः ॥

( आक्षेपभाष्यम् )

**अथेह कथं भवितव्यं गार्गी च वात्स्यश्च वाज्यश्चेति ॥**

---

१ गर्गाणां गर्गगोत्रापत्यानामिमे इति विग्रह इति भावः । ( र. ना. ) २ गर्गाणां गर्गयुवापत्यानामिमे इति विग्रहे त्वाह—अत्र युवप्रत्ययस्येत्यादिना । तत्रालुकोऽभावाद् गार्गा इत्येव भवतीति भावः । ( र. ना. ) ३ 'तस्यैवानु' इति भवेत् । ४ प्रथमादित्यस्य संबन्धबोधनपूर्वकमित्यर्थः । ( र. ना.) ५ वादिनेत्यर्थः । ( र. ना. )

( प्रदीपः ) **गार्गी चेति** । एकैकं शब्दरूपं स्त्रीपुंसात्मकसमुदायाभिधायि तत्र पर्युदासे सर्वेषां लुका भाव्यम् । प्रसज्यप्रतिषेधे तु न भाव्यमिति संदेहात् प्रश्नः ॥

( उद्योतः ) **एकैकमिति** । द्वन्द्वरूपसमुदायस्य स्त्रीपुंसात्मकसमुदाये शक्तौ समुदायस्य प्रत्येकानतिरेकेणैकैकस्य तदभिधायकत्वमिति भावः । **समुदायाभिधायीत्यस्य** समुदायगतबहुत्वाश्रयाभिधायीत्यर्थः ॥

( आक्षेपाशयभाष्यम् )

**यदि तावदस्त्री विधिनाश्रीयते अस्त्यत्रास्त्रीति कृत्वा भवितव्यं लुका । अथ स्त्री प्रतिषेधेनाश्रीयते अस्त्यत्र स्त्रीति कृत्वा भवितव्यं प्रतिषेधेन ॥ किं पुनरर्थसंतत्त्वम् ? ॥**

( उद्योतः ) भाष्ये—**अर्थसतत्त्वमिति** । तत्वसतत्त्वशब्दौ पर्यायौ ॥

( समाधानभाष्यम् )

**देवा ज्ञातुमर्हन्ति ॥**

( प्रदीपः ) **देवा इति** । दिव्यदृशः देवा इति पण्डिता इत्यर्थः । तत्र पर्युदासस्यैकवाक्यतया लाघवात् न्याय्यत्वमिति केचिदाहुः । अन्ये तु ब्रुवते गार्गीशब्देन स्त्रीत्वयुक्तानामर्थानामभिधानाद् यञो लुका न भाव्यम् अन्येषां तु भाव्यमिति ॥

( उद्योतः ) पण्डितज्ञेयप्रकारं दर्शयति—**तत्रेति** । अन्येषां मतं तु न युक्तं । न हि गार्गीशब्देन स्त्रीत्वयुक्ता बह्वयो गार्ग्य उच्यन्ते । गार्गा चेत्येकवचनान्तेन भाष्ये विग्रहकरणात् समासे संख्याविशेषानवगमाच्च युगपदधिकरणवचनतापक्षेऽपि वात्स्यादयः स्त्रीत्वयुक्ता नोच्यन्ते अनुभवविरोधादित्याहुः । पर्युदासप्रतिषेधयोरुभयोरपि गार्गीशब्दे लुगभावो अन्ययोर्लुगित्यर्थत्वेनार्थान्तरानुपसंक्रान्त उद्भूतावयवभेदे समूहे गार्ग्यां उपसंक्रान्तत्वेनार्थान्तरानुपसंक्रान्तस्त्रियोऽभावादिति परे ॥

( आक्षेपभाष्यम् )

**अथ यो लोप्यलोपिनां समासस्तत्र कथं भवितव्यम् ? ॥**

( प्रदीपः ) **अथेति** । लोपभाजामन्येषां च यः समास इत्यर्थः । यदा लोपभाग् युगपदर्थानामभिधानाद् बह्वर्थस्तदा तदाश्रयेण किं तस्य लुक् क्रियताम् ॥ अथ **तेनैवेति** वचनादलोपिसन्निधिकृतं बहुत्वमिति मा कारि लुगिति प्रश्नः ॥

( उद्योतः ) **बह्वर्थ इति** । बहुत्वाश्रयार्थमित्यर्थः ॥ **अथ तेनैवेति वचनादिति** । प्रत्ययग्रहणपक्षे **तेनैवेति** वचनान्न भवति लुक् । अर्थग्रहणपक्षे तदभावात् प्राप्नोति । तथा च द्वितीयपक्षे एतदर्थमेव तेनैवेति किं कर्तव्यमिति प्रश्नाशय इति भावः ॥

( समाधानभाष्यम् )

**उभयं हि दृश्यते—"शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु" । "नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्" इति ॥ तद्राजस्य ॥ ६२ ॥**

( प्रदीपः ) **उभयं हीति** । ज्ञापकद्वयसद्भावादुभयं भवतीति भावः ॥ **भृगुवत्साग्रायणेष्विति** । अत्र द्वौ लोपिनौ तृतीयस्तु नडादिफगन्तो न लोपी द्वयोश्च लुक् कृतः । अगार्ग्यकाश्यपगालवानामिति । द्वौ लोपिनौ गालवस्तु ऋष्यण्न्तो न लोपी । न च लोपिनोर्लुक् कृतस्तदेवं ज्ञापकद्वयसद्भावात् प्रयोगद्वयोपपत्तिः ॥ ६२ ॥

( उद्योतः ) **ज्ञापकद्वयेति** । एवंच **तेनैवेति** न कार्यमिति भावः । **तेनैवेति** कुर्वताऽपि भृगुवत्साग्रायणेष्विति प्रयोगनिर्वाहाय ज्ञापकस्यावश्याश्रयणीयत्वात् । एवं च गार्ग्यश्च चैत्रश्चेत्यादौ द्वन्द्वे यथाप्रयोगं लुगलुकोर्व्यवस्था बोध्या ॥ ६२ ॥

---

( ३६७ लुक्सूत्रम् ॥ २ । ४ । २ आ. २ )

## ५९५ यञञोश्च[2] ॥ २ । ४ । ६४ ॥

( षष्ठीतत्पुरुषेब्येकयोर्विकल्पाधिकरणम् )

( १६३६ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ॥ * ॥

**यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्याँ उपसंख्यानं कर्तव्यम् । गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलं वा । गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलं वा । बैदस्य कुलं बैदकुलं बिदकुलं वा । बैदयोः कुलं बैदकुलं बिदकुलं वा ॥ यञादीनामिति किमर्थम् ? । आङ्गस्य कुलम् आङ्गकुलम् । आङ्गयोः कुलमाङ्गकुलम् ॥ एकद्वयोरिति किमर्थम् ? । गर्गाणां कुलं गर्गकुलम् ॥ तत्पुरुष इति किमर्थम् ? । गार्ग्यस्य समीपमुपगार्ग्यम् ॥ षष्ठ्या इति किमर्थम् ? । शोभनगार्ग्यः । परमगार्ग्यः ॥ यञञो ॥ ६४ ॥**

( प्रदीपः ) **यञ ॥ ६४ ॥ यञादीनामिति** । इतः प्रभृति ये प्रत्यया बहुषु लुग्भाजस्ते यञादय, आदिशब्दस्य व्यवस्थावाचित्वात् ॥ ६४ ॥

( उद्योतः ) **यञञोश्च ॥ ६४ ॥ इतः प्रभृतीति** । अतः पूर्वविषये आङ्गकुलमित्येवेति भावः ॥ ६४ ॥

---

१ 'तसत्त्वम्' 'स्य तत्त्वम्' । २ 'यस्कादिभ्यो गोत्रेयञञोश्च' इत्येवं संहितापाठे "यञञोश्च" इति सूत्रपाठं पूर्वपक्षी कृतवान् ॥ सिद्धान्ती भाष्यकृत्तु "अयञञोश्च" इत्याकारादिसूत्रपाठं मन्यते ॥ ध्वनितं चेदं स्त्रीप्रत्यय-प्रकरणे यञश्चेत्यत्र भाष्यकृता कैयटेन स्पष्टीकृतम् । ३ षष्ठ्यन्तावयवयोर्यञञोर्लुक उपसंख्यानमित्यर्थः । ( र. ना. )

( ३६८ लुक्सूत्रम् ॥ २ । ४ । २ आ० ३ )

## ५९७ बह्वच इञः प्राच्यभरतेषु ॥ २ । ४ । ६६ ॥

( प्राच्यभरतानां समुच्चयाधिकरणम् )

( आक्षेपभाष्यम् )

**किमयं समुच्चयः प्राक्षु च भरतेषु चेति । आहोस्विद्भरतविशेषणं प्राग्ग्रहणं प्राञ्चो ये भरता इति ॥**

( प्रदीपः ) बह्वचः ॥६६॥ द्वन्द्वतत्पुरुषयोर्द्वयोरपि संभवाद्दोषदर्शनाच्च प्रश्नः—**किमयमिति**। गोबलीवर्दवत्सामान्यविशेषवाचिनोरपि द्वन्द्वसंभवः ॥

( उद्योतः ) बह्वचः ॥ ६६ ॥ सामान्यविशेषयोर्द्वन्द्वासंभवादाह—**गोबलीति** । इदमेव तयोरपि समासज्ञापकमिति भावः । वस्तुतो गोबलीवर्दमित्यादौ सामान्यविशेषभाव एव नेत्येकशेषप्रकरणान्ते भाष्ये उक्तत्वेनात्र सौत्रत्वाद् द्वन्द्वः ॥ सामान्यविशेषवाचिनोर्नैव द्वन्द्वः सामान्यविशेषवाचिनोर्द्वन्द्वो नेति वक्तव्यमिति तत्रैव भाष्योक्तेरिति बोध्यम् ॥ ६६ ॥

( जिज्ञासाभाष्यम् )

**किं चातः ? ॥**

( विशेषप्रदर्शनभाष्यम् )

**यदि समुच्चयः । भरतग्रहणमनर्थकम् । न ह्यन्यत्र भरताः सन्ति ॥**

**अथ प्राग्ग्रहणं भरतविशेषणम् । प्राग्ग्रहणमनर्थकम् । नह्यप्राञ्चो भरताः सन्ति ॥**

( प्रथमपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि समुच्चयः ॥**

( दोषस्मरणभाष्यम् )

**ननु चोक्तम्—भरतग्रहणमनर्थकं नह्यन्यत्र भरताः सन्तीति ॥**

( समाधानभाष्यम् )

**नानर्थकम् । ज्ञापकार्थम् ॥ किं ज्ञाप्यते ? । एतज्ज्ञापयत्याचार्यः—'अन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवति' इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? । "इञः प्राचाम्" भरतग्रहणं न भवति । औद्दालकिः पिता । औद्दालकायनः पुत्र इति ॥ बह्वचः ॥ ६६ ॥**

( प्रदीपः ) **औद्दालकिरिति** । उद्दालको नाम भरतकुलोत्पन्नः ॥ ६६ ॥

१ अत्र युवप्रत्ययस्य लुङ् नेति बोध्यम् । ( र. ना. )

( ३६९ लुक्प्रतिषेधसूत्रम् ॥ २।४।२ आ. ४ सू. )

## ५९८ न गोपवनादिभ्यः ॥ २।४।६७ ॥

( १६३७ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यः ॥ * ॥

**गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यो द्रष्टव्यः । हारितः हारितौ । बहुषु—हरिताः ॥ न गोपव ॥६७**

( प्रदीपः ) न गोप ॥ ६७ ॥ बिदाद्यन्तर्गणो गोपवनादिः । न च तत्समाप्तये गणे वृत्करणं पठितमिति आगणान्ताद् ग्रहणं प्राप्नोतीत्याह—**गोपवनादिप्रतिषेध इति** ॥ ६७ ॥

( ३७० विकल्पसूत्रम् ॥ २ । ४ । २ आ. ५ )

## ६०० उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ २ । ४ । ६९ ॥

( अद्वन्द्वग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमद्वन्द्व इत्युच्यते ? ॥**

( प्रदीपः ) उपका ॥ ६९ ॥ द्वन्द्वेपि लुग्विकल्पस्येष्टत्वात् प्रश्नः—**किमर्थमिति** ॥

( समाधानभाष्यम् )

**द्वन्द्वे मा भूदिति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । इष्यते द्वन्द्वे भ्राष्ट्रककपिष्ठलाः । भ्राष्ट्रकिकापिष्ठलय इति ॥**

( प्रदीपः ) **भ्राष्ट्रकिकापिष्ठलय इति** । अस्मादेवोदाहरणात्तिककितवादिष्वस्य पाठो नार्ष इति लक्ष्यते ॥

( उद्योतः ) उपकादि ॥ ६९ ॥ पाठोऽनार्ष इति । वृत्तिकारोक्त इत्यर्थः ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( १६३८ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अद्वन्द्व इति द्वन्द्वाधिकारनिवृत्त्यर्थम् ॥ * ॥

**अद्वन्द्व इत्युच्यते द्वन्द्वाधिकारनिवृत्त्यर्थम् । द्वन्द्वाधिकारो निवर्त्यते तस्मिन्निवृत्ते अविशेषेण द्वन्द्वे चाद्वन्द्वे च भविष्यति ॥ उपकादिभ्यो ॥ ६९ ॥**

(प्रदीपः) द्वन्द्वाधिकारानिवृत्त्यर्थमिति। अधिकारशब्देनात्र शास्त्रीयोधिकारः स्वरितत्वनिमित्तो न गृह्यते नहि पूर्वसूत्रोपात्तो द्वन्द्वशब्द आसक्तस्वरितः। किं तर्हि; लौकिकोधिकारोपेक्षालक्षणो निविवर्तयिषितः। द्वन्द्वशब्देन तद्विषयोधिकारोभिधीयते तस्य नञा निषेधो द्योत्यते॥ तेनायमर्थोद्वन्द्व इह नापेक्ष्यते। तदनपेक्षायां सामान्येन द्वन्द्वे चाद्वन्द्वे च लुग्विकल्पसिद्धिः॥ ६९॥

(उद्योतः) आसक्तस्वरित इति। फलाभावादिति भावः। स्वरितत्वासङ्गभावस्यैवान्वाख्यानं वार्तिकमित्यन्ये[1]॥ ६९॥

---

(३७१ प्रकृत्योरादेशसूत्रम्॥ २। ४। २ आ. ६ सू.)

## ६०१ आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्॥ २। ४। ७०॥

(प्रकृत्यादेशत्वनिर्णयाधिकरणम्)

(१६३९ वार्तिकम्॥ १॥)

### ॥ * ॥ आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनम्॥ * ॥

(भाष्यम्) आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनं कर्तव्यम्। अगस्ति—कुण्डिनजित्येतौ प्रकृत्यादेशौ भवत इति वक्तव्यम्॥

किं प्रयोजनम्?॥

(१६४० वार्तिकद्वितीयखण्डम्॥ २॥)

### ॥ * ॥ लुक्प्रतिषेधे वृद्ध्यर्थम्॥ * ॥

(भाष्यम्) लुक्प्रतिषेधे वृद्धिर्यथा स्यात्[2]॥

(१६४१ वार्तिकतृतीयखण्डम्॥ ३॥)

### ॥ * ॥ प्रत्ययान्तनिपातने हि वृद्ध्यभावः॥ * ॥

(भाष्यम्) प्रत्ययान्तनिपातने हि सति वृद्ध्यभावः स्यात्। आगस्तीयाः कौण्डिना इति॥

(प्रदीपः) आगस्त्य॥ ७०॥ प्रकृतिप्रत्ययसमुदायस्य षष्ठीनिर्दिष्टत्वादादेशप्रसङ्गस्ततश्चागस्तीनां छात्रा इत्यत्रादेशे कृतेऽवृद्धत्वाच् छो न स्यादित्याह—प्रकृतिनिपातनमिति। प्रकृतेरेवादेशौ निपातनीयावित्यर्थः। लुक्प्रतिषेध इति। गोत्रेऽलुगचीति लुकि प्रतिषिद्धे तत्संनियोगशिष्टस्यादेशस्याप्यभाव इत्यागस्त्यशब्दाच्छः सिध्यति[3]॥ प्रत्ययान्तनिपातने हीति। यदि प्रत्ययान्तस्यादेशः क्रियेतेत्यर्थः॥ कौण्डिना इति। कण्वादिभ्यो गोत्र इत्यण्। अस्य विशेषाभावप्रदर्शनायोपन्यासः॥

(उद्योतः) आगस्त्यकौण्डिन्य॥ ७०॥ प्रकृतिनिपातनशब्दस्य विवक्षितमर्थमाह—प्रकृतेरेवेति। अर्थादेव प्रत्ययस्य लुगिति बोध्यमिति भावः॥ भाष्ये—वृद्ध्यभावः स्यादिति। एवं च[4] छो न स्यादिति भावः॥ पूर्वं फलाभावाद्वृद्धसंज्ञाभावेन स्थानिवद्भावेन न तल्लाभ इति बोध्यम्॥ अस्य विशेषेति। यद्यपि कौण्डिना इति सिध्यति। तथाप्यागस्तीया इति न सिध्यतीति व्याख्येयमिति भावः॥

(आक्षेपभाष्यम्)

यदि प्रकृतिनिपातनं क्रियते। केनेदानीं प्रत्ययस्य लोपो भविष्यति?॥

(१६४२ वार्तिकम्॥ ४॥)

### ॥ * ॥ अधिकारात्प्रत्ययलोपः॥ * ॥

(भाष्यम्) अधिकारात्प्रत्ययलोपो भविष्यति॥

(प्रदीपः) अधिकारादिति। लुग्ग्रहणमिहानुवर्तते। तत्र प्रकृतेरादेशः, प्रत्ययस्य तु लुगित्यर्थः संपद्यते॥

(आक्षेपभाष्यम्)

तत्तर्हि प्रकृतिनिपातनं कर्तव्यम्?॥

(समाधानभाष्यम्)

न कर्तव्यम्॥

(१६४३ वार्तिकम्॥ ५॥)

### [॥ * ॥ योगविभागात् सिद्धम्॥ * ॥][5]

(भाष्यम्) योगविभागः करिष्यते—["आगस्त्यकौण्डिन्ययोः"] आगस्त्यकौण्डिन्ययोर्बहुषु लुग्भवति। ततः ["अगस्ति कुण्डिनच्" अगस्तिकुण्डिनजित्येतौ च प्रकृत्यादेशौ भविष्यतः आगस्त्यकौण्डिन्ययोरिति॥

(प्रदीपः) बहुषु लुग् भवतीति। बहुषु वर्तमानयोर्यः प्रत्ययस्तस्येत्यर्थः॥ प्रकृत्यादेशाविति। सामर्थ्यलभ्योयमर्थः। प्रत्यये हि लुप्ते प्रकृतिरेवावशिष्यते॥

---

१ स्वरितत्वासङ्गाभावस्यैवेति पाठः साधुः। (र. ना.) २ कुण्डिनीशब्दस्य (गर्गादित्वाद्) यञि 'भस्याढे तद्धिते' इति पुंवद्भावे 'नस्तद्धिते' इति लोपे कौण्ड्य इति प्राप्नोति तथापि अस्मादेव निपातनात्पुंवद्भावाभावः। असति तस्मिन्नीकारस्य 'यस्येति' इति लोपे तस्य स्थानिवत्त्वादाभीयत्वेनासिद्धत्वाद्वा टिलोपाभावः। इति पदमञ्जरी। ३ यदि हि प्रत्ययान्तयोरेवादेशौ स्याताम्, (तर्हि) 'गोत्रेऽलुगचि' इति प्रतिषेधो न स्यात्। लुको ह्यसौ निषेधो नादेशस्य। ततश्चादेशे सत्यवृद्धत्वादणेव स्यात्। तथागस्तीया इति रूपं न स्यात्। लुकि तु सति तस्य प्रतिषेधे तत्संनियोगशिष्टस्यादेशस्याप्यभावाद्वृद्धलक्षणश्छो भवति (आगस्तीया इति सिद्धम्) कौण्डिन्यशब्दात् कण्वादित्वादणि समुदायस्यादेशेपि कौण्डिना इति सिध्यतीति न विशेषः, तथाप्यागस्त्यशब्दस्यागस्तिरूपादेशे वृद्धत्वाभावाच्छो न स्यात् इति भावः। ४ 'चेच्छो'। ५ कोष्ठकान्तर्गताः सर्वत्र नोपलभ्यन्ते।

( उद्द्योतः ) ननु प्रत्ययवाचकपदाभावेन बहुष्विलस्य प्रत्ययान्तसमुदाये एवान्वयेन तस्यैव लुक् स्यादत आह—बहुष्विति ॥ यः प्रत्यय इति । लुगाक्षिप्तोऽयम्, प्रत्ययादर्शनस्यैव लुक्त्वादिति बोध्यम् ॥

( प्रत्याक्षेपभाष्यम् )

एवमपि प्रत्ययान्तयोरेव प्राप्नोति । प्रत्ययान्ताद्धि भवान् षष्ठीमुच्चारयति—"आगस्त्यकौण्डिन्ययोः" इति ॥

( प्रदीपः ) एवमपीति । षष्ठीनिर्दिष्टस्यादेशविधानादिति भावः । ततश्च लुक् आदेशयोश्च पर्यायप्रसङ्गः ॥

( उद्द्योतः ) षष्ठीनिर्दिष्टस्येति । स्थानषष्ठी सामर्थ्यस्य प्रतिबन्धिकेति भावः ॥

( समाधानभाष्यम् )

नैष दोषः । यथापरिभाषितं प्रत्ययस्य लुक्श्लुलुपो भवन्तीति प्रत्ययस्यैव भविष्यति । अवशिष्टस्यादेशौ भविष्यतः ॥ आगस्त्य ॥ ७० ॥

( प्रदीपः ) यथापरिभाषितमिति । तत्र स्थानिभेदात् पर्यायाभावः ॥ ७० ॥

( उद्द्योतः ) तत्रेति । एतदर्थमेव तत्र प्रत्ययग्रहणं कृतम् ॥ यद्वा गोत्रे इत्यनुवर्त्य गोत्रे कृतस्य लुगित्यर्थात्र दोषः ॥ पर्यायाभाव इति । विकल्पस्याष्टदोषदुष्टत्वादित्यपि बोध्यम् ॥ ७० ॥

( इति तद्धितलुक्प्रकरणम् )

( अथ धातुप्रत्ययलुक्प्रकरणम् )

( ३७२ यङ्लुक्सूत्रम् ॥ २ । ४ । २ आ. ७ सू. )

## ६७५ यङोचि च ॥ २ । ४ । ७४ ॥

( उद्द्योतः ) यङोऽचि च ॥ ७४ ॥ यङा साहचर्यादच् प्रत्यय एवात्र गृह्यते ॥

( १६४४ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ऊतोचि ॥ * ॥

( भाष्यम् ) ऊतः अचीति वक्तव्यम् । इह मा भूत्—सनीस्रसो दनीध्वस इति ॥

( प्रदीपः ) यङोचि ॥ ७४ ॥ सनीस्रस इति । यद्यत्र लुक् स्यात्तदा न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाच्चलोपो न स्यात् । अतो लोपः यस्य हल इति लोपे तु प्रत्ययलक्षणं भवत्येव ॥ ७४ ॥

( उद्द्योतः ) ऊतोऽचि । ऊतः परस्य यङोऽचि लुगित्यर्थः ॥ यद्यत्रेति । न धात्विति सूत्रस्थप्रत्याख्यानप्रकारस्तु लक्ष्यविशेषविषय एवेति निरूपितं तत्रैव भाष्ये ॥

( आक्षेपभाष्यम् )

अथ ऊत इत्युच्यते । इह कस्मान्न भवति—योयूयः । रोरूयः ? ॥

( समाधानभाष्यम् )

विहितविशेषणमूकारग्रहणम् । ऊकारान्ताद्यो विहित इति ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । इष्टमेवैतत्संगृहीतम्—सनीस्रंसो दनीध्वंस इत्येव भवितव्यम् ॥ यङो० ॥ ७४ ॥

( उद्द्योतः ) इत्येव भवितव्यमिति । योयूयो रोरूय इत्यत्र बाहुलकाद्यङ्लुगभाव एवेष्टपरे ॥ ७४ ॥

( ३७३ सिज्लुक्सूत्रम् ॥ २ । ४ । २ आ. ८ )

## ६०८ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ २ । ४ । ७७ ॥

( धातुविशेषनिर्णयाधिकरणम् )

( १६४५ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् ॥ * ॥

( भाष्यम् ) गापोर्ग्रहणे इण्पिबत्योर्ग्रहणं कर्तव्यम् । इणो यो गाशब्दः पिबतेर्यः पाशब्द इति वक्तव्यम् । इह मा भूत्—अगासीन्नटः, अपासीद्धनमिति ॥

( प्रदीपः ) गाति ॥ ७७ ॥ पिबतेरिति । पिबतेर्यः स्थानी दृष्टः पाशब्द इत्यर्थः । शिति च पिबादेशो विहित इति पा पान इत्यस्यैव भौवादिकस्य ग्रहणम् ॥ अगासीदिति । गै शब्दे पा रक्षणे अनयोर्यमरमनमातां सक् च इति सगागमः । सिचश्चेट् ॥

( उद्द्योतः ) गातिस्था ॥ ७७ ॥ इणो गा शब्द इति भाष्ये इकोपीण्वद्भावात्तदादेशस्यापि सिद्धिरिति भावः ॥ यःस्थानीति । स्थान्यादेशसंबन्धे षष्ठीति भावः ॥ ननु पातेरपि पिबादेशः किं नेत्यत आह—शिति चेति ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । इण्ग्रहणे तावद्वार्तम्—निर्देशादेव व्यक्तं 'लुग्विकरणस्य ग्रहणम्' इति ॥

---

१ 'न्वये च' इत्येवं तु दृश्यते । २ 'तत्र—प्रत्ययस्य लुक्श्लुलुपः' इति सूत्रे । ३ व्रीहिभिर्यजेत यवैर्वा इत्यादाविव वाक्यद्वयस्य प्रामाण्यपरित्यागाप्रामाण्यपरिग्रहपरित्यक्तप्रामाण्यस्वीकारस्वीकृताप्रामाण्यपरित्यागैः तृतीयेऽनुष्ठानेऽष्टदोषदुष्टत्वादित्यर्थः । ( र.ना. ) ४ न लुमतेति सूत्रप्रत्याख्यानेत्यर्थः । ( र.ना. )

५ ननु फलभेदे ऊतोऽचीति न्यासप्रत्याख्यानं न युक्तमित्यत आह योयूय इत्यादि । ( र.ना. ) ६ यङ्लुकश्छान्दसत्वाद् बहुलं छन्दसीत्यस्य सत्त्वाद् यङन्तस्यैव प्रयोगो न तु यङ् लुगन्तस्येति भावः । (र.ना.) ७ 'इणोग्रहणे' । ८ वृत्तौ व्यवहारे युक्ततया मतं प्रसिद्धं युक्तमिति यावत् । ( र. ना. )

पाग्रहणे चापि वार्त्तम्—उक्तमेतत्—'सर्वत्रैव पाग्रहणे अलुग्विकरणस्य ग्रहणम्' इति ॥ गातिस्था ॥ ७७ ॥

( प्रदीपः ) **निर्देशादिति** । गातीत्यादादिकादेशानुकरणत्वाददादिलुका गातिशब्दः श्तिपा निर्दिष्टः ॥ **सर्वत्रेति** । घुमास्थागापेत्यादावपीत्यर्थः । तेन पायते इति पातेरीत्वाभावः । शोषणार्थस्य तु पायतेर्लाक्षणिकत्वात्पारूपस्य ग्रहणाभावः ॥ ७७ ॥

( उद्द्योतः ) **अदादिलुकेति** । श्तिपः कैर्त्रर्थत्वाभावाद्विकरणो न न्यायप्राप्त इतिवादिनां मतेपि तैस्य गैतेरिति स्यादित्याशयः । न च गैशब्दे इत्यस्य कृतात्वस्यानुकरणात् श्तिप्यपि एवमेव रूपेण निर्देशः संदिग्ध इति वाच्यम्, लाक्षणिकत्वेन तस्याननुकरणतयाऽसात् श्तिपि एवमेव रूपं तस्यैव ग्रहणाच्च ॥ अन्यथा 'गास्थाघु–' इत्येवमेव वदेदिति भावः । गाङस्तु नानुकरणं परस्मैपदपरत्वाभावात् ॥ **गामादाग्रहणेष्वविशेष इति** श्तिब्ग्रहितगादेशविषयमिति वोध्यम् ॥ भाष्ये—**ऽलुग्विकरणस्येति** । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्येत्यनयेत्यर्थः ॥ ७७ ॥

---

( ३७४ सिज्लुक्सूत्रम् ॥ २ । ४ । २ आ. ९ )

## ६१० तनादिभ्यस्तथासोः ॥ २।४।७९ ॥

( तप्रत्ययनिर्णयाधिकरणम् )

( १६४६ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तथासोरात्मनेपदवचनम् ॥ * ॥

( भाष्यम् ) तथासोरात्मनेपदस्य ग्रहणं कर्तव्यम् । आत्मनेपदं यौ तथासाविति वक्तव्यम् ॥

( १६४७ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ एकवचनग्रहणं वा ॥ * ॥

( भाष्यम् ) अथ वा एकवचनं ये तथासी इति वक्तव्यम् ॥ तच्चावश्यमन्यतरत्कर्तव्यम् ॥

( १६४८ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अवचने ह्यनिष्टप्रसङ्गः ॥ * ॥

( भाष्यम् ) अनुच्यमाने ह्येतस्मिन्ननिष्टं प्रसज्येत—अतनिष्ट यूयम् असनिष्ट यूयमिति ॥

( उद्द्योतः ) **तनादिभ्यः** ॥ ७९ ॥ **अतनिष्टेति** । मध्यमपुरुषवहुवचनम् ॥ ७९ ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । यद्यपि तावदयं तशब्दो दृष्टापचारोऽस्त्यात्मनेपदम्, अस्ति च परस्मैपदम्, अस्त्येकवचनम्, अस्ति वहुवचनम् अयं तु खलु थास्शब्दोऽदृष्टापचार आत्मनेपदमेकवचनं च । तस्यास्य कोऽन्यः सहायो भवितुमर्हति अन्यदत आत्मनेपदादेकवचनाच्च । तद्यथा—'अस्य गोर्द्वितीयेनार्थः' इति गौरेवानीयते नाश्वो न गर्दभ इति ॥ तनादि ॥ ७९ ॥

---

( ३७५ लुक्सूत्रम् ॥ २ । ४ । २ आ. १० )

## ६१२ आमः ॥ २ । ४ । ८१ ॥

( लुङ्लोटोर्लुक्साधनाधिकरणम् )

( १६४९ शेषवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आमो लेर्लोपे लुङ्लोटोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) आमः लेर्लोपे लुङ्लोटोरुपसंख्यानं कर्तव्यम् । तां वैजवापयो विदामक्रन् । अस्य भवन्तो विदांकुर्वन्तु ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( समाधानभाष्यम् )

न वक्तव्यम् । लिग्रहणं निवर्तिष्यते ॥

( प्रदीपः ) **आमः** ॥ ८१ ॥ **लिग्रहणमिति** । निपातनादप्यत्र लुक् सिध्यति । तत्त्वनपेक्ष्यायं परिहार उक्तः ॥

( उद्द्योतः ) **आमः** ॥ ८१ ॥ यद्यपि पूर्वसूत्रे लेरिति च्लेर्ग्रहणं तथाप्यत्र योग्यतावशाल्लिट एव ग्रहणमिति वार्तिकम् ॥ **निपातनादिति** । विदांकुर्वन्त्वित्यन्यतरस्यामिति अभ्युत्सादयामित्यादिनिपातनादित्यर्थः ॥ **तत्त्विति** । लेरित्यननुवृत्त्या सर्वेष्टसिद्धौ तदनुवृत्तिमभ्युपगम्य लुङ्लोटोर्निपातनाश्रयणमयुक्तमित्यनपेक्षाबीजम् ॥

( आक्षेपभाष्यम् )

यदि निवर्तते । प्रत्ययमात्रस्य लुक् प्राप्नोति ॥

( प्रदीपः ) **प्रत्ययमात्रस्येति** । तरवादेरपीत्यर्थः ॥

( उद्द्योतः ) **तरवादेरिति** । लावस्थायामेव लुकः प्राप्त्या कृदन्तत्वात्प्रातिपदिकत्वेन तरवुत्पत्त्यत इत्याशयः । आदिना तमप् तदन्तादुत्पन्न आम् च ग्राह्यः ॥

( समाधानभाष्यम् )

इष्यत एव प्रत्ययमात्रस्य ॥ आतश्चेष्यते । एवं ह्याह "कृञ्चानुप्रयुज्यते लिटि" इति । यदि च प्रत्ययमात्रस्य लुग् भवति तत एतदुपपन्नं भवति ॥

---

१ 'श्तिपि'। २ 'कर्त्राद्यर्थे'। ३ तस्य गैधातोरित्यर्थः।
४ 'रूपे' इति स्यात् । 'गाति' इत्येवंरूप इत्यर्थः ।
५ 'तस्यैव' इणादेशस्यैव ।
६ श्तिब्ग्रहितेति । 'घुमास्थागापा—' इत्यत्र यथा ।

(प्रदीपः) एवं ह्याहेति । व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थमेव तद्वचनमित्यर्थः । आमन्तस्यानभिव्यक्तपदार्थत्वाच्च स्वाभाविक्येवानुत्पत्तिस्तरबादेर्लुग्द्वारेणान्वाख्यायत इति भावः॥

(उद्द्योतः) व्यवहितेति । तरबादौ सति व्यवहितत्वं स्यादिति भावः ॥ नन्वनभिव्यक्तपदार्थकत्वेनातिशयाद्ययोगात्तरबाद्यनुत्पत्तौ कथं लुगित्यत आह—आमन्तस्येति । प्रत्ययमात्रस्य लुक्फलमदर्शनमिष्यत एवानुत्पत्तिरिति भाष्याक्षरार्थं इति भावः ॥

(आम्ग्रहणनिर्णयाधिकरणम्)

(१६५० आक्षेपवार्तिकम् ॥ २ ॥)

॥ * ॥ आमन्तेभ्यो णलः प्रतिषेधः ॥ * ॥

(भाष्यम्) आमन्तेभ्यो णलः प्रतिषेधो वक्तव्यः । शशाम तताम । वृद्धौ कृतायम् "आमः" इति लुक् प्राप्नोति ॥

(१६५१ समाधानवार्तिकम् ॥ ३ ॥)

॥ * ॥ आमन्तेभ्योर्थवद्ग्रहणाण्णलोऽप्रतिषेधः ॥ * ॥

(भाष्यम्) आमन्तेभ्योर्थवद्ग्रहणाण्णलः । अप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ लुक् कस्मान्न भवति—शशाम ततामेति ? । अर्थवद्ग्रहणात् । अर्थवत आम्शब्दस्य ग्रहणम् । न चैषोर्थवान् ॥

(प्रदीपः) अर्थवत इति । आम् प्रत्ययोऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यर्थवान् ॥

(उद्द्योतः) नन्वर्थवानामसंभवीत्यत आह—आम्प्रत्यय इति ॥

(१६५२ समाधानबाधकवार्तिकम् ॥ ४ ॥)

॥ * ॥ आमन्तेभ्योर्थवद्ग्रहणाण्णलोप्रतिषेध इति चेदमः प्रतिषेधः ॥ * ॥

(भाष्यम्) आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेध इति चेत् अमधातोः प्रतिषेधो वक्तव्यः । आम ॥

(प्रदीपः) आम इति । अमगत्यादिष्वित्यस्य णलि वृद्धौ द्विर्वचन एकादेशे च यद्रूपमामिति तस्यार्थवत्त्वाण्णलो लुक्प्रसङ्गः ॥

(समाधानसाधकभाष्यम्)

उक्तं वा ॥ किमुक्तम् ? । "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति ॥

(उद्द्योतः) भाष्ये—सन्निपातेति । लक्षणप्रतिपदोक्तपरिभाषया प्रत्ययाप्रत्यययोरिति परिभाषया च सुसाध्यमेतत् ॥

(लुकआदेशापवादत्वाधिकरणम्)

(आक्षेपभाष्यम्)

किं पुनर्लुगादेशापवादः, आहोस्वित्-कृतेष्वादेशेषु भवति ॥

(प्रदीपः) किं पुनरिति । यदा 'विशेषविधिः सामान्यविधिबाधक' इति न्याय आश्रीयते तदा लकारान्तरेषु सावकाशास्तिवादयो विशेषविहितेन लुका बाध्यन्त इत्यादेशापवादो लुक् संपद्यते । अथ त्वविरोधादस्ति च संभवो यदुभयं स्यादित्याश्रीयते तदा कृतेष्वादेशेषु लुका भाव्यमिति संदेहात् प्रश्नः ॥

(उद्द्योतः) तदा कृतेष्विति । विरोधाभावादेवान्तरङ्गत्वात्पूर्वं लुगित्यपि न वाच्यमिति भावः । विहितानां नियम इतिपक्षाश्रयणाद्द्वयोस्तुल्यत्वम् ॥

(१६५३ समाधानवार्तिकम् ॥ ५ ॥)

॥ * ॥ लुगादेशापवादः ॥ * ॥

(भाष्यम्) लुग् आदेशानामपवादः ॥

(प्रदीपः) लुगिति । सत्यपि संभवे बाधनं तक्रदानेनेव दधिदानस्येति भावः ॥

(उद्द्योतः) सत्यपीति । न चानुत्पत्तिकाले परत्वात्ततः प्रागेव वादेशाः किं न भवन्तीति वाच्यम् । अपवादविषये उत्सर्गाप्रवृत्तेः । प्रकल्प्य चापवादविषयमिति न्यायात् ॥

(१६५४ समाधानबाधकवार्तिकम् ॥ ६ ॥)

॥ * ॥ तिङ्कृताभावस्तु ॥ * ॥

(भाष्यम्) तिङ्कृतस्य तु अभावः ॥ कस्य ? । पदत्वस्य ॥

(प्रदीपः) कस्येति । निघातादेस्तिङ्कार्यस्यानिष्टत्वात् प्रश्नः ॥

(१६५५ समाधानसाधकवार्तिकम् ॥ ७ ॥)

॥ * ॥ सुबन्तत्वात्सिद्धम् ॥ * ॥

(भाष्यम्) 'सुबन्तं पदम्' इति पदसंज्ञा भविष्यति ॥

(आक्षेपभाष्यम्)

कथं स्वाद्युत्पत्तिः ? ॥

(प्रदीपः) कथमिति । आमः प्रत्ययत्वाद् 'अप्रत्यय' इति प्रातिपदिकसंज्ञानिषेधात् प्रश्नः ॥

(१६५६ समाधानवार्तिकम् ॥ ८ ॥)

॥ * ॥ लकारस्य कृत्त्वात् प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् ॥ * ॥

(भाष्यम्) लकारः कृत्, 'कृत्प्रातिपदिकम्' इति प्रातिपदिकसंज्ञा, तदाश्रयं प्रत्ययविधानम्, प्रातिपदिकाश्रयत्वात्स्वाद्युत्पत्तिर्भविष्यति ॥

(प्रदीपः) लकारस्येति । अतिङिति कृत्संज्ञाप्रतिषेधस्तिङ्भाविनो लकारस्य । अयं तु तिङ्भावी न भवतीति भावः ॥

१ 'ण व्याख्यास्येत' । २ 'फलमदर्शनम् अनुत्पत्तिरेव 'इष्यत एव' इति भाष्याक्षरार्थः' इति पाठो भवेत् । ३ लुगादेशयोस्तुल्यकालत्वमित्यर्थः । अत्र पक्षे हि लुङ् नियमयोरतुल्यकालत्वेऽपि लुगादेशयोस्तुल्यकालत्वमेवेति भावः । (र. ना.) ४ 'भवति' ।

( उद्द्योतः ) ननु अतिङित्यनेन तिङ्स्थानित्वयोग्यस्य लस्य कृत्संज्ञा प्रतिषिध्यत इति कथं लिटः कृत्त्वमत आह—तिङ्भाविन इति ॥

( समाधानबाधकभाष्यम् )

[ यद्येवं ] सुपः श्रवणं प्राप्नोति ॥

( प्रदीपः ) सुपः श्रवणमिति । यद्यप्येकवचनस्य हल्ङ्याब्भ्यो लोपोऽस्ति तथापि द्विवचनबहुवचनश्रवणप्रसङ्गः ॥

( उद्द्योतः ) [ द्विवचनेति । तदुत्पत्तिप्रकारश्च उत्तरसूत्रे भाष्ये—स्पष्टः ॥ ]

( समाधानसाधकभाष्यम् )

अव्ययादिति लुग् भविष्यति ॥

( उद्द्योतः ) यद्यप्याम इत्यनेन सुपोऽपि लुक् सिध्यति लेरिति निवृत्तेस्तथापि तदनुवृत्तिमतेऽपि लुकं साधयितुमाह—भाष्ये—अव्ययादिति लुगिति ॥

( आक्षेपभाष्यम् )

कथमव्ययत्वम् ? ॥

( १६५७ समाधानवार्तिकम् ॥ ९ ॥ )

॥ * ॥ अव्ययत्वं मकारान्तत्वात् ॥ * ॥

( भाष्यम् ) कृदन्तं मान्तमव्ययसंज्ञं भवतीति अव्ययसंज्ञा भविष्यति ॥

( प्रदीपः ) कृदन्तमिति । कृन्मेजन्त इत्यत्र कृदन्तस्य विशेषणं मेजन्तग्रहणम्, न तु कृतः । स्वरादिषु यदामिति पठ्यते तेन तद्धितप्रकरणात्तद्धितसाहचर्याद्वा तद्धित एव गृह्यते ॥

( उद्द्योतः ) ननु कृत इति । तद्विशेषणत्वे हि कृतो मान्तत्वाभावान्न सिध्यतीत्यर्थः ॥ कृद्विशेषणत्वपक्षे तु लेरिति निवर्त्य आम इत्यनेनैवेति बोध्यम् । तद्धितप्रकरणादिति । तद्धितश्चासर्वविभक्तिरिति पठित्वा हि तत्र ते पठित अतस्तेषु तद्धितपदमनुवर्तत इति भावः ॥ अननुवृत्तावपि न दोष इत्याह—तद्धितसाहचर्याद्वेति ॥

( आक्षेपभाष्यम् )

स्वरः कथम्—यत्प्रकारयांचकार ? ॥

( प्रदीपः ) यत्प्रकारयांचकारेति । अत्र प्रशब्दस्यानुदात्तत्वमिष्यते, तच्च तिवादिलुकि सति गतिर्गतौ तिङि चोदात्तवतीति सिध्यति नान्यथेति, भावः ॥

( १६५८ समाधानवार्तिकम् ॥ १० ॥ )

॥ * ॥ स्वरः कृदन्तप्रकृतिस्वरत्वात् ॥ * ॥

( भाष्यम् ) कृदन्तमुत्तरपदं प्रकृतिस्वरं भवतीत्येष स्वरो भविष्यति ॥

( प्रदीपः ) कृदन्तप्रकृतिस्वरत्वादिति । प्रशब्दस्य कारयामित्यनेन समासे कृते समासस्वराव्ययपूर्वपदप्रकृतिस्वरयोः प्राप्तयोः कृत्स्वरः, ततः शेषनिघातेन गतेरनुदात्तत्वं सिध्यतीत्यर्थः ॥

( उद्द्योतः ) समासे कृते इति । गतिसमास इत्यर्थः । स च नित्य इति समासाभावे स्वरो न सिध्येदिति न वाच्यम् । उपसर्गाणां क्रियामात्रेण सामर्थ्याद् अनभिव्यक्तपदार्थकेन कारयामित्यनेन नास्य सामर्थ्यमिति न शङ्कनीयम् ॥ तिङ्कृतपदत्वे त्वत्र समासो न स्यादित्यनिष्टम् ॥

( १६५९ फलान्तरवार्तिकम् ॥ ११ ॥ )

॥ * ॥ तथा च निघातानिघातसिद्धिः ॥ * ॥

( भाष्यम् ) तथा च निघातानिघातसिद्धिर्भवति । चक्षुष्कामं याजयांचकार "तिङ्ङतिङ" इति तस्य चानिघातः । तस्माच्च निघातः सिद्धो भवति ॥

( प्रदीपः ) तस्य चेति । आमन्तस्य । तिङन्तत्वाभावान्निघातो न प्रवर्तते । तस्मात्परं तिङन्तं तु चकारादि निहन्यते ॥

( उद्द्योतः ) तथाचेत्यनेन सूचितं हेतुं दर्शयति—आमन्तस्येति ॥

( १६६० आक्षेपवार्तिकम् ॥ १२ ॥ )

॥ * ॥ नञा तु समासप्रसङ्गः ॥ * ॥

( भाष्यम् ) नञा तु समासः प्राप्नोति—नकारयाम् नहारयाम् । 'नञ् सुबन्तेन सह समस्यत' इति समासः प्राप्नोति ॥

( प्रदीपः ) न कारयामिति । ततश्च नलोपादिप्रसङ्गः॥

( उद्द्योतः ) नलोपादीति । आदिना पूर्वपदप्रकृतिस्वरत्वम् ॥

( समाधानभाष्यम् )

उक्तं वा *॥ किमुक्तम् ? । असामर्थ्यादिति । नात्र नञ आमन्तेन सामर्थ्यम् ॥ केन तर्हि ? । लिडन्तेन, न चकार कारयाम् न जहार हारयामिति ॥ आमः ॥ ८१ ॥

( प्रदीपः ) न चकारेति । नञो लिडन्तेन सामर्थ्यं प्रदर्शयति । न त्वयं लौकिकः प्रयोगो, व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वादनुप्रयोगारम्भस्य । अभिव्यक्तपदार्थेन नञः सामर्थ्यं न त्वनभिव्यक्तार्थेनेत्यर्थः ॥ ८१ ॥

( उद्द्योतः ) भाष्ये—न चकारहारयामिति । क्वचित्तु न जहारहारयामिति पाठः । तत्र चकारेत्येतदर्थतो निबद्धं जहारेति । तत्र सामान्यविशेषयोरभेदान्वयादित्याहुः ॥ ८१ ॥



१ असदुपलब्धपुस्तकेषु नोपलब्धः । २ अयं कोष्ठकान्तर्गत उद्द्योतपाठो यद्यपि सर्वेषु पुस्तकेषु 'अव्ययादिति लुगिति' इत्यतः परः प्रदश्यते तथापि योग्यस्थानेऽस्माभिः कृतः इति क्षन्तव्यं क्षमाशीलैः । ३ कृत्संज्ञकस्य लकारस्येत्यर्थः । ( र. ना. ) ४ कारयामित्येतदन्तोदात्तमिति भावः । ( र. ना. ) ५ तिङन्तत्वहेतुको निघात इत्यर्थः । ( र. ना. ) ६ चकाराकारादीत्यर्थः । ( र. ना. )

( ३७६ लुक्सूत्रम् ॥ २ । ४ । २ आ. ११ )

## ६१३ अव्ययादाप्सुपः ॥ २ । ४ । ८२ ॥

( आपग्रहणस्याइष्टार्थत्वाधिकरणम् )

( १६६१ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात् ॥ * ॥

( भाष्यम् ) अव्ययादापः लुग्वचनमनर्थकम् ॥ किं कारणम् ? । लिङ्गाभावात् । अलिङ्गमव्ययम् ॥

( प्रदीपः ) अव्यया ॥ ८२ ॥ लिङ्गाभावादिति । न च स्त्रीसमानाधिकरणपक्षः स्त्रियामित्यत्राश्रितः, भूतमियं ब्राह्मणी इत्यादौ भूतादिभ्यः प्रत्ययप्रसङ्गादिति भावः ॥

( उद्योतः ) अव्ययादा ॥ ८२ ॥ ननु मा भूल्लिङ्गं तत्र शालायामित्यादौ स्त्रीसामानाधिकरण्यादेव टाप्, तस्य चानेन लुगत आह—न चेति ॥ भूतमिति । सामान्ये नपुंसकम् ॥ ननूचैस्तराम्यां ब्राह्मणीभ्यां कृतमित्यादावव्ययात्परापः संभव इति चेन्न । अव्ययादिति विहितविशेषणात् । यद्वा आप्सुब्भ्यामाक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणान्न दोषः ॥ एवञ्च कृन्मेजन्तसूत्रस्थभाष्यमपि स्वरसतः सङ्गच्छते इति दिक् ॥

( आक्षेपभाष्यम् )

किमिदं भवान् सुपो लुकं मृष्यति, आपो लुकं न मृष्यति । यथैव ह्यलिङ्गमव्ययम्, एवमसंख्यमपि ? ॥

( प्रदीपः ) किमिदमिति । संख्याया अप्यभावात् सुपापि नोत्पत्तव्यमिति भावः ॥

( समाधानभाष्यम् )

सत्यमेवमेतत् । प्रत्ययलक्षणमाचार्यः प्रार्थयमानः सुपो लुकं मृष्यति । आपः पुनरस्य लुकि सति न किंचिदपि प्रयोजनमस्ति ॥

( प्रदीपः ) प्रत्ययलक्षणमिति । स्वाभाविक्येव सुपोऽनुपलब्धिर्लुग्द्वारेण पदत्वनिबन्धनरुत्वादिकार्यसिद्धयेऽन्वाख्यायत इत्यर्थः ॥

( उद्योतः ) ननु सुपोऽनुत्पत्तौ कथं लुक्, कथं वा प्रत्ययलक्षणमत आह—स्वाभाविक्येवेति । अव्ययात्परसुबदर्शनमेव लुक्संज्ञमिति भावः ॥

( आक्षेपभाष्यम् )

उच्यमानेऽप्येतस्मिन् स्वाद्युत्पत्तिर्न प्राप्नोति ॥ किं कारणम् ? । एकत्वादीनामभावात् । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । न चैषामेकत्वादयः सन्ति ॥

( प्रदीपः ) उच्यमानेऽपीति । प्रसक्तादर्शनस्य लोपादिसंज्ञाविधानात् अनुत्पन्नस्य सुपो लुगसंभवादिति भावः ॥

एकत्वादिष्विति । वाक्यैकवाक्यतया विशिष्ट एवार्थे स्वादिविधानादिति भावः ॥

( उद्योतः ) ननु पूर्वोक्तरीत्या सिद्धौ किं सुबुत्पत्त्येत्याशङ्क्याह—प्रसक्तेति ॥ स्वादिवाक्ये एकत्वादीनामनुपादानादाह—वाक्यैकेति ॥

( समाधानभाष्यम् )

अविशेषेणोत्पद्यन्ते । उत्पन्नानां नियमः क्रियते ॥ अथ वा प्रकृतानर्थानपेक्ष्य नियमः क्रियते ॥ के च प्रकृताः ? । एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति ॥

अथ वा आचार्यप्रवृत्तिर्ज्ञापयति—उत्पद्यन्तेऽव्ययेभ्यः स्वादय इति । यदयम् "अव्ययादाप्सुपः" इति लुकं शास्ति ॥ अव्ययादा ॥ ८२ ॥

( प्रदीपः ) अविशेषेणेति । वाक्यान्तरनिरपेक्षत्वात्स्वादिविधिवाक्यस्येति भावः ॥ यदयमिति । एकवाक्यतापक्षेऽपि ज्ञापकात्सुबुत्पत्तिरित्यर्थः ॥ ८२ ॥

( उद्योतः ) वाक्यान्तरनिरपेक्षत्वादिति ॥ उत्पन्नानां नियम इति भाष्यस्यार्थनियमे एवेत्याशयः ॥ एकवाक्यतापक्षेऽपीति । सामान्यापेक्षप्रत्ययनियमेऽपीत्यपि बोध्यम् । अत्र पक्षत्रयेऽपि सप्तानामपि विभक्तीनामुत्पत्तिरिति बोध्यम् ॥ ८२ ॥

( ३७७ लुक्प्रतिषेधाम्विधिसूत्रम् ॥ २ । ४ । २ आ. १२ )

## ६१४ नाव्ययीभावादतोम् त्वपञ्चम्याः ॥ २ । ४ । ८३ ॥

( योगविभागार्थसाधनाधिकरणम् )

( १६६२ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नाव्ययीभावादत इति योगव्यवसानम् ॥ * ॥

( भाष्यम् ) "नाव्ययीभावादतः" इति योगो व्यवसेयः । नाव्ययीभावादकारान्तात्सुपो लुग् भवति । ततः—"अम् त्वपञ्चम्याः" इति ॥

( प्रदीपः ) नाव्ययी ॥ ८३ ॥ योगव्यवसानमिति । योगविभाग इत्यर्थः ॥

( आक्षेपभाष्यम् )

किमर्थो योगविभागः ? ॥

( १६६३ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पञ्चम्या अम्प्रतिषेधार्थः ॥ * ॥

( भाष्यम् ) पञ्चम्या अमः प्रतिषेधो यथा स्यात् ॥

१ पराप इति । परस्याप इत्यर्थः । २ कारणमिति शेषः । ( र. ना. ) ३ द्वयेकयोरित्यादिनेति शेषः । ( र. ना. ) ४ तथा चैकस्मिन्नित्यादेर्द्वित्वादिव्यवच्छेदे एव तात्पर्यं न तु एकत्वादि संख्याया असत्त्वेन स्वाद्युत्पत्तिरित्यत्रेति भावः । ( र. ना. ) ५ एकस्मिन्नेकवचनमेवेत्यादिरूप इति भावः । ( र. ना. )

( १६६४ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ एकयोगे ह्युभयोः प्रतिषेधः ॥ * ॥

( भाष्यम् ) एकयोगे ह्युभयोः प्रतिषेधः स्यात् । अमः अलुकश्च ॥

( आक्षेपभाष्यम् )

स तर्हि योगविभागः कर्तव्यः ? ॥

( समाधानभाष्यम् )

न कर्तव्यः ॥

( १६६५ वार्तिकम् ॥ ४ ॥ )

॥ * ॥ तुर्नियामकः ॥ * ॥

( भाष्यम् ) तुः क्रियते । स नियामको भविष्यति—अमेवापञ्चम्या इति ॥

( प्रदीपः ) तुर्नियामक इति । अवधारणे तुर्वर्तते । तेन—अमेवापञ्चम्याः, अलुक् तु पञ्चम्या अपीत्यर्थः संपद्यते ॥

( अपादानपञ्चमीनिर्णयाधिकरणम् )

( १६६६ शेषपूरकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अमि पञ्चमीप्रतिषेधेऽपादानग्रहणम् ॥ * ॥

( भाष्यम् ) अमि पञ्चमीप्रतिषेधे अपादानग्रहणं कर्तव्यम् । अपादानपञ्चम्या इति वक्तव्यम् । किं प्रयोजनम् ? ॥

( १६६७ शेषपूर्तिप्रयोजनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ कर्मप्रवचनीययुक्तेऽप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) कर्मप्रवचनीययुक्ते मा भूद्—आपाटलिपुत्रं वृष्टो देवः ॥

( प्रदीपः ) आपाटलिपुत्रमिति । आङ्योगेऽत्र पञ्चमी, न त्वपादान इत्यम्भावो भवतीत्यर्थः ॥

( १६६८ शेषपूर्तिवैयर्थ्यवार्तिकम् ॥ ७ ॥ )

॥ * ॥ न वोत्तरपदस्य कर्मप्रवचनीययोगात् समासात् पञ्चम्यभावः ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् ॥ किं कारणम् ? । उत्तरपदमत्र कर्मप्रवचनीययुक्तम् । उत्तरपदस्य कर्मप्रवचनीययोगात्समासात्पञ्चमी न भविष्यति । यदा च समासः कर्मप्रवचनीययुक्तः, भवति तदा प्रतिषेधः । तद्यथा—आ उपकुम्भात् । आ उपमणिकात् इति ॥ नाव्ययीभावा ॥ ८३ ॥

( प्रदीपः ) न वेति । अव्ययीभावाद्विहितायाः पञ्चम्या अमादेशप्रतिषेधः । अत्र तूत्तरपदाद्विहिता पञ्चमी तस्याश्च समासप्रातिपदिकत्वाल्लुकि कृते समासात् सुशब्द उत्पद्यते तस्याम्भावः ॥ भवति तदेति । श्रूयतएवेत्यर्थः ॥ आ उपकुम्भादिति । कुम्भस्य समीपमित्यव्ययीभावः । तत आङ्योगे पञ्चमी ॥ ८३ ॥

---

( ३७८ अम्विकल्पसूत्रम् ॥ २ । ४ । २ आ. १३ )

## ६१५ तृतीयासप्तम्योर्बहुलम् ॥२।४।८४॥

( १६६९ वार्तिकम् ॥ १ ॥ )

॥ * ॥ सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम् ॥ * ॥

( भाष्यम् ) सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यमिति वक्तव्यम् । सुमद्रं सुमगधम् । ऋद्धि ॥ नदीसमास—उन्मत्तगङ्गं लोहितगङ्गम् ॥ संख्यावयव—एकविंशतिभारद्वाजं त्रिपञ्चाशद्गौतमम् ॥ तृतीयासप्त ॥ ८४ ॥

( प्रदीपः ) तृतीया ॥ ८४ ॥ सुमद्रमिति । मद्राणां समृद्धिरित्यव्ययीभावः ॥ एकविंशतिभारद्वाजमिति । एकविंशतिर्भरद्वाजा वंश्यास्त्रिपञ्चाशद्गौतमा वंश्या इति संख्या वंश्येनेति समासः । तत्र वर्तिपदानां स्वार्थोपसर्जनार्थान्तराभिधायित्वाद्गौतमभारद्वाजशब्दयोरेकत्वविशिष्टेऽर्थान्तरे संक्रमाल्लुग्भावः । ततः सप्तमी । नित्योम्भावः । बहुलग्रहणलब्धश्चायमर्थो दर्शितः ॥ ८४ ॥

( उद्द्योतः ) तृतीयास ॥ ८४ ॥ तत्र वर्तिपदानामिति । एकविंशतिर्भरद्वाजा इत्यनयोः स्वार्थोपसर्जनवंश्या इत्यर्थाभिधायित्वादित्यर्थः । एवं हि अङ्गानतिक्रान्तोऽत्यङ्ग इति न सिध्येत् । तस्माद्भाष्यकारप्रयोगादत्र लुगभाव इति हरदत्तः ॥ युक्ततरं चैतत् । अन्यथा विदानामपत्यं बैद इत्यादि सिद्ध्यर्थं तद्राजसूत्रे उक्तवार्तिकभाष्यासङ्गत्यापत्तिः । एतद्भाष्यप्रामाण्यादिमौ उपकादिषु बोध्याविति बोध्यम् ॥ ८४ ॥

---

( ३७९ आदेशसूत्रम् ॥ २ । ४ । २ आ. १४ सू. )

## ६१६ लुटः प्रथमस्य डारौरसः ॥ २ । ४ । ८५ ॥

( डारौरसां टेरेत्वनिवारणाधिकरणम् )

( १६७० पूर्वविप्रतिषेधवार्तिकम् ॥ १ ॥ )

॥ * ॥ टितां टेरेविधेर्लुटो डारौरसः पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) टितां टेरेविधेर्लुटो डारौरसो भवन्ति पूर्वविप्रतिषेधेन । टेरेत्वस्यावकाशः—पचेते पचते पचन्ते । डारौरसामवकाशः—श्वः कर्ता श्वः कर्तारौ श्वः कर्तारः । इहोभयं प्राप्नोति—श्वः अध्येता श्वः अध्येतारौ श्वः अध्येतार इति । डारौरसो भवन्ति पूर्वविप्रतिषेधेन ॥

---

१ अपञ्चम्या इति प्रतिषेध इत्यर्थः । ( र. ना. ) २ कृभ्वस्तयः क्रियासामान्यवचना इति स्वीकाराद् भवतेः श्रवणार्थत्वम् । ( र. ना. )

३ भारद्वाजशब्देऽङो लुगभाव इत्यर्थः । ( र. ना. )

( प्रदीपः ) लुटः ॥ ८५ ॥ श्वः कर्तेति । तिप्तस्झी-नामत्र डारौरसः कृताः ॥

( उद्योतः ) लुटः प्रथम० ॥ ८५ ॥ प्रथमतः परत्वादेत्वे सकृद्गतिन्यायेन डारौरसो न प्राप्नुवन्तीत्याशयेन वार्तिकम्—भाष्ये—टितामिति । डादयस्तु परस्मैपदे चरितार्था इति भावः । पूर्वविप्रतिषेधेन डादौ सकृद्गतिन्यायाश्रयणादेत्वाभावः इति तात्पर्यम् । तद्ध्वनयन्नाह—तिप्तस्झीनामिति ॥

( आक्षेपभाष्यम् )

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ॥

( समाधानभाष्यम् )

न वक्तव्यः ॥

( १६७१ वार्तिकम् ॥ २ ॥ )

**॥ * ॥ आत्मनेपदानां चेति वचनात्सिद्धम् ॥ * ॥**

( भाष्यम् ) आत्मनेपदानां च डारौरसो भवन्तीति वक्तव्यम् ॥

( १६७२ वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ तच समसंख्यार्थम् ॥ * ॥**

( भाष्यम् ) तच्चावश्यमात्मनेपदग्रहणं कर्तव्यं समसंख्यार्थं संख्यातानुदेशो यथा स्यात् । अक्रियमाणे ह्यात्मनेपदग्रहणे षट् स्थानिनस्त्रय आदेशाः वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥

( प्रदीपः ) आत्मनेपदानामिति । लुट आत्मनेपदानां च प्रथमसंज्ञकानां डारौरसो भवन्तीति वक्तव्यम् । ततश्च विशेषविहितत्वादादेशैष्टेरेत्वं बाध्यते ॥

( उद्योतः ) आत्मनेपदानां चेति । चेन परस्मैपदम् ॥

( प्रथमवार्तिकप्रत्याख्यानभाष्यम् )

पूर्वविप्रतिषेधार्थेन तावन्नार्थ आत्मनेपदग्रहणेन । इदमिह संप्रधार्यम्—डारौरसः क्रियन्ताम्, एत्वम्, इति । किमत्र कर्तव्यम् ? । परत्वादेत्वम् ॥ नित्या डारौरसः, कृतेप्येत्वे प्राप्नुवन्ति, अकृतेपि प्राप्नुवन्ति ॥ टेरेत्वमपि नित्यम्=कृतेष्वपि डारौरस्सु प्राप्नोति, अकृतेष्वपि प्राप्नोति ॥ अनित्यमेत्वम्=अन्यस्य कृतेषु डारौरस्सु प्राप्नोति, अन्यस्याकृतेषु । शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ डारौरसोप्यनित्याः अन्यस्य कृते एत्वे प्राप्नुवन्ति, अन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन्तोऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादेत्वम् । एत्वे कृते पुनः प्रसङ्गविज्ञानाद् डारौरसो भविष्यन्ति ॥

( प्रदीपः ) पूर्वविप्रतिषेधार्थेनेति । पूर्वविप्रतिषेधस्य यत्प्रयोजनं तत्प्रयोजनेनेत्यर्थः ॥

( उद्योतः ) भाष्ये—पुनः प्रसङ्गेति । पुनरेत्वं तु न, लक्ष्ये लक्षणस्येति न्यायादिति भावः ॥

( द्वितीयवार्तिकप्रत्याख्यानभाष्यम् )

समसंख्यार्थेन चापि नार्थ आत्मनेपदग्रहणेन । स्थानेन्तरतमेन व्यवस्था भविष्यति ॥ कुत आन्तर्यम् ? । अर्थतः । एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थः ॥

अथ वा आदेशा अपि षडेव निर्दिश्यन्ते । कथम् ? । एकशेषनिर्देशोयम् ॥

( आक्षेपभाष्यम् )

अथैतस्मिन्नेकशेषे सति किमयं कृतैकशेषाणां द्वन्द्वः—डा च डा च डा । रौ च रौ च रौ । रश्च रश्च रः । डा च रौ च रश्च डारौरस इति ॥ आहोस्वित्कृतद्वन्द्वानामेकशेषः—डा च रौ च रश्च डारौरसः । डारौरसश्च डारौरसश्च डारौरस इति ॥

( भाष्यम् ) किं चातः ॥

( प्रथमपक्षदूषणभाष्यम् )

यदि कृतैकशेषाणां द्वन्द्वः अनिष्टः समसंख्यः प्राप्नोति । एकवचनद्विवचनयोर्डा प्राप्नोति बहुवचनैकवचनयो रौ प्राप्नोति द्विवचनबहुवचनयो रस् प्राप्नोति ॥

अथ कृतद्वन्द्वानामेकशेषः । न दोषो भवति ॥

( सिद्धान्तलक्षणम् )

यथा न दोषस्तथास्तु ॥

( आक्षेपभाष्यम् )

किं पुनरत्र ज्यायः ? ॥

( प्रदीपः ) किं पुनरिति । कस्य पक्षस्य न्याय्यतरत्वात्प्रशस्यतरत्वमिति सामान्येन प्रश्नः । इह तु कृतैकशेषाणां द्वन्द्वो दुष्टत्वान्नैव प्रशस्यत इति न तदपेक्षः प्रश्नः ॥

( उद्योतः ) कृतैकशेषद्वन्द्वपक्षस्य दुष्टत्वात्प्रश्नानुपपत्तिरत आह—सामान्येन प्रश्न इति ॥ अत्रेति भाष्यस्यैवंविधे विषय इत्यर्थः ॥ उदाहरणान्तरविषयः प्रश्न इति भावः ॥

( समाधानभाष्यम् )

उभयं हि दृश्यते बहु शक्तिकीटकं[1] बहूनि शक्तिकिटकानि । बहु स्थालीपिठरं बहूनि स्थालीपिठराणि ॥

( उद्योतः ) बहुशक्तिकीटकमिति । जातिरप्राणिनामित्येकवत्त्वम् । बहुशब्दोपात्तबहुत्वान्वयानुपपत्त्या कृतैकशेषाणामत्र द्वन्द्वः ॥ बहूनिशक्तिकिटकानीत्यत्र बहुवचनान्यथानुपपत्त्या कृतद्वन्द्वानामेकशेष इति बोध्यम् । तस्मादुभयमपि न्याय्यम् ॥ प्रकृते तु कृतद्वन्द्वानामेकशेषो न्याय्य इति बोध्यम् ॥

१ कीटकः कृमिः । कीटकं कृमिजातौ ना निष्ठुरे पुनरन्यवदिति मेदिनी । ( र.ना. )

( श्लोकार्थोपसंहारभाष्यम् )

डारौरसः कृते टेरे यथा द्वित्वं प्रसारणे ॥
समसंख्येन नार्थोस्ति सिद्धं स्थानेर्थतोन्तरः ॥
आन्तर्यतो व्यवस्था त्रय एवेमे भवन्तु सर्वेषाम् ॥
टेरेत्वं च परत्वात्कृतेपि तस्मिन्निमे सन्तु ॥

( प्रदीपः ) डारौरसः कृते टेर इति । परत्वाट्टेरेत्वे कृते पुनः प्रसङ्गविज्ञानाड्डारौरसो भवन्ति । यथैजतुरीजुरिति कृते संप्रसारणे द्विर्वचनम् ॥ एष एवार्थ आर्यया दर्शितः—आन्तर्यत इति । य एवामी त्रयः श्रूयन्ते त एव सर्वेषां सन्तु ॥

( डादेशे सर्वादेशत्वाधिकरणम् )

( १६७३ वार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ डाविकारस्य शित्करणं सर्वादेशार्थम् ॥ * ॥

( भाष्यम् ) डाविकारः शित्कर्तव्यः । किं प्रयोजनम् ? । सर्वादेशार्थम् "शित्सर्वस्य" इति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारे 'अलोन्त्यस्य विधयो भवन्ति' इत्यन्त्यस्य प्रसज्येत ॥

( प्रदीपः ) डाविकार इति । डादेश इत्यर्थः । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादिति डाश्वक्तव्यः ॥

( उद्द्योतः ) डाया विकारे इत्यर्थेऽनुपपत्तिरत आह—डादेश इति ॥ कर्मधारय इति भावः ॥ नानुबन्धकृतमिति । अनुबन्धत्वयोग्यकृतमित्यर्थः । ध्वनितं चेदमनेकाल्शिदिति सूत्रे भाष्ये ॥

( १६७४ वार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ निघातप्रसङ्गस्तु ॥ * ॥

( भाष्यम् ) निघातस्तु प्राप्नोति । श्वः कर्ता । तासेः परं लसार्वधातुकमनुदात्तं भवतीत्येष स्वरः प्राप्नोति ॥

( प्रदीपः ) श्वः कर्तेति । तिपो डादेशस्तस्य तास्यनुदात्तेन्ङिदित्यनुदात्तत्वं प्राप्नोति । यत्तु तिङ्ङतिङ इति निघातः स नलुङिति प्रतिषिद्धः ॥

( उद्द्योतः ) भाष्ये—निघातप्रसङ्गस्त्विति । शित्वेऽशित्वे च सर्वथाऽयं दोष इति सूचयितुं तुशब्दः ॥ ननु श्वःपदयोगे तिङन्तनिघात एव भविष्यतीति किमनेन लसार्वधातुकानुदात्तत्वविचारेणेत्यत आह—यस्त्विति ॥

( प्रथमवार्तिकप्रत्याख्यानभाष्यम् )

यत्तावदुच्यते—*डाविकारस्य शित्करणं सर्वादेशार्थम्* इति ॥

( १६७५ शित्करणप्रत्याख्यानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ सिद्धमलोन्त्यविकारात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । अलोन्त्यविकारात् ॥

( आक्षेपभाष्यम् )

अस्त्वयमलोन्त्यस्य । का रूपसिद्धिः—कर्ता ? ॥

( १६७६ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ डिति टेर्लोपाल्लोपः ॥ * ॥

( भाष्यम् ) डिति टेर्लोपेन लोपो भविष्यति ॥

( प्रदीपः ) डितीति । आकारे डिति परतः सतकारस्य टिसंज्ञकस्य लोपः ॥

( बाधकभाष्यम् )

अभत्वान्न प्राप्नोति ॥

( समाधानसाधकभाष्यम् )

डित्करणसामर्थ्याद्भविष्यति ॥

( प्रदीपः ) डित्करणसामर्थ्यादिति । तत एवानङ्गस्यापीति बोद्धव्यम्, नह्यन्त्यस्य डादेशे कृते सतकारमङ्गम्, प्रत्यये परतोङ्गसंज्ञाविधानात् ॥

( १६७७ शित्करणप्रत्याख्यानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ अनित्त्वाद्वा ॥ * ॥

( भाष्यम् ) अथ वा अनित्त्वादेतत्सिद्धम् ॥ किमिदमनित्त्वादिति ? । अन्त्यस्यायं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपेनेकाल् । यदानेकाल् तदा सर्वादेशः । यदा सर्वादेशः तदा प्रत्ययः । यदा प्रत्ययस्तदेत्संज्ञा । यदेत्संज्ञा तदा लोपः ॥

( प्रदीपः ) अनित्त्वादिति । अनित्संज्ञकत्वादित्यर्थः । अन्त्यस्येति । प्रत्ययस्य ह्यवयवः स्यात्, न तु प्रत्ययः, तकारादेः समुदायस्य प्रत्ययत्वात् ॥

( उद्द्योतः ) भाष्ये—अनित्त्वाद्वेति । इयमेकदेश्युक्तिः ॥ अनुबन्धत्वयोग्यत्वेन तत्कृतानेकाल्त्वाभावात् ॥ चुट्ट इत्यादौ प्रत्ययशब्दः उपदिश्यमानप्रत्ययावयवपरोऽपीति अन्त्यादेशेऽपि डस्येत्त्वसिद्धिः ॥

( १६७८ शित्करणप्रत्याख्यानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ प्रश्लिष्टनिर्देशाद्वा ॥ * ॥

( भाष्यम् ) अथ वा प्रश्लिष्टनिर्देशोयम्—डा आ डा । सः "अनेकाल्शित्सर्वस्य" इति सर्वादेशो भविष्यति ॥

१ तसिन्, टेरेत्वे इत्यर्थः । इमे, डारौरसः । ( र. ना. )

२ तिपं इकारस्य डादेशे तकारश्रवणापत्तिरिति भावः ।

३ अचोन्त्यादि समुदायपदेन 'आस्तत्' इति समुदायस्य ग्रहणेन सतकारस्यैव टिसंज्ञकत्वादिति भावः ।

(प्रदीपः) प्रश्लिष्टनिर्देशादिति। तत्रानेन कृतैकादेशेन समुदायः प्रत्याख्यते। सोनेकाल्त्वात् सर्वादेशः प्रवर्तते। सर्वादेशे च तस्मिन् कृते एकादेशः क्रियते॥

(उद्योतः) सर्वादेशे च तस्मिन् कृते एकादेश इति। कृतैकादेशनिर्देशसामर्थ्याद् आदेशकाले एकादेशस्य नैव प्रवृत्तिरित्यर्थः॥

(प्रत्याख्याननिराकरणभाष्यम्)

यदा तर्ह्ययमन्त्यस्य स्थाने भवति तदा तिङ्ग्रहणेन ग्रहणं न प्राप्नोति॥

(प्रदीपः) सिद्धमलोन्त्यविकारादिति यदुक्तं तत्र दोषमुद्भावयति—यदा तर्हीति। अक्तपरिमाणस्य तिङ्संज्ञासंबन्धात्तिशब्दस्यान्त्यादेशे कृते रूपान्तरयोगात्तिङ्ग्रहणेनाग्रहणात्पदत्वं न स्यादित्यर्थः॥

(उद्योतः) ननु तिङवयवमादायैव सा किं न स्यादत आह—अक्तपरिमाणस्येति॥

(१६७९ प्रत्याख्यानसाधकवार्तिकम्॥ १०॥)

॥ * ॥ तिङ्ग्रहणमेकदेशविकृतस्यानन्यत्वात्॥ * ॥

(भाष्यम्) 'एकदेशविकृतमनन्यवद्भवति' इति तिङ्ग्रहणेन ग्रहणं भविष्यति॥

(प्रदीपः) एकदेशविकृतमिति। पचतु पचन्तित्यादौ यथा॥

(उद्योतः) भाष्ये—अनन्यवदिति। अर्धाधिकविकाराद्यायेनासिद्धेः स्थानिवदित्यतिदेशप्रवृत्तेरुपलक्षणमिदमिति बोध्यम्॥

(आक्षेपभाष्यम्)

स्वरः कथम्?॥

(१६८० वार्तिकम्॥ ११॥)

॥ * ॥ स्वरे विप्रतिषेधात्सिद्धम्॥ * ॥

(भाष्यम्) [[1] इदमिह संप्रधार्यम्—] डारौरसः क्रियन्तामनुदात्तत्वमिति। किमत्र कर्तव्यम्?। परत्वादनुदात्तत्वम्॥ नित्या डारौरसः कृतेऽप्यनुदात्तत्वे प्राप्नुवन्ति, अकृतेऽपि प्राप्नुवन्ति॥ अनुदात्तत्वमपि नित्यं कृतेष्वपि डारौरस्सु प्राप्नोति, अकृतेष्वपि प्राप्नोति॥ अनित्यमनुदात्तत्वम्। अन्यस्य कृतेषु डारौरस्सु प्राप्नोति, अन्यस्याकृतेषु। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति॥ डारौरसोऽप्यनित्याः। अन्यथास्वरस्य कृतेऽनुदात्तत्वे प्राप्नुवन्ति। अन्यथास्वरस्याकृते। स्वरभिन्नस्य च प्राप्नुवन्तोऽनित्या भवन्ति। उभयोरनित्ययोः परत्वादनुदात्तत्वम्। अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानाद् डारौरसः। टिलोपे उदात्तनिवृत्तिस्वरेण सिद्धम्॥

(बाधकभाष्यम्)

न सिध्यति। किं कारणम्?। अन्तरङ्गत्वाद् डारौरसः। तत्रान्तरङ्गत्वाड्डारौरस्सु कृतेषु अनुदात्तत्वं क्रियतां टिलोप इति॥ किमत्र कर्तव्यम्?। परत्वाट्टिलोपेन भवितव्यम्॥

(उद्योतः) भाष्ये—तत्रान्तरङ्गत्वादिति। तासेः परं लसार्वधातुकमित्यनुदात्तत्वस्य बह्वपेक्षत्वादित्यर्थः॥ परत्वाट्टिलोपेनेति। डित्त्वसामर्थ्येनाङ्गत्वभत्ववैकल्येऽपि टेरिति शास्त्रस्यैव प्रवृत्त्या तस्य परत्वादिति भावः॥ एवं चानुदात्ते उदात्तलोपाभावादुदात्तनिवृत्तिस्वराप्राप्तौ प्रत्ययस्वरप्राप्तावुदात्तत्वमेव श्रूयेतेति तात्पर्यम्॥

(वार्तिकतात्पर्यान्तरभाष्यम्)

एवं तर्हि *स्वरविप्रतिषेधात् सिद्धम्*। न्याय्य एवायं स्वरविप्रतिषेधः। इदमिह संप्रधार्यम्—अनुदात्तत्वं क्रियतामुदात्तनिवृत्तिस्वर इति। किमत्र कर्तव्यम्?। परत्वादनुदात्तत्वम्। अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरो भविष्यति॥

(प्रदीपः) न्याय्य एवायमिति। पूर्वप्रदर्शितो हि डारौरसामन्तरङ्गत्वादन्याय्यः। अयं तु न्याय्यः॥

अथ वा परविप्रतिषेध एवायं न पूर्वविप्रतिषेध इति न्याय्यत्वमुच्यते॥ इदमिहेति। डारौरस्सु कृतेषु टिलोपे च कृते संप्रधारणेयम्॥

(उद्योतः) किमपेक्षया न्याय्यत्वमित्याशङ्क्याह—पूर्वं प्रदर्शित इति॥ न्याय्य एवेति भाष्यस्य न्याय्यस्त्वयमित्यर्थः॥ अथवेति व्याख्या तु चिन्त्या पूर्वमपि परविप्रतिषेधस्यैवोक्तेरिति बोध्यम्॥ टिलोपात्पूर्वमेतत्संप्रधारणाया असंभवादाह—डारौरःस्विति॥ टिलोपे चेति। परत्वादिति भावः॥ भाष्ये—पुनःप्रसङ्गविज्ञानादित्यस्यापि पर्जन्यवल्लक्षणप्रवृत्त्या लसार्वधातुकानुदात्तत्वे कृते इत्यर्थः॥

(आक्षेपभाष्यम्)

तदेतत्क सिद्धं भवति यत् पिद्वचनम्। यदपिद्वचनं तत्र न सिध्यति?॥

(प्रदीपः) नन्वकृतेऽनुदात्तत्वे उदात्तनिवृत्तिस्वरो नैव प्राप्नोति। तत्कथमनयोर्विप्रतिषेध इत्याह—तदेतदिति। तिपोनुदात्तस्य स्थाने डादेशः स्थानिवद्भावादनुदात्तस्तत्रोदात्तनिवृत्तिस्वरस्सिध्यति यस्तु तशब्दस्य स्थाने क्रियते तत्र परत्वाट्टिलोपे कृतेऽनुदात्ते उदात्तलोपो न कृत इत्युदात्तनिवृत्तिस्वरो न सिध्यति पुनः प्रसङ्गविधानात्त्वनुदात्तत्वमेव स्यादित्यर्थः॥

[1] अयं कोष्ठकान्तर्गतो भाष्यपाठः क्वापि नोपलभ्यते।

( उद्योतः ) नन्वकृते इति । अपिद्विषय इत्यर्थः ॥ ननूदात्तनिवृत्तिस्वराभावेऽपि परेण टिलोपेन प्रत्ययस्वरापवादस्य लसार्वधातुकानुदात्तत्वस्य सकृद्गतिन्यायेन बाधितत्वात्पुनरप्रवृत्तौ प्रत्ययस्वरप्रवृत्त्येष्टसिद्धिरत आह—पुनःप्रसङ्गेति ॥

( समाधानभाष्यम् )

तत्रापि सिद्धम् । कथम्? । इदमद्य लसार्वधातुकानुदात्तत्वं प्रत्ययस्वरस्यापवादः । न चापवादविषये उत्सर्गोऽभिनिविशते 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' । तत्र तावदत्र कदाचित्प्रत्ययस्वरो भवति अपवादं लसार्वधातुकानुदात्तत्वं प्रतीक्षते । तत्रानुदात्तत्वं क्रियतां लोप इति । यद्यपि परत्वाल्लोपः सोसावविद्यमानोदात्तत्वे अनुदात्ते उदात्तो लुप्यते ॥

प्रत्ययस्वरापवादो वलसार्वधातुकानुदात्तत्वम् ॥
तेन तत्र न प्रसक्तः प्रत्ययस्वरः कदाचित् ॥
प्रत्ययस्वरश्च तासेर्वृत्तिसंनियोगशिष्टः ।
तेन चाप्यसावुदात्तो लोप्स्यते तथा न दोषः ॥
लुटः प्र ॥ ८५ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य चतुर्थे पादे द्वितीय माह्निकम् ॥ समाप्तश्चायं पादोऽध्यायश्च ॥

( प्रदीपः ) सोसाविति । शास्त्रीयस्तत्रानुदात्तो न गृह्यते किं तर्हि उदात्तत्वाभावयुक्त इत्यर्थः । वृत्तिसन्नियोगशिष्ट इति । वृत्तिः प्रवृत्तिः । यदैव तासिः प्रवर्तते तदैवापवादाभावादुदात्तत्वयुक्त इत्यर्थः । पूर्वोक्त एवार्थः श्लोकेन संगृहीतः ॥ ८५ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयाध्यायस्य चतुर्थे पादे द्वितीयमाह्निकं समाप्तम् ।
समाप्तश्चायं पादोऽध्यायश्च ॥

( उद्योतः ) तत्र । अनुदात्तस्य च यत्रेलत्र । वतश्च उदात्तनिवृत्तिस्वरानुदात्तत्वयोः संप्रधारणा युक्तैवेत्यर्थः ॥ ननु तासेरपि प्रत्ययस्वरात्प्रागेव परत्वाट्टिलोपे उदात्तनिवृत्तेरेवाभावात्कथमुदात्तनिवृत्तिस्वरोऽत आह—भाष्ये—तासेर्वृत्तीति । एवं च प्रत्ययसंनियोगशिष्टतयान्तरङ्गत्वादपवादप्रसक्त्यभावाच्चोदात्तत्वयुक्त एवोत्पद्यत इति भावः ॥ ८५ ॥

इति श्री उपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्योते द्वितीयाध्यायस्य चतुर्थे पादे द्वितीयमाह्निकं समाप्तम् ॥

समाप्तश्चायं पादोऽध्यायश्च ॥

| | प्राक्तनयोगः | अस्मिन्पादे सूत्रवार्तिकसंख्या— प्रथमाह्निके | द्वितीयाह्निके | योगः | योग आदितः |
|---|---|---|---|---|---|
| व्याख्यातसूत्राणि | ३३५ | ३० | १४ | ४४ | ३७९ |
| अव्याख्यातसूत्राणि | १९६ | ३१ | १० | ४१ | २३७ |
| समुदितसूत्राणि | ५३१ | ६१ | २४ | ८५ | ६१६ |
| वार्तिकानि | १५५३ | ७३ | ५४ | १२७ | १६८० |

श्रीकाशीनाथतनुजरघुनाथविनिर्मिता । भाष्य प्रदीपोद्योतानां विषमस्थलभासिका ॥ १ ॥
भूनन्दनिधिभूवर्षे सिते नभसि सद्गुणा । काश्यां शनिदिने वह्नौ विवृतिः संवृतिं गता ॥ २ ॥




इतोग्रे विधिग्रन्थः ।

